न चैवं साक्षात्कृतधर्माणः प्रत्यक्षधर्माण इति विरोध इति वाच्यम् । तस्य श्रुतिमात्रपरत्वात् । सेव हि धर्मे मुख्यं प्रमाणं स्मृत्यादयस्तु तद्भेदा इति भावः । अत एवाह । **एतेषामिति** ॥ ७ ॥

## याज्ञवल्कीये ८ श्लोकः

पूर्वं द्विविधहेतुजिज्ञासायां तेषां सर्वेषामुक्तिरत आह । **देशेति** । **कर्मणामिति** । अवधेः शेषत्वविवक्षायां षष्ठी । कर्मशब्दस्य द्वन्द्वान्ते श्रूयमाणत्वात् प्रत्येकं सम्बन्धसूचनायाह । **इज्यादीनां कर्मणामिति** । तुरेवार्थ इत्याह । **अयमेवेति** । 'योगश्चित्तवृत्तिनिरोधः' ( यो० पा० १ सू० २ ) इति पातञ्जलसूत्रस्य सामान्यत्वेऽत्र धर्मपदस्वारस्यादाह । **बाह्येति** । अत एव न मुख्यं दर्शनमित्याह । **याथातथ्येति** । अपवादत्वसङ्गतेय आह । **योगेनेति** ।

अत्र **पतञ्जलि**सम्मतिमाह । **तदुक्तमिति** । यत्र पुरुषे एकाग्रता तत्र देशादिविशेषमनपेक्ष्य सिद्धिरित्यर्थः ॥ ८ ॥

## याज्ञवल्कीये ९ श्लोकः

उक्तरीत्याऽन्यस्यानधिकारादाह । **ब्राह्मेति** । वेदसाहचर्याद्धर्मपदं शास्त्रपरमित्याह । **धर्मशास्त्रेति** । त्रयाणां तत्त्वपक्षमाह । **तिस्र इति** । प्रत्येकम् । अत एवाधीयते इत्युक्तिः । विद्याः ऋग्यजुःसामवेदरूपाः । एतेन तद्व्यावृत्तिरितिभ्रमनिरासायाह । **धर्मेति** । अन्यथा कथनासङ्गत्यानुपयुक्तत्वं स्पष्टमेव । एवमग्रेऽपि बोध्यम् । तथा च त्रित्वव्यावर्त्यचतुर्थवेदव्यावर्तक एवकारः स्पष्टार्थः । अनन्तरस्यैव परामर्शभ्रमनिरासायाह । **पूर्वोक्तेति** । **अध्यात्मेति** । अध्यात्मविषयकज्ञानविषये अतिशयेन निपुण इत्यर्थः । अध्यात्मेति बहुव्रीहौ तु व्याख्याने तमवैयर्थ्यं स्पष्टमेव । ज्ञानिष्वित्येव ब्रूयात् । उक्तहेतोरेवाह । **धर्मेति** ।

**कौर्मे** तु एवमुक्तम्, ( अ. ३० श्लो. २–७ )

"अकृत्वा विहितं कर्म कृत्वा निन्दितमेव वा । दोषमाप्नोति पुरुषः प्रायश्चित्तं विशोधनम् ॥
"प्रायश्चित्तमकृत्वा तु न तिष्ठेत् ब्राह्मणः क्वचित् । यदाहुर्ब्राह्मणाः शान्ता विद्वांसस्तत् समाचरेत् ॥
"वेदार्थवित्तमः शान्तो धर्मकामोऽग्निमान् द्विजः । स एव स्यात् परो धर्मो यमेकोऽपि व्यवस्यति ॥
"अनाहिताग्नयो विप्रास्त्रयो वेदार्थपारगाः । यद् ब्रूयुर्धर्मकामास्ते तज्ज्ञेयं धर्मसाधनम् ॥
"अनेकधर्मशास्त्रज्ञा ऊहापोहविशारदाः । वेदाध्ययनसम्पन्नाः सप्तैते परिकीर्त्तिताः ॥
"मीमांसान्यायतत्त्वज्ञा वेदान्तकुशला द्विजाः । एकविंशतिसङ्ख्याताः प्रायश्चित्तं वदन्ति वै" ॥

इत्युपोद्धातः ॥ ९ ॥

---

# अथ ब्रह्मचारिप्रकरणम् २

## अथ याज्ञवल्कीये १० श्लोकः

सङ्गतिमाह । **एतैरिति** । **उपोद्धातमिति** । उप समीपे उद्धृत्य हन्यते इत्युपोद्धातः उदाहारापरपर्यायः । ' उपोद्धात उदाहार ' इत्य**मरोक्तः** । ( ५।६।९ )

तदुक्तमभियुक्तैः, " चिन्तां प्रकृतसिद्ध्यर्थामुपोद्धातं विदुर्बुधाः " । इति ।

प्रकृतनिर्वाहकसाधारणपरिभाषेति यावत् । एतदेव स्पष्टीकृतं ' सकल ' इत्यनेन । **तावदिति** । यावन्तो वर्णास्तान् सर्वान् वर्णानित्यर्थः । **त्वाद्याः** । आद्यास्तु ।

ब्रह्मशब्दार्थमाह । **ब्राह्मणेति** । तेषां मध्ये इति शेषः । द्विजपदं योगरूढमित्याह । **द्विरिति** । उपनयनतो द्वितीयं जन्मेति स्पष्टमन्यत्र । वैशब्दार्थमाह । **एवेति** । क्वचित् वै एवेत्येव पाठः । तद्व्यावर्त्यमाह । **न शूद्रेति** । अनेन तस्याऽमन्त्रकाः क्रिया इति दर्शितम् ।

अत एव **यमः**, 'शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः ' । इति ।

**पितृवनमिति** । मृतशरीरनिधानस्थानमित्यर्थः । तस्य तत्त्वासम्भवात् साहचर्याल्लक्ष्यार्थमाह । **तदिति** । पराचीग्निरूपप्रेतसंस्कार इत्यर्थः । तृतीयान्तान्तसिरित्याह । **मन्त्रैरिति** । अत्रेदं बोध्यम् ।

"पुंसवने च सीमन्ते तथा चौलोपनायने । गोदाने स्नान उद्वाहे नान्दीश्राद्धं पुरोदिने ॥
"अतोऽशुचौ सपिण्डाः स्युरेकगृहनिवासिनः । सहस्वाचाः समाचारा भवन्त्येकान्नभोजिनः ॥
"अन्त्ये दशाहपर्यन्तं भद्रं मातृविसर्जनात् । नित्यानुषङ्गस्वधापिण्डशीताम्भुस्नानवर्जिताः ॥
"त एव गोत्रिणः प्रोक्ता हव्यकव्येषु गर्हिताः " इति ।

ये सपिण्डाः पुरुषत्रयान्तर्वर्तिनः सन्तो मङ्गल्ये विवाहादौ पृथक्सद्मनिवासिनः सन्तः पृथक् पाकं कुर्वन्ति अथ च स्वधाकर्मादि कुर्वन्ति तान् पितृपतिः सोमोऽहये सर्पेभ्यो ददाति । यद्वा उमया सह वर्तमानः सोमो रुद्रः संहारकर्ता स स्वस्याभरणभूतेभ्यः सर्पेभ्यो ददाति । यद्वा निर्ऋतेरुपस्थे यमस्य पुरतो दधाति । ददातीत्यर्थे ददातु, दधातीत्यर्थे दधात्विति प्रयोगः । सोमो वीरं कर्मण्यं ददातीतिवत् । यदा सङ्कटादिना एकान्नभोजित्वमेकगृहनिवासित्वं तेषां न सम्भवति तदा कथमित्यत्राह **सङ्ग्रहे,** "सर्वान् भोजयितुं कश्चिदसमर्थो भवेद्यदि । सर्वैः स्वं स्वञ्च सम्पाद्य कार्यमेकान्नभोजनम् ॥

"सङ्कटात् सहवासस्य सम्भवो न भवेद्यदि । स्वसद्मवासिनः सन्तः स्वधाकर्मादिवर्जनात्॥" इति ॥१०॥

## याज्ञवल्कीये ११।१२ श्लोकौ

सङ्गतिमाह । **इदानीमिति** ।

एवमग्रे सर्वत्र बोध्यम् । **अन्विति** । अनुक्रमेण वक्ष्यतीत्यर्थः । **अनुगतेति** । अन्वर्थमित्यर्थः । **एवमिति** । एतद्वद् वक्ष्यमाणानि पुंसवनादीन्यप्यनुगतार्थानि कर्मनामधेयानीत्यर्थः । पद्ये वृत्तानुरो-

धेन वाक्ये उक्तेऽपि नामधेयता समस्तस्यैवेत्याह । **पुंसेति** । स्पन्दनादित्यस्य व्याख्या **चलेति** । नामैकदेश इति न्यायेनाह । **सीमन्तोन्नेति** । आद्यसंस्कारकाले गर्भाभावेन तत्रासन्देहेन गर्भकालिकसंस्कारत्वादनयोर्गर्भक्षेत्रसंस्कारतासन्देहनिरासायाह । **एते चेति** । " अथ सीमन्तोन्नयनं पुंसवनवत्प्रथमगर्भे " इति **पारस्करेणोभयोः** क्षेत्रसंस्कारताऽभिधानादिति भावः । सत्कृत्करणे मानमाह । **यथाहेति** । इदञ्च गर्भाधानादित्रितयपरमेव अन्यस्य असम्भवात् ।

ननु सीमन्तोन्नयनांशे युक्तमिदं यद्यपि, अत एव **हेमाद्रौ हारीतोऽपि,**

"सकृत्तु कृतसंस्काराः सीमन्तेन द्विजस्त्रियः । यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत् ॥" इति ।

तत्रैव **विष्णुरपि,**

"स्त्री यद्यकृतसीमन्ता प्रसूयेत कथञ्चन । गृहीतपुत्रा विधिवत् पुनः संस्कारमर्हति " ॥ इति ।

गर्भार्थमेवाधानवत् स्त्रीसंस्कारत्वात् सकृदेव कृतः सीमन्तः ' सर्वानेव गर्भान् संस्करोति ' इति **सुदर्शनाचार्योऽपि** । तथापि पुंसवनांशे न युक्तम् । " आवर्तत इदं कर्म प्रतिगर्भमिति स्थितिः" इति **बह्वृचकारिका**यामुक्तत्वात् । पुमांसं जनयतीति फलस्य सूत्रकारेणैव उपादिष्टत्वाच्चेति चेन्न । " एष वा अनृणो यः पुत्री " इत्यादिवचनैः सकृदपि पुत्रोत्पादनस्यावश्यकर्तव्यत्वात्तदङ्गं पुंसवनं प्रथमे गर्भे कर्तव्यमेव, तदनन्तरमुक्तसूत्रायत्र यत्र पुत्रेच्छा तत्र कार्यं नान्यत्र, यस्य तु कन्येच्छैव तस्य सकृदपि न इति तात्पर्यात् । **सुदर्शनोऽपि** इत्थम् । न चैवमपि,

"सीमन्तोन्नयनं कर्म तत् स्त्रीसंस्कार इष्यते । केचित् गर्भस्य संस्कारात् गर्भे गर्भे प्रयुञ्जते "॥

इति **विष्णु**विरोध इति वाच्यम् ' केचिदित्युक्त्यैव तस्यासिद्धान्तत्वसूचनात् । कृतेऽभ्युदय इत्येवम्परत्वाच्च । तथा च **आश्वलायनस्मृतौ,** ' प्रतिगर्भं बलिः कार्यः सीमन्तश्च प्रशस्यते' । इति । बलिर्विष्णुबलिः । स च गर्भाष्टमे मासि कार्यः । इदञ्च " बह्वल्पं वा " इति वचनात् गृह्यसूत्रानुक्तेरिदानीं नाचरन्ति इति दिक् । तृतीयचतुर्थपञ्चमषष्ठेषु आद्यं सीमन्तेन सह वा । तत्र **आपस्तम्बगृह्यं** " पुंसवनं व्यक्ते गर्भे तिष्येण " इति । " सीमन्तोन्नयनं प्रथमे गर्भे चतुर्थे मासि " इति ।

**कार्ष्णाजिनिरपि,**

" गर्भस्पन्दनमारभ्य यावन्न प्रसवस्तथा । सीमन्तोन्नयनं कुर्यात् शङ्खस्य वचनं यथा" ॥ इति

तत्र व्यक्तिस्तृतीये चतुर्थे वा मासे, बह्वृचादिषु स्मृत्यन्तरेषु चोभयथा दर्शनात् । तत्र यदि चतुर्थे पुंसवनं तदा पूर्वं सीमन्तं कृत्वा पश्चात् पुंसवनं कार्यं, चोदितकालानतिक्रमणात् । मन्त्राम्नानसूत्रोपदेशयोः क्रमार्थत्वाच्च । साहित्यपक्षे नान्दीश्राद्धादि तन्त्रेणैव, देशकालकर्त्रैक्यात् ।

"गणशः क्रियमाणानां मातृणां पूजनं सकृत् । सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु" ॥ इति

**छन्दोगपरिशिष्टाच्च** । एतत् बहूनामपत्यानां युगपत्संस्कारकरणविषयमिति **वोपदेवः** । अतीतसंस्काराणां युगपत्करणे इति अन्ये । **स्मृत्यर्थसारे**ऽप्युक्तम् इदम् । येन कर्मणा

क्षिप्रमेव सूते न चिरकालं पीड्यते तादृशमपरमपि क्षिप्रं पुंसवनं तद्गृह्य[1] उक्तम्। "अनाप्रीतेन शरावेणानुस्रोतसमुदकमाहृत्य पत्तस्तूर्यन्तीं निधाय मूर्धञ्छोष्यन्तीमुत्तरेण यजुषाऽभिमृश्यैताभिरद्भिरुत्तराभिरवोक्षेत् " इति। अधिकमन्यतोऽवगन्तव्यम्। अनवलोभनं त्वाश्वलायनानामावश्यकं न तैत्तिरीयाणाम्। "सप्तमाष्टमौ द्वितीयेऽधिकौ[2]। यावत्प्रसवं तदुत्तरमपि द्वितीयमावश्यकम्। यावद्वा न प्रसव" इति **शङ्खात्**।

"स्त्री यद्यकृतसीमन्ता प्रसूयेत कथञ्चन। पुत्रं गृहीत्वा विधिवत् पुनः संस्कारमर्हति " ॥

इति **सत्यव्रताच्च**[3]। अनयोर्नियतकालत्वादस्तादिष्वपि करणे न दोषः। तद्रहितकाललाभे तु तत्र न कार्यमिति बोध्यम्।

## अथ प्रसङ्गाद्गर्भिण्यास्तत्पतेश्च धर्मा उच्यन्ते।

तत्र तावत् **पारिजाते—कश्यपः**,

"गर्भिणी कुञ्जराश्वादिशैलहर्म्यादिरोहणम्। व्यायामं शीघ्रगमनं शकटारोहणं त्यजेत् ॥

"शोकं रक्तविमोक्षञ्च साध्वसं कुक्कुटासनम्। व्यवसायं दिवा स्वापं रात्रौ जागरणं त्यजेत् ॥

"नदीप्रतरणञ्चैव शकटारोहणं तथा। उग्रौषधं तथा क्षारं मैथुनं भारवाहनम् ॥

"कृते पुंसवने चैतद् गर्भिणी परिवर्जयेत् "। इति।

**मूलेमपि**,

"दौर्हृदस्याप्रदानेन गर्भो दोषमवाप्नुयात्। वैरूप्यं मरणं वाऽपि तस्मात्कार्यं प्रियं स्त्रियाः " ॥

दौर्हृदं गर्भिणीप्रियमित्यर्थः।

" मासात्तु पञ्चमादूर्ध्वं निन्दिता बहुदोषकृत्। गुर्विणी पञ्चमादूर्ध्वं दैवे पित्र्ये च कर्मणि ॥

"पित्र्यर्थे पञ्चयज्ञार्थे पाकं कर्तुं न साऽर्हति "। इति।

**संवर्तः**,

"सन्ध्यायां नैव भोक्तव्यं गर्भिण्या वरवर्णिनि। न स्नातव्यं न गन्तव्यं वृक्षमूलेषु सर्वदा ॥

"नोपस्करेषूपविशेन्मुसलोलूखलादिषु। जलं न चावगाहेत शून्यागारञ्च वर्जयेत् ॥

"वल्मीकायां न तिष्ठेत न चोद्विग्नमना भवेत्। विलिखेन्न नखैर्भूमिं नाङ्गारेण न भस्मना ॥

"न शयालुः समातिष्ठेद्व्यायामञ्च विवर्जयेत्। न तुषाङ्गारभस्मास्थिकपालेषु समाविशेत् ॥

"वर्जयेत् कलहं लोके गात्रभङ्गं तथैव च। न मुक्तकेशी तिष्ठेत नाशुचिः स्यात् कदाचन ॥

"न शयीतोत्तरशिरा न चापरशिराः क्वचित्। न वस्त्रहीना नोद्विग्ना न चार्द्रचरणा सती ॥

"नामङ्गल्यां वदेद्वाचं न च हास्याधिका भवेत्। कुर्यात्तु गुरुशुश्रूषां नित्यं मङ्गलतत्परा ॥

१ आपस्तम्बगृह्ये। २ सप्तमाष्टममासौ पुंसवनसीमन्तयोर्मध्ये द्वितीये सीमन्ते अधिकौ ज्ञातव्यौ। पुंसवनस्य तु तदानीं फलाभावान्नानुष्ठानम्। ३ प्रायश्चित्ते ७९ श्लो.

"सर्वौषधीभिः कामेन वारिस्नानं समाचरेत् । कृतरक्षाऽनसूया च वास्तुपूजनतत्परा ॥
"तिष्ठन्प्रसन्नवदना भर्तुः प्रियहिते रता । दानशीला तृतीयायां पार्वत्यां नक्तमाचरेत् ॥
"शान्तवृत्ता भवेन्नारी विशेषेण च गर्भिणी । यस्तु तस्या भवेत् पुत्रः शीलायुर्वृद्धिसंयुतः ॥
"अन्यथा गर्भपतनमवाप्नोति न संशयः । तस्मात्त्वमनया वृत्त्या गर्भेऽस्मिन्यत्नमाचर ॥ "

**गालवोऽपि,**

"दहनं वपनञ्चैव चौलं वै गिरिरोहणम् । नाव आरोहणञ्चैव वर्जयेत् गुर्विणीपतिः " ॥ इति ।

**संग्रहेऽपि,**

"प्रेतवाहोदधिस्नानं वपनं पिण्डपातनम् । विदेशगमनञ्चैव न कुर्यात् गुर्विणीपतिः ॥" इति ।

**आश्वलायनोऽपि,**

"वपनं मैथुनं तीर्थं वर्जयेत् गुर्विणीपतिः । श्राद्धञ्च सप्तमान्मासादूर्ध्वञ्चान्यत्तु वेदवित् ॥"इति। श्राद्धं तद्भोजनमित्यर्थः ।

"केशान्मासत्रयादूर्ध्वं धारयेत् गर्भवान् द्विजः । यज्वनः पर्वणोः क्षौरं धारणं त्वाहिताग्नेः ॥" इति अन्यत्र ।

"विवाहमौञ्जीचूडासु वर्षमर्धं तदर्धकम् । अन्तर्वत्न्याश्च जायायां नेष्यते केशवापनम् " ॥ इति अन्यत्र ।

**ज्योतिःशास्त्रेऽपि,**

"प्रव्यक्तगर्भापतिरब्धियानं मृतस्य वाहं क्षुरकर्म सङ्गम् ।
"तस्या नु यत्नेन गयादितीर्थं यागादिकं वास्तुविधिं न कुर्यात् ॥ " इति ।

**जातकर्मेऽपि** । ' श्रुत्वा जातं पिता पुत्रं सचैलं स्नानमाचरेत् ' । इति ।

**परिजाते । वसिष्ठः**, ' प्राङ्नाभिवर्धनात् पुंसो जातकर्म विधीयते ' । इति ।

**संवर्तः**,

" जन्मनोऽनन्तरं कार्यं जातकर्म यथाविधि । दैवादतीतकालं चेदतीते सूतके भवेत् ॥" इति । **विष्णुधर्मेऽपि**, " अच्छिन्ननाभि कर्तव्यं श्राद्धं वै पुत्रजन्मनि । " तच्च हेम्नैव कार्यम् ।

" पुत्रजन्मनि कुर्वीत श्राद्धं हेम्नैव बुद्धिमान् । न पक्केन न चामेन कल्याणान्यभिकाङ्क्षयन्" ॥

इति **संवर्तात्** । एतच्च मृताशौचमध्येऽपि कार्यं । तदाह **हेमाद्रौ प्रजापतिः ,**

"आशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत् । कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुध्यति"॥इति। उक्तकालातिक्रमे कालान्तरमाह **बृहस्पतिः,**

"मुख्यालाभे विधिज्ञैन विधिश्चिन्त्यः प्रमाणतः । नक्षत्रतिथिलग्नानां विचार्यैवं पुनः पुनः ॥ "

इति । इदञ्च रात्रौ सन्ध्यायां ग्रहणे जाताशौचान्तरमध्येऽपि कार्यम् । मृताशौचेऽपि तद्वत् आशौचान्ते वा । तदुक्तं **विष्णुधर्मोत्तरे,**

"अशौचोपरमं कार्यमथवा नियतात्मभिः" । इति ।

पितरि देशान्तरस्थे पितृव्यादिर्गोत्रजो ज्येष्ठक्रमेण कुर्यात् । एवं नामकर्मण्यपि । परन्तु तस्य नियतकालत्वेऽपि विष्टिवैधृतिव्यतीपातग्रहणसंक्रान्तिश्राद्धदिनेषु निषेधः । अमादिनिषेधस्तु न, नियतकालत्वात् । तदतिक्रमे तु सोऽप्यस्तीत्यन्यत्र विस्तरः ।

"अर्घ्यान्ता मानसी सन्ध्या प्राणायामविवर्जिता । गायत्रीं सम्यगुच्चार्य सूर्यायार्घ्यं निवेदयेत् ॥इति ॥

## अथ प्रसङ्गाद् दत्तपुत्रपरिग्रहविधिः ।

तथाऽऽह **बौधायनः,**

" पुत्रपरिग्रहविधिं व्याख्यास्यामः । शोणितशुक्रसम्भवो मातापितृनिमित्तकस्तस्य प्रदानपरित्यागविक्रयेषु मातापितरौ प्रभवतः । न त्वेकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा । स हि सन्तानाय पूर्वेषाम् । न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्तुः । प्रतिग्रहीष्यन्नुपकल्पयते द्वे वाससी द्वे कुण्डले अङ्गुलीयकञ्चाचार्यञ्च वेदपारगं कुशमयं बर्हिः पर्णमयमिध्ममिति । अथ बन्धूनाहूय मध्ये राजनि चावेद्य परिषदि चागारमध्ये ब्राह्मणानन्नेन परिविष्य 'पुण्याहं स्वस्ति ऋद्धिमिति' वाचयित्वाऽथ देवयजनोल्लेखनप्रभृति आप्रणीताभ्यः कृत्वा दातुः समक्षं गत्वा 'पुत्रं मे देहीति' भिक्षेत । 'ददामि'इतीतर आह । तं परिगृह्णाति 'धर्माय त्वा परिगृह्णामि सन्तत्यै त्वा परिगृह्णामीति' । अथैनं वस्त्रकुण्डलाभ्यामङ्गुलीयकेन चालङ्कृत्य परिधानप्रभृत्याऽग्निमुखान्कृत्वा पक्वाज्जुहोति 'यस्त्वा हृदा कीरिणा मन्यमान' इति पुरोऽनुवाक्यामनूच्य 'यस्मै त्वं सुकृते जातवेद' इति याज्यया जुहोत्यथ व्याहृतीर्हुत्वा स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानाद्दक्षिणां दद्यात्येते एव वाससी एते एव कुण्डले एतच्चाङ्गुलीयकं यद्येवं कृत्वौरसः पुत्र उत्पद्यते तुरीयभागेय भवतीति ह स्माह **बौधायनः** । "

## अथ प्रसङ्गात् षष्ठीपूजनम् ।

तत्र **नारदः**

"रक्षणीया तथा षष्ठी निशा तत्र विशेषतः । रात्रौ जागरणं कार्यं जन्म[illegible]ां तथा बलिः ॥
"पुरुषाः शस्त्रहस्ताश्च नृत्यगीतैश्च योषितः । रात्रौ जागरणं कुर्युर्दशम्य, [illegible]सूतके " ॥ इति ।

## अथ प्रयोगः ।

ास्याः सूतिकाया अभिनवजातकुमारस्य च नैरुज्यदीर्घायुष्यलाभसर्वोपद्रवश्वरप्रीत्यर्थं सर्वाभ्युदयप्राप्तिकामो गणपतिदुर्गेष्टदेवताकुलदेवताग्रामदेवतागौर्यादि-

षोडशमातृषट्कृत्तिकाकार्त्तिकेयायुधविष्णुमहाषष्ठ्यादीनां यथामिलितोपचारैः पूजनमहं करिष्ये । तदङ्गत्वेनादौ निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं करिष्ये इति सङ्कल्प्य । प्रथमं पाद्यार्घ्याचमनीयादिना गणपतिं पूजयेत् । ततस्तत्प्रार्थना ।

"ॐ सर्वविघ्नहरो देव एकदन्त गजानन । भक्त्या संपूजितः प्रीत्या शिशुं दीर्घायुषं कुरु ॥

"लम्बोदर महाभाग सर्वोपद्रवनाशन । त्वत्प्रसादादविघ्नेन चिरं जीवतु बालकः ॥"

इति गणपतिं प्रार्थ्य सर्षपान् विकिरेत् ।

"अप सर्पन्तु ये भूता ये भूता भुवि संस्थिताः । ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया" ॥

ततो 'महीद्यौ'रित्यादिपूर्णपात्रनिधानान्ते पूर्णपात्रोपरि वरुणं संपूज्य तत्राग्न्युत्तारितां प्रतिमां स्थापयेत् । ततोऽक्षतपुञ्जेषु पूगीफलेषु वा गणपतिदुर्गाद्यावाहनं कृत्वा पूजयेत् । तत्रादौ गणपतिपूजा । ततो जयन्तीमन्त्रेण दुर्गां पूजयेत् ।

"जयन्ती मङ्गला काली भद्रकाली कपालिनी । दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते"॥

तत इष्टदेवताकुलदेवताग्रामदेवतापूजां सावाहनां विधाय षोडशमातृका आवाह्य पूजयेत् । ततः प्रार्थना ।

"मातरः सर्वभूतानां सर्वकल्याणहेतवः । पूजिता भक्तितः सर्वा रक्षध्वं मम बालकम् ॥

ततः षट्कृत्तिकाः पूज्याः ।

"शिवा संभूतिनामा च प्रीतिः सन्नतिरेव च । अनुसूया क्षमा चैव षडेताः कृत्तिका मताः ॥

"अणिमा महिमा चैव गरिमा लघिमा तथा । प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टसिद्धयः ॥

"सरस्वत्या सह ब्रह्मा भवान्या शङ्करस्तथा । लक्ष्म्या नारायणः पूज्यो लोकपालादयस्तथा" ॥

'शिवायै नम' इत्यादिना प्रत्येकमावाह्य पूजयेत् । ततः कार्त्तिकेयमावाह्य पूजयेत् । ततस्तत्प्रार्थना॥

"ॐ कार्त्तिकेय महाबाहो गौरीहृदयनन्दन । कुमारं रक्ष मे देव कार्तिकेय नमोऽस्तु ते" ॥

तत आवाह्य खड्गं पूजयेत् । ततः प्रार्थना ।

"असिर्विशसनः खड्गः तीक्ष्णधारो दुरासदः । श्रीगर्भो विजयश्चैव धर्माधारस्तथैव च ॥

"इत्यष्टौ तव नामानि स्वयमुक्तानि वेधसा । नक्षत्रं कृत्तिका चैव गुरुर्देवो महेश्वरः ॥

"रोहिण्यश्च शरीरं ते धाता देवो जनार्दनः । पिता पितामहो देवस्त्वं मां पालय सर्वदा ॥

"नीलजीमूतसङ्काशस्तीक्ष्णधारो दुरासदः । इयं येन धृता क्षोणी हतश्च महिषासुरः ॥

"तीक्ष्णधाराय शुद्धाय तस्मै खड्गाय ते नमः । विधातृदेवि कल्याणि सदाऽशुभविनाशिनि ॥

"चामुण्डे मुण्डमथने नारायणि नमोऽस्तु ते" ।

एवमग्रे सर्वत्र बोध्यम् । वंशपूजा ।

"सर्वमङ्गलमङ्गल्य गोविन्दस्य सदा प्रिय । वंशं वर्धय मे वंश सदानन्द नमोऽस्तु ते" ॥

मुसलस्य,

"माथुरं यद्बलं यच्च विष्णोरमिततेजसः । समर्पय त्वं मुसल तत्सर्वं पुत्रके मम" ॥

ततः शङ्खपूजा,

"पुण्यस्त्वं सर्वपुण्यानां मङ्गलानां च मङ्गलम् ।

"विष्णुना विधृतोऽसि त्वमतः शान्तिं प्रयच्छ मे । शङ्खोऽसि धवलोऽसि त्वं महापातकनाशन"॥

मन्थानस्य,

"मन्थान मन्दरोऽसि त्वं मथितः सागरस्त्वया । अतो ममास्य पुत्रस्य मन्थ विघ्नं नमो ऽस्तु ते"॥

विष्णोः,

"त्रैलोक्यपूजितः श्रीमान् सदा विजयवर्द्धन । शान्तिं कुरु गदापाणे नारायण नमोऽस्तु ते ॥

"शान्तिरस्तु शिवं चास्तु बालकल्याणमेव च । रक्षां करोतु भगवान् स्वयमेव जनार्दनः" ॥

लाङ्गलस्य,

"हलायुध महाभाग सर्वोपद्रवनाशन । बालं मम सदा रक्ष रौहिणेय नमोऽस्तु ते ।

ततः षष्ठीं पूजयेत्,

ॐकारेण प्राणायामं कृत्वा दीर्घस्वरयुक्तेन षकारेण न्यासं कुर्यात् । ॐ षां अङ्गुष्ठाभ्यां नमः । ॐ षीं तर्जनीभ्यां० । ॐ षूं मध्यमाभ्यां० । ॐ षैं अनामिकाभ्यां० । ॐ षौं कनिष्ठिकाभ्यां० । ॐ षः करतलकरपृष्ठाभ्यां० । एवं हृदयादिन्यासं विधाय ध्यायेत् । तद्यथा । षां हृदयाय नमः । षीं शिरसे स्वाहा । षूं शिखायै वषट् । षैं कवचाय हुं । षौं नेत्रत्रयाय वौषट् । षः अस्त्राय फट् ।

"स्फुरत्पद्मासनां देवीमर्द्धपद्मासने स्थिताम् । सर्वालंकारशोभाढ्यां पीनोन्नतपयोधराम् ॥

"सदाऽमृतं स्रवन्तीं च पीतकौशेयवाससम् । चतुर्भुजां दक्षिणेन स्थूलं दण्डं च बिभ्रतीम् ॥

"वामेन चोर्ध्वहस्तेन धृतनीलोत्पलां शुभाम् । वामदक्षिणहस्ताभ्यां गृहीतविविधायुधाम्" ॥

ध्यात्वा तां संनियम्य दक्षिणनासापुटेन निःसार्य पूर्वलिखिताष्टदले स्थापितप्रतिमायां कुड्यप्रतिमायां चावाह्य निवेशयेत् ।

"आयाहि वरदे देवि महाषष्ठीति विश्रुते । शक्तिभी रक्ष मे पुत्रं महाषष्ठि नमोऽस्तु ते ॥"

महाषष्ठि इहागच्छेह तिष्ठ इत्यावाह्य पूजयेत् । जन्मदायै नमः जन्मदामावाहयामि । जीवन्तिकायै नमः जीवन्तिकामावाहयामि । तदस्तुमित्रावरुणा० । पूजामन्त्रः. यां जनाः प्रतिनन्दति रात्रिं० ।

"जय देवि जगन्मातर्जगदानन्दकारिणि । प्रसीद देवि कल्याणि नमस्ते देवि षष्ठिके ॥

"षष्ठि देवि महासत्त्वे सर्वेषां च सुतप्रदे । वरदे त्वत्प्रसादेन चिरं जीवतु बालकः ॥

इति संपूज्य ।

"नैवेद्यानि च पक्कान्नं पायसं पोलिका तथा । पिष्टगोलिसमायुक्ता नैवेद्यं प्रतिगृह्यताम् ॥

नैवेद्यम् ।

"फलैर्नानाविधै रम्यैः षष्ठासन्तुष्टिकारकैः । फलेन फलितं सर्वं सफलाश्च मनोरथाः" ॥
फलम् । देवताप्रणामः,

"देवतानामृषीणां च भक्तानां भक्तवत्सले । इमं च रक्ष मे पुत्रं महाषष्ठि नमोऽस्तु ते ॥"

बालसमर्पणम्.

"गौर्याः पुत्रो यथा स्कन्दः शिशुः संरक्षितस्त्वया । तथा ममाप्ययं बालो रक्ष्यतां षष्ठिके नमः ॥
"षष्ठि देवि नमस्तुभ्यं सूतिकागृहशालिनि । पूजिताऽसि परं भक्त्या सबालां रक्ष मातरम् ॥
"यमिनी सर्वभूतानां वार्द्धिनी सर्वसम्पदाम् । बोधिनी सर्वविद्यानां जन्मदे त्वां नता वयम् ॥
"जननी सर्वलोकानां बालानां च विशेषतः । नारायणीस्वरूपेण सुतं मे रक्ष सर्वतः ॥
"एनं रक्ष महाषष्ठि सदा त्वं विघ्ननाशिनि । बालं समातरं रक्ष नित्यमेव कुले स्थिता ॥
"सर्वभूतहिते मातर्जगतामुपकारिणि । सर्वतः षष्ठिरूपेण बालरक्षां कुरुष्व मे ॥
"षष्ठिके हि महाभागे हिताहितवरप्रदे । त्वत्प्रसादादविघ्नेन चिरं जीवतु बालकः ॥
"अस्मिंस्तु सूतिकागारे देवीभिः परिवारिता । रक्षां कुरु महाभागे सर्वोपद्रवनाशिनी ॥
"अयं मम कुलोत्पन्नो रक्षार्थं पादयोस्तव । नीतो मया महाभागे चिरं जीवतु बालकः ॥
"मातर्बालमिमं रक्ष महाषष्ठि नमोऽस्तु ते । शक्तिस्त्वं सर्वदेवानां बालानां हितकारिणी ॥
"मातेव रक्ष मे पुत्रं महाषष्ठि नमोऽस्तु ते । रुद्राणी रुद्ररूपेण सर्वविघ्नविनाशिनि ॥
"प्राणदे बलदे देवि रक्ष बालं शुभा भव । अमुं मम कुलोत्पन्नं रक्ष त्वमिह बालकम् ॥
"रक्षोभूतपिशाचेभ्यो डाकिनीयोगिनीषु च । मातेव रक्ष मे बालं श्वापदात्पन्नगात्तथा ॥
" त्वमेव वैष्णवी देवी ब्रह्माणी च व्यवस्थिता । रुद्रशक्तिः समाख्याता महाषष्ठि नमोऽस्तु ते ॥
"धात्री त्वं कार्त्तिकेयस्य महाषष्ठीति विश्रुते । त्वत्प्रसादादविघ्नेन चिरं जीवतु बालकः" ॥

ततो बालं मार्जयेत् ।

"बलेन येन विधृतं शैलशृङ्गं समुच्छ्रितम् । कृष्णेनैकेन हस्तेन तद्बलं स्यात्सुते मम ॥
" शान्तिरस्तु शिवं चास्तु प्रणश्यत्वसुखं च यत् । यतः समागतं पापं तत्रैव प्रतिगच्छतु" ॥

कार्तिकेयप्रार्थना,

"चन्द्रार्कयोर्दिगीशानां यमस्य च भवस्य च । निक्षेपमिममप्यात्तं ते मे रक्षन्तु बालकम् ॥
"अप्रमत्तं प्रमत्तं वा दिवा रात्रावथापि वा । रक्षन्तु सर्वतः सर्वे देवाः शक्रपुरोगमाः ॥
अथ आयुर्वेदोक्तां रक्षां बालस्य समीपे पठेत् ।

"नागाः पिशाचा गन्धर्वाः पितरो यक्षराक्षसाः । ये ये त्वाऽभिभवन्ति स्म ब्रह्मा तान् हन्तु सर्वदा ॥
"पृथिव्यामन्तरिक्षे च ये चरन्ति निशाचराः । विदिक्षु दिक्षु ये चान्ये त्वां रक्षन्तु ततस्ततः ॥
"पान्तु त्वाम् ऋषयो देवाः शस्ता राजर्षयस्तथा । पर्वताश्चैव नद्यश्च तथा सर्वे च सागराः ॥
"अग्नी रक्षतु जिह्वायां प्राणान् वायुस्तथैव च । सोमो व्यानं त्वपानं च पर्जन्यः परिरक्षतु ॥

“उदानं विद्युतः पान्तु समानं स्तनयित्नवः । बलिमिन्द्रो बलपतिर्मीतिं वाचस्पतिस्तथा ॥
“कामांस्ते पान्तु गन्धर्वाः सत्त्वमिन्द्रोऽभिरक्षतु । प्रज्ञां ते वरुणो राजा समुद्रो नाभिमण्डलम् ॥
“चक्षुः सूर्यो दिशः श्रोत्रं चन्द्रमाः पातु ते मनः । नासिकां पातु ते वायू रोमाण्योषधयस्तथा ॥
“आकाशं त्वनिशं पातु देहं तव वसुन्धरा । वैश्वानरस्तव शिरो विष्णुस्तव पराक्रमम् ॥
“पौरुषं पुरुषश्रेष्ठो ब्रह्मा पादौ तथा भुजौ । एते देहविशेषेण तव नित्या भवन्त्विह ॥
“एतद्वेदोक्तमन्त्रैस्तु कृत्वा व्याधिविनाशनम् । मयैवं कृतरक्षस्त्वं दीर्घमायुरवाप्नुहि ॥
“ब्रवीतु स्वस्ति ते विष्णुः स्वस्ति ते नारदादयः । स्वस्ति चाग्निश्च वायुश्च स्वस्ति देवा महोरगाः ॥
“पितामहकृतं स्वस्ति ह्यायुः कुर्वन्तु ते सदा” ॥

अनेन स्तोत्रेणैकादशतन्तुभिरेकादशसूत्रग्रन्थिं बध्वा सूतिका बालककण्ठे रक्षाबन्धनं करोति । ततो गौरसर्षपसैन्धवनिम्बपत्रैर्धूपः सूतिकागृहे देयः ।

ततः क्षेत्रपालं पूजयेत् । देशकालौ सङ्कीर्त्य ‘ममाभिनवजातस्य कुमारस्य नैरुज्यदीर्घायुष्यसर्वोपद्रवशान्तिपूर्वकं सर्वाभ्युदयप्राप्तिकामोऽत्र पूजनीयदेवतासहितक्षेत्रपालपूजनं करिष्ये’ इति सङ्कल्प्य । भैरवाय नमः । भैरवमावाहयामि । क्षेत्रपालाय नमः । क्षेत्रपालमावाहयामि । गन्धर्वानावाहयामि । भूतादीनावाहयामि । योगिन्यादीनावाहयामि । मातॄः आवाहयामि । आदित्यादीनावाहयामि । दिक्पालानावाहयामि । द्वारमातॄः आवाहयामि । आवाहितदेवताः संपूज्य माषभक्तबलीन् दद्यात् ।

“निर्वाणं निर्विकल्पं निरुपममलं निर्विकारं सकोपं । चक्रं दण्डं दधानं हुतवहवदनं रुद्रवत् मन्त्रभावम् ।
“स्फूत्काराबद्धरावं भ्रुकुटितटमुखं भैरवं शूलपाणिं खट्वाङ्गैः कोटिभीमं डमरुकसहितं क्षेत्रपालं नमामि” ॥
भैरवाय नमः इमं सदीपं माषभक्तबलिं समर्पयामि ।

“नानारूपधराः सर्वे गन्धर्वा देवयोनयः । स्वयं रक्षन्तु मे पुत्रं तुष्टा गृह्णन्त्विमं बलिम्” ॥
गन्धर्वेभ्यः० ।

“क्षेत्रपाल नमस्तुभ्यं सर्वशान्तिफलप्रद । बालस्य विघ्ननाशाय गृहाण त्वमिमं बलिम्” ॥
क्षेत्रपालाय० ।

“भूतदैत्यपिशाचाद्या गन्धर्वा रक्षसां गणाः । शुभं कुर्वन्तु ते सर्वे मम गृह्णन्त्विमं बलिम्” ॥
भूतादिभ्यो नमः इ० ।

“योगिनी डाकिनी चैव मातरो निवसन्ति याः । शान्तिं कुर्वन्तु ताः सर्वा मम गृह्णन्त्विमं बलिम्” ॥
योगिन्यादिभ्यः० ।

“नानारूपधराः सर्वा मातरो देवयोनयः । स्वयं रक्षन्तु मे पुत्रं तुष्टा गृह्णन्त्विमं बलिम्” ॥
मातृभ्यो नमः इ० ।

“आदित्याद्या ग्रहा ये च नित्यं स्वर्गनिवासिनः । रक्षां कुर्वन्तु ते सर्वे मम गृह्णन्त्विमं बलिम्” ॥

आदित्यादिभ्यो० ।

"दिक्पालाश्च तथेन्द्राद्याः स्वस्थानप्रतिवासिनः। शान्तिं कुर्वन्तु ते सर्वे मम गृह्णन्त्विमं बलिम् "॥ दिक्पालेभ्यो० । चामुण्डायै नमः ।

"नन्दे नन्दिनि वासिष्ठे वसुदेवे च भार्गवे । जये च विजये चैव षडेता द्वारमातरः "॥ द्वारमातृभ्यः । त्रातारमिन्द्र०[1] गर्ग इन्द्रः त्रिष्टुप् इन्द्रप्रीत्यर्थं बलिदाने विनियोगः ।

त्रातारमिन्द्रमवितारमिन्द्रं हवे हवे सुहवं शूरमिन्द्रम् ।
ह्वयामि[2] शक्रं पुरुहूतमिन्द्रं स्वस्ति नो मघवा धात्विन्द्रः ॥

इन्द्राय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपं माषभक्तबलिं समर्पयामि । भो इन्द्र दिशां रक्ष बलिं भक्ष मम सकुटुम्बस्यायुःकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता शुभदो भव इति सर्वत्र बोध्यम् ।

अग्निं० काण्वो० मेधातिथिः० गायत्री० । अग्निप्रीत्यर्थं बलिदाने विनियोगः ।

"अस्य यज्ञस्य सुक्रतुम् । अग्निन्दूतं वृणीमहे । होतारं विश्ववेदसम् " । अग्नये साङ्गाय० । भो अग्ने० दिशां रक्ष० ।

यमाय सोमं० यमो० यमो० ऽनुष्टुप् । यमप्रीत्यर्थम्० ।

"यमाय सोमं सुनुत यमाय जुहुता हविः । यमं ह यज्ञो गच्छत्यग्निदूतो अरङ्कृतः " ॥

यमाय साङ्गाय० । भो यम० दिशां रक्ष० ।

मोषुणः० घोरकाण्वो० निर्ऋतिर्गायत्री० । निर्ऋतिप्रीत्यर्थम्० ।

"मो षु णः परा परा निर्ऋतिर्दुर्हणावधीत् । पदीष्ट तृष्णया सह " ।

निर्ऋतये साङ्गाय० । भो निर्ऋते दिशां० ।

तत्त्वा यामि०शुनः शेपो० वरुणस्त्रिष्टुप् । वरुणप्रीत्यर्थं० ।

"तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ।
"अहेडमानो वरुणेह बोध्युरुशंस मा न आयुः प्रमोषीः " ॥

वरुणाय साङ्गाय० । भो वरुण० दिशां रक्ष० ।

तव वायो० आङ्गिरसो वायुर्गायत्री० वायुप्रीत्यर्थम्० ।

"तव वायो बृहस्पते त्वष्टुर्जामातरद्भुतः । अवांस्यावृणीमहे " ।

वायवे साङ्गाय० । भो वायो० दिशां रक्ष० ।

१ त्रातारमिन्द्र इति मन्त्रस्य गर्ग ऋषिः, इन्द्रो देवता, त्रिष्टुप् छन्दः इत्यस्य संक्षिप्तं रूपमेतत् । एवमुत्तरत्र सर्वत्र बोध्यम् । २ 'हुवेऽनु' इत्यपरः पाठः ।

सोमो धेनुं० गौतमः सोमस्त्रिष्टुप् सोमप्रीत्यर्थम्० ।
"सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्मण्यं ददाति ।
"सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशदस्मै" ॥
सोमाय साङ्गाय० । भोः सोम० दिशां रक्ष० ।
तमीशानं० गौतमः ईशानो जगती ईशानप्रीत्यर्थम्० ।
"तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम् ।
"पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये" ॥
ईशानाय० । भो ईशान दिशां रक्ष० ।
सहस्रशीर्षा० नारायणोऽनन्तोऽनुष्टुप् अनन्तप्रीत्यर्थम्० ।
"सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं विश्वतस्पृत्वाऽत्यतिष्ठद्दशाङ्गुलम्" ॥
अनन्ताय साङ्गाय० । भो अनन्त० दिशां रक्ष० ।
ब्रह्मजज्ञानं० गौतमो वामदेवो ब्रह्मा त्रिष्टुप् ब्रह्मप्रीत्यर्थम्० ।
"ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः ।
"सबुन्धिया उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः" ॥
"ब्रह्मणे साङ्गाय० । भो ब्रह्मन्० दिशां रक्ष० ।
गणानां त्वा० गृत्समदो गणपतिर्जगती गणपतिर्प्रीत्यर्थम्० ।
"गणानां त्वां गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् ।
"ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आनः शृण्वन्नूतिभिः सीद सादनम्" ॥

गणपतये साङ्गाय० । भो गणपते दिशां रक्ष० । भो जन्मदाः इमं बलिं गृह्णीत मम सकुटुम्बस्यायुष्कर्त्र्यः पुष्टिकर्त्र्यः तुष्टिकर्त्र्यः शुभदा भवत । भोः षष्ठि देवि इमं बलिं गृहाण मम सकुटुम्बस्यायुष्कर्त्री क्षेमकर्त्री शान्तिकर्त्री पुष्टिकर्त्री तुष्टिकर्त्री शुभदा भव । भो जीवन्तिके इमं बलिं गृहाण मम स० पुनस्तथैवेति । इन्द्रादिलोकपालाः इमं बलिं गृह्णीत मम स० आयुष्कर्तारः क्षेमकर्तारः शान्तिकर्तारः० भवत० । आकृष्णेन० हिरण्यस्तूपः सविता त्रिष्टुप्० सूर्यप्रीत्यर्थं च० । आकृष्णेन० सूर्याय साङ्गाय० । भोः सूर्य इमं सदीपं० । आप्यायस्व० गौतमः सोमो गायत्री० सोमप्रीत्य० । आप्यायस्व० सोमाय साङ्गाय० । भोः सोम इमं सदीपं माषभक्तबलिं० । अग्निर्मूर्द्धा० विरूपोऽङ्गारको गायत्री० अङ्गारकप्री० । अग्निर्मूर्द्धादिवः अङ्गारकाय सां० । भो अङ्गारक इमं सदीपं० । उद्बुध्यध्वं० बुधः सोम्यो बुधस्त्रिष्टुप्० बुधप्रीत्य० ।

"उद्बुध्यध्वं समनसः सखायः समग्निमिन्ध्वं बहवः सनीलाः ।
"दधिक्रामग्निमुषसञ्च देवीमिन्द्रावतोऽवसे निह्वये वः" ।

बुधाय साङ्गाय० । भो बुध इमं० । बृहस्पते० गृत्समदो बृहस्पतिस्त्रिष्टुप् बृहस्पतिप्रीत्य० । बृहस्पते अतिय० बृहस्पतये साङ्गाय० । भो बृहस्पते इमं० । शुक्रः० पाराशरः शुक्रो द्विपदा विराट्

शुक्रप्री० । शुक्रः शू शु० शुक्राय साङ्गाय० । भोः शुक्र इमं० । शमग्निः० रिरिंविटि शनिरुष्णिक् शनिप्रीत्य० । शमग्निरग्निभिः० शनैश्वराय साङ्गा० । भोः शनैश्वर इमं० । कयानो० वामदेवो राहुर्गायत्री राहुप्रीत्य० । कयानश्चित्र० राहवे साङ्गा० । भो राहो० । केतु० मधुच्छन्दाः केतुर्गायत्री० केतुप्रीत्य० । केतुं कृण्वन्० केतवे साङ्गाय० । भोः केतो इमं० । जातवेदसे० कश्यपो दुर्गा त्रिष्टुप्० दुर्गाप्रीत्यर्थे० । जातवेदसे० दुर्गायै साङ्गायै० भो दुर्गे इमं० । भो कार्तिकेय इमं० । भोः खड्ग इमं० । भोः शर इमं० । भो मन्थान इमं० । भोः क्षेत्रपाल इमं० । गणपतये नमः । दुर्गायै नमः । इष्टदेवताभ्यो नमः । कुलदेवताभ्यः० । ग्रामदेवताभ्यः० । षट्कृत्तिकाभ्यः० । अष्टसिद्धिभ्यः० । सरस्वतीसहिताय ब्रह्मणे० । भवानीसहिताय शङ्कराय० । लक्ष्मीसहिताय नारायणाय० । कार्तिकेयाय० । खड्गाय० । वंशाय० । मुसलाय० । मन्थानाय० । विष्णवे० । षष्ठीदेव्यै नमः । जन्मदायै० । जीवन्तिकायै च एवं बलीन्दत्वा 'कृतस्य पूजाविधेः साङ्गतासिद्ध्यर्थं नानानामगोत्रेभ्यो ब्राह्मणेभ्यः खाद्यफलताम्बूलदक्षिणक्षीरापत्यादिदानं करिष्ये' इति सङ्कल्प्य भूयसीं च सङ्कल्प्य कर्मेश्वरार्पणं कुर्यात् । यस्य स्मृत्या० मन्त्रहीनं० । ततः श्रिये जात इति आरार्तिकं देवस्य प्रसूतिकाया यजमानस्य च कुर्यात् । ब्राह्मणाशिषो देयाः । अत्र दाने नाशौचम् ।

तथा च **व्यासः**,

"सूतिकावासनिलया जन्मदा नाम देवताः । तासां यागनिमित्तं तु शुद्धिर्जन्मनि कीर्तिता ॥
"प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा । त्रिष्वेतेषु न कुर्वीत सूतकं पुत्रजन्मनि " ॥ इति ॥

गोरोचनातिलकं बालस्य कुर्यात् । द्वारसमीपे छागबन्धनं मुसलधारणं शस्त्रपाणिभिः पुरुषैर्जागरणमिमं सर्वमाचारप्राप्तम् ।

## अथ प्रकारान्तरेण षष्ठिकापूजा ।

प्रथमं बहिर्बलिदानम् ।

"क्षेत्रपाल नमस्तुभ्यं सर्वशान्तिफलप्रद । बालस्य विघ्ननाशाय गृहाण त्वमिमं बलिम् ॥
"षष्ठीगृहार्चितः प्रीत्या शिशुं दीर्घायुषं कुरु । भूतदैत्यपिशाचाद्या गन्धर्वा रक्षसां गणाः ॥
"शुभं कुर्वन्तु ते सर्वे मम गृह्णन्त्विमं बलिम् । पूर्वादिदिग्विभागेषु स्वस्थानप्रतिवासिनः ॥
"शुभं कुर्वन्तु ते सर्वे मम गृह्णन्त्विमं बलिम् । योगिनी डाकिनी चैव मातरो निवसन्ति याः ॥
"शान्तिं कुर्वन्तु ताः सर्वा मम गृह्णन्त्विमं बलिम् । नानारूपधराः सर्वा मातरो देवमातरः ॥
"स्वयं रक्षन्तु मे पुत्रं मम गृह्णन्त्विमं बलिम् । दिक्पालाश्च तथेन्द्राद्याः स्वस्थानप्रतिवासिनः ॥
"शान्तिं कुर्वन्तु ते सर्वे मम गृह्णन्त्विमं बलिम् । आदित्याद्या ग्रहाः सर्वे ये नित्यं स्वर्गवासिनः ॥
"रक्षां कुर्वन्तु ते सर्वे मम गृह्णन्त्विमं बलिम् । "

ततो गृहं प्रविश्य द्वारदेशे गणपतिपूजां कुर्यात् ।

"सर्वविघ्नहरोऽसि त्वं लम्बोदर गजानन । षष्ठीगृहेऽर्चितः प्रीत्या शिशुं दीर्घायुषं कुरु ॥

"लम्बोदर महाभाग सर्वोपद्रवनाशन । त्वत्प्रसादादविघ्नेन चिरं जीवतु बालकः ॥"

द्वारमध्ये ॐ गणपतये नमः । द्वारस्य दक्षिणे ॐ क्षेत्रपालाय नमः । द्वारस्य वामे ॐ दुर्गायै नमः । द्वारात् षष्ठिकास्थानं गत्वा गौर्यादिषोडशमातरः पूज्याः । 'गौरी पद्मा शची मेधे'त्यादिनामभिः । दुर्गा श्रीश्च पूज्या ।

"यां जनाः प्रतिनन्दन्ति रात्रिं धेनुमिवायतीम् । संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली:"॥

इति श्रियं संपूज्य वसोर्धारां दद्यात् त्रिः पञ्च सप्त वा । तत्र घृतवसोर्धारामन्त्रा ऋग्वेदोक्ताः । सहस्रधारः पवते । १ । शतधारमुत्समक्षीयमाणम् । २ । सहस्रं मे ददतो अष्टकर्ण्य इत्यादि सार्द्धे द्वे ऋचौ । ३ ।

## अथ षष्ठिकापूजा ।

तत्र क्रमः । देशकालौ स्मृत्वा 'अद्य गत्रौ ममाभिनवजातकुमारस्य नैरुज्यपूर्वकदीर्घायुष्यकामनया भगवत्याः श्रीमहाषष्ठिकादेव्याः पूजनीयगमस्तदेवतासहितायाः एभिरुपचारैः पूजनमहं करिष्य'इति संकल्प्य षष्ठ्यावाहनं कुर्यात् ।

"आयाहि वरदे देवि महाषष्ठीति विश्रुते । शक्तिभिः सह पुत्रं मे रक्ष जागरवासरे"॥

इत्यावाह्य 'तदस्तु मित्रावरुणेति' प्रतिष्ठाप्य कलशे कराङ्गन्यासौ कुर्यात् । ॐ षां अङ्गुष्ठाभ्यां नमः । ॐ षीं तर्जनीभ्यां नम । ॐ षूं मध्यमाभ्यां नमः । ॐ षैं अनामिकाभ्यां नमः । ॐ षौं कनिष्ठिकाभ्यां नमः । ॐ षः करतलकरपृष्ठाभ्यां नमः । ॐ षां हृदयाय नमः । ॐ षीं शिरसे स्वाहा । ॐ षूं शिखायै वषट् । ॐ षैं कवचाय हुं । ॐ षौं नेत्रत्रयाय वौषट् । ॐ षः अस्त्राय फट् । इति न्यासौ विधाय ततः षोडशोपचारैः पूजामारभेत । एतानि पाद्यार्घ्याचमनीयमधुपर्कपुनराचमनीयानि षष्ठीभट्टारकायै नमः । इदं चन्दनानुलेपनं षष्ठीभट्टारकायै नमः । इदमाच्छादनं षष्ठीभट्टारकायै नमः । ततः पुष्पाञ्जलिं दत्वा बलिं दद्यात् ।

"शक्तिस्त्वं सर्वदेवानां लोकानां हितकारिणी । मातर्बालमिमं रक्ष महाषष्ठि नमोऽस्तु ते ॥

"रुद्राणी रुद्ररूपेण महाविघ्नविनाशिनी । प्रसन्ने वरदे देवि स्वयं रक्ष हि बालकम् ॥

"भूतदैत्यपिशाचेभ्यो डाकिनीयोगिनीषु च । मातेव रक्ष मे पुत्रं श्वापदात्पन्नगात्तथा ॥

"त्वमेव वैष्णवी देवी ब्रह्माणी च व्यवस्थिता । रुद्रशक्तिः समाख्याता महाषष्ठि नमोऽस्तु ते ॥

"गौरीपुत्रो यथा स्कन्दः शिशुः संरक्षितः पुरा । तथा ममाप्ययं बालो रक्ष्यतां षष्ठिके नमः" ॥

"ॐ नमो भगवत्यै षष्ठीभट्टारकायै साङ्गायै सपरिवारायै सायुधायै सवाहनायै नमः" इति पूजां विधाय कार्त्तिकेयपूजां कुर्यात्।

"कार्त्तिकेय महाबाहो गौरीहृदयनन्दन । कुमारं रक्ष भीतिभ्यः पाहि देव नमोऽस्तु ते ॥"

ततो मन्थानपूजा ।

"मन्थान त्वं हि गोलोके देवदेवेन निर्मितः । पूजितश्च विधानेन सूतीरक्षां कुरुष्व मे ॥"

अथ खड्गपूजा ।

"असिर्विशसनः खड्गः तीक्ष्णधारो दुरासदः । श्रीगर्भो विजयश्चैव धर्मपाल नमोऽस्तु ते ॥"

अथ पूजासङ्कल्पः ।

अस्यां रात्रौ ममाभिनवजातस्य कुमारस्य नैरुज्यपूर्वकदीर्घायुष्यकामनया एतानि गन्धपुष्पपत्राक्षतधूपदीपतांबूलाच्छादनपक्वान्नपरमान्नपूरिकाशष्कुलीपिष्टकादिनैवेद्यादीनि भगवत्यै महाषष्ठीदेव्यै पूजितसमस्तदेवतासहितायै साङ्गायै सपरिवारायै सायुधायै सवाहनायै मयोत्सृष्टानि प्रीयन्तां न मम । इति समस्तदेवताः सर्वोपचारैः सम्पूज्य माङ्गल्यतूर्यादिशब्दैः सह सूतिकासहितबालरक्षार्थं वस्त्रं निवेदयेत्। इदं वस्त्रं बृहस्पतिदैवत्यं भगवत्यै न मम ॥ ग्रहेभ्यो नमः । क्षेत्रपालाय नमः । स्थानपालाय नमः । सर्वेभ्यो देवेभ्यो नमः। सर्वाभ्यो मातृभ्यो नमः ।

अथ बालस्याङ्गन्यासः ।

ॐ षष्ठि हृदयाय नमः । ॐ षष्ठि शिरसे स्वाहा । ॐ षष्ठि शिखायै वषट् । ॐ षष्ठि कवचाय हुं । ॐ षष्ठि नेत्रत्रयाय वौषट् । ॐ षष्ठि अस्त्राय फट् । ततो व्यजनं कृत्वा बालकाघमर्षणम् । मार्जनं कुशेन । ततो बालकसमर्पणम् ।

"देवतानामृषीणां च भक्तानां भक्तवत्सले । अर्पितं रक्ष मे पुत्रं महाषष्ठि नमोऽस्तु ते ॥
"जननी सर्वभूतानां बालकानां विशेषतः । नारायणीस्वरूपेण पुत्रं मे रक्ष सर्वतः ॥
"भूतदैत्यपिशाचेभ्यो डाकिनीभ्यः शरोत्करैः । सुतं मे स्वसुतं कृत्वा रक्ष रक्ष वरानने ॥
"गौरीपुत्रो यथा स्कन्दः शिशुः संरक्षितः पुरा । तथा ममाप्ययं बालो रक्ष्यतां षष्ठिके नमः॥
"एवं रक्ष महाषष्ठि सदा त्वं विघ्ननाशिनि । बालं समातरं रक्ष नित्यमन्तःकुटीस्थिता ॥
"सर्वभूतहिते मातर्जगतामुपकारिणि । सर्वतः षष्ठिरूपेण बालरक्षां कुरुष्व मे ॥
"षष्ठि देवि महाभागे हिताहितवरप्रदे । त्वत्प्रसादादविघ्नेन चिरं जीवतु मे सुतः ॥
"अस्मिंस्तु सूतिकागारे दैवतैः परिवारिते । रक्षां कुरु महाभागे सर्वोपद्रवनाशिनि ॥
" अयं कुले ममोत्पन्नो रक्षार्थं पादयोस्तव । नीतो मातर्महाभागे चिरं जीवतु बालकः ॥ "

ततो बालस्य मार्जनम् ।

"माथुरं यद्बलं यच्च विष्णोरमिततेजसः । हरस्य यद्बलं सर्वं तत्सर्वं पुत्रके मम ॥
"शान्तिरस्तु शिवं चास्तु प्रणश्यत्वसुखं च यत् । यतः समागतं सर्वं तत्रैव प्रतिगच्छतु ॥"

ततो जातहारिण्यो मातरः पूज्याः ।

"जातं हरन्ति या बालं मातरो गूढविग्रहाः । अभिरक्षन्तु मे पुत्रं बलिपूजां हरन्तु नः ॥"

ततो नारायणपूजा ।

"त्रैलोक्यपूजितः श्रीमान् सदा द्विजविवर्द्धनः । शान्तिं कुरु गदापाणे नारायण नमोऽस्तु ते ॥"

ततो वंशपूजा ।

"सर्वमङ्गलमङ्गल्य गोविन्दस्य करे स्थित । वंशं वर्द्धय मे वंश सदानन्द नमोऽस्तु ते ॥"

ततः षष्ठिकापूजा ।

शिवां सम्भूतिं प्रीतिं सन्नतिम् अनसूयां क्षमां च प्रत्येकं गन्धादिभिः सम्पूज्य ततः कृताञ्जलिः पठेत् ।

"चन्द्रार्कयोर्दिगीशानां दिशां च वरुणस्य च । निक्षेपार्थमिमं दत्तं ते मे रक्षन्तु बालकम् ॥
"अप्रमत्तं प्रमत्तं वा दिवा रात्रावथापि वा । रक्षन्तु सर्वतः सर्वे देवाः शुक्रपुरोगमाः ॥
"रक्षैनं वसुधे देवि सदा सर्वगतप्रिये । आयुष्प्रमाणं सकलं संख्येयं ते हरिप्रिये ॥
"अन्तरा ह्यायुषस्तस्य ये केचित् परिपन्थिनः । विद्यारोग्येषु वित्तेषु निबर्हस्वाचिरेण तान् ॥"

इति पठित्वा 'क्षमस्वेति' विसृज्य ततस्तु गव्यघृतसैन्धवनिम्बपत्रसितसर्षपात्मको धूपः सूतिकागृहे देयः । सवल्कलं पूगफलं दद्यात् ।

"सवल्कलं पूगफलमिदन्ते षष्ठि देविके । तव जातस्य बालस्य ददाम्यायुःसमृद्धये ॥"

तत आयुर्वेदोक्तां रक्षां बालसमीपे पठेत् ।

"कृत्यानां परिरक्षार्थं तथा रक्षोभयस्य च । रक्षाकर्म करिष्यामि ब्रह्मा तदनुमोदताम् ॥
"नागाः पिशाचा गन्धर्वाः पितरो यक्षराक्षसाः । अभिद्रवन्ति ये ये त्वां ब्रह्माद्या घ्नन्तु तान् सदा ॥
"पृथिव्यामन्तरिक्षे च ये चरन्ति निशाचराः । दिक्षु वास्तुषु ये चान्ये पान्तु त्वां ते नमस्कृताः ॥
"पान्तु त्वामृषयो ब्रह्मा दिव्या राजर्षयस्तथा । पर्वताश्चैव नद्यश्च सर्वास्सर्वे च सागराः ॥
"अग्नी रक्षतु ते जिह्वां प्राणान्वायुस्तथैव च । सोमो व्यानमपानन्ते पर्जन्यः परिरक्षतु ॥
"उदानं विद्युतः पान्तु समानं स्तनयित्नवः । बलमिन्द्रो बलपतिर्मतिं वाचस्पतिस्तथा ॥
"कामांस्ते पान्तु गन्धर्वाः सत्त्वमिन्द्रोऽभिरक्षतु । प्रज्ञां ते वरुणो राजा समुद्रो नाभिमण्डलम् ॥

"चक्षुः सूर्यो दिशः श्रोत्रं चन्द्रमाः पातु ते मनः। नक्षत्राणि सदा रूपं छायां पातु निशा तव॥
"रेतस्त्वाप्यायनं त्वापो लोमान्योषधयस्तथा। आकाशं चान्तरं पातु देहं तव वसुन्धरा॥
"वैश्वानरः शिरः पातु विष्णुस्तव पराक्रमम्। पौरुषं पुरुषश्रेष्ठो ब्रह्माऽऽत्मानं भ्रुवौ ध्रुवः॥
"ततो देहं विशेषेण नव नित्याधिदेवताः। एतैर्वेदात्मकैर्मन्त्रैः कृत्वा व्याधिविनाशनम्॥
"मयैवं कृतरक्षस्त्वं दीर्घमायुरवाप्नुहि।"

ततः प्रणम्य विसृजेत्। चरणेनैकेनोपानहमपरेण काष्ठपादुकामारुह्य दक्षिणकरेण खड्गं धृत्वा पश्चात् वारत्रयं 'गौरीपुत्रो यथा स्कन्द' इति श्लोकं पठित्वा षष्ठिकापूजामाचरेत्।

ततो हलपूजा।

"निदानं सर्वसस्यानामायुधं शितिवाससः। हल पालय मे पुत्रं सर्वप्रिय नमोऽस्तु ते॥"

ततः वृषभकपालपूजा।

"कपाल त्वं वृषस्यांशः श्मशानस्थितिभाक् सदा। भूतदैत्यपिशाचेभ्यः पुत्रं मे रक्ष सर्वदा॥"

ततो गृहमागत्य कुशतिलजलान्यादाय दक्षिणां दद्यात्। 'ॐ अद्य अस्यां रात्रौ ममाभिनवजातकुमारस्य समाशतनैरुज्यपूर्वकदीर्घायुष्यबलपुष्टिकामनया कृततत् षष्ठिकादिदेवतापूजाप्रतिष्ठासिद्ध्यर्थं दक्षिणाम् इदं हिरण्यमग्निदैवतं तन्मौल्योपकल्पितं द्रव्यं वा नानानामगोत्रेभ्यो दातुमहमुत्सृजे'। ततोऽऽभिषेकाशीर्वादमन्त्रा देयाः। ततः शस्त्रपाणिभिः पुरुषैर्बलवद्भिर्जाग्रद्भिः सूतिकागृहरक्षां द्वारदेशे छागबन्धनं समुसलायसनिधानं च कारयेत्। अधिग्नवंशस्तनेन जागरणं कारयेत्॥

इति शिवप्रोक्ता षष्ठिकापूजा।

---

**नामकारणमिति। गार्ग्यः,** "मासनाम गुरोर्नाम दद्याद् बालस्य वै पिता"। इति।

**संग्रहे,** "कृष्णोऽनन्तोऽच्युतश्चक्री वैकुण्ठोऽथ जनार्दनः।
"उपेन्द्रो यज्ञपुरुषो वासुदेवस्तथा हरिः॥ योगीशः पुण्डरीकाक्षो मासनामान्यनुक्रमात्।" इति।

अत्र मार्गशीर्षादिक्रम इति वृद्धाः। चैत्रादिरित्येके। उक्तकालातिक्रमे नक्षत्राण्याह,

**वसिष्ठः,**

"उत्तरारेवतीहस्तमूलपुष्याः सवारुणाः। श्रवणादितिमैत्रश्च स्वाती मृगशिरस्तथा॥
"प्राजापत्यं धनिष्ठा च प्रशस्ता नामकर्मणि।" इति।

**आपस्तम्बगृह्ये,**

"दशम्यामुत्थितायां स्नातायां पुत्रस्य नाम दधाति पिता माता चेति द्व्यक्षरं चतुरक्षरं वा नामपूर्वमाख्यातोत्तरं दीर्घाभिनिष्ठानान्तं घोषवदाद्यन्तरन्तस्थमपि वा यस्मिन् स्वित्युपसर्गः स्यात्तद्धि

प्रतिष्ठितमिति हि ब्राह्मणमिति "। अत्र **बौधायनो** विकल्पान्तराण्याह । ' ऋष्यनूकं देवतानूकं वा यथैवैषां पूर्वपुरुषाणां नामानि स्युरिति' । वसिष्ठो नारदः विष्णुः शिवः यज्ञशर्मा सोमशर्मेत्यादि । अयुजाक्षरं कुमार्याः । विषमाक्षरं श्रीः गौः भारतीत्यादि ।

अत्रेदं बोध्यम् ।

देशभाषानुसारेण क्रियमाणनाम्नः सूक्तवाकादौ सङ्कल्पादौ चोल्लेखो बर्बराणां भ्रान्त्यैव । तस्मात् 'घोषवदाद्यन्तरन्तस्थं द्व्यक्षरं चतुरक्षरं वा नाम कर्तव्यं कृतं कुर्यान्न तद्धितमिति' ( १।१५।५ ) **आश्वलायन**गृह्यसूत्रोक्तनाम्नैव साधुना तदुचितम् । किं चाग्न्यादिनक्षत्रदेवता उक्ताः ।

"नक्षत्रदेवता एता एताभिर्यज्ञकर्मणि । यजमानस्य शास्त्रज्ञैर्नाम नक्षत्रजं स्मृतम् ॥ " इति ।

**वेदाङ्गज्योतिषोक्तं** नक्षत्रनाम च तदुपयोगि । नामकरणे नाक्षत्रं नाम नक्षत्रपादाक्षरादि कार्यमिति वृद्धाः । **गृह्यपरिशिष्टे** च क्वचित्तथैवोक्तम् । 'एतदेव नामकरणप्रकरणे नक्षत्रनाम च निर्दिशति तद्रहस्यं भवतीति' **आपस्तम्बेनो**क्तम् । 'तदेव च अभिवादनीयं च समीक्षेत तन्मातापितरौ विद्यातामोपनयादिति' **आश्वलायनेनो**क्तम् । एवमेव नामकरणे वृद्धशिष्टानामाचारः । अत एव **ज्योतिषे** यज्ञकर्मणीत्युक्तम् । तत्तन्नक्षत्रवाचकेभ्यो जातार्थप्रत्यये निष्पन्नं तत्तन्नक्षत्रजं नामेति केचित् । तत्र 'पुत्रस्य नाम गृह्णाति रौहिणाय तिष्यायेति' **बौधायनसूत्रं** मूलम् । यत्त्वसावसावित्यादिश्य नामनी इति **आश्वलायनेनो**क्तं तत्तु सन्दिग्धम् । यत्तु **देवत्रात**नानुराधो देवदत्त इति प्रयोक्तव्यमित्युक्तं तत्र सूत्राक्षरानुग्रहश्चिन्त्यः । **शांखायनाद**यस्तु ज्यौतिषोक्तमेवाद्रियन्ते । इदानीमाश्वलायनाः **देवत्रातो**क्त्या—

"निर्दिशेद्यजमानस्य नाम सांव्यवहारिकम् । नाक्षत्रं च यथा कृष्णशर्मा रौहिण इत्यपि ॥ "

इत्या**श्वलायन**श्रौतकारिकोक्त्या च तथैवाचरन्ति । नामकरणेऽपि तदेव नाक्षत्रं नामेति च वदन्ति । गुरुचरणास्तु **बौधायनादि**वाक्ये रौहिणादिपदं तत्तन्नक्षत्रजातत्वेन तत्तद्देवतानामुपलक्षणम् । एवं हि ज्योतिषेण तयोरेकमूलकल्पनालाघवं भवति । विकल्पस्यानौचित्याच्च । संज्ञापर्यायनामशब्देन पाचकादिशब्दवत् केवलयौगिकश्रावणादिशब्दानां ग्रहीतुमनौचित्याच्च । अभिवादनं प्रयोजनमस्येत्यर्थकाभिवादनीयशब्देन तस्य वक्तुमशक्यत्वाच्च । तस्य साधारणत्वादित्याहुः । अत्रत्यं तत्त्वं कलातोऽवगन्तव्यम् । वा चार्थे । तेनान्यस्यापि संग्रहः । तत्राद्यस्य गृह्यसूत्रादिप्रसिद्धत्वात् द्वितीये मानमाह । **यथाहेति** । तस्यैवार्थमाह । **सूर्येति** । चन्द्रदर्शनात्मकं देवतानत्यात्मकं वा इदमित्यप्यन्यत्रोक्तम् ।

"तृतीये वा चतुर्थे वा मासि निष्क्रमणं भवेत् । ततस्तृतीये कर्तव्यं मासि सूर्यस्य दर्शनम् ॥ "

इति **ज्योतिर्निबन्धे यमोक्तेः** ।

"अन्नप्राशनकाले वा कुर्यान्निष्क्रमणक्रियाम् । " इति **गर्गः** ।

**द्वादशदिनमप्यस्य कालस्तथा च स्कान्दे**,

**"द्वादशेऽहनि राजेन्द्र शिशोर्निष्क्रमणं गृहात् । पञ्चमे च तथा मासे भूमौ तमुपवेशयेत् ॥**

"तत्र सर्वग्रहाः शस्ता भौमोऽप्यत्र विशेषतः । उत्तरात्रितयं सौम्यं पुष्यर्क्षं शक्रदैवतम् ॥
"प्राजापत्यं च हस्तश्च शस्तमाश्विनमित्रभम् । " इति ॥

**पारिजाते** पाग्नोक्तमुपवेशनमपि बोध्यम् । स्वस्तिवाचनं कृत्वा वराहपृथिवीदेवगुरुद्विजान् सम्पूज्य मण्डले शिशुमुपवेशयेत् । तत्र मन्त्राः ।

"रक्षैनं वसुधे देवि सदा सर्वगतं शुभे । आयुष्प्रमाणं निखिलं निक्षिपस्व हरिप्रिये ॥
"अचिरादायुषस्त्वस्य ये केचित्परिपन्थिनः । जीवितारोग्यवित्तेषु निर्दहस्वाचिरेण तान् ॥
"धारिण्यशेषभूतानां मातस्त्वमधिका ह्यसि । कुमारं पाहि मातस्त्वं ब्रह्मा तदनुमन्यताम् ॥ "

तत आशिषो वाचयेदिति । 'षष्ठे मासीति' **आपस्तम्बगृह्योऽपि** 'जन्मतोऽधिषष्ठे मासीति' । कालातीतेऽन्नप्राशनेऽस्तादिदोषा अपि बोध्याः । 'अष्टमे वाऽपि कर्तव्यमिति' **यमः** । 'षष्ठे मासेऽन्नप्राशनं । जातेषु दन्तेषु वेति' **लौगाक्षिः** । 'संवत्सरेऽन्नप्राशनं । अर्धसंवत्सरे इत्येके' इति **शंखः** । अत्र सर्वत्र स्वस्वगृह्यानुरोधेन व्यवस्थेति **माधवः** ।

"मासे षष्ठे सप्तमे वाऽप्यष्टमे मासि वत्सरे । कर्णवेधं प्रशंसन्ति पुष्ट्यायुःश्रीविवृद्धये ॥ " इति

**गर्गोक्तम्,**

"द्वितीया दशमी षष्ठी सप्तमी च त्रयोदशी । द्वादशी पञ्चमी शस्ता तृतीया कर्णवेधने॥" इति

**बृहस्पत्युक्तम्,**

"कार्तिके पौषमासे वा चैत्रे वा फाल्गुनेऽपि वा । कर्णवेधं प्रशंसन्ति शुक्लपक्षे शुभे दिने ॥
"शिशोरजातदन्तस्य मातुरुत्सङ्गसर्पिणः । सौचिको वेधयेत्कर्णौ सूच्या द्विगुणसूत्रया ॥
"हस्ताश्विनीस्वातिपुनर्वसौ च तिष्येन्दुचित्राहरिरेवतीषु ।
"चन्द्रेऽनुकूले गुरुशुक्रवारे कर्णौ तु वेध्यावमले च लग्ने ॥"

इति **हेमाद्रौ** ज्यौतिषोक्तं च कर्णवेधाख्यं कर्मापि बोध्यम् । एवं वर्धापनमपि बोध्यम् । तथाहि **भविष्ये,**

"सर्वैश्च जन्मदिवसे स्नातो मङ्गलवारिभिः । नवाम्बरधरो भूत्वा पूजयेच्च चिरायुषम् ॥
"मार्कण्डेयं नरो भक्त्या पूजयेत्प्रयतस्तथा । ततो दीर्घायुषं व्यासं रामं द्रौणिं कृपं बलिम् ॥
"प्रल्हादं च हनूमन्तं बिभीषणमथार्चयेत् ॥ स्वनक्षत्रं जन्मतिथिं प्राप्य संपूजयेन्नरः ।
"षष्ठीं च दधिभक्तेन वर्षे वर्षे पुनः पुनः ॥"

**तिथितत्त्वे** एतन्नामभिस्तिलहोमोऽप्युक्तः ।

**आदित्यपुराणे,**

"सर्वैश्च जन्मदिवसे स्नातैर्मंगलवारिभिः । गुरुदेवाग्निविप्राश्च पूजनीयाः प्रयत्नतः ॥

"स्वनक्षत्रं च पितरौ तथा देवः प्रजापतिः । प्रतिसंवत्सरं यत्नात् कर्तव्यश्च महोत्सवः ॥"

**कृत्यचिन्तामणौ भविष्ये,**

"गुडदुग्धतिलान्दद्याद्धस्तग्रन्थौ च बन्धयेत् । गुग्गुलं निम्बसिद्धार्थं दूर्वागोरोचनादिकम् ॥
"सम्पूज्य भानुविघ्नेशौ महर्षिं प्रार्थयेदिदम् । चिरजीवी यथा त्वं तु भविष्यामि तथा मुने ॥
"रूपवान् वित्तवांश्चैव श्रिया युक्तश्च सर्वदा । मार्कण्डेय नमस्तेऽस्तु सप्तकल्पान्तजीवन ॥
"आयुरारोग्यसिद्ध्यर्थं प्रसीद भगवन्मुने । चिरजीवी यथा त्वं तु मुनीनां प्रवर द्विज ॥
"कुरुष्व मुनिशार्दूल तथा मां चिरजीविनम् । मार्कण्डेय महाभाग सप्तकल्पान्तजीवन ॥
"आयुरारोग्यसिद्ध्यर्थमस्माकं वरदो भव । सतिलं गुडसंमिश्रमञ्जल्यर्धमितं पयः ॥
"मार्कण्डेयाद्वरं लब्ध्वा पिबाम्यायुर्विवृद्धये ।" इति पयः पिबेत् ।

**तिथितत्त्वे स्कान्दे** विशेषः ।

"खण्डनं नखकेशानां मैथुनाध्वगमौ तथा । आमिषं कलहं हिंसा वर्षवृद्धौ विवर्जयेत् ॥" इति ।

एतच्च वर्षपर्यन्तं प्रतिमासं ततः प्रतिसंवत्सरं जन्मदिने आयुष्याद्यभिवृद्ध्यर्थं कुर्यात् । तस्यायं प्रयोगः । तत्रादौ तिलतैलेनाभ्यङ्गं कृत्वा दधि दूर्वां च शिरसि धृत्वा स्नायादुष्णोदकेन । ततः केसरोदकेन स्नात्वा शुक्लवस्त्रयुगं परिधायाचान्तो गृहाभ्यन्तरमुपविश्य गोरोचनातिलकं कृत्वा आचम्य प्राणानायम्य 'सुमुखश्चैकदन्तश्चे'त्यादि पठित्वा जलतण्डुलपुष्पफलदक्षिणामादाय सङ्कल्पयेत् । देशकालौ संकीर्त्य 'ममाद्य जन्मदिने दीर्घायुर्यशःपुत्रपौत्राद्यभिवृद्धिद्वारा मार्कण्डेयादिप्रीत्यर्थं मार्कण्डेयादिपूजनमहं करिष्ये' । तत्रादौ निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं स्वस्तिवाचनं च कृत्वा पीठोपर्यक्षतपुञ्जेषु देवता आवाहयेत् । मार्कण्डेयाय नमः । अश्वत्थाम्ने० बलये० व्यासाय० हनूमते० बिभीषणाय० कृपाय० परशुरामाय० ८ इत्येतैर्नामभिर्द्वितीयान्तैश्चावाह्य संपूज्य प्रार्थयेत् ।

"मार्कण्डेय महाबाहो सप्तकल्पांतजीवन । चिरजीवी यथा त्वं हि भविष्यामि तथा मुने ॥
"नववर्षायुषं प्राप्य तपसा महता पुरा । सप्तकल्पान्तकं त्वायुः प्राप्तं हि मुनिना त्वया ॥
"आयुर्देहि यशो देहि श्रियं देहि धनं तथा । पुत्रपौत्रप्रपौत्रांश्च मार्कण्डेय महामुने ॥
"द्रोणपुत्र महाभाग चन्द्रतेजःसमुद्भव । भवाय बलदोऽसित्वमश्वत्थाम्ने नमोऽस्तु ते ॥
"दैत्येन्द्रकुलसम्भूत बले दाता हरेः पुरा । प्रपन्नः शरणं त्वाऽहं दीर्घमायुः प्रयच्छ मे ॥
"भविष्यत्साम्प्रतञ्चैव अतीतं ज्ञातवान्मुने । नारायणसमुद्भूत त्वं व्यासायुष्प्रदो भव ॥
"अञ्जनीगर्भसम्भूत कपीन्द्र सबलोत्तम । रामप्रिय नमस्तुभ्यं हनूमन् रक्ष सर्वदा ॥
"विभीषण नमस्तुभ्यं समये रामदूतकः । आयुरारोग्यमैश्वर्यं देहि पौलस्त्यनन्दन ॥
"द्विजेन्द्र भरताचार्य सर्वशास्त्रविशारद । शरण त्वां प्रपन्नोऽस्मि कृपालुश्च कृपां कुरु ॥
"रैणुकेय महावीर्य क्षत्रियान्वयनाशन । आयुः प्रयच्छ मे राजन् जामदग्न्य नमोऽस्तु ते" ॥
ततो गुडतिलमिश्रं दुग्धं प्रसृतिना मन्त्रमावर्तयन् त्रिः पिबेत् । तत्र मन्त्रः ॥
"सतिलं गुडसंमिश्रमञ्जल्यर्धमितं पयः । मार्कण्डेय महाबाहो पिबाम्यायुःसमृद्धये" ॥

यस्य स्मृत्या० प्रमादात्कुर्वतां कर्म० इत्युक्त्वा उत्तिष्ठ ब्रह्मणस्पते० इति विसृज्य कर्मेश्वरार्पणं कुर्यात् ।

कर्म चेति चस्त्वर्थोऽत्र संबध्यत इत्याह । **चूडालक्षणं त्विति** । तत्स्वरूपमित्यर्थः । तदाख्यमिति यावत् । एवं प्रागपि । अनन्वयनिरासाय लिङ्गविपरिणामेनाह । **कार्यमितीति** । इत्येवमित्यर्थः । इदमुपलक्षणं पुलिङ्गस्यापि । अत्र यथाकुलमित्यनेन सर्वे पक्षाः संगृहीताः । तथाहि । **आपस्तम्बगृह्ये** 'जन्मनोऽधितृतीये वर्षे चौलं पुनर्वस्वोरिति' । **गर्गनारदबैजवापा** अप्येवम् । **आश्वलायनानां** तु विशेषः,

"तृतीये पञ्चमे वाऽब्दे चौलकर्म प्रशस्यते । प्राग्वा समे सप्तमे वा सहोपनयनेन वा" ॥

इति **आश्वलायन**वचनात् ( १।१७।१ ) ।

"ततः संवत्सरे पूर्णे चूडाकर्म विधीयते । द्वितीये वा तृतीये वा कर्तव्यं श्रुतिदर्शनात् ॥

"यथाकुलं च केषाञ्चिदुपनीत्या सहेष्यते ।" इति ।

**कारिकाऽपि,**

"पञ्चमे सप्तमे वर्षे जन्मतो मध्यमं भवेत् । अधमं गर्भतः स्यात्तु दशमैकादशेऽपि वा" ॥ इति अन्यत्र ।

**नारदीये** विशेषः,

"सूनोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत् । पञ्चमाद्वात् प्रागूर्ध्वं तु गर्भिण्यामपि कारयेत् ॥

"यदि गर्भविपत्तिः स्यात् शिशोर्वा मरणं यदि । सहोपनीत्या कुर्याच्चेत्तदा दोषो न विद्यते" ॥ इति ।

**बृहस्पतिरपि,**

"गर्भे मातुः कुमारस्य न कुर्याच्चौलकर्म तु । पञ्चमासादधः कुर्यादत ऊर्ध्वं न कारयेत्" ॥

इति **धर्मप्रकाशे** गर्भिणीपतेरुपनयनकर्तृत्वमपि निषिद्धमित्युक्तं चौलप्रकरणे,

"औद्वाहमौपनयनं पयसोऽवगाहमायुःक्षयो भवति गर्भिणिकापतीनाम्" । इति ।

तत्रोद्वाहं स्वस्य चान्यस्य चापत्यादेः । उपनयनं त्वपत्यादेरेव । तत्रापि चौल इव नायं नियमो मदुपनेयस्य मातुरेव गर्भे निषेध इति किं तूपनेतुर्भार्यामात्रस्य गर्भे इति । अन्यत्रापि,

"सूनोर्मातरि गर्भिण्यां मौञ्जीचूडे न कारयेत् । गते तु पञ्चमे मासे गर्भादीनां मृतिर्भवेत्" ॥ इति ।

तथा,

"प्राप्तमभ्युदयश्राद्धं पुत्रसंस्कारकर्मणि । पत्नी रजस्वला चेत्स्यान्न कुर्यात्तत्पिता तदा" ॥ इति ।

**संग्रहे तु,**

"सङ्कटे समनुप्राप्तसूतके समुपागते । कूष्माण्डीभिर्घृतं हुत्वा गां च दद्यात् पयस्विनीम् ।

"चूडोपनयनोद्वाहप्रतिष्ठादिकमाचरेत् " ॥ इति ।

अत्र विशेषो **विष्णुपुराणे,**

"भक्ष्याभक्ष्ये तथाऽपेये वाच्यावाच्ये तथाऽनृते । तावत्कालं न दोषोऽस्ति स यावन्नोपनीयते " इति

**वसिष्ठोऽपि,**

"न ह्यस्य विद्यते कर्म किञ्चिदामौञ्जिबन्धनात् । शूद्रवृत्त्या समस्तावद्यावद्वेदो न जायते " ॥ इति ।

**अपरार्के** विशेषमाह **वृद्धशातातपः,**

"शिशोरभ्युक्षणं प्रोक्तं बालस्याचमनं स्मृतम् । रजस्वलादिसंस्पर्शे स्नानमेव कुमारके ॥

"प्राक् चूडाकरणात् बालः प्रागन्नप्राशनाच्छिशुः । कुमारकस्तु विज्ञेयो यावन्मौञ्जीनिबन्धनम् "।इति ।

अधिकमनुपदमेव वक्ष्यते । यदि गर्भाधानादिसंस्कारलोपस्तदा तन्निमित्तं प्रायश्चित्तं कृत्वा कालात्ययनिमित्तं प्रायश्चित्तहोमं च कृत्वा चौलं होमश्च कार्यः ।

तदुक्तं

**शौनकेन,**

"आरभ्याधानमाचौलात् कालेऽतीते तु कर्मणाम् । व्याहृत्याज्यं सुसंस्कृत्य हुत्वा कर्म यथाक्रमम् ॥

"एतेष्वेकैकलोपे तु पादकृच्छ्रं समाचरेत् । चूडाया अर्धकृच्छ्रं स्यादापादि त्वेवमीरितम् ॥

"अनापदि तु सर्वत्र द्विगुणं द्विगुणं चरेत् । " इति ।

**त्रिकाण्डी,**

"कालातीतेषु कार्येषु प्राप्तवत्स्वपरेषु च । कालातीतानि कृत्वैव विदध्यादुत्तराणि तु ॥ " इति ।

**अथ शिखाविषयं उच्यते** । तत्र तावत् **माधवीये लौगाक्षिः** । "दक्षिणतः कमुजा वसिष्ठानामुभयतोऽत्रिकश्यपानां मुण्डा भृगवः पञ्चचूडा अङ्गिरसो मङ्गलार्थं शिखिनोऽन्ये यथा कुलधर्मं वेति" । कमुजा केशपंक्तिः । एतच्च शाखान्तरविषयम् । तैत्तिरीयाणां तु स्वप्रवरसङ्ख्यया शिखाधारणमुक्तं **गृह्ये** " तूष्णीं केशान्विनीय यथर्षि शिखा निदधाति यथा वैषां कुलधर्मः स्यात् " इति ।

अत्र **निर्णयसिन्धुकृत् प्रयोगरत्ने,**

"मध्ये शिरसि चूडा स्याद्वसिष्ठानां तु दक्षिणे । उभयोः पार्श्वयोरत्रिकश्यपानां शिखा मता ॥" इति ।

**माधवीये**ऽप्येवम् । **आपस्तम्बस्त्वाह,** "तूष्णीं केशान्विनीय यथर्षि शिखा निदधातीति[1] " । यथर्षि प्रवरसङ्ख्यया । तासां मध्यशिखावर्जमुपनयने वपनं कार्यं, प्रतिदिशं प्रवपतीत्युपनयने तेनैवोक्तेः । रिक्तो वा एषो न पिहितो यन्मुण्डस्तस्यैतदपिधानं यच्छिखेति श्रुतेः ।

"विशिखो व्युपवीतश्च यत्करोति न तत्कृतम् ।"

---

१ आप. गृ. प. १६।६

इति निषेधाच्च । सत्रेषु तु वचनात्सशिखवपनमिति **सुदर्शनभाष्ये** उक्तम् । यत्तु कुमारा विशिखा इवेति लिङ्गं तच्छन्दोगपरम् । **अपरार्के मदनरत्ने च लौगाक्षिः**, "दक्षिणतः कमुजा वसिष्ठानामुभयतोऽत्रिकश्यपानां मुण्डा भृगवः पञ्चचूडा अङ्गिरसो वाजिमेके मङ्गलार्थं शिखिनोऽन्ये यथाकुलधर्मं वेति" । कमुजा शिखा । वाजिः केशपंक्तिः । **स्मृतिदर्पणे**, "एका शिखा दक्षिणतो वसिष्ठगोत्रस्य पञ्चाङ्गिरसां भृगोस्तु । नैका शिखा कश्यपगोत्रजानां शिखोभयत्रापि यथाकुलं च" । एतच्छूद्रातिरिक्तविषयम् । 'शूद्रस्यानियताः केशवेषा' इति **वसिष्ठोक्तेः** ।

यत्तु **पाद्मे**, 'न शिखी नोपवीती स्यान्नोच्चरेत् संस्कृतां गिरम् ।'

इति शूद्रमुपक्रम्योक्तं तदसच्छूद्रस्येति केचित् । विकल्प इति तु युक्तम् ।

अत एव **हारीतः**,

"स्त्रीशूद्रौ तु शिखां छित्वा क्रोधाद्वैराग्यतोऽपि वा । प्राजापत्यं प्रकुर्यातां निष्कृतिर्नान्यथा भवेत् ॥" इति। एतत्परिग्रहपक्षे स्वदेशाचाराद्व्यवस्थेति दिगित्याह ।

तस्यायं भावः । आपस्तम्बानां चूडाकर्मणि शिखास्थापनमुक्तं तत्रैकार्षेयस्यैका द्व्यार्षेयस्य द्वे इत्यादि । तासां यावज्जीवं धारणमुपनयने वपनं वेति संशये मध्यशिखावर्जमन्यासां वपनं, प्रतिमन्त्रं प्रतिदिशं वपतीति सूत्रात् । रिक्तो वा एष इति वचनात् । विशिख इति स्मृतेः । सत्रेषु वचनाद्वपनं शिखाया इत्यत्रैकवचनाच्च । अतो मध्यशिखास्थापनं युक्तमिति । केचित्तु अत्र सूत्रतात्पर्यं त्वेवं, चौले स्थापितानां शिखानां यावज्जीवं स्थापनमेव । चौले यथर्षि शिखा निदधाति प्रतिदिशं वपतीत्युपदेशात् । उपनयने तु धर्मोपदेशः सौकर्यात् । वपनं तु चौलवदेवेति आहुः ।

अन्ये तु आपस्तम्बानां चूडाकर्मणि शिखास्थापनमेकार्षेयस्यैका द्व्यार्षेयस्य द्वे इत्याद्युक्तं, तासां च संस्कार्यत्वं, शिखा निदधातीति द्वितीयासंयोगात् । अनुपयुक्तस्य संस्कारासम्भवाद्विशिख इत्यादिनाऽविशेषात् सर्वासामेव कर्मण्युपयोगो वाच्य इति सर्वासां कर्माङ्गत्वम् । तत्रैकस्या एव कर्माङ्गत्वकल्पने वैरूप्यं स्यात् । गोदानादौ तु वचनादेव सर्वशिखावपनम् । एवं सत्रेऽपि । तथा च वचनेन विनाऽन्यत्र वपनं न भवति । उपनयने तु प्रतिमन्त्रमिति सूत्रमवष्टभ्य सर्वशिखावपनम् । "विशिखः" "रिक्तो वे" त्यादिवचनान्यथानुपपत्त्या मध्यमशिखास्थापनं च कैश्चिदुच्यते । तत्र प्रतिमन्त्रमिति सूत्रस्य चौलेऽपि विद्यमानत्वाच्चौलस्य च पूर्वभावित्वात्तत्र च शिखावर्जमेवानेन सूत्रेण वपनं विधीयते इत्यर्थस्य निर्णीतत्वात्तद्वदेवोपनयनादौ प्राप्नोतीति शिखावपनमुपनयने नैव भवतीति सिद्धान्तः ।

**सुदर्शनभाष्यम**प्येवं समञ्जसम् । **हिरण्यकेशिसूत्रभाष्ये** तु स्पष्ट एवायमर्थ उक्त इति दिगित्याहुः । वस्तुतस्तु उपनयने **आपस्तम्बेनो**त्तराभिश्चतसृभिः प्रतिमन्त्रं प्रतिदिशं वपतीत्युक्तम् । तस्यायं भावः **सुदर्शना**भिमतः । उत्तराभिश्चतसृभिर्येनावपदित्यादिभिः प्रतिमन्त्रं शिखातः प्रतिदिशं प्रवपति, प्रशब्दात् कुशलीकरणमाचार्य एव करोतीत्यर्थः । यत्र यत्र समावर्तनादौ वपनोपदेशस्तत्र सर्वत्र शिखावर्जितमेव वपनम् । चौले यथर्षि शिखा निदधाति यथा वैषां कुलधर्मः स्यादपाऽसऽसर्जनायाकेशनिधानात् समानमित्युक्तत्वात् । तथा च यथार्षि शिखा निदधाति केशान् प्रवपतीति चौले

निर्णीतत्वाद्रिक्तो वेति श्रुत्या शिखावपनप्रतिषेधाच्च न शिखावपनमुपनयने । यत्तु सत्रेषु तु वचनाद्वपनꣳ शिखाया इत्यत्रैकवचनाच्चौले स्थापितशिखानां मध्यशिखावर्जमुपनयने वपनं युक्तम् । **सुदर्शनेन** लिखितत्वादिति । तन्न । गोदाने शिखावर्जितसर्वकेशवपनमिति पक्षे यथर्षिशिखावर्जितसर्वकेशवपनं, रिक्तो वेति श्रुत्या शिखावपनप्रतिषेधादित्यस्य **सुदर्शनाचार्यै**रुक्तत्वात् । तथा चैकवचनमविवक्षितं, ग्रहं सम्मार्ष्टीतिवदिति बोध्यम् । यदपि येषां मते तद्विवक्षितं तेषां यथर्षिस्थापितानां शिखानां मध्ये एकस्या एव वपनमस्तु सत्रे विशिख इति निषेधाच्चेति । तदपि न । यतो यत्र वचनाद्वपनं तत्र नायं निषेधोऽन्यथा सत्रिरण्डाप्रायश्चित्तिच्छन्दोगयत्यादीनामपि शिखाधारणं स्यात् । तस्मात् चौले स्थापितानां शिखानां मध्यशिखावर्जमुपनयने वपनमिति सर्वथा न युक्तमिति दिगिति बोध्यम् ।

## अथ सुदर्शनभाष्यं मापस्तम्बसूत्रम् ।

'उपनयनं व्याख्यास्याम' इत्युपक्रम्य 'ब्राह्मणान् भोजयित्वाऽऽशिषो वाचयित्वा कुमारं भोजयित्वाऽनुवाकस्य प्रथमेन यजुषाऽपः सꣳसृज्योष्णाः शीतास्वानीयोत्तरया शिर उनत्ति शोधयाति त्रींस्त्रीन्दर्भानन्तर्द्धायोत्तराभिश्चतसृभिः प्रतिमन्त्रं प्रतिदिशं प्रवपति । ततो येनावपदित्यादिभिः प्रतिमन्त्रं प्रतिदिशं त्रींस्त्रीन्दर्भानन्तर्द्धाय केशान् प्रवपति । प्रशब्दात् कुशलीकरणमप्याचार्यस्यैव । तत्र प्रथमे मन्त्रेऽसावित्यस्य स्थाने रामशर्मेति कुमारनामग्रहणम् । चतुर्थे संबुद्ध्या इति **सुदर्शनीया** व्याख्या । समावर्तने, अपां ꣳस ꣳ सर्जनाद्याकेशनिधानात्समानम् । अथानुवाकस्य प्रथमेन यजुषेत्यारभ्य तस्मिन् केशानुपयम्योत्तरयोदुम्बरमूले दर्भस्तम्बे वा निदधातीत्येवमन्तमुपनयनेन समानं भवतीति शेषः । जन्मतोऽपि तृतीये वर्षे चौलं पुनर्वस्वोरित्युपक्रम्यापरेणाग्निं प्राञ्चमुपवेश्य श्येण्या शलल्या त्रिभिर्दर्भपिञ्जलैः ( पुञ्जीलैः ) शलालुग्रप्सेनेति तूष्णीं केशान्विनीय यथर्षि शिखा निदधाति । अपरेणाग्निमग्नेः पश्चात् प्राञ्चं प्राङ्मुखं तूष्णीं वाग्यतः केशान्विनीय विविधं नीत्वाऽपसव्याङ्गुल्यर्थांश्च पृथक् कृत्वेत्यर्थः । यथर्षि यावन्त ऋषयः प्रवरे तावतीः शिखा निदधाति । एकार्षेयस्यैका शिखा द्व्यार्षेयस्य द्वे इत्यादि । यथा येषां कुलधर्मः स्यात् । अथ वा येन प्रकारेण एषां कुलजानां कुलधर्मः प्रवर्तते तथा शिखा कर्तव्या । केचिद्येषामिति वचनात्पितुरन्योऽपि चौलकर्तेति । अपाꣳ सꣳ सर्जनाद्याकेशनिधनात्समानम् । व्याख्यातमेतत्समावर्तने । एवं गोदानमन्यस्मिन्नपि नक्षत्रे षोडशे वर्षे । गोदानमिति कर्मनामधेयम् । यस्मिन् कर्मण्यङ्गभूतं गोदानयोः शिरःप्रदेशविशेषयोर्वपनं यत्रापि पक्षे शिखावर्जितसर्वकेशवपनं यथर्षि शिखा इति तत्रापि गोदानयोर्वपनं कर्मवचनं कर्मनामधेयप्रवृत्तिनिमित्तं विद्यत एवातो गोदानाख्यं कर्म । एवं यथाचौलं ब्राह्मणभोजनादिवरदानान्तं कार्यं तच्चान्यस्मिन्नपि नक्षत्रे रोहिण्यादौ वर्षे च षोडशे भवति । अत्र पक्षान्तरमाह ।

अग्निगोदानो वा स्यात् । एतावन्नाना सर्वान् केशान्वापयते । एतावन्नाना एतावान् भेदः यदपिधानार्थया शिखया सह सर्वान् केशान्वापयत इति । ततश्चेह विनयनाभावात् शलल्यादीनामभावः ।

१ आप. गृ. प. ४ खं. १० सू. ५ । २ आप गृ. प. ४ । १० । ६ । ३ आप गृ. प. ६ । १६ । १५ । ४ आप. गृ. प. ५ । १२ । ३ । ५ आप. गृ. प. ६ । १६ । ६ । ६ आप. गृ. प. ६ । १६ । ८ । ७ आप. गृ. प. ६ । १६ । ७ । ८ आप. गृ. प. ६ । १६ । ८ । ९ आप. गृ. प. ६ । १६ । १२ । १० आप. गृ. प. ६ । १६ । १३ । ११ आप. गृ. प. ६ । १६ । १५ ।

अत्र च वापयत इति णिजन्तनिर्देशादाचार्य एव गोदानकर्मणः कर्ता । वरदानमाचार्यायैव । तथाऽत्र शिखाया अपि वपनम्, एतावन्नाना सर्वान् केशान्वापयते इत्येतस्मादेव वचनात्सत्रवत् । अन्ये आहुः रिक्तो वा यच्छिखेति सत्रेषु तु वचनाद्वपनं शिखाया इति सत्रेभ्योऽन्यत्र शिखावपनप्रतिषेधादिहापि नैव शिखावपनमितीति ।

**बौधायनोऽपि,**

षोडशे वर्षे गोदानं तस्य चौलवत्तूष्णीं प्रतिपत्तिरवसानं चैतावन्नानाप्रतिपत्तौ सर्वान् केशान्वापयते गामत्र गुरवे ददाति अग्निगोदानो वा भवतीति । अत एव अथ वपन्तं नापितमुत्तरयाऽभिमन्त्रयते आचार्यः यत् क्षुरेणेति । यत् यदा क्षुरेण प्रचयता तीक्ष्णभूतेन सुपेशसा सरूपेण उज्ज्वलेन वप्त्रा, करणस्य कर्तृत्वविवक्षा । एवंभूतेन क्षुरेण यत् यदाऽस्य केशान्वपसि, तदेत्यध्याहारः, तदाऽस्य शिरः शुन्धि शुद्धं कुरु । यथा केशाः निर्मूला भवन्ति तथेत्यर्थः । आयुस्त्वस्य मा प्रमोषीः । वपनस्य स्वतोऽमङ्गलत्वादेवं प्रार्थ्यते । तथा च ब्राह्मणं रिक्तो वेतीति **हरदत्तः ।**

**सत्याषाढहिरण्यकेशिसूत्रेऽपि,**

तृतीये वर्षे चूडाकर्मेत्युपक्रम्य वपनमुक्त्वा "उप्त्वा यथोदितं चूडाः कारयन्ति यथर्षि वा" इत्युक्तम् । अस्य **मातृदत्तीया** व्याख्या । उप्त्वा प्रवपनादनन्तरं मुण्डयित्वा तु यथोचितं यथा कुलस्योचितं यथाकुलधार्मिकमिति तिस्रः पञ्च वा शिखाः यथाप्रदेशं कारयन्ति । यथा येषाम्, एकार्षेयस्यैका द्व्यार्षेयस्य द्वे त्र्यार्षेयस्य तिस्रः पञ्चार्षेयस्य पञ्चेति । तत्रैका चेन्मध्ये । द्वे चेन्मध्ये पुरस्ताच्च तिस्रश्चेत्पश्चान्मध्ये पुरस्ताच्च । दक्षिणतो मध्ये उत्तरे वा । पञ्च चेत्प्रतिदिशम् । उप्त्वेति वचनं छेदमात्रं मा भूदिति । एवंविहितं षोडशे वर्षे गोदानकर्म । यथा चूडाकर्मैवं विहितमुपनीतस्य षोडशे वर्षे गोदानकर्म स्यात् । तत्रैतावान् विशेषः । "सशिखं वा वापयते" सशिखं सह शिखाभिः शिरो वापयते मध्यमामपि शिखां नावशिनष्टीत्यर्थः । शिखामत्रावशिनष्टीत्येकेषाम् । शिखामेकां मध्यमामत्रावशिनष्टीत्येकेषां स्मृतिः । अग्निगोदानो वा भवतीति ।

तदयं निर्गलितोऽर्थः । आपस्तम्बानामुपनयने चूडाकर्मस्थापितशिखावर्जमुक्तविधिना वपनमिति **सुदर्शनभाष्य**सम्मतोऽर्थः । न चोत्तराभिरित्यादिसूत्रस्थस्य प्रतिदिशमिति पदस्य स्वरसाद्दिक्स्थकेशान्तःपातिमध्यमेतरशिखावपनमाभासमानमप्रतिषिद्धमनुमतमिति न्यायेन **सुदर्शन**सम्मतमिति वाच्यम् । चूडाकर्मस्थापितशिखानामविशेषेण पुरुषार्थताया बन्धनाश्रयतया कर्मार्थताया वाऽवगतत्वेन प्रतिदिशं प्रवपतीत्यस्य बाधप्रसङ्गाभावेन चोक्तभानायोगात् । आर्थिककुशलीकरणपरतया 'प्र'शब्दं व्याकुर्वतां भाष्यकृतां स्पष्टमेवात्रानुमतेरवगमाच्च । यदि हि मध्येतरशिखावपनमनुमन्येयुराचार्यास्तर्हि प्रशब्दमेतत्परतयैव व्याकुर्युः । न हि विधिविषयशिखानामन्तरेण वचनं युज्यते वपनम् । प्रतिदिशशब्दस्य तु मन्त्रविधानार्थस्य नास्ति तत्र सामर्थ्यमित्युक्तमेव । किञ्च समावर्तने अपां संसर्जनाद्याकेशनिधानात्समानमिति सूत्रे सर्वमुपनयनेन समानमिति व्याकुर्वद्भिः स्पष्टमेव तत्प्रतिषिद्धम् । उपनयने मध्यमेतरशिखानां वपने समावर्तने तासामभावेनोपनयनसाम्येन वपनासम्भवादिति नोपनयने शिखावपनं भाष्यकृत्सम्मतम् । येऽपि गोदाने रिक्तो वा एष इति श्रुतिमवष्टभ्य शिखानां वपनं नेच्छन्ति तेऽपि सर्वासामेव नेच्छन्ति । तन्मते गोदानशब्दप्रवृत्तिनिमित्ततया यथर्षिशिखेतरकेशवपनस्य भाष्यकृद्भिरभिधानात् ।

हिरण्यकेशिनां गोदाने सशिखं वा वापयत इति शिखामन्त्रावशिनष्टीति च सूत्रं सह शिखाभिः शिखामेकां मध्यममात्रामिति व्याचक्षाणैर्मातृदत्तैरप्येष एवार्थः स्वीकृत इति । अथ भाष्यकृतोऽननुरुध्य प्रवपतीति प्रशब्दस्य शिखासहितवपनमर्थस्तत्र च रिक्तो वा एषो न पिहित इति श्रुतिबलान्माऽस्यायुः प्रमोषीरिति मन्त्रलिङ्गबलाच्च मध्यमशिखास्थापनमित्युच्यते तदा सत्रवदेकार्थयस्योपनयने विशिखताऽऽपत्तिरिति दिक् । एवं सिद्धे शिखावर्जवपने उपनीत्या सह चौलपक्षे जातवपनस्योपनयनाङ्गवपनं न भवति अर्थलोपात् । अत एव पर्वणि सोमाधाने वा कृतवपनस्य पर्वणि यजनीये वा दीक्षायां न वपनमिति सौमिकवपने **रामाण्डारः** । **कात्यायनीयं** " खातलूनाच्छिन्नावहतपिष्टदुग्धदग्धेषु यजुःक्रियाऽसम्भवात् " इति सूत्रं, खाते यूपावटे, लूने बर्हिषि, छिन्ने यूपे, अवहतेषु व्रीहिषु, पिष्टेषु तण्डुलेषु, दुग्धे पयसि, दग्धे महावीरे, एतेषु यजुष्क्रिया न सम्भवति । कुत एतत्, द्वाराभावात् । क्रियाद्वारको हि मन्त्र इति । एतच्चासम्भवविषयमेव द्रष्टव्यमिति ग्रन्थेन व्याकुर्वन् **कर्को**ऽप्यत्रार्थेऽनुकूलतां धत्त इति ध्येयम् ।

**उपेन्द्रस्तु,**

"छिन्ने लूने तथा पिष्टे सान्नाय्ये मार्त्तिके तथा । पश्चान्मन्त्राः प्रयोक्तव्या मन्त्रा यज्ञार्थसाधकाः ॥ "

इति **भरद्वाज**वचनादुक्तविषये वपनाख्यं संस्कारमाह । तस्य च पूर्वोक्त**कात्यायन**सूत्रशेषमसम्भवादिति लोकनिष्पन्नं गृह्णाति यजुःक्रिया भवति यजुर्युक्तं क्रियामात्रं भवति तावन्मात्रस्यासिद्धत्वात् । लौकिकस्य क्रियामात्रस्य सिद्धत्वादिति ग्रन्थेन व्याकुर्वन् **देवयाज्ञिकः** सम्मतिमादधाति इति सर्वमनवद्यम् । शिखाबन्धने विशेषमाह,

**कौथुमिः,**

"शिखिवच्छिखया भाव्यं ब्रह्मावर्तनिबद्धया । प्रदक्षिणं द्विरावर्त्य पाशान्तः सम्प्रवेशनात् ॥
"प्रथमं द्विगुणं कृत्वा ब्रह्मावर्तमिनीरितम् । गायत्रीजपनं कुर्याच्छिखायाश्च निबन्धने ॥ " इति ।

# अथाक्षरारम्भो विद्यारम्भश्चोच्यते ।

**माधवीये मार्कण्डेयः,**

"प्राप्ते तु पञ्चमे वर्षे ह्यप्रसुप्ते जनार्दने । षष्ठीं प्रतिपदं चैव वर्जयित्वा तथाऽष्टमीम् ॥
"रिक्तां पञ्चदशीं चैव सौरिभौमदिने तथा । एवं सुनिश्चिते काले विद्यारंभं तु कारयेत् ॥
"शुक्लवस्त्रं समास्तीर्य तण्डुलेषु विलखयेत् । शलाकया सुवर्णस्य पञ्चाशद्वर्णकान् क्रमात् ॥
"प्रणवादिव्याहृतिभिर्वर्णदेवान् प्रपूजयेत् । सरस्वतीं गणेशञ्च हरिं लक्ष्मीं गुरुं रविम् ॥
"स्वसूत्रकारं स्वां विद्यां शिवं चैव षडक्षरम् । एतेषामेव देवानां नाम्ना तु जुहुयाद् घृतम् ॥
"गुडौदनैर्लड्डुकाद्यैर्नैवेद्यैश्च पृथक् पृथक् । दक्षिणाभिर्द्विजेन्द्राणां कर्तव्यं चात्र पूजनम् ॥
"प्राङ्मुखो गुरुरासीनो वरुणाशामुखं शिशुम् । आदौ "ॐ नमः शिवाय" वाचयित्वा षडक्षरम् ॥
"आदिक्षान्तञ्च पञ्चाशद्वर्णानध्यापयेच्छिशुम् । प्राङ्मुखं तु ततः कृत्वा त्रिर्लेख्यं वाचयञ्चेतम् ॥

''अध्यापयेत्तु प्रथमं द्विजातिभिः सुपूजितः । ततः प्रभृत्यनध्यायान् वर्जनीयान्विवर्जयेत् ॥
''अष्टमीद्वितयं चैव पक्षान्ते च दिनत्रयम् । ततः प्रणम्य सूर्यादीन् विप्रान् सन्तोष्य भूरिशः॥
''लड्डुकाद्यैर्दक्षिणाभिर्विसृजेद्देवतादिकान् । '' इति ।

**नरसिंहोऽपि,**

'अक्षरस्वीकृतिः प्रोक्ता प्राप्ते पञ्चमहायने । ' इति ।

## अथास्य प्रयोगः ।

अद्येहेत्यादिदेशकालौ सङ्कीर्त्य 'अस्य शिशोः सकलविद्याविशारदत्वसिद्धिद्वारा चतुर्विधपुरुषार्थसिद्ध्यर्थमक्षरस्वीकारं विद्यारम्भश्च कर्म करिष्ये' इति संकल्प्य । मातृकापूजनं विधाय आभ्युदयिकं पुण्याहवाचनं च कृत्वा शुक्लवस्त्रे समास्तीर्याक्षतपुञ्जेषु गणेशं हरिं लक्ष्मीं देवीं सरस्वतीं ब्रह्माणं व्यासं गौतमं जैमिनिं मनुं पाणिनिं कात्यायनं पतञ्जलिं यास्कं पिङ्गलं गर्गं कणादं कपिलं वाल्मीकिं वामनं धन्वन्तरिं कृशाश्वं भरतं विश्वकर्माणं पाणिकार्यां नकुलं वेदान् पुराणानि न्यायं मीमांसां धर्मशास्त्रं शिक्षां कल्पं व्याकरणं निरुक्तं छन्दांसि ज्योतिषं वैशेषिकं वेदान्तं सांख्यं पातञ्जलं काव्यमलंङ्कारं वैद्यशास्त्रं धनुर्वेदं गान्धर्वं शिल्पशास्त्रं पालकाप्यं शालिहोत्रं श्यैनिकं संबुद्ध्यन्ततत्तन्नाममन्त्रैः क्रमेणावाहयेत् । सरस्वत्यावहने विशेषः । गोचर्ममात्रं विलिप्य सैकतं स्थण्डिलं कृत्वा पलाशशाखया मृदं खनित्वा तस्यां भुवनमातः सर्ववाङ्मयरूपेणागच्छागच्छेति आवाहयेत् । ततः प्रणवादिचतुर्थ्यन्तं नमोन्ततत्तन्नाममन्त्रैरावाहनक्रमेण पाद्यार्घ्याचमनीयगन्धपुष्पाक्षतधूपदीपपायसगुडौदनसमर्पणनमस्कारान् कृत्वाऽग्निं संस्थाप्य घृतेनैकैकामाहुतिं हुत्वाऽऽचार्यं वस्त्रालङ्कारादिभिः संपूज्य ब्राह्मणान् सन्तोष्य धात्रीं सन्तोष्य अभ्यङ्गस्नानपूर्वकं वस्त्रसुगन्धालङ्कारादिभूषितं बालं कृतगणेशादिदेवाचार्यप्रदक्षिणत्रयं पश्चान्मुखमुपवेशयेत् ।

'' अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ ''

इति गुरुं नमस्कृत्य,

''सरस्वति नमस्तुभ्यं वरदे कामरूपिणि । विश्वरूपे विशालाक्षि देहि विद्यां सुरेश्वरि ॥ ''

इति वाचयित्वा प्राङ्मुखो गुरुर्द्विजाशीःपूजितं प्रणवपूर्वकमक्षरं ग्राहयेत् । विद्यारम्भं च कारयेत् । तत आचार्याभिवन्दनं कृत्वा गणेशादिदेवान् आवाहनक्रमेणोद्वासयेत् । विद्यावृद्धिर्भवति । ततो भूयसी दक्षिणा । पञ्चभूसंस्कारान् कृत्वाऽग्निं संस्थाप्य अग्नेरीशाने कलशे ग्रहपूजां विधाय दक्षिणतो ब्रह्मासनादि । प्रजापतये इन्द्राय अग्नये सोमाय गणेशादीन्नाममन्त्रैराज्येन हुत्वा भूरादिनवाहुतीर्हुत्वा अग्नये स्विष्टकृते प्रजापतिं च हुत्वा संस्रवप्राशनं पवित्राभ्यां मुखमार्जनम् अग्नौ प्रतिपत्तिः प्रणीताविमोकः ब्रह्मणे पूर्णपात्रदानं दक्षिणादानं विसर्जनं ' गच्छ गच्छेति ' ।

इत्यक्षरविद्यारम्भः ।

# अथ गर्भाधानादिसंस्कारसङ्कल्पसंग्रहः ।

कर्ता अद्येत्यादिदेशकालौ स्मृत्वा अस्या मम भार्यायाः प्रतिगर्भसंस्कारातिशयद्वारा अस्यां जनिष्यमाणसर्वगर्भाणां बीजगर्भसमुद्भवैनोनिबर्हणद्वारा च श्रीपरमेश्वरप्रीत्यर्थं गर्भाधानाख्यं कर्म करिष्ये ।

कर्ता देशकालौ स्मृत्वा अस्यां भार्यायामुत्पत्स्यमानस्य गर्भस्य बैजिकगार्भिकदोषपरिहाररूपज्ञानोदयप्रतिरोधपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं पुंसवनाख्यं कर्म करिष्ये ।

कर्ता देशकालौ स्मृत्वा तनुरुधिराप्रियालक्ष्मीभूतगणदूरनिरसनक्षमसकलसौभाग्यनिदानभूतमहालक्ष्मीसमावेशनद्वारा प्रतिगर्भबीजगर्भसमुद्भवैनोनिबर्हणजनकातिशयद्वारा च श्रीपरमेश्वरप्रीत्यर्थं स्त्रीसंस्काररूपं सीमन्तोन्नयनाख्यं कर्म करिष्ये ।

कर्ता देशकालौ स्मृत्वा ममास्य कुमारस्य गर्भाम्बुपानजनितसकलदोषनिबर्हणायुर्मेधाभिवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थं जातकर्म करिष्ये ।

कर्ता देशकालौ स्मृत्वाऽस्य शिशोर्बीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरमायुरभिवृद्धिव्यवहारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं नामकर्म करिष्ये ।

कर्ता देशकालौ स्मृत्वा ममास्य शिशोरायुःश्रीवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थं निष्क्रमणाख्यं कर्म करिष्ये ।

उपवेशनेऽप्येवम् ।

कर्ता देशकालौ स्मृत्वा ममास्य शिशोर्मातृगर्भमलप्राशनशुद्ध्यन्नाद्यब्रह्मवर्चसतेजइन्द्रियायुर्लक्षणफलसिद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थमन्नप्राशनाख्यं कर्म करिष्ये ।

कर्ता देशकालौ स्मृत्वाऽस्य कुमारस्य बीजगर्भसमुद्भवैनोनिबर्हणेन बलायुर्वर्चोऽभिवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं चौलाख्यं कर्म करिष्ये ।

कर्ता देशकालौ स्मृत्वाऽस्य कुमारस्योपनयनं कर्तुं तत्प्राच्याङ्गभूतं वपनादि करिष्ये ।

कर्ता स्वस्योपनेतृत्वाधिकारसिद्धये कृच्छ्रत्रयं प्रायश्चित्तं यथासंभवप्रत्याम्नायद्वाराऽहमाचरिष्ये । द्वादशाधिकसहस्रगायत्रीजपञ्च करिष्ये ।

तत् कृत्वा, बटुः कामचारादिदोषपरिहारार्थं कृच्छ्रत्रयं प्रायश्चित्तं यथासंभवप्रत्याम्नायद्वाराऽहमाचरिष्ये । अयं सङ्कल्पो न **विज्ञानेश्वर**सम्मतः । तस्य हि महापातकवर्जं प्रागुपनयात् कृतदोषस्योपनयनमेव प्रायश्चित्तमित्यभिमतम् । अत एव **जातूकर्ण्यः**,

"अनुपनीतस्तु यो बालो मद्यं मोहात्पिबेद्यदि । तस्य कृच्छ्रत्रयं कुर्यान्माता भ्राता पिताऽथवा ॥" इति ।

पूर्वसङ्कल्पे मानन्तु 'कृच्छ्रत्रयं चोपनेता त्रीन् कृच्छ्रांस्तु बटुश्चरेत्' । इति बोध्यम् ।

अस्य कुमारस्य द्विजत्वसिद्ध्या वेदाध्ययनाधिकारसिद्ध्यर्थमुपनयनाख्यं कर्म करिष्ये । उपनयनाङ्गभूतमनुप्रवचनीयहोमं करिष्ये ।

कर्ता देशकालौ स्मृत्वा ममास्य कुमारस्योपनयनव्रतसमाप्तिवेदग्रहणसामर्थ्यलक्षणमेधासिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं मेधाजननाख्यं कर्म करिष्ये ।

पूर्वोक्तफलसिद्ध्यर्थं मेधापरनामकसावित्रीपूजनं करिष्ये ।
कर्ता देशकालौ संकीर्त्य अस्य ब्रह्मचारिणो गोदानाख्यं कर्म करिष्ये ।

ब्रह्मचारी कृतनित्यक्रियः कृतप्रातरग्निकार्यश्च प्राणानायम्य तिथ्यादि संकीर्त्य मम गृहस्थाश्रमान्तरप्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं समावर्तनं करिष्ये ।

वरपिता देशकालौ संकीर्त्य अस्यामुकशर्मणः पुत्रस्य करिष्यमाणविवाहाङ्गभूतं गणपतिपूजनं स्वस्तिपुण्याहवाचनम् अङ्कुरार्पणं मातृकापूजनं नान्दीश्राद्धं गृहयज्ञं मण्डपदेवताप्रतिष्ठां च करिष्ये ।

एवं वधूपिताऽपि । अस्या अमुकनाम्न्याः कन्याया इति विशेषः । ततः कन्यादाता प्राङ्मुख उपविश्य देशकालौ स्मृत्वा करिष्यमाणविवाहाङ्गभूतं वाग्दानमहं करिष्ये । ततः स एव गोत्रोच्चारादिपूर्वमिमां कन्यां तस्मै वरायादिष्टे मुहूर्ते दास्ये इति वदेत् ।

अथ वरो यस्मिन्नहनि विवाहस्तत्र देशकालौ स्मृत्वा कन्योद्वाहं धर्मप्रजासिद्ध्यर्थमहं करिष्ये । इति संकल्पं कुर्यात् ।

अथ कन्यादाता देशकालौ स्मृत्वा मम समस्तपितॄणां निरतिशयसानन्दब्रह्मलोकावाप्त्यादिकन्यादानकल्पोक्तफलावाप्तयेऽनेन वरेणास्यां कन्यायामुत्पादयिष्यमाणसंतत्या द्वादशावरान् द्वादश परान् पवित्रीकर्तुमात्मनश्च श्रीलक्ष्मीनारायणप्रीतये ब्राह्मविवाहविधिना यथाशक्त्यलंकृतकन्यादानमहं करिष्ये ।

कन्या तारयत्वित्यादि । पुनः मम समस्तेत्यादि प्रीतय इत्यन्तमुक्त्वाऽमुकसप्रवरगोत्रोत्पन्नादिकाम् एतादृशीं कन्यां वरार्थिनीं श्रीरूपिणीं प्रजापतिदेवत्यां प्रजासहत्वकर्मभ्यः प्रतिपादयामीति कुशाक्षतसहितं जलं क्षिपन् दद्यात् इति **नारायणभट्ट**प्रभृतयः तन्न । दोषगणात् । तथाहि । कन्यादानकल्पोक्तफलत्वेन नोद्देश्यता, योगसिद्ध्यधिकरणविरोधापत्तेः । तत्रापि सर्वेभ्यो दर्शपूर्णमासावित्येतद्बोध्यफलत्वेनोद्देशसंभवात् । लक्ष्मीनारायणप्रीतिश्च **हेमाद्रिमदनरत्ना**दिलिखितवचःसंघे न श्रुता न फलत्वमर्हति । प्रजोत्पादनार्थामिति चान्तिमं नातीव सफलतामावहति । आत्मनश्चेति यदि समस्तपितॄणामित्यनेन समुच्चित्य फलावाप्तये इत्यनेन संबध्यते तदा स्वायत्त वाक्यप्रयोगे व्यवहितप्रयोगासंगतिः । संनिहितपवित्रीकर्तुमित्यनेनासंबन्धश्च । यदि च द्वितीयान्ततया तत्र संबन्धः, तदा फलावाप्तेः संबन्धिता न स्यात् । तस्मात् बहुवचनासंगतिश्च । यदि समस्तपितॄणां तदवाप्तिः फलं चतुर्विंशतिसंख्यानां पवित्रता फलमाद्यन्तयोस्तत्प्रीतिः फलमित्यभिमतं तदा निःसंकुचितसामस्त्योपपत्तेर्दुर्वचत्वेन एकविंशत्याद्युत्तरमसंबन्धस्य स्मृत्यादौ स्पष्टत्वेन तद्ग्रहणे मानाभावेन पवित्रता द्वारं तदवाप्तिर्द्वारीति तत एव यागतोऽपूर्ववत्तल्लाभेन पूर्वतनद्वादशानां पुनस्त्वसंनिहितप्रीतेरुक्तरफलत्वेनाग्रिमाणामिदानीमप्रसक्ततयैव

श्रुत्यसंभवेन तद्वाप्तेर्दुर्वचत्वेन तज्जस्यैव तत्तत्पवित्रताफलस्य स्मृत्युक्तत्वेन दानफलत्वोक्त्यनौचित्येन व्यवहितवाक्यप्रयोगानौचित्येन परमेश्वरपदं विहाय लक्ष्मीतिपदोल्लेखे बीजाभावेन दातुर्विशिष्य स्मृतिपुराणोक्तफलजातैकदेशस्याप्यसंस्पर्शेन चायुक्ततमत्वं व्यक्तमेव चक्षुष्मताम् । तस्मान्नैवं दानवाक्यं, किं तु क्रतुशतफललाभकन्यालोमसमसंख्यवर्षसहस्रावच्छिन्नस्वर्गवासलाभभूदानगोदानायाचितनित्यदानसत्यवदनव्रताश्वमेधब्राह्मणप्राणत्राणफललाभसकलजन्मकृतसुकृतफलब्रह्मलोकप्राप्तिकामोऽस्यामुत्पादयिष्यमाण्या संतत्या द्वादशावरानेकविंशत्यवरान्वा तावदपरान् पुरुषान् पवित्रीकर्तुमात्मानं चामुकसप्रवरगोत्रादिरहं प्रजापतिदेवत्याममुकसप्रवरगोत्रायां कन्याममुकसप्रवरगोत्रादये तुभ्यं संप्रददे इति वाक्यम् । ततः पूर्ववदिति ।

तदुक्तम् **आग्नेये,**

"एवं यच्छन्ति ये कन्यां यथाशक्त्या स्वलंकृताम् । विवाहकाले संप्राप्ते यथोक्तसदृशे वरे ॥
"क्रमोत्क्रमक्रतुशतमनुपूर्वं लभन्ति ते । तावत्स्वर्गं लभेयावत् सर्वलोम्नां तु संचकः ॥
"महीदातुश्च गोदातुर्नित्यदातुश्च ये रथाः । कन्यादानानुगाः पश्चात्समायान्ति त्रयो रथाः ॥
"कन्यादश्चाश्वमेधी च प्राणदाता द्विजेषु च । समं यांति रथा ह्येते त्रयो वै नात्र संशयः ॥
"पूर्तधर्ममवाप्नोति यथावद्विधिकल्पितम् । यस्मात् कन्याप्रदानेन दातव्या श्रेय इच्छता ॥"
दातव्येत्यस्य तस्मादित्यादिः ।
"ब्राह्मेण च विवाहेन यस्तु कन्यां प्रयच्छति । ब्रह्मलोकं व्रजेच्छीघ्रं ब्रह्माद्यैः पूजितः सुरैः ॥
"यावन्ति सन्ति रोमाणि कन्यायाश्च तनौ पुनः । तावद्वर्षसहस्राणि रुद्रलोके महीयते ॥
"अप्रजायां तु कन्यायां न भुञ्जीत कदाचन ।" इति ।

**आश्वलायनीये,**

'अलङ्कृत्य कन्यामुदकपूर्वां दद्यादेष ब्राह्मो विवाहस्तस्यां जातो द्वादशावरान् द्वादश परान् पुनात्युभयत' इति ।

**स्कान्दे,**

"वैवाहिकप्रदानं च यो ददाति दयापरः । महेन्द्रभवने याति सेव्यमानोऽप्सरोगणैः ॥
"आत्मीकृत्य सुवर्णेन परकीयां तु कन्यकाम् । धर्मेण विधिना दातुमसगोत्रोऽपि युज्यते ॥
"श्रुत्वा कन्याप्रदानञ्च पितरश्च पितामहाः । विमुक्ताः सर्वपापेभ्यो ब्रह्मलोकं व्रजन्ति ते ॥" इति ।

**भविष्ये,**

"कन्यामलंकृतां दद्यात् समाहूय नराधिप । विद्यार्थिने ब्राह्मणाय कन्यादानं तदुच्यते ॥" इति ।

**दक्षीये** च,

"मातापितृविहीनं तु संस्कारोद्वाहनादिभिः । यः स्थापयति तस्येह पुण्यसंख्या न विद्यते ॥" इति

ततो वरो यथोक्तवेदिकायामुपविश्याचम्य प्राणानायम्य देशकालौ संकीर्त्य प्रतिगृहीतायामस्यां वध्वां भार्यात्वसिद्धये गृह्याग्निसिद्धये च विवाहहोमं करिष्ये । वरः स्वगृहे देशकालौ संकीर्त्य मम विवाहाग्नेर्गृह्यत्वसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं गृहप्रवेशीयहोमं करिष्ये । एवं संस्कारान्तरेष्वप्यूह्यम् ।

इति संस्कारसंकल्पसंग्रहः ।

---

## अथ तन्त्रसंकल्पाः ।

ममास्य कुमारस्य गर्भाम्बुपानजनितसकलदोषनिबर्हणायुर्मेधाभिवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वारा अस्य शिशोर्बीजगर्भसमुद्भवैनोनिबर्हणायुरभिवृद्धिव्यवहारसिद्धिद्वारा, ममास्य शिशोः आयुःश्रीवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वारा, अस्य शिशोर्मातृगर्भमलप्राशनशुद्ध्यन्नाद्यब्रह्मवर्चसतेजइन्द्रियायुर्लक्षणफलसिद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वारा च श्रीपरमेश्वरप्रीत्यर्थं जातकर्मनामकरणसूर्यावलोकननिष्क्रमणोपवेशनान्नप्राशनाख्यानि कर्माणि तन्त्रेण करिष्ये । तदङ्गस्वस्तिपुण्याहनान्दीश्राद्धं च करिष्ये । तदादौ निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं करिष्ये ।

तानि कृत्वा प्रते[1] दद्गामि०[2] मेधां ते०[3] अश्मा भव परशुः०[4] इन्द्रश्रेष्ठा०[5] अस्मे प्रयं०[6] । आदौ गणपतिनाम स्वकुलदेवताभक्तः मासनाम नाक्षत्रं नाम ततो व्यावहारिकं नाम । ततः कर्णे श्रीगणेश-कुलदेवतानाम्ना त्वम् अमुकभक्तोऽसि । एवं प्रकारेण सर्वाणि नामानि । कुलदेवतानाम्नाऽयं दुर्गाभक्तो भवतः सर्वान् ब्राह्मणान् अभिवादयते आयुष्मान् भव दुर्गाभक्त इति । एवं सर्वाणि नामानि ।

## ततः सूर्यावलोकनम् ।

अग्निं चन्द्रं धेनुं च दर्शयेत् । स्वस्ति नो मिमी०[7] तु न इति शिशुमङ्कमारोप्य आशुः शि० १३ इति जपेत् । तच्चक्षुः०[8] दृशे इति सूर्यं निरीक्षयेत् ।

## ततो निष्क्रमणम् ।

इन्द्रादिलोकपालानां प्राच्यादिदिशां चन्द्रार्कवासुदेवगगनानां च यथाक्रमं पूजां कृत्वा कनिक्रददिति[9] सूक्तेन शिशुं मातुलगृहं नयेत् ।

## अथोपवेशनम् ।

"चन्द्रार्कयोर्दिगीशानां दिशां च वरुणस्य च । निक्षेपार्थमिदं दद्मि ते त्वां रक्षन्तु सर्वदा ॥
"अप्रमत्तं प्रमत्तं वा दिवा रात्रावथापि वा । रक्षन्तु सततं सर्वे देवाः शक्रपुरोगमाः" ॥

---

१ आ. गृ. अ. १ कं. १५ । २ आ. गृ. अ. १ कं. १५ । ३ ऋ. सं. अ. ३ अ. २ व. २० । ४ ऋ. सं. अ. ८ अ. ५ व. २२ । ५ ऋ. सं. अ. २ अ. ८ व. ११ । ६ आ. गृ. अ. १ कं १५ । ७ ऋ. सं. अ. २ अ. ६ व. २७ । ८ ऋ. सं. अ. ८ अ. ७ व. ४ । ९ ऋ. सं. अ. ५ अ. ५ व. ११ ।

इति देवान् प्राथ्र्य चतुरश्रस्थण्डिले विष्णुं संपूज्य धान्यराशिं कृत्वा तदुपरि शिशुमुपवेश्य रक्षां कुर्यात् । ॐ हौं जूं सः त्र्यम्बकं य० मृतात् सः जूं हौं ॐ इति रक्षां कृत्वाऽपूपादिभिर्भूतेशानं गणेशमभ्यर्च्य प्रदक्षिणं कारयित्वा शिशुं तोषयेत् ।

ततो वराहपृथिवीगुरुदेवद्विजान् पूजयित्वा भूमिमुपलिप्य तत्र धान्यराशिं कृत्वा तत्र मण्डलं कृत्वा तत्र शङ्खतूर्यादिमाङ्गलिकध्वनौ क्रियमाणे शिशुमुपवेशयेदेभिर्मन्त्रैः ।

''रक्षैनं वसुधे देवि सदा सर्वगतं शुभे । आयुष्प्रमाणं निखिलं निक्षिपस्व हरिप्रिये ॥
''अचिरादायुषस्त्वस्य ये केचित् परिपन्थिनः । जीविताारोग्यवित्तेषु निर्दहस्वाचिरेण तान् ॥
''धारिण्यशेषभूतानां मातस्त्वमधिका ह्यसि । कुमारं पाहि मातस्त्वं ब्रह्मा तदनुमन्यताम्'' ॥
तदग्रे पुस्तकशास्त्रवस्त्रादिशिल्पानि विन्यस्य जीविकापरीक्षां कुर्यात्

## ततोऽन्नप्राशनम् ।

दधि मधु घृतमोदनमिति संमृज्य भूरपान्त्वौ० सन्त्वमुकशर्मन् इति चतुर्भिः सुवर्णहस्तेन कुमारं प्राशयेत् । अन्नपते० प्रप्रदातारं[3] मुखं प्रक्षाल्य ताम्बूलप्राशनम् । कृतानां जातकर्मादिकर्मणां साङ्गतासिद्ध्यर्थं ब्राह्मणान् भोजयिष्ये । कृतानां जातकर्मादिकर्मणां साङ्गतासिद्ध्यर्थं यथाशक्ति भूयसीं० ।

इति अतिक्रान्तजातकर्मादिकर्मणां प्रयोगः ।

प्रधानेन सहातिक्रान्तानां संकल्पोऽथवा जातकर्मादिकर्मणमनुक्रमेण संकल्प इति विचारणीयम् । 'अस्य शिशोर्जातकर्मादिसंस्कारमुख्यकालातिपत्तिप्रायश्चित्तार्थं प्रत्येकं पादकृच्छ्रं चौलेऽर्धकृच्छ्रं प्रायश्चित्तं यथाशक्यप्रत्याम्नायद्वाराऽहमाचरिष्ये' इति संकल्प्य पाहित्रयोदशहोमं कृत्वा जातकर्मादि कुर्यात्। अस्य कुमारस्य स्वकाले जातकर्मादिसंस्काराणां लुप्तानां प्रमादादकृतानां प्रतिकर्म पादकृच्छ्रं चूडाया अर्धकृच्छ्रं प्रायश्चित्तममुकप्रत्याम्नायद्वारा अहं करिष्ये । प्रतिकर्मणि एकैकया व्याहृत्या होमं करिष्ये । तदङ्गं स्थण्डिलादि । अन्वाधाने प्रजापतिं कर्मसंख्यया । अथवा आज्योत्पवनमात्रं कृत्वा होमः कार्यः । तस्मिन् पक्षे अन्वाधानमिध्माबर्हिरित्यादि न भवति देशकालातिपत्तिदोषपरिहारद्वारा श्री० प्रायश्चित्तहोमं करिष्ये । स्थण्डिलादिपूर्वोत्तरतन्त्रकरणपक्षे अन्वाधाने कर्मलोपसंख्यया प्रजापतिमुल्लिख्य होमं कुर्यात् । केवलोत्पवनपक्षे पूर्वोत्तरतन्त्रं नास्ति । कृच्छ्रादिसंकल्पः कुमारेण कार्यः । मम जातकर्मनामकरणनिष्क्रमणोपवेशनान्नप्राशनसंस्काराणां प्रमादादतिपत्तौ प्रत्येकं पादकृच्छ्रं चूडायाः अर्धकृच्छ्रं यथासम्भवप्रत्याम्नायद्वारा अहमाचारिष्ये । ततो मुख्यसङ्कल्पः । अस्य कुमारस्य जातकर्मनामकरणनिष्क्रमणोपवेशनान्नप्राशनकर्मणां करिष्यमाणयोश्चौलोपनयनयोश्चाङ्गत्वेन स्वस्तिपुण्याहवाचनं नान्दीश्राद्धमुपनयनाङ्गत्वेन मण्डपदेवताप्रतिष्ठापनं च करिष्ये । तदादौ निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं करिष्ये । नान्दीश्राद्धान्तं कृत्वा जातकर्मादिसंस्कारान् क्रमेण कुर्यात् ।

१ ऋ. स. अ. ५ अ. ४ व. ३० । २ आ. गृ. पं. ६ ख. १६ सू. १ । ३ य. स. अ. ११ म. ७८ ।

तथाहि "अस्य कुमारस्य गर्भाम्बुपानजनितसकलदोषनिबर्हणायुर्मेधाभिवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थं जातकर्म करिष्ये"। तत्कृत्वा "अस्य कुमारस्य बीजगर्भसमुद्भवैनोनिबर्हणायुरभिवृद्धिव्यवहारसिद्धिद्वारा श्री० नामकर्म करिष्ये। तत् कृत्वा अस्य कुमारस्य आयुरभिवृद्धिद्वारा श्री० सूर्यावलोकनं करिष्ये"। तत् कृत्वा "अस्य कुमारस्य आयुःश्रीवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वारा श्री० निष्क्रमणं क०"। तत् कृत्वा "अस्य कुमारस्य आयुरभिवृद्धिद्वारा श्री० उपवेशनं क०"। तत् कृत्वा "अस्य कुमारस्य मातृगर्भमलप्राशनशुद्ध्यन्नाद्यब्रह्मवर्चसतेजइन्द्रियायुरभिवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वारा श्री० अन्नप्राशनं करिष्ये"। तत् कृत्वा चौलं स्थापयित्वा नन्दिन्यादिस्थापनं कुर्यात् प्रयोगबहिर्भूतः। प्रयोगान्तर्भूतस्तु सर्वकर्मसु मुख्यसङ्कल्पान् कृत्वा नान्दीश्राद्धान्ते जातकर्मादिसंस्कारान् कृत्वा देवकर्मप्रतिष्ठा कुर्यात् इत्यादि बोध्यम्॥ १२॥

## याज्ञवल्कीये १३ श्लोकः

तमेवाह। **गर्भाधेति**। गर्भार्थमाह। **शोणितेति**। तत्र विशेषमाह। **गात्रेति**। तच्छरीरेत्यर्थः। गोत्रेति पाठे कुलेत्यर्थः। इदमग्रे व्यक्तीभविष्यति। कालत्यागे मानाभावादाह। **यथाकालमिति**। त्वर्थमाह। **पुनरिति**॥ १३॥

## याज्ञवल्कीये १४ श्लोकः

मुख्यगर्भशब्दार्थावधिकत्वस्य तत्सम्बन्धित्वस्य च तत्रासम्भवाल्लक्ष्यार्थमाह। **गर्भाधानमिति**। अर्शआद्यचा तद्घटितहायनमित्यर्थः। तच्चार्थात्तद्दिनादारभ्यैवेति बोध्यम्। सुप्सुपेति पञ्चमीसमासलब्धमर्थमाह। **अवधिमिति**। आदिमिति त्वपपाठः। जननमित्यत्रावधिमित्यादेरनुषङ्गः। जन्मनोवेति पाठान्तरम्। तथा च **नारदीयसंहितायाम्**,

"आधानादष्टमे वर्षे जन्मतो वाऽग्रजन्मनाम्। राज्ञामेकादशे मौञ्जीबन्धनं द्वादशे विशाम्॥

"जन्मतः पञ्चमे वर्षे वेदशास्त्रविशारदः। उपनीतो यतः श्रीमान् कार्यं तत्रोपनायनम्॥" इति।

**उपनयनमेवोपेति**। निवृत्तप्रेषणात् प्राकृतार्थणिजन्ताद्भावे ल्युडिति भावः। अत्र क्लेशे हेतुमाह। **वृत्तेति**। एतन्मध्ये स्वार्थेऽणिति त्वपपाठः। अत एव तथोक्तिरन्यथा नयनमेव नायनमिति ब्रूयादन्यथाऽसङ्गतिः स्पष्टैव। पूर्वपदे वृद्धेरापत्तेरुत्तरपदे दुर्लभत्वाच्च। वस्तुतस्तदपि दुर्वचं, गतीनां प्राक् सुबुत्पत्तेः समासात् सुबुत्पत्तिं विना च तद्धितोत्पत्त्ययोगात् प्रज्ञादिष्वपाठाच्च। तस्यानित्यत्वं प्रज्ञादेराकृतिगणत्वं चागतिकगतिः। उक्तप्रकारः 'निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते'। इति **हरिणोक्तः**। 'णेरणाविति' सूत्रे (१।३।६७) **भाष्यादा**वपि स्फुटमेतत्। यदि तु 'स्वार्थेऽणि' त्येव साम्प्रदायिकः पाठस्तर्हीत्थं योज्यः। मूलेऽपि तदा औपनायनमित्येव पाठः। तस्मादाकृतिगणत्वेन विशिष्टादेवाणि तद्धि तेष्वित्यादिवृद्धावन्येषामपीति उत्तरपदस्य दीर्घः आर्षत्वे नानुशतिकादित्वकल्पनयोभयपदवृद्धिर्वा। अत एव 'गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्यौपनायनम्' (अ. २ श्लो. ३६)।

इत्येवमेव **मनु**पाठो **मेधातिथि**ना तथा व्याख्यात इति बोध्यम् । 'स्वस्य च प्रियमात्मनः' इत्येतद्विषयतामत्र दाढर्चाय पुनराह । **अत्रेच्छयेति** । विशामित्यत्र बहुत्वमविवक्षितं, ब्राह्मणस्येति-वज्जातिपरतया निर्वाहात् । राज्ञामित्यत्र तु क्षत्रियमात्रसंग्रहाय तत् । अन्यथाऽभिषिक्तभ्रमः स्यादिति सूचयन्नाह । **वैश्यस्येति** । यद्यपीच्छया विकल्प उक्तस्तथापि तयोर्मध्ये आद्यस्य मुख्यत्वमन्यस्य गौणत्वम् । **मनुना** तस्यैवैकस्य सर्वत्राभिधानात् । तदेतद् ध्वनयन्नाह । **गर्भेति । सर्वत्र** उभयत्र । तत्र हेतुमाह । **गर्भादिति । तु**रेवार्थे । **स्मृत्यन्तरेति । मन्वित्यर्थः** । ननु तत्र पृथगुक्त्या तथाऽस्तु, प्रकृते तु तस्य समासघटकस्य निष्कृष्य कथमनुवृत्तिः अत एव तत्र पृथगुक्तिरत आह । **समासे इति । केषामिति** । यथा तत्र तस्य तथा कृत्वा किमा परामर्शस्तथाऽत्रानुवृत्तिरित्यर्थः । अन्यथा सर्वनाम्नां प्रधानपरामर्शित्वनियमात्तदसङ्गतिः स्पष्टैवेति भावः । वाक्यार्थपूर्तये आह । **अत्रा-पीति** । प्राग्वदिति भावः । एवं च सर्वत्र मुख्यकालः स एव । तदभावे एकत्रोक्तो न्यायो'असति बाधकेऽन्यत्रापीति' न्यायेन क्षत्रियादावपि स कालो ग्राह्यः । अत एवाष्टमे वर्षे ब्राह्मणमुपनयीतैकादशे क्षत्रियं द्वादशे वैश्यमिति **गृह्यसूत्रं** सङ्गच्छते । अत एवात्र राजशब्दः क्षत्रियजातिमात्रवचनो नाभि-षेकादिगुणयुक्तपर इति बोध्यम् । एके इत्यादेरर्थमाह । **कुलेति** ।

**आपस्तम्बगृह्येऽपि** 'गर्भाष्टमेषु ब्राह्मणमुपनयीतेति'बहुवचनं गर्भषष्ठसप्तमयोः प्राप्त्यर्थम् ।
**हेमाद्रौ बुधः,** 'गर्भाष्टमे वर्षे वसन्ते ब्राह्मण आत्मानमुपनयेदिति ।'
**धर्मसूत्रेऽपि,** "वसन्ते ब्राह्मणमुपनयीतेति । काम्योपनयने कालविशेषानाह "
**माधवीये मनुः** ( अ. २ श्लो. ३७ )

"ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे । राज्ञो बलार्थिनः षष्ठे वैश्यस्यार्थार्थिनोऽष्टमे ॥" इति ।

**विष्णुरपि,**

"षष्ठे तु धनकामस्य विद्याकामस्य सप्तमे । अष्टमे सर्वकामस्य नवमे कान्तिमिच्छतः ॥" इति ।

इदं च त्रैवर्णिकविषयम् । तथा च **संग्रहे,**

"सप्तमे वाऽष्टमे वर्षे नवमे दशमे तथा । एकादशे द्वादशे वा ह्युपनेया द्विजातयः ॥

"ब्रह्मवर्चसमायुष्यं तेजोऽन्नाद्यं तथेन्द्रियम् । पशून् कामयमाना वै प्राप्नुवन्ति यथाक्रमम् ॥" इति ।

**धर्मसूत्रे आपस्तम्बोऽपि,** ( १।१।२०–२६ )

'अथ काम्यानि । सप्तमे ब्रह्मवर्चसकाममष्टमे आयुष्कामं नवमे तेजस्कामं दशमेऽन्नाद्यकाममेका-दशे इन्द्रियकामं द्वादशे पशुकाममिति' । गुरुशुक्रादिशुभग्रहबलालाभे प्रकारान्तरेण वा प्रतिबन्धे सति पञ्चमादारभ्याषोडशाद्वा द्वाविंशादाचतुर्विंशाद्विप्रादीनां क्रमेण कार्यमित्यग्रे स्फुटीभविष्यति ।

**ज्योतिर्नृसिंहेन** विशेष उक्तः, "उत्तरायणगे सूर्ये कर्तव्यं ह्यौपनायनम् ।" इति ।

**आश्वालयनगृह्येऽपि,** 'उदगयने आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः।' इति । ( १।४ )

**श्रुतिः,** 'वसन्ते ब्राह्मणमुपनयीतेति ।'

**वराहः,**

'माघादिपञ्चमासेषु मेखलाबन्धनं शिशोः । ज्येष्ठमासे न सर्वेषाम्' इति ।

**हेमाद्रौ ज्यौतिषः,** "माघादिषु च मासेषु मौञ्जी पञ्चसु शस्यते ।" इति ।

एतच्च वर्णत्रयसाधारणम् तत्रैव "ऋतुर्वसन्तः शुभदोऽग्रजानाम्" इति ।

**बृहस्पतिः,** 'शुक्लपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना' । इति ।

'भृगोरङ्गिरसो मौढ्ये कर्तव्यं नोपनायनम' । इति च । भृगुः शुक्रः । अङ्गिरा गुरुः ।

**ज्योतिर्नृसिंहः,**

"तृतीया पञ्चमी षष्ठी द्वितीया वाऽपि सप्तमी । पक्षयोरुभयोश्चैव विशेषेणैव पूजिताः ॥

"कृष्णे त्रयोदशीं केचिदिच्छन्ति मुनयस्तथा ।", इति ।

**संग्रहे,** 'रिक्ताऽष्टमीपर्वतिथीननध्यायांश्च वर्जयेत्' । इति ।

अनध्याया नित्या नैमित्तिकाश्च । युगादित्वेन मन्वादित्वेन चातुर्मास्यद्वितीयात्वेन च निषेधितानां प्रतिप्रसवमाह,

**भरद्वाजः,**

"या चैत्रवैशाखसिता तृतीया माघे च सप्तम्यथ फाल्गुनस्य ।

"कृष्णे द्वितीयोपनये प्रशस्ता प्रोक्ता भरद्वाजमुनीन्द्रमुख्यैः" ॥ इति ।

"शुचावूर्जे तपस्ये च या द्वितीया विधुक्षये । चातुर्मास्यद्वितीयास्ताः प्रवदन्ति मनीषिणः" ॥

इति । **गर्गः,**

**वसिष्ठसंहितायां,**

"प्रशस्ता प्रतिपत् कृष्णे न पूर्वा परसंयुता । उपनीतो यतः श्रीमान् विद्यावान् धनवान् भवेत्" ॥ इति ।

**ज्योतिष्फलोदये,**

"ज्येष्ठे द्वितीया सितयाऽऽश्विने तु दशम्यथो माघसिता चतुर्दशी ।

"सद्वादशी सामगबह्वृचाभ्यां त्याज्यास्त्विमाः सोपपदा व्रतादौ" ॥ इति ।

**स्मृत्यन्तर,**

"चातुर्मास्यद्वितीयासु मन्वादिषु युगादिषु । अनध्यायस्तु कर्तव्यो या च सोपपदा तिथिः ॥

"सिता ज्येष्ठे द्वितीया च आश्विने दशमी सिता । चतुर्थी द्वादशी माघे एताः सोपपदाः स्मृताः" इति ।

**अपरार्के,**

"नष्टे चन्द्रेऽष्टमे शुक्रे निरंशे चैव भास्करे । कर्तव्यं नोपनयनं नानध्याये गलग्रहे" ॥ इति ।

**निरंशलक्षणं** "राशेः प्रथमराशिस्थो निरंशः सूर्य उच्यते"। इति।

गलग्रहश्च, **ज्योतिर्निबन्धे.**

"त्रयोदशीचतुष्कं च सप्तम्यादित्रयं तथा। चतुर्थी चैव सम्प्रोक्ता अष्टावेते गलग्रहाः"॥ इति।

गलग्रहनिषेधस्यापवादमाह,

**भरद्वाजः,**

"विनर्तुना वसन्तेन कृष्णपक्षे गलग्रहे। उपनीतस्त्वनध्याये पुनः संस्कारमर्हति"॥ इति।

वसन्तर्तौ ऋत्वन्तरीयशुक्लपक्षे च गलग्रहो न दोषायेति फलितोऽर्थः॥

**पारिजाते ब्राह्मे** विशेषः,

"ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स इति श्रुतिः। तस्माच्च षण्ढबधिरकुब्जवामनपङ्गुषु॥
"जडगद्गदरोगार्तशुष्काङ्गविकलाङ्गिषु। मत्तोन्मत्तेषु मूकेषु शयनस्थे निरिन्द्रिये॥
"ध्वस्तपुंस्त्वेषु चैतेषु संस्काराः स्युर्यथोचितम्। मत्तोन्मत्तौ न संस्कार्याविति केचित् प्रचक्षते॥
"कर्मस्वनधिकाराच्च पातित्यं नास्ति चैतयोः। तदपत्यश्च संस्कार्यमपरे त्वाहुरन्यथा॥
"संस्कारं मन्त्रहोमादीन् करोत्याचार्य एव तु। उपनयं च विधिवदाचार्यः स्वसमीपतः॥
"आनीयाग्निसमीपं वा सावित्रीं स्पृश्य वा जपेत्। कन्यास्वीकरणादन्यत् सर्वं विप्रेण कारयेत्॥
"एवमेव द्विजैर्जातौ संस्कार्यौ कुण्डगोलकौ।" इति।

**स्मृत्यर्थसारेऽप्येवम्।** तथाचोपनयनं विधिनाऽऽचार्यसमीपनयनमग्निसमीपनयनं सावित्रीवाचनं वा। अन्यदङ्गं यथाशक्ति कार्यम्। विवाहश्च कन्यास्वीकारोऽन्यदङ्गमिति। अत एव तेषां विवाहप्रसक्तिसत्त्वात्तत्कनीयसां परिवेदनदोषापवादो वक्ष्यते।

"केचिदाहुर्द्विजैर्जातौ संस्कार्यौ कुण्डगोलकौ। अमृते च मृते पत्यौ जारजौ कुण्डगोलकौ॥"इति।

**हरदत्तः।**

'उपनयनं विद्यार्थस्येति' **धर्मसूत्र**वचनात्।

**शङ्खलिखितावपि.** 'नोन्मत्तमूकान् संस्कुर्यादिति।'

उपनेतृक्रममाह, **वृद्धवर्गः,**

"पिता पितामहो भ्राता ज्ञातयो गोत्रजाग्रजाः। उपायनेऽधिकारी स्यात् पूर्वाभावे परः परः"॥

**माधवीये वृद्धमनुरप्येवम्।** तथा,

"पितैवोपनयेत्पुत्रं तदभावे पितुः पिता। तदभावे पितुर्भ्राता तदभावे तु सोदरः॥"

**आश्वलायनः,**

"एकमातृप्रसूतानां कन्ये वा पुत्रको तयोः। सहोद्वाहं न कुर्वीत तथैव व्रतबन्धनम्॥" इति

अधिकारसिद्धये प्रायश्चित्तमाह, **विष्णुः,**

"कृच्छ्रत्रयं चोपनेता त्रीन् कृच्छ्रांश्च बटुश्चरेत् । सावित्रीमभ्यसेदग्निं पवित्राणि च संस्मरन् ॥

"सहस्रं द्वादशान्यच्च सावित्रीं प्रजपेद्बुधः। स्वाधिकारार्थमेवास्याः प्रदानार्थं हि तत्स्मृतम् ॥" इति ।

तथा,

"नान्दीश्राद्धे कृते पश्चादनध्यायस्त्वकालिकः । मौञ्जीबन्धं तदा कुर्याद्वेदारम्भं न कारयेत् ॥"

अकालिकः गर्जनिर्घातादिनिमित्तकः । यदि भवेदिति शेषः । आश्वलायनानामुपनयनदिने वेदारम्भाभावाद्वेदारम्भाकरणे नोपनयनं न कुर्यात् । तदूर्ध्वं तु मुहूर्ते श्राद्धान्तरपूर्वकमुपनयनं यथाकालं कुर्यात् । यदा गर्जाद्यनध्यायशङ्का तदा दिवैवानुप्रवचनीयचरुं श्रपयेत् । होमस्तु सायंसन्ध्योत्तरमेव । तथा सति नानध्यायदोषः ।

तदुक्तं **संग्रहे,**

" न सन्ध्यागर्जिते काले न वृष्ट्युत्पातदूषिते । ब्रह्मौदनं पचेदग्नौ पक्वं चेन्न निवर्तते ॥ "

तथा, ' ब्रह्मौदनं पचेद्ह्नि पक्वमन्नं न दुष्यति । '

तथा चोपनयनानुप्रवचनीयचरुश्रपणयोरन्तराऽनध्याये पुनरुपनयनम् । पुनरुपनयने निमित्तान्तराण्याह, **मनुः**, ( अ. ११ श्लो. १५० । )

"अज्ञानात्प्राश्य विण्मूत्रं सुरासंसृष्टमेव च । पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥" इति ।

**विष्णुरपि,**

' विड्वराहग्रामकुक्कुटनरगोमांसभक्षणेषु च प्रायश्चित्तान्ते पुनः संस्कारं कुर्यादिति '

तथा **बौधायनः,**

" सिन्धुसौवीरसौराष्ट्रान् तथा प्रत्यन्तवासिनः । अङ्गवङ्गकलिङ्गांश्च गत्वा संस्कारमर्हति ॥" इति ।

शाखारण्डोऽपि स्वशास्त्रग्रहणकाले पुनरुपनेयः ।

इममर्थं पुनरुपनयने विधिविशेषं च **कारिकाकार** आह ।

"वेदान्तरमधीत्यैव ऋग्वेदं ये त्वधीयते । उपनीतिरियं तेषामलङ्करणवर्जिता ॥

"यद्वेतदुपनीतस्य प्रायश्चित्तं यदा पतेत् । कृताकृतश्च वपनं मेधाजननमेव च ॥

"मेधाजननसद्भावे व्रतचर्या भवेदिह । अनुप्रवचनीयश्च तदभावे द्वयं न च ॥

"परिधानं च कार्यं स्यान्निमित्तानन्तरं त्विदम् । पूर्वस्या वाचयेत् स्थाने तत्सवितुर्वृणीमहे "॥ इति ।

पूर्वस्याः गायत्र्याः ।

तथा च **आश्वलायनगृह्यम्** । ( १।२२ ) 'तत्सवितुर्वृणीमहे इति सावित्रीमिति ' ।

**व्यासः,**

"भुक्त्वा समुद्वहेत्कन्यां सावित्रीग्रहणं तथा । उपोषितः सुतां दद्यादर्चिताय द्विजन्मने" ॥ इति ।

## अथ प्रसङ्गाद्गायत्र्युपदेशविषयं किञ्चिदुच्यते ।

तत्र तावत्

**कात्यायनसूत्रं हरिहरभाष्यञ्च**, ( २।३ )

' अथास्मै सावित्रीमन्वाहोत्तरतोऽग्नेः प्रत्यङ्मुखायोपविष्टायोपसन्नाय समीक्षमाणाय समीक्षिताय दक्षिणतस्तिष्ठत आसीनाय वैके पच्छोऽर्धर्चशः सर्वां च तृतीयेन सहावर्तयन् । '

' **अथ** शासनानन्तरम् । **अस्मै** ब्रह्मचारिणे । **सावित्रीं** सवितृदेवत्यां गायत्रीच्छन्दस्कां विश्वामित्रदृष्टाम् ऋचम् **आह** उपदिशति । कथंभूताय **प्रत्यङ्मुखाय** । पुनः कथंभूताय **उपविष्टाय** । क्व अग्नेरुत्तरस्यां दिशि । तथा **उपसन्नाय** पादोपसंग्रहणादिना भजमानाय । तथा **समीक्षमाणाय** सम्यगाचार्यमवलोकयते । तथा आचार्येण सम्यगवलोकिताय । पक्षान्तरमाह । **दक्षिणतः** अग्नेर्दक्षिणस्यां दिशि **तिष्ठते**, ऊर्ध्वीभूताय वा । **आसीनाय** उपविष्टाय **इत्येके**, आचार्याः सावित्रीप्रदानं मन्यन्ते । कथमन्वाह । **पच्छः** पादं पादम् । **अर्धर्चशः** तदनु अर्धर्चमर्धर्चम् । **सर्वां तृतीयेन** वारेण **सह** मिलित्वा **आवर्तयन्** पाठयन् ' ।

**शाङ्खायनः**,

" गायत्रीं ब्राह्मणायानुब्रूयात् त्रिष्टुभं क्षत्रियाय जगतीं वैश्याय । सावित्रीन्त्वेव उत्तरेणाग्निमुपविशतः । अन्वक्षादित्वे उच्यमानायां सावित्र्यामग्निं स्थापिताग्निमुत्तरेणाचार्यमाणवकौ उपविशतः । प्राङ्मुख आचार्यः प्रत्यङ्मुख इतरः । आचार्यमाणवकौ प्राङ्मुखप्रत्यङ्मुखावुपविशतः । अध्यासीनो दिशमेकां प्रशस्तां प्राचीमुदीचीमपराजितां वा एकः श्रोता दक्षिणतो निषीदेदित्यतन्निषिध्यतेऽनेन सूत्रेण । अधीहि भो ३ इत्युक्त्वा आचार्यः। आचार्यः अधीहि भो ३ इति माणवकमुक्त्वा वक्ष्यमाणं कुर्यात् । आहूतोऽध्ययनं कुर्यादिति स्मृतिः । ओंकारं प्रयुज्यायेतरं वाचयति सावित्रीं भो ३ अनुब्रूहीति । अथास्मै सावित्रीमन्वाह तत्सवितुर्वरेण्यमित्येतां पच्छोऽर्धर्चशः सर्वशश्च । उपस्थितं वर्द्ध गायत्रीमुपदिशेत्। तथा च **कात्यायनः**,

" सावित्र्या ब्राह्मणमुपनयेत् त्रिष्टुभा राजन्यं जगत्या वैश्यं सर्वेषां वा सावित्रीमिति । "
तदेव स्पष्टमाचष्ट, **शातातपः**,

' तत्सवितुर्वरेण्यमिति सावित्रीं ब्राह्मणस्य, देवसवितुरिति राजन्यस्य, विश्वारूपाणीति वैश्यस्य । '

सा च प्रणवव्याहृतिपूर्वा पच्छोऽर्धर्चशः सर्वशश्चोपदेष्टव्या । त्रिष्टुप्छन्दस्कां बृहस्पतिदृष्टां सवितृदेवताकां देवसवितुरित्यादिकां वाजपेये विनियुक्तां क्षत्रियाय । प्रजापतिदृष्टां जगतीच्छन्दस्कां सवितृदेवताकां रुक्मपाशप्रमोचने उखासम्भरणे विनियुक्तां विश्वारूपाणि प्रतिमुञ्चतेति वैश्यायोपदिशेत् । सर्वेषां वोक्तलक्षणां गायत्रीमेव ब्रूयादित्यर्थः । अयञ्च गायत्र्युपदेश आपस्तम्बानाम् अग्नेः पश्चाद्दक्षिणत उत्तरतो वा भवति । नन्वपरेणाग्निमुदगग्रं कूर्चं निधाय तस्मिन्नुत्तरेण यजुषोपनेतोपविशति पुरस्तात्प्रत्यङ्ङासीनः कुमारो दक्षिणेन पाणिना दक्षिणम् पादमन्वारभ्याह सावित्रीं भो अनुब्रूहीति तस्मा अन्वाह तत्सवितुरिति अस्मात् सूत्रादग्नेः पश्चिमदेश एव प्राप्त इति चेन्न । तस्य

वाक्येन प्रैषाङ्गत्वात्तस्मा इति सर्वनाम्ना देशादिविशिष्टस्य परामर्शात्। उपदेशाङ्गत्वे कल्प्यमानेऽपि सूत्रान्तरोक्तदेशग्रहणेन तयोरपि प्राप्तेः।

न च "यन्नाम्नातं स्वशाखायां पारक्यमविरोधि यत्। विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत्" ॥

इति वाक्यविरोध इति वाच्यम्। तस्य स्वसूत्रोक्तविस्रम्भणीयत्वेन तदनुष्ठानमेवोचितमत्येतत्प्रतिपादनेन स्तुतिमात्रपरत्वात्। अन्यथा **आश्वलायना**दिभिः स्वस्वसूत्रोक्तमनुद्धरणप्रायश्चित्तं चातुर्मास्यविवाहोपनयनादौ संवत्सरदिवसनक्षत्रादिकं त्यक्त्वा सूत्रान्तरोक्तग्रहणं विरुध्येत। तस्मात् स्वसूत्रोक्तविरुद्धस्यापि सूत्रान्तरोक्तस्य ग्रहणं भवत्येव। प्रतिपादितं चैतत् "नित्यो धार्यः" (आ गृ. प. २ खं. ५. सू. १५।) इत्येतत्सूत्रव्याख्याने **सुदर्शनभाष्य**कारेण। तच्चान्यत्र प्रपञ्चितम्। युक्तं चैतत्। एकस्य कर्मणः शाखाभेदेनानेकेषां विरुद्धानामङ्गानामाम्नातानां व्यवस्थायां प्रमाणाभावात्। ननु सूत्रकारेण कृतोपसंग्रह एव प्रमाणमिति चेन्न। अशोकवनिकान्यायेन कस्याचिदेवोपसंग्रहात्। तस्मात् सूत्रान्तरोक्तस्यापि ग्रहणं युक्तमेवेति दिक्। प्रागुक्तं **गुरुचरणा अपि**।

"विनर्तुना वसन्तेन कृष्णपक्षे गलग्रहे। अपराह्णे चोपनीतः पुनः संस्कारमर्हति" ॥ इति **नारदः**।
"पापांशकगते चन्द्रे अरिनीचस्थितेऽपि च। अनध्याये चोपनीतः पुनः संस्कारमर्हति" ॥

इति **वसिष्ठः**।

तथा

"प्रदोषे निश्यनध्याये मन्दे कृष्णे गलग्रहे। मधुं विनोपनीतस्तु पुनः संस्कारमर्हति" ॥ इति अन्यत्र। **ज्योतिर्मनुः**।

"अनध्यायोपनीतस्तु पुनः संस्कारमर्हति। गलग्रहे प्रदोषे च स्वल्पायुरुपजायते" ॥ इति।
अत्रानध्यायशब्देन नित्या नैमित्तिकाश्च गृह्यन्ते। अविशेषात्।
"कृष्णे प्रदोषेऽनध्याये शनौ निश्यपराह्णके। प्राक्सन्ध्यागर्जिते नेष्टो व्रतबन्धो गलग्रहे ॥
"अष्टका च समुद्दिष्टा सतम्यादिदिनत्रयम्। नाधीयीत च शास्त्राणि व्रतबन्धं च वर्जयेत् ॥
"अनध्याये चोपनीतः पुनः संस्कारमर्हति"। इत्यन्यत्र।
"अनध्यायाः स्मृता भूतत्रयाष्टम्यर्कसंक्रमाः। शुक्ले द्वीशार्कदिक्तिथ्यः शुक्रपौषतपःशुचेः ॥
"मन्वाद्याश्च युगाद्याश्च स्मृत्युक्ताः सर्व एव हि"। इति **ज्योतिर्निबन्ध**धृतवचनात्।

पुनरप्यत्र प्राक्सन्ध्यागर्जितग्रहणमीदृशानामप्यत्र ग्रहणमवयुत्यानुवादः। यद्वा प्राक्सन्ध्यागर्जितस्य पुनर्ग्रहणं दोषाधिक्याय। तस्याप्यनध्यायत्वात्। यद्वा नैमित्तिकपुनरुपनयनस्यापि तत्र निषेधार्थमिदं प्रदोषनिषेधवत्। निमित्तानन्तरं नैमित्तिकमिति न्यायेन तत्र तत्प्रसक्तिः। एवं रात्रिनिषेधोऽपि तत्परः।

---

१ द्वी २ शा ११ अर्क १२ दिक् १० शुक्र ३ पौष १० तपः ११ शुचेः १४.

एतेन

"चतुर्दश्यष्टमीपर्वप्रतिपत्स्वेव सर्वदा । दुर्मेधसामनध्यायस्त्वन्तरागमनेषु च" ॥

इति **हेमाद्रि**धृतवचनेन तदितरेषामनित्यानध्यायत्वसूचनादेष्वनध्यायशब्देन न तदतिरिक्तग्रहणम्, नित्यतद्ग्रहणेनोपपत्तावनित्यतद्ग्रहणे मानाभावादित्यपास्तम् । दुर्मेधसामित्युक्त्याऽन्यान्प्रति तेषामपि नित्यत्वबोधेन विनिगमनाविरहाच्च । किंचैवं युगाद्यनध्यायस्याप्यनित्यत्वेनात्राग्रहणेन.

"या चैत्रवैशाखसिता तृतीया माघेऽथ सप्तम्यथ फाल्गुनस्य । कृष्णे द्वितीयोपनये प्रशस्ता" इति च **वसिष्ठ**वाक्यस्य वैयर्थ्यापत्तिः । तत्र चैत्रशुक्लतृतीया मन्वादिः । वैशाखशुक्ला सा युगादिः । माघशुक्ला सप्तमी मन्वादिः । फाल्गुनीपूर्णिमोत्तरं द्वितीया चातुर्मास्यद्वितीया । आसामनध्यायत्वेऽपि व्रतबन्धे प्राशस्त्यमिति तद्व्याख्यातारः । अपि च

"त्रयोदश्यादिचतुष्कञ्च सप्तम्यादिदिनत्रयम् । चतुर्थी चैव सम्प्रोक्ता अष्टावेते गलग्रहाः" ॥

इत्युक्तचतुर्दश्यष्टमीपर्वप्रतिपदां गलग्रहत्वादेव निषेधे सिद्धे 'प्रदोषे निश्यनध्याये' इति वचनेऽनध्यायग्रहणवैयर्थ्यापत्तिः । एवञ्च गर्जाद्यनध्यायेषु उपनीतस्याकाले कृतमकृतमेवेति ब्राह्मणत्वासम्पत्त्या अपूर्वोपनयनविधिना पुनरप्युपनयनं कार्यमिति सिद्धम् । **यत्त्वाश्वलायनसूत्रे**ऽथोपेतपूर्वस्येत्यादिना पुनरुपनयनमुक्तम् । तस्य न प्रकृते प्रवृत्तिः । उपेतपूर्वत्वाभावात् । प्रायश्चित्तत्वेन पुनरुपनयनप्राप्तावेवं कुर्यादिति तत्सूत्रव्याख्याने **वृत्तिकृतो**क्त्वात् । तथैव **जयन्तो**क्तेश्च । एतेन,

"नैमित्तिकमनध्यायं कृष्णे च प्रतिपद्दिनम् । मेखलाबन्धने शस्तं चौले वेदव्रतेष्वपि ॥" इति **वसिष्ठ**वचनाद् गर्जाद्यनध्याये न दोष इति परास्तम् । तस्य कालातिक्रमविषयत्वात् ।

"प्रशस्ता प्रतिपत् कृष्णे कदाचिच्छुभगे रवौ । चन्द्रे बलयुते लग्ने वर्णानामतिलङ्घने ॥"

इति **व्यास**वचनैकवाक्यत्वात् ।

यत्त्वेतद्वलान्नैमित्तिकानामनध्यायत्वं वेदाध्ययनमात्रविषयमिति तन्न । कृष्णे प्रदोषे इत्यादिप्राग्लिखितवचनेन "स्मृत्युक्ताः सर्व एव हि"[1] त्यनेन च विरोधापत्तेः । गर्जाद्यनध्याया **याज्ञवल्क्या**दिभिरुक्ताः ।

तत्र **याज्ञवल्क्यः**, ( आचार श्लो. १४४।१४५ )

"त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु । उपाकर्मणि चोत्सर्गे स्वशाखाश्रोत्रिये तथा ॥"

"सन्ध्यागर्जितनिर्घातभूकम्पोल्कानिपातने । समाप्य वेदं द्युनिशमारण्यकमधीत्य च ॥" इति इदमकालविषयम् ।

**धर्मप्रश्ने,**

'विद्युत् स्तनयित्नुर्वृष्टिश्चापर्तौ यत्र सन्निपतेयुस्त्र्यहमनध्यायो यावद्भूमिर्व्युदकेत्येके' इति । एतत्सन्ध्याकालातिरिक्तविषयम् ।

---

१ निरुक्तवसिष्ठवचने इयं नोपलभ्यते ।

**ऐतरेयब्राह्मणे,** अपर्तौ वर्षे त्रिरात्रमित्यत्र वर्षा विद्युद्गर्जयोरुपलक्षणम् । अत्र **श्रुतिभाष्ये**ऽपर्तु शब्देन श्रावणभाद्रातिरिक्तः काल इति **माधवः ।** तच्छत्रिम्यायेन बोध्यम् ।

"अनुराधर्क्षमारभ्य षोडशर्क्षेषु भास्करः । यावच्चरति वै तावद्कालं मुनयो विदुः ॥ " इति **रत्नावली**धृतवचनात् ।

**हरदत्तस्तूज्ज्वलायाम्,** यत्र देशे यो वर्षाकालस्ततोऽन्यत्रापर्तुरित्याह । तद् रत्नावलीधृतवचनविरुद्धम्।

यत्तु, "पौषादिचतुरो मासान् जाता वृष्टिरकालजा । व्रतं यात्रां विवाहश्च वर्जयेत्सप्त वासरान्॥ " इति

तत्तु यात्राविवाहसाहचर्यात् व्रतेऽपि मुहूर्तदोषबोधकम् । ब्राह्मण्यानुत्पादकदोषपरतु दिनत्रयमेवेति बोध्यम् ।

यत्तु **मनुना,** ( अ. ४ श्लो. १०३ )

"विद्युतस्तनितवर्षेषु महोल्कानां च सम्प्लवे । आकालिकमनध्यायमेतेषु मनुरब्रवीत् ॥ "

इत्युक्तम्, तत्तु सन्ध्याकालातिरिक्तकाले एकैकोपजने बोध्यम् । येस्तूर्यावत्स कालस्तावत्कालमाकाले तत्र भव आकालिकः । सम्प्लवोऽसकृदुपजनः । सायंसन्ध्यास्तनितेन रात्रिः । प्रातःसन्ध्यास्तनितेऽहोरात्रमिति । **हारीतो**क्तं तु ऋतुविषयम् । यत्तु **लल्लेन वसिष्ठ**नाम्नोदाहृतं वचनम्,

"व्रत्येऽह्नि पूर्वसन्ध्यायां वारिदो यदि गर्जति । तद्दिने स्यादनध्यायो व्रतं तत्र विवर्जयेत्॥" इति

तदपि समूलत्वेऽकालिकगर्जविषयम् । **हारीत**कवाक्यत्वात् । शरदि वैश्यस्योपनयनविधानेन तद्विषये पूर्वोक्तस्यैव निषेधस्यानुवादः । तत्र काले वृष्टौ यथाऽनध्यायाभावस्तथैतद्विषयेऽपीति शङ्कावारणार्थश्च स इत्येके । सामान्यतस्तद्दिने एवानध्यायो न तु त्र्यहमित्येवम्परिसङ्ख्यायां **याज्ञवल्क्येन** विरोधः । ऋतुविषये त्र्यधिकाप्राप्तेर्व्यर्थमेव वचनस्यापत्तिः । व्रतविवर्जनेऽनध्यायत्वमेव निमित्तमतस्तदुक्तिः । 'व्रतं तत्रैव वर्जयेदिति' नियमे चतुर्दश्यादौ तदापत्तिः । नैमित्तिकानध्यायेषु पूर्वसन्ध्यागर्ज एव । तत्रापि तद्दिने एवेति नियमे तत्र गर्जादिसन्निपाते उपनयनापत्तिः । किञ्चैवं द्वेधापरिसङ्ख्याकल्पनापेक्षया महानाम्न्यादिव्रतविषयत्वमस्य वक्तुमुचितम् । नैमित्तिकमनध्यायमित्यादिप्राग्लिखित**वसिष्ठ**वचनेन वेदव्रतेषु कालातिक्रमे तदनुज्ञया तदनतिक्रमे तेषां त्याज्यत्वप्रतीतेः । प्रतिपद्वत् महाव्रतप्रकरणीयैतरेयब्राह्मणाच्चेत्यन्ये । एतेन मध्यदेशे माघे नियतवृष्टिसत्त्वेन तस्यापि कालत्वेन सन्ध्यागर्जादौ नानध्याय इति निरस्तम् । कालगर्जादावपि दिनमात्रमनध्यायस्य सत्त्वाच्च । यत्तु,

"गाण्डीवमेतत्पार्थस्य लोकेषु विदितं धनुः । एतद्वर्षसहस्रं तु ब्रह्मा पूर्वमधारयत् ॥ "

इत्युपक्रम्य, 'पार्थः पञ्च च षष्टिं च वर्षाणि श्वेतवाहनः । ' इति,

तत्तु 'पक्षा वै मासा ' इति श्रुत्यनुसारेण षट्सु मासेषु वर्षव्यवहाराच्चानुपपन्नमिति, **न तदेकवर्षमध्ये द्वौ वर्षाकालावित्यत्र गमकम् ।**

यत्तु **ज्योतिर्निबन्धे,**

"नान्दीश्राद्धे कृते चेत्स्यादनध्यायस्त्वकालिकः । तदोपनयनं कार्यं वेदारम्भं विवर्जयेत् ॥"

इत्युक्तं, तन्न **बह्वृच**विषयम् । तेषामुपनयने वेदारम्भाभावेन निषेधासम्भवात् । तदर्थस्तु नान्दीश्राद्धे कृते यद्यकालभवोऽनध्यायः स्यात्तदोपनयनं कार्यं वेदारम्भस्तु वर्ज्य इति बहवः प्रामाणिकाः। यत्तु कार्यमित्यन्तं सर्वसाधारणं निषेधस्तु सम्भवत्प्रातिकविषय इति तन्न । सन्नियोगशिष्टन्यायेनोभयोरेकविषयस्यौचित्यात् । वाक्यभेदापत्तेश्च । वेदारम्भातिरिक्ताङ्गकमुपनयनं कार्यमित्येकवाक्यतौचित्यात्। 'वेदारम्भं तु वर्जयेदिति' पाठे तथाऽर्थासम्भवाच्चेति दिक् । उपनयनोत्तरं ब्रह्मौदनपाकात्पूर्वं गर्जितादिसम्भावनायां दिवैव चरुश्रपणं कृत्वाऽस्तमिते होमः कार्यः ।

"न सन्ध्यागर्जिते काले न वृष्ट्युत्पातदूषिते । ब्रह्मौदनं पचेदग्नौ पक्वं चेन्न निवर्तते" ॥

इति **संग्रहोक्तेः** । 'पक्वमन्नं न दुष्यतीति' पाठान्तरम् । चरुश्रपणात्पूर्वमेव सन्ध्यागर्जादौ पुनरुपनयनमेवेति केचित् ।

अन्ये तु

"औत्पातिकमनध्यायं प्राग् ब्रह्मौदनपाकतः । व्रतादूर्ध्वं नेष्टमाहुः शान्त्याऽऽहेष्टं पराशरः ॥"

इति ज्योतिःशास्त्रोक्तेः,

"ब्रह्मौदनविधेः पूर्वं प्रदोषे गर्जितं यदि । तदा विघ्नकरं ज्ञेयं व्रतोरध्ययनस्य तत् ॥

"तत्र शान्तिविधानं तु वक्ष्ये शास्त्रानुसारतः ।"

इत्यादिना शान्तिमुक्त्वा "ततो ब्रह्मौदनं पचेत्" इति विधानकालोक्तेश्च शान्तिं कृत्वा पाकः कार्यः । शान्तिमकृत्वा तत्करणे तु पुनरुपनयम् । वस्तुतः शान्तिरध्ययनविघ्नादिदृष्टदोषनिवारणाय पुनरुपनयनं तु ब्राह्मण्यानुत्पादाद्भवत्येवेत्याहुः ।

## अथ स्पष्टार्थ मप्रपञ्चः पुनरुपनयनविधिरुच्यते ।

पुनःसंस्कारः पुनरुपनयनम् । तच्च त्रिविधम् । प्रत्यवायनिमित्ते प्रायश्चित्तत्वेन विहितं, निमित्तविशेषेण कृतोपनयनस्य वृथाचेष्टापत्तौ तत्फलार्थत्वेन विहितं, वेदान्तराध्ययनचिकीर्षायां तदर्थत्वेन विहितमिति । तत्राद्यं तावत् **बौधायनः** ( २।१।१८ )

'अमत्या सुरापाने कृच्छ्राब्दपादं चरित्वा पुनरुपनयनमिति' । 'औषधान्तरानाश्यव्याध्युपशमार्थं पैष्टीपाने एतदिति' **मदरत्ने** ।

**वसिष्ठः,** ( अ. २० सू. १९ )

'मत्या मद्यपाने त्वसुरायाः सुरायाश्चाज्ञाने कृच्छ्रौ घृतप्राशनं पुनः संस्कारश्चेति' । अत्र सुरायाश्चेति सुराशब्दो न पैष्टीपरः । तदज्ञानपाने द्वादशाब्दोक्तेः ।

**शूलपाणौ यमः,**

"अज्ञानाद्वारुणीं पीत्वा प्राश्य मूत्रपुरीषयोः । पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः॥" इति ।

यद्यपि संस्कारशब्दो जातकर्मादिसाधारणस्तथापीदृशविधिषु संस्कारशब्देनोपनयनमेवोच्यते। तस्य द्विजत्वसम्पादनरूपातिशययोगेन बुद्ध्यारोहात्। अनन्तरवक्ष्यमाण**मनु**वचसि वाक्यशेषेण तथा प्रतीतेश्च।

**भविष्ये**

"अज्ञानाद्वारुणीं पीत्वा संस्कारेणैव शुध्यति। तप्तकृच्छ्रान्वितेनेह केवलेन न शुध्यति" ॥

एतदप्युक्तव्याध्युपशमार्थं पाने एवाज्ञानकृते बोद्धव्यम्।

"रेतोमूत्रपुरीषाणां गौडीमाध्व्योश्च प्राशने। क्रव्यादपशुविष्ठानां संस्कारात्शुद्धिरिष्यते"।

**मनुः**, ( अ० ११ श्लो० १५०।१५१ )

"अज्ञानात्प्राश्य विण्मूत्रं सुरासंसृष्टमेव च। पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः" ॥

"वपनं मेखला दण्डो भैक्षचर्या व्रतानि च। निवर्तन्ते द्विजातीनां पुनःसंस्कारकर्मणि च" ॥ इति

एतदतीतसुरासम्पर्कविषयम्। तप्तकृच्छ्रपूर्वकश्चैष विधिर्ज्ञेयः। वक्ष्यमाण**गौतमस्मृति**निर्दिष्ट-विण्मूत्रसाहचर्यात्।

**विष्णुः**,

'मलानां मद्यानामन्यतरस्य प्राशने चान्द्रायणं कुर्यात्। लशुनपलाण्डुगृञ्जनतद्गन्धिविड्वराहग्राम-कुक्कुटनरगोमांसभक्षणे च सर्वेष्वेतेषु द्विजातीनां प्रायश्चित्तान्ते पुनःसंस्कारं कुर्यादिति'। 'ज्ञानतः सकृद्भक्षणे एतदिति' **शूलपाणिः**।

तत्रैव **शातातपः**, 'उष्ट्रीक्षीरमानुषीक्षीरप्राशने पुनरुपनयनं तप्तकृच्छ्रं चेति'. 'ज्ञानाभ्यासे एतदिति' **शूलपाणिः**,

**मिताक्षरायां पैठीनसिः**, 'अविखरोष्ट्रमानुषीक्षीरप्राशने तप्तकृच्छ्रं पुनरुपनयनं चेति'

**बृहस्पतिः**, 'रेतोमूत्रपुरीषाणां शुद्ध्यै चान्द्रायणं चरेत्'।

तप्तकृच्छ्रपूर्वकं पुनः संस्कारं प्रकृत्य **गौतमः**, ( अ. २३ सू. ३ ) 'मूत्रपुरीषकुणपरेतसां प्राशने चैवमिति'।

'अत्र चान्द्रायणतप्तकृच्छ्रयोर्ज्ञानाज्ञानाभ्यां व्यवस्था संस्कारस्तूभयत्र तुल्य एवेति'

**शूलपाणिः**।

**हेमाद्रौ**, 'प्रेतशय्याप्रतिग्राही पुनः संस्कारमर्हति'। इति।

**आचारोद्योते वृद्धमनुः**,

"जीवन्यदि समागच्छेत् घृतकुम्भे नियोजयेत्। उद्धृत्य स्नापयित्वाऽस्य जातकर्मादि कारयेत् ॥

"द्वादशाहं व्रतचर्या त्रिरात्रमथवाऽस्य तु। स्नात्वोद्वहेत्ततो भार्यामन्यां वा तदभावतः ॥

"अग्नीनाधाय विधिवद्व्रात्यस्तोमेन वा यजेत्। अथैन्द्राग्नेव पशुना गिरिं गत्वा तु यत्र तु ॥

"इष्टिमायुष्मतीं कुर्यादीप्सितांश्च क्रतूंस्ततः" ॥ इति।

**प्रायश्चित्तोद्योते बौधायनः,**

"सिन्धुसौवीरसौराष्ट्रांस्तथा प्रत्यन्तवासिनः । अङ्गवङ्गकलिङ्गांश्च गत्वा संस्कारमर्हति" ॥ इति ।
एतच्च तीर्थयात्रां विना गमने सति बोध्यम् ।
'तीर्थयात्रां विना गत्वा पुनः संस्कारमर्हति' ॥ इति

**प्रयोगपारिजाते बौधायन**स्मरणात् ।

**मनुः,**

"चाण्डालान्नं द्विजो भुक्त्वा सम्यक् चान्द्रायणश्चरेत् । बुद्धिपूर्वं तु कृच्छ्राब्दं पुनःसंस्कारमेव च ॥" इति । अभ्यासविषयमिदमिति **मदनरत्ने ।**

**पाराशर्यप्रायश्चित्तकाण्डे,**

"अजिनं मेखलादण्डो भैक्षचर्या व्रतानि च । निवर्तन्ते द्विजातीनां पुनःसंस्कारकर्मणि" ॥
ब्रह्मचारिणं प्रकृत्य **पैठीनसिः**, "मधुमांसाशने त्रिरात्रमुपवासः पुनरुपनयनं चेति" ।
"अयं च त्रिरात्रोपवासः प्राजापत्याशक्तस्येति" **मदनरत्ने ।**
"एतयोरज्ञानभक्षणे कृच्छ्रः । मत्या पराकः । अभ्यासे द्विगुणं पुनःसंस्कारश्चेति" **स्मृत्यर्थसारे ।**
तथा तत्रैव मातापितृगुर्वाचार्योपाध्यायेभ्योऽन्येषां प्रेतसंस्कारे ब्रह्मचारिणः पुनरुपनयनं कार्यमिति ।

तथा रेतोविण्मूत्रकरनिर्मथितदधिचहविर्वेदिपुरोडाशभक्षणानामत्यन्ताभ्यासे अतिकृच्छ्रः पुनरुपनयनं चेति ।

**पराशरः.**

"यः प्रत्यवसितो विप्रः प्रव्रज्यातो विनिर्गतः । अनाशकनिवृत्तश्च गार्हस्थ्यं चेचिकीर्षति ॥
"स चरेत् त्रीणि कृच्छ्राणि त्रीणि चान्द्रायणानि च । जातकर्मादिभिः सर्वैः संस्कृतः शुद्धिमाप्नुयात्"

**वसिष्ठः,**

"संन्यस्य दुर्मतिः कश्चित् प्रत्यापत्तिं व्रजेद्यदि । स कुर्यात् कृच्छ्रमश्रान्तः षण्मासात् प्रत्यनन्तरम् ॥" इति

अत्र विप्रस्य षाण्मासिकः कृच्छ्रः क्षत्रियस्य चान्द्रत्रयं वैश्यस्य कृच्छ्रत्रयमिति व्यवस्थोक्ता **मिताक्षरायां** तत्प्रकरणे ।

**स्मृत्यन्तरे,**

"कर्मनाशाजलस्पर्शात् करतोयाविलंघनात् । गण्डकीबाहुतरणात् पुनःसंस्कारमर्हति" ॥ इति ।
कर्मनाशाजलस्पर्शो गयायात्रान्यविषयकः ।
"कर्मनाशाजलस्पर्शः पारेऽथ गमनं तथा । सर्वपुण्यक्षयकरं गयायात्रां विना मुने ॥

१ इदं मनुपुस्तके नोपलभ्यते

"कर्मनाशाजलस्पर्शवचनानि तु यानि वै। तान्यन्यविषयाण्येव गयायां नैव दूषणम्" ॥ इति। **सनत्कुमारसंहितोक्तेः।**

प्रागुक्त**बौधायनाच्च।** करतोयाजलस्पर्शस्तु न निषिद्धः।

"करतोयां कुरुङ्गश्च त्रिरात्रोपोषितो नरः। अश्वमेधमवाप्नोति विगाह्य प्रयतः शुचिः" ॥ इति।

**भारते** दानधर्मे **अङ्गिरसा गौतमं** प्रत्युक्तेः। करतोयाविलंघनमात्रं न निषिद्धं किन्तु स्नात्वैवेत्यन्ये। इयञ्च पूर्वदेशस्था ब्राह्मणपुत्रसङ्गता **पुलस्त्य**तीर्थयात्रायां तत्रैवोक्तेः। करे तोयं करतोयं तदस्यास्तीति करतोया। मत्वर्थीयोऽच्।

गौरीविवाहसमये शङ्करकरनिक्षिप्तदानजलप्रभवेयमिति पुराणान्तरे।

'करतोया सदानीरेति' **अमरः** ( १।१०।३३ )

"प्रथमं कर्कटे देवी त्र्यहं गङ्गा रजस्वला। सर्वा रक्तवहा नद्यः करतोयाऽम्बुवाहिनी ॥"

इति स्मृतिरिति दिक्।

अन्यत्र च,

"जीवन्यदि समागच्छेत् घृतकुम्भे निमज्ज्य च। उद्धृत्य स्थापयित्वाऽस्य जातकर्मादि कारयेत् ॥"

**पाद्मे**, 'प्रेतशय्यापरिग्राहो पुनः संस्कारमर्हति।'

**शातातपः,**

"लशुनं गृञ्जनं जग्ध्वा पलाण्डुं च तथा शुनम्। उष्ट्रमानुषकेशाश्वरासभीक्षीरभोजनात् ॥

"उपायनं पुनः कुर्यात्तप्तकृच्छ्रं चरेन्मुहुः।" इति

इत्थं विहितप्रायश्चित्तभूतपुनरुपनयने विशेषमाह **पारिजातमदनरत्नयोः काश्यपः,**

'चीर्णप्रायश्चित्तः प्राच्यामुदीच्यां वा दिशि गत्वा यत्र ग्रामपशूनां शब्दो न श्रूयते तस्मिन्देशेऽग्निं प्रज्वाल्य ब्रह्मासनमास्तीर्य प्राक् प्रणीतेन विधिना पुनः संस्कारमर्हतीति'। ब्रह्मासनमिति ब्रह्मनियमार्थम्।

## अथ द्वितीयः पुनरुपनयनप्रकारः।

**समयोद्योते,**

"विनर्तुना वसन्तेन कृष्णपक्षे गलग्रहे। अपराह्णे चोपनीतः पुनः संस्कारमर्हति ॥"

तथा दक्षिणोत्तराभ्यां पाणिभ्यां कुमारस्यांसाभिमर्शनपूर्वकसमीपानयनविधायक**हिरण्यकेशिसूत्रे मातृदत्तः।** इदं प्रधानकर्म अस्य विस्मरणे सर्वं कर्मावर्तते इति।

**वसिष्ठः,**

"पापांशगते चन्द्रे अरिनीचस्थितेऽपि च। अनध्याये चोपनीतः पुनः संस्कारमर्हति ॥" इति।

## अथ तृतीयः प्रकारः ।

तत्र **जयन्तः**, 'यजुर्वेदश्चाधीत्य ऋग्वेदमध्येतुकामस्यैतदेवोपनयनमलङ्कारवर्जं भवतीति ।' **गृह्यकारिकायाम्**,

"वेदान्तरमधीत्येममृग्वेदं ये त्वधीयते । उपनीतिरियं तेषामलङ्करणवर्जिता ॥" इति । **पारिजाते भगवान्**,

"द्वितीयमिममृग्वेदमध्येतुमभिकाङ्क्षया । एतदृक्षाकविधिना पुनरप्युपनीयते ॥" इति ।

इति पुनरुपनयनवैविध्यम् ।

---

पुनरुपनयने विशेषमाह **आश्वलायनः**, ( अ. १ क. २२ )

'अथोपेतपूर्वस्य कृताकृतं केशवपनं मेधाजननञ्चानिरुक्तं परिदानं कालश्च तत्सवितुर्वृणीमहे इति सावित्रीमिति' । **अनिरुक्तं** न भवतीति । इदं सूत्रं **वृत्तिकारिकाजयन्त**पर्यालोचने प्रायश्चित्तभूतपुनरुपनयनपरमेव प्रतीयते । प्रायश्चित्तत्वेन पुनरुपनयनप्राप्तावेवं कुर्यादिति **वृत्तिकृतैव** व्याख्यानेऽभिधानात् । **जयन्तेन** च प्रायश्चित्तनिमित्तं 'यस्य पुनरुपनयनं क्रियते तस्यायं विधिरुच्यते' इति उपक्रम्यैतत्सूत्रव्याख्यानात् ।

"यदैतदुपनीतस्य प्रायश्चित्तं तदा भवेत् । कृताकृतं च वपनं मेधाजननमेव च ॥
"मेधाजननसद्भावे व्रतचर्या भवेदिह । अनुप्रवचनीयश्च तदभावे द्वयं न हि ॥
"परिदानं न कार्यं स्यान्निमित्तानन्तरं त्विदम् । पुरस्या वाचयेत् स्थाने तत्सवितुर्वृणीमहे ॥
"भणितोऽत्र विशेषोऽयं समानमितरद्भवेत् ।" इति **कारिकोक्तेश्च** ।

निमित्तानन्तरमित्युक्त्या च नैमित्तिके निमित्तानन्तर्यस्योचितत्वान्न्यायमूलकं "कालश्चे" तिसूत्रम् । निमित्तानन्तर्यासम्भवे तु जातेष्विव उदगयनादिकालोऽपेक्षणीय एवेति सूचितम् । परिदानं, कस्य ब्रह्मचार्यसीत्यादेः परिददामीत्यन्तस्य मन्त्रस्योच्चारणम् । भणितोऽत्रेति, प्रायश्चित्तार्थे पुनरुपनयने एव गायत्र्याः स्थाने एषा ऋग्भवति न तु तदनन्तरभाविषु ब्रह्मयज्ञादिष्वपि, तत्र पूर्वविहितगायत्रीबाधे मानाभावादिति दर्शयति ।

**मातृदत्तोऽपि** "अत्र सावित्रीम् वाचयति यदि पुरस्तादुपेतो भवति यद्यनुपेतस्त्र्यहे पर्यवेत" इति सूत्रे प्रायश्चित्तार्थपुनरुपनयनान्तर्गतसावित्रीवाचनाङ्गत्वेन परिदानान्तरकालावधिं वदंस्तस्मिन्नेव प्रकरणे परिदानसूत्रे पुनरुपनयने परिदानाभावसूचकम् **आश्वलायनसूत्र**संवादं वदन् **आश्वलायनसूत्र**प्रायश्चित्तभूतपुनरुपनयनविषयत्वमेव दर्शितवान् । तस्मिन्नेव प्रकरणे तत्तत्सूत्रव्याख्याकाले अहतवासोमेखलाऽजिनभैक्षचर्यादण्डमन्त्रनिवृत्तिः पुनरुपनयने इत्याह ।

**हरदत्तेन** 'अथोपेतपूर्वस्येति' (१।२२।२२) सूत्रव्याख्यावसरे उक्तम्, अथानन्तरं वेदान्तरे उपेतपूर्वो य इमं वेदमध्येतुमिच्छति तस्योपनयने विशेषो वक्ष्यत इति । अस्ति च तदनुसारिणी स्मृतिः **पारिजाते**,

"अध्वर्यूणां सामगानाम् ऋचमध्येतुमिच्छताम्। क्रिया स्यात्परिदानान्ता दीक्षादिर्न विधीयते॥"

"ब्रह्मोदनश्च मेधार्चा दीक्षा च न विधीयते। ऋचमध्येतुकामानां दीक्षामिच्छन्ति केचन॥"इति अत्राध्वर्युसामगग्रहणस्यायमाशयः। ऋग्वेदाध्ययनाङ्गभूतमेवोपनयनम् **आश्वलायनो**क्तेतिकर्तव्यताकं भवति। सत्यप्युपनयनैक्ये तत्तदाम्नायाध्ययनाङ्गभूते एव तस्मिंस्तत्तद्गृह्योक्तेतिकर्तव्यता भवतीति स्मृतिपादे **न्यायसुधायामुक्तेः**। न ऋग्वेदिनां तदध्ययनार्थं पुनरुपनयनं भवति। तेषां प्रथमोपनयनान्तरमेव तदध्ययनस्योचितत्वात्। अतोऽन्यवेदिनामेव ऋग्वेदार्थे पुनरुपनयेऽयं विधिरिति। अत एव पूर्वोदाहृत**जयन्तकारिकयो**र्ऋग्वेदग्रहणं कृतम।

यच्च तत्र **हरदत्तीये** च वेदान्तराध्ययनपूर्वके एव ऋग्वेदाध्ययने पुनरुपनयनकथनं, तेन युगपदनेकवेदारम्भे नोपनयनावृत्त्यपेक्षेति सूचितम्। अस्ति ह्यन्यवेदिनां क्रमिकवेदारम्भपक्षो युगपत्तदारम्भपक्षश्च। तथा च **हरिहरेण** उपनयनान्तरं 'वेदारम्भसमये' इत्युक्त्वा वेदारम्भाङ्गभूताः **कात्यायनो**क्ताहुतीर्दर्शयतोक्तं, 'यदि ऋग्वेद आरभ्यते पृथिव्यै स्वाहा अग्नये स्वाहेति, यदि यजुर्वेदः अन्तरिक्षाय स्वाहा वायवे स्वाहेति, यदि सामवेदः दिवे स्वाहा सूर्याय स्वाहेति, यदि अथर्ववेदः दिग्भ्यः स्वाहा चन्द्रमसे स्वाहेति, यद्येकदा सर्ववेदारम्भः प्रतिवेदं वेदाहुतिद्वयं हुत्वा प्रायश्चित्ताहुतीर्जुहुयादिति'। अतश्च युगपदनेकवेदारम्भे सकृदुपनयनेनैव सकलवेदाध्ययनसिद्धिः। इत्थमभिप्रेत्योक्तम् **आपस्तम्बेन पारिजाते**, 'सर्वेभ्यो वै वेदेभ्यः सावित्र्यनूच्यते' इति। ( आप. ध. प. १ सू. १० )

तदयं सङ्क्षेपः। वेदान्तराध्ययनपूर्वकमृग्वेदाध्ययने चिकीर्षिते **आश्वलायनोक्ते**तिकर्तव्यताकं पुनरुपनयनं कार्यम्। तत्रैव **जयन्तकारिका**मतेऽलङ्करणमात्रं वर्ज्यमिति विशेषः। **हरदत्तमते** तु सूत्रोक्तसकलपुनरुपनयनगतविशेषविशिष्टं भवति। **स्मृतिमते** तु दीक्षाऽपि वैकल्पिकीति।

द्वितीयपुनरुपनयननिमित्ते त्वविकृतमुपनयनं कार्यम्। गार्हपत्याधानात्प्राक् सूर्योदयेऽविकृताधानवत्। तत्र पुनरुपनयने क्वचिदपि ग्रन्थे विशेषानुक्तेः। 'अथोपेतपूर्वस्येति' सूत्रस्य तत्राप्रवृत्तेश्च।

प्रायश्चित्तभूतपुनरुपनयने तूक्तवचनेभ्योऽनेकविशेषावगतेस्तत्प्रयोगो लिख्यते। तत्र यत्र प्रायश्चित्तान्तरसहितं विहितं तत्र पर्षदुपदिष्टविधिना तत्प्रायश्चित्तं कृत्वा कार्यम्। यथोष्ट्रीक्षीरपानादौ। यत्र जातकर्मादिसंस्कारान्तरसहितं विहितं तत्र निमित्तानन्तरकरणपक्षे पुण्यनक्षत्रायनालोच्य पर्षदुपदेशेन चौलान्तसंस्कारान् कृत्वा कार्यम्। अन्यथोचितनक्षत्राद्यावश्यकम्। कर्ता च पितृसत्त्वे स एव। तदभावे पितृव्यादिः सपिण्डः। तदभावे यः कश्चित् ब्राह्मणः। पुनरुपनयनं यत्र चिकीर्षितं तत्रैव देशे जातकर्मादयः कार्याः।

'अस्य कृतौर्ध्वदेहिकस्य पुनः संस्कारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं जातकर्मादीन्युपनयनान्तानि कर्माणि करिष्ये' इति सकृत्सङ्कल्प्य सर्वोद्देशेन सकृत्स्वस्तिवाचनादि श्मश्रुवपनानन्तरं चौले केशवपनमिति विशेषो महावयसः विवाहसङ्कल्पं तदर्थं स्वस्तिवाचनादिकन्तु स्वयमेव पृथक्कुर्यात्। एवं निमित्तान्तरेऽपि सङ्कल्प ऊह्यः। यत्र तु पुनरुपनयनमात्रं प्रायश्चित्तत्वेन विहितं तत्र पर्षदुपदिष्टविधिना

तदेव कार्यम् । तत्राचार्यः कृच्छ्रत्रयं द्वादशसहस्रं तत्सवितुर्वृणीमहे इत्यस्या जपञ्च कुर्वीत । संस्कार्यो निमित्तानन्तरोपनयने न प्रायश्चित्तं कृच्छ्रत्रयात्मकं कुर्यात् । कालान्तरोपनयने त्ववश्यं कुर्यात् ।

ततो ग्रामात्प्राच्यामुदीच्यां वा दिशि गत्वा यत्र ग्रामपशूनां शब्दो न श्रूयते तादृशं देशं मार्जनोपलेपनाभ्यां शोधयित्वा तत्र कृतनित्य आचार्यः स्वदक्षिणतः संस्कार्यमुपवेश्यास्य प्रत्यन्तदेशे गमनजनितदोषनिरासेन पुनःसंस्कारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं पुनरुपनयनं करिष्ये इत्येवं तत्तन्निमित्तानुसारिसङ्कल्पं कृत्वा तदङ्गभूतेत्यादिसङ्कल्पपूर्वकमण्डपदेवताप्रतिष्ठापनान्तं कृत्वा स्वस्तिवाचनेऽग्निः प्रीयतामिति विशेषमुक्त्वा कृतमङ्गलस्नानं संस्कार्यं भोजयित्वा वपनपक्षे सङ्कल्पपूर्वकं वपनस्नाने कारयित्वाऽन्यथाऽकारयित्वा नित्योपनयनवदन्वाधानात्प्राक् तन्त्रं कृत्वा अस्य प्रायश्चित्तार्थं पुनरुपनयनहोमे देवतापरिग्रहार्थमन्वाधानं करिष्ये । अस्मिन्नन्वाहितेऽग्नावित्यादिपात्रप्रोक्षणादीनि नित्यवत्कुर्यात् ।

ततो ब्रह्माणमुपवेश्य प्रणीताप्रणयनाद्याज्यसंस्कारान्तं कृत्वा वासोऽजिनधारणपक्षे नित्यवत्समन्त्रं धारणं तयोः कुर्यात् । तदभावपक्षे पूर्वमेव कुमारेण परिहितवस्त्रेण भवितव्यम् । ततो ब्रह्मचारिणः पुनरुपनयने तु वस्त्रादि नित्यम् ततो यज्ञोपवीतधारणादि आदित्येक्षणान्तं नित्यवत्कुर्यात् ।

ततो 'युवा सुवासा' इत्येतन्मन्त्रकप्रदक्षिणावर्तनादि वाससा पाणिभ्यां तदञ्जलिग्रहणान्तं कुर्यात् । तत्रेत्थं युवेत्यर्धेन संस्कार्यं प्रदक्षिणमावर्त्य उत्तरेण तस्यांसयोः पाणी गमयित्वा एवं दक्षिणभागं निनयेत् । ततः संस्कार्योऽग्निकार्यमुपनयनवत्कुर्यात् । ततोऽग्नेः पश्चिमतः प्रत्यङ्मुख आचार्यपादावुपसंगृह्य अधीहि भोः सावित्रीमिति श्रुत्वा भो अनुब्रूहीति वदेत् । तत आचार्यः प्रणवव्याहृतीनामृष्यादिस्मरणान्ते तत्सवितुरित्यस्य श्यावाश्वः सविताऽनुष्टुप् पुनरुपनयने विनियोगः । प्रथमं पादशः स्वयमुक्त्वा वाचयेत् । ततोऽर्द्धर्चशः । ततः सर्वाम् । ततो मम व्रते इत्यनेन संस्कार्यं हृदि ऊर्ध्वाङ्गुलिपाणिं निधाय ततो मेखलादण्डदानपक्षे समन्त्रकं तद्दानं कृत्वा अन्यथा त्वकृत्वा ब्रह्मचर्यमादिशेत् । यदि ब्रह्मचारिणोऽसमापितवेदस्य पुनरुपनयनं तदा नित्यवत् । अन्यस्य तादृशस्य पुनरुपनयने तु अपोशानकर्म कुरु दिवा मा स्वाप्सीर्वेदमधीष्वेति । समापितवेदस्य तु स्वाप्सीरित्यन्तमेव । ततः स्विष्टकृदादिहोमशेषं समापयेत् । मेधाजननकरणपक्षे तत्पर्यन्तमग्निं रक्षेत् व्रतचर्याञ्च कुर्यात् । उपनयनदिने भिक्षायाचनपूर्वकमनुप्रवचनीयञ्च । तत्र गायत्र्याः स्थाने तत्सवितुर्वृणीमहे इत्येतां पठित्वा द्वितीयामाहुतिं जुहुयात् । उक्तमृष्यादि नित्यस्त्यागः ।

यद्यसमापितवेदस्य पुनरुपनयनं तदा वेदसमाप्तिवाचनं कुर्यान्नान्यथा । ततस्त्रिरात्रं द्वादशरात्रमब्दं वा व्रतचर्यायां कृतायां मेधाजननम् । तत्र यदि पुनरुपनीतो ब्रह्मचारी तदा यस्य पलाशस्य कुशस्तम्बस्य वा प्रोक्षणं कृतं तत्रैव मेखलादीनि व्युदस्यान्यानि धारयेत् । अन्यस्तु पुनरुपनीतो योऽपि धृतमेखलादिः स व्युदस्य नान्यानि धारयेत् । यस्मिन्नाश्रमे पुनरुपनयनं प्राप्तं तदाश्रमधर्मान् कुर्यात् । यत्र तु पुनरुपनयनानन्तरमाश्रमान्तरस्वीकारः श्रूयते, यथा "स्नात्वोद्वहेत् ततो भार्या" मित्यादौ, तत्र मेखलादीनि व्युदस्य पुनस्तानि धारयित्वा ब्रह्मचारिव्रतचर्यामुचितकालेन समाप्य विधिनाऽऽश्रमान्तरं स्वीकुर्यात् । अयं बह्वृचानां पुनःसंस्कारोऽभिहितः ।

## अथ यजुःशाखिनामुच्यते ।

तत्र **बौधायनः**

अथोपनीतस्य व्रत्यानि भवन्ति नान्यस्योच्छिष्टं भुञ्जीतान्यत्र पितृज्येष्ठाभ्यां न स्त्रिया सह भुञ्जीत मधुमांसं श्राद्धसूतकान्नमनिर्दशाहसन्धिनीक्षीरं छत्राकनिर्यासौ विलयनं गणान्नं गणिकान्नमित्येतेषु पुनःसंस्कारः प्रतिषिद्धदेशगमनमित्येकेषामथाप्युदाहरन्ति ।

"सुराष्ट्रं सिन्धुसौवीरमवन्तीं दक्षिणापथम् । एतानि ब्राह्मणो गत्वा पुनःसंस्कारमर्हति " ॥

अथ पुनःसंस्कारं व्याख्यास्यामो देवयजनोल्लेखनप्रभृत्याऽग्निमुखात्कृत्वा पालाशीं समिधमाज्येनाक्त्वा अभ्याधाय वाचयति " पुनस्त्वादित्या रुद्रा० कामाः " स्वाहेत्यथ व्रत्यप्रायश्चित्तं जुहोति यन्म आत्मनो मिन्दाभूत्० पुनरग्निश्चक्षुरदात्० इति द्वाभ्यामथ पक्वाज्जुहोति सप्तमं अग्ने घृतेन स्वाहेत्यथाज्याहुतीरुपजुहोति येन देवाः पवित्रेणेति त्रिसृभिरनुच्छन्दसं स्विष्टकृत्प्रभृति सिद्धमा धेनुवरप्रदानात् अथापर आपरिधानात्कृत्वा पालाशीं समिधमाधायाथो व्रत्यप्रायश्चित्तं जुहोति अथ व्याहृतीर्जुहोति अथापरो ब्राह्मणवचनादेव सावित्र्या शतकृत्वो घृतमभिमन्त्र्य प्राश्य कृतप्रायश्चित्तो भवति गुर्वर्थोऽप्युच्छिष्टं भुञ्जीताथाप्युदाहरन्ति वपनं दक्षिणादानं मेखलादण्डमजिनं भैक्षचर्या व्रतानि चैतानि निवर्तन्ते पुनः संस्कारकर्मणीत्येतेन पुनः संस्कारो व्याख्यात इति । अत्र शक्ताशक्तभेदेन गुरुलघुकल्पव्यवस्था बोध्या ।

इति पुनःसंस्कारविधिः ।

---

## षण्ढादीनामुपनयनमाह.

**बौधायनः**,

"अथ षण्ढबधिरमूकानां संस्कारं व्याख्यास्याम ऋतुर्यथाकामी स्यात्पुण्ये नक्षत्रे ब्राह्मणान्भोजयित्वाऽऽशिषो वाचयित्वा केशानोप्य स्नातं शुचिवाससं बद्धशिखं यज्ञोपवीतिनमप आचमय्य देवयजनमुदानयत्यथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात्कृत्वा याज्ञिकीं समिधमाज्येनाक्त्वा तूष्णीमभ्याधापयति तूष्णीमश्मानमास्थापयति यथालाभं तूष्णीं वासः परिधापयति तूष्णीं मेखलां मन्त्रवद्ग्रन्थिं तूष्णीमजिनं प्रतिमुञ्चति तूष्णीं दण्डं प्रयच्छति याज्ञिकस्य वृक्षस्य नाम पृच्छत्यथैनं दक्षिणं हस्तं गृह्णाति यस्मिन्भूतं च भव्यं चेत्यथैनं देवताभ्यः परिददाति देवेभ्यस्त्वेत्यथैनमुपनयति देवस्य त्वेति सर्वं नामग्रहणवर्जमाचार्य एव पक्वान् जुहोति तत्सवितुर्वरेण्यमिति अथाज्याहुतीरुपजुहोति क्षेत्रियै त्वा निर्ऋत्यै त्वेति षड्भिर्व्याहृतिभिरथाग्रेणाग्निं याज्ञिकस्य वृक्षस्य पर्णेषु हुतशेषं निदधातीति तत् पुरस्ताद्व्याख्यातम् । अथ पक्वादुपादाय प्राश्नाति सर्वान्मन्त्रानाचार्य एव जपेदित्येकेऽथ जडक्लीबव्यसनिव्याधितोन्मत्तहीनाधिकाङ्गानामामयाव्यपस्मारिश्वित्रिकुष्ठिजङ्गरोगिणश्चैतेन व्याख्याता इत्येके इति ।

इति षण्ढादीनामुपनयनविधिः ।

## अथ पुनर्वसूपनयनसंशयनिरासार्थं व्रतबन्धे नक्षत्रनिर्णयः क्रियते ।

तत्र तावज्ज्योतिर्विदामभिमतमुच्यते । तथा हि अथोपनयने नक्षत्रनिर्णयमाह, **गुरुः**,

"त्रिषूत्तरेषु रोहिण्यां हस्ते मैत्रे च वासवे । त्वाष्ट्रे सौम्ये पुनर्वस्वोरुत्तमं ह्युपनायनम् ॥
"वारुणे वैष्णवे पुष्ये वायव्ये पौष्णभे तथा । अश्विन्यां षट्सु भेषूक्तं मध्यमत्वं चतुर्मुखैः ॥
"शेषेषु वर्जयेद्विद्वान्द्विजानामोपनायनम् । " इति ।

**वसिष्ठोऽपि**, "हस्तत्रये च श्रवणत्रये च धातृद्वये त्र्युत्तरमैत्रभेषु ।
"पौष्णद्वये चादितिभद्वये च शस्तं द्विजानां खलु मौञ्जिकर्म " ॥ इति ।

**कश्यपोऽपि**

"मैत्रे विष्णुत्रये हस्तत्रयर्क्षेषूत्तरात्रये । धातृद्वयादितीज्यान्त्यहस्तर्क्षेष्वौपनायनम् " ॥ इति ।

एवं **बृहस्पत्यादिसंहिता**वाक्येषु त्रैवर्णिकानां पुनर्वस्वोरुपनयनमुक्तं ब्राह्मणोपनयने पुनर्वसुनिषेधकं **राजमार्तण्डे** क्वचिद्दृश्यमानम् ,

"चन्द्रतारानुकूल्येऽपि ग्रहाब्देषु शुभेष्वपि । पुनर्वसौ कृतो विप्रः पुनःसंस्कारमर्हति " ॥

इति वचनं बहुऋषिवचनविरोधादुपनयनविषये **हेमाद्रिमदनरत्नादि**प्राचीननिबन्धकारैर्नवीनैश्च **प्रतापमार्तण्डमुहूर्तचिन्तामणि**प्रभृतिभी **राजमार्तण्डीय**वचनानि लिखद्भिरप्यलिखनाच्च निर्मूलं केनचित् क्षिप्तमिति गम्यते ।

"मावषट्के सितेज्यबुधे पौष्णश्रुतिद्वये । हस्तत्रये धातृषट्सु ब्राह्मणस्योपनायनम् ॥ "

इति तद्वचनविरुद्धार्थकश्च । तेनानिषिद्धं पुनर्वस्वोरुपनयनमन्यनक्षत्रवद्बलत्येव । समूलं मत्वा निषेधं परिपालयन्तो ब्राह्मणानां पुनर्वस्वोरुपनयनं नेति ये वदन्ति तत्तेषामज्ञानविलसितमिति **मुनीश्वर**ज्योतिर्वित्प्रभृतय आहुः । यजुःशाखिनः **श्रीधरदीक्षिता** अप्येवम् ।"

अथ व्रतबन्धे नक्षत्राण्याह **वसिष्ठः**,

"हस्तत्रये च श्रवणत्रये च धातृद्वये त्र्युत्तरमैत्रभेषु ।
"पौष्णद्वये चादितिभद्वये च शस्तं द्विजानां खलु मौञ्जिकर्म " ॥

**कश्यपोऽपि**,

"मैत्रे विष्णुत्रये हस्तत्रयर्क्षेषूत्तरात्रये । धातृद्वयादितीज्यान्त्यहस्तर्क्षेष्वौपनायनम् " ॥

**निर्णयसिन्धौ नारदः**,

"अश्वान्यर्कत्रयान्त्येज्यचन्द्रादित्युत्तराणि च । विष्णुत्रयाश्विमित्राब्जयोनिभान्युपनायने " ॥

तत्रैव **बृहस्पतिः**,

"त्रिषूत्तरेषु रोहिण्यां हस्ते मैत्रे च वासवे । त्वाष्ट्रे सौम्ये पुनर्वस्वोरुत्तमं ह्युपनायनम् " ॥

पुनर्वसुनिषेधमाह, **राजमार्तण्डः**,

"चन्द्रतारानुकूलेषु ग्रहाब्देषु शुभेष्वपि । पुनर्वसौ कृतो विप्रः पुनः संस्कारमर्हति " ॥

अस्य मानुषत्वात् आर्षैः **कश्यपवसिष्ठनारदबृहस्पति**प्रमुखसंहितादिभिर्विरोधाद्दुर्बलत्वम् । यतः आर्षानार्षविरोधे आर्षं बलवत् । अथ यथाकथंचिद् गतिश्चिन्तनीयेति चेत्तर्हि देशाचारतो व्यवस्था । इमं निषेधं प्राच्य एव आद्रियन्ते न तु दाक्षिणात्याः । ते तु आर्षवचनबलात् पुनर्वसौ-रुपनयनं कारयन्ति । यतः,

"श्रुतिस्मृतिविरोधे तु श्रुतिरेव बलीयसी । श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ ॥

"स्मृतिद्वैधे तु विषयः कल्पनीयः पृथक् पृथक् ।" इति न्यायादित्यलं विस्तरेणेति ।'

तत्र ब्राह्मणादीनां व्रतबन्धो भवतीति पार्थपुरनिवासि**कृष्ण**ज्योतिर्वित्सम्मत्या **हरिहर**ज्योतिर्वित्सम्मत्या च **राम**ज्योतिर्वित्पौत्र**दिवाकर**ज्योतिर्वित्प्रभृतय आहुः । अथोपनयने नक्षत्रादि विचार्यते ।

"हस्तत्रये च श्रवणत्रये च धातृद्वये श्युत्तरमत्रभेषु ।

पौष्णिद्वये चादितिभद्वये च शस्तं द्विजानां खलु मौञ्जिकर्म " ॥

**जगन्मोहनसंज्ञकज्योतिर्निबन्धे गुरुः**.

"त्रिषूत्तरेषु रोहिण्यां हस्ते मैत्रे च वासवे । त्वाष्ट्रे सौम्ये पुनर्वस्वोरुत्तमं ह्युपनायनम् ॥

"वारुणे वैष्णवे पुष्ये वायव्ये पौष्णभे तथा । अश्विन्यां पञ्चसु भपूर्वं मध्यमत्वं चतुर्मुखैः ॥

"शेषेषु वर्जयेद्विद्वान्द्विजानामुपनायनम् " ।

तत्रैव **नारदः**.

"श्रेष्ठान्यर्कत्रयान्त्येज्यचन्द्रादित्युत्तराणि च । विष्णुत्रयाश्विमित्राब्जयोनिभान्युपनायने " ॥

तत्रैव **वसिष्ठः**.

"उत्तरासु नियमूपनायनं हस्तमैत्रमृगरोहिणीष्वपि । त्वाष्ट्रपूषभपुनर्वसुष्वपि श्रेष्ठमप्यशुभभागगे विधौ ॥

"दस्रपुष्यवसुवारुणानिलश्रोत्रभेष्वपि बटोर्व्रतं विधौ । शोभनांशकगते शुभावहं मध्यमानि पठिमानि भानि तु॥

"उक्तेष्वेतेषु ऋक्षेषु शुभांशेषूपनायनम् । कुर्वीत शुभकामस्तु नैव क्रूरांशकेषु तु " ॥

इति **जगन्मोहनादौ राजमार्तण्ड**वचनान्यन्यान्यपि लिखितानि परन्तु पुनर्वसुनिषेधकं वचनं न लिखितम् । **कल्याणकल्पद्रुमाख्य**ज्योतिर्निबन्धे तु वेदपरतत्वेन नक्षत्राणां विशेषोऽभिहितः ।

**ज्योतिःसागरे**,

"मूले हस्तत्रये सार्पे शैवे पूर्वात्रये श्रुतौ । ऋग्वेदाध्यायिनां कार्यं मेखलाबन्धनं बुधैः ॥

"पुष्ये पुनर्वसौ पौष्णे हस्ते मैत्रे शशाङ्कभे । ध्रुवमेषु च शस्तं स्याद्यजुषां व्रतबन्धनम् ॥

"पुष्यवासवहस्ताश्विशिवकर्णोत्तरात्रयम् । प्रशस्तं मेखलाबन्धे बह्वृनां सामगायिनाम् ॥

"मृगमैत्राश्विनीहस्तत्रितयादितिवासवाः । अथर्वशाखिनां शस्तो भगणोऽयं व्रतार्पणे ॥"

अन्यत्रापि बहूनि वचनानि मौञ्जीबन्धे पूर्वार्थिकान्येवोक्तानि पुनर्वसुनिषेधकं वचनं **राजमार्तण्डीयत्वेन** केनचिल्लिखितम् ।

"चन्द्रतारानुकूलेषु ग्रहाब्देषु शुभेष्वपि । पुनर्वसुकृतो विप्रः पुनः संस्कारमर्हति ॥"

इदं वचनं **हेमाद्रिमदनरत्नादि**प्राचीननिबन्धकारैरुपनयनविषये **राजमार्तण्डीय**वचनान्यन्यानि लिखद्भिरपि न लिखितम् । नवीनैरपि **मुहूर्तचिन्तामणिप्रतापमार्तण्डा**दिभिर्न लिखितमतो निर्मूलम् । समूलत्वे तु वेदपरत्वेनोक्तवचनेषु ऋग्वेदिनां पुनर्वस्वारनुक्तत्वादृग्वेदिब्राह्मणविषयम् । **मुहूर्तमाला**यामप्येतथमेव व्यवस्थापितमित्यन्ये ज्योतिर्विद आहुः ।

## अथोपनयने नक्षत्रनिर्णयः ।

तत्र तावत् **वसिष्ठः**,

"हस्तत्रये च श्रवणत्रये च धातृद्वये त्युत्तरमैत्रभेषु ।
पौष्णद्वये चादितिभद्वये च शस्तं द्विजानां खलु मौञ्जिकर्म ॥

"उत्तरासु तिसृषूपनायनं हस्तमैत्रमृगरोहिणीष्वपि ।
त्वाष्ट्रपूषभपुनर्वसुष्वपि श्रेष्ठमप्यशुभभागगे विधौ ॥

"दस्रपुष्यवसुवारुणानिलश्रोत्रभेष्वपि बटोर्व्रतं विधौ ।
शोभनांशकगते शुभावहं मध्यमानि षडिमानि भानि तु ॥" इति ।

**कश्यपो**ऽपि,

"मैत्रे विष्णुत्रये हस्तत्रयर्क्षेषूत्तरात्रये । धातृद्वयादितीज्यान्त्यदस्रर्क्षेषूपनायनम् ॥"

**गुरुरपि**,

"त्रिषूत्तरेषु रोहिण्यां हस्ते मैत्रे च वासवे । त्वाष्ट्रे सौम्ये पुनर्वस्वोरुत्तमं ह्योपनायनम् ॥

"वारुणे वैष्णवे पुष्ये वायव्ये पौष्णभे तथा । अश्विन्यां षट्सु भेषूक्तं मध्यमत्वं चतुर्मुखैः ॥

"शेषेषु वर्जयेद्विद्वान्द्विजानामौपनायनम् ।" **तान्येवाह**,

"कृत्तिकाभरणीमूलज्येष्ठार्द्रासु विशाखयोः । पूर्वात्रये च सार्पर्क्षे न कुर्यादौपनायनम् ॥" इति ।

चकारान्मघायाम् । **नारदो**ऽपि,

"श्रेष्ठान्यर्कत्रयान्त्येज्यचन्द्रादित्युत्तराणि च । विष्णुत्रयाश्विमित्राब्जयोनिभान्युपनायने ॥" इति ।

**भृग्वादि**प्रोक्तनक्षत्राणि तु **कल्याणकल्पद्रुमाख्ये ज्योतिर्निबन्धे ज्योतिःसागरस्थ**त्वेनोदाहृतानि ।

"मूले हस्तत्रये सार्पे शैवे पूर्वात्रये श्रुतौ । ऋग्वेदाध्यायिनां कार्यं मेखलाबन्धनं बुधैः ॥
"पुष्ये पुनर्वसौ पौष्णे हस्ते मैत्रे शशाङ्कभे । ध्रुवभेषु च शस्तं स्याद्यजुषां व्रतबन्धनम् ॥
"पुष्यवायवहस्ताश्विशिवकर्णोत्तरात्रयम् । प्रशस्तं मेखलाबन्धे बह्वृनां सामगायिनाम् ॥
"मृगमैत्राश्विनीहस्तत्रितयादितिवासवाः । अथर्वशाखिनां शस्तो भगणोऽयं व्रतार्पणे ॥" इति।

**मुहूर्तमालायामपि,**

"माघषट्के सितारेज्यज्ञभे पौष्णश्रुतिद्वये । हस्तत्रये धातृषट्सु ब्राह्मणस्यौपनायनम् ॥" इति।

पुनर्वसुसंग्राहकपौरुषाधुनिकनिबन्धवचनानि तु अनतिप्रयोजनकत्वान्नेह लिखितानि । अत्र च **वासिष्ठा**दिवाक्येभ्यः प्रतीयमानेन **गुरु**वाक्यैकवाक्यतां भजता निषेधेन ब्राह्मणोपनयने स्पष्ट एव षोडशर्क्षनियमः । परन्तु तत्रोत्तममध्यमत्वोक्तेस्तारतम्यमवधेयम् । यत्तु **वासिष्ठा**दौ द्विजपदस्य त्रैवर्णिकसामान्यार्थत्वेन **वासिष्ठा**दीनां प्राशस्त्यपरत्वमिति । तन्न । तथा सति **गुरु**वचनस्थनिषेधस्य त्रैवर्णिकपरत्वापत्त्या वेदपरवाक्योक्तावशिष्टभानां निर्विषयत्वस्य वैकल्पिकत्वस्य वा प्रसङ्गेन द्विजपदस्य ब्राह्मणार्थत्वावधारणात् । यत्तु ब्राह्मणोपनयने पुनर्वसुनिषेधकं वचनम्—**राजमार्तण्डे,**

"चन्द्रतारानुकूलेऽपि ग्रहाब्देषु शुभेष्वपि । पुनर्वसुकृतो विप्रः पुनः संस्कारमर्हति ॥" इति।

अन्यत्रापि,

"त्र्यहः स्पृशि मले मासि शूद्रत्वमधिगच्छति । पुनर्वसुकृतो विप्रः पुनःसंस्कारमर्हति ॥" इति।

तत्संहिताग्रन्थेष्वदर्शनात्पुनर्वसूपनयनाचारात्पूर्वोक्त**मुहूर्तमाला**वचनविरोधाच्च मानुषत्वान्निर्मूलमेवेति सकलज्योतिर्विदः । अथ यथाकथंचिद्वृतिश्चिन्तनीयेति चेत्तर्हि येषामुक्तवेदविशेषपरवाक्येषु पुनर्वस्वनभिधानं तत्परोऽयं निषेधः । नादितौ चेत्यादि**दीपिकास्थ**निषेधोऽपि तद्विषय एव । केचित्तु समूलत्वेऽपि नायं व्रतबन्धनिषेधः, अपि तु केनचिन्निमित्तेन पुनःसंस्कारप्रसक्तौ पुनर्वसाविति तदर्थः । न च विप्रः कृत इत्यस्य पूर्वार्द्धस्य चानन्वयापत्तिः । चन्द्रताराद्यानुकूल्येऽपि संस्कृतो विप्रः पुनर्वसौ पुनः संस्कारमर्हतीति तदर्थात् । कष्टान्वयादेश्चादूषणत्वादित्याहुः ।

अन्ये तूक्तवचनस्य समूलत्वे पुनर्वसौ दाक्षिणात्यानामुपनयनाचारात्प्राच्यानां चानाचारात् देशाचारतो व्यवस्था । "स्मृतिद्वैधे तु विषयः कल्पनीयः पृथक् पृथक् ।" इति न्यायात् ।

"देशाचारस्तावदादौ विचिन्त्यो देशे देशे या स्थितिः सैव कार्या ।
"लोके दुष्टं पण्डिता वर्जयन्ति दैवज्ञोऽतो लोकमार्गेण यायात् ॥" इति वचनाच्चेत्याहुः ।

अपरे तु उक्तनिषेधस्य विप्रपरत्वे पूर्वोक्तदोषादविप्रपरत्वमाहुः । इत्थं च क्षत्रियविशोर्द्वाविंशतौ ब्राह्मणानां षोडशसु भेषु वेदपरवचनैर्यथायथमुपनयनम् । इदं च सर्वं वचनप्रामाण्येऽन्यथा तु न चाशङ्का न चोत्तरमिति दिक् इत्यन्ये ज्योतिर्विद आहुः । **राजमार्तण्ड**कृतोपनयनप्रकरणे विप्रस्य पुनर्वसुनिषेध उक्तः 'चन्द्रतारानुकूलेष्विति' । तत्र केचिदेतद्वचनस्यान्यथाऽर्थं कुर्वन्ति, 'पुनःसंस्कारे प्राप्ते पुनर्वसुनक्षत्रं प्रशस्तमिति' । एवं चेत्पूर्वार्धमन्वितं स्यादिति विप्रस्यैवायं निषेधो नेतरेषामिति निर्णीतमन्यैः, तदयुक्तं, यत आब्रह्मादिविनिःसृतग्रन्थविस्तरदृशां त्रिस्कन्धज्योतिःशास्त्रन्यायादिशास्त्रविदां

**श्रीवराहमिहिराचार्या**दीनां **हेमाद्या**दिनिबन्धकाराणां च ग्रन्थेषु आर्षग्रन्थेष्वपि पुनर्वसुनिषेधो न दृश्यते । तथा च **गुरुः**, 'त्रिपूत्तरेष्वि'त्यादि 'द्विजातेरुपनायनमि'त्यन्तम् ।'

**वसिष्ठोपि**, 'उत्तरासु०भानि त्विति ।'

**नारदोऽपि**, 'श्रेष्ठान्यर्कं० भान्युपनायने' इति । अन्यान्यप्यार्षवाक्यानि विप्रादेरुपनयने बोध्यानि । तथा **मानुषग्रन्थे**ष्वपि । तत्र तावत्सांवत्सराचार्यैः **श्रीगणेशदैवज्ञैः** स्वकृतग्रन्थे **मुहूर्ततत्त्वाख्ये** वेदशाखापरत्वेनोपनयने लिखितानि नक्षत्राणि,

"ऋग्वित्सहीशपूर्वैर्विवरुणचरभक्षिप्रमैत्रैर्यजुर्वित् ।
"ध्रौवाढ्यैस्तैर्विमित्राब्जजनिभिरपरो ऽन्त्यस्तु तैर्व्युत्तरैश्च ॥
स्वालाभेऽग्नीन्द्रराधाऽम्बुपयमपितृतोऽन्येषु सर्वे ।" इति ।

एवं चैतेषु सकलग्रन्थेषु तन्निषेधाभावात् पूर्वोक्ततद्वचनस्य मूलं मृग्यम् । न हि तदनुरोधेनानेकस्मृतिवाक्यानामपलापः कर्तुमुचितः । नापि क्षत्रियपरता तेषां सुवचा । ब्राह्मणस्योपनायनमित्येवं वाक्यानामपि सत्त्वात् । ग्रन्थान्तरे चतुर्थचरणे तथा पाठस्यापि दर्शनाच्च । एवं सति तन्निषेधवाक्यं दत्तजलाञ्जलिरेव स्यात् । नन्वेवं **दीपिका**कारेणान्यैरपि आधुनिकग्रन्थकारैः कथं तन्निषेधो लिखित इति चेन्न । तद्वचनविश्वासेनैवोपनयनप्रकरणे त्याज्यपदार्थेष्वदितेरपि प्रक्षेपस्यान्धपरम्परान्यायेन तैः करणात् । किञ्चोपनयने पुनर्वसुऋक्षस्य फलाधिक्यमपि स्मर्यते ।

तथा च **नारदः**,

"शुभांशकगते चन्द्रे व्रती विद्याविशारदः । पापांशगे स्वांशगे वा दरिद्रो नित्यदुःखितः ॥
"आदितिनक्षत्रे कर्कांशस्थे निशाकरे । तदा व्रती वेदशास्त्रधनधान्यसमृद्धिमान् ॥" इति ।

न च सकलवचनानुरोधेन ग्रहाब्देष्वशुभेष्वपीति पाठान्तरं कल्प्यम्; तथा सति उपनयनसंस्कारानन्तरं पुनःसंस्कारं नामान्यसंस्कारं पुनर्यज्ञादिरूपसंस्कारमर्हति लभते इत्यर्थ इति वाच्यम् । ज्योतिःशास्त्रे पाठान्तरकल्पनेनार्थान्तरकल्पनस्यान्याय्यत्वात् । तथा चोक्तम्, **वराहमिहिराचार्यैः**,

"ज्योतिषमागमसिद्धं विप्रतिपत्तौ न योग्यमस्माकम् । स्वयमेव विकल्पयितुं किन्तु बहूनां मतं वक्ष्ये ॥" इति ।

तस्मात्प्राचीनपाठस्य यथाकथञ्चिद्गतिश्चिन्त्या स्वयं नान्यथयितव्यम् । सा चेत्थं, देशाचारतो व्यवस्थेति । अयमेव समीचीनः पन्थास्तदयमत्र तात्पर्यार्थः । यैस्तन्निषेधवचनं परिपाल्यते प्राच्यैस्तैरेव स्वदेशे तदृक्षं तत्र त्याज्यम् । अन्यैस्तु वेदशास्त्रधनधान्यसमृद्धिमिच्छद्भिरवश्यमादरणीयमिति । तथा चोक्तं **श्रीपतिदैवज्ञैः**,

"शास्त्रस्वरूपं बहवोऽपि बुध्वा वदन्ति यच्चानुमतं हितं नः ।
"देशं गतौऽप्येकविलोचनानां निमील्य नेत्रं निवसेन्मनीषी ॥"

इत्यलमिति **विठ्ठल**ज्योतिर्वित्प्रभृतय आहुः ।

# अथोपनयने नक्षत्रनिर्णयः ।

तत्र 'मूले हस्तत्रये व्रतार्पणे' इति **कल्याणकल्पद्रुमाख्य**ज्योतिर्निबन्धे **ज्योतिःसागरस्थ**त्वेनोदाहृतानि अन्यानि च ऋग्वित्साहीशव्युत्तरैश्चेत्यादीनि **मुहूर्ततत्त्वा**दिसंगृहीतानि वचनान्यालोच्य रचितोऽयं संग्रहः ।

"क्षिप्रध्रुवाहिचरमूलमृदुत्रिपूर्वारौद्रेऽर्कविद्गुरुसितेन्दुदिने व्रतं सत् ।" इति ।

अस्य च क्षिप्रेषु हस्ताश्विपुष्येषु ध्रुवेषु रोहिण्युत्तरोत्तराषाढोत्तरभाद्रपदाभिधेषु अहावाश्लेषायां चरेषु श्रवणधनिष्ठाशततारापुनर्वसुस्वात्यभिधेषु मूले मृदुषु मृगरेवतीचित्रानुराधासु त्रिपूर्वासु पूर्वापूर्वाषाढापूर्वाभाद्रपदाभिधेषु रौद्रे आर्द्रायां च व्रतं सत् शुभमित्यर्थः । न चोदाहृतेषु **ज्योतिःसागरस्थ**वचनेषु शतभिषजोऽनुपलब्धे **मुहूर्ततत्त्वसंग्रहे** विवरणोति पर्युदासाच्च कथमत्र तत्संग्रह इति वाच्यम् । अव्यवधानेनोदाहरिष्यमाणेषु 'हस्तत्रये च श्रवणत्रये चे'त्यादिषु **वासिष्ठा**दिवचनेषु तत्संग्रहात् । **मुहूर्ततत्त्वीय**निषेधस्य ऋग्वेदिमात्रपरत्वादस्य च संग्रहस्य साधारणत्वात् । न च तथापि **श्रीपतिराजमार्तण्डादिभिः** 'अश्विनीमृगचित्रासु हस्ते स्वातौ च शाक्रभे ।' इत्यादिना

'हस्तत्रये दैत्यरिपुत्रये च शाक्रेन्दुपुष्याश्विनरेवतीषु' । इत्यादिना च शाक्रस्य ज्येष्ठाभिधस्यापि सङ्ग्रहादिह न्यूनता शङ्क्या । संहिताम्बदर्शनेन सन्दिग्धमूलतया **मुहूर्ततत्त्वाद्य**सङ्गृहीततया च न्यूनताशङ्कानुपपत्तेः । उक्तं च,

"प्राज्यापत्यादिषट्कर्क्षे भगर्क्षादिषु पञ्चसु । मूलादिदशके चैव सर्वत्र व्रतबन्धनम् " ॥ इति ।

तथा च सिद्धं द्वाविंशतिभेषु ऋग्वेदाद्यध्यायिनां वेदपरवचनैर्यथायथं मुख्य उपनय इति । अत्र ब्राह्मणानां नियममाह,

**वसिष्ठः** । 'हस्तत्रये० भानि त्विति' ।

**कश्यपोऽपि**, 'मैत्रे विष्णुत्रये उपनयनमिति' । **जगन्मोहने गुरुरपि**, 'त्रिपूत्तरेषु औपनायनमिति' । **नारदोऽपि** 'श्रेष्ठान्यर्क० न्युपनायने' इति ।

**अन्यत्रापि,**

"हस्तत्रयश्रवणसार्पशिवर्क्षपूर्वामूलेषु बह्वृचवटूपनयः प्रशस्तः ।

"पुष्यादितिद्रुहिणपौष्णशशाङ्कसूर्यमैत्रोत्तरासु यजुषां रशनानिबन्धः ॥

"पुष्योत्तराश्विशिववासवकर्णहस्तैर्विद्यार्थिनो व्रतविधिः खलु सामगानाम् ।

"मृगाश्विमैत्रादितिवासवेषु करे शुभेऽथर्वविदां प्रदिष्टः " ॥ इति ।

अत्र च **वासिष्ठे** द्विजग्रहणात् **गुरुवाक्ये च** द्विजानामन्यवर्जनात् **नारदेन** चोक्तानां श्रेष्ठत्वोक्तेरितरेषां निन्दावगमात्तदाक्षिप्तेन **गुरुवाक्यै**कवाक्यतां भजता निषेधेन विप्रोपनयने स्पष्ट एव षोडशर्क्षनियमः । परन्तु तत्रोत्तममध्यमत्वोक्तेस्तारतम्यमवधेयम् । यत्तु **वासिष्ठे** द्विजपदस्य त्रैवर्णिकसामान्यार्थत्वेन **वासिष्ठस्य** प्राशस्त्यपरत्वं वचनान्तरेण तु तेष्वपि तारतम्यमित्याहुः तन्न । **गुरु**-

वाक्यस्थनिषेधस्य त्रैवर्णिकपरत्वेऽवशिष्टपक्षानां निर्विषयत्वस्य वैकल्पिकत्वस्य वा प्रसङ्गात्। तदेकवाक्यतया **वसिष्ठ**वाक्यस्थद्विजपदस्य ब्राह्मणार्थत्वावधारणात्। तस्मादुक्त एवार्थो वाक्यानामिति सिद्धम्। अत्र विप्रोपनयने पुनर्वसुनिषेधो **राजमार्तण्डे** 'चन्द्रतारानुकूल्येऽपीति'। नुकूलेष्विति पाठान्तरम्। अन्यत्रापि, 'त्र्यहःस्पृशि मले' इति। इदं वाक्यद्वयं संहिताग्रन्थेष्वदर्शनान्नाद्रियन्ते ज्योतिर्विदः। आचरन्ति च पुनर्वस्वोरुपनयनम्। समूलत्वं तु उदाहृतेषु वेदविशेषपरवाक्येषु येषां पुनर्वस्वोरनभिधानं तत्परोऽयं निषेधः।

केचित्तु यदि संस्कृतो विप्रः पुनः संस्कारमर्हति 'तदाः पुनर्वसाविति' वदन्ति। नायं निषेधोऽपि तु 'चतुष्कपाल'वन्नैमित्तिकः पुनः संस्कारविधिरित्यप्याहुः। इत्थं च क्षत्रियविशोर्द्वाविंशतिभेषु यथायथं व्यवस्था, ब्राह्मणानां तु षोडशसु ऋक्सामाध्यायिब्राह्मणानां पुनर्वसुनिषेधो नैमित्तिकविधानं वा वचनप्रामाण्येऽन्यथा तु न चाशङ्का न चोत्तरमिति दिगित्यपरे ज्योतिर्विद आहुः।

## अथ धर्मशास्त्रज्ञाभिमतमुच्यते।

तत्र केचित्। **गुर्वा**दिवाक्येनाविशेषेण ऋग्वेदादिवेदविद्ब्राह्मणमात्रस्य पुनर्वस्वोरुपनयनप्राप्तौ विशेषतो वेदभेदात् व्यवस्थोक्ता **ज्योतिर्निबन्धे**। 'मूले हस्तत्रये व्रतार्पणे' इति। अतश्च यजुरथर्ववेदिविप्रविशेषविषयत्वेन पुनर्वसुव्यवस्थायां **राजमार्तण्डीयं** चन्द्रतारेति। तन्निषेधवाक्यम् ऋक्सामवेदिविप्रगोचरमिति न कोऽपि विरोधः। वस्तुतस्त्वेतत्तत्र प्राच्यानामुपनयनाचरणाचारनिबन्धनमित्यलमिति धर्मशास्त्रज्ञा आहुः।

## अथोपनयने नक्षत्राणि।

**हेमाद्रौ स्मृतिचन्द्रिकायां** च ज्योतिःशास्त्रे,

"हस्तत्रये पुष्यधनिष्ठयोश्च पौष्णाश्विसौम्यादितिविष्णुभेषु।
"शस्ते तिथौ चन्द्रबलेन युक्ते कार्यो द्विजानां व्रतबन्धमोक्षौ"॥

पौष्णं रेवती। सौम्यं मृगः। अदितिभं पुनर्वसुः। अत्र द्वयोपादानं व्रतविसर्गसाधारण्यात्।
**नारदस्तु** व्रतमात्रे उत्तरात्रयं शततारकानुराधारोहिणीत्यन्यान्यपि षडाह,

"श्रेष्ठान्यर्कत्रयान्त्येज्यचन्द्रादित्युत्तरास्तथा। विष्णुत्रयाश्विमित्राब्जयोनिभान्युपनायने"॥

**वसिष्ठो**ऽप्येतान्येव षोडशाह,

"हस्तत्रये च श्रवणत्रये च धातृद्वये त्र्युत्तरमैत्रभेषु।

"पौष्णद्वये चादितिभद्वये च शस्तं द्विजानां खलु मौञ्जिकर्म"॥

**कश्यपो**ऽप्येतान्येव षोडशाह,

"मैत्रे विष्णुत्रये हस्तत्रयर्क्षेषूत्तरात्रये। धातृद्वयादितीज्यान्त्यदस्रभेषूपनायनम्"॥

**प्रयोगपारिजाते** उत्तममध्यमवर्ज्यभेदेन त्रैविध्यमुक्तम्।

**बृहस्पतिः,**

"त्रिषूत्तरेषु रोहिण्यां हस्ते मैत्रे च वासवे । त्वाष्ट्रे सौम्ये पुनर्वस्वोः प्रशस्तं ह्यौपनायनम्" ॥

मैत्रमनुराधा । वासवं धनिष्ठा । त्वाष्ट्रं चित्रा । सौम्यं मृगः । एवं दशोत्तमानि । मध्यमानि सप्त ।

"वारुणे वैष्णवे पुष्ये वायव्ये प्रौष्ठपद्यपि । आश्विने षट्सु भेषूक्तं मध्यमं चैव पौष्णभे" ॥

वारुणं शतभिषक् । वायव्यं स्वाती । प्रौष्ठपदुत्तराभाद्रपदा । वर्ज्यानि दशाह **गुरुः,**

"कृत्तिकाभरणीमूलज्येष्ठार्द्रासु विशाखयोः । पूर्वात्रये च सार्पर्क्षे न कुर्यादौपनायनम्" ॥

विशाखयोरिति द्विवचनं ताराद्वित्वात्, नोत्तरनक्षत्रं गृहीत्वा अनुराधायाः सर्वैर्विधानेनोत्तमत्वात् ।

**अन्यच्च,**

"मघा च भरणी ज्येष्ठा विशाखा चैव कृत्तिका । नक्षत्रपञ्चकं प्राज्ञैर्न ग्राह्यं व्रतबन्धने" ॥ इति

**नृसिंहस्तु** व्यवस्थामाह,

"रौद्रे शैवद्विजः कुर्याद्विष्णवे वैष्णवस्तथा । वासवर्क्षे सवर्णाश्च वारुणे कुण्डगोलकौ ॥"

रौद्रमार्द्रा । वासवं धनिष्ठा । वारुणं शतभिषक् । सवर्णमात्रस्य वासवोक्तेः कुण्डगोलकोक्त्या सर्वेऽप्यसवर्णा उपलक्ष्यन्ते ।

**ज्योतिर्निबन्धे** तु वेदभेदाद्व्यवस्थोक्ता,

"मूले हस्तत्रये सार्पे शैवे पूर्वात्रये तथा । ऋग्वेदाध्यायिनां कार्यं मेखलाबन्धनं बुधैः ॥

"पुष्ये पुनर्वसौ पौष्णं हस्ते मैत्रे शशाङ्कभे । ध्रुवभेषु च शस्तं स्याद्यजुषां मौञ्जिबन्धनम् ॥

"पुष्यवासवहस्ताश्विशिवकर्णोत्तरात्रयम् । प्रशस्तं मेखलाबन्धे बटूनां सामगायिनाम् ॥

"मृगमैत्राश्विनीहस्तरेवत्यदितिवासवम् । अथर्ववेदिनां शस्तो भगणोऽयं व्रतार्पणे" ॥

ध्रुवाणि चत्वारि रोहिण्युत्तरात्रयं च ।

**अन्यत्र,** "रुद्राहिमूलहरिपूर्वकरात्रिकेषु ध्रौवादितीज्यकरमित्रमृगान्त्यभेषु" ।

ऋग्विन्मुखा इत्यादिवेदपरत्वेन नक्षत्राण्युक्त्वा,

"मिश्रेन्द्रवारुणमवायमभान्यभेषु स्वासम्भवे तु सकला व्रतमाचरेयुः" ॥ इति ।

ब्राह्मणस्य पुनर्वसुनिषेधमाह—**राजमार्तण्डः,**

"चन्द्रतारानुकूलेषु ग्रहाब्देषु शुभेष्वपि । पुनर्वसौ कृतो विप्रः पुनःसंस्कारमर्हति ॥

विप्रः कृतः, उपनीत इत्यर्थः । केचित्पुनःसंस्कारं पुनरुपनयनं विप्रस्य पुनर्वसावित्यर्थो न त्वयं पुनर्वसुनिषेध इत्याहुः । तच्चिन्त्यम् । कृतपदानन्वयात् । आद्यपद्ये पूर्वार्द्धानन्वयाच्च ।

**दीपिकायां च,**

"जीवार्केन्दूडुशुद्धौ हरिशयनबहिर्भास्करे चोत्तरस्थे

"स्वाध्याये वेदवर्णाधिप इह शुभदे क्षौरभे नादितौ च" । इति

अदितौ पुनर्वसौ नेत्येवं पुनर्वसुनिषेधाच्च । स तु विप्रविषय उपसंहृतः पूर्वश्लोकाभ्याम् । अयं चाचारः प्राच्यानां न दाक्षिणात्यानाम् ।

उक्तं च **वराहेण,**

"देशाचारस्तावदादौ विचिन्त्यो देशे देशे या स्थितिः सैव कार्या ।

"लोके दुष्टं पण्डिता वर्जयन्ति दैवज्ञोऽतो लोकमार्गेण यायात् " ॥ इति

मीमांसक**शङ्करभट्टाः** स्वकृते **धर्मप्रकाशे** उपनयने नक्षत्रनिर्णयमाहुः ।

"नानावचांसि साधूनामसाधूनां विचिन्वताम् । पुनर्वसूपनयनसंशयच्छेदिलेखनम् " ॥

"हस्तत्रये च० मौञ्जिकर्म" इत्यादि**वासिष्ठ**वचःसु सर्वेषु आदित्यनक्षत्रविधानमिष्टम् । **श्रीराजमार्तण्ड**निबन्धवाक्यात्पुनर्वसोश्च निषेध इष्टः । 'चन्द्रतारा० मर्हति' ।

"केचिद्विधिनिषेधाभ्यामत्रेच्छन्ति विकल्पनम् । युक्तं न तद्वस्तुनि नो भवेद्रूपविभेदनम् ॥

"अन्य आहुर्विभिन्नासु शाखास्वृक्षविधानतः । तच्छाखीयपुमर्थत्वं यच्छाखायां विधिर्भवेत् ॥

"स्मृतीनामव्यवस्थानान्न युक्तमिदमप्यतः । आचारतो व्यवस्था स्यादित्याहुरपरे बुधाः ॥

"प्राच्यानामननुष्ठानादनुष्ठानात्पुनर्वसौ । सर्वेषां दाक्षिणात्यानां व्यवस्थाऽऽचारतो ह्यतः ॥

"परे पुनः पदच्छेदे वसाविति च देवता । प्रोच्यते वासवं तेन धनिष्ठाया निषेधनम् ॥

"पुनःसंस्कारकरणे कालो ह्येष विधीयते । न निषेधोऽयमित्याहुरपरे धर्मवेदिनः ॥

"एतन्न युक्तं योगाद्धि रूढिरेव बलीयसी । आचारोऽपि च निर्मूलो न प्रमाणमिहेष्यते ॥

"पदस्य कृत इत्यस्य सम्बन्धो न तथा भवेत् । अतो व्यवस्था कल्प्या स्यादितद्विधिनिषेधयोः ॥

"किमत्र कल्पनीयं हि कल्पना ज्योतिर्निबन्धके । वेदभेदाद् व्यवस्थोक्ता तद्वाक्येषु स्फुटा यथा ॥"

**मूले** 'हस्तत्रये०व्रतार्पणे' ।

"ज्योतिःशास्त्रव्यवस्थेयं ज्योतिःशास्त्रेण वै भवेत् । काम्याभ्युदयकारित्वात् दृष्टार्थत्वात् द्वयोरपि॥"

"इत्यादिवाक्येषु हि वेदभेदात् स्पष्टं व्यवस्थाकथनं वृथैव ।

"मोहो न कार्यः खलु यौक्तिकोऽत्र शङ्काः कुतर्कैर्बहुशः क्रियन्ते ॥" इति **गागाभट्टा** आहुः । पुनर्वस्वोर्ब्राह्मणस्योपनयनं भवति न वेति प्रश्ने 'वचनाद्भवतीत्युत्तरम् ।'

तथा च **वसिष्ठः,** 'हस्तत्रये च विधाविति ।'

एवं **गुरुकश्यपनारदा**दिवाक्यान्यपि पुनर्वसुप्रापकाणि द्रष्टव्यानि । ननु विप्रविषयकतन्निषेधस्य चन्द्रेत्यादि**राजमार्तण्ड**वाक्यस्य का गतिरिति चेत्, न काऽपि । तस्य **ज्योतिर्निबन्ध**धर्मशास्त्रसंहितादिग्रन्थेषु मूलादर्शनेन निर्मूलत्वादिति बहवः । समूलत्वे तु **वसिष्ठा**दिभिः सामान्यतो द्विजपुरस्कारेण विहितस्य विप्रविषयकविशेषवचनेनाहवनीयस्य पदेनेव बाधाद्विप्रस्य तत्र तत्र भवत्येवेति केचिदूचुः ।

अन्ये तु दाक्षिणात्यानां तत्र तदाचरणदर्शनात्प्राच्यानां च तददर्शनाद्देशाचारतो व्यवस्था यद्यपि सा होलाकाधिकरणविरुद्धा तथाऽपि सर्वनिबन्धृभिर्बहुषु स्थलेषु तथोक्तेरत्रापि तथेत्याहुः ।

परे तु विप्रं प्रत्यपि सामान्यवचनेन तद्प्राप्तौ तत्सापेक्षस्य निषेधस्यात्मलाभायोगात्तत्प्राप्तस्य चोपजीव्यत्वेन सर्वथा बाधायोगादगत्या "न तौ पशौ करोति" इतिवत् विकल्प एवेति तस्यापि तत्र तद्भवत्येव पक्षे । पाक्षिकत्वेऽपि ग्रहणाग्रहणवदभ्युपगमपक्ष एव श्रेयानिति वदन्ति ।

अपरे तु द्विजसामान्यतो विहितानां भानां यजुर्वेदिप्रभृतिविशेषविहितैस्तैश्चतुर्द्धाकिरणन्यायेनोपसंहारात् तत्र चादित्यस्यापि विधानेन तन्निषेधस्तद्भिन्नविषय इति जगदुः । इतरे तु

'हस्तत्रये धातृषट्सु ब्राह्मणस्योपनायनम् ।'

इति **मुहूर्तमाला**वचनविरोधपरिहाराय 'पुनर्वसौ कृतो विप्र 'इत्यत्राविप्र इत्यकारप्रश्लेषेण विप्रभिन्नविषयता तस्येत्यभिदधाति । 'पुनर्वसौ कृतो विप्र' इति पुनःसंस्कारविधानद्वारको न निषेधः किन्तु

"अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेष्वपि । तीर्थयात्रां विना गच्छन् पुनःसंस्कारमर्हति ॥"

इत्यादिभिर्यत्र पुनरुपनयनप्राप्तिस्तत्र तदनुवादेन विप्रस्य पुनर्वसुविधिरित्युच्यते । वयं तु विप्रस्यादित्यविधायकेन **मुहूर्तमाला**वचनेन विरोधपरिहाराय **राजमार्तण्ड**वचनं नक्षत्रान्तरनिषेधकत्वेनैवं व्याख्येयम् । तथाहि प्रथमः पुनःशब्दोऽव्ययानामनेकार्थत्वादप्यर्थः कृत इत्यनन्तरं योज्यः । तथा च चन्द्राद्यानुकूल्येऽपि वसौ वसुदेवत्ये धनिष्ठानक्षत्रे संस्कृतोऽपि पुनः संस्कारमर्हतीति वचोभङ्ग्या वसुदेवत्यं नक्षत्रमेवात्र निषिध्यते न पुनर्वसुनक्षत्रमिति तत्रोपनयने तस्य न कोऽपि दोषलेशावकाश इति । अथवा **वसिष्ठा**दिवचननिचयाविरोधाय **राजमार्तण्डीय**मपि पुनर्वसुविधायकतयैवं व्याख्येयम् । तथा हि पुनःसंस्कार इत्ययं पुनःशब्दस्त्वर्थो विशेषद्योतकः पुनर्वसावित्यनेनान्वेति । 'चन्द्रतारानुकूलेऽपी'त्यपिना तदनानुकूल्येऽपि 'ग्रहाब्देषु शुभेष्वपी'त्यपिना अशुभेष्वपि पुनर्वसौ विशेषतो विप्रः संस्कारमर्हतीति निश्चयः कृत इति । तथा चान्यनक्षत्रेषु चन्द्राद्यानुकूल्यं नियतं पुनर्वसौ तु नेति पुनर्वसोरुत्तमत्वद्योतकमिति न विरोध इति न चाशङ्का। न चोत्तरमिति दिगिति **भैयाभट्टा** आहुः।

पुनर्वसुनक्षत्रे विप्रोपनयनं कार्यं न कार्यमिति विरुद्धशास्त्रदर्शनप्रयुक्तसंशयनिवृत्त्यै लिख्यतेऽदः। विधिस्तावदवादि **वसिष्ठेन,**

"उत्तरासु तिसृषूपनायनं हस्तमैत्रमृगरोहिणीष्वपि । त्वाष्ट्रपूषभपुनर्वसुष्वपि श्रेष्ठमप्यशुभभागगे विधौ॥ " इति

एवं **बृहस्पत्या**दिवचांस्यप्यनुसन्धेयानि । निषेधो द्योतितो **राजमार्तण्डेन,**

"चन्द्रतारानुकूलेषु ग्रहाब्देषु शुभेष्वपि । पुनर्वसौ कृतो विप्रः पुनःसंस्कारमर्हति ॥ " इति ।

अत्र प्रायश्चित्तविधानान्निषेधो द्योत्यत इति विरोधप्रतिभासः । तत्र सामान्यशास्त्रसहकृतदाक्षिणात्याचारविरोधान्निर्मूलमेव निषेधशास्त्रमिति दैवज्ञाः । तन्न । वक्ष्यमाणरीत्या निषेधद्योतकत्वाभावेन विरोधाभावात् ।

अन्ये तु प्राच्याचारवशेन प्राच्यविषयं निषेधशास्त्रमिति । तदप्यसत् । होलाकाधिकरणविरोधात् । उक्तहेतोश्च । भवतु तर्हि निषेधे विप्रग्रहणाद्विधिः क्षत्रियादिविषय इति चेत् न । संस्कृतो वेदमधीयीतेति वचसीव संस्कृतार्थकृतपदगतभूतार्थकनिष्ठाप्रत्ययेन प्राप्तसंस्कारस्यैवाभिधाने निषिद्धनक्षत्रसंस्कारलाभासम्भवेन निषेधानुमानासम्भवात् । प्रत्युत विधेरेवानुमानसम्भवात् । एतेन

"मूले हस्तत्रये सार्पे शैवे पूर्वात्रये तथा । ऋग्वेदाध्यायिनां कार्यं मेखलाबन्धनं बुधैः ॥
"पुष्ये पुनर्वसौ पौष्णे हस्ते मैत्रे शशाङ्कभे । ध्रुवेषु च प्रशस्तं स्याद्यजुषां मौञ्जिबन्धनम् ॥
"पुष्यवासवहस्ताश्विशिवकर्णोत्तरात्रयम् । प्रशस्तं मेखलाबन्धे बह्वृनां सामगायिनाम् ॥
"मृगमैत्राश्विनीहस्तं रेवत्यदितिवासवम् । अथर्ववेदिनां शस्तो भगणोऽयं व्रतार्पणे ॥ "

इति **ज्योतिर्निबन्धो**दाहृतवचोभिर्व्यवस्थाबोधनान्निषेधशास्त्रमृग्वेदिसामवेदिविप्रविषयमिति मतमप्यपास्तम् । निषेधस्यैवाभावात् । सकलज्योतिर्वित्सम्मतेन सर्ववेदाध्यायिनामुपनयनस्य पुनर्वस्वोराचारेण विरोधाच्च । वृधन्वतीभ्यां पूर्णमासावयवस्यैव पुनर्वस्वादिषु येषु भेषु येषामेवोपनयनसंस्कारलाभस्तावत्स्वपि भेषु कृतोपनयनानां तेषां न्यायादेव पुनःसंस्कारे प्राप्ते ब्राह्मणस्यैव पुनर्वस्वोरेव विशिष्य पुनःसंस्कारशास्त्रस्य निस्तात्पर्यकत्वापत्तेश्च । व्यवस्थावादिवक्तव्याया 'यत्पुनर्वस्वोरुपनयनं कुर्वीत तद्यजुर्वेदिनामेवेति. वचनव्यक्तेः श्लोकचतुष्टयपठितहस्तादिष्वसम्भवेन तत्सहपठितपुनर्वस्वोरप्यसम्भवाच्च । मूलश्रुतिषु भिन्नास्वपि प्रायपाठानुरोधेनैकरूपवचनव्यक्तेरेवौचित्यात् । एवं सामान्यविधिप्राप्तं पुनर्वसुऋक्षं यजुरथर्वाध्यायिषु विशेषशास्त्रेणोपसंह्रियत इत्यप्ययुक्तम् । सामान्यशास्त्रस्य विशेषतात्पर्यनिर्णयो ह्युपसंहारः । न च स प्रकृते सम्भवति । पुरोडाशं चतुर्धा करोतीति सामान्यशास्त्रगतपुरोडाशस्याग्नेयपरत्ववत् **वासिष्ठ**सामान्यवाक्यगतोपनयनशब्दस्य यजुरथर्वाध्यायितत्परत्वे पुनर्वस्वोरिव हस्तादिष्वपि तद्भिन्नानामुपनयनासम्भवस्वीकारे तेषु तेषां तद्विध्यनुपपत्तेः । तत्सम्भवस्वीकारे उपसंहार्यविधौ हस्तादिपाठस्य निस्तात्पर्यकत्वापत्तेः । भवतु तर्हि यः संस्कृतः पुनः संस्कारमर्हति स पुनर्वसाविति वचनव्यक्त्याश्रयणेन पुनःसंस्कारे पुनर्वसुनियमः । अस्ति च तत्प्राप्तिरकालोपनीतस्य "विनर्तुना वसन्तेन" इत्यादिशास्त्रात् । अस्ति चान्यस्यापि, " मृतशय्याप्रतिग्राही पुनःसंस्कारमर्हति । " इत्यादिशास्त्रात् । तथा प्रत्यन्तदेशगमनादिनिमित्तिकेति चेत् न । आद्यविषये संस्कारोत्पत्त्यभावेन संस्कृतपुनःसंस्कारानुवादानुपपत्तेः । द्वितीयेऽपि प्रतिग्रहादिना पूर्वसंस्कारनाशे सति तदनुवादासम्भवात् । संस्कृतः सन् यः पुनः संस्कारमर्हतीति हि पूर्वसंस्कारविशिष्टस्यैव पुनःसंस्कारान्वयः प्रतीयते । विशेषणत्वे सम्भवत्युपलक्षणत्वस्यान्याय्यत्वात् । भवतु तर्हि प्रथमपुनःशब्दमप्यर्थमङ्गीकृत्य वसौ धनिष्ठानक्षत्रे संस्कृतोऽपि पुनः संस्कारमर्हतीति वचनव्यक्त्याश्रयणेन धनिष्ठानिषेधपरत्वमिति चेत् न । पुनर्वसुशब्दगतरूढिबाधपुनःपदगताप्रसिद्धार्थकल्पनव्यवहितान्वयधनिष्ठाविधायकशास्त्रान्तरविरोधेभ्यः । भवतु तर्हि पूर्वार्धगतमपिशब्दमनुक्तसंग्रहार्थं स्वीकृत्योत्तरार्द्धगतं द्वितीयपुनःशब्दं विशेषद्योतकं त्वर्थमङ्गीकृत्येदृशवाक्यार्थः—चन्द्रादिष्वनुकूलेष्वपि ग्रहादिष्वशुभेष्वपि पुनर्वसौ विशेषतो विप्रः संस्कारमर्हतीति—पुनर्वसोरुत्तमत्वद्योतकमेतदिति चेत् न । पुनर्वसुगतविप्रसंस्कारानुवादेनानुकूलाशुभात्मकानेककालविधौ विशिष्टानुवादद्वैविध्याद्विधेयभूयस्त्वाच्च बहुतरदुष्परिहरवाक्यभेदापत्तेः । कृत इति पदस्याजागलस्तनायमानत्वापत्तेश्च । का तर्हि समूलत्वेन स्वीकृतस्य वचसोऽस्य गतिरिति चेत्, कृतैकवेदाध्ययनस्य पुंसोऽपरवेदाध्ययनाङ्गत्वेन विहितपुनःसंस्कारे पुनर्वसुनियामकत्वमिति गृहाण ।

उक्तं **आश्वलायनगृह्यकारिकायामी**दृशः पुनः संस्कारः,

"वेदान्तरमधीत्येममृग्वेदं ये त्वधीयते । उपनीतिरियं तेषामलङ्करणवर्जिता ॥ " इति ।

**जयन्तेनापि**, ' यजुर्वेदं चाधीत्य ऋग्वेदमध्येतुकामस्यैतदेवोपनयनमलङ्कारवर्जं भवतीति । ' अस्ति चात्र पुनःसंस्कारे पूर्वसंस्कारविशिष्टानुवादनिमित्तो वाक्यभेदः । विशेषणानां विलक्षणसंस्कारो-

द्देश्यतापरिच्चायकत्वात् । य इष्ट्या पशुना इति वचने इष्ट्यादिपदवत् । प्रायश्चित्तार्थं पुनः संस्कारादत्र फलवैलक्षण्येनेतिकर्तव्यतावैलक्षण्येन प्रकरणान्तरवशेन चापूर्ववैजात्ये विवादाभावात् । लभ्यते चैवं सति नियमविधित्वं लघीयः । निषेधोन्नयने त्वपूर्वविधित्वेन गौरवमापद्येत । दृश्यते च प्रथमवत्सरगतार्त्यादिनिमित्तके ईदृशे एवाग्निपुनःसंस्कारे पुनर्वसुनियमो **बौधायना**द्युक्तः । यत्तु सामान्यप्राप्तस्यापि पुनर्वसोर्यजुर्वेद्यादीन् प्रति पुनर्वचनं तत्सहपठितहस्तादिभान्तरवत्प्राशस्त्यातिशयाभिप्रायमिति सर्वमनवद्यमित्य**नन्तदेवा** आहुः ॥ १४ ॥

## याज्ञवल्कीये १५ श्लोकः

**एनमिति** यथाकथञ्चिद्विधिनानुबोधनसत्त्वेनान्वादेशसत्त्वादेनादेशः । अन्यथोपनीतस्य दोषश्रवणादाह । **स्वेति** । अस्य कर्माकाङ्क्षायामग्रे मध्यमणिन्यायेनान्वयसम्भवादेवाह । **शिष्यमिति** । भूः भुवः सुवः महः जनः तपः सत्यमिति सप्त । **गौतमेति** ' ॐपूर्वा व्याहृतयः पञ्च सत्यान्ता ' इति तेनोक्तत्वात् ( अ. १ सू. ५२ ) । ' भूः भुवः स्वः पुरुषः सत्यमिति पञ्चेति ' **हरदत्तः** । चार्थमाह । **किञ्चेति** । आचारान्वक्ष्येति निश्चःपाठस्तस्योक्तत्वात् । कञ्चिद्विशेषं वक्तुमुक्तमेवाह । **उपेति त्वान्तेन** । कामेत्युपलक्षणमन्येषामपि । तथा चोच्छिष्टादौ ते अप्रयता न भवन्तीति भावः । तथा च **गौतमः**, ( अ. २ सू. १ )

'प्रागुपनयनात्कामचारवादभक्ष ' इति ।

'कामचारं इच्छागतिः । कामवादोऽश्लीलादिभाषणम् । कामभक्षः पर्युषितादिभक्षणं लशुनादिभक्षणञ्चेति ' **हरदत्तः** ।

विशेषमेवाह । **वर्णेति** । ब्राह्मणत्वादेस्तदानीमपि सत्त्वात् । अत एवेदं महापातकवर्जमिति **स्मृत्यर्थसारे** । **स्मर्यते च**,

'स्यात्कामचारभक्षोक्तिर्महतः पातकादृते ' । इति ।

नैषां चण्डालादिस्पर्शे सचैलस्नानं प्रागन्नप्राशनादभ्युक्षणं प्राक् चौलादाचमनं पश्चात्स्नानमित्येके **गौतमः** ( अ. २ सू. ७ )

'न तदुपस्पर्शनादशौचमिति ' ।

'तस्याकृतोपनयनस्योदक्यादिस्पृष्टस्यापि स्पर्शनान्नाशौचम् । तेन स्नानं न कर्तव्यमिति ।' **हरदत्तः** । षष्ठवर्षादूर्ध्वं तु स्नानं कर्तव्यमिति स एवोक्तवान् ।

**गौतमः** ( अ. २ सू. ४।५।६ )

'यथोपपादितमूत्रपुरीषो भवति । नास्याचमनकल्पो विद्यते । न ब्रह्माभिव्याहरेदन्यत्र स्वधानिनयनादिति ' ।

**मनुरपि**, ( अ. २ । श्लो. १७१ । )

"न ह्यस्मिन्विद्यते कर्म किञ्चिदा मौञ्जिबन्धनात्। नाभिव्याहारयेत् ब्रह्म स्वधानिनयनादृते"॥ इति इदं पित्र्यस्य सर्वकर्मण उपलक्षणम्। " अन्यत्रोदककर्मस्वधापितृसंयुक्तेभ्य " इति **वृद्धवसिष्ठोक्तेः**। 'अगृहीताक्षरः पुत्रः पित्रोः संस्कारमर्हति'। इत्यादिस्मृत्यन्तराच्चेति **हरदत्तः**। आतिदेशिकमर्थमाह। **स्त्रीणामिति**। **एतत्**। कामचारादिकम्॥ १५॥

## याज्ञवल्कीये १६ श्लोकः

कुशादिनिर्मितपवित्रविषयकत्वेन तस्य प्रकृताविषयकत्वादुक्तेरिति विहायाह। **लिङ्गादिति**। **असौ** कर्णस्थब्रह्मसूत्रः। **मरीचिः**,

"ब्रह्मसूत्रं विना भुङ्क्ते विण्मूत्रं कुरुतेऽथवा। गायत्र्यष्टसहस्रेण प्राणायामेन शुद्ध्यति"॥ इति।

दिवा च सन्ध्ये चेति द्वन्द्वमभिप्रेत्याह। **अहनीति**। चाधिक्यं निराचष्टे। **चकारादिति**। चेदर्थमाह। **त्विति**॥ १६॥

## याज्ञवल्कीये १७ श्लोकः

**अनन्तरं** तदुत्सर्गानन्तरम्। बहुव्रीहिलब्धार्थमाह। **शिश्नमिति**। 'वक्ष्यमाणे'त्यस्य मध्यमणिन्यायेनान्वयः। पूर्वचस्यात्र सम्बन्धेन समुच्चयोऽयं न विकल्प इत्याह। **मृद्भिश्चेति**। षष्ठीतत्पुरुषनिरासायाह। **गन्धेति**। अतन्द्रित इत्यस्य व्याख्या। **अनलसेति**। नन्वन्यत्राश्रमभेदेन सङ्ख्याभेदेन शौचमुक्तमत्र तथा कुतो नोक्तमत आह। **अत्रेति**। **इदं** दृष्टफलजनकम्। तथा च तावन्मात्रमेवात्र कथितम् आवश्यकत्वात्। अन्यत्तु अन्यतो बोध्यम्। तदाह। **मृदिति**। आश्रमभेदेनान्यत्रोक्त इत्यर्थः॥ १७॥

## याज्ञवल्कीये १८ श्लोकः

अत्र मार्जनादिकृतशुचित्वस्य पुण्यदेशत्वस्य च सर्वष्टासाधकत्वेनाविवक्षितत्वादाह। **अशुचीति**। आसनं चात्र लौकिकम्। तस्य व्यतिरेकमाह। **नेति**। अस्य सर्वत्रान्वयः। नामैकदेशे इति न्यायेनाह। **प्राङिति**। यद्वोदङित्यपि पृथक् पदम्। अस्तातिप्रत्ययान्तं चोभयम्। मुख इत्यत्रार्श आद्यच्। नित्यसापेक्षत्वाद्वृत्तिः। मध्यमणिन्यायेनान्वयः। **दिगन्तरेति**। दिग्विशेषेत्यर्थः। तेन पश्चिमदक्षिणादिव्यावृत्तिः। अत एव 'ऐशान्यभिमुखो भूत्वोपस्पृशेत्तु यथाविधि'। इति **हारीत**विरोधो नेति बोध्यम्। एवञ्च तत्तस्या अप्युपलक्षणमिति बोध्यम्। मृत्संख्यानियमोक्तौ पादप्रक्षालनप्राप्तावप्यत्र सैव न। गन्धलेपेत्युक्तेः। तयोर्हि न पादयोः प्राप्तिरिति तदंशे न्यूनतां निराचष्टे। **शुचाविति**। अन्यथा पादरूपाशुचिद्रव्यसंसृष्टतया तस्याशुचित्वेन शुचावित्यनेन विरोध इति भावः। द्विजपदोक्तेः सर्वं वाक्यमिति न्यायलब्धार्थमाह। **नेति**। नन्वाचमनं नैमित्तिकं न नित्यमत आह। **सर्वेति**। ननु सर्वकालमपि तन्न क्रियते किञ्च तद्विनाऽपीष्टार्थलाभोऽत आह। **आश्रेति**। तथा च सर्वाश्रमसाधारण्यसूचनाय तस्य तदिति भावः। नात्र स्पर्शमात्रमर्थस्तावताऽनिर्वाहादत आह। **आचामेदिति**।'उपस्पर्शस्त्वाचमनमिति' कोशादिति भावः। यथाश्रुतेऽनन्वितत्वात्प्रश्नपूर्वं शेषपूरणेन

१ अमरकोश ( २।७।३६ ).

योजयति । **कथमित्यादि** । अन्तरिति मध्ये इत्यर्थकम् । षष्ठीसमासे राजदन्तादित्वात्परनिपातः । 'बाहू जान्वन्तरा कृत्वेति' **व्यासः** । मुख्यकल्पोऽयम् । तदसम्भवे दक्षिणस्यैव तथा करणम् । 'दक्षिणं बाहुं जान्वन्तरा कृत्वेति' **गौतमात्** ( अ. १ सू. ३५ ) । अनेनोर्ध्वजानुता तत्र सूचिता । तथा तत्रैव विशेषः । 'न शूद्राशुच्येकपाण्यावर्जितेन' इति (अ. ९ सू. १२) । शूद्रेणाशुचिनाऽस्पृश्यस्पर्शादिदूषितेन द्विजेनापि एकेन पाणिना यदावर्जितं तेनोदकेन नाचामेत् । स्वयं तु वामहस्तावर्जितेनोदकेनाचमनविषये एकपाण्यावर्जितत्वं तुल्यमिति तु न । हस्तद्वयस्याप्याचमने सम्बन्धात्तथा शिष्टाचारात् ॥ १८ ॥

## याज्ञवल्कीये १९ श्लोकः

अङ्गुष्ठान्तद्वन्द्वेन मूलशब्दस्य षष्ठीसमासात्तस्य प्रत्येकं सम्बन्ध इत्याह । **कनिष्ठाया इति** । देशिन्यर्थमाह । **तर्जन्या इति** । देवान्तद्वन्द्वस्य तीर्थेन कर्मधारये तथैवेत्याह । **प्रजेति** । करमध्ये सौम्यमग्नितीर्थञ्च । तत्र सौम्येन नवान्नप्राशनादि आग्नेयेन प्रतिग्रहादि ।

अत एव **मनुः**, ( अ० २ । श्लो० ५८ । ५९ । )

"ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत् । कायत्रैदशिकाभ्यां च न पित्र्येण कदाचन ॥

"अङ्गुष्ठमूलाग्रतले ब्राह्मं तीर्थं प्रचक्षते । कायमङ्गुलिमूलेऽग्रे दैवं पित्र्यं तयोरधः ॥ " इति ।

अत्र तीर्थत्रयस्यैच्छिको विकल्प इति केचित् । व्रणादिना ब्राह्मविरोधे कायदैवयोरैच्छिको विकल्प इत्यन्ये । सर्वतीर्थविरोधे तु विहितपात्रेणाचमनम् । स्वयमसामर्थ्ये त्वन्येन कारणीयं गुणलोपे प्रधानालोपात् । अधिकमन्यतो बोध्यम् ॥ १९ ॥

## याज्ञवल्कीये २० श्लोकः

शेषपूरणेन व्याचष्टे । **मुखमित्यादि** । एवमग्रे सर्वत्र बोध्यम् । अधःस्थनिवारणायाह । **ऊर्ध्वेति** । सप्तेत्यर्थः । नाभिस्तु न छिद्रमिति भावः । प्रक्रान्तत्वादग्रे पुनर्ग्रहणफलमाह । **द्रव्यान्तरेति** । उत्तरार्द्धस्थफलमपौनरुक्त्यायैवाह । **पुनरिति** । स्पर्शान्तद्वन्द्वस्यान्यार्थकान्तरशब्देन मयूरेति समासेनाह । **गन्धेति** । न च जले गन्धस्यैवाभावेनान्यगन्धप्राप्तिः सुतरां दुर्वचेति वाच्यम् । प्रकृतिस्थाशब्देनोत्पन्नशिष्टगुणविशिष्टग्रहणवदुत्पत्तिशिष्टगुणविशिष्टस्यापि ग्रहणात् । भ्वादिरूपनियतोपाधिसंबन्धेनौपाधिकगुणविशिष्टस्यैवोत्पत्त्यनन्तरमनुभूयमानत्वात् । यद्वा 'गुणसमूहो द्रव्यमिति' **पतञ्जलिरिति योगसूत्र**तद्भाष्योक्त्या सर्वाश्च पुनर्मूर्तय एवमात्मिकाः संस्त्यानप्रसवगुणाः शब्दस्पर्शरूपरसगन्धवत्यः यत्राल्पीयांसो गुणास्तत्रावरतस्त्रयः शब्दः स्पर्शो रूपमिति रसगन्धौ न सर्वत्रेति स्त्रियामिति सूत्रस्थ**महाभाष्यो**क्त्या च मूर्तिपदेन वाय्वाकाशभिन्ना विवक्षिताः अवरतः अन्ततः वाय्वाकाशतेजःसु तयोरभावादाह रसेतीत्याशयिकया जलेऽपि गन्धसत्त्वमिति भावः । इदमाचमनीयोदकस्वरूपमन्यत्राप्युक्तम् ।

"अद्भिः समुद्धृताभिस्तु हीनाभिः फेनबुद्बुदैः । वह्निना न च तप्ताभिरक्षाराभिरुपस्पृशेत् " ॥ **इति** उपस्पृशेदाचामेत् । **यमोऽपि,**

"अपः करनखस्पृष्टाः समाचामति यो द्विजः । सुरां पिबति स व्यक्तं यमस्य वचनं यथा"॥ **इति**

**प्रचेता अपि,**

"अनुष्णाभिरफेनाभिः पूताभिर्वस्त्रचक्षुषा । हृद्गताभिरशब्दाभिस्त्रिश्चतुर्वाऽद्भिराचमेत्" ॥ इति

अत्र त्रिश्चतुर्वेति भावशुद्ध्यपेक्षया विकल्प इति **कल्पतरुः** । ऐच्छिकः स इति **माधवः** । फलभूमार्थमित्यन्ये । यत्र समन्त्रकमाचमनं विहितं तत्र तेन सह चतुरन्यत्र त्रिरिति व्यवस्थितो विकल्प इति **हरदत्तः** ।

**यमोऽपि,**

"रात्रावबीक्षितेनापि शुद्धिरुक्ता मनीषिणाम् । उदकेनातुराणाञ्च तथोष्णेनोष्णपायिनाम्" ॥इति ।

उष्णपायिनां दीक्षितानामातुराणां चेत्यर्थ **इत्यपरार्कः** । परस्परान्वय **इत्यन्ये** ।

**आपस्तम्बोऽपि,** ( १।१५।४ )

"न वर्षधारास्वाचामेत्तथा च प्रदरोदके" । इति ।

"सन्ध्यार्थं भोजनार्थे वा पित्रर्थे वा तथैव च । शूद्राहृतेन नाचामेज्जपाग्निहवनेषु च" ॥ इति ।

प्रदरः स्वयंविदीर्णभूभागः ।

"अभोममम्भो विसृजन्ति पूतं परं पवित्रं परमं सुगन्धि" ।

इति **हरिवंशात्त**स्य पावित्र्येऽपि वचनान्निषेधः । तदपवादं **वसिष्ठः** ।

"प्रदरादपि या आपो गोस्तर्पणसमर्थाः स्युः । न वर्णरसदुष्टाभिर्याश्च स्युरशुभागमाः" ॥

अशुभेति निन्दितदेशकालागता इत्यर्थः ।

**कौर्मेऽपि,**

'शूद्राशुचिकरोन्मुक्तैर्न क्षाराभिस्तथैव च' ।

तथा "नैकहस्तार्पितजलै" रिति । अधिक**माह्निकग्रन्थे** स्पष्टम् । तदेतदभिप्रेत्य वैयर्थ्यं परिहरन्नाह । **तुशब्दादिति** । चार्थकादित्यर्थः ॥ २० ॥

## याज्ञवल्कीये २१ श्लोकः

निपातानामनेकार्थत्वात् पूर्वशेषत्वादस्याह । **अद्भिरिति** । विध्यादेरविवक्षितत्वादाह । **शुद्ध्यन्तीति** । द्वन्द्वविग्रहवाक्यतासूचनायाह । **स्त्री च शूद्रश्चेति** । तृतीयान्तात्तसिरित्याह । **अन्तेनेति** । हृदादीत्यत्र चरमोपातेत्यर्थः । नन्वेवं वैश्यतोऽविशेषोऽत आह **सकृदिति** । भिश्चेति चस्य व्युत्क्रमान्वितस्य फलमाह । **चशब्दादिति** । तस्य शूद्रतुल्यत्वादिति भावः ।

**मनुरपि,** ( अ. २ । श्लो. ६२ । )

"हृद्गाभिः पूयते विप्रः कण्ठगाभिस्तु भूमिपः । वैश्योऽद्भिः प्राशिताभिस्तु शूद्रः स्पृष्टाभिरन्ततः" । इति

**अन्ततः** आस्यान्तरावयवे । सप्तम्यन्तात्तसिः । अनेन चाम्भक्षणं विहितं सकृत्त्वञ्च विशेष इति **कल्पतरुः** । **श्रीदत्तादय**स्तु स्पृष्टाभिरित्यनेन पानं व्यावर्त्यते । तस्मादन्तत इत्यस्यौष्ठप्रान्त-

देशे इत्यर्थ इत्याहुः । अत एवोक्तं **मानवे** प्राशिताभिरित्यस्य तालुपर्यन्तमन्तरास्ये प्रवेशिताभिरित्यर्थः । द्रवत्वादुदकस्यापरिहार्योऽवध्यतिक्रमः अवध्यप्राप्तौ त्वशुद्धिरिति, अन्ततो जिह्वाग्रेणेति च **मेधातिथिः**। अन्ततः तालुसमीपतः तेन दन्तगाभिरित्यर्थ इति **हेमाद्रिः** ।माषमज्जनमात्रा हृदयङ्गमा भवन्ति पादपादहान्या कण्ठतालुगत्व**मित्यभियुक्ताः** ।

"प्रक्षाल्यादौ पाणिपादं शिखां बध्वाऽऽचमेत् द्विजः। स्वस्वशाखोक्तमथवा पौराणं सर्वतश्चरेत् ॥
"केशवाद्यैस्त्रिभिः पीत्वा द्वाभ्यां प्रक्षालयेत् करौ। द्वाभ्यामोष्ठौ तु संस्पृश्य द्वाभ्यामुन्मार्जनं तथा॥
"एकेन हस्तं प्रक्षाल्य पादावपि तथैकतः। संप्रोक्ष्यैकेन मूर्द्धानं ततः सङ्कर्षणादिभिः ॥
"आस्यनासाक्षिकर्णांश्च नाभिवक्षःशिरोंऽसकान्। अङ्गुष्ठेन प्रदेशिन्या घ्राणं तत उपस्पृशेत् ॥
"अङ्गुष्ठानामिकाभ्यां च चक्षुःश्रोत्रे पुनः पुनः । कनिष्ठाङ्गुष्ठयोर्नाभिं हृदयं तु तलेन वै ॥
"सर्वाभिस्तु शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत् । " इति ।

**अगस्तिसंहितागौतमतन्त्ररामार्चनचन्द्रिका**दिषु स्पष्टमिदम् ।

अथैतदनुसारी प्रयोगः ।

केशवादिभिः त्रिभिः अपः पीत्वा गोविन्द विष्णो इति द्वाभ्यां करौ प्रक्षालयेत् । मधुसूदन त्रिविक्रमेति द्वाभ्यामोष्ठौ संस्पृश्य वामन श्रीधरेति द्वाभ्यामुत्मृजेत् । हृषीकेशेत्येकेन हस्तप्रक्षालनं ततः पद्मनाभेत्येकेन पादौ प्रक्षालयेत् । दामोदरेति मूर्द्धानं संप्रोक्ष्य ततः सङ्कर्षणेति मुखं वासुदेव प्रद्युम्नेति नासिकापुटे अनिरुद्ध पुरुषोत्तमेत्यक्षिणी अधोक्षज नृसिंहेति कर्णौ अच्युतेति नाभिं जनार्दनेति वक्ष उपेन्द्रेति शिरः हरिकृष्णाभ्यामंसौ स्पृशेत् इति ।

अथ **प्रयोगपारिजातोक्तव्याघ्रपाद**वचनानि लिख्यन्ते,

"केशवादित्रिभिः पीत्वा चतुर्थेन मृजेत्करम् । पञ्चमेन च षष्ठेन द्विरोष्ठावुन्मृजेत्क्रमात् ॥
"तौ सप्तमेन च मृजेदेकवारं तु मन्त्रवित् । अष्टमेन तु मन्त्रेण अभिमन्त्र्य जलं शुचि ॥
"वामं संप्रोक्षयेत्पाणिममुना नवमेन तु । दक्षिणं दशमेनाङ्घ्रिं वाममेकादशेन वै ॥
"मूर्द्धानं द्वादशेनाथ स्पृशेदूर्ध्वोष्ठमष्टकम् । सङ्कर्षणाय नमेति स्पृशेदङ्गुलिमूर्द्धभिः ॥
"अङ्गुष्ठतर्जन्यग्राभ्यां संश्लिष्टाभ्यां जलैः सह । नासारन्ध्रे वासुदेवप्रद्युम्नाभ्यां स्पृशेच्छुभे ॥
"अङ्गुष्ठानामिकाभ्यां वै संश्लिष्टाभ्यां जलैः सह । अनिरुद्धाय नमेति संस्पृशेदक्षि दक्षिणम् ॥
"पुरुषोत्तममन्त्रेण वाममक्षि तथा स्पृशेत् । तथाऽङ्गुष्ठकनिष्ठाभ्यां श्लिष्टाग्राभ्यां जलैः सह ॥
"अधोक्षजनृसिंहाभ्यां श्रोत्रे द्वे संस्पृशेत् क्रमात् । नाभिमच्युतमन्त्रेण ताभ्यामेव स्पृशेद्बुधः ॥
"श्रीजनार्दनमन्त्रेण तलेन हृदयं स्पृशेत् । उपेन्द्रायेति मूर्द्धानं स्पृशेत्सजलपाणिना ॥
"सर्वाङ्गुल्यग्रभागैस्तु समाश्लिष्टैर्जलैः सह । भुजौ तु हरिकृष्णाभ्यां संस्पृशेद्दक्षिणोत्तरौ ॥
"आचामेदप एवं यो भगवन्नामभिः क्रमात् । सद्यः पूतः स विहितेष्वृत्तरेष्वधिकारवान ॥"इति।

केशव नारायण माधव जलं पीत्वा गोविन्द विष्णो करौ प्रक्षालयेत्। मधुसूदन त्रिविक्रम द्वाभ्याम् ऊर्ध्वाधरोष्ठौ संस्पृशेत्। वामन श्रीधर द्वाभ्यां ऊर्ध्वाधरौ उन्मृजेत्। हृषीकेश हस्तं प्रक्षालयेत्। पद्मनाभ एकेन पादौ प्रक्षालयेत्। दामोदर मूर्द्धानं सम्प्रोक्षेत्। सङ्कर्षण मुखं स्पृशेत्। वासुदेव प्रद्युम्न नासिकापुटे अङ्गुष्ठप्रदेशिन्या स्पृशेत्। अनिरुद्ध पुरुषोत्तम अक्षिणी अङ्गुष्ठमध्यमया स्पृशेत्। अधोक्षज नारसिंह कर्णौ अङ्गुष्ठानामिकया स्पृशेत्। अच्युत अङ्गुष्ठकनिष्ठिकया नाभिं स्पृशेत्। जनार्दन वक्षः हस्तेन स्पृशेत्। उपेन्द्र शिरः सम्पूर्णहस्तेन स्पृशेत्। हरिकृष्णाभ्यां हस्तेन अंसौ स्पृशेत् ॥२१॥

## याज्ञवल्कीये २२ श्लोकः

प्रागवदाह। **यथाशास्त्रमिति**। प्राणसंयमो नान्य इत्याह। **प्राणायाम इति**।

अथ सन्ध्यामुपासीतेत्याचार्यो यावहोरात्रयोः सन्धी यश्च पूर्वापराह्णयोस्तत्कालभवा देवता सन्ध्या तामुपासीत बहिर्ग्रामात्प्राच्यामुदीच्यां वाऽन्यस्यां दिश्यनिन्दितायामनल्पमुदकाशयमेत्य प्रातः शुचिर्भूतः पाणिपादमुखानि प्रक्षाल्य शुचौ देशे भूमिष्ठपादोऽनपाश्रित उपविष्ट आचामेत् प्रकृतिस्थमफेनमबुद्बुदमुदकमीक्षितं दक्षिणेन पाणिनाऽऽदाय कनिष्ठाङ्गुष्ठौ विश्लिष्टौ वितत्य तिस्रोऽन्तरङ्गुलीः संहतोर्ध्वाः कृत्वा ब्राह्मेण तीर्थेन हृदयप्रापि त्रिः पीत्वा पाणिं प्रक्षाल्य स्पृष्टाम्भसाऽङ्गुष्ठमूलेनाकुञ्चितोष्ठमास्यं द्विः परिमृज्य सकृत्संहतमध्यमाङ्गुलीभिः पाणिं प्रक्षाल्य सव्यं पाणिं पादौ शिरश्चाभ्युक्ष्य स्पृष्टाम्भसा संहतमध्यमाङ्गुलितयाग्रेणास्यमुपस्पृश्य साङ्गुष्ठप्रदेशिन्या घ्राणबिलद्वयमनामिकया चक्षुःश्रोत्रे कनिष्ठिकया नाभिं तलेन हृदयं सर्वाभिरङ्गुलीभिः शिरस्तदग्रैरंसौ चोपस्पृशेदित्येतदाचमनम्। एवं द्विराचम्यात्मानमभ्युक्ष्य दन्तान् शोधयित्वा पुनर्द्विराचम्य दर्भपवित्रपाणिः प्रथमममन्त्रकं प्राणायामत्रयं कृत्वा समन्त्रकं सकृत्कुर्यात्। यतप्राणः सप्रणवसमव्याहृतिसावित्रीं सशिरसं त्रिरावर्तयेत्। एष समन्त्रप्राणायाम इति बौधायनः।

**वृद्धशङ्ख**स्त्वन्यथा आह,

"तर्जन्याङ्गुष्ठयोगेन स्पृशेन्नासापुटद्वयम्। मध्यमाङ्गुष्ठयोगेन स्पृशेन्नेत्रद्वयं ततः॥
"अङ्गुष्ठस्यानामिकया योगेन श्रवणं स्पृशेत्। कनिष्ठाङ्गुष्ठयोगेन स्पृशेत् स्कन्धद्वयं ततः॥
"नाभिं च हृदयं तद्वत् स्पृशेत्पाणितलेन तु। संस्पृशेत्तु ततः शीर्षमयमाचमने विधिः॥" इति।

**भरद्वाजः**,

"आयतं पर्वतः कृत्वा गोकर्णाकृतिवत्करम्। संहताङ्गुलिना तोयं गृहीत्वा पाणिना द्विजः॥
"मुक्ताङ्गुष्ठकनिष्ठेन शेषेणाचमनं चरेत्। माषमज्जनमात्रास्तु संगृह्य त्रिः पिबेदपः॥" इति.

१ अथ संध्यामुपासीतेत्यादिः एष समन्त्रप्राणायाम इत्यन्तो ग्रन्थः आश्वलायनगृह्यपरिशिष्टे द्वितीयखंडे चोपलभ्यते।

अङ्गुष्ठकनिष्ठे मुक्त्वा किञ्चिदुदकं त्यक्त्वाऽवशिष्टेन जलेनाचमनं कार्यमिति प्रतीयते **इत्यभियुक्ताः** । पाणिर्दक्षिणः ।

"दक्षिणन्तु करं कृत्वा गोकर्णाकृतिवत्पुनः ।" इति **नृसिंहपुराणात्** ।

अत्रमाचमनविधिश्चतुर्भिः श्लोकैः **पराशरेणा**प्युक्तः । तथाहि,

"प्रक्षाल्य पादौ हस्तौ च त्रिः पिबेदम्बु वीक्षितम् । संमृज्याङ्गुष्ठमूलेन द्विः प्रमृज्यात्ततो मुखम् ।

"संहताभिस्त्रिभिः पूर्वमास्यमेवमुपस्पृशेत् । अङ्गुष्ठेन प्रदेशिन्या घ्राणं स्पृष्ट्वा त्वनन्तरम् ॥

"अङ्गुष्ठानामिकाभ्यां तु चक्षुःश्रोत्रे ततः परम् । कनिष्ठाङ्गुष्ठयोर्नाभिं हृदयं तु तलेन वै ॥

"सर्वाभिश्च शिरःपश्चाद् बाहू चाग्रेण संस्पृशेत् । अनेनैव विधानेन ह्याचान्तः शुचितामियात् ॥ " इति

अस्यार्थः । त्रिः पीत्वा ततः संमृज्य हस्तौ प्रक्षाल्य अङ्गुष्ठमूलेनालोमकेन मुखं द्विः प्रमृज्यात् ॥ एवमिति पुनः हस्तौ प्रक्षाल्य संहताभिस्त्रिभिर्वक्ष्यमाणात्पूर्वं मुखमुपस्पृशेत् अवमृज्यात् । एवं सर्वत्र हस्ताङ्गुलिभ्यामुपस्पृशेत् । बाहू चेति बाहुमूले सर्वाङ्गुल्यग्रैः स्पृशेदिति । स्फुटश्चैतत् **स्मृत्यर्थसारेऽपि** । अशक्तौ तु त्रिः पीत्वा हस्तौ प्रक्षाल्य श्रोत्रं स्पृशेदिति पक्षान्तरं तत्रैवोक्तम् । एवं स्मृत्यन्तरेषु प्रकारान्तराण्यप्युक्तानि तेषां यथाशास्त्रं व्यवस्थेति **माधवीये । पराशरः**

"अकृत्वा पादशौचं तु तिष्ठन्मुक्तशिखोऽपि वा । विना यज्ञोपवीतेन ह्याचान्तोऽप्यशुचिर्द्विजः ॥" इति ।

आचान्ता अपि इमे चत्वारः अशुचयः, अकृतपच्छौचः तिष्ठन् मुक्तशिखः यज्ञोपवीतहीनश्चेत्यर्थः ।

आचमननिमित्तान्याह **यमः**, 'उत्तीर्योदकमाचामेदवतीर्य तथैव च ।' इति ।

**बृहस्पतिः**,

"अधोवायुसमुत्सर्गे आक्रन्दे क्रोधसम्भवे । मार्जारमूषकस्पर्शे प्रहासेऽनृतभाषणे ॥

"निमित्तेष्वेषु सर्वेषु कर्म कुर्वन्नुपस्पृशेत् ।" इति ।

तथा, "विप्रो विप्रेण संस्पृष्ट उच्छिष्टेन कथञ्चन । आचम्यैव च शुद्धः स्या**दापस्तम्बो**ऽब्रवीन्मुनिः ॥" इति ।

अधिक**माह्निकग्रन्थ**तो द्रष्टव्यम् ।

आचमनासम्भवे तु, 'कुर्वीतालम्भनं वाऽपि दक्षिणश्रवणस्य तु ।' इति **मार्कण्डेयोक्तं**,

'नीवीं च परिधायोपस्पृशेदार्द्रं तृणं भूमिं गोमयं वा संस्पृशेदिति '

**बौधायनोक्तं** ( १।५।७४ ) वा बोध्यम् ।

**गौतमः**, ( अ. ९ सू. ११ ) 'न तिष्ठन्नुद्धृतोदकेनाचामेदिति '

इदं च स्थलविषयं, जले तु तिष्ठन्नपि आचामेत् । तदाह **विष्णुः**,

"जान्वोरूर्ध्वं जले तिष्ठन्नाचान्तः शुचितामियात् । अधस्ताच्छतकृत्वोऽपि समाचान्तो न शुध्यति ॥ "

अधोनिषेधं कुर्वता जानुमात्रेऽपि तिष्ठत आचमनमनुमतं तदधः स्थितो बहिरुत्तीर्यैवाचामेदित्यर्थः ।

**हारीतः,**

"आर्द्रवासा जले कुर्यात्तर्पणाचमनं जपम् । शुष्कवासाः स्थले कुर्यात्तर्पणाचमनं जपम् ॥

"आर्द्रवासाः स्थलेस्थस्तु यथाचामेन्नराधमः । वस्त्रनिश्चोतनं तस्य प्रेतास्तत्र पिबन्ति हि ॥" इति ।

**कौशिकः,**

"अपवित्रकरः कश्चित् ब्राह्मणोऽप उपस्पृशेत् । अपूतं तस्य तत्सर्वं भवत्याचमनं तथा ॥

"वामहस्ते स्थिते दर्भे दक्षिणेनाचमेद्यदि । रक्तं तु तद्भवेत्तोयं पीत्वा चान्द्रायणं चरेत् ॥" इति ।
इदं कर्मार्थकाचमनपरम् ।

"पवित्रकर आचामेच्छुचिः कर्मार्थमादरात् । कुशमात्रकरो वाऽपि दर्भमात्रकरोऽपि वा" ॥ इति ।

**स्मृत्यर्थसारात्** । एवं च

"सपवित्रेण हस्तेन कुर्यादाचमनक्रियाम् । नोच्छिष्टं तत्पवित्रं तु भुक्तोच्छिष्टं तु वर्जयेत्" ॥ इति ।
**मार्कण्डेयोक्त**मपि तत्परमेव । अन्यत्र पवित्रदोषाभावपरं च । एवं हस्तद्वये पवित्रप्रशंसको **गोभिलोऽपि,**

"उभयत्र स्थितैर्दर्भैः समाचामति यो द्विजः । सोमपानफलं तस्य भुक्त्वा यज्ञफलं लभेत्" ॥ इति ।
तत्पर एव । एवं च वामेति उक्तम्,

"वामहस्ते कुशान् कृत्वा समाचामति यो द्विजः । उपस्पृष्टं भवेत्तेन रुधिरेण मलेन वा" ॥ इति ।
**हारीतोक्तं च** वामहस्तमात्रधृतकुशपरम् । **मदनरत्नादौ हारीतः,**

"सव्यापसव्यौ कुर्वीत सपवित्रौ करौ द्विजः । ग्रन्थिर्यस्य पवित्रस्य न तेनाचमनं चरेत्" ॥ इति ।

"जातिमात्रो भवेद्दर्भः सपवित्रः कुशः स्मृतः । सप्तपत्रस्तु कुतपश्छिन्नाग्रस्तृणमुच्यते" ॥
सपवित्रो द्विशलाकः । **प्रयोगपारिजाते तु** विशेष उद्धृताचमनपक्षे पात्रविषयेऽभियुक्तोक्तः स्मर्यते,

"करकालाबुपात्रेण ताम्रचर्मपुटेन च । गृहीत्वा स्वयमाचामेद्भूमिलग्नेन नान्यथा" ॥ इति ।
"करकालाबुपात्रेण ताम्रचर्मपुटेन च । स्वहस्ताचमनं कार्यमिति स्मृत्यन्तरे स्मृतम्" ॥ इत्यन्यत्र ।

**उशना,**

"कांस्यायसेन पात्रेण त्रपुसीसकपित्तलैः । आचान्तः शतकृत्वोऽपि न कदाचिच्छुचिर्भवेत्" ॥
**संवर्तः,**

"सन्ध्याकार्ये पितृश्राद्धे वैश्वदेवे शिवार्चने । यती च ब्रह्मचारी च नाचामेच्चर्मवारिणा" ॥

**शङ्खः,**

"पीतावशेषितं पीत्वा पानीयं ब्राह्मणः क्वचित्। त्रिरात्रं च व्रतं कुर्याद्वामहस्तेन वा पुनः" ॥ वामहस्तेन जलं जलपात्रं वोद्धृत्येत्यर्थः । तथा **तत्रैव,**

"शूद्राहृतैस्तु नाचामेदेकपाण्याहृतैस्तथा । न चैवाव्रतहस्तेन नापरिज्ञातहस्ततः" ॥ इति । अव्रतः अनुपनीतः । **पराशरेणोक्तम्,**

"जले स्थलस्थो नाचामेज्जलाचान्तः स्थलेऽशुचिः। पादौ स्थाप्योभयत्रैव ह्याचान्तः शुचितामियात्"

जलाचान्तो यतः स्थले शुचिर्न भवति तस्मात् जले आचमनं न कुर्यादित्यर्थः । स्थाप्येत्यार्षो ल्यप् । 'उभयत्र' जलस्थलयोरित्यर्थः ।

**पैठीनसिरपि,** 'अन्तरुदकमाचान्तोऽन्तरेव शुद्धो भवति, बहिरुदकमाचान्तो बहिरेव; तस्मादन्तरेकं पादं बहिरेकं पादं कृत्वाऽऽचामेत्सर्वत्र शुद्धो भवति' ।

**पारिजातेऽपि,**

"विन्यस्य दक्षिणं पादं जले वामपदं बहिः । उपवीती समाचामेत् विधिरेष सनातनः"॥इति
"ओङ्कारपूर्वकं नाम चतुर्विंशतिसङ्ख्यया । स्वाहाऽन्तं प्राशयेद्वारि नमोऽन्तं स्पर्शयेदथ ॥
"केशवादित्रिभिर्नाम अपः पीत्वा यथाविधि । गोविन्दमग्रतो न्यस्य विष्णुं सौषुम्नि विन्यसेत् ॥
"मधुसूदनमादित्ये सुधांशौ च त्रिविक्रमम् । अग्रतो वामनञ्चैव हस्तयोः श्रीधरं तथा ॥
"हृषीकेशं दक्षपादे पद्मनाभं तु वामके । दामोदरं ब्रह्मरन्ध्रे नासा सङ्कर्षणं न्यसेत् ॥
"दक्षनासा वासुदेवं वामे प्रद्युम्नं विन्यसेत् । अनिरुद्धं दक्षनेत्रे वामे तु पुरुषोत्तमम् ॥
"अधोक्षजं दक्षकर्णे नारसिंहं तु वामके । अच्युतं नाभिदेशे तु हृदये तु जनार्दनम् ॥
"उपेन्द्रं ब्रह्मरन्ध्रे तु हरिं दक्षभुजे न्यसेत् । श्रीकृष्णाय नम एवं भुजे वामे तु विन्यसेत् ॥
"एतदाचमनं कुर्यात्साक्षात् नारायणो भवेत् । पौराणाचमनमेतत् कृत्वा नारायणो भवेत् ॥
"देव्याः पादैस्त्रिभिः पीत्वा चाब्लिङ्गैर्नवभिः स्पृशेत्। सप्तव्याहृतिसंयुक्तां गायत्रीं शिरसा सह"इति

चतुर्विंशतिः सम्पद्यते । शिरसो द्वेधा विभागः ।

## अथ स्नानानन्तरकर्तव्यतिलकविधिः ।

**ब्रह्माण्डपुराण,**

"पर्वताग्रे नदीतीरे मम क्षेत्रे विशेषतः।सिन्धुतीरे च वल्मीके तुलसीमूलमाश्रिताः ॥
"मृद एतास्तु सम्पाद्या वर्जयेदन्यमृत्तिकाः । द्वारवत्युद्भवाद्गोपीचन्दनादूर्ध्वपुण्ड्रकम् ॥
"कारयेन्नित्यमेवं हि पापं हन्ति दिने दिने । जाह्नवीतीरसम्भूतां मृदं मूर्ध्ना बिभर्ति यः ॥
"बिभर्ति सूर्यं सोऽर्कः स्यात् तमोनाशाय केवलम्। श्यामं शान्तिकरं प्रोक्तं रक्तं वश्यकरं भवेत्॥

"श्रीकरं पुण्ड्रमित्याहुर्वैष्णवं श्वेतमुच्यते । अङ्गुष्ठः पुष्टिदः प्रोक्तो मध्यमा पुष्करी भवेत् ॥
"अनामिकाऽन्नदा नित्यं मुक्तिदा च प्रदेशिनी । एतैरङ्गुलिभेदैस्तु कारयेन्न नखैः स्पृशेत् " ॥

**चन्द्रिकायां ब्रह्माण्डपुराणे,**

"ललाटे केशवं विद्यात् नारायणमथोदरे । माधवं हृदि विन्यस्य गोविन्दं कण्ठकूपके ॥
"उदरे दक्षिणे पार्श्वे विष्णुरित्यभिधीयते । तत्पार्श्वे बाहुमध्ये तु विन्यसेन्मधुसूदनम् ॥
"त्रिविक्रमं कर्णदेशे वामकुक्षौ तु वामनम् । श्रीधरं बाहुके वामे हृषीकेशं तु कर्णके ॥
"पृष्ठदेशे पद्मनाभं ककुद् दामोदरं स्मरेत् । द्वादशैतानि नामानि वासुदेवेति मूर्द्धनि ॥
"सङ्कर्षणादिभिः कृष्णे शुक्लेऽर्चेत् केशवादिभिः । ऊर्ध्वपुण्ड्रं शिवस्यैवं कुर्युर्विष्णोश्च वा बुधाः॥
"मूर्ध्नि मूलेन मन्त्रेण शेषैर्द्वादशनामभिः । स्थानेष्वेषु द्विजः स्नात्वा नमोऽन्तैः प्रणवेन च "॥इति
स्थानविशेषे आकृतिविशेषः स्मर्यते,

"निटिले बाहुवच्चैव दण्डवत्कर्णपल्लवे । हृदये कमलाकारमुदरे दीपवल्लिखेत् ॥
"वेणुपत्रसमाकारं बाह्वोर्मध्ये लिखेत्सुधीः । अधःपृष्ठे स्कन्धदेशे लिखेज्जम्बूफलाकृतिम् " ॥

**भाले,**

"दशाङ्गुलप्रमाणन्तु उत्तमोत्तममुच्यते । नवाङ्गुलं मध्यमं स्यादष्टाङ्गुलमतः परम् " ॥
"सप्तषट्पञ्चभिः पुण्ड्रं मध्यमं त्रिविधं स्मृतम् । नासादिकेशपर्यन्तं प्रयत्नाद्धारयेद् द्विजः " ॥

**पारिजाते संग्रहे,**

"ऊर्ध्वपुण्ड्रं त्रिपुण्ड्रं वा मध्ये शून्यं प्रधारयेत् । शृणु तन्मुखमध्ये च उमयाऽहं श्रिया हरिः" इति

**स्मृतिसारसमुच्चये,**

"गोपीचन्दनलिप्ताङ्गो यं यं पश्यति चक्षुषा । तं तं शुद्धं विजानीयात् नात्र कार्या विचारणा " इति

अथातो **भस्मधारणविधिं** व्याख्यास्यामो भूत्यै न प्रमदितव्यमिति हि विज्ञायते अथाप्युदाहरन्ति ।

"मध्यमाऽनामिकाऽङ्गुष्ठैस्त्रिपुण्ड्रं भस्मना कृतम् । तत् त्रिपुण्ड्रं भवेच्छस्तं महापातकनाशनम्"॥

अथ 'त्र्यम्बकमिति' सर्वाङ्गं संमृजेत्पूतो भवति दश पूर्वान् दशापरानात्मानं चैकविंशतिं पङ्क्तिं च पुनाति ब्रह्मणः सायुज्यं सलोकतामाप्नोतीत्याह भगवान् **बौधायनः** । अथाप्युदाहरन्ति ।

"ललाटे हृदि दोर्द्वन्द्वे गले कुक्षौ शिरस्तथा । धारयेच्च सितं भस्म द्विजो नित्यमतन्द्रितः "॥इति

अस्य श्रीभस्मधारणमन्त्रस्य पिप्पलाद ऋषिः । देवीगायत्री छन्दः । कालाग्निरुद्रो देवता । अग्निरिति बीजम् । भस्मेति शक्तिः । भस्मधारणे विनियोगः । कालाय नमः अङ्गुष्ठाभ्यां नमः । कलविकरणाय नमः तर्जनीभ्यां नमः । बलविकरणाय नमः मध्यमाभ्यां नमः । बलप्रमथनाय नमः

अनामिकाभ्यां नमः । सर्वभूतदमनाय नमः कनिष्ठिकाभ्यां नमः। मनोन्मनाय नमः करतलकरपृष्ठाभ्यां नमः। एतैरेव हृदयादिन्यासः । ध्यानम् ।

"विभूते भूतिमानासीद्वामदेवः सदाशिवः । रक्षाबद्धस्त्वया देवि रक्ष मामनघे सदा ॥"

सद्योजातादिपञ्चब्रह्ममन्त्रैश्च भस्म गृहीत्वा वामहस्ते निधाय दक्षिणहस्तेन आच्छाद्य सद्योजातादिभिराग्निरित्यादिभिश्चाभिमन्त्र्य "आपो वा इद ५ सर्वं विश्वाभूता० राप ओम्" इत्यनेन मन्त्रेण जलमभिमन्त्र्य जले जलाधिदैवतं विष्णुं ध्यात्वा 'ओमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोमिति' मन्त्रेण भस्मासिच्य 'मा नस्तोके' इति मन्त्रेण मर्दयित्वा षट् भागान् कृत्वा पञ्चपिण्डैरीशानादिपञ्चमन्त्रैः शिरोवदनहृदयगुह्यपादेषु समुद्धूल्य प्रणवेन सर्वाङ्गं समुद्धूल्य हस्तौ प्रक्षाल्याचम्य अवशिष्टपिण्डेन त्रिपुण्ड्रधारणं कुर्यात् ।

तत्प्रकारस्तु त्र्यायुषमित्यनेन मेधावीत्यादिभिर्वा ब्रह्मचारिभिः त्र्यम्बकेन प्रणवयुक्तपञ्चाक्षरेण वा गृहस्थैर्वनस्थैश्च, ओंकारेण त्रिरुक्तेन सन्यासिभिः क्रियेत । त्रिपुण्ड्रधारणानन्तरं हस्तौ प्रक्षाल्य तज्जलमापः पुनन्त्विति मन्त्रेण पिबेदिति सङ्क्षेपः ।

सद्योजातं प्रपद्यामि० १ । वाम० २ । अघो० ३ । तत्पु० ४ । ईशा० ५ । त्र्यम्बकम्० । ६ । अग्निरिति भस्म वायुरिति भस्म जलमिति भस्म स्थलमिति भस्म व्योमेति भस्म सर्व ५ ह वा इदं भस्म । मन एतानि चक्षूंषि भस्मानि । मानस्तोके० ऋग्वेदे । त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषं अगस्त्यस्य त्र्यायुषं यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषं शतायुषम् । **आपस्तम्बशाखायाम्** । मेधावी भूयासम् । तेजस्वी वर्चस्वी ब्रह्मवर्चसी० । आयुष्मान् भू० अन्नादो० यशस्वी भू० सर्वसमृद्धो भू० ।

**बृहज्जाबाले,**

"मध्याह्नात् प्राक् जलैर्युक्तं तोयं तदनु वर्जयेत् । सुप्त्वा भुक्त्वा पयः पीत्वा कृत्वा चावश्यकादिकम्॥

"स्त्रियं नपुंसकं वृद्धं बिडालं बकमूषकम् । स्पृष्ट्वा तथाविधानन्यान् भस्मस्नानं समाचरेत् ।

"आपः पुनंतु पृथिवीं० ह ५ स्वाहा ।"

"समिद्धाग्निसमुत्थेन विरजानलजेन वा । अग्निहोत्रसमुत्थेन भस्मना सजलेन तु । १ ।

"अग्निरित्यादिभिर्मन्त्रैः षड्भिर्वा सप्तभिः क्रमात् । विमृज्याङ्गानि सर्वाणि समुद्धूल्य ततःपरम् ।२।

"तिर्यक् त्रिपुण्ड्रमुरसा ललाटे च करादितः । ग्रीवायां च शुचिर्भूत्वा शिवं ध्यात्वा शिवां तथा ।३।

"पञ्चब्रह्मादिभिर्मन्त्रैर्धारयेद्ब्राह्मणः सदा । त्रियायुषं जमदग्नेरिति मन्त्रेण वा पुनः । ४ ।

"महादेवार्चनं कुर्यात् पुष्पाद्वा फलपत्रतः।" इति **सूतसंहितायाम्** । (खं. २ । अ. ३ । श्लो. ७–११)

**शङ्करसंहितायाम्,**

"भस्मना सजलेनैव भावितेन त्रियम्बकैः । त्रियायुषेण तारेण पञ्चाक्षरसमन्वितम् ॥" इति ।

१ आनन्दाश्रमयन्त्रालयमुद्रितसूतसंहितापुस्तके " मेधावीत्यादिभि " रिति पाठो दृश्यते ।

"रक्षार्थं मङ्गलार्थं च प्रवदन्ति महर्षयः । त्रिपुण्ड्रधारणं मुक्त्वा मुक्तिमिच्छति यः पुमान् ।१।
"विषपानेन नित्यत्वं कुरुते आत्मनो हि सः । वेदोदितेन मार्गेण भस्मनोद्धूलनेऽपि च । २ ।
"त्रिपुण्ड्रधारणेनैव ज्ञानं सम्यग्विजायते । ब्राह्मणेनात्मभूतेन शिवेन परमात्मना । ३ ।
"आदरेण धृतं भस्म त्रिपुण्ड्रोद्धूलनात्मना । आदिब्राह्मणभूतस्य धर्मस्तिर्यक् त्रिपुण्ड्रकम् ।४।
"ब्राह्मणो धारयेन्नित्यं भुक्तिमुक्तिफलप्रदम् । वेदसिद्धेषु धर्मेषु त्रिपुण्ड्रं भस्मगुण्ठनम् । ५ ।
"रुद्रलिङ्गार्चनं चैव मुख्यमाहुर्द्विजास्तिकाः । सर्वागमेषु निष्ठानां त्रिपुण्ड्रं भस्मगुण्ठनम् । ६ ।
"वरिष्ठं सर्वलिङ्गेभ्य इति सत्यं मयोदितम् । भस्म श्रेयोऽर्थिभिः सर्वैर्जन्मना लब्धजातिभिः।७।
"धार्यं त्रिपुण्ड्ररूपेण भस्मना चावगुण्ठनम् । ब्राह्मणो यः सितेनैव भस्मना चावगुण्ठितः । ८ ।
"त्रिपुण्ड्रावलिभिर्दीप्तस्तं राजा परिरक्षयेत् । भस्मप्रच्छन्नसर्वाङ्गं त्रिपुण्ड्राङ्कितमस्तकम् । ९ ।
"ये निन्दन्ति नरा राजा हन्यात्तानविचारतः । वैणवीं धारयेद्यष्टिं सोदकं च कमण्डलुम् ।१०।
"पवित्रमुपवीतं च त्रिपुण्ड्रोद्धूलनं द्विजः । एतादृशानि लिङ्गानि यस्य सन्ति द्विजन्मनः ।११।
"सत्यमेव मया प्रोक्तं सफलं जन्म तस्य वै । " इति च ।

प्रकृतमनुसरामः । **अपिः** सर्वसमुच्चायकः । चेन सायं वरुणसमुच्चयः । तच्च वारुणमन्त्रेण । अत्र जपात्प्राक् उपस्थानोक्तिर्मध्याह्नसन्ध्याशयिका ॥ २२ ॥

## याज्ञवल्कीये २३ श्लोकः

प्राणायामस्वरूपमाह । **गायत्रीमिति** । शिरःपदार्थमाह । **आप इति** । फलितमाह । **संयुक्तामिति** । क्वचित्संयुक्तमित्येव पाठः । तदा मूलवत्तदपि क्रियाविशेषणम् ।

प्रत्येकमित्यर्थकस्य प्रतीत्यस्य आकाङ्क्षायामर्थादानन्तर्याच्चाह **प्रतिव्येति** । तत्स्वरूपमाह **' ओं भूः ओं भुव इति ' मुखेति** ।

मध्यमपदलोपिसमासः द्वन्द्वोत्तरमाङः प्रश्लेषो वा । निरोधः पूरणरेचनयोरप्युपलक्षणम् । अत एव

"पूरकः कुम्भको रेच्यः प्राणायामस्त्रिलक्षणः । नासिकाकृष्ट उच्छ्वासो ध्मातः पूरक उच्यते " ॥

इत्यादि**योगि**वचनविरोधाभावः । अत एवाह **मनसेति** ।

अत्र प्रत्येकं प्राणायामत्वं विशिष्टस्य वेति पक्षद्वयमन्यत्र स्पष्टम् । तत्सामान्यलक्षणमिदमिति सूचयन्नाह । **सर्वत्रेति** । योगाङ्गादावपीत्यर्थः ॥ २३ ॥

## याज्ञवल्कीये २४ श्लोकः २५ श्लोकस्य पूर्वार्धश्च

प्राणायामोत्तरं सन्ध्याविषये प्रागनुक्तं कथयन् प्रातःसायं सन्ध्ययोर्जपोत्तरमुपस्थानमिति सूचयन्नुभयत्र तदवधिमाह । **प्राणानायम्येति** ।

तुश्चार्थे व्युत्क्रमे च । संप्रोक्ष्य च । प्राग्वदाह । **प्रत्यक्सन्ध्यामिति** । पश्चिमसन्ध्यायामित्यर्थः ।

**आसीत्** उपासीत कुर्यात् । अत एवाह **अर्थादिति ।** एवमग्रेऽपि । सन्ध्यापदस्य मध्यमणिन्यायेनान्वयः । अत एव व्युत्क्रमोक्तिः । जपेऽवधिमाह **आतारेति ।**

प्राक्सन्ध्यामित्यस्य तिष्ठेदित्यत्रान्वयः । प्रातस्तु प्राङ्मुखः सूर्योदयावधि । एवं पूर्वोक्तविधिं जपमाचरन् प्राक्सन्ध्यामनुतिष्ठेदित्यर्थः । हिः त्वर्थे पूर्ववैलक्षण्ये व्युत्क्रमे च । सन्ध्याशब्दस्य कालदेवतापरत्वनिरासायाह । **अहोरेति ।** अत्र किञ्चिदुच्यते ।

"अङ्गुलित्रयसंयुक्तं मुक्त्वाऽङ्गुष्ठकनिष्ठयोः । गोकर्णाकृतिमित्याहुर्ब्रह्मकर्मप्रकाशकम् ॥"

तथा च **शौनकः,**

"नासिकामङ्गुलीभिश्च तर्जनीमध्यमावृते । दक्षिणेन समाकृष्य सव्येन तु विसर्जयेत् ॥
"प्रणवव्याहृतिसमं गायत्रीं शिरसा सह । त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥
"शनैर्नासापुटे वायुमुत्सृजेन्न तु वेगतः । न कम्पयेच्छरीरं तु स योगी परमो मतः ॥" इति
"पञ्चाङ्गुलीभिर्नासाग्रपीडनं प्रणवाभिधा । मुद्रेयं सर्वपापघ्नी वानप्रस्थगृहस्थयोः ॥
"कनिष्ठानामिकाङ्गुष्ठैर्नासाग्रस्य च पीडनम् । ॐकारमुद्रा सा प्रोक्ता यतेश्च ब्रह्मचारिणः ॥
"प्राणानायम्य विधिवद्वाग्यतः संयतेन्द्रियः । 'अथ सन्ध्यामुपासिष्ये' इति सङ्कल्प्य मार्जयेत् ॥
"तिसृभिर्मार्जनं कुर्यादापोहीति कुशोदकैः । पादे पादे क्षिपेन्मूर्ध्नि प्रतिप्रणवसंयुतम् ॥" इति ।

**ऋग्विधाने,**

"नवप्रणवयुक्तेन आपोहिष्ठातृचेन च । संवत्सरकृतं पापं मार्जनान्ते विनश्यति ॥"

**ब्रह्माऽप्याह,**

"आपोहिष्ठादिभिः पादैः शिरस्यंसे च विप्रुषः । यस्य क्षयायाधस्तात्तु क्षिपताद्भिः परिषेचयेत् ॥" इति ।

**स** एव, 'धाराच्युतेन तोयेन सन्ध्योपास्तिर्विगर्हिता ।'

कथं तर्हि मार्जनं कार्यमित्यत्र **स एवाह,**

"नद्यां तीर्थे ह्रदे वाऽपि भाजने मृन्मयेऽपि वा । औदुम्बरेऽथ सौवर्णे राजते दारुसम्भवे" ॥
"कृत्वा तु वामहस्ते वा सन्ध्योपास्तिं समाचरेत्" । इति ।
औदुम्बरं ताम्रपात्रम् । कृत्वेति, जलमिति शेषः ।

यत्तु,

"वामहस्ते जलं कृत्वा ये तु सन्ध्यामुपासते । सा सन्ध्या वृषली ज्ञेया असुरास्तैस्तु तर्पिताः" ॥ इति, तन्मृन्मयादिपात्रान्तरसद्भावविषयम् । तदभावे तु 'कृत्वा तु वामहस्ते' इत्येतद् बोध्यम् ।

## अथ मन्त्राचमनम् ।

तत्र **गृह्यपरिशिष्टम्** । ( आ. गृ. अ. १ । )

अथाचमनोदकमादाय 'सूर्यश्चेति' पिबेत् । सूर्यश्चेत्यनुवाकेन जुहोमि स्वाहेत्यन्तेनैतत्समन्त्राच

मनम् ' । खं. ३ । ' अथ मध्यन्दिने आपः पुनन्त्वित्यनुवाकेन प्रतिग्रहश्‍ स्वाहा ।' (खं. ७ ।) 'एवं सूर्यश्चेति मन्त्रे सूर्यस्थाने अग्निश्च मा मन्युश्चेतीत्याह सत्ये ज्योतिषीति चान्ते ब्रूयात्' ( खं. ६ । ) **भगवांश्चाह** । ( आ. गृ. अ. १ । खं. ८ । )

'सूर्यश्चेति मन्त्रस्य याज्ञवल्क्य उपनिषदृषिः । सूर्यमन्युमन्युपतयश्च देवताः । गायत्रीपङ्क्ति-विराजश्छन्दांसि । रक्षन्तामित्यन्ता गायत्री । दुरितं मयीत्यन्ता पङ्क्तिः । पञ्चपदा पङ्क्तिरिति श्रुतेः । द्विपदा विराज इत्यनुक्रमिकातश्च प्रकृतिश्छन्द इति **मदनपारिजाते** ।

आपः पुनन्त्वित्यस्य याज्ञवल्क्योपनिषदृषिः । मतान्तरे तु पूत ऋषिः । आपः पृथिवी ब्रह्मण-स्पतिर्ब्रह्मा देवता । अष्टपदा अष्टी छन्दः ।

इति मन्त्राचमनम् ।

---

## अथ द्वितीयमार्जनम् ।

**गृह्यपरिशिष्टे** । ( आ. अ. १ । खं. ३ । )

' अथ पुनराचम्य मार्जयेत् प्रणवव्याहृतिसावित्रीभिरापोहिष्ठेति सूक्तेन गायत्रीशिरसा च आत्मानं परिषेचयेदेतन्मार्जनमिति ' ।

**भगवान्,**

"प्रणवेन व्याहृतिभिर्गायत्र्या प्रणवाद्यया । आपोहिष्ठेति सूक्तेन मार्जनं हि चतुर्थकम् " ॥

**कात्यायनः,**

"प्रणवं भूर्भुवःस्वश्च गायत्री च तृतीयिका । अब्दैवत ऋचश्चैव चतुर्थमिति मार्जनम् " ॥

**प्रजापतिः,**

"ऋगन्ते मार्जनं कुर्यात् पादान्ते वा समाहितः । अर्द्धर्चान्ते तथा कुर्याच्छिष्टानां मतमीदृशम् " ॥

इति मार्जनम् ।

---

## अथ पापपुरुषनिरसनम् ।

**भगवान्,**

"उद्धृत्य दक्षिणे हस्ते जलं गोकर्णवत्कृते । निःश्वासं नासिकाऽग्रे तु पाप्मानं पुरुषं स्मरेत् ॥

"ऋतञ्चेति तृचं वाऽपि द्रुपदां वा जपेदृचम् । दक्षनासापुटेनैव पापात्मानमपोहयेत् ॥

"तज्जलं नावलोक्याथ वामभागे क्षितौ क्षिपेत् " ॥

**ब्रह्माऽपि,**

१ आश्वलायनगृह्यपरिशिष्टादृष्य ऋष्यादिविषये वैलक्षण्यं च दृश्यते ।

"जलपूर्णं तथा हस्तं नासिकाऽग्रे समर्पयेत् । ऋतञ्चेति जपित्वाऽथ तज्जलं तु क्षितौ क्षिपेत्" ॥ द्रुपदा च **वाजसनेयके**ऽपि पठ्यते ।

"द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव । पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः" ॥ इति ।

**कात्यायनः,**

"करेणोत्सृज्य सलिलं प्राणमासज्य तत्र च । जपेदनियतासुर्वा त्रिः सकृद्वाऽघमर्षणम्" ॥ इति । प्राणमासज्य । निरुद्धप्राण इत्यर्थः । द्विविधोऽपि विकल्पः शक्ताशक्तविषयतया व्यवस्थितो बोध्यः ।

ध्येयस्य पापपुरुषस्य स्वरूपश्च स्मर्यते,

"ब्रह्महत्याशिरस्कं च स्वर्णस्तेयभुजद्वयम् । सुरापानहृदा युक्तं गुरुतल्पकटिद्वयम् ॥

"तत्संयोगपदद्वन्द्वमङ्गप्रत्यङ्गपातकम् । उपपातकरोमाणं रक्तश्मश्रुविलोचनम् ॥

"खड्गचर्मधरं कृष्णं कुक्षौ पापं विचिन्तयेत् ।"

इति पापपुरुषनिरसनम् ।

---

## अथार्घ्यप्रदानम् ।

**गृह्यपरिशिष्टे,**

'अथाचम्य दर्भपाणिः पूर्णमुदकाञ्जलिमुद्धृत्याभिमुखः स्थित्वा प्रणवव्याहृतिपूर्वया सावित्र्या त्रिर्निवेदयन् क्षिपेत् तदेवार्घ्यनिवेदनम् । असावादित्यो ब्रह्मेति प्रदक्षिणं परितन्य परिषिच्याप उपस्पृशति' । ( अ. १ । खं. ५ । ) अथाकृष्णयिया हंसवत्या वा त्रिः सकृद्वा अर्घ्यमुत्क्षिपति । (अ. १। खं. ७ । ) आधारमण्डपस्थं ज्योतिर्विशेषमञ्जलिपुटं प्राप्ति दक्षिणनासापुटेन सम्प्राप्तं परिभाव्य तच्च मन्देहासुरनिबर्हणाय जलाञ्जलिना सह क्षिपामीति भावयन्, गायत्रीशिरसा पुनस्तेजो वायुमार्गेण स्वस्मिन्स्थापयेदिति विशेषो बोध्यः ।

तदुक्त**माश्वलायनस्मृतौ,**

"ततस्तिष्ठन् जलं गृह्य प्राङ्मुखोऽञ्जलिना स्मरेत् । स्थानादौ सुस्थितञ्चैवं स्फटिकज्योतिषा समम् ॥"

स्थानादौ आधारमण्डपे इत्यर्थः ।

"उत्तीर्य तच्च सम्प्राप्तं दक्षिणेन पथाऽञ्जलिम् । व्याहृत्यादि जपेन्मंत्रं स्मृत्वैवं परितो रवेः ॥

"मन्देहान् युद्ध्यतः क्रूरान् निक्षिपेत्तेष्वथाञ्जलिम् । षोडशाक्षरमन्त्रेण पुनराकृष्य सत्वरः ॥

"पुनर्जलं गृहीत्वैवं तेजो मन्त्रश्च तं स्मरेत् । एवं त्रिवारमावृत्य दग्ध्वा तानसुरान् द्विजः ॥

"मन्त्रेणाकृष्य तत्तेजः स्थानादौ स्थापयेत्स्मरन् । पूर्ववद्वाममार्गेण स्मृत्वा संस्थाप्य चात्मनि ॥

"प्रदक्षिणं समावृत्य जलं गृह्याचमेत्ततः ।" इति ।

षोड्शाक्षरमन्त्रलक्षणमाह,

**व्यासः,**

"षोडशाक्षरकं ब्रह्मन् गायत्र्यास्तु शिरः स्मृतम् । ओमापो ज्योतिरित्येष मन्त्रो वै तैत्तिरीयके ॥" इति ।

**संग्रहे,**

"मुक्तहस्तेन दातव्यं मुद्रां तत्र न कारयेत् । तर्जन्यङ्गुष्ठयोगेन राक्षसी मुद्रिका भवेत् ॥
"राक्षसीमुद्रिकाऽर्घ्येण ततोयं रुधिरं भवेत् । जलेष्वर्घ्यं प्रदातव्यं जलाभावे शुचिस्थले ॥
"संप्रोक्ष्य वारिणा सम्यक् ततोऽर्घ्यं तु प्रदापयेत् ।"

एतच्च अर्घ्यप्रदानं प्रधानमिति केचित् । अङ्गमिति बहवः । एवमर्घ्यान्तानि पूर्वाङ्गाणि निरूपितानि ।

## अथ गायत्रीजपः ।

तत्र **गृह्यम्,**

'यज्ञोपवीती नित्योदकः सन्ध्यामुपासीत वाग्यतः सायमुत्तरापराभिमुखोऽन्वष्टमदेशं सावित्रीं जपेत् अर्द्धास्तमिते मण्डले आनक्षत्रदर्शनादेवं प्रातः प्राङ्मुखस्तिष्ठन् आमण्डलदर्शनादिति ।'

अस्यार्थः । यज्ञोपवीतीति शिखाबन्धनादेरप्युपलक्षणम् । नित्योदकः, स्मृत्युक्ताचमनाद्यर्घ्यप्रदानान्तम् उदकसाध्यत्वादुदकशब्देन लक्ष्यते । वाग्यतः मौनी । नित्योदकः कृतस्मृत्युक्ताचमनाद्यर्घ्यान्तः सन् । सन्ध्यामुपासीतेति सर्वकालसाधारणम् । सायं तु विशेषोऽयम् । उत्तरस्या अपरस्याश्चान्तरालं वायवी दिक् तदभिमुखः । तत्रापि नाञ्जस्येन । अन्वष्टमदेशम् अभिमुखः, प्रतीच्यां य उत्तरो भागः तदभिमुख इत्यर्थः । प्रातस्तिष्ठन्निति उपवेशननिवृत्त्यर्थम् ।

अत्र **गृह्यपरिशिष्टम्** । ( अ० १ । खं० ५ । )

"शुचौ देशे दर्भाम्भसोक्षिते दर्भान् संस्तीर्य व्याहृतिभिरुपविश्य प्राणायामत्रयं कृत्वा आत्मानं व्याहृतिभिरभ्युक्ष्य सावित्र्या ऋषिदैवतच्छन्दांस्यनुस्मृत्य षड्भिस्तदङ्गमन्त्रैर्यथाङ्गम् आत्मानि न्यस्यात्मानं तद्रूपं भावयेत् । यथा 'तत्सवितुर्हृदयाय नम' इति हृदये । 'वरेण्यं शिरसे स्वाहेति' शिरसि । 'भर्गो देवस्येति' शिखायै वषडिति शिखायाम् । 'धीमहीति' कवचाय हुमित्युरसि । 'धियो यो नः' नेत्रत्रयाय वौषडिति नेत्रयोर्ललाटे च न्यस्य अथ प्रचोदयादस्त्राय फडिति करतले अस्त्रं प्राच्यादिदशदिक्षु न्यसेत् । देहाङ्गन्यासोऽयम् । एनमन्ये नेच्छन्ति । स हि विधिरवैदिक इति । अथ मन्त्रदेवतां ध्यात्वा आगच्छ वरदे देवीत्यावाह्य तिष्ठन्नर्द्धनक्षत्रे आ मण्डलदर्शनान्मन्त्रार्थमनुसन्दधानः प्रणवव्याहृतिपूर्विकां सावित्रीं जपेदिति ।"

**भगवान्,**

"सायं प्रातश्च मध्याह्ने सावित्रीं वाग्यतो जपेत् । सहस्रपरमां देवीं शतमध्यां दशापराम् ॥
"गायत्रीं संस्मरेद्धीमान् हृदि वा सूर्यमण्डले । मनःसन्तोषणं शौचं मौनं मन्त्रार्थचिन्तनम्
"अव्यग्रत्वमनिर्वेदो जपसम्पत्तिहेतवः ।" इति

जपसङ्ख्यामाह,

"अष्टोत्तरशतं नित्यमष्टाविंशतिरेव वा । विधिना दशकं वाऽपि त्रिकालेषु जपेद्बुधः ॥" इति ।

जपयोग्यान्यासनान्याह **व्यासः**,

"कौशेयं कम्बलश्चैव अजिनं पट्टमेव च । दारुजं तालपत्रञ्च आसनं परिकल्पयेत् ॥
"कृष्णाजिने ज्ञानसिद्धिर्मोक्षश्रीर्व्याघ्रचर्मणि । वंशाजिने व्याधिनाशस्सर्वेष्टं चित्रकम्बले ॥"इति

निषिद्धासनान्याह **स** एव,

"वंशासनेषु दारिद्र्यं पाषाणे व्याधिसम्भवः । धरण्यां दुःखसम्भूतिर्दौर्भाग्यं चित्रदारुजे ॥
"तृणे धनयशोहानिः पल्लवे चित्तविभ्रमः ।" इति ।

तत्रोपवेशनमन्त्रमाह **व्यास एव**,

"पृथिव्या मेरुपृष्ठस्तु ऋषिरित्यभिधीयते । सुतलं छन्द इत्याहुः कूर्मो वै देवता स्मृता ॥
"मेरोरारोहणे तस्या विनियोगः प्रकीर्तितः ।" इति ।

**वृद्धमनुः**,

"वस्त्रेणाच्छाद्य तु करं दक्षिणं यः सदा जपेत् । तस्य तत्सफलं जप्यं तद्धीनमफलं स्मृतम् ॥" इति।

**विश्वामित्रः**,

"उत्तमं मानसं जप्यमुपांशुं मध्यमं विदुः । अधमं वाचिकं प्राहुः सर्वमन्त्रेषु वै द्विजाः॥"इति।

**गौतमः**,

"गच्छतस्तिष्ठतो वाऽपि स्वेच्छया कर्म कुर्वतः । अशुचेर्वा विना संख्यां तत्सर्वं निष्फलं भवेत्॥" इति

**बौधायनः**, ( १।५।७५ )

'नाभेरधः संस्पर्शं कर्मसंयुक्तो वर्जयेत् ।' इति ।

जपाङ्गभूतामक्षमालामाह

**हारीतः**,

"शङ्खरूप्यमयी माला काञ्चनी जलजोत्पलैः । पद्माक्षकैश्च रुद्राक्षैर्विद्रुमैर्मणिमौक्तिकैः ॥
"राजतैर्द्राक्षकैर्माला तथैवाङ्गुलिपर्वभिः ।"

**गौतमः**,

"शतं स्याच्छङ्खमणिभिः प्रवालैश्च सहस्रकम् । स्फाटिकैर्दशसाहस्रं मौक्तिकैर्लक्षमुच्यते ॥
"पद्माक्षैर्दशलक्षं तु सौवर्णैः कोटिरुच्यते । कुशग्रन्थ्या च रुद्राक्षैरनन्तं फलमुच्यते ॥" इति ।

अथाक्षमालामणिसङ्ख्यामाह

**प्रजापतिः**,

"अष्टोत्तरशतां कुर्यात् चतुष्पञ्चाशिकां तथा । सप्तविंशतिकां वाऽपि ततो नैवाधिका मता ॥"

इति जपप्रकरणम् ।

## अथ उपस्थानविधिः ।

तत्र **गृह्यपरिशिष्टम्** । ( अ. १ । खं. ६ । )

'जातवेदसे सुनवाम सोमं' 'तच्छंयोरावृणीमहे' 'नमो ब्रह्मणे नमो अस्त्वग्नये' इत्येताभिरुपस्थाय प्रदक्षिणं दिशः साधिपाः नत्वा अथ सन्ध्यायै सावित्र्यै गायत्र्यै सरस्वत्यै सर्वाभ्यो देवताभ्यश्च नमस्कृत्यात उत्तरम्,

"उत्तमे शिखरे देवी भूम्यां पर्वतमूर्द्धनि । ब्राह्मणेभ्यो ह्यनुज्ञानं गच्छ देवि यथासुखम्" ॥

इति सन्ध्यां विसृज्य 'भद्रं नो अभिवादय मन' इत्युक्त्वा शान्तिं च त्रिरुच्चार्य प्रदक्षिणं परिक्रमन्,

"आसत्यलोकादापातालादालोकालोकपर्वतात् । ये वसन्ति द्विजा देवास्तेभ्यो नित्यं नमो नमः" ॥

इति नमस्कृत्य भूमिमुपसंगृह्य गुरून् वृद्धांश्चोपसंगृह्णीयात् एवं सायमिति । इदमुपस्थानोत्तरानुष्ठेयमुपसङ्ग्रहणं ब्रह्मचारिप्रकरणे मूलादौ स्पष्टम् ।

**परिजाते,**

"आर्षश्छन्दो दैवतश्च विनियोगस्तथैव च । वेदितव्यं प्रयत्नेन ब्राह्मणेन विपश्चिता" ॥ इति ।

**गोभिलः,**

"आयात्वित्यनुवाकस्य वामदेव ऋषिः स्मृतः । अनुष्टुभं भवेच्छन्दो वाग्देवी देवता स्मृता ॥

"आवाहने तु गायत्र्या विनियोगः प्रकीर्तितः" ।

**गृह्यपरिशिष्टे तु,** ( अ. १ । खं. ५ । )

'अनुवाकसमानार्थको मन्त्रो विनियुक्तः आगच्छेति । स च प्रागुदाहृतः' ।

**व्यासोऽपि,**

आवाहयेत्तु गायत्रीं सर्वपापप्रणाशिनीम् । आगच्छ वरदे देवि जप्ये मे सन्निधौ भव ॥

"गायन्तं त्रायसे यस्मात् गायत्री त्वमुदाहृता" । इति ।

व्याहृतीनां देवताद्याह **बृहत्पराशरः,**

"अग्निर्वायुस्तथा सूर्यो बृहस्पत्याप एव च । इन्द्रश्च विश्वेदेवाश्च देवताः समुदीरिताः ॥

"गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च । त्रिष्टुप् च जगती चैव छन्दांस्येतान्यनुक्रमात् ॥

"भरद्वाजः कश्यपश्च गौतमोऽत्रिस्तथैव च । विश्वामित्रो जमदग्निर्वसिष्ठ ऋषयः क्रमात्" ॥

इति । मध्याह्नकालमधिकृत्योक्तम्

**तत्रैव,** ( आ. गृ. प. अ. १ । ७ )

"उद्बाहुरुन्मुख 'उदुत्यं जातवेदसं चित्रं देवानामिति' सूक्ताभ्यामादित्यमुपस्थाय जपमासीनो यथेष्टकालं कुर्यात्" इति सन्ध्याविधिर्व्याख्यातः ॥

दैवाद्दिवा माध्याह्निकं न कृतं तत्र **स्मर्यते,**

"रात्रौ प्रहरपर्यन्तं दिवाकृत्यानि कारयेत्। अवगाहं ब्रह्मयज्ञं सौरजप्यञ्च वर्जयेत्" ॥ इति।

सायं प्रातश्चोपस्थाने विशेषमाह **भगवान्,**

"नमो ब्रह्मण इत्येतां त्रिरुक्त्वाऽथ दिशो नमेत्। इमं मे वरुण तत्त्वायामीति सायंकाले विशेषतः॥ "मित्रस्य चर्षणी द्वाभ्यां प्रातःकाले विशेषतः।"

**आश्वलायनस्मृतौ तु,** 'ऋग्भिश्चतुर्भिर्मित्रैश्च गायत्रीरेव बह्वृचः'। इत्युक्तम्।

मित्रैर्मित्रदेवताकैः 'मित्रस्य चर्षणी धृत' इत्यादिभिरित्यर्थः।

**पराशरमाधवीये,** 'वारुणीभिरथादित्यमुपस्थाय प्रदक्षिणम्'। इति।

यद्यपि वारुणीभिर्वरुणोपस्थानमेव लिङ्गात्प्राप्तं तथापि श्रुतेः प्राबल्यात्सूर्यस्योपस्थाने वारुणीनां विनियोगः।

**तदाहुर्भट्टपादाः**

"मन्त्रार्थं मन्त्रतो बुध्वा पश्चाच्छाक्तिं निरूप्य च। मन्त्राकाङ्क्षाबलेनेन्द्रशेषश्रुतिविकल्पनम्॥ "श्रुत्या प्रबलया पूर्वं गार्हपत्याङ्गतां गते। निराकाङ्क्षीकृते मन्त्रे निर्मूला श्रुतिकल्पना॥ "तेन शीघ्रप्रवृत्तित्वात् श्रुत्या लिङ्गस्य बाधनम्"। इति।

साङ्गायाः सन्ध्यायाः फलमाह **यमः,**

"सन्ध्यामुपासते ये तु सततं संशितव्रताः। विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम्" इति

अकरणे प्रत्यवायमाह **दक्षः,**

"सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु। यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत्" ॥

**गोभिलोऽपि,**

"सन्ध्या येन न विज्ञाता सन्ध्या येनानुपासिता। जीवमानो भवेच्छूद्रो मृतः श्वा चैव जायते" इति

**मरीचिः** "सूतके कर्मणां त्यागः सन्ध्यादीना विधीयते"। इति।

तत विशेषमाह पारिजाते **भरद्वाजः,**

"सूतके मृतके कुर्यात्प्राणायाममम्न्त्रकम्। तथा मार्जनमन्त्रांस्तु मनसोच्चार्य मार्जयेत्॥ "गायत्रीं सम्यगुच्चार्य सूर्यायार्घ्यं निवेदयेत्। मार्जनं तु न वा कार्यमुपस्थानं न चैव हि" ॥ इति।

अथ गायत्रीदशकं कार्यम्।

"आपन्नश्चाशुचिः काले तिष्ठन्नपि जपेद्दश" ॥ इति।

आपन्नः आपद्ग्रस्तः। तं प्रति **अग्निस्मृतौ** अङ्गान्तरहरणेऽपि अर्घ्यस्यावश्यकतोक्ता

"जलाभावे महामार्गे बन्धने त्वशुचावपि। उभयोः सन्ध्ययोः काले रजसा वाऽर्घ्यमुत्सृजेत्" ॥ इति।

अशुचौ आशौचे इत्यर्थः । श्राद्धभोजिनां सन्ध्याधिकारसिद्धये विशेषः **स्मर्यते** ,

''दशकृत्वः पिबेदापो गायत्र्या श्राद्धभुग्द्विजः । ततः सन्ध्यामुपासीत शुध्यते तदनन्तरम्'' ॥ इति ।

नैतच्छ्राद्धभोजनप्रायश्चित्तं, तस्य गुरुणो वक्ष्यमाणत्वात् । किंतु सन्ध्याधिकारायेति बोध्यम् ।

अथ **मन्त्रार्थाः** । तत्रापोहिष्ठादय ऋक्संहितास्थमन्त्रास्तदर्थास्तद्भाष्यादेव ज्ञेयाः । इतरे तु मन्त्रा व्याख्यायन्ते । अग्निश्चेत्यस्यायमर्थः । मा इति माम् । एते रक्षन्ताम् । मन्युः क्रोधाभिमानिनी देवता ।

तथा च **भगवान्व्यासः** । (वे. अ. २ पा. १ सू. ५) 'अभिमानिव्यपदेशस्तु' इत्यसूत्रयत् । मन्युपतयो जितक्रोधा महात्मानः । शिश्ना शिश्नेन । 'सुपांसुलुगित्यादिना' (व्या.सू. ७।१।३९) डादेशः । इदं पापजातं मां तत्कर्तारं चाहङ्कारम् अमृतयोनौ मोक्षकारणे अग्न्याख्ये ज्योतिषि परब्रह्मणि जुहोमि प्रक्षिपामि तदर्थमिदमभिमन्त्रितं जलं स्वाहा मदीयप्राणाग्नौ हुतमस्तु । एतेन सूर्यश्चेत्यपि व्याख्यातम् ।

आपः पुनन्त्वित्यस्यायमर्थः । आपः पृथिवीं मच्छरीरम् । यच्छरीरं सा पृथिवी**त्यारण्यकोक्तेः** । सा च पृथिवी मां लिङ्गशरीरं पुनातु किंच ब्रह्मणो देवस्य पतिः परमात्मा पुनन्तु पुनातु । व्यत्ययेन बहुवचनम् । ब्रह्म वेदः, पूता पूतमित्यर्थः । सुपां सुलुगिति पूर्वसवर्णः । उच्छिष्टं तन्निमित्तकपापं सर्वं, परिहृत्येति शेषः । मां पुनातु । तदर्थं स्वाहा अभिमन्त्रितमुदकं प्राणाग्नौ जुहोमीत्यर्थः ।

प्रणवो ब्रह्मपरः । भवन्त्यस्मिन्भूतानीति भूः । अधिकरणे क्विप् । भावयति स्थापयति विश्वमिति भुवः । अन्तर्भावितण्यर्थादसुनि गुणाभावश्छान्दसः । सुष्ठु इयन्ति इयति प्राप्नुवन्त्येतदिति सुवः । ऋधातोः कर्मणि विच् बाहुलकात् । मह पूजायाम् अस्मादसुनि महः पूज्यम् । जन जनने, तप सन्तापे, आभ्यां कर्तर्यसुन् । सत्यं कालत्रयाबाध्यम् । सवितुः प्रेरकस्य वरेण्यं भजनीयं भर्गः संसारभर्जनात् सच्चिदानन्दात्मकं रूपं धीमहि ध्यायामः यः सविता नः धियः प्रचोदयात् प्रेरयेत् । पञ्चमलकारः । आपः व्यापकं ज्योतिः चिद्रूपं रसः सुखम् अमृतं मोक्षः ईदृग् ब्रह्मेति ओम् अङ्गीकुर्वे ध्यायामि इत्यर्थः ।

अथ गायत्र्यर्थः । अत्र **पितृचरणाः**,

सवितुः सकलब्रह्माण्डोत्पादकस्य देवस्य क्रीडाकर्तुः कूटस्थब्रह्मणः राहोः शिरः इतिवदियं षष्ठी वरेण्यं सर्वोत्कृष्टतमं सूर्यमण्डलतेजोरूपं भर्गः साम्बशिवरूपाग्निदेवताकम् । ओमित्येकाक्षरं ब्रह्म अग्निर्देवतेत्यादिश्रुतौ तथा प्रसिद्धेः । तन्मायारहितं ब्रह्म, ॐ तत् ब्रह्म तत्त्वमसीत्यादिश्रुतौ तथा प्रसिद्धेः । न त्वयं सर्वनाम इदं कर्म वयं धीमहि ध्यायेम बाह्यान्तरेन्द्रियादिविशिष्टस्यास्मदर्थतयोद्भूतरूपकर्तृत्वस्य विवक्षणात् बहुवचनम् । एतेन आर्षं बहुवचनमिति व्याख्यानं परास्तम् । यः इश्चाश्चेति यः लक्ष्मीनारायणस्वरूपो नोऽस्माकं पूर्ववत् षष्ठीबहुवचनम् अस्मत्सम्बन्धिनीः धियः बाह्याभ्यन्तरेन्द्रियादिविशिष्टे सद्विषयज्ञानानि प्रेरयेत् इत्यर्थः । अयमपि न सर्वनाम । एतेन तथा व्याख्यानमपास्तम् । यथाश्रुते सर्वोत्कृष्टे एकवचनतयाऽतिनिकृष्टेऽस्मदर्थे बहुवचतनया व्याख्यानन्तु सुतरामयुक्तमिति केचित् । **तन्न** । भेदाभेदप्रतिपादनेनापकर्षोत्कर्षप्रतिपादनाय तथैवौचित्यादित्याहुः ।

मम तु प्रतिभाति । स चासौ सविता च तत्सवितेत्येकं पदं देवस्य स्वतःप्रकाशस्य तस्य सवितुः कर्मादौ लोकानां प्रेरकस्य वरेण्यं महः । षष्ठी ध्यानादेर्भेदनिबन्धनत्वादभेदे तदसम्भवाद्राहोः शिर इतिवत्तत्सूचनायैव कृता । भर्गोऽहं, संसारभर्जितत्वाद्भर्गत्वं कर्तरि, धीमहि ध्यायामि । आर्षमेव बहुवचनम् । आत्मनेपदार्थं तत्कल्पनस्यावश्यकत्वात् । तत्फलं तु तद्ध्यानस्य सर्वावश्यकत्वसूचनम् । अत एवाग्रे न इति बहुवचनम् । व्यत्ययो वोभयत्र बोध्यः ।

यद्वा भर्गः वयमिति वेदाः प्रमाणमितिवत् । बहुत्वं तु प्रागवद्वाऽधिकारिव्यक्तिभेदेन वा । यः सविता । अग्रे प्राग्वत् ।

यद्वा प्रेरकस्य सूर्यस्य सवितुरित्यनेनैव श्लेषेणोत्पादकतया ब्रह्मरूपत्वं. देवस्येत्यनेन 'क्रीडार्थकतया विष्णुरूपत्वं, भर्गः भर्गस्य छान्दसो व्यत्ययः अनेन शिवरूपत्वं, वरेण्यमित्यनेन तुरीयरूपत्वम्। षष्ठी अन्यच्च सर्वं प्राग्वत् ।

यद्वा यः सविता देवः नोऽस्माकं धियः कर्माणि धर्मादिविषया बुद्धीर्वा प्रचोदयात् प्रेरयेत् तत्तस्य सर्वासु श्रुतिषु प्रसिद्धस्य देवस्य द्योतमानस्य सवितुः सर्वान्तर्यामितया प्रेरकस्य जगत्स्रष्टुः परमेश्वरस्यात्मभूतं वरेण्यं सर्वैरुपास्यतया ज्ञेयतया च संभजनीयं भर्गः अविद्यातत्कार्ययोर्भर्जनाद्भर्गः स्वयं ज्योतिः परब्रह्मात्मकं तेजः धीमहि तद्योऽहं सोऽसौ योऽसौ सोऽहमिति वयं ध्यायेम ।

यद्वा तदिति भर्गविशेषणं सवितुर्देवस्य तत्तादृशं भर्गो धीमहि । किं तदित्यपेक्षायामाह य इति । लिङ्गव्यत्ययः । यद् भर्गो धियः प्रचोदयति तद् ध्यायेमेति समन्वयः ।

यद्वा यः सविता सूर्यः धियः कर्माणि प्रचोदयात् प्रेरयति तस्य सवितुः सर्वस्य प्रसवितुर्देवस्य द्योतमानस्य सूर्यस्य सत्सर्वैर्दृश्यतया प्रसिद्धं वरेण्यं सर्वैर्भजनीयं भर्गः पापानां तापकं तेजोमण्डलं धीमहि ध्येयतया मनसा धारयेम ।

यद्वा भर्गशब्देनान्नमभिधीयते । यः सविता देवो धियः प्रचोदयति तस्य प्रसादाद्भर्गोऽन्नादिलक्षणं फलं धीमहि धारयामः । तस्याधारभूता भवेमेत्यर्थः । भर्गशब्दस्यान्नपरत्वे धीशब्दस्य कर्मपरत्वे **चाथर्वणं** प्रमाणम्,

"वेदांश्छन्दांसि सवितुर्वरेण्यं, भर्गो देवस्य कवयोऽन्नमाहुः । कर्माणि धियः सूनते प्रब्रवीमि॥ "इति।

वस्तुतस्तु वयं तत् शुद्धं ब्रह्म, तत्त्वमसीत्यादौ तथा प्रसिद्धेः, धीमहि ध्यायेम । छान्दसं पदम् । शरीरान्तरिन्द्रियविशिष्टास्मदर्थस्योद्भूतावयवभेदत्वेन बहुत्वेन कर्तृत्वविवक्षया बहुवचनम्, ध्यातृभेदाभिप्रायं वा । ननु शुद्धस्य ध्येयत्वं बाधितम्, अतो विशेषणानि । सवितुः 'षू प्रसवे' सकलब्रह्माण्डोत्पादकस्य 'षू प्रेरणे' सकलप्रेरकस्य क्रीडमानस्य मोदमानस्य वा वरेण्यं श्रेष्ठतमं भर्गः भर्जनात् 'भ्रस्जिभृजी भर्जने' तेजः धियः बुद्धेः तत्त्वज्ञानस्य यः यातीति यः प्रापकः नः अस्मान् प्रचोदयात् प्रकर्षेण प्रेरयेत् । सर्वसंबन्धित्वेनाप्रतिहतत्वेन प्रकर्षः । यद्वा अत एव यः ई च अश्चेति ईसहितः अ इति वा व्युत्पत्त्या लक्ष्मीनारायणात्मकः सगुणो वा न अस्माकं धियो ज्ञानानि सर्वविषयकाणि प्रचोदयात् इति ।

अत्र तत् य इत्याद्युक्त्या निर्गुणसगुणयोरौपाधिकभेदो वास्तवोऽभेद इति सूचितम्। अत एव षष्ठी राहोः शिर इतिवत्। लिङ्गत्रययुक्तशब्दरचनया एकत्रैव लिङ्गत्रयसत्ता। सवितुः वरेण्यम् भर्ग इत्यनेन उत्पत्तिस्थितिसंहारकरत्वसूचनद्वारा ब्रह्मविष्णुमहेश्वरात्मकत्वमेकस्यैव सूचितम्। सवितुर्वरेण्यमित्यनेन सूर्यमयत्वं चन्द्रमयत्वं च, भर्ग इत्यनेन शिवमयत्वं वह्निमयत्वं च। तत् वयमित्याद्येकवचनबहुवचनाभ्यां च सर्वोपास्यत्वाद्येकस्यैवेति सूचितम्। तृतीयपादेन ब्रह्ममयत्वं गणपत्यात्मकत्वं च व्यवहारदशायां भेद एवेति च सूचितम्। धीप्रेरकत्वेन शक्तिमयत्वं शक्तिमयत्वं तदित्यनेन परमार्थदशायामभेद एव सूचितः। अप्रतिहतप्रेरणया तत्सत्त्वं सूचितम्। प्रकाशकस्येत्यनेन सूर्यादिप्रकाशोऽपि अत इति सूचितम्। क्रीडमानस्येत्यनेन प्रपञ्चो यस्य लीलामात्रं न तु तत्र सकलप्रवृत्तिरिति सूचितं मोदमानस्येत्यनेन सच्चिदानन्दरूपत्वं सूचितं। धीमहीत्यनेन तन्मात्रगम्यत्वं बुद्धिप्रेरकत्वेन तत्सत्त्वमिति बोध्यम्।

**गृह्यपरिशिष्टा**दावुपस्थानोत्तरकालानुष्ठेयतयोक्तम् उपसंग्रहणं तु ब्रह्मचारिप्रकरणे प्रपञ्चितमन्यत्र।

"उपनीतस्य सन्ध्यायाः प्रारम्भे तत्त्वमुच्यते। सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु॥"

इति **दक्षोक्तेः**,

"अत ऊर्ध्वं प्रवक्ष्यामि सन्ध्योपासनकं विधिम्। अनर्हः कर्मणां विप्रः सन्ध्याहीनो यतः स्मृतः॥" इति।

**छन्दोगपरिशिष्टाच्च**,

सर्वमूलत्वेनोपनीतस्य सन्ध्याप्रारम्भादिविषये तत्त्वं यथाशास्त्रं यथामति उच्यते। तत्र

'अहोरात्रस्य यः सन्धिः सूर्यनक्षत्रवर्जितः। सा तु सन्ध्या समाख्यातेति' **दक्षोक्तेः** यद्यपि सन्ध्याशब्दः कालविशेषपरः। अत्र सूर्यनक्षत्रपदमत्यन्ततेजस्वितत्परम्।

'सादित्यां पश्चिमां सन्ध्यामर्धास्तमितभास्कराम्।'

इति **संवर्तात्**, 'प्रत्यगातारकोदयादिति **याज्ञवल्क्याच्च** (आचारे २४ श्लो.)। तथाऽपि

'सन्धौ सन्ध्यामुपासीत नोद्गते नास्तगे रवौ।'

इति **वृद्धयाज्ञवल्क्यात्**, 'स व्रती बहिः सन्ध्यामुपासीतेति' **शङ्खात्**, 'अहरहः सन्ध्यामुपासीतेति' विधेः 'तस्मात् ब्राह्मणोऽहोरात्रस्य सन्ध्यामुपास्ते' इति **तैत्तिरीयाच्च** तत्कालयोगनिमित्तकः प्राणायामादिकर्मकलापविशेषः सन्ध्याशब्दार्थः। उपासनं चानुष्ठानमिति **केचित्**। **परे तु** तत्तद्रूप्या च सन्ध्याशब्दवाच्या देवी।

"पूर्वा संन्ध्या तु गायत्री सावित्री मध्यमा स्मृता। या भवेत् पश्चिमा संन्ध्या सा विज्ञेया सरस्वती॥

"श्वेता भवति गायत्री सावित्री रक्तवर्णिका। कृष्णा सरस्वती ज्ञेया सन्ध्यात्रयमुदाहृतम्"॥

इति **वृद्धयाज्ञवल्क्योक्तेः**। 'सन्धिकालोपास्यत्वात् सन्ध्येति' **माधवः**। 'सम्यक् ध्येयत्वात् सन्ध्येति' **नृसिंहः**। अनेन क्रमेण ब्रह्मरुद्रविष्णुरूपत्वमुक्तं तेषां तद्वर्णत्वादित्याहुः। अत्रोपासनं ध्यानम्।

"न भिन्नां प्रतिपद्येत गायत्रीं ब्रह्मणा सह । सोऽहमस्मीत्युपासीत विधिना येन केनचित् ॥"

इति **व्यासोक्तेरिति केचित् । परे तु** ध्यानपूर्वको गायत्रीजप एवात्रोपासनं तदेव प्रधानम् । सन्ध्यामुपासते इति फलसम्बन्धबोधनात् । नार्घ्यदानं, तदभावात् ।

"या सन्ध्या सा जगत्सूतिर्मायाऽतीता हि निष्कला । ईश्वरी केवला शक्तिस्तत्त्वत्रयसमुद्भवा ॥
"ध्यात्वाऽर्कमण्डलगतां सावित्रीं तां जपेद् बुधः" ।

इति **कौर्मेण** ध्यानस्याङ्गत्वप्रतिपादनात् । 'देवतां ध्यायेत् जपं कुर्यादिति' **शङ्खात्,** नित्योदकः सन्ध्यामुपासीतेत्युपक्रम्य गायत्रीजपस्यैव **आश्वलायनेनो**क्तेस्तज्जपस्यैव प्राधान्यप्रतीतेः ।

**मनुनाऽपि,** ( अ. ४ श्लो. ९४ ) 'ऋषयो दीर्घसन्ध्यत्वाद्दीर्घमायुरवाप्नुयुः ।'

इति गायत्रीजपे एव सन्ध्यापदप्रयोगात् । प्राणायामादीनां प्रतिनियतस्वरूपत्वेन दैर्घ्यासम्भवेन गायत्रीजपस्य सहस्रादिसङ्ख्यया दैर्घ्यसम्भवात् ।

यत्तु **भारतम्,**

"तथैव ते महाराज दंशिता रणमूर्द्धनि । सन्ध्यागतं सहस्रांशुमादित्यमुपतस्थिरे ॥"

इति, तदपि गायत्रीजपपरमेव । तथैव ब्रह्माभिन्नार्कोपस्थानात् । 'उद्यन्तमस्तं यन्तमादित्यमभिध्यायन्निति' **तैत्तिरीयश्रुते**रुक्तरीत्या तत्परत्वाच्च ।

"पूर्वां सन्ध्यां सनक्षत्रामुपक्रम्य यथाविधि । गायत्रीमभ्यसेत्तावद्यावदादित्यदर्शनम् ॥"

इति **नारसिंहाच्च** । एवञ्च "न भिन्नामिति" **व्यास**वाक्येऽङ्गभूतध्यानमेवोपासनत्वेनाभिमतमित्याहुः । केचित्तु गायत्रीं मन्त्ररूपां तत्प्रतिपाद्यब्रह्माभिन्नत्वेन गृहीतां जपेत्तां मनसाऽहमित्युपासीतेति **व्यास**वाक्यार्थमाहुः । इयं नित्या काम्या च ।

"अहोरात्रकृतैः पापैर्यामुपास्य प्रमुच्यते । सन्ध्या येन न विज्ञाता सन्ध्या नैवाप्युपासिता ।
"जीवमानो भवेच्छूद्रो मृतः श्वा चैव जायते ॥"

इति **वृद्धयाज्ञवल्क्येन** फलदोषयोरुक्तेः । स्पष्टं चेदमन्यत्रापि । अज्ञानकृतपापविषयमेतत् । यद्यपि

"सर्वकालमुपस्थानं सन्ध्ययोः पार्थिवेष्यते । अन्यत्र सूतकाशौचविभ्रमातुरभीतितः ॥"

इति **वैष्णवात्,**

"जपन्नासीत सावित्रीं प्रत्यगातारकोदयात् । सन्ध्यां प्राक् प्रातरेवं हि तिष्ठेदासूर्यदर्शनात् ॥"
"प्रातःसन्ध्यामुपासीत दन्तधावनपूर्वकम् । उपास्य पश्चिमां सन्ध्यां हुत्वाऽग्नींस्तानुपास्य च ।"

इति च **याज्ञवल्क्यात्,** 'सन्ध्याद्वयोपासनम्' इति **विष्णुस्मृतेः,**

"नानुतिष्ठति यः पूर्वां नोपास्ते यश्च पश्चिमाम् । स शूद्रवद्बहिष्कार्यः सर्वकर्मसु साधुभिः" ॥ इति,
"पूर्वां सन्ध्यां जपन् तिष्ठेत्सावित्रीमाऽर्कदर्शनात् । पश्चिमां तु समासीनः सम्यगृक्षविभावनात्"॥

---

१ या० स्मृ० अ० १ श्लो० २४. २ या० स्मृ० अ० १ श्लो० २५. ३ या० स्मृ० अ० १ श्लो० ९८. ४ या० स्मृ० अ० १ श्लो० ११४. ५ म० स्मृ० अ० २ श्लो० १०३. ६ म० स्मृ० अ० २ श्लो० १०१.

"कराभ्यां तोयमादाय गायत्र्या चाभिमन्त्रितम् । आदित्याभिमुखस्तिष्ठंस्त्रिरूर्ध्वं सन्ध्ययोः क्षिपेद् "

इति च **मनोश्च** सन्ध्याद्वयमेव प्राप्तं, तथापि—

"परं नम्रः प्रभाते स्यान्मध्याह्ने तु ऋजुस्थितः । द्विजोऽर्घ्यं प्रक्षिपेद्देव्या सायं चोपविशन् भुवि॥"इति,

"प्राणायामत्रयं कार्यं सन्ध्यासु च तिसृष्वपि । अथ सन्ध्यामुपासिष्य इति सङ्कल्प्य मार्जयेत्॥"इति,

'सायंकाले पिबेदप' इति च **मनोः** । "प्रातःसन्ध्यां सनक्षत्रां मध्यमां स्नानकर्मणि" ॥इति **शङ्खात्**,

"सन्ध्याकाले तु संप्राप्ते मध्याह्ने च ततः पुनः । उपास्ते यस्तु नो सन्ध्यां ब्राह्मणो हि विशेषतः॥

"स जीवन्नेव शूद्रः स्यान्मृतः श्वा चैव जायते " ॥ इति,

"रात्र्यन्तयामनाडी द्वे सन्ध्याकालोऽयमुच्यते । दर्शनाद्रविरेखायास्तदन्तो मुनिभिः स्मृतः ॥

अर्ध्यर्द्धयामादासायं सन्ध्या माध्याह्निकीष्यते " ॥

इति च **दक्ष्यात्**,

"संध्यात्रयं तु कर्तव्यं द्विजेनात्मवता सदा । उभे सन्ध्ये तु कर्तव्ये ब्राह्मणैः स्वगृहेष्वपि " ॥

इति **अत्रिवृद्धयाज्ञवल्क्या**भ्याम्,

"हस्ताभ्यां स्वस्तिकं कृत्वा प्रातरितष्ठेद्दिवाकरम् । मध्याह्ने तु ऋजू बाहू सायं मुकुलितौ करौ"॥

इति **कश्यपोक्तेः**,

"प्रातर्नाभौ करं कृत्वा मध्याह्ने हृदि संस्थितम् । सायं जपति नासाग्रे जपस्तु त्रिविधः स्मृतः"॥

इति **स्मृत्यन्तरात्**,

"ईषन्नम्रः प्रभाते तु मध्याह्ने ऋजुसंस्थितः । उपविश्य तु सायाह्ने जले त्वर्घ्यं विनिक्षिपेत् "

**इत्यापस्तम्बस्मृतेश्च**,

"सूर्यश्चेत्यनुवाकेन प्रातःकाले पिबेदपः । अग्निश्चेत्यनुवाकेन सायंकाले पिबेदपः " ॥
"आपः पुनन्तु मध्याह्ने मन्त्राचमनमाचरेत्"। इति, "सायं प्रातश्च मध्याह्ने सावित्रीं वाग्यतो जपेत्"॥

इति च **भगवदुक्तेश्च**,

"सायमग्निश्च मेत्युक्त्वा प्रातः सूर्येत्युपस्पृशेत् । आपः पुनन्तु मध्याह्ने तथा आचमनं चरेत्"॥

इति **भरद्वाजाच्च**

सन्ध्यात्रयमावश्यकम् । सर्वसाधारण्येन स्नानकर्मणि मध्याह्नस्नानोत्तरं शुचित्वसंपत्त्या कर्माङ्गत्वस्य संध्याहीन इति सामान्यदक्षोक्त्या तत्त्वस्य तत्तदग्निमकर्मनिरूपितस्याविशेषेण त्रिषु सत्त्वादपि तदावश्यकत्वम् । तथा चोक्तोत्पत्तिवाक्ये संख्याश्रवणेन त्रीण्येतानि कर्माणि । तेषां च—

"दिवा वा यदि वा रात्रौ यदज्ञानकृतं भवेत् । त्रिकालसंध्याकरणात्तत्सर्वं व्यपोहति" ॥

इति **वृद्धयाज्ञवल्क्येन,**

"पूर्वां सन्ध्यां जपंस्तिष्ठन्नैशमेनो व्यपोहति । पश्चिमां समुपासीनो मलं हन्ति दिवाकृतम् "॥

इति

**मन्वे**कवाक्यतया प्रत्येकं फलसंबन्धबोधनादेकाकरणेऽप्यपरं कार्यमेव । एतेन **विष्णुस्मृतौ** द्वय-पदोक्त्या तृतीयाऽनावश्यिका ।

'उभे सन्ध्ये तु कर्तव्ये ब्राह्मणैः स्वगृहेष्वपि ।' **इत्यत्रै**श्वाति तद्व्याख्यानुक्तमपास्तम् ।

नन्वेवं साधारणस्मृत्युक्तसंध्यात्रयस्य सर्वैरनुष्ठाने विशेषप्रतिपादकश्रुतिसूत्रादिविरोध इति चेन्न । संभवात् । तथाहि । तत्र तावत्तैत्तिरीयाणां स्वाध्यायब्राह्मणं, "तदुह वा एते ब्रह्मवादिनः पूर्वाभिमुखाः संध्यायां गायत्र्याऽभिमन्त्रिता अप ऊर्ध्वं विक्षिपन्ति ता एता आपो वज्रीभूत्वा तानि रक्षांसि मन्देहारुणे द्वीपे प्रक्षिपन्ति यत्प्रदक्षिणं प्रक्रमन्ति तेन पाप्मानमवधुन्वन्त्युद्यन्तमस्तं यन्तमादित्यमभिध्यायन् कुर्वन् ब्राह्मणो विद्वान्सकलं भद्रमश्नुतेऽसावादित्यो ब्रह्मेति ब्रह्मैव सन् ब्रह्माऽप्येति ये एवं वेदति ।

तथा **धर्मप्रश्ने,**

संध्योश्च बहिर्ग्रामादासनं वाग्यतश्चेति । अहोरात्रयोः संधानं संधिः । तौ द्वौ सायं प्रातश्च सज्योतिरज्योतिरिति वचनान्तरदर्शनात् । तयोः संध्योर्ग्रामाद्बहिरासनं वाग्यमश्चेत्यर्थः । इदमुभयं गायत्रीजपार्थं, तेन लौकिकवाचो निवृत्तिर्न मन्त्रोच्चारणस्य । अनाहिताग्निविषयं च । तदन्यत्र श्रौत-होमेनास्य विरोधेन बाधः । तथा चादौ संध्ययोर्ग्रामाद्बहिर्गमनं, ततोऽर्घ्यदानं त्रिस्तीर्थादौ, ततः प्रदक्षिणकरणं, तत आसीनो वाग्यतश्च सन् उद्यन्तमस्तं यन्तमादित्यमभिध्यायन् गायत्रीजपं कुर्वन्सकलं भद्रमीप्सितमश्नुते । ध्यानप्रकारमेवाहासाविति । अस्मिन् ज्योतिर्मण्डलेय एष आदित्यो हिरण्मयः पुरुषोऽसौ मन्त्रार्थभूतो ब्रह्म जगदधिष्ठानं परं ब्रह्मेति ध्यायन् अज्ञानाज्जीवतां प्राप्तोऽनेन ध्यानेन ब्रह्माप्नोतीत्यर्थः । अत्रोभयोः प्राधान्यमिति **केचित्** । जपस्यैव तदिति तत्त्वम् ॥ **एवं नारायणोपनिषदि** 'आपः पुनंतु' 'अग्निश्च मा' 'सूर्यश्च मा' 'ओमित्येकाक्षरमित्यादि वसुरोमित्यन्तम्' 'उत्तमे इत्यादि लोकमित्यन्तं' क्रमेण मंत्रपाठेनान्यत्राविनियुक्तेन मध्याह्नसंध्याऽपि तेषां श्रौती । तैत्तिरीयाणां केषांचिन्मध्याह्नसंध्यायां 'हंसः' इति मन्त्रेणार्घ्यानुष्ठाने प्रमाणं तु वैश्वदेवसंस्थाङ्गभूतवैश्वदेवस्थालीपाकोत्तरं मध्याह्नकृत्योत्तरं देवपूजां कृत्वा वैश्वदेवः कार्य इत्यभिप्रायकं **नृसिंहपुराणम्,**

"ततोऽर्घ्यं भानवे दद्यात्तिलपुष्पजलान्वितम् । उत्थाय मूर्ध्नि पर्यन्तं हंसः शुचिषदुच्चरन् ॥

"पौरुषेण तु सूक्तेन ततो विष्णुं समर्चयेत् । वैश्वदेवं ततः कुर्यात् बलिकर्म तथैव च॥"इति ।

तथा च गायत्र्या अर्घ्यत्रयं दत्त्वा चतुर्थोऽर्घ्यः हंस इति मन्त्रेण अनुष्ठेय इति सिद्धम् । तेन देवपूजोत्तरं वैश्वदेव इति सर्वनिबन्धाः । **आश्वलायनानां** तु तमेव वैश्वदेवशेषेण कुर्यान्नास्य शेषेण वैश्वदेवं कुर्यादिति बह्वृचपरिशिष्टोक्तेरादौ वैश्वदेवस्ततो देवपूजेति । माध्यंदिनकण्वादिपञ्चदशशाखिनां वाजसनेयिनां तु श्रुतौ तत्सामान्यानुक्त्या गृह्यसूत्रे मध्याह्नस्नानोत्तरं मध्याह्नसंध्याविधानाच्च तस्या एव शास्त्रार्थानुष्ठानसिद्धिकरत्वेनावश्यकत्वं यद्यपि तथापि परिशिष्टोक्तत्वात्सायंप्रातः संध्योपासनमपि ।

तदपि विभ्राडित्या दिरहितम् । इदमेव स्मृतिस्थग्रहणे कातीययाज्ञवल्कीयमेव । एतच्छाखाध्येतृप्रसिद्धं । आश्वलायनानामपि तत्र तद्भावात् सूत्रे (आ. ३।७।३–६) "यज्ञोपवीती नित्योदकः संध्यामुपासीत वाग्यतः । सायमासीन उत्तरापराभिमुखोऽन्वष्टमदेशं सावित्रीं जपेदर्धास्तमिते आदित्यमण्डले आनक्षत्रदर्शनात् । एवं प्रातः । प्राङ्मुखस्तिष्ठन्ना मण्डलदर्शनादिति" उक्तेः, यज्ञोपवीतीत्यनुवादः । नित्योदकः स्मृत्युक्तोदककर्मा । तेन मार्जनादिकार्यमिति वृत्तिः । उत्तरापरावायव्यदिक् । अन्वष्टमदेशं स्मृत्यन्तरात्पश्चिमाभिमुखत्वेऽपि प्राप्ते तस्या योऽष्टमो भागो वायव्याः संनिहितस्तदभिमुखम् । इदं च गायत्रीजपे एव जपेदित्युक्तेरित्यर्थिकायाः संध्याद्वयमेवावश्यकं तत्त्वेन यद्यपि तथापि गृह्यपरिशिष्टेऽथाकृष्णया हंसवत्या वा त्रिः सकृद्वाऽर्घ्यमुत्क्षिपेदिति ऊर्ध्वबाहुरुदङ्मुख उदुत्यं जातवेदसं चित्रं देवानामिति सूक्ताभ्यामादित्यमुपस्थाय जपमासीनो यथेष्टकालं कुर्यादित्येवं सन्ध्याविधिर्व्याख्यात इति चोक्तेर्मध्याह्नसंध्याऽऽवश्यिका ।

एवं बौधायनानामपि । तथा च तत्सूत्रम्—"अथातः संध्योपासनविधिं व्याख्यास्यामस्तीर्थं गत्वा प्रयतोऽभिषिक्तः प्रयतो वाऽनभिषिक्तः प्रक्षालितपाणिपादः अप आचम्याग्निश्चेति सायमपः पीत्वा सूर्यश्चेति प्रातः सपवित्रेण पाणिना सुरभिमत्यब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिर्व्याहृतिभिरन्यैश्च पवित्रैरात्मानं प्रोक्ष्य प्रयतो भवति । अथाप्युदाहरन्ति । दर्भेष्वासीनो दर्भपाणिः सोदकेन पाणिनाप्राङ्मुखोऽपरिमितकृत्वः सहस्रकृत्वो वा सावित्रीमावर्तयेत्प्राणायामशो वा शतकृत्वः उभयतःप्रणवां सप्तव्याहृतिकां मनसा वा दशकृत्वस्त्रिभिश्च प्राणायामैः श्रान्तो ब्रह्महृदयेन वारुणीभ्यां रात्रिमुपतिष्ठते । 'इमं मे वरुण' 'तत्त्वायामीति' द्वाभ्यामेव प्रातः प्राङ्मुखस्तिष्ठन्मैत्रीभ्यामहरुपातिष्ठते 'मित्रस्य चर्षणी धृतो' । 'मित्रोजनान्यातयाति प्रजानन्निति' द्वाभ्या मिति प्राणायामशो वा शतकृत्वः सव्याहृतिः प्राणायामैः सावित्र्याः शतं भवति तावतः प्राणायामान् कुर्यात् । प्राणायामोऽत्र प्राणनिरोधमात्रं, सावित्रीमात्रप्रक्रमात् । उभयत इत्यादिर्दशकृत्व इत्यन्त एकः पक्षः । आदावन्ते चेति तदर्थः । एतत्पक्षत्रयस्य शक्त्यपेक्षो विकल्पः । ततो ब्रह्म हृदयेन प्रणवेन त्रीन् प्राणायामान् कृत्वा तैः श्रान्तः खिन्नो वारुणीभ्यामित्यादि । तथा च श्रुतिर्मैत्रं वाऽहर्वारुणी रात्रिरिति । यद्यप्यत्र मध्याह्नसंध्या नोक्ता तथापि संध्याहीन इत्युक्तेः शाखान्तराधिकरणन्यायेन स्मृत्युक्तं नारसिंहं वा तदावश्यकम् । छन्दोगानामप्येवं संध्यात्रयं उचितम् । उदुत्यं चित्रमित्यृग्द्वयेन चोपतिष्ठेत् । अनन्तरं—

"संध्याद्वयेऽप्युपस्थानमेतदाहुर्मनीषिणः । मध्ये त्वह्न उदये च विभ्राडादीच्छया जपेत्" ॥

इति छन्दोगपरिशिष्टात् । सायंप्रातः संध्यामुपासीत । 'उदुत्यं० चित्रम्० उद्वयं तमसस्परीति' मध्याह्नकृत्यप्रकरणे नित्यवत् संध्यामुपासीतोदुत्यं चित्रम् आयं गौरपत्ये तरणिराप्राद्याभिर्ऋग्भिरुपस्थानमिति प्रातर्गायत्रीं रविमध्यस्थितां रक्तवर्णां कुमारीमक्षमालाकमण्डलुहस्तां हंसासनमारूढां ब्रह्मदेवत्यां ऋग्वेदमुदाहरन्तीं, मध्यंदिने सावित्रीं रविमध्यस्थितां श्वेतवर्णां यौवनस्थां त्रिनेत्रां त्रिशूलदण्डडमरुहस्तां वृषभासनारूढां रुद्रदेवत्यां यजुर्वेदमुदाहरन्तीं, सायं सरस्वतीं रविमध्यस्थां श्यामवर्णां वृद्धां चतुर्भुजां शंखचक्रगदापद्मधारिणीं गरुडासनारूढां विष्णुदैवत्यां सामवेदमुदाहरन्तीति गोभिलाच्च । शौनकोऽपि संध्यात्रयमाह । तथाहि

"अथ वक्ष्ये बह्वृचानां संध्याकर्मविधिक्रमम् । त्रैवर्णिकानां सर्वेषां चतुराश्रमवासिनाम्" ॥

तुर्य आश्रमः परमहंसव्यतिरिक्तस्तस्य संध्यानिषेधात् ।

"यत्संध्यावन्दनं सर्वस्मृतिष्वत्र तथोच्यते । तत्रापामन्तिकं प्राप्य ब्रह्मसूत्रधरो भवेत् ॥
"नासिकामङ्गुलीभिश्च तर्जनीमध्यमावृते । दक्षिणेन समाकृष्य सव्येन तु विसर्जयेत् ॥
"प्रणवं व्याहृतीः सप्त गायत्रीं शिरसा सह । त्रिः पठेदायतप्राणः प्राणायामः स उच्यते" ॥

अपामन्तिकमित्युपलक्षणम् । गृहे तु प्राक्तीत्यादिना देशान्तरस्यापि विधानात् । नासिकां धृत्वा त्रिः पठेत्कुम्भके । कुम्भकेन जपं कुर्यादिति शङ्खोक्तेः । प्रणवश्चान्यत्रोक्तरीत्या दशवारम । रेचके गुणविशेषमाह,

"शनैर्नासापुटे वायुमुत्सृजेन्न तु वेगतः । न कम्पयेच्छरीरं तु स योगी परमो मतः ॥
"प्राणानायम्य विधिवद्वाग्यतः संयतेन्द्रियः । अथ संध्यामुपासिष्ये इति संकल्प्य मार्जयेत्" ॥

प्राणानायम्येत्युक्तानुवादः । मार्जनं विशिष्याह,

"तिसृभिर्मार्जनं कुर्यादापोहीति कुशोदकैः । पादे पादे क्षिपन्मूर्ध्नि प्रतिप्रणवसंयुतम् ॥
"आत्मानं प्रणवेनैव परिषिच्य जलैस्ततः । सूर्यश्चेत्यनुवाकेन प्रातः काले पिबेदपः ॥
"अग्निश्चेत्यनुवाकेन सायंकाले पिबेदपः । आपः पुनन्तु मध्याह्ने मन्त्राचमनमाचरेत् ॥
"विसृज्य दर्भानाचम्य कुशपाणिश्च मार्जयेत् । प्रणवेनैव कुर्वीत गायत्र्या प्रणवाद्यया ॥
"आपोहिष्ठेति सूक्तेन मार्जनं तु चतुर्थकम् । प्रणवादिगता संख्या मार्जने उपचर्यते ॥
"ऋगादौ प्रणवं चोक्त्वा ऋगन्ते मार्जनं ततः । उद्धृत्य दक्षिणेनैव जलं गोकर्णवत्कृतम् ॥
"निःश्वासनासिकाग्रेण पाप्मानं पुरुषं स्मरेत्" ।

दक्षिणकरेण जलं गृहीत्वा तं करं गोकर्णवत्कृतं श्वासरहितनासिकाग्रे धृत्वा पाप्मा पुरुषः स्वदेहं व्याप्य स्थित इति चिन्तयेत् ।

"ऋतं चैतामृचं वापि द्रुपदां वा जपेदृचम् । दक्षनासापुटेनैव पापात्मानमपोहयेत्" ॥

दक्षनासाग्रमार्गेण स पाप्मा जले प्रविष्ट इति चिन्तयेत् ।

"तज्जलं नावलोक्याथ वामभागे क्षितौ क्षिपेत् । विमृज्य दर्भांस्तत्रैव धृत्वा दर्भांस्ततः परम् ॥
"पाणिभ्यां जलमादाय गायत्र्या चाभिमन्त्रितम् । रवेरभिमुखस्तिष्ठन् त्रिरूर्ध्वं संध्ययोः क्षिपेत्"॥

सायंप्रातःसंध्ययोः । मन्त्रस्यापित्रिरावृत्तिः ।

"असावादित्यमन्त्रेण प्रदक्षिणमतः परम् । अपः स्पृष्ट्वा दक्षिणे तु पश्चाद्दर्भान्विसर्जयेत्" ॥

दक्षिणे हस्तेऽपः स्पृष्ट्वेत्यन्वयः ।

"मध्याह्ने तु विशेषोऽयमुपस्थानं तथाऽर्घ्यकम् । अपामञ्जलिना पूर्वमाकृष्णेनेति वै क्षिपेत्" ॥

उपस्थानं विशिष्य कार्यम् । अर्घ्यकमित्येकवचनेन त्रित्वानिवृत्तिः । पूर्वाधोक्तक्रमानिवृत्तये आह । पूर्वमिति । तेनार्घ्योत्तरमुपस्थानं ततो जप इत्यत्र विशेषः अन्ययोस्तु जपानन्तरमुपस्थानं वक्ष्यति । आकृष्णेनेत्यनेन गायत्रीनिवृत्तिः । "समाप्तौ तु कुशान्भूमौ तत्र तिष्ठन्समाहितः" । उक्तकर्मसमाप्तौ भूमौ विसृज्य ।

"धृत्वा पवित्रं संप्रोक्ष्य जपस्थानं कुशोदकैः । आधारादीन्नमस्कृत्य कुशाग्रैरासनं ततः" ॥ आधारकूर्मानन्तपृथिवीवास्तुपुरुषविश्वमायाशक्तीर्नमस्कृत्यासनं कुर्यात् ।

"बध्वा पद्मासनं वाऽपि स्वस्तिकं वा यथाविधि । दिशोऽष्टधा विभक्तायाः प्रतीच्या भागसप्तकम् ॥

"हित्वा दक्षिणतोऽन्यस्तु योऽष्टमो भाग उत्तरः । अस्याभिमुखतां प्राप्तो भूत्वा प्रयतमानसः ॥

"जपन्नासीत सावित्रीं संध्यां कृत्स्नामतन्द्रितः" ।

संध्यां तं कालम् ।

"प्रभातकाले चागत्य पुरस्तादुदकान्तिकम् । सर्वाण्युदककार्याणि सायंसंध्यावदाचरेत्" ॥

विशेषमाह—

"अपामाचमनं त्वत्र सूर्यश्चेत्यनुवाकतः । पूर्वोत्तराशाभिमुखो भूत्वा प्रयतमानसः" ॥

पूर्वोत्तरा ऐशानी। "जपंस्तिष्ठेत्तु सावित्रीं संध्यां तां सकलां ततः" ।सर्वसंध्यासु गायत्रीजपः प्राणायामत्रयोत्तरं कार्य इत्याह—

"प्राणायामत्रयं कृत्वा यथाविधि अतन्द्रितः । अहोरात्रकृतं पापं तत्क्षणादेव नश्यति ॥

"प्राणायामैर्य आत्मानं संयम्यास्ते पुनः पुनः । दशद्वादशभिर्वाऽपि चतुस्त्रिर्वा परंतप" ॥

तेन पापं नश्यतीत्यन्वयः । गायत्रीं प्रशंसति—

"ॐकारपूर्विकास्तिस्रो महाव्याहृतयस्तथा । त्रिपदा चैव गायत्री विज्ञेयं ब्रह्मणो मुखम्" ॥

प्राणायामप्रकारमाह—

"भूर्भुवःस्वरोमिति जप्त्वा व्याहृत्यासनं ततः । व्याहृतीभिर्हि विन्यस्य सावित्र्या च षडङ्गकम्" ॥ प्रणवोऽप्यत्र बोध्यः । याज्ञवल्क्यैकवाक्यत्वात् । न्यासप्रकारस्तूक्तः सावित्र्या चेति अयमवैदिक इति **गृह्यपरिशिष्टे** ।

"प्राणायामं प्राग्यैस्त्रिर्यथाविधि समाहितः । आयात्वित्यनुवाकेन सावित्रीमाह्वयेत् क्रमात्" ॥

"आयातु वरदा देवी जप्ये मे सन्निधौ भव । गायन्तं त्रायते यस्माद्गायत्री त्वं ततः स्मृता" ॥ इत्यनेन।

"ऋष्यादीनि ततः स्मृत्वा समासीनो जपेत्सदा । सायं प्रातश्च मध्याह्ने सावित्रीं वाग्यतो जपेत्" ॥

"आरम्भयज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः" । आरम्भयज्ञः कर्मरूपो यज्ञः ।

"उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः ॥

"सहस्रपरमां देवीं शतमध्यां दशावराम् । शुद्धिकामः प्रयुञ्जीत सर्वपापप्रणाशिनीम्" ॥

षडङ्गन्यासानन्तरं किंचिद्दक्तमुक्तमनुवदति, "ऋष्यादिलक्षणं ज्ञात्वा गुरुप्रोक्तेन मार्गतः" । इदं च जपाव्यवहितपूर्वमेव । उक्तक्रमानुसारात् । "षडङ्गमन्त्रैर्विन्यस्य योनिमुद्रां प्रदर्शयेत् ॥

"गायत्रीं संस्मरेद्धीमान् हृदि वा सूर्यमण्डले । कल्पोक्तलक्षणेनैव ध्यात्वाऽऽभ्यर्च्य जपेत्ततः ॥

"मनःसंतोषणं शौचं मौनं मन्त्रार्थचिन्तनम् । अव्यग्रत्वमनिर्वेदो जपसंपत्तिहेतवः ॥

"कृत्वोत्तानौ करौ प्रातः सायं चाधोमुखौ ततः। मध्ये स्तब्धकराभ्यां तु जप एवमुदाहृतः ॥

"नक्षत्रदर्शनादूर्ध्वं जपेद्वासूर्यदर्शनात्। अर्धास्तमयमारभ्य जपेदाऋक्षदर्शनात्" ॥

"तत उद्वास्य सावित्रीमुत्तमेत्यनुवाकतः"।

'उत्तमे शिखरे देवी'त्यनेन ।

"सायंप्रातरुपस्थानं कुर्यान्मन्त्रैर्यथाक्रमम् ॥

"जातवेदस, इत्येका 'तच्छंयोरावृणीमहे'। 'नमो ब्रह्मण' इत्येतां त्रिरुक्त्वाऽथ दिशो नमेत्"॥

"इमं मे वरुण तत्त्वेति सायंकाले विशेषतः। मित्रस्य चर्षणी द्वाभ्यां प्रातःकाले विशेषतः' ॥ मध्याह्नसंध्योपस्थानमाह,

"सवितुर्मण्डलं पश्यन्नुपतिष्ठेद्दिवाकरम् । ऊर्ध्वबाहुः पठेत्सूक्तमुदुत्यं जातवेदसम्" ॥

"तच्चक्षुरिति सूक्तं च हंसः शुचिषदित्यपि। एवमन्यानि सौर्याणि जपन्पश्येद्दिवाकरम्" ॥ तच्च जपात्प्राक् मध्याह्ने इत्युक्तम्।

सर्वसंध्यानुष्ठेयमाह, "आत्मपादौ तथा भूमिं सन्ध्याकालेऽभिवादयेत्"। स्पृशेत्। "नत्वा गुरून् तथा सूर्यं द्विजांश्चापि विशेषतः"इति। गुरवः पित्रादय इति। एवमन्यशाखिनामपि बोध्यम्।

अत्रेदं तत्वं, स्वस्वगृह्यानुसारेण यावदितिकर्तव्यताकांक्षकर्मकप्रयोगानुष्ठानेनैव प्रत्यवायपरिहारः फलावाप्तिश्च। प्रधानस्य स्वसूत्रोक्ताङ्गकलापेनैव आकाङ्क्षाशान्तेरन्यस्मृत्याद्युक्ताकाङ्क्षाऽभावात्। एतन्मूलकमेव—

"बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रचोदितम्। तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत्"॥ इति छन्दोगपरिशिष्टम्।

"स्वकं कर्म परित्यज्य यदन्यत्कुरुते नरः। अज्ञानादथवा लोभात्स तेन पतितो भवेत्" ॥

इति गृह्यान्तरं च। तस्मात्स्वगृह्योक्तं बह्वल्पं वा यादृशमुक्तं तत्तथैवानुष्ठेयं न तु शास्त्रान्तरापेक्षयाऽन्यथयितव्यम्। अत एव—**लौगाक्षिः**,

"ऊनो वाऽप्यतिरिक्तो वा यः स्वशाखोदितो विधिः। तेन संतनुयाद्यज्ञं न कुर्यात्पारतन्त्रिकम्"॥ इति।

यज्ञपदमुपलक्षणम्। अधिकानुष्ठानं तु फलभूयस्त्वाय। एवं च ऋग्वेदिनामपि केषांचित् आश्वलायनोक्तप्रयोगानुष्ठानेनैव तत्परिहारादि। शौनकोक्तं तु फलभूयस्त्वाय। येषां तु गृह्ये प्रधानमात्रमुक्तं नाङ्गकलापस्तत्रेतिकर्तव्यताकाङ्क्षायां स्मृत्याद्युक्ततदन्वयः। येषां तु गृह्ये स्मृत्यन्तरोक्तस्य कस्यचिदङ्गस्य निषेधस्तत्र किंचिन्निषेधद्वारा तत्स्मृत्युक्तस्यान्यस्याभिमतत्वबोधनात्तदनुष्ठेयमेव। एवं येषां गृह्ये किमपि नोक्तं तैः—

"यन्नाम्नातं स्वशाखायां पारक्यमविरोधि यत्। विद्वद्भिस्तदनुष्ठेयमत्यावश्यकमेव च" ॥ इति छन्दोगपरिशिष्टात्तदनुष्ठेयम्। अत एवोक्तमन्यत्र,

"आत्मतन्त्रेषु यन्नोक्तं तद् ग्राह्यं पारतन्त्रिकम्। विशेषाः खलु सामान्या वेदोक्ता वेदवादिभिः"॥इति

ये स्वशास्त्रे विशेषा अनुक्तास्ते खलु निश्चितं सामान्या इत्यर्थः । स च प्रकारस्तैः स्मृत्युक्तः पौराणो वा ग्राह्यः ।

तत्राद्य आह्निकेषु प्रसिद्धः । द्वितीयो **नारसिंहे**,

"दर्भेषु दर्भपाणीः सन्प्राङ्मुखः सुसमाहितः । प्राणायामांस्तु कुर्वीत यथाशास्त्रमतन्द्रितः "॥

"जपेदहरहः स्नात्वा सावित्रीं जपविद्द्विजः । अथ पुष्पाञ्जलिं क्षिप्त्वा भानवे चोर्ध्वबाहुकः "॥

"उदुत्यं च जपेन्मन्त्रं चित्रं तच्चक्षुरित्यपि । प्रदक्षिणमुपावृत्य नमस्कृत्य ततः परम् "॥ इति।

अत्र मध्याह्नसंध्यैवोक्ता । एवं सति आश्वलायनैर्मध्याह्नसंध्याया वाजसनेयिभिः सायंप्रातःसंध्ययोः परिशिष्टोक्तत्वात् प्रयोगस्य **शौनका**द्यनुसेरणाप्यनुष्ठाने न बाधकमिति तथाऽऽचारो युक्तः । एतेन संध्यात्रयमिति वाक्यं **कातीय**परम् । तेषां सा नित्या । सूत्रोक्तेः । **तैत्तिरीयाणां** तु करणे फलमकरणे प्रत्यवायाभाव इति भ्रान्तोक्तमपास्तम् । नन्वस्त्वेवं किं तु यद्यपि अहरहरिति सामान्यविधेरतिप्रसक्तं तथाऽप्युपनयनोत्तरमस्य प्रायो बहुसूक्त्या तदनन्तरमेव । अत एव स्मृतिषु ब्रह्मचारिप्रकरणे एतदुक्तिः । अत एव प्रजापतिः उपनयनमारभ्य सायंप्रातश्च कालयोरिति । एवं सति उपनयनोत्तरं कुत उपक्रम इति चेत्, तत्र तावत्तैत्तिरीयाणामाचमनमन्त्रपाठक्रमस्य स्पष्टत्वात् मध्याह्नसंध्यादित एवोपक्रमः । छन्दोगानामप्येवमुक्तक्रमात् ।

तथा च **जैमिनिः**,

"यावत् ब्रह्मोपदेशो न तावत्संध्यादिकं न च । ततो मध्याह्नसंध्यादि सर्वं कर्म समाचरेत् "॥ इति।

ब्रह्म गायत्री । ततः तदुपदेशानन्तरम् । मध्याह्नसंध्यैवादिर्यस्य तत् । अनेन तत एव सर्वकर्मारम्भः सूचितः । एवं ब्रह्मयज्ञोऽपि तस्योक्तस्तेनैव,

"अनुपाकृतवेदस्य कर्तव्यो ब्रह्मयज्ञकः । वेदस्थाने तु सावित्री गृह्यते तत्समा यतः"॥ इति।

**आश्वलायनानां तु** मध्याह्नसंध्याऽस्ततः प्राप्तत्वेऽपि शौनकीयभूरिशःसायमाद्युपक्रमदर्शनात्स्वसूत्रे च तथा तथा दर्शनात्परिशिष्टेऽपि तथैव क्रमदर्शनात् सायमाद्युपक्रमो युक्तः । एतत्पराण्येव स्मृतिवाक्यानि ।

तथाहि **प्रजापतिः**,

"प्राप्य देवीं तु गायत्रीं गुरोश्चैवानुशासनात् । संध्यात्रयं तु कर्तव्यं सायमादि यथाक्रमम्"॥ इति

**अत्रिः**,

"संध्यात्रयं न कर्तव्यं यावन्नैवोपनायनम् । उपानयदिनारभ्य सायंप्रातश्च कालयोः ॥

"मध्याह्ने च प्रकर्तव्यं यावत्प्राणविमोचनम् " । इति ।

कर्म कुर्वीतिसंध्यादिविहितोपासनादिकम् ॥ इति प्रैषार्थोत्तरम्,

"अहःशेषं ततस्तिष्ठेत्सायंसंध्यामुपास्य च । पूर्णपात्रनिधानान्तमन्वाधानादि पूर्ववत् " ॥

इति कारिका **शौनकः** संध्याप्रकरणस्थ उक्त एव ।

उपनयनप्रकरणेऽपि **सः,**

"लब्धं विज्ञाप्य गुरवे तत्पार्श्वे तन्निधाय च । तत्संनिधावचपलस्तिष्ठेदादिवसक्षयात् ॥

"सायं संध्याविधिं कृत्वा अथोपनयनानलम् " । इति ।

"अथास्तमितसंध्यां च अग्निकार्यं च कारयेत् । तत्र ब्रह्मौदनं कुर्यात्पश्चात् अग्निं विसर्जयेत् "॥

इति **संग्रहकारः।**

**वाजसनेयिनां** तु सायंप्रातः संध्ययोस्ततः प्राप्तावपि मध्याह्नप्रकरणे स्नानविध्युत्तरमुत्तीर्य धौते वाससी परिधाय मृदोरू करौ प्रक्षाल्याचम्य 'त्रिराचम्यासूनुपुष्पाण्यम्बुमिश्राण्यूर्ध्वं प्रक्षिप्ये' त्यादिना **कात्यायनेन पारस्करेण** वा स्पष्टमभिधानात्तस्या मुख्यत्वात्कालप्राप्तत्वाच्च त्यागे माना-भावादनर्हः कर्मणामित्यादिना संध्योत्तरकर्मणि कृतसंध्यस्यैवाधिकार इत्युक्तत्वाच्च मध्याह्नसंध्यादिक्रमस्यैव युक्तत्वम् । न चोपनयनस्य भोजनोत्तरं विहितत्वान्मध्याह्नसंध्यायास्ततः प्राक् स्मृत्यादिषूक्तत्वात्कथं मध्याह्नसंध्या । न चैवं सायंसंध्याऽपि न स्यात् ।

"उपवासवता कार्यं सायं संध्याहुती विना" । इति स्मृतेरिति वाच्यम् । वैधभोजनस्यादोषत्वात् । आदौ पुरोडाशादिभक्षणे माध्याह्नकर्मविलोपापत्तेः । अत एव **विश्वनाथदीक्षितीये** उपनयनप्रकरणे एवमेव संध्यात्रयप्रयोगो लिखितः । 'सप्तत्रिंशदाहुत्यनन्तरं ततो ब्रह्मचारी मध्याह्नसंध्यावन्दनं करोति' । तत्र विधिः,

"अथाचम्य कुशैर्युक्ते आसने समुपस्थितः । करसंपुटकं कृत्वा संध्यां नित्यं समाचरेत् " ॥ इत्युक्तः ।

यत्तु वचनम्,

"उपानयेऽह्नि कर्तव्यं सायंसंध्ये उपासनम् । आरभेत् ब्रह्मयज्ञं तु मध्याह्ने तु परेऽहनि " ॥ इति ।

अयं पाठः **प्रयोगपारिजाते विधानपारिजाते निर्णयसिंधौ** च । **प्रयोगदर्पणे** तदनुवादत्वेन सन्ध्या उपेति पाठः । **संस्कारगणपतौ वीरमित्रोदये** च संधरूपेति पाठः स्मृत्यन्तरत्वेन **कृष्णभट्टीये** तु,

"उपानयेऽह्नि सायं स्यात्संध्यायाः समुपक्रमः । आचरेद् ब्रह्मयज्ञं तु मध्याह्ने तु परेऽहनि " ॥

इति **आपस्तम्बीयत्वेन** पाठः । तत्रेदं प्रतिभाति । तत्र तावदन्त्योक्तं निर्मूलं तत्स्मृता-विदानीं नोपलम्भात् । अन्यदीयत्वे तु आश्वलायनपरमस्तु । तथेतरपक्षेषूपान्त्यभिन्नेषु अपि इदं निर्मूलम् असंबद्धत्वात् । समूलत्वे त्वित्थं योज्यम्, सायमिति भिन्नं पदं तद्दिने सायमुपासनं होमार्थ-मग्नेः समीपे आसनं ग्रामाद्बहिः समीपे आसनं वा कर्तव्यं संध्ये मध्याह्नसायंसंध्ये च कर्तव्ये । अत एव मध्याह्नसंध्यावत् ब्रह्मयज्ञस्याप्यार्थिकप्राप्तावाह आरभेदिति । तथा च मध्याह्नसंध्यात एवोपक्रम इति **जैमिनीथैक**वाक्यतैव । एतेनेदं शाखान्तरविषयमिति **प्रयोगपारिजातप्रयोगदर्पणोक्तं,** विकल्पस्तु युक्त इति **निर्णयसिंधू**क्तम् , उभयानुवादत्वेन **विधानपारिजातो**क्तम् , आद्यानुवादत्वेन **संस्कार-गणपत्युक्तं** चापास्तम् । उक्तयुक्तेरुत्तरार्धासंगत्यापत्तेश्च । अत एव 'उपानयेऽह्नि मध्याह्नसायंसन्ध्यो-रुपासनम्' इति पाठं युक्ततरं पश्यामः । **एवं** चेदमपि प्रागुक्तविशेषपरमेव । उपान्त्यपाठे तु अधिकर-णस्य संबन्धत्वेन विवक्षया षष्ठी । 'तत्राग्निकार्यं कर्तव्यं तदारम्भस्तदादितः' । ब्रह्मयज्ञारम्भो द्वितीय-

मध्याह्नादित इत्येव वचनार्थः । संध्यायाश्चैवेव नेति सर्वथा तत्रापि प्रागुक्तसकलग्रन्थासंगतिरेवेति । एतेन सामान्यतो मध्याह्नसंध्यादिकं सर्वं कार्यमिति **प्रयोगपारिजातप्रयोगदर्पणसंस्कारकौस्तुभोक्तं**, तथा सामान्येन **कृष्णभट्टीये** सायंसन्ध्यादि सर्वं कार्यं न मध्याह्नसंध्यादीत्युक्तं, तथैवोभयानुवादत्वेन **प्रयोगरत्ने नारायणभट्टोक्तं** चापास्तम् । यत्तु **संस्कारामृते सिद्धेश्वरभट्टीये**ऽत्रोपनयनादिने एव ऋक्शाखिभिर्मध्याह्नसायाह्नयोः संध्याद्वयं कार्यमन्यैस्तु सायंसंध्यामात्रं ब्रह्मयज्ञस्तूत्तराहप्रभृति सर्वैः कार्य इति **प्रयोगपारिजाते, कृष्णभट्यां** तूपनयनदिने ऋक्शाखिभिर्मध्याह्नसंध्या न कार्येत्युक्तम्, एतन्मतद्वयं **तातचरणै**रेव **द्वैतनिर्णयपरिशिष्टे** व्यवस्थापितमिति नेह प्रपञ्चितामिति । तन्न । प्रागुक्तसकलविरोधात् । ययोरनुवादस्तत्र तथापाठाभावाच्च । अत एव **गदाधरे**णापि भाष्ये सामान्यत एवोभयोरनुवादः कृतः । एवं सति आनन्दकाननस्थसकलशिष्टसमाचारोऽप्यनुगृहीतो भवति । **हरिहरभाष्ये विट्ठलदीक्षितीये संस्कारनृसिंहे गंगाधरपद्धतौ काशीदीक्षितीये वासुदेवदीक्षितीये** च मध्याह्नसंध्यानुक्तिस्तूपनयनप्रकरणे सूत्रानुक्तत्वात्कर्म कुर्वीति प्रैषप्राप्तत्वाच्च । न चैवं भाष्यादौ तत्रतत्रानुक्तसायंसंध्योल्लेखोऽपि किमर्थमिति वाच्यम् । अग्निकार्योत्तरं तदिति भ्रमनिवृत्त्यर्थत्वात् । तस्य चोक्त एवाशयः । एवमेव **रेणुकार्येण** गृह्यकारिकायामुपनयनप्रकरणे उक्तम् । तथाहि सोऽनुशास्ति बटुं ततः ।

"अपोशनान्तकैर्ब्रह्मचरणार्थैश्च सप्तभिः । प्रैषवाक्यैरिमान्याह प्रतिप्रैषं बटुः क्रमात् ॥"

इत्यादि पूर्वमुक्त्वा गायत्र्युपदेशाग्निकार्याभिवादनभैक्षचरणान्युक्त्वाऽहःशेषं स्थितिमुक्त्वा तन्नियमशासनमध्येऽक्षारालवणाशीन्याद्युक्त्वा—

"सायंप्रातस्त्वग्निकार्यं तत्संध्योपासनादनु । कर्तव्या गुरुशुश्रूषा स्वाध्यायस्याविरोधतः ॥

"सायंप्रातश्च भिक्षेत स्थित्यर्थं न गुरोर्गृहे ।"

इत्याद्युक्ताशयेनोक्त्वा प्रायश्चित्तान्युक्त्वा शौचाचारादिशिक्षामुक्त्वाऽस्तमिते संध्यामनुक्त्वा समिदाधानं ततो वाग्विसर्गस्ततो भैक्षाशनमुक्त्वा—

'एवमेवान्वहं कार्यमधिकार्यधुनोच्यते' । इत्युक्तम् ।

ततः पितैवोपनयेदित्यादितदर्थत इत्यन्तेन सप्रपञ्चमुक्त्वा—

"एवमेवोपनीतः सन्स्वधर्ममनुतिष्ठति । स्नानं संध्याऽग्निकार्यं च वेदस्याध्ययनं ततः ॥

"संध्या रवेरुपस्थानं ब्रह्मयज्ञोऽथ तर्पणम् । पुरुषार्चा नमस्कारो भैक्षभुक्तिर्गुरोः स्थितिः ॥

"सायंसंध्या अग्निकार्यं नमस्कारोऽथ भिक्षणम् । भोजनं सर्वमित्येतत्कुर्यादीश्वरतुष्टये ॥"

इत्यनेनैवमेवान्वहं कार्यमित्यस्य विवरणं कृतमिति । द्वितीयदिनादिकृत्यमिदम् । तत्र पूर्वदिने मध्याह्नसंध्याया अभावे एवमेवेत्यस्यासंगतिः स्पष्टैव । प्रातः संध्या तु बाधान्न । पूर्वत्र ब्रह्मयज्ञो वचनाभेति बोध्यम् । यत्तु **गदाधरभाष्ये** "तस्मात् ब्रह्मयज्ञोऽनिर्दिष्टकालोऽपि नृयज्ञात्पूर्वमेवेति **कर्काचार्याः** अतो नित्यस्नानसूत्रस्यार्षेयत्वे मूलं मृग्यमिति" । तन्न । कर्कप्रभृति त्वत्सहितभाष्यकाराणां तत्सत्त्वे मानत्वात् । तत्र कर्कसत्त्वमानं **मयूखा**द्युक्तिरेव । कातीयानामेतत्सूत्रात्सूर्याभिमुखतैव

प्रवाहाभिमुखता त्वन्येषामिति कर्क इति हि तत्रोक्तम् । किंच तस्य तत्त्वे मुनेर्न्यूनतापत्तिस्तदीयानां तथाऽनुष्ठानविलोपापत्तिश्च । सकलनिबन्धकाराणामज्ञानकल्पनापत्तिश्च । किंच तस्यान्य एवार्थः । इत्थं हि तदुक्तिः । हंतकाराच्च पूर्वं ब्रह्मयज्ञावसरः नृयज्ञो हि हंतकारादि आस्वापात्, रात्रावपि ह्यतिथिपूजा स्मर्यते, अतिथिं प्रकृत्य नास्यानश्नन् गृहे वसेदिति । तस्मादित्यादेः अयमाशयः तस्य "अथातः पञ्चमहायज्ञाः" इत्युपक्रम्य यद्यपि देवयज्ञभूतयज्ञपितृयज्ञनृयज्ञाश्चत्वार उक्ताः तथापि पञ्चग्रहणात्पञ्चमो ब्रह्मयज्ञः । पञ्चैव महायज्ञा इत्युपक्रम्य भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो देवयज्ञो ब्रह्मयज्ञ इति श्रुतेः । एवं चार्थात्सोऽन्ते प्राप्तः । इतोऽपि तस्यार्थैयत्वमेव । अन्यथा चाग्रे तदनुक्त्योपक्रमासंगतिः स्पष्टैव । एवं ततस्तर्पणात्प्राक् प्राप्तः ।

"स चार्वाक् तर्पणात्कार्यः पश्चाद्वा प्रातराहुते । वैश्वदेवावसाने वा नान्यत्रर्ते निमित्ततः ॥"

इति **कातीयात्**प्रातर्होमानन्तरमपि प्राप्तो यद्यपि तथापि पाठस्य विधानार्थत्वं न क्रमार्थत्वम् ।

"देवेभ्यस्तु हुतादन्नाच्छेषाद् भूतबलिं हरेत् ।" इति **याज्ञवल्क्योक्तेः** (आचारे १०३ श्लो. )।

तथा चोक्तरीत्या सर्वान्तेऽसंभवेन सामीप्यस्य तत्र सत्त्वेन येननाव्यवधानन्यायेन च सत्यवदनवान्दीक्षितोऽप्यातपादीनि न कुर्यात्प्रवर्ग्यवांश्चेदिति पूर्वप्रक्रमात्प्रातर्होमादनन्तरादिकालत्रयान्यतमविहितस्य ब्रह्मयज्ञस्य साग्नेरत्र नियमार्थं पञ्चग्रहणम् । स्पष्टं चेदं **वैद्यनाथीये** । एवं च सोऽनिर्दिष्टकालोऽपि अनियतकालोऽपि नृयज्ञात्पूर्वमेवेति नियम्यते इति भाष्यार्थः । निर्दिष्ट इति पाठस्तु सुगम एव । एवमनिर्दिष्टकालेऽपीति सप्तम्यन्तपाठेऽपीति सर्वथा न ततस्तस्य तत्त्वलाभः । तथा च तत्कालत्रयं निरग्निविषयम् । तेषां व्यवस्था त्वित्थम् ।

अध्यापनं ब्रह्मयज्ञः । "यश्च श्रुतिजपः प्रोक्तो ब्रह्मयज्ञस्तु स स्मृतः" । इति

ततःपूर्वंच्छन्दोगपरिशिष्टाच्छ्रुतिजरूपः । स तर्पणात्प्राक् । अत एवैतदनन्तरमेव **कात्यायनेन** तर्पणमुक्तम् । 'अध्यापनरूपब्रह्मयज्ञकालः पश्चाद्वेति' । ग्रहणाध्ययनरूपब्रह्मयज्ञस्याप्ययमेव कालः । "गुरावध्ययनं कुर्वञ्छुश्रूषादि समाचरेत् ।"

स सर्वो ब्रह्मयज्ञः स्यादिति **भट्टभाष्य**धृतवचनात्सोऽपि ब्रह्मयज्ञः। वामदेव्यगानरूपस्तु स वैश्वदेवावसाने इति । स्पष्टं चेदं तद्भाष्ये । अन्यत्रर्ते इति जलस्थतर्पणादिनिमित्तं विनेत्यर्थः । एतेषां च संभवासंभवाभ्यां समुच्चितानामनुष्ठानम् एकैकस्य वा नित्यश्राद्धतर्पणपित्र्यबलिरूपाणां पितृयज्ञानामिव ।

"यदि स्यात्तर्पणादर्वाक् ब्रह्मयज्ञः कृतो न हि । कृत्वा मनुष्ययज्ञं तु ततः स्वाध्यायमारभेत्" ॥
इति **कौर्मं** तु शाखान्तरविषयम् ।

तदुक्तं **रेणुककारिकायां,**

"निर्णेजनस्यापामन्ते ब्रह्मयज्ञं समारभेत् । ततो मनुष्ययज्ञः स्याद्धन्त तेऽस्मामिति क्रमः ॥
"भाष्यकारमतादेव तथा कात्यायनस्मृतेः । यत्तु कूर्मपुराणोक्तं तदन्येषां तु शाखिनाम्॥" इति।

एतेन सामान्यतः 'प्रातर्होमानन्तरं वा तर्पणात्पूर्वं वा वैश्वदेवावसाने वा ब्रह्मयज्ञः' इति **हरिहरोक्तं,** 'कालान्तरेऽपि जपयज्ञः स्मर्यते' **इति गोपीनाथोक्तं,** श्रुतौ तथोपक्रम्य पाठात्तत्रै-

वात: काण्वमाध्यंदिनीयैस्तत्रैवानुष्ठेय इत्यन्यभाष्योक्तं, जीवत्पितृकाविभक्तभ्रातृकविषयकमन्तर्पणात्प्रागित्यन्योक्तं चापास्तमिति शिवम् ।

इति संध्याप्रकरणम् ॥

---

## अथ काम्यजपः ।

**आचार्यः,**

"वैष्णवैर्वारुणैः सौरैः पावमानीभिरेव च । क्षपयेदाशु पापानि कामांश्च निखिलान् लभेत् ॥

"रौद्रैर्विशेषतो घोरान् ब्रह्महत्यादिकानपि । क्षपयेत्पौरुषेणापि कामांश्चात्यन्तदुर्लभान् ॥

"शतरुद्रेण जप्येन चास्यवामीयकेन वा । मोक्षं गच्छत्यसंदेहं किमन्यदधिकं ततः" ॥ इति ।

**ऋग्विधाने,** 'विष्णोर्नुकं जपन्सूक्तं विष्णुरेव भविष्यति' ।

**वसिष्ठः,**

"तमुष्टुहीत्यृचं वाऽपि सद्योजातादिपञ्चकम् । पञ्चाक्षरं महामन्त्रं जपेदनुदिनं सुधीः ॥

"आयुरारोग्यमैश्वर्यं सन्ततिं पूर्णजीवनम् । संपत्समृद्धिं सौख्यं च लभते शिवशासनात्" ॥

**स्नानकाले जप्यविशेषानाह व्यासः,**

"द्रुपदा नाम गायत्री यजुर्वेदे प्रतिष्ठिता । सकृदन्तर्जले जप्त्वा ब्रह्महत्यां व्यपोहति" ॥

द्रुपदा गायत्री चाघमर्षणप्रकरणे अन्यत्रोदाहृता ।

"द्रुपदादिति वा स्नायात् त्र्यम्बकमिति वा पुनः । जम्बुकायेति वा पुनः इति पाठान्तरम् ।

"पुण्यानि च स्मरेत्तीर्थान्युशना मुनिरब्रवीत्" ॥ इत्यन्यत्र ।

**गौतमः** "अपि वा गायत्रीं पच्छोऽर्द्धर्चशः समस्तामपि त्रिरन्तर्जले जपन्सर्वस्मात्पापात्प्रमुच्यते अपि वा प्रणवं त्रिरन्तर्जले जपन्सर्वस्मात्प्रमुच्यते" ।

**कौर्मेऽपि** इदं स्पष्टम् । विस्तरोऽन्यत्र बोध्यः ॥

## अथ प्रसङ्गाद्गायत्रीविषयः प्रपञ्च्यते ।

ॐ नमस्कृत्य भगवान् याज्ञवल्क्यः स्वयंभुवं परिपृच्छति । त्वं ब्रूहि भगवन् गायत्र्या उत्पत्तिं श्रोतुमिच्छामि ब्रह्मज्ञानोत्पत्तिप्रकृतिं परिपृच्छामि । ब्रह्मोवाच । प्रणवेन व्याहृतयः प्रवर्त्तन्ते तमसस्तु परं ज्योतिः कः पुरुषः स्वयंभूर्विष्णुरिति हन्तास्वप्स्वङ्गुल्या मन्थयते मथ्यमानात्फेनो भवति फेनाद् बुद्बुदो भवति बुद्बुदादण्डो भवति अण्डादात्मा भवति आत्मन आकाशो भवति आकाशाद्वायुर्भवति वायोरग्निर्भवति अग्नेरोंकारो भवति ओंकाराद्व्याहृतिर्भवति व्याहृत्या गायत्री भवति गायत्र्याः सावित्री भवति सावित्र्याः सरस्वती भवति सरस्वत्या वेदा भवन्ति वेदेभ्यो ब्रह्मा भवति ब्रह्मणो लोका भवन्ति तस्माल्लोकाः प्रव-

र्तन्ते चत्वारो वेदाः साङ्गाः सोपनिषदः सेतिहासाः सर्वे ते गायत्र्याः प्रवर्तन्ते यथाऽग्निर्देवानां ब्राह्मणो मनुष्याणां मेरुः शिखरिणां गङ्गा नदीनां वसन्तः ऋतूनां ब्रह्मा प्रजापतीनामेवमेवासो मुख्या गायत्र्याः गायत्रीछन्दो भवति । किं वै भूः किं भुवः किं स्वः किं महः किं जनः किं तपः किं सत्यं किं तत् किं सवितुः किं वरेण्यं किं भर्गः किं देवस्य किं धीमहि किं धियः किं यः किं नः किं प्रचोदयात् । भूरिति भूर्लोको भुव इति भुवर्लोक इत्यादि ।

**कौर्मे**ऽप्युक्तं,

"गायत्री चैव वेदानां तुलयाऽतोलयत्प्रभुः । एकतश्चतुरो वेदान् गायत्रीं च तथैकतः ॥

"पुराकल्पे समुत्पन्ना भूर्भुवः स्वः सनातनाः । महाव्याहृतयस्तिस्रः सर्वाशुभनिबर्हणाः ॥

"प्रधानं पुरुषः कालो विष्णुब्रह्ममहेश्वराः । सत्त्वं रजस्तमस्तिस्रः क्रमाद् व्याहृतयः स्मृताः ॥

"ओंकारस्तत्परं ब्रह्म सावित्री स्यात्तदक्षरम् । एष मन्त्रो महायोगः गायत्र्याः समुदाहृतः" ॥

## अथ गायत्र्याः शापोद्धारः ।

"गृहस्थो ब्रह्मचारी च प्रणवाद्यामिमां जपेत् । अन्ते यः प्रणवं कुर्यान्नासौ सिद्धिमवाप्नुयात्"

वसिष्ठशापमोचनमन्त्रस्य ब्रह्मविष्णुरुद्रा ऋषयः शिरसि अनुष्टुबादिच्छन्दांसि मुखे त्रयीमूर्तिर्देवता हृदये, वसिष्ठशापविमोचने वि० । ॐ ब्रह्मणे हृदयाय० । ॐ विष्णवे शि० । ॐ रुद्राय क० । ॐ वायवे अस्त्राय फट् । ॐ आवायव्यया आह्वये । ॐ वायव्यया हरोऽसि पाप्मानं मे विद्धि ब्रह्मण्ये शाश्वते कर्मदायिनि भगवति गायत्रि वसिष्ठशापान्मुक्ता भव ।

अजरे अमरे चैव ब्रह्मलोके महीयते । ॐ तत्पुरुषाय० यात् । योनिमुद्रां प्रदर्श्य० वसि० मुक्ता भव ।

अस्य श्रीब्रह्मशापविमोचनमन्त्रस्य प्रजापतिर्ऋषिः गायत्रीछन्दः भुक्तिमुक्तिप्रदा ब्रह्मशापविमोचनी गायत्री शक्तिर्देवता ब्रह्मशापवि० वि० । ॐ गायत्रीं ब्रह्मेत्युपासीत यद्रूपं ब्रह्मविदो विदुः तां पश्यन्ति धीराः सुमनसो वाचमग्रतः ॐ भगवति ब्रह्मशापाद्विमुक्ता भव ।

ॐ अस्य श्रीविश्वामित्रशापविमोचनमन्त्रस्य नूतनसृष्टिकर्ता विश्वामित्र ऋषिः कामदुघा देवी गायत्रीछन्दः भगवती शापविमोचनी सावित्री शक्तिर्देवता विश्वामित्रशापविमोचनार्थे वि० । ॐ गायत्रीं भजामहे सुमुखीं विश्वगर्भां यदुद्भवा देवाश्चक्रिरे विश्वसृष्टिं, तां कल्याणीं सृष्टिकरीं प्रपद्ये यन्मुखान्निःसृतोऽखिलो वेदगर्भः । विश्वामित्रशापाद्विमुक्ता भव ।

परे तु अस्य श्रीगायत्र्याः शापानुग्रहविमुक्तिमन्त्रस्य वसिष्ठ ऋषिः परमात्मा सविता देवता जगती छन्दः त्रिपदागायत्र्या वसिष्ठशापविमोक्षार्थे गायत्रीप्रसादसिद्ध्यर्थे जपे विनियोगः । ॐ आपोमोषधीर्हिꣳ सीर्धाम्नोधाम्नो राजंस्ततो वरुण नो मुञ्च । यदाहुरघ्न्या इति वरुणेति शपामहे ततो वरुण नो मुञ्च । आवायव्ययावायव्य ॐ वायव्ययावायव्ययो वायव्यावायव्य ॐ हरोऽसि पाप्मानं मे विद्धि ॐ ऐं सूर्याय नमो ब्रह्मण्ये शाश्वते कर्मदायिनि विष्णुदेवते जगत्प्रसूतिकिन्निले सवित्रे भास्वते नमस्तन्नो ब्रह्म प्रचोदयात् । ऐं बीजं ह्रीं शक्तिः क्लीं कीलकं सूं जीवः ।

"ब्रह्मेशविष्णुजननि परं ज्योतिर्मयि परे । मोक्षैकफलदे देवि योगिनां हृदये स्थिते" ॥

"अहो देवि महादेवि द्विव्यसंध्ये च गायत्रि । अजरे अमरे चैव ब्रह्मयोने नमोऽस्तु ते ॥

"योनिमुद्रां प्रदर्श्य वसिष्ठशापात्त्वं मुक्ता भव ।"

एतदनन्तरं जपं कृत्वा जपान्ते गायत्र्यै नम इति त्रिवारम् इन्द्रादिभ्यो नमः आकाशेऽनन्ताय नमः पाताले पृथिव्यै नमः मध्याह्ने ॐ संवर्गोऽसि पाप्मा० ह्रीं सूर्याय नमः । ब्रह्मण्ये इत्यादि पूर्ववत्

"सदाशिवाय विद्महे वामदेवाय धीमहि । तन्नो रुद्रः प्रचोदयात्" ।

"बहुरूपे महादेवि दिव्यसंध्ये च सावित्रि । अजरे अमरे चैव रुद्रयोने नमोस्तु ते" ॥

योनिं० भव । सायंकाले उद्वर्गोऽसि पाप्मानं० ॐ क्लीं सूर्याय० भास्वते नमः ।

"चक्रपाणये विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात्" ।

ऐं बीजं क्लीं कीलकं ह्रीं शक्तिः सं जीवः

"अहोदेवि महादेवि दिव्यसंध्ये सरस्वति । अजरे अमरे चैव विष्णुयोने नमोऽस्तु ते" ॥

शेषं तथैवेति वसिष्ठादिशापानुग्रह इत्याहुः ।

परे तु अर्घ्यदानोत्तरं गायत्र्याः पुनः प्रवेशनार्थमुपसंहरणे विनियोग इत्युक्त्वा अङ्गुष्ठहृदयादि-षडङ्गं विधाय । आवायव्ययावायव्य ओंवायव्ययावायव्य ओं योवायव्ययावायव्य । उद्वर्गोऽसि पाप्मानं मे विद्धि हृदि संतुष्ट । रवोग्ज्यों रवोऽहं हंसः सोऽहमर्कमर्कमहं ज्योतिरर्कज्योतिरहं शिवः । आत्मज्योतिरहं विष्णुः सर्वज्योतिरसोऽस्म्यहम् । उद्यन्तमस्तं यन्तमादित्यमभिध्यायन्कुर्वन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुतेऽसावादित्यो ब्रह्मेति ब्रह्मैव सन्ब्रह्माऽप्येति य एवं वेद इत्युक्त्वा भूः पुरुषं तर्पयामीत्यादितर्पणमुक्तम् ।

ततो ब्रह्मशापविमोचनमन्त्रस्य निग्रहानुग्रहकर्ता प्रजापतिर्ऋषिः ब्रह्मशापविमोचनी गायत्री शक्तिर्देवता कामदुघाऽनुष्टुप्छन्दः ब्रह्मशापविमोचनार्थे जपे विनियोगः । गायत्रीं भजामहे सुमुखीं विश्वगर्भां यदुद्भवा देवाश्चक्रिरे विश्वसृष्टिं, तां कल्याणीं सृष्टिकरीं प्रपद्ये यन्मुखान्निःसृतोऽखिल-लोकवेदगर्भः । ॐ गायत्री ब्रह्मोपासितं रूपं ब्रह्मविदो विदुस्तां पश्यन्ति धीराः सुमनसो वाचमग्रतः । ब्रह्मशापाद्विमुक्ता भव ।

ॐ अस्य श्रीविश्वामित्रशापविमोचनमन्त्रस्य नूतनसृष्टिकर्ता विश्वामित्र ऋषिः भुक्तिमुक्ति-प्रदा विश्वामित्रदीप्ता गायत्री शक्तिर्देवता वाग्देहिनी गायत्री छन्दः विश्वामित्रशापविमोचनार्थे जपे विनियोगः । ॐ सावित्रीं भजामहे सुमुखीं विश्वगर्भां यदुद्भवा देवाश्चक्रिरे विश्वसृष्टिं, तां कल्याणीं सृष्टिकरीं प्रपद्य यन्मुखान्निःसृतोऽखिललोकवेदगर्भः । ॐ गायत्रीं रुद्रोपासितं रूपं ब्रह्मविदो विदुस्तां पश्यन्ति धीराः सुमनसो वाचमग्रतः । विश्वामित्रशापाद्विमुक्ता भव ।

ॐ अस्य श्रीवसिष्ठशापविमोचनमन्त्रस्य शापानुग्रहकर्ता वसिष्ठ ऋषिः वसिष्ठानुग्रहकर्त्री गायत्री शक्तिर्देवता वसिष्ठोद्भवा गायत्री छन्दः । वसिष्ठशापविमोचनार्थे जपे विनियोगः । ॐ

नसानीचांमेष्वग्निवृतोधियांसः । ध्यायन्ति विष्णोरायुधानि बिभ्रत तेजसः कृतासोपरमुश्वत शश्वत् । ॐ गायत्रीमासेदुरमुञ्च धाम । ॐ वासुदेवाय विद्महे नारायणाय धीमहि । तन्नो विष्णुः प्रचोदयात् ।

"अहो देवि महादेवि दिव्यसंध्ये सरस्वति । अजरे अमरे चैव ब्रह्मयोने नमोऽस्तुते ॥
"ब्रह्मण्ये शाश्वते देवि त्रिसन्ध्ये विष्णुसंविते । जगत्सवित्रि मश्वते सवित्रे भास्वते नमः "॥

वसिष्ठशापाद्विमुक्ता भवेत्याहुः ।

ॐ अस्य श्रीगायत्रीमन्त्रस्य विश्वामित्र ऋषिः वाग्दोहा गायत्री छन्दः विश्वामित्रानुगृहीता गायत्री शक्तिर्देवतातत्सवितुः० बीजं भर्गो० शक्तिः धियो० कीलकं विश्वामित्रशापमोचनार्थे जपे विनियोगः । गायत्रीं भजाम्यग्निमुखीं विश्वगर्भां यदुद्भवा देवाश्चक्रिरे विश्वसृष्टिम् । तां कल्याणीं सृष्टिकरीं प्रपद्ये यन्मुखान्निःसृतोऽखिललोकवेदगर्भः ।

ॐ अस्य श्री गायत्रीमन्त्रस्य श्रीशुक ऋषिः अनुष्टुप् छन्दः देवी गायत्री देवता शुक्रशापविमोचनार्थे जपे विनियोगः । सोऽहमर्कमहं ज्योतिरर्कज्योतिरहं शिवः । आत्मज्योतिरहं शुक्रः सर्वज्योतिरसोऽस्म्यहम् । शुक्रशापाद्विमुक्ता भव ।

ॐ अस्य श्रीब्रह्मशापविमोचनमन्त्रस्य ब्रह्मा ऋषिः कामदुघा गायत्री छन्दः भुक्तिमुक्तिप्रदा ब्रह्मानुगृहीता गायत्री शक्तिर्देवता तत्सवितुर्वरेण्यमिति बीजं भर्गो देवस्य धीमहि इति शक्तिः धियो यो नः प्रचोदयादिति कीलकं ब्रह्मशापविमोचनार्थे जपे विनियोगः । गायत्री ब्रह्मेत्युपासीत यद्रूपं ब्रह्मविदो विदुः । तां पश्यन्ति धीराः सुमनसो वाचमग्रत इति ।

ॐ अस्य श्रीवसिष्ठशापविमोचनमन्त्रस्य वसिष्ठ ऋषिः विश्वोद्भवा गायत्री छन्दः वसिष्ठानुगृहीता गायत्री शक्तिर्देवता ॐ त० बीजं भर्गो० शक्तिः धियो० कीलकं वसिष्ठशापमोचनार्थे जपे वि० । सोऽहमर्कमहं ज्योतिरर्कज्योतिरहं शिवः । आत्मज्योतिरहं शर्वः सर्वज्योतिरसोऽस्म्यहम् ।

"अचलममलवर्णं वर्णरूपादिहीनम् । अखिलनिगमगुह्यं गुह्यमेकं सुसूक्ष्मम् ॥
"अमलममलतत्त्वं देवि पश्यन्ति ये माम् । हृदयकमलमध्ये जीवमुक्ता भवन्ति " ॥

इति कश्चिदेवमाहुः ।

---

## अथ छन्दऋष्यादि ।

"गायत्र्याः संप्रवक्ष्यामि देवर्ष्यादि क्रमेण तु । अक्षराणां च विन्यासं तेषां चैव तु देवताः ॥१॥
"जप्ये यथा विधा कार्या यथा विधा च साऽर्चने । होमे यथा च कर्तव्या यथार्थं चाभिचारके॥२॥
"यत्फलं जपहोमाद्यैः यथावत् लभ्यते तु सा । ध्यातव्या च यथा देवी तथावक्ष्ये निबोधत ॥ ३ ॥
"गायत्री तु परं तत्त्वं गायत्री परमा गतिः । सर्वामरैरियं ध्याता सर्वं व्याप्तं तया जगत् ॥ ४ ॥
"उत्पद्यते त्रिपादाद्याः पुनस्तस्यां विशेदिदम् । गायत्री प्रकृतिर्ज्ञेया ॐकारः पुरुषः स्मृतः ॥५॥
"तस्यां पुरुषसंयोगाज्जगत्सर्वं प्रवर्तते । पादास्त्रयस्त्रयो वेदास्तेषु तत्त्वाक्षराणि च ॥ ६ ॥

''आद्याय चैकं प्रथमं तु पादमृग्भ्यो द्वितीयं तु तथा यजुर्भ्यः ।
''साम्नस्तृतीयं तु तथाऽभवत्सा तां विद्धि देवीं स्वयमेव सर्गे ॥ ७ ॥
''दैवत्यमस्यां सविता सुरार्च्यः छन्दोऽपि गायत्रमभूत्परस्याम् ।
''विश्वस्य मित्रो द्विजराजपूज्यो मुनिर्नियोगस्तु जपादिके तु ॥ ८ ॥
''अस्यां तु तत्त्वाक्षरविंशतिस्तु चत्वारि पादत्रितयं च देव्याम् ।
''भूरादिकाभिस्तिसृभिः प्रयुक्तं सोंकारमेतद्वदनं परस्याम् ॥ ९ ॥
''केचिद्धुताशं वदनं वदन्ति सावित्रिदेव्याः श्रुतितत्त्वविज्ञाः ।
''द्वयं च वक्त्रं सकलामराणामित्येतया व्याप्तमशेषमेतत् ॥ १० ॥
''भूरादिकेन त्रितयेन पादं पादं च वेदत्रितयेन चास्याः ।
''प्राणादिकेन त्रितयेन पादं पदैस्त्रिभिर्व्याप्तमशेषमस्याः ॥ ११ ॥
''यस्तुर्यमस्य द्विज वेत्ति पादं स वेत्ति विद्वान् परमं परं च ।
''व्याप्तिः परस्याः सकलाऽपि चैषा यो वेत्ति चैनां स तु चित्सुखः स्यात् ॥ १२ ॥
''चतुर्विंशतिरेवास्यास्तैर्हि व्याप्तमिदं जगत् । गायत्रीं यो न जानाति ज्ञात्वा नैवमुपासते ॥१३॥
''नामधारकमात्रोऽसौ न विप्रो वृषभो हि सः । किं वेदैः पठितैः सर्वैः सेतिहासपुराणकैः ॥१४॥
''साङ्गैः सावित्रिहीनेन न विप्रत्वमवाप्यते । गायत्रीमेव यो ज्ञात्वा सम्यगभ्यसते पुनः ॥ १५ ॥
''इहामुत्र च पूज्योऽसौ ब्रह्मलोकमवाप्नुयात् । गायत्री च तथा वेदा ब्रह्मणा तोलिताः पुरा ॥१६॥
''एतेभ्योऽपि षडङ्गेभ्यो गायत्र्यतिगरीयसी । यदक्षरेषु दैवत्यं चतुर्विंशतिरुच्यते ॥ १७ ॥
''संध्यासंपद्विबोधेन कुर्वन् ब्रह्मत्वमाप्नुयात् । जानीयादक्षरं देव्याः प्रथमं त्वाशुशुक्षणेः ॥१८॥
''प्राभञ्जनं द्वितीयं तु तृतीयं शशिदैवतम् । वैद्युतं च तुरीयं तु पञ्चमं तु यमस्य च ॥ १९ ॥
''षष्ठं च वारुणं तत्त्वं सप्तमं च बृहस्पतेः । पार्जन्यमष्टमं तत्त्वं नवमं चैन्द्रदैवतम् ॥ २० ॥
''गान्धर्वं दशमं विद्यात्त्वाष्ट्रमेकादशं तथा । मैत्रावरुणमन्यद्धि तथा पौष्णं त्रयोदशम् ॥ २१ ॥
''चतुर्दशं सुरेशस्य प्रागिदं ब्रह्मणा स्मृतम् । मरुद्दैवतकं पञ्चदशं ज्ञेयं यदक्षरम् ॥ २२ ॥
''सौम्यं च षोडशं तत्त्वं तथैवाङ्गिरसं परम् । विश्वेषां चैव देवानामष्टादशमथाक्षरम् ॥ २३ ॥
''आश्विनमेकोनविंशं विंशं प्रजापतेर्विदुः । एकविंशं कुबेरस्य द्वाविंशं शंकरस्य च ॥ २४ ॥
''त्रयोविंशं तथा ब्राह्मं चतुर्विंशं तु वैष्णवम् । इति ज्ञात्वा द्विजः सम्यक् सर्वाश्चाक्षरदेवताः ॥ २५ ॥
''कुर्वन् जपादिकं विप्रः परं श्रेयोऽधिगच्छति । पादाङ्गुष्ठादिमूर्द्धान्तमात्मनो वपुषि न्यसेत् ॥ २६ ॥
''अक्षराणि च सर्वाणि प्रेप्सुन्ब्रह्मत्वमात्मनः । पादाङ्गुष्ठयुगे त्वेकमेकैकं गुल्फयोर्द्वयोः ॥ २७ ॥
''जान्वोश्च द्वयोरेकमेकमूरुकयोर्द्वयोः । गुह्यकद्व्योस्तथैकैकमेकैकं जठरोरसोः ॥ २८ ॥
''स्तनद्वये तथैकैकं न्यसेदेकं गले तथा । वक्त्रे तालुनि दृक्श्रुत्योश्चतुर्ष्वेकैकमेव तु ॥ २९ ॥
''भ्रुवोर्मध्ये तथैकैकं ललाटे चैकमेव च । याम्यपश्चिमसौम्येषु एकैकमेव मूर्द्धनि ॥ ३० ॥
''गायत्रीन्यस्तसर्वाङ्गो गायत्रो विप्र उच्यते । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ ३१ ॥
''प्रोक्तश्चाक्षरविन्यासो व्याहृतीनामथोच्यते । सप्तापि व्याहृतीन्यस्याः सर्वदेहे जपादिषु ॥ ३२ ॥

''भूर्लोकं पादयोर्न्यस्य भुवर्लोकं तु जानुनोः । स्वर्लोकं कटिदेशे तु नाभिदेशे महस्तथा॥३३॥
''जनोलोकं तु हृदये कण्ठदेशे तपस्तथा । भ्रुवोर्ललाटसंध्योस्तु सत्यलोकः प्रतिष्ठितः ॥ ३४ ॥
''हिरण्मये पराकाशे विरजो ब्रह्म निष्कलम् । तच्छुभ्रं ज्योतिषां ज्योतिस्तत्सदात्मविदो विदुः॥३५॥
''देवस्य सवितुर्भर्गो वरणीयं च धीमहि । तदस्माकं धियो यस्तु ब्रह्मत्वे च प्रचोदयात् ॥३६॥
''छन्दो दैवतमार्षं च विनियोगं च ब्राह्मणम् । मन्त्रं पञ्चविधं ज्ञात्वा द्विजः कर्म समारभेत् ॥ ३७॥
''स्वरतो वर्णतश्चैव परिपूर्णं भवेद्यथा । हीनं न विनियुञ्जीत मन्त्रं वै मात्रयाऽपि च ॥ ३८ ॥
''देवतायतने कुर्याज्जपं नद्यादिकेषु च । आश्रमेषु यतीनां वा गोष्ठे वा स्वगृहेऽपि वा ॥३९॥
''चतुर्ष्वपि च पूर्वेषु ह्यन्तिमादिक्रमेण तु । दशगुणं सहस्रं स्यात्फलं विष्णावनन्तकम् ॥४०॥
''अप्समीपे जपं कुर्यात्ससंख्यं तद्भवेद्यथा । असंख्यमासुरं यस्मात्तस्मात्तद् गणयेद् ध्रुवम् ॥ ४१ ॥
''स्फाटिकैरक्षरुद्राक्षैः पुत्रजीवसमुद्भवैः । अक्षमाला च कर्तव्या प्रशस्ता चोत्तरोत्तरा ॥ ४२ ॥
''अभावे चाक्षमालायाः कुशग्रन्थ्याऽथ पाणिना । यथाकथंचिद् गणयेत्ससंख्यं तद्भवेद्यथा ॥ ४३ ॥
''प्रणवो भूर्भुवः स्वश्च पुनः प्रणवसंयुतम् । अन्त्योंकारसमायुक्तं मन्यन्ते कवयोऽपरे ॥ ४४ ॥
''प्रणवोऽन्ते तथा चादावाहुरन्ये जपक्रमम् । आदावेव तु चोंकार आवृत्तावादिकोऽन्ततः ॥ ४५ ॥
''तदाद्यां च तदन्तां च कुर्यात्प्रणवसंपुटाम् । आद्यन्तरहितां कुर्यादिति पाराशरोऽब्रवीत् ॥ ४६ ॥
''यो न वाञ्छति सन्तानं मोक्षमिच्छति केवलम् । प्रत्योंकारमसौ कुर्वन्नक्षरं मोक्षमाप्नुयात् ॥ ४७ ॥
''अक्षरं प्रातिलोम्येन सोंकारेण क्रमेण तु । फटकारान्तां च कुर्वीत प्रेच्छन्न विविधं बुधः ॥ ४८ ॥
''होमे चापि जपे कुर्यात्प्रणवावर्तनं द्विजः । अभिप्रेतार्थहोमादौ स्वाहान्तां तामुदीरयेत् ॥ ४९ ॥
''संकीर्णतां यदा पश्येद्रोगाद्वा द्विषतोऽपि वा । तदा जपेच्च गायत्रीं सर्वदोषापनुत्तये ॥५०॥
''रुद्रजप्यानि कार्याणि सूक्तं च पुरुषस्य च । शिवसंकल्पजप्यं च सर्वं कुर्याद्विधानतः॥५१॥
''घ्नन्ति जप्तानि पापानि श्रेयो दद्युस्तदर्थिनः । अतो जपं सदा कुर्याद्यदीच्छेच्छुभमात्मनः ॥५२॥
''द्रुपदां वा जपेद्देवीमजपां जुम्बुकां तथा । प्रणवं च सदाऽभ्यस्येद् यदि ब्रह्मत्वमिच्छति॥५३॥
''प्राणापानयुताभ्यां चेत्तथा षोडशभिः शतैः । पुंसो गच्छत्यहोरात्रं तत्संख्यामजपां विदुः॥५४॥
''रविमण्डलमध्यस्थे पुरुषे लोकविश्रुते । समर्पितं मया चेदं सूर्याख्ये ब्रह्मणः पदे ॥ ५५ ॥
''न जपं प्रसभं कुर्यात्प्रसभं घ्नन्ति राक्षसाः । ब्रह्मणा भागधेयस्तु तेषां दैवो विधिः कृतः ॥५६॥
''उपांशु तु जपं कुर्यात्कुर्याच्चैव तु मानसम् । आवृतोष्ठमुपांशुः स्यादचलोष्ठं तु मानसः ॥५७॥
''द्विविधं तु जपं कुर्यादुपांशुं मानसं तथा । उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः॥५८॥
''उपांशुजपयज्ञस्य मानसस्येतरस्य च । ईहयैव तु वैरूप्यमिति **पाराशरो**ऽब्रवीत् ॥ ५९ ॥
''यः शब्दो बोधजनकः परेषां शृण्वतां स्फुटम् । स्वाध्यायो वाचिकः प्रोक्त उपांशोरथ लक्षणम्॥६०॥
''ओष्ठयोः स्पन्दमात्रेण परस्याशब्दबोधकः । उपांशुरेष निर्दिष्टः साहस्रो वाचिकाज्जपात् ॥६१॥
''यत्पदाक्षरसंगत्या परिस्पन्दनवर्जितम् । चिन्तनं सर्वशब्दानां मानसं तं जपं विदुः ॥ ६२ ॥

**कौर्मेऽपीदं** स्पष्टम् ।

''विधियज्ञाः पाकयज्ञा ये चान्ये बहवो मखाः । सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥६३॥
''जप्येनैकेन सिद्धेन किं न सिद्धं भवेदिह । कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते॥६४॥

मैत्रः मित्रमेव सर्वभूतानामित्यर्थः ।

"शतेन जन्मजनितं सहस्रेण पुरा कृतम् । अयुतेन त्रिजन्मोत्थं गायत्री हन्ति पातकम् ॥६५॥
"दशभिर्जन्मजनितं शतेन तु पुरा कृतम् । सहस्रणा त्रिजन्मोत्थं गायत्री हन्ति पातकम् ॥६६॥
"अतः कलौ च विदुषा विधिवत्कर्म यत्कृतम् ॥ ६७ ॥
"दशगुणं भवेत्तद्धि कृतादेर्युगतो ध्रुवम् । नच तच्छक्यते कर्तुं मन्त्राम्नायस्य दूषणात् ॥६८॥
"अयथार्थकृतात्पापान्मन्त्रसिद्धिर्गरीयसी । न च कामन्नोपहसन्न पार्श्वमवलोकयन् ॥ ६९ ॥
"नान्यसक्तो न जल्पंश्च तथैवोर्ध्वशिरास्तथा । नाङ्घ्रिणा पीडयेत्पादं न चैव हि तथा करौ ॥७०॥
"नैवंविधं जपं कुर्यान्न च संचालयेत्करम् । प्रच्छन्नानि च दानानि ज्ञानं च निरहंकृतम् ॥ ७१ ॥
"जप्यानि च सुगुप्तानि तेषां फलमनन्तकम् । य एवमभ्यसेन्नित्यं ब्राह्मणः संयतेन्द्रियः ॥ ७२ ॥
"स ब्रह्मलोकमाप्नोति तथा ध्यानार्चनादपि । अथान्यत्संप्रवक्ष्यामि यथाचाह पितामहः ॥ ७३ ॥
"लब्धवान्वेधसः पृष्टाद्गायत्रीध्यानमुत्तमम् । तदक्षरेषु यद्वर्णं यत्र यत्र च यत्स्मरेत् ॥ ७४ ॥
"यत्फलं लभते कृत्वा यथा तस्याः समर्चनम् । तत्प्रकृतिः स च स्वान्तं विकारो बुद्धिरेव च ॥
"तुरित्येतदहंकारं वशब्दं विद्धि पापहम् ॥ ७५ ॥
"रे स्पर्शं तु णि रूपं च यं रसं गन्धमत्र भम् । गो श्रोत्रं दे त्वचं चक्षुः वः स्यश्च रसना तथा ॥७६॥
"धी नासा च तथा वागमं हि हस्तौ च धि पादद्वयम् । यो उपस्थं गुदं योऽन्यो नः खं प्रकारं मारुतम्॥७७॥
"चो तेजो द जलं यात्क्ष्मा गायत्र्यास्तत्त्वचिन्तनम् । चतुर्विंशतितत्त्वानां प्रत्येकं चाक्षरेषु यः॥७८॥
"गायत्रीं संस्मरेद्योगात्स याति ब्रह्मणः पदम् । तकारं पादयोर्न्यस्य ब्रह्माविष्णुशिवाकृतिम्॥७९॥
"शान्तं पद्मासनारूढं ध्यानाद्दहति किल्बिषम् । सकारं गुल्फयोर्न्यस्येदतसीपुष्पसंनिभम् ॥ ८० ॥
"पद्ममध्यास्थितं सौम्यं दहते चोपपातकम् । विकारं जंघयोर्दीप्तं ध्यायेदेतद्विचक्षणः ॥ ८१ ॥
"ब्रह्महत्याकृतं पापं हन्यात्तद्धि स्मृतं क्षणात् । तुकारं जानुदेशे च इन्द्रनीलसमप्रभम् ॥ ८२ ॥
"निर्दहेत्सर्वपापानि ग्रहरोगमुपद्रवम् । ऊर्वोर्व निर्मलं ध्यायेच्छुद्धस्फटिकविद्युतिम् ॥ ८३ ॥
"विज्ञातं हन्ति तत्पापमगम्यागमनात्कृतम् । रेकारं वृषणे प्रोक्तं विद्युत्स्फुरिततेजसम् ॥ ८४ ॥
"मित्रद्रोहकृतं पापं स्मरणादेव नाशयेत् । णिं गुह्ये श्वेतवर्णं तु जातीपुष्पसमद्युतिम् ॥ ८५ ॥
"गुरुहत्याकृतं पापं शोधयेद्ध्यानचिन्तनात् । यं कट्यां तारकावर्णं चन्द्रवह्निश्वभूषितम् ॥८६॥
"योगिनां वरदं प्रोक्तं ब्रह्महत्याविशोधनम् । भं नामावलिवर्णाभं मेघोन्नतिसमद्युतिम् ॥ ८७ ॥
"ध्यात्वा कमलमध्यस्थं महद्दहति पातकम् । जठरे भृङ्गवर्णं तु मात्राद्वयविभूषितम् ॥ ८८ ॥
"गोहत्यादिकृतं पापं गोकारस्तु विशोधयेत् । श्यामं रक्तं च देकारं ध्यानं तद्वचयेद्धृदि ॥८९॥
"हिमकुन्दसवर्णाभं वकारममृतश्रवम् । पितृमातृवधोद्भूतं मैत्रावरुणदैवतम् ॥ ९० ॥
"गुरुहत्याकृतं पापं वकारेण विनश्यति । स्यकारं विन्यसेत्कण्ठे त्वाग्रं स्फटिकसन्निभम् ॥९१॥
"मनसोपार्जितं पापं स्यकारेण प्रणश्यति । धीकारं वसुदेवत्यं वदन्ति स्वर्णसन्निभम् ॥ ९२ ॥
"प्रतिग्रहकृतं पापं स्मरणादेव नश्यति । मकारं पद्मरागाभं शिरःस्थं दीप्ततेजसम् ॥ ९३ ॥
"पूर्वजन्मकृतं पापं स्मरणादेव नश्यति । हिकारं नासिकाग्रे तु पूर्णचन्द्रसमप्रभम् ॥ ९५ ॥
"पूर्वात्परतरं पापं स्मरणादेव नश्यति । धिकारं चन्द्रसूर्याभं नेत्रयोर्विन्यसेद्बुधः ॥ ९५ ॥

"मनोवाक्कायजं पापं चिंतनादेव नश्यति । योकारं रक्तवर्णाभमिन्द्रनीलसमप्रभम् ॥ ९६ ॥
"प्राणिहत्याकृतं पापं योकारेण विनश्यति । द्वितीयं तु तथा प्रोक्तं योकारं रुक्मसन्निभम् ॥९७॥
"निर्दहेत् दुष्टपापानि अपेयापेयकानि च । नकारस्तु मुखे पूर्वमादित्योदयसंनिभम् ॥ ९८ ॥
"सकृद् ध्यात्वा द्विजः श्रेष्ठः स गच्छेदैन्द्वं पदम्। नीलोत्पलदलश्यामं प्रकारं दक्षिणे मुखे ॥९९॥
"सकृद्ध्यात्वा द्विजः श्रेष्ठः स गच्छेत् ब्रह्मणः पदम् । सौम्यं गारोचनापीतं चोकारं पश्चिमामुखम् ॥ १०० ॥
"सकृद्ध्यात्वा द्विजः श्रेष्ठः स गच्छेद् ब्रह्मशाश्वतम् । यात्कारस्तु शिरः प्रोक्तः चतुर्वदनसंयुतम् ॥ १०१ ॥
"यात्कारं त्रिगुणं प्रोक्तं चतुर्विंशतिसंस्मृतम् । यं यं स्पृशति चक्षुर्भ्यां यं यं स्पृशति पाणिना ॥१०३॥
"यं यमाभाषते किंचित्तत्सर्वं पूतमेव च । जप्ये च त्रिपदा ज्ञेया अर्चने तु चतुष्पदा ॥१०४॥
"न्यासे जपे तथा ध्याने अग्निकार्ये तथाऽर्चने । सर्वत्र त्रिपदा ज्ञेया ब्राह्मणैस्तत्त्वचिन्तकैः ॥ १०५ ॥
"जुम्बका नाम सा देवी यजुर्वेदे प्रतिष्ठिता । अन्तर्जले त्रिरावर्त्य मुच्यते ब्रह्महत्त्यया ॥१०६॥
"सोऽपनीय समस्तानि महेनांसि द्विजोत्तमः । ब्रह्मणः पदमाप्नोति यद्गत्वा न निवर्तते ॥ १०७ ॥
"प्रमादेन कथंचिद्वा जपं कुर्वन् त्यजेद्यदि । स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति स्मृतिः ॥ १०८ ॥
"तद्विष्णोरिति मन्त्रोऽयं स्मर्तव्यः सर्वकर्मसु । आवर्त्यः प्रणवो वाऽपि सर्वस्यादिर्मतो हि सः॥१०९॥
"अभ्यसेत् प्रणवं नित्यमेकचित्तसमाहितः । गायत्रीं च तथा देवीमभ्यसेन्मुक्तिमाप्नुयात् ॥ ११० ॥
"वैदिकं तु जपं कुर्यात्पौराणं पाञ्चरात्रिकम् । यो वेदस्तानि चैतानि यान्यतानि च सा श्रुतिः॥१११॥
"जपेन येनेह कृतेन पुंसो ददाति मार्गं सविताऽपि कर्तुः ।
"अयं हि सर्वेष्टकृतां श्रविष्ठो विधिः पदं यास्यति निर्विकल्पम् ॥ ११२ ॥
"यदुक्तं धर्मशास्त्रेषु तथा सर्वश्रुतिष्वपि । उपनिषत्समं तद्वा विप्रा हितं प्रकीर्तितम् ॥ ११३ ॥
"न्यासं तनुत्रं न बबन्ध देहे जग्राह चोंकारमसिं च तीक्ष्णम् ।
"विप्रो वशां यस्त्रिपदां न चक्रे लोके स दुष्टः किमु कस्य कुर्यात् ॥ ११४ ॥
"तस्योद्देशो मया प्रोक्तो विधिर्जपस्य पावनः । देवार्चनविधानं तु संप्रवक्ष्याम्यतः परम् ॥११५॥

इति साङ्गजपनिर्णयः ।

इयं चाद्यन्ते च सप्रणवाऽऽद्यावेव वा सप्रणवा, पञ्चावसाना पादशः त्रिरवसाना वा जप्या । तत्थसेत्यत्र तकारथकारसकारा बोध्या इति स्पष्टीकृतं **भावप्रकाशे** । यद्यपि श्रुतौ भूरिशो वरेण्यं वरेण्यमित्येव पाठस्तत्र चौणादिको वृत्र एण्यः, अत एव **कौर्मादौ** भूरिशस्तत्प्रयोग इति त्रयोविंशत्यक्षरत्वं, तथापि सख्यं सूर्यमित्यत्र सखियं सूरियमितिवत् इयादिपूरणेन जपे चतुर्विंशत्यक्षरत्वं बोध्यम्। तथा च छन्दःसूत्रे इयादिपूरणः गायत्र्या वसव इति । अत्र **हलायुधः** । उभयत्र पाद इत्यनुवर्तते । इयादिः पूरणो यस्य स इयादिपूरणः । आदिना उवादिः । यत्र गायत्र्यादौ छन्दसि पादस्याक्षरसंख्या न पूर्यते तत्रेयादिना पूर्णीया, यथा तत्सवितुर्वरेणियं दिवं गच्छ सुवः पतेति । द्वितीयसूत्रम् परिभाषा । गायत्र्याः पादो वसवोऽष्टाक्षराणि । यत्र यत्र गायत्र्याः पादो वक्ष्यते तत्राष्टक्षरो ग्राह्य इति। एतदाशयेनैवाश्वलायनीयादौ तत्कल्पादौ च तथा न्यासादयस्तत्फलानि चोक्तानि । तदुक्तमत्र संस्कार-

गायत्रीकर्मण्यन्या प्रयुज्यते अन्या जपप्रबन्धस्य कैव प्रतीयत इति व्याख्यातमिदम् । जपभिन्ने तु त्रयोविंशत्यक्षरत्वमेवातो न विरोध इति बोध्यम् ।

## अथ भूसंस्कारादि ।

"ॐकुञ्जरसमारूढा ज्ञानखड्गधरा द्विजाः । गायत्रीकवचं प्राप्य युध्यन्ते मोक्षकाङ्क्षिणः ॥ "

• तत्रासनस्थानं वायुबीजेन संशोध्य, यमिति वायुबीजं, रमित्यग्निबीजेन प्रागादीशानान्तं परितोऽग्निं निधाय भस्मसात्कृत्वा तद्भस्म वायुबीजेन निःसार्य वमितिवारुणबीजोत्थेनाम्भसा आप्लाव्य तत्र कृष्णाजिनाद्यन्यतममासनमासाद्य तत्र मायाबीजेनोपविश्य ह्रीमिति मायाबीजं पृथिव्या मेरुपृष्ठ ऋषिः कूर्मो देवता सुतलं छन्दः कूर्मासने विनियोगः ।

"पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता । त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥"

ॐ भूर्भुवःस्वरोम् इदमासनम् । आधारशक्तये नमः । कूर्माय नमः । अनन्ताय नमः । वराहाय नमः ।

"ऊर्ध्वकेशि विरूपाक्षि मांसशोणितभक्षिके । तिष्ठ देवि शिखाबन्धे चामुण्डे ह्यपराजिते ॥ "

"अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः । ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ "

"भूतानि राक्षसा वाऽपि ये च तिष्ठन्ति केचन । ते सर्वेऽप्यपसर्पन्तु देवीपूजां करोम्यहम् ॥ "

ॐ असुरान्तकत्रिशूलाय फट् इति वामपादपार्ष्णिघातत्रयेण भूतसंघं निःसार्य ॐ असुरान्तकचक्राय फट् इति आलातत्रयेण प्राकारत्रयं विचिन्त्य । गं गणपतये नमः । दुं दुर्गायै नमः । क्षें क्षेत्रपालाय नमः । गुं गुरुभ्यो नमः । ओं पं परमगुरुभ्यो नमः । ओं पं परात्परगुरुभ्यो नमः ।

## अथ भूतशुद्धिः ।

" ॐ धर्मकन्दसमद्भूतं ज्ञाननालं सुशोभितम् । ऐश्वर्याष्टदलोपेतं परवैराग्यकर्णिकम् ॥ "

एवंविधं हृत्पद्मं ध्यात्वा प्रणवेन मुकलितं प्रणवेन विकसितं कृत्वा तत्कर्णिकागतं जीवात्मानम् अङ्कुशमुद्रया सुषुम्नानाड्या प्लुतप्रणवेन ब्रह्मरन्ध्रं नीत्वा ब्रह्मरन्ध्रगतसहस्रारे कमले कर्णिकायां स्थितेन परमात्मना सह सोऽहंमन्त्रेण एकीभावं विचिन्त्य वामकुक्षौ पापपुरुषं विचिन्तयेत् ।

"ब्रह्महत्याशिरस्कं च स्वर्णस्तेयभुजद्वयम् । सुरापानहृदा युक्तं गुरुतल्पकटिद्वयम् ॥

"तत्संसर्गिपदद्वंद्वमङ्गप्रत्यङ्गपातकम् । उपपातकरोमाणं रक्तश्मश्रुविलोचनम् ॥

"खड्गचर्मधरं कृष्णं वामे कुक्षौ विचिन्तयेत् । "

तं पापपुरुषं षट्कोणषड्बिंदुलाञ्छितधूम्रवर्णवायुमण्डलान्तर्गतेन धूम्रवर्णेन यंबीजोत्थेन वायुना संशोष्य रक्तवर्णत्रिकोणवज्रलाञ्छिताग्निमण्डलान्तर्गतेन रक्तवर्णेन रंबीजोत्थेनाग्निना प्रागादीशानान्तं परितोऽग्निं निधाय भस्मसात्कृत्वा तद्भस्म षट्कोणषड्बिंदुलाञ्छितधूम्रवर्णवायुमण्डलान्तर्गतेन यंबीजोत्थेन वायुना षोडशवारजप्तेन दक्षिणनासापुटेन बहिर्निःसार्य अर्धचन्द्राकारं शुक्लवर्णं कोष्ठयोः शुक्लपद्मलाञ्छितवारुणमण्डलान्तर्गतेन शुक्लवर्णेन वंबीजोत्थेनाम्भसा अमृतस्राविणा आप्लाव्य शुद्धं कृत्वा

पादादिजानुपर्यन्तं पार्थिवमण्डलं चतुरस्रं पीतवर्णं वज्रलाञ्छितं लंबीजयुक्तं चिन्तयामि जान्वादिनाभिपर्यन्तम् अपां स्थानं तत्र वारुणमण्डलं अर्धचन्द्राकारं शुक्लवर्णं कोष्ठयोः शुक्लपद्मलाञ्छितं वंबीजयुक्तं चिन्तयामि। नाभ्यादिकण्ठपर्यन्तम् अग्निस्थानं तत्राग्निमण्डलं त्रिकोणाकारं रक्तवर्णं वज्रलाञ्छितं रंबीजयुक्तं चिन्तयामि। ततो भ्रूमध्यपर्यन्तं वायुस्थानं तत्र वायुमण्डलं षट्कोणाकारं षट्कोणेषु षड्बिन्दुलाञ्छितं धूम्रवर्णं यंबीजयुक्तं चिन्तयामि। भ्रूमध्यात् ब्रह्मरन्ध्रपर्यन्तम् आकाशस्थानं तत्राकाशमण्डलं छत्राकारं नीलवर्णं हंबीजयुक्तं चिन्तयामि। एवं स्वशरीरे स्थानानि संचिन्त्य तत्र तत्प्रविलापनं कुर्यात्। पृथिवीं पञ्चगुणां षडुपोद्घातप्रयोगेण लंलंलंलंलंलं अप्सु प्रविलापयामि। अपश्चतुर्गुणः पञ्चोपोद्घातप्रयोगेण वंवंवंवंवं अग्नौ प्रविलापयामि। अग्निं त्रिगुणं चतुरुपोद्घातप्रयोगेण रंरंरंरं वायौ प्रविलापयामि। वायुं द्विगुणं त्रिरुपोद्घातप्रयोगेण यंयंयं आकाशे प्रविलापयामि। आकाशमेकगुणं द्विरुपोद्घातप्रयोगेण हंहं अहंकारे प्रविलापयामि। अहंकारं महत्तत्त्वे प्रविलापयामि। महत्तत्त्वं स्वकारणीभूतायां रज्जुसर्पवज्जगदाकारेण विवर्तमानायां मायायां प्रविलापयामि। तां च मायां नित्यशुद्धमुक्तस्वरूपायां सर्वज्ञायां देव्यां प्रविलापयामि।

तस्याः सर्वज्ञायाः सर्वशक्तेः श्रीमहादेव्याः सकाशान्मायाद्वारेण महत्तत्त्वं समभूत्। महतोऽहंकारः सात्त्विको राजसस्तामसश्चेति त्रिविधः समजायत तस्माद्वा एतस्मादात्मनः शब्दगुण आकाशः संभूतः आकाशाद्वायुः शब्दस्पर्शवानजायत तस्माद्वायोः शब्दस्पर्शरूपवानग्निः समजायत तस्मादग्नेः चतुर्गुण आपः समजायन्त अद्भ्यः पञ्चगुणा पृथिवी समजायत पृथिव्या ओषधयः ओषधीभ्योऽन्नं समभूत् अन्नाद्रेतः रेतसः पुरुषः स वा एष पुरुषोऽन्नरसमयः। ततोऽङ्कुशमुद्रया सुषुम्नानाड्या प्लुतप्रणवेन ब्रह्मरन्ध्रं नीत्वा ब्रह्मरन्ध्रगतसहस्रदलकमलकर्णिकायां स्थितेन परमात्मना सह सोऽहंमन्त्रेण एकीभावं विचिन्त्य जीवात्मानं परमात्मनः सकाशात् पृथक् कृत्वा हंसः सोऽहमिति हृदयकमलकर्णिकायां प्रतिष्ठाप्य नित्योऽहं शुद्धोऽहं बुद्धोऽहं मुक्तोऽहं सर्वज्ञोऽहमस्मीति चिरं देवताराधनयोग्योऽहमस्मीति भावयित्वा आराध्य सदृशं पुण्यात्मकं नित्यविधिना संपूजयेत्।

इति भूतशुद्धिः।

## अथ प्राणप्रतिष्ठा।

ॐ प्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषय इति शिरसि ऋग्यजुःसामाथर्वाणि छन्दांसि मुखे परा प्राणशक्तिर्देवता हृदये आं बीजं गुह्ये ह्रीं शक्तिः पायौ क्रौं कीलकं सर्वाङ्गे ॐ प्राणप्रतिष्ठापने विनियोगः। ॐ आं ह्रीं क्रौं अं कं खं गं घं ङं आं क्रौं ह्रीं आं पृथिव्यप्तेजोवाय्वाकाशात्मने आं अङ्गुष्ठाभ्यां नमः ॐ आं ह्रीं क्रौं इं चंछंजंझंञं ईं क्रौं ह्रीं आं शब्दस्पर्शरूपरसगन्धात्मने तर्जनीभ्यां नमः। ॐ आं ह्रीं क्रौं उं टंठंडंढंणंऊंक्रौंह्रींआं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने मध्यमाभ्यां नमः। ॐ आं ह्रीं क्रौं एं तंथंदंधंनंऐंक्रौंह्रीं आं वाक्पाणिपादपायूपस्थात्मनेऽनामिकाभ्यां नमः। ॐ आं ह्रीं क्रौं ॐ पंफंबंभंमं औंक्रौंह्रीं आं वचनादानविहरणविसर्गानन्दात्मने कनिष्ठिकाभ्यां नमः। ॐ आं ह्रीं क्रौं अं यंरंलंवंशंषंसंहंलंक्षंअःक्रौंह्रीं आं मनोबुद्ध्यहंकाराचित्ता-

त्मने करतलकरपृष्ठाभ्यां नमः । एवं हृदयादि । आं नमः हृदयादानाभि । ह्रीं नमः जठरादानाभि । क्रौं नमः । नाभेरधः व्यापयेत् । ॐ आं ह्रीं क्रौं हंसः यंरंलंवंशंषंसंहंलंक्षं सोऽहं स्वाहा मम प्राणा इहागच्छन्तु । ॐ आं ह्रीं क्रौं हंसः यंरंलंवंशंषंसंहंलंक्षं क्रौं ह्रीं आं सोऽहं स्वाहा मम जीव इह स्थितः । ॐ आं ह्रीं क्रौं हंसः यंरंलंवंशंषंसंहंलंक्षं क्रौं ह्रीं आं सोऽहं स्वाहा मम सर्वेन्द्रियाणि इहागत्य सुखं चिरं तिष्ठन्तु । गर्भाधानाद्यष्टसंस्कारसिद्धये षोडशप्रणवावृत्तिः । ॐ ॐ ॐ १६

"यद्वाग्वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा ।
"चतस्र ऊर्जं दुदुहे पयांसि क्वस्विदस्याः परमं जगाम" ॥
"रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढा कराग्रैः
"पाशं कोदण्डमिक्षूद्भवमलिगुणमप्यङ्कुशं पञ्चबाणान्
"बिभ्राणाऽसृक्कपालं त्रिनयनलसिता पीनवक्षोरुहाढ्या
"देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः ॥"

इति प्राणप्रतिष्ठा ।

## अथ मातृकान्यासः ।

अस्य श्रीमातृकामन्त्रस्य ब्रह्मा ऋषिरिति शिरसि । गायत्रीछन्दो मुखे । मातृका सरस्वती देवता हृदये । हलो बीजं गुह्ये । स्वराः शक्तयः पादौ । मातृकान्यासं करिष्ये । ॐ अंकंखंगंघंङं आं अङ्गुष्ठाभ्यां नमः । ॐ इंचंछंजंझंञं ईं तर्जनीभ्यां नमः । ॐ उंटंठंडंढंणं ऊं मध्यमाभ्यां नमः । ॐ एंतंथंदंधंनं ऐं अनामिकाभ्यां नमः । ॐ ओंपंफंबंभंमं औं कनिष्ठिकाभ्यां नमः । ॐ अंयंरंलंवंशंषंसंहंलंक्षं अः करतलकरपृष्ठाभ्यां नमः । एवं हृदयादि ।

## अथान्तर्मातृकान्यासः ।

कण्ठं गते षोडशदले कमले प्राणादिक्रमेण । अं नमः । नमः सर्वत्र । आंइंईं उंऊंऋंॠं-ऌंॡं एंऐं ओंऔंअंअः । हृदयगते द्वादशदले प्रागादिक्रमेण कंनमः । खंगंघंङं चंछंजंझंञं टंठं एतान् विन्यसामि । नाभेरूर्ध्वं स्थिते दशदले प्रागादिक्रमेण डंढंणंतंथंदंधंनंपंफं । एतान्विन्यसामि । नाभेरधः स्थिते षड्दले प्रागादिक्रमेण । बंभंमंयंरंलं एतान्विन्यसामि । आधारगते चतुर्दले कमले वंशंषंसं भ्रूमध्यगते द्विदले कमले हंक्षं विन्यस्य ।

## अथ बहिर्मातृकान्यासः ।

अं नमः शिरसि । आं आनने । इं दक्षिणनेत्रे । ईं वामनेत्रे । उं दक्षिणश्रवणे । ऊं वामे । ऋं दक्षिणनासापुटे । ॠं वामे । ऌं दक्षिणकपोले । ॡं वामे । एं उत्तरोष्ठे । ऐं अधरोष्ठे । ओं ऊर्ध्वदन्तपङ्क्तौ । औं अधोदन्तपङ्क्तौ । अं मूर्ध्नि । अः मुखे । कं दक्षिणबाहुमूले । खं दक्षिणकूर्परे । गं तन्मणिबन्धे । घं अंगुलिमूले । ङं तदग्रे । चवर्गं वामहस्ते । टवर्गं दक्षिणपादमूलादौ ।

तवर्गं वामपादमूलादौ । पं दक्षिणपार्श्वे । फं वामे । बं पृष्ठे । भं नाभौ । मं जठरे । यं त्वगात्मानं हृदये । रं असृगात्मानं कण्ठे । लं मांसात्मानं अपरकण्ठे । वं मेदात्मानं दक्षिणकुक्षौ । शं अस्थ्यात्मानं वामकुक्षौ । षं मज्जात्मानं हृदयादिपाणियुगे । सं शुक्रात्मानं हृदयादिपद्युगे । हं प्राणात्मानं हृदि । लं शक्त्यात्मानं तत्रैव । क्षं जीवात्मानं सर्वशरीरे विन्यस्य । ज्ञं परमात्मानं ब्रह्मरन्ध्रगतसहस्रदले विन्यसामि ।

इति बहिर्मातृकान्यासः ।

---

## अथ ध्यानम् ।

‘‘पञ्चाशद्वर्णभेदैर्विहितवदनदोःपादहृत्कुक्षिवक्षो-
‘‘देशां भास्वत्कपर्दाकलितशशिकलामिन्दुकुन्दावदाताम् ।
‘‘अक्षस्रक्कुम्भचिन्तावरलिखितकरां त्रीक्षणां पद्मसंस्था-
‘‘मच्छाकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि ’’ ॥

अस्य श्रीगायत्रीकवचस्य ब्रह्मविष्णुमहेश्वरा ऋषयः । ऋग्यजुःसामाथर्वाणः छन्दांसि । परब्रह्मविद्या देवी गायत्री देवता । तत्० बीजम् । भर्गो० शक्तिः । धियो यो न इति कीलकम् । मम मनोरथावाप्त्यर्थं च जपे विनियोगः ।

## अथ ध्यानम् ।

‘‘वर्णस्रक्कण्ठिकाहस्तां सुधानिर्मलज्योतिषम् । सर्वतत्त्वमयीं वक्ष्ये गायत्रीं वेदमातरम् ॥
‘‘सव्याहृतिसंयुक्ता सशिरा बिन्दुसंयुता । सतूर्या मयि संसक्ता सज्वाला पातु देवता ॥
‘‘गायत्री पूर्वतः पातु सावित्री पातु दक्षिणे । ब्रह्मविद्या तु मे पश्चात् उत्तरां मे सरस्वती ॥
‘‘पावकीं मे दिशं रक्षेत्पावकज्वग्नाशिनी ’’ ।

यातुधानी दिशं रक्षेत् वर्णपंक० कन्यां विन्यसेत् । पुरुषहत्या कृतं पापं वि० ।

भकारस्य । शातातपः । सत्य । पर्जन्यो । उदानो । कन्न । पश्चमुख आयामः । ताम्रवर्णपं० नाभौ० गुरुहत्या कृतं पापम् ।

गोकारस्य । सनत्कुमार । आछ० ।सरस्वती० ।समानवींदग्रा० । षण्मुखम्० रक्तवर्णपङ्कज० । जठरे० गोवधकृतम्० ।

देकारस्य सत्यसुन्व ऋषिः । विराट्० । रुद्रः । शब्द० सरस्वती० अधोमु० श्यामवर्णपं० स्तने न्यसेत् । स्त्रीवधकृतम्० ।

वकारस्य० भार्गव० । षिपङ्कि० आदित्यो० स्पर्शवि० विरूपाक्ष० । विपङ्काअलिमुद्रा । शुक्लवर्णपं० हृदि विन्यसेत् । वाचोद्भवकृतम् ।

स्यकारस्य पाराशर० विश्वच्छन्दः । प्रद्युम्नो० रस० । विशा० शकट० पातवर्णपम् । कंठे विन्य० मानकूटक० ।

धीकारस्य प्राण० विज्ञानविराट् । इंद्रो० रूपं० विभूतिश० । यमपाश० विद्युत्पङ्कजव० । अधरे न्यसेत्० । पितृमातृहननकृतं पापम् ।

• मकारस्य क्रतु० अक्षरपङ्क्तिच्छन्दः महेन्द्रो० गङ्गा० विमला शक्तिः । ग्रन्थितमु० पद्मवर्णपंक० तालुमध्ये न्यसेत् आजन्मकृतं पापम्० ।

• धिकारस्य दक्षम्० विराट० मित्रावरुणौ देव० । वाग्बीजम्० योगा शक्तिः । सिंहमुख० पद्मकामरागवर्णपं० नासाग्रे विन्यस्य । स्थावरजंगमविषाम्० ।

धिकारस्य कश्यप० अक्षरये कटीह० विश्वेदेवा० पाणि० नित्या० उन्मुखमु० पद्मवर्णपं० अक्ष्णोर्विन्यसेत् ।

योकारस्य जमदग्नि० कात्यायनी० छन्दः । वैश्वानरो देवता । वायु० । ज्ञानशक्तिः मूषिकः । रक्तवर्णपं० भ्रुवोर्न्य० प्राणिहत्या० ।

योकारस्य मत्र० ज्योतिषमछं० । आदित्यो दे० पादबीजम् । कृति० कूर्म० पीतवर्णपं० पूर्वमुखे न्यसेत् । विदेहसर्वपाप० ।

नकारस्य विमल० देवी गायत्रीछन्दः । परमात्मा० रूप० व्रती० वाराहमु० पीतवर्णपं० पूर्वमुखं न्यसेत् । सकृज्जपान्नरश्रेष्ठः स गच्छेद्वैष्णवं पदम् ।

प्रकारस्याङ्गिरस ऋषिः । भूः छन्दः । कुबेरो देवता । मनो बीजम् । पद्मालया शक्तिः । सिंहक्रान्तमुद्रा० नीलोत्पलवर्णपं० दक्षिणमुखे न्यसेत् । सकृज्जापी नरश्रेष्ठः स गच्छेद् ब्रह्मणः पदम् ।

चोकारस्य कात्यायन ऋषिः । भुव० वामदेवो० बुद्धि० पराश० महाकान्तमु० पीतवर्णपङ्कजदेवतां पश्चिमे मुखे न्यसेत् । सकृज्जापये नरः श्रेष्ठः स गच्छेद्वैष्णवं पदम् ।

दकारस्य गौतम० अनुष्टुप्० । सोमो देवता । अहंकार० शोभा शक्तिः । मुद्गरमुद्रा । श्यामवर्णपङ्कज० उत्तरमुखे न्यसेत् स सर्वं प्रत्यक्षयेत् ।

याकारस्य कुम्भज० श्रीछन्दः । ब्रह्मा देवता चिता बीजम् । भद्रा० पल्लवमु० शुक्लवर्णपङ्कज० शिरसि विन्यस्येत् । मोक्षं ददाति ।

इति गायत्रीप्रत्यक्षरविधानम् ।

---

## अथ हृदयम् ।

ॐ नमस्कृत्य भगवान् याज्ञवल्क्यः स्वयंभुवं परिपृच्छति । त्वं ब्रूहि ब्रह्मन् । गायत्र्या उत्पत्तिं श्रोतुमिच्छामि । ब्रह्मज्ञानोत्पत्तिप्रकृतिं परिपृच्छामि । ब्रह्मोवाच । प्रणवेन व्याहृतयः प्रवर्तन्ते । तमसस्तु परं ज्योतिः । कः पुरुषः । स्वयम्भूर्विष्णुरिति । हन्तास्वपस्वङ्गुल्या मन्थयते । मथ्यमानात्फेनो भवति । फेनाद् बुद्बुदो भवति । बुद्बुदादण्डं भवति । अण्डादात्मा भवति । आत्मन आकाशो भवति ।

आकाशाद्वायुर्भवति । वायोरग्निर्भवति । अग्नेरोंकारो भवति । ॐकाराद् व्याहृतिर्भवति । व्याहृत्या गायत्री भवति । गायत्र्याः सावित्री भवति । सावित्र्याः सरस्वती भवति । सरस्वत्या वेदा भवन्ति । वेदेभ्यो ब्रह्मा भवति । ब्रह्मणो लोका भवन्ति । तस्माल्लोकाः प्रवर्तन्ते । चत्वारो वेदाः साङ्गाः सोपनिषदः सेतिहासाः । सर्वे ते गायत्र्याः प्रवर्तन्ते । यथाऽग्निर्देवानाम्, ब्राह्मणो मनुष्याणाम्, मेरुः शिखरिणाम्, गङ्गा नदीनाम्, वसन्त ऋतूनाम्, ब्रह्मा प्रजापतीनामेवम् असौ मुख्या गायत्री छन्दो भवति । किं वै भूः । किं भुवः । किं स्वः । किं महः । किं जनः । किं तपः । किं सत्यम् । किं तत् । किं सवितुः । किं वरेण्यम् । किं भर्गः । किं देवस्य । किं धीमहि । किं धियः । किं यः । किं नः । किं प्रचोदयात् । भूरिति भूर्लोकः । भुव इति भुवर्लोकः । स्व इति स्वर्लोकः । मह इति महर्लोकः । जन इति जनोलोकः । तप इति तपोलोकः । सत्यमिति सत्यलोकः । भूर्भुवः स्वरोमिति त्रैलोक्यम् । तदिति तदसौ तत्तेजः यत्तेजोऽग्निर्देवता । सवितुरिति सावित्र्यन्नम् । वरेण्यम् अन्नमिव प्रजापतिः । भर्गः इत्यापो वै भर्गः । एतावत्यो वै सर्वा देवताः देवस्येति इन्द्रो वै देवता । यद्दिवं तदिन्द्रः । तस्मात्सर्वे पुरुषो नाम विष्णुः । धीमहि इत्यन्तरात्मा । धियः यदन्तरात्मा स प्राणः किमध्यात्मं तत्परमं पदम् । यो न इति पृथ्वी वै यो नः प्रचोदयादिति काम इमान्लोकान् प्रच्यावयते । यो नृशंसोऽप्यनृशंसः । स्तोष्यस्तत्परो धर्म इत्येषा गायत्री । किंगोत्रा । कत्यक्षरा । कतिपादा । कतिकुक्षिः । कतिशीर्षा । एतावत्यः सर्वा देवताः । सांख्यायनसगोत्रा चतुर्विंशत्यक्षरा गायत्री । केऽस्याः त्रयः पादा भवन्ति । का अस्याः कुक्षयः । कानि पञ्च शीर्षाणि । ऋग्वेदः प्रथमपादो भवति । यजुर्वेदो द्वितीयपादो भवति । सामवेदः तृतीयपादो भवति । पूर्वा दिक् प्रथमा कुक्षिर्भवति । दक्षिणा द्वितीया । पश्चिमा तृतीया । उत्तरा चतुर्थी । ऊर्ध्वा पञ्चमी । अधरा षष्ठी । व्याकरणमस्याः प्रथमं शीर्षं भवति । शिक्षा द्वितीयम् । कल्पस्तृतीयम् । निरुक्तं चतुर्थम् । ज्योतिषामयनम् इति पञ्चमम् । किंलक्षणम् । किमु चेष्टितम् । किमुदाहृतम् । किमक्षरदैवतम् । लक्षणं मीमांसा । अथर्वणवेदो विचेष्टितम् । छन्दोविचितिरित्युदाहृतम् । को वर्णः कः स्वरः । श्वेतो वर्णः षट् स्वराः । इमान्यक्षराणि दैवतानि भवन्ति । पूर्वा भवति गायत्री मध्यमा भवति सावित्री पश्चिमा सन्ध्या सरस्वती भवति ।

प्रातःसन्ध्या रक्तपद्मासनस्था रक्ताम्बरधरा रक्तवर्णा रक्तमाल्या रक्तगन्धानुलेपना चतुर्मुखी चतुर्भुजा द्विनेत्रा दण्डाक्षमालाकमण्डलुस्रक्स्रुवधारिणी सर्वाभरणभूषिता गायत्री कौमारी ब्राह्मी हंसवाहिनी ऋग्वेदसहिता ब्रह्मदेवत्या त्रिपदा गायत्री षट्कुक्षिः पञ्चशीर्षाऽग्निमुखा रुद्रशिखा विष्णुहृदया ब्रह्मकवचा सांख्यायनसगोत्रा भूर्लोकव्यापिनी अग्निस्तत्त्वमुदात्तस्वरितः स्वरमाकारो रक्तवर्णं ब्रह्मज्ञाने विनियोग इत्येषा गायत्री ।

मध्याह्नसन्ध्या श्वेतपद्मासनस्था श्वेताम्बरधरा श्वेतवर्णा श्वेतमाल्या श्वेतगन्धानुलेपना पञ्चमुखी चतुर्भुजा त्रिनेत्रा त्रिशूलाक्षमालाकमण्डलुकपालधारिणी सर्वाभरणभूषिता सावित्री यौवनी माहेश्वरी वृषभवाहिनी यजुर्वेदसहिता रुद्रदेवत्या त्रिपदा सावित्री षट्कुक्षिः पञ्चशीर्षाऽग्निमुखा रुद्रशिखा विष्णुहृदया ब्रह्मकवचा सांख्यायनसगोत्रा भुवर्लोकव्यापिनी वायुस्तत्त्वमुदात्तस्वरितः स्वरमाकारः श्वेतं वर्णं कर्मज्ञाने विनियोग इत्येषा सावित्री ।

सायंसन्ध्या कृष्णपद्मासनस्था कृष्णाम्बरधरा कृष्णवर्णा कृष्णमाल्या कृष्णगन्धानुलेपना एकमुखी चतुर्भुजा द्विनेत्रा चक्राक्षमालाकमण्डलुशङ्खधारिणी सर्वाभरणभूषिता सरस्वती वृद्धा वैष्णवी

गरुडवाहिनी सामवेदसहिता विष्णुदेवत्या त्रिपदा सरस्वती षट्कुक्षिः पञ्चशीर्षाऽग्निमुखा रुद्रशिखा विष्णुहृदया ब्रह्मकवचा सांख्यायनसगोत्रा स्वर्लोकव्यापिनी सूर्यरतत्त्वमुदात्तस्वरितः स्वरमाकारः कृष्णं वर्णं मोक्षज्ञाने विनियोग इत्येषा सरस्वती ।

"रक्ता गायत्री श्वेता सावित्री कृष्णवर्णा सरस्वती। प्रणवे नित्यसंयुक्ता व्याहृतीषु च सप्तसु ॥
"सर्वेषामेव पापानां संकरे समुपस्थिते । शतसहस्रमभ्यस्ता गायत्री पावनी महत् ॥
"प्रह्लादोऽत्रिर्वसिष्ठश्च शुक्रः कण्वः पराशरः । विश्वामित्रो महातेजाः कपिलः शौनको महान्॥
"याज्ञवल्क्यो भरद्वाजो जमदग्निस्तपोनिधिः । गौतमो मुद्गलः श्रेष्ठो वेदव्यासश्च रोमशः ॥
"आगस्त्यः कौशिको वत्सः पौलस्त्यो मङ्कणस्तथा । दुर्वासास्तपसा श्रेष्ठो नारदः कश्यपस्तथा॥
"उक्ताऽत्युक्ता तथा मध्या प्रतिष्ठान्यासपूर्विका । गायत्री त्रिष्टुबनुष्टुप् च बृहती पङ्क्तिरेव च ॥
"त्रिष्टुप् च जगती चैव तथाऽतिजगती मता। शक्करी साऽतिपूर्वा स्यादष्ट्यत्यष्टी तथा स्मृता॥
"धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः । विकृतिः संकृतिश्चैव तथाऽतिकृतिरुत्कृतिः ॥
"इत्येताः छन्दसां संज्ञाः क्रमशो वच्मि साम्प्रतम् ।"

भूरिति छन्दो भुव इति छन्दः भूर्भुवःस्सुव इति छन्दः मह इति छन्दः जन इतिच्छन्दः तप इतिच्छन्दः सत्यमितिच्छन्द इत्येतानि छन्दांसि । प्रथममाग्नेयम् । द्वितीयं प्राजापत्यम् । तृतीयꣳसौम्यम् । चतुर्थमैशानम् । पञ्चमꣳसवितृदेवत्यम् । षष्ठं बार्हस्पत्यम् । सप्तमं भगदेवत्यम् । अष्टमं पितृदेवत्यम् । नवममार्यमणम् । दशमꣳसावित्रम् । एकादशꣳत्वाष्ट्रम् । द्वादशं पौष्णम् । त्रयोदशमैन्द्राग्नम् । चतुर्दशं वायव्यम् । पञ्चदशं वामदेव्यम् । षोडशं मैत्रावरुणम् । सप्तदशं भ्रातृव्यम् । अष्टादशं वैश्वदेवम् । एकोनविꣳशं वैष्णवम् । विꣳशं वासवम् । एकविꣳशं रौद्रम् । द्वाविꣳशं कौबेरम् । त्रयोविꣳशमाश्विनम् । चतुर्विꣳशं ब्राह्मम् ।

"सुमुखं संपुटं चैव विततं विस्तृतं तथा । शकटं यमपाशं च ग्रथितं चोन्मुखोन्मुखम् ॥
"प्रलम्बं मुष्टिकं चैव मत्स्यकूर्मवराहकम् । सिंहाक्रान्तं महाक्रान्तं मुद्गरं पल्लवं तथा ॥
"एता मुद्राश्चतुर्विꣳशद् गायत्र्याः सुप्रतिष्ठिताः । एता मुद्रा न जानाति गायत्री निष्फला भवेत् ॥
"सुरभिर्ज्ञानयोगी च मत्स्यकूर्मौ च पङ्कजम्। लिङ्गनिर्याणमुद्रान्ता अष्ट मुद्राः प्रकीर्तिताः" ॥

द्यौर्मूर्ध्नि, संघाते ब्रह्मा, विष्णुर्ललाटे, रुद्रः भ्रुवोर्मध्ये, चक्षुषोश्चन्द्रादित्यौ, कर्णयोः शुक्रबृहस्पती, नासिके वायुदैवत्ये, दन्तोष्ठमुभे सन्ध्ये, मुखमग्निः, जिह्वा सरस्वती, ग्रीवा च स्वाध्यायानुग्रहीति, स्तनयोर्वसवः, बाह्वोर्मरुतः, हृदयं पर्जन्यम्, आकाश उदरम्, नाभिरन्तरिक्षम्, कटीरिन्द्रियाणि, जघनं प्राजापत्यम्, कैलासमलयाऊरू, विश्वेदेवा जान्वोः, जंघयोरैनद्रयोः, खुराः पितरः, पादौ पृथ्वी, वनस्पतयोऽङ्गुल्यो, लोमानि मुहूर्त्तास्ते विग्रहाः । ते तु मासा ऋतवः, सन्ध्याकालत्रयमाच्छादनम्, संवत्सरन्निमिषम्, अहोरात्रौ आदित्यश्चन्द्रमाः ।

"सहस्रपरमां देवीं गायत्रीं शतमध्यां दशावराम्। सहस्रनेत्रीं देवीं गायत्रीं शरणमहं प्रपद्ये" ॥

ॐ तत्सवितुर्वराय नमः । तत्प्रातरादित्योप्रतिष्ठाय नमः । ॐ तत्पूर्वजपाय नमः ॐ तत्परापरादित्योप्रतिष्ठाय नमः सायमधीयानो दिवसकृतं पापन्नाशयति । प्रातरधीयानो रात्रिकृतं पापन्नाशयति । सायंप्रातरधीयानः पापोऽपापो भवति । य इदं गायत्रीहृदयं ब्राह्मणः प्रयतः पठेत् सर्वपापैः

प्रमुच्येत । ब्रह्मलोके महीयते । चत्वारो वेदाश्चाधीता भवन्ति सर्वेषु तीर्थेषु स्नातो भवति । सर्वदेवर्ज्ञातो भवति । अभक्ष्यभक्षणात्पूतो भवति । अपेयपानात्पूतो भवति । अगम्यागमनात्पूतो भवति । अस्पृष्टास्पृष्टात्पूतो भवति । स्वर्णस्तेयात्पूतो भवति । सुरापानात्पूतो भवति । वीरहत्यायाः पूतो भवति । भ्रूणहत्यायाः पूतो भवति । पतितसंभाषणात्पूतो भवति । अब्रह्मचारी सुब्रह्मचारी भवति । अनेन हृदयेनाधीतेन क्रतुशतेनेष्टसिद्धिर्भवति । षष्टिर्गायत्र्याः शतसहस्राणि जप्यानि फलानि भवन्ति । अष्टौ ब्राह्मणान् सम्यक् ग्राहयेत् अथास्य सिद्धिर्भवति । इदं नित्यमधीयानो ब्राह्मणः प्रयतः शुचिः सर्वपापैः प्रमुच्येत । ब्रह्मलोके महीयते ब्रह्मलोके महीयत इत्याह भगवान्बोधायनः । इति हृदयम् ।

## अथ सहस्रनामस्तोत्रम् ।

नारद उवाच,

"भगवन् सर्वधर्मज्ञ सर्वशास्त्रार्थपारग । श्रुतिस्मृतिपुराणानां रहस्यं त्वन्मुखाच्छ्रुतम् ॥ १ ॥
"सर्वपापहरं देव केनाविद्या निवार्यते । केन वा ब्रह्मविज्ञानं किंनु वा मोक्षसाधनम् ॥ २ ॥
"ब्राह्मणानां गतिः केन केन वा मृत्युनाशनम् । ऐहिकामुष्मिकफलं केन वा पद्मसंभव ॥ ३ ॥

ब्रह्मोवाच,

"वक्तुमर्हस्यशेषेण सर्वं निखिलमादितः" ।
"साधु साधु महाप्राज्ञ सम्यक् पृष्टं त्वयाऽनघ " ॥ ४ ॥
"शृणु वक्ष्यामि यत्नेन गायत्र्यष्टसहस्रकम् । सृष्ट्यादौ विष्णुना पूर्वं यदुक्तं तद्ब्रवीमि ते ॥ ५ ॥
"अष्टोत्तरसहस्रस्य अहमेव ऋषिः स्मृतः । छन्दोऽनुष्टुप् तथा देवी गायत्री देवता स्मृता ॥ ६ ॥
"हलो बीजानि तस्यैव स्वराः शक्तय ईरिताः । अव्यक्तं कीलकं प्रोक्तं विनियोगस्तु साधनम् ॥ ७ ॥
"अङ्गन्यासौ करन्यासौ मातृकावत्समाचरेत् । अथ ध्यानं प्रवक्ष्यामि साधकानां हिताय वै ॥ ८ ॥
"रक्तश्वेतहिरण्यनीलवदनैर्युक्तां त्रिनेत्रोज्ज्वलां । रक्तां रक्तनवस्रजं मणिगणैर्युक्तां कुमारीमिमाम् ।
"गायत्रीं कमलासनां करतले चक्राब्जयुग्मावहां । पद्माक्षं च वरस्रजं च दधतीं हंसाधिरूढां भजे"॥९

इति ध्यात्वा ।

## अथ नामानि ।

"ॐ—अचिन्त्यलक्षणाऽव्यक्ता अर्यमा चामरेश्वरी । अमृतार्णवमध्यस्था अजिता चापराजिता १०
"अणिमादिगुणाधारा अर्कमण्डलसंस्थिता । अजरा चामरा चार्चा अक्षसूत्रधराऽधरा ॥ ११ ॥
"अकारादिक्षकारान्ता अरिषड्वर्गभेदिनी । अञ्जनाद्रिप्रतीकाशा अञ्जनाद्रिनिवासिनी ॥ १२ ॥
"अचिन्त्या चाजपा विद्या ह्यरविन्दनिभेक्षणा । अन्तर्बहिःस्थिताऽविद्याध्वंसिनी चान्तरात्मिका १३
"अजा चाजमुखावासा अरविन्दनिभानना । अर्धमात्रार्थदाऽनन्ता अरिमण्डलमर्दिनी ॥ १४ ॥
"असुरघ्नी ह्यमावास्या ह्यलक्ष्मी चाब्जजार्चिता । आदिलक्ष्मीश्चादिशक्तिराकृतिश्चायतानना ॥१५॥
"आदित्यपदवीचारा आदित्यपरिसेविता । आचार्यावर्तनाचारा आदिमूलनिवासिनी ॥ १६ ॥
"आग्नेयी चामरी चाद्या आराध्या चासने स्थिता । आराध्यनिलयाधारा आकाशान्तर्निवासिनी॥१७॥

"आद्यक्षरसमायुक्ता आर्द्रा चाकाशरूपिणी । आदित्यमण्डलगता अक्षमालाविभूषिता ॥ १८ ॥
"इन्दिरा त्विष्टदा त्विष्टा इन्दीवरनिभेक्षणा । इन्द्रावती इन्द्रपदा इन्द्राक्षी चेन्दुरूपिणी ॥ १९ ॥
"इक्षुकोदण्डसंयुक्ता इषुसन्धानकारिणी । इन्द्रनीलसमाकारा इडापिङ्गलरूपिणी ॥ २० ॥
"इन्द्राणी चेश्वरी देवी ईषणात्रयवर्जिता । उमा चोक्ता ह्युडुनिभा उर्वारुकफलाशिनी ॥ २१ ॥
"उडुप्रभा चोडुमती उडुपा ह्युडुमध्यगा । उड्वर्था चोडुकेशी च उष्णा ह्युषरवर्जिता ॥ २२ ॥
"ऋतुंचरा ऋतुमती ऋषिदेवसमन्विता । ऋग्वेदा ऋणहर्त्री च ऋषिमण्डलधारिणी ॥ २३ ॥
"ऋद्धिदा ऋजुमार्गस्था ऋतुधर्मा ऋजुप्रदा । ऋग्वेदनिलया ऋज्वी लुप्तधर्मप्रवर्तनी ॥ २४ ॥
"लूतादिविषसंभूता लूतादिविषहारिणी । एकाक्षरी चैकमाता एकानेकैकनिश्चिका ॥ २५ ॥
"ऐन्द्री ह्यैरावतारूढा ऐहिकामुष्मिकप्रदा । ओंकारी ह्योषधी ह्योषा ओतप्रोतविधायिनी ॥२६॥
"औषध्यौषधसंपन्ना औपासनफलप्रदा । अर्कमध्ये स्थिता देवी अन्धकासुरघातिनी ॥ २७ ॥
"कात्यायनी कालरात्री कामाक्षी कामसुन्दरी । कमला कामिनी कान्ता कामदा कलकण्ठिका ॥२८
"करिकुम्भस्तनी कन्या करवीरसुवासिनी । कल्याणी कुण्डलवती कुरुक्षेत्रनिवासिनी ॥ २९ ॥
"कुरुविन्ददलाकारा कुण्डली कुमुदालया । कालजिह्वा करालाक्षी कालिका कालरूपिणी ॥ ३० ॥
"कमनीयगुणा कान्ता कलाधारा कुमुद्वती । कौशिकी कमलाधारा कामचारप्रभञ्जिनी ॥ ३१ ॥
"कौमारी करुणापाङ्गी ककुद्वन्ती करिप्रिया । केशिनी केशवनुता कदम्बकुसुमप्रिया ॥ ३२ ॥
"कालिन्दी कालिका काञ्ची कलशोद्भवसंस्तुता । काममाता क्रतुमती कामरूपा क्रियावती॥३३॥
"कुमारी कुन्दनिलया किराती कीरवाहना । कैकेयी कोकिलालापा केतकी कुसुमप्रिया ॥ ३४ ॥
"कमण्डलुधरा क्रूरा कर्मनिर्मूलकारिणी । कलहंसगतिः कुब्जा कृतकौतुकमङ्गला ॥ ३५ ॥
"कस्तूरीतिलका कम्रा करीन्द्रगमना कुहूः । कर्पूरलेपना कृष्णा कपिला कोटराश्रया ॥३६॥
"कूटस्था कुहराकर्मा कुक्षिस्थाखिलविष्टपा । खड्गखेटधरा खर्वा खेचरी खगवाहना ॥ ३७ ॥
"खट्वाङ्गधारिणी ख्याता खगराजोपरिस्थिता । खलघ्नी खण्डितजरा खण्डा ख्यातिप्रदायिनी॥
"खण्डेन्दुतिलका गङ्गा गणेशगुहपूजिता । गायत्री गोमती गीता गान्धारी गानलोलुपा॥३९॥
"गौतमी गामिनी गन्धा गन्धर्वाप्सरसेविता । गोविंदचरणाक्रान्ता गुणत्रयविभाविता ॥ ४० ॥
"गान्धर्वा गह्वरा गोत्रा गिरीशा गहनागमा । गुहावासा गुणवती गुरुपापप्रणाशिनी ॥ ४१ ॥
"गुर्वी गुणवृता गुह्या गोपिका गुणदायिनी । गिरिजा गुह्यमातङ्गी गरुडध्वजवल्लभा ॥ ४२ ॥
"गर्वापहारिणी गोदा गोकुलस्था गदाधरा । गोकर्णनिलयासक्ता गुह्यमण्डलवर्तिनी ॥ ४३ ॥
"घर्मदा घनदा घण्टा घोरदानवमर्दिनी । घृणीमन्त्री घनाघोषा घनसंपत्प्रदायिनी ॥ ४४ ॥
"घण्टारवप्रिया घोणा घृणिसन्तुष्टिकारिणी । घातपीमण्डला घूर्णा घृताची घनवेगिनी ॥४५॥
"घना चारुमती चर्चा चर्षिणी चारुहासिनी । चटुला चन्द्रिका चित्रा चित्रमाल्यविभूषिता ॥४६॥
"चतुर्भुजा चारुदन्ता चतुरी चरितप्रदा । चूलिका चित्तविश्रान्ता चण्डाभा चूर्णकुन्तला ॥४७॥
"चन्द्रहासा चारुगात्री चकोरी चन्द्रहासिनी । चन्द्रिका चक्रधात्री च चोरा चौरा च चण्डिका॥४८
"चाञ्चद्रागान्दिनी चन्द्रचूडा चौरविनाशिनी । चारुचन्दनलिप्ताङ्गी चञ्चच्चामरवेगिता ॥४९॥
"चारुमध्या चारुगतिश्चन्द्रिका चन्द्ररूपिणी । चारुहोमप्रिया चर्या चरिता चक्ररूपिणी ॥ ५० ॥

"चन्द्रमण्डलमध्यस्था चन्द्रमण्डलदर्पणा । चक्रवाकस्तनी चेष्टा चित्रा चारुविलासिनी ॥ ५१ ॥
"चित्स्वरूपा चन्द्रमती चन्द्रभा चन्दनप्रिया । चोदयित्री चिरप्रज्ञा चातकाध्यानहेतुकी ॥ ५२ ॥
"छत्रपीता छत्रधरा छाया छदपरिच्छदा । छायादेवी छिद्रनखा छिन्नेन्द्रियविसर्पिणी ॥ ५३ ॥
"छन्दोऽनुष्टुप्प्रतिष्ठान्ता छिद्रोपद्रवछेदिनी । छन्ना छन्नेश्वरी छिन्ना छुरिका छेदिनीक्रिया ॥ ५४ ॥
"जननी जन्मरहिता जातवेदा जगन्मयी । जाह्नवी जटिला जैत्री जरामरणवर्जिता ॥ ५५ ॥
"जम्बूद्वीपवती ज्योत्स्ना जयन्ती जयशालिनी । जितेन्द्रिया जितक्रोधा जितामित्रा जगत्प्रिया ॥ ५६ ॥
"जातरूपमयी जिह्वा जानकी जगती ज्वरा । जनित्री जह्नुतनया जगत्त्रयहितैषिणी ॥ ५७ ॥
"ज्वालामुखी जयवती ज्वालघ्नी जितविष्टपा । जिह्वाकान्ता महाज्वाला जाग्रती जयदेवता ॥ ५८ ॥
"ज्वलन्ती ज्वलदा ज्येष्ठा ज्याघोषास्फोटदिङ्मुखा । जम्भनी जृम्भणी जृम्भा ज्वलन्मणिककुण्डला ॥ ५९ ॥
"झलिकाङ्कणनिर्घोषा झञ्झामारुतवेगिनी । झल्लरीवाद्यकुशला ञरूपा ञषध्वजा ॥ ६० ॥
"टङ्कबाणसमायुक्ता टङ्किनी टङ्कवेगिनी । टङ्कीकृतगणाघोषा टङ्किनी च महोरसा ॥ ६१ ॥
"टङ्कारकारिणी देवी टङ्कारात्तनिनादिनी । डामरी डाकिनी डिम्भा डुण्डुमानैकवर्जिता ॥ ६२ ॥
"डामरीतन्त्रमार्गस्था डमड्डमरुवादिनी । डिण्डीरविहगा डिम्भा डोलक्रीडापरायणी ॥ ६३ ॥
"ढुण्ढिविघ्नेशजननी ढक्काहस्ता ढिल्लप्रिया । णित्याज्ञानीयविषया तरुणा तरुणीचया ॥ ६४ ॥
"त्रिगुणा त्रिपदा तन्त्री तुलसी तरुणामना । त्रिविक्रमपदाक्रान्ता तुरीयपदगामिनी ॥ ६५ ॥
"तरुणादित्यसंकाशा तामसी तुहिनाश्रया । त्रिकालज्ञानसंपन्ना त्रिवली च त्रिलोचना ॥ ६६ ॥
"त्रिशक्तिस्त्रिपुरा तुङ्गा तुरङ्गवदना त्रयी । तिमिङ्गिला तिला तीव्रा त्रिस्रोता तामसार्दिनी ॥ ६७ ॥
"तन्त्री तन्त्रविशेषज्ञा तनुमध्या त्रिविष्टपा । त्रिसन्ध्या त्रिस्तनी तोषा तास्तितालप्रवर्तिनी ॥ ६८ ॥
"ताटङ्किनी तुषाराभा तुहिनाचलवासिनी । तन्तुजालसमायुक्ता तारा तारपतिप्रिया ॥ ६९ ॥
"तिलहोमप्रिया तीर्था तमालकुसुमाकृती । तारका त्रियुता तन्वी त्रिशङ्कुपरिसेविता ॥ ७० ॥
"तिलोदरी तिलाभावा ताटङ्कप्रियशोभिता । त्रिजटा तित्तिरी तृष्णा त्रिविधा तरुणाकृतिः ॥ ७१ ॥
"तप्तकाञ्चनसंकाशा तप्तकाञ्चनभूषणा । त्रिपञ्चका त्रिवर्णा च त्रिकालज्ञानदायिनी ॥ ७२ ॥
"तर्पण तृप्तिदा तृप्ता तामसी तुम्बुरुस्तुता । तार्क्ष्यस्था त्रिगुणाकारा त्रिभङ्गी तनुवल्लरी ॥ ७३ ॥
"थात्कारीधारिणी दान्ता दोहिनी दीनवत्सला । दानवान्तकरी दुर्गा दुर्गासुरनिबर्हिणी ॥ ७४ ॥
"देवकी देवतामाता द्रौपदी दुन्दुभिस्वना । देवजानी दुरावासा दारिद्रच्छेदिनी दिवा ॥ ७५ ॥
"दामोदरप्रिया दीप्ता दण्डिनी देवपूजिता । दण्डकारण्यनिलया देवतादित्यरूपिणी ॥ ७६ ॥
"देवविद्या दिविषदा द्वेषिणी दानवाकृतिः । दीनानाथस्तुता दीक्षा दिग्वासा देवमोहिनी ॥ ७७ ॥
"धात्री धनुर्द्धरा धन्वी धरणी धर्मचारिणी । धुरंधरा धराधारा धनदा धान्यदोहिनी ॥ ७८ ॥
"धर्मशीला धनाध्यक्षा धनुर्वेदविशारदा । धृतिधान्या धृतिपदा धर्मराजप्रिया ध्रुवा ॥ ७९ ॥
"धूमावती धूम्रकेशी धर्मशास्त्रप्रवर्तिनी । नन्दा नन्दप्रिया निद्रा नुनता नन्दनात्मिका ॥ ८० ॥
"नर्मदा नलिनी नीला नीलकण्ठसमाश्रिता । नारायणप्रिया नित्या निर्मला निर्गुणा निधिः ॥ ८१ ॥
"निराधारा निरुपमा नित्यशुद्धा निरञ्जना । नादबिन्दुकलातीता नादबिन्दुकलात्मिका ॥ ८२ ॥
"नारसिंही नगधरा नृपदा नागभूषिता । नरकक्लेशजननी नारायणपदोद्भवा ॥ ८३ ॥
"निरवद्या निराकारा नारदप्रियकारिणी । नानाज्योतिषदाख्याता निधिदा निर्मलात्मिका ॥ ८४ ॥

''नवसूत्रकरा नीतिर्निरुपद्रवकारिणी । नन्दजा नवरत्नाढ्या नैमिषारण्यवासिनी ॥ ८५ ॥
''नवनीतप्रिया नारी नीलजीमूतनिःस्वना । निमेषघ्नी नदीरूपा नीलग्रीवा निरीश्वरी ॥ ८६ ॥
''नामावली निशुम्भघ्नी नागलोकनिवासिनी । नवजाम्बूनदप्रख्या नागलोकाधिदेवता ॥ ८७ ॥
''नूपुराक्रान्तचरणा नरचित्तप्रमोदिनी । निमग्नारक्तनयना निर्घातसमनिःस्वना ॥ ८८ ॥
''नन्दनोद्याननिलया निर्व्यूहपरिचारिणी । पार्वती परमोदारा पञ्चब्रह्मात्मिका परा ॥ ८९ ॥
''पञ्चकोशविनिर्मुक्ता पञ्चपातकनाशिनी । परचित्तविधानज्ञा पञ्चिका पञ्चरूपिणी ॥ ९० ॥
''पूर्णिमा परमप्रीतिः परतेजःप्रकाशिनी । पुराणी पौरुषी पुण्या पुण्डरीकनिभेक्षणा ॥ ९१ ॥
''पातालतलनिर्मग्ना प्रीता प्रीतिविवर्द्धिनी । पावनी पवनाहारा पेशला पाकशासनी ॥ ९२ ॥
''प्रजापतिपरिश्रान्ता पर्वतस्तनमण्डला । पद्मप्रिया पद्मसंस्था पद्माक्षी पद्मसंभवा ॥ ९३ ॥
''पद्मपत्रा पद्मपदा पद्मिनी प्रियभाषिणी । पशुपाशविनिर्मुक्ता पुरन्ध्री पुरवासिनी ॥ ९४ ॥
''पतिव्रता पवित्राङ्गी पुष्पहासपरायणी । पुलका पुष्पा पर्वा पारिजातसमप्रिया ॥ ९५ ॥
''प्रजापतिसुता पौर्वी पद्मपत्ना पयस्विनी । पद्मिपाशधरा पङ्क्तिः पितृलोकप्रदायिनी ॥९६॥
''पुराणी पुण्यशीला च प्रणतार्तिपयस्विनी । प्रद्युम्नजननी प्रज्ञा पितामहपरिग्रहा ॥ ९७ ॥
''पुण्डरीकपुरावासा पुण्डरीकसमानना । पृथुजंघा पृथुभुजा पृथुपादा पृथूदरी ॥ ९८ ॥
''प्रवालशोभा पिङ्गाक्षी पीतवासा प्रियंवदा । प्रवासपुष्टिदा पुण्या प्रतिष्ठा प्रणवागतिः ॥९९॥
''पञ्चवर्णा पञ्चवाणा पञ्चिका पञ्जरस्थिता । परमाया परञ्ज्योतिः परा प्रीतिपरागतिः ॥१००॥
''पराकाष्ठा परेशानी पावनी पद्मवासिनी । पुनर्भवा परविद्या पुष्पवासा पृथूदरी ॥ १०१ ॥
''पीताङ्गी पीतवसना पीतशय्या पिशाचिनी । पीतक्रिया पिशाचघ्नी पाटलाक्षी पटुक्रिया ॥१०२॥
''पञ्चभक्षप्रिया पारा पूतना प्राणघातिनी । पुन्नागवनमध्यस्था पुण्यतीर्थनिषेविता ॥ १०३ ॥
''पञ्चाङ्गाङ्गपराशक्तिः परमाह्लादकारिणी । पुष्पकग्रथिता पूषा पोषिताखिलविष्टपा ॥१०४॥
''पानप्रिया पञ्चशिखा पन्नगोपरिशायिनी । पञ्चमात्रात्मिका पृथ्वी पावकी पृथुदोहिनी ॥१०५॥
''पुराणन्यायमीमांसा पाटलापुष्पगन्धिनी । पुण्यप्रदा परजीवा प्रणवांकगोचरा ॥ १०६ ॥
''प्रवालशोभा पूर्णास्या प्रणवा पल्लवाधरी । फलिनी फलदा फुल्ला फुल्लारिफलकाकृतिः ॥१०७॥
''फणीन्द्रभोगशयना फणिमण्डलमण्डिता । बलाबला बहुमता बालातपनिभांशुका ॥१०८॥
''बलभद्रप्रिया बन्द्या बड़वा बुद्धिसंस्तुता । बन्दीदेवी बिलवती बडिशघ्नी बलिप्रदा ॥१०९॥
''बान्धवी बोधिता बुद्धिर्बन्धूककुसुमद्युतिः । बालभानुप्रभाकारा ब्राह्मी ब्राह्मणदेवता ॥११०॥
''बृहस्पतिस्तुता वृन्दा वृन्दावनविहारिणी । बालाकिनी बिलाहारा बिलवासा बहूदका ॥१११॥
''बहुनेत्रा बहुपदा बहुवक्त्रा बहुप्रिया । बहुबाहुयुता बीजरूपिणी बहुरूपिणी ॥ ११२ ॥
''बिन्दुनादकलातीता बिन्दुनादस्वरूपिणी । बद्धगोधाङ्गुलित्राणा बदर्याश्रमवासिनी ॥ ११३ ॥
''बृन्दारकबृहत्स्कन्धा बृहती बाणपातिनी । बृन्दाध्यक्षा बहुसुता बहुजा बाहुविक्रमा ॥ ११४ ॥
''बद्धपद्मासनासीना बिल्ववृक्षतलास्थिता । बोधिद्रुमनिजावासा बुद्धिष्ठा बिन्दुदर्पणा ॥ ११५ ॥
''बाणबाणासनवती बडवानलयोगिनी । ब्रह्माण्डबहिरन्तःस्था ब्रह्मकङ्कणसूत्रिणी ॥ ११६ ॥
''भवानी भूषणवती भामिनी भयवारिणी ; भद्रकाली भुजङ्गाक्षी भारती भरताश्रया ॥ ११७ ॥

''भैरवी भुवनाकारा भूरिदा भगमालिनी । भामिनी भोगनिरता भद्रदा भूरिविक्रमा ॥ ११८ ॥
''भूतवासा भृगुसुता भानवी भूसुरार्चिता । भागीरथी भोगवती भवनाशी भिषग्वरा ॥ ११९ ॥
''भ्रामिणी भोगिणी भाषी भद्राणी भूरिदक्षिणा । भगात्मिका भीमरथी भवबन्धनमोचिनी ॥ १२० ॥
''भजनीया भूतधात्री भञ्जिता भुवनेश्वरी । भुजङ्गवलया भीमा भेरुण्डा भगभाविनी ॥ १२१ ॥
''माता माया मधुमती मधुजिह्वा मधुप्रिया । माध्वीदेवी महाभागा मानिनी मीनलोचना ॥ १२२ ॥
''मायातीता मधुमता मतिभास्या मधुद्रवा । मालिनी मधुसम्भूता मिथिलापुरवासिनी ॥ १२३ ॥
''मधुकैटभसंहर्त्री मदिनी मेघमालिनी । मन्दोदरा महामाया मैथिली सुरशासिनी ॥ १२४ ॥
''महालक्ष्मीर्महाकाली महाकन्या महेश्वरी । महेन्द्रमेरुतनया मन्दारकुसुमार्चिता ॥ १२५ ॥
''मञ्जुमञ्जीरचरणा मोक्षदा मञ्जुभाषिणी । मधुराद्राविणी मुद्रा मत्तमातङ्गगामिनी ॥ १२६ ॥
''मेधा मरकतश्यामा मागधी मेनकात्मजा । महामारी महावीरा महारूपा मुनिस्तुता ॥ १२७ ॥
''मातृकातिमिराभासा मुकुन्दपदविक्रमा । मूलाधारस्थिता मुग्धा मणिपूरकवासिनी ॥ १२८ ॥
''मृगाक्षी महिषारूढा महिषासुरमर्दिनी । योगासना योगगम्या योगा यवनिकाश्रया ॥ १२९ ॥
''यवनी यूथमध्यस्था यमुना युगधारिणी । यक्षिणी योगपर्याप्ता यक्षराजप्रसूतिनी ॥ १३० ॥
''याता यागविधानज्ञा यदुवंशसमुद्भवा । यकारादिहकारान्ता यजुषावनमालिनी ॥ १३१ ॥
''यामिनी योगनिरता यातुधानभयंकरी । रुक्मिणी रमणी रामा रेवती रेणुकाकृतिः ॥ १३२ ॥
''रौद्री रुद्रप्रिया राका राममाता रतिप्रिया । रोहिणी राज्यदा शीघ्रा रामा राजीवलोचना ॥ १३३ ॥
''राकिणी रूपसंपन्ना रत्नसिंहासनस्थिता । रक्तमाल्याम्बरधरा रक्तगन्धानुलेपना ॥ १३४ ॥
''राजहंससमारूढा रम्भा रक्तबलिप्रिया । रमणीयगुणाधारा राजिताखिलभूतला ॥ १३५ ॥
''रुरुचर्मपरीधाना रचिता रत्नलालिका । रागिणी रोगरामावीड्डाकिनी रोमहर्षणा ॥ १३६ ॥
''रामचन्द्रपदाक्रान्ता रावणच्छेदकारिणी । रक्तवस्त्रपरिच्छिन्ना रथस्था रुक्मभूषणा ॥ १३७ ॥
''लङ्कादिदेवता लोला ललिता लिङ्गधारिणी । लक्ष्मीर्लीला लुप्तविषा लोकिनी लोकविश्रुता ॥ १३८ ॥
''लज्जा लम्बोदरी देवी ललना लोकधारिणी । वरदा वन्दिता विद्या वैष्णवी विमलाकृतिः ॥ १३९ ॥
''वाराही विरजा वर्या वरलक्ष्मीर्विलासिनी । विरजा व्योममध्यस्था विश्वरूपा विधिप्रिया ॥ १४० ॥
''विष्णुपत्नी विष्णुमती विशालाक्षी वसुन्धरा । वामदेवप्रिया वेला वज्रिणी वसुदोहिनी ॥ १४१ ॥
''वेदाक्षरपरीताङ्गी वाजपेयफलप्रदा । वासवी व्योमजननी वैकुण्ठनिलया वरा ॥ १४२ ॥
''व्यासप्रिया वर्मधरा वाल्मीकिपरिसेविता । शाकंभरी शिवा शान्ता शारदा शरणागतिः ॥ १४३ ॥
''शान्तोदरी शुभाचारा शुम्भासुरविदारिणी । शोभावती शिवाकारा शङ्करार्द्धशरीरिणी ॥ १४४ ॥
''शोणी शुभजला शुभ्रा शरसन्धानकारिणी । शरावती शरानन्दा शरज्ज्योत्स्ना शुभानना ॥ १४५ ॥
''शलभा शूलिनी श्रद्धा शबरी शुकवाहिनी । श्रीमती श्रीधरनुता श्रवणानन्दकारिणी ॥ १४६ ॥
''शर्वाणी शर्वरा शुद्धा षड्भासा षड्ऋतुक्रमा । षडाधारस्थिता देवी षण्मुखप्रियकारिणी ॥ १४७ ॥
''षडङ्गरूपा सुमती सुरासुरनमस्कृता । सरस्वती सदाधारा सर्वमङ्गलकारिणी ॥ १४८ ॥

"सामगानप्रिया सुभ्रूः सावित्री सामसंभवा । सर्वावासा सदानन्दा सुस्तनी सागराम्बरा ॥ १४९ ॥
"सर्वैश्वर्यप्रदा सिद्धिः साधुबिन्दुपदक्रमा । सुषुप्त्यवस्था सुरभी सूर्यमण्डलमध्यगा ॥ १५० ॥
"सप्तार्चिर्मण्डलगता सोममण्डलवासिनी । सरयूः सूर्यतनया सुकेशी सोमसंहतिः ॥ १५१ ॥
"हिरण्यवर्णा हरिणी ह्रींकारी हंसरूपिणी । क्षमावस्त्रपरीताङ्गी क्षीराब्धितनया क्षमा ॥१५२॥
"गायत्रीं चैव सावित्रीं प्रणमामि सरस्वतीम् । वेदगर्भवरारोहां तोषयामि पुनः पुनः ॥१५३॥
"यानि नामानि लोकेषु गायत्र्याश्च मयोदितम् । अष्टोत्तरसहस्रं तु पठितव्यं द्विजैः सदा॥१५४॥
"जपे कृते होमपूजां कृत्वा जपविशेषतः । यस्मै कस्मै न वक्तव्यं गायत्र्यष्टसहस्रकम् ॥१५५॥
"सुभक्ताय सुशिष्याय वक्तव्यं भूसुराय च । इदं रहस्यं परमं गुह्याद्गुह्यतरं महत् ॥ १५६ ॥
"पुत्रप्रदमपुत्राणां दरिद्राणां धनप्रदम् । मोक्षप्रदं मुमुक्षूणां कामिनां सर्वकामदम् ॥ १५७ ॥
"रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् । ब्रह्महत्यासुरापानसुवर्णस्तेयकृन्नरः ॥ १५८ ॥
"गुरुतल्पगतो वाऽपि पठनान्मुच्यते सकृत् । इदं रहस्यममलं मयोक्तमृषिसत्तम ॥ १५९ ॥
"हठनाद् ब्रह्मसायुज्यं प्राप्नुवन्ति न संशयः ॥ ० ॥"

इति श्रीविष्णुयामले सृष्टिप्रशंसायां गायत्र्यष्टोत्तरसहस्रं नाम पञ्चाशत्तमोऽध्यायः ।

---

## अथ गायत्रीपुरश्चरणविधिः ।

"भूयस्त्वक्षरलक्षं गायत्रीं संयतात्मको जप्त्वा । जुहुयात्पायसघृततिलदूर्वाभिर्दुग्धतरुसद्भिरपि ॥"
"अश्वत्थोदुम्बरप्लक्षवटा दुग्धतरुरिति स्मृता इति । एकैकं त्रिसहस्रं मन्त्री समभीष्टसिद्धये मुक्त्यै ॥
"अक्षरसहस्रसंख्यं मुख्यतरैः केवलैस्तिलैर्जुहुयात् । दुरितोच्छेदनाविषये मन्त्री दीर्घायुषे च विशदमतिः
"आयुष्कामो जुहुयात्पायसहविराज्यकेवलाज्यैश्च । दूर्वाभिः सतिलाभिः सर्वैस्त्रिसहस्रसंख्यकं मन्त्री ॥
"अथ तु त्रिमधुरसिक्तैररुणैर्जुहुयात्सरोरुहैरयुतम् । नष्टश्रीरपि भूयो भवति मनोज्ञं सुमन्दिरं लक्ष्म्याः॥
"अन्नाद्यर्थं तैरपि पालाशैर्ब्रह्मवर्चसे जुहुयात् । सर्वैरेतैर्जुहुयात्सर्वफलाप्त्यै द्विजेश्वरो मतिमान् ॥

अक्षरसंख्यानि लक्षाणि यस्यां क्रियायां चतुर्विंशतिरिति यावत् । घृततिलात्मकमेकं हविः । मुक्त्यै इत्यारभ्य, चेत्यन्तमेकं वाक्यम् । विशदमतिरिति ध्यानजपाभ्यां शुद्धचित्त इत्यर्थः ।

"आज्यात्मकमेकं हविर्हविरोदनमन्नाद्यर्थमपीति । भिन्नक्रमोऽपि पालाशैः पुष्पैः सनत्कुमारोक्तैः ॥

**शारदातिलके**ऽपि,

"व्याहृतित्रयसंयुक्तां गायत्रीं दीक्षितो जपेत् । तत्त्वलक्षं विधानेन भिक्षाशी विजितेन्द्रियः ॥
"क्षीरोदनं तिला दूर्वाः क्षीरद्रुमसमिद्वराः । पृथक् सहस्रत्रितयं जुहुयान्मन्त्रसिद्धये ॥" इति ॥
"तत्त्वसंख्यासहस्राणि मन्त्रवित् जुहुयात्तिलैः । सर्वपापविनिर्मुक्तो दीर्घमायुः स विन्दति ॥
"आयुषे साज्यहविषा केवलेनाथ सर्पिषा । दूर्वाभिस्तिलैर्मन्त्री जुहुयात्त्रिसहस्रकम् ॥
"अरुणाब्जैस्त्रिमध्वक्तैर्जुहुयादयुतं ततः । महालक्ष्मीर्भवेत्तस्य षण्मासान्नात्र संशयः ॥
"ब्रह्मश्रिये प्रजुहुयात्प्रसूनैर्ब्रह्मवृक्षजैः । "

ब्रह्मवृक्षः पलाशः । त्रिमध्वक्तैरित्यनुषङ्गः । सिताज्यं मधु ॥

इति गायत्रीपुरश्चरणविधिः ।

## अथ गायत्रीपुरश्चरणप्रयोगः ।

तत्रादौ देशकालौ संकीर्त्य करिष्यमाणगायत्रीपुरश्चरणे अधिकारसिद्ध्यर्थममुकशर्मणोऽनुज्ञया-तत्प्रतिनिधित्वेन कृच्छ्रत्रयममुकप्रत्याम्नायेन करिष्ये इति संकल्प्य तानाचरेत् । स्वकर्तृके तु अमुकशर्माऽहं कृच्छ्रेत्यादि वदेत् । जपदानहोमाद्यन्यतमप्रत्याम्नायेन विधिना तानाचरेत् । एवमग्रेऽप्यूह्यम् । तदन्ते अमुकशर्मणो गायत्रीपुरश्चरणे अनेन कृच्छ्रानुष्ठानेनाधिकारसिद्धिरस्त्विति ब्राह्मणान् प्रति वदेत् । तेऽपि अधिकारसिद्धिरस्त्विति वदेयुः । अमुकशर्मणोऽनुज्ञया करिष्यमाणगायत्रीपुरश्चरणाङ्गत्वेन विहितं गायत्र्यादिजपं करिष्ये इति संकल्प्य, प्रणवव्याहृतित्रयगायत्र्या अयुतजपं कृत्वा,, आपोहिष्ठेति सूक्तम् एतोन्विन्द्रेति तिस्रः ऋतंचेत्यृक्त्रयं स्वस्तिनोमिमीतेति स्वस्तिमतीः स्वादिष्ठयेति पावमानीश्च सर्वा जपेत् । प्रत्येकं दशवारं जपेत् । अन्ते तत्सवितुरित्यस्या ऋच आचार्य विश्वामित्र-ऋषिं तर्पयामि गायत्रीछन्दस्तर्पयामि सवितारं देवतां त० इति तर्पयित्वा रुद्रं नमस्कृत्य कद्रुद्रायेति च रुद्रसूक्तानि जपेत् ।

ततः सुमुहूर्ते स्नातः पवित्रपाणिराचम्य प्राणानायम्य देशकालौ संकीर्त्यामुकशर्मणो ब्राह्मणस्य सकलपापक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं तदनुज्ञया चतुर्विंशतिलक्षजपात्मकं गायत्रीपुरश्चरणं ब्राह्मणद्वारा स्वयं वा आचरिष्ये, तदङ्गत्वेन स्वस्तिवाचनं मातृकापूजनं नान्दीश्राद्धं जापकवरणं यथाविभवं तत्पूजनं च करिष्ये इति संकल्प्य, तदादौ गणेशपूजादि नान्दीमुखान्तं कृत्वा । प्रजापतिस्थाने सविता प्रीयतामिति विशेषः । ततोऽमुकाज्ञया क्रियमाणे पुरश्चरणे जपकर्तारं त्वामहं वृणे इति प्रत्येकं वरणं कृत्वा यथाविभवमानसवस्त्रालङ्कारचन्दनादिभिः पूजयेत् । ततः एकैको ब्राह्मणः शुद्धदेशे कुशाद्यासने उपविश्य पवित्रपाणिराचम्य प्राणानायम्य देवताः प्रार्थयेत्.

“सूर्यः सोमो यमः कालः संध्ये भूतान्यहः क्षपा । पवनो दिक्पतिर्भूमिराकाशं खेचरामराः ॥
“ब्रह्मशासनमास्थाय कल्पध्वमिह संनिधिम् । ”

इति । देशकालौ स्मृत्वा जपं संकल्प्य गुं गुरुभ्यो० पं पर० पं परात्प० गं गणपत० दुं दुर्गायै० क्षं क्षेत्रपाला० वं वास्तोष्पतये० मातृभ्यो नम इति नत्वा त्रिः प्राणानायम्य भूशुद्ध्यादिपञ्चकं विधाय ऋष्यादि स्मृत्वा ऋष्यादिन्यासकरन्यासहृदयादिषडङ्गन्यासान् वक्ष्यमाणरीत्या कृत्वा, विश्वामित्रऋषये नमः शिरसि, गायत्रीछन्दसे नमः मुखे, सवितृदेवतायै नमः हृदि ।

इति ऋष्यादिन्यासः ।

---

ॐतत्सवितुरङ्गुष्ठाभ्यां० वरेण्यं तर्जनीभ्यां० भर्गोदेवस्य मध्यमाभ्यां० धीमहि अनामिकाभ्यां० धियोयोनः कनिष्ठि० प्रचोदयात् करत० । एवं हृदयादि । तत्सवितुः ब्रह्मात्मने हृदि० वरेण्यं विष्ण्वात्मने शिरसि० भर्गोदेवस्य रुद्रात्मने शिखा० धीमहि ज्ञानात्मने कवचा० धियो योनः सदाशिवात्मने नेत्रत्रयाय० प्रचोदयात्सर्वात्मने अस्त्रा० ध्यात्वा वक्ष्यमाणरीत्या संस्कृतां जपमालां पात्रे निधाय दक्षिणकरेण संप्रोक्ष्य,

"ओं मां माले महामाये सर्वशक्तिस्वरूपिणी। चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव॥" इति–

प्रार्थ्य, अविघ्नं कुरु माले त्वमित्यादाय मन्त्रदेवतां सवितारं ध्यायन् हृदयसमीपे मालां धारयन् मध्यमाङ्गुलिपर्वणि निधायोन्नतगात्रः, प्रत्यावृत्त्यां प्रणवावृत्तिः, मध्यंदिनावधि जपेत्। अतित्वरायां सार्धप्रहरत्रयावधि जपेत्। अन्ते पुनः प्रणवमुच्चार्य—

"त्वं माले सर्वदेवानां प्रीतिदा शुभदा भव। शिवं कुरुष्व मे भद्रे यशो वीर्यं च सर्वदा॥"

इति शिरसि मालां निधाय त्रिः प्राणानायम्य पूर्वोक्तन्यासत्रयं कृत्वा जपमीश्वरदक्षिणकरे निवेद्य गुह्याति०। एवं समाप्ते जपे स्वगृह्योक्तविधिनाऽग्निं प्रतिष्ठाप्यान्वाधानं ग्रहावाहनादिकलशस्थापनान्तं कृत्वा चक्षुषी आज्येनेत्यन्तमादित्यादिनवग्रहानर्कादिजातीयसमिदाहुतिभिश्चर्वाहुतिभिराज्याहुतिभिरमुकसंख्याकाभिरित्येवं लोकपालदेवतान्वाधानान्तं कृत्वाऽत्र प्रधानं सवितारं चतुर्विंशतिसहस्रतिलाहुतिभिः त्रिसहस्रपायसाहुतिभिस्तावतीभिर्घृताक्ततिलाहुतिभिस्तावतीभिर्दूर्वाहुतिभिस्तावतीभिर्घृताहुतिभिस्तावतीभिः क्षीरद्रुमसमिदाहुतिभिश्च शेषेण स्विष्टकृतमित्यादि काले चरुपायसतिलैः सहाज्यस्य पर्यग्निकरणं यथान्वाधानं काले इदं सवित्रादिभ्यो न ममेति त्यागः। दूर्वासमिधां दधिमध्वञ्जनं कार्यम्। होमे व्याहृतिरहिता सप्रणवा स्वाहान्ता गायत्री। दूर्वात्रयस्यैकाहुतिः। काले बलिदानादि कृत्वा समुद्रज्येष्ठेत्यादिमन्त्रैरभिषेकान्ते प्रत्येकं धेनुनिष्क्रयं संकल्प्य, ततो विसर्जनादिब्राह्मणभोजनादिसंकल्पान्ते ईश्वरार्पणं कुर्यात्।

अयं च होमो जपशतांशो दशांशो वा। होमसमाप्तौ जले देवं संपूज्य होमदशांशेन गायत्र्यन्ते सवितारं तर्पयामीति तर्पणं कार्यम्। तद्दशांशेन गायत्र्यन्ते मार्जनम्। आत्मानमभिषिञ्चामि नम इति इति कुम्भमुद्रया यजमानकर्तृकत्वे स्वमूर्धनि ऋत्विक्कर्तृकत्वे यजमानमूर्द्धनि अभिषेकः कार्यः। होमाभावे तद्द्विगुणजपः। मार्जनदशांशेन ब्राह्मणभोजनं कुर्यात्। ततः ब्राह्मणान् दक्षिणाभिः परितोष्य आशिषो गृहीत्वा पुरश्चरणं संपूर्णमस्त्विति भवन्तो ब्रुवन्त्विति वाचयित्वा ईश्वरार्पणं कुर्यात्। आरम्भप्रभृति यावत्समाप्तिपर्यन्तं ब्राह्मणैः सह हविष्याशी सत्यवागधःशायी भवेत्। यज्जाग्रत इति शिवसंकल्पमन्त्रांस्त्रिः पठित्वा प्रत्यहं शयीतेति पुरश्चरणप्रयोगः।

## अथ मालासंस्कार उच्यते।

कुशोदकेन पञ्चगव्येन मालां प्रक्षाल्य ॐ अंआंइंईमित्यादि हंक्षम् इत्यन्तानि मातृकाक्षराणि अश्वत्थपत्रस्थापितमालायां विन्यस्य ॐ सद्यो जातं० भवे भवे० वामदेवा० अघोरेभ्यो० तत्पुरुषाय० ईशानः स० शिवोम् इति पञ्च मन्त्रान् जपित्वा एतेषां मध्ये प्रथमेन पञ्चगव्येन शीतलजलेन मालां प्रक्षाल्य द्वितीयेन चन्दनादिना विघृष्य तृतीयेन मालां धूपयित्वा तुरीयेन, चन्दनकस्तूर्यादिना लेपयित्वा पञ्चमेन प्रतिमणिं शतवारमभिमन्त्रयेत्। अघोरेभ्य इति मन्त्रेण मेरुं शतवारमभिमन्त्रयेत्। एतैर्मन्त्रैः पञ्चभिः पञ्चोपचारैः मालामिष्टदेवतावत्संपूजयेत्।

इति मालासंस्कारः।

एवं चतुर्विंशतिलक्षजपात्मकं पुरश्चरणं मन्त्रकोशादावुक्तं पारिजातोदाहृते ।
ऋग्विधाने तु,

"अथ वेदादिगीतायाः प्रसादजननं विधिम् । गायत्र्याः संप्रवक्ष्यामि धर्मकामार्थमोक्षदम् ॥
"मध्याह्ने मितभुक् मौनी त्रिःस्नानार्चनतत्परः । जपलक्षत्रयं धीमानान्यत्रुङ्मानसक्रियः ॥"

इति त्रिलक्षं पुरश्चरणमुक्तम् । कलौ उक्तसंख्याचतुर्गुणे जपो विहितः, अतो द्वादशलक्षं पुरश्चरणं भवति । तत्र संकल्पस्तथैवोह्यः, द्वादशलक्षपुरश्चरणं करिष्य इति सवितारं द्वादशसहस्रतिलाहुतिभिरिति पूर्वोक्तैः पञ्चद्रव्यैर्यथाविभागेन द्वादशसहस्रैः आहुतिभिरित्येवम् ।

इति गायत्रीपुरश्चरणम् ।

---

अथ स्पष्टार्थं पुनर्गायत्रीकल्पो लिख्यते । ओमिति प्रणवस्य ब्रह्मा ऋषिः । परमात्मा देवता । देवी गायत्री छन्दः । अमिति बीजम् । उमिति शक्तिः । ममिति कीलकम् । विद्युद्वर्णः । उदात्तस्वरः । लातव्यं गोत्रम् । मात्राणां वसिष्ठविश्वामित्रभरद्वाजा ऋषयः । ब्रह्मविष्णुमहेश्वरा देवताः । गायत्री त्रिष्टुब्जगती छन्दांसि । भूरन्तरिक्षं द्यौः स्थानानि । गार्हपत्यदक्षिणाग्न्याहवनीया अग्नयः । पीतविद्युच्छ्वेता वर्णाः । जाग्रत्स्वप्नसुषुप्त्यवस्थाः ।

## अथ ऋष्यादिन्यासः ।

शिरसि परब्रह्मणे नमः । मुखे गायत्र्यै नमः । हृदये परमात्मने नमः । गुह्ये बीजाय नमः । वामाङ्गे शक्त्यै नमः । तत्रैव कीलकाय नमः । पादादिनाभिपर्यन्तमकाराय नमः । नाभ्यादिकण्ठपर्यन्तमुकाराय नमः । कण्ठादिमूर्धपर्यन्तं मकाराय नमः ।

## अथाऽङ्गुलिन्यासः ।

अं ॐ आं अङ्गुष्ठाभ्यां नमः । इं ॐ ईं तर्जनीभ्यां नमः । उं ॐ ऊं मध्यमाभ्यां नमः । एं ॐ ऐं अनामिकाभ्यां नमः । ओं ॐ औं कनिष्ठिकाभ्यां नमः । अं ॐ अः करतलकरपृष्ठाभ्यां नमः । एवं हृदयादि ।

## अथ प्रणवसगुणध्यानम् ।

"श्रीवत्साङ्कं नीलकण्ठं त्रिवर्णं परमेश्वरम् । षड्भुजं सत्रिनेत्रं च सृष्टिस्थितिलयप्रदम् ॥
"अधोदोर्भ्यां च बिभ्राणमक्षमालां कमण्डलुम् । मध्यमाभ्यां चक्रशङ्खौ त्रिशूलं डमरुं ततः ॥"

## अथ निर्गुणध्यानम् ।

"हृदयकमलमध्ये दीपवद्वेदसारं प्रणवमयमतर्क्यं योगिभिर्ध्यानगम्यम् ।
"हरिगुरुशिवयोगं सर्वभूतस्थमेकं सकृदपि मनसा मां ध्यायते यः स मुक्तः ॥"

## अथ मात्राध्यानम् ।

या सा प्रथममात्रा ब्रह्मदैवत्या रक्तवर्णा यस्तां ध्यायेत्स गच्छेद् ब्रह्मणः पदम्।
या सा द्वितीयमात्रा विष्णुदैवत्या कृष्णवर्णेन यस्तां ध्यायेत् स गच्छेद्वैष्णवं पदम् ।
या सा तृतीयमात्रा ईशानदैवत्या कपिलवर्णेन यस्तां ध्यायेत्स गच्छेदैशानं पदम् ।
या साऽर्द्धचतुर्थी मात्रा व्यक्तिभूता खं चरन्ती स्फटिकसन्निभा सर्ववर्णेन यस्तां ध्यायेन्नित्यं स गच्छेदनामयं पदम् ।

ओंकार ऋग्वेदे त्रयीस्वर्योदात्त एकाक्षरः । ओंकारो यजुर्वेदे दीर्घप्लुतोदात्त एकाक्षरः । ओंकारः सामवेदे ह्रस्वोदात्त एकाक्षरः । ओंकारोऽथर्ववेदे उदात्तोदात्तस्तथा द्विपद इति गायत्र्युपनिषद् ।

सप्तानां व्याहृतीनां विश्वामित्रजमदग्निभरद्वाजगौतमात्रिवसिष्ठकश्यपा ऋषयः । अग्निवायुसूर्यबृहस्पतिवरुणेन्द्रविश्वेदेवा देवताः । गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यः छन्दांसि । श्वेतश्यामपीतपिशङ्गनीललोहितकनकवर्णाः । षड्जऋषभगान्धारमध्यमपञ्चमधैवतनिषादाः स्वराः । पृथिव्यप्तेजोवाय्वाकाशदिगात्मानो बीजानि । श्रीःकीर्तिर्मायाधृतिर्मेधास्मृतिर्वाचः शक्तयः । आग्निवेश्यकाश्यपगौतमाङ्गिरसाभार्गवकौशिकवासिष्ठानि गोत्राणि । शब्दस्पर्शरूपरसगन्धमनोबुद्धयस्तत्त्वानि । विततसमाञ्जलिशकटविस्तृतयमपाशव्यापका मुद्राः । प्राणापानव्यानोदानसमानचित्ताहंकारजनितपापशमनं फलम् । प्राणायामे विनियोगः ।

ॐ भूः पादाभ्यां नमः । ॐ भुवः जानुभ्यां नमः । ॐ स्वः गुह्याय नमः । ॐ महः नाभ्यै नमः । ॐ जनः हृदयाय नमः । ॐ तपः कण्ठाय नमः । ॐ सत्यं मूर्ध्ने नमः । मध्यमगायत्र्या विश्वामित्र ऋषिः । सविता देवता । वरे इति बीजम् । णीयामिति शक्तिः ।

## अथ ध्यानम् ।

"मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्वार्थवर्णात्मिकाम् ।
"गायत्रीं वरदाभयाङ्कुशकशां शुभ्रं कपालं गुणम् शङ्खं चक्रमथारविन्दुयुगलं हस्तैर्वहन्तीं भजे ॥ "

इति ध्यानम् ।

---

## अथ पदन्यासः ।

तत्पादाभ्यां नमः । सवितुः जङ्घाभ्यां नमः । वरेण्यं कटिभ्यां नमः । भर्गः नाभ्यै नमः । देवस्य हृदयाय नमः । धीमहि कण्ठाय नमः । धियः मुखाय नमः । यः चक्षुर्भ्यां नमः । नः ललाटाय नमः । प्रचोदयात् मूर्ध्ने नमः ।

शिरसः परमेष्ठी प्रजापतिर्ऋषिः । ब्रह्माग्निवायुसूर्या देवताः । त्रिष्टुप् छन्दः । सर्वः स्वरः । दीप्तो वर्णः । प्राणायामे विनियोगः । ॐ अं नाभ्यै नमः । ॐ उं हृदयाय नमः । ॐ मं मुखाय

नमः । ॐ भूः पादाभ्यां नमः । ॐ भुवः जानुभ्यां नमः । ॐ स्वः गुह्याय नमः । ॐ महः नाभ्यै नमः । ॐ जनः हृदयाय नमः । ॐ तपः कण्ठाय नमः । ॐ सत्यं मूर्ध्ने नमः ।

ॐ तत्सवितुर्ब्रह्मणे अङ्गुष्ठाभ्यां नमः । ॐ वरेण्यं विश्वात्मने तर्जनीभ्यां नमः । ॐ भर्गो देवस्य ज्योतिरात्मने मध्यमाभ्यां नमः । ॐ धीमहि मायात्मने अनामिकाभ्यां नमः । ॐ धीयो यो नः ज्ञानात्मने कनिष्ठिकाभ्यां नमः । ॐ प्रचोदयात्सत्यात्मने करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः ।

ॐकारः सर्वत्र,

आपः स्तनाभ्यां नमः । ज्योतिर्नेत्राभ्यां नमः । रसो जिह्वायै नमः । अमृतं ललाटाय नमः । ब्रह्मभुर्भुवः स्वरोम् कवचाय हुम् ।

एवं प्रणवव्याहृतिगायत्रीतच्छिरोभिः प्राणायामं कुर्यात् । तद्यथा । ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यम् ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् । ओमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम् ।

मम उपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रातःसंन्ध्यामुपासिष्ये ।

## प्रातःसन्ध्याध्यानम् ।

प्रातःसन्ध्या गायत्री कुमारी रक्ता रक्ताङ्गी रक्तवस्त्रा रक्तमाल्यानुलेपना चतुर्भुजा चतुर्वक्त्रा अक्षमालाकमण्डलुशिरोपुस्तककुशमुष्टिधारिणी वरदाभयहस्ता हंसस्कन्धसमारूढा ब्रह्मदेवत्या गार्हपत्यमध्यस्था ऋग्वेदमुद्गिरन्ती अष्टभैरवाधिष्ठिताष्टपत्रा शक्त्यधिष्ठितपत्राग्रदेदीप्यमानकमलकर्णिकस्था सूर्यमण्डलं गच्छन्ती कमलासनसुवर्णकेयूरमकरकुण्डलमुक्ताहारशङ्खचक्रधरा श्रीसूर्यपरमात्मरूपा ॐकारशिखा सोऽहमस्मि ।

'तेजोऽसीति' मन्त्रस्य परमेष्ठी प्रजापतिर्ऋषिः आज्यं देवता अनुष्टुप्छन्दः । गायत्र्यावाहने विनियोगः ।

तेजोऽसि शुक्रमस्यमृतमसि धामनामासि । प्रियं देवानामनाधृष्टं देवयजनमसि ।

"आयाहि वरदे देवि त्र्यक्षरे ब्रह्मवादिनि । गायत्रि छन्दसां मातर्ब्रह्मयोने नमोऽस्तु ते ॥"

'आपो हि ष्ठेति' तृचस्य सूक्तस्य सिन्धुद्वीप ऋषिः आपो देवता गायत्री छन्दः मार्जने विनियोगः । प्रणवपूर्वपादेन मार्जनम् ।

'सूर्यश्चे'त्यस्य मन्त्रस्य सूर्यमन्युमन्युपतिरात्रयो देवताः प्रकृतिः छन्दः प्रातःसंध्याचमने विनियोगः । आपोहिष्ठेति नवर्चस्य सूक्तस्य अम्बरीषः सिन्धुद्वीप ऋषिः आपो देवता, सप्तानामृचां गायत्री छन्दः पञ्चमी वर्द्धमाना सप्तमी प्रतिष्ठा अन्त्ये द्वे अनुष्टुभौ मार्जने विनियोगः ।

"नवप्रणवयुक्तेनापोहिष्ठेन तृचेन तु । संवत्सरकृतं पापं मार्जनेन विनश्यति ॥"

'ऋतं च सत्यमिति' मन्त्रस्याघमर्षण ऋषिः भाववृत्तं देवता अनुष्टुप्छन्दः अघमर्षणे विनियोगः। आचम्य ३—

"अपः पाणौ समादाय कृत्वा वै मार्जनं कृती। तत्तोयं मूर्ध्नि विन्यस्य मुच्यते ब्रह्महत्यया॥"

प्रथमं तद्विष्णोरिति द्वाभ्यां जपित्वा। द्रुपदेत्यस्य मन्त्रस्य द्रुपद ऋषिः वरुणो देवता अनुष्टुप्छन्दः मस्तकप्रोक्षणे विनियोगः।

ॐ द्रुपदादिव मुमुचानः स्विन्नः स्नात्वी मलादिव। पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः। तरत्समन्दीत्यादिभिः केचित्। गायत्र्याऽर्घ्यदानं त्रिकाललोपप्रायश्चित्तम्।

'गायत्र्यर्घ्यं प्रकुर्वीत शिखाव्याहृतिसंपुटम्'। अर्घ्यानन्तरं तर्पणं कुर्यात्। गायत्र्या विश्वामित्र ऋषिः। ब्रह्मा देवता। गायत्री छन्दः। भूः पुरुषतर्पणे विनियोगः।ॐ भूः पुरुषं तर्पयामि। ऋग्वेदं तर्पयामि। मण्डलान्तर्गतं तर्पयामि। हिरण्यगर्भरूपिणं तर्पयामि। आत्मानं तर्पयामि। गायत्रीं तर्पयामि। देवमातरं तर्पयामि। सांकृतिं तर्पयामि। सन्ध्यां तर्पयामि। कुमारीं तर्पयामि। ब्राह्मीं तर्पयामि। उषसं तर्पयामि। निमृजिं तर्पयामि। सर्वार्थसिद्धिकरीं तर्पयामि। सर्वमन्त्राधिपतिं तर्पयामि। ॐ भूर्भुवःस्वः पुरुषं तर्पयामि। बहिरुपविश्य—

"ऊर्ध्वकेशि विरूपाक्षि मांसशोणितभोजने। तिष्ठ देवि शिखाबन्धे चामुण्डे ह्यपराजिते"॥

प्रणवव्याहृतिगायत्रीमानस्तोकेत्यादिभिः शिखाबन्धनं कुर्यात्। आचम्य सहस्राणि सहस्रधेति हृदयं हस्तेन स्पृष्ट्वा। पृथिवीति मन्त्रस्य मेरुपृष्ठ ऋषिः कूर्मो देवता सुतलं छन्दः आसने विनियोगः।

"पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता। त्वं च धारय मां देवि पवित्रं कुरु चासनम्"॥

ॐ नमः पृथिव्यासनाय नमः। ॐ नमः कमलासनाय नमः। ॐ नमः विमलासनाय नमः। ॐ नमः योगासनाय नमः। ॐ नमः कूर्मासनाय नमः। ॐ नमः अनन्तासनाय नमः। ॐ नमः ब्रह्मासनाय नमः। ॐ भूर्भुवः स्वरोम् ममेदमासनं कल्पयामि।

"अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः। ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया॥

"अपकामंतु भूतानि पिशाचाः सर्वतो दिशम्। सर्वेषामविरोधेन ब्रह्मकर्म समारभेत्॥"

इति दिग्बन्धः।

---

नमस्कृत्य, गुरुभ्यो नमः। परमगुरुभ्यो नमः। परात्परगुरुभ्यो नमः। परमेष्ठिगुरुभ्यो नमः। दक्षिणबाहुमूले गंगणपतये नमः। वामबाहुमूले दुंदुर्गायै नमः। दक्षिणजानु० क्षंक्षेत्रपालाय नमः। वामजानु० संसरस्वत्यै नमः। संपरमात्मने नमः। शार्ङ्गाय नमः। शरेभ्यो नमः। अस्त्रराजाय नमः। सुदर्शनाय नमः। सुदर्शनास्त्राय मां रक्ष रक्ष सुदर्शनाय हुं फट्।

इति दिग्बन्धः।

---

## अथ अङ्गुलिन्यासः ।

ॐ गोविन्दाय अङ्गुष्ठाभ्यां नमः । ॐ महीधराय तर्जनीभ्यां नमः । हृषीकेशाय मध्यमाभ्यां नमः । त्रिविक्रमाय अनामिकाभ्यां नमः । विष्णवे कनिष्ठिकाभ्यां नमः । माधवाय करतलकरपृष्ठाभ्यां नमः । ॐ इति प्रणवन्यासः पूर्ववत् । गायत्र्या गायत्री छन्दः विश्वामित्र ऋषिः सविता देवता अमिति बीजम् । उमिति शक्तिः । ममिति कीलकं । विद्युद्वर्णः उदात्तस्वरः लातव्यगात्रम् । व्याहृतित्रयस्य विश्वामित्रजमदग्निभरद्वाजा ऋषयः । अग्निर्वायुः सूर्यो देवताः । गायत्र्युष्णिगनुष्टुप्छन्दांसि । षड्जऋषभगान्धाराः स्वराः । श्वेतश्यामपीता वर्णाः । पृथिव्यप्तेजांसि बीजानि । श्रीः कीर्तिर्माया शक्तयः । आग्निवेश्यकाश्यपगौतमानि गोत्राणि । शब्दस्पर्शरूपाणि तत्त्वानि । वितितसमाआलिका मुद्राः । प्राणापानव्यानजनितपापशमनं फलम् । गायत्र्या गायत्री छन्दः विश्वामित्र ऋषिः सविता देवता वरेइति बीजं यमिति शक्तिः णकारः साधारणी शक्तिः श्वेतो वर्णः अग्निर्मुखं ब्रह्मा शिरः विष्णुः हृदयं रुद्रो ललाटं पृथिवी कुक्षिः त्रैलोक्यं चरणौ सांख्यायनं गोत्रम् उदये गायत्री मध्याह्ने सावित्री सायं सरस्वती संध्योपासने विनियोगः ।

## अथ गायत्रीव्यापकन्यासः ।

अर्द्धर्चेन त्रिः करशुद्धिं कृत्वा धियो यो न इति ।

## अथाङ्गुलिन्यासः ।

भूः अङ्गुष्ठाभ्यां नमः । भुवः तर्जनीभ्यां नमः । स्वः मध्यमाभ्यां नमः । तत्सवितुर्वरेण्यम् अनामिकाभ्यां नमः । भर्गो देवस्य धीमहि कनिष्ठिकाभ्यां नमः । धियो यो नः प्रचोदयात् करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः । गायत्र्याऽङ्गुलिन्यासः हृदयादिन्यासश्च । तद्यथा, तत्सवितुः ब्रह्मात्मने अङ्गुष्ठाभ्यां नमः । वरेण्यं विष्णवात्मने तर्जनीभ्यां नमः । भर्गोदेवस्य रुद्रात्मने मध्यमाभ्यां नमः । धीमहि परमात्मने अनामिकाभ्यां नमः । धियो यो नः सदाशिवात्मने कनिष्ठि० नमः । प्रचोदयात्सर्वात्मने करतल० नमः । एवं हृदयादि ।

## अथ पदन्यासः ।

तत् पादाभ्यां नमः । सवितुर्जङ्घाभ्यां नमः । वरेण्यं कटिभ्यां नमः । भर्गः नाभ्यै नमः । देवस्य हृदयाय नमः । धीमहि कण्ठाय नमः । धियः मुखाय नमः । यः चक्षुर्भ्यां नमः । नः ललाटाय नमः । प्रचोदयात् मूर्ध्ने नमः ।

तत्पदस्य अग्निर्ऋषिः ब्रह्मा देवता देवी गायत्री छन्दः मूलप्रकृतिः शक्तिः अमृतमुद्रा पञ्चभूतं तत्त्वम् आग्नेयमधिदैवतम् आयुः फलं शुभ्रो वर्णः तेजोगर्भकला त्रिविधपापहरणं मम कायमनोवाग्जपापक्षयार्थम् आयुरवाप्त्यर्थं ललाटन्यासे विनियोगः । ललाटे तत्पदाय नमः ।

सवितुः पादस्य वायुर्ऋषिः उष्णिक् छन्दः विष्णुर्देवता माया शक्तिः गरुडमुद्रा चक्षुरादीनि तत्त्वानि ब्रह्माऽधिदेवता आरोग्यं फलं श्वेतो वर्णः मर्म कला त्रिविधपापहरणं मम कायमनोवाग्जपापक्षयार्थम् आरोग्यतावाप्त्यर्थं चक्षुर्न्यासे विनियोगः । चक्षुषोः सवितुःपादाय नमः ।

वरेण्यंपदस्य सूर्य ऋषिः अनुष्टुप्छन्दः रुद्रो देवता ब्राह्मी शक्तिः धेनुर्मुद्रा वागादीनि तत्त्वानि रौद्रमधिदेवता ऐश्वर्यं फलं पीतवर्णः अष्टकला त्रिविधपापहरणं मम कायमनोवाग्जपापक्षयार्थम् ऐश्वर्यप्राप्त्यर्थं मुखन्यासे विनियोगः । ॐ मुखे वरेण्यंपदाय नमः ।

• भर्गःपदस्य वरुण ऋषिः विराट् छन्दः वरुणो देवता विश्वा शक्तिः शकटमुद्रा आत्मा तत्त्वम् वारुणमधिदैवता विद्या फलं रक्तो वर्णः प्रभा कला त्रिविधपापहरणं मम कायमनोवाग्जपापक्षयार्थं विद्यावाप्त्यर्थं कण्ठन्यासे विनियोगः । ॐ कण्ठे भर्गःपदाय नमः ।

देवस्य पदस्य प्रजापतिर्ऋषिः यमो देवता जगती छन्दः विलासिनी शक्तिः कौस्तुभा मुद्रा विषयस्तत्त्वम् तेजः अधिदेवता कान्तिः फलं नीलवर्णः देवकला त्रिविधपापहरणम् । मम कायमनोवाग्जपापक्षयार्थं हृन्न्यासे विनियोगः । ॐ हृदि देवस्यपदाय नमः ।

धीमहिपदस्य ब्रह्मा ऋषिः इन्द्रो देवता बृहती छन्दः विमला शक्तिः योनिर्मुद्रा मनस्तत्त्वम् रौद्रमधिदेवता ऐश्वर्यं फलम् अम्बुदवर्णः क्रिया कला त्रिविधपापहरणं मम कायमनोवाग्जपापक्षयार्थम् ऐश्वर्यावाप्त्यर्थम् उदरन्यासे विनियोगः । ॐ उदरे धीमहिपदाय नमः ।

धियःपदस्य हंस ऋषिः अर्यमा देवता पङ्क्तिश्छन्दः तेजोवती शक्तिः ग्रन्थिर्मुद्रा बुद्धिस्तत्त्वम् सावित्रमधिदेवता बलं फलं पिङ्गलवर्णः अधीकला त्रिविधपापहरणं मम कायमनोवाग्जपापक्षयार्थं बलमाप्त्यर्थम् ऊरुन्यासे विनियोगः । ॐ ऊर्वोः धियःपदाय नमः ।

यःपदस्य अन्तर्यामी ऋषिः शिवो देवता स्वः छन्दः संध्या शक्तिः व्योममुद्रा अहंकारस्तत्त्वम् इन्द्रोऽधिदैवतम् बुद्धिः फलम् हरितवर्णः योगकला त्रिविधपापहरणं मम कायमनोवाग्जपापक्षयार्थम् बुद्ध्यवाप्त्यर्थं जानुन्यासे विनियोगः । ॐ जान्वोर्यःपदाय नमः ।

नः पदस्य महादेव ऋषिः पर्जन्यो देवता सर्वश्छन्दः सत्या शक्तिः सममुद्रा चेतस्तत्त्वम् वायव्यमधिदैवतम् ज्ञानं फलम् कृष्णो वर्णः रतिः कला त्रिविधपापहरणं मम कायमनोवाग्जपापक्षयार्थं ज्ञानावाप्त्यर्थं जङ्घान्यासे विनियोगः । ॐ जङ्घयोर्नःपदाय नमः ।

प्रचोदयात्पदस्य शातातप ऋषिः । गायत्री छन्दः । विश्वेदेवा देवता । ज्ञानशक्तिः । महामुद्रा । गुणास्तत्वम् । वैष्णवमधिदैवतम् । मोक्षः फलम् । सर्वो वर्णः । काम्यकला त्रिविधिपापहरणं मम कायमनोवाग्जपापक्षयार्थं मोक्षावाप्त्यर्थं पादन्यासे विनियोगः । ॐ पादयोः प्रचोदयात्पदाय नमः ।

तद्दक्षिणहस्तस्य अङ्गुष्ठाय नमः । सवितुः दक्षिणतर्जन्यै नमः । वरेण्यं दक्षिणमध्यमायै नमः । भर्गः दक्षिणानामिकायै नमः । देवस्य दक्षिणकनिष्ठिकायै नमः । धीमहि वामाङ्गुष्ठाय नमः ।

धियः वामतर्जन्यै नमः । यः वाममध्यमायै नमः । नः वामानामिकायै नमः । प्रचोदयात् वामकनिष्ठिकायै नमः ।

इति हस्तयोरङ्गुलीषु पदन्यासः ।

---

## अथ अक्षरन्यासः ।

तत्कारस्य वसिष्ठ ऋषिः । अग्निर्देवता । गायत्री छन्दः । यमोऽधिदेवता । सहा शक्तिः । चम्पकाभो वर्णः । पृथिवी तत्त्वम् । अं बीजम् । सुमुखमुद्रा । उदात्तः स्वरः । तपनी कला । पातकनाशनार्थं पादाङ्गुष्ठन्यासे विनियोगः ।

## अथ तत्कारध्यानम् ।

''तत्कारं चम्पकवर्णाभं ब्रह्मविष्णुशिवाकृतिम् । शान्तं पद्मासनारूढं ध्यात्वा दहति पातकम्''॥ ॐतत् पदाङ्गुष्ठाभ्यां नमः ।

सकारस्य भरद्वाज ऋषिः । वायुर्देवता । उष्णिक् छन्दः । आपस्तत्त्वम् । आं बीजम् । स्वरितः स्वरः । संपुटमुद्रा । प्रभा शक्तिः । अतसीपुष्पाभो वर्णः । ममोपपातकनाशार्थं गुल्फन्यासे विनियोगः ।

### सकारध्यानम्

''सकारं चिन्तयेच्छाममतसीपुष्पसन्निभम् । श्याममङ्कस्थितं सौम्यमुपपातकनाशनम् '' ॥ ॐस गुल्फाभ्यां नमः ।

विकारस्य गौतम ऋषिः । सूर्यो देवता । अनुष्टुप्छन्दः । तेजस्तत्त्वम् । सोमोऽधिदेवता । नित्या शक्तिः । इं बीजम् । विततमुद्रा । अनुदात्तः स्वरः । पिङ्गो वर्णः । महापातकनाशार्थं जङ्घान्यासे विनियोगः ।

### विकारध्यानम्

''विकारं कपिलं नित्यं कमलासनसंस्थितम् । ध्यायेच्छान्तं द्विजश्रेष्ठः महापातकनाशनम् ''॥ ॐवि जंघाभ्यां नमः ।

तुकारस्य भृगुर्ऋषिः । बृहती छन्दः । विद्युद्देवता । ईशानोऽधिदेवता । वायुस्तत्त्वम् । उदात्तः स्वरः । अजा शक्तिः । ईं बीजम् । विस्तीर्णमुद्रा । इन्द्रनीलाभो वर्णः । ग्रहरोगादिनाशार्थं जानुन्यासे विनियोगः ।

### तुकारध्यानम्

''तुकारं चिन्तयेत्प्राज्ञ इन्द्रनीलसमुद्भवम् । निर्दहेत्सर्वदुःखं तु ग्रहरोगसमुद्भवम् '' ॥ ॐतु जानुभ्यां नमः ।

वकारस्य शाण्डिल्य ऋषिः । पङ्क्तिश्छन्दः । यमो देवता । आदित्यमधिदेवता । नभस्तत्त्वम् । उदात्त स्वरः । उं बीजम् । अग्न्याभो वर्णः । द्विमुखमुद्रा । शोभना . शक्तिः । भ्रूणहत्यापापक्षयार्थम् ऊरुन्यासे विनियोगः ।

**वकारध्यानम्**

"वकारं वह्निदीप्ताभं चिन्तयेच्च विचक्षणः । भ्रूणहत्याकृतं पापं तत्क्षणादेव नश्यति" ॥
ॐ व ऊरुभ्यां नमः ।

रेकारस्य लोहित ऋषिः । वरुणो देवता । बार्हस्पत्यमधिदेवता । त्रिष्टुप्छन्दः । विमला शक्तिः । गन्धस्तत्त्वम् । ऊं बीजम् । स्फटिकाभो वर्णः । स्वरितः स्वरः । त्रिमुखमुद्रा । अगम्यागमनजपापक्षयार्थे शिश्नन्यासे विनियोगः ।

**रेकारध्यानम्**

"रेकारं विमलं ध्यायेच्छुद्धस्फटिकसन्निभम् । वागीशं दहते पापमगम्यागमनोद्भवम्" ॥
ॐ रे शिश्नाय नमः ।

णिकारस्य गर्ग ऋषिः । बृहस्पतिर्देवता । पैत्र्यमधिदेवता । जगती छन्दः । चतुर्मुखमुद्रा । प्रभाकरी शक्तिः । रसस्तत्त्वम् । अनुदात्तः स्वरः । विद्युद्वर्णः । ऐं बीजम् । अभक्ष्यभक्षणपापक्षयार्थे वृषणन्यासे विनियोगः ।

**णिकारध्यानम्**

"णिकारं चिन्तयेद्योगी विद्युत्स्फटिकसन्निभम् । अभक्ष्यभक्षणात्पापं तत्क्षणादेव नश्यति" ॥
ॐ णि वृषणाभ्यां नमः ।

यंकारस्य शम्भुर्ऋषिः । पर्जन्यो देवता । भर्गोऽधिदेवता । अतिजगती छन्दः । पञ्चमुखमुद्रा । रूपं तत्त्वम् । जया शक्तिः । तारकाभो वर्णः । ऐं बीजम् । अनुदात्तः स्वरः । ब्रह्महत्यापापक्षयार्थे कटिन्यासे विनियोगः ।

**यंकारध्यानम्**

"यंकारं तारकावर्णसदृशं परिभूषितम् । योगिनां वरदं ध्यायेत् ब्रह्महत्याविनाशनम्" ॥
ॐ यं कटिभ्यां नमः ।

भकारस्य सनत्कुमार ऋषिः । इन्द्रो देवता । वायव्यमधिदेवता । सत्यं छन्दः । आल्हादिनी शक्तिः । स्पर्शस्तत्त्वम् । षण्मुखमुद्रा । ॐ बीजम् । उदात्तः स्वरः । मेघाभो वर्णः । पुरुषहत्यापापक्षयार्थे नाभिन्यासे विनियोगः ।

**भकारध्यानम्**

"भकारं कृष्णवर्णं तु नीलमेघसमप्रभम् । ध्यायेत्पुरुषहत्यादिपापं नाशयते ध्रुवम्" ॥
ॐ भ नाभ्यै नमः ।

र्गोकारस्य सत्यवान्ऋषिः । गन्धर्वो देवता । सावित्रमधिदेवता । विराट् छन्दः । स्वरितः स्वरः । रक्तवर्णः । कान्ता शक्तिः । वाचा तत्त्वम् । औं बीजम् । अधोमुखमुद्रा । गोवधपापक्षयार्थम् उदरन्यासे विनियोगः ।

**र्गोकारध्यानम्**

"र्गोकारं रक्तवर्णं तु कमलासनसंस्थितम् । गोहत्यादिकृतं पापं तत्क्षणादेव नश्यति" ॥
ॐ र्गो उदराय नमः ।

देकारस्य गन्धर्व ऋषिः । पूषा देवता । त्वाष्ट्रमधिदेवता । अष्टी छन्दः । जिह्वा शक्तिः । अं बीजम् । व्यापकाञ्जलिमुद्रा । अनुदात्तः स्वरः । वाक् तत्त्वम् । मरकताभो वर्णः । स्त्रीहत्यापापक्षयार्थे स्तनन्यासे विनियोगः ।

**देकारध्यानम्**

"देकारं मरकतश्यामं कमलासनसंस्थितम् । चिन्तयेत्सततं योगी स्त्रीहत्यानाशनं परम्" ॥
ॐदे स्तनाभ्यां नमः ।

वकारस्य कश्यप ऋषिः । शिवो देवता । पौष्णमधिदैवतम् । अत्यष्टी छन्दः । सरस्वती शक्तिः । हस्तौ तत्त्वम् । कं बीजम् । शकटमुद्रा । उदात्तः स्वरः । शुभ्रो वर्णः । गुरुहत्यादिपापक्षयार्थं हृदयन्यासे विनियोगः । **वकारध्यानम्**

"वकारं शुक्लवर्णं तु जातीपुष्पसमप्रभम् । गुरुहत्यादिकं पापं नाशयेच्चिन्तनादपि" ॥
ॐव हृदयाय नमः ।

स्यकारस्य जमदग्निर्ऋषिः । त्वष्टा देवता । इन्द्रोऽधिदेवता । विष्टारपङ्क्तिः छन्दः । विद्युद्वर्णा शक्तिः । उपस्थं तत्त्वम् । चं बीजम् । यमपाशमुद्रा । स्वरितः स्वरः । पीतवर्णः । ग्रामकौटिल्यपापक्षयार्थं कण्ठन्यासे विनियोगः । **स्यकारस्यध्यानम्**

"स्यकारं पीतवर्णं तु तप्तहाटकसन्निभम् । मनसोपार्जितं पापं स्मरणेन विनश्यति" ॥
ॐस्य कण्ठाय नमः ।

धीकारस्य अत्रिर्ऋषिः । विराट् छन्दः । वसवो देवता । वासुदेवोऽधिदेवता । विस्फुलिङ्गा शक्तिः । वायुस्तत्त्वम् । टं बीजम् । ग्रथितमुद्रा । प्रचयः स्वरः । शुक्लवर्णः । पितृमातृवधपापक्षयार्थं मुखन्यासे विनियोगः । **धीकारध्यानम्**

"धीकारं चिन्तयेच्छुक्लं पूर्णचन्द्रनिभेक्षणम् । पितृमातृवधात्पापात्तत्क्षणादेव नश्यति" ॥
ॐधी मुखाय नमः ।

मकारस्य विष्णुर्ऋषिः । मरुतो देवता । देवी अधिदैवतम् । अक्षरपङ्क्तिच्छन्दः । विश्वरूपा शक्तिः । तं बीजम् । पादौ तत्त्वम् । प्रचयः स्वरः । पद्मरागाभो वर्णः । सुमुखोन्मुखमुद्रा । पूर्वजन्मार्जितपापक्षयार्थं तालुन्यासे विनियोगः । **मकारध्यानम्**

"मकारं पद्मरागाभं चिन्तयेच्च विचक्षणः । पूर्वजन्मार्जितं पापं तत्क्षणादेव नश्यति" ॥

ॐम तालुने नमः ।

हिकारस्य पराशर ऋषिः । कात्यायनी छन्दः । सोमो देवता । मैत्रावरुण्यधिदेवता । विभूतिः शक्तिः । श्रोत्रे तत्त्वम् । पंबीजम् । प्रचयः स्वरः । विलम्बं मुद्रा । शङ्खाभो वर्णः । अशेषपापक्षयार्थं नासाग्रन्यासे विनियोगः । **हिकारध्यानम्**

"हिकारं शङ्खवर्णाभं पूर्णचन्द्रसमप्रभम् । अशेषपातकं यत्तु तत्क्षणादेव नश्यति" ॥
ॐहि नासाग्राय नमः ।

धिकारस्य पुण्डरीक ऋषिः । ज्योतिष्मती छन्दः । अङ्गिरा देवता । वारुण्यमाधिदैवतम् । ज्ञानयोगा शक्तिः । त्वक् तत्त्वम् । यं बीजम् । उदात्तः स्वरः । मुष्टिका मुद्रा । पाण्डुरो वर्णः । प्रतिग्रहपापक्षयार्थं चक्षुर्न्यासे विनियोगः ।

### धकारध्यानम्

"धिकारं पाण्डुरं ध्यायेत्पद्मस्थोपरिसंस्थितम् । प्रतिग्रहकृतं पापं स्मरणादेव नश्यति" ॥
ॐ धि चक्षुर्भ्यां नमः ।

योकारस्य क्रतुर्ऋषिः । सर्वश्छन्दः । विश्वेदेवा देवता । विश्वेदेवा अधिदेवता । ज्ञानगन्धा शक्तिः । चक्षुस्तत्त्वम् । रं बीजम् । मानमुद्रा । अनुदात्तः स्वरः । इन्द्रगोपाभो वर्णः । प्राणिवधपापक्षयार्थं भ्रूमध्यन्यासे विनियोगः ।

### योकारध्यानम्

"योकारं रक्तवर्णं तु इन्द्रगोपसमप्रभम् । ध्यात्वा प्राणिवधात्पापं निर्दहेन्मुनिपुङ्गव" ॥
ॐ यो भ्रूमध्याय नमः ।

द्वितीययोकारस्य दक्ष ऋषिः । अश्विनौ देवते । किंपुरुषोऽधिदैवतम् । महांश्छन्दः । लंबीजम् । जिह्वा तत्त्वम् । रतिः शक्तिः । कूर्ममुद्रा । उदात्तः स्वरः । रक्तो वर्णः । सप्तजन्मार्जितपापक्षयार्थं ललाटन्यासे विनियोगः ।

### द्वितीययोकारध्यानम्

"द्वितीयश्चैव यः प्रोक्तो योकारो रक्तसंनिभः । निर्दहेत्सर्वपापानि नान्यैः पापैः प्रलिप्यते" ॥
ॐ यो ललाटाय नमः ।

नःकारस्य काश्यपाङ्गिरा ऋषिः । प्रजापतिर्देवता । वैष्णवमधिदैवतम् । भूतिः शक्तिः । घ्राणं तत्त्वम् । वं बीजम् । वराहमुद्रा । स्वरितः स्वरः । आदित्यवर्णः । मित्रजनद्रोहकृतपापक्षयार्थं पूर्वमुखन्यासे विनियोगः ।

### नःकारध्यानम्

"नःकारं तु मुखे पूर्वे आदित्योदयसन्निभम् । सकृद् ध्यात्वा द्विजश्रेष्ठः स गच्छेद्दैवतं पदम्" ॥
ॐ न पूर्ववक्त्राय नमः ।

प्रकारस्य कार्तिकेय ऋषिः । सर्वदेवो देवता । वामदेवमधिदैवतम् । भूश्छन्दः । प्रीतिः शक्तिः । प्राणस्तत्त्वम् । शं बीजम् । सिंहाक्रान्तमुद्रा । प्रचयः स्वरः । नीलवर्णः । ईशानपदप्राप्त्यर्थं दक्षिणाननन्यासे विनियोगः ।

### प्रकारध्यानम्

"नीलोत्पलदलश्यामं प्रकारं दक्षिणानने । सकृद् ध्यात्वा द्विजश्रेष्ठः स गच्छेदैशानं पदम्" ॥
ॐ प्र दक्षिणाननाय नमः ।

चोकारस्य मृड ऋषिः । भुवश्छन्दः । रुद्रो देवता । कुबेरोऽधिदेवता । पद्मालयः शक्तिः । षं बीजम् । मनस्तत्त्वम् । महाक्रान्तमुद्रा । अनुदात्तः स्वरः । पीतवर्णः । मम विष्णुपदप्राप्त्यर्थं पश्चिमाननन्यासे विनियोगः ।

### चोकारध्यानम्

"सौम्यं गोरोचनाभं च चोकारं पश्चिमानने । सकृद्ध्यात्वा द्विजः सम्यक् स गच्छेद्वैष्णवं पदम्" ॥
ॐ चोकार पश्चिमाननाय नमः ।

दकारस्य अगस्त्य ऋषिः । ब्रह्मा देवता । मनुष्यमधिदैवतम् । स्वश्छन्दः । विलासिनी शक्तिः । सं बीजम् । मुद्गरमुद्रा । इन्द्रसंकाशो वर्णः । ब्रह्मपदप्राप्त्यर्थम् उत्तराननन्यासे विनियोगः ।

**दकारध्यानम्**

"शुक्लवर्णेन्दुसंकाशं दकारं चोत्तरानने । सकृद्ध्यात्वा द्विजश्रेष्ठः स गच्छेद् ब्रह्मणः पदम्" ॥

ॐ दकाराय उत्तराननाय नमः ।

याकारस्य विश्वामित्र ऋषिः । भूर्भुवःस्वश्छन्दः । विष्णुर्देवता । ब्राह्ममधिदैवतम् । भल्लका शक्तिः । त्रिगुणं तत्त्वम् । हंबीजम् । स्वरितः स्वरः । पल्लवमुद्रा । सर्वो वर्णः । मम वेदान्तवेद्यपरब्रह्मप्राप्त्यर्थं मूर्द्धन्यासे विनियोगः । **याकारध्यानम्**

"याकारस्तु शिर. प्रोक्तश्चतुर्वदनसंनिभः । प्रत्यक्षफलदो ब्रह्मा विष्णू रुद्र इति स्थितः" ॥

**ॐ या मूर्ध्ने नमः । ॐत् सर्वाङ्गे ॥ २४ ॥**

इत्यक्षरैर्देहन्यासः ।

---

## अथाङ्गुलिपर्वन्यासः ।

ॐ तत् दक्षिणहस्ततर्जनीप्रथमपर्वणे नमः । ॐ स दक्षिणहस्ततर्जनीद्वितीयपर्वणे नमः । ॐ वि दक्षिणहस्ततर्जनीतृतीयपर्वणे नमः । ॐ तु मध्यमाङ्गुलौ प्रथमपर्वणे नमः । ॐ र्व दक्षिणहस्तमध्यमाङ्गुलौ द्वितीयपर्वणे नमः । ॐ रे दक्षिणहस्तमध्यमाङ्गुलौ तृतीयपर्वणे नमः । ॐ णि दक्षिणहस्तानामिकाप्रथमपर्वणे नमः । ॐ यं दक्षिणानामिकाद्वितीयपर्वणे नमः । ॐ भ दक्षिणानामिकातृतीयपर्वणे नमः । ॐ र्गो दक्षिणकनिष्ठिकाप्रथमपर्वणे नमः । ॐ दे दक्षिणकनिष्ठिकाद्वितीयपर्वणे नमः । ॐ व दक्षिणकनिष्ठिकातृतीयपर्वणे नमः । ॐ स्य वामहस्ततर्जनीप्रथमपर्वणे नमः । ॐ धी वामहस्ततर्जनीद्वितीयपर्वणे नमः । ॐ म वामहस्ततर्जनीतृतीयपर्वणे नमः । ॐ हि वामहस्तमध्यमाङ्गुलौ प्रथमपर्वणे नमः । ॐ धि वामाहस्तमध्यमाङ्गुलौ द्वितीयपर्वणे नमः । ॐ यो वामहस्तमध्यमाङ्गुलौ तृतीयपर्वणे नमः । ॐ यो वामानामिकाप्रथमपर्वणे नमः । ॐ नः वामानामिकाद्वितीयपर्वणे नमः । ॐ प्र वामानामिकातृतीयपर्वणे नमः । ॐ चो वामहस्तकनिष्ठिकाप्रथमपर्वणे नमः । ॐ द वामहस्तकनिष्ठिकाद्वितीयपर्वणे नमः। ॐ यात् वामहस्तकनिष्ठिकातृतीयपर्वणे नमः ॥ २४ ॥

इति हस्तयोस्तर्जन्यादिकनिष्ठिकान्तपर्वन्यासः ।

---

## अथ गायत्रीपादन्यासः ।

गायत्रीप्रथमपादस्य ऋग्वेद ऋषिः । भूमिरन्तारिक्षं द्यौस्त्रिष्टुप् छन्दः । कपिलवर्णः । ब्रह्मा देवता । ॐ भूः तत्सवितुरेण्यं ब्रह्मणे नमः नाभौ । गायत्रीद्वितीयपादस्य यजुर्वेद ऋषिः । यजूंषि सामान्यनुष्टुप् छन्दः । शुक्लो वर्णः । रुद्रो देवता । ॐ भुवः भर्गो देवस्य धीमहि रुद्राय नमः हृदये । गायत्रीतृतीयपादस्य सामवेद ऋषिः । प्राणोऽपानो व्यान इति जगती छन्दः । श्यामो वर्णः । विष्णु-

देवता । ॐ स्वः धियो नः प्रचोदयात् विष्णवे नमः ललाटे । गायत्रीचतुर्थपादस्य विमल ऋषिः । परमात्मा देवता । गायत्री छन्दः । ॐ परो रजसेऽसावदोम् परब्रह्मणे नमः मूर्ध्नि ।

इति पादन्यासः ।

---

## अथ चतुर्विंशत्यक्षरेषु पृथिव्यादितत्त्वदृष्टिम् ।

प्रथमपादे लोकत्रयदृष्टिम् । द्वितीये वेदत्रयदृष्टिम् । तृतीये प्राणत्रयदृष्टिम् । चतुर्थे ब्रह्मदृष्टिम् ।

## अथ गायत्रीध्यानम् ।

मुक्ताविद्रुमेति पूर्ववत् ।

"आगच्छ वरदे देवि जप्ये मे सन्निधौ भव । गायन्तं त्रायसे यस्माद्गायत्री त्वं ततः स्मृता" ॥

आयात्वित्यस्य मन्त्रस्य विश्वेदेवा ऋषयः । शक्रो देवता । अनुष्टुप् छन्दः । गायत्र्यावाहने विनियोगः ।

"आयातु वरदे देवी अक्षरं ब्रह्मसम्मितम् । गायत्री छन्दसां मातरिदं ब्रह्म जुषस्व मे ॥

"यदह्नात् क्रियते पापं तदह्नात्प्रतिमुच्यते । यद्रात्र्यात्कुरुते पापं तद्रात्र्यात्प्रतिमुच्यते" ॥

ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवानां धामनामासि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूरों गायत्रीमावाहयामि छन्दऋषिमावाहयामि श्रियमावाहयामि । मध्याह्ने विशेषः, सावित्रीमावाहयामि । सायं सरस्वतीमावाहयामि । एवं सवितृरूपां गायत्रीं संचिन्त्य मनसाऽभ्यर्च्य वरुणरूपां सौरपीठे पूजयेत् । ॐ भूर्भुवः स्वः गायत्रीं पठित्वा । धर्माय नमः । अधर्माय नमः । ज्ञानाय नमः । अज्ञानाय नमः । ऐश्वर्याय नमः । अनैश्वर्याय नमः । कन्दाय नमः । स्थानाय नमः । सत्त्वाय नमः । रजसे नमः । तमसे नमः । कूर्माय नमः । आधारशक्त्यै नमः । इत्यादिभिः पूजिते पीठे त्रिकोणं षट्कोणमथाष्टपत्रं यन्त्रं लिखेत् । यन्त्रकोणेषु शक्तित्रयं त्रिकोणमध्येऽर्कशक्तिं विधिवत्पूजयेत्ततः । षट्कोणे तावदङ्गानि पूर्वतो दक्षिणावर्तक्रमेण ज्ञेयानि । गायत्री ब्रह्मा सावित्री विष्णुः सरस्वती शिव आदित्यः प्रज्ञा रविः प्रभा भानुः संध्या भास्कर उषः । एता अष्टदिक्षु पूज्येत् ।

## अथाष्टदले ।

प्रह्लादिन्यै नमः । शान्तायै नमः । जयायै नमः । कान्तायै नमः । दुर्गायै नमः । सरस्वत्यै नमः । विष्णुरूपायै नमः । विशालायै नमः । दिशांव्यापिन्यै नमः । विमलायै नमः । तमोऽपहारिण्यै नमः । सूक्ष्मायै नमः । विश्वयोन्यै नमः । जयावहायै नमः । पद्मालयायै नमः । परायै नमः । शोभायै नमः । रुद्ररूपायै नमः । एता देवताः । सोमाय नमः । मङ्गलाय नमः । बुधाय नमः । बृहस्पतये नमः । शुक्राय नमः । शनैश्चराय नमः । रवये नमः । राहवे नमः । केतवे नमः । ब्राह्म्यै नमः । माहेश्वर्यै नमः । कौमार्यै नमः । वैष्णव्यै नमः । वाराह्यै नमः । इन्द्राण्यै नमः । चामुण्डायै नमः । चण्डिकायै नमः ।

## अथ भैरवाष्टकम् ।

असिताङ्गाय नमः । रुरवे नमः । क्रोधाय नमः । उन्मत्ताय नमः । भैरवाय नमः । कपालिने नमः । भीषणाय नमः। संहाराय नमः । एवमष्टदले षडावरणानि दिक्षु लोकपालान्सायुधान् । तद्बहिश्चतुःकोणेषु, योगिनीभ्यो नमः । गणपतये नमः । क्षेत्रपालाय नमः । बटुकभैरवाय नमः । तत्राङ्गैः प्रथमावरणम् । आग्नेयलोकपालाय नमः । आग्नेयवरुण ईशाने ब्रह्माविष्णुशिवैः । ऐन्द्रनैर्ऋत्यवायव्यस्थिताभिः । द्वितीयावरणे—गायत्र्यै नमः । सावित्र्यै नमः । सरस्वत्यै नमः । तृतीयावरणे—उषायै नमः । प्रज्ञायै नमः । प्रभायै नमः । संध्यायै नमः । चतुर्थावरणे—प्रह्लादिन्यै नमः । प्रभायै नमः । नित्यायै नमः । विश्वंभरायै नमः । विलासिन्यै नमः । प्रभावत्यै नमः । शान्तायै नमः । जयायै नमः । पञ्चमावरणे—कान्तायै नमः । दुर्गायै नमः । सरस्वत्यै नमः । विष्णुरूपायै नमः । विशालायै नमः । दिशांव्यापिन्यै नमः । विशालाक्षायै नमः । षष्ठावरणे—तमोऽपहारिण्यै नमः । सूक्ष्मायै नमः । विश्वयोन्यै नमः । जयावहायै नमः । पद्मालयायै नमः । परायै नमः । शोभायै नमः । रुद्ररूपायै नमः । सप्तमावरणे— अरुणाय नमः । एवं सूर्यमया देव्य आसनावाहनादिषोडशोपचारपूजां समर्पयामि ।

## अथ मुद्राः ।

आवाहनी स्थापनी संनिधी सम्मुखी सुसंनिरोधिनी सकली महामुद्रा ॥ ७ ॥ शङ्खचक्रगदापद्मधेनुकौस्तुभगारुडाः । श्रीवत्सं वनमाला च योनिमुद्रास्तथा दश ॥ १० ॥ आवाहनासनपाद्यार्घ्याचमनस्नानवस्त्रयज्ञोपवीताचमनभूषणगन्धपुष्पधूपदीपनैवेद्यहिरण्यमुद्रां मानसीं समर्पयामि ।

## अथातो दर्शनीयमुद्राः ।

"सुमुखं संपुटं चैव विततं विस्तृतं तथा । द्विमुखं त्रिमुखं चैव चतुर्मुखं च पञ्चमम् ॥
"षण्मुखं चाधोमुखं व्यापकाञ्जलिकं तथा । शकटं यमपाशं च ग्रथितं सम्मुखोन्मुखम् ॥
"प्रलम्बं मुष्टिकं चैव मत्स्यकूर्मवराहकम् । सिंहाक्रान्तं महाक्रान्तं मुद्गरं पल्लवं तथा ॥
"एता मुद्रा न जानाति गायत्री निष्फला भवेत् । उद्देशानुक्रमादासामुच्यन्ते लक्षणानि तु ।
"हस्ताभ्यामञ्जलिं बध्वाऽनामिकामूलपर्वणोः। अङ्गुष्ठौ निक्षिपेत्सेयं मुद्रा त्वावाहनी स्मृता ॥१॥
"अधोमुखी त्वियं चेत्स्यात् स्थापनी मुद्रिका मता ॥ २ ॥
"उच्छ्रिताङ्गुष्ठमुष्ट्योस्तु संयोगात्संनिधायिनी ॥ ३ ॥
"मुष्टिद्वयस्थिताङ्गुष्ठौ सम्मुखौ च परस्परम् । संश्लिष्टावुच्छ्रितौ कुर्यात्सेयं सम्मुखमुद्रिका ॥ ४ ॥
"अन्तःप्रवेशिताङ्गुष्ठा सैवेयं रोधिनी मता ॥ ५ ॥
"अङ्गेष्वेवाङ्गविन्यासः सकली करणी भवेत् ॥ ६ ॥
"अन्योन्यग्रथिताङ्गुष्ठा प्रसारितकराङ्गुली । महामुद्रेयमुदिता परमा करणे बुधैः ॥ ७ ॥
"वामाङ्गुष्ठन्तु संगृह्य दक्षिणेन तु मुष्टिना । कृत्वोत्तानं ततो मुष्टिमङ्गुष्ठं तु प्रसारयेत् ॥
"वामाङ्गुल्यस्तथा श्लिष्टाः संयुक्ताः स्युः प्रसारिताः । दक्षिणाङ्गुष्ठसंस्पृष्टा मुद्रैषा शङ्खसंज्ञिका ॥ १ ॥

"हस्तौ तु संमुखौ कृत्वा सुभग्नौ सुप्रसारितौ । कनिष्ठाङ्गुष्ठकौ लग्नौ मुद्रैषा चक्रसंज्ञिका ॥ २ ॥
"अन्योन्याभिमुखौ हस्तौ कृत्वा तु ग्रथिताङ्गुलीः ।
"अङ्गुल्यौ मध्यमे भूयः संलग्ने सुप्रसारिते । गदामुद्रेयमुदिता विष्णोः संतोषकारिणी ॥ ३ ॥
"हस्तौ तु सम्मुखौ कृत्वा संनतः प्रोथिताङ्गुली । तलान्तर्मीलिताङ्गुष्ठौ कृत्वैषा पद्ममुद्रिका ॥४॥
"अनामिके कनिष्ठाभ्यां तर्जनीभ्यां च मध्यमे । अन्योन्याभिमुखश्लिष्टे धेनुमुद्रा प्रकीर्तिता ॥ ५ ॥
"अनामापृष्ठसंलग्ना दक्षिणस्य कनिष्ठिका । कनिष्ठयाऽन्यया बध्वा तर्जन्या दक्षया तया ॥
"वामानामां च बन्धीयात् दक्षिणाङ्गुष्ठमूलके । अङ्गुष्ठमध्यमे वामे संयोज्य सरलाः पराः ॥
"चतस्रोऽप्यग्रसंलग्ना मुद्रा कौस्तुभसंज्ञिका ॥ ६ ॥
"हस्तौ तु विमुखौ कृत्वा ग्रथयित्वा कनिष्ठिके । मिथस्तर्जनिके श्लिष्टे श्लिष्टावङ्गुलिकौ तथा ॥
"मध्यमानामिके द्वे तु द्वौ पक्षाविव चालयेत् । एषा गरुडमुद्रा स्याद्विष्णोः संतोषवर्द्धिनी ॥ ७ ॥
"अन्योन्यं पृष्ठकरयोर्मध्यमानामिकाङ्गुलीः ।
"अङ्गुष्ठेन तु बध्नीयात्कनिष्ठामूलसंस्थिते । तर्जन्यौ कारयेदेषा मुद्रा श्रीवत्ससंज्ञिका ॥ ८ ॥
"स्पृशेत्कण्ठादिपादान्तं तर्जन्याङ्गुष्ठया तथा । करद्वयेन मालावन्मुद्रेयं वनमालिका ॥ ९ ॥
"मिथः कनिष्ठिके बध्वा तर्जनीभ्यामनामिके । अनामिकोर्ध्वे संश्लिष्टदीर्घमध्यमयोरधः ॥
"अङ्गुष्ठाग्रद्वयं न्यस्येद्योनिमुद्रेयमीरिता ॥ १० ॥
"सुरभिर्ज्ञानयोनी च मत्स्यः कूर्मोऽथ पङ्कजम् । लिङ्गं निर्याणमुद्राश्च जपान्तेऽष्टौ प्रदर्शयेत् ।"
आसां लक्षणान्याह, धेनुमुद्रा पूर्वमुक्ता ॥ १ ॥
"तर्जन्यङ्गुष्ठकौ सक्तावग्रतो हृदि विन्यसेत् । ज्ञानमुद्रा भवेदेषा रामचन्द्रस्य प्रेयसी ॥ २ ॥
"योनिमुद्रा पूर्वमुक्ता ॥ ३ ॥
"दक्षपाणिः पृष्ठदेशे वामपाणितलं स्पृशेत् । अङ्गुष्ठौ चालयेत्सम्यङ्मुद्रेयं मत्स्यरूपिणी ॥ ४ ॥
"वामहस्तस्य तर्जन्यां दक्षिणस्य कनिष्ठिकाम् । तथा दक्षिणतर्जन्यां वामाङ्गुष्ठं नियोजयेत् ॥
"सरलं दक्षिणाङ्गुष्ठं वामस्य मध्यमादिका । अङ्गुलीर्योजयेत्पृष्ठे दक्षिणस्य करस्य च ॥
"वामस्य पितृतीर्थेन मध्यमाऽनामिका तथा । अधोमुखं च ते कुर्याद्दक्षिणस्य करस्य च ॥
"कूर्मपृष्ठसमं कुर्यात् कुक्षिपाणिस्तु सर्वतः । कूर्ममुद्रे यमाख्याता देवताध्यानकर्मणि ॥ ५ ॥
"पङ्कजमुद्रा पूर्वमुक्ता ॥ ६ ॥
"उच्छ्रितं दक्षिणाङ्गुष्ठं वामाङ्गुष्ठेन बन्धयेत् । वामाङ्गुलीर्दक्षिणाभिरङ्गुलीभिश्च बन्धयेत् ॥
"लिङ्गमुद्रेयमाख्याता शिवसान्निध्यकारिणी ॥ ७ ॥
"निर्याणमुद्रा ॥ ८ ॥

चतुर्थचरणस्य विमल ऋषिः । परमात्मा देवता । गायत्री छन्दः । गायत्र्याः स्तुतौ जपे विनियोगः ।

## अथ परो हृदयादिन्यासः ।

परो हृदयाय नमः । रजसे शिरसे स्वाहा । असावदोम् शिखायै वौषट् । परोरजसे कवचाय हुम् । असावदोम् नेत्रत्रयाय वौषट् । परोरजसेऽसावदोम् अस्त्राय फट् ।

## अथ ध्यानम् ।

"पञ्चवक्त्रां चतुर्बाहुं प्रतिवक्त्रविलोचनाम् । जटाकिरीटां षट्कुक्षिं त्रिपादां स्फटिकप्रभाम् ॥
"साक्षसूत्राऽभयाङ्कुशौ दधतीं दक्षहस्तयोः । सवारिजपत्रवरदां लगुडं वामहस्तयोः ॥
"गायत्रीं त्र्यक्षरां बालां साक्षसूत्रकमण्डलुम् । रक्तवस्त्रां चतुर्वक्त्रां हंसवाहनसंस्थिताम् ॥
"ब्रह्माणीं ब्रह्मदेवत्यां ब्रह्मलोकनिवासिनीम् । आवाहयाम्यहं देवीमायान्तीं सूर्यमण्डलात् ॥
"सावित्रीं युवतीं शुक्लां शुक्लवस्त्रां त्रिलोचनाम् । त्रिशूलिनीं वृषारूढां रुद्राणीं रुद्रदेवताम् ॥
"कैलासविहितावासामायान्तीं सूर्यमण्डलात् । वरदां त्र्यक्षरां साक्षाद्देवीमावाहयाम्यहम् ॥
"वृद्धां सरस्वतीं कृष्णां पीतवस्त्रां चतुर्भुजाम् । शङ्खचक्रगदापद्महस्तां गरुडवाहिनीम् ॥
"बदर्याश्रमवासां तामायान्तीं सूर्यमण्डलात् । वैष्णवीं त्र्यक्षरां साक्षाद्देवीमावाहयाम्यहम् ॥"

एवं ध्यात्वा दशाष्टवारं जपेत् । अथोपात्तदुरितक्षयद्वारा परमेश्वरप्रीत्यर्थं यथाशक्त्या गायत्रीजपमहं करिष्ये ।

इति संकल्पः ।

"अच्छिन्नपादां गायत्रीं जपं कुर्वन्ति ये द्विजाः । अधोमुखाश्च तिष्ठन्ति कल्पकोटिशतैरपि ॥
"छिन्नपादा तु गायत्री ब्रह्महत्यां व्यपोहति । अच्छिन्नपादा गायत्री ब्रह्महत्यां प्रयच्छति ॥
"संध्या येन न विज्ञाता संध्या नैवाप्युपासिता । जीवमानो भवेच्छूद्रो मृतः श्वा वै भविष्यति ॥
"संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु । यदन्यत्कुरुते कर्म न तस्य फलमश्नुते ॥ "

जपानन्तरम् उपस्थानम् । ऋष्यादिकं स्मृत्वा पुरुषतर्पणे विनियोगः । ॐ भूः पुरुषम् ऋग्वेदाय नमस्तर्पयामि । ॐ भुवः पुरुषं यजुर्वेदाय नमस्तर्पयामि । ॐ स्वः पुरुषं सामवेदाय नमस्तर्पयामि । ॐ महः पुरुषम् अथर्ववेदाय नमस्तर्पयामि । ॐ जनः पुरुषम् इतिहासपुराणाय नमस्तर्पयामि । ॐ तपः पुरुषं सर्वागमाय नमस्तर्पयामि । ॐ सत्यं पुरुषं सर्वलोकाय नमस्तर्पयामि । ॐ भूर्भुवः स्वः पुरुषं मण्डलान्तर्गताय नमस्तर्पयामि । ॐ भूः एकपदायै गायत्र्यै नमस्तर्पयामि । ॐ भुवः द्विपदायै गायत्र्यै नमस्तर्पयामि । ॐ स्वः त्रिपदायै गायत्र्यै नमस्तर्पयामि । ॐ भूर्भुवः स्वः चतुष्पदायै गायत्र्यै नमस्तर्पयामि । ॐ उषसे नमस्तर्पयामि । ॐ गायत्र्यै नमस्तर्पयामि । ॐ सावित्र्यै नमस्तर्पयामि । ॐ सरस्वत्यै नमस्तर्पयामि । ॐ वेदमात्रे नमस्तर्पयामि । ॐ पृथिव्यै नमस्तर्पयामि । ॐ जयायै नमस्तर्पयामि । ॐ सांकृत्यै नमस्तर्पयामि । ॐ कौशिक्यै नमस्तर्पयामि । ॐ सर्वपराजित्यै नमस्तर्पयामि । ॐ सहस्रमूर्त्यै नमस्तर्पयामि । ॐ अनन्तमूर्त्यै नमस्तर्पयामि ।

"एभिर्मन्त्रैस्तु यो नित्यं चतुर्विंशतिसम्मितैः । गायत्रीं तर्पयेद्यस्तु त्रैलोक्यं तेन तर्पितम् ॥

"ततः षडङ्गं तर्पणान्तं कृत्वा अष्टमुद्राः प्रदर्शयेत् ।

"सुरभिर्ज्ञानयोनी च मत्स्यः कूर्मोऽथ पङ्कजम् । लिङ्गं निर्याणमुद्राश्च जपान्तेऽष्टौ प्रदर्शयेत्॥"

इति गायत्रीकल्पः ।

---

## अथ गायत्रीव्याख्यानं पुनः स्फुटीक्रियते ।

अथ प्रणवाङ्गेभ्यो व्याहृतयः संभूताः । अकारोकारमकारबिन्दुनादशक्तिशान्ताख्यानि सप्त प्रणवाङ्गानि । एतैः सह व्याहृतीनामैक्यमस्ति ।

तथा च **शङ्कराचार्याः**,

"प्रणवस्य व्याहृतीनामतः सम्बन्ध उच्यते । अकारं भूरुकारं भुवो मार्णवः स्वरीरितः" ॥

"बिन्दुर्महस्तथा नादो जनः शक्तिस्तपः स्मृतः । शान्तं सत्यमिति प्रोक्तं परात्परतरं पदम्"॥

इति प्रणवः ॥

भूरादिसप्तलोकान्सप्तपातालान् त्रिगुणितान् पृष्ठिवंशे मेरुरूपे ग्रन्थ्याकारेण संपरिणताः सप्त देवताः सुषुम्नामार्गेण प्रविष्टेन नभसा ध्यायन् प्राणायामं कुर्यात् । एतच्च सर्वं योगशास्त्रे स्पष्टतरम् । तथा च गायत्रीहृदये प्रोक्तं, व्याहृतयः सप्त लोकाश्च भवन्ति भूरिति भूर्लोकः भुवरित्यन्तरिक्षलोकः स्वरिति स्वर्लोकः महरिति महर्लोकः जन इति जनलोकः तप इति तपोलोकः सत्यमिति सत्यलोक इति।

भवत्यस्मात्सर्वमिति भूः रेफान्तमव्ययं, भवतीति भुवः, स्वरिति रेफान्तमव्ययं स्वर्गवाचकं, महीयते पूज्यते इति महः, जनयतीति जनः, तप्यत इति तपः तेजोरूपम्, सति भवं सत्यम् इति ।

**प्रपञ्चसारेपि,**

"भूरित्याद्या व्याहृतयो भूः शब्दः स विवर्तते । तत्पदं सदिति प्रोक्तं सन्मात्रत्वाच्च भूरिति ॥

"भूतत्वात्कारणत्वाच्च भुवःशब्दस्य संगतिः । सर्वस्वीकरणत्सात्मतत्त्वतया स्वरीरितम् ॥

"महत्त्वाच्च महस्त्वाच्च महःशब्दमितीरितः । तदेव सर्वजनानां तस्माच्च व्याहृतिर्जनः ॥

"तपो ज्ञानं तथा चैव तथा च तापसं स्मृतम् । सत्यानन्दात्मकत्वादनन्तज्ञानतः स्मृतम्"॥

इति ॥

**मन्त्रप्रकाशिकाया**मपि व्याहृतयो व्याख्याताः—भूरिति सन्मात्रमुच्यते। भुवरिति सर्वं भावयतीति व्युत्पत्त्या चिद्रूपमुच्यते । स्वरिति सुष्ठु प्रीयमाणं सुखस्वरूपमुच्यते । महरिति महीयते पूज्यते इति सर्वातिशायित्वमुच्यते । जन इति जनयतीति सर्वकारणमुच्यते । तप इति सर्वतेजोरूपत्वमुच्यते। सत्यमिति सर्वबाधारहितत्वमुच्यते । एतदुक्तं भवति—लोके सद्रूपं तथा चिद्रूपं यत् सुखरूपम् यत्सर्वाधिकरणं यत्तेजोरूपं यद्यथार्थरूपं तदोङ्कारवाच्यं ब्रह्मैवात्मा चिद्रूपात्मभावादिति ।

## अथ गायत्र्यर्थः ।

"यो देवः सविताऽस्माकं धियो धर्मादिगोचरः । प्रेरयेत्तस्य भर्गस्य तद्वरेण्यमुपास्महे ॥

**वेदान्तसारेपि,** क्वचित्,

"तदित्यवाङ्मनोगम्यं ध्येयं यत्सूर्यमण्डले । सवितुः सकलोत्पत्तिस्थितिसंहारकारिणः ॥
"वरेण्यमाश्रयणीयमाधारमिदं जगत् । भर्गः स्वसाक्षात्कारेण ह्यविद्याशक्तिदाहकम् ॥
"देवस्य ज्ञानस्य स्वानन्दं क्रीडतोऽपि वा । धीमह्यहं स एवेति तेनैवाभेदसिद्धये ॥
"धियोऽन्तःकरणवृत्तिः प्रत्यक्प्रणवचारिणी । य इत्यलिङ्गनिर्देशं सत्यज्ञानादिलक्षणम् ॥
"नोऽस्माकं बहुधाऽभ्यस्तभेदभिन्नदृशामपि । प्रचोदयात्प्रेरयतु प्रार्थनैवं हि शिष्यते ॥
"वेदव्यासेन संप्रोक्ता व्याख्या ज्ञानानुसारिणी ।"

इति गायत्र्यर्थः ।

---

## अथ शिरोऽर्थः ।

आप्नुवन्ति इति आपःशब्देन ब्रह्मणोऽवतारः सोमो गृह्यते । द्योतत इति ज्योतिःशब्देन **अग्निर्गृह्यते** । रम्यते योगिभिरिति रसः पवनः । न म्रियते कदाचिदित्यमृतं रविमण्डलान्तर्वर्ति **हिरण्मयपुरुषाख्यं** तेजः । एते चत्वारश्चतुर्वेदानां देवताः ।

तथा च **गायत्र्युपनिषत्** अथर्वणां चन्द्रमा दैवतं तदेव ज्योतिः सर्वच्छन्दांसि आपः**स्थानम्** । 'शन्नो देवीरभिष्टये' इत्येवमादि कृत्वा अथर्ववेदोऽभिधीयते । अद्भ्यः स्थावरजङ्गमग्रामः संभवति **तस्मात्सर्वमापोमयम्** । ऋचामग्निर्दैवतम् तदेव ज्योतिर्गायत्री छन्दः पृथिवीस्थानम् । 'अग्निमीळे पुरोहितमि'त्यादि कृत्वा ऋग्वेदोऽभिधीयते । यजुषां वायुर्दैवतम् तदेव ज्योतिः त्रिष्टुभं छन्दोऽन्तरिक्षं **स्थानम्** । 'इषेत्वोर्जेत्वावायवस्थ' इत्यादि कृत्वा यजुर्वेदोऽभिधीयते । साम्नामादित्यो दैवतं तदेव ज्योतिः **जगती** छन्दः द्यौः स्थानम् । 'अग्न आयाहि वीतय' इत्येवमादि कृत्वा सामवेदोऽभिधीयते । तस्मादेते **सोमादयश्चत्वारो** ब्रह्मदेवरूपा परमात्मरूपा वा । ब्रह्म वेदे ब्राह्मणे च परमात्मप्रपञ्चयोः । एवंविधं ब्रह्म **रज्जुसर्पन्यायेन** भूर्भुवःस्वःप्रपञ्चतया परिणतमोंकार एव ।

**मन्त्रसारेऽपि,**

"आपोज्योतीरसमिति सोमाग्न्योस्तेज उच्यते । तदात्मकं जगत्सर्वं रजस्तेजोद्वयं युतम् ॥
"अमृतं तदनाशित्वाद् ब्रह्मब्रह्म निगद्यते । यद्वा वेदात्मकं ब्रह्म सत्यज्ञानादिलक्षणम् ॥
"तत्र भूर्भुवःस्वरित्युक्तं सोऽहमित्योमुदाहृतम् । एतत्तु वेदसारस्य शिरस्त्वात् शिर **उच्यते** ॥

**मन्त्रदेवताप्रकाशिकायामप्युक्तम्**—आप इति व्याप्नोति इति व्यापित्वमुच्यते । **ज्योतिरिति** प्रकाशरूपम् । रस इति सर्वातिशयितत्वम् । अमृतमिति मरणादिसंसारनिर्मुक्तम् । **ब्रह्मेत्यात्मोच्यते** । एवं सर्वव्यापि सर्वप्रकाशकं सर्वातिशयितं नित्यमुक्तमात्मस्वरूपं सच्चिदानन्दात्मकं **यदोंकारवाच्यं ब्रह्मैवात्मचिद्रूपात्मकं** भाति ।

सवितुः प्रसवितुर्मायया जगज्जन्मादिकर्तुर्ब्रह्मादिगायत्र्यात्मनः देवस्य जगदुपादानाद्यभिन्नस्य **पूर्णस्यापि सतः जगद्बन्धमुक्त्यर्थं क्रीडितुर्वा ईश्वरस्य** तत्पारमार्थिकं रूपं तत्त्वमस्यादिप्रमाणोत्थचित्तवृत्तिव्यक्तया सविलासाविद्याभर्जनत्वाद्भर्गः अविद्यानिवर्तकमितियावत् परमानन्दतया **पुरुषार्थं तद्वरेण्यम्**

इष्टप्राप्तिरूपमित्यर्थः । धीमहि साक्षात्कुर्मः । यो नोऽस्माकं जीवानां धियो बुद्धीः भोगापवर्गोपायेषु प्रवर्तयेत् । एष 'एव साधु कारयती'त्यादिश्रुतेः । ततश्च पराङ्मुखान्संसरतः प्रत्यङ्मुखांश्च मोचयतः परेशितुस्तत्पदलक्ष्यमानन्दकरस्वरूपं ब्रह्माहमस्मि धीमहि इति ।

इति गायत्रीव्याख्यानं संपूर्णम् ।

---

प्रकृतमनुसरामः । **तत्र** तेषां मध्ये । **तदिति** । यथाकथंचिदादित्यमण्डलदर्शनायोग्य इत्यर्थः॥२४॥

## याज्ञवल्कीये २५ श्लोकः

**अपि**रेकत्रैवेति पक्षान्तरनिरासाय तस्य योगरूढत्वमाह । **अग्नाविति** । कार्यं क्रियमाणम् । **मनुरपि**, ( अ. २ श्लो. १८६ )

"दूरादाहृत्य समिधः संनिदध्याद्विहायसि । सायं प्रातश्च जुहुयात्ताभिरग्निमतन्द्रितः" ॥ इति । एतदकरणे प्रत्यवायमाह **हारीतः**,

"अकृत्वा भैक्षचरणमसमिध्य च पावकम् । अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत्" ॥ इति ।

पावकसमिन्धनं च समिद्धोमः । 'सायंप्रातः समिधमादध्यादिति' **गृह्य**वचनात् । ( १।२२।६ ) केचित्तु सायमेवेच्छन्ति । तथा च **लौगाक्षिः**, 'सायमेवाग्निसमिन्धनमित्येके' इति । तत्र समिल्लक्षणमाह **कात्यायनः**,

"नाङ्गुष्ठादधिका कार्या समित्स्थूलतया क्वचित् । न वियुक्ता त्वचा चैव न सकीटा न पाटिता ॥
प्रादेशान्नाधिका नोना तथा न स्याद्विशाखिका "। इति ।

**वायवीये,**

"पालाश्यः समिधः कार्याः खादिर्यस्तदलाभतः । शमीरोहितकाश्वत्थास्तदभावेऽर्कवेतसौ॥"**इति**। अग्निकार्याकरणे प्रायश्चित्तमुक्तम्,

"मा नस्तोके जपेन्मन्त्रम् शतसंख्यं शिवालये । अग्निकार्यं विना भुक्तौ न पापं ब्रह्मचारिणः॥" इति । तत्र कालमाह **कारिकाकारः**, "अग्निकार्यं च भिक्षायाः प्रागूर्ध्वं वा तदिष्यते ॥ " इति ।

प्राणानायम्य सायमग्निकार्यं प्रातरग्निकार्यं वा करिष्ये इति संकल्प्य परिसमूहनम् ॥ ३ ॥ समिधं गृहीत्वा अग्नये समिधमाहार्षं बृहते जातवेदसे । तया त्वमग्ने वर्धस्व समिधा ब्रह्मण वयं स्वाहा । अग्नय इदं न मम ।

ॐ तेजसामासमनज्मि ॥ ३ ॥ "मयि मेधां मयि प्रजां मय्याग्निस्तेजो दधातु । मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु । मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु । यत्ते अग्ने तेजस्तेनाहं तेजस्वी भूयासम् । यत्ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासम् । यत्ते अग्ने हरस्तेनाहं हरस्वी भूयासम् ।

विभूतिं गृहीत्वा । "मा नस्तोके तनये मा न आयौ मा नो गोषु मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्रभामिनोवधीर्हविष्मन्तः सदमित्वा हवामहे ।"

'त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् अगस्त्यस्य त्र्यायुषं यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषं शतायुषम् ।'

ॐ च मे स्वरश्च मे यज्ञोपचते नमश्च । यत्ते न्यूनं तस्मै त उपयतोतिरिक्तं तस्मै ते नमः ।

स्वस्ति, श्रद्धां मेधां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलम् । आयुष्यं तेज आरोग्यं देहि मे हव्यवाहन॥ देहि मे हव्यवाहनो नमो नमः ।

अमुकप्रवरान्वितः अमुकगोत्रोत्पन्नोऽमुकशर्माऽहं भो अभिवादयामि ।

**बृहस्पतिरुवाच,**

"हिरण्यरेतः सुशिखज्वलनाक्षयसर्वभुक् । सप्तजिह्वाननक्षामलेलिहान महाबल ॥
"आत्मा वायुस्तव विभो शरीरं सर्ववीरुधः । योनिरापश्च ते प्रोक्ता योनिस्त्वमसि चाम्भसः ॥
"ऊर्ध्वं चाधश्च गच्छन्ति संचरन्ति च पार्श्वतः । अर्चिषस्ते महाभाग सर्वतः प्रभवन्ति च ॥
"त्वमेवाग्ने सर्वमासि त्वयि सर्वमिदं जगत् । त्वं धारयसि भूतानि भुवनं त्वं बिभर्षि च ॥
"त्वमग्ने हव्यवाडेकस्त्वमेव परमं हविः । यजन्ति च सदा सन्तस्त्वामेव परमाध्वरे ॥
"त्वमन्नं प्राणिनां भुङ्क्षे जग्धपीताशितं प्रभो । त्वयि प्रवृत्तो विजयस्त्वयि लोकाः प्रतिष्ठिताः॥
"सर्वान्लोकांस्त्रीनिमान् हव्यवाह प्राप्ते काले पचसि पुनः समिद्धः ।
"त्वमेवैकस्तपसे जातवेदो नान्यस्त्वत्तो विद्यते गोषु देव ॥
"वृषाकपिः सिन्धुपतिस्त्वमग्ने महामखेष्वग्निरहस्त्वमेव ।
"विश्वस्य भूम्नस्त्वमसि प्रसूतिस्त्वं च प्रतिष्ठा भगवन् प्रजानाम् ॥
"सृजस्यपो रश्मिभिर्जातवेदस्तथौषधीरोषधीनां रसांश्च ।
"विश्वं त्वमादाय युगान्तकाले स्रष्टा भवस्यानल सर्गकाले ॥
"त्वमग्ने सर्वभूतानां योनिर्वेदेषु गीयसे । त्वया देव हितार्थाय निहता दानवा रणे ॥
"स्वयोनिस्ते महातेजस्तोयं मखशतार्चित । त्रायस्व समरं देवान् दैत्येभ्यः सुरसत्तम ॥
"पिङ्गाक्षलोहितग्रीव कृष्णवर्त्मन् हुताशन" । इति **हरिवंशे** अग्निस्तुतिः ।

इत्यग्निकार्यम् ।

---

केशव । नारायण । माधव । गोविन्द । विष्णो । मधुसूदन । त्रिविक्रम । वामन । श्रीधर । हृषीकेश । पद्मनाभ । दामोदर । संकर्षण । वासुदेव । प्रद्युम्न । अनिरुद्ध । पुरुषोत्तम । अधोक्षज । नारसिंह । अच्युत । जनार्दन । उपेन्द्र । हरे । श्रीकृष्णाय नमः ॥ २५ ॥

## याज्ञवल्कीये २६ श्लोकः ( पूर्वार्धः )

वृद्धाभिवादनस्य सर्वदोक्तत्वेन तत इत्यादि निष्फलमित्याशयेन प्रश्नः । **कथमिति** । असावित्यस्य व्याख्या । **देवेति** । तथा चासाविति स्वनामनिर्देशः तेनाभिवादये इत्युदीर्यामुकगोत्रनामाहमित्युदीरयन्नित्यर्थः । **तथा च मनुः** ( अ. २ श्लोक १२२।१२४ )

"अभिवादात्परं विप्रो ज्यायांसमभिवादयेत् । असौ नामाहमस्मीति स्वनाम परिकीर्तयेत् ॥

"भोः शब्दं कीर्तयेदन्ते स्वस्य नाम्नोऽभिवादने । नाम्नां स्वरूपभावो हि भोभाव ऋषिभिः स्मृतः ॥" इति ॥

अभिवादात्परमभिवादये इति शब्दस्योपरीत्यर्थ इति **पारिजातकारादयः** । विप्रपदं द्विजोपलक्षणमभिवादयेऽमुकशर्मनामाहमास्मि भो इत्येवंरूपं शब्दं वदन् । पादोपसंग्रहणादिना व्यापारेण स्वात्मानमेवाभिलक्षीकृत्य यद्गुर्वादिनतिरित्यर्थः । तथा च **मनुरेव**, ( अ. २ श्लो. ७२ )

"व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः । सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ।" इति

तथा चामुकगोत्रो देवदत्तशर्माऽहं भो अभिवादये इत्युक्त्वा कर्णौ स्पृष्ट्वा दक्षिणोत्तरपाणिभ्यां गुरोः पादौ गृहीत्वा शिरोऽवनमनमुपसंग्रहणं कार्यम् । अभिवादने तु पादग्रहणं नास्ति । पादस्पर्शनमात्रमपि कृताकृतमिति **स्मृत्यर्थसारः** । अभिवादनवाक्ये चाभिवादये इत्यस्यान्ते प्रयोगो गायत्र्यभिवादनमात्रविषयकः, तथा च तदेवाधिकृत्याह—

**भरद्वाजः,**

"सगोत्रनामशर्माऽहं भवित्यन्तेऽभिवादये । इत्येतद्भाषणं यत्तन्मन्त्रे स्यादभिवादनम् ॥" **इति** ॥

अन्यत्र तु अभिवादये देवदत्तनामाहमस्मि भो इति प्रयोक्तव्यम् । तदुक्तमादावेव अत्र । संध्याकालाभिवादने विशेषमाह—

**पारिजाते यमः,**

"ज्यायानपि कनीयांसं संध्यायामभिवादयेत् । विना पुत्रं च शिष्यं च दौहित्रं दुहितुः पतिम् ॥" इति ।

अभिवादनवाक्ये विशेषमाह **मनुः**, ( अ० २ श्लो० १२२ )

"नामधेयस्य ये केचिदभिवादं न जानते । तान् प्राज्ञोऽहमिति ब्रूयात् स्त्रियः सर्वास्तथैव च ॥" इति ।

नामधेयस्याभिवादं नामधेयसहिताभिवादनवाक्यार्थं संस्कृतानभिज्ञतया धर्मशास्त्राज्ञानेन **च ये न** जानते विशिष्य न जानन्ति तान्प्रत्यभिवादनवाक्यज्ञानापि अहमित्येव ब्रूयात् । अभिवादनवाक्यार्थंजानाना अपि मातृष्वस्रादिस्त्रियोऽहमित्येव वदेदिति **नारायणः** । संस्कृतादि ज्ञानवतोऽपि प्रत्यभिवादनप्रकाराज्ञानेऽनभिवाद्यतामाह **मनुः** ( अ. २ श्लो. १२६ ),

"यो न वेत्त्यभिवादस्य विप्रः प्रत्यभिवादने । नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः" ॥ इति ।

प्रत्यभिवादनमभिवादनप्रतियोगिवाक्यम् । तल्लक्षणं च **मनुरेवाह** ( अ. २ श्लो. १२५ ),

"आयुष्मान्भव सौम्येति वाच्यो विप्रोऽभिवादने । अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः ॥" इति ।

आयुष्मान्भव सौम्य शिवशर्मा३न् इत्यादि वाच्यमित्यर्थः । यदा तु पूर्वाक्षरं सन्ध्यक्षरं भवति तदा एकारस्य आइ ऐकारस्य चैवम् ओकारस्य चौकारस्य आउ इत्यादेशं कुर्यात् । हरा३इअ बटा३उअ इति यथा ।

तथा च **पाणिनिः** 'प्रत्यभिवादे, इत्युपक्रम्य एचोऽप्रगृह्यस्येत्याह । ( व्या. सू. ८।२।८३ )

**वसिष्ठोऽपि**, 'आमन्त्रिते स्वरोऽन्त्यः प्लवते सन्ध्यक्षरमप्रगृह्यमायावुभावं चापद्यत' इति । इदं च वाक्ये संहिताया अनित्यत्वादुक्तम् । ' संहिताविवक्षायां तु तयोर्य्वावेचीत्यस्य प्रवृत्तौ हराय बटाव इत्यादि बोध्यमिति, **हरदत्तः । माधवस्तु** नाम्नोऽन्ते स्थितोऽकारः प्लुतो वाच्य इत्यर्थः । अकार इत्यच उपलक्षणम् । पूर्वमक्षरं यस्य स तथा । अक्षरमिह व्यञ्जनं सामर्थ्यात् । तथा चायुष्मान्भव सौम्य देवदत्ता ३ इति प्रयोगः । न त्वकारोऽपूर्वो विधीयते । वाक्यभेदापत्तेरित्याह । इदमेव व्याख्याद्वैधमभिप्रेत्य **स्मृत्यर्थसारेऽपि** प्रत्यभिवादनवाक्यं द्वेधा दर्शितमिति दिक् ।

'त्र्यब्दपूर्वं श्रोत्रियाणामल्पेनापि स्वयोनिषु' । इति ।

त्र्यब्दपूर्वकालोत्पन्नतया यो ज्येष्ठस्तद्विषयत्वादभिवादनमपि त्र्यब्दपूर्वं, त्रिवर्षपूर्वः श्रोत्रियोऽभिवाद्य इति फलितोऽर्थः । स्वयोनिषु ज्ञातिबन्धुषु स्वल्पेनापि कालेनैकदिनपूर्वत्वेनापि ज्येष्ठतायामभिवादनमित्यर्थः । तदुक्तं वयस्यः समनेऽहनि जात इति । यस्तु त्रिवर्षपूर्वत्वादिगुणशून्यत्वादनभिवाद्यस्तस्मिन्दृष्टे यत्कार्यं तदाह **मनुः** ( अ. २ श्लो. १२७ )

"ब्राह्मणं कुशलं पृच्छेत्क्षत्रबन्धुमनामयम् । वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च ॥" इति ।

ब्राह्मणादीनां स्वस्वजातीये दृष्टे स्वस्वजात्युक्तम् । तथा स्वस्वावरजातीये तत्तज्जात्युक्तं न त्वेतदवरजातेरुत्तमं प्रतीति **नारायणः** । प्रत्यभिवादनाभिधानानन्तरमभिवादितेन गुर्वादिनैतत्प्रष्टव्यमिति केचिदाहुः ।

**मनुः** ( अ. २ श्लो. १२८–१२९ ),

"न वाच्यो दीक्षितो नाम्ना यवीयानपि यो भवेत् । भोभवत्पूर्वकं त्वेनमभिभाषेत धर्मवित् ॥
"परपत्नी तु या स्त्री स्यादसम्बद्धा तु योनितः । तां ब्रूयाद्भवतीत्येवं सुभगे भगिनीति च ॥" इति ।

यावद्दीक्षासमाप्तिस्तावदेव नाम न ग्राह्यमिति **नारायणः** । ननु परपत्नीति व्यर्थं, स्वपत्नीव्यवच्छेदस्य गार्हस्थ्ये एव संभवेन ब्रह्मचारिप्रकरणेऽनुपयोगादिति चेत्सत्यम् । एतदेव ज्ञापकमेतत्प्रकरणस्था विधयः स्नातकादिषु संभविनस्तैरप्यनुष्ठेया इतीति **नारायणः** । अत एव **स्मृत्यर्थसारेऽपि** "गुर्वादय उपसंग्राह्या" इत्याद्युक्त्वा समावृत्तेन चेत्याद्युक्तम् । तथा **गौतमेनापि** तृतीयाध्याये उक्तम् ( अ. ३ सू. ९ ) 'उत्तरेषां चैतदविरोधीति' । एतत् ब्रह्मचारिणामुक्तं द्यूतनिषेधादि उत्तरेषामप्याश्रमिणां भवति शेषवचनैर्यत्र विरुध्यत इति **हरदत्तः** । अत्र हरदत्तकृतमेव व्याख्यानान्तरम् उत्तरेषां यद्धर्मजातं तदप्येतस्य बोध्यमिति । तेनाविरुद्धा गृहस्थादिधर्मा अपि ब्रह्मचारिणां प्राप्यन्ते ।

तथा **स्मृत्यर्थसारे**,

"मत्तं प्रमत्तमुन्मत्तं धावन्तमशुचिं नरम् । वमन्तं जृम्भमाणं च कुर्वन्तं दन्तधावनम् ॥
"अभ्यक्तशिरसं स्नानं कुर्वन्तं नाभिवादयेत् । जपयज्ञगणस्थं च समित्पुष्पकुशानलान् ॥
"उदपान्यर्घ्यभैक्षान्नं वहन्तं नाभिवादयेत् । अभिवाद्य द्विजश्चैतानहोरात्रेण शुद्ध्यति ॥
"देवताप्रतिमां दृष्ट्वा यतिं चैव त्रिदण्डिनम् । नमस्कारं न कुर्याच्चेदुपवासेन शुद्ध्यति ॥

"सर्वे वाऽपि नमस्कार्या सर्वावस्थासु सर्वदा । आशीर्वाच्या नमस्कार्यैर्वयस्यस्तु पुनर्नमेत् ॥
"स्त्रियो नमस्या वृद्धाश्च वयसा पत्युरेव ताः । कृतेऽभिवादे विप्रस्तु नाभिवादं करोति यः ॥
"नाभिवाद्यः स विज्ञेयो यथा शूद्रस्तथैव सः ।" इति **मूलोक्तम्** ।

**विष्णुपुराणेऽपि,**

"उभे संध्ये रविं भूप तथैवाग्निं समाहितः । उपतिष्ठेत्तथा कुर्याद्गुरोरप्यभिवादनम् ॥
"तेनैवोक्तः पठेद्वेदं नान्यचित्तः पुरः स्थितः ।" इति ।

वेदमिति । स्वशाखामित्यर्थः । तदाह—**वसिष्ठः** ( अ. १६ सू. ४३ ),

"पारम्पर्यागतो येषां वेदः सपरिबृंहणः । तच्छाखं कर्म कुर्वीत तच्छाखाध्ययनं तथा ॥" इति । सपरिबृंहणः साङ्गोपाङ्गः । स्वशाखापरित्यागं स एव निषेधति,

"स्वीया शाखोज्झिता येन तेन ब्रह्मोज्झितं परम् । ब्रह्महेव स विज्ञेयः सद्भिर्नित्यं विगर्हितः ॥" इति स्वशाखाध्ययनानन्तरं तु शाखान्तराध्ययनेऽभ्युदयः । तथा च **वसिष्ठः**

"अधीत्य शाखामात्मीयां परशाखां ततः पठेत् ।" इति । तथा **कौर्मे,**
"योऽन्यत्र कुरुते यत्नमनधीत्य श्रुतिं द्विजः । तुवै मूढो न संभाष्यो वेदबाह्यो द्विजातिभिः ॥
"न वेदपाठमात्रेण संसष्टो वै भवेत् द्विजः । पाठमात्रावसायी तु पङ्के गौरिव सीदति ॥
"योऽधीत्य विधिवद्वेदं वेदार्थं न विचारयेत् । स सान्वयः शूद्रसमः पात्रतां न प्रपद्यते ।" इति ।

**चतुर्विंशतिमते,**

"योऽनधीत्य द्विजो मोहादन्यत्र कुरुते श्रमम् । स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥
"अनभ्यासेन वेदानामाचारस्य च लंघनात् । आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति ॥
"पठित्वा बोधयेदर्थं वेदानां कर्मसिद्धये । पाठमात्रावसायी तु पङ्के गौरिव सीदति ॥
"हतं ज्ञानं क्रियाहीनं हतास्त्वज्ञानतः क्रियाः । अपश्यन्नन्धको दग्धः पश्यन्नपि हि पङ्गुकः ॥"

**नारदः,**

"पुस्तकप्रत्ययाधीतं नाधीतं गुरुसंनिधौ । भ्राजते न सभामध्ये जारगर्भा इव स्त्रियः ॥" इति ।
**मनुः,** ( अ. ४ श्लो. ९९ )

"नाविस्पष्टमधीयीत न शूद्रजनसन्निधौ । न निशोऽन्तेपरिश्रांतो ब्रह्माधीत्य पुनः स्वपेत् ।" इति न स्वप्यादित्यर्थः

**शिक्षायाम्,**

"हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम् । ऋग्यजुःसामभिर्दग्धो वियोनिमधिगच्छति" ॥ इति

**व्यासः,**

"अनध्यायेष्वधीतं यच्च शूद्रस्य सन्निधौ । प्रतिग्रहनिमित्तं च नरकाय तदुच्यते" ॥ इति ।

अत्र यद्यपि संपूर्णशाखाध्ययनमावश्यकं तथाप्यापत्काले एकदेशाध्ययनेनापि निर्वाहः। तदाह **मनुः** ( अ. ४ श्लो. १०० ),

"यथोदितेन विधिना नित्यं छन्दस्कृतं पठेत्। ब्राह्मं छन्दस्कृतं चैव द्विजो युक्तो ह्यनापदि" ॥ इति।

छन्दस्कृतं मन्त्रभागं, छन्दोबद्धत्वात्। ब्राह्मं ब्राह्मणम्। मन्त्राणां साक्षात्कर्माङ्गतयाऽन्तरङ्गत्वाद्यथाविधिगृहीतानामेव च विनियोगार्हत्वात् ब्राह्मणस्य तूपदेशमात्रार्थतया बहिरङ्गत्वादशक्तेन मन्त्रमात्रमध्येयं शक्तेन तूभयमित्यर्थः। **पाराशरादा**वप्येतत्स्पष्टमेव। "शूद्रमपि कुलगुणसंपन्नमनुपनीतमध्यापयेदित्येके" इत्यायुर्वेदविषये उपनयनीयाध्याये **सुश्रुतः** ॥

## श्लोकः २६ ( उत्तरार्धः )

आद्यचार्थमाह। **तथेति**। अन्यदपि कर्तव्यमित्यर्थः। उपासीतेत्येवार्थं ध्वनयन् तदर्थमाह। **तदिति**। न केवलं तावन्मात्रं स्वतन्त्रस्यापि तत्संभवादत आह। **तदिति**। वाक्यान्तरत्वायाह। **भवेदिति** ॥ २६ ॥

## याज्ञवल्कीये २७ श्लोकः

**अपि**रेवार्थे **चः** समुच्चये अधीयीत च तदाह। **आहूत**। **एवेति**। तत्फलमाह। **नेति**। **चः** समुच्चये। निवेदयेच्च हितं चास्येति। चार्थमाह। **तथेति**। नित्यपदार्थमेवाह। **सदेति**। तल्लब्धमाह। **न प्रेति**। **अपीति**। आद्यादित्यर्थः ॥ २७ ॥

## याज्ञवल्कीये २८ श्लोकः

तच्छून्यत्वस्यानुपयोगादाह। **दयेति**। प्रकृतोपयुक्तमाह। **ग्रन्थेति**। अविनिगमकत्वादाह। **बाह्येति**। नीलरूपवदितिवत्प्रयोगः। 'कृपू सामर्थ्ये' इत्यनुरोधेनाविनिगमकत्वादाह। **आधीति**। प्रतियोगिस्वरूपस्य तथात्वादाह। **गुणेति**। वुनर्थमाह। **शील इति**। तत एवाह। **वृत्तेति**। सदाचरणेत्यर्थः। अपौनरुक्त्याय। **शुश्रूषेति**। बन्धुर्हितकारी। द्वन्द्वान्तस्य प्रत्येकसम्बन्धादाह। **ज्ञानेति**। अनेन 'अथवा विद्यया विद्ये'त्यस्य संग्रहः। भृतकाध्यापनस्य निषेधादाह। **अर्पणेति**। अनिर्बन्धपूर्वकं यथातथेत्यर्थः। यथा संभवमित्यस्य पूर्वान्वयः। अत एव विकल्पः। चपाठे सोऽपि वार्थे। धर्मत इत्यस्य व्याख्या। **एते चेति** गुरुणा ॥ २८ ॥

## याज्ञवल्कीये २९ श्लोकः

अन्यदपि कार्यमित्याह। **तथेति**। मूलस्य व्युत्क्रमे अप्यर्थैवार्थोऽयं, धारयेदपि। **चस्तु** तत्र मिथःसमुच्चये। तत्र विप्रस्य पालाशो दण्डः। 'पालाशो दण्डो ब्राह्मस्येति' **धर्मसूत्रोक्तेः**। **( आपस्तंबीये** १।२।३८ )

**मनुरऽपि** ( अ. २ श्लो. ४५ ),

"ब्राह्मणो बैल्वपालाशौ क्षत्रियो वाटखादिरौ। पैप्पलौदुम्बरौ वैश्यो दण्डानर्हति धर्मतः ॥" इति।

अनुकल्पमाह **माधवीये यमः**, "एतेषामप्यभावे तु सर्वेषां सर्वयज्ञियाः ॥" इति । दण्डपरिमाणमाह **मनुः** ( अ. २ श्लो. ४६ ),

"केशान्तिको ब्राह्मणस्य दण्डः कार्यः प्रमाणतः । ललाटसंमितो राज्ञः स्यात्तु नासान्तिको विशः॥" इति

**गौतमोऽपि,** ( अ. १ सू. २५ ), 'मूर्धललाटनासाग्रप्रमाण' इति ।

दण्डलक्षणमाह **मनुः** ( अ. २ श्लो. ४७ )

"ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः । अनुद्वेगकरा नृणां सत्वचोऽनग्निदूषिताः॥" इति ।

अजिनं च कार्ष्णादीति ।' द्वन्द्वार्थसूचकश्चः । कृष्णसारसम्बन्धीत्यर्थः ।

तथा च **मनुः** ( अ. २ श्लो. ४१ ),

"कार्ष्णरौरवबास्तानि चर्माणि ब्रह्मचारिणाम् । वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च ॥"

बास्तं छागीयं कार्ष्णादीन्युत्तरीयाणि शाणादीन्यन्तरीयाणि । तथा च **शङ्खः,** 'कृष्णरुरुबस्ताः कृष्णाजिनान्युत्तरीयाणीति' ।

**माधवीये वसिष्ठोऽपि** ( अ. ११ सू. ६१–६३ ), । "कृष्णाजिनमुत्तरीयं ब्राह्मणस्य । रौरवं राजन्यस्य । गव्यं बस्ताजिनं वा वैश्यस्येति ।"

**पारस्करोऽपि**, 'ऐणेयमजिनमुत्तरीयं ब्राह्मणस्य रौरवं राजन्यस्य आजङ्गव्यं वा वैश्यस्य सर्वेषां वा गव्यमिति' ।

यद्यपि 'अण्या ढञिति' अस्त्रीप्रत्ययान्तादेव ढञ्विहितः

तथा **चामरः** ( २।५।८ ), "ऐणेयमेण्याश्चर्माद्यमेणस्यैणमम् त्रिषु ।" इति,

तथाप्येणचर्मणा सहैणीचर्मणो विकल्प इति केचित् । **रुरुश्चित्र**मृगः ।

**आग्नेये**, "मार्गवैयाघ्रबास्तानि चर्माणि ब्रह्मचारिणामिति" । **बस्त**श्छागः ॥

**धर्मसूत्रेऽपि** ( १।३।३ ), 'हारिणमैणेयं वा कृष्णं ब्राह्मणस्येति' । अजिनं त्वेवोत्तरं धारयेदित्यपि तत्रैवोक्तम् ।

विकल्पमाह **यमः,** 'सर्वेषां वा रौरवाजिनामिति ।'

अन्तरीयाण्याह **गौतमः,** 'वासांसि शाणक्षौमचीरकुतपाः सर्वेषामिति' । शणविकारः शाणः, क्षुमा अतसी तद्विकारः क्षौमं, श्वेतपट्ट इत्यन्ये, दर्भादिनिर्मितं चीरम्, ऊर्णादिनिर्मितः कम्बलः कुतपः । चत्वार्येतानि वासांसि सर्वेषामित्यर्थः ।

तथा च पक्षान्तरमाह **गौतमः,** ( अ. १ सू. १७ ) 'कार्पासं वा अविकृतमिति' । अविकृतं कुसुम्भादिना अरक्तं वासः । सर्वेषामित्यनुवर्तते । मानान्तरमाह **स एव,** ( अ. १ सू. १९ ) 'काषायमप्येके' ।

तत्रापि नियममाह **स** एव (अ. १ सू. २०), "वार्क्षं ब्राह्मणस्य माञ्जिष्ठहारिद्रे इतरयोरिति।" वृक्षकषायेण मञ्जिष्ठया हरिद्रया च रक्तमित्यर्थः।

**मनुः** ( अ. २ श्लो. ४१ )

"वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च।" इति।

**वसिष्ठः** ( अ. ११ सू. ६४–६६ ), "शुक्लमहतं वासो ब्राह्मणस्य। कार्पासं माञ्जिष्ठं क्षौमं क्षत्रियस्य।पीतं कौशेयं वैश्यस्येति।"

अहतलक्षणमाह–**प्रचेताः**,

"ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम्। अहतं तद्विजानीयात्सर्वकर्मसु पावनम्॥" **इति**। **उपवीतमिति**। तथा च **मनुः** ( अ. २ श्लो. ४४ ),

"कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत्। शणसूत्रमयं राज्ञो वैश्यस्याविकसूत्रकम्॥"इति।

तदलाभे **देवलः**,

"कार्पासक्षौमगोवालशाणवल्कतृणादिकम्। यथा संभवतो धार्यमुपवीतं द्विजातिभिः॥" इति। तच्च नवतन्तुकं कार्यं, तदाह **देवलः**, "यज्ञोपवीतं कुर्वीत सूत्रेण नवतन्तुकम्।" इति।

ऊर्ध्ववृतलक्षणमाह **संग्रहकारः**,

"करेण दक्षिणेनोर्ध्वं गतेन त्रिगुणीकृतम्। वलितं मानवे सूत्रं शास्त्रे ऊर्ध्ववृतं स्मृतम्॥" इति। ऊर्ध्वास्थितेन दक्षिणेन करेण यद्वलितं तदूर्ध्ववृतमित्यर्थः।

"त्रिवृतं चोपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते"। इति **कात्यायनः**।

तन्निर्माणप्रकारः **स्मृत्यर्थसारे**,

"शुचौ देशे शुचिः सूत्रं संहताङ्गुलिमूलके। आवेष्ट्य षण्णवत्या तु त्रिगुणीकृत्य यत्नतः॥
"अब्लिङ्गकैस्त्रिभिः सम्यक् प्रक्षाल्योर्ध्ववृतं तु तत्। अथ प्रदक्षिणावृत्तं सावित्र्या त्रिगुणीकृतम्॥
"त्रिरावेष्ट्य दृढं बध्वा हरिब्रह्मेश्वरान्नमेत्। यज्ञोपवीतमिति च सूत्रं मन्त्रेण धारयेत्"॥ इति॥

**देवलो** विशेषमाह,

"सूत्रं सलोमकं चेत्स्यात्ततः कृत्वा विलोमकम्। सावित्र्या दशकृत्वोऽद्भिर्मन्त्रिताभिस्तदुक्षयेत्॥"
धारणे विशेषः **श्रुत्यैवोक्तः**, 'दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति'।

तथा **देवल** एव,

"विच्छिन्नं चाप्यधोयातं भुक्त्वा निर्मितमुत्सृजेत्।"
परिमाणान्तरमपि तत्रैवोक्तं यद्वेत्युपक्रम्य।

"पृष्ठदेशे च नाभ्यां च यद्धृतं विन्दते कटिम् । तद्धार्यमुपवीतं स्यात् नातिलम्बं न चोच्छ्रितम् ॥
"स्तनादूर्ध्वमधो नाभेर्न धार्यं तत्कथंचन ।"

इति **कात्यायनोक्तम् । पैठीनसिः,**

"कार्पासमुपवीतं ब्राह्मणस्य क्षौमं राजन्यस्याविकं वैश्यस्येति"। क्षुमा अतसी । यज्ञोपवीतादीनां त्रोट्यादौ प्रतिपत्तिमाह—

**माधवीये मनुः** ( अ. २ श्लो. ६४ ),

"मेखलामजिनं दण्डमुपवीतं कमण्डलुम् । अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रतः॥"इति ।

"स्तनादूर्ध्वमधो नाभेर्न कर्तव्यं कथंचन । स्तनादूर्ध्वं श्रियं हन्ति नाभ्यधस्तात्तपःक्षयः ॥"

इति **देवलवाक्यं** तु न प्रमाणपरमपि तु धारणपरमिति न पूर्ववचनविरोध इति **गौडनिबन्धे ।** धारणीयोपवीतसंख्यामाह **माधवीये भृगुः,**

"उपवीतं बटोरेकं द्वे तथेतरयोः स्मृते । एकमेव यतीनां स्यादिति शास्त्रस्य निश्चयः॥" इति । एतन्नित्यपरम् । काम्ये तु **देवलः** 'बहूनि त्वायुष्कामस्येति' ।

"ब्रह्मसूत्रं विना भुङ्क्ते विण्मूत्रं कुरुतेऽथवा । गायत्र्यष्टसहस्रेण प्राणायामेन शुद्ध्यति ॥" इति **मरीचिः ।**

**पाराशरे,**

"आयुष्कामः सदा कुर्याद्बहुयज्ञोपवीतकम् । पञ्चभिः पुत्रकामः स्याद्धर्मकामस्तथैव च ॥

"दशाष्टौ वा गृहस्थस्य चत्वारि वनवासिनः । एकैकमुपवीतं च यतीनां ब्रह्मचारिणः ॥" इति ।

**स्मृत्यन्तरे,**

"यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि । तृतीयमुत्तरीयार्थे आयुष्कामो बहून्यपि" ॥

**भृगुकात्यायनौ,**

"सदोपवीतिना भाव्यं सदा बद्धशिखेन च । विशिखो व्युपवीतश्च यत्करोति न तत्कृतम्"॥ इति । अत्र पूर्वार्धेन पुरुषार्थता अपरार्धेन च क्रत्वर्थता ।

"यज्ञोपवीतमिति वा व्याहृत्या वापि धारयेत् ।" इति **देवलः ।**

## अथातो यज्ञोपवीतविधिं व्याख्यास्यामः ।

"कार्पाससूत्रं ब्राह्मणकन्यकया ब्राह्मणेन वा विधवया स्नातया शुक्लपक्षे पुण्ये नक्षत्रेऽद्भिरवोक्ष्याचमनं कृत्वाऽऽकन्दितं सूत्रं चतुरङ्गुलमात्रेण षण्णवतिपर्यायैर्व्याहृत्या प्रथममेवं द्वितीये तृतीये चाथैनं स्नापयत्यापोहिष्ठामयोभुव इति तिसृभिर्हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानः सुवर्जन इति चैतेनानुवाकेन प्रातः प्राक् तिष्ठन्सावित्र्या चाभिमन्त्र्य नदीदेवगृहे गोष्ठे यत्र यत्र शुचिर्भूत्वा तन्तुस्त्रिवृदधोवृतः पुनरेवमधस्त्रिवृद्यावद्बहुसस्तावत्पीडयित्वा खदिरोदुम्बराश्वत्थबिल्वपिप्पलवर्णकवेणुयाज्ञिकवृक्षाणां तेषामन्यतमस्य च बध्नीयादित्यप्सु जीवन्ति पितृभ्यो नम इत्यथा त्रिस्ताडयेत्कर-

तलं देवादीनां च तृप्तिदं ब्रमन्नावेष्टितं यत्तत्पितॄणां तृप्तिदं हि तत् भूरग्निं च पृथिवीं च मां चेति त्रिः प्रदक्षिणमावर्त्तयेद्भूर्भुवःस्वश्चन्द्रमसं च दिशश्च मां चेति ग्रन्थयेत् ओंकारश्चाग्निनागौ च सोमः पितृप्रजापतिः वायुः सूर्यो विश्वेदेवा इत्येते नव तन्तवः देवस्यत्वेत्यादायोद्वयंतमसस्परीत्यादित्यं दर्शयित्वा यज्ञोपवीतमन्त्रेण यज्ञोपवीतं ग्राहयेन्नाभेरुर्ध्वमनायुष्यन्नाभेरधस्तपःक्षयस्तस्मान्नाभिसमं कुर्याद्दुपवीतं विचक्षणः अज्ञानाद्विधेयं सूत्रं गोरज्जुनासिके यथा प्राज्ञः सोपवीतीत्याह" भगवान्**बौधायनः** ।

**सुदर्शनादीन्** अवलोक्य निर्गलितार्थं उच्यते । दैवे कर्मणि यज्ञोपवीतम् । पित्र्ये कर्माणि प्राचीनावीतम् । दैवं पित्र्याङ्गमपि यज्ञोपवीतिना । पित्र्यं दैवाङ्गमपि प्राचीनावीतिना । अस्योपपत्तिः यज्ञोपवीती प्रदक्षिणं दैवानि कर्माणि करोतीति सामान्यसूत्रं यज्ञं व्याख्यास्याम इत्युपक्रमात्पाकयज्ञेष्वपि भवति । विवाहादिदैवे तु **गृह्यसूत्रे** परिभाषायां यज्ञोपवीतिना प्रदक्षिणमित्यनेन । प्राचीनावीतिना प्रसव्यमित्यपि सामान्यसूत्रे गृह्ये च । तेन दैवाङ्गं पित्र्यमपि प्राचीनावीतिना, पित्र्याङ्गंदैवमपि यज्ञोपवीतिना । तेन पितरः पितामहाः परेऽवरे इतीयमाहुतिः प्राचीनावीतिनेति **सुदर्शनेन** स्पष्टमुक्तम् । मासिश्राद्धे आघारावाज्यभागावग्निमुखस्विष्टकृत्प्रदाक्षिणानुव्रजनेषु सव्यमिति स्वधा पितृभ्यः पितॄन् जिन्वेत्यादि पित्र्याङ्गमपि दैवं यज्ञोपवीतिना उक्तम् ।

अधुना ऋषिकर्मणि भूतयज्ञे ब्रह्मयज्ञादौ किं भवतीति विचार्यते ।

तत्र **धर्मप्रश्ने पञ्चमे पटले आदिसूत्रे** 'उपासने गुरूणां वृद्धानामतिथीनां होमे जप्यकर्मणीत्यादिना' यज्ञोपवीतमुक्तम् तत्स्पष्ट**मुज्ज्वलाकारेण व्याख्यातं**, पितृकर्मणोऽन्यत्र होमे यज्ञोपवीतमिति । तेन भूतयज्ञब्रह्मयज्ञमनुष्ययज्ञादौ यज्ञोपवीतं भवति । होमत्वात् ब्रह्मयज्ञे च पितृसूक्तादौ जपत्वात् । श्रौते सप्तर्षिभ्यस्त्वा सप्तर्षीन् जिन्वेत्यादौ यज्ञोपवीतिनैव कुर्वन्ति इति दिक् ।

## अथ यज्ञोपवीतधारणस्य पुरुषार्थता वा क्रत्वर्थतेत्यादि विचार्यते ।

तत्र—

"यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि । तृतीयमुत्तरीयार्थं वस्त्राभावे तदिष्यते ॥
"सदोपवीतिना भाव्यं सदा बद्धशिखेन च । विशिखो व्युपवीतश्च यत्करोति न तत्कृतम् ॥"

**इति** अत्र पूर्वार्धेन सदाश्रवणात्पुरुषार्थता । उत्तरार्धेन विपर्ययनिन्दाद्वारेण सशिखसोपवीताभ्यां कर्तव्यं कर्मेति कीर्तनात्कर्मार्थता । एवं च कर्मकाले शिखाबन्धोपवीताभावे कर्माङ्गलोपनिमित्तं पुरुषार्थलोपनिमित्तं चेति प्रायश्चित्तद्वयं भवति । दर्शपूर्णमासयोरिवानृतवदने । कर्मणो बहिस्तु पुरुषार्थलोपनिमित्तमेवेति विवेकः ।

## अथास्य कर्मविशेषे विन्यासविशेषः ।

विन्यासविशेषे **श्रुतिः**, 'दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतमेतदेव विपरीतं प्राचीनावीतं संवीतं मानुषमिति ' ।

कर्मविशेषे **श्रुतिः**, 'निवीतं मनुष्याणां प्राचीनावीतं पितॄणामुपवीतं देवानामिति ।'

**तत्रापस्तम्बेन** श्रौतस्मार्तसाधारणसूत्रे 'यज्ञं व्याख्यास्याम' इत्युपक्रम्य 'प्रागपवर्गाण्युदगपवर्गाणि वा यज्ञोपवीतिना प्रदक्षिणं दैवानि कर्माणि करोति प्राचीनावीतिना प्रसव्यं दक्षिणापवर्गाणि पित्र्याणी'त्युक्तम् । अथ च **गृह्यप्रकरणे**

अथ कर्माण्याचाराद्यानि गृह्यन्त इत्युपक्रम्य यज्ञोपवीतिनेत्युक्तम् । अस्य सूत्रस्य **सुदर्शनकृतं** व्याख्यानं लिख्यते ।

यज्ञोपवीतिना कार्याणीति सम्बन्धः । ननु यज्ञोपवीतं पाकयज्ञेषु प्रागपवर्गाणीत्यादिना सिद्धं, विवाहादिषु होमेषु जपादिषु च होमे जप्यकर्मणीत्यादिना सिद्धम्, अतोऽत्रैष विधिर्व्यर्थः । सत्यं, यत्राप्राप्तिर्हेमन्ते प्रत्यवरोहणादिषु, तत्रायं विधिः सार्थक एव । प्रदक्षिणं कार्याणीत्येव सम्बन्धः । इदं तु प्रादक्षिण्यं पाकयज्ञेषु तत्कोटिषु विवाहादिषु च परिभाषासिद्धमपि व्यतिरिक्तं ग्राह्यार्थं विधीयते । पुरस्तादुदग्वोपक्रमस्तथाऽपवर्गोऽपरपक्षे पित्र्याणि प्राचीनावीतिना पित्र्याणि, कार्याणीति शेषः । इदं तु वासोविन्यासभेदविधानं स्वतन्त्रं सर्वपित्र्यार्थम् । प्राचीनावीतिना पित्र्याणीत्यनेन वाक्येन विशेषावगमात् । उद्देश्यं पित्र्यमात्रे लब्धम् । अधिकप्रकृतस्वातन्त्र्यविवक्षायां वाक्यभेदापत्तेः । अङ्गेष्वपि प्राचीनावीतत्वं विधेयम् । अपरपक्षे पित्र्याणीतिवदनपेक्षितत्वाभावाच्च । तेन यानि स्वतन्त्राणि यथा प्रधानाहुतयः यानि चास्वतन्त्राणि द्वितीयमार्जनादीनि तानि सर्वाण्येव प्राचीनावीतिना कार्याणि । इत्थमेव यज्ञोपवीतिनेत्यपि । तेन पित्र्याङ्गान्यपि दैवान्याचारादीनि यज्ञोपवीतिनैव । इतराङ्गानां तु पात्रप्रयोगादीनां तत्तत्प्रधानवदेव । केचिदङ्गानां प्रधानधर्मता न्याय्येति पित्र्याङ्गानि दैवान्यपि प्राचीनावीतिना दैवाङ्गानि च पित्र्याणि यज्ञोपवीतिनेति आहुः । दक्षिणतोऽपवर्गः पित्र्येषु, कार्य इति शेषः । अत्र प्राचीनावीतीत्यादिपरिभाषयैव च त्रयाणां सिद्धत्वादपाकयज्ञानित्यषोडशश्राद्धार्थो विधिः ।

इति सुदर्शनव्याख्या ।

---

अथ धर्मप्रश्नपञ्चमपटलस्यादिसूत्रस्य **हरदत्तीया व्याख्या । तच्च सूत्रम्,** "उपासने गुरूणां वृद्धानामतिथीनां होमे जप्यकर्मणि भोजन आचमने स्वाध्याये च यज्ञोपवीती स्यात् ।"

गुरूणामाचार्यादीनामन्येषां च पूज्यानां वृद्धानामतिथीनां चोपासने यदा तानुपास्ते तदा, होमे साङ्गे पित्र्यादन्यत्र, जप्यकर्मणि जपक्रियायां, भोजनाचमनयोश्च, स्वाध्यायाध्ययने च यज्ञोपवीती भवेत् । वासोविन्यासविशेषो यज्ञोपवीतम् । 'दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतमिति' **ब्राह्मणम्** । वाससोऽसंभवेऽनुकल्पं वक्ष्यति, अपिना सूत्रमेवोपवीतार्थम् इति ।

**मनुरप्याह,** ( अ. २ श्लो. ४४।६३ )

"कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत्" । "उद्धृते दक्षिणे पाणावुपवीत्युच्यते बुधैः" ॥ इति । एतेषु यज्ञोपवीतविधानात्कालान्तरे नावश्यं भावः ॥

इति हरदत्तव्याख्या ।

---

तथा **सुदर्शनेन** वैश्वदेवे विश्वेदेवा इति सूत्रव्याख्यावसरे वैश्वदेवप्रयोगो दर्शितः। तत्र मनुष्येभ्यो यथाशक्ति दानमिति सूत्रे दानस्य होमतुल्यत्वाद्यज्ञोपवीतिनैव मनुष्ययज्ञ इति दिक्।

अत्र किञ्चिदुच्यते। उपनयनप्रकरणे "आचार्यो ब्रूयादधीहि भोः सावित्रीं भो अनुब्रूहीति तस्य वाससा पाणिभ्यां च पाणी संगृह्य सावित्रीमन्वाह पच्छोऽर्द्धर्चशः सर्वां यथाशक्ति वा वाचयीते" त्याश्वलायनसूत्रे उपवीतं नोक्तम्। अत्र **कारिका,**

"भवेत्प्रावरणे वासः कृच्छ्रहीनमथापि वा। एवंभूतं कुमारं तं कुर्याद्यज्ञोपवीतिनम्॥" इति।

"ॐ भूर्भुवःस्वःपूर्वां तु सावित्रीं वाचयेदथ। पादं पादं च सावित्र्याः स्वयमुक्त्वाऽथ वाचयेत्॥"

"ततस्त्वर्धर्चमर्धर्चं सर्वां तामथ वाचयेत्। एवं वक्तुमशक्तं तु तं यथाशक्ति वाचयेत्॥" इति च।

तथा, तत्रैव**आपस्तम्बसूत्रं**, 'सावित्रीं भो अनुब्रूहीति तस्मा अन्वाह तत्सवितुरिति पच्छोऽर्धर्चशस्ततः सर्वां व्याहृतीर्विहृताः पादादिष्वन्तेषु वा तथार्द्धर्चयोरुत्तमायां कृत्स्नायामिति'।

अत्र **कारिका,**

"पच्छो भूस्तद्भुर्भुवो भर्गः सुवार्धियि इतीष्यते। अर्धर्चशो भूस्तद्भुवो धियः सुवस्तदन्यथा॥" इति।

**अङ्विला च** ॐ भूः तत्सवितुर्वरेण्यं, भुवः भर्गो देवस्य धीमहि, स्वः धियो यो नः प्रचोदयात्। ॐ भूस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि, भुवः धियो यो नः प्रचोदयात्। स्वः तत्सेति समर्थस्य सर्वेति। यज्ञोपवीतमत्र यद्यपि नोक्तं तथापि 'यज्ञोपवीतिना प्रदक्षिणमिति' प्रारम्भे उक्तम्। **श्रुतौ** च स्पष्टमुक्तम्। अत एव,

"यज्ञोपवीतकालः स्याद्वचने कृतआशिषाम्। पुरस्तात्समिदाधानाच्छिवस्वामिमतेन तु॥"

इति **कारिका। विद्यारण्यादयोऽप्येवम्।**

तत्रैव **बौधायनसूत्रं,** पुण्याहं वाचयित्वा कुमारं भोजयित्वा तस्य चौलवत्तूष्णीं केशानोप्य स्नातं शुचिवाससं बद्धशिखं यज्ञोपवीतं प्रतिमुञ्चयति "यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तादायुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः" इति यज्ञोपवीतिनमप आचामयति सावित्रीं भो अनुब्रूहीति तस्मा अन्वाहोमिति प्रतिपद्यते तत्सवितुर्वरेण्यमित्येतां पच्छोऽर्धर्चशः समस्तां व्याहृतीर्विहृताः पादादिष्वन्तेषु वा तथार्धर्चश उत्तमायां कृत्स्नायामिनीति।

एवं च सप्रणवव्याहृतित्वं सावित्र्या यज्ञोपवीतं च सर्वेषां समानं सप्रमाणं च सर्वत्र प्रणवादित्वं च। 'ॐकारः स्वर्गद्वारमि'त्यादिना धर्मसूत्रे **आपस्तम्बे**नाप्युक्तम्।

**नारायणोपनिषदि** च व्याहृतीनां सावित्र्याश्च प्रणवादित्वं स्पष्टमेव। एवं चोपनयने त्रयाणामुपदेशः सिद्धः। अत एवोपाकर्मप्रकरणे ब्रह्माञ्जलिकृतो जपेत् ॐपूर्वा व्याहृतयः सावित्रीं च त्रिरभ्यस्य वेदादिमारभेदिति" **आश्वलायनसूत्रम्।** तत्र **भाष्यं वृत्तिश्च**—जपेदित्यन्तं भिन्नं वाक्यम्। अर्थाद्वक्ष्यमाणं सर्वं तत्र कर्म। जपतिचोदनायां गृह्यकर्मण्युपांशुत्वानित्यत्वस्य ज्ञापयिष्यमाणत्वेनोच्चैरेव पाठोऽत एव शिष्यसत्त्वेऽध्यापनविरोधोऽपि न। अभ्यस्येत्यन्तेन सिद्धानुवादः। अग्रे विधिः।

व्याहृतय इत्यत्र 'छन्दसि वा' (व्या. सू. ८।३।४९) वचनं' प्राङ्'णौ चङ्युपधाया' (व्या. सू. ७।४।१) इति पूर्वसवर्णे दीर्घो न । च: प्रणवव्याहृतीनामप्यभ्यासार्थः । ततश्च ॐकारं समस्तव्याहृतित्रयं सावित्रीं च त्रिरभ्यस्य वेदादेरग्निमीळे इत्यादिसूक्तस्यानुवाकस्य वा प्रारम्भं कुर्यादित्यर्थः । अत्र समस्तव्याहृतिवत्समस्तसावित्र्या नावृत्तिः किंतु ब्रह्मयज्ञवत् । अत एव तत्र तृतीयामित्युक्तम् ।

**कारिकाकारोऽपि,**

''प्रागग्रदर्भगर्भास्ते कुर्युर्ब्रह्माञ्जलीनथ । सव्याहृतिं जपन्त्युच्चैः सावित्रीं ब्रह्मयज्ञवत् ॥

''त्रिरभ्यसेत्पुरोंकारं व्याहृतीश्चात्र कर्मणि । अग्निमीळे इदं सूक्तमनुवाकमथापि वा ॥

''प्रारभेरंस्तृचं वाऽपि अध्यायान्वाचयेद्गुरुः ।'' इति ।

**आपस्तम्बसूत्रे** त्वत्र किमपि नोक्तम् । **बौधायनसूत्रे** त्वेवमुक्तं, हुतानुकृतिरुपाकर्म श्रावण्यां पौर्णमास्यां क्रियेतापि वाऽऽषाढ्यां समन्वारब्धेष्वन्तेवासिषु अथ देवयजनोल्लेखनप्रभृत्याऽभिमुखात्कृत्वा चतस्रः प्रधानाहुतीर्जुहोति याज्ञिकीभ्यो देवताभ्यः स्वाहा सा॰हितीभ्यो देवताभ्यः स्वाहा वारुणीभ्यो देवताभ्यः स्वाहा सर्वाभ्यो देवताभ्यः स्वाहेत्यथ काण्डर्षीन् जुहोति प्रजापतये काण्डऋषये स्वाहा सोमाय काण्डऋषये स्वाहा अग्नये काण्डऋषये स्वाहा विश्वेभ्यो देवेभ्यः काण्डऋषिभ्यः स्वाहा स्वयंभुवे काण्डऋषये स्वाहेति अथ सदसस्पतिं जुहोति सदसस्प॰सिप॰ स्वाहेत्यथ सावित्रीं जुहोति तत्सवितुर्वरेण्यमित्येतामथ वेदाहुतीर्जुहोति ऋग्वेदाय स्वाहा यजुर्वेदाय स्वाहाऽथर्ववेदाय स्वाहाऽथर्वाङ्गिरोभ्यः स्वाहेतिहासपुराणेभ्यः स्वाहा सर्वदेवजनेभ्यः स्वाहा सर्वभूतेभ्यः स्वाहेति त्रीनादितोऽनुवाकानधीयीरन्काण्डादीन्वा सर्वान् जपप्रभृति सिद्धमा धेनुवरप्रदानादथ ब्राह्मणांस्तर्पयत्यपूपैर्धानाभिः सक्तुभिरोदनेनेति यद्युवेतेभ्यो भवति ऋषयश्छन्दा॰स्याचार्या वेदा यज्ञाश्च प्रीयन्तामिति वाचयित्वा त्र्यहमेकाहं वा नाधीयीरन्मासं प्रदोषे नाधीयीरन्नित्यं चैव भुक्तोर्ध्वं मध्यरात्रात्स्तानिते सप्रदोषमहरनध्यायोऽस्तमिते चोदयाद्विद्युति च स्वप्नान्तमिति ।

**हिरण्यकेशिसूत्रं** तूपाकर्मनिर्णये उक्तम् । एवं चाश्वलायनानामोंभूर्भुवः स्वः तत्सेति पच्छः ॐभूर्भुवः स्वः तत्सेत्यर्धर्चशः ॐभूर्भुवः स्वः तत्सेति सर्वां पठित्वा वेदप्रारम्भः । **बौधायनीयादेस्तु** वेदारम्भमात्रं न प्रणवादित्रितयावश्यकत्वमेवमापस्तम्बानामपि ।

अत एव पञ्चयज्ञप्रकरणे **आश्वलायनसूत्रम्**

**अथ स्वाध्यायविधिः** प्राग्वोदग्वा ग्रामान्निष्क्रम्याप आप्लुत्य शुचौ देशे यज्ञोपवीत्याचम्याक्लिन्नवासा दर्भाणां महदुपस्तीर्य प्राक्कूलानां तेषु प्राङ्मुख उपविश्योपस्थं कृत्वा दक्षिणोत्तरौ पाणी संधाय पवित्रवन्तौ विज्ञायतेऽपां वा एष ओषधीनां रसो यद्दर्भाः सरसमेव तद् ब्रह्म करोति द्यावापृथिव्योः संधिमीक्षमाणः संमील्य वा यथा वा युक्तमात्मानं मन्येत तथा युक्तोऽधीयीत स्वाध्यायमोंपूर्वा व्याहृतयः सावित्रीमन्वाह पच्छोऽर्धर्चशः सर्वामिति तृतीयमथ स्वाध्यायमधीयीत ऋचो यजूंषि सामान्यथर्वाङ्गिरसो ब्राह्मणानि कल्पान् गाथा नाराशंसीरितिहासपुराणानीति विज्ञाय इति ।

अत्र वृत्त्यादि । विधिरेवात्र वक्ष्यते न क्रम इति वैश्वदेवात्प्रागूर्ध्वं वाऽध्येयमित्यर्थं विधिपदम् । शादयमनिन्दितान्यदिक्परिग्रहार्थं, बहिरसंभवे ग्रामेऽध्ययनार्थं वा । तथा च श्रुति 'ग्रामे मनसेति' । आ-

प्लवः स्नानम् । अपोऽवगाह्यैव स्नायादित्यर्थमप इति । शुचिदेशे यत्र क्वाप्यध्ययनं न तीरनियम इत्यर्थं शुचौ देशे इति । नियमेनात्र यज्ञोपवीतित्वार्थं यज्ञोपवीतीति । तेन दाहकर्मणि प्राचीनावीतित्वं सिद्धम् । कर्माङ्गाचमनविध्यर्थमाचम्येति । अनार्द्रवासा भवेत् । ततः प्रागग्राणां दर्भाणां महत् बृहदुपस्तीर्य । अत्र प्राङ्मुखत्वस्य नित्यत्वार्थं प्राङ्मुख इति । तेनान्यत्र क्वचिदुदङ्मुखताऽपि सिद्धा । दक्षिणोत्तरेणोपस्थं कृत्वा अपैतृकत्वात् । पवित्रवन्तौ पाणी दक्षिण उत्तरो ययोस्तौ तथा संधाय । पवित्रे व्याख्याते । दक्षिणजानुनि सव्यं पाणिं प्रागङ्गुलिमुत्तानं निधाय तत्र प्रागग्रे पवित्रे निधाय दक्षिणं पाणिं न्यञ्चं प्रागङ्गुलिं तेन संयोज्य । विज्ञायते श्रूयते । अनेनास्य सर्वस्य श्रुतिमूलत्वं दर्शितम् । तामेवाहापामिति । यद्दर्भानास्तृणाति पवित्रे च गृह्णाति तदित्यर्थः । संधीक्षणेनोर्ध्वाधास्तिर्यगीक्षणनिरासः नेत्रसंमीलनं वा । एतदुभयनियमनिरासायाह यथा वेति । अन्येन वा येन प्रकारेणात्मानं समाहितं निवृत्तान्यविषयं तेन प्रकारेण युक्तोऽधीयीत स्वाध्यायम् । सावित्र्या अपि स्वाध्यायधर्मसिद्ध्यर्थं पुनः स्वाध्यायमिति । तेन सावित्र्या अनुवचने सत्यपि सामिधेनीधर्म ऐकश्रुत्यम् ऋगन्ते प्रणवाभावश्च सिद्धः । आदौ प्रणवं सकृत् ततः समस्तास्तिस्रो व्याहृतीः रूपं तद्वत् ततः सावित्रीम् । प्रति व्याहृति न प्रणवः । सकृदुक्तेनैवोंपूर्वत्वासिद्धेः । अध्वर्युमुखा इत्यत्रैकाध्वर्युणैव सर्वेषामध्वर्युमुखत्ववत् । पृथक्कल्पने मानाभावाच्च । सूत्रे चतसृणां व्याहृतिसंज्ञा तु होमे न सर्वत्रेत्यत्र तिस्र एव भूर्भुवः स्वरित्येता वाव व्याहृतय इति श्रुतिर्मूलम् ।

किंच तैत्तिरीयश्रुतिरेषां मूलमित्युक्तम् तत्र चैवं श्रूयते,

ब्रह्मयज्ञेन यक्ष्यमाणः प्राच्यां दिशि ग्रामादच्छदिर्दर्शउदीच्यां प्रागुदीच्यां वोदितं आदित्ये दक्षिणत उपवीयोपविश्य हस्ताववनिज्य त्रिराचामेत् द्विः परिमृज्य सकृदुपस्पृश्य शिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभ्य यत्त्रिराचामति तेन ऋचः प्रीणाति यत् द्विः परिमृजति तेन यजूꣳषि यत्सकृदुपस्पृशति तेन सामानि यत्सव्यं पाणिं पादौ प्रोक्षति यच्छिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभते तेनाथर्वाङ्गिरसो ब्राह्मणानीतिहासान्पुराणानि कल्पान् गाथा नाराशꣳसीः प्रीणाति दर्भाणां महदुपस्तीर्योपस्थं कृत्वा प्राङासीनः स्वाध्यायमधीयीतापां वा एष ओषधीनाꣳरसो यद्दर्भाः सरसमेव ब्रह्म कुरुते दक्षिणोत्तरौ पाणी पादौ कृत्वा सपवित्रावोमिति प्रतिपद्यत एतद्वै यजुस्त्रयीं विद्यां प्रत्येषा वागेतत्परममक्षरं तदेतदृचाऽभ्युक्तमृचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुर्यस्तं न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासत इति त्रीनेव प्रायुङ्क्त भूर्भुवः स्वरित्याहैतद्वै वाचः सत्यं यदेव वाचः सत्यं तत्प्रायुङ्क्ताथ सावित्रीं गायत्रीं त्रिरन्वाह पच्छोऽर्धर्चशोऽनवानꣳसविता श्रियः प्रसविता श्रियमेवाप्नोत्यथो प्रज्ञातयैव प्रतिपदा छन्दांसि प्रतिपद्यते ग्रामे मनसा स्वाध्यायमधीयीत दिवा नक्तं वेति ह स्माह शौच आह्नेय उतारण्ये उत वाचोत तिष्ठन्नुत व्रजन्नुतासीन उत शयानोऽधीयीतैव स्वाध्यायं तपस्वी पुण्यो भवति य एवं विद्वान्स्वाध्यायमधीते नमो ब्रह्मणे० बृहते करोमि मध्यंदिने प्रबलमधीयीतासौ खलु वा वैष आदित्यो यद् ब्राह्मणस्तस्मात्तर्हितेऽक्षिष्ठं तपति तदेषाऽभ्युक्ता चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः आप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्चेति स वा एष यज्ञः सद्यः संतिष्ठते तस्य प्राक् सायमवभृथो नमो ब्रह्मण इति परिधानीयां त्रिरन्वाहाप उपस्पृश्य गृहानेति ततो यत्किंच ददाति सा दक्षिणेति । तस्मादुक्तं युक्तम् । सर्वामनवानम् । उपाकरणेऽपि

पञ्छ आदिपाठार्थं पुनस्तृतीयमिति । पूर्वसम्बन्धार्थोऽथशब्दस्तेन प्रणवादित्रयस्य स्वाध्यायाङ्गत्वं सिद्धम् । ऋगादेरेवात्र स्वाध्यायत्वं न प्रणवादित्रयस्येत्येतदर्थं पुनः स्वाध्यायमिति । तेन ऋचमपि ब्रह्मयज्ञं कुर्यादितिपक्षे सावित्र्यन्तमुक्त्वा ऋचमुक्त्वा नम इति परिदध्यात् तेन प्रणवादित्रयस्य नम इत्यस्य च नित्यत्वे साधिते अन्वाहानधिकारायाधीयीतेति तेनानुप्रवचनधर्मो नेति ।

**कारिकाकारोऽपि,**

"ॐपूर्वा व्याहृतीस्तिस्रः समास्तास्तु सकृद्वदेत् । पच्छस्त्वर्धर्चशः सर्वां सावित्रीं त्रिर्वदेदथ ॥

"पूर्वाभिसंहितं यावत्तदधीत्य समाहितः । नमो ब्रह्मण इत्येतां त्रिरुक्त्वा प्रणवं वदेत् ॥

"प्रणवाद्येतदन्तं स्यान्मध्यमेन स्वरेण तु । अधीतं मनसा ग्रामे ब्रह्मयज्ञं करोति चेत् ॥

"अपां समीपमागत्य तर्पयेदथ देवताः ।"

इति श्रुत्युक्तत्वादेवाथ ब्राह्मणोक्ता विधयस्तेषां महायज्ञा महासत्राणीति स ऽस्तुतिरहरहर्भूतबलि-र्मनुष्येभ्यो यथाशक्ति दानं देवेभ्यः स्वाहाकार आकाष्ठात्पितृभ्यः स्वधाकार ओदपात्रादृषिभ्यः स्वाध्याय इतीत्येतावदेव तत्रोक्तम् ।

**बौधायनसूत्रे**(२।५।१–७)तु "अथेमे पञ्च महायज्ञास्तान्येव महासत्राणि देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञ इति । अहरहः स्वाहाकारं कुर्यादाकाष्ठात्तथेमं देवयज्ञं समाप्नोति । अहरहः स्वधां कुर्यादोदपात्रात् तथेमं पितृयज्ञं समाप्नोति । अहरहर्नमस्कुर्यादामनुष्येभ्यस्तथेमं भूतयज्ञं समाप्नोति । अहरहर्ब्राह्मणेभ्योऽन्नं दद्यादामूलफलशाकेभ्यस्तथेमं मनुष्ययज्ञं समाप्नोति । अहरहः स्वाध्यायं कुर्यादाप्रणवात्तथेमं ब्रह्मयज्ञं समाप्नोति । स्वाध्यायो वै ब्रह्मयज्ञ" इति यथाप्युदाहरन्ति प्रणवेन व्याहृतयः सावित्री चेत्येते पञ्च ब्रह्मयज्ञा अहरहर्ब्राह्मणं किल्विषात्पावयन्ति पूतः पञ्चभिर्ब्रह्मयज्ञैरिति चोक्तम् । कर्मणि तद्धारणनियमसूचनायाह **पूर्वोक्तेति** अत एव—**मनुः** । ( अ० २ श्लो० ४८ )

"प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम् । प्रदक्षिणं परीत्याग्निं चरेद्भैक्षं यथाविधि" ॥ इति ।

पतितेषु प्राप्तेरेवाभावादाह । **अभीति** । विहिताकरणप्रयुक्तनिन्दाऽपि नापेक्षितेत्याह । **स्वेति** । प्रतिप्रसवमाह । **आचार्येति** । तस्य भार्यापुत्रेत्यर्थः । तत्र **वासिष्ठं** हेतुमाह । **निवेद्येति** । **तदभावे** द्विविधतदभावे । **आदिना** भार्यापरिग्रहः । तथा च तद् गुर्वनुज्ञयैव भोक्तव्यम् । अत **एव मनुयमावपि,** ( अ० २ श्लो० ५१ )

"आहृत्य यत्तु तद्भैक्षं यावदर्थममायया । निवेद्य गुरवेऽश्नीयादाचम्य प्राङ्मुखः शुचिः ॥" इति ।

**धर्मसूत्रेपि,** तत्समाहृत्योपनिधायाचार्याय प्रब्रूयात्तेन प्रदिष्टं भुञ्जीतेति । स्मृत्यन्तराविरोधायाह । **अत्र चेति । सतीति** । तथा च न सर्वथा नियामकमिति-तदसंभवेऽन्यत्रापि कार्येति भावः । **तदे**वाह । **यस्त्विति** । शूद्रनिषेधेन योग्यतया सर्वशब्दः संकुचद्वृत्तिरिति भावः । **त्रैवर्णिकेति** । **न तु शूद्र**सम्बन्धितत्परं नापि **तदै**च्छिकविकल्पपरमिति भावः । अन्यविरोधं परिहरति । **यद्येति** । अत्रेदं बोध्यम् । अत्रापि **क्रमेणैव** । अत्र ब्राह्मणेष्विति स्वस्वजातीयोपलक्षणम् । तथा च **व्यासः,**

"ब्राह्मणक्षत्रियविशश्चरेयुर्भैक्षमन्वहम् । सजातीयगृहेष्वेव सार्ववर्णिकमेव वा ॥" इति ।

अत्रापि सार्ववर्णिकत्वमुक्तविषयमापद्विषयं वा । तथा च **माधवीये भविष्यत्पुराणं,**

"चातुर्वर्ण्यं चरेद्भैक्षमलाभे कुरुनन्दन ।" इति ।

आपद्यपि शूद्रात्पक्कं न ग्राह्यम् । **तदाहाङ्गिराः,**

"तस्मादामं ग्रहीतव्यं शूद्रादप्यन्ततोऽब्रवीत् ।" इति ।

अनापदि तु स्वजातीयेष्वतिप्रशस्तेष्वेव तदाचरेत् ।

तदाह **मनुः,** ( अ० २ श्लो० १८३ )

"वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्मसु । ब्रह्मचार्याहरेद्भैक्षं गृहेभ्यः प्रयतोऽन्वहम् ॥" इति ,

क्वचिदपवादमाह **स एव,** ( अ० २ श्लो० १८४।१८५ )

"गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु । अलाभे त्वन्यगेहानां पूर्वंपूर्वं परित्यजेत् ॥

"सर्वं वापि चरेद् ग्रामं पूर्वोक्तानामसंभवे । नियम्य प्रयतो वाचमभिशस्तांश्च वर्जयेत् ॥" इति ।

तच्च भैक्षं भोजनपर्याप्तमेव न त्वधिकम् । तदाह **यमः,**

"आहारमात्रादधिकं न क्वचिद्भैक्षमाचरेत् । युज्यते स्तेयदोषेण कामतोऽधिकमाहरन् ॥" इति २९

## याज्ञवल्कीये ३० श्लोकः

**भैक्षचर्या कार्येति ।** अत आहेति शेषः । स्त्रीणामादौ भिक्ष्यमाणतयोपदेशात्तासामप्रत्याख्याशीत्वात्प्रार्थनायां च प्रार्थ्यमानस्य सम्बोध्यत्वात्तादृशप्रयोगेणाह । **भवतीति ।** मूले भवदिति तु पुरुषसाधारण्यार्थम् । **धर्मसूत्रेऽपि,(आपस्तंबीये**१।१।३**बौधा०**१।२।१८)'भवत्पूर्वया ब्राह्मणो भिक्षेतेति।'

**मनुरपि,** ( अ. २ श्लो. ४९ )

"भवत्पूर्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः ।" इति ।

**तथा,** "मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम् । भिक्षेत प्रथमं भिक्षां या चैनं न विमानयेत् ॥" इति।

अत्र चादृष्टार्थः क्रम एव नियम्यते । **भैक्षचर्या** तत्प्रतिपादकप्रार्थनोक्तिः । अत एव तदुपलक्षितत्वं, न हि मुख्यस्य तत्संभवति । यद्वा गमकत्वाद्वृत्तौ बहुव्रीहिणा तत्र तच्छब्दघटितवाक्यप्राप्त्यर्थमानेत्यर्थः ॥ ३० ॥

## याज्ञवल्कीये ३१ श्लोकः

**वाग्यत इति** बहुव्रीहिः । तृतीयान्तस्य भुञ्जीतेत्यत्रान्वयः । **अपोऽशानेति** श्रुतिस्थानुकरणेन तद्बोध्या क्रिया पूर्वा यस्मिन्कर्मणि यथा भवति तथा । अन्नमित्यस्य मध्यमणिन्यायेनान्वयः ।

संपूजा च **हारीतेनोक्ता,**

"भैक्षमवेक्षितं पर्यग्निकृतमादित्यदर्शितं गुरवे निवेदितमनुज्ञातममृतसंमितं प्राहुर्यदश्नाति ब्रह्मचारी ब्रह्मसिद्धिमवाप्नोतीति ।"

"पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन् । दृष्ट्वा हृष्येत् प्रसीदेच्च प्रतिनन्देच्च सर्वशः ॥

"पूजितं ह्यशनं नित्यं बलमूर्जं प्रयच्छति । अपूजितं तु तद्भुक्तमुभयं नाशयेदिदम् ॥" इति ।

**मनुः** ( अ. २ श्लो. ५४।५५ )

**इत्यादिकमिति** मन्त्रोच्चारणपूर्वकं जलप्राशनं पूर्वं कृत्वा । ननु उभयोरपि संध्ययोरग्निकार्यस्य पूर्वमुक्तत्वेन कृतेति व्यर्थमन्यार्थं वा, अत आह । **अत्रेति** । **कथंचित** प्रतिबन्धात् । **तृतीयेति** । मध्याह्ने इति भावः ॥ ३१ ॥

## याज्ञवल्कीये ३२ श्लोकः

एकसंबन्धित्वादन्ने एकत्वमिति सूचयन्नाह । **एकान्नमिति** । एकभिक्षां न भुञ्जीतेत्यर्थः । एतेन नैकस्वामिकं भुञ्जीतापि तु बहुस्वामिकमविभक्तभ्रातृसंबन्धीत्यपास्तम् ।

तथा च **मनुः**, (अ. २ श्लो० १८८) 'नैकान्नादी भवेद्व्रतीति' । अस्यापवादमाह । **ब्राह्मेति** ।

तथा च **मनुः**, ( अ. २ श्लो. १८९ )

"व्रतवद्देवदैवत्ये पित्र्ये कर्मण्यथर्षिवत् । काममभ्यर्थितोऽश्नीयाद्व्रतमस्य न लुप्यते ॥

"ब्राह्मणस्य हि कर्मैतदुपदिष्टं मनीषिभिः ॥" इति ।

प्रार्थित इत्यनेन स्वेच्छानिरासः । 'व्रतं' नियममुपादिष्टम् । तदेवाह । **मधुमांसेति** । मधु क्षौद्रम् । तथा च मुन्यन्नाशनं कार्यमिति भावः । न तु द्विजे प्रकान्ते तद्व्यर्थमत आह । **अत्रेति** । तदग्रिम**मनुमाह** । **राजन्येति** ॥ ३२ ॥

## याज्ञवल्कीये ३३ श्लोकः

तदेव ध्वनयन् व्रतमाह । **मध्विति** । समाहारद्वन्द्वः । **मद्यमिति** द्वादशविधमित्यर्थः ।

"पानसं द्राक्षमाधूकं खार्जूरं तालमैक्षवम् । मधूत्थं सैरमारिष्टं मैरेयं नालिकेरजम् ॥

"समानानि विजानीयान्मद्यान्येकादशैव तु । द्वादशं तु सुरा मद्यं सर्वेषामधमं स्मृतम् ॥" इति—

**पुलस्त्योक्तेः** ।

**विष्णुः**,

"माधूकमैक्षवं टाङ्कं कौलं खार्जूरपानसे । मृद्वीकारसमाध्वीके मैरेयं नालिकेरजम् ॥

"अमेध्यानि दशैतानि मद्यानि ब्राह्मणस्य च । राजन्यश्चैव वैश्यश्च स्पृष्ट्वा चैतौ न दुष्यतः ॥" इति ।

माधूकं मधूकपुष्पप्रभवम् । टङ्कः कपित्थविशेषस्तज्जं टाङ्कम् । कौलं बदरीफलजम् । खार्जूरं खर्जूरजम् । मृद्वीकारसं द्राक्षाद्रवजम् ।

**यमः**,

"मलं हि सर्वपापानां सुरा धर्मेषु कथ्यते । तस्माद्विजैर्न पेयैषा नैषा ग्राह्या कथंचन ॥" इति ।

धर्मेषु धर्मशास्त्रेषु ।

"सुरा वै मलमन्नानां पाप्मा च मलमुच्यते । तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥
"गौडी माध्वी तथा पैष्टी विज्ञेया त्रिविधा सुरा । यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैः ॥
"यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम् । तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हविः ॥"

**मनु** ( अ० ११ श्लो० ९३–९५ )

मनोः " यथा एका पैष्टी त्रिभिर्द्विजातिभिरपेया तथा द्विजोत्तमैर्ब्राह्मणैः सर्वा न पातव्या मांसमामं निषिद्धं च, सुरा पैष्टी, आसवो मद्यभेदः. ब्राह्मणवसिष्ठन्यायेन पृथगुक्तिः " इत्यर्थकात्,

"कामादपि हि राजन्यो वैश्यो वाऽपि कथंचन । मद्यमेवासुरां पीत्वा न दोषं प्रतिपद्यते ॥" इति–

**व्यासोक्तेश्च** क्षत्रियवैश्ययोः सुराया एव निषेधो नान्यमद्यस्येति बोध्यम् । तथा च तस्य प्रागुपनयनादपि निषेध इति भावः । **छागेति** । तथा च प्रोक्षितादेरपि निषेध इति भावः । 'शुक्ता वाच' ( अ. २ सू. २५ ) इति । **गौतमोक्तेराह** । **निष्ठुरेति** । **रस इति** । प्रागनम्लः कालवशात् द्रव्यान्तरसंबन्धाद्वाऽऽम्लतां प्राप्त इत्यर्थः । **स्त्रियमुपेति** । तथा **चापस्तम्बः**. 'यो ब्रह्मचारी स्त्रियमुपेयात्स गर्दभं पशुमालभेतेति' **भास्करेति** । **गौतमोऽपि** 'नादित्यमीक्षेतेति' ( अ. २ सू. १८ ) । ब्रह्मचारिणोऽयं सदा आदित्यदर्शनप्रतिषेधः, स्नातकस्य तु नेक्षेतोद्यन्तमित्यादि**मनूक्तो** विशेषनिषेधो बोध्य इति न **हरदत्तः** । तस्य चोदयास्तमयादाविति ।

"नेक्षेतोद्यन्तमादित्यमस्तं यान्तं कथंचन । नोपरक्तं न वारिस्थमि"त्यादि**मनूक्तेः** ( अ. ४ श्लो. ३७ ) 'तदुत्सर्गे त्विति' सूत्रे मीमांसाग्रन्थेष्वप्येवमेव स्थितम्

**असभ्येति** ग्राम्येत्यर्थः । **स्मृत्यन्तरोक्तमिति** ।

तथा च **मनुः**, ( अ० २ श्लो० १७७–१८० )

"वर्जयेन्मधु मांसं च गन्धमाल्यं रसान्स्त्रियः । शुक्तानि चैव सर्वाणि प्राणिनां चैव हिंसनम् ॥
"अभ्यङ्गमञ्जनं चाक्ष्णोरुपानच्छत्रधारणम् । कामं क्रोधं च लोभं च नर्तनं गीतवादनम् ॥
"द्यूतं च जनवादं च परिवादं तथाऽनृतम् । स्त्रीणां च प्रेक्षणालम्भमुपघातं परस्य च ॥
"एकः शयीत सर्वत्र न रेतः स्कन्दयेत् क्वचित् ॥" इति ।

अत्र रसो हर्षः । उपानत् यानस्याप्युपलक्षणम् । ' यानोपानच्छत्रे'त्यादि**गौतमवचनात्** ( अ. २ सू. १९ ) । **नारायणस्तु** " रसा उत्कटरसा गुडादयः शृङ्गारादयो वा । यत् द्रव्यमनम्लं सत् कालवशेन द्रव्यानन्तरयोगेन वा अम्लतां गतं तच्छुक्तम् । सर्वाणि शुक्तानि दध्यादीन्यपि न त्वत्र शुक्ता वाक् " इति व्याचख्यौ ।

**धर्मसूत्रेऽपि,** "अथ ब्रह्मचर्यविधिराचार्याधीनः स्यादन्यत्र पतनीयेभ्यो हितकारी गुरोरप्रतिलोमयन्वाचाधाऽसनशायी स्यान्नानुदेश्यं भुञ्जीत तथा क्षारलवणमधुमांसान्यदिवास्वाप्यगन्धसेवी मैथुनं न चरेदुत्सन्नश्लाघोऽङ्गानि न प्रक्षालयीत प्रक्षालयीत त्वशुचिलिप्तानि गुरोरसंदर्शने नाप्सु श्लाघमानः स्नायाद्यदि स्नायाद्दण्डवत् प्लवेज्जटिलः शिखाजटो वा वापयेदितरान्" इति ।

क्षारलवणयोर्निषेधस्त्र्यहमेव तदूर्ध्वं तु पाक्षिकः । मध्वादेस्तु नित्य एव–प्रागुक्तस्मृतिकदम्बात् ।

**स्मृत्यन्तरे,**

"नादर्शं चैव वीक्षेत नाचरेद्दन्तधावनम् ।" इति ।

**प्रचेताः,**

"ताम्बूलाभ्यञ्जने चैव कांस्यपात्रे तु भोजनम्। यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत् ॥" इति।

उपवीतस्य नियममाह **माधवीये यमः।**

"मेखलामजिनं दण्डमुपवीतं च नित्यशः। कौपीनं कटिसूत्रं च ब्रह्मचारी तु धारयेत् ॥" इति।

**मनुः,** ( अ० २ श्लो० १०८ )

"अग्नीन्धनं भैक्षचर्यामधः शय्यां गुरोर्हितम्। आसमावर्तनात्कुर्यात्कृतोपनयनो द्विजः ॥" इति।

यद्यपि कौपीनं 'कुत्सिते' (५।३।७४) इति **पाणिनि**सूत्रेण कौपीनशब्दस्य लिङ्गे शक्तिरुक्ता तथापि तदाच्छादनवासासि निरूढलक्षणेति भाष्यादौ स्थितम्। उपाकरणपर्यन्तं बटुर्गायत्र्या ब्रह्मयज्ञं कुर्यात्। 'सावित्र्या ब्रह्मयज्ञकर्मिति' **कारिको**क्तः।

**कौर्मे,**

"नादर्शं चैव वीक्षेत नाचरेद्दन्तधावनम्। गुरूच्छिष्टं भेषजार्थं प्रयुञ्जीत न कामतः ॥" इति।

गुरूच्छिष्टं पितुर्ज्येष्ठभ्रातुश्चेत्यर्थः। तथा **चापस्तम्बः,** ( १।४।११ ) 'पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोक्तव्यमिति ॥'

"गुरोर्गुरौ संनिहिते गुरुवद्वृत्तिमाचरेत्।" ( म० २।२०५ )

"गुरुपुत्रेषु पत्नीषु गुरोश्चैव स्वबन्धुषु ॥" ( २।२०७ )

इति वचनात्। भेषजार्थमिति। तदुत्कापनोदार्थं व्याधौ माक्षिकं मांसादि च गुरूच्छिष्टं भक्षणीयमित्यर्थः। इदं च **माधवीये स्मृत्यर्थसारादौ च स्फुटम्।**

**वसिष्ठोऽपि.** 'स चेद्व्याधीयीत कामं गुरोरुच्छिष्टशेषमौषधार्थं संप्राश्नीयादिति'। 'व्याधीयीता-व्याधीतेति' **मदनपारिजाते।** यद्यपि गुरुवद्गुरुपुत्रेषु वर्तितव्यमिति तदुच्छिष्टभक्षणमपि प्राप्तं तथापि तन्निषेधाति—**मनुः,** ( अ० २ श्लो० २०९।२११ )

"उन्मर्दनं तु गात्राणां स्नापनोच्छिष्टभोजने। न कुर्याद्गुरुपुत्रस्य पादयोश्चावनेजनम् ॥"

"अभ्यञ्जनं स्नापनं च गात्रोद्वर्तनमेव च। गुरुपत्न्या न कार्याणि केशानां च प्रसाधनम् ॥" इति।

**व्यासः,**

"जघन्यशायी पूर्वं स्यादुत्थाय गुरुवेश्मनि। यच्च शिष्येण कर्तव्यं यच्च दासेन वा पुनः ॥

"कृतमित्येव तत्सर्वं कृत्वा तिष्ठेत्तु पार्श्वतः।" इति।

**हारीतः,**

"लौहे मन्मये वा पात्रे भञ्जतीति" ॥ २३ ॥

## याज्ञवल्कीये ३४ श्लोकः

"निषेकादीनि कर्माणि यः करोति यथाविधि । संभावयति चान्नेन स विप्रो गुरुरुच्यते ॥

"अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः । तमपीह गुरुं विद्याच्छ्रुतोपक्रियया तया ॥"

**मनुः** ( अ. २ श्लो. १४२–१४९ )

**मनूक्ते**राह । **गर्भेत्यादि** । पुनस्तदुक्तेरेवाह । **मात्रमिति** । तेन पूर्वक्रियाव्यवच्छेदः । **वेदं** सकल्पादि । 'सकल्पं सरहस्यं चेति' **मनूक्तेः** । ( अ. २ । १४० ) । अत एवाग्रिमसंगतिः ॥ ३४ ॥

## याज्ञवल्कीये ३५ श्लोकः'

"एकदेशं तु वेदस्य वेदाङ्गान्यपि वा पुनः । योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते ॥"

( अ. २ । १४१ ) इति—

**मनूक्ते**रेकस्यैकदेशशब्दस्यावयवोपकारकान्यतरपरतया व्याचष्टे । **मन्त्रेति** । सामान्योक्तिस्वारस्येनाह । **पाकेति** । औपासनहोमवैश्वदेवपार्वणस्थालीपाकाष्टकामासिश्राद्धसर्पबलीशानबलयः सप्त पाकयज्ञपदवाच्याः । आदिनाऽग्न्याधेयाग्निष्टोमादयः । **वृतः** । वरणयुक्तः । **यथापूर्वं** । पूर्वं पूर्वम् । तत्रापि विशेषमाह । **यथेति** । क्रममनतिक्रम्येत्यर्थः । गुर्वादितारतम्यविषये मतान्तरमाह । **गौतमः** (अ. २ सू. ५६.), 'आचार्यः श्रेष्ठो गुरूणां मातेत्येके मातेत्येके' इति । गुरूणां पित्रादीनां मध्ये आचार्य उक्तलक्षणः श्रेष्ठः । स हि विद्यातस्तं जनयति । तच्च श्रेष्ठं जन्म । तेनानेकगुरुसमवाये स एवादौ पूज्यः । एके त्वाचार्यो माता पूज्येत्याहुः । तथा च—

**वसिष्ठः**,

"उपाध्यायान्दशाचार्य आचार्याणां शतं पिता । पितुर्दशशतं माता गौरवेणातिरिच्यते ॥" इति । मातेत्यादि द्विरुक्तिरध्यायपरिसमाप्त्यर्थमिति **हरदत्तः** ।

**मनुः**, ( २ अध्याये )

"उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता ॥" ( १४६ )

"ब्राह्मस्य जन्मनः कर्ता स्वधर्मस्य च शासिता । बालोऽपि विप्रो वृद्धस्य पिता भवति धर्मतः॥"(१५०)

"मातुलांश्च पितृव्यांश्च श्वशुरानृत्विजो गुरून् । असावहमिति ब्रूयात्प्रत्युत्थाय यवीयसः ॥"(१३०)

"मातृष्वसा मातुलानी श्वश्रूरथ पितृष्वसा ॥" ( १३१ )

"भ्रातुर्भार्योपसंग्राह्या सवर्णाऽहन्यहन्यपि । विप्रोष्य तूपसंग्राह्या ज्ञातिसंबन्धियोषितः ॥ ( १३२ )

"पितुर्भगिन्यां मातुश्च ज्यायस्यां च स्वसर्यपि । मातृवद्वृत्तिमातिष्ठेन्माता ताभ्यो गरीयसी॥"(१३३)इति ।

माता ताभ्य इति । तेन तासामुपकारे क्रियमाणे यदि मातुरनिष्टं स्यात्तदा न कार्यमित्युक्तं भवतीति **नारायणः** ॥ ३५ ॥

## याज्ञवल्कीये ३६ श्लोकः

**असंभवेन** ।सामर्थ्याभावात् । **मनुमाह** ।**वेदानिति** । **वेति यथाक्रमं प्रवर्तेत इति** । **चापि यथाक्रमम्** ।

'अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत् ॥'' ( अ. ३।२ ) इति **मनूक्तेः**

शक्तत्वात्सर्ववेदाध्ययने यथाक्रमं प्रवर्तेत इत्यर्थः । एतेनैकस्यैकवेदाध्ययनस्यैव सत्त्वेन प्रतिवेदमित्युक्तमित्यपास्तम् । व्यवस्थितविकल्पमाह । **अशक्ताविति** ।प्रतिवेदमिति भावः । **ग्रहेति**। ग्रहणस्यान्तो यस्मिन्काले स ग्रहणान्तः स विद्यते यस्येति ठन् । **गोदानमिति** कर्मनामधेयम् । तदेव केशान्तः । तत्स्वरूपं गृह्यतो ज्ञेयम् । उपनयनसमत्वादाह । **गर्भादिति** ।ब्रह्मचर्यमध्येऽस्य विहितत्वेनान्यपक्षयोरेतदसंभवादाह । **एतच्चेति** । **पक्षे** पक्षद्वये । षोडशे एव चेति चसूचितमाह । **राजेति** ।

तथा च **मनुः**, ( अ. २ श्लो. ६५ )

''केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते। राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः॥'' इति । उपेत्यनेन ततो द्वैगुण्यं सूचितम् । वा चार्थे चः समुच्चये ॥ ३६ ॥

## याज्ञवल्कीये ३७।३८ श्लोकौ

पृथक्पदस्याङ आयम्यान्त्यवत्सरादित्यस्यैव सर्वत्र संबन्ध इत्याह । **आषोडशेत्यादि** । स चाभिव्याप्तावित्याह । **षोडशेति** । 'तद्धितार्थोत्तरपद'सूत्रे मीमांसाग्रन्थेष्वप्येवमेव स्थितम् ; समाहारे द्विगुः । **औपेति** ।प्राक् व्युत्पत्यादितौपनायनशब्दात् षष्ठ्यर्थे मत्वर्थे ठन्, न तु सप्तम्यर्थे । अस्यामुख्यकालत्वात् अस्यावधिबोधकत्वाच्चाह । **उपेति** । **परः** परमावधिः । अत एवाह । **नात इति** ॥ ३७ ॥

नैतावन्मात्रमित्याह **किंत्विति** । अतःपरमित्यनुषज्यते अत ऊर्ध्वमित्यर्थः । अत एवाह **सर्वेति**। मुख्यबहिष्कारासंभवादाह । **सर्वेति** । अल्पश इत्युक्तेः पञ्चमीसमासासंभवादुक्तयमान् 'पतितसावित्रीक उद्दालकव्रतं चरेदिति' **वसिष्ठात्**(अ.११सू.७६) अत ऊर्ध्वं 'पतितसावित्रीका भवन्ती' **त्याश्वलायनाच्चाह**। **पतितसेति** । बहुव्रीहावाहिताग्न्यादित्वात्परनिपातः । तस्यापि तात्पर्यमाह । **सावित्रीति** । **व्रात्या इति** । तत्संज्ञका इत्यर्थः । संज्ञाप्रयोजनं तु 'व्रात्यानां याजनं कृत्वे'त्यादि**मन्वा**द्युक्तप्रायश्चित्तप्राप्तिः । तदर्थमाह । **संस्कारेति** । स चोपनयनमेव । तदपि काले इति बोध्यम् । इदमेवाभिप्रेत्य । 'व्रात्यः संस्कारहीनः स्यात् ' इति **मयूरोक्तिः** । चेन भवन्तीत्यस्यानुषङ्गः । किं सर्वथेत्याशङ्कायामाह । **व्रात्येति** । **तस्मिन्निति** । व्रात्यस्तोमाख्ये कृतावित्यर्थः ।

**धर्मसूत्रे**ऽप्ययं गौणकाल उक्तः ( आपस्तंबीये १।१।२७ ). ' आषोडशाद्ब्राह्मणस्य नात्ययः' ।

**मनुरपि**, ( अ. २ श्लो. ३८ )

''आषोडशाद्ब्राह्मणस्य सावित्री नातिवर्तते । आद्वाविंशात्क्षत्रबन्धोराचतुर्विंशतेर्विशः॥ '' इति ।

गौणकालेऽप्यतिक्रान्ते प्रायश्चित्तमुक्तं **धर्मसूत्रे** ।''अतिक्रान्ते सावित्र्याः काले ऋतुं त्रैविद्यकं ब्रह्मचर्यं चरेदथोपनयनं ततः संवत्सरमुदकोपस्पर्शनमिति ''॥ ३८ ॥

## याज्ञवल्कीये ३९ श्लोकः

यथाश्रुतानन्वयादाह । **जन्मेति**। यदर्थमाह। **यस्मादिति**। आकाङ्क्षायामाह। **तस्मादिति**। ब्राह्मणेनेत्यस्य मध्यमणिन्यायेनान्वयः ॥ ३९ ॥

## याज्ञवल्कीये ४० श्लोकः

**ग्रहणेति**। वेदग्रहणफलकाध्ययनेत्यर्थः । प्राथमिकनित्याध्ययनेति यावत् । **तपसां चेति** चो मिथः समुच्चये । **शुभानां चेति** चोऽशुभसमुच्चये । अत एव व्याख्याने तन्मात्रोक्तिः । स्वों द्विजातीनामेव निःश्रेयसकर एवेत्येवं योज्यौ । प्रागवदाह। **श्रौतेति**। हितमितमेध्याशनादिरूपतपोव्यावृत्तये आह। **कायेति**। कायक्लेशसाधनेत्यर्थः । अनेन योगार्थः प्रदर्शितः । रूढ्यर्थमाह । **चान्द्रेति**।

"मुण्डनं चौलमित्याहुर्व्रतोद्वाहौ तु मङ्गलम् ।" इत्यनुरोधेन द्विजातीत्यनुरोधेन चाह । **उपैति**। मूलेऽवबोधक इति शेषं सूचयन्नाह । **अवेति**। **परः** उत्कृष्टः । एवव्यावर्त्यमाह । **नान्य इति**। नन्वेवं स्मृत्यध्ययनालाभेन प्रागुक्तार्थासिद्ध्या तद्विरोधापत्तिरित्त आह । **वेद एवेति**। तथा च तद्मूलतन्त्रादिव्यावर्त्तक एवकार इति भावः ॥ ४० ॥

## याज्ञवल्कीये ४१।४२।४३ श्लोकाः

आद्यचो मिथःसमुच्चये । स एव तर्पयेदित्यग्रे योज्यः। द्वितीयश्चः पितॄंश्चेत्येवं योज्यः । **हिस्त्वर्थे**। **स** त्वित्यर्थः । अत एव तृतीये तुरुक्तः । **शक्तित** इत्यस्य सर्वत्र संबन्धः । **तथा** तांश्च प्रीणाति । **सोमो**ऽत्र तद्रसः । **च पितृणां** पितॄणां च । **मध्विति** पाक्षिकसमाहारद्वन्द्वः । एवमग्रेऽपि । विध्यादेरविवक्षितत्वादाह । **तर्पेति**। अत एवाग्रे प्रीणातीत्याद्युक्तिः । एवमग्रेऽपि यथासंभवं सर्वत्र बोध्यम् । ननु वेदस्य प्रकृतत्वाल्लाभे ऋगादिग्रहणं व्यर्थमत आह । **ऋगादीति**। द्विजत्वसाधारण्येन यावदृगादि प्राप्त्यमित्यर्थः । अन्यथा तत्तच्छाखाया एव ततो लाभः स्यादिति भावः॥४१॥४२॥४३॥

## याज्ञवल्कीये ४४।४५।४६ श्लोकाः

यः पुनः शक्तितोऽन्वहम् अथर्वाङ्गिरसोऽधीते स देवान्मेदसा पितॄंश्च मधुसर्पिर्भ्यां तर्पयति । यस्तु **वाकोवाक्यं** प्रश्नोत्तररूपवेदवाक्यं **पुराणं** ब्राह्मादि, चकारान्**मानवादि**धर्मशास्त्रम्, **नाराशंसीश्च** रुद्रदेवत्यान्मन्त्रान्, **गाथाश्च** यज्ञगाथा इन्द्रगाथाद्याः, **इतिहासान्** महाभारतादीन्, **विद्याश्च** वारुण्याद्या विद्याः शक्तितोऽन्वहमधीते स मांसक्षीरौदनमधुसर्पिभिर्देवान् पितॄंश्च मधुसर्पिर्भ्यां तर्पयति ॥

**अथर्वेति**। तत्प्रोक्ततद्भागविशेषान् **प्रश्नोत्तरेति** किंस्विदासीत्पूर्वचित्तिरित्यादीत्यर्थः । तथाशब्दवदेकचस्य मिथःसमुच्चायकत्वेऽपि द्वितीयफलमाह । **चकारादिति**। इतिहशब्द उपदेशपारम्पर्ये वर्तते। इतिहास्यतेऽस्मिन्निततीतिहासः। 'हलश्चेति' (व्या.सू.३।३।१२१) घञ्। मयूरव्यंसकादित्वात्समासः। उपदेशपारम्पर्येण निश्चयबुद्ध्या स्थीयतेऽस्मिन्नित्यर्थः। उपदेशपरम्परयाऽऽख्यानादीन्यस्यन्ते स्थाप्यन्ते यत्रेत्यर्थ इति केचित् । फलितार्थमाह। **देवान् पितॄंश्चेति** ॥ ४४ ॥ ४५ ॥ ४६ ॥

## याज्ञवल्कीये ४७।४८ श्लोकौ

तच्छब्द उभयोरपि परामर्शक इत्याह । **देवा इत्यादि** । **एनमिति** प्राग्वत् । **स्वेति** ऋगाद्यध्ययनकारिणमित्यर्थः । सकलेच्छाविषयभूतफलैः । शुभैरित्यस्य व्याख्या **अनन्योपेति**। मुख्यकर्तोरध्ययनासंभवादाह । **प्रतीति** । चार्थमाह । **तथेति** । त्रिरित्यस्य दानान्ते विशिष्टे शब्दतोऽन्वयेऽपि पर्यवसानं•विशेष्ये इत्याशयेनाह । **वित्तेति** । प्राग्वत् । परं कायक्लेशजनकमित्याह । **चान्द्रेति** । **इहेत्यस्य** लोके इत्यर्थः । नन्वस्य काम्यत्वेन कथं नित्येत्युक्तिरत आह । **नित्येति** । फलवशात्तत्त्वेऽपि अकरणे प्रत्यवायश्रवणात्तत्त्वमपीति भावः ॥ ४७ ॥ ४८ ॥

## याज्ञवल्कीये ४९।५० श्लोकौ

**सामेति** । नैष्ठिकोपकुर्वाणसाधारण्येनेत्यर्थः । **विशेषमिति** । अत एवाग्रे तुः । शेषपूरणेनाह । **उक्तेनेति** । शेषेऽर्थे 'कालाद्ठञिति' ठञ् (व्या.सू. ४।३।११)। निष्ठाशब्दस्य समाप्तिवृत्तेरपि तल्लक्षणया कालवाचित्वात् । वा एवार्थे व्युत्क्रमे च । संनिधावेवेत्यर्थः । तद्यावर्त्यमाह । **नेति** । चपाठोऽयुक्तः । तदभावे इत्यस्याग्रेऽपि संबन्ध इत्याह । **तदभावे तद्भार्येति** । **अर्पीति** । वसेदित्यस्यानुषङ्गः । सादयन्निति पाठस्तदर्थमाह । **क्षपयन्निति** । साधयन्निति पाठे विपरीतलक्षणा बोध्या । स्वार्थमाह । **विशेषेति** । लाघवानादरेणायं प्रयोगः । ततः परावृत्त्यापत्त्याऽग्रिमविरोधादाह । **अमृतत्वमिति** । तथा च ब्रह्मैव लोकः प्रकाशस्तमिति तदर्थ इति सूचितम् । अत एवाह । **नेति** । नापीत्यर्थः । आङोऽर्थमाह । **कदेति** । तेषामनेकार्थत्वात् । एतच्च सद्वृत्तब्राह्मणगुर्वादिविषयम् ।

तथा च **मनुः**. ( अ. २ श्लो. २४२ )

"नाब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं वसेत् । ब्राह्मणे वाऽननूचाने काङ्क्षन् गतिमनुत्तमाम् ॥"
**वा** अप्यर्थे ।

"यदि त्वात्यन्तिकं वास रोचयेत गुरोः कुले । युक्तः परिचरेदेनमाशरीरविमोक्षणात् ॥२४३॥
"आसमाप्तेः शरीरस्य यस्तु शुश्रूषते गुरुम् । स गच्छत्यञ्जसा विप्रो ब्रह्मणः सद्म शाश्वतम्॥२४४॥
"आचार्ये तु खलु प्रेते गुरुपुत्रे गुणान्विते । गुरुदारे सपिण्डे वा गुरुवद्वृत्तिमाचरेत्" ॥ २४७ ॥
दारशब्द एकवचनान्तोऽपि । अत एव 'धर्मप्रजासंपन्ने दारे नान्यां कुर्वीत' **इत्यापस्तम्बः** । (२।११।१२)
"एतेष्वविद्यमानेषु स्थानासनविहारवान् । अयुञ्जानोऽग्निशुश्रूषां साधयेद्देहमात्मनः"॥२४८॥इति ।

स्थानमङ्गुष्ठाग्रादिना नियतमूर्ध्वावस्थानम्, आसनं नियमेनोपवेशनम्, विहारो भ्रमणम् । एतैस्तपोविशेषमभिप्रैतीति **नारायणः** ।

अग्निशुश्रूषा च **हारीतशङ्खलिखितयमै**र्निरूपिता ।

"**यज्ञियाः समिध आहृत्य संमार्जनोपलेपनोद्बोधनसमूहनमिन्धनपर्यग्निकरणपरिक्रमणोपस्थानहोमस्तोत्रनमस्कारादिभिरग्निं परिचरेन्नाग्निमधितिष्ठेन्न पद्भ्यां कर्षेन्न मुखेनोपधमेन्नापश्चाग्निं च युगपद्धारये-**

नाजीर्णभुक्तो नोच्छिष्टो वा अभ्यादध्याद्विविधैर्हविर्विशेषैर्यज्ञियैरहरहरग्निमिन्धेदामन्त्र्य गच्छेदागत्य निवेदयेत्तन्मनाः शरीरोपरमान्ते ब्रह्मणः सायुज्यं गच्छतीति ।"

स्पष्टं चैतन्**माधर्वीये । वसिष्ठः**, ( अ. ७ ) "ब्रह्मचर्यं चरेदाशरीरविमोक्षणादाचार्ये च प्रेते ऽग्निं परिचरेत् संयतवाक् चतुर्थषष्ठाष्टमकालभोजी जटिलः शिखाजटो वेत्युपक्रम्य त्रिरह्णोऽभ्युपेयादप" इत्याह । "त्रिषवणस्नायी स्यादित्यर्थः ।" यत्तु—

**दक्षः**,

"प्रातर्मध्याह्नयोः स्नानं वानप्रस्थगृहस्थयोः । यतेस्त्रिषवणस्नानं सकृत्तु ब्रह्मचारिणः ॥"

इति,तद् उपकुर्वाणकविषयम् । यदपि 'अपामुपस्पर्शनमूर्ध्वं गोदानादिति' **गौतमेन** (अ.२सू.१४।१५) गोदानव्रतानन्तरमेव स्नानं न ततः प्राक् दीक्षितवादिति नित्यस्नानस्याननुष्ठानमुक्तं, तदप्युपकुर्वाणकविषयकमेव बोध्यम् । यत्तु—

"कुब्जवामनजात्यन्धक्लीबपङ्ग्वार्तरोगिणाम् । व्रतचर्या भवेत्तेषां यावज्जीवं न संशयः ॥"

इति **विष्णो**र्नैष्ठिकत्वं कुब्जादिमात्रविषयकमिति । तन्न । 'चत्वार आश्रमा' (अ.७सू.१)इत्युपक्रम्य 'यमिच्छेत्तमावसेदिति' **वसिष्ठे**नोच्यमानस्य गृहस्थताया ऐच्छिकत्वस्यासंगत्यापत्तेः ।

**भविष्यत्पुराणे**ऽपि,

"गार्हस्थ्यमिच्छन् भूपाल कुर्याद्दारपरिग्रहम् । ब्रह्मचर्येण वा कालं नयेत्संकल्पपूर्वकम् ॥
"वैखानसो वाऽपि भवेत्परिव्राडथवेच्छया ।"

इति । वैखानसो वानप्रस्थः । तस्माद्रागिविषयकं गार्हस्थ्यम् । **विष्णु**वाक्यं तु नीरागमात्रोपलक्षणम् । नैष्ठिकत्वं च ब्राह्मणस्यैव न क्षत्रियादेः ।

"एवं चरति यो विप्रो ब्रह्मचर्यमविप्लुतः । स गच्छत्युत्तमं स्थानं न चेह जायते पुनः॥" (२।२४९)

इति **मनोः** । प्रागुक्त**मनो**श्च वाक्ये विप्रदानेन क्षत्रियादेर्व्युदासादिति **नारायणः** । तेनापि कलौ न कार्यं, कलिवर्ज्येषु परिगणनादिति दिक् ॥ ४९ ॥ ५० ॥

इति ब्रह्मचारिप्रकरणम् ।

---

# अथ विवाहप्रकरणम् ३।

## याज्ञवल्कीये ५१ श्लोकः

• **वैवाह्य इति**। कर्मण्यन्तात्स्वार्थेऽण् प्रियतद्धिता इति न्यायेन। उपकुर्वाणक इति भावः। तुस्ततो वैलक्षण्ये। **एवेन** तस्य मुख्यत्वं सूचितम्। वरशब्दस्य नानार्थकत्वादाह। **अधीति**। तथा च— **मनुः**, ( अ. २ श्लो. २४५।२४६ )

"न पूर्वं गुरवे किंचितदुपकुर्वीत धर्मवित्। स्नास्यंस्तु गुरुणाऽऽज्ञप्तः शक्त्या गुर्वर्थमाहरेत्॥
"क्षेत्रं हिरण्यं गामश्वं छत्रोपानहमन्ततः। धान्यं वासांसि शाकं वा गुरवे प्रीतिमाहरेत्॥"

इति। तदनुज्ञयेत्यशक्तपरमित्याह। **अशक्ताविति**।

तथा च **गृह्यम्**,

'विद्यान्ते गुरुमर्थेन निमन्त्र्य कृतानुज्ञस्य वा स्नानमिति'। अयमपि नैच्छिको विकल्प इत्याह। **एतेषां चेति**। अनेन स्नातकत्रैविध्यं दर्शितम्। वेदमित्यत्रार्थावगतिरपि बोध्या।

"वेदं वेदौ तथा वेदान्वेदान्वा चतुरो द्विजः। अधीत्य चाधिगम्यार्थं ततः स्नायाद्यथाविधि॥" इति **कूर्मपुराणात्**। अधिकं प्रागुक्तम्। व्रतपक्षेऽप्यारण्यकमधीत्यैव तत्।

"वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा। व्रतपक्षेऽपि शब्दार्थमारण्याध्ययने कृते"॥

इति **कारिकोक्तेः**। शब्दार्थमक्षरग्रहणार्थं न त्वर्थज्ञानापेक्षाऽपि। अनुष्ठानानुपयोगात्। विरक्त्युत्तरकालं साधनचतुष्टयसंपन्नं प्रत्युत्तरमीमांसाप्रवृत्तेः। प्रागुक्तकौर्मं तु कर्मकाण्डार्थज्ञानपरमिति भावः॥ ५१॥

## याज्ञवल्कीये ५२ श्लोकः

**स्नानानन्तरमिति**। त्रिविधेनापि तेन ततोऽविलम्बेन विवाहः कार्यः।

"अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः" इति **दक्षोक्तेः**। **अवीति**। अनेन स्त्रीसंभोगनिवृत्तिसूचनेन तस्य स्वरूपबोधनद्वारा तस्य मुख्याधिकारित्वं बोध्यते। न त्वितरव्यावर्तकमिदम्। तस्यानधिकारापत्तेः। तथा च सोऽपीत्यर्थः। तथा च विप्लवे सति कृतप्रायश्चित्त इति बोध्यम्। एतेनाध्याहारेण वाक्यभेदो युक्त इति **मेधातिथ्युक्त**मपास्तम्। अविनिगमकत्वादाह। **वाह्येति**। **मन्विति**। ( अ. ३ )

"अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम्। तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत् स्त्रियम्"॥१०॥ इति। यस्या अङ्गेषु अङ्गुल्यादिष्वपि वैगुण्यं नास्ति सा अव्यङ्गाङ्गी।
"नोद्वहेत्कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम्। नालोमिकां नातिलोमां न वाचाटां न पिङ्गलाम्" ८
"नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकाम्। न पक्ष्यहिप्रेष्यनाम्नीं न विभीषणनामिकाम्"॥ ९॥ इति।

वर्ज्यलक्षणान्यपि तत्रोक्तानि । कपिला रक्ततण्डुलवर्णा, पिङ्गला अग्निवर्णा, अन्त्यनाम्नी म्लेच्छनाम्नीति **माधवः ।** अन्त्यनाम्नी चाण्डालीत्यादिनाम्नी, पर्वतनामिका विन्ध्येत्यादिनाम्नी, प्रेष्यनाम्नी दासीत्यादिनाम्नी, भीषणनामिका चामुण्डेत्यादि इति **नारायणः ।**

**वैष्णवेऽपि,**

"न श्मश्रुव्यञ्जनवतीं न चैव पुरुषाकृतिम् । न घर्घरस्वरां क्षामां तथा काकस्वरां न च ॥'
"यस्याश्च रोमशे जङ्घगुल्फौ यस्यास्तथोन्नतौ । गण्डयोः कूपकौ यस्या हसन्त्यास्तां च नोद्वहेत् ॥'

इत्यादि । **आश्वलायनोक्तेरिति ।**

तथाच तद् **गृह्यम्** (१।५।४–६), "दुर्विज्ञेयानि लक्षणान्यष्टौ पिण्डान्कृत्वा 'ऋतमग्रे प्रथमं जज्ञे ऋते सत्यं प्रतिष्ठितं यदियं कुमार्यभिजाता तदियमिह प्रतिपद्यतां यत्सत्यं तत् दृश्यताम्' इति पिण्डानभिमन्त्र्य कुमारीं ब्रूयादेषामेकं गृहाणेति । क्षेत्राच्चेदुभयतः सस्याद्गृह्णीयादन्नवत्यस्याः प्रजा भविष्यतीति विद्यात्, गोष्ठात्पशुमती, वेदिपुरीषात् ब्रह्मवर्चस्विनी, अविदासिनो ह्रदात्सर्वसंपन्ना, देवनात्कितविनी चतुष्पथाद्द्विप्रव्राजिनी, ईरिणादधन्या, श्मशानात्पतिघ्नीति "

अस्यार्थः । लक्षणानि दुर्विज्ञेयानीति कृत्वा एवं परीक्षेत । पूर्वस्यां रात्रौ क्षेत्रगोष्ठवेदिपुरीषह्रददेवनचतुष्पथेरिणश्मशानरूपेभ्यः क्षेत्रादिभ्योऽष्टभ्यो मृदमाहृत्याष्टौ पिण्डान्कृत्वा ऋतमित्यनेन मृत्पिण्डानभिमन्त्र्य कुमारीं ब्रूयात् । यदेकस्मिन्संवत्सरे द्विःफलति तदुभयतः सस्यं क्षेत्रम् । अपवृत्ते कर्मणि या वेदिः सा वेदिपुरीषम् । अविदासी ह्रदः न विदस्यतीति व्युत्पत्त्याऽशोष्यो ह्रदः । तसु दसु—उपक्षये णिनिः देवनं द्यूतस्थानम् । द्वौ प्रव्रजतीति द्विप्रव्राजिनी, विविधान् प्रकर्षेण व्रजतीति विप्रव्राजिनीति वा, विप्रान्व्रजतीति विप्रव्राजिनीति । या सर्वथाऽपि स्वैरिणीति यावत् । यत्रोप्तं न प्ररोहति तदीरिणमिति । इयं लक्षणपरीक्षा कुलपरीक्षोत्तरं, कुलमग्रे परीक्षेते**त्याश्वलायनात् ।** सा च गुणवत्तया निर्दोषतया च । तत्र गुणः सदाचारादयः प्रसिद्धः ।

दोषानाह **मनुः,** ( अ. ३ ) "स्त्रीसंबन्धे दशैतानि कुलानि परिवर्जयेत्" ॥ ६ ॥
"हीनक्रियं निष्पुरुषं निश्छन्दो रोमशार्शसम् । क्षय्यामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च "॥७॥ इति ।

यागादिक्रियाशून्यं, स्त्रीमात्रशेषम्, अध्ययनशून्यम् । **पुरुषान्तरेति ।** अनेन सप्त पुनर्भवो व्यावर्त्यन्ते ।

तदाह **बौधायनः,** "वाग्दत्ता मनोदत्ता अग्निं परिगता सप्तमं पदं नीता भुक्ता गृहीतगर्भा प्रसूता चेति सप्तविधा पुनर्भूस्तां गृहीत्वा न प्रजां धर्मं विन्देदिति" । अत्राद्ययोर्निषेधः पूर्ववरस्यादोषत्वे सति बोध्य इत्याद्यन्यत्र स्पष्टम् । वोढुर्वरस्य निर्बन्धः अत्यन्तासङ्गः । दोषाणां प्राबल्यमाह । **एतच्चेति ।**

परमतखण्डनाय सिद्धान्तमाह । **समान इति । एको** मुख्यः । एतेन सर्वस्योभयारब्धत्वादिदं चिन्त्यमित्यपास्तम् । पिण्डपदव्याख्या **देहो इति ।** आरम्भक इत्यर्थः । एवं व्युत्पत्तावाह । **सपिण्डेति ।** अन्वयश्चाधारताऽऽधेयता वा । सोऽपि साक्षात्परम्परासाधारणः । अत एव दुरूहत्वादुपपादयेत । **तथा हीति । अवयवाः** शुक्रादयोऽग्रे स्फुटीभविष्यन्ति । **मात्रेति ।** पुत्रस्येति भावः । **तथा मातृष्वस्रेति ।**

मातामहावयवान्वयात् । **तथा पितृव्येति** । पितामहावयवान्वयात् । **आरम्भकतयेति** । उभयारब्धे एकशरीरे स्वावयवान्वयादित्यर्थः । **शरीराद्यैरिति** । स्वस्वपतिभिरिति शेषः । **एकेति** । स्वारब्ध-संतानान्वय्यवयवान्वितसंतानारम्भकत्वेनेत्यर्थः । उपसंहरति । **एवं यत्र यत्रेति** । **वाऽन्वय इति** । आधारत्वाधेयत्वान्यतररूप इत्यर्थः । योगरूढ्या तु गुरुशिष्यादौ नातिप्रसङ्ग इति बोध्यम् । **प्रत्ता** विवाहिताः । **अप्रतिप्रुत इति** । तथा च सगोत्रत्वसमानाधिकरणसापिण्ड्यमेव दशाहाशौचप्रयोजकमिति न कोप इति तात्पर्यम् ।

ननु सर्वस्मृतिषु लोकेषु प्रसिद्धतरश्राद्धसाधनपिण्डपरत्वं तस्याश्रित्यान्यथासापिण्ड्यमेव कुतो न वर्ण्यत इत्यत आह । **अवश्यं चैकेति** । **इति चेति** । श्रुतेरित्यस्यानुषङ्गः । स्मृतिमाह । **स एवेति** । एतदादौ तथेत्यपाठः । चसत्त्वात् । चाभावेनाह । **तथेति** । अपिपाठोऽपि क्वचित् । **तत्र तत्र** पुत्रकन्ययोः । तथा चान्यथासापिण्ड्यात् श्रुतिस्मृतिसिद्धसमाख्यालब्धसापिण्ड्यं प्रबलमिति भावः ।

ननु, "लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः । पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम् ॥" इति **मात्स्यात्**—

"पिता पितामहश्चैव तथैव प्रपितामहः । पिण्डसंबन्धिनस्त्वेते विज्ञेयाः पुरुषास्त्रयः ॥
"लेपसंबन्धिनश्चान्ये पितामहपितामहात् । प्रभृत्युक्तास्त्रयस्तेषां यजमानस्तु सप्तमः ॥
"इत्येष मुनिभिः प्रोक्तः संबन्धः साप्तपौरुषः ॥"

इति **मार्कण्डेया**चोक्तरीत्याऽन्यथैव सापिण्ड्यं किमिति नोच्यते । तस्यापि स्मृति-समाख्यासिद्धत्वात् , **हेमाद्रिमाधवपरार्का**दिसकलपुरस्कृतत्वाच्च । तथाहि । एकः पिण्डदाता, त्रयः पित्रादयः पिण्डभाजः, त्रयो वृद्धप्रपितामहाद्या लेपभाजः । तथा च सप्तानां पुरुषाणा-मेकपिण्डक्रियानुप्रवेशः सापिण्ड्यहेतुः । एवं चैकस्य देवदत्तस्य पित्रादिभिः षड्भिः पुत्रादि-भिश्च षड्भिः सह सापिण्ड्यं सिद्धम् । उद्देश्यदेवतैक्येन क्रियैक्यस्य विवक्षणेन भ्रातृपितृव्यमातुल-भागिनेयादिभिस्तद्भार्याभिश्च सह सापिण्ड्यं निर्बाधम् । देवदत्तकर्तृकपिण्डक्रियायां ये देवता-त्वेनानुप्रविशन्ति तेषां मध्ये यः कश्चित् भ्रातृपितृव्यमातुलादिकर्तृकपिण्डक्रियायामप्यनुप्रविश-त्येवेति तैस्तत्सिद्धिः । भार्याणामपि भर्तृकर्तृकतत्क्रियायां सहाधिकारात्तत्सिद्धिः । भगिनीपितृष्वसृ-मातृष्वस्रादीनामपि एकपिण्डदानक्रियायोग्यत्वमस्त्येव तस्यैव निवेशात् । परेणाप्यनपत्यपत्नीनां तत्सिद्ध्यर्थं तस्यैव शरणीकर्तव्यत्वात् ।

अत्रापि धर्मपुत्रगुरुशिष्यादौ मातामहकुले लेपभाक्पर्यंतं तदतिप्रसंगस्तु रूढ्यैव परिहार्यः अधिकमन्यतो बोध्यमिति सोऽयं निर्वाप्य सापिण्ड्यपक्षस्तं खण्डयति । **निर्वाप्येति** । **मातृसं-ताने इति** । एकस्मान्मूलपुरुषात्कन्यातत्कन्यातत्कन्यातत्कन्येत्येवं पञ्चम्यां कन्यायामित्यर्थः । मातृसंताने पञ्चमपर्यंतमेव तत्तदूर्ध्वं निवृत्तिरित्यस्येष्टत्वेन पञ्चम्यामित्युक्तं । चतुर्थीपर्यंतं तत्कर्तृक-तत्क्रियायां येषां तत्वेनानुप्रवेशस्तेषां परभागसंतानकर्तृकक्रियायामनुप्रवेशसत्वेऽपि पञ्चमीकर्तृकक्रियायां सर्वथा तदभावात् । कादाचित्कस्तु शिष्यादेरिव न सापिण्ड्यप्रयोजकः । इदं च तथाविवक्षाम-भ्युपेत्य वस्तुतः सैव न मानाभावादित्याशयेनाह । **भ्रातृपितृव्यादीति** । उक्तदोषोद्धारेण तन्नि-

र्वाहकपक्षं मतांतरं खण्डयति । **समुदायेति** । इग्रस्थल इतिभावस्तत्रतत्र **मात्स्यादा**वेव तस्मात्स्व-मतमेव युक्तम् ।

ननु सिद्धान्तेऽप्यष्टमादावतिप्रसंगोऽत आह। **परंपरेति** । सापत्नमातामहकुले त्वातिदेशिकं साण्डिड्यं "पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलास्तद्भगिन्यो मातृष्वसारस्तद्दुहितरश्च भगिन्यस्त-दपत्यानि भागिनेयानीति" **सुमन्तूक्तेः**।तद्धि मातृगमनप्रायश्चित्तस्य तत्परिणयतदुपगमादिप्रायश्चित्तस्य-तदाशौचादेस्तत्साण्डिड्यस्य चातिदेशं करोति ।

अत्र प्रथमवाक्ये यन्निरूपितं सपत्नमातृत्वं तं प्रत्येवाशौचसाण्डिड्यातिदेशो न तत्पुत्रं प्रत्यपि। एवं तत्कन्यानां भागिनेयीत्वातिदेशेऽपि न तत्कन्यायां भागिनेयीकन्यात्वं । यावद्वचनं वाचनिकामिति सिद्धान्तात् युक्तेरप्रयोजकत्वात् एतेन अथ सपत्नमात्रा सह कथं साण्डिड्यं तच्छरीरावयवान्वयाभावात् । न च पितृशरीरावयवानां स्वस्मिन्नारम्भकत्वेन सपत्नमातरीवाधेयत्वेनान्वयादेकशरीरावयवान्वयेनैव सा-पिण्ड्यसिद्धिरिति वाच्यं । पित्रवरुद्धदासीभुजिष्यादिभिरपि सापिण्ड्यापत्तेः । न च स्वसपिण्डपितृसपि-ण्डत्वेन सपत्नमात्रा सापिण्ड्यमिति वाच्यम् । सपत्नमातामहादिभिरप्येतत्सापिण्ड्यापत्त्याऽतिप्रसंगात् ।

तथाहि । स्वसपिण्डः पिता तत्सपिण्डा सपत्नमातेति तया सह सापिण्ड्यो तथा तत्सपिण्डेन तत्पित्रा सपत्नमातामहेनापि समं सापिण्ड्यं केन वार्यते ।

अथ पितृशरीरावयवान्वयिनि सपत्नभ्रातरि सपत्नमातुरप्यवयवान्वयात्मारम्भकेन सहैकशरीरारम्भ-कतया तया सह सापिण्ड्यमिति वाच्यं । तत्रापि सपत्नमातामहादिभिः सह सापिण्ड्यप्रसंगात् । तस्यापि स्वकन्याद्वारा दौहित्रशरीरावयवान्वयात् ।

अत्रोदाहरणं । यथा श्रीरामस्य पिता दशरथस्तदवयवान्वयिनि भरतशरीरे केकयराजस्याप्यव-यवान्वयाद्रामकेकयराजयोः सापिण्ड्यमिति । एवं सपत्नमातुलादिभिरप्येकशरीरारम्भकारम्यत्वेन सापिण्ड्यसिद्धिः । यथा साक्षात्परम्पराभ्यामेकस्य भरतशरीरस्यारम्भकौ दशरथकेकयराजौ तदारब्धत्वेन रामयुधाजितोरपि सापिण्ड्यम् ।

एवमेव सापत्नमातुलकन्यापुत्रादिभिरपि सापिण्ड्यमूह्यं साक्षात्परम्पराविवक्षायाः सर्वशेषत्वात् ।

ननु यत्र यत्र सपिण्डशब्दप्रयोगस्तत्र तत्र साक्षात्परम्परया वा एकशरीरावयवान्वयो वेदितव्य इति **मिताक्षरा**ग्रन्थस्वरसात्सापिण्ड्यावयवान्वययोर्व्याप्यव्यापकभावावगमात्सपत्नमातुलादावेकशरीरावयवा-न्वयसत्वस्य व्यापकव्यभिचरित्वेनादोषत्वं । सपिण्डशब्दप्रयोगाभावादिति चेत् मैवं। "पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलास्तद्भगिन्यो मातृष्वसारस्तद्दुहितरो भगिन्यो भगिनीसपत्न्यश्च भगिन्यस्तदपत्यानि भागिनेयानि । अन्यथा संकरकारकाणीतिपाप्याः पतिताश्च भवन्तीति" **सुमंतुना** सापिण्ड्यव्याप्य-मातुलत्वादिव्यपदेशात् ।

यद्येवं तर्हि न कोऽपि दोषो लक्ष्यलक्षणोभयसत्वादितिचेत् न । तथा सति सहजासिद्धावयवान्वय-रूपसापिण्ड्यस्तद्भावेन सपत्नमातुलादिषु सापिण्ड्यातिदेशाय वचनारम्भोऽनर्थकः स्यात् । तथा च **सुमंतु**-वचनारम्भान्यथानुपपत्त्यैव सपत्नमातुलादिष्ववयवान्वयरूपसापिण्ड्याभावोऽवगम्यत इत्यतिप्रसंग-

सुस्थः । तस्मान्न सपत्नमात्रा सह सापिण्ड्यमवयवान्वयाभावादिति प्राप्त उच्यते । यत्र यत्रेत्यादिग्रन्थस्वरसात्सपत्नमातरि सर्वजनीनसपिण्डशब्दप्रयोगान्यथानुपपत्त्याऽवयवान्वयोऽवश्यं वाच्यः । स च सपत्न्योरेकेन भर्त्रा सहैकशरीरारम्भकतया तथा स्वारम्भकेन सहैकशरीरारम्भकतया सपत्नमात्रा सहापि सिद्ध्यत्येव । एवमेकतस्तत्सिद्धावन्यतोऽप्येकशरीरारम्भणसहकार्यारब्धत्वेन तत्सिद्धिः ।

यथा पुत्रस्य पितृशरीरावयवान्वयेन पित्रा सहेत्युक्ते पुत्रेऽपि स्वशरीरावयवान्वयेन पुत्रेण सहेत्यपि सिद्धं । तस्मादस्ति सपत्नमात्रा सहाप्यवयवान्वय इति न दोषः । न च सपत्नमातामहादिष्वतिप्रसंगः । इष्टापत्तेः ।

न चैवं सपत्नमातुलादिष्वप्येकशरीरारम्भकारब्धत्वादिना सहजसिद्धे सापिण्ड्ये तद्भ्रातरो मातुला इत्यादिवचनारम्भवैयर्थ्यमिति वाच्यं । पञ्चमसप्तमादिसंख्यान्तरपरिसंख्यार्थतया सार्थक्योपपत्तेः । तथा हि "मातृपितृसंबद्धा आ सप्तमादविवाह्याः कन्या भवन्त्या पञ्चमादन्येषामिति" पूर्ववाक्ये मातृपितृसापिण्ड्ये विवाह्यत्वेऽवधिद्वयं स्वपरमतेनोपन्यस्य मातृसपत्न्या मातृपितृत्वाभावेन सापिण्ड्यद्वारतासंभवात्तत्संबन्धितो सापिण्ड्याभावादविवाह्यत्वाप्रसक्तौ 'पितृपत्न्यः सर्वा मातर' इत्यारभ्यते । तत्र मातृसपत्नीसपत्नमातेत्यादिशब्देरभिधानसंभवेऽपि यत् पितृपत्नीशब्देनोपादानं तत्तस्याः पितृद्वारकसंबन्धद्योतनाय । यच्च पत्नीशब्दोपादानं तत्पित्रवरुद्धदासीभुजिष्यादिभिः सापिण्ड्यवारणाय । यच्च सर्वशब्दोपादानं तद्विजातीयाभिरपि सापिण्ड्यद्योतनाय तेन च तत्संबन्धीनामप्या सप्तमाद्वा पञ्चमाद्वा अविवाह्यत्वप्रसक्तौ तद्भ्रातरो मातुला इत्यादिपरिसंख्यायते यथैत एवाविवाह्या नान्य इति । पञ्चपञ्चनखा भक्ष्या इतिवत् । न चायं नियमः संभवति । यथोक्तरीत्या साापिण्ड्यसद्भावेनाविवाह्यत्वस्य नित्यवत्प्राप्ततया पाक्षिकत्वाभावात् ।

नन्वयमपूर्वो विवाह्यत्वप्रतिषेध एव कुतो नेष्यते । सर्वजनीनसापिण्ड्याभावेन प्रसक्तिसंभवादिति चेत् न साक्षात्परम्परया स्वारम्भकेन सहैकशरीरारम्भकत्वादिना सिद्धस्य साापिण्ड्यस्यापलपितुमशक्यत्वात् । तत्सिद्धौ वाऽतिप्रसंगभङ्गायावश्यापेक्षितव्यवस्थाभिधानमस्मत्पक्षे । अपूर्वनिषेधपक्षे त्वनपेक्षितार्थवचनमपूर्वान्तरकल्पना, क्लेशश्चेति दोषद्वयं । तथाहि । व्यवस्थातिक्रमे हि सपिण्डोद्वाहनिषेधाश्रितत्वेन व्यवस्थायाः सपिण्डोद्वाहनिषेधातिक्रमजन्यमेव दुरितं कल्प्यते न पृथक् । अपूर्वनिषेधपक्षे तु साापिण्ड्याभावात्सपिण्डोद्वाहनिषेधातिक्रमजन्यदुरितात् दुरितान्तरकल्पनाक्लेशः प्रकृतनिषेधातिक्रम इति । तस्मात्स्वभावसिद्धसापिण्ड्यस्यापलपितुमशक्यत्वात्तदतिप्रसंगभङ्गायावश्यापेक्षितव्यवस्थाभिधानार्थमिदमुदेतीति सर्वं सुस्थम् ।

अथ वाक्यार्थः । 'तद्भ्रातर' इत्यत्र तच्छब्देन पितृपत्नी परामृश्यते प्रधानत्वात् । 'तद्भगिन्य' इत्यत्रापि सैव पूर्वपरामर्शेन सन्निहितत्वात्प्रधानत्वाच्च । तद्दुहितर इत्यत्र तु न तत्परामर्शस्तद्दुहितॄणां साक्षात्पित्रारब्धत्वेनासपिण्डामिति सामान्यवचनेनैव विषयीकरणादेतद्विशेषवचनविषयतान्तर्भावानर्थक्यात् किंतु सपत्नमातुलमातृष्वस्रोरेव परामर्शः । ततश्च तत्कन्यानामेवाविवाह्यत्वमत्रोच्यत इति सम्यम् ।

पुत्रस्यैव सापत्नमातृकुले साापिण्ड्यं न सापत्नमातृकुलस्य पुत्रकुल इति शङ्कापनोदायाह । 'भगिनीसपत्न्यश्च भगिन्य' इति । भगिनीसपत्नीत्वव्यपदेशेनोभयतोऽपि साापिण्ड्यप्रदर्शनात्परस्परसंततेरविवाह्यत्वं

दर्शयति । तदेवाह । तदपत्यानीति । तासामपत्यानीत्यत्रापि तच्छब्देन सपत्नमातुलमातृष्वसृदुहितॄणां भगिनीसपत्नीनां च परामर्शः । पितृपत्नीपरामर्शे तु तदपत्यानां भगिनीत्वेन भागिनेयत्वव्यपदेशानुपपत्तेः । ततश्च सपत्नमातुलमातृष्वसृतदुभयदुहितृतदपत्यानि भगिनीसपत्न्यपत्यानि च विवाह्यानीति वाक्यार्थ इति ।

नन्वत्रोभयतः सापिण्ड्यं न सिद्ध्यति प्रमाणाभावात् । तथाहि । पितृपत्नीशब्दो हि सपत्नमातुः पितृद्वारकमेव सापिण्ड्यं वदतीत्युक्तमेव प्राक् । तच्च सापिण्ड्यं यत्पितुः सपत्नी तस्यैवेति सापिण्ड्यावधिपरिच्छेदाकाङ्क्षाऽपि तस्यैव. न पितृपत्नीपक्षस्थानां पितृपत्नीरूपसापिण्ड्यं प्रतियोग्यनाभावात्। न हि सा तेषां पितृपत्नी भवति येनेदं वाक्यं तत्सापिण्ड्यं परिछिन्द्यात्। अस्ति तु भगिनीत्वादिना तेषां तत्सापिण्ड्यं तत्र चास्त्येव परिच्छेदकं 'पञ्चमात्सप्तमादूर्ध्वमि'त्यादि।अत एव यद्धर्मपुरस्कारेण येन सह सापिण्ड्यं तद्धर्मपुरस्कारेणैव तदुपादानम् । तथा तद्भ्रातरो मातुला इत्यादिषु तद्भ्रातृत्वादिना यदीदमेव वाक्यमुभयतोऽपि सापिण्ड्यपरिच्छेदकं स्यात् . तर्हि पुरुषसंख्याविशेषपुरस्कारेणैव प्रवर्तेत यथा पञ्चमात्सप्तमादूर्ध्वमित्यादि न तद्भ्रातृत्वादिपुरस्कारेण प्रवर्तते च तथा तस्मान्नोभयतः सापिण्ड्यपरिच्छेदकमिदमित्यवसीयते । किंतु यद्धर्मपुरस्कारेण यदुपादानं तस्यैवाविवाह्यत्वं प्रतिपादयति नान्येषां अन्यथा तद्भ्रातृपदादीनां तत्पित्रा· द्युपलक्षकतापत्तेः। तथा च पुनरतिप्रसंगः। तद्वारणाय पञ्चमादिवाक्यमेव एतद्वाक्यारम्भानुपपत्त्यैवेति ब्रूमः।

ततश्च परिगणितारिक्तेषु येषु सापत्नमातामहसापत्नमातुलपुत्रसापत्नमातृष्वसृपुत्रेष्वेतद्वाक्यं न प्रवृत्तं न पञ्चमादिवाक्यं । तत्र विवाह्यतापत्तिरवशिष्यते। न चेष्टापत्तिः । उक्तरीत्याऽवयवसंबन्धसत्वेन सापिण्ड्यसद्भावात्सपिण्डानिषेधस्यात्राप्यक्षतत्वात् । तर्हि सपिण्डानिषेधादेव नोक्तविषयेषु विवाह्यताप्रसंग इति चेन्न। सापिण्ड्यस्या सहस्रपुरुषमप्यविच्छेदेन परिच्छेदकाभावे निषेधस्यातिप्रसंगात् । तस्मादनन्यगत्या तद्भ्रात्रादिपदं तत्पित्रादीनामप्युपलक्षणं वाच्यम् । ततश्चशब्दोपात्तानां प्रचयेन यावतां कथंचिदुपस्थितिः तावत् दूरं सापिण्ड्यमनेन परिच्छिद्यत इति पर्यवसन्नं । तद्यथा । सपत्नमातामहो मूलपुरुषः प्रथमः तत्पुत्रः सापत्नमातुलो द्वितीयः तत्पुत्रः सापत्नमातुलपुत्रस्तृतीयः । किमस्याश्रुतस्य ग्रहणे प्रमाणमिति चेत् । तद्दुहितरश्च भगिन्य इति मातुलमातृष्वसृदुहित्रुपादानमेवेति ब्रूमः । दुहितॄणामिव पुत्राणामपि संबंधाविशेषात् । तत्पुत्रः सापत्नमातुलेयपुत्रश्चतुर्थः । अत्रापि तदपत्यानि भागिनेयानीति मातुलमातृष्वसृदुहित्रपत्यानां मातुलमातृष्वसृपुत्रापत्यानामप्युपलक्षणं तुल्यसंबधतया बाधकाभावात् । एवं सापत्नमातृकुले चतुःपुरुषं सापिण्ड्यं सिद्ध्यति ।

एवं सापत्नमातृष्वसृसंतानेऽपि ज्ञेयम् । मातुलमातृष्वस्रोर्मूलपुरुषस्यैकत्वात् । ततश्च सापत्नमातामहादेव मूलपुरुषाद्दुहितृसपत्नीसंताने तत्संताने च यावच्चतुर्थं परस्परमविवाह्यताप्रदर्शनेन चतुष्पुरुषं सापिण्ड्यमनेनोक्तमिति सिद्धम् । तद्भ्रातरो मातुलभगिनीसपत्न्यश्च भगिन्य इत्यन्योन्यं तुल्यसंबधप्रतिपादनालिंङ्गादुभयतः सापिण्ड्यसिद्धेः ।

यत्तु **मदनपारिजाते** 'पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथेति' **वसिष्ठवाक्यं** सपत्नमातामहकुलविषयमवयवानुवृत्तेरभावादिति व्याख्यातं तदाकाशलतेव मूलानपेक्षमेवोज्जृम्भते । उक्तरीत्यावयवानुवृत्तिसद्भावशेषवत्सापत्नादिपदाश्रवणात् सापत्नवाक्यैकवाक्यताभावात्**सौमंत**विशेषवाक्यविरोधाच्चेति ।

न च **वसिष्ठ**वाक्यान्यथानुपपत्तिरेव मूलमिति वाच्यम् । अन्यथोपपत्तेर्वक्ष्यमाणत्वात् । तस्मादुक्तमेव साधीय इत्यलमतिविस्तरेणेत्यपास्तम् । तथापाठस्यैव **माधवहरदत्तविज्ञानेश्वरादि**निबन्धाधृतत्वेनाभावाच्चतुष्पुरुषं सापिण्ड्यमित्यस्य **गुरुचरणै**र्दूषितत्वाच्चेत्यन्यत्र स्पष्टम् । यद्यपि ''यवीयोऽवरजानुज'' **इत्यमरः** (२।६।४३) तथापि शास्त्रान्तराद्यनुरोधेनाह । **वयेति । प्रमाणेति** । कायपरिमाणेत्यर्थः । तत्राद्यं **मनुः** ( अ. ९ श्लो. ९४)

''त्रिंशद्वर्षोद्वहेत्कन्यां हृद्यां द्वादशवार्षिकीं । त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ॥'' इति

''त्रिंशद्वर्षो दशाब्दां तु भार्यां विंदेदनग्निकाम् ।एकविंशति वर्षो वा सप्तवर्षामवाप्नुयात् ॥'' इति

**बृहस्पतिः** । ''वर्षैरेकगुणां भार्यामुद्वहेत्त्रिगुणः स्वयमिति '' **विष्णुपुराणं** च । द्वितीयं तु लोकविरुद्धमेव ॥ ५२ ॥

## याज्ञवल्कीये ५३ श्लोकः

पूर्वशेषमेवाहेत्याह । **विशेषान्तराण्याहेति** । एकवचनपाठे पूर्वसमुदायतोऽन्यं समुदायविशेषमाहेत्यर्थः ।

लाघवादरोगामिति वाच्येऽरोगिणीत्युक्त्वा नित्ययोगार्थकेन्नंतेन नञः समास इति तत्फलितमाह । **अचिकित्स्येति** ।

ननु भ्रातुरभावेऽपि यदि संविदस्ति तर्हि भवत्येव तथा 'अथ नास्ति तर्हि न तच्छङ्केति' सर्वथोक्तविशेषणानुपयोगोऽत आह । **अनेनेति** । ' अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यतीति' ' संविद्रहिताऽप्यभिप्रायेण पुत्रिका भवतीत्यर्थः । अत्र ' गम्यते ' इत्यनेनारुचिः सूचिता । तद्बीजं तु संवित्संभावनयाऽपि तथोक्तिसंभव इति ।अत एव शंङ्कानिवृत्तये इति प्रागुक्तम् । अत एव च **मनुः** । ( अ. ३ श्लो. ११ )

''यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता । न विज्ञायेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया॥ ''इति ।

अत्र द्वितीयपादेन गूढोत्पन्नानिषेधः ।यद्वा तस्य प्रोषितत्वेन तत्वे वाऽन्यकर्तृकदाने तच्छङ्कानिवृत्यर्थः सः तस्मिन्सति तु तदुक्त्या निर्णय इति न तच्छङ्केति **मेधातिथिः** । वस्तुतस्तु मूलं युक्तमेवात एव **गौतमः** (अ. २८ सू.१७।१८) 'अभिसंधिमात्रात्पुत्रिकेत्येकेषां। तत्संशयान्नोपयच्छेद्भ्रातृकामिति ' ।

अभिसंध्याकारमाह **मनुः** ( अ. ९ श्लो. १२७ )

''अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकां।यदपत्यं भवेदस्यास्तन्ममापि स्वधाकरम्'' इति ।

अत एव यस्याः पिता पुत्रिकाकरणाभिप्रायवान्न वेति न ज्ञायेत तां नोपयच्छेदिति तदर्थः । एवं च यत्र नेयं शङ्का तत्र सा विवाह्यैवेति **माधवा**दय इति बोध्यम् । सा च संप्रतिपत्तिर्द्वेधा । केवलमातामहसंबन्धित्वेनोभयसंबन्धित्वेन च ।तत्राद्ये दानमन्त्रमाह। **वसिष्ठः** (अ. १७।१७) ।

१ वासिष्ठ ( अ. १७ सू. १७ ).

" अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम् अस्यां यो० " द्वितीये त्वाह **कात्यायनः।** "अपुत्रोऽहं प्रदास्यामि तुभ्यं कन्यां भवानपि।पुत्रार्थी चेदिहोत्पन्नः स नौ पुत्रो भवेदिति "॥

**ऋषेरिदमिति।** अत्र संबंधो न साक्षात् किंतु व्यवहितः। तथा च प्रवरणमृषिसंबन्धेनाग्निप्रार्थनं प्रवरः। तच्च कल्पसूत्रादिषु 'अग्ने महां असि देवेद्धो०' 'अग्निर्देवो होता देवान्यः' इत्यादिषु मन्त्रेषु च प्रसिद्धम्। गोत्रप्रवर्तकस्य मुनेर्व्यावर्तको मुनिगणः प्रवरः। यथा गोत्रप्रवर्तकस्य भरद्वाजस्य व्यावर्तकावङ्गिरोबृहस्पती इति तु **माधवः।नामेति** प्रसिद्धौ। समासतो लब्धविशिष्टनिमित्तत्वानिरासायाह। **गोत्रेति। पर्युदासे** नञर्थे निषेधे। **इतीत्यस्य** लब्धमिति शेषः। इत्यर्थ इति पाठस्तु युक्त एव।

तत्रार्ष्ये। प्रमाणमाह **तथा चेति।** अस्योभयत्रान्वयः। अग्रे चार्थस्तथाशब्दो **मनु**पदोत्तरं योजनीयः। अन्यथा तद्विरोधः स्पष्ट एवेति भावः। **मनु**वाक्ये चावन्यासमुच्चायकावित्यन्यत्र स्पष्टम्। तत्राद्यचसमुच्चितमर्थं प्रसंगादाह। **तथेति।** मातृगोत्रं द्विविधं प्राग्विवाहात्पितुरूर्ध्वं भर्तुः। 'स्वगोत्राद्भ्रश्यते' इत्युक्तेः। तत्र पितृगोत्रायाः स्वगोत्रत्वेन पितृगोत्रत्वेऽन च निषेधसिद्धेः परिशेषान्मातृगोत्रपदेन मातामहगोत्राया निषेधः सोऽपि न सर्वेषां किंतु मध्यंदिनानामेव " मातृगोत्रं माध्यंदिनीयानामिति" **सत्याषाढोक्तेः।** शिष्टाचारोऽप्येवमेव। केचित्तु सर्वेषां मन्यन्ते। उक्तसत्याषाढस्य तद्ग्रन्थेऽदर्शनात्। **प्रवरमञ्जरीका**रोऽप्येवमेव। अत एव " सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि। " इति **व्यास**वाक्यमपि साधारणं संगच्छते। वस्तुतस्तु शिष्टाचारानुगृहीतोक्तवचनात्तेषामेव तद्वर्जनं युक्तमिति बोध्यम्। तदेतत्सर्वमभिप्रेत्याह। **केचिदिति।** माध्यंदिना एकदेशिनो वेत्यर्थः। **मनु**माह, **मातुलेति।** त्यक्त्वेति पाठः मातृगोत्रमित्यनेनैव सिद्धे मातुलस्येति सापत्नमातुलपरम्।

निषेधत्रयस्यापौनरुक्त्याय विविक्तविषयतामाह। **अत्र चेत्यादिना। आदिना** मातुलसंग्रहः। **दुहित्रिति।** इदमुपलक्षणमन्यस्या अपि सपिण्डमात्रायाः अत एवार्वाङ्निषेधार्थमिति परग्रन्थाविरोधः! **चतुर्विंशतिमता**दिगतिस्तु तत्रैव वक्ष्यते। **अपिनाः**ऽसमानप्रवरत्वसमुच्चयः। इदं चासंकीर्णं कपीनां भरद्वाजगणैः सहाविवाहप्रयोजकम्। तेषामङ्गिरोगणत्वेनैकप्रवरसाम्येऽपि अपेक्षितद्वित्रिप्रवरसाम्याभावात्। हेतुगर्भं विशेषणमाह। **भिन्नेति।** आद्यो**ऽपिः** पूर्वसमुच्चये, द्विती**योऽपि**र्मिथः समुच्चये। इदं चासंकीर्णं केवलभृग्वंगिरोगणेष्वविवाहप्रयोजकं तेषां गोत्रत्वाभावेन समानगोत्रत्वस्याप्रसक्तेः अत एव तेषु द्वित्रिप्रवरसाम्याभावे विवाह एव भवति संकीर्णे त्वेते प्रायशः सर्वत्रैवेति बोध्यम्।

प्रसंगाद्विशेषान्तरमाह। **तथेति। इत्येतत्** उभयं तु। इदं समर्थयते। **यद्यपीति। राजन्यविशामिति।** व्यक्त्यभिप्रायं बहुवचनं। **पुरोहिति।** षष्ठी समासः। तेषां तस्य तौ ज्ञेयावित्यर्थः। यद्यपि क्षत्रियाणां मनुगोत्रं मानवैलपौरुरवसेतित्रिप्रवराः। वैश्यानां भलन्दनगोत्रं भालन्दनवात्सप्रमांकिलेति त्रिप्रवरा इत्यपि सूत्रे उक्तं तथापि तन्न युक्तम्॥ तयोः। सर्वेषामेकगोत्रप्रवरत्वान्मिथोऽविवाहप्रसंगात्। अत एव द्वितीयां तदुक्तिमेवाह। **तथा चेति।** अथ **संग्रहकृदु**क्तसंग्रह उच्यते।

"जामदग्न्यो वीतहव्यो वैन्यो गृत्समदाह्वयः। वाध्र्यश्वो गौतमाख्यश्च भरद्वाजाह्वयः कपिः॥
"हारितो मौद्गल्यकण्वौ विरूपो विष्णुवृद्धकः। अत्रिविश्वामित्रकौ च वसिष्ठः कश्यपाह्वयः।
"अगस्त्यश्चेति मुनयो ह्यष्टादशगणाः स्मृताः"।

तत्र **जामदग्न्यः**

"जामदग्न्यश्च वत्सश्च श्रीवत्सश्च्यवनाह्वयः । आप्लवानौर्वसावर्णी जीवन्तो देवरातकः॥
"वीतत्सायनशाखाख्यो वैरोहित्यो वटाह्वयः । मण्डुः प्राचीनयोग्यः स्यादर्ष्टिषेणस्त्वनूपकः ॥
"एतानि भार्गवाख्यानि दश सप्तोत्तराणि च । जामदग्न्यगणे तस्मिन्नविवाहः परस्परम् " ॥

**वीतहव्यः ।**

"वीतहव्यायस्कमौनमौकवाधूलसंज्ञकाः । सावेदश्च षडेतानि भार्गवाख्यो ह्ययं गणः ॥
"वीतहव्यस्य चान्योन्यं न कार्यं पाणिपीडनम् ।"

**वैन्यः ।**

"वैन्यः पार्थश्च गोत्रे द्वे भवतो भार्गवाह्वकः । एष वैन्यगणस्तस्मिन्नचान्योन्यं करग्रहः " ॥

**गृत्समदः ।**

"उभे गोत्रे गृत्समदः शौनको भार्गवाह्वकः । गणे गृत्समदे तस्मिन्नान्योन्यं पाणिपीडनम् ॥"

**वाध्र्यश्वः ।**

"द्वे वाध्र्यश्वो मित्रयुग्यो गोत्रे भार्गवनामकः । वाध्र्यश्वस्य गणस्तस्मिन्नुद्वाहो न परस्परम् ॥
"जामदग्न्यादयः पञ्चगणा भृगुगणाः स्मृताः । न चाप्येषां गणानां तु विवाहः स्यात्परस्परम् "॥

**गौतमः ।**

"गौतमायास्य औचथ्यः कक्षीवानौशिजस्तथा । बृहदुक्थो वामदेवो गोत्राणीमानि सप्त च ॥
"गौतमस्य गणस्तस्मिन्विवाहो न परस्परम् " ।

**भरद्वाजः ।**

"भरद्वाजः कुशाङ्काग्निवैश्यजर्तौ यमः कतः । शैरिरः क्षीरशुङ्गश्च वन्दनश्च बृहस्पतिः ॥
"सर्वस्तम्बः कपिर्मातर्वचसो गार्ग्यसैन्यकौ । भरद्वाजगणः सप्तदशगोत्रमिति स्मृतम् ॥
"तस्मिन्परस्परं कार्यं न कन्यापाणिपीडनम् " ।

**कापिः ।**

"कपिश्च महदक्षायकक्षायस्त्रीणि केवलम् । अयं कपिगणोऽन्योन्यं तस्मिन्न हि करग्रहः" ॥

**हारीतः ।**

"हारीतो यौवनाश्वश्च मान्धात्रः कुत्सनामकः । पिङ्गलः शंखदर्भौ च भौमश्च गवनामकः ॥
"अंबरीषो दशैतानि हारितस्य गणः स्मृतः । तस्मिन्परस्परं पाणिग्रहणं न हि शोभनम् " ॥

**मौद्गल्यः ।**

"मौद्गल्यताक्ष्यौ भार्म्यश्वास्त्रीणि गोत्राण्यमूनि हि । मौद्गल्यस्य गणास्तस्मिन्न मिथः पाणिपीडनम् "॥

**कण्वः ।**

"कण्वोऽजमीढ इत्येते गोत्रे कण्वगणः स्मृतः । तस्मिन्परस्परं पाणिग्रहणं न शुभं मतम्" ॥

**विरूपः ।**

"विरूपोऽष्टादंष्ट्रनामा पृषदश्वश्च मुद्गलः । चत्वारीमानि गोत्राणि विरूपस्य गणः स्मृतः ॥
"परस्परं विवाहोऽस्मिन्न विधेय इतीरितम्" ॥

**विष्णुवृद्धः ।**

"विष्णुवृद्धः पौरकुत्स्यस्त्रसदस्युः कतस्तथा । मयणो भद्रणाख्यश्च बादरायणसंज्ञकः ॥
"सात्पताम्यौपमित्यौ च गविः साविकितालुकी । नितुंदतश्चेति गोत्राणि त्रयोदशमितानि च ॥
"विष्णुवृद्धगणस्तस्मिन्न विवाहः परस्परं ।
गौतमादिगणानग्नौ यस्तथाऽङ्गिरसोगणः । तथाप्येषां गणानां तु विवाहः स्यात्परस्परम्" ।

**अत्रिः ।**

"तदेतद्गोत्रनवकमत्रिश्चाप्यर्चनानसः । श्यावाश्वो वामरन्धश्च गविष्ठिरधनञ्जयौ ॥
"सुमङ्गलिः तिथिर्वीजवापश्चात्रिगणो ह्ययम् । आत्रेयाख्यो विवाहोऽस्मिन् न विधेयो मिथः शुभम्" ॥

**विश्वामित्रः ।**

"विश्वामित्रो देवराता मनुस्तन्तुश्च औलकिः । वालकिश्चकितोलूकौ याज्ञवल्किश्च नारदः ॥
"बृहदग्निः कालवबौशलली बहुलोहितौ । शालङ्कायनवावर्ण्यकामकायनपूरणौ ॥
"शालावतोऽग्निदेवश्च मदनः कौशिकोऽष्टकः । आज्यो मधुच्छन्दसश्च देवश्रवधनञ्जयौ ॥
"शृङ्गः कतः शैरिरश्च वारिधापोधमर्पणः । सूनुः पनश्च धूम्राख्यो जठरस्त्वैकहव्यकः ॥
"अष्टत्रिंशच्च गोत्राणि विश्वामित्रगणः स्मृतः । एतस्मिन्नपि चान्योन्यं न कुर्यात्पाणिपीडनम् ॥"

**कश्यपः ।**

"कश्यपो रेभरैभो च शाण्डिल्यो देवलोऽसितः । संस्कृतिः पूतिमाषश्च वत्सरो नैध्रुवो दश ॥
"गोत्राणि कश्यपगणास्तत्रान्योन्यं न दोर्ग्रहः" ।

**वसिष्ठः ।**

"वसिष्ठ इन्द्रप्रमदस्त्वाभरद्वसुसंस्कृतिः । कौण्डिन्यः पूतिमाषश्च गौरिवीतः पराशरः ॥
"मैत्रावरुणिशक्ती च उपमन्युगणः स्मृतः । एकादश वसिष्ठस्य गोत्राण्यस्मिन्न दोर्ग्रहः" ॥

**अगस्त्यः ।**

"त्रीण्यगस्तो वातवाहो दार्ढ्यच्युत इति स्मृतः । एषोऽगस्त्यगणस्तस्मिन्न विवाहः परस्परम् ॥
"जमदग्निगणस्यापि विश्वामित्रगणस्य च । न देवरात्रगोत्रेण विवाहः स्यात् परस्परम् ॥
"भरद्वाजगणस्यापि विश्वामित्रगणस्य च । कृतशैशिरशृङ्गैश्च नान्योन्यं पाणिपीडनम् ॥
"काश्यपेयगणस्यापि वासिष्ठस्य गणस्य च । संस्कृतिपूतिमाषाभ्यां विवाहो न परस्परम् ॥

"आत्रेयस्य गणस्यापि विश्वामित्रगणस्य च । धनञ्जयाख्यगोत्रेण नान्योन्यं पाणिपीडनम् ॥
"भरद्वाजगणस्यापि तथा कपिगणस्य च । विवाहो न विधेयः स्यादन्योन्यं च कदाचन ॥
"मौद्गल्यस्य गणस्यापि विरूपस्य गणस्य च । परस्परं न कुर्वीत पाणिपीडनसत्क्रियाम् ॥
"आनष्टयोराकुलयः स्वातयो राजवारयः । सराश्वाहीनजाश्चैव विवाहस्तदनन्तरम् ॥
"तथा वाऽशुचयः प्रोक्ताः सैरन्ध्यो राजसेवकाः । श्वापुलिंगाश्च लैगाक्षिस्तथैव शारदंवकाः ॥
"एते त्रयोदश प्रातर्वसिष्ठा निशि कश्यपाः । गायत्रीयोनिसंबन्धावङ्गीकृत्य प्रवर्तकाः ॥
"अहर्वसिष्ठतां रात्रौ काश्यपत्वमपि स्वयम् । तेषां गोत्रद्वयं मुक्त्वा वासिष्ठं काश्यपं तथा ॥
"सर्वत्रापि विवाह्याः स्युरिति वेदविदो विदुः ।"

एते **संग्रहकार**प्रोक्ता अष्टादशगणाः ॥ अथेदं विविच्यते । सप्तर्षयोऽगस्त्याष्टमास्तदपत्यं च गोत्रम् । प्रव्रियन्ते होत्रध्वर्युभ्यामुत्कीर्त्यन्त इति प्रवराः । समानप्रवरां समानगोत्रां च नोद्वहेत् ।

"पञ्चानां त्रिषु सामान्यादविवाहास्त्रिषु द्वयोः । भृग्वंगिरोगणेष्वेवं शेषेष्वेकोऽपि वार्यते ॥" इति परिभाषा ।

यानधिकृत्य प्रवरा आम्नातास्तादृशा गणा ऊनपञ्चाशत् । तथाहि । भृगूणां सप्तान्तर्गणाः तत्र त्रयो जामदग्न्याः । वत्साः विदाः आर्ष्टिषेणाश्चेति । तत्र वत्सानां पञ्चप्रवराः । भार्गवच्यावन आप्नवान और्वविदेति त्रयो वा । भार्गवौर्वजामदग्न्येति ॥ १ ॥ विदानां पंचप्रवराः । भार्गवच्यावन आप्नवानौर्वविदेति । त्रयो वा भार्गवार्ष्टिषेणानूपेति ॥ ३ ॥

एषां त्रयाणां परस्परमविवाहः । गोत्रैक्यात्प्रवरैक्याच्च । एते पञ्चावर्तिनः चत्वारः शुद्धभृगवः यस्कामित्रयवो वैन्याः शुनकाश्च । यस्कानां त्रयः प्रवराः भार्गववैतहव्यसावेदसेति ॥ ४ ॥

मित्रयूनां त्रयः भार्गवदैवोदासिवाध्र्यश्वेति । एको वा वाध्र्यश्वेति ॥ ५ ॥

वैन्यानां त्रयः भार्गववैन्यपार्थेति ॥ ६ ॥

शुनकानामेकः शौनकेति, गार्त्समदेति वा । द्वौ वा भार्गवगृत्समदेति । त्रयो वा भार्गवशौनहोत्रगार्त्समदेति । भार्गवशौनकगार्त्समदेति वा ॥ ७ ॥

एषां चतुर्णां परस्परं विवाहोऽस्ति । पूर्वोक्तैस्त्रिभिश्च वक्ष्यमाणैश्च । क्वचित्त्वधिकं गणद्वयमुक्तम् । वेदविश्वज्योतिषां त्र्यार्षेयः प्रवरः भार्गववैदवैश्वज्योतिषेति । शाठरमाठराणां भार्गवशाठरमाठरेति भृगोः सप्त वंशा निर्णीताः । अङ्गिरसां षोडश ॥ तत्र गौतमांगिरसां सप्त । आयास्याः शरद्वन्तः कौमण्डादीर्घतमसः कारेणुपालयो वामदेवा औशनसाश्चेति । तत्रायास्यानां त्रयः प्रवराः । आङ्गिरस आयास्यगौतमेति ॥ ८ ॥

शरद्वतां त्रयः । आङ्गिरसगौतमशारद्वतेति ॥ ९ ॥

कौमण्डानां पञ्च आङ्गिरसौचथ्यकाक्षीवतगौतमकौमण्डेति ॥ १० ॥

दीर्घतमसां पञ्च । आङ्गिरसौचथ्यकाक्षीवत गौतमदैर्घतमसेति । त्रयो वा आङ्गिरसौचथ्यदैर्घतमसेति । ११ ।

कारेणुपालीनां त्रयः । आङ्गिरसगौतमकारेणुपालेति ॥ १२ ॥

वामदेवानां त्रयः आङ्गिरसगौतमवामदेवेति । आङ्गिरसवामदेव्यवार्हदुक्थ्येति वा ॥ १३ ॥

औशनसानां त्रयः । आङ्गिरसऔशनसगौतमेति ॥ १४ ॥

एते बौधायनोक्ताः सप्तगौतमाः । सूत्रान्तरेष्वन्येऽपि सप्तोक्ताः । तथाहि । **आपस्तम्बसूत्रे** औचथ्या गौतमाः तेषां त्रयः आङ्गिरस औचथ्यगौतमेति ॥ १ ॥

औशिजानां त्रयः आङ्गिरस औशिजकाक्षीवतेति ॥ २ ॥

**लौगाक्षिसूत्रे** " आयास्या औशिजा गौतमाः तेषां पञ्च । आङ्गिरस आयास्य औशिजगौतम काक्षीवतेति ॥ ३ ॥

**आश्वलायनसूत्रे** । "रहूगणानां त्रयः आङ्गिरसरहूगणगौतमेति ॥ ४ ॥

"सोमराजकीनामाङ्गिरससौमराज्यगौतमेति ॥ ५ ॥

"बृहदुक्थ्यानामाङ्गिरसबार्हदुक्थ्यगौतमेति ॥ ६ ॥

"कक्षीवतामाङ्गिरसऔचथ्यगौतमऔशिजकाक्षीवतेति ॥ ७ ॥

"गौतमानां सर्वेषां परस्परमविवाहः गोत्रैक्यात् प्रायेण प्रवरैक्याच्च । भरद्वाजाङ्गिरसश्चत्वारः । भरद्वाजाः ऐक्षायणाः गर्गाः कपय इति । तत्र भरद्वाजानां त्रयः आङ्गिरसबार्हस्पत्यभारद्वाजेति ॥ १५ ॥

"रौक्षायणानां पञ्चप्रवराः । आङ्गिरसबार्हस्पत्यभारद्वाजवान्हनमातवचसेति ॥ १६ ॥

"गर्गाणां पञ्च । आङ्गिरसबार्हस्पत्यभारद्वाजगार्ग्यशैन्येति । त्रयो वा । आङ्गिरसशैन्यगार्ग्येति, भारद्वाजशैन्यगार्ग्येति वा ॥ १७ ॥

"कपीनां त्रयः । आङ्गिरसआमहीयवऔरुक्षयसेति । आङ्गिरसबार्हस्पत्यभारद्वाजेति वा । आङ्गिरसबार्हस्पत्यकापेयेति वा ॥ १८ ॥ एषां चतुर्णां भरद्वाजानां गोत्रैक्यात् प्रायेण प्रवरैक्याच्च नान्वयः । केचित्तु आमहीयवऔरुक्षयसप्रवरस्य कवेर्विष्णुवृद्धादिवत् केवलाङ्गिरसत्वं स्वीकृत्य भरद्वाजैःसहान्वयमिच्छन्ति । तन्नादर्त्तव्यं । **गोत्रप्रवरमञ्जरीप्रयोगपारिजातस्मृत्यर्थसारादि**बहुग्रन्थविरोधात् । केवलाङ्गिरसस्तु पञ्च । विष्णुवृद्धाः कण्वाः हरिताः रथीतरा मुद्गलाश्च । विष्णुवृद्धानां त्रयः आङ्गिरसपौरुकुत्स्यत्रासदस्य वेति ॥ १९ ॥

"कण्वानां त्रयः । आङ्गिरसआजमीढकाण्वेति आङ्गिरसघोरकाण्वेति वा ॥ २० ॥

"हरितानां त्रयः । आङ्गिरसआम्बरीषयौवनाश्वेति मान्धात्राम्बरीषयौवनाश्वेति वा ॥ २१ ॥

"रथीतराणां त्रयः । आङ्गिरसवैरूपराथीतरेति आङ्गिरसवैरूपपार्षदश्वेति वा ॥ २२ ॥

"मुद्गलानां त्रयः । आङ्गिरसभार्म्यश्वमौद्गल्येति तार्क्ष्यभार्म्यश्वमौद्गल्येति वा ॥ २३ ॥

"विष्णुवृद्धानां पञ्चानामपि केवलाङ्गिरसां स्वस्वगणं हित्वा अन्यैः सह विवाहोऽस्ति क्वचित्त्वन्ये केवलाङ्गिरसः पठ्यन्ते । यथा कुत्सानां त्रयः आङ्गिरसमान्धातृकौत्सेति । एषां हरितैर्न विवाहः । हरित-अष्टाकुत्सपिङ्गशङ्खदर्भभैमगवानामित्या**श्वलायने** सर्वप्रवरसाम्योक्तेः पृषदश्वानामाङ्गिरसपार्षदश्ववैरूपेति दंष्ट्रपार्षदश्ववैरूपेति वा ॥ एषां रथीतरैरविवाहः प्रवरद्वयसाम्यात् । इत्थमङ्गिरसां षोडश गणा निर्णीताः ।

अत्रेश्चत्वारो भेदाः । आद्याः त्रयो गविष्ठिरा वाद्गुतका मुद्गलाश्चेति । आद्यात्रीणां त्रयः आत्रेयार्चनानसश्यावाश्वेति ॥ २४ ॥

"गविष्टिराणां त्रयः । आत्रेयआर्चनानसगाविष्टिरेति ॥ २५ ॥

"वाह्रुतकनां त्रयः । आत्रेयार्चनानसवाह्रुतकेति ॥ २६ ॥

"मुद्गलानां त्रयः । आत्रेयार्चनानसपौर्वातिथेति । एषां चतुर्णां परस्परमविवाहः । क्वचित्तु अतिथीनां त्रयः । आत्रेयार्चनानसआतिथेति ॥ २७ ॥

**इत्यत्रिवंशनिर्णयः ॥**

"कश्यपानां त्रयो भेदाः निध्रुवरेभशांडिलेति । निध्रुवाणां त्रयः काश्यपावत्सारनैध्रुवेति ॥ २८ ॥

"रैभ्याणां त्रयः । काश्यपावत्साररैभ्येति ॥ २९ ॥

"शाण्डिलानां त्रयः । काश्यपावत्सारशाण्डिल्येति काश्यपावत्सारदैवलेति वा काश्यपा वत्सार आसितेति वा । शाण्डिल आसित दैवलेति वा । एषां त्रयाणां कश्यपानां च परस्परमविवाहः ॥ ३० ॥

"वसिष्ठानां चत्वारो भेदाः । वसिष्ठाः कुण्डिना उपमन्यवः पराशरा इति । वसिष्ठानामेकः प्रवरः वासिष्ठेति ॥ ३१ ॥

"कुण्डिनानां त्रयः वासिष्ठमैत्रावरुणकौण्डिन्येति ॥ ३२ ॥

"उपमन्यूनां त्रयः । वासिष्ठेन्द्रप्रमदआभरद्वास्विति ॥ ३३ ॥

पराशराणां त्रयः "वासिष्ठशाक्त्यपाराशर्येति ॥ ३४ ॥

एषां परस्परमविवाहः ।

अथ **विश्वामित्राः** । ते दश । कुशिकाः रोहिताः रौक्षकाः कामकायनाः धनञ्जयाः कताः । अजाः अघमर्षणाः पूरणाः इन्द्रकौशिका इति ॥

तत्र कुशिकानां त्रयः । वैश्वामित्रदेवरातौदलेति ॥ ३५ ॥

"रोहितानां त्रयः । वैश्वामित्राष्टकरौहितेति ॥ ३६ ॥

"रौक्षकाणां त्रयः । वैश्वामित्ररौक्षकरैवणेति ॥ ३७ ॥

"कामकायनानां त्रयः । वैश्वामित्रदैवश्रवसदैवतरसेति ॥ ३८ ॥

"धनञ्जयानां त्रयः । वैश्वामित्रमाधुच्छन्दसधनञ्जयेति ॥ ३९ ॥

"कतानां त्रयः । वैश्वामित्रकात्याआत्कीलेति ॥ ४० ॥

"अजानां त्रयः । वैश्वामित्रामाधुच्छन्दसआज्येति ॥ ४१ ॥

"अघमर्षणानां त्रयः । वैश्वामित्रआघमर्षणकौशिकेति । पूरणानां द्वौ । वैश्वामित्रपारणेति ॥ ४३ ॥

"इन्द्रकौशिकानां त्रयः । वैश्वामित्रैन्द्रकौशिकेति ॥ ४४ ॥

"एषां दशानां परस्परमविवाहः । क्वचित्त्वन्येऽप्युक्ताः । अजानां कुशिकानां च त्रयः वैश्वामित्रआश्मरथ्यवाधूलेति ॥ ४५ ॥

"हर्यश्वादीनां त्रयः । वैश्वामित्रगाथिनरैवणेति । वेणूनां वैश्वामित्रगार्थिनवैणेति । शालंकायनानां वैश्वामित्रशालंकायनकौशिकेति ॥

**इति विश्वामित्राणां निर्णयः ।**

"**अगस्त्या**श्चत्वारः । इध्मवाहाः संभवाहाः सोमवाहा यज्ञवाहा इति ।

"इध्मवाहानां त्रयः । आगस्त्यदार्ढ्यच्युतसेध्मवाहेति ॥ ४५ ॥

"सांभवाहानां त्रयः । आगस्त्यदार्ढ्यच्युतसांभवाहेति ॥ ४६ ॥

"सोमवहानां त्रयः । आगस्त्यदार्ढ्यच्युतसौमवाहेति ॥ ४७ ॥

"यज्ञवाहानां त्रयः । आगस्त्यदार्ढ्यच्युतवाहेति ॥ ४८ ॥

"एषां चतुर्णां परस्परमविवाहः । कात्यायनसूत्रे तु पुलस्त्यपुलहक्रतूनां त्रयः । आगस्त्याहेन्द्रमायोभुयेति । पौर्णमासादीनां त्रयः । आगस्त्यपौर्णमासपारणेति । तदेवं भृगवः सप्त । अङ्गिरसः षोडशाद्व्यामुष्यायणेषु वक्ष्यमाणाः संकृतयोऽप्यङ्गिरसस्ते एके ॥ ४९ ॥

"अत्रयश्चत्वारः । कश्यपास्त्रयः वासिष्ठाश्चत्वारः । विश्वामित्रा दश आगस्त्याश्चत्वारः ।

**इत्थमेकोनपञ्चाशद्गणा निर्णीताः ।**

अथ **द्व्यामुष्यायणाः** । देवरातानां त्रयः प्रवराः । वैश्वामित्रदैवरातऔदलेति एषां विश्वामित्रजमदग्निभ्यां नान्वयः ॥ १ ॥

"पनसानां चैवं ॥ २ ॥

"शौङ्गशैशिरीणां पञ्च । आङ्गिरसबार्हस्पत्यभारद्वाजकात्याआत्कीलेति, आङ्गिरसबार्हस्पत्यभारद्वाजशौङ्गशैशिरेति वा । त्रयो वा आङ्गिरसकात्यआत्कीलेति भरद्वाजकात्यआत्कीलेति वा । एषां विश्वामित्रभरद्वाजाभ्यां न संबन्धः ॥ ३ ॥

"कतानां त्रयः विश्वामित्रकात्यआत्कीलेति । एषामपि विश्वामित्रभरद्वाजाभ्यां नान्वयः ॥ ४ ॥

"कपिलानाम् आङ्गिरसबार्हस्पत्यभारद्वाजवान्दनमातवचसेति । एषामपि विश्वामित्रभरद्वाजाभ्यां नान्वयः ॥ ५ ॥

"वामरथ्यानाम् आत्रेयवामरथ्यपौत्रिकेति । एषामपि अत्रिविश्वामित्राभ्यां नान्वयः ॥ ६ ॥

"धनञ्जयानां वैश्वामित्रमाधुच्छन्दसधनञ्जयेति । एषामप्यत्रिविश्वामित्राभ्यां नान्वयः ॥ ७ ॥

"जातूकर्ण्यानां त्रयः । वासिष्ठात्रेयजातूकर्ण्येति एषामत्रिवासिष्ठाभ्यां नान्वयः ॥ ८ ॥

"संकृतीनाम् आङ्गिरसगौरिवीतसांकृत्येति शाक्यगौरिवीतसांकृत्येति वा । एषां स्वगणस्थैस्तथा वसिष्ठैः कश्यपैश्च न संबन्धः । एषां केवलाङ्गिरोमध्ये पाठस्य फलं चिन्त्यम् ॥ ९ ॥

"पूतिमाषाणां सर्वं संकृतिवत् ॥ १० ॥

"लौगाक्षीणां काश्यपावत्सारावासिष्ठेति वासिष्ठावत्सारकाश्यपेति वा ॥ ११ ॥

**इति द्व्यामुष्यायणवर्णः ॥**

अथ क्वचिद्देशे जातविवाहसंदेहनिरासार्थं किंचिदुच्यते । तत्र तावद्द्वयोर्विवाहो जातस्तन्निर्देशः । वरो भार्गवच्यावनाप्नवानौर्वजामदग्न्येतिपञ्चार्षेयश्रीजामदग्न्यवत्सगोत्रः । कन्या वैश्वामित्रदैव-

रातौदलेतित्र्यार्षेयश्री कौशिकविश्वामित्रगोत्रा । नन्वनयोर्विवाहायुक्तत्वमेकगोत्रत्वेन वा सगोत्रत्वेन सप्रवरत्वेन वचनतो वेति चेन्नैकस्याप्यभावात् । तथाहि । तत्र भृगोर्वर्गा अष्टौ **बौधायनोक्ताः ।** दग्न्याः वत्साः विदाः आर्ष्टिषेणाः यस्का मित्रयवः वैन्याः शुनका इति । तत्र वत्सविदौ जामदग्न्याव-पीतिद्विधा । तथा च भृगवो द्विविधाः जामदग्न्या अजामदग्न्याश्च । तत्र जामदग्न्यास्त्रिविधाः शुद्धजाम-दग्न्याः जामदग्न्यवत्साः जामदग्न्यविदाः । अजामदग्न्यास्तु ते वत्सा विदा आर्ष्टिषेणाः यस्काः मित्रयवः वैन्याः शुनका इति । तत्र शुद्धजामदग्न्या वसुमदादयः ।

**तदुक्तं भागवते,**

"तस्यां वै भार्गवऋषेः सुता वसुमदादयः । यवीयान् जज्ञ एतेषां राम इत्यभिविश्रुतः"॥ इति ।

भार्गवऋषेः जमदग्नेः सुताः । अथ द्विविधवत्सास्तंत्रेणोच्यंते । वत्सः मार्कण्डेयः माण्डूकेयः माण्डव्यः माण्डूकः कामः काक्षेयः कांसेयः । आलेखनः दार्भायणः शार्कराक्षः दैवतायनः शौनकायनः माधूकेयः वार्षिकः सांबः, प्राक्तनायनः पैलः पिङ्गलायनः दाभ्रेषकः बाह्यकिः वैश्वाहीनरिः वैहीनरिः विरोहितः वाहकः बर्हिः वध्रः गोष्ठायनः टिकिः काशकृत्स्नः वाद्धृतकः ऋतभागः ऐतिशायनः । तापनायनः पाणिनिः वाल्मीकिः स्थौलपिण्डिः सौधातकिः जैहीतिः सावर्णिः वाकायनः बाला-यनः सुकृतिः । धूतवः मण्डवित्सौविष्टिः हस्ताग्निः सैंहकः वैकर्णः धोकजिह्वः और्सः कम्बलोदरः कठोरकृत् । हवोलिः सांकरवः कास्तंवरः कारवः तामसः विरूपाक्षः वृक्षाश्वः उच्चैर्मन्युः द्वैमन्यः आर्यापणः मार्कायणः काह्वायनः बाह्वायनः वायनः दैवमन्यः । आर्कायणः कांकायन कायनिः शार्ङ्गरवः चन्द्रमसः गागेयः गांपेयः तौपेयः याज्ञिकः पारिमण्डलिः बाहुमित्रायणः आपिशलिः विप्रपूरिः लौहितायनः उग्रान्तः माशायनः शारद्वतायनः राजतवाहः श्रीवत्सः वात्स्यायनः ।

## इति बौधायनोक्ताः ।

**अन्येऽप्युक्ताः । तथाहि ।** दार्भिः मालायनः बागायनः आनुशातार्किः जैह्यतिः जवान्तिः रेखायनिः पार्वतिः पाणिनिः उच्चयमानः सात्यकर्णिः वालकिः तौलकेशी आर्त्तभागः आजिहितः अतिथिः स्थौमाङ्गारिः स्थौलः सौरवः बर्हिः गार्भायणः गेह्यायणः गोष्ठायणः वैशम्पायनः गालवः वाणकेयः सांकृत्यः ऐतिकायनः भ्राष्ट्रेयः भास्रेयः लाक्षेयः लाकुचिः ललाटिः अविः गोविः सौष्मिकिः सात्य-कायनः कोयष्टिः औडुलोमिः कौञ्चः कौञ्चवाक्षः सारध्वजिः बान्धलेयः मेकर्षिः शाकल्यः पाकानुमतिः अजैकाजिह्निः जैह्मायनिः आशाक्रमः मिगाणिः वासिः सादनः स्योषः स्पन्दतिः कटेरणिः गवेरणिः सौगोलिः मध्योदः

## इति कात्यायनोक्ताः ।

जावालिः ऐतिशायनः विरोहितः माण्डव्यः अवटः मण्डुः वैहः रेतवाहः प्राचीनयोग्यः ।

## इति हिरण्यकेश्युक्ताः ।

मात्स्ये त्वन्येऽप्युक्ताः नाडायनः वैतिहव्यः रोहित्यायनः कामालिविः सावर्णिः विकस्वरः विकः । जैलिकेशिः जहिमः वीतिनः फेनयः ललिनः शिखायातिः जलधिः सैम्याजित्कृत्सः पैङ्गला-यनिः दिवस्पातिः ऋषभः सुतः स्तनः कोपयज्ञः मिश्रयज्ञः आमिलायनः हायानिः वैकर्णिपिः

भालकायनिः ललामः शाक्यायतिः मलपतिः कौलिः कोटरः साक्षिः सान्द्रम नैकजिह्वः जिह्वाशून्यः केह्नलैटिः हिकश्वः सौरः नैमिष्यः लौगाक्षिः गवेरणिः पैर्णसौगन्धिः कान्तिकृदिति । कैश्चिदन्येऽप्युक्ताः । विलमृत्सोमदायनः स्वानुमतिः मण्डाचित्रः शौकायणः त्वाष्ट्रिः कोचहुण्डिः शौनायनः शाकपूणिः व्रीहंमतिः मायामरिः क्रोशनः मौद्गल्यः कारवचः सान्तपनायनः सेलार्कः गेल्हः भैल्लकः सतुषः तत्वः औलन्थिः वाटार्गिः रागिः श्येनयागतिः शौद्धकर्णिरिति । तत्र जामदग्न्यवत्साः पञ्चप्रवराः भार्गवच्यावनाप्नवानौर्वजामदग्न्येति बौधायनः भार्गवौर्वजामदग्न्येति त्रय इति हिरण्यकेशी आपस्तम्बश्च । शुद्धजामदग्न्यानां भार्गवच्यावनाप्नवानेतित्रय इत्याश्वलायनः । अजामदग्न्यवत्सानां भार्गवच्यावनाप्नवानेति इति नारायणवृत्तिः । अथ विश्वामित्रास्ते त्रयोदश । कुशिकारोहिता इति पाठो बौधायनीये लोहिता इत्यापस्तम्बीये रौक्षकाः कामकायनाः कताः धनञ्जयाः अजाः अघमर्षणाः पूरणा इन्द्रकौशिका इति बौधायनः। रोहिणा रेवणाः वेणवा इत्याश्वलायनः । तत्राद्याः कुशिकाः पर्णजङ्घाः चारक्यः औदनिः मणिः बृहदग्निः आधहयः । अपाययः कामन्तकः बद्धकपः लामंकायनः शालंकायनः स्यांकायनः त्रयो लोकः गौरः सौगन्तव्यः यमदूतः आनभिन्नः तारकायणः चौवल जाबालः याज्ञवल्क्यः वितण्डः भुवनः सौश्रुतः औपदहनः औदुम्बरः दुर्दरः भ्राष्ट्रः श्यामेयः चैत्रेयः तालोचनः मयूरः सौमत्यः चित्रन्तनयः श्वेततायनः मृन्तन्तुः अन्येऽप्यन्तुशब्दान्ताः बाभ्रव्यः कालायः उत्सरय इति बौधायनोक्ताः ।

देवरातः औद्दालकिः चालकिः वालखिल्यः उलूखलः बभ्रुः शालः विशालः शालवन्तः वचः इत्यापस्तम्बोक्ताः । यज्ञवान्कौलोत्यः ईर्मटिः सांशित्यः बाराकिः शालवत इति हिरण्यकेश्युक्ताः। चिकितः गालवः कालः वचः मन्तुः तन्तुः कुशिक इति आश्वलायनोक्ताः । भागवते द्वादशे देवरातसुतो याज्ञवल्क्य उक्तः वैकृतिः कलशङ्कुः आश्वलायनः शामायनः सैन्धवायनः कारीषिः संसृत्यः औलोप्यः पार्मोदरिः गार्षिः क्षरयः पाण्डलिरिति मात्स्योक्ताः । वतण्डः कालः पाञ्जयः सौभेयः आवहः। उलूखलः जैमिनिः सांकृतिः औभेयः आर्जुनाक्षिरित्येतेऽपि कैश्चिदुक्ताः। एते कुशिकाः त्रिप्रवराः सर्वे वैश्वामित्रदैवरातौदलेति बौधायनाद्युक्तेः ।

**भारते** दानधर्मेषु विश्वामित्रपुत्रा उक्ताः ।

"तस्य पुत्रा महात्मानो ब्रह्मवंशविवर्द्धनाः । तपस्विनो ब्रह्मविदो गोत्रकर्तार एव च ॥
"मधुच्छन्दश्च भगवान्देवरातश्च वीर्यवान् । अक्षीणश्च शकुन्तश्च बभ्रुः कालपयस्तथा ॥
"याज्ञवल्क्याश्च विख्यातस्तथा स्थूणो महाव्रतः । उलूको यमदूतश्च तथर्षिः सैन्धवायनः ॥
"वल्गुजङ्घश्च भगवान् गालवश्च महानृषिः । ऋषिर्वज्रस्तथा ख्यातः शालंकायन एव च ॥
"नीलाख्यो नारदश्चैव तथा कूर्चमुखः स्मृतः । बाहुलिर्मुशलश्चैव वक्षोग्रीवस्तथैव च ॥
"आन्घ्रिको नैकदृक् चैव शिलायूपः शितः शुचिः । चक्रको मारुतन्तव्यो वातघ्नोऽथाश्वलायनः ॥
"श्यामायनोऽथ गार्ग्यश्च जाबालिः सुश्रुतस्तथा । कारीषिरथ संश्रुत्यः परः पौरवतन्तवः ॥
"महानृषिश्च कपिलस्तथर्षिस्ताडकायनः । तथैव चोपगहनस्तथर्षिश्चासुरायणः ॥
"मार्दमर्षिर्हिरण्याक्षो जङ्घारिर्बाभ्रवायणिः । सुतिर्विसुतिः सूतश्च सुरकृत्तु तथैवहि ॥
"आरालिर्नाचिकश्चैव चाम्पेयोक्षयनौ तथा । नवतन्तुर्वकनखः सूपनोरतिरेव च ॥

"अम्भोरुहश्चरुर्मत्स्यः शिरीषी चाथ गार्दभिः । ऊर्जमो निरुपेक्षी च नारदी च महानृषिः ॥
"विश्वामित्रात्मजाः सर्वे मुनयो ब्रह्मवादिनः" इति ।

**रामायणे** तु इत्थमुक्तम् ।

"तस्य तद्वचनं श्रुत्वा विश्वामित्रो महातपाः । सान्त्वयित्वा बहुविधं पुत्रानिदमुवाच ह ॥" इत्युपक्रम्य

"मुनेस्तद्वचनं श्रुत्वा मधुच्छन्दादयः सुताः । साभिमानं नरश्रेष्ठ सलीलमिदमब्रुवन् ॥
"कथमात्मसुतान् हित्वा त्रायसेऽन्यसुतं विभो । अकार्यमिव पश्यामः श्वमांसमिव भोजने ॥
"तेषां तद्वचनं श्रुत्वा पुत्राणां मुनिपुङ्गवः । क्रोधसंरक्तनयनो व्याहर्तुमुपचक्रमे ।
"श्वमांसभोजिनः सर्वे वासिष्ठा इव जातिषु । पूर्णवर्षसहस्रं तु पृथिव्यामनुवत्स्यथ ।
"कृत्वा शापसमायुक्तान्पुत्रान्मुनिवरस्तदा" ॥ इति

**बह्वृचब्राह्मणे हरिश्चन्द्रषट्के** तु इत्थमुक्तम् । "तस्य ह विश्वामित्रस्यैकशतं पुत्रा आसुः । पञ्चाशदेव ज्यायांसो मधुच्छंदसः पञ्चाशत् । कनीयांसस्तद्ये ज्यायांस इत्यादिना पूर्वेषां शापो मधुच्छंदआदीनां वर" इति ।

**भागवते**ऽपीत्थमुक्तम् ।

"विश्वामित्रस्य चैवासन् पुत्रा एकशतं नृप । मध्यमस्तुमधुच्छन्दा मधुच्छन्दस एव ते ॥"

ते सर्वे लिङ्गसमवायन्यायेन प्राणभृत उपदधातीतिवन्मधुच्छन्दस एवोच्यन्ते । तथा च **श्रुतिः** प्रागुक्तेत्यर्थः । एवं सति जामदग्न्यवत्सगोत्रस्य कुशिकगोत्रेण विवाहे न बाधकं तयोरेकैकगोत्रत्वेन तयोर्भेदस्य स्पष्टत्वेनाविवाहप्रयोजकस्य एकगोत्रत्वसदृशगोत्रत्वभेदेन द्विविधसगोत्रत्वस्याभावात् । सप्तानामगस्त्याष्टमानां विश्वामित्रादीनाम् ऋषीणां तदपत्यं तद्गोत्रमिति सिद्धान्ते न तत्र तयोः पृथक् पाठात् । तत्राद्यमेकैकगणान्तःपातिषु तत्र मूलभूतस्य वत्सादेरेकस्यैव गोत्रत्वात् यत्रापि गणावान्तर ऋषीणां गोत्रत्वं तत्रापि तदपत्यानि प्रति तेषामेकत्वमेव । द्वितीयं तु भिन्नभिन्नगणान्तःपातिषु वत्सविदयोर्भिन्नयोरपि गोत्रयोरेकसप्तर्ष्यपत्यत्वेन सादृश्यात् एकसप्तर्ष्यपत्यत्वं च तदनुवृत्त्या ज्ञायते । तदनुवृत्तिरपि द्वेधा । श्रूयमाणतया सत्तया च । आद्या वत्सादिषु जमदग्न्यादेः तत्प्रवरेषु जामदग्न्यादिपदसंकीर्तनात् । द्वितीया कपिषु भरद्वाजस्य तत्प्रवरेषु भारद्वाजपदसंकीर्तनाभावात् । केवलं सूत्रादिः गतानुक्रमणेषु भारद्वाजगोत्रसंदंशपाठेन तदनुवृत्तिः प्रतीयत इति । तदुक्तं **बौधायनेन** । "एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते । तावत्समानगोत्रत्वं विना भृग्वङ्गिरोगणादिति" । किंचाविवाहप्रयोजकमेकप्रवरसाम्यद्वित्रिप्रवरसाम्यभेदेन द्विविधं समानप्रवरत्वमपि तयोर्नास्ति, उभयोः प्रवराणां भेदस्य स्पष्टत्वात् । तत्राद्यं भृग्वङ्गिरोगणभिन्नेषु । प्रकृते तु वत्सस्य भृगुगणत्वं कुशिकस्य तद्भिन्नगणत्वम् । द्वितीयं भृग्वङ्गिरोगणेषु । तत्र पञ्चप्रवरणं त्रिप्रवरसाम्यं त्रिप्रवराणां द्विप्रवरसाम्यं पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोऽपि वारयेदित्युक्तेः शेषेष्वेकोऽपि प्रवरः समानश्चेद्विवाहं वारयेदित्यर्थः । प्रकृते तु इदमपि उक्तरीत्या नास्त्येवेति स्फुटमेव ।

इदं चासंकीर्णं समानप्रवरत्वं केवलभृग्वङ्गिरोगणेष्वविवाहप्रयोजकं तेषां अष्टर्ष्यपत्यरूपगोत्रत्वाभावेन समानगोत्रत्वस्याप्रसक्ते अत एव तेषु द्वित्रिप्रवरसाम्याभावे विवाह एव भवति । समानगोत्रत्वं चासंकीर्णं कपीनां भरद्वाजगणैः सहाविवाहप्रयोजकं तेषामेकप्रवरसाम्येऽप्यङ्गिरोगणत्वेनापेक्षितद्वित्रिप्रवरसाम्या-

भावात् संकीर्णे त्वेतें प्रायशः सर्वत्रैवेति बोध्यम्। द्विगोत्रत्वस्य तु अत्र संभावनैव न । तथाहि यस्य नामसाम्ये पठ्यमानभिन्नगणस्थतत्तत्प्रवरेषु किंचित्प्रवरसाम्यं सर्वप्रवरसाम्यं वा स द्विगोत्रः ।अस्त्येतत्संकृत्यादिषु विश्वामित्रगणस्थशालङ्कायनस्य अन्येन नामसाम्येऽपि किंचित्प्रवरसाम्याभावान्न द्विगोत्रत्वं लोके सनाम्नां भिन्नानामनेकशो दर्शनात्। अत एव "विश्वामित्रैरात्रिभिश्च न विवाह्या धनञ्जयाः" । यद्वा "धानञ्जयौ भिन्नौ शब्दमात्रं न भिद्यते" इति **त्रिकाण्डमण्डने** उक्तम्। वैश्वामित्रमाधुच्छन्दसधानञ्जयेति आत्रेयार्शनानसधानञ्जयेत्युभयत्र धनञ्जयानुवृत्तेरुभयैरविवाहो धनञ्जयानाम् । यद्वा अत्रिगणपठितश्च धनञ्जयोऽन्यः विश्वामित्रगणपठितश्च धनञ्जयोऽन्यः प्रत्यभिज्ञाकारणाभावात् केवलं धनञ्जयशब्द एवोभयत्र साधारणः तस्मान्माधुच्छन्दसधनञ्जयानां विश्वामित्रैरविवाहः । अन्येषां धनञ्जयानामात्रिभिरविवाह इति तद्भाष्यम् । अत्रीणां तु आत्रेयार्चनानसशावाश्वेति त्रयः प्रवराः । एतेनात्रिधनञ्जययोरपि जातविवाहो न युक्त इति केषांचिदाक्षेपः परास्त इति बोध्यम् । एवं कश्यपविश्वामित्रगणस्थदेवरातयोः एवमङ्गिरोऽत्रिगणस्थमुद्गलयोः शुनकानां द्वित्रिप्रवरेषु किंचित्प्रवरसाम्येऽपि न द्विगोत्रत्वं भिन्नगणस्थत्वाभावात् । पृषदश्वानां गौतमेष्वाश्वलायनेन पाठादापस्तम्बेन च केवलाङ्गिरसेषु रथीतरेषु पाठात्समानप्रवरत्वाच्च द्विगोत्रत्वम् ।

तथा च । **स्मृत्यर्थसारे**

"संकृतीनां द्विवंश्यत्वाद्वसिष्ठैश्च चतुर्विधैः । स्ववर्गीयैः सगोत्रत्वात्प्रवरैक्याच्च नान्वयः ॥
"वसिष्ठैः कश्यपैर्नित्यं लौगाक्षीणामनन्वयः । विश्वामित्रात्रिगोत्राभ्यां नोद्वहेयुर्धनंजयाः ॥
"अत्रेस्तु पुत्रिकापुत्रा वामरथ्यादयस्तथा। तथैव जातुकर्ण्याश्च वसिष्ठैरात्रिभिः सह ॥
"कपिलानां भरद्वाजैर्विश्वामित्रैश्च नान्वयः । भरद्वाजेन शृङ्गेन विश्वामित्रस्य शैशिरेः ॥
"क्षेत्रे जातो द्विगोत्रार्षिः प्रोच्यते शौङ्गशैशिरिः। विश्वामित्रभरद्वाजैस्तज्जानां तेन नान्वयः॥"इति

**त्रिकाण्डमण्डने प्रवरमञ्जर्यां** चाप्येवं। न च कपिलस्य विश्वामित्रेष्वपाठात्कथं तैर्विवाहनिषेध इति वाच्यम्।"देवा वा इमं मह्यमरासतेति सहदेवरातो वैश्वामित्र आस तस्यैते कापिलेयबाभ्रवा" इत्यै**तरेयब्राह्मणात्क**पिलस्य देवरातद्वारा विश्वामित्रसंबन्धावगतेः। स च शुनःशेपो देवैर्दत्तत्वाद्देवरात इति नामधारी विश्वामित्रपुत्र एवास । तस्य च देवरातस्य एते कापिलगोत्रोत्पन्ना बभ्रुगोत्रोत्पन्नाश्च बन्धवोऽभवन्निति तद्भाष्यम् । किंच वाचनिकस्तयोर्विवाहनिषेध इत्यपि न तादृशवचनाभावात् । ननु **संग्रहे** देवरातो जामदग्न्येषु गणितः, **प्रयोगपारिजाते**ऽप्येवमितिचेन्न उक्तोत्तरत्वात् । तावताऽपि प्रकृते उक्तरीत्या क्षत्यभावाच्च । बौधायनादिसूत्रेषु क्वापि देवरातस्य जामदग्न्येष्वनुक्तत्वाच्च । नन्वेवमपि द्व्यामुष्यायणो देवरातः संग्रहकृतोक्तः जमदग्निगणस्यापि विश्वामित्रगणस्य च न देवरातगोत्रेण विवाहः स्यात्परस्परामिति । **कृष्णीये** च

"देवराता विवाह्याः स्युः सर्वत्रेति च संमताः । विश्वामित्रान् जामदग्न्यान्वर्जयित्वा ततोऽन्यतः॥"इति ।

"देवरातादीनां मातामहैः शुद्धजामदग्न्यैर्न विवाह" इति **गृह्यपद्धतावादित्यभट्टीयां धर्मप्रदीपे** चोक्तमिति चेन्न । तस्य सर्वस्योक्तरीत्या निर्मूलत्वात् । अत एव **स्मृत्यर्थसारत्रिकाण्डमण्डनप्रवरमञ्जरी**ग्रन्थादिषु संस्कृत्यादिवत् देवरातस्य द्विगोत्रत्वेन गणनं न कृतम् । ननु देवरा स्य जामदग्न्यत्वस्य **हरिवंशे** स्पष्टमुक्तत्वेन न तदंशे निर्मूलत्वम् । तथाहि

"उवाचाहूयतां भर्ता ऋचीको भार्गवस्तदा। उपयोज्यश्चरुरयं त्वया मात्रा त्वयं तव ॥
"ततः सत्यवती पुत्रं जनयामास भार्गवं। तपस्यभिरतं दान्तं जमदग्निं शमात्मकम् ॥
"भृगोश्चरुविपर्यासे रौद्रवैष्णवयोः पुरा। यजनाद्वैष्णवोऽप्यंशो जमदग्निरजायत ॥
"रेणुकायां तु कमल्यां तपोविद्यासमन्वितः। आर्चीको जनयामास जामदग्न्यं सुदारुणम् ॥
"और्वस्यैव ऋचीकस्य सत्यवत्यां महायशाः। जमदग्निः सुतो वीर्यात् जज्ञे ब्रह्मविदां वरः ॥
"मध्यमश्च शुनःशेपः शुनःपुच्छः कनिष्ठकः। विश्वामित्रं तु दायादं गाधिः कुशिकनन्दनः ॥
"जनयामास पुत्रं तु तपोविद्याशमात्मकं। प्राप्य ब्रह्मर्षिसमतां योऽयं सप्तर्षितां गतः ॥
"विश्वामित्रस्तु धर्मात्मा नाम्ना विश्वरथः स्मृतः। जज्ञे भृगुप्रसादेन कौशिकाद्वंशवर्धनः ॥
"विश्वामित्रस्य पुत्रास्तु देवरातादयः स्मृताः। विख्यातास्त्रिषु लोकेषु तेषां नामानि संशृणु ॥
"देवश्रवाः कतश्चैव यस्मात्कात्यायनाः स्मृताः। शालावत्यां हिरण्याक्षो जज्ञे रेणौ तु रेणुमान् ॥
"सांकृतिर्गालवश्चैव मुद्गलश्चेति विश्रुताः। मधुच्छन्दादयश्चैव देवलश्च तथाऽष्टकः ॥
"कच्छपः पूरितश्चैव विश्वामित्रस्य वै सुताः। तेषां ख्यातानि गोत्राणि कौशिकानां महात्मनाम् ॥
"पाणिना बभ्रवश्चैव करजप्यास्तथैव च। पार्थिवा देवरताश्च शालंकायनबाष्कलाः ॥
"लौहित्या यमदूताश्च तथा कारिषयः स्मृताः। सौश्रुताः कौशिका राजन् तथाऽन्ये सैन्धवायनाः ॥
"देवला रेणवश्चैव याज्ञवल्क्याघमर्षणाः। औदुम्बराह्यभिग्लानास्तारकायनचञ्चुलाः ॥
"शालावत्या हिरण्याक्षाः सांकृत्या गालवास्तथा। बादरायणयश्चैव विश्वामित्रस्य धीमतः ॥
"ऋष्यन्तरविवाह्याश्च कौशिका बहवः स्मृताः। पौरवस्य महाराजब्रह्मर्षेः कौशिकस्य च ॥
"संबन्धोऽप्यस्य वंशेऽस्मिन् ब्रह्मक्षत्रस्य विश्रुतः। विश्वामित्रसुतानां तु शुनःशेपोऽग्रजः स्मृतः ॥
"भार्गवः कौशिकत्वं हि प्राप्तः स मुनिसत्तमः। विश्वामित्रस्य पुत्रस्तु शुनःशेपोऽभवत्किल ॥
"हरिदश्वस्य यज्ञे तु पशुत्वे विनियोजितः। देवैर्दत्तः शुनःशेपो विश्वामित्राय वै पुनः ॥
"देवैर्दत्तः स वै यस्माद्देवरातस्ततोऽभवत्। देवरातादयः सप्त विश्वामित्रस्य वै सुताः ॥
"दृषद्वतीसुतश्चापि विश्वामित्रस्तथा मतः। अष्टकस्य सुतो लौहिः प्रोक्तो जह्नुगणो मया ॥"

इति भृगोर्भार्गवस्य ऋचीकस्य यजनाद्देवताराधनाद्वैष्णवः पालनकर्माऽप्यंशः शमात्मको जमदग्निरजायत आर्चीको जमदग्निः जामदग्न्यं रामं सुदारुणं रुद्रांशत्वात्। और्वस्य ऊर्वगोत्रापत्यस्य। अत एव **दानधर्मे** उक्तम्

"तां वव्रे भार्गवीं श्रीमांश्च्यवनस्यात्मसंभवः। ऋचीक इति विख्यातो विपुले तपसि स्थितिः ॥"इति।

भार्गवीं भृगोर्गोत्रापत्यं भृगोः ऋचीकस्य प्रसादेन देवश्रवाः कतिः हिरण्याक्षश्च शालावत्यां रेणुमत्प्रभृतयो देवलाता रेणुसंज्ञायामष्टकादयस्त्रयो दृषद्वत्यां गोत्राणि पौत्रादयः पाणिनादयो द्वादश देवलाः देवलपुत्राः रेणवः रेणोः पौत्रा इत्यर्थः। याज्ञवल्क्यादयः षट् शालावतीपौत्राः हिरण्याक्षपुत्राः सांकृत्या गालवाश्च रेणोः पौत्राः बादरायणाश्चेत्यत्र नारायणितिरश्चेति पाठान्तरमेते सांकृत्यादयोऋष्यन्तरे प्रवरभेदे विवाहो येषाम् य ऋष्यन्तरविवाह्याः पौरवस्य राज्ञः ब्रह्मर्षेर्वसिष्ठादिकस्य ताभ्यां सह कौशिकस्य संबन्धोऽस्तीत्यर्थः। भार्गव इति पूर्वं जमदग्नेः कनिष्ठो भ्राता शुनःशेप इत्युक्तत्वात् हरिदश्वस्य हरिश्चन्द्रस्य देवा वा इमं मह्यमरासतेति स ह देवरातो विश्वामित्र आसेति श्रुत्यर्थं गृह्णाति देवैरिति इति चेन्न तस्य जमदग्निभ्रातृत्वेऽपि जामदग्न्यत्वाभावात्। एतेन जामदग्न्यत्वे मूलान्तरमप्य-

पास्तम् । "आङ्गिरसो जन्मनाऽस्याजीगर्त्तिः श्रुतः कविः ऋषेवैता महात्ततोर्माऽवगाः पुनरेहि मामिति" **बह्वृचब्राह्मण**विरोधाच्च । **भारतादौ** भार्गवत्वोक्तेराङ्गिरसत्वं श्रुत्युक्तं कल्पान्तराभिप्रायेण ज्ञेयम् । किंच जामदग्न्यानाम् उक्तरीत्या तन्मातामहत्वाभावात् देवरातस्य मातुलो विश्वामित्रो गाधिर्मातामहः । अत एव "तर्व्यं तमृषिभिः सार्द्धं मातुलं परमातुर" इति **रामायणे बालकाण्डे** उक्तम् । देवरातस्य द्व्यामुष्यायणत्वं तु यद्यपि "यथैवाङ्गिरसः सन्नुपेयां तव पुत्रतामि"त्यादिना "अधीयत देवरातो रिक्थयोरुभयो ऋषिः । जह्नूनां चाधिपत्ये दैवे वेदे च गाथिनामि"त्यन्तेन बह्वृचब्राह्मणे स्पष्टमुक्तम् । उभयत्राङ्गिरस इत्यस्याङ्गिरोगोत्रोत्पन्न इत्यर्थः । पैतामहादित्यस्य पितामहेन प्रजापतिना संपादितात्तन्तोः संतानादाङ्गिरोवंशादयगतो मा भवेत्यर्थः । यथैवेत्यस्याहमिदानीमङ्गिरोगोत्रः सन्तत्परित्यागेन तव पुत्रत्वं येनैव प्रकारेणोपेयां तथैवानुगृहाणेति शेषः अस्याशयः पूर्वैरुक्तः ।

"पुराऽऽस्मानं नृपं विप्रं तपसा कृतवानसि । एवमाङ्गिरसं मां त्वं वैश्वामित्रमृषे कुरु " इति ।

न चाङ्गिरसो भरद्वाजादिभिन्नत्वेन कथं गोत्रत्वमिति वाच्यं

"मूलगोत्राणि चत्वारि समुत्पन्नानि भारत । अङ्गिर कश्यपश्चैव वसिष्ठो भृगुरेव च ॥
"कर्मतोऽयानि गोत्राणि समुत्पन्नानि पार्थिव" ॥

इति **भारतोक्तेः** । विश्वामित्रो जमदग्निरित्यादिबौधायनकात्यायनाश्वलायनवाक्येनोपसंहारा**द्भारतोक्तं** मूलभूतवसिष्ठाद्यपत्यपरमिति न विरोधः । न चैतावता चत्वार्येव गोत्राणीति भ्रमितव्यं मूलशब्दप्रयोगेण चतुर्णामादावुत्पन्नत्वमात्रे तात्पर्यात् । एतेन

"भृग्वङ्गिरः कश्यपात्रिविश्वामित्रवसिष्ठकाः । अगस्त्योऽमी गोत्रमुख्यास्तेषां वंशास्त्वनेकशः॥"

इति संग्रहवचोव्याख्यातं मुख्यशब्दप्रयोगात्, तथाप्युक्तभारतात् भिन्नोऽपि विश्वामित्रपौत्रादिमध्ये शुद्धतद्गोत्रो देवरातोऽस्ति कश्यपगणस्थदेवरातवत् । **आपस्तंबीये**ऽपि स एवोक्तः । अत एव कुशिकगोत्रप्रवरमध्ये तदुल्लेखः देवरातगोत्रप्रवरमध्ये द्व्यामुष्यायणदेवरातोल्लेखः । अत एव सर्वैरपि **प्रवरमञ्जर्यादिनिबन्धकारै**रेकैकगोत्रकथनावसरे विश्वामित्रगणप्रसंगे बौधायनादिसंमत्या कुशिकानां त्रयः प्रवराः वैश्वामित्रदैवरातौ इलेत्युक्त्वा अथ द्विगोत्रा इति प्रतिज्ञाय **संग्रहे** देवरातानां त्रयः प्रवराः वैश्वामित्रदैवरातौ इलेत्युक्तं तस्माद्देवरातगोत्रस्य द्व्यामुष्यायणत्वेन गोत्रद्वये विवाहाभावेऽपि कुशिकगोत्रस्य जामदग्न्यवत्सगोत्रेण सह विवाहे निर्दृष्टः । अत एव **संग्रहकृता**ऽपि "जमदग्निगणस्यापि विश्वामित्रगणस्य च । न देवरातगोत्रेण विवाहः स्यात्परस्परमि"त्युक्तम्, न तु कुशिकगोत्रेणेत्युक्तम् । परंतु जमदग्निगणस्येत्येतावत्तत्रानुचितमाङ्गिरोगणस्य भार्गवगणस्य वेति तु वक्तुमुचितम् उक्तयुक्तेर्ऋचीकस्य तत्वादत एव "अधीयत देवरातो रिक्थयोरुभयोर्ऋषिरिति" ब्रह्मणमधीयतमहर्षिभिः स्मर्यते अयं देवरातो द्व्यामुष्यायणत्वादुभयोरजीगर्तविश्वामित्रयोर्धनहर्ताऽजीगर्तकूटस्थजह्नुगणस्वामी विश्वामित्रपितृगाथिगणस्वामी चेति व्याख्यातं **भाष्ये** । यद्यपि **श्रुतौ** देवरातोऽजीगर्तस्य सौयवसेरशनया परीतस्य पुत्र इत्युक्तं **भारते, रामायणे** च ऋचीकस्य पुत्र इत्युक्तम् इति विरोधावभासः तथाप्यजीगर्तस्यैव ऋचीक इति नामान्तरं अत एव **भागवते** नवमस्कंधे ( ७ अध्याये )

"षष्ठं संवत्सरं तत्र चरित्वा रोहितः पुरीम् । उपव्रजन्नजीगर्त्तादक्रीणन्मध्यमं सुतम् ॥ २० ॥
"शुनःशेपं पशुं पित्रे प्रदाय समवन्दत ।" इत्युक्त्वा ( अ. १५ )
"तस्य सत्यवतीं कन्यामृचीकोऽयाचत द्विजः । वरं विसदृशं मत्वा गाधिर्भार्गवमब्रवीत् ॥

"प्रसादितः सत्यवत्या मैवं भूदिति भार्गवः । अथ तर्हि भवेत्पौत्रो जमदग्निस्ततोऽभवत् ॥ " इत्युक्तम्
अग्रे तत्रैवोक्तम् ॥ ( अ. १६ श्लो. ३०–३७ )

"पुत्रं कृत्वा शुनःशेपं देवरातं च भार्गवम् । आजीगर्तिं सुतानाह ज्येष्ठ एष प्रकल्प्य तान् ॥
"यो वै हरिश्चन्द्रमखे विक्रीतः पुरुषः पशुः । स्तुत्वा देवान्प्रजेशादीन्मुमुचे पाशबन्धनात् ॥
"यो रातो देवयजने देवैर्गाधिषु तापसः । देवरात इति ख्यातः शुनःशेपस्तु भार्गवः ॥
"ये मधुच्छन्दसः श्रेष्ठाः कुशलं मेनिरे न तत् । अशपत्तान्मुनिः क्रुद्धो 'म्लेच्छा भवत दुर्जनाः'॥
"स होवाच मधुच्छन्दाः सार्द्धं पञ्चाशता ततः । यन्नो भवान्संजानीते तस्मिंस्तिष्ठामहे वयम् ।
"ज्येष्ठं मन्त्रदृशं चक्रुस्त्वामन्वंचो वयं स्म हि । विश्वामित्रः सुतानाह वीरवन्तो भविष्यथ ॥
"ये मानं मेऽनुगृह्णंतो वीरवंतमकर्त माम् । एष वः कुशिका वीरो देवरातस्तमन्वित ॥
"अन्ये चाष्टकहारीतजयक्रतुमदादयः । एवं कौशिकगोत्रं तु वैश्वामित्रैः पृथग्विधम् ॥
"प्रवरान्तरमापन्नं तद्धि चैवं प्रकल्पितम" ॥

इति तस्य ह विश्वामित्रस्यैकशतमित्यादिश्रेष्ठ्यावगाथिना इत्यन्तश्रुत्यर्थ एव **भगवता व्यासेन** प्रदर्शितः । हे कुशिका एष देवरातो वो युष्मदीयः कौशिक एव यतः वीरो मत्पुत्रः तमेनमन्वितानुगच्छत । अन्ये चाष्टकादयस्तस्य सुता आसन् । उपसंहरति ।**एवमिति**। एके शप्ताः एकेऽनुगृहीताः अन्यस्तु पुत्रत्वेन स्वीकृत इत्येव कौशिकगोत्रं पृथग्विध नानाप्रकारं जातं तच्च प्रवरान्तरमापन्नं प्राप्तं हि यस्मादेवं देवरातस्य ज्येष्ठत्वेन तत्प्रकल्पितमित्यर्थः ।

एवं च विश्वामित्रपुत्रेषु देवरातस्य ज्येष्ठत्वावगत्या आश्वलायनबौधायनादिभिः कौशिकानां देवरातप्रवरत्वस्योक्तस्य एतद्देवरातपरतयोपपादनेऽपि न क्षतिः । तावताऽपि कौशिकगोत्राणां देवरातगोत्राणां च मिथो विवाहाभावेऽपि जामदग्न्यवत्सगोत्रेण विवाहे दोषलेशाभावात् । प्रवरश्च तस्मिन्नेव वंशेऽवांतरभेदो न तु वंशान्तरमित्यपि बोध्यम् । यद्यपि **बह्वृचब्राह्मणे भारते भागवते** च हरिश्चन्द्रयज्ञविषयकमिदमुक्तं **रामायणे** चाम्बरीषयज्ञविषयकमिदमुक्तमिति विरोधस्तथापि प्रागवत्कल्पभेदेन परिहारो बोध्यः । यद्यपि ब्राह्मणे शुनःपुच्छो ज्येष्ठ उक्तस्तथापि भारतादिप्रामाण्याज्जमदग्नेरेव तन्नामान्तरं बोध्यं भारताद्युक्तः शुनःपुच्छस्य श्रुत्युक्तस्य शुनो लाङ्गूलस्य पर्यायः एवं । च देवरातस्य द्व्यामुष्यायणत्वेन द्विगोत्रत्वेऽपि जामदग्न्यत्वाभावात्तैर्विवाहे न दोषः जमदग्न्यनुजत्वेन जामदग्न्यत्वं तु मूर्खप्रलपितमेतेन हरिवंशादितो जामदग्न्यत्वमिति कैश्चिदुक्तमपास्तमित्यलं भूयसा । ननु निषेधोलंघने दैवतः संपन्ने सर्वत्र किं यथासंभवं पापमेव वोढुरुतान्यदपि किंचित्किंचित्तदपि समं विषमं वा । तत्राद्यं सर्वत्र स्मृत्यादौ प्रसिद्ध हृदि निधाय द्वितीयमाह । **सापिण्डेति** ।

अयं भावः । रतिपुत्रधर्मार्थित्वेन विवाहस्त्रिविधस्तत्र रतेः पुत्रस्य धर्मस्य च रोगिण्यामसंभवात्सा तत्र सर्वथा न कार्या । अन्यास्तु तत्रानुकूला एव तत्रापि पुत्रधर्मयोः सवर्णा मुख्या

अन्यानुकल्पः विवाहश्च पाणिग्रहणादिसंस्कारः स च भार्यात्वोत्पादकः। भार्यात्वं च त्रिविधदृष्टादृष्टजनकआश्रमसंपत्त्या तदभावप्रयुक्तदोषाभावजनकतादृशसंस्कारजन्यधर्मविशेषः। स च सवर्णायामपर्युदस्त्यास्तायां शुद्धो निर्विघ्नः पर्युदस्तामध्येऽपि सपिण्डासगोत्रासप्रवरासु विवाहे निषेधप्रायश्चित्तयोरुक्तेस्तस्यास्त्यागस्य मातृवत्पालनस्य तस्यां गमनपुत्रोत्पादनयोः प्रायश्चित्तस्य चोक्तत्वेन त्रिविधदृष्टाभावेन संस्कारजन्यादृष्टस्य चोक्तसंवलितनिषेधातिक्रमजदुरदृष्टेन प्रतिबन्धादनधिकारिणा कृतमकृतमेवेतिरीत्या तस्यां जातत्वेनानुत्पादात् तादृशभार्यात्वानुत्पादः तादृशदोषाभावजनकं तु तदस्त्येवात एव वाग्दत्तावत्पुनर्न विवाहः। अत एव च मातृवत्परिपालनमुक्तं रोगिण्यां तु निषेधस्य दृष्टार्थत्वसंभवेनादृष्टार्थत्वाभावेन प्रायश्चित्ताद्यभावेन त्रिविधदृष्टाभावेऽपि संस्कारजादृष्टस्य सत्वेन यथाकथंचिदाश्रमसंपत्या तदभावप्रयुक्तदोषाभावेन भार्यात्वोत्पादेऽपि त्रिविधदृष्टाभाव एव वृक्षनाम्न्यादावपि निषेधमात्रेण बलीयसा संस्कारजादृष्टप्रबन्धेऽपि तज्जत्रिविधदृष्टसत्वेनोक्तहेतुना च बह्वनुरोधेन सम्यक्भार्यात्वोत्पादेऽप्यदृष्टमात्राभावः। एतत्समुच्चायक एवादिरन्यथा तदानर्थक्यं स्पष्टमेवेति। एतेनैवं सति ऋक्ष्यादिनाम्नीषु भार्यात्वानुत्पत्तौ तज्जपुत्रादेरपि वर्णबाह्यत्वापत्तौ सर्वव्यवहारविरोधः। किंच निषेधबलाद्वोढुः पापमस्तु भार्यात्वानुत्पत्तौ तु न मानं पश्याम इति **नारायणो**क्तमपास्तम्।

व्यवहितसंगतिमाह। **असपिण्डामिति**। यथाकथंचित् पारम्पर्यस्यानियतत्वात्। तत्साधनायैवाह। **अनादाविति**। तथा चासपिण्डामिति विशेषणं व्यर्थमेवेति भावः।

"वध्वा वरस्य वा तातः कूटस्थाद्यदि सप्तमः। पञ्चमी चेत्तयोर्माता सापिण्ड्यं विनिवर्तते॥"

इति **संग्रह**वाक्यम्। तत्र 'कूटस्थादिति' ल्यब्लोपे पञ्चमी। 'पिण्डदः सप्तम' इति **मात्स्यात्**। वाशब्दोऽन्यतरार्थः। वेदं व्रतानि वेत्यादाविव विकल्पार्थत्वे एकस्यैव ग्रहणं स्यात्। तयोरित्यत्रान्यतरस्येति शेषः। तत्र पञ्चमी मातेत्यनेन कूटस्थात्षष्ठत्वे वधूवरान्यतरस्य विवाहः कार्य इति बोधितम्। अत एव **गौतम**स्मृतौ "मातृबन्धुभ्यः पञ्चमादूर्ध्वमि"त्येवोक्तम्। एवं च वधूवरान्यतरस्य कूटस्थमारभ्य सप्तमादूर्ध्वत्वे पितृद्वारकं सापिंड्यं तेन कूटस्थेन सह निवर्तते, मातृद्वारकं तु तदन्यतरस्य तत आरभ्य पञ्चमादूर्ध्वत्वे भिन्नगोत्रस्य षष्ठस्य भिन्नगोत्रतत्कूटस्थेन सह सापिण्ड्यं निवर्तत इत्यर्थः।

एवं च सगोत्राष्टमस्याष्टमेन कूटस्थेन भिन्नगोत्रषष्ठस्य षष्ठेन कूटस्थेन सह सापिण्ड्यनिवृत्तौ तत्कूटस्थसंतानान्तरे सापिण्ड्यप्रसंगसंभावनैव नास्ति। अत एव वरस्य योऽष्टमः कूटस्थस्तद्दौहित्री तेनोद्वाह्येति **गौतमीवृत्तौ हरदत्तः**। अत एव चासपिण्डामिति सर्वस्मृतिषु परिणेयकन्याविशेषणमेव श्रूयते। यत्तु एतदनुरोधेन प्रकृते मातृशब्द उपस्थितवधूवरान्यतरस्य साक्षाज्जनन्या वाचक एव युक्तः लोकप्रसिद्धेर्बलत्वाच्च। एवं च कूटस्थमारभ्य सप्तमात्पितुरूर्ध्वं पञ्चम्या मातुरूर्ध्वं सापिण्ड्यनिवृत्तिरिति **मूलार्थः**। 'वध्वा वरस्य वेति' **संग्रहे** तथैव सत्वेन सामानाधिकरण्येनान्वयस्य युक्तत्वात्।

एवं च कूटस्थात्पञ्चम्योः संतानभूतषष्ठयोर्निवृत्तस्यापि तन्मातृकुलसापिण्ड्यस्य सप्तमयोः पञ्चम्योः पौत्रयोः पुनर्मण्डूकप्लुत्याऽनुवृत्त्या प्रवृत्तिः पितुः सप्तमत्वे एव सापिण्ड्यनिवृत्तेरुक्तत्वादिति तन्न। तत्संताने सप्तमपर्यन्तसापिण्ड्यस्वीकारे सापिण्डतेति **शङ्ख**वचनविरोधापत्तेः। वेदविरोधे स्मृतित्याग इव स्मृतिविरोधे लोकप्रसिद्धेरपि त्यागस्य **जाबालादिना** तत्प्रतिपादितत्वात्। तथासत्यसंदेहाय मूलवाक्ये पञ्चम्या इत्यस्यैव वक्तुमुचितत्वेन तथा निर्देशासंगतत्वाच्च। न च छान्दसत्वेन तन्निर्देशोपपत्तिस्तस्यागतिकगतित्वात्। एतेन शक्यं चक्षुरितिवत्सामान्ये नपुंसकत्वेन तन्निर्वाह इत्यपि परास्तम्। 'बाधे वृद्धे' इति **न्यायेन** तस्यासंगतेश्च तस्यापि सिद्धान्तरीत्या व्याख्यास्यमान

त्वाच्च । तस्मात्साक्षात्परम्परासाधारण्येन कूटस्थतदपत्यचतुष्टयरूपपञ्चसमुदायघटिकाया द्वितीयादिकाया अपि मातृशब्दो वाचकः ।

"तिस्रः पूज्याः पितुः पक्षे तिस्रो मातामहे तथा। इत्येता मातरः प्रोक्ताः पितुर्मातुः स्वसाऽष्टमी"॥

इति **चतुर्विंशतिमते,** "पितृपत्न्यः सर्वा मातर" इति **सुमन्तुवाक्ये** "मातृश्राद्धं तु पूर्वं स्यादिति" **शातातपीये** अंतर्मातामहान् कृत्वा मातॄणां यः प्रेत्यत्र च पितामह्यादिष्वपि मातृशब्दप्रयोगात्। स्मृतौ लोकप्रसिद्ध्यपेक्षया स्मार्तप्रसिद्धेर्बलवत्वात् । नच 'पञ्चमी चेत्तयोरि'त्युक्त्या पञ्चमत्वसमानाधिकरणमातृत्वस्यैव सापिण्ड्यसंकोचकत्वप्रतीत्या द्वितीयत्वादिसमानाधिकरणस्य मातृत्वस्य कथं तत्संकोचकत्वमिति वाच्यम् । 'सपिण्डतां तु सर्वेषामिति' शङ्खवचनेन गोत्रैक्यस्यैव सप्तमपर्यंतसापिण्ड्यप्रयोजकत्वप्रतिपादनेन गोत्रभेदस्यैव तत्संकोचकत्वस्य युक्तत्वेन द्वितीयादिकायामपि मातरि तस्याविशिष्टत्वेन पञ्चमत्वस्याकिंचित्करत्वात् ।

"असंबन्धा भवेद्या तु पिण्डेनैवोदकेन वा । सा प्रशस्ता द्विजातीनां त्रिगोत्रांतरिता च या॥"

"संनिकर्षेऽपि कर्तव्या त्रिगोत्रात्परतो यदि" ॥ इति

**शूलपाण्युदाहृतबृहन्मनुदेवलवाक्याभ्यामपि** तथैव प्रतीतेश्च । न चैवं तत्र पञ्चमीतिपूरणप्रत्ययस्य का गतिरिति वाच्यम् । "पितुर्मातुः स्वसाऽष्टमी" "दातृयाजकपञ्चमा" इत्यत्रेव घटिकायामपि तस्योपपत्तेः । द्वितीयेऽप्यष्टमव्यवहारस्य पुराणे महाभाष्यादौ च स्पष्टत्वाच्च । एवं सति **संग्रह**वाक्यमपि सिद्धान्तानुवादकमेवेति न कश्चन विरोधस्तस्मान्मातृशब्दस्तद्घटितसंतानपरस्तत्साहचर्यात्पितृशब्दोऽपि सप्तसाधारणपितृत्वेन बोधकः ताभ्यां सप्तम्यन्ताभ्यामाद्यादित्वात्तसिः । तथा च मातृघटितसंताने संतानभेदावधिकूटस्थमारभ्य गणनायां संतानघटकात्पञ्चमादूर्ध्वं सापिण्ड्यं निवर्तत इत्यादि प्रकृतार्थः । एवं च पञ्चमादित्यादेरूर्ध्वमित्यत्रैवान्वयो **गौतमा**द्यनुरोधान्न संतयोः सापिण्ड्ये एवान्वयः । एवं च पितृसंतानमर्थात्पुमात्मकमेव गृह्यते **शङ्ख**वचनैकवाक्यत्वात् । पितरो यत्र पूज्यन्ते नान्दीमुखान् पितॄन् इत्यादौ साक्षाज्जनकभिन्नेऽपि पितृशब्दप्रयोगात् । अत एव पितामहादीनामपीति पक्षस्य मुख्यत्वेन कथनं तत्रान्तरे कृतम् । पितृतः सापिण्ड्योक्तिश्चाशौचोपयोगिनीति बोध्यम् । अत एव मातृपक्षे पञ्चमादिति **माधवो** मातृसंताने पञ्चमादूर्ध्वमिति **मदनरत्नश्च** संगच्छते। तदेतत्सर्वमभिप्रेत्याह। **मातृतो मातुः संताने इत्यादि ।** अत्राधारभूतत्वान्मातुः प्राथम्यम् । तथा च **श्रुतिः**"उखां कृष्णां तु शक्त्या बाहुभ्यामदितिर्धिया। माता पुत्रं यथोपस्थे साग्निं बिभर्तु गर्भजा" इति । **शङ्कराचार्या** अपि ।

"चत्वारोऽवयवा ज्ञेया मातुर्जीवकलेवरे। त्वगसृङ्मांसमेदांसि बहुत्वात्सा गरीयसी" । इति ॥

"सापिण्ड्यं साप्तपौरुषमिति" **मात्स्यस्य** "सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषीति" **शङ्खस्य** "असमानप्रवरैर्विवाहो मातृबन्धुभ्यः पञ्चमादूर्ध्वमिति" **गौतमस्य** चानुरोधेन शेषमाह । **सापिण्ड्यमिति ।** एतेनास्तीत्यादिक्रियाध्याहार एव कुतो नेत्यपास्तम् ।

न च तथा तस्य मूलकृदनिष्टत्वेऽपि व्याख्याने मातुः संताने पञ्चमादूर्ध्वमित्याद्येवं सामानाधि-

करण्येनान्वयसंभवात्पितुः सप्तमत्वं मातुः पञ्चमीत्वमार्थिकं **विज्ञानेश्वर**सम्मतमेवेति वाच्यम् । तथा सति मातुः संताने इत्यादेर्विशेष्यत्वेन वैपरीत्यौचित्यात् मातुरपत्ये इत्याद्यौचित्याच्च संतानशब्दस्य वंशवाचित्वेन त्वन्मते तदनुपयोगात् ।

"संततिर्गोत्रजननकुलान्यभिजनान्वयौ । वंशोऽन्ववायः संतानः " **इत्यमरात्** । ( २।७।१)

अत एव पक्षादिशब्दोल्लेखः स्मृत्यन्तरे ऊर्ध्वशब्दस्य लिङ्गत्रयवत्वेनोर्ध्वे इति **वाच्ये** ऊर्ध्वमिति क्रियाविशेषणं तच्छेषसूचकं वदतोऽपि तदनिष्टत्वाच्च । अनुपपत्त्यां आद्ये **तथोक्तावपि अग्रे** तदभावेन सप्तमात्पितृत ऊर्ध्वमिति व्याख्यानौचित्याच्च । इदं च तन्निवृत्तौ निमित्तं विविक्तम् । **अत एव** मूले तथा शब्दस्तच्च केवले पुंसंताने कन्यासंताने च एकत्र तद्द्वये च क्वचित्संकीर्णमपि पुंसंतान-कन्यासन्तानमिश्रे तच्चैकतो निवृत्तं क्वचित् क्वचिदुभयतो निवृत्तं यथायथं बोध्यम् । अर्वाचीनमते तु न्यूनता स्पष्टैवेति दिक् ।

फलितमाह । **अतश्चेति** । उक्तहेतोरित्यर्थः । अन्त्येऽन्वयः । वैदिकलौकिकदृष्टान्तद्वयमाह । **निर्मन्थ्येति** । निःशेषमन्थ्येनेष्टकाः पचन्तीत्यत्र निःशेषमथ्यत इति योगस्याधानकालमथितत्वाच्चिर-निर्मथिते नित्यं धृते चयनोपक्रमात्प्रागपि विद्यमाने गार्हपत्याख्ये चयनं प्रक्रम्योखां निर्माय तस्यामुखायां कंचित्कालं धारणाय योऽग्निर्निर्मथ्यते तस्मिन्नचिरनिर्मथिते च सत्वेनान्त्यस्यैव प्रत्यासन्नत्वेन तत्परि-ग्रहाय रूढिस्वीकारो यथातथेत्यर्थः । **नियमेति** । योगरूढ एवेत्यर्थः ।

रूढ्यर्थमेवाह । **तथा चेति** । तस्य तत्वे चेत्यर्थः । ननु संतानैक्ये एवं सति तत्स्यात्तु तद्भेदेऽत आह । **संतानेति** । तदुक्तम् ।

"संतानं भिद्यते यस्मात्पूर्वजादुभयत्र तु । तमादाय गणेद्धीमान्वरं यावच्च कन्यकाम्" इति ।

तथा च कूटस्थमादायैव पञ्चमत्वसप्तमत्वे बोध्ये तदाह । **यावदिति** । पञ्चमत्वेऽप्येवमित्याह । **इति सर्वत्रेति** । यद्यपि **वासिष्ठे**ऽतीत्येत्यध्याहारेण निर्वाहः । अन्यथा मूलविरोधः स्पष्ट एव ।

"पञ्चमे सप्तमे चैव येषां वैवाहिकक्रिया । क्रियापरा अपि तु ते पतिताः शूद्रतां गता" इति ॥

**मरीचि**विरोधश्च । कूटस्थमादाय सगोत्रासगोत्रयोस्तयोर्विवाहे निन्दाबोधकमिदम् । यद्वा मातृतस्तत्संताने यः संतानभेदप्रतियोगी प्रथमस्ततः पञ्चमीमित्याद्यर्थः ।

"पञ्चमीं मातृपक्षा तु पितृपक्षा तु सप्तमीं । गृहस्थ उद्वहेत्कन्यां याम्येन विधिना नृप ॥ " इति **विष्णुपुराण**मप्येवमेव । तत्र गृहस्थो भाविगृहस्थः संतानभेदारम्भकः प्रथमः पक्षशब्दे-नोच्यते । सदृशीं भार्यां विन्देत । " पञ्चमीं मातृबन्धुभ्यः सप्तमीं पितृबन्धुभ्य " इत्यपरवा-सिष्ठमप्येवमेव । तत्र संतानभेदारम्भकप्रथमादिः समुदायो बन्धुशब्देनोक्तः । तादर्थ्ये चतुर्थी । उद्भूतावयवभेदसमुदायविवक्षया बहुवचनं तत्समुदायार्थां पञ्चमीमेवं च कूटस्थात् षष्ठ्ये-वोक्ता भवतीति न विरोधः । एतेन "असमानप्रवरैर्विवाह ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमादिति " **गौतमीय**मपि व्याख्यातम् । "सप्त पितृतः परिहरेत्पञ्च मातृत " इति **हारीत**स्यापि पितृसंताने कूटस्थात्पञ्च मातृसंताने ततः पञ्च परिहरेदित्यर्थः । **एतेन** "असमानार्षेयां कन्यां वरयेत् पञ्च मातृतः परिहरेत्सप्त पितृत" इति **पैठीनसि**रपि व्याख्यातः । "**ऊर्ध्वमाहे**रत्सदृशानसमानार्षेयानसंबन्धानसप्तमपञ्चमान् पितृमातृबन्धुभ्य" इति **शङ्ख**स्यापि प्रागवदेवार्थः । **कूटस्थादिः** समुदायो बन्धुशब्दार्थ इति विशेषः । तथा च तदर्थं सप्तमपञ्चमभिन्नानित्यर्थः । "असगोत्रामसमानप्रवरा

भार्यां विन्देत मातृतः पञ्चमात्पितृतः सप्तमादिति" **विष्णुस्मृते**स्तत्तत्संताने कूटस्थतः पञ्चम सप्तमं च संतानं विहाय ऊर्ध्वं वेत्यर्थः।

"आ सप्तमात्पञ्चमाच्च बन्धुभ्यः पितृमातृतः। अविवाह्याः सगोत्राः स्युः समानप्रवरास्तथा"॥ इति **नारदीये** (अ. १२श्लो. ७)आङ् मर्यादायां पृथक्पदम्। संतानापेक्षः सप्तमादित्यादिक्लीबनिर्देशः। अन्यथा कन्याया विशेष्यत्वात्स्त्रीत्वौचित्यं मातृत इति षष्ठीद्विवचनान्तात्तसिः। आदौ शाकपार्थिवादित्वात्समासः। बन्धुभ्य इत्यत्रान्वयः। अर्थः प्राग्वत्। तथा च सप्तमत्वपञ्चमत्वाक्रान्तकन्यारूपसंतानपर्यन्तमविवाह्या इत्यर्थः। एतेनात्र बन्धुभ्य इत्युक्तेः पञ्चमीनिर्देशाच्च पितुःपितृष्वसुःपुत्रात्तत्संतानभूतां सप्तमीं मातुः पितृष्वसुः पुत्रात्पञ्चमीं च त्यजेदिति **निर्णयसिन्धू**क्तमपास्तम्। पितृतोऽष्टमी मातृतः षष्ठी उद्वाह्या पितुः पितृष्वसृनवमी मातुः पितृष्वसृसप्तमी च त्याज्येत्यस्यात्यन्तानौचित्यात् संभवतीति न्यायविरोधात् मूलभूतश्रुत्यन्तरकल्पनजगौरवाच्च। एवं सर्ववाक्यानामेकवाक्यता सिद्धा। तथापि **पैठिनसि**वाक्यान्तरेऽनिर्वाह इत्याह। **त्रीनतीत्येति**। यद्यपि "पञ्चमीं मातृतः परिहरेत्सप्तमीं पितृतस्त्रीन् मातृतः पञ्च पितृतो वेति" **पैठिनसि** वाक्यमस्ति तथापि तत्फलितामिदमुक्तम्। तत्रैवं पाठो वाऽत्रैव तथापाठो वा। अत एवान्यथा समाधत्ते। **तदर्वाङ्निषेधार्थमिति**। विपरीतलक्षणयेति भावः। संभवतीत्यादिहेतुद्वयमेवात्र बीजम् इति तात्पर्यमश्रुतनिषेधार्थकत्वकल्पने मानाभावादनुकल्पपरमिदमिति तु **माधवः**। अत एव **चतुर्विंशतिमता**द्यविरोधः। वस्तुतस्तान्यपि उक्तरीत्या मातृसंताने सापिण्ड्यनिवृत्तौ तत्परत्वेनैव यथायथं सुयोजानि। तत्र तदभावे इत्यस्य सापिण्ड्यस्योक्तरीत्याऽभावे इत्यर्थः। तत्र तृतीयोदाहरणं **हरदत्ते**नोक्तमेव एवमन्यदपि योज्यम्।

" चतुर्थीमुद्वहेत्कन्यां चतुर्थः पंचमोऽपि वा। पराशरमते षष्ठीं पञ्चमो न तु पञ्चमीमिति " **पराशरोक्त**वाद्येऽष्टमादिरिति शेषः। चतुर्थ इत्यादेः षष्ठीमित्यत्रान्वयः। पञ्चमो न त्विति सपिण्डमात्रोपलक्षणमित्यादि बोध्यम्। **तदाहेति**। **सर्वेति**। एतेन निषेधार्थमित्यस्य तृतीयानिषेधार्थमित्यर्थः। त्रीन्परिहरेदिति वचनात्। तत्प्राप्त्यर्थमित्यत्रानुकल्पत्वेनापीति शेषः। अन्यथा **पराशरादि**विरोधस्य स्पष्टत्वेन सर्वस्मृतीत्याद्यसंगतेः। अत एवासपिण्डामित्यनेन मातृष्वसृपितृष्वस्रादिदुहितृनिषेध इति पूर्वग्रन्थेऽपि न न्यूनता। अन्यथा मातुलसंग्रहार्थम् आद्यादिवदुहित्रादीत्येवोक्तं स्यात्तदनुक्त्या तु **विज्ञानेश्वर**स्याप्यनुकल्पःसम्मत इत्येव स्वीकार्यमन्यथा तद्ग्रन्थासंगतेरिति **भ्रान्तो**क्तमपास्तम्। यत्तु **द्वैतनिर्णये पैठिनसि**वाक्ये **मिताक्षरायां** च परिहरेदितिशब्दो निषेधशब्दश्च दोषविशेषप्रतिपादनार्थ इत्युक्तं तन्न। चतुर्थ्यादौ दोषविशेषकल्पने मानाभावान्न दोषः **शाकटायन** इति वचनविरोधात्**पैठिनसि**वाक्ये वाशब्दास्वारस्यापत्तेश्चेति दिक्। एतेनासपिण्डामिति परिणेयकन्याविशेषणं श्रूयते-यद्यपि तथाप्येतैरेव गुणैर्युक्त इति वरेऽपि तदतिदेशाद्वरनिरूपितं कन्यायां कन्यानिरूपितं च वरे पृथगेव सापिण्ड्यम् न तु संयोगवद्व्यासज्यवृत्त्युभयनिरूपितमेकमेव येनान्यतरतो निवृत्तौ निवृत्तिः स्यादन्यथा वरे तदतिदेशवैयर्थ्यं स्यात्तत्र तदुक्त्यैवोभयत्रोक्तिफललाभात्। तथा च शिष्टतरदाक्षिणात्यानां सर्वेषामविप्रतिपन्नो व्यवहारः। एकतो निवृत्तं सापिण्ड्यं नान्यत इत्यपि **द्वैतनिर्णय**कृदाद्युक्तमपास्तम्। सपिण्डशब्दस्य ससंबन्धिकत्वादेव तल्लाभेऽन्यत्र तदतिदेशे मानाभावेनैतच्छब्देन तदपरामर्शात् वधूवरयोः साक्षात्सापिण्ड्या-

संभवेन स्वसपिण्डकूटस्थसपिण्डत्वस्यैव तस्य वाच्यत्वेनैकत्र निवृत्तौ सत्यामन्यत्रैतदसंभवात्। असापिण्डत्ववदसमानगोत्रजत्वस्याप्येतच्छब्देन परामर्शे तस्याप्यतिदेशापत्तावेकत्र तन्निवृत्तावन्यत्र तदापत्तेश्च ।

यत्तु कूटस्थसंततित्वरूपं तदिति अष्टमं वरं प्रति कन्याया असापिण्ड्येऽपि कन्यायाः कूटस्थेन सापिण्ड्यात्तत्संततिस्थत्वाद्वरस्तां प्रतिसपिण्ड एवेति **निर्णयसिन्धुकृ**त्तन्न। सपिण्डसंततिस्थत्वेन सापिण्ड्ये सोदकादावपि तदापत्तेः। अयमस्या असपिण्ड इयं त्वस्य सपिण्डेति व्यवहारस्य वाक्यविदामनुचितत्वाच्च। अष्टमे तत्संततित्वे सत्यपि पञ्चमात्सप्तमादित्यादिना सापिण्ड्याभावप्रतिपादनाच्च । तस्मादेकतो निवृत्तौ निवृत्तिरेव युक्ता, भवदुक्तव्यवहारस्तु खपुष्पायमाण एव। अतो वधूवरयोर्मातृनिरूपितसापिण्ड्यं पंचमादूर्ध्वं निवर्त्तते पितृनिरूपितसापिण्ड्यं सप्तमादूर्ध्वं वधूवरयोः कूटस्थेन सह सापिण्ड्ये निरूपकं माताऽपि चेत्स तयोर्मातृपक्षः वधूवरयोः कूटस्थेन सह सापिण्ड्ये निरूपकं पितैव चेत्स तयोः पितृपक्षः । तदुक्तम्:—

"अस्या मातुस्तु यत्पित्र्यं मातृकं वा यदा भवेत् । उभयं तद्धि कन्याया मातृतः परिकीर्तितम्॥
"वरस्यापि पितुः पित्र्यं मातृकं वा यदा भवेत् । उभयं तद्वरस्यापि पितृतः परिकीर्तितमिति ॥"

अस्या वध्वाः, तुरप्यर्थे, तेन वरस्यापि मातुः साक्षात्परम्परासाधारणाभूताया यत् पित्र्यं पितृसंबन्धि कुलं मातृकं वा मातृसंबन्धि कुलं वा यदा भवेत्तदुभयं तयोर्मातृतः मातृसंबन्धि मातृपक्ष इति यावदिति प्रथमश्लोकार्थः । वरस्यापीत्यपिना कन्याया अपि। एवं च वरस्य कन्याया अपि पितुर्जनकस्य साक्षात्परंपरासाधारणस्य पित्र्यं मातृकं वा यदा भवेत् तयोस्तदुभयमपि पितृतः पितृसंबन्धि पितृपक्ष इति यावदिति द्वितीयपद्यार्थः । एवं च पितृबंधुषु सप्तमादूर्ध्वमेव विवाह्यत्वं मातृबंधुषु पञ्चमादूर्ध्वमिति सिद्धम् ।

एतेन कन्यावरयोर्मातृतः पञ्चमादूर्ध्वं विवाहः कार्यः। अपादाने पंचमी। माता पञ्चमीत्यर्थः। पितृतः सप्तमादित्यस्य पिता सप्तमो यस्माद्वंशनिर्मातुस्ततः परं मिथो विवहेदित्यर्थ इत्यपास्तम् । "असपिण्डां च पितृतः सप्तमात्पुरुषात्परां मातृतः पञ्चमादूर्ध्वमसमानार्षगोत्रजामिति" **धर्मप्रदीपो**ऽप्युक्तार्थ एव ।

एवमुक्तसापिण्ड्यस्यैवैकस्य सगोत्रासगोत्रविषयत्वेन पर्याप्तत्वेऽपि प्राचीनैर्भिन्नगोत्रविषयसापिण्ड्यस्यावान्तरभेदमादाय स्पष्टार्थं पञ्चधा भेदः कथितः । आद्यं चूडाबन्धान्वयसापिण्ड्यं, द्वितीयं मुक्ताहारबन्धान्वयसापिण्ड्यमर्थ्यं, तृतीयमवयवान्वयसापिण्ड्यं, चतुर्थं निर्वाप्याशान्वयसापिण्ड्यं, पञ्चमं निर्वाप्यांशान्वयसापिण्ड्यमिति । तत्र चूडाबन्धान्वयो नाम समविषमयोः संबन्धो मूर्द्धजानामिव, समयोः संबन्धो मुक्ताहारान्वयः मौक्तिकहारवत्सममातृत्वात्समपितृत्वाच्च, अवयवान्वयो नाम पितृतः सप्तधा संबन्धो मातृतश्चतुर्द्धा संबन्धः, निर्वाप्यान्वयो नाम पितृयोग्यान्न समर्पणाधिकारः, निर्वाप्यांशान्वयो नामाधिकारनिवृत्तावयवविकन्यावरयोस्तद्वंशोत्पन्नत्वात् ।

तत्राद्यं यथा ब्रह्मदत्तो वंशनिर्माता, तस्य पुत्रौ यज्ञदत्तदेवदत्तौ, तयोः कन्ये गङ्गायमुने, तयोः कन्यापुत्रौ सरस्वतीमित्रदत्तौ, तयोः कन्यापुत्रौ विजयापुण्डरीकौ, तयोः कन्यापुत्रौ सुलोचनाविष्णुदत्तौ। तत्र विजया पञ्चमी सुलोचना षष्ठी । अत्र सापिण्ड्यं निवृत्तं । पुण्डरीकः पञ्चमो विष्णुदत्तः षष्ठः। अत्र तन्न निवृत्तं पितृतः सप्तमत्वादतो न विवाह इति । प्राञ्चः सिद्धान्ते तु भवत्येव । एवमग्रेऽपि बोध्यम् ।

*द्वितीयं यथा ब्रह्मदत्तस्तथा तस्य पुत्रौ यज्ञदत्तदेवदत्तौ, तयोः कन्ये गङ्गायमुने, तयोः कन्यापुत्रौ सरस्वतीमित्रदत्तौ, तयोः कन्ये जयन्तीविजये, तयोः कन्यापुत्रौ कावेरीविष्णुदत्तौ। अत्र जयन्ती ५ कावेरी षष्ठी विजया ५ विष्णुदत्तः षष्ठः अतो मातृतः पञ्चमादिति सापिण्ड्यनिवृत्त्या विवाहो भवति। यद्वा विष्णुदत्तः षष्ठस्तस्य कन्या धरित्री ७। जयन्ती ५ तस्याः पुत्र इंद्रदत्तः तस्य पुत्रो मुद्गलः ७ मुद्गलो धरित्रीं न विवहेत् पितृतः सप्तमादिति सापिण्ड्यानिवृत्तेस्तत्सापिण्ड्यात्।

| १ ब्रह्मदत्तः | ब्रह्मदत्तः। | ब्रह्मदत्तः। |
|---|---|---|
| २ यज्ञदत्तः देवदत्तः॥ | यज्ञ. देव. | यज्ञ. देव.। |
| ३ गङ्गा यमुना॥ | गङ्गा. यमु. | गङ्गा. यमु.। |
| ४ सरस्वती मित्रदत्तः॥ | सरस्व. मित्र. | सरस्व. मित्र.। |
| ५ विजया पुण्डरीकः॥ | जयं. विजया. | जयंती. विज.। |
| ६ सुलोचना विष्णुदत्तः | कावेरी. विष्णु. | इन्द्रद. विष्णु.। |
| कन्या वरः॥ | कन्या. वरः | मुद्गल. धरि.। |
| अत्राविवाहः सापिण्ड्यात् | अत्र विवाहः सापिण्ड्यनिवृत्तेः | अत्र विवाहो नास्ति सापिण्ड्यात् |

अथ तृतीयं ब्रह्मदत्तस्तथा तस्य कन्या विष्णभक्तिस्तस्याः कन्या वेदवती सा ब्रह्मदत्तेन कथं न परिणीयते यतो मातृतः पञ्चमादूर्ध्वमिति पितृतः सप्तमादूर्ध्वमिति च निषेधो न प्रसरति अस्ति च भिन्नगोत्रत्वमपि तदाहः—

**वृद्धमनुः**

"एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके। स्वगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे॥

"मृतेऽन्यस्मिन्वरे देया यदा सप्तपदात्पुरा। पाणिग्रहसमाप्तिस्तु पतित्वं सप्तमे पदे॥

"पाणिग्रहणिका मन्त्रा नियता दारलक्षणम्। तत्समाप्तिश्च विज्ञेया विद्वद्भिः सप्तमे पदे॥

"वरे देशान्तरगते त्रीन् ऋतून्संप्रतीक्ष्य सा। कन्याऽन्यस्मै प्रदातव्या वाग्दाने च कृते सती॥"

इति विवाहः प्राप्तोऽवयवान्वयेन सपिण्डत्वान्न भवति। तदुक्तं **विश्वरूपाचार्यैः**।

"निषेकाज्जायते जन्तुः सप्तकञ्चुकसंयुतः। चत्वारो मातृजा ज्ञेयास्त्रयोऽस्थ्यादि तु पैतृजाः।"इति

तथा चापत्यशरीरे पितुर्धातुत्रयान्वयात्तद्द्वारेण। तत्राप्यवयवान्वयसत्वादविवाहयोग्यत्वेन ब्रह्मदत्तवरस्य विष्णुभक्तिकन्याया वेदवत्या न विवाहः। अथ चतुर्थं ब्रह्मदत्तस्तथा तस्य भार्ये चन्द्रकान्तिरूपवत्यौ चंद्रकान्तिसुतः सोमदत्तः रूपवत्या भगिनी हंसवती सा सोमदत्तेन कथं न परिणीयते सप्तमपञ्चमराहित्यादसपिण्डाऽसगोत्रा च भवति इति तन्न। **बौधायन**मतेन विवाहनिषेधात्

"वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः । वेदो नारायणः साक्षात्स्वयंभूरिति शुश्रुमः ॥" *

"पितृपत्न्यः सर्वा मातर" इति ।

"एकमातृजयोरेकवत्सरे पुरुषस्त्रियोः । न समानक्रियां कुर्यान्मातृभेदे विधीयते ॥"

इति च सपत्नमातुरपि मातृत्वेन व्यपदेशाच्चातो न विवाहः ।

**चतुर्विंशतिमते** तु

"ब्राह्मेण तु विवाहेन रूपशीलसमन्विताम् । पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा ॥

"तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि । विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः ॥"

इति विवाहविषये । चतुर्थी पञ्चमी च सर्वसंमतेत्येतद्विषयमिदं तदुक्तं **धर्मप्रदीपे**

"श्रुतिस्मृतिपुराणानां विरोधो यत्र दृश्यते । श्रौतं तत्र प्रमाणं स्याद् द्वयोर्वैरे स्मृतिर्वरा ॥"

"श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ । स्मृतिद्वैधे तु विषयः कल्पनीयः पृथक् पृथक्॥" इति

अतो निर्वाप्यान्वयसापिण्ड्यविषयं मातृतः पञ्चमी पितृतः सप्तमीति निर्वाप्यान्वयसत्वात् तृतीयां चतुर्थी वेति निर्वाप्यांशान्वयसापिण्ड्यं कुर्यात् ।

**कापिकामते,**

"स्त्रीसंततिस्तथा पुंसामविवाह्ये उभे गते । स्त्रीपुंसयोर्विवाहः स्यात्पञ्चमात्सप्तमात्परम् ।

"पञ्चमात्सप्तमात्पूर्वं कन्यामुद्वहते द्विजः । गुरुतल्पः स विज्ञेय इति विष्ण्वादिशासनम् ॥

"सप्तमीं पञ्चमीं षष्ठीं चतुर्थीं पितृमातृतः । उद्वहेत्सर्वथा लाभे इति केश्चित्समीरितम् ॥

"याज्ञवल्कीयवचसा समानार्थमिदं वचः । अतीत्य पञ्चमीं मातुः पितृपक्षाच्च सप्तमीम् ॥

"इति ब्रुवद्भिर्धर्मज्ञैरादरान्न निराकृतम् । अनार्षेयं मतामिति चतुर्दशकुलानि वै ॥

"महान्त्यपि समृद्धानि यमोक्तानि विवर्जयेत् ।" इति

अथ पञ्चमम् तत्र **मनुः**। "भ्रातॄणामेकजातानाम्" इति तदेतदेके श्राद्धविषयं वर्णयन्ति। भवतु नाम पितृव्यादीनां पार्वणं समानं चेत्तदा तस्यानुकल्पात्पुत्रत्वं समागतमेव । पितृभ्यां च विना पार्वणं न संघटते अनुकल्पाच्च पुत्रत्वं समागतम् । आदिशब्दाज्ज्येष्ठभ्रातृसपत्नजनन्यादिः प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते स नाप्नोति फलं तस्य परत्रेति **श्रुतिः। स्मृतिः** अष्टम्यां मांसभोजने प्रतिषेधः। अनुकल्पागतं च यत्रामिषत्वं तत्र निषेधः प्राप्नोति । तथा च **स्मृतिः ।**

"गोवर्जमामिषं क्षीरं फले जंबीरमामिषम् । मसूरमामिषं धान्ये चर्मण्युदकमामिषम् ॥

"प्राण्यङ्गमामिषं चूर्णमारनालकमामिषम् । साक्षादग्निविपक्कं च मांसं चेत्यष्टधामिषम् ॥" इति ।

अतः पितृव्यज्येष्ठभ्रातृपत्नी सपत्नजननी सोदरभगिनी न विवाह्या निर्वाप्याशान्वयसापिण्ड्यात् ।

"पितृव्यपुत्रे सापत्ने न दोषः परिवेदने । ज्येष्ठभ्रात्रा त्वनुज्ञाते परिवेदाद्यदूषणम्" ।

**लैङ्गेऽपि,**

"वाक्संबन्धकृतानां च स्नेहसंबन्धभागिनाम् । विवाहोऽत्र न कर्तव्यो लोकगर्हा प्रसज्यते ।

"ततो वंशा विनश्यन्ति लोकसंकरका" इति ।

**धर्मप्रदीपे,**

"वेदाः प्रमाणं स्मृतयः प्रमाणं धर्मे पुराणानि तथा प्रमाणम् ।

"यस्य प्रमाणं न भवेत्प्रमाणं न तस्य कुर्याद्वचनं प्रमाणम्" । इति दिक्

अन्यदपि तथा ऽऽह । **एतच्चेति** । अपौनरुक्त्यायानर्थान्तराय च व्याचष्टे । **एकस्मादित्यादि** । जायतेऽस्यामिति जनाः । पृथक् जना येषां ते पृथक्जनाः । तत्र जातिभेदस्योक्तत्वाद्व्यक्तिभेदोऽत्र ग्राह्य इत्याह । **समानजातीयासु भिन्नास्विति** । यद्यप्यत्र पूर्वार्धेन सपत्नभ्रातरः सजातीय इव विजातीयाश्चोक्तास्तथापि तान्सर्वाननूद्य एकपिण्डा इत्यनेन सामान्यतः साण्डिच्ये प्रतिपादिते प्रागुक्तरीत्या समानजातीये इव विजातीयेऽपि सप्तपौरुषसापिण्ड्यप्रसंगे तन्निरासः पृथक्शौचा इत्यादिना क्रियते इत्याह । **किंत्वित्यादि** । व्युत्क्रमत्वर्थोऽयम् । एवं च पृथक्शौचा इत्यादिः शेषः संपूर्णो भिन्नजातीयपर एवेति भावः । एव चार्थादेकपिण्ड इत्यनेन सजातीयानां सप्तपौरुषं साण्डिच्यमनूदितं भवति । तत्कथने न तात्पर्यं किंत्वग्रिमविशेषस्य तत्र कथने । अत एवावतरणमपि तथैव दत्तमत एव **माधवेनेदं** वचनं पृथग्जना इत्यस्य मातृभेदादसमानजातीया इत्यर्थाश्रयणेन पृथक्क्षेत्रा इत्यस्य व्याख्यानतया भिन्नजातीयमात्रपरतयैव व्याख्यातम् ।

एतेनेदं वचनं विज्ञानेश्वरव्याख्यानं चोभयपरम् । तत्र पृथक्शौचत्वं भिन्नजातीयपरम् । विजातीयानां सगोत्रे पुंसंताने त्रिषु पुरुषेष्वतीतेषु साण्डिच्यं निवर्तते सजातीयानां तु सापत्नमातामहकुले त्रिपुरुषं मातामहपर्यंतं साण्डिच्यमिति तात्पर्यम् । तत् संततौ तत्कियद्दूरमित्याशङ्कायां **सुमन्तुवाक्ये** दुहित्रादिपदानां पुंलक्षणया समाधिर्बोध्य इति **द्वैतनिर्णयकृदाद्युक्त**मपास्तम् । तत्र लक्षणया दूषणगणस्यान्यत्र **गुरुचरणै**रुक्तत्वात् । त्रिपुरुषमित्यनेन मातामहपर्यंतताया अलाभात् वचनस्य वैरूप्यापत्तेरस्योपपत्तेरुक्तत्वाच्चेति दिक् । **आवर्तते** तिष्ठति । पिण्डशब्दस्य साण्डिच्यपरत्वेन मर्यादार्थकाङ्क्षालब्धम् आह । **त्रिपुरुषमेवेति** ॥ ५३ ॥

## याज्ञवल्कीये ५४ श्लोकः

कन्याग्रहणे नियमं सूचयन्कुलपरीक्षामाह । **दशेति** । "पुरुषाः पूरुषा नरः" **इत्यमरः** (२।६।१) । एकत्र योजनेऽतादृशमातृकुलस्यापि संग्रहापत्तिरुत्कर्षासिद्धिश्चात आह । **मातृत इति** । **पाणिनि**सूत्रानुरोधेनाह । **अधीतेति** । शुद्धाध्ययनस्य निन्दितस्य प्रागुक्तत्वात् महाभाष्यादौ स्पष्टत्वाच्चाह । **अध्ययनमिति** । **श्रुतं** शास्त्रं । महत्वमेवाह । **पुत्रेति** । वाक्यसमाप्तये आह । **कन्येति** । निमित्तं विनाऽधिवेदनाभावेन युगपत्प्राप्त्यसंभवेन च पाक्षिकप्राप्तेर्नियमोऽयं न परिसंख्येति भावः । एवं सर्वतः ईदृशात्सर्वकुलात् संचारित्वं रोगस्यैव विशेषणमित्याह । **संचारिणो रोगा इति** । विशेषणार्थमाह । **शुक्लेति** । तदुक्तं **वैद्यके** "सर्वे संक्रामिणो रोगा वर्जयित्वा प्रवाहिकाम्" इति । **मनुनोक्ता इति**

"हीनाक्रियं निष्पुरुषं निश्छंदोलोमशार्शसम् । क्षय्यामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च ।
"स्त्रीसंबन्धे दशैतानि कुलानि परिवर्जयेत्"॥ इति **मनुः** ( अ. ३ श्लो. ६।७ )

यत्तु एतैरेवेति वचनमतिदेशार्थं कन्यानिष्ठसर्वगुणानामेवं च वरे सापिण्ड्यस्याप्यतिदेशः अत एव वरनिरूपितं कन्यायां कन्यानिरूपितं च वरे पृथगेव सापिण्ड्यं न तु संयोगवद्व्यासज्यवृत्त्युभयनिरूपितमेकमेव येनान्यतरतो निवृत्तौ सर्वथा निवृत्तिः स्यात् । अन्यथा वरे तदतिदेशवैयर्थ्यं स्यात् । एकत्र तदुक्तौ वोभयत्र तदुक्तिफललाभात् । तथा च शिष्टतरदाक्षिणात्यानामविप्रतिपन्नो व्यवहारः एकतो निवृत्तं सापिण्ड्यं नान्यत इतीति **द्वैतनिर्णयकृदादय**स्तन्न अनतिप्रसक्तैकपिण्डावयवान्वयरूपसापिण्ड्यभिन्नस्य तत्र तत्र तस्य भिन्नस्य स्वीकारे प्रमाणाभावात् सपिण्डशब्दस्य ससंबन्धिकत्वादेव तल्लाभे एतैरेवेत्येतच्छब्देन तत्परामर्शे फलाभावेनान्यत्र तदतिदेशे मानाभावाद्यवीयस्त्वादिपरामर्शाभावेन तस्य स्वर्गपरामर्शकत्वासंभवाच्च । किंच वधूवरयोः साक्षात्सापिण्ड्यासंभवेन स्वसपिण्डकूटस्थसपिण्डत्वमेव तद्वाच्यम् । न चैकत्र निवृत्तौ सत्यामपरत्रैतत्संभवति । किं चैतैरेव गुणैरित्यत्रासपिण्डत्ववदसमानगोत्रजत्वस्यापि परामर्शे तस्याप्यतिदेशापत्तौ एकत्र तन्निवृत्तावन्यत्र तदनिवृत्तिकल्पनमपि स्यात् । एतेन तत्रैवात्र वचनविरुद्धमपि फलं नास्तीति नातिदेश इत्यपास्तम् ।

यत्तु वधूवरयोर्न स्वतः सापिण्ड्यं किंतु कूटस्थसंततित्वात्सापिण्ड्येनैवातोऽष्टमं वर प्रति कन्याया असापिण्ड्येऽपि कन्यायाः कूटस्थेन सापिण्ड्यात्तत्संततिस्थत्वाद्वरस्तां प्रति सपिण्ड एवेति **निर्णयसिन्ध्वादय**स्तन्न । सपिण्डसंततिस्थत्वेन सापिण्ड्ये सोदकादावपि तदापत्तेः । अयमस्या असपिण्ड इयं त्वस्य सपिण्डेति व्यवहारस्य वाक्यविदामनुचितत्वात् । अष्टमे तत्संततित्वे सत्यपि पञ्चमात्सप्तमादित्यादिना सापिण्ड्याभावप्रतिपादनाच्च । तस्मादेकतो निवृत्तौ निवृत्तिरेव सर्वथा युक्ता । यद्यपीदं सर्वं प्रागुक्तमेव तथापि न सर्वथा **विज्ञानेश्वर**संमतं तदिति सूचनाय 'द्विर्बद्धमिति' न्यायेन पुनरुक्तमधिकमन्यतोऽवगन्तव्यम् ॥ ५४ ॥

## याज्ञवल्कीये ५५ श्लोकः

तदेतद्धृदि निधाय, "भूयसा व्यपदेश" इति न्यायेन तदंशमात्रे तात्पर्येणान्यथाऽवतरणमाह **एवमिति** । गुणैः संभावितैरन्वययोग्यैः । तत एवास्योपलक्षणतयाऽऽह । **दोषैश्चेति** । चो भिन्नक्रमः । तत एवाह । **एतस्येति** । सवर्णाशब्दस्य समानवर्णार्थत्वे आह । **समानेति** । तत्र सहशब्दस्याधिकार्थकत्वे आह । **उत्कृष्टो वेति** । सकृदुच्चरितस्य कथमर्थद्वयमतस्तात्पर्यार्थमाह । **न हीनेति** । अन्यथा परग्रन्थविरोधः स्पष्ट एवेति भावः । कुलस्य श्रोत्रियत्वेनावश्यकेन तत्वनिरासायाह । **स्वयं चेति** । चेन कुलस्यापि समुच्चयः । **पुंस्त्वे इति** विषयसप्तमी । **च**स्त्वर्थे । **प्लवते** गच्छति । तदभावावस्थायां लक्षणान्तरमाह । **ह्रादीति** । सध्वनीत्यर्थः । **च फनिलं** फेनिलं च । इदं दिक्प्रदर्शनमित्याह **लक्षणैरेतैरिति** । **विपरीतः** । एतल्लक्षणरहितः । विपरीतैरिति पाठे एतद्विरुद्धैस्तैरित्यर्थः । **षण्ढक** इत्यत्र स्वार्थे कः । उक्तहेतोर्बालस्य संग्राह्यत्वादाह । **न वृद्ध इति** । विनिगमनाविरहादन्यतरमात्रेणानिर्वाहाच्चाह । **लौकिकेति** । 'बुद्धिमते कन्यां प्रयच्छेदिति' **गृह्यम्** । **जनप्रिय** इत्यत्र षष्ठीसमासः सूचयन्नाह **स्मितेति** । **कात्यायनेन** वर्ज्या उक्ताः ।

"दूरस्थानामविद्यानां मोक्षमार्गानुसारिणाम् । शूराणां निर्व्रतानां च न देया कन्यका बुधैः" । इति ॥ ५५ ॥

## याज्ञवल्कीये ५६ श्लोकः

संगतिमाह । **रतीति । सवर्णामुख्येति ।** तस्य तत्सवर्णत्वे तस्यास्तत्वस्यार्थलब्धत्वादिति भावः । अत एव "सवर्णाऽग्रे द्विजातीनां प्रशस्ता दारकर्मणीति" **मनुः** (अ.३।१२)। **इत्याहेति ।** इत्याशङ्कायां तमेवाहेत्यर्थः । यदुच्यते इत्यत्र **मनु**नेति शेषं सूचयन्नाह । **कामेति ।** एतेन तदुत्तरत्वमस्येति सूचितमित्युपक्रम्येति यदुच्यते मनुनेत्यर्थः । इत्थं हि सः सवर्णाग्रे । "कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशो वराः" ।

"शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते । ते च स्वा चैव राज्ञस्तु ताश्च स्वा चाग्रजन्मन" ( अ. ३।१३ ) । इति ।

**इमाः** वक्ष्यमाणाः सवर्णा असवर्णाश्च क्रमेण वराः वरणीयाः शास्त्रानुज्ञाता इत्यर्थः । 'शूद्रादारोपसंग्रह' इत्यस्य शूद्राऽभिन्नस्त्रीपरिणय इत्यर्थः । मम शब्दार्थमाह । **याज्ञेति ।** मूले आत्मेत्यपाठध्वननायाह । **अयमिति ।** तदर्थमाह । **द्विजातिरिति ।** तत्र शूद्रायां स्वयमित्यस्य स्वात्मनेत्यर्थः । स्वस्वरूपेणेति यावत् । अनेन श्रुत्यर्थ उक्त इत्याह । **तदिति ।** जायात्वेनाभिमता तत्तस्माज्जायापदवाच्या भवति यस्मादस्यां पुनर्द्वितीयवारं स्वयं जायते इत्यर्थः । अनेन जायतेऽस्यामिति जायापदयोगार्थः प्रदर्शितः जायायां मनुनाऽपीदमभिप्रेत्यैवोक्तं तदव्यवधानेन । ( अ. ३ श्लो. १४–१९ )

"न ब्राह्मणक्षत्रिययोरापद्यपि हि तिष्ठतोः । कस्मिंश्चिदपि वृत्तांते शूद्रा भार्योपदिश्यते" ॥ **वृत्तांते** उपाख्याने ।

"हीनजातिं स्त्रियं मोहादुद्वहन्तो द्विजातयः । कुलान्येव नयन्त्याशु ससंतानानि शूद्रताम् ॥
"शूद्रा वेदी पतत्यत्रेरुतथ्यतनयस्य च । शौनकस्य सुतोत्पत्त्या तदपत्यतया भृगोः ॥
"शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम् । जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयते ॥
" दैवपित्र्यातिथेयानि तत्प्रधानानि यस्य तु । नाश्नन्ति पितृदेवास्तं न च स्वर्गं स गच्छति ॥
"वृषलीफेनपीतस्य निःश्वासोपहतस्य च । तस्यां चैव प्रसूतस्य निष्कृतिर्न विधीयते " इति

अवतरणोक्तार्थलाभप्रकारमाह । **अत्र चेति । नैत्येकेति ।** धन्वयोपधादिति वुञ् । तस्येदमित्यर्थे । उत्पादनेऽन्वयः । एवमग्रेऽपि । सर्वत्र सर्वं तु कल्पे तन्निमित्तोत्पादने तदनुकल्पार्थम् ॥५६॥

## याज्ञवल्कीये ५७ श्लोकः

मध्यमणिन्यायेनाह । **उत्पन्नपुत्रस्य वेति ।** अनेन पुत्रार्थत्वनिरासः अन्यथा धर्मानिर्वाहमाह । **आश्रमान्तरेति ।** तत्राधिकारेऽप्यानिच्छायामाह । **गृहस्थेति ।** मात्रपदेन रतेरपि व्यवच्छेदः वर्णान्वितस्य तिस्र इत्यादावन्वयः । यथाक्रममिति ब्राह्मणक्षत्रियविशामित्यत्रान्वेति । **वर्णक्रमेण** क्षत्रियादिक्रमेण । यथाक्रममित्यास्यार्थं सूचयन्नाह । **ब्राह्मणस्येति ।** उक्तरीत्या शूद्रस्यापि स्वन्यूनरजकतक्षकादिकन्याप्राप्तिवारणाय 'सर्वं वाक्यमिति' न्यायेनोक्तमनोश्चाह । **शूद्रस्य स्वै-**

---

१ V. L. धर्मकामस्याविनष्टभार्यस्य वेति ।

**वेति**। उत्कृष्टजातीयानां तु नैव प्राप्तिः क्रमग्रहणादिति भावः। यद्यप्युभयोपादानाद् ब्राह्मणादीनां ब्राह्मण्यादिक्रमेणेत्यर्थो न भवति तथापि तद्भ्रमनिवृत्तये स्फुटप्रतिपत्तये च न्यूनतानिरासमाह। **सवर्णेत्यादि**।

ननु काम्ये मुख्या नोक्ता, किंच प्रागुक्तानुकल्पे क्रमो नोक्त इत्यत आह। **अयमेव चेति**। एवं सति मन्वादिविरोधं परिहरति **अतश्चेति** उभयार्थत्वेन तत्स्वीकारस्येष्टत्वाच्चेत्यर्थः। **कीर्तनं चेति**। इदमुभयं **मनुना** कृतं। **तथेति**। तद्वदित्यर्थः इदं मूलकृदुक्तमग्रे एव। **आश्रमेति**। गृहस्थाश्रमेत्यर्थः। अस्योभयार्थविवाहस्य मुख्यत्वेन तज्जस्य मुख्यत्वात् द्विविधपुत्रार्थविवाहे सवर्णैव **मुख्येति** तज्ज एव मुख्यो नानुकल्पत इति ॥ ५७ ॥

## याज्ञवल्कीये ५८ श्लोकः

**विवाहानिति**। क्रमेण अष्टेत्यर्थः तथा च **मनुः** (अ. ३ श्लो. २१)।

"ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः। गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः" ॥ इति।

वरायेत्यस्य दीयत इत्यत्रान्वयः

"अद्भिरेव द्विजाग्र्याणां कन्यादानं प्रशस्यते"। इति (अ. ३ श्लो. ३५)

**मनू**केराह। **उदकेति**। तज्ज इत्यस्य तस्माद्ब्राह्मविवाहाज्जात इत्येव शाब्दोऽर्थः। सर्वनाम्नां प्रधानपरामर्शित्वात्तथापि फलितमाह। **तस्यामिति**। तद्विवाहसंस्कृतायामित्यर्थः। "दशपूर्वान्परान्वंश्यानात्मानं चैकविंशतिमिति" (अ. ३।३७)। **मनु**राह। **पित्रादीनिति**। एतेनोभयत इत्यस्य पितृपक्षे मातृपक्षे चेत्यर्थ इत्यपास्तम्। **विंशमिति** तत्संख्यापूरकमित्यर्थः एकविंशतिमित्यत्रापपाठः। "ब्राह्मीपुत्रः सुकृतकृन्मोचयत्येनसः पितॄनिति" **मनु**राह। **सदिति** ॥ ५८ ॥

## याज्ञवल्कीये ५९ श्लोकः

**यज्ञस्येति** कर्मधारयः। ऋत्यक इति प्रकृतिभावः। यद्यपि तत्रत्याय तस्मै इति शाब्दोऽर्थस्तथापि "यज्ञे तु वितते सम्यक् ऋत्विजे कर्म कुर्वते" इति। (अ. ३ श्लो. २८) **मनो**स्तिष्ठतेरहान्यर्थकत्वेन फलितमाह। **यज्ञेति**। ज्योतिष्टोमाद्यनुष्ठाने प्रारब्धे सति तत्कर्मकारिणे ऋत्विजे इत्यर्थः यद्यपि गवादिवत्कन्यादक्षिणात्वेन न श्रुता क्रत्वर्थतया तथापि "सम्यक्कर्म कुर्वते तस्मा" इति **मनुवचना**त्परितोषेण दानस्याग्रेऽपि सम्यक्करणरूपफलार्थत्वेन तदर्थतयाऽविहितस्य तदुद्देशेनादीयमानस्यापि तत् करणप्रवृत्तस्योपकारजननमेव तावतैवोपकारसंबन्धेन ब्राह्माद्दैवो न्यून इति कदाचित्कोऽयमत एव न हि कर्मणि कर्मारम्भ इत्यस्याविषयोऽयमिति बोध्यम् ॥ ५९ ॥

यथाशक्त्यलंकृतेत्यस्य सामान्यतः सर्वविवाहशेषत्वध्वननायाह। **यथेति**। एवमग्रेऽपि बोध्यम्। यद्यपि गोद्वयमित्येवोक्तं मूले तथापि "एकं गोमिथुनं द्वे वा वरादादाय धर्मत" इति। (अ.३श्लो.२९) **मनु**राह। **गोमिथुनमिति** "दैवोढाजः सुतश्चैव सप्त सप्त परावरानिति" (अ.३श्लो.३८) **मनु**राह। **समाव-**

**रान्सप्तपरानिति** पद्ये चस्त्वर्थो तु पाठस्तु युक्त एव " आर्षोढाजः सुतस्त्रींस्त्रीनिति " तदुक्तेराह । **त्रीनिति** ॥ ५९ ॥

## याज्ञवल्कीये ६० श्लोकः

**सहेति ।** उभावित्यादिः कन्यादानमित्यस्य यत्स इत्याद्यन्तौ । आभाषणस्यार्थित्वं विनाऽसंभवे नैतेनैव अर्थित्वस्याविवक्षितत्वाद्व्याख्यानेऽनुक्तिः । उक्तमनोः कायशब्दार्थमाह । **प्राजेति** को ब्रह्मा पद्ये । **या इति ।** यत्रेत्यर्थे छान्दसम् । तथा चाप्रार्थितोपनतो भूमिहिरण्यादिवद्ब्राह्मः, ऋत्विक्त्वेन विशेषेण दैवः, गोमिथुनेनार्षः, याञ्चयाऽयाञ्चया वा तादृशवचनपूर्वस्तुर्य इति बोध्यम् । अन्ये तु सुबोधा एव ।

**तज्जः** प्राजापत्यविवाहजः । **षट्पूर्वानात्मना सह षट्परानात्मना सहेत्येकादश पुनातीति** आत्मना सहेत्यस्य षट्त्वेऽन्वयः श्रुतत्वादिति भावः । क्वचित्तु षट्पूर्वान् षट्परानात्मना सहेत्येवं त्रयोदश पुनातीति पाठः । युक्ततरश्चायं "षट् षट् कायोढजः सुत" इति **मनूक्तेः ।** पूर्वसंदर्भस्वारस्याच्च । तथा च प्रधानक्रियायामेव साहित्यान्वय इति तात्पर्यम् ।

अत्र धर्मशब्दोऽर्थकामयोरप्युपलक्षणं स्मृत्यन्तरानुरोधात् । अत एव धर्मे चार्थे च कामे च तुल्ययोगक्षेमता मिथः तत्रापि साहित्यं प्रत्येकं न तु समुदायनिष्ठम् । "यद्यप्यन्येष्वपि विवाहेषु सह धर्मादिचरणमस्ति तथाप्यत्र यावज्जीवं तदेव न तु मध्ये आश्रमान्तरपरिग्रहः स्त्र्यंतरपरिग्रहो वेति विशेष" इति **नृसिंहहरदत्तौ ।** यद्यप्यस्यार्षात्त्यागाभिधानं युक्तं ततोऽस्योत्कृष्टत्वात्तथापि " पञ्चानां च त्रयो धर्म्या " ( अ ३ श्लो. २५ ) इत्यत्र **मानवे**ऽस्य ग्रहणार्थमेवं तदनुरोधेनैवोक्तम् ॥ ६० ॥

## याज्ञवल्कीये ६१ श्लोकः

**द्रविणेति** द्रव्यस्यासंमतादानादित्यर्थः । तच्च कन्यायै तत्पित्रादिभ्यश्च ।

**तथा च मनुः ।** ( अ. ३ श्लो. ३१ )

"ज्ञातिभ्यो द्रविणं दत्वा कन्यायै चैव शक्तितः । कन्याप्रदानं स्वाच्छंन्यादासुरो धर्म्म उच्यते"॥

इति । स्वाच्छन्यात्स्वेच्छातो न शास्त्रतः आप्रदानमानयनम् । स्वाच्छन्यादित्यनेनार्षाद्भेदः तत्र शास्त्रतस्तथा । समयादित्यस्य लक्ष्यार्थमाह । **परस्परानुरागेणेति ।**

**तथा च मनुः ।** ( अ. ३ श्लो. ३२ ) ।

"इच्छयाऽन्योन्यसंयोगः कन्यायाश्च वरस्य च । गांधर्वः स तु विज्ञेयो मैथुन्यः कामसंभवः॥" इति मिथुनस्य प्रयोजनं मैथुनं तस्मै हितो मैथुन्यः ।

**युद्धेनेति** तदुद्देश्यक**युद्धेने**त्यर्थः ।

**तथा च मनुः ।** ( अ. ३ श्लो. ३३ ) ।

"हत्वा छित्वा च भित्वा च क्रोशन्तीं रुदतीं गृहात् । प्रसह्य कन्याहरणं राक्षसो विधिरुच्यत इति" ॥

"**कन्यका । छलात्** तस्या छलेन अपहरणात् । तदेवाह । **छद्मनेति । तस्यैव** व्याख्या **स्वापेति । तथा च मनुः** ( अ. ३ श्लो. ३४ ) ।

"सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति। स पापिष्ठो विवाहानां पैशाचः प्रथितोऽष्टमः"॥ इति एतेषु चतुर्षु पूर्ववत्फलं नोक्तम्। एतेषां निन्द्यत्वात्। **तथा च मनुः** (अ. ३ श्लो. ३९)।

"ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः। ब्रह्मवर्चस्विनः पुत्रा जायन्ते शिष्टसंमताः॥

"रूपसत्त्वगुणोपेता धनवन्तो यशस्विनः। पर्याप्तभोगा धर्मिष्ठा जीवन्ति च शतं समाः॥

"इतरेषु तु शिष्टेषु नृशंसानृतवादिनः। जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः॥

"अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा। निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान्विवर्जयेत्॥" इति। तत्रापि विशेषस्तेनैवोक्तः।

"षडानुपूर्व्या विप्रस्य क्षत्रस्य चतुरोऽवरान्। विट्शूद्रयोस्तु तानेव विद्याद्धर्म्यानराक्षसान्"॥ इति।

आदितः षड्विवाहा विप्रस्य धर्म्याः आसुरादयश्चत्वारः क्षत्रियस्येति **माधवो मेधातिथिश्च**। **नारायणस्तु**। "पैशाचस्य शूद्रेष्वपि निन्दितत्वात्प्राजापत्यादयश्चत्वारो ग्राह्याः तानेव चतुरो राक्षसान्प्राजापत्यासुरगंधर्वानवशिष्टानिति" व्याचख्यौ।

एतेषां मध्ये प्रशस्तान्**मनु**रेवाह (अ. ३ श्लो. २४)

"चतुरो ब्राह्मणस्याद्यान् प्रशस्तान्कवयो विदुः। राक्षसं क्षत्रियस्यैकमासुरं वैश्यशूद्रयोः।

"पञ्चानां च त्रयो धर्म्या द्वावधर्म्यौ स्मृताविह। पैशाचश्चासुरश्चैव न कर्तव्यो कदाचन।

"पृथक् पृथग्वा मिश्रौ वा विवाहौ पूर्वचोदितौ। गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ"॥ इति। अन्य विवाहसंभवे पैशाचमपि ब्राह्मणादीनां सर्वेषां **मनु**रेवाह।

"सर्वोपायैरसाध्या स्यात्सुकन्या पुरुषस्य या। चौरेणापि विवाहेन सा विवाह्या रहःस्थिता"॥ इति। गान्धर्वादिष्वपि भार्यापतिभावाय पश्चाद्धोमादिसप्तपद्यन्तं कार्यम्।

"गान्धर्वासुरपैशाचा विवाहो राक्षसश्च यः। पूर्वं परिग्रहस्तेषु पश्चाद्धोमो विधीयते"॥ इति।

परिशिष्टात् होमाद्यभावे वरान्तराय देया" सति तु नेति विशेषः। तदुक्तं **वसिष्ठबौधायनाभ्यां** (अ. १७।७३)

"बलादपहृता कन्या मन्त्रैर्यदि न संस्कृता। अन्यस्मै विधिवद्देया यथा कन्या तथैव सः"॥ इति।

"बलादिति छलादेरप्युपलक्षणम्। **स्मृत्यर्थसारे**

आसुरेषूपवासः स्याद्गान्धर्वेषु त्रिरात्रकम्। राक्षसे चैव पैशाचे कुर्याच्चान्द्रायणं तथा॥" इति।

यथाश्रुतेऽनन्वयादाह। **विवाह इति**॥ ६१॥

## याज्ञवल्कीये ६२ श्लोकः

तद्विषयकस्वगृह्योक्तपाणिग्रहणाख्यसंस्कारे इत्यर्थः। **स्वेत्यस्य** मध्यमणिन्यायेनान्वयः। "सर्वं वाक्यमिति" न्यायेनाह। **पाणिरेवेति। शरमिति**। ब्राह्मणपाणिपरिग्राह्यं शरमित्यर्थः। पाणिस्थाने शरस्य विधानात्। **एवमग्रेऽपि। प्रतोदं** बलीवर्दप्रेरकं प्रतुद्यते येनेति व्युत्पत्तेः। वक्ष्यमाण**मनो** "वेदने त्वग्रजन्मन" इत्यस्य सर्वं शेषत्वमाह। **उत्कृष्टवेदनेति**। तथा च सापेक्षमग्रजन्मत्वं न तु प्रसिद्धमेवेति भावः॥ ६२॥

## याज्ञवल्कीये ६३ । ६४ श्लोकौ

मूलीयन्यूनतां निराचष्टे । **शूद्रा पुनरिति । नाशो**ऽदर्शनं तच्च द्वेधेत्याह । **पूर्वाभावे इति।** सकुल्य इत्यस्य प्रत्यासत्तिक्रमेणादौ पितृकुलस्थः तदभावे मातामहकुलस्थ इत्यर्थः । सर्वाभावे जननी । **तथा**शब्दः समुच्चये । अग्रिममपि साधारणमित्याह । **अत इति** ।

"काममा मरणात्तिष्ठेद्गृहे कन्यर्तुमत्यपि । न त्वेवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित् ॥" इति ।

**मनुः** (अ. ९ श्लो. ८९)। **यमो**क्तेराह**तच्चोक्तेति**। इदं च मुख्यकल्पाशयेनोक्तं, यदि तु तद्संभवो निर्गुणासंभवस्तदाऽपीदं बोध्यं यतः वस्तुतस्तु अप्रयच्छन् भ्रूणहत्यामित्युक्तेर्गुणाढ्यवरालाभे निर्गुणायापि देयैव ।

**अत एव बौधायनः** । ( ४।१।१२ )

"दद्याद्गुणवते कन्यां नग्निकां ब्रह्मचारिणे । अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम्" ॥ **इति**।

नग्निका नववार्षिकी रोहिण्यपरपर्याया **मनुरपि** ( अ. ९ श्लो. ८८ ) ।

"उत्कृष्टायाभिरूपाय वराय सदृशाय च । अप्राप्तामपि तां तस्मै कन्यां दद्याद्विचक्षणः" इति।

अप्राप्तामप्राप्तविवाहसमयां बालिकामपि इत्यर्थः । कालान्तरे दुर्गुणायापि देयत्वापत्तेरिति भावः । उक्त**मनुः । यमवाक्यं** तु गुणिलाभे निर्गुणाय न देयेत्येवंपरं न तु स्वार्थतात्पर्यकं **बौधायनो**क्तानुकल्पस्य निर्विषयतापत्तेरिति बोध्यम् ।

त्वर्थमाह । **यदा पुनरिति । उक्तेति** सावर्ण्यादिगुणयुक्तमित्यर्थः । तदसंभवे संभावितं **निर्गुणमपि वरं** पतिम् । आद्येनैवेन पित्रादिव्यावृत्तिः, द्वितीयेन तेन राजगमनव्यवच्छेदः । **वरये**त्स्वीकुर्यात् ।

इदं च तादृशद्विविधवरसंभवे । अन्यथा तु राजानं प्रति गच्छेद् वरान्वेषणकारणार्थं तदुक्तं **नारदेन** ( अ. १२ श्लो. २०–२२ )

"पिता दद्यात्स्वयं कन्यां भ्राता वाऽनुमते पितुः । मातामहो मातुलश्च सकुल्या बान्धवास्तथा ॥

"माता त्वभावे सर्वेषां प्रकृतौ यदि वर्तते । तस्यामप्रकृतिस्थायां कन्यां दद्युः स्वजातयः ॥

"यदा तु नैव कश्चित्स्यात् कन्या राजानमाव्रजेत्" ॥ इति

इदमाधिकारिमात्रप्रदर्शनपरं न तु क्रमबोधकम् । अत एव माता त्वभावे इत्यत्रैवाभावशब्दः प्रयुक्तो नान्यत्र तेन तत्रैव क्रमो नान्यत्रेति सूचितम् । अतो न क्रमबोधकप्रकृतवचनविरोध इति बोध्यम् । पाक्षिकप्राप्तत्वादाह । **सकृद्देवेति** ॥ ६३ ॥ ६४ ॥

## याज्ञवल्कीये ६५ श्लोकः

**अतः** नियमातिक्रमात् **तां** कन्यां **दत्त्वा**ऽपहरान्नित्यन्वयः । चुराशीलमस्येति चौरः तद्दण्डः शिरच्छेदः । **नारदोऽपि** ( अ. १२ श्लो. ३२ ) ।

"दत्तां न्यायेन यः कन्यां वराय न ददाति ताम् । अदुष्टश्चेद्वरो राज्ञा स दण्ड्यस्तत्र चोरवत्" **इति**।

दत्तां वाग्दत्तामदुष्टश्चेदित्यतो दुष्टाय न देयेति गम्यते । अत एव **गौतमः** (अ. ५ सू. २१) "प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यादिति" **अभिजनेति** । कुलीनतेत्यर्थः । उक्त**नारदात्** । मूलमुपलक्षणमित्याह **पूर्वस्य चेति** । एवं च तत्संभवेऽपि तददाने भ्रूणहत्याऽपि नेति बोध्यम् ।

"एतत्तु न परे चक्रुर्नापरे जातु साधवः । यदन्यस्याभ्यनुज्ञाय नरस्यान्यस्य दीयते" ( **मनु** अ. ९ श्लो. ९९ ) इति ।

"सकृदंशो निपतति सकृत्कन्या प्रदीयत । इति " च **मनू**क्तं तु निर्दोषविषयम् ।

"तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे" इति मनूक्तेराह । **सप्तमात्पदादिति** । क्वचित्समस्तपाठः । तथा च तदुत्तरं दुष्टत्वेऽपि न **हरणा** ।

अत एव **नारदः** ( अ. १२ श्लो. २३ ) ।

"स्त्रीपुंसयोस्तु संबन्धाद्वरणं प्राग्विधीयते । वरणाद्ग्रहणं पाणेः स संस्कारो विलक्षणः ॥

"तयोरनियतं प्रोक्तं वरणं दोषदर्शनात्" इति ।

तयोर्वरणपाणिग्रहणयोर्मध्ये वरणमानियतं यतस्तद्दोषदर्शनात्प्रत्यावर्तत इत्यर्थः ।

**यमोऽपि**

"नोदकेन न वा वाचा कन्यायाः पतिरुच्यते । पाणिग्रहणसंस्कारात् पतिः स्यात्सप्तमे पदे" इति ।

अनेन च सप्तपद्याः प्राग्वरमरणे न वैधव्यमिति गम्यते । **वसिष्ठो**ऽप्येवं स च दायविभागे स्फुटीभविष्यति ॥ ६५ ॥

## याज्ञवल्कीये ६६ श्लोकः

आरोपिताकथनाद्दावदोषायाह । **चक्षुरिति** । तृतीयपादार्थमाह । **अदुष्टां त्विति** । त्यजन् त्यजेश्च मूलस्थस्य च व्युत्क्रमत्वात् उत्तमेत्यस्य मध्यमणिन्यायेनाभयत्रान्वयात् चसमुच्चयमा**होत्तमेति** । अत एव तस्यार्धान्ते पाठः । एवेन वक्ष्यमाणनिरासः तुचयोः स्वारस्यात् ।

तुर्यपादार्थमाह । **य इति** । त्वर्थमाह । **पुनरिति** । स्मृत्यन्तरानुरोधेनाह । **विवाहादिति** । दिननिमित्तेन मृषार्थमाह । **असद्भिरिति** । **तथा च नारदः** ( अ. १२ श्लो. ३६ )

"दीर्घकुत्सितरोगार्ता व्यङ्गा संस्पृष्टमैथुना । धृष्टाऽन्याहितभावा च कन्या दुष्टा प्रकीर्तिता" इति ।

अन्याहितभावा पुरुषान्तरकृताभिलाषा वाग्दानोत्तरं कन्यादोषोपलम्भे गृहीताया अपि त्यागमाह । **मनुः** (अ. ९ श्लो. ७२) "विधिवत्प्रतिगृह्यापि त्यजेत्कन्यां विगर्हिताम्" इति । विगर्हितां दुष्टाम् । **नारदोऽपि**[1] ( अ. १२ श्लो. ३१ )

"नादुष्टां दूषयेत्कन्यां नादुष्टं दूषयेद्वरम्" ।

१ नारदोऽपि अ. १२।१८.

"दोषे सति न दोषः स्यादन्योन्यं त्यजतोर्द्वयोः" ॥ इति । अत्र यथावक्ष्यमाणस्वग्रन्था-विरोधस्तथा तत्रैव वक्ष्यते ॥ ६६ ॥

## याज्ञवल्कीये ६७ श्लोकः

संगतिं व्यवहितेनाह । **अनन्येति** । **कीदृशीत्याह** । इत्याशङ्कायामाह । **पुनर्भू**रित्यंतमेकं वाक्यं **संस्कृतेत्या**दिद्वितीयमक्षतालक्षणं **स्वैरिणी**त्यादितृतीयं तद्भनयन्नाह**ान्येत्यादि** । क्षता-लक्षणं स्पष्टत्वान्मूलानुक्तं स्वयमेवाह । **तत्र क्षतेति** । संस्कारोत्तरं तादृश्याः स्वैरिणीत्वेन शाब्दमेवार्थ-माह । **संस्कारात्प्रागिति** । अत एवैतल्लक्षणानुक्तिः । **एवेन** तस्या एव व्यवच्छेदः । **पुनरिति**-त्यर्थे । अत एव मूले व्युत्क्रमोक्तिरेतेन संस्कारान्वयित्वं तस्यै यथाश्रुतो वा वक्ष्यमाण**नारदात्** ।

त्यागे हेतुं सूचयन्नाह । **कौमारमिति** । अनेन तदवस्थायामन्यपूर्वात्वमपि निरस्तम् ॥ ६७॥

## याज्ञवल्कीये ६८।६९ श्लोकौ

**पित्रेति** । तदित्यादिः । पुत्रकाम्ययेत्यस्यानुज्ञायामन्वयं सूचयन् तदर्थमाह । **पुत्रार्थमिति** । क्रमस्य विवक्षितत्वात्तल्लब्धमर्थमाह**ैतेषामति** । प्रदेशविशेषनिरासायाह । **घृताभ्यक्तसर्वाङ्ग इति** । सर्वगात्र इति पाठान्तरम् । अयमपि नियमः पुत्रार्थत्वादनुज्ञाया इत्याह । **ऋतावेवेति** । अन्यथेत्यस्यार्थमा-**होर्ध्वमिति** । गच्छन्नित्यस्य मध्यमणिन्यायेनान्वयः । तस्यार्थान्तरमाह**ान्येनेति** । अनुज्ञाभावादिने-त्यर्थः । अस्येत्यस्यार्थमाह । **पूर्वेति** । आचार्या इत्यनेन **विश्वरूपाचार्या** इत्यर्थकेनास्य स्वानभिम-तत्वं सूचितम् । अत एव दत्तामिति पूर्वपरिणेतुरिति च स्वयमुक्तम् । अत एव पाण्डवादीनां क्षेत्रजत्वम् । **मनु**वाक्यस्य तु नायमर्थः । किंतु तादृशस्थले तद्देवराय सा कन्या देयेति । अत एव निज इति पदं परि-णमेदित्यर्थकं विन्देतेति पदं च तत्रोक्तमधिकमन्यतो बोध्यम् स्फुटीभविष्यति च दायविभागप्रकरणे इति बोध्यम् । **तथा च** त्रिविधान्यपूर्वामध्येऽक्षतायामयं विशेष एव न तु पुनर्विवाहः अत एव विशेषमा-हेत्येवावतरणे उक्तं न तु प्रतिप्रसवमित्यादीति तात्पर्यम् । **नारदेन** तु पुनर्भूत्रयम् स्वैरिणीचातुर्वि-ध्यमुक्तम् । न तु ऋक्थग्राहऋणं दाप्य इत्यत्र स्फुटीभविष्यति पुनर्भूविषयविशेषान्तरं चाशौचप्रकरणे स्फुटीभविष्यति । **तां** तच्छीलां । मात्रपदेनाधिकस्निग्धादिनिरासः ॥ ६८ ॥ ६९ ॥

## याज्ञवल्कीये ७० श्लोकः

**अधः शय्यामिति** बहुव्रीहिलब्धमाह । **भूतलेति** । वक्ष्यमाणस्मृतेरर्थान्तरनिरासपूर्वकव्यभि-चारनिरासायैवाह **स्वेति** । **नारदोपि** । ( अ. १२ श्लो. ९१ ) ।

---

V. L. १ तस्यान्ति । २ **सर्वेति** रतिपुत्रधर्मार्थत्वेनेत्यर्थः । **विवाह इति** । **विशेषमिति** विवाहाभावेऽपि तदनुज्ञया तन्मात्रार्थम् । **स्वीका इत्यर्थः** । परिणीताविषयमेवेदमित्याह **दत्तामिति** अविषयमाह । **अलब्धेति** । एवंर्थमाह ।

"व्यभिचारे स्त्रिया मौण्ड्यमधः शयनमेव च। कदन्नं च कुवासश्च कर्म चावस्करोज्झनम्"॥ इति। वासमात्रस्य न शुद्धिजनकत्वमित्याह । **वैराग्येति** । इदं च प्रायश्चित्तार्थमेव । **पृथगिति** । पुरुषप्रायश्चित्तात्पृथगित्यर्थः । अन्यथा तेनैव सिद्धे तदानर्थक्यं स्पष्टमेव । इदमपि समानेषु सवर्णेषु इच्छापूर्वकव्यभिचारे एव । अन्यत्र तु स्वल्पमित्यग्रे स्फुटीभविष्यति ॥ ७० ॥

## याज्ञवल्कीये ७१ श्लोकः

स्त्रीणामर्धमिति तु स्त्रीपुंससाधारणव्रतोपदेशविषयम् । इदमप्यतिदेशविषयत्वात्ततः किंचिन्न्यूनमित्याह। **तस्या इति** । व्यभिचारिण्या इत्यर्थः। **स्त्रीणामिति**। शेषत्वेन विवक्षायां षष्ठी । स्वमग्रेऽपि श्रुत्युक्तमाह । **परीति** । **सर्वमेध्यत्व**मित्यत्रसामान्ये नपुंसकं तस्य सर्वावयवावच्छेदेन मेध्यत्वमित्यर्थं सूचयन् चरमपादार्थमाह । **तस्मादिति** । अत इत्यस्यार्थोऽयं हि यत इत्यादिः । **वै** निश्चये । दोषः **स एव** तर्हि तस्याः स एव नास्तीति नाशङ्कनीयमित्येवाहेत्यर्थः ॥ ७१ ॥

## याज्ञवल्कीये ७२ श्लोकः

प्रकाशितस्थले त्रिरात्रादेरुक्तत्वादाह। **अप्रेति**। द्वितीयाज्ञातादित्यर्थः। अत एवाह **मन इति**। तदर्थमाह **पुरुषान्तरेति**। तस्य स्वल्पपापत्वसूचनायाह। **अपुण्यमिति** । लक्ष्यार्थमाह। **रजोदर्शने इति** । सतिसप्तम्यानिमित्तत्वं फलति। **मनुमाह**। **ब्राह्मणेति**। प्रजातं प्रजनो गर्भग्रहणं तथासां नास्ति ता इतराः गृहीतगर्भाः। **अन्यत्रापि त्यागमाह**। **तथेति**। मूलस्थमिदं तद्वदित्यर्थः। **चतस्र इति**। तास्तु विशेषेण परित्याज्या इत्यर्थः । **व्यासेति** । **वसिष्ठोऽप्येवम्** । "व्यवाये तीर्थगमने धर्मेभ्यश्च निवर्तत"इत्यादिस्तस्य ।

"कुष्ठिनीं पतितां वन्ध्यामुन्मत्तां पतितार्त्तवाम्। अनिष्टां लभते त्यक्तुं तीर्थात्तस्यैव कर्मणः"॥ इति।

**देवलोऽपि** । तीर्थात् योनितः कर्मणः पापकर्मतः। **नारदोऽपि** । ( अ. १२ श्लो. ९०।९१।९२।९३।९४ )

"अन्योन्यं त्यजतो रागः स्यादन्योन्यविरुद्धयोः। स्त्रीपुंसयोर्निगूढाया व्यभिचाराहृते स्त्रियाः ॥
"स्त्रीधनभ्रष्टसर्वस्वां गर्भविध्वंसिनीं तथा । भर्तुश्च वधमिच्छन्तीं स्त्रियं निर्वासयेद् गृहात् ॥
"अनर्थशीलां सततं तथैवाप्रियवादिनीम् । पूर्वादिनीं च या भर्तुस्तां स्त्रीं निर्वासयेद्गृहात् ॥
"वन्ध्यां स्त्रीजननीं निन्द्यां प्रतिकूलां च संत्यजेत्। कामतो नाभिनन्देत कुर्वन्नेवं स दोषभाक्"॥इति

आगः पापं । निगूढा सुरक्षिता । स्त्रीधनत्वेन भ्रंशितं सर्वस्वं यया सा ण्यर्थान्तर्भावात् ॥

**यमोऽपि**

"ऋतुस्नाता तु या नारी भर्त्तारं नोपगच्छति। तां ग्राममध्ये विख्याप्य भ्रूणघ्नीं तु विवासयेत् ॥

"भर्त्तुः प्रतिनिवेशेन या वृथा गमयेदृतून्। तां तु विख्याप्य बन्धूनां भ्रूणघ्नीं तु विवासयेत्"॥ इति।

प्रतिनिवेशो द्वेषः ।

**बौधायनोऽपि** ।

"अशुश्रूषाकरीं वन्ध्यां बन्धकीं परिहिंसकीम् । त्यजन्ति पुरुषाः प्राज्ञाः क्षिप्रमप्रियवादिनाम् ॥

"अप्रजां दशमे वर्षे स्त्रीप्रजां द्वादशे त्यजेत् । प्रेतप्रजां पञ्चदशे सद्यस्त्वप्रियवादिनी" ॥ इति ।

**हारीतोऽपि** ।

"गर्भघ्नीमधोवर्णशिष्यसुतगामिनीं पानव्यसनसक्तां च धनधान्यक्षयकरीं च वर्जयेदिति" ।

**यमोऽपि** ।

"स्वच्छन्दगा च या नारी तस्यास्त्यागो विधीयते । न चैव स्त्रीवधं कुर्यान्नचैवाङ्गविकर्त्तनम् ॥

"स्वछन्दव्यभिचारिण्यां विवस्वांस्त्यागमब्रवीत् । न वधं न च वैरूप्यं वधं स्त्रीणां विवर्जयेत्"॥ इति।

कारादिरित्यादिना रजकनटबुरडकैवर्त्तभेदभिन्नानां परिग्रहः ॥

**तस्या इति** पूर्वद्वयान्वायितमेवाह । **निरुन्ध्यादिति** । प्राग्वत् । अत एव तत्र स्ववेश्मन्येवेति व्याख्यातम् ॥ ७२ ॥

## याज्ञवल्कीये ७३ श्लोकः

**हेतुमिति** जातावेकवचनम् । सुरां पाति रक्षतीत्यर्थे सुरापा भवति गापोष्टगित्यत्र पिबतेः सुराशीध्वोरुपसंख्यानमिति वार्तिकादत आह । **सुरां पिबेति । शूद्राऽपीति** । तस्या अधिकारेऽप्यत्र दोष इति भावः । **अपिना** द्विजातिसंग्रहः । तमेवाह । **पततीति** । प्रतीतिदोषेण तदुन्नयनादित्यर्थः । स्वल्पव्याधेरदोषत्वाय लक्ष्यार्थमाह । **दीर्घेति** । विवाहोत्तरामित्यादिः । **विसमिति** विरुद्धभाषिणीत्यर्थः । अर्थस्याप्राणित्वेनाह । **नाशिनीति । निष्ठुरेति** । परुषेत्यर्थः । **पुरुषेति** । पतिसंबन्धिपित्रादिसकलपुरुषद्वेषिणीत्यर्थस्तदाह । **सर्वत्रेति** । तथाशब्द एतत्समुच्चये समुदितान्वये बहुवचनापत्तेराह । **अधीति । ग्रह इति** । तथा चाधिवेत्तव्येत्यस्य पतिकर्तृकपरिग्रहसाध्यभार्यान्तरनिष्ठभेदप्रतियोगिनीत्यर्थः । कृतसपत्नीका कर्तव्येति यावत् । **दक्षः**

"दुःखासिकाङ्गनिर्वेदच्छिद्रं पीडापरस्परम् । प्रतिकूलकलत्रस्य द्विदारस्य न संशयः ॥" इति ।

**मनुः** ( अ. ९ श्लो. ७७।७८।७९ )

"संवत्सरमुदीक्षेत द्विषन्तीं योषितं पतिः । ऊर्ध्वं संवत्सरात्त्वेनां दायं कृत्वा न संवसेत् ॥

"अतिक्रामेत्प्रमत्तं या मत्तं रोगार्तमेव वा । सा त्रीन्मासान्परित्यज्या विभूषणपरिच्छदा ॥

"उन्मत्तं पतितं क्लीबमबीजं पापरोगिणम् । न च द्विषन्त्यास्त्यागोऽस्ति न च दायप्रवर्तनम्" ॥ इति ॥७३॥

## याज्ञवल्कीये ७४ श्लोकः

**पूर्वेति** । अधिवेदनात्सत्कारैस्तत्पूर्वकम् । अन्यथेत्यस्य व्याख्याऽभरणे इति । प्राग्वदाह । **अपुण्यमिति** । मूलमुपलक्षणमित्याह । **वक्ष्येति** । उत्तरार्द्धेन फलान्तरमप्युच्यते इत्याह । **न चेति** । दंडाभावस्य प्रकारान्तरेणापि संभवादत्रानुक्तिः ॥ ७४ ॥

---

१ व्या. सू. ३।२।८

## याज्ञवल्कीये ७५ श्लोकः

**या चापल्यादिति** । मनसो चाञ्चल्यादित्यर्थः । "सर्वं वाक्यमिति" न्यायेनोक्तहेतुना चाह । **नैवोपेति** । इहेत्यस्य व्याख्या । **लोके**ऽस्मिन्लोके । तत एवाह । **विपुलामिति** । चो व्युत्क्रमे । मोदते इत्यस्य लक्ष्यार्थमाह **क्रीडेति** । हर्षपूर्वमित्यर्थः ॥

**दक्षः**

"गृहावासः सुखार्थो हि पत्नीमूलं च तत्सुखम् । सा पत्नी या विनीता तु चित्तज्ञा वशवर्त्तिनी ॥

"अनुकूला त्ववाग्दुष्टा दक्षा साध्वी प्रजावती । एभिरेव गुणैर्युक्ता श्रीरेव स्त्री न संशयः ॥

"प्रकृष्टमानसा नित्यं पतिमानविलक्षणा । भर्तुः प्रीतिकरी या तु सा भार्या इतरा जनाः ॥ "

**व्यासः**

"पूर्वोत्थानपरा दक्षा जघन्यासनशायिनी । अवाग्दुष्टा त्वनुकूला स्त्री भवेत्पुण्यकर्मण" इति॥७५॥

## याज्ञवल्कीये ७६ श्लोकः

दक्षगतिशैघ्र्ययोरित्यनुरोधेनाह । **शीघ्रेति** । वीरलक्षणलक्षितग्रहणे सर्वेष्टसंग्रहो न स्यादतो लक्ष्यार्थमाह । **पुत्रेति** । त्यागस्याविवक्षितत्वमसंभवादत आह । **अधीति** । कामार्थमित्यादिः । एवं प्रागपि।

द्विविधं ह्यधिवेदनं पुत्रधर्मार्थं कामार्थं च । तत्र पुत्रधर्मार्थे सुरापीत्वादिनिमित्तापेक्षा कामार्थे तु न तदपेक्षा किंतु सा तोषणीया ।

"एकामुत्क्रम्य कामार्थमन्यां लब्धुं य इच्छति । समर्थस्तोषयित्वार्थैः पूर्वोढामपरां वहेत्"

इति **स्मृतेः** ॥

यदा सा प्रतिकृतसान्त्वनेन तोषमेति सा तदा तस्य राज्ञा तोषार्थं तृतीयमंशं दाप्यः । सति सामर्थ्येऽन्यथा भरणमिति भावः । तृतीयांशेत्युक्तिस्तु स्वस्यैकोंऽशस्तस्या एकोंऽशः करिष्यमाणाया एकोंऽश इत्याशयेनेति बोध्यम् ॥

**नारदः** ( व्यवहारप. १२ श्लो. ९५ )

"अनुकूलामवाग्दुष्टां दक्षां साध्वीं प्रजावतीम् । त्यजन्भार्यामवस्थाप्यो राज्ञा दण्डेन भूयसा ॥

"चौरवच्छास्य" इत्यनुवृत्तौ "विनिर्दोषां परित्यजन् पत्नीं चेति" **देवलः** ॥

"दारांश्च त्यजतो मोहाद्धूतस्यान्यायमोचिनः । धर्मवंशपरित्यक्तुर्निष्कृतिर्न विधीयते" ॥ इति ।

अन्यायेन भोक्तुः यद्यपि ब्राह्मणस्य क्षत्रियादिविवाहः प्रागुक्तस्तथाप्यसवर्णासु कन्यासु विवाहश्च द्विजातिष्विति कलिवर्ज्येषु गणनात्सांप्रतं नेति तत्त्वम् ॥ ७६ ॥

## याज्ञवल्कीये ७७ श्लोकः

कदाचित्कत्वनिरासायाह । **सदेति** । तस्य धर्मत्वादेवाह । **यस्मादिति** । हिस्त्वर्थे इत्याह । **यदा त्विति** । मूलस्योपलक्षणत्वादाह । **अदीति** । **न तदिति** । तस्यामवस्थायां न तदधीनत्वमित्यर्थः ॥

---

१ व्या. धातुपाठ. गण १

अत्रैव पर इत्यनेन सूचिताः केचिदन्येऽपि स्त्रीधर्माः सर्वे **क्रोडीकृत्य लिख्यन्ते ।**

तत्र तावत्सौभाग्यवतीनां नित्यधर्माः । प्रातरुत्थानोत्तरकालिकाः भगवत्स्मरणादयः प्रसिद्धा एव । शौचं प्रायश्चित्तादिकं स्त्रीणामर्धमित्यपि प्रसिद्धमेव । अन्ये धर्माः श्रौतस्मार्तपौराणा दानहोमव्रतयात्रादयः सधवानां पत्या सहैव न तु स्वातन्त्र्येण, अनुमत्या तु तथापि, विधवानां तु पुत्राद्यनुमत्या । **तत्र विशेष उच्यते ।**

"प्रातःकाले तु या नारी गोमयेनोपलेपयेत् । प्रत्यहं सदनं साऽपि नैव दुःखानि पश्यति ॥
"प्रातःकाले तु सदनं लिप्यते यस्य सर्वदा । तुष्यन्ति तत्र देवाश्च पितरो दिव्यमातरः ॥
"प्रातःकाले तु या नारी शुचिर्भूत्वा समाहिता । पूजयेद्द्वारदेशं तु सर्वान्कामान्समश्नुते ॥
"कृत्वा मण्डलिकां बाह्ये तूष्णीमेवाक्षतादिभिः । पूजयेत्सततं यावत्तस्यास्तुष्यन्ति देवताः ॥
"उपलिप्य शुचौ देशे गृहमध्ये विभागतः । पूजयेद्गृहिणी प्रातः प्रत्यहं गृहदेवताः ॥
"पुत्रसौभाग्यसंपत्त्या न कदाचिद्वियुज्यते । यद्गृहं राजते नित्यं रङ्गवल्यनुलेपनैः ॥
"तद्गृहे वसते लक्ष्मीर्नित्यं पूर्णकलान्विता । प्रातःकाले तु या नारी दद्यादर्घ्यं विवस्वते ॥
"सप्त जन्मानि वैधव्यं नारी नैव प्रपश्यति ॥
"अवश्यमेव नारीभिर्ज्येष्ठयोर्बलिकर्मणा । प्रीणनं प्रत्यहं कार्यं पुत्रपौत्रधनेप्सुभिः" ॥

बलिकर्म नैवेद्यं यथासंभवं पुष्पाद्यर्चनं च कार्यम् ॥

"न ददाति तु या नारी ज्येष्ठायै प्रत्यहं बलिम् । भोज्यादन्नाद्यथाशक्ति सा प्रेत्य नरकं व्रजेत् ॥
"एवं या पूजयेन्नारी प्रत्यहं गृहदेवताः । पुत्रसौभाग्यसंपत्त्या न कदाचिद्वियुज्यते ॥
"उदुंबरे वसेन्नित्यं भवानी सर्वदा शिवा । सा तत्र प्रत्यहं पूज्या गन्धपुष्पाक्षतादिभिः ॥
"ब्राह्मे मुहूर्ते देवानां पितॄणां च समागमः । जागरस्तत्र कर्तव्य एकं संमोहनं हि तत् ॥
"ब्राह्मे मुहूर्ते सेवेत शयनं यत्र दम्पती । श्मशानतुल्यं तद्वेश्म पितृभिः परिवर्ज्यते" ॥ **इति ।**

यत्तु **मनुः** "जपस्तपस्तीर्थयात्रा प्रव्रज्या मन्त्रसाधनम् । देवताराधनं चेति स्त्रीशूद्रपतनानि षट्" ॥ इति तत् भर्तृशुश्रूषात्यागेन जपादिनिषेधपरं न तु सर्वथा तत्परम् ॥

**अत एव ।**

"पुण्यां पुण्यतमां भार्यां यो वा त्यक्त्वा प्रयाति हि । तस्य पुण्यफलं सर्वं वृथा भवति नान्यथा" ॥

इत्युक्तम् । भर्तृशुश्रूषा तु परमो धर्म इत्यनुपदमेव स्फुटीभविष्यति । दन्तकाष्ठभक्षणाघमर्षणमार्जनादौ सर्वत्र नम इत्येव मन्त्रः सर्वमन्त्रस्थाने । 'अनुमतोऽस्य नमस्कारो मन्त्र' इति शूद्रप्रकरणस्थ**गौतमात्** स्त्रीशूद्रयोः सधर्मत्वात् । न च पौराणमन्त्रपठनेऽधिकार इति वाच्यं स्त्रीशूद्रयोरपि पुराणाध्ययनस्य ॥

"अध्येतव्यं न चान्येन ब्राह्मणं क्षत्रियं विना । श्रोतव्यमेव शूद्रेण नाध्येतव्यं कदाचन इति" । **भविष्ये**

निषिद्धत्वेन तदन्तर्गतमन्त्रपाठस्य दूरगतत्वात् । स्नानेतिकर्तव्यता तयोः **पाद्मोक्तैव** पुराणस्य सर्वसाधारणत्वात् ।

"चतुर्णामपि वर्णानां यानि प्रोक्तानि श्रेयसे । धर्मशास्त्राणि राजेन्द्र शृणु तानि नृपोत्तम ॥

"विशेषतश्च शूद्राणां पावनानि मनीषिभिः । अष्टादशपुराणानि चरितं राघवस्य च" ॥

तथोक्तं **भारतं** चैवेति **नृसिंहपुराणात्**

एवं च पुराणमात्रप्रोक्तधर्मेषु मुख्योऽधिकारः । **पाद्मोक्त**प्रकारस्तु आह्निके स्पष्टः "देवब्राह्मणपूजनम्" इति साधारणधर्मत्वेन विष्णुना पाठाद्देवपूजायामधिकारः ।

"ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्राऽन्त्यजातयः । संपूज्य तं सुरश्रेष्ठं भक्त्या सिंहवपुर्वरम्"॥

इति **नारसिंहाच्च ।**

"स्त्रीणामप्यधिकारोऽस्ति विष्णोराराधनादिषु । दीक्षामन्त्रविहीनोऽपि कुर्याद्देवार्चनं बुधः ॥

"आगमोक्तेन मार्गेण स्त्रीशूद्रैरपि पूजनम् । कर्तव्यं श्रद्धया विष्णोः" ॥ इति **विष्णोश्च ।**

आगमोक्ततन्त्रशास्त्रं **स्कान्दे**

"ब्राह्मणक्षत्रियविशां स्त्रीशूद्राणामथापि वा । शालग्रामेऽधिकारोऽस्ति नान्येषां तु कदाचन"इति अन्येषां संकराणां बहवोऽत्र निर्मूलत्वं मन्यन्ते यत्तु

"यः शूद्रेणार्चितं लिङ्गं विष्णुं वा प्रणमेन्नरः । तस्येह निष्कृतिर्नास्ति प्रायश्चित्तशतैरपि ॥

"योषिद्भिः पूजितं लिङ्गं विष्णुं वा प्रणमेन्नरः । स कोटिकुलसंयुक्त आकल्पं नरकं वसेत्" ॥

इति **बृहन्नारदीयम्** तत्तु न शालग्रामपूजागमकम् "द्विजातेरेव पूज्योऽहं शुचेरप्यशुचेरपि" इति सर्वसंमत**स्कान्दाच्च** । अन्ये तु

"यदा प्रतिष्ठितं लिङ्गं मन्त्रविद्भिर्यथाविधि । तदाप्रभृति शूद्रश्च योषिद्वाऽपि न संस्पृशेत् ॥

"स्त्रीशूद्रकरसंस्पर्शो वज्रादपि सुदुःसहः" ॥

इत्यादिवचनबलादुक्तस्कान्दं स्पर्शपूर्वपूजानिषेधपरं विना स्पर्शं पूजा तु तयोरपीत्याहुः । एवमिष्टापूर्ते व्रते च सर्वत्राधिकारः कामश्रुतिगतपुंस्त्वस्याविवक्षितत्वात् ।तत्र सधवानां पत्यनुमत्या व्रतादौ पृथगप्यधिकारः अग्निसाध्यत्वाभावात् । अनन्तव्रतादौ शीलादिनिदर्शनाच्च । तत्र द्विजास्त्रियः स्वयं संकल्पमात्रं कृत्वा वैदिकमन्त्रयुक्तं सर्वं पुत्रादिद्वारा कारयेयुः । अपुत्रादयस्तु ब्राह्मणद्वारा "अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते" इति **वाराहात् ।**"स्त्रीशूद्राश्च सधर्माण" इति **मनोः ।** एवं दानकर्मविपाकादावप्यधिकारः, तेन व्रताद्यङ्गपुण्याहवाचनादावप्यधिकारः । अत एव रुद्राद्यनुष्ठाने साक्षादधिकाराभावेऽपि स्त्रीणां पतिब्राह्मणादिद्वारा अधिकारः अग्निहोत्रादिवत् । किंच

"नमोन्तेन शिवेनैव स्त्रीणां पूजा विधीयते । विरक्तानां च शूद्राणामेवं पूजा प्रकीर्तिता" ॥

इति **सूतसंहिता ।**

"स्त्रीणामनुपनीतानां शूद्राणां च नरेश्वर । लिङ्गपार्थिवमुद्दिष्टमेष धर्मः सनातनः ॥"

इत्यादि**स्कान्दादि**वचनबलादधिकारोऽस्त्येवेत्यभियुक्ताः । "नरो वा यदि वा नारी पार्थिवत्रितयं सदा" इति । "लभते पुत्रपौत्रांश्च परं श्रेयश्च भारत"॥ इत्यादिवचनाच्च "स्त्रीणां तु पार्थिवं लिङ्गं सभर्तॄणां विशेषत" इति विद्येश्वरसंहितेति दिक् । स्तोत्रगीतादिपठनेनाधिकारः प्रागुक्त **भविष्यात्**, किंतु "स्त्रीशूद्रद्विजबन्धूनां न त्रयी श्रुतिगोचरा । तेन भारतमाख्यातं कृपया मुनिना कृतम् ॥" इति

**भागवतात्** तच्छ्रवणेऽधिकारः। तदुक्तं **स्कान्दे सूतसंहितायाम् च**।

"अस्ति शूद्रस्य शुश्रूषा पुराणेनैव वेदनम्। वदन्ति केचिद्विद्वांसः स्त्रीणां शूद्रसमानताम्॥
"सिद्धान्तश्रवणं प्राह द्विजानां मुनिसत्तम। शूद्राणां च विरक्तानां तथा स्त्रीणां महामुने॥
"सिद्धान्तश्रवणं प्रोक्तं पुराणश्रवणं बुधैः" इति। सोऽपि विप्रादिद्वारकः
"देवार्चां पुरतः कृत्वा ब्राह्मणं च नृपोत्तम। श्रोतव्यमेव शूद्रेण तथान्यैश्च द्विजातिभिः॥
"श्रौतस्मार्तं हि वै धर्मं प्रोक्तमस्मिन्नृपोत्तम। तस्माच्छूद्रैर्विना विप्रं न श्रोतव्यं कदाचन॥"इति।

**यत्तु** "अध्येतव्यमिदं नित्यं विप्रैः पर्वणि पर्वणि। नाध्येतव्यमिदं शास्त्रं वृषलस्य च सन्निधौ॥
"योऽधीते चैव मोहात्मा स याति नरकान् बहून्"। इति **कौर्मम्**।

"नावेदविद्भ्यः कमनीयमेतत्पुराणरत्नं पुरशासनस्य। नाभक्तशिष्याय न नास्तिकेभ्यो दत्तं हि यत्तन्निरयं प्रयाति॥" इति। **वायवीयं** च,

तत्प्राधान्येन श्रवणनिषेधपरमत एव "श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रत" इति संगच्छते। अत्र साधकान्तरमप्युक्तं प्राक्। तस्मात्स्वातन्त्र्येण श्रवणमपि न कार्यमिति सिद्धमत एव व्रतादौ पतिसहिताया एवाधिकारस्तदनुमत्या तु केवलाया अपीत्यादि प्रागुक्तमिति बोध्यम्।

**अथ मनुः।**

"पुरुषस्य स्त्रियाश्चैव धर्मे वर्त्मनि तिष्ठतोः। संयोगे विप्रयोगे च धर्मान्वक्ष्यामि शाश्वतान्॥
"अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशम्। विषयेषु च सज्जन्त्यः संस्थाप्या ह्यात्मनो वशे॥
"पिता रक्षति कौमारे भर्ता रक्षति यौवने। रक्षन्ति स्थविरे पुत्रा न स्त्री स्वातन्त्र्यमर्हति॥
"काले दाता पिता वाच्यो वाच्यश्चानुपयन्पतिः। मृते भर्तरि पुत्रस्तु वाच्यो मातुररक्षिता॥
"सूक्ष्मेभ्योऽपि प्रसंगेभ्यः स्त्रियो रक्ष्या विशेषतः। द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः॥
"इमं हि सर्ववर्णानां पश्यन्तो धर्ममुत्तमम्। यतन्ते रक्षितुं भार्यां भर्तारो दुर्बला अपि॥
"स्वां प्रसूतिं चरित्रं च कुलमात्मानमेव च। स्वं च धर्मं प्रयत्नेन जायां रक्षन्हि रक्षति॥
"पतिर्भार्यां संप्रविश्य गर्भो भूत्वेह जायते। जायायास्तद्धि जायात्वं यदस्यां जायते पुनः॥
"यादृशं भजते हि स्त्री सुतं सूते तथाविधम्। तस्मात्प्रजाविशुद्ध्यर्थं स्त्रियं रक्षेत्प्रयत्नतः॥
"न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुम्। एतैरुपाययोगैस्तु शक्यास्ताः परिरक्षितुम्॥
"अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत्। शौचे धर्मेऽन्नपक्त्यां च पारिणाह्यस्य चेक्षणे"॥

धर्म इति धर्मसाधनकर्मण उपलक्षणं पूजोपकरणं सर्वमिति वक्ष्यमाणोक्तेः। कुण्डलकटकादि पारिणाह्यम्।

"अरक्षिता गृहे रुद्धाः पुरुषैराप्तकारिभिः। आत्मानमात्मना यास्तु रक्षेयुस्ताः सुरक्षिताः॥
"पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम्। स्वप्नोऽन्यगेहे वासश्च नारीसंदूषणानि षट्॥
"नैता रूपं परीक्षन्ते नासां वयसि संस्थितिः। सुरूपं वा विरूपं वा पुमानित्येव भुञ्जते॥

"पौंश्चल्याच्चलचित्ताच्च नैःस्नेह्याच्च स्वभावतः । रक्षिता यत्नतोऽपीह भर्तृष्वेता विकुर्वते ॥
"एवं स्वभावं ज्ञात्वाऽऽसां प्रजापतिविसर्गजम् । परमं यत्नमातिष्ठेत्पुरुषो रक्षणं प्रति" ॥
प्रजापतिर्हिरण्यगर्भस्तस्य विसर्गः सृष्टिकालस्तत्र जातम् ।
"शय्यासनमलंकारं कामं क्रोधमनार्जवम् । द्रोहभावं कुचर्यां च स्त्रीभ्यो मनुरकल्पयत् ॥
"नास्ति स्त्रीणां क्रियामन्त्रैरिति धर्मो व्यवस्थितः । निरिन्द्रिया ह्यमन्त्राश्च स्त्रियोऽनृतमिति स्थितिः ॥
"तथा च श्रुतयो बह्व्यो निगीता निगमेष्वपि । स्वालक्षण्यपरीक्षार्थं तासां शृणुत निष्कृतिम् ॥
"यन्मे माता प्रलुलुभे विचरन्त्यपतिव्रता । तन्मे रेतः पिता वृङ्क्तामित्यस्यै तन्निदर्शनम्" ॥

निरिन्द्रिया निर्वीर्या धैर्यप्रज्ञाबलादिरहिताः । प्रायशोऽनृतवदनशीलत्वात् स्त्रियोऽनृतमित्युच्यन्ते । श्रुतयः श्रुतिवाक्यानि निगमेषु वेदेषु स्वालक्षण्यं स्वरूपं तासां श्रुतीनां मध्ये या निष्कृतिरूपा व्यभिचारप्रायश्चित्तभूतास्ताः श्रुतीः शृणुत । स्त्रीस्वभावज्ञानार्थं तन्माता परपुरुषोपभोगजनितं पापं पितृरेतोऽपनुदन्तु । पितेति षष्ठ्यर्थे प्रथमा ।

"ध्यायत्यनिष्टं यत्किंचित्पाणिग्राहस्य चेतसा । तस्यैव व्यभिचारस्य निह्नवः सम्यगुच्यते ॥
"यादृग्गुणेन भर्ता स्त्री संयुज्येत यथाविधि । तादृग्गुणा सा भवति समुद्रेणेव निम्नगा ॥
"अक्षमाला वसिष्ठेन संयुक्ताऽधमयोनिजा । शारङ्गी मन्दपालेन जगामाभ्यर्हणीयताम् ॥
"एताश्चान्याश्च लोकेऽस्मिन्नपकृष्टप्रसूतयः । उत्कर्षं योषितः प्राप्ताः स्वैः स्वैर्भर्तृगुणैः शुभैः ॥
"एषोदिता लोकयात्रा नित्यं स्त्रीपुंसयोः शुभा । प्रीत्येह च सुखोदर्कान्प्रजाधर्मान्निबोधत ॥
"प्रजनार्थं महाभागाः पूजार्हा गृहदीप्तयः । स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन ॥
"उत्पादनमपत्यस्य जातस्य परिपालनम् । प्रत्यहं लोकयात्रायाः प्रत्यक्षं स्त्रीनिबन्धनम् ॥
"अपत्यं धर्मकार्याणि शुश्रूषा रतिरुत्तमा । दाराधीनस्तथा स्वर्गः पितॄणामात्मनश्च ह ॥
"पतिं या नाभिचरति मनोवाग्देहसंयता । सा भर्तृलोकमाप्नोति सद्भिः साध्वीति चोच्यते ॥
"व्यभिचारात्तु भर्तुः स्त्री लोकानाप्नोति निन्दितान् । शृगालयोनिं चाप्नोति पापरोगैश्च पीड्यते ॥
"यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः । यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः ॥
"शोचन्ति यामयो यत्र विनश्यत्याशु तत्कुलम् । न शोचन्ति तु यत्रैता वर्द्धते तद्धि सर्वदा ॥
"यामयो यानि गेहानि शपन्त्यप्रतिपूजिताः । तानि कृत्याहतानीव नश्यन्ति हि समन्ततः ॥
"तस्मादेताः समभ्यर्च्या भूषणाच्छादनाशनैः । भूतिकामैर्नरैर्नित्यं सत्कारेणोत्सवेषु च" ॥
यामयः स्वकुलस्त्रियो भगिनीस्नुषाद्याः ।
"विधाय वृत्तिं भार्यायाः प्रवसेत्कार्यवान्नरः । अवृत्तिकर्षिता हि स्त्री प्रदुष्येत् स्थितिमत्यपि ॥
"देवदत्तां पतिर्भार्यां विन्दते नेच्छयात्मनः । तां साध्वीं बिभृयान्नित्यं देवानां प्रियमाचरन् ॥
"प्रजनार्थं स्त्रियः सृष्टाः संतानार्थं समानवाः । तस्मात्साधारणो धर्मः श्रुतौ पत्न्या सहोदितः" ॥
"स्थितिमती कृताचारसंपन्नयुक्ता, प्रजनो गर्भग्रहणं, संतानो गर्भाधानम् ॥
"यदि स्वाश्चावराश्चैव भवेयुर्योषितो द्विजाः । तासां वर्णक्रमेणस्याज्ज्यैष्ठ्यं पूजा च वेश्म च ॥

"भर्तुः शरीरशुश्रूषां धर्ममर्थं च नैत्यकम् । स्वा स्वैव कुर्यात्सर्वेषां नान्यथा तु कथंचन ॥
"यस्तु तत्कारयेन्मोहात्स्वजात्या स्थितयाऽन्यथा । यथा ब्राह्मणचाण्डालः पूर्वदृष्टस्तथैव सः ॥
"संतुष्टो भार्यया भर्ता भार्या भर्त्रा तथैव च । यस्मिन्नेतत्कुले नित्यं कल्याणं तत्र वै ध्रुवम् ॥
"यदि हि स्त्री न रोचेत पुमांसं न प्रमोदयेत् । अप्रसादात्पुनः पुंसः प्रजनं न प्रवर्तते ॥
"स्त्रियां तु रोचमानायां सर्वं तद्रोचते कुलम् । तस्यामरोचमानायां सर्वमेव न रोचते ॥
"अन्योन्यस्याव्यभीचारो भवेदामरणान्तिकः । एष धर्मः समासेन ज्ञेयः स्त्रीपुंसयोः परः ॥
"तथा नित्यं यतेयातां स्त्रीपुंसौ च कृतक्रियौ । यथा न रुचिरेतां तौ वियुक्तावितरेतरौ ॥
"बालया वायुवत्या वा वृद्धया वापि योषिता । न स्वातन्त्र्येण कर्तव्यं किंचित्कार्यं गृहेष्वपि ॥
"बालो पितुर्वशे तिष्ठेत्पाणिग्राहस्य यौवने । पुत्राणां भर्तरि प्रेते न भजेत स्वतन्त्रताम् ॥
"पित्रा भर्त्रा सुतैर्वाऽपि नेच्छेद्विरहमात्मनः । एषां हि विरहेणेह गर्ह्ये कुर्यादुभे कुले ॥
"सदा प्रहृष्टया भाव्यं गृहकार्ये च दक्षया । सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया ॥
"अमृताहृतुकाले तु मन्त्रसंस्कारकृत्पतिः । सुखस्य नित्यं दातेह परलोके च योषितः ॥
"विशीलः कामवृत्तो वा गुणैर्वा परिवर्जितः । उपचर्यः स्त्रिया साध्व्या सततं दैववत्पतिः ॥
"नास्ति स्त्रीणां जपो यज्ञो न व्रतं नाप्युपोषणम् । पतिं शुश्रूषते येन तेन स्वर्गे महीयते ॥
"पत्यौ जीवति या स्त्री स्यादुपोष्य व्रतचारिणी । आयुष्यं हरते भर्तुर्नरकं चाधिगच्छति ॥
"यस्मै दद्यात्पिता त्वेनां भ्राता वाऽनुमते पितुः । तं शुश्रूषेत जीवन्तं संस्थितं न च लङ्घयेत् ॥
"पाणिग्राहस्य साध्वी स्त्री जीवतो वा मृतस्य वा । पतिलोकमभीप्सन्ती नाचरेत्किंचिदप्रियम्" ॥
संस्थितं मृतम् ।
"जन्मप्रभृति या तु स्याद्यावदायुः पतिव्रता । सा भर्तृलोकमाप्नोति यथैवारुन्धती तथा ॥
"अनेन नारीवृत्तेन मनोवाग्देहसंयुता । इह कीर्तिमवाप्नोति पतिलोकं परत्र च "॥
पतिलोकोऽत्र पत्या सहाधिकारेण यज्ञादिभिर्यो लोक उपार्जितः ॥

**वसिष्ठः** ( अ. २१ सू. १४ )

"पतिव्रतानां गृहमेधिनीनां सत्यव्रतानां शुचिसुव्रतानाम् ॥
"तासां तु लोकाः पतिभिः समाना गोमायुलोका व्यभिचारिणीनाम्" इति ॥

**हारीतः** "अथ पत्न्याचारमनुक्रमिष्यामो गृहं पत्नी न ह्यपत्नीकं गृहं विद्यते तस्मात्पत्नी गृहाचारपरा स्यात् । असंसृष्टोच्चारितसंस्कारासूपलिप्तार्चितवेश्मानि पतितानि प्रतिकुर्याद्गुप्तं गोपयेत् । अन्यपुरुषेक्षणमपि कथाभिभाषणप्रव्रजितस्त्रीसंसर्गं च वर्जयेत् । परगृहरथ्याचत्वरवीथीचतुष्पथसमाजप्रव्राजितालापांश्च नाभिगच्छेत् । कूपपथसंस्थानं संधिवेलासंचरणं च वर्जयेत् । परशयनासनवस्त्राभरणानि मनसाऽपि नाध्यवस्येत् आ पुनः संस्कारात् । तथैकपात्र्यं मद्यमांसाद्युच्छिष्टनिर्माल्यं चान्यत्र गुरुभर्तृसुतेभ्यः अन्यपुरुषलोलुपानर्थान्वर्जयेत् तथा प्रत्युद्वदनमालास्यवैकृव्यमौण्ड्यानि नोच्छिष्टा देवागारं प्रविशेन्नाप्रोक्ष्याविमृज्यापर्यग्निकृत्वा श्रपयेत् । नाप्रक्षालितपाणिर्व्यांजकोपवनगोरसधान्यानि गृह्णीयात् स्थाल्यपिधानदर्व्यौ प्रक्षाल्योपकरणानि गुप्तानि निधाय स्वपेत् । श्वोभूते प्रतिप्रक्षाल्य पचनार्थान् कुर्याद्गोरसधान्यानि

चासन्निर्देशे गृह्णीयात्। शृते प्रक्षाल्योपलिप्य परिमृज्य तैजसानि वेश्मान्यनुमार्जयत्युपलेपनात्। **देवलः** "अस्वातन्त्र्यपतिशुश्रूषा सहधर्मचर्या तत्पूज्यपूजनं तद्वेष्यद्वेषणमदुष्टभावना नित्यानुकूल्यतत्कार्यं तत्पर-त्वमिति" **विष्णुः** "भर्तुः समानचारित्र्यं श्वशुरगुरुदेवतातिथीनां पूजनं संस्कृतोपस्करताऽमुक्तहस्तता गुप्तताम्बूलक्रिया स्वनाभिरतिमङ्गलाचारतत्परा" इति ।

"नारीषु नित्यं शुचिभूषितासु पतिव्रतासु प्रियवादिनीषु ।
"अमुक्तहस्तासु प्रजान्वितासु सुगुप्तभाण्डासु बलिक्रियासु ॥
"सुश्लिष्टवेश्मासु जितेन्द्रियासु कलिव्यपेतासु विलोलुपासु ।
"धर्मव्यपेक्षासु दयान्वितासु स्थिता सदाऽहं जगतां विधात्रि" ॥

इति च पृथ्वीं प्रति लक्ष्मीवाक्यं "नास्ति स्त्रीणां (पृ० २१३) महीयते । पत्यौ जीवति या योषिदुपवासव्रतं क्वचित्। आयुर्हरति सा भर्तुर्नरकं चैव गच्छती" इति ॥

**ऋष्यशृंगः**

"गृहमेधा भवेन्नित्यं भूषणानि च पूजयेत् । नित्यमानकृतां वेणीमर्चयेत्पुष्पवाससा ॥
"पूर्वमेव रहो गच्छेद्यावन्नान्यः प्रबुध्यते । देवताराधनं कुर्याद्धूपपुष्पबलिं हरेत् ॥"
गृहमेधा गृहकृत्यपरा । भूषणानि मार्जनादिना संस्कुर्यात् ।

**व्यासः**

"द्वारोपवेशनं नित्यं गवाक्षेण निरीक्षणम् । असत्प्रलापो हास्यं च दूषणं कुलयोषिताम् ॥"

**छंदोगपरिशिष्टे कात्यायनः**

"पत्युरप्यभियोगिन्या शुश्रूष्योऽग्निर्विनीतया । सौभाग्यवद्वैधव्यकाम्यया भर्तृभक्तया ॥"
पत्युरप्याधिक्येन सततमभियुक्तया सत्याऽग्निः सेव्यः ।
पतिमुल्लङ्घ्य मोहात्स्त्री कं कं न नरकं व्रजेत्। कृच्छ्रान्मानुषतां प्राप्य किं किं दुःखं न पश्यति ॥
पतिशुश्रूषयैव स्त्री सर्वान्लोकान्समश्नुते ॥

**गौतमः** (अ.१०सू.१—३) "अस्वतन्त्रा धर्मे । नाभिचरेद्भर्त्तारम् । वाक्चक्षुः संयता" इति॥

**स्कान्दे काशीखण्डे चतुर्थाध्याये बृहस्पतिवाक्यमगस्त्यंप्रति ।**

"पतिव्रतेयं कल्याणी लोपामुद्रा सधर्मिणी । तवाङ्गच्छायया तुल्या यत्कथा पुण्यकारिणी ॥
"पतिव्रतास्वरुन्धत्या सावित्र्याऽप्यनसूयया। शाण्डिल्यया च सत्या च लक्ष्म्या च शतरूपया॥
"मेनया च सुनीत्या च संज्ञया स्वाहया तथा। यथैषा वर्ण्यते श्रेष्ठा न तथाऽन्येति निश्चितम्॥
"भुङ्क्ते भुक्ते त्वयि मुने तिष्ठति त्वयि तिष्ठति । विनिद्रिते विनिद्राति प्रथमं परिबुध्यति ॥
"अनलङ्कृतमात्मानं तव नो दर्शयेत्क्वचित् । कार्यार्थं प्रोषिते क्वाऽपि सर्वमण्डनवर्जिता ॥
"न च ते नाम गृह्णीयात्तवायुष्यविवृद्धये । पुरुषान्तरनामापि न गृह्णाति कदाचन ॥
"आक्रुष्टाऽपि न चाक्रोशेत्ताडिताऽपि प्रसीदति । इदं कुरु कृतं स्वामिन्मन्यतामिति वक्ति च ॥

"आहूता गृहकार्याणि त्यक्त्वा गच्छति सत्वरम् । किमर्थं व्याहृता नाथ स प्रसादो विधीयताम् ॥
"न चिरं तिष्ठति द्वारि न द्वारमुपसेवते । अदापितं त्वया किंचित्कस्मैचिन्न ददात्यपि ॥
"पूजोपकरणं सर्वमनुक्ता साधयेत्स्वयम् । नियमोदकबर्हींषि पत्रपुष्पाक्षतादिकम् ॥
"प्रतीक्षमाणावसरं यथाकालोचितं हि यत् । तदुपस्थापयेत्सर्वमनुद्विग्नाऽतिहृष्टवत् ॥
"सेवते भर्तुरुच्छिष्टमिष्टमन्नं फलादिकम् । महाप्रसाद इत्युक्त्वा पतिदत्तं प्रतीच्छति ॥
"अविभज्य न चाश्नीयाद्देवपित्र्यतिथिष्वपि । परिचारकवर्गेषु गोषु भिक्षुकुलेषु च ॥
"संयतोपस्करा दक्षा हृष्टा व्ययपराङ्मुखी । कुर्यात्त्वयाऽननुज्ञाता नोपवासव्रतादिकम् ॥
"दूरतो वर्जयेदेषा समाजोत्सवदर्शनम् । न गच्छेत्तीर्थयात्रादिविवाहप्रेक्षणादिषु ॥
"सुखसुप्तं सुखासीनं रममाणं यदृच्छया । आतुरेष्वपि कार्येषु पतिं नोत्थापयेत्क्वचित् ॥
"स्त्री धर्मिणी त्रिरात्रं तु स्वमुखं नैव दर्शयेत् । स्ववाक्यं श्रावयेन्नापि यावत्स्नाता न शुद्ध्यति ॥
"सुस्नाता भर्तृवदनमीक्षतेऽन्यस्य न क्वचित् । अथवा मनसि ध्यात्वा पतिं भानुं विलोकयेत् ॥
"हरिद्रां कुङ्कुमं चैव सिन्दूरं कज्जलं तथा । कूर्पासकं च ताम्बूलं माङ्गल्याभरणं शुभम् ॥
"केशसंस्कारकबरीकरकर्णादिभूषणम् । भर्तुरायुष्यमिच्छन्ती दूरयेन्न पतिव्रता ॥
"न रजक्या न हैतुक्या तथा श्रमणया न च । न च दुर्भगया क्वाऽपि सखित्वं कुरुते सती ॥
"भर्तृविद्वेषिणीं नारीं नैषा संभाषते क्वचित् । नैकाकिनी क्वचिद्भूयान्न नग्ना स्नाति च क्वचित् ॥
"नोलूखले न मुसले न वर्द्धन्यां दृषद्यपि । न यन्त्रके न देहल्यां सती चोपविशेत्क्वचित् ॥
"विना व्यवायसमयं प्रागल्भ्यं न क्वचिच्चरेत् । यत्र यत्र रुचिर्भर्तुस्तत्र प्रेमवती सदा ॥
"इदमेव व्रतं स्त्रीणामयमेव परो वृषः । इयमेका देवपूजा भर्तुर्वाक्यं न लङ्घयेत् ॥
"क्लीबं वा दुरवस्थं वा व्याधितं वृद्धमेव वा । सुस्थितं दुःस्थितं वाऽपि पतिमेकं न लङ्घयेत् ॥
"हृष्टा हृष्टे विषण्णास्या विषण्णास्ये प्रिये सदा । एकरूपा भवेत्पुण्या संपत्सु च विपत्सु च ॥
"सर्पिर्लवणतैलादिक्षयेऽपि च पतिव्रता । पतिं नास्तीति न ब्रूयादायासेषु न योजयेत् ॥
"तीर्थस्नानार्थिनी नारी पतिपादोदकं पिबेत् । शङ्करादपि विष्णोर्वा पतिरेकोऽधिकः स्त्रियः ॥
"व्रतोपवासनियमं पतिमुल्लङ्घ्य या चरेत् । आयुष्यं हरते भर्तुर्मृता निरयमृच्छति ॥
"उक्ता प्रत्युत्तरं दद्याद्या नारी क्रोधतत्परा । सरमा जायते ग्रामे शृगाली निर्जने वने ॥
"स्त्रीणां हि परमश्चैको नियमः समुदाहृतः । अभ्यर्च्य चरणौ भर्तुर्भोक्तव्यं कृतनिश्चयम् ॥
"उच्चासनं न सेवेत न व्रजेत्परवेश्मसु । न त्रपाकरवाक्यानि वक्तव्यानि कदाचन ॥
"अपवादो न वक्तव्यः कलहं दूरतस्त्यजेत् । गुरूणां सन्निधौ चापि नोच्चैर्ब्रूयान्न वा हसेत् ॥
"या भर्तारं परित्यज्य रहश्चरति दुर्मतिः । उलूकी जायते क्रूरा वृक्षकोटरशायिनी ॥
"ताडिता ताडितुं चेच्छेत्सा व्याघ्री वृषदंशिका । कटाक्षयति याऽन्यं वै केकराक्षी तु सा भवेत ॥
"या भर्तारं परित्यज्य मिष्टमश्नाति केवलम् । ग्रामे हि सूकरी भूयाद्वल्गुर्वाऽपि स्वविड्भुजा ॥
"या त्वंकृत्य प्रियं ब्रूते मूका सा जायते खलु । या सपत्नीं सदेर्ष्येत दुर्भगा सा पुनः पुनः ॥
"दृष्टिं विलुप्य भर्तुर्या कंचिदन्यं समीक्षते । काणाऽपि विमुखी चाऽपि कुरूपा चाऽपि जायते ॥

"बाह्यादायान्तमालोक्य त्वरिता च जलासनैः । तांबूलैर्व्यजनैश्चैव पादसंवाहनादिभिः ॥
"तथैव चाटुवचनैः खेदसंनोदनैः परैः । या प्रियं प्रीणयेत्प्रीत्या त्रिलोकी प्रीणिता तया ॥
"मितं ददाति हि पिता मितं भ्राता मितं सुतः । अमितस्य हि दातारं भर्तारं पूजयेत्सदा ॥
"भर्ता देवो गुरुर्भर्ता धर्मतीर्थव्रतानि च । तस्मात्सर्वं परित्यज्य पतिमेकं समर्चयेत् ॥
"जीवहीनो यथा देहः क्षणादशुचितां व्रजेत् । भर्तृहीना तथा योषित्सुस्नाताऽप्यशुचिः सदा ॥
"अमङ्गलेभ्यः सर्वेभ्यो विधवा त्यक्तमङ्गलः । विधवादर्शनात्सिद्धिः क्वापि जातु न जायते ॥
"विहाय मातरं चैकां सर्वामङ्गलवर्जिताम् । तदाशिषमपि प्राज्ञस्त्यजेदाशीविषोपमाम् ॥
"संन्यस्ताखिलकर्मापि पितुर्वन्द्यो हि मस्करी । सर्ववन्द्येन पतिना प्रसूर्वन्द्या प्रयत्नतः ॥
"कन्यां विवाहसमये वाचयेयुरिति द्विजाः । भर्तुः सहचरी भूयाज्जीवतोऽजीवतोऽपि वा" इति॥

**नारदः**

"स्वातन्त्र्याद्विप्रणश्यन्ति कुले जाता अपि स्त्रियः । अस्वातन्त्र्यमतस्तासां प्रजापतिरकल्पयत् ॥
"मृते भर्तर्यपुत्रायाः पतिपक्षः प्रभुः स्त्रियाः । विनियोगात्मरक्षासु भरणे च स ईश्वरः ॥
"परिक्षीणे पतिकुले निर्मनुष्ये निराश्रये । तत्सपिण्डेषु चासत्सु पितृपक्षं समाश्रयेत् ॥
"पक्षद्वयावसाने तु राजा भर्ता स्मृतः स्त्रियाः । स तस्या रक्षणं कुर्यान्निगृह्णीयात्पथश्च्युताम्" ॥ इति ।

**हारीतः**, एकव्रतस्कन्नभावात्परेन्द्रियोपहतत्वाच्च दुष्टाः कुलसंकरकारिण्यो भवन्ति । "जीवति जारजः कुण्डो मृते भर्तरि गोलकः" तस्माद्व्रतोपघाताज्जायां रक्षेज्जायानाशे कुलनाशः, कुलनाशे तन्तुनाशस्तन्तुनाशे देवपितृयज्ञनाशः, यज्ञनाशे धर्मनाशः, धर्मनाशे स्वात्मनाशः, आत्मनाशे सर्वनाश इति शुच्याचाराया भर्तृमनसः साध्वीत्वबोधकः ॥

"यस्य भार्या वशा साध्वी सततं प्रियवादिनी । शुच्याचारा भर्तृमनाः सा देवी परिकीर्तिता" ॥ इति

एकव्रतेत्यस्यैक एव पातिरिति यो नियमस्ततः प्रचलनादित्यर्थः । कुलं गृहं । तन्तुः पुत्रादिसंततिः वर्णसंकरानन्तरम् ॥

**पैठीनसिः**

"तस्माद्रक्षेत भार्याः सर्वतो मास्म वर्णसंकरा भवन्ति" इत्याह "अप्रमत्ता रक्षत तन्तुमेनं मा वः क्षेत्रे परबीजानि वाप्सुः । भार्यां रक्षत कौमारीं बिभ्यतः पररेतस" इति स्त्रियो गृहे देवतास्तासां न शौचं न व्रतं नोपवासः पतिशुश्रूषया गच्छन्ति परमां गतिमिति च" ।

**बृहस्पतिः**

"सूक्ष्मेभ्योऽपि प्रसंगेभ्यो निवार्या स्त्री स्वबंधुभिः । श्वश्र्वादिभिः कुलस्त्रीभिः पालनीया दिवानिशम् ॥
"अप्रयच्छन्पिता कालेऽपतिश्चानुपयन्नृतौ । पुत्रश्चारक्षको मातुर्गर्ह्या दण्ड्याश्च धर्मतः ॥
"आये व्ययेऽर्थसंस्कारे गृहोपस्करक्षणे । शौचाग्निकार्ये संयोज्या रक्षा स्त्रीणामियं स्मृता ॥
"पित्रा भर्त्रा सुतैर्न स्त्री विमुक्ताऽन्यगृहे वसेत् । असत्संगविशेषेण गर्ह्यतामेति सा ध्रुवम् ॥
"पूर्वोत्थानं गुरुष्वर्चा भोजनव्यञ्जनक्रिया । जघन्यासनशायित्वं कर्म स्त्रीणामुदाहृतम् ॥
"पानाटनादिवास्वप्नभ्रमक्रिया दूषणं स्त्रियाः" इति ॥

अक्रिया गृहकृत्याननुष्ठानम् । **इति दक्षः**

"जलौकेव स्त्रियः सर्वा भूषणाच्छादनाशनैः । सुभृताऽपि कृता नित्यं पुरुषं ह्यपकर्षति ॥
"जलौका रक्तमादत्ते केवलं सा तपस्विनी । इतरा तु धनं चित्तं मांसं वीर्यं बलं सुखम् ॥
"साशङ्का बालभावे तु यौवनेऽभिमुखी भवेत् । तृणवन्मन्यते नारी वृद्धभावे स्वकं पतिम् ॥
"स्वाकाम्ये वर्तमाना सा स्नेहान्न च निवारिता । अपथ्या तु भवेत्पश्चाद्यथा व्याधिरुपेक्षितः ॥" इति ।

**स्वाकाम्ये स्वेच्छायां शङ्खलिखितौ ।**

"यस्मिन्भावोऽर्पितः स्त्रीणामार्तवे तच्छीलं पुत्रं जनयन्ति । यथा नीलवृषेण नीलवत्सप्रभवः । श्वेतेन श्वेत एव जायते । एवं योनिरेव बलवती । तस्माद्वर्णाः संकीर्णा वर्तन्ते" इति । "स्त्री नानुक्त्वा गृहान्निर्गच्छेन्नानुत्तरीया परिधावेत् । न त्वरितं व्रजेत् । नानुत्सवे गन्धमालाभरणानि विकृतानि वासांसि बिभृयात् । न परपुरुषं च संभाषेन्नान्यत्र वणिक्प्रव्रजितवृद्धवैद्येभ्यो न नाभिं दर्शयेत्कुलवधूः । आगुल्फाद्वासः परिदध्यान्न स्तनौ विवृतौ कुर्यात् । न हसेदपावृतम् । न भर्तारं न तद्बन्धून्वा द्विष्यात् । न गणिकाधूर्ताभिचारिणीप्रव्रजिताप्रेक्षणिकामायाविनीमूलकुहककारिकादुःशीलादिभिः सहैकत्र तिष्ठेत् । संसर्गेण हि चारित्रं दुष्यति । न भर्तुः प्रतिकूलमाचरेन्न प्रकीर्णभाण्डभाजनोपस्कारद्रव्या नोत्तानखट्वासनपादुका स्यात्" । प्रेक्षणिका दैवज्ञा । "न च भर्तारं दुष्याद्यद्यप्यशीलः स्यात् । पतितोऽर्थहीनो वा व्याधितो वा पतिर्दैवतं स्त्रीणाम् । न व्रतोपवासनियमेज्यादानधर्मो वाऽनुग्रहकरः स्त्रीणामन्यत्र पतिशुश्रूषायाः । कामं भर्तुरनुज्ञातायाः व्रतोपवासनियमेज्यादीनामभ्यासः स्त्रीधर्मः । श्वः श्वः पचनभाण्डानामुपलेपनं सुसंमृष्टगृहद्वारोपलेपनं कृतशौचानुकूल्या दध्यक्षतदूर्वाप्रवालकृतबलिकर्मा श्वश्रूश्वशुराभिवादनानन्तरं गृहावश्यकानि कुर्यात् । न देवभृत्यातिथिभ्योऽग्रेऽश्नीयात् । न भर्तुरन्यत्र प्रतिकारौषधात् पचनभाण्डानां स्थाल्यादीनां गृहादीनां प्रतिदिनमुपलेपनं कार्यम्" इत्यर्थः । **स्कान्दे** तत्रैव ।

"भर्ता सदाऽनुयातव्यो देहवच्छायया स्त्रिया । चन्द्रमा ज्योत्स्नया यद्वद्विद्युत्वान्विद्युता यथा ॥
"अनुव्रजन्ती भर्तारं गृहात्पितृवनं मुदा । पदे पदेऽश्वमेधस्य फलं प्राप्नोत्यसंशयम् ॥
"व्यालग्राही यथा व्यालं बलादुद्धरते बिलात् । एवमुत्क्रम्य दूतेभ्यः पतिं स्वर्गं नयेत्सती ॥
"यमदूताः पलायन्ते सतीमालोक्य दूरतः । अपि दुष्कृतकर्माणं समुत्सृज्य च तत्पतिम् ॥
"न तथा बिभिमो वह्नेर्न तथा विद्युतो यथा । आपतन्तीं समालोक्य वयं दूताः पतिव्रताम् ॥
"तपनस्तपतेऽत्यन्तं दहनोऽपि च दह्यते । कम्पन्ते सर्वतेजांसि दृष्ट्वा पातिव्रतं महः ॥
"यावत्स्वलोमसंख्याऽस्ति तावत्कोट्ययुतानि च । भर्त्रा स्वर्गसुखं भुङ्क्ते रममाणा पतिव्रता ॥
"तिस्रः कोट्योऽर्धकोटी च यानि लोमानि मानवे । तावत्कालं वसेत्स्वर्गे भर्तारं याऽनुगच्छति ॥
"धन्या सा जननी लोके धन्योऽसौ जनकः पुमान् । धन्यः स च पतिः श्रीमान्येषां गेहे पतिव्रता ॥
"पितृवंश्या मातृवंश्याः पतिवंश्यास्त्रयस्त्रयः । पतिव्रतायाः पुण्येन स्वर्गसौख्यानि भुञ्जते ॥
"शीलभङ्गेन दुर्वृत्ताः पातयन्ति कुलत्रयम् । पितुर्मातुस्तथा पत्युरिहामुत्र च दुःखिताः ॥
"पतिव्रतायाश्चरणो यत्र यत्र स्पृशेद्भुवम् । तत्रेति भूमिर्मन्येत नात्र भारोऽस्ति पावनी ॥

"बिभ्यत्पतिव्रतास्पर्शं कुरुते भानुमानपि । सोमो गन्धवहश्चापि स्वपावित्र्याय नान्यथा ॥
"आपः पतिव्रतास्पर्शमभिलष्यन्ति सर्वदा । अद्य जाड्यविनाशो नो जातास्त्वद्यान्यपावनाः ॥
"गृहे गृहे न किं नार्यो रूपलावण्यगर्विताः । परं विश्वेशभक्त्यैव लभ्यते स्त्री पतिव्रता ॥
"भार्या मूलं गृहस्थस्य भार्या मूलं सुखस्य च । भार्या धर्मफलावाप्त्यै भार्या संतानवृद्धये ॥
"परलोकस्त्वयं लोको जायते भार्यया द्वयम् । देवपित्रतिथीज्यादि नाभार्यः कर्म चार्हति ॥
"गृहस्थः स हि विज्ञेयो यस्य गेहे पतिव्रता । ग्रसतेऽन्या प्रतिदिनं राक्षस्या जरयाऽथवा ॥
"यथा गङ्गावगाहेन शरीरं पावनं भवेत् । तथा पतिव्रतां दृष्ट्वा शरीरं पावनं भवेत् " ॥ इति

**हारीतः ।**

"मातृकं पैतृकं चैव यत्र चैव प्रदीयते । कुलत्रयं पुनात्येषा भर्तारं याऽनुगच्छति " ॥

इदं चान्वारोहणं काम्यं न नित्यम् । **अत एव विष्णुर्विकल्पमाह ।** "मृते भर्तरि ब्रह्मचर्यं तदन्वारोहणं वेति" । न च

"आर्ताऽऽर्ते मुदिते हृष्टा प्रोषिते मलिना कृशा । मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता" ॥

**इति हारीतबृहस्पत्युक्तेः** पतिव्रताया नित्यमिदमिति वाच्यम् ।

"मृते भर्तरि साध्वी स्त्री ब्रह्मचर्ये व्यवस्थिता । स्वर्गं गच्छत्यपुत्राऽपि यथा ते ब्रह्मचारिणः ॥"

इति **मनुना** ( अ. ५ श्लो. १६० ) पतिव्रताया अननुगमनस्याप्यभिहितत्वात् । अत्र साध्वी पतिव्रता । अत एव द्वितीयपादेन पौनरुक्त्यं न । **अत एव महाभारते** पतिव्रतायाः सत्या अग्निप्रवेश उक्तो न त्वग्निप्रवेशेन पतिव्रतात्वम् ।

"पतिव्रता तु संदीप्तं प्रविवेश हुताशनम् । तत्र चित्राङ्गदधरं भर्तारं सान्वपद्यत" ॥ इति ।

**हारीतोऽपि ।**

"ब्रह्मघ्नो वा कृतघ्नो वा मित्रघ्नो वा भवेत्पतिः । पुनात्यविधवा नारी तमादाय मृता तु या ॥
"व्यालग्राही यथा व्यालं बलादुद्धरते बिलात् । तद्वदुद्धृत्य सा नारी तेनैव सह मोदते ॥
"तत्र सा भर्तृपरमा स्तूयमानाऽप्सरोगणैः । क्रीडते पतिना सार्द्धं यावदिन्द्राश्चतुर्दश ॥
"मृते भर्तरि या नारी समारोहेद्धुताशनम् । साऽरुन्धती समाचारा स्वर्गं लोके महीयते ॥
"यावदग्नौ मृते पत्यौ स्त्री नात्मानं प्रदाहयेत् । तावन्न मुच्यते सा हि स्त्री शरीरात्कथंचन" ॥ इति

**व्याघ्रोऽपि ।**

"यदि प्रविष्टो नरकं बद्धः पाशैः सुदारुणैः ।
"संप्राप्तो यातनास्थानं गृहीतो यमकिंकरैः । तिष्ठते विवशो दीनो वेष्ट्यमानः स्वकर्मभिः ॥
"व्यालग्राही यथा व्यालं बलादुद्धरते बिलात् । तद्वद्भर्तारमादाय दिवं याति च सा बलात्" ॥ इति ।

**रामायणेऽपि ।**

"नैवाङ्गनानां दयितो नापि द्वेष्योऽस्ति कश्चन। सर्वमेवावलम्बन्ते लतागहनजा इव॥" इति।

**महाभारतेऽपि ।**

"अवमन्य च या पूर्वं पतिं दुष्टेन चेतसा । वर्तन्ते याश्च सततं भर्तॄणां प्रतिकूलतः ॥
"भर्त्रानुमरणं काले याः कुर्वन्ति तथाविधाः । कामक्रोधाद्भयान्मोहात्सर्वाः पूता भवन्त्युत ॥
"आदिप्रभृति या साध्वी पत्युः प्रियपरायणा । ऊर्ध्वं गच्छति सा तत्र भर्त्रानुमरणं गता ॥
"गतिः प्रजानां नृपतिः सुतानां पिता गतिर्वेदगतिर्द्विजानाम् ।
"माता गतिः स्तन्यभृतां शिशूनां स्त्रीणां गतिः प्राणद एव नान्यः ॥
"तस्मान्मृते भर्तरि नान्यमानसा वह्निं विशत्येव विधिप्रयुक्तम् ।
"कीर्तिर्जने स्वर्गगतिः परत्र लभेत्पुमांसं सह याऽनुगच्छति ॥
"शय्यापालनमाजीवं ब्राह्मणी कुरुते यदि । स याति ब्रह्मसायुज्यमनंतं गतकल्मषा ॥
"एकाकिनी वसेद्भीता भूमिदेशे त्वहर्निशम् । अन्नतोयमपायन्ती भुञ्जीयात्स्वयमागतम् ॥
"मलिना जटिला स्नेहा त्रिकालज्ञानकारिणी।अप्रावृताऽप्यनास्तीर्णा सा शय्यापालिका स्मृता"॥ इति
"कुलीना रूपवत्यश्च नाथवत्यश्च योषितः । मर्यादासु न तिष्ठन्ति स दोषः स्त्रीषु नारद ॥
"अनर्थित्वान्मनुष्याणां भयात्परिजनस्य च । मर्यादायाममर्यादाः स्त्रियस्तिष्ठन्ति भर्तृषु ॥
"यौवने वर्तमानानां मृष्टाभरणवाससाम् । नारीणां स्वैरवृत्तीनां स्पृहयन्ति कुलस्त्रियः ॥
"यदि पुंसां गतिर्ब्रह्मन्कथंचिन्नोपपद्यते । अन्योन्यं च प्रवर्तन्ते न च तिष्ठन्ति भर्तृषु ॥
"अलाभात्पुरुषाणां च भयात्परिजनस्य च । वधबन्धभयाच्चैव स्वयं गुप्ता भवन्ति ताः ॥
"नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः । नान्तकः सर्वभूतानां न पुंसां वामलोचनाः ॥
"कामानामपि दातारं दातारं मानसान्त्वयोः। रक्षितारं न मृष्यंति भर्तारं यत्नतः स्त्रियः" ॥ इति च
"श्रिय एताः स्त्रियो नाम सत्कार्या भूतिमिच्छता । लालिता निगृहीता च स्त्री श्रीर्भवति भारत"इति च
"यदैव भर्ता जानीयान्मन्त्रमूलपरां स्त्रियम्। उद्विजेत तदैवास्याः सर्पाद्वेश्मगतादिवेति" ॥ च

**भविष्ये सावित्रीवाक्यम् ।**

"सतां संगो गतिर्न्याय्या स्त्रीणां भर्ता सदा गतिः। वेदो वर्णाश्रमाणां च शिष्याणां च सदा गुरुः"॥इति।

**हेमाद्रौ पुराणसंग्रहे ।**

"याऽनुव्रताऽङ्गना लोके कर्मणा मनसा भवेत् । मृते पत्यौ न जीवेत्सा वह्निमार्गपरायणा ॥
"विशन्तं पन्नगं गृध्री बलादुद्धरते बिलात् । पतिं पापे निमज्जन्तमेकैवोद्धरतेऽङ्गना ॥
"मृते पत्यौ तु या जीवेद् घटिकापञ्चकं भुवि। वैधव्यं नास्ति तस्यास्तु यावद्विशति चानले"॥इति

यानि तु ब्राह्मण्या अनुगमननिषेधपराणि वाक्यानि । "मृतानुगमनं नास्ति ब्राह्मण्या ब्रह्मशासनात् ।

"या स्त्री ब्राह्मणजातीया मृतं पतिमनुव्रजेत् । सा स्वर्गमात्मघातेन नात्मानं न पतिं नयेत् " ॥ इत्यादीनि तानि पृथक्चितिविषयाणि । तथा

"नीचाभिगमनं गर्भपातनं भर्तृहिंसनम् । विशेषपतनीयानि स्त्रीणामेतान्यपि ध्रुवम् ॥

"पतितानामेष एव विधिः स्त्रीणां प्रकीर्तितः । वासो गृहान्तिके देयमन्नं वासः सरक्षणम् "॥

"शरणागतबालस्त्रीहिंसकान्संपिबेन्न तु । चीर्णव्रतानपि सतः कृतघ्नसहितानिमान् "॥ इति दिक् ७७

## याज्ञवल्कीये ७८ श्लोकः

**शास्त्रीयेति** पुत्रधर्मार्थेत्यर्थः । षष्ठीसमासवारणायाह । **लोके इति** । इह लोके इत्यर्थः । **दारेति** । शास्त्रीयेत्यादिः प्रयोजनमित्यन्तेनार्थकथनम् । **कथमिति** । मात्रंशका उभयं केन प्रकारेणेत्याशङ्कायामाहेत्यर्थः । **पुत्रेति** प्रतीकं । तैर्लोकैरिति पाठः । यद्यपि पुत्रादिभिरेवोभयमिति मूलतो लभ्यते तथा च "नापुत्रस्य लोकोऽस्ति पुत्रेण लोकान् जयति" इत्याद्युक्तं तथापि तथा सति पुत्रार्थविवाहफलमात्रलाभेन धर्मार्थविवाहफललाभेन न्यूनता । नापुत्रस्येत्यादि तु पुत्रादिफलं न विवाहस्य । किंच तन्त्रेण समासद्वयेन षष्ठीसमासेनैव वा सिद्धिर्द्विवः प्राप्तिरित्यस्य वैयर्थ्यमत एव तत्र सप्तमीसमास उक्तः । अतो मूलस्योपलक्षणत्वेन व्याचष्टे । **तैर्लोकैरित्यादि** । **अग्नीति** तस्योभयकर्मत्वात् । **उपभोग्याः** उपभोग्या इति पाठेऽप्ययमेवार्थः । अनेनाद्यफलसंपत्तिरित्याह । **प्रजेति** । कर्तव्या इत्यादेः फलितमाह । **रक्षीति** । अनेन द्वितीयफलमित्याह । **धर्मेति** । वदेतत्य**स्यापस्तंबेने**त्यत्रान्वयः । अत एव दारशब्द एकवचनान्तोऽपि न्यूनतां निराचष्टे । **रतीति** । अत एव शास्त्रीयेत्युक्तम् ॥७८॥

## याज्ञवल्कीये ७९ श्लोकः

**ऋतु**रित्येकवचनेन ऋतुत्वस्य समुदितवृत्तित्वलाभेन दिनं विहाय निशापदेन रात्रिमात्रग्रहणे तत्समुदायस्य नैरन्तर्येणासंभवेन तद्वृत्तित्वस्य तत्र बाधितत्वादाह । **स्त्रीणामिति** । सर्वत्र तदभावादाह । **योग्येति** । **अहोरात्र इति** समाहारद्वन्द्वः "रात्राह्नाहाः" (व्या. सू. २।४।२९)इति पुंस्त्वम् । अहोरात्राणीत्यपपाठः । ततश्च दिवानिषेधात् रजःप्रभृतिषोडशरात्रान्तः स इति फलितम् । **युग्मास्विति** स्त्रीलिङ्गनिर्देशलब्धमर्थमाह । **समासु रात्रिष्विति** । अत एवाह । **रात्रीति** । एतत्सूचनार्थमेवादौ निशा इत्युक्तम् ।

**तथा चाथर्वणश्रुतिः** " प्राणं वा एते प्रस्कन्दन्ति ये दिवा रत्या संयुज्यन्ते ब्रह्मचर्यमेव तत् यद्रात्रौ संयुज्यन्ते" इति ।

**शङ्खलिखितावपि** "नार्तवेऽपि दिवा व्रजेदिति " ।

**मनुरपि** ( अ. ३ श्लो. ४५।४६।४८ )

"ऋतुकालाभिगामी स्यात्स्वदारनिरतः सदा । पर्ववर्जं व्रजेदेनां तद्व्रतो रतिकाम्यया " ॥

तद्व्रतः ऋतुकालाभिगमनव्रतः । एतच्च गमनं सकामाया रक्षणार्थम् ।

"ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः । चतुर्भिरितरैः सार्धमहोभिः सद्विगर्हितैः" ॥

स्वाभाविकग्रहणाद्रोगादितोऽन्यथापि भवतीति सूचितम् ।

"तासामाद्याश्चतस्रस्तु निंदितैकादशी च या । त्रयोदशी च शेषाः स्युः प्रशस्ता दशरात्रयः"॥इति।

"युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु । तस्माद्युग्मासु पुत्रार्थी संविशेदार्तवे स्त्रियम्"॥ इति।

**मनोर्यु**ग्माग्रहणफलमाह । **पुत्रार्थमिति** ।

ननु सकलयुग्माधिकरणैकैकगमनस्यासंभवेन तासां मध्ये कस्याश्चिदेव लाभेनैकवचनमेवोचितमत आह । **युग्मास्वितीति** । यथाश्रुतेऽनन्वयादाह । **एवमिति** । **तथा च मनुः** (अ.३श्लो.५०)

"निन्द्यासु चान्यास्वष्टासु स्त्रियो रात्रिषु वर्जयेत् । ब्रह्मचार्येव भवति यत्र तत्राश्रमे वसन्" ॥इति ।

षट् निन्द्या उक्ताः । अनिन्द्या अप्यष्टौ वर्जयित्वा रात्रिद्वये एव स्त्रियोऽभिगच्छन् ब्रह्मचार्येव भवति गृहस्थोऽपीत्यर्थः ।

ननु गृहस्थाश्रमे नित्यं ब्रह्मचर्यस्याविहितत्वादस्यानुपयोगोऽत आह । **अत इति** । **वस्तुतस्तु** ब्रह्मचारिपदवदिदमप्यर्थवादमात्रमित्युचितम् अत एव श्राद्धकर्तृभोक्त्रोर्ब्रह्मचर्यम् ऋतावप्यावश्यकमिति प्रतिज्ञाय **वृद्धमनु**वचनमुदाहृतं **माधवाचार्यैः**

"ऋतुकालं नियुक्तो यो नैव गच्छेत् स्त्रियं क्वचित् । तत्र गच्छन्समाप्नोति ह्यनिष्टं फलमेव तु" ॥इति ।

सूतकादौ तु ऋतावगमनेऽप्यदोषः । तदाह **उपमन्युः** ।

"सूतके बन्धने विप्रो हव्यकव्यादिवर्जितः । नैनसा लिप्यते तद्वदृतावगमनादपि" ॥ इति ।

अन्यदप्युच्यत इत्याह । **किंचेति** । ननु पर्वणोः प्रसिद्धतरयोरमापूर्णिमयोर्द्वित्वेन द्विवचनं युक्तमत आह । **पर्वाणीतीति** । शौण्डेरिनिवत्तत्र स्मृत्यन्तरबोधेन तदारोप इति भावः । एतेन

"अमावास्या पूर्णिमा च व्यतीपातोऽथ वैधृतिः । चत्वार्येतानि पर्वाणि पंचमो रविसंक्रमः॥"

इत्युक्तानामेव ग्रहणं कुतो नेत्यपास्तं तदेव ध्वनयन्नाह । **यथाहेति** । येन संक्रान्तेरपि ग्रहणमिति **गुरुचरणाः** । **चतस्र इति** । अत्र चतुर्थदिवसे गमनं वैकल्पिकं विहितप्रतिषिद्धत्वात् । तत्र विधिं **हारीतः** "चतुर्थेऽहनि स्नातायां युग्मासु च गर्भाधानम्" इति । निषेधस्तु अत्रैव "चतुर्थे सा न गन्तव्येति" **व्यासोऽपि** । व्यवस्थितश्चायं विकल्पः । "रजोनिवृत्तौ चतुर्थ्यां विधिस्तदनुवृत्तौ तु प्रतिषेधः" **तथा च मनुः** ।

"रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला" इति । साध्वी गर्भाधानयोग्येत्यर्थ **इति माधवः** । **आपस्तम्बोऽपि** ।

"स्नानं रजस्वलायास्तु चतुर्थेऽहनि शस्यते । गम्या निवृत्ते रजसि नानिवृत्ते कथंचन॥" इति ।

"रात्रौ चतुर्थ्यां पुत्रः स्यादल्पायुर्धनवर्जितः" इति **व्यासः** ॥ ७९ ॥

## याज्ञवल्कीये ८० श्लोकः

अर्थान्तरसंग्रहाय तदानर्थक्यपरिहाराय च वाक्यभेदमाह । **एवमुक्तेनेति** । **क्षामता** कृशता अल्पबलतेति यावत् । व्रतं च **तैत्तिरीयश्रुतौ** प्रसिद्धम् । **अथेति** । कठोरत्वादिति भावः । **मनुमाह** । **पुमानिति** । शुक्रशब्दस्य मध्यमणिन्यायेनान्वयादग्रे तेन शोणितग्रहणं बोध्यम् ।

**बृहस्पतिरपि** ।

"स्त्रियाः शुक्रेऽधिके स्त्री स्यात्पुमान्पुंसोऽधिके भवेत् । तस्माच्छुक्रविवृद्धयर्थं स्निग्धं भक्ष्यं प्रकल्पयेत्"॥

" लघ्वाहारां स्त्रियं कुर्यादेवं संजनयेत्सुतम् " इति । 'शुक्रशोणितसंभवः पुरुष ' इति (अ. १५ सू. १) **वसिष्ठोक्तेस्**तयोः प्राधान्यं सूचयन्मूलाविरोधाय **मनु**वचनतात्पर्यमाह। **यदेति** । एतदग्रे **मनुः** "समे पुमान् पुंस्त्रियौ वा क्षीणेऽल्पे च विपर्ययः " इति। **अस्यार्थः**, । समे वायुना असंमिश्रीकृते अपुमान्नपुंसकमिति केचित् । उभयोः समत्वे पुमान्पुंस्त्रियौ वा गर्भधान्यां यदा वायुर्द्रवरूपत्वात्संमृष्टे शुक्रशोणिते समं विभजते एकत्र यावान्भागस्तावानेवान्यत्र तदा यमौ जायेते तत्र स्त्रीबीजाधिक्ये स्त्रियो पुंबीजाधिक्ये पुमांसौ क्षीणेऽसारतो निश्चयः अल्पे परिमाणतः विपर्ययः गर्भस्याग्रहणं नपुंसकं वेति । **परे इति** । अपुमान्नपुंसकः । द्विधाभूते तु समे पुंस्त्रियौ युगलं जायेते इत्यर्थः।"क्षीणे निःसारेऽल्पे परिमाणतः विपर्ययो गर्भानुत्पत्तिरिति" **गुरुचरणाः। इन्द्राविति।** ग्रहमात्रोपलक्षणम्। सकृदित्यस्यैकवारमित्यर्थकस्य व्यवच्छेद्यमाह। **नेति** । पुमानित्यस्य वैयर्थ्यं परिहरति। **अप्रतीति** ॥ ८० ॥

## याज्ञवल्कीये ८१ श्लोकः

स्वेच्छानिरासायाह । **भार्येति** । पदार्थानतिवृत्तौ अव्ययीभावसमासशङ्क्यार्थमाह । **इच्छेति** तल्लक्ष्यार्थमाह। **प्रवृत्तिरिति** । इत्यर्थमाह। **अस्यास्तीति** । सर्वत्र विकल्पे तथा दृष्टत्वेन वा बलात्प्रागुक्तनियमनिरासस्य स्फुटप्रतिपत्तेराह । **वाशब्द इति** । तथा च मन्नियमवदयमपि नियम एव अनेन तस्यैवार्थत्वेन यथाकाम्यपि भवेदेवेत्यर्थः सूचितः । तथा च पर्वादिव्यतिरेकोऽव्यापीति भावः ।

**तथा च विष्णुपुराणे तृतीयेंऽशे** ।

"इति मत्वा स्वदारेषु ऋतुमत्सु नरो व्रजेत् । यथोक्तदोषहीनेषु सकामेष्वनृतावपि" ॥ इति ।

एवंचानृतौ गमननिषेधपराणि वचनानि स्त्रियाः कामनाविरहे बोध्यानि ।

**तत्र बौधायनः** ( ४।१।२१ )

"ऋतौ नोपैति यो भार्यामनृतौ यश्च गच्छति । तुल्यमाहुस्तयोः पापमयोनौ यश्च सिञ्चति"॥ इति **महाभारतेऽपि शपथप्रसंगे**ऽनृतौ गच्छतो यो दोषः स ममास्त्वित्यसकृदुक्तम् ।

**अत्रिः** ।

"षण्मासात्कामयेन्मर्त्यो गर्भिणीं स्त्रियमेव हि। आदन्तजननादूर्ध्वमेवं धर्मो न हीयते"॥ इति ।

ऊर्ध्वं प्रसूतेरूर्ध्वं बालस्य दन्तजननं मर्यादीकृत्येत्यर्थः ।

**वरमिति**।भवतीनां कामविहन्ता पातकी स्यादितीत्यर्थः। **श्रुतिमाह । यथेति** "सस्त्रीषꣳसादमुपासीदद्स्यै ब्रह्महत्यायै तृतीयं प्रतिगृह्णीतेति " इत्यादिः ।

विश्वरूपनाम्नः पुरोहितस्य वधादिन्द्रस्य ब्रह्महत्यायां सत्यां तत्तृतीयांशं रजोरूपेण परिणतं स्वीकुर्वन्त्यः स्त्रिय **इन्द्रमब्रुवन्**। ऋत्वियात् ऋतुकालिकात्पुरुषसंबन्धादाविजनितोः प्रसवपर्यन्तं संभवन्त्यनुभवन्ति। वारे वरसंबन्धिनि वचने चार्थमाह । **अपि चेति** । पर्यवसानगत्या वक्ष्यमाणानुरोधेनाह। **स्वदारेष्वेवेति।** अत एवाह। **एवकारेणेति** । ऋषिः कर्ता । एवकार इतिपाठे स एव कर्ता । विवक्षया नियमे दृष्टं तु

वर्तत एवेत्याह। **इष्टमिति** । स्मृता इत्यस्य व्याख्या **उक्ता इति**। स्मृत्यन्तरभ्रमनिरासाय उक्तमूलमेवाह । **कर्तव्याश्चेति** ।

प्रागुक्तं चतुर्थदिनगमनं **भारतेऽप्युक्तम्** ।

"स्नातां चतुर्थे दिवसे रात्रौ गच्छेद्विचक्षणः" इति । एतदनुसारान्**मानवा**दिश्चतुर्थदिननिषेधोऽपत्यगताल्पायुष्ट्वादिदोषबोधनाय । "चतुर्थीप्रभृत्युत्तरोत्तरं प्रजानिःश्रेयसमृतुगमने" **इत्यापस्तम्बात्** ।

**देवलः** ।

"अतीर्थगमनात्पुंसस्तीर्थसंग्रहणात् स्त्रियाः । उभयोर्धर्मलोपः स्याच्छेषेण तु विशेषतः" ॥ इति ।

तीर्थम् ऋतुः, शेषेण तीर्थाच्छादनेन ।

"यौगपद्येन तीर्थानां विवाहक्रमशो व्रजेत् । रक्षणार्थमपुत्रां वा ग्रहणक्रमशोऽपि वा" ॥

ग्रहणक्रमः ऋतुग्रहणक्रमः ।

**वृद्धशातातपः** ।

"ऋतौ तु गर्भशङ्कित्वात्स्नानमेव विधीयते । अनृतौ तु सदा कार्यं शौचं मूत्रपुरीषवत्" ॥

स्नानं कर्माधिकाराय न तु ऋतुगमने चण्डालादिस्पर्श इवात्यल्पं यत् स्नानेनापनीयते येन रात्रावपि स्यात् । अतः "स्नानं प्रातरेवेति" वृद्धा इति **श्रीदत्तः** । तन्न ।

"न मिथुनीभूय शौचं प्रति विलम्बेतेति" । ( अ. ९ सू. २६ ) **गौतमविरोधात्** । तथा "द्वावेतावशुची स्यातां दम्पती शयनं गतौ । शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान्" ॥ शुचित्वं स्नानव्यतिरेकेणापि लेपप्रक्षालनाचमनमात्रात् ।

**आपस्तम्बः** ( १।३२।२ ) ।

"मिथुनीभूय न तया सह सर्वां रात्रिं शयीत" ।

**यमः** ।

"ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति । घोरायां ब्रह्महत्यायां पच्यते नात्र संशयः" ॥

**देवलः** ।

"यः स्वदारानृतुस्नातान्संनिधौ नोपगच्छति । भ्रूणहत्यामवाप्नोति गर्भं प्राप्य विनाश्य सः" ॥ स्वस्थो रोगादिरहितः । **मनुः** । ( अ. ४ सू. ४१।४२ )

"रजसाऽभिप्लुतां नारीं नरस्याभ्युपगच्छति । प्रज्ञा तेजो यशश्चक्षुरायुश्चैव प्रहीयते ॥

"तां विवर्जयतस्तस्य तेषां वृद्धिः स्मृता बुधैः" । इति ।

**अत्र नानास्मृतिपर्यालोचनयेत्थं निर्णयः ।** स्त्रियाः सकामत्वे तद्रक्षार्थमनृतावपि दार एव । ब्राह्मणवचनाच्च तत्र संनिवेशनम् । तच्च ता अब्रुवन्नित्याद्युक्तमेव स्त्रीवाससैवाभिगमः स्त्रीसंभोगार्थं वा स्त्रीवासस्तेन चाभिगम एव न तु तेन प्रक्षालितेनापि ब्रह्मयज्ञादीत्यर्थः । यावत्संभोगं च सह शय्या ततो भिन्ना ततः स्नानमनृतौ तु लेपान्प्रक्षाल्याचम्य प्रोक्षणमङ्गानामिति ।

**विष्णुपुराणे ।**

"नास्नातां तु स्त्रियं गच्छेन्नातुरां न रजस्वलां । नानिष्टां न प्रकुपितां नाप्रशस्तां न गर्भिणीम् ॥
"नादक्षिणां नान्यकामां नाकामां नान्ययोषितम् । क्षुत्क्षामामतिभुक्तां वा स्वयं चैभिर्गुणैर्युतः ॥
"नान्ययोनावयोनौ वा नोपयुक्तौषधासु वा । देवद्विजगुरूणां च व्यवायी नाश्रमे वसन् ॥
"चैत्यचत्वरशीतेषु न चैव च चतुष्पथे । नैव श्मशानोपवने सलिलेषु महीपते ॥
"प्रोक्तं पर्वस्वशेषेषु नैव भूपाल संध्ययोः । गच्छेद्व्यवायं मतिमान् मूत्रोच्चारप्रपीडितः ॥
"चतुर्दश्यष्टमी चैव अमावास्याऽथ पूर्णिमा । पर्वाण्येतानि राजेन्द्र रविसंक्रांतिरेव च" ॥ इति ।

**वामनपुराणे ।**

"बुधेषु योषां न समाचरेत्तथा पूर्णासु योषित्परिवर्जनीया" तथा "योषित् मघाकृत्तिकयोत्तरासु" ।

**वसिष्ठः ।** ( अ. १२ सू. ५–७ )

"न मलिनवाससा रजस्वलया नायोग्यया सह संविशेत्" ।
संवेशो मैथुनम्, अयोग्या अप्राप्तयौवना अतिवृद्धा च ।

**विष्णुः ।** "न श्राद्धं भुक्त्वा न दत्वा नामन्त्रितः श्राद्धं न व्रती न दीक्षितोऽवभृथेष्टिं यावत् न देवायतनश्मशानशून्यालयेषु न वृक्षमूले न दिवा न संध्ययोः न मलिनां नाभ्यक्तां नाभ्यक्तो न रोगार्त्तो न रोगार्त्तां न हीनाङ्गीं नाधिकाङ्गीं न वयोऽधिकां न गर्भिणीमुपेयाद्दीर्घमायुर्जिजीविषुः ।" स्त्रियाः पुरुषस्य वोपगमनप्रतिबन्धस्तत्संवर्धनीयो वा रोगो विवक्षितः । वयोधिका चोपरतरजस्का । **वसिष्ठः ।** अपि च **काठके** प्रवचने विज्ञायते "अद्यश्वो वा विजनिष्यमाणाः पतिभिः सह शयीत" इति स्त्रीणामिन्द्रदत्तो वर इति । अद्यश्व इति । आसन्नप्रसवा इत्यर्थः । इदं सकामापरमित्यलम् ।

## अथ रजस्वलाधर्माः ।

**वसिष्ठः ।** ( अ. ५ सू. ६ । ७ )

तत्र त्रिरात्रं रजस्वलाऽशुचिर्भवति "सा त्वाज्याभ्यञ्जनात्पूर्वं नाशु स्नायात् त्र्यहादधः" ।
"नाधः शयीत न दिवा स्वप्यान्न रज्जुं सृजेन्न दन्तान्धावयेन्न मांसमश्नीयात् न ग्रहान्निरीक्षेत न हसेत् न किंचिदुच्चैर्वदेत् न खर्वेण पात्रेण पिबेदञ्जलिना वा पात्रेण लोहितायसेन वा" इति ।
"शुद्धा भर्तुश्चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला । दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुद्ध्यति" ॥
"रजस्वला यदि स्नाता पुनरेव रजस्वला । अष्टादशदिनादर्वागशुचित्वं न विद्यते ॥
"एकोनविंशतेरर्वागेकाहं स्यात्ततो द्व्यहम् । विंशत्प्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेत् ॥

"ऋतुस्नाता तु या नारी पतिं नैवोपविन्दति। शुनी वृकी शृगाली स्याच्छूकरी च पुनः पुनः॥
"कुङ्कुमं चाञ्जनं चैव सिन्दूरं चन्दनं तथा। धौतवस्त्रं च ताम्बूलं संयोगे च शुभावहम्॥
"भर्तुः पादौ नमस्कृत्य पश्चाच्छय्यां समाविशेत्। सा नारी सुखमाप्नोति न भवेद्दुःखभागिनी॥
"ताम्बूलेन मुखं पूर्णं कुङ्कुमादिसमन्वितम्। प्रीतिहर्षसमुद्योगं कृत्वा योगं समाचरेत्॥
"नारी संयोगकाले तु कान्तादन्यं स्मरेत्तदा। तद्रूपशीलवर्णाढ्यं बालं सूते सुनिश्चितम्॥
"तस्मात्पतिव्रता नारी स्मरेदृतुमती पतिम्। सूते पतिगुणैर्युक्तमायुष्मन्तं च सात्त्विकम्॥
"आर्द्रपादा च या नारी पतिसंगं समाचरेत्। आयुष्यं हरते भर्तुः सा नारी नरकं व्रजेत्॥
"कञ्चुकीसहिता नारी पतिसंगं समाचरेत्। आयुष्यं०
"त्रिभिर्वर्षैश्च मध्ये वा विधवा भवति ध्रुवम्।
"तालपत्रामिलत्कर्णा दयिता मैथुनं चरेत्। पञ्चमे सप्तमे वर्षे वैधव्यमिह जायते॥
"विना ताम्बूलवदनां नग्नामत्यन्तरोदनाम्। दुर्मुखां च क्षुधार्तां च संयोगे च परित्यजेत्॥
"वर्जयद्गुर्विणीं वृद्धामतिबालां रजस्वलाम्। वर्जयेद्विधवां वन्ध्यां रोगिणीं च तपस्विनीम्॥
"नानुरक्तामुदासीनां व्रतस्थां चैव वर्जयेत" ॥ इति।

स्त्रीधर्मिणीत्यादि **काशीखण्ड**मपि प्रागुक्तम्। **तैत्तिरीयश्रुतावपि** "यां मलवद्वाससमित्यादिब्राह्मणप्रतिषिद्धा"। **वासिष्ठ**मूलभूताधर्माः स्फुटा एव। तदुक्त**मापस्तम्बगृह्ये** (प्र. १ खं. ९ . १३) "यदा मलवद्वासाः स्यादथैनां ब्राह्मणप्रतिषिद्धानि कर्माणि संशास्ति यां मलवद्वाससमित्येतानीति"। यदा रजस्वला स्यात्तदा पतिरेवैनां तन्निषिद्धानि सर्वाणि कर्माणि शिक्षयतीत्यर्थः। **अत्र प्रसंगादुच्यते**। रजस्वलानिकटेऽध्ययनं क्वापि न निषिद्धमिति तन्न, न प्रथमेऽहनीति **पराशरोक्तेर्हि माधवैरुक्त**म्। चाण्डाल्यादिगमने यावान्प्रत्यवायस्तावाननुदक्या गमने इत्याशयेन। तैर्नामभिर्व्यवहारः। यथा "मासमग्निहोत्रं जुहोति"इत्यग्निहोत्रनिर्देशो नित्याग्निहोत्रधर्मातिदेशार्थस्तद्वदिति। तत्र गमने इत्युपलक्षणमध्ययनादेः चण्डालादिनिकटेऽनध्ययनमुक्त**मापस्तम्बेन**। श्मशानवच्छूद्रपतितावितिं। तयोः समीपेऽपि शम्याप्रासादान्नाध्येयमिति **हरदत्तः**। तत्रैव विशेषमाह सः। समानागार इत्येके इति। समानागारे एव तौ वर्ज्यौ, न शम्याप्रासादादिति। शूद्रायामपि प्रेक्षणप्रतिप्रेक्षणयोरेवानध्यायः। शूद्रायां मिथः प्रेक्षणां भवति तदेवानध्यायः। न समानागारे, नापि शम्याप्रासादादिति। तथा च चण्डाल्याः पतितान्तर्गतत्वात्प्रथमदिने तन्निषेधसिद्धिः, द्वितीयदिनेऽपि तस्याः शम्याप्रासादान्नाध्येयं सा **यस्मिन्गृहे** तिष्ठति तत्र नाध्येयं "ते ब्रह्महसंस्तुता"इत्यत्र सूत्रे यथा तत्समीपे नाध्येयं तथाऽत्रापीति व्याख्यानात्। एवं तृतीयेऽपि दिने मिथःप्रेक्षणे तु अध्ययनं नैवेति बोध्यम्। अत्र शङ्कते कश्चिदित्याह। **अत्राहेति। प्राप्तार्थेति**। स्वेच्छयैव गमनस्य प्राप्तत्वादित्यर्थः। मध्यमस्य सिद्धान्तत्वादाह।

**नापि परीति। दोषत्रयेति**। स्वार्थहानिपरार्थकल्पनाप्राप्तबाधरूपदोषत्रयेत्यर्थः। **प्रतीति**। प्रतिपादितवन्तो मीमांसका इत्यर्थः। इदमेव परमतखण्डनपूर्वं प्रतिपादयितुं तत्स्वरूपज्ञानाय शङ्कते। **कः पुनरिति**।

**अत्यन्तेति**। सर्वथेत्यर्थः। श्रौतस्मार्तभेदेनोदाहरणद्वयं सर्वत्र**स्याप्राप्तपक्षान्तरेति**

**प्राप्तेति** "क्तोऽधिकरणे च" (व्या. सू. ३।४।७६) इत्यधिकरणे क्तः। प्राप्त्यधिकरणभिन्ने पक्षान्तरे पक्षे प्राप्तस्य प्रापणमित्यर्थः। पक्षे प्राप्तस्य पक्षान्तरेति पाठान्तरं क्वचित्। तस्य तत्त्वमुपपादयति। **दर्शेति**। **यदेति**। तत्रेत्यादिः। **उदास्ते** अनुवादकं भवति। तदेवाह। **स्वार्थेति**। अत एवाह। **विषमेति**। **स्त्वार्थीति**। अन्यथा वाक्यानर्थक्यं स्पष्टमेवश्चार्थादिति पाठेऽपि चस्त्वर्थे। तदेवाह। **चोदितेति**। पक्षे इत्यादिः। **देशोपादाने** तदनिवृत्त्यङ्गीकारे तस्मिन्सत्यपि इच्छया कदाचित्तदुपादाने सति नेत्यस्याग्रेऽन्वयः। **इमामिति**। ब्राह्मणवाक्यम्। अस्य तत्त्वमुपपादयति। **अत्र मन्त्र इति**। एतद्विषये "इमामगृभ्णन् रशनामृतस्य पूर्व आयुषि विदथेषु कव्ये" त्यादिर्मन्त्र इत्यर्थः।

**स्त्वेति** रशनामात्रप्रकाशनसामर्थ्यरूपलिङ्गेनेत्यर्थः। **अश्वाभीति** अश्वाभिधीयते ध्रियते यया तस्या इत्यर्थः।

एवमग्रेऽपि डुधाञ् धारणपोषणयोः अभ्युपसृष्टस्येत एव धारणेऽपि वृत्तिः।

**स्वसामर्थ्या**द्रशनामात्रप्रकाशनरूपलिङ्गात्। **वचनेनेति** श्रुत्येत्यर्थः। श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पारदौर्बल्यमर्थविप्रकर्षादितिन्यायेन लिङ्गाच्छ्रुतेः प्राबल्यमिति भावः। **अश्वाभिधान्यां** तद्ग्रहणे। एवमग्रेऽपि। **यदृच्छया** स्वेच्छया। शशादिपञ्चातिरिक्तं पञ्चनखानाह। **श्वादीति**। प्राप्त्यपेक्षया सप्तमी। **निवर्तत इति**। निवर्तयतीत्यपपाठः।

एवं भेदमुक्त्वा परमतं वक्तुं शङ्कते। **किं पुनरिति**। **अत्र** प्रकृते। **तत्र** तेषां मध्ये। त्रिरात्रस्य स्वल्पत्वात्त्यागः। तदभीष्टं नियममाह। **गच्छदेवतीति**। ननु ब्रह्मचार्येवेति प्रागुक्तरीत्या नायं दोषोऽत आह। **अपि चेति**। भावार्थे विशेष्यभूते क्रियारूपेऽर्थे अन्यस्यैवासत्त्वेन अन्यनिवृत्तेरसंभवात्। **विशेषणेति**। क्रियां प्रति विशेषणभूताधिकरणकारकनियमतात्पर्यकमित्यर्थः। अन्यसंभवेन तन्निवृत्तेरत्र संभवात् तदेवाह। **प्राप्तं चेति**। **युक्तेति**। एवं च तथाकारप्रदर्शनप्रयुक्तामिति भावः।

ननु पक्षे भावार्थविधिसंभवेन तत्परत्वं न युक्तमत आह। **किंच नैयमीति**। नियमप्रयोजनकेत्यर्थः। नन्वयमेव स इति नानर्थक्यमत आह। **नियमे चेति**। नन्विदं परिसंख्यायामपि तुल्यमन्यथा वैयर्थ्यापत्तेरत आह। **किंच क्रतौ गन्तव्यमिति**। ननु योग्यतया सन्निहितादेरेवोपदेशादनिच्छानिवृत्तेश्च नियमबलादेव संभवेन नायं दोषोऽत एव **माधवीये व्यासः**।

"व्याधितो बन्धनस्थो वा प्रवासेष्वथ पर्वसु। ऋतुकालेऽपि नारीणां भ्रूणहत्यात् प्रमुच्यते"॥ इति।

अत आह। **विध्यनुवादेति**। उपसंहरति। **तस्मादिति**। एवेन नियमव्यवच्छेदः। न चैवमपि पक्षान्तरे वैयर्थ्यमेवात आह **गमने इति**। ऋतावित्यादिः। तदेवाह। **ऋतुस्नातामिति**। सन्निधावित्यस्य स्थित इति शेषः। इदमुपलक्षणं शक्तस्यापि। स्मृत्यन्तरानुरोधात्तच्चाग्रे मूले एव स्फुटम्। **पराशरोक्तिरियम्**। **बौधायनोऽपि**। (४।१।१३)

"त्रीणि वर्षाण्यृतुमतीं यो भार्यां नोपगच्छति। स तुल्यं भ्रूणहत्याया दोषमृच्छत्यसंशयः"॥ इति।

तदुक्तदोषाक्रमद्वयानादरेण निराचष्टे। **नचेत्यादिना**। **अनुवादेति**। फलाभावादिति भावः। नन्वेवं वैयर्थ्यं तस्यात आह। **विध्यर्थेति**। पक्षेऽपूर्वेत्यादिः व्युत्क्रमेणान्वयः। तदेव दृष्टान्तपूर्वं विशदयति। **तत्र हीत्यादिना**। तदेवेत्यस्योभयत्रान्वयः। पूर्वपक्षे कर्मधारयः। तद्विना तत्र तदसंभव

---

१. V. L. विषयभूत

इति भावः । नैवं प्रकृते इत्याह । **न चेति** । न हीत्यर्थः । कृत्यं फलं तत्कल्पकमाह । **अनृताविति** । तस्याः कामनाया अभावे शाब्दनिषेधेनेति शेषः । तथा च तेनात्र तत्कल्पनेति भावः । **न नियम इति** । तदानर्थक्यमित्यर्थः । **स एवेति** । यत इत्यादिः । एवमग्रेऽपि । एवं च विधिद्वयाभाव इति भावः । **भावनाया एवेति** । न त्वेतदपेक्षया भिन्नं तदिति भावः । अनेनेत्यस्य प्रदर्श्यत इत्यत्रान्वयः । तत्राद्ये संनिधिपदघटितां तादृशीं **पराशरोक्तिमाह** । **ऋताविति** । द्वितीये तादृशीमन्यां **देवलोक्तिमाह** । **य इति** । 'भ्रूणहत्यामवाप्नोति गर्भं प्राप्तं निनाश्य स'' इत्यस्योत्तरार्धं बोध्यम् । तत्रैव तृतीयदोषं परिहरति । **अनिच्छेति** । तस्मान्नियमे दोषलेशाभावात् उक्तरीत्या तस्य युक्तत्वाच्च तदङ्गीकारे हेतुं सूचयन्नाह । **स्वार्थेति** । **दोषत्रयवतीति** । असुब्वत इतिवत्प्रयोगः ।

नन्वेवं पञ्च पञ्च नखा अत्राप्येवमेवास्तामत आह । **पञ्चेति** । **इत्यत्र** इत्यत्र तु । दोषान्तरमाह । **श्वादीति** । **चो** विरोधपदोत्तरं योज्यः । **आश्रितेति** । न्यायविद्भिरिति शेषः । **एतेनेति** । पञ्चेत्यत्रेवात्र नियमपक्षे दोषाभावेनेत्यर्थः । प्रसिद्धदोषत्रयसत्त्वेऽपि परिसंख्यायां दोषान्तरमाह । **नान्तरेति** । नियमे फलान्तरमप्याह । **एवं चेति** । परिसंख्याया अयुक्तत्वे चेत्यर्थः । उक्तमर्थमग्रेऽप्याह । **यथेति** । तत्स्वरूपमाह । **अनृतावपीति** । एकवाक्यत्वायाह । **ऋजाविति** । प्रतीत्यस्य व्युत्क्रमो बोध्यः तस्योभयशेषत्वात् अत्र स्वाभावानाश्रयकारकप्रकारकज्ञानरूपमवधारणं नोपेयादिति नेति प्रतिनिर्देशात् । एवं च ऋतुकालाधिकरणकं स्वभार्याकर्मकमवधारणविषयो गमनं प्रेरणाविषय इति बोधः । तेन तस्य प्रत्यवायाभावरूपेष्टसाधनत्वलाभः । इष्टस्य प्रत्यवायाभावरूपत्वं तु ऋतुस्नातामित्यादिवचनैकवाक्यतया बोध्यम् । तेन ऋतुकालाधिकरणकस्वभार्यागमनाभावस्य प्रत्यवायसाधनत्वं लभ्यते । 'पञ्च पञ्च नखा भक्ष्या' इत्यादाववधारणविषयबुद्धिस्थवृत्तिपञ्चत्वसंख्यावति पञ्चपदस्य लक्षणा । अवधारणं चात्र स्वातिरिक्तसंख्याधिकरणासंबन्धिसमभिव्याहृतप्रकारकज्ञानरूपं तेनान्येऽभक्ष्या इति फलति एवकारस्य तदर्थलक्षणा वा फलं तु प्रापकप्रमाणबोधितस्य तदतिरिक्तविषयत्वाभावकल्पनमितीष्टसिद्धिः । अन्ययोगव्यवच्छेद एवकारार्थ इति त्वयुक्तमिति स्पष्टमन्यत्र अत एवैवकारसमभिव्याहृते । न विधेयतायां तात्पर्यं किंत्वार्थ्यामन्यनिवृत्ताववेति **तान्त्रिकाः** । एवं चैवकारसमभिव्याहारेऽप्यार्थ्येव परिसंख्या सा चोपात्तातिरिक्ते समभिव्याहृतपदार्थाभावप्रत्ययरूपा । यथा 'पार्थ एव धनुर्धरः' इत्यादौ नान्यो धनुर्धर इति । स च नैवकारघटितवाक्यार्थः किंत्वार्थ एवोक्तरीतेः शाब्दी तु त्वन्मुखं त्वन्मुखेनैवेत्यादौ पञ्च पञ्चनखा इत्यादावप्युक्तरीत्याऽऽर्थ्येव परिसंख्या । अत एव ''युष्मद्युपपदे'' ( व्या. सू. १।४।१०५ ) इति सूत्रमहाभाष्यसंगतिः ।

यत्तु पञ्चपदस्य पञ्चभिन्ने लक्षणा भक्ष्यपदस्य च भक्ष्यत्वाभाववति तेन पञ्चभिन्नास्ते भक्ष्यत्वाभाववन्त इति बोध इति तन्न । पदद्वयलक्षणापेक्षयोक्तप्रकारस्यैव न्याय्यत्वात् । किंचैवं शास्त्रप्राप्तस्य शास्त्रीयनियमे विकल्पवारणाय सामान्यविशेषन्यायेन विधेस्तद्विषयत्वाभावकल्पनमित्यतिगौरवात् । ''किमासेव्यं पुंसां सविधमनवद्यं द्युसरितः'' इत्यर्थपरिसंख्योदाहरणमिति प्रकाशादिग्रन्थासंगतेश्च । त्वद्रीत्या हि द्युसरित्सविधातिरिक्तमनासेव्यमिति बोधेन तस्याः शाब्दत्वात् । अत एव शाब्दपरिसंख्यायां ''किं भूषणं सुदृढमत्र यशो न रत्नम्''इत्युदाहृतं तेन । अत एव च भक्ष्यनियमेनाभक्ष्यप्रतिषेधो गम्यते । ''पञ्च पञ्चनखा भक्ष्या'' इत्युक्ते गम्यते एतदृतोऽन्ये न भक्ष्या इति पस्पशायां भगवतोक्तम् । **वस्तुतस्तु** । इमामगृभ्णन्नित्यत्रापि लिङ्गाद्गर्दभरशनायामपि प्राप्तस्य मन्त्रस्यापूर्वविधिद्वारा परिसंख्या ।

तदुक्तं **तन्त्रवार्तिके** । "अपूर्वविधिरेवायमतो मन्त्रश्च निश्चितः ।"

परिसंख्याफलेनोक्तेति । **आलंकारिका** अपि परिसंख्याप्रकरणे प्रमाणान्तरेण प्राप्तस्यैव वस्तुनः पुनः शब्देन प्रतिपादनं प्रयोजनान्तराभावात्स्वतुल्यान्यव्यवच्छेदं गमयतीत्यूचुः ।

**भागवतेऽपि** । "लोके व्यवायामिषमद्यसेवा नित्यास्तु जन्तोर्न हि तत्र चोदना ।
व्यवस्थितिस्तेषु विवाहयज्ञसुराग्रहैरासु निवृत्तिरिष्टा ॥"

इत्युक्तम् । नित्याः रागतः प्राप्तेः, जन्तोः प्राणिमात्रस्य अतस्तत्र चोदनाविधिर्नास्ति ।

नन्वेवमृतौ भार्यामुपेयात्, हुतशेषं भक्षयेत्सौत्रामण्यां सुराग्रहा गृह्णातीत्येतेषां वैयर्थ्यं तत्राह व्यवस्थितिरिति । तेषु पुनः प्रापणमित्यर्थः । रागतो नित्यप्राप्तत्वान्नैते नियमविधयः । पाक्षिक्यां हि प्राप्तौ नियमो भवति किंतु प्राप्तस्याप्यर्थस्य पुनः प्रापणमनर्थकमित्यपूर्वविधिद्वाराऽन्यनिवृत्तिं फलन्ति तदाहासुनिवृत्तिरिति । **भाष्येऽपि** । नियमपदेनाभ्यनुज्ञा ऋतुस्नातामिति दोषश्रवणं तु मनसि कामे सत्यपि तस्यां द्वेषादिनाऽनुपगमे बोध्यम् । एवं च ऋतौ भार्यामित्यस्य ऋताविव तत्र भार्यामेव तत्र तामुपेयादेवेत्यर्थत्रये तात्पर्यम् । अत एव गृहस्थस्यानृतावनुपगमो ब्रह्मचर्यमुक्तम् । अविवाहितागमने ऋतौ भार्यागमनाभावे प्रायश्चित्तं चोक्तं **स्मृतिषु** । तत्र चान्यत्र चेत्यस्य शाब्दी आर्थी वेत्यर्थः । एवकारोऽपि स्वसत्त्वे स्फुटं तदर्थद्योतक एव न तु तत्समभिव्याहारेऽपि शाब्दबोधे तद्भानं तत्समभिव्याहारेण मनसा बुध्यमानत्वादपि द्योतकत्वमेवासमभिव्याहारेऽप्यनुवादबलादेव तदर्थलाभः, शाब्दी तु त्वन्मुखं किं भूषणमित्यादिष्वेवेति बोध्यम् । पक्षद्वयेऽपि स्वार्थहान्यादिदोषत्रयं तु यथा श्रुत प्रतीयमाने स्वार्थे तात्पर्याभावात्तात्पर्यतस्त्यागः अन्यार्थे तात्पर्याङ्गीकारेण तात्पर्यतः परार्थकल्पनाप्राप्तबाधश्चेति सूपपादम् ।

ननु व्रीहीनवहन्तीत्यादौ पक्षप्राप्तस्य नियमेऽवहननेनैव व्रीहीन्संस्कुर्यान्न नखविदलनादिनेति प्रतीतेस्तत्रापि दोषत्रयप्राप्तिरिति परिसंख्यातस्तस्य लघुत्वव्यवहारानुपपत्तिरिति चेन्न । पक्षे स्वरसत एव तस्याप्राप्त्या क्लृप्तबाधस्यैव बाधकल्पनं तत्र परिसंख्यायां तु नित्यप्राप्तस्याक्लृप्तबाधस्यैव बाधकल्पनमिति ततस्तस्यागुरुत्वात् क्लृप्तप्राप्तिकस्यैव च प्राप्तिबोधनेनापूर्वविधेरपि नियमस्य लघुत्वम् । एवंच पञ्च पञ्चनखा इत्यादेर्विधिमुखेनैव प्रवृत्तिः । अवधारणविषयत्वबोधात्पुनरनुवादाद्वा सामान्यप्रापकप्रमाणस्य तदतिरिक्ताविषयत्वरूपः संकोचस्तेन चार्थस्तत्कार्याभावस्तमादाय नियमशास्त्रस्य प्रतिषेधत्वव्यवहारो नान्यत्रेत्यादिप्रतिनिर्दिशश्चेत्यन्यत्र विस्तरस्तदाह । **अलमिति** । अत्र प्रसंगात्केनाप्यनुक्तं सभ्यशङ्कानिरासायोच्यते । पत्न्यार्तवे सूतकद्वये च यद्यपि गौडदाक्षिणात्यधर्मशास्त्रे ज्योतिषग्रन्थे चाहिताग्न्यनाहिताग्न्येकपत्न्यनेकपत्नीनां सर्वेषां निषिद्धः । साधारण्येन प्रवासः चरमविषये विशिष्याशङ्कासमाधाने च क्वापि केनापि नोक्तं तथापि युक्तिबलात् ज्ञापकबलाद्वचनबलाच्च सकलधर्मशास्त्रज्यौतिषग्रन्थाविरुद्धा व्यवस्थैवं प्रतिभाति । तथाहि यद्यपि "आहरेद्विधिवद्दारानग्नींश्चैवाविलम्बयन्निति" "एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः" इति च मूलोक्तेर्ब्राह्मणादीनां केवलसवर्णाविवाहो नित्यविधित्वेन प्राप्तः सकलयुग इत्यनेकपत्नीत्वं तावत् व्याहतमेव । तथापि विवाहस्य रतिपुत्रधर्मान्यतार्थत्वेन त्रैविध्यादनेकपत्नीत्वमुपपन्नम् । तथाहि तत्र तावद्द्वितीयादिकेवलसवर्णाविवाहस्य धर्मप्रजोभयसंपत्तिफलेच्छोर्निमित्तानि ।

"सुरापी व्याधिता धूर्ता वन्ध्याऽर्थघ्न्यप्रियंवदा। स्त्री प्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा॥"

इत्यादिमूलोक्तानि उभयसंपत्तिसत्त्वे तु न केषामपि तन्मात्रफलेच्छूनां द्वितीयादिविवाहः। "धर्मप्रजासंपन्ने दारे नान्यां कुर्वीत" **इत्यापस्तम्बोक्तेः** ( २।११।१२ ) । अन्यतरसंपत्त्यभावे उभयाभावे चापि द्वितीयादिविवाहः। "अन्यतराभावे कार्या प्रागग्न्याधेयादिति" **आपस्तम्बोक्तेः** ( २।११।१३ ) । तथा च तावन्मात्रफलेच्छोररागान्धस्यान्यतराभावेऽपि सत्याहिताग्नित्वे आधानात्प्रागेव विवाहो न तदुत्तरम् उक्तवचनात्। आहिताग्नित्वाभावेऽपि तस्य उक्तनिमित्ते सति द्वितीयादिविवाहः। एवं यस्य सस्त्रीकस्याहिताग्नेर्धर्मप्रजोभयसंपत्त्यभावस्तस्य तु आधानोत्तरमपि पुनर्विवाहः। न च प्रागग्न्याधेयादिति तदुक्तिविरोधः श्रुतत्वादन्यतराभावे इत्यस्यैव सशेषो न पुनरुभयाभावे इत्यस्येत्युक्तेः। रागान्धस्य तु रतिमात्रलौकिकफलेच्छोरुभयसंपत्तिसत्त्वेऽपि सुरापीत्यादिनिमित्ताभावेऽपि आहिताग्नेराधानात्प्रागूर्ध्वमपि यथा तथाऽनाहिताग्नेरपि यथेच्छं विवाहः।

एवं कलिभिन्नयुगे नैत्यककाम्यपुत्रफलेच्छोरनुकल्पत्वेन ब्राह्मणस्य क्षत्रियावैश्ये क्षत्रियस्य वैश्या शूद्रा तु न

"यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः। नैतन्मम मतं यस्मात्तत्रात्मा जायते स्वयमिति" **मूलोक्तेः** ( आचारे ५६ ) । "कृष्णवर्णा या वै रमणायैव सा न धर्मायेति" **वसिष्ठोक्तेश्च** ( अ. १८ सू. १८ ) । रतिमात्रकामस्य तु शूद्राविवाहोऽपि।

"तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम्। ब्राह्मणक्षत्रियविशां भार्या स्वा शूद्रजन्मनः"॥ इति।

**मूलोक्तेः** ( आचारे ५७ ) । कलौ तु नासवर्णाविवाहः। "असवर्णासु कन्यासु विवाहश्च द्विजातिष्विति" कलिनिषिद्धेषु परिगणनात्। स्पष्टश्चायं सर्वोऽप्यर्थ **आपस्तम्बसूत्रवृत्ता**वुज्ज्वलायां तथाचारागान्धस्य नियतपत्नीकत्वात् पत्न्यार्तत्वव्यतिरिक्तस्य कालस्य सत्त्वात्स्वस्ववृत्त्यर्थमात्रं प्रवासस्यावश्यकत्वेऽपि न तत् शङ्कावसर इति नाशङ्कासमाधने ऋषिभिरुक्तेः। तथापि रागान्धस्यानेकपत्नीत्वमव्याहतमिति समागतेव साशङ्का एवमरागान्धस्यापि निमित्तानेकसत्त्वात्पुनः पुनर्विवाहेऽनेकपत्नीत्वमक्षुण्णमिति। सहधर्मचारिणी तु

"सत्यामन्यां सवर्णायां धर्मकार्यं न कारयेत्। सवर्णासु विधौ धर्म्ये ज्येष्ठया न विनेतरा॥"

इत्यादिमूलाद्युक्ता (आचारे ८८)। तत्र च युक्त्यादिबलान्निर्वाहः।

तत्रादौ युक्तिः। सीमन्तोर्ध्वं प्रतिषिद्धानां क्षौरादीनामपवादो **मुहूर्तमार्तण्डे**।

"सीमन्तोर्ध्वं न पत्युर्नखकचलवनं दूरदेशप्रयाणम्।

"वृक्षच्छेदः समुद्रप्लुतिमतिहरणे स्याद्वृतेऽवश्यकार्यात्" इति॥

व्याख्यातं च **दानहीरावल्याम्**। अवश्यकार्ये इमान्यपि कार्याणीत्यर्थः। आवश्यकत्वमनन्यगतिकत्वमिति **दिवाकरभट्टैः**। अत एव "भाविनोऽर्था भवन्त्येव हठेनानिच्छतोऽपि हीति" मात्सीयोक्तावश्यंभाव्यशुभेषु ग्रहादिशान्तिं दानं वा कृत्वा आवश्यकं विधेयं यथा रुक्मिणीस्वयंवरे "पुरोहितोऽथाथर्ववित् जुहाव ग्रहशान्तये" इति **दामोदरभट्टाः**। सांप्रदायिकमतं **विवाहप्रदीपे** लिलिखुः।

एवं चावश्यकत्वरूपयुक्तितौल्यात् सीमन्तोर्ध्वमिति तत्र निषेधनिमित्तोपलक्षणं ज्ञापकमप्यस्ति । "देवालयाद्वा गुरुमन्दिराद्वा निजालयान्मुख्यकलत्रगेहात्" इत्यस्य **मुहूर्तचिन्तामणौ प्रस्थान-प्रकरणे पाठः** । तत्र च पत्न्यभिषिक्तत्वरूपमुख्यसत्त्वासत्त्वाद्यात्रानिषेधा अपि तस्य तद्विषया एवेति । यद्वा गृहज्वलनबिडालमहिषसमराम्बरस्खलनप्रतिष्ठादिसाहचर्यात् कादाचित्कानामेव सूतकादीनां निषेधेषु ग्रहणात्कादाचित्कत्वस्य च उक्तमुख्यत्वे एव पर्यवसानात्तादृशानामेवोत्पातत्वेन ग्रहणाच्चेष्ट-सिद्धिः । वचनमपि अस्ति । **ज्योतिषरत्नमालायां मुहूर्तचिन्तामणौ च वसन्तराजे** ग्रन्थान्तरेऽपि च । आथापशकुनानीति प्रतिज्ञाय कुटुम्बकलहादिनिषेधनिमित्तानि पठित्वा प्रतिप्रसव-वाक्यानि पठितानि ॥

"सूर्येन्दोर्बिम्बदानेन यायादावश्यके नृपः" ॥

"आवश्यके चेन्न परं सुलग्नमावश्यके चेच्छकुनोऽशुभः स्याद् । दत्वा घृतं हेमयुतं प्रयायात्" । दुःशाकुन्ये साज्यं स्वर्णं दत्वा गच्छेत्स्वेच्छाभिरिति ।

**मुहूर्तदर्पणोऽपि** च तथैव तानि पठित्वा अथ **माण्डव्यसंहितायाम**पशकुनशान्तिरिति प्रतिज्ञाय ।

"यदाऽपशकुनं पश्येद्विपरीतमुपस्थितम् । सघृतं काञ्चनं दत्वा निर्विशङ्कं ततो व्रजेत्" ॥ इति ।

पठितम् । एवं च बहुपत्नीनाम् ऋतुः "यौगपद्ये तु तीर्थानां विवाहक्रमशो भवेत् । रक्षणार्थमपुत्रां वा ग्रहणक्रमशोऽपि वेति" **देवलोक्ते**र्निर्वाहस्तथा प्रकृतेऽपि उक्तवचनान्निर्वाह इति सकलेष्टसिद्धिरिति सुधियो विभावयन्तु ॥ ८१ ॥

## याज्ञवल्कीये ८२ श्लोकः

**किंचेति** ।

प्रागुक्तरक्षणहेतुप्रकारद्वयातिरिक्तप्रकारमाहेत्यर्थः । **बन्धुभिः** बन्धुत्रयादिभिः । उपलक्षणत्वेनाह । **पुष्पादीति** । आदिनाऽङ्गानुलेपनादिपरिग्रहः "पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः" ( अ. ३।५५ )

"यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः । यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः ॥ (अ.३श्लो.५६) इति **मनूक्तेराह । यस्मादिति** गृहव्यापारेत्यनेन धर्मान्तरं तस्याः सूचितम् ॥ ८२ ॥

## याज्ञवल्कीये ८३ श्लोकः

**इत्याह** । इत्याशङ्कायामाह । एवमग्रे सर्वत्र । अन्यत्र दक्षत्वस्य प्रकृतानुपयोगादाह । **गृहेति** । अकादाचित्कत्वायाह । **सदेति** । उपयुक्तव्ययस्येष्टत्वादाह । **न व्ययशीलेति** । अवतरणानुरोधेनाह । **स्यादितीति** । पूर्वार्द्धे इति भावः । अत **एवाह** । **किंचेति** । अस्य सार्वकालिकधर्मत्वादाह । **नित्यमिति** । न्यूनतां निराचष्टे । **श्वशुरेति** । भर्तृतत्परत्वस्य स्त्रीभिर्भर्तृवचन इत्यादिना सिद्धत्वात् **स्यादिति** शेषासंभवः । अत एवात्रोक्तं न पूर्वार्द्धे अतः पादवन्दनकरणे एव कर्तृत्वेनान्वय इत्याह । **भर्तृतादिति** । एवं च तदनधीनाया इदं बाधितमेवेति सूचितम् ॥ ८३ ॥

## याज्ञवल्कीये ८४ श्लोकः

प्रोषिते इत्यनेनेदानीं प्रोषितभर्तृकाधर्मा उच्यन्त इति सूच्यते । तया साध्व्या इत्याह इत्यत आह एवं प्राग्वदपि बोध्यं किंचिद्वास्यस्येष्टत्वादाह । **विश्रम्भेणेति** विश्वस्ततयेत्यर्थः मध्यमणिन्यायेनान्वयोऽस्य सामान्येनाह । **परेति** । गामश्वमितिवद्विनापि च समुच्चयाभ्रमायावतरणानुरोधेनाह । **त्यजेदितीति । मनुरपि** ( अ. ९ श्लो. ७५ )

"विधाय प्रोषिते वृत्तिं जीवेन्नियममास्थिता । प्रोषिते त्वविधायैव जीवेच्छिल्पैरगर्हितैः " ॥ इति ।

**बृहस्पतिरपि ।**

"प्रसाधनं नृत्यगीतसमाजोत्सवदर्शनम् । मांसमद्याभियोगं च न कुर्यात्प्रोषिते पतौ "॥ इति ।

**विष्णुरपि**

"भर्तरि प्रोषिते न प्रतिकर्मक्रिया परगृहेषु चाभिगमनं द्वारदेशगवाक्षेषु च न स्थातव्यमिति"

**हारीतोऽपि ।** "न प्रोषितेऽलंकुर्यान्न वेणी मुञ्चेतेति "

**शङ्खलिखितावपि** "सर्वासां प्रोषिते भर्तरि ब्राह्मणी चारित्रं रक्षेत प्रतिवासान्माता पिता वा अनन्तरं राजन्या वा प्रेङ्खाभांडविहारचित्रदर्शनारामोद्यानयानविवृतशयनोत्कृष्टपानभोजनकन्दुकक्रीडाहास्यगन्धमाल्यालंकारदन्तधावनाञ्जनादर्शप्रसाधनादीनामस्वतन्त्राणां प्रोषितभर्तृकाणां कुलस्त्रीणामनारम्भम् " इति । सर्वासां प्रोषितभर्तृकाणां मध्ये ब्राह्मणी आत्मना चरित्रं रक्षेत प्रतिवासात्तु मातापितरौ चोभौ वा रक्षेते राजन्या क्षत्रिया वा रक्षेत एकभर्तृकाणां चैवेतदुच्यते प्रेङ्खादोलेत्यर्थः ॥ ८४ ॥

## याज्ञवल्कीये ८५ श्लोकः

**किंचेति** । स्त्रीमात्रस्य साधारणधर्म उच्यत इत्यर्थः । विवाहितामित्यर्थकविन्नामित्युक्तेः कन्यात्वाविवक्षया आह । **पाणीति** । **ततः** पाणिग्रहणात् । अभाव इत्यस्य मध्यमणिन्यायेनान्वयात्तारुण्ये आह । **तदेति** अत एव । तुश्चार्थे व्युत्क्रमे मनोज्ञादित्वाद्भावे वुञित्याह । **वृद्धेति ।** वृद्धत्वे चेत्यर्थः। पुत्रा इत्यस्यैव संबन्धः । अग्रिमस्य सर्वशेषत्वं सूचयन्नाह । **तेषामुक्तानामिति ।** पित्रादीनामित्यर्थः । स्मृत्यन्तरानुरोधेन उपसंहारध्वनितमर्थं न्यूनतानिरासायाह । **ज्ञातीनामिति । पक्षेति ।** पितृभर्तृमातृकुलेत्यर्थः । **भर्तेति ।** पालकः स्वामी चेत्यर्थः अत एवाह **अत इति ।** यथाश्रुतेऽर्थान्तरप्रतीतिनिरासायाह । **क्वचिदपीति ।** कस्यांचिदवस्थायामपीत्यर्थः ॥ ८५ ॥

## याज्ञवल्कीये ८६ श्लोकः

**किंचेति** इदानीं मृतभर्तृकाया धर्मा उच्यन्त इत्यर्थः । **पित्रेति ।** अन्यसाहित्यात्पितामात्रेत्यादिनैकशेषो **न विनार्थो** नाशः प्रकृते विवक्षितः पूर्वार्द्धबलात् विमुक्तायाः स्थितेः प्रागुक्तत्वाच्चेत्याह । **रहितेति ।** तुर्यपादोक्तस्यात्र हेतुत्वं सूचयन्नाह । **यस्मादिति ।** तथा च यत इति शेषस्तत्र बोध्यः । अन्यथेत्यस्य व्याख्या **तद्रहितेति** । तद्रहिता सती तद्रहितेत्यर्थः ।

**अन्येऽपि विधवाधर्मा अन्यत्रोक्ताः** । तथाहि तत्र तावत्स्कान्दे तत्रैव
“अनुयाति न भर्तारं यदि दैवात्कथंचन । तथापि शीलं संरक्ष्यं शीलभङ्गात्पतत्यधः ॥
“तद्वैगुण्यादपि स्वर्गात्पतिः पतति नान्यथा । तस्याः पिता च माता च भ्रातृवर्गस्तथैव च ॥
“पत्यौ मृते च या योषिद्वैधव्यं पालयेत्क्वचित् । सा पुनः प्राप्य भर्तारं स्वर्गभोगान्समश्नुते ॥
“विधवाकबरीबन्धो भर्तृबन्धाय जायते । शिरसो वपनं तस्मात्कार्यं विधवया सदा ॥
“एकाहारः सदा कार्यो न द्वितीयः कदाचन । त्रिरात्रं पञ्चरात्रं वा पक्षव्रतमथापि वा ॥
“मासोपवासं वा कुर्याच्चान्द्रायणमथापि वा । कृच्छ्रं पराकं वा कुर्यात्तप्तकृच्छ्रमथापि वा ॥
“यवान्नैर्वा फलाहारैः शाकाहारैः पयोव्रतैः । प्राणयात्रां प्रकुर्वीत यावत्प्राणः स्वयं व्रजेत् ॥
“पर्यङ्कशायिनी नारी विधवा पातयेत्पतिम् । तस्माद्भूशयनं कार्यं पतिसौख्यसमीहया ॥
“नैवाङ्गोद्वर्तनं कार्यं स्त्रिया विधवया क्वचित् । गन्धद्रव्यस्य संभोगो नैव कार्यस्तया पुनः ॥
“तर्पणं प्रत्यहं कार्यं भर्तुः कुशतिलोदकैः । तत्पितुस्तत्पितुश्चापि नामगोत्रादिपूर्वकम् ॥
“विष्णोस्तु पूजनं कार्यं पतिबुद्ध्या न चान्यथा । पतिमेव सदा ध्यायेद्विष्णुरूपधरं हरिम् ॥
“यद्यदिष्टतमं लोके यच्च पत्युः समीहितम् । तत्तद्गुणवते देयं पतिप्रीणनकाम्यया ॥
“वैशाखे कार्तिके माघे विशेषनियमांश्चरेत् । स्नानं दानं तीर्थयात्रां विष्णोर्नामग्रहं मुहुः ॥
“वैशाखे जलकुम्भांश्च कार्तिके घृतदीपकाः । माघे धान्यतिलोत्सर्गः स्वर्गलोके विशिष्यते ॥
“प्रपा कार्या च वैशाखे देवे देया गलन्तिका । उपानद्व्यजनं छत्रं सूक्ष्मवासांसि चन्दनम् ॥
“सकर्पूरं च ताम्बूलं पुष्पदानं तथैव च । जलपात्राण्यनेकानि तथा पुष्पगृहाणि च ॥
“पानानि च विचित्राणि द्राक्षारम्भाफलानि च । देयानि द्विजमुख्येभ्यः पतिर्मे प्रीयतामिति ॥
“ऊर्ज्जे यवान्नमश्नीयादेकान्नमथवा पुनः । वृन्ताकं सूरणं चैव शूकशिम्बीं च वर्जयेत् ॥
“कार्तिके वर्जयेत्तैलं कार्तिके वर्जयेन्मधु । कार्तिके वर्जयेत्कांस्यं कार्तिके बाऽपि संधितम् ॥
“कार्तिके मौननियमे घण्टां चारु प्रदापयेत् । पत्रभोजी कांस्यपात्रं घृतपूर्णं प्रयच्छति ॥
“भूमिशय्या व्रते देया शय्या श्लक्ष्णा सतूलिका ।
“फलत्यागे फलं देयं रसत्यागे च तद्रसः । धान्यत्यागे च तद्धान्यमथवा शालयः स्मृताः ॥
“धेनूर्दद्यात्प्रयत्नेन सालंकाराः सकाञ्चनाः । एकतः सर्वदानानि दीपदानं तथैकतः ॥
“कार्तिके दीपदानस्य कलां नार्हन्ति षोडशीम् । सौवर्णे राजते ताम्रे भक्त्यालाबुमये यथा ॥
“तैलेन वर्तिर्दातव्या महारजनरञ्जिता । समाहितमना भूत्वा दत्वा शिरसि दीपकम् ॥
“भास्करं हृदये ध्यात्वा इमं मन्त्रमुदीरयेत् । “नमस्ते रुद्ररूपाय रसानां पतये नमः ॥
“वरुणाय नमस्तेऽस्तु हरिवास नमोऽस्तु ते ” । जले परिहरेद्दीपं ध्यात्वा संतर्प्य देवताः ॥
“किंचिदभ्युदिते सूर्ये माघस्नानं समाचरेत् । यथाशक्त्या च नियमान्माघस्नायी समाचरेत् ॥
“पक्वान्नैर्भोजयेद्विप्रान् यतिनोऽपि तपस्विनः । लड्डुकैः फेनिकाभिश्च वटकेण्डरिकादिभिः ॥
“घृतपक्वैः समरिचैः शुचिकर्पूरवासितैः । गर्भे शर्करया पूर्णैर्नेत्रानन्दैः सुगन्धिभिः ॥
“शुष्केन्धनानां भारांश्च दद्याच्छीतापनुत्तये । कञ्चुकं तूलगर्भं च तूलिकां सूपवीतिकाम् ॥
“मञ्जिष्ठारक्तवासांसि तथा तूलवतीं पटीम् । जातीफललवङ्गैश्च ताम्बूलानि बहून्यपि ॥

"कम्बलानि विचित्राणि निर्वातानि गृहाणि च । मृदुलाः पादरक्षाश्च सुगन्ध्युद्वर्तनानि च ॥
"घृतकम्बलपूजाभिर्महास्नानपुरस्सरम् । कृष्णागरुप्रभृतिभिर्गर्भागारे प्रधूपनैः ॥
"स्थूलवर्तिप्रदीपैश्च नैवेद्यैर्विविधैस्तथा । भर्तृस्वरूपो भगवान् प्रीयतामिति चोच्चरेत् ॥
"एवंविधैश्च विधवा विविधैर्नियमैर्व्रतैः । वैशाखान्कार्तिकान्माघानेवमेवातिवाहयेत् ॥
"नाधिरोहेदनड्वाहं प्राणैः कण्ठगतैरपि । कञ्चुकं न परीदध्याद्वासो न विकृतं वसेत् ॥
"अपृष्ट्वा तु सुतान्किंचिन्न कुर्याद्भर्तृतत्परा । एवं चर्यापरा नित्यं विधवाऽपि शुभा मता ॥
"एवं धर्मसमायुक्ता विधवाऽपि पतिव्रता । पतिलोकानवाप्नोति न भवेत्क्वाऽपि दुःखभाक् ॥
"न गङ्गया तया भेदो या नारी पतिदेवता । उमाशिवसमा साक्षात्तस्मात्तां पूजयेद् बुधः"॥ इति ।

**मनुः** । ( अ. ५ श्लो. १५८–१६२ )

"कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः । न तु नामाऽपि गृह्णीयात्पत्यौ प्रेते परस्य तु ॥
"आसीतामरणात्क्षान्ता नियता ब्रह्मचारिणी । यो धर्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम् ॥
"अनेकानि सहस्राणि कौमारब्रह्मचारिणाम् । दिवं गतानि विप्राणामकृत्वा पुत्रसंततिम् ॥
"मृते भर्तरि साध्वी या ब्रह्मचर्ये व्यवस्थिता । स्वर्गं गच्छेदपुत्राऽपि यथा ते ब्रह्मचारिणः ॥
"अपत्यलोभाद्यातु स्त्री भर्तारमतिवर्तते । सेह निन्दामवाप्नोति पतिलोकाच्च हीयते ॥
"नान्योत्पन्ना प्रजाऽस्तीह न चान्यः स्यात्परिग्रहः । द्वितीयस्तु न साध्वीनां क्वचिद्भर्तोपदिश्यते"॥ इति च ।

**अङ्गिराः** ।

"मृते भर्तरि या नारी समारोहेद्धुताशनम् । साऽरुन्धतीसमाचारा स्वर्गलोके महीयते ॥
"तिस्रः कोट्योऽर्द्धकोटी च यानि लोमानि मानवे । तावन्त्यब्दानि सा स्वर्गे भर्तारं याऽनुगच्छति ॥
"व्यालग्राही यथा व्यालं बिलादुद्धरते बलात् । तद्वद्भर्तारमादाय तेनैव सह मोदते ॥
"मातृकं पैतृकं चैव यत्र कन्या प्रदीयते । पुनाति त्रिकुलं नारी भर्तारं याऽनुगच्छति ॥
"तत्र सा भर्तृपरमा परा परमलालसा । क्रीडते पतिना सार्द्धं यावदिन्द्राश्चतुर्दश ॥
"ब्रह्महाऽपि कृतघ्नो वा मित्रघ्नो वाऽपि यो नरः । तं वै पुनाति सा नारी इत्याङ्गिरसभाषितम् ॥
"साध्वीनामेव नारीणामग्निप्रमथनादृते । नान्यो धर्मोऽत्र विज्ञेयो मृते भर्तरि कर्हिचित् ॥
"यावन्नाग्नौ दहेद्देहं मृते पत्यौ पतिव्रता । तावन्न मुच्यते नारी स्त्रीशरीरात्तु कर्हिचित् "॥

"सद्वृत्तभावार्पितभर्तृकाणां स्त्रीणां वियोगक्षतकातराणाम् ।
"तासां प्रभावस्तमिते गते कं नाग्निप्रवेशादपरोऽस्ति मार्गः " ॥

वृत्तमाचारः, भावोऽभिप्रायः, तौ शोभनार्पितौ याभिस्तास्तथा । वियोग एव प्ररोही व्रणः क्षतस्तत्र कातराणाम् । प्रभौ भर्तरि । कं सुखम् ॥

**व्यासः** ।

"दयितं याऽन्यदेशस्थं मृतं श्रुत्वा पतिव्रता । समारोहति शीघ्रेऽग्नौ तस्याः शक्तिं न बोधत ॥ १०

"यदि प्रविष्टो नरकं दुःखपाशैः सुदारुणैः । संप्राप्तो यातनास्थानं गृहीतो यमकिंकरैः ॥
"तिष्ठतेऽविशो दीनो वेष्ट्यमानः स्वकर्मभिः । व्यालग्राही यथा व्यालं बिलादुद्धरत्यशङ्कितः ॥
"तद्वद्भर्तारमादाय स्वर्गं याति तपोबलात् । तत्र सा भर्तृपरमा स्तूयमानाऽप्सरोगणैः ॥
"क्रीडते पतिना सार्द्धं यावदिन्द्राश्चतुर्दश" ॥

**ब्राह्मे ।**

"मृते भर्तरि साध्वीनां न चान्या विद्यते गतिः । नान्यद्भर्तृवियोगाग्निदाहस्य शमनं भवेत् ॥
"देशान्तरे मृते तस्मिन्साध्वी तत्पादुकाद्वयम् । निधायोरसि संशुद्धा प्रविशेज्जातवेदसम् ॥
"भर्तृप्रसादात्साध्वी स्त्री न भवेदात्मघातिनी । त्र्यहाशौचे निवृत्ते तु श्राद्धं प्राप्नोति शास्त्रवत्" ॥

**इदं क्षत्रियाविषयम्** । एतेनास्मादेव ब्राह्मण्या अनुगमनमपीति **कल्पतर्वा**द्युक्तमपास्तमित्यनुपदमेव स्फुटीभविष्यति ।

**बृहस्पतिः ।**

"शरीरार्द्धं स्मृता जाया पुण्यापुण्यफले समा । अन्वारूढा जीवती वा साध्वी भर्तृहिताय सा ॥
"व्रतोपवासनिरता ब्रह्मचर्ये व्यवस्थिता । दमदानरता नित्यमपुत्राऽपि दिवं व्रजेत्" ॥ इति ।

**विष्णुः ।**

"मृते भर्तरि ब्रह्मचर्यं तदन्वारोहणं वा"॥

**हारीतः ।**

"आहिताग्निश्चेत्प्रमीयतेऽवक्षाणोऽग्निं परिगृह्य सार्पराज्ञीभिः स्त्रीसवनमिश्रा वसेत् । अनाहिताग्निश्चेदन्यं वा लौकिकाग्निं वा परिगृह्य भर्तुः पितुः स्वजनगृहं वाऽऽश्रित्य जितजिह्वा हस्तपादेंद्रिया स्वाचारवती दिवारात्रं भर्तारमनुशोचन्ती व्रतोपवासैः क्षान्तात्मा पतिलोकं जयति न भूयः पतिलोकमवाप्नोति" एवं ह्याह ।

"पतिव्रता तु साध्वी या निष्ठां याति प्रभो मृते । सा हित्वा सर्वपापानि पतिलोकमवाप्नुयात्" ॥
अवक्षाणंः अर्द्धदग्धकाष्ठमुल्मुकम्, आयंगौरिति मुन्यृचः सार्पराज्यः ।

**कात्यायनः ।**

"अनेकदोषदुष्टेऽपि मृते भर्तरि या सदा । साध्वाचाराऽवतिष्ठेत गुरुशुश्रूषणे रता ॥
"मृते भर्तरि या साध्वी ब्रह्मचर्ये व्यवस्थिता । साऽरुन्धतीसमाचारा ब्रह्मलोके महीयते" इति ॥

नियोगानन्तरं **यमः** ।

"यावज्जीवं मृते पत्यौ या भवेद्ब्रह्मचारिणी । यो धर्म एकपत्नीनां तं धर्ममभिकाङ्क्षती ॥
"सा स्त्री श्रुतौ वा शास्त्रे वा अप्रजा नाभिधीयते । प्रजा हि तस्याः सो धर्मः सवर्णादिति धारणा ॥
"अष्टाशीतिसहस्राणि मुनीनामूर्ध्वरेतसाम् । दिवं गतानि विप्राणामकृत्वा कुलसंततिम् ।
"तथैव या स्त्री जीवन्ती ब्रह्मचर्ये व्यवस्थिता । अपुत्रा प्राप्नुयात्स्वर्गं यथा ते ब्रह्मचारिणः ॥
"अपुत्रा जातपुत्रा वा कन्या पतिमनुव्रता । प्राप्नुयात्पतिलोकं सा मनुः स्वायंभुवोऽब्रवीत्"॥इति।

एकपत्नीनामेकपतिकानां कन्या अनूढाविरोधं परिहरति । **एतच्चेति** । एवंच पाक्षिकमेवानेनोच्यते इति न दोष इति भावः । अनुरत्र सहार्थः । यद्यपीतो विकल्पः प्रतीयते तथापि द्वितीयं युक्तं इत्याह । **अन्वेति** । सहगमने इत्यर्थः । **तथा च** तमेव च । **तत्र** प्रवेशे सति ।**अन्वपेति**। प्राप्तवतीत्यर्थः । **ततः** तत्प्राप्त्यनन्तरम् । तत्र **स्वर्गे** । तेनेति पाठान्तरम् । अन्यदप्याह । **तथेति** । तथा चेति पाठे तद्वत्तावपीत्याद्यर्थः । **तावत्कालं वसेत्स्वर्गे इति** । तावन्त्यब्दानि सा स्वर्गे इति पाठान्तरम् ।

**व्यालः** सर्पः उद्धृत्येत्यत्र तमिति शेषः । **तत्र** स्वर्गादौ । पतिनेत्यार्षम् । पूर्वं वासकाल उक्तः अत्र क्रीडाकालमाह । **यावदिति** । **शुद्धाङ्गिरस**मप्याह स्मृत्यन्तरमप्याह । **तथेति** । पुनातीत्यत्र तमित्येव कर्म । अविधवात्वे हेतुमाह । **तमादेति**। तुर्थ्यर्थे ब्रह्मघ्नो वेत्यादि समारोहणप्रवृत्त्यर्थमर्थवादः। समारोहेदिति विधिकल्पनाद् विपक्षे बाधकश्रवणादप्यन्वारोहणं कार्यम् । अकरणे दोषमप्याह । **यावच्चेति** । **अपिना आङ्गिरसम्** । **मातृकं** तत्संबंधिकुलम् । एवमग्रेऽपि । **यत्र** कुले । परमश्रेयःसाधनत्वादपि तत्कार्यमित्याह । स्मृत्यन्तरमप्याह । **तथेति** । एतेन पतिव्रतानामिदमुचितं प्रशस्तं चेति सूचितं पतिव्रतेत्यादिवचननिचयलभ्यम् । तदेवाह । **अयं चेति** । **सर्वासामिति** । सवर्णानामेवेत्यर्थः । असवर्णानां तु पृथक्चित्यारोहणमेवेति बोध्यम् । **अगर्भाति** । इदमुपलक्षणं सूतिकारजस्वलापतिताव्यभिचारिणीभर्तृदुष्टभावाभिन्नानामित्यपि बोध्यम् । विरोधं परिहरति । **यानि चेति** । **च**स्त्वर्थे । **इतरेष्विति** अनुगमनं परमं तपस्तत्रोच्यते इत्यर्थः ।

तस्य साधारण्यमयुक्तमित्याह । **यत्त्विति** । **प्रतीति** । तस्माद्धेतोरित्यर्थः । दृष्टान्तमुपपादयति । **यथा श्येनेनेति** । अतिक्रमणे उभयत्राप्युभयं प्रागुक्तं हेतुगर्भं विशेषणम् । **प्रतीति** । न हिंस्यादित्यर्थः । एवमग्रेऽपि । एवं च विशेषधर्मोऽयमिति भावः । तत्रादौ सिद्धान्तरीत्या दूषयति । **ये तावदिति** । यत इत्यादिः श्येनाख्ययागेत्यर्थः । **भाव्येति** । तस्याः साध्यभूता या भावना हिंसा तस्यामित्यर्थः । साक्षात् फलेऽनर्थत्वमाह । **विधीत्यादि** । तस्या अविधेयत्वात् प्रतीतिर्न हिंस्यादित्यर्थः। प्रकृते तद्वत्तदभावे हेतुमाह । **हिंसाया इति** । एवं च निषेधस्य विहितेतरहिंसापरत्वमिति भावः । आलम्भो मारणमिति मतेनाह । **अग्नीषोमीयेति** । एकदेशिमतेऽपि निर्वाहमाह । **यत्तु मतमिति** । एवमुक्तिवैषम्येणैव पूर्वतोऽस्य तथात्वं सूचितम् । तद्बीजं तु श्येनस्य तदनुकूलव्यापारत्वेऽपि न हिंसात्वं मरणोद्देशेन प्रवृत्तस्य श्रौतविध्यबोधितस्य तदनुकूलव्यापारस्यैव हिंसात्वात् । "तस्मात्स्वेनैव वीर्येण निगृह्णीयादरीन् द्विजः । श्रुतीरथर्वाङ्गिरसीः कुर्यादित्यविचारयन् "॥ इत्यादिना[3] श्रौतस्यैव मननाऽभ्यनुज्ञात् । श्रुतीरित्यस्य तद्बोधिताभिचारकर्मणीत्यर्थः । कूपादौ विनष्टे गवि कूपकर्तुर्हिंसकत्ववारणाय मरणोद्देशेनेति मरणकामनयेत्यर्थः । एवमन्योद्देशेन प्रक्षिप्तनाराचहते ब्राह्मणे न तत्क्षेप्तुर्ब्रह्महन्तृत्वम् । तथा काशीमरणोद्देशेन कृताशिवपूजादेर्न हिंसात्वं यदा मे मरणं भवति तदा काश्यां भवत्वित्येवंकामनया मरणस्य काश्यधिकरणकत्वविषयतया तदाचरणोऽपि मरणकामनयाऽनाचरणात् । एवं चात्र हिंसात्ववारणायादृष्टाद्वारकत्वविशेषणं वदन्तो मान्या एव । मरणोद्देशेन कृतस्य तु हिंसात्वं भवत्येव । श्रौतविध्यबोधितेत्युक्तेस्तन्त्राद्युक्ताभिचाराणां हिंसात्वमेव। अत एव **मनुना** तथैवोक्तम्। श्येनादावपि शिष्टानां विगानं तु श्येनाद्दधो वधाच्च नरक इति प्रतिसंधानेन बोध्यम्। श्येनफली-

१ प्रसंगात्तं पक्षं प्रतिपादयति । २ श्येनेनेति भावः । ३ एवं हि मूले ।

भूतस्य शत्रुवधस्य रागतः प्रवृत्तिविषयस्य विधिविषयत्वाभावेन न हिंस्यादिति निषेधविषयत्वस्य पूर्णत्वात् । यज्ञांतःपातिवधस्यैव मनुनाऽल्पवधत्वबोधनात् । अत एव तज्जन्यपापे बलवद् द्वेषवतां शिष्टानामपेक्षितवैरिवधसाधनत्वेऽपि न तत्र प्रवृत्तिरिति दिक् इति । **तत्रापीति** । मते इत्यर्थः । प्रकृते इति शेषः । चरमेऽन्वयोऽस्य विधानात् तत्संभवात् मरणे करणांशे कामाधिकाराय दृष्टान्तमाह । **वायव्यमिति** । अत्राऽपि तस्य स्पर्शपूर्वकमारणमर्थः । तथा सति मारणरूपकरणांशे रागतः प्रवृत्तिसंभवेऽपि तदनुकूले बन्धनादौ विधित एव प्रवृत्तिरिति न तस्यावकाश इति भावः । उपसंहरति । **तस्मादिति** ।

अत्र श्रुतिविरोधं परिहरति । **यत्त्विति** । **स्वरिति** । यतो बोध्यते इति शेषः । **इतिर्हेतौ** । तदेव विशदयति । **यस्मादित्यादिना** । यथैवं सति न विरोधस्तथा आह । **अतश्चेति** । वस्तुतस्तु स्वःकामी आयुषः प्राङ् न प्रेयादित्यनेन स्वर्गकामस्य शास्त्रेण विहितं यन्मरणं प्रयागादौ तन्निषिध्यते । अक्षरस्वारस्यात् । तस्य जीवता यज्ञादिभिरपि साधयितुं शक्यत्वादिति तदाशयः । एवं च तथामरणे कामार्थसिद्धिर्दोषश्चेत्युभयम् । एवं च यज्ञादावसमर्थस्य तत्रानधिकारिणो वा तत्र प्रवृत्तिरुचितैव । तत्राधिकारिणोऽपि स्वर्गो मे शीघ्रं भवत्वित्युत्कटेच्छावतो दोषज्ञानेऽपि प्रवृत्तिर्भवति । परंतु तस्य दोषोऽप्युक्तश्रुतिवशात् । एवमेव स्त्रीणां सहगमने यजमानस्य सर्वस्वारयज्ञे चाग्निप्रवेशे प्रवृत्तिः टीकोक्तं तु न युक्तम् । अक्षरैरलाभात्स्वःकामिनो मोक्षार्थित्वाभावाच्च । एवं च स्वःकामिन एव निषेधान्मोक्षकामस्य न तन्निषेध इति बोध्यम् । तत्रापीन्द्रियग्रामस्य दुःसंचरत्वाद्युवतीभिरवश्यं कार्यम् । विष्णूक्तविकल्पस्तु शक्त्यशक्तिविषयतया वृद्धयुवतिपरतया च व्यवस्थितो बोध्यः इति काश्यतिरिक्तपरमिति बोध्यं तदाह । **सर्वमिति** ॥ ८६ ॥

## याज्ञवल्कीये ८७ श्लोकः ।

**किं चेति** । पुनरपि स्त्रीमात्रस्य साधारणधर्मा उच्यन्त इत्यर्थः । प्रियहितयोरैक्यात् पौनरुक्त्यं परिहरति । **प्रियमनवद्यत्वेन मनोऽनुकूलमिति** । अस्मिन्काले इत्यर्थे निपातोऽयत्वे इतिशब्दः । स्पष्टं चेदं **महाभाष्यादौ** । **आयत्यां** उत्तरकाले । **च**स्त्वर्थे । एवमग्रेऽपि । समाहारद्वन्द्वः । यथाकथंचिद्योगे उत्कर्षाभावादाह । **निरतेति** । **नानुक्तेति** । अनाज्ञप्तेत्यर्थः । ' अनुक्तेति ' पाठान्तरम् । आगुल्फमिति पाठः । **आगुल्फादिति** पाठे जातावेकवचनम् । **विवृतौ** प्रकाशितौ । अनेनोत्तानगमनं निषिध्यते । **अपावृतं** । आस्यायनाच्छादितम् । ' **बन्धूंश्चेति वेति** ' पाठे **वा** चार्थे । **धूर्ता** विसंवादिनी । **प्रेक्षणिका** कुट्टिनी । माया च मूलं च कुहकं च तत्कारिका । इन्द्रजालमन्त्रौषधच्छलकारिणी । अत्र हेतुमाह । **संसर्गेण हीति** । **चारित्रं** स्वार्थेऽण् । विशिष्टार्थमाह । **संयेति** । विनिगमनाविरहादाह । **श्रोत्रादीति** । **इति**रर्थसमाप्तौ । अत एव प्रसक्तविरोधं परिहरति । **अयं चेति** । सकलः **शास्त्रोक्तः** । कामपदस्येति द्वन्द्वेन समासः । क्वचित्प्रत्येकं पाठोऽपि तस्य । ननु न स्त्रीणामुपनयनमत आह । **वैवेति** । **चेति** । स्मरणादित्यस्यानुषङ्गः ॥ ८७ ॥

## याज्ञवल्कीये ८८ श्लोकः ।

**प्रत्याहेति** । तस्याः धर्मविशेषं सूचयितुं तस्य सहधर्मचारिणीनिर्णयमाहेत्यर्थः । " सवर्णायां सत्याम् " इत्युक्त्या तदभावे त्वसवर्णाऽप्यभ्यनुज्ञाता । तत्रापि शूद्रा न कृष्णवर्णा " रमणायवै

न धर्मायेति" **वसिष्ठोक्तेः** (अ. १८ सू. १८)। बहुवचनलब्धमाह **बह्वीष्विति**। निर्धारणे सप्तमी। सतीष्विति शेषः। पूर्वानुरोधात्तेन द्विविधे ज्येष्ठाया अभावे अन्यस्या अप्यधिकारः। अत्र ज्येष्ठामेव न चेतरामिति वा चेत्तथोक्त्या तत्सान्निध्ये तथासत्वेऽपि तन्नाशे इव तदसान्निध्येऽपि सा सहकारिणी भवत्येव। सहाधिकारेऽपि पतिः जायापती इतिवज्जातपुत्र इत्यादिरपि सत्वात्सर्वं इति बोध्यम्।

पूर्वानुरोधेन योग्याध्याहारेणाह। **न नियोक्तव्येति**। किं तु तत्सान्निध्ये तया सहैव सा नियोक्तव्या इत्यर्थः। अत एव **बौधायनः**।

"एकैकां गार्हपत्यमीक्षयेदेकैकामाज्यमवेक्षयेदिति।"

**कात्यायनोऽपि**।

"नैकयाऽपि विना कार्यमाधानं भार्यया द्विजैः। अकृतं तद्विजानीयात्सर्वान्दारानतिक्रमेत्"॥ इति।

"अग्निहोत्रादियज्ञेषु द्वितीया न सहाचरेत्। अन्यथा निष्फलं तस्य स्विष्टैः क्रतुशतैरपि"॥ इति।

**विष्णुवाक्यं** त्वसवर्णाविषयम्।

**मनुरपि**। (अ. ९ श्लो. ८५–८६)

"यदि स्वाश्चावराश्चैव तिष्ठेरन्योषितो द्विजाः। तासां वर्णक्रमेण स्याज्ज्यैष्ठ्यं पूजा च वेश्म च॥

"भर्तुः शरीरशुश्रूषां धर्मकार्यं च नैत्यकम्। स्वा सैव कुर्यात्सर्वेषामन्यथा न कथंचन॥

"यस्तु तत्कारयेन्मोहात्स्वजात्या स्थितयाऽन्यया। यथा ब्राह्मणचाण्डालः पूर्वदृष्टस्तथैव सः"॥ इति।

**विष्णुरपि**

"सवर्णासु चासवर्णासु भार्यासु विद्यमानासु ज्येष्ठयैव तया सह धर्मकार्यं कुर्यादन्यथा तु कनिष्ठया विसवर्णयाऽभावे त्वनन्तरयैवापादि न त्वेव च द्विजः शूद्रया" इति।

**छन्दोगपरिशिष्टे कात्यायनोऽपि**।

"अग्निशिष्टादिशुश्रूषां बहुभार्यः सवर्णया। कारयेत्तद्बहुत्वे च ज्येष्ठया गर्हिता न चेत्॥

"या वा स्याद्वीरसूरासामाज्ञासंपादिनी च या। दक्षा प्रियंवदा शुद्धा तामत्र विनियोजयेत्॥

"दिनक्रमेण वा कर्म यथाज्येष्ठं स्वशक्तितः। विभज्य सह वा कुर्युर्यथाज्ञानमसाध्यवत्॥

"स्त्रीणां सौभाग्यतो ज्येष्ठं विद्ययैव द्विजन्मनाम्। न हि स्वल्पेन तपसा भर्ता तुष्यति योषिताम्॥

"भर्तुरादेशवर्त्तिन्या यथोमा बहुभिर्व्रतैः। अग्निशुश्रूषणेनैव स्त्री सौभाग्यमवाप्नुयात्"॥ इति।

**दक्षोऽपि**

"प्रथमा धर्मपत्नी तु द्वितीया रतिवर्द्धिनी। दृष्टमेव फलं तत्र नादृष्टमुपपद्यते॥

"धर्मपत्नी समाख्याता निर्दोषा यदि सा भवेत्। दोषे सति न दोषः स्यादपकार्या गुणान्विता"॥ इति

शूद्राया इत्यनुवृत्तौ

**मनुविष्णू** (अ. ३ श्लो. १८)

"दैवपित्र्यातिथेयानि तत्प्रधानानि यस्य तु। नाश्नन्ति पितृदेवास्तं न च स्वर्गं न सद्गतिम्"॥ इति॥८८॥

## याज्ञवल्कीये ८९ श्लोकः

अनन्तरेण संगत्यभावाद्व्यवहितेन संगतिमाह। **प्रमीतेति**। **वृत्तवती**मित्यनेन तदभावेनेति

सूचितं कर्मनाम्नस्ततः सप्तम्यर्थेऽर्श आद्यचा लब्धमाह । **श्रौतेनेति** । मूलमुपलक्षणमित्याह । **तदभावे इति** । पालकत्वनिरासायाह । **भर्तेति** । प्रागुक्तानुरोधेनाह । **अनुत्पादितेत्यादि** । शीघ्रत्वे हेतुमाह । **अनाश्रमीति** । धर्मिभेदस्य प्रतिपाद्यत्वाद्बहुव्रीहिर्न कृतः । विरोधं परिहरति । **एतच्चेति** । तेन दाहकरणं चेत्यर्थः । अत एवाह । **यत्त्विति** । यां तु चैवेति पाठान्तरम् । **मृतायां त्विति** प्रथमायां जीवत्यामित्यपि बोध्यं पूर्वैकवाक्यत्वात् । **ब्रह्मघ्नं** । **ब्रह्मोज्झमिति** पाठस्तु न उक्तः । वेदत्यागस्योपपातकत्वात् । श्रुत्या, ब्रह्महत्याया एवोक्तत्वाच्चेति बोध्यम् । **सहानधीति** । अनेन तस्या अपि तत्त्वे तु तदपि तस्या भवत्येवेति सूचितम् ।

**अथ प्रसङ्गाद्विधुरधर्मा उच्यन्ते ।**

"तत्र तावत् **विधुरोपासनम् । आश्वलायनः**
"उद्धृत्य चाग्निं प्रणवेन चादावन्वग्निरित्याहरयेत्पुरस्तात् ।
"निधाय 'पृष्टो दिवि' मन्त्रकेण ततश्च होमः शकलैश्चतुर्भिः ॥
"लेखादयो नैव च तत्सतां स 'विश्वानिनोऽग्यान' इमे च मन्त्राः ॥
"नारोपणं वाऽप्यवरोपणं वा चोत्पत्तिरेवं विधुरानलस्य ।
"यन्नित्यनैमित्तिककाम्यकर्म तत्रैव कुर्याद्विधुरः सदैव" ॥ इति
"आश्वलायनमाचार्यमभिगम्य महर्षयः । प्रतिपूज्य यथाचारमिदं वचनमब्रुवन् ॥
"भगवन्विधुराणां हि धर्मान्नो वक्तुमर्हसि । विवाहे त्वसमर्थस्य विधुरस्य क्रिया कथम् ॥
"श्राद्धानि पञ्चयज्ञाश्च कार्या नैमित्तिकाः क्रियाः । यस्मिन्येन विधानेन गृहस्थसदृशो भवेत्" ॥

**आश्वलायन उवाच ।**

"कात्यायनभरद्वाजधौम्यबौधायनादिभिः । यदुक्तं विधुराणां च तदेव कथयामि वः ॥
"चन्द्रानुकूलदिवसे स्नात्वाऽऽगत्य द्विजैः सह । पुण्याहं वाचयित्वा तानभ्यर्च्य च महानसात् ॥
"अग्निमाहृत्य विधिवत्स्थण्डिले तं निधाय च । संकल्प्य विधुरश्चाऽथ पुनः संधास्य इत्यथ ॥
"पुनः संधानवत्कुर्याल्लाजाहोमं विवाहवत् । चतुर्गृहीतं जुहुयात् "अयाश्चाग्ने"स्तु मन्त्रतः ॥
"तथा वृथा विलातोकी 'सप्तते अग्न' इत्यृचा । तन्त्रमन्यत्समानं स्याद्धोमशेषं समापयेत् ॥
"तदानीमेव जुहुयात्तस्मिन्नग्नौ घृताहुतीः । शुचिश्च पावमानीश्च तन्तुमानथ पाथिकृत् ॥
"गृहप्रवेशहोमार्थं जुहुयादाहुतीरिमाः । वैश्वानरीर्व्रतपतीर्हुत्वा शेषं समापयेत् ॥
"चतसृभिर्व्याहृतिभिश्चतस्रः समिधस्तथा । सायंप्रातश्च जुहुयादौपासनमतः परम् ॥
"दर्शश्च पौर्णमासश्च नित्येष्ट्याग्रयणे तथा । श्राद्धानि पञ्चयज्ञाँश्च तस्मिन्नग्नौ समाचरेत् ॥
"एवं कृते तु विधुरो गृहस्थसदृशो भवेत् । अनाश्रमस्थदोषोऽस्य नास्तीत्याहाश्वलायनः ॥
"दानव्रतेषु होमेषु तीर्थेषु श्राद्धकर्मसु । विधुरोऽपि सदा पूज्यो ह्यग्निवेदसमन्वितः ॥
"तस्मात्सर्वप्रयत्नेन वह्निं परिचरेत्स्वयम् । यस्य नित्यानि लुप्यन्ते पतितः सोऽभिधीयते ॥
"तस्मात् एवं प्रकुर्वीत न च नित्यानि लोपयेत्" ॥ इति ।

**अथ विधुराग्न्युत्पत्तिविधिः प्रयोगपारिजाते ।**

"स्मार्तार्धेनाऽग्निना दग्ध्वा मृतां पत्नीं च तां त्रिभिः। शिष्टार्धेनोद्वहेत्कन्यां पुनश्चैवाग्निमान्यजेत्॥
"प्रागुद्वाहाच्च शिष्टार्धं स्मार्तस्याग्नेर्यथाविधि । शुश्रूषेदप्यपत्नीक इष्टिं कुर्वीत वा न वा ॥
"सायंप्रातर्होमधर्ममर्धाग्नावपि संचरेत् "॥ **इत्याश्वलायनः ।**

**अस्यार्थः** । स्मार्तं कर्मानुतिष्ठन्नौपासनस्यार्द्धेन मृतां पत्नीं संस्कृत्य शिष्टार्धे पूर्ववत्कर्माणि कुर्यात् । श्रौतकर्मानुतिष्ठन्सपत्नीसंस्कारे त्रिभिरप्यग्निभिर्मृतां पत्नीं संस्कृत्य पुनरुद्वाहानन्तरमग्निमाधाय यजेदिति ।

**तथा च ब्राह्मणभाष्ये भृगुः ।**

"भार्यायै पूर्वमारिण्यै दत्वाऽग्नीनन्त्यकर्माणि । पुनर्दारक्रियां कुर्यात्पुनराधानमेव च "॥ इति एतत्पुनर्विवाहेच्छुविषयम् । तदनिच्छुस्त्वन्यमग्निं प्रमीतभार्यायै विनियोज्याग्नीनवस्थाप्य कुशमयीं पत्नीं कृत्वा पूर्ववत्परिचरेत् अन्यथा दोषश्रवणात् । **तथा च मैत्रायणीयश्रुतिः ।**

"यस्तु स्वैरग्निभिर्भार्यां संस्करोति कथंचन । असौ मृतः स्त्री भवति स्त्री चैवास्य पुमान्भवेत्"॥

अत्र विशेषमाह **प्रयोगपारिजाते विष्णुः ।**

"मृतायामपि भार्यायां वैदिकं न त्यजेद्द्विजः। उपाधिनाऽपि तत्कर्म यावज्जीवं समापयेत्" ॥
उपाधिः कुशमयादिपत्नीकल्पना ।

**तथा च स्मृत्यन्तरम् ।**

"अन्ये कुशमयीं पत्नीं कृत्वा तु गृहमेधिनः। अग्निहोत्रमुपासन्ते यावज्जीवमनुव्रताः" ॥ इति ।
एतद्विधुरोपासनं नित्यं, तदकरणे प्रायश्चित्तस्मरणेन प्रत्यवायश्रुतेः।

तदुक्तम्। **ऋग्विधाने ।**

"महत्तत्प्रजपेत्सूक्तं पञ्चवारं दिने दिने । औपासनं विना दोषो न स्पृशेद्विधुरं ततः" ॥

**तथा ।**

"अग्नेनय जपेद्वर्गं पञ्चवारं दिने दिने। विधुरो वा साग्निकस्य यत्फलं तत्फलं लभेत् " ॥ इति ।

अथ यदि भार्यायै सर्वोऽपि स्मार्ताग्निर्दत्तस्तदोत्पत्तिप्रकारमाह **बौधायनः** । " प्रणवेन " लौकिकमग्निं परिगृह्य "अन्वग्निरिति" होमदेशमानीय "पृष्टो दिवीति" होमस्थाने प्रतिष्ठाप्य "तत्सवितुस्तां सवितुरधानो देव सवितर्विश्वानि देव सावितारीति" चतुर्भिः शलाकैः प्रज्वाल्य नित्योपासनादि कृत्वा तमग्निं विसृजेत् । "नारोपणां नावरोपणां नित्यनैमित्तिककर्माण्यत्रैव कुर्यादिति " ।

**आश्वलायनो**ऽत्र विशेषमाह ।

"मृतायां पतितायां वा प्रोषितायां च पूरुषः। न कुर्यात्पार्वणश्राद्धं पत्न्यामन्यत्र वा गृही"॥ इति।
पार्वणनिषेधात्संकल्पश्राद्धं भवत्येव । अत्रार्थे मानभूता आश्वलायनकारिकाऽपि पूर्वमेवोक्ता । **प्रयोगपारिजाते** विधुरधर्मानुक्त्वा तस्याग्न्युत्पत्तिप्रकारं चैवमुक्त्वा उक्तं नित्यकर्मरूपौपासनादिनैमि-

त्तिकरूपपथिकृदादिकाम्यरूपरोगशान्त्यादि तत्तद्दिने कृत्वाऽग्निं विसृजेदिति एतच्छ्राद्धव्यतिरिक्तविषयम् । श्राद्धे तु "मृतपत्नीकः पार्वणश्राद्धं न कुर्यात्" **इत्याश्वलायन**स्तद्वचनमुक्तम् । तथा च संकल्पश्राद्धं मर्थादभिहितामिति **ज्योतिर्निबंधे वृद्धयाज्ञवल्क्यवचनम् ।**

"अपत्नीकैस्तु धर्मार्थे कौशी हैमी तु नायसी । ताम्रा विप्रादिभिर्भार्या धार्या हैम्यथवाऽखिलैः"॥ **पुनः सधानविधिः प्रयोगपारिजाते ।** "भार्यामरणोत्तरकालमर्थाग्निं संस्थाप्य लाजाहोमादिकं कृत्वाऽग्निं परिचरेत् । यावद्भार्यान्तरं भवति पुनर्विवाहं न करोति चेद्विधुरो भवति तत्रापि पुनः संधानं कुर्यात्" ॥

**अथ चिरकालं नष्टस्याग्नेः संधानविधिः ।**

"नास्तिक्येन विसृष्टाग्निश्चीर्णचान्द्रायणव्रतः । अनेनैवाग्निमादध्याच्चिरोत्सृष्टस्तथैव चेत्" ॥ इति।

**तत्रायं प्रयोगः ।** द्वादशाहपर्यन्तं यथाशक्ति सुवर्णदानं, मासद्वयपर्यन्तं कृच्छ्रं, मासचतुष्टयपर्यन्तमतिकृच्छ्रं, षण्मासपर्यन्तं पराकं, अब्दपर्यन्तं मासं पयोव्रतम् । आब्दे पूर्णे मासिकव्रतम्, अत्र सर्वत्र द्रव्यदानम् । एवं कालानुसारप्रायश्चित्तम् । सर्वत्र अतीतहोमद्रव्यं द्विजाय दत्वा अपराह्णे उल्लेखनादिसंभारनिधानान्तं कृत्वा 'इदं त एकम्'इत्यादिना व्याहृत्य चाग्निं प्रतिष्ठाप्य इदं त इत्यस्य बृहदुक्थ्यो विश्वेदेवास्त्रिष्टुप् 'इदं त एकं पर उत एकं तृतीयेन ज्योतिषा संविशस्व । संवेशस्तनुव॑श्चारुरेधि प्रियो देवानां परमे जनित्रे' समिद्द्वयमादाय पुनर्देशकालौ संकीर्त्य नास्तिक्याद्विसृष्टाऽग्नेः पुनः संधानाङ्गभूतमन्वाधानं करिष्ये इत्युक्त्वा 'अस्मिन्नन्वाहिते अग्नौ' इत्यादि आघारावाज्येत्यन्तमुक्त्वा प्रधानदेवतानामवारम् । अग्निं पवमानम् अग्निं पावकम् अग्निं शुचिम् अग्निं पथिकृतम् अग्निं तन्तुमन्तं चाज्येन यक्ष्ये । शेषेण स्विष्टकृतम् इत्यादि सद्यो यक्ष्ये. समिद्द्वयमग्नावाधाय परिसमूहेनाघाराज्यभागान्तं कृत्वा स्रुवेण स्रुचि आज्यं चतुर्गृहीत्वा । त्वमग्ने सप्रथा असित्यस्य आत्रेयः,सुतम्भरोऽग्निर्गायत्री, 'त्वमऽग्ने सप्रथा-असि जुष्टो होता वरेण्यः।त्वया यज्ञं वितन्वतेऽग्ने अग्निमित्यस्य काण्वमेधातिथिरग्निर्गायत्री।तन्तुं तन्वन्नित्यस्य देवा अग्निर्जगती ॥ ३ ॥ तन्नो अग्ने तवेत्यस्य आङ्गिरसो हिरण्यस्तुयोऽग्निर्जगती ॥४॥ स त्वन्नो अग्ने इत्यस्य गौतमो वामदेवोऽग्नीवरुणौ त्रिष्टुप् ॥ ५ ॥ सप्तते अग्ने समिधः सप्तजिह्वाः सप्तऋषयः सप्तधामप्रियाणि । सप्तहोत्राः सप्तधा त्वा यजन्ति सप्तयोनीरापृणस्व घृतेन स्वाहा ॥ ६ ॥ मनोज्योतिर्मनस्वी मनोऽष्टुप् मनोज्योतिर्जुषतां ॥ ७ ॥ पुनस्त्वादित्या रुद्रा वसवः समिंधतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः ॥ घृतेन त्वं तन्वं वर्धयस्व सत्याः सन्तु यजमानस्य कामाः ॥ ८॥ एतैर्मन्त्रैरष्टवारं यथाक्रमं तयैव स्रुचा जुहुयात् । ततः स्रुवेण स्वाज्यमादाय अग्नये पवमानाय स्वाहा ॥९॥ अग्नये पावकाय ॥ १० ॥ अग्नये शुचये स्वाहा ॥ ११ ॥ अग्नये पथिकृते ॥ १२ ॥ अग्नये तन्तुमते ॥ १३ ॥ एभिर्हुत्वा स्विष्टकृतादिहोमसमाप्तिः । आहिताग्नयेऽनड्वाहं दक्षिणां दद्यात् । एतद्बहुकालत्यक्तस्य बोध्यम् । विधुरस्याग्निहोत्राद्यपि **बह्वृचब्राह्मणे उक्तम् ।** अपत्नीकोऽग्निहोत्रमाहरेन्नाहरेदिति विचारमुपक्रम्याहरेदित्याहुः । यदि नाहरेदनद्धा पुरुषः स्यात् । कोऽनद्धा पुरुषो न देवान्नपितॄन्न मनुष्यानिति तस्मादपत्नीकोऽप्यग्निहोत्रमाहरेत्तदेषाभियज्ञगाथा गीयते "यजेतसौत्रामण्यमपत्नीकोऽप्यसोमपः" । मातापितृभ्यामनृणार्थात् यजेदितिवचस्तस्मात्सौम्य याजयेदिति ।

१ षष्ठ. २ णार्थी.

इदमेव सप्रपञ्चमुच्यते । **ऋग्वेदब्राह्मणे विद्यारण्यभाष्ये** तदाहुः "अपत्नीकोऽप्यग्निहोत्रमाहरेन्नाहरेदित्यत्र विचारितम् आहिताग्नेर्जीवितो मृतायाः भार्याया दाह आहितैरग्निभिः "

**तथा च मनुः** । ( अ. ५ श्लो. १६८ )

"भार्यायै पूर्वमारिण्यै दत्वाऽग्नीनन्त्यकर्माणि । पुनर्दारक्रियां कुर्यात्पुनराधानमेव च " ॥ इति ।

अन्येनाग्निना पत्नीदाह इति द्वितीयः पक्षः ।'आहार्येणानाहिताग्निं पत्नीं च' **इत्याश्वलायनवचनात्** । 'निर्मन्थ्येन पत्नीम्' इति **भारद्वाजः** । तदस्मिन्पक्षेऽग्नीनां सद्भावादपत्नीकस्याप्यग्निहोत्रं कर्तव्यमिति निर्णयः श्रुत्या यदि नाहरेदनद्धा पुरुष इत्यादिना विपक्षे दोषदर्शनपुरःसरं यज्ञगाथादिदर्शनऋणवाददर्शनादिना कृतः ।

**मैत्रायणीयश्रुतिरपि** ।

"यस्तु स्वैरग्निभिर्भार्यां संस्करोति कथंचन । असौ मृतः स्त्री भवति स्त्री चैवास्य पुमान्भवेत्" ॥

**विष्णुस्मृतिरपि** ।

"मृतायामपि भार्यायां वैदिकं न त्यजेद्द्विजः । उपाधिनाऽपि तत्कर्म यावज्जीवं समापयेत्" ॥ कुशमयादिपत्नीकल्पना अन्ये ।

"उपाधिः कुशमयीं पत्नीं कृत्वा तु गृहमेधिनः । अग्निहोत्रमुपासन्ते यावज्जीवमनुव्रताम् ॥"

इति **स्मृत्यन्तरात्** ।

तस्मात्सौम्यं याजयेदित्युपसंहारस्य तादृशऋणापाकरणार्थी दोषराहित्यात्सौम्यस्तमवश्यमग्निहोत्राद्यनुष्ठापयेदित्यर्थः । **षष्ठ तन्त्ररत्नादावपि** तथैव सपत्नीकैः प्रायः सर्वमाहितैराग्निभिः पत्न्या दाहपक्षे वाचिकं मानसं च द्विविधमग्निहोत्रमग्रे तत्रैव श्रुतौ प्रतिपादितम् । **श्रीरामाण्डारभाष्येऽपि** पुनराधेयनिमित्तेषु अङ्गविधुरतां हस्तपादाद्यङ्गवैकल्यं व्याख्याय उपदेशः पत्नीयज्ञाङ्गं तन्मरणेऽङ्गविधुरतेति व्याख्याने अस्मिन्पक्षे यजमानात्पूर्वं मृताया पत्न्या अग्निभिर्दाहो नास्तीति गम्यत इत्याह

"द्वितीयां वै तु यो भार्यां दहेद्वैतानिकाग्निभिः । जीवन्त्यां प्रथमायां तु सुरापानसमं हि तत्" ॥ इति ।

वाऽस्य विषय इत्युक्त्वा । अथवाऽन्वारम्भणीयाविरोधादिति **कपर्दिना** हेतुनिर्देशादेकभार्यस्याप्याहिताग्नेरन्वारम्भणीयापूर्वं भार्यामरणे "भार्यायै पूर्वमारिण्यै" इत्यादि **मनुवचनम्** । अन्वारम्भणीयोत्तरं मृताया अन्वारम्भणीयाविरोधान्न श्रौताग्निभिर्दाह इत्युपदेशमतोपपत्तिरिति चोक्तम् । **याज्ञवल्क्ये** 'वृत्तवतीमिति' विशेषणाद्भारद्वाजव्याख्याकारेणोक्तत्वाच्च **मनुवचनं** पतिव्रताविषयमिति । केचिन्मतमपि तत्रैव विषयदानायोक्तम् । **उज्ज्वलायां** तु अन्वारम्भणीयाविरोधः परिहृतः । तथाहि अन्यतराभावे कार्या प्रागग्न्याधेयादिति सूत्रे प्रागग्न्याधेयादिति विधीयते । 'धर्मप्रजासंपन्ने दारे सति नान्यां कुर्वीतेति' पूर्वसूत्रेणार्थादेशान्तरस्य प्राप्तत्वात् । प्रागग्न्याधेयादित्यत्र हेतुरुत्तरसूत्रम् । आधाने हि सति कर्मभिः संबध्यते येषामेतदङ्गमिति यस्मादाधाने विद्यमाना येषामाधानमुपकारकं तैरधिक्रियते । आधानोत्तरं

कृतायाः क्रतुसंबन्धाभावेन सह धर्मचरणाद्यनतिचरणासंकल्पविरोधस्तस्या ऋणापाकरणाभावप्रसंगश्चेत्यभिप्रायः। दारे सतीत्युक्त्या प्रागूर्ध्वं वाऽऽधानान्मृतेषु दारेषु सत्यामपि पुत्रसंपत्तौ धर्मसंपत्त्यर्थं दारग्रहणं कर्तव्यमेव। "भार्यायै पूर्वमारिण्यै" इत्यादि**मनु**वचनात् "आहरेद्विधिवत् दारानग्नींश्चैवाविलम्बयन्" इति **याज्ञवल्क्याच्च** ( आचारे ८९ श्लो. ) दारक्रियाधानक्रिययोरार्थः क्रमो वचनेनोच्यते।

ननु यजमानस्यान्वारम्भणीयता संस्कृतत्वान्न तया पुनः संस्कारतः संभवति। भार्यायाश्च तत्संस्कारं विना न दर्शपूर्णमासादिष्वधिकार इति स कथं तया यष्टुमर्हतीति चेत् न तत्संस्कारस्य संयोगवद्द्विष्ठत्वेन भार्यानाशे नाशेन पुनः संस्कारे बाधकाभावात्। वाचनिकः क्रम इति भ्रमः। वचनस्यान्वारम्भणीयातः पूर्वं भार्याविनाशेऽप्युक्तक्रमेणोपपत्तेरित्यलम्। धूर्तमतं तु पश्चान्मृताया एवाग्न्यन्तरेण दाहस्तद्विषयाण्येव **बौधायनभारद्वाज**वचनानि। **तथा हि** "तयोर्यः पूर्वो म्रियते तस्याग्निभिस्त्रेतायां पितृमेधः संपद्यते यः पश्चात्तस्यौपासन" इति सूत्रे यः पश्चादित्येव विधीयते अंशान्तरस्य प्राप्तत्वात्। तच्च विधानं यजमानस्य विधुराधानविधानात् सामर्थ्यात्पत्न्या एव निर्मन्थ्येन पत्नीमिति पूर्वोक्तस्य विकल्पेनेति। अत्र विधुराधानात्प्रागेव मृते यजमाने यः पश्चादिति विधानं यजमानस्यापि संभवतीति बोध्यम्।

एवं च किंपुनर्यदा पत्युस्तां विनाऽनधिकार एवेति तदर्थमवश्यं कर्तव्यमेव कांस्यभोजिन्यायेन। एतेन तत्संस्कारस्य प्रत्येकवृत्तित्वस्य भार्यानाशेऽपि तदनाशस्य चाभ्युपगमेऽप्यननुष्ठानं निरस्तं वेदितव्यम्। अग्नीषोमीयस्तु क्षत्रियाया अधिकारेऽपि विप्रस्यानधिकारेण न सहाधिकारे वनस्थेव द्वाराभावेन परमननुष्ठानम्। प्रयोजनसत्वे तु केनानुष्ठानं निवारणीयम्। यथा पत्नीमरणवत्पुनस्तथा भर्तृमरणेऽपि अधिकार इति वा तत्परतन्त्रा सतीत्यस्यार्थः अन्वारम्भणीयाजन्यः संस्कारः कर्त्रोरन्यतरस्य यावज्जीवमस्तीति **कपर्दिभाष्ये** अन्वारम्भणीयाविकृतौ न स्यात्प्रकृतिमध्यकालत्वात् कृता हि तदर्थेन इति सूत्रव्याख्याने प्रसंगेन विकृत्युपकारमुपपादयितुं विस्तरेण प्रतिपादितम्।

**परे पुनः** प्रथमप्रयोगस्य प्रथमं प्रत्युज्यमानयोरेव वा तस्याङ्गत्वमिच्छन्तस्तदपवर्गेऽपवर्गमाहुः। स्याद्वा कालस्याशेषभूतत्वादिति सूत्रोपपत्त्यर्थम्। अस्मिन्नपि पक्षे पत्न्यनुरोधेन कर्तव्यैवेत्यभिहितमनुसंधेयम्। **त्रिकाण्डमण्डने** पत्न्यै अग्न्यदानं नाग्निहोत्रानुष्ठानम् ज्येष्ठायां सत्यां द्वितीयायै अग्नीनामदानम् अविशेषेणाग्नीन्दत्वा विवाह्याधानं कस्यांचित्पत्न्यां सत्यामाधानमेव। एकाकिन एवाधानमिति पञ्चपक्षा अभिहिताः।

"नित्याग्निहोत्रं प्रेतायै न स्त्रियै दातुमर्हति। वाग्यादधीतपूर्वाग्निह्याग्निहोत्रं समाचरेत्॥

"ज्येष्ठायां विद्यमानायां द्वितीयायै स्वयोषिते। काम्यं नित्याग्निहोत्रं वा।—

"नैकाकी वाऽऽदधीताग्नीन्विवाहश्चेन्न सिध्यति। नित्येष्ट्याग्रयणे चाग्निहोत्रं कर्मास्य नेतरत्।" इति। एवं च यदुक्तम्

"आहिताग्निर्मृतस्त्रीक आदधानोऽन्यया सह। कृतारम्भादिधर्मोऽपि कृतसोममखोऽपि च॥

"अकृतारम्भसोमेज्यां भार्यामेवानुवर्तते। नास्ति माहेन्द्रसांनाय्यं सन्ति सारस्वतादयः"॥इति।

तद्वयोरतुल्यवदधिकारकर्तृत्वयोः

तथाहि तुल्यवत्सहाधिकारकर्तृकतया पत्न्यनधिकारेऽग्नीषोमीयसान्नाय्ययोरनुष्ठातुमशक्यत्वात् । सान्नाय्यग्रहणमग्नीषोमीयोपलक्षणम् । एष एव पक्षः सर्वमीमांसकादितांत्रिकसिद्धो राजमार्गः । यदप्युक्तम्

"केचित्पुंसः प्रधानत्वान्नाद्रियन्ते तु योषितम् । तेनेष्टौ स्यान्महेन्द्रेज्या न स्युः सारस्वतादयः"॥इति ।

तत्र पुंसः प्रधानत्वमपि कथंचिद्व्युत्पाद्यते । यत्कर्तव्यं तदनया सहेति प्रैषेण 'सहयुक्तेऽप्रधाने' इति (२।३।१९) सूत्रविहिततृतीयाबलात्तथावगतेः । तच्चाप्रधानत्वमुक्तन्यायेन सत्येवाधिकारवाक्यविदिताधिकारेऽप्युपपद्यत इति न त्यज्यते सह शाखया प्रस्तरं प्रहरतीत्यादौ प्रहरणे साहित्यस्य प्रतिपाद्यतायामेव संभवान्नावश्यमाद्रियते ।

एवं च स्यान्महेन्द्रेज्येति यथोपपद्यते तथोक्तमेव न स्युः सारस्वतादय इति नित्याग्निहोत्रं प्रेतायै इति पक्षे अस्मिन्पक्षेऽन्यस्या ऊढाया अनधिकारित्वेनापत्नीत्वेऽपि सत्र प्रमीतस्थानीयस्येव तस्या यजमानेन सम्पादनात्तदनुरोधेनान्वारम्भणीयाया अनुष्ठानायोगात् । प्रथमप्रयोगमात्रार्थत्वाच्च । मतान्तरे तु भवत्येवान्वारम्भणीया । **अन्ये तु** अपूर्वाधाने पत्न्यनुरोधेन सान्नाय्याननुष्ठानान्वारम्भणीयानुष्ठानयोः प्राप्तौ केचित्पुंस इत्यादिवचनं स्पष्टमपूर्वाधानमेव गमयतीत्याहुः । एवं सर्वत्रिकाण्डमण्डनवचनाविरोधे सति तद्ग्रन्थविरुद्धं ग्रन्थव्याख्यानात्यशक्तानां यत्किंचित्प्रलपितं सर्वप्रमाणापेतमनादरणीयम् ।

**तदयं सिद्धो निर्गलितार्थः**—पूर्वपत्न्या अग्न्यन्तरेण दाहे पूर्वाग्निगुप्त्यर्थं वाचनिकं वाऽग्निहोत्रमात्रं भवति सहाधिकारेण दर्शपूर्णमासाद्यसंभवात् यजेत्सौत्रामण्यामपत्नीकोऽप्यसोमपः । मातापितृभ्यामनृणार्थीयजेति वचनाच्छ्रुतेरित्यर्थवादः । तदुक्तं **विद्यारण्यभाष्ये** सौत्रामणीयागमपि कुर्यात् किमुताग्निहोत्रमिति । **अयं सर्वसिद्धान्तः** । हविर्यज्ञमात्रं नित्यं भवति अनृणार्थादिति हेतुनिर्देशात् यजेतिवचनाच्छ्रुतिरिति च । यथाह **विद्यारण्यभाष्ये** हविर्यज्ञेष्वस्याधिकारोऽस्तीत्यर्थः । तद्वत्सोमयागेष्वधिकारशङ्कायां तद्व्यावृत्त्यर्थमसोमप इत्युच्यत इति । इमं पक्षमभिप्रेत्योक्तं "न स्युः सारस्वतादय" **इति** । तत्रापि पक्षान्तरे भवन्तीत्यप्युक्तं पूर्वपत्न्यै अग्नीन्दत्वा दारकर्माशक्तस्य दारकर्मणि यद्यशक्त आत्मार्थमग्न्याधेयं कुर्यादग्निहोत्रदर्शपूर्णमासाग्रयणार्थं च शेषाणि कर्माणि न भवन्तीति वचनादपूर्वमाधानम् । अस्मिन्नपि पक्षे युज्यते तेनेष्टौ स्यादित्यादि पक्षान्तरं तत्र पूर्ववत् । पूर्वपत्न्यै अग्नीन्दत्वा दारकर्मणि कृते पत्न्यन्तरस्य प्रतिनिधिभूतस्य तदग्निसंबन्धाभावात्तेनेष्टावित्यादि यथोपपद्यते तथोक्तम् । यदा तु "आरोप्याग्नीनरण्योस्तानुद्वरयेत्सहाग्निभिरि"त्यादिना अथवा "पुनराधानमेवेष्टं नैव चेतरादि"त्यादिना अग्निसंसर्गविधिना वा द्वितीयाया अप्यग्निसंबन्धसिद्धिस्तदा द्वयोस्तुल्यवदधिकारे उपपादितरीत्या नास्ति माहेन्द्रसान्नाय्यमित्याद्युपपत्तिः । भर्तृप्रयुक्ताधिकारोपजीवने तु सान्नाय्यादि भवति पतिधर्मबलाधिका इति व्युत्पादितत्वात् । अन्वारम्भणीयाऽपि पूर्वसंस्कारनाशाद्भवत्येवेत्याद्यपि व्युत्पादितमेव । "भार्यायै पूर्वमारिण्यै" (अ. ५. श्लो. १६८.) इत्यादि**मनु**प्रोक्तपक्षे तु द्वयोस्तुल्यवदधिकारे स्वकृतप्रथमतराधानवत्सारस्वतादेर्भावः सान्नाय्याद्यभावः दर्शपूर्णमासपूर्वकः सोम इत्यादि ध्येयं विषमाधिकारेऽप्यन्वारम्भणीयाऽपि भवति सान्नाय्यादयश्चेति । एवमाधानानन्तरं पत्न्यन्तरपरिग्रहे पूर्व-

पत्नीनाशे बह्वीभिः सहाधाने द्वितीयादिपत्नीनाशे अन्यादृशीमप्येवमवस्थां कल्पयित्वाऽधिकारसाम्यवैषम्याभ्यां सर्वत्र व्यवस्थाबुद्ध्योह्या । विस्तरभयान्न पृथक् पृथक् प्रदर्श्यते । यत्र विच्छेदादिनिमित्ते पुनराधेयमग्न्याधेयं वेत्यादिविधानं तद्विच्छिन्नसंधानार्थं प्रायश्चित्ताधानमिति वोच्यते । पुनर्दारक्रियायां पुनः क्रियमाणस्य विच्छिन्नसंधानार्थतां वदन्तः पुनर्जन्मान्तरकृतविच्छिन्नसंधानार्थतामपि ब्रूयुः। प्रथमतरकृतस्याप्याधानस्य तदेव पत्न्या अपूर्वसंस्कारं जनयति पत्युश्च विच्छिन्नसंधानमिति वैरूप्यं चापद्यते । न हि तेन पत्नी नाधिक्रियते न वा तत्पत्न्या न संस्कारं जनयतीति वक्तुं सुकरम् । तथात्वे प्रथमतरस्यापि पत्नीसंबन्धाभावप्रसङ्गात् पत्न्यास्तदग्निभिर्दाहानुपपत्तेरित्यलं पल्लवितेन । **अधिकतत्त्वं मञ्जूषायामत्रान्यत्र च** द्रष्टव्यम् ।

**अथ वैश्वदेवः** । स्वस्वशाखोक्तप्रकारेण वैश्वदेवः साग्नेर्भवति । निरग्नेरपि पृष्टो दिवि विधानेन स्वशाखोक्त एव । तदुक्तं **कात्यायनपरिशिष्टे** । " अथातो धर्मजिज्ञासा केशान्तादूर्ध्वमपत्नीक उत्सन्नाग्निरनग्निकः प्रवासी ब्रह्मचारी विधुरो वाऽन्वग्निगिति ग्रामादग्निमाहृत्य पृष्टो दिवीत्यधिष्ठाप्य त्रिभिश्च सावित्रैः प्रज्वल्यताश्सवितुस्तत्सवितुर्विश्वानि देवसवितरिति पूर्ववदक्षतैर्हुत्वा पाकं पचन् तत्र स्वशाखोक्तं वैश्वदेवं कुर्यान्न वृथापाको भवति न वृथापाकमश्नीयात्तत्रैव पिण्डपितृयज्ञपक्षाद्याग्रयणानि कुर्यादिति" ।

**आश्वलायनोऽपि** ।

" लेखादयो नैव च तत्सतां सविश्वानि नोद्यान इमे च मन्त्राः ।

नारोपणं चाप्यपरोपणं वाऽप्युत्पत्तिरेवं विधुरानलस्य" ॥ इति ।

अथ यद्यालस्यादिना पृष्टो दिवि विधानं न करोति तदा **शाकल**वैश्वदेवः कार्यः

तदुक्तं **व्यासस्मृतौ** ।

"अनग्निकस्तु यो विप्र आदायान्नं घृतप्लुतम् । शाकलोक्तविधानेन जुहुयाल्लौकिकेऽनले ॥

"व्यस्ताभिर्व्याहृतीभिस्तु समस्ताभिस्ततः परम् । षड्भिर्देवकृतस्येत्यादिभिर्मन्त्रैर्यथाक्रमम्" ॥ इति ।

"प्राजापत्यं स्विष्टकृतं हुत्वैवं द्वादशाहुतीः" ।

देवकृतस्येति षण्मन्त्रास्तु । "ॐदेवकृतस्यैनसोऽवयजनमसि स्वाहा ।१। मनुष्यकृतस्यै० स्वाहा ।२। पितृकृतस्यै० स्वाहा ।३। आत्मकृतस्यै० स्वाहा ।४। अन्यकृत० स्वाहा ।५। एनसएनसोऽवयजनमसि स्वाहा । ६ ।" अग्नये न ममेति सर्वत्र त्यागः । ॐकारपूर्वः स्वाहान्तस्त्यागः विशिष्टविधानात् ।

"भुवि दर्भान्समास्तीर्य बलिकर्म समाचरेत् । विश्वेभ्यो देवेभ्य इति सर्वभूतेभ्य एव च ॥

"भूतानां पतये चेति नमस्कारेण शास्त्रवित् । दद्याद्बलित्रयं चाग्रे पितृभ्यश्च स्वधा नमः ॥

"पात्रनिर्णेजनं वारि वायव्यां दिशि निक्षिपेत् । उद्धृत्य षोडशग्रासमात्रमन्नं घृतोक्षितम् ॥

"इदमन्नं मनुष्येभ्यो हन्तेत्युक्त्वा समुत्सृजेत् । गोत्रनामस्वधाकारैः पितृभ्यश्चापि शक्तितः ॥

"षड्भ्योऽन्नमन्वहं दद्यात्पितृयज्ञविधानतः । ततोऽन्यदन्यमादाय निर्गत्य भवनाद्बहिः ॥

"काकेभ्यः श्वपचेभ्यश्च प्रक्षिपेद्ग्रासमेव च । उपविश्य गृहद्वारि तिष्ठेद्यावन्मुहूर्तकम् ॥

"अप्रमत्तोऽतिथिलिप्सुर्भावशुद्धः प्रतीक्षकः" ॥ इति

सच्छूद्रस्यापि वैश्वदेव उक्तो **मूलेन** । "भार्यारतिरिति" । ( अग्रे. १२१ श्लो. ) अस्य व्याख्या तत्र स्पष्टा । तत्र द्वितीयः प्रकारो **वायुपुराणोक्तः** तेन चामद्रव्येण कार्यः पक्वेन निषिद्धत्वात् ।

"पाकाभावे प्रयासे च तण्डुलानोषधीस्तथा । पयो दधि घृतं चापि कन्दमूलफलानि च" ॥

इति स्मृत्युक्तानुकल्पद्रव्येण पञ्चमहायज्ञान्कृत्वा तत् द्रव्यं द्विजकुले प्रवेष्टव्यमिति **शास्त्ररहस्यं श्राद्धे तु** " आमेनैव तु श्राद्धं स्यादि"त्यादि नियमादामेनैव श्राद्धं विवाहे तु विवाहमात्रसंस्कारं " शूद्रोऽपि लभते सदेति " विवाहेतरसंस्कारनिषेधपरात् ब्रह्मवचनाच्छिष्टसमाचाराच्च लौकिकेऽग्नौ ब्राह्मणद्वारा नाममन्त्रैर्घृतादिना होमो भवतीति गम्यते ।

**स्कान्दे प्रभासखण्डे** शूद्रस्य निषिद्धमुक्तम् । न दर्भानित्यादिसहमज्जतीति । न शिखामित्येतदसच्छूद्रविषयं सच्छूद्रे तु "परिचर्या शूद्रस्य नियता वृत्तिरनियताः केशवेशाः" इति ( अ. २ सू. २०।२१ ) **वसिष्ठ**स्मरणाद्विकल्पेन शिखा भवतीति गम्यते ।

**मनुः** ( अ. १ श्लो. १४० )।

"शूद्राणां मासिकं कार्यं वपनं न्यायवर्तिनाम् । आर्यवच्छौचकल्पश्च द्विजोच्छिष्टस्य भोजनम्॥"

आर्यो वैश्यस्तद्वच्छौचसूतकादौ कल्पः प्रकारः शेषं स्पष्टम् ।

"देवार्चा पुरतः कृत्वा ब्राह्मणानां नृपोत्तम । श्रोतव्यमेव शूद्रेण तथाऽन्यैश्च द्विजातिभिः" ॥

तथा

' स्त्रीभिः शूद्रैश्च श्रोतव्यं कृत्वा ब्राह्मणमग्रतः । पुराणं चेतिहासश्च श्रोतव्यं च दिने दिने" ॥

तथा

"क्षमा सत्यं दमः शौचं दानमिन्द्रियसंयमः । अहिंसा गुरुशुश्रूषा तीर्थानुगमनं दया ॥

"आर्जवं लोभशून्यत्वं देवब्राह्मणपूजनम् । अनभ्यसूया च तथा धर्मः सामान्य उच्यते" ॥

इति **विष्णूक्ताः** साधारणधर्माः शूद्रेणाप्यनुष्ठेयाः ।

"औपासने पचने वा षड्भिराद्यैः प्रतिमन्त्रं हस्तेन जुहुयात्" **इत्यापस्तम्बधर्मे** (२।३।१६) यत्र पच्यते स पचनाग्निः औपासनवत औपासने विधुरस्य पचने इति व्यवस्थितविकल्पः । अन्ये तुल्यविकल्पं मन्यन्ते **इत्युज्ज्वला । आण्डिल्लाकार**स्तुल्यविकल्पमपि इच्छति तथा चार्द्धाधानिना आहिताग्निना केवलौपासनाग्निमता चौपासनाग्नावेव विधुरसर्वाधानिविच्छिन्नाग्निभिश्च पचनाग्नावेवेति आद्यपक्षतात्पर्यं सर्वाधानिनोऽपि पचने एवेत्या**ण्डिल्लाया**मप्युक्तं तेन देवयज्ञवर्जं कार्यं तस्य स्मार्ताग्निसाध्यत्वात् । सर्वाधानिनो देवयज्ञो लुप्यते इति **रामाण्डारे**ऽप्युक्तम् । यत्तु वैश्वदेवस्य स्थाने धर्मशास्त्रोक्तविधिनाऽग्निमुपसमा-

धातव्य इति **सुदर्शनाचार्यै**रुक्तं तदुखाधारणविषयम्। एवमन्यत्रौपासनहोमादिष्विति तत्रैव ज्ञापकात्। तस्मात्साग्नीनामौपासन एव। तत्र पचनाग्नौ होमे क्रियमाणे यत्र क्व चेति धर्मशास्त्रोक्तविधिना स्थण्डिलेऽग्निं प्रतिष्ठाप्य वैश्वदेवं कुर्यादित्या**ण्डिलाकारादयः**। युक्तं चैतत्। यत्र क्वचन स्थण्डिले कुण्डे वाऽग्निमुपाधास्यन्तत्र प्राचीरुदीचीश्च तिस्रस्तिस्रो रेखा लिखित्वाऽद्भिरवोक्ष्याग्निं प्रतिष्ठाप्योपसमिन्ध्यादवोक्षणशेषमुदकमुत्सिच्यौत्तरेण पूर्वेण वाऽन्यतोऽयमुपदध्यादि**त्यापस्तम्बोक्ते**रिति **गुरुचरणाः**। आधुनिकशिष्टास्तु स्थण्डिलसंस्कारादितन्त्राभावस्य शास्त्रान्तरे दर्शनात्तत्तन्त्रं विनाऽपि तूष्णीं प्रतिष्ठिते पचनाग्नौ वैश्वदेवमाचरन्ति। चुल्यादिस्थितेऽग्नौ तु निषेधः स्मर्यते।

"न चुल्यां नायसे पात्रे न भूमौ न च खर्परे। वैश्वदेवं प्रकुर्वीत कुण्डे वा स्थण्डिलेऽपि वेति"॥

पाकस्तु लौकिकाग्नावेव **आण्डिलाकारादि**सर्वनिबन्धेषु तथादर्शनात्। आचाराच्च। यत्तु **सुदर्शनाचार्येण** देवयज्ञमात्रार्थमौपासनपक्वचरुणा देवेभ्यः स्वाहेति जुहोतीत्युक्तम्। तदपि बहुषु ग्रन्थेष्वदर्शनाच्छिष्टा नाचरन्ति। अत एवेदं च गृह्याग्नावेवेति न नियमः। विवाहात्पूर्वमपि विभक्तस्यान्नसंस्कारार्थतया "कुर्वीत स्नातकश्चेदं पृथक् पाकी भवेद्यदि" इति **शौनक**वचनेन प्राप्तत्वात्। विवाहोत्तरमपि।

"शालाग्नौ तु पचेदन्नं लौकिके वाऽपि नित्यशः। यस्मिन्नग्नौ पचेदन्नं तत्र होमो विधीयते"॥

**इत्यङ्गिर** उक्तेर्यत्रैवाग्नौ पाकस्तत्रैव वैश्वदेव इति वृत्तिकृदनुसारिणी व्याख्येति **गुरुचरणैरुक्तम्**। केचित्तु **कात्यायनसूत्रे** मणिके इत्युक्तेर्निरग्नेश्च मणिकाभावात्साग्नेरेव तत्र प्रागुक्तप्रयोगः। निरग्नेस्तु अग्न्यादि**गौतमे**नोक्तो होमः **शाकल** एव च "अनाहिताग्नेरेवैष युज्यते बलिभिः सह" इति **छंदोगपरिशिष्ट**वाक्येन विहितवैश्वदेवानुष्ठानमिति वदन्ति।

अन्ये तु।

"स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं तु यः। कर्तुमिच्छति दुर्मेधा मोघं तत्तस्य चेष्टितम्॥

"यन्नाम्नातं स्वशाखायां पारक्यमविरोधि यत्। विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत्॥

"बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्तितम्। तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत्"॥इति

**छन्दोगपरिशिष्टी**यसामान्यवाक्यात् "वैश्वदेवं तु कुर्वीत स्वशाखाविहितं तत" इति **व्यासोक्तेश्च** तस्यापि स्वस्वशाखीय एव मणिकपदं च तत्रोदकुम्भमात्रपरं न तु संस्कृतनतत्परम्। अत एव **स्मृत्यन्तरे** उदकुम्भमात्रमुक्तम्। "अद्भ्य उदकुम्भ" इति। **गौतमेन**। **परिशिष्टवाक्यं** तु **छन्दोग**विषयकं तत्संवादादन्यदपि तदर्थकं तत्परमेवेत्याहुः। आचारोऽप्यनग्निकानामत्र शिष्टतमानां पूर्वेषामग्निहोत्रविषयेऽदृष्टः यथा कण्वविभाण्डकभीष्मादीनां यथा च भगवतो दाशरथेरिति। अत्रान्त्योऽसंनिहितपत्नीकः आद्यास्तदभावदन्त इति दिक्।

**अत्राग्नीषोमीयप्रसङ्गात् किंचिदुच्यते**। पौर्णमास्येष्ट्यामसोमयाजिनो ब्राह्मणस्याग्नीषोमीयदेवताकः पुरोडाशयागो भवति न वेति विचार्यते। तत्र "नासोमयाजिनो ब्राह्मणस्याग्नीषोमीयः पुरोडाशो विद्यत" **इत्यापस्तम्बसूत्रा**दृग्वेदिनां यजुर्वेदिनां सर्वेषामेवासोमयाजिनां नाग्नीषोमीयः

पुरोडाश इति पूर्वः पक्षः। सिद्धान्तस्तु 'अग्निमग्नीषोमाविति पौर्णमास्यामिति' देवताविधानपर**स्याश्वलायनसूत्र**स्य विशेषाभावात्सोमयाजिनोऽसोमयाजिनश्च प्रधानदेवते एते इति **वृत्तिकृता व्याख्यानात् बौधायनसूत्रे** चैतामेव प्रतिपदं कृत्वाऽग्नीषोमाभ्यामिति पौर्णमास्यामिति नित्यवदाम्नानादसोमयाजिनः सोमयाजिन इति विशेषतोऽवचनात्, **कात्यायनसूत्रे** च देवस्यत्वेति गृह्णात्याग्नेयं चतुरो मुष्टीन्निर्वपमग्नीषोमीयमिति नित्यवदाम्नानादसोमयाजिनः सोमयाजिन इति विशेषतोऽवचनान्**मन्त्रपाठे** च नित्यवदग्नीषोमीययाज्यानुवाक्याम्नानात्पूर्वोक्तनिषेधाच्च विकल्पः।

तदुक्तं **बौधायनसूत्रभाष्ये** "असोमयाजिनोऽग्नीषोमीयोऽनित्यः" इति। स च व्यवस्थितः। आग्नेययाज्याद्वयवदाज्यभागानुमन्त्रणद्वयवच्च व्यवस्थितविकल्पे संभवत्यव्यवस्थितस्य तस्यान्याय्यत्वात् तथा च येषां सूत्रे असोमयाजिन अग्नीषोमीयाम्नानं तैः सोऽनुष्ठेयो नेतरैरितितत्त्वम्। अत **एवाश्वलायनकात्यायनबौधायना** असोमयाजिनोऽपि अग्नीषोमीयानुष्ठानं कुर्वन्ति **नापस्तम्बाः**। अत एव चाविगाने नासोमयाजिनां गार्ह्ये पौर्णमासस्थालीपाके अग्नीषोमीयस्थालीपाकानुष्ठानम्। अन्यथा सोमयाजिनामेव तत्स्यादिति। न चैतावन्तं हविषामिति सूत्रे हविषामियत्ताया अध्वर्य्वधीनत्वोक्तेः कथ**माश्वलायन**सूत्रोक्ता हविषामियत्ता स्यादिति वाच्यम्। यतः तस्मिन्नेव सूत्रे **वृत्तिकृता** "स्वसूत्रे विशेषविधिवैयर्थ्यपरिहाराय स्वसूत्रे विशेषविधौ स्वसूत्रोक्तो विशेष एवानुष्ठेयः" इत्युक्तं स्वसूत्रे सामान्येन विधाने अविधाने वा अध्वर्युसूत्रोक्तमपेक्षावशाद्ग्राह्यमिति तत्र स्ववृत्तिकृदुक्तिवशाद्गम्यते। एवं च शक्तौ सत्यां स्वशास्त्रे विद्यमाने यः परशास्त्रेण वर्तते "भ्रूणहत्यासमं तस्य स्वशास्त्रमवमन्यत" इति **बौधायनवचनात्** येषां सूत्रे असोमयाजिनोऽग्नीषोमीयो विहितस्तेषामग्नीषोमीयानुष्ठाने एतद्वचनोक्तः प्रत्यवायोऽपरिहार्यः। येषां सूत्रेऽसोमयाजिनोऽग्नीषोमीयो निषिद्धस्तेषां तदनुष्ठाने एतद्वचनोक्तः प्रत्यवायोऽपरिहार्य इति दिक्।

न चाग्निमग्नीषोमाविति पौर्णमास्याम् **इत्याश्वलायनसूत्रं बौधायन**सूत्रादिविहितानुवादकम्, तथा च **बौधायनादि**सूत्रोक्ताध्वर्यवादिग्रहणे **आश्वलायना**ग्नीषोमीयोऽनुष्ठेय इति वाच्यम्। व्यर्थानुवादानुपपत्तेः। **बौधायनादि**सूत्रोक्ताध्वर्यवानुष्ठाने होतुरावाहनादौ देवताज्ञानं तु **आपस्तम्ब**सूत्रोक्ताध्वर्यवाद्यनुष्ठानेऽध्वर्युवशादिवोपपत्तेः। **आश्वलायन**सूत्रविहितस्य **बौधायन**सूत्रादावनुवाद इत्यस्याऽपि वक्तुं शक्यत्वात्। तथा **चाश्वलायन**सूत्रोक्तं हौत्रं यदा **बौधायनै**र्गृह्यते तदा तैरग्नीषोमीयोऽनुष्ठेयो नान्यसूत्रोक्तहौत्रग्रहणे इति वैपरीत्यस्यापि वक्तुं शक्यत्वात्। तस्माद्बोध्यभेदात्सर्वसूत्रे नानाशाखोक्ताग्निहोत्ररीत्या विधानमेव स्वीकर्तव्यम्। एवं च विशेषविधिवैयर्थ्यपरिहाराय तत्तत्सूत्राध्येतृभिस्तत्तत्सूत्रोक्तमनुष्ठेयमिति सिद्धम् **इति केचिदाहुः**।

**अन्ये तु** दर्शपूर्णमासयाजिनो हविरियत्तानुपूर्व्यादौ विरोधे किं यजमानवेदेनोत हौत्रेणोताध्वर्यवेण निर्णय इति संशयः। तत्र

"स्वशास्त्रे विद्यमाने यः परशास्त्रेण वर्तते। भ्रूणहत्यासमं तस्य स्वशास्त्रमवमन्यते" इति **बौधायनवचना**त्स्ववेदेनैव निर्णयः। तेन **आश्वलायनानां** सूत्रे अग्निमग्नीषोमाविति पौर्णमास्यामित्यग्निवदग्नीषोमयोरपि नित्यवदाम्नानात्तेषामग्नीषोमीयानुष्ठानमावश्यकम्। **आपस्तम्बानां** तु नासोमयाजिनो ब्राह्मणस्याग्नीषोमीयः पुरोडाशो विद्यत इति पर्युदासादेवं व्यवस्थेति **प्रथमः पक्षः**।

**सत्याषाढसूत्रे** "नासोमयाजिनो ब्राह्मणस्याग्नीषोमीयः पुरोडाशो विद्यत इत्येकेषा

मिति" विकल्पस्य स्पष्टत्वात्तदनुरोधे**नापस्तम्बवचन**स्याऽपि निषेधपरत्वेन व्याख्येयत्वादा**पस्तम्बाना**मपि विहितप्रतिषिद्धत्वाद्ग्रहणाग्रहणवत् विकल्प एवतेनाकृते क्रत्वहानिः कृते त्वभ्युदयो हौत्रानुग्रहश्चेति गुणाधिक्यात्तैरपि कर्तव्य एवाग्नीषोमीय इति **द्वितीयः पक्षः ।**

दर्शपूर्णमासयोर्वेदद्वयसाध्यत्वेन सूत्रद्वयस्यापि स्वशास्त्रत्वाद्यत्र याजुर्वैदिकमेवाग्निहोत्रादिकं कृत्स्नं हौत्रे संगृहीतम् आर्ग्वेदिकमेव याज्यानुवाक्यादिकं कृत्स्नमाध्वर्यवे संगृहीतं तत्राध्ययनतः प्राथम्यात् स्वशास्त्रत्वनिर्णयः तेन ऋग्वेदिना यजुर्वेदिना वा उत्पत्तिवेदावगतमपि अग्निहोत्रयाज्यापुरोनुवाक्यायुगलादिकमुपेक्ष्य स्वस्वसूत्रसंगृहीतमेव तदुपादेयं स्वशास्त्रे विद्यमाने इत्युक्तदोषपरिहाराय यत्र । त्वेकं प्रधानं वेदद्वयसापेक्षं तत्रानुष्ठानं प्रवृत्तिप्राथम्यादेव भवति । अध्ययनप्राथम्यापेक्षयाऽनुष्ठानप्राथम्यस्यान्तरङ्गत्वात् । तत्र प्रथमप्रवृत्तस्यैव स्वशास्त्रत्वात्तदेवानुष्ठेयमुक्तदोषपरिहाराय। अत एवा**श्वलायनो** दर्शपूर्णमासयोर्होता मन्त्रित इत्येव सिद्धे आसन्नेषु **हविःषु** होत[illegible]मन्त्रित इति वदन् प्राक् प्रवृत्तमेव हविरानुपूर्व्यादिकमुपजीव्य स्वसूत्रं प्रवृत्तमिति दर्शयति । तथाऽग्निमग्नीषोमाविति पौर्णमास्यामित्यत्रेतिशब्देनाध्वर्यूक्तप्रकार एवाभिनीय प्रदर्श्यते । कण्ठत एव चैतद्वक्ष्यति । अध्वर्युप्रत्ययं तु व्याख्यानं कामकालदेशदक्षिणानां दीक्षोपसत्प्रसवसंस्थोत्थानानामेतावत्त्वं हविषामुच्चैरुपांशुतायां हविषां चानुपूर्व्यमिति । तस्माद्यथा वैश्यस्य पाश्वदश्यानुष्ठायिनो यागे हीनतादोषः एवमसोमयाजिनो ब्राह्मणस्याग्नीषोमीयं पुरोडाशमनुतिष्ठतोऽतिरिक्तत्वदोषोऽस्त्येव। एवं च "आग्नेयो वै ब्राह्मणः। स सोमेनेष्ट्वाग्नीषोमीयो भवति । यदेवादः पौर्णमासꣳहविस्तत्तर्ह्यनुनिर्वपेद्" इति प्रत्यक्षश्रुतिमूलकः पाश्वमिकन्यायोऽनुगृहीतो भवति । एतेन **सत्याषाढसूत्रे** एकेषामित्यग्नीषोमीयपुरोडाशविकल्पस्य स्फुटत्वात्तदनुसारि**णापस्तम्ब**व्याख्यानेनापि भवितव्यमिति सर्वशाखाप्रत्ययमेकं कर्मेति न्यायात्सार्वत्रिकोऽयमग्नीषोमीयपुरोडाशविकल्प इति निरस्तम् । नानुयाजेष्वितिवन्नासोमयाजिन इत्यत्रापि पर्युदासाश्रयणेनैकवाक्यत्वे संभवति निषेधाश्रयणेन वाक्यभेदायोगाद्विहितप्रतिषिद्धत्वेनाष्टदोषदूषितविकल्पायत्तेश्च । तस्मादसोमयाजिब्राह्मणनिमित्तकम् अग्नीषोमीयहविरुत्कर्षो वैश्यनिमित्तकसाप्तदश्यवत् निरवकाशत्वादुत्पत्तिशिष्टस्यापीतरस्य सावकाशस्य पाश्वदश्यस्येव प्रागग्निष्टोमादग्नीषोमीयानुष्ठानस्य वारकः। स च सर्वशाखाप्रत्ययन्यायेना**नापस्तम्बस्वप्यपि** प्रवर्तत इति **तृतीयः पक्षः ।**

तदेवं सौत्रोपक्रमपरामर्शोपसंहारैकरूप्येण प्रत्यक्षश्रुतिमूलकेन पाश्वमिकन्यायेनाध्वर्यो देवता आचक्ष्व तासां चानुपूर्व्यमिति शिष्टाचारप्राप्ताध्वर्युप्रत्ययप्रश्नेन च प्रथमप्रवृत्तस्यासंजातविरोधिन आध्वर्यवस्य पश्चात्प्रवृत्तसंजातविरोधिहौत्रनियामकत्वे सिद्धेऽपि केचिद्दर्शेऽप्युपांशुयाजमनुतिष्ठन्ति तदप्यसौत्रमन्याय्यं चेत्यनुष्ठातुर्दोषावहमिति ज्ञेयम् । तथाहि । " जामिवा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपाꣳशुयाजमन्तरा यजत्यजामित्वायेति " **श्रुति**मूलकम् । अन्तरेण हविषी विष्णुमुपाश्वैरन्तरेयिण **इत्याश्वलायनसूत्रं** न दर्शविषयम् । तत्र द्वितीयस्य पुरोडाशस्य सोमयाजिनामसत्वात्सोमपूर्वयाजिनामत्यन्तासत्वाच्चानित्यस्यावधित्वायोगात् । आचार्यग्रहणेनास्यैव पक्षस्य स्वसंमतत्वसूचनाच्च तथा। च लिङ्गदर्शनं चतुर्दशामावास्यायामाह। तपो ह्यन्ते पश्चदशपौर्णमास्यामित्युपपन्नं भवति । न चाग्नीषोमीयं पौर्णमास्यां वैष्णवममावास्यायामेकेनैकैकं च नेत्येतत्सूत्रं दर्शेऽप्युपांशुयाजं प्रापयति उभयत्र तन्निवृत्तिं चेति चेन्न । हौत्रसूत्रस्य स्वातन्त्र्येण हविरियत्तादिविधानासामर्थ्यस्योपपादितत्वात् । येषामध्वर्युसूत्रे दर्शेऽप्युपांशुयाजो भविष्यति तत्परं तदस्तु न नः किंचिच्छिन्नम् । वस्तुतस्त्विह श्रौतमैतरेयि पक्षं स्तोतुम्

अनिर्दिष्टकर्तृकौ द्वौ पक्षावुपन्यस्तौ । अग्नीषोमीयं पौर्णमास्यां वैष्णवममावास्यायामेकेनैके कंच नेति । यत्रान्वञ्चौ पुरोडाशौ नस्तस्तत्रापि दर्शे उपांशुयाजमिच्छन्त्येके जडाः' यत्र तौ वर्त्तते तत्रापि पौर्णमासे उपांशुयाजं नेच्छन्त्यपरे जडा इति ऐतरेयिपक्ष एव श्रेयानित्यर्थः। तस्मादिन्द्रं महेन्द्रं वासन्नयत इति देवताविकल्प इवाग्नीषोमीयं पौर्णमास्यां वैष्णवममावास्यायामेकेनैके कंच नेत्युपांशुयाजविकल्पोऽपि न यावज्जीवमेकतरपक्षपरिग्रहार्थः । अपि तु संवत्सरमिन्द्रं यजेतानन्तरं महेन्द्रं यजेतेतिवत् । अन्तरालकालवति पौर्णमासे एवोपांशु यष्टव्यं न तद्रहिते दर्शे इति एकस्यैव कालभेदेन पक्षद्वयपरिग्रहार्थं सूत्रद्वयं शास्त्रान्तरसिद्धार्थानुवादकम् । तस्य तु विधायकत्वे यावज्जीवमिन्द्रो वा महेन्द्रो वा प्राप्नोति तच्च सर्वप्रमाणविरुद्धमिति दिक् इत्याहुः ।

अन्यदपि प्रसङ्गात् उच्यते । यद्यपि " राजा सार्वभौमोऽश्वमेधेन यजेताप्यसार्वभौम " **इत्यापस्तम्बसूत्रात्** राजयज्ञोऽश्वमेध इति **कात्यायना**दिसूत्राच्चाश्वमेधो राजकर्तृक इति लभ्यते तथापि " सर्वान् कामानाप्स्यन्सर्वाविजितीर्विजिगीषमाणः सर्वाव्युष्टीर्व्यशिष्यन्नश्वमेधेन यजेत" **इत्याश्वलायनसूत्रसिद्धान्तभाष्ये देवत्रातेने**त्थं व्याख्यातं सर्वान्कामानित्यनेनैव सिद्धे विजितिव्युष्ट्योः पृथक्ग्रहणात्सर्वे कामाः ब्राह्मणस्य विजयो राजन्यस्य व्युष्टयो वैश्यस्येति त्रयाणामपि ब्राह्मणादिवर्णानामश्वमेधो भवतीति । अत एव **तैत्तिरीयश्रुतौ** सामान्यत एवाश्वमेधो विहितः । **आपस्तम्बसूत्रे** असार्वभौमोऽपीत्यनेनापि इत्थमेव सूचितम् । राजपदम् तु रञ्जनात् राजेति व्युत्पत्त्या वर्णत्रितयपरम् । अत एव " राजा प्रकृतिरञ्जनादि"इत्युक्तम् सर्ववर्णराजत्वं च ब्राह्मणो प्रसिद्धं राजयज्ञोऽश्वमेध इत्यस्यापि राजकर्तृको यज्ञ इति नार्थः किं तु यज्ञानां राजा श्रेष्ठ इत्यर्थः । तथा च ब्राह्मणादेरस्यापि तत्र अधिकारः सिद्धः । अत एव स्वरसतया वर्णत्रयसाधारणैच्छिकविकल्पपरतया प्रतीयमानम् ।

"एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् । यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत् " । इति श्राद्धकल्पस्थं **मात्स्यं** संगच्छते । **बौधायनसूत्रे** तु वृषोत्सर्गखण्डे 'गौरीं वोद्वाहयेत्कन्यामिति' तृतीयचरणपाठो दृश्यते । स्थलान्तरस्थमात्स्येऽप्येवमेव दृश्यते । युक्ततरश्चायम् । **अत एव हरिवंशे** ।

"अश्वमेधः क्रतुश्रेष्ठः क्षत्रियाणां परिश्रुतः । तेन भावेन तं यज्ञं वासवो धर्षयिष्यति ॥
"उपात्तयज्ञो देवेषु ब्राह्मणेषु निवत्स्यते । तेजसाभ्यां हतं तेजस्तेजस्येवावतिष्ठते ॥
"औद्भिज्जो भविता कश्चित्सेनानीः काश्यपो द्विजः । अश्वमेधं कलियुगे पुनः प्रत्याहरिष्यति ॥
"तद्युगे तत्कुलीनश्च राजसूयमपि क्रतुम् । आहरिष्यति राजेन्द्र श्वेतग्रहमिवान्तकम् "॥ इत्युक्तम् ।

**अत एव च रामायणे उत्तरकाण्ड**शेषे वृत्रासुरवधप्रयुक्तब्रह्महत्यायाः निरासार्थमिन्द्रं पुरस्कृत्य सर्वसुरगणैः सोपाध्यायैः सहर्षिभिरश्वमेधः कृत इत्युक्तं लक्ष्मणेन श्रीरामं प्रति । **तैत्तिरीयश्रुति**रपि "तरति ब्रह्महत्यां योऽश्वमेधेन यजत" इति । तत्रैवं श्रीरामवाक्यं भरतलक्ष्मणौ प्रति । कर्दमस्य प्रजापतेः पुत्रः इलाख्यः स्वामिकार्तिकोत्पत्तिदेशे गतः । यत्र वने पार्वत्याः प्रीत्यर्थम् आत्मानं स्त्रीरूपं कृत्वा पार्वतीरमणकारिणि श्रीवृषभध्वजे सति सर्वसत्त्वानां वृक्षादीनां च स्त्रीरूपता

संजाता तत्र वने इले प्रविष्टे सति सोऽपि सानुगः स्त्रीरूपो जातः। ततः उमापतेरिदं कर्मेति ज्ञात्वा परमदुःखी इलः। महादेवं शरणं गतः पुंस्त्वार्थम्। ततः शिवेन प्रत्याख्यातः सन्परमशोकार्तः उमां देवीं शरणं गतः। तस्याभिप्रायं विज्ञाय देव्या मासं स्त्री भव मासं पुरुषो भवेत्येवम् अर्धवरो दत्तः। ततः स इलस्तस्मिन्नेव वने मासं स्त्रीभूतो मासं पुरुषभूतः सहानुगैरुवास। ततो बुधात्तस्यामिलायां पुरूरवाख्ये पुत्रे जाते संवत्सरान्ते। (**वा. रा.** उ. कां. अ. ९० श्लो. ४–२५)

"पुरुषत्वं गते शूरे बुधः परमबुद्धिमान्।
"संवर्तं परमोदारमाजुहाव महायशाः। च्यवनं भृगुपुत्रं च मुनिं चारिष्टिनोमिनम्॥
"प्रमोदनं मोदकरं ततो दुर्वाससं मुनिम्। एतान्सर्वान्समानीय वाक्यज्ञस्तत्त्वदर्शनः॥
"उवाच सर्वान्सुहृदो धैर्येण सुसमाहितान्।
"अयं राजा महाबाहुः कर्दमस्य इलः सुतः। जानीतैनं यथाभूतं श्रेयो ह्यत्र विधीयताम्॥"
"तेषां संवदतामेव द्विजैः सह महात्मभिः। कर्दमस्तु महातेजास्तदाश्रममुपागमत्॥
"पुलस्त्यश्च क्रतुश्चैव वषट्कारस्तथैव च। ॐकारश्च महातेजास्तमाश्रममुपागमत्॥
"ते सर्वे हृष्टमनसः परस्परसमागमे। हितैषिणो बाह्लिपतेः पृथग्वाक्यान्यथाब्रुवन्॥
"कर्दमस्त्वब्रवीद्वाक्यं सुतार्थं परमं हितम्। द्विजाः शृणुत मद्वाक्यं यच्छ्रेयः पार्थिवस्य हि॥
"नान्यं पश्यामि भैषज्यमन्तरा वृषभध्वजम्। नाश्वमेधात्परो यज्ञः प्रियश्चैव महात्मनः॥
"तस्माद्यजामहे सर्वे पार्थिवार्थे दुरासदम्। कर्दमेनैवमुक्तास्तु सर्व एव द्विजर्षभाः॥
"रोचयन्तिस्म तं यज्ञं रुद्रस्याराधनं प्रति। संवर्तस्य तु राजर्षिः शिष्यः परपुरञ्जयः॥
"मरुत्त इति विख्यातस्तं यज्ञं समुपाहरत्। ततो यज्ञो महानासीद्बुधाश्रमसमीपतः॥
"रुद्रश्च परमं तोषमाजगाम महायशाः। अथ यज्ञे समाप्ते तु प्रीतः परमया मुदा॥
"उमापतिर्द्विजान्सर्वानुवाच इलसन्निधौ।
"प्रीतोऽस्मि हयमेधेन भक्त्या च द्विजसत्तमाः। अस्य बाह्लिपतेश्चैव किं करोमि प्रियं शुभम्॥"
"तथा वदति देवेशे द्विजास्ते सुसमाहिताः। प्रसादयन्ति देवेशं यथा स्यात्पुरुषस्त्विला॥
"ततः प्रीतो महादेवः पुरुषत्वं ददौ पुनः। इलायै सुमहातेजा दत्वा चान्तरधीयत॥
"निवृत्ते हयमेधे च गते चादर्शनं हरे। यथागतं द्विजाः सर्वे ते गच्छन्दीर्घदर्शिनः॥
"राजा तु बाह्लिमुत्सृज्य मध्यदेशे ह्यनुत्तमम्। निवेशयामास पुरं प्रतिष्ठानं यशस्करम्॥
"शशबिन्दुश्च राजर्षिर्बाह्लिः परपुरञ्जयः। प्रतिष्ठाने इलो राजा प्रजापतिसुतो बली॥
"स काले प्राप्तवान् लोकमिलो ब्राह्ममनुत्तमम्। ऐलः पुरूरवा राजा प्रतिष्ठानमवाप्तवान्॥
"ईदृशो ह्यश्वमेधस्य प्रभावः पुरुषर्षभ। स्त्रीपूर्वः पौरुषं लेभे यच्चान्यदपि दुर्लभम्"॥

**सुहृदः स्वमित्रभूतान्यथाभूतमीश्वराज्ञयाऽनुभवसिद्धं स्त्रीपुंसरूपप्रकारद्वयं प्राप्तमेवं जानीत**

वृषभध्वज एव स्वकृतशापनिवर्तनसमर्थस्तत्प्रीतिश्चाश्वमेधेन सर्वदेवताप्रीतिकरेणैवेत्याह । **नान्यमिति ।** नान्यं भैषज्यं पश्यामि । नान्यमित्येतद्विवृणोति । अन्तरा वृषभध्वजं नाश्वमेधात्परो यज्ञः ब्रह्महत्यान्तसर्वपापनिवर्तकत्वात् ।

**तथा च तैत्तिरीयश्रुतिः**

"सर्वपाप्मानं तरतीति । तरति ब्रह्महत्यां योऽश्वमेधेन यजत" इति । नन्वश्वमेधेन कथं वृषभध्वजसंतोषोऽतआह । प्रिय एव महात्मनः । यद्यपि प्रजापतिदेवत्यत्वात्प्रजापतिप्रीतिकरः स तथापि हिरण्यगर्भावस्थाविशेषस्यैव रुद्रत्वान्न दोषः । तं यज्ञं समुपाहरत् । इलयज्ञापेक्षितसंभारमुपहृतवानित्यर्थः। देवेशं प्रसादयन्ति स्म पुरुषत्वं विनाऽन्यं वरं वृणीष्वेति पूर्ववद्यथा न वदेत्तथा विशिष्य प्रसन्नमकुर्वन्नित्यर्थः । तदेवोक्तम् । यथा स्यादिति । पौरुषं पुरुषत्वम् । तस्मात् योग्यब्राह्मणैस्तपोबलयुक्तैः सदाचारसंपन्नैर्वेदशास्त्रसंपन्नैरन्यार्थमपि उभयोः परमभक्त्या अनुष्ठिते सति ब्रह्महत्याद्यन्तसर्वपापनिवृत्तावीश्वरानुग्रहेण दुर्लभस्यापि प्राप्तिः स्त्रियः पुरुषत्वप्राप्तिश्चेति सिद्धम् । "यजेत वाऽश्वमेधेन क्षत्रियस्तु महीपतिरिति" **पाराशरीये** चार्थतुना ब्राह्मणादेरपि समुच्चय इति न तद्विरोधः क्षत्रियश्चेत्यसार्वभौमो यजेतेति वचनं तु नावर्णत्रयसाधारणः पुरुषः सार्वभौमो यजेतेत्येवं परतया नाप्राप्तेतिवत् नञ्द्वयसमासेनावश्यसार्वभौमो यजेतेत्येवंपरतया वा विधिपरमेव न निषेधपरामिति तद्विरोधोऽपि न । वक्ष्यमाणमूलं तु प्राचामनुरोधेनेति बोध्यम् ।

**अधिकारविचारः ।**

"पितरि ज्येष्ठे सोदरे चाहिताग्नौ कृतदारस्य दशमेऽहन्यधिकारः जायामवाप्य दशमेऽहन्याद-धीत" इति **श्रुतेः** । जातपुत्रः कृष्णकेशोऽग्नीनादधीतेत्यत्र तु न जातपुत्रत्वकृष्णकेशत्वविवक्षा वसन्तादिवाक्योत्पन्नाधानानुवादेन जातपुत्रत्वकृष्णकेशत्वोभयविधाने वाक्यभेदादर्धमन्तर्वेदिमिनोत्यर्धं बहिर्वेदीत्यत्र देशविशेष इवावस्थाविशेषस्य लक्षणीयत्वात् । तामाशिषमाशासे तन्तवे ज्योतिष्मतीमिति ब्रूयात् यस्य पुत्रो जातः स्यात् । इन्द्राग्नी वा एतस्य प्रजामुपगूहतो योऽलं प्रजायै सन्प्रजान्न विन्देत ऐन्द्राग्नमेकादशकपालं निर्वपेदित्यादिनाऽजातपुत्रस्याप्यधिकारदर्शनाच्च ।

तेनात्र दीक्षाज्यावेक्षणविष्णुक्रमोत्सर्पणादिसमर्थ इत्यर्थः संपद्यते इति केचित् । अन्ये तु यद्यपि जातपुत्रः कृष्णकेशोऽग्नीनादधीतेत्यादिवचनेन ब्राह्मणस्याधानकालः सामान्यतो विहितोऽस्ति तथापि सामान्यतो विहितस्य चतुर्धाकरणस्याग्नेये उपसंहारवत् कालविशेषे एव तस्योपसंहारो न्याय्यः । किंच वसन्ते ब्राह्मणोऽग्नीनादधीतेति विहितश्रौतकालबाधस्यात्यन्तान्याय्यत्वम् । उपनयनविहिताष्टमवर्षकालातिक्रमे प्रायश्चितानुष्ठानवत् । अत्रापि तदतिक्रमे प्रायाश्चित्तापत्तिः । "नर्तून्पृच्छेन्न नक्षत्रम्"इत्यादिवचनस्य नष्टाग्निकस्यार्तादेः कालान्तरासहिष्णुत्वेन प्रणीताग्निनैव संस्कारस्य विहितत्वात्तत्परत्वामिति सर्वैर्व्याख्यातम् । द्विजस्य जलं विनाऽपि विहितप्रस्नावादिकर्मवत् **आश्वलायनदेवत्रातदेवयाज्ञिककर्कप्रभृतिभिः** । सोमपूर्वकाधाने एव नर्तून्पृच्छेदिति कालनियमाभावो न तु केवलाधाने इति व्याख्यातं चेत्याहुः ।

परे तु "जायामवाप्य" इति "जातपुत्र" इति "वसन्ते ब्राह्मण" इति च त्रितयं यदि प्रत्येकं विभिन्नशाखीयं तदा शाखाभेदेन व्यवस्था स्फुटैव। जातपुत्रत्वसमानाधिकरणकृष्णकेशत्वोद्देशेन आधानविधानेन प्रागुक्तदोषो न। उक्तश्रुतिस्तु तैत्तिरीयशाखीयेति तद्विरोधोऽपि न। तच्छाखायां हि 'वसन्ते ब्राह्मणोऽग्निमादधीत' 'कृत्तिकास्वग्निमादधीते'त्यादिना आधानं विहितम् अर्थी समर्थो विद्वान्शास्त्रेणपर्युदस्त इति सामान्यपरिभाषाप्राप्तं साधनचतुष्टयं तु सर्वत्रापेक्षितं यदि तु उक्तत्रितयमेकशाखीयं तदा इत्थं विरोधपरिहारः। सामान्यपरिभाषाप्राप्तसाधनचतुष्टययुक्तेन जायापदस्वरसात् "तज्जाया जाया भवति यदस्यां जायते गर्भः" इति **श्रुत्यनु**रोधेन जायां गर्भधारणयोग्याम् ऋतुमतीम् अवाप्य वसन्तर्तुप्रारम्भदिनादारभ्य दशमदिवसे कृत्तिकादिनक्षत्रयुक्ते जातपुत्रकृष्णकेशपदद्वयोपलक्षितशैथिल्यरहितत्वसमानाधिकरण (पुत्र) जननयोग्यचरमाबिन्दुपर्यन्त (निषेक) सामर्थ्ययुक्तेन ब्राह्मणेन आधानं कर्तव्यमिति। अत एव उक्तश्रुतिविरोधो न। एवं च न कोऽपि दोषः। यदैव यज्ञमुपनमेत्तदा आदधीतेति श्रुतिमूलकाधानप्रकरणपठितेन सोमेन यक्ष्यमाणो नर्तून्सूर्क्षेन्न नक्षत्रमि**त्यापस्तम्बसूत्रेण** सोमपूर्वकाधाने ऋतुनक्षत्रापेक्षाभावः प्रतिपादितः। तथा च होमेष्टिपूर्वकाधाने ऋतुनक्षत्रापेक्षा आवश्यकेति बोध्यमित्याहुः। पित्रादरनाहिताग्नितायां तु **त्रिकाण्डमण्डनः**।

"दर्शेष्टिं पौर्णमासेऽग्निं सोमेज्यामग्निसङ्ग्रहम्। अग्निहोत्रं विवाहं च प्रयोगे प्रथमे स्थितम्॥
"न कुर्याज्जनके श्रेष्ठे सोदरे वाऽप्यकुर्वति। क्षेत्रजादावनीजाने विद्यमानेऽपि सोदरे॥
"नाधिकारविघातोऽस्ति भिन्नोदरेऽपि चौरसे। पङ्ग्वन्धमूकबधिरपतितोन्माददूषणे॥
"सन्यस्ते छिन्नहस्तादौ यद्वा षण्ढादिदूषणे। जनके सोदरे ज्येष्ठे कुर्यादेवेतरक्रियाम्॥
"तयोस्त्वनधिकारित्वान्नैतस्याधिक्रियाक्षतिः। ज्येष्ठे श्रद्धाविहीने सत्याधेयं तदनुज्ञया॥
"पितुः सत्यप्यनुज्ञाने नादधीत कदाचन। पितर्यनाहिताग्नावप्यादधीताऽथवा सुतः॥

"अग्निहोत्रं च जुहुयादि"त्यादि **लौगाक्षिकारिका**।

"पिता यस्याग्रजो भ्राता न कुर्याद्वा पितामहः। तपोऽग्निहोत्रं यज्ञं वा स वा कुर्यात्कठाशयात्॥
"योगशास्त्राभियुक्ते वा कुब्जे वा वामने जडे। गदजे वाऽग्रजे दुष्येत्परिविन्दन्न चानुजः॥
"देशान्तरस्थो न ज्येष्ठो ज्ञायेताहितवानिति। कनीयानधिकारी चेदादधीताविचारयन्॥
"प्रोषितस्तु यदा ज्येष्ठो न ज्ञायेताहितानलः। षड्वत्सरान्प्रतीक्षेत ह्यादधीतानुजस्तदा"॥ **इति**।

ज्येष्ठभ्रात्रेव पित्राऽप्यनुज्ञातस्य पुत्रस्याग्न्याधानप्राप्तौ **चतुर्विंशतिमते**। "अनुज्ञातोऽपि सन्पित्रा नादध्याद्" इति। **यत्तु सुमन्तुनोक्तम्**

"पितुर्यस्य तु नाधानं कथं पुत्रस्तु कारयेत्। अग्निहोत्राधिकारोऽस्ति शङ्खस्य वचनं यथा"॥इत्यादि

तत्पितुर्वैधुर्यादिना प्रतिबन्धे द्रष्टव्यम्। तस्मात्पितरि देशान्तरस्थे वा जडत्वादिदोषे वा पुत्रस्य तदाज्ञयाऽधिकारः। वैधुर्येऽप्यात्यन्तिकानिच्छायां भवति। संन्यस्ते तु भवत्येवाधिकार इति दिक्।

किञ्च "स्वाध्यायविधिसंसिद्धकृत्स्नवेदार्थवेदनः। यदाऽध्ययनसंसिद्धानुष्ठेयमखमात्रवित्॥

"यद्वाऽध्ययनसंसिद्धविज्ञानरहितोऽपि सन्। ज्ञानी वाऽधिक्रियाशून्य" इति त्रिकाण्डमण्डनः॥ **बह्वृचच्छन्दोगादीनां** स्वशाखायामाध्वर्यवादेरनुक्तत्वात्किं कर्मलोप एवोतान्यशाखीयग्रहणाम् तत्र तावल्लोप एवेति प्राप्तम्। **तथा च वसिष्ठः**। ( अ. ६ सू. ४३ )

"पारम्पर्यागतो येषां वेदः सपरिबृंहणः। तच्छाखं कर्म कुर्वीत तच्छाखाध्ययने कृते"॥ इति। अध्ययनं तथेति क्वचित्पाठः।

"यः स्वशाखां परित्यज्य पारक्यमधिगच्छति। स शूद्रवद्बहिष्कार्यः सर्वकर्मसु साधुभिः"॥

"स्वीया शाखोज्झिता येन ब्रह्म तेनोज्झितं परम्। ब्रह्महैव स विज्ञेयः सद्भिर्नित्यं विगर्हितः।" इति च

**गृह्यपरिशिष्टे च**

"बह्वल्पं वा सुगृह्योक्तं यस्य कर्म प्रचोदितम्। तस्य तावति शास्त्रार्थे कृते सर्वकृतो भवेत्॥

"स्वकं कर्म परित्यज्य यदन्यत्कुरुते नरः। अज्ञानादथवा लोभात्स तेन पतितो भवेत्"॥ **इति**।

**लौगाक्षिश्च**।

"ऊनो वाऽप्यतिरिक्तो वा यः स्वशाखोदितो विधिः। तेन संतनुयाद्यज्ञं न कुर्यात्पारतन्त्रिकम्॥" इति॥

**छन्दोगपरिशिष्टे कात्यायनश्च**।

"अक्रिया त्रिविधा प्रोक्ता विद्वद्भिः कर्मकारिणाम्। अक्रिया च परोक्ता च तृतीया चायथाक्रिया॥

"स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं तु यः। कर्तुमिच्छति दुर्मेधा मोघं तत्तस्य चेष्टितम्"॥ इति॥

**स्मृत्यन्तरे च**।

"यः स्वशाखोक्तमुत्सृज्य परशाखोक्तमाचरेत्। अप्रमाणमृषिं कृत्वा सोऽन्ध तमसि मज्जति"॥ इति

तस्मात्स्वशाखोक्तं बह्वल्पं वा यादृशमुक्तं तत्तथैवानुष्ठेयम् न तु शाखान्तरापेक्षया अन्यथयितव्यं स्वीयं सर्वानुष्ठानं विना परकीयं लोभादिना नानुष्ठेयमिति।

**अत्रोच्यते**। यत्रान्यशाखोक्तस्य कस्यचिदङ्गस्य निषेधस्तत्र किंचिन्निषेधद्वारा तदुक्तस्यान्यस्याभिमतत्वबोधनात्तदनुष्ठेयम्।

"आत्मतन्त्रेषु यन्नोक्तं तद्ग्राह्यं पारतन्त्रिकम्। विशेषाः खलु सामान्या वेदोक्ता वेदवादिभिरिति"। **हेमाद्रौ कार्ष्णाजिन्युक्तेः**।

"यन्नाम्नातं स्वशाखायां गृह्ये वा गृह्यशेषतः। तद्ग्राह्यं मनवः प्राहुः पारक्यमविरोधि यत्"॥ इति।

**तत्रैव स्मृतिसङ्ग्रहाच्च**।

"यन्नाम्नातं स्वशाखायां पारक्यमविरोधि यत्। विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवित्"॥ **इति**।

**छन्दोगपरिशिष्टे कात्यायनोक्तेश्च**। अत एव शाखान्तराधिकरणन्याय अनुगृहीतो भवति।

अत एव नित्यादिकर्माकरणप्रयुक्तप्रायश्चित्तीयत्वाभावः । तस्मादेषां सूत्रे यावदितिकर्तव्यताकं कर्मोक्तं तेषां तावदेव । एतदाशयान्येव पूर्वपक्षोक्तवचनानि । प्रधानस्य स्वसूत्रोक्ताङ्गकलापेनैवाकाङ्क्षाशान्ते-रन्यदीयाकाङ्क्षाभाव इति तद्भावः । येषां तु प्रधानमात्रं सूत्रे उक्तं तत्र तदाकाङ्क्षायामविरोधिनोऽन्य-स्यान्वयो भवतीति सिद्धान्तवचनानामाशय इति न विरोधः ।

ननु भवत्येवं तथापि कर्मणां केषांचित्त्रय्यधीनत्वादाध्वर्यवस्य च यजुर्वेदविहितत्वात्तस्य च बहुशाखत्वात्तेषां कुत्राधिकार इति चेत् । अत्र **त्रिकाण्डमण्डनम् ।**

"श्रौतं स्मार्तं तु यत्कर्म स्वशाखायां न विद्यते । बौधायनोदितं ग्राह्यं बह्वृचादिभिरादरात् ॥
"एतस्यासंभवे ग्राह्यमन्यस्माद्याजुषोऽपि वा" इति ।

**शौनकश्च ।**

" यजुषो बहुशाखत्वात्संदेहे समुपस्थिते । कां शाखामवलम्बेरंस्तादृशी बह्वृचादयः ॥
" आध्वर्यवं याजमानं ग्राह्यं बौधायनीयकम् । अन्यथा पतितो ज्ञेय इति बौधायनाशयः" ॥

**इति ।** यज्ञपार्श्वे तु इदमेव पठित्वा

"यस्यापस्तम्बशाखीयो भवेन्मातामहो यदि । तस्य बौधायनाभावे तत्सूत्राधानमिष्यते ॥
"अन्यथा सूत्रदूष्यः स्यात् सर्वकर्मबहिष्कृतः ' इत्युक्तम्" ॥

अत एव **श्रौतसर्वस्वाख्ये** ग्रन्थे रण्डत्रयमुक्तम् । तत्रादौ **शाखारण्डः ।** पौष्य-ञ्ज्यावन्त्ययोरपि चकाराद्धिरण्यनाभस्यापि पञ्चशतानि शिष्याः आसाते तावतीः **शाखा यथायथं** जगृहुस्तानुदीच्यान्सतः कालतः कांश्चित्प्राच्यांश्च प्रचक्षत इत्यर्थः । यथोक्तं **वैष्णवे ।**

"उदीच्याः सामगाः शिष्यास्तस्य पञ्चशतं स्मृताः । हिरण्यनाभात्तावन्त्यः संहिता यैर्द्विजोत्तमैः ॥
"गृहीतास्तेऽपि चोच्यन्ते पण्डितैः प्राच्यसामगाः ॥ इति **श्रीधरस्वामिना ।**
"गुरुणाऽनुष्ठितं तन्त्रं तत्पुत्रोऽपि समाचरेत् । अन्यथा कर्महानिः स्यात्प्रायश्चित्ती भवेच्च सः ॥
"पितृशाखां परित्यज्य पारक्यमधिगच्छति । स शूद्रवत्" ।
"न जातिपरशाखोक्तं बन्धुः कर्म समाचरेत् । आचरन्परशाखोक्तं शाखारण्डः प्रकीर्तितः ॥
"येषां केषां च मर्त्यानां नान्यदध्वर्युरादिशेत् । तेषां पुत्राश्च पौत्राश्च नत्रेऽभ्यादिश्यते पतिः ॥
"विवाहे सोमश्राद्धे च अग्न्याधाने तथैव च । एतैः स्वजातिभिः कुर्यादन्यथा पतितो भवेत् ॥
"अध्वर्यूद्गातृहोतॄणां सन्तिः सूत्राण्यनेकशः । यत्रास्ति योनिसंबन्धः सूत्रज्ञातिकुलोचितः" ॥

**इति बौधायनीयधर्मरहस्ये ।**

"अनुक्तविषये ब्रह्मन्कां शाखां तु समाश्रयेत् । बौधायनीबह्वृचानां यद्वा भवति तैत्तिरी ॥
"सामगानां तु सर्वेषां शाखा माध्यन्दिनी भवेत् । तथैवाथर्वणानां च तथा क्षत्रियवैश्ययोः ॥
"प्राप्ते काले युगे घोरे शूद्रा वाजसनेयिनः" । इति ।
"बौधायनेन मुनिना प्रायश्चित्ततृतीयके । स्वशास्त्रविधिमुत्सृज्य परशास्त्रप्रवर्तिनः ।

"भ्रूणहत्याकृतो दोष इत्यादि स्पष्टमीरितम् । स्वशास्त्रविध्यलाभश्चेच्छतशोऽन्विष्यतः क्वचित्॥
"अत्यन्तापदि पारक्यं कर्मलोपान्न दोषकृत् । भिन्नशाखोपनीत्याद्यं जाबालादिनिदर्शनात्" ॥

**अथ कल्परण्डः ।**

"शाखारण्डवदेवायं कल्परण्डः प्रकीर्तितः" ।

तथा च **कात्यायनः** ।

"स्वेन पित्रादिभिर्वा यः कल्पादिः पूर्वमादृतः । स तु नैव परित्याज्य इति वेदानुशासनम्" ॥

तथा च पूर्वविरुद्धः पित्रादिपरिग्रहस्तद्विरुद्धो ज्येष्ठपरिग्रहस्तदुभयविरुद्धः स्वपरिग्रहश्च त्याज्यः । तत्र दोषं **त्रिकाण्डमण्डनः** ।

"स्वशाखायाः परित्यागात्तथा शाखान्तरग्रहात् । यो दोषः कथितः सोऽपि तद्वत्कल्पान्तरग्रहः ॥

स च दोषो वसिष्ठोक्तो **बौधायनोक्तश्च** प्रागुक्त एव ।

**अथ बौधायनरण्डः ।**

"कल्परण्डवदेवायं रण्डो बौधायनेन यः । तुल्यदोषमिमं रण्डत्रयमुक्तं महर्षिभिः " ॥

यद्यपि यन्नाम्नातमिति **कात्यायनेन** सामान्यतः पारक्यग्रहणमुक्तं तथाप्याध्वर्यवार्थं **बौधायन**परिग्रहावश्यकत्वं बहुषु ग्रन्थेषु तथोपलम्भात् । तथा च **स्मृतिचन्द्रिकायाम्** ।

"आध्वर्यवं याजमानमाग्नीध्रं यस्य नोदितम् । तेन बौधायनं ग्राह्यमिति शातातपोऽब्रवीत्॥ इति ।

तथा **श्राद्धकल्पलतायां** नवश्राद्धसंख्याविप्रतिपत्तौ **बौधायन**वचनात्पञ्चैवेत्युक्त्वा यत्राश्वलायनेनोक्तो विशेषः कोऽपि न स्वयं तत्र **बौधायनं** ग्राह्यं बह्वृचादिभिरादरादित्यादिवाक्ये- नाश्वलायनाभ्यर्हिततरेण बौधायनेनोक्तत्वात्पञ्चैवेत्युपसंहृतम् । **तथा कालनिर्णये पर्वविचारे ।** वस्तुतस्तु ।

"स्वशाखीयो विशेषो हि यत्र नैवोपलभ्यते । तत्र बौधायनं ग्राह्यं बह्वृचादिभिरादरात्"॥

**इति** । वाक्येनाश्वलायनानामपि बौधायनीयविशेषस्याभ्यर्हितत्वेनाश्वलायनपदोपात्तविशेषस्य **बौधायनीय**विशेषैकवाक्यत्वसम्भवेन सामान्यविषयताकल्पनेन बौधायनीयविशेषविरोधस्यायुक्तत्वात् तथा बौधायनपरिग्रहाधिकारिणां स्वशाखानाम्नानाध्वर्यवयाजमानाग्नीध्रादिकर्मणां यन्नाम्नातमिति **कात्यायन**पर्यालोचनया एकशताध्वर्युशाखानां शाखान्तराधिकरणन्यायेन तुल्यवद्विकल्पं वैकल्पिकेष्वात्मतुष्टिरित्यन्यतमाध्वर्युशाखां तत्कल्पं वा स्वेच्छया परिजिघृक्षतां बह्वृचानां सामगानामाथर्वणानां च **स्वच्छन्द**परिग्रहपरिजिहीर्षया **स्मृतिचन्द्रिकाकारादिभिर्बौधायन**नियमार्थमुदाहृतवचननिचयेन तत्परिग्रहनियमा तदधिकारिणस्तन्नियमातिक्रमे पूर्वोक्तरण्डद्वयवत्कथं न बौधायनरण्डत्वमिति किंचिन्न्यूनब्रह्मवधप्रायश्चित्तं तस्येति सिद्धम् ।

एतेन **स्मृतिसंग्रहे**

"वैतानिकाग्निकार्यं यत्स्वशाखायां न विद्यते । आपस्तम्बोदितं ग्राह्यं छन्दोगादिभिरादरात् ॥
"बह्वृचः सामगश्चापि कुर्यादाध्वर्यवादिकम् । आपस्तम्बेन वा प्रोक्तं तथा बौधायनेन वा ॥",

**यज्ञकाण्डे**

"बह्वृचः सामगश्चापि स्वसूत्राभावतस्तथा । आपस्तम्बेन कर्तव्यमन्यथा पतितो भवेत् ॥"

तथा

"याजुषीबहुशाखत्वात्संदेहे समुपस्थिते । कासु शाखासु लंबेरंस्तादृशीषु च सामगाः ॥
"आध्वर्यवं याजमानं ग्राह्यं बौधायनीयकम् । आपस्तम्बेन वा प्रोक्तमिति शातातपोऽब्रवीत् ।
"प्रायशः सामगानां तु सूत्रं बौधायनीयकम् ॥" इति

कस्याचिदुक्तिः परास्ता पूर्वोक्तसकलनिबन्धविरोधेन निर्मूलत्वात् । समूलत्वे बौधायनरण्डवदापस्तम्बरण्डस्याप्युक्तत्वापत्तेश्च । बह्वृचादिभिरिति वक्तव्ये छन्दोगादिभिरित्यस्य निर्बीजत्वाच्च । स्मार्तत्यागस्यापि तथात्वाच्च । तथा शब्दासंगतेश्च । यज्ञकाण्डे इत्यग्रिमश्लोकद्वयानान्वितत्वस्य स्पष्टत्वाच्च । ननु क्वचिद्ग्रन्थे किंचिद्वचनमुपलभ्यते इति चेत्किं ततः स्मृतिसंग्रह इत्युक्त्वैव ग्रन्थकृता तस्य निर्मूलत्वसूचनात् । विसंवादिस्मृतिसंग्रहस्य निर्मूलत्वान्तस्य मानुषत्वात् भ्रांतेश्च तद्धर्मत्वात् इति यत् किञ्चिदेतत्किंच बह्वृचानां बौधायनीयपरिग्रहेऽपि छन्दोगानां कात्यायनमेव बौधायनरहस्ये तथोक्तेः ।

**तथा च बौधायनीयधर्मरहस्यम्** ।

"अनुक्तविषये ब्रह्मन्कां शाखां तु समाश्रयेत् । बौधायनीबह्वृचानां यद्वा भवति तैत्तिरी ॥
"सामगानां तु सर्वेषां शाखा माध्यन्दिनी भवेत् । तथैवाथर्वणानां च तथा क्षत्रियवैश्ययोः ॥
"प्राप्ते कलियुगे घोरे शूद्रावाजसनेयिनः । माध्यन्दिन्यस्तु या शाखाः सर्वसाधारणाः स्मृताः ॥
"ता एव तु पुरस्कृत्वा वसिष्ठेन प्रकाशितम् । शान्तिकं पौष्टिकं चैव रामस्य गुरुणा स्वयम्"॥इति ।

न च पूर्ववचनविरोधः, तत्रैक**आश्वलायन**पदोक्त्या तदेकवाक्यतयाऽन्यैरपि तेषामेव तदावश्यकत्वबोधनात् । किंच साङ्ग**गोभिलानुक्त**छन्दोगस्मार्तप्रयोगकर्तृत्वेन कात्यायनस्य प्रथमोपास्थितत्वेन विलम्बप्रतीतिकेतरापेक्षयाऽन्तरङ्गत्वात् । एवं चेदानीं **बुन्देलखण्डे** सामगत्वबुद्ध्या जाता**पस्तम्बानुष्ठान**प्रमाणम् । किंच तस्य सामगत्वमेव न द्विवेद्युपाख्यानां सामगत्वस्य कस्यामपि जातावदृष्टत्वात् प्रत्यक्षस्य सर्वतो बलत्वात् । किंच कन्यकुब्जप्रदेशे सामगत्वाभावः ।

अत एव **भागवते**

"जैमिनेः सामगस्यासीत्सुमन्तुस्तनयो मुनिः । सुत्वांस्तु तत्सुतस्ताभ्यामेकैकां प्राह संहिताम् ॥
"सुकर्मा चापि तच्छिष्यः सामवेदतरोर्महान् ।
"सहस्रं संहिताभेदं चक्रे साम्नां ततो द्विजः । हिरण्यनाभः कौशल्यः पौष्यञ्जिश्च सुकर्मणः ॥
"शिष्यौ जगृहतुश्चान्य आवन्त्यो ब्रह्मवित्तमः । उदीच्याः सामगाः शिष्याः आसन्त्यश्च शतानि वै॥

"पौष्यञ्ज्यावन्त्ययोश्चापि तांश्च प्राच्यान्प्रचक्षते" ॥ इति ।

पौष्यञ्ज्यावन्त्ययोरपि। चकाराद्धिरण्यनाभस्यापि पञ्चशतानि शिष्या आसन्। एतावतीः शाखा येऽयायथं जगृहुः तानुदीच्यान्सतः कालतः कांश्चित्प्राच्यांश्च प्रचक्षत इत्यर्थः ।

यथोक्तं **वैष्णवे** ।

'उदीच्याः सामगाः शिष्यास्तस्य पञ्चशतं स्मृताः। हिरण्यनाभात्तावन्त्यः संहिता यैर्द्विजोत्तमैः ॥

"गृहीतास्तेऽपि चोच्यन्ते पण्डितैः प्राच्यसामगाः" ।

इति **श्रीधरस्वामिनः** ।

किंच **चरणव्यूहाख्यपरिशिष्टभाष्ये** स्पष्टं वेदशाखयोर्विभाग उक्तः । तथाहि इतरदेशेषु वेदशाखयोर्विभाग उच्यते ।

तथा च **महार्णवे** ।

"पृथिव्या मध्यरेखाया नर्मदा परिकीर्तिता । दक्षिणोत्तरयोर्भागे शाखा वेदश्च उच्यते ॥
"नर्मदादक्षिणे भागे आपस्तम्ब्याश्वलायनी । राणायनी पिप्पलादी यज्ञकन्याविभागिनः ॥
"माध्यन्दिनी शाङ्खायनी कौथुमी शौनकी तथा । नर्मदोत्तरभागे च यज्ञकन्याविभागिनः ॥
"तुङ्गा कृष्णा तथा गोदा सह्याद्रिशिखरावधि । आ आन्ध्रदेशपर्यन्तं बह्वृचस्याश्वलायनी ॥
"उत्तरे गुर्जरे देशे वेदो बह्वृचप्रकीर्तितः । कौषीतकी ब्राह्मणं च शाखा शाङ्खायनी स्थिता ॥
"अन्ध्रादिदक्षिणाग्नेयी गोदा सागर आवधिः । यजुर्वेदस्तैत्तिरीया आपस्तम्बी प्रतिष्ठिता ॥
"सह्याद्रिपर्वतारम्भा दिशां नैर्ऋत्यसागरात् । हिरण्यकेशी शाखा च पर्शुरामस्य सन्निधौ ॥
"मयूरपर्वताच्चैव यावद्गुर्जरदेशतः । व्याप्ता वायव्यदेशात्तु मैत्रायणी प्रतिष्ठिता ॥
"अङ्गवङ्गकलिङ्गाश्च कानीनो गुर्जरस्तथा । वाजसनेयिशाखा च माध्यन्दिनी प्रतिष्ठिता ॥
"ऋषिणा याज्ञवल्क्येन सर्वदेशेषु विस्तृता । वाजसनेयिवेदस्य प्रथमा कण्वसंज्ञिका ॥" इति ।

तथा च यद्देशवासित्वेन येषां यथानुष्ठानमुक्तं तेषां देशान्तरगमनेऽपि तथैवानुष्ठानमन्यथा रण्डत्वप्रयुक्तप्रायश्चित्तापत्तिः । न चैषां निर्मूलत्वमिति वाच्यम्। महार्णवस्योपलभ्यमानत्वात्संवाद्याचारस्य तथैवोपलभ्यमानत्वाच्चेति दिक् ।

तथा स्वकल्पत्यागेऽपि **भारद्वाजसूत्रे** विस्पष्टमेव दोषः श्रूयते । यथा यजनीयकल्पपरिग्रहे पूर्वपरिग्रहः प्रमाणं तत्त्यागे दोषस्तज्ज्ञाने स्वेच्छया परिग्रह इति **भारद्वाजसूत्रं** व्याख्यातं चैतत् "ब्रह्मविद्यातीर्थीये पूर्वपरिग्रह" इति । पूर्वस्य पितुः पूर्वयोः पितृपितामहयोः पूर्वेषां वा त्रयाणां पित्रादीनां परिग्रहः पुत्रादेः प्रथमपरिग्रहे प्रमाणम् । एवं पूर्वस्य भ्रातुः पूर्वयोर्भ्रात्रोः पूर्वेषां वा भ्रातॄणामिति कनीयसः प्राथमिकस्वपरिग्रहविषयम् । पूर्वो वा परिग्रहः स्वस्यैवेति इदं च द्वितीयादिस्वपरिग्रहविषयम् ।

एतेषां च विग्रहवाक्यक्रमेणानुक्रान्तानामविरोधे सर्वेषां संभूय प्रामाण्यम् । विरोधे तु पूर्वपूर्वबलीयस्त्वं श्रुत्यादिवत् । पूर्वपूर्वाविरुद्धस्यैवोत्तरोत्तरस्य प्रामाण्याल्लिङ्गादिवत् । तथा च प्रपितामहपरिग्रहमारभ्य ज्येष्ठपरिग्रहपर्यन्तानां मध्ये प्रपितामहपरिग्रहस्य निरपवादं प्रामाण्यं पूर्वाविरुद्धस्य, अन्येषां तु तद्विरुद्धानामप्रामाण्यं, तदविरुद्धानां प्रामाण्यमिति सापवादम् । तथा चायं निष्कर्षः । ज्ञायमानपरिग्रहीतपुरुषपरिग्रहाणां मध्ये प्रथमपुरुषपरिग्रहो नियामकः न पित्रादित्रिपरिग्रहत्वं चतुर्थादेरपि नियामकत्वसम्भवात् । एतच्च ।

"येनास्य पितरो याता येन याताः पितामहाः । तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यति"॥

( अ. ४ श्लो. १७८ )

इत्यत्र **मनुवाक्ये** भारद्वाजीयसमानार्थे पितरः पितामहा इति बहुवचनाल्लभ्यते । न हि पितुः पितामहस्य वा बहुत्वं संभवति । स्मरन्ति च बहुवचनादाद्यर्थावगतिरिति । ततश्च पित्रादयः पितामहादयो वेत्यर्थः । समुच्चये तूत्तरवैयर्थ्यापत्तेः । अत एव ज्ञायमानपरः शतसर्वपुरुषसाधारणः पूर्वशब्द एव प्रयुक्तः ।

**तथा च ब्रह्मविद्यातीर्थीये** त्रयाणामित्युपलक्षणं द्रष्टव्यम् । अत एव द्वितीयसूत्रव्याख्यावसरे तत्संमतित्वेन **छन्दोगयज्ञपरिशिष्ट**वाक्यं सर्वपुरुषसाधारणं पित्रादिपदोपेतमेवेत्यादि "आधानायामयावी यदि वाऽर्था व्यथेरन्पुनराधेयेष्टिः" **इत्याश्वलायनसूत्रम् ।** आधानाद्या इष्टिः आमयावी उदरव्याधिमान् । अर्थव्यथा अर्थहानिः । अर्थाः पुत्रपश्वादयः आधानादनन्तरं तस्मिन्संवत्सरे यद्येतानि निमित्तानि स्युस्तदा पुनराधेयं कर्तव्यमित्ययमर्थोऽस्मिन्सूत्रेऽर्थाल्लभ्यते । तस्मिन्पुनराधेये वक्ष्यमाणेष्टिः कार्येत्यर्थः । **श्रौतसर्वस्वे** तथा च यदुक्तं पूर्वपरिग्रहत्यागे दोष इति तस्यापवादोऽयं यदि **बौधायनाधिकारिणः** पित्रादेर्**बौधायना**परिग्रहेण कल्पांतरपरिग्रहस्तथा तत्त्यागे न दोष इति । प्रत्युत तेन नियमातिक्रमप्रायश्चित्तं **कल्परण्डोक्तं** कृत्वा तत्परिग्रहत्यागं कृत्वा स्वयं यथोक्त**बौधायन**परिग्रहः कार्य इति ।

ईषदपि नियमातिक्रमे वैगुण्यादग्निसिद्धिर्नास्तीति सकल**याज्ञिकमीमांसकसम्मतम् ।** आधानस्य कामत्वेन सर्वाङ्गोपसंहारसमर्थस्यैव तत्राधिकारात् । अत एवापत्नीकान्धबधिरकुष्ठिमूकादेः परिवेत्रादेश्चाधाने नाधिकार इति विस्तरेण प्रबलप्रमाणैः प्रसाधयिष्यामो**ऽधिकारप्रघट्टके** इति । तथा चाहवनीयाद्यग्नीनामजातत्वात्तत्र ग्रहपुरोडाशपश्वादीनामहुतत्वादनाहिताग्नित्वेन चैषामयजमानत्वाद्यजमानपञ्चम इत्यादिविधेरप्रवृत्तेरहुतशिष्टभोजनविधिरहितवृथापुरोडाशमांससोमादिभक्षणप्रायश्चित्तं पशुहिंसाप्रायश्चित्तं च तदीयं कृत्वा सोमेन यक्ष्यमाणस्त्रिपुरुषा सोमपीथित्वादैन्द्राग्नं दार्शिकवेदिविच्छेदनिमित्तमाश्विनं चाधिकारपशुं कुर्यात् । तथा चोत्तरार्धे सतां मार्गमिति विशेषेणोपादानात्पूर्वोक्तवचननिश्चयावेदितावश्यकपरिग्रह**बौधायन**त्यागिनां पित्रादीनामशिष्टत्वात्तन्मार्गानुसरणं "येनास्य पितरो याता" इत्यत्रापि । सन्मार्गेणेति विशेषणस्य विवक्षितत्वान्न तद्वाक्यविषयः प्रत्युताशिष्टतापादकमेव । तस्य च पित्रादिपरिग्रहमसन्मार्गं विदुषोऽप्यपरित्यजतो यज्ञेष्वनधिकारः ।

तथा च **द्राह्यायणसूत्रम्** त्रुटिर्नास्ति । उक्तं च **मातृदत्तेन** "साधुवृत्तस्य यज्ञेष्वधिकार"

इति **सूत्रकाराणां** मतमिति । स एव सूत्रव्याख्ययाऽग्निष्टुतो निमित्तसंयोगानाह । एतेनैव यजेत प्रकृतेनाग्निष्टुता अक्षहतः अक्षाणीन्द्रियाणि विकलेन्द्रिय इत्यर्थः । आहिताग्न्यादित्वाद्विकल्पः(व्या.सू.२।२।३७)। एवञ्चाहिताग्निप्रायश्चित्तप्रकरणादाधानोत्तरकालीनेन्द्रियवैकल्ये द्रष्टव्यम् । प्रागिन्द्रियवैकल्ये त्वाधान एवानधिकारः । काम्यत्वात्सर्वाङ्गोपसंहारस्यावश्यकत्वादुषाणां च कथंचित्स्पर्शनज्ञानेऽपि पावमानीष्टिष्वाज्यापेक्षणादसंभवात्तासामप्यग्निजनकत्वात् । वस्तुतस्तु उषोपाधिगमोदर्शनमेव व्याख्यातो **भाष्यकृद्भिः** ।

**कर्कभाष्येऽपि** अमावास्यायामग्न्याधेयम् । अग्न्याधेयमिति कर्मणो नामधेयं तच्च समुदायस्य तेन ह्यसावग्निराधीयते उत्पाद्यते निष्पाद्यते न मन्थनमात्रं स्थापनमात्रं वा । आहवनीयशब्दो हि संस्कारनिमित्तः न जातिनिमित्तो योगनिमित्तो वा । तेषु सत्सु शब्दप्रयोगदर्शनात् । अतश्च यावान्कश्चिद्दृष्टार्थोऽदृष्टार्थो वा तत्संस्कारायाम्नायते स सर्वोऽग्न्याधेयशब्दवाच्यः । एवं च सति संस्कारैकदेशाभावेऽप्यनाहवनीयता । अतश्च सकलकर्मसमुदायाभ्यावृत्तिरिति संप्रदायः ।

**अत्र वदामः** । कश्चित्संसाराेऽङ्गवान्भवति यथा पूर्णाहुत्यामाज्याधिश्रयणाद्यङ्गम् । तूष्णीमग्निहोत्रे च परिस्तरणादि इष्टिषु चाग्न्यन्वाधानादि यस्यैवाङ्गिनोऽङ्गापचारस्तस्यैवावृत्तिर्युक्तरूपा न सकलस्याधानस्येति न चेहाङ्गापचारेऽपि प्रायश्चित्तं भवति । आहवनीयाद्यधिष्ठानाभावात् । न च विद्यन्ते एवाहवनीयादयस्त्रिभिरक्षरैर्गार्हपत्यमादधाति, पञ्चभिराहवनीयमादधातीति प्रयोगदर्शनात् । नेत्युच्यते । यदि इयतैवाहवनीयाद्युत्पत्तिः स्यात् शेषं व्यर्थमेव स्यात् तस्मात्पञ्चभिराहवनीयमादधातीति भाविनी वृत्तिः । अतो नैमित्तिकहोमस्याभावः । यद्येवं पूर्णाहुत्यादिहोमोऽप्यत्र न भवति ।

**उच्यते** । आहत्याहवनीयसंस्कारायैव विधानादित्यदोषः । तस्मादिह विहितानां भाविनी वृत्तिर्युक्ता न तु नैमित्तिकहोमानाम् । ते हि सत्याहवनीये विधीयन्ते । पूर्णाहुत्यादयस्तु तदुत्पत्त्यर्थतयेति विशेषः । अमावास्याशब्दश्चात्र गौण्या वृत्त्या प्रतिपद्विषयः । एवं हि श्रूयते आधानं प्रकृत्य " यदहरेवैष न पुरस्तान्न पश्चाद्दृश्येत तदहरुपवसेद्" इति । उपवासशब्दश्च यमनियमापेक्षः । यदहरस्य श्वोऽग्न्याधेयं स्याद्दिवैवाश्नीयादित्येवमादिविधानात् । तस्मादमावास्यायामुपक्रम्य प्रतिपद्याधानम् । कृत्तिकादिषु नैवम् । न हि तत्रैवं वचनमस्तीति अग्न्याधेयमनुविहितमवसरप्राप्तमिदानीं पुनराधेयमुच्यते । पुनराधेयमाधानाप्रतिज्ञातस्य पुनराधेयमिति कर्मणो नामधेयं तच्चाधानाप्रतिज्ञातस्य भवति यस्याधानं समनन्तरमेव प्रतिज्ञातमपगतं स आधानाप्रतिज्ञातः । एवं हि श्रूयते । यस्याधानमनर्थकं स्यात्स पुनरादधीत । तथा योऽग्नीनाधाय सर्वज्यानिं जीयते पुनरादधीत ।

**अनन्तकृतकात्यायनसूत्रभाष्येऽपि ।**

"प्रधानद्रव्यव्यापत्तौ साङ्गा वृत्तिस्तदादेशात्" । प्रधानफलं तत्साधनं कर्मप्रधानं साध्यसाधनयोरभेदोपचारादिष्टत्वसंक्रमणेन वा तस्य साधनं यद्द्रव्यं पुरोडाशादि तस्य व्यापत्तिर्विनाशो दुष्टता येन निमित्तेन शिष्टानामभोज्यमन्नं स्यात्तेनैव व्यापत्तिर्द्रव्यस्य स्यात् तन्निमित्तं साङ्गा वृत्तिः प्रधानस्य कर्तव्या । अङ्गैः सह या सा साङ्गा ।

"उपकारे प्रवृत्तानां प्रधानोद्देशनं कृतम् । द्रव्येणानेन साध्यं मे प्रधानमिति निश्चितम् ॥

"आदौ कर्मनिवृत्ते च विकल्पप्रामयोर्यथा । कर्मान्यत्वं यथा तत्र द्रव्यान्तरपरिग्रहात् ॥
"एवमत्र यदुच्छिष्टं विनष्टं साधनच्युतेः । तदुद्देशप्रवृत्तानामङ्गानां फलनाशतः ॥
"ध्रुवं नाशात्प्रकर्तव्या सर्वाङ्गावृत्तिरादितः । अपूर्वं फलमेतेषां प्रधानस्योपकारकम् ॥
"येषां दृष्टं फलं तेषां द्वारद्वारिकया ध्रुवम् । इष्टः फलविनाशेन व्यावृत्तोऽङ्गावधिर्भवेत् ॥
"प्रधानद्रव्यनाशे तु सर्वाङ्गावृत्तिरिष्यते । संस्कारा येऽथवा द्रव्यस्वरूपस्योपकारकाः ॥
"सन्निपाताद्विनाशः स्यात्तेषामेवाश्रयादिह । अङ्गापूर्वाणि युज्यन्ते प्रधानापूर्वकाङ्क्षया ॥
"यागादुत्पद्यते तच्च यागो येन त्रयात्मकः । अनुत्पन्नः कथं नश्येदुद्देशं क्रियतेऽस्य तु ॥
"नापि वैकल्पिकन्यायसम्भवः श्रुत्यबाधनात् । घटोद्देशप्रवृत्तोऽपि घटार्थी न निवर्तते ॥
"तदुद्देशप्रवृत्तस्य कर्तुर्नष्टेऽपि साधने । पिण्डान्तरं गृहीत्वाऽसौ घटं यावत्प्रयच्छति ॥
"तावत्प्रतीक्षते तस्य संस्कर्ताऽत्रापि तत्तथा । तस्मादारात्प्रवृत्ताय उपकर्तुमपूर्वतः ॥
"विनाशाभावतस्तस्यानावृत्तिर्द्रव्यनाशने" ।

अमावास्यायामग्न्याधेयम् । अग्न्याधेयमिति कर्मणो नामधेयं संव्यवहारार्थमग्न्याधेयमन्वारम्भणीयान्तं भवतीत्यादावन्वर्थसंज्ञया चाधानार्थता चास्य प्रतीयते "कृत्यल्युटो बहुलम्" (व्या. सू. ३।३।११३) इति करणे कृत्यः आधानं चान्तर्बाह्यं च अन्तराधानं ह्युत्तरकर्मार्थमात्मसंस्कारः अस्तर्यः कर्मणि शक्तः तमेव मध्ये सन्तं बहिराद्ध्याद्युत्तरकर्मकारकभूतं तमुद्दीप्य "समिध इह यज्य इह सुकृतं करिष्यामि योऽस्यैष" इत्यन्तेन । अत एवोत्तरकर्मप्रयोजनमग्नीनामाधानप्रापकमित्यग्न्याधेयमुच्यते । तच्चामावास्यायां कर्तव्यम् । अमावास्या चादृष्टचन्द्रा दृष्टचन्द्रा वा विशेषत इति केचित्तदयुक्तम् । 'यद्योऽमावास्यायामग्नीनाधत्ते' । यथा विवृत्तायां द्वारि द्वारा पुरं प्रपद्येतेत्युद्घाटितद्वारे पुरःप्रवेशतुल्यममावास्याधानमुक्तम् । तस्य च कपाटस्थानीयमपिधानं चन्द्रमा उक्तश्चन्द्रमा एव द्वारपिधान इति । तेनादृष्टचन्द्रायामेवेदम् । तत्राप्याधानममावास्यायामुच्यमानं किं मन्थनादि तत्र किं वा आरम्भः आरम्भस्तत्रेति **कर्कः** । गौण्या वृत्त्या परिग्रहात् । यद्याधानं मन्थनादि तद्गौण्या वृत्त्या पञ्चदशीकलाव्यापारसाम्येन प्रतिपदि कर्तव्यमित्युक्तम् ।

तत्र च **श्रुति**रुद्घाटिता । " यदहर्नैव न पुरस्तान्न पश्चाद्दृश्येत तदहरुपवसेत्तर्हि ह्येष " इति । तेनामावास्यायामुपवासविधानादाधाने गौणीति प्रतीयते । तदिदं समञ्जसमिव दृश्यते ।

नन्वाधानाङ्गत्वममावास्यायां श्रूयते तस्मादमावास्यायामेवाग्नी आदधीतेति । सत्यम् । पूर्वापरीभूतभाववचनत्वादाख्यातस्य वरणाद्यथाऽऽधानमेव । तेन तत्प्रभृति अमावास्यायां क्रियमाणमाधानमेव । क्रियत इति न बाधिष्यत्यमावास्यासंयोगः ।

ननु सत्यपि सर्वस्याविशेषेणाधानत्वे परेद्युः क्रियमाणस्यैव श्रुत्याऽऽधानत्वव्यपदेशात्तदेवाग्न्याधेयमिति तस्यैव मुख्यया वृत्त्याऽमावास्यायोगेन भवितव्यम् । 'मुख्यामुख्ययोर्मुख्ये संप्रत्ययः' 'प्रधानाप्रधानयोगयोः प्रधानयोगो बलीयान्' इति न्यायात् । सत्यम् । भवेदेवं यदि प्रत्यक्षश्रुतिर्न स्याद्बाधिका । सत्यां हि तस्यां न्यायोऽक्षमः । अपि चामावास्यायामादधीतेत्यस्य मुख्यार्थाश्रयणे यदहरेवैष न पुरस्तादित्यस्यानर्थक्यमेव स्यान्न ह्यदर्शनं गुणभावेन कल्पयितुं शक्यम् ।

नन्वत्राप्यस्ति गुणयोगकल्पनासम्भवः कियतीनां फलानां तथासंभवात् । नैतत् । तथा सति सर्वासु तिथिषु तथाभावाद्विनिगमना न स्यात् । अपि च पुरस्तात्पश्चाद्योगेनादर्शनं श्रूयते । न चन्द्रे- ऽधिकरणे योगेन न पुरस्तान्न पश्चाद्दृश्यतेति पुरस्ताद्दर्शनाभावोऽत्यन्तादर्शने भवति । तस्मान्नोपचारः कल्पयितुं शक्यत इति गौण्येवामावास्याऽऽधाने ।

"आधानं हि फलं यस्य तच्चेदत्राभिधायकम् । अविशेषेण संस्कारा: सर्वे तत्तुल्यमुख्यता ॥
"अविशेषात्प्रधानत्वे विनाशेऽप्येकदेशगे । आवृत्तिर्मूलतो ज्ञेया विश्राद्धवपनव्रता ॥
"नन्वेवमेकदेशस्थमावृत्तेः कारणं यदि । वैगुण्यं पावमानीष्टिप्रधानाङ्गाङ्गनाशने ॥
"पावमानीविनाशेन आधानार्थविनाशतः । अतिप्रसज्यतावृत्तिरशक्यमुपपादनम् ॥
"कृतं स्यात्सत्यमेवतन्नाधानार्थविभेदतः । दोषोऽङ्गं पूर्णपर्यन्तं होमान्तं द्विष्टिसिद्धिकम् ॥
"तेनार्थत्रयमाधानशब्देनात्र प्रतीयते । उत्तरोत्तरकल्पस्य विकल्पेन विधानतः ॥
"पूर्वापूर्वाभिधेयत्वमाधानस्य न यास्यति । त्रयाणां तेन भेदेन गुणलोपे परस्परम् ॥
"अङ्गाङ्गिभावाभावेन नावृत्तिरन्यकर्मणः । इष्टीनामप्यपूर्वाणां भेदेन निरपेक्षता ॥
"परस्परं ततो न स्यादेकस्या वैगुण्ये सति । आवृत्तिरपरस्याः स्यान्न वेकस्याः कृतार्थता ॥
"एकैकावयवोत्पत्त्या कारणं वह्निसाधने । अपेक्ष्यन्ते तदुत्पाने तेन सर्वा अपीष्टयः ॥
"पार्थिवादिस्वरूपाणामाप्तिः स्पष्टाऽभिधीयते । तेन स्वतन्त्रफलदा न संबद्धाः परस्परम् ॥
"यदस्य पवमानं च आरभ्येतद्विविच्यते । कृत्स्नमनपनिहितं श्रुत्या सर्वं स्वयं यतः ॥
"अपि चात्राङ्गनाशेन प्रायश्चित्तं भवेत्कथम् । अग्न्याधानं हि तच्छिष्टमग्निः स्यात्सर्वकर्मणः ॥
"सिद्धावाहवनीयादिस्तन्नाम्ना कर्मसाधनम् । स च संस्काररूपः स्याच्छब्दस्यात्र प्रवृत्तितः ॥
"नायं रूढः क्वचिद्दृष्टः सर्वलोकाप्रयोगतः । सम्बन्धो नियतोऽर्थेन प्रतीतोऽवयवादपि ॥
"यौगिकोऽपि ततो नायं न च यादृच्छिको यतः । संस्कारसंयुते वह्नौ प्रयोगो नियतः स्फुटः ॥
"पञ्चभिराहवनीयमादधाति प्रयोगतः । न तु प्रागपि सिद्धोऽयं संस्कारात्तन्निमित्तता ॥
"कथमिति न वक्तव्यं भाविन्येनत्प्रयुज्यते । गत्यन्तरस्यासंभवादुक्तयुक्त्या प्रसिद्धितः ॥
"अतो नाहवनीयत्वात्प्रायश्चित्तक्रियात्र न । उत्पत्त्यर्थं विधानाद्धि पूर्णाहुत्यादिकर्मणः ॥
"साधनं साध्यमानोऽपि वचः सर्वं करोति यत्" ॥ इति ।

**भाट्टदीपिकाशंभूभट्टीशङ्करभट्टीष्वपि** । "सान्नाय्याग्नीषोमीयविकारा ऊर्ध्वं सोमात्प्रकृतिवत् । यः पाप्मना गृहीतः स्यात्तस्मा एतामैन्द्रावारुणीं पयस्यां निर्वपेत्" इति सान्नाय्यविकाराः अग्नीषोमीयमेकादशकपालं निर्वपेत् । श्यामाकं वसन्ते ब्रह्मवर्चसकाम इत्यग्नीषोमीयविकाराः । यत्तु याज्ञिकाना प्रागप्यनुष्ठानं तच्छाखान्तरे सान्नायाग्नीषोमीययोः प्रागपि विधानादवगन्तव्यमिति **भाट्टदीपिका** शाखान्तरे इति तदुपन्नयेत्तथाऽग्निमग्नीषोमाविति पौर्णमास्यामि**त्याश्वलायनसूत्रे** सोमयाज्यसोमयाजिसाधारण्ये च सान्नाय्याग्नीषोमीययोर्विधानादित्यर्थः । तत्र येषा**माश्वलायनकात्यायनहिरण्यकेशिबौधायनानां सूत्रे**ऽविशेषेणाम्नानं तेषामेवासोमयाजिनोऽग्नीषोमीयानुष्ठानम् । येषां **त्वापस्तम्बानां** "नासो-

मयाजिब्राह्मणस्याग्नीषोमीयः पुरोडाश" **इत्यापस्तम्बसूत्राद**सोमयाजिनो निषेध एव तेषामसोमयाजिनो न तदनुष्ठानम अथवा सर्वेषामेव विकल्प इति तु वाद्यान्तरम् ।

ननु दशमे तदुसन्नयेदिति वचनेन सोमात्प्रागपि सान्नाय्यं विहितम् । अतः कथं सान्नाय्यविकृतिः सोमोर्ध्वमेव । अत्रोत्तराधिकरणे समाहितं **तन्त्ररत्ने** तद्वचनं नास्तीति कृत्वा चिन्तैषा तस्मिन्नंशे इति **आपस्तम्बसूत्रकपर्दिभाष्येऽपि** 'पुरोयते० पुर एनं दधाति' इति क्षत्रियवैश्ययोर्दार्विहोमिकः अभिजनविद्यावृत्तसहितः तस्य प्रवरेण राजाऽभिषिक्तः प्रवृणीते दर्शपूर्णमासयोरत्र वचनात् । ब्राह्मणोऽपि राज्यं प्राप्तः पुरोहितप्रवरेण प्रवृणीते । प्रवरव्याख्या प्रतिज्ञाता एक एवेषां प्रवरः । अनेन ज्ञायते पृथगार्षेया अपि क्षत्रियाः सन्तीति । मानव० दिति। मानवैडपौरूरवसेति होता वृणीते । पुरूरवोवदिड-वन्मनुवदित्यध्वर्युः। अथ० णीरन् । अथ येषां क्षत्रियाणां मन्त्रकृते न स्युः सह पुरोहितप्रवरैणैव सन्तीति सपुरोहितप्रवरास्तांस्ते प्रवृणीरन् । अथ येषां स्युरपुरोहितप्रवरांस्ते । अथ येषां क्षत्रियाणां मन्त्रकृतः स्युः भवन्ति विद्यन्त इत्यर्थः। अपुरोहितप्रवरानेव ते प्रवृणीरन्। आत्मीयानेव प्रवरान् प्रवृणीरन् इत्यर्थः। सपुरोहितप्रवरास्त्वेव न्यायेन नञ्शब्दो विशेषणार्थः ।एव शब्दोऽवधारणार्थः । **अयमर्थः।** सर्वक्षत्रियाणां विशेषः सपुरोहितप्रवरा एव ते भवितुमर्हन्ति न्यायेन सर्वेषां पुरोहितस्य विद्यमानत्वात् आत्मनां कर्मण्यधिकारः पुरोहितप्रधाना एव ते भवितुमर्हन्ति । एकार्षेया विशः । विट्शब्देन वैश्या उच्यन्ते । विट्क्षत्रादोज्यायसी स्यादिति व्यपदेशात् । बहुवचनं विश इति । सर्वे विशो वैश्याः एकार्षेयाः समानार्षेया भवितुमर्हन्ति । वात्सप्रेति होता वत्सप्रवदित्यध्वर्युः । अथासं० प्रवृणीत स्यात् । ज्ञातः प्रवरो यस्य स संप्रज्ञातबन्धुः तद्विपरीतोऽसंप्रज्ञातबन्धुः । आचार्यामुष्यायणमाचार्यप्रवरमनुब्रवीत । आनुपूर्व्येण ब्रूयात् । आचार्यप्रवरेण प्रवृणीतेत्यर्थः । सामर्थ्याद्ब्राह्मणस्यायं विधिः । क्षत्रियाणां पुनरसंप्रज्ञातबन्धूनां पुरोहितप्रवर एव । अथह० । मामनन्तिहेति विनिग्रहार्थे ताण्डिनो नाम शाखिनः छन्दोगा इत्यर्थः । एकार्षेयं सार्ववर्णिकं सर्ववर्णेषु भवं समामनन्ति पठन्ति। मानं० हि ब्राह्मणम्। मानवेति होता वृणीते। मनुवदित्यध्वर्युः । कुत एव तदवगम्यते मानव्यः मनोरपत्यं प्रजाः अधिकारिणः । "जाति-सामर्थ्याभ्याम् ” इति । अधिकारलक्षणयुक्ताः शब्देनोच्यन्ते। यद्यपि ताण्डिनां दर्शनेन सर्वे मानवगोत्राः प्राप्नुवन्ति तथापि भिन्नविवाहं कुर्वन्त्येव प्रवरणमात्र एव विकल्पितत्वात् । हि यस्माद्धेतोर्ब्राह्मणं प्रत्यक्षमेव श्रुतम् । द्विरुक्तिर्मङ्गलार्था ।

**अथान्यदुच्यते** । स्वर्गकामवाक्यगतपुलिङ्गवद्भवतीति वा ज्ञायत इत्यादिना लिङ्गं दर्शयति । कथमुभयोरविशेषो ज्ञापित इति उच्यते । अर्द्ध इत्युक्तेरुभयोरेकत्वं तावत्प्रतीयते । यथाहास्यार्द्ध इति । तच्च पत्नीयजमानशरीरयोरात्मनोरपि न संभवति प्रत्यक्षविरोधात्तस्माद्विधिनिषेधाभिप्रायमेतत् । "अर्द्धो वा एष आत्मनो यत्पत्नी"इत्येक एकविधिरुभयोरविशेषाद्विधीयते इति । यथा ब्राह्मणेन चण्डालो न स्प्रष्टव्य इत्युक्ते दक्षिणेन पार्श्वेन न स्प्रष्टव्य इति गम्यते । एवं हि **भारद्वाजिनः** समामनन्ति। "यदि पत्नी सीमान्ते यायादभिनिम्रोचेदभ्युदयाद्वा पुनराधेयं तत्र प्रायश्चित्तिरिति" इति । अपि च पत्न्याः प्रवासाभावमाचार्यः स्वयमेव दर्शयति । सायंप्रातर्वैषा पत्नी चास्ते इति । **भवस्वामिना** चोक्तं प्रवासोपस्थाने "अरूयुपायो प्रवसाति" इति पत्न्याःप्रवासाभावादप्रसङ्गादनर्थकम् । बहुपत्नीकस्य काचित् प्रवसेत्तत्रास्ति प्रसङ्ग इति । तस्माद्यथो एतत्सोपरिमितं प्रवसाति न संवत्सरमतिप्रवसत्यविशेषा-

ज्जायापत्योराहिताग्निकयोर्विज्ञायते "अर्द्धो वा एष आत्मनो यत्पत्नीत्यथ यदि प्रवसति यजमाने पत्न्याः प्रवासनिमित्तꣳस्यात्तद्वा स्तोष्यतीयं हुत्वाऽध्वर्युः समारोपयेदयं ते योनिर्ऋत्वियः" इति यत्र गच्छेत्तन्नानोहरेत्तत्राग्निं मथित्वा गार्हपत्ये आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीत्वाऽऽवहनीये संततिं जुहोति मनो ज्योतिः घृतेन स्वाहेत्यथाग्नये तन्तुमते पुरोडाशमष्टाकपालं निर्वपति शरावं दक्षिणां ददाति सा प्रसिद्धेष्टिः संतिष्ठते । अथ यदि यजमानश्चैव पत्नी चोभौ त्वेव निष्कामतो ग्रामान्ते ग्रामसीमान्ते वा वसेतेऽग्निहोत्रमेव लुप्येताविकृतमग्न्याधेयं कुर्वन्तोऽग्नीन्हरन्तो नोच्छ्सेयुरग्नयो लौकिकाः संपद्येरन् विना समारूढेषु अग्निषु नाद्रियेत शम्याप्रासेन दीप्ते त्वनिर्दिशेदिति **बौधायनसूत्रं** बहुपत्नीकविषयम् । अथवा एतद्वचनस्य पत्न्याः संवत्सरातिप्रवासनिषेधपरत्वाद्यदि पत्नी सीमान्त इत्यादिवचनप्राप्तमपि कर्तव्यम् ।

**अत्रोच्यते** । पत्न्याः प्रवासेऽग्निनाशमभ्युपगम्य संवत्सरातिप्रवासे न पवित्रेष्टिर्विधीयते तर्हि भिषजो भग्नोरुचरणस्य पाण्डुप्रशमाय चङ्क्रमणमुपदिशन्ति । किंच **भारद्वाजिनां** पक्षे त्वेकाहेनैव विनष्टत्वादग्नीनामग्निभ्यः पत्न्याः संवत्सरातिप्रवासाभावाद्यथो एतदित्यादिवचनमनर्थकम् । अथ यदुक्तं पवित्रेष्टिविधानं बहुपत्नीकविषयमिति । तदप्यनुपपन्नम् न चैकस्याः प्रवासमपि सहते । यदि पत्नीसीमान्त इत्यादिकम् । ननु **भवस्वामिनो**क्तं पत्न्याः प्रवासाभावादिति । नैतदेवं यजमानेन सह पत्न्याः प्रवासाभावादित्यभिप्रायः प्रोषितयजमानस्य स्त्र्युपगमप्रतिषेधात् पत्न्या सह प्रवासं संदिहानस्य चोद्यं न तु पत्न्याः प्रवासाभावादिति ।

ननु बहुपत्नीकस्य यया कयाचित्पत्न्या सह प्रवासोऽभ्युपगतो **भवस्वामिभिः** बहुपत्नीकस्य काचित्प्रवसेदिति । ततश्च तेन सह प्रोषिता यजमानेन विना वा तस्याः संवत्सरातिप्रवासे पवित्रेष्टिः कर्तव्येति । नैतदेवम् । आहिताग्नेः कयाचिदपि पत्न्या सह प्रवासो नाभ्युपगम्यते । कुतः उभौ त्वेव निष्कामत इत्यादिना विरोधात् ।

अथ कश्चिदेवं ब्रूयादेकस्यां प्रोषितायामपरा त्वप्रोषितेति पुनराधेयं न कर्तव्यमिति । स खलु प्रष्टव्यः कपालेषु भिन्नेषु कानिचिदभिन्नानीति भेदेन होमोऽपि किं न कर्तव्यः । **भवस्वामिना** चाभ्युपगत एव पत्न्या सह प्रवासः । एवं ह्युक्तं बहुपत्नीकस्य काचित्प्रवसेदिति । पत्नीशब्दः काचिदित्यनेन न संबध्यते । कुतः नोपसर्जनं पदं पदान्तरेण संबध्यते । यथा राजपुरुषमानयेत्यत्र राजपदमानयेति पदेन न संबध्यते । ननु उपसर्जनमनुपसर्जनमिति नायं संबन्धहेतुः किं तर्हि काङ्क्षितं पूरणसमर्थं च संबन्धितामापद्यते । यथा गुरुकुलमित्यत्र कस्येत्युक्ते देवदत्तस्य गुरुकुलमित्युत्तरम् । अत्र काचित्प्रवसेदित्युक्ते आकाङ्क्षा विद्यते पूरणसमर्थं च पत्नीपदमुच्यते । अस्त्र्युपायीति यदि पत्न्युपगमनं प्रतिषिध्यते तर्हि क्रमोढायाशूद्रायाः सह प्रोषिताया उपगमनमप्रतिषिद्धं स्यात्तच्च नोपपद्यते । अस्त्र्युपायीति स्त्रीमात्रगमननिषेधादतोऽनधिकारिणीविषयमस्त्र्युपायीति तस्मादाहिताग्नेः कयाचिदपि पत्न्या सह प्रवासो नास्ति । कथं तर्हि **भारद्वाजिनां** वचनम् । उच्यते । श्रुतोपपत्त्यर्थमश्रुतकल्पना न्याय्या ततश्च प्रोषितयजमानपत्नीविषयं हि पत्नीसीमान्त इत्यादि । अतः सुष्ठूक्तम् । अग्निभ्यः संवत्सरादूर्ध्वं प्रोषितायाः पत्न्याः प्रायश्चित्तिः पवित्रेष्टिरेवेति । प्रवसति यजमाने पत्न्याः प्रवासनिमित्तं स्यात्प्रवासनिमित्तानि लोकप्रसिद्धानि तत्र नियमो नास्ति वास्तोष्पतीयं हुत्वाऽध्वर्युः समारोपयेद्यजमानस्यासंनिधानात् ।

**तत्र प्रयोगः ।** अग्निष्ठे शकटे सर्वमुपकरणं निधाय दक्षिणमनड्वाहं युङ्क्त्वाऽऽज्यं संस्कृत्य तन्मात्रप्रयोजनायां पर्णमय्यां स्रुचि चतुर्गृहीतं गृहीत्वाऽऽहवनीये जुहोति वास्तोष्पते प्रतिजानीही-त्यनुद्रुत्य वास्तोष्पते शग्मयेति जुहोति । नात्र प्रणवेन संधानमाहवनीये स्रुचं प्रास्य सव्यमनड्वाहं युङ्क्त्वाऽरण्योऽग्नीनध्वर्युः समारोपयेद्यत्र पत्नी गच्छेत्तत्रानः शकटं तदेतत्प्राप्याग्निं मथित्वेत्यादि । अग्निभ्यः प्रोषिते यजमानेऽग्निभिः सह पत्न्याः प्रयाणे प्रायश्चित्तं मनस्वती तन्तुमर्ताव । उभौ त्वेव निष्कामतः पत्नीयजमानावग्निभ्यो निष्कामतो ग्रामान्ते ग्रामान्तो वा ह्यसीमा । तथा दर्शनादश्वमेधे विदूरे ग्रामान्तौ स्यातामित्यादौ कथं तथासत्यर्थवाद उचितो भवतीति । ग्रामसीमान्ते वा वसेते ग्रामवास्तु-सीमा । तामतीत्य ते वासो यावद्धोमकालापत्तिः । तथा **छन्दोगपरिशिष्टे कात्यायनः ।**

"विहायाग्नीन्सभार्यश्चेत्सीमामुल्लङ्घ्य गच्छति । होमकालात्यये तस्य पुनराधेयमिष्यते" ॥ इति ।

वाशब्दो निमित्तद्वयमाचष्टे । अथ यद्युलूकोलूकी वाऽयेतति । एकस्मिन्निमित्ते अग्निहोत्रमेव लुप्येत अग्निहोत्रशब्दोऽग्नौ वर्तते । अग्नावयमिति प्रयोगदर्शनात् ।

**कृष्णद्वैपायनवचस्तु ।**

"गतेषु तेषु वीरेषु धौम्येऽपि यजतां वरः । अग्निहोत्राण्युपादाय पाञ्चालानभ्यगच्छत" ॥ इति ।

**महाभाष्ये** "तृतीया च" होरित्यत्र ज्योतिषि वर्तते । तथाऽऽग्निहोत्रं प्रज्वलयतीति । विनष्टत्वादग्नीनामविकृतमग्न्याधेयं कुर्वीत । उपवसथगवीमुत्सृज्य वा । **तदुक्तम् ।** अथापहताग्नये नष्टारणीकस्य च ब्रह्मौदनेनैव प्रतिपद्यते सिद्धमग्न्याधेयमिति । उपपदमविवक्षितार्थनिमित्तं विशेषणा-योगाद्यथाऽऽहिताग्नेरग्निभ्यो ग्रामान्ते ग्रामसीमान्ते वा वासोऽग्न्याधेयस्य निमित्तं स चोभयोरिति । एकं हीदं वाक्यं सकृदुच्चरितं न शक्नोतीमावर्थावभिवदितुम् । **उच्यते ।** शक्नोत्येव हि पौरुषेये दृष्टं हि लोके श्वेतो धावतीति । **सत्यम् ।** यद्यन्यतोऽवगतेष्वर्थेषु वचनं भवेत् । एतत्तु वचनमेवार्थावगत-कारणं न तच्छक्नोत्यनेकार्थाभिधानं कर्तुम् । **उच्यते ।** यद्यविवक्षितार्थम् । उभौपदं तर्हि यजमान-प्रवासोऽप्यग्न्याधेयस्य निमित्तं स्यादथ पत्नीप्रवास इति चेदश्रुतेन पत्नीशब्देन विशेषणाद्वरं श्रुतेनोभौपदेन विशेषणम् । किंच । एवेत्यवधारणादविवक्षितार्थत्वे लिङ्गमुभौपदस्य अग्नीन्हरन्तो नोच्छ्वसेयुः शम्याप्रास इति संबन्धः । तदूर्ध्वं न दोषः यावच्छम्याप्रासस्तावत्सर्वानग्नीन् हरन्तो नोच्छ्वसेयुः । नैकैकमिति **सूत्रविदो** वदन्ति शम्याप्रासात्परतोऽग्निहर्तॄणामुच्छ्वासे न दोषः । किंचानसि समारूढेष्वग्निषु अनसो हर्तॄणां चोच्छ्वासेनास्ति । कुतः सत्रदर्शनात् । सारस्वते सत्रे सरस्वत्या अपरान्तादारभ्याप्लक्षप्रस्रवणाच्छकटारूढा एवाग्नयो नीयन्ते तेषामुच्छ्वासो दृश्यते । आक्रोशयन्तीति प्रसङ्गात् यजमानस्य अग्निसन्निहितपत्नीव्यतिरेकेण प्रवासवत् पत्न्याः अग्निसहितयजमानव्यतिरेकेण प्रवासो भवति न वेति चिन्त्यते । **तत्र सूत्रं बौधायनस्य प्रायश्चित्तद्वितीयप्रश्ने द्वितीयखण्डे ।** "यथो एतत्सोऽपरिमितं प्रवसति न संवत्सरमतिप्रवसतीत्येवमुक्तं भवति स उ चेदतिप्रवसेत्पवित्र्येष्ट्या यजेत्" इति । एवं **तृतीयप्रश्ने-ऽष्टमखण्डे** "यथो एतत् सतीत्यविशेषाज्जायापत्योराहिताग्न्योर्विज्ञायते । अर्द्धो वा एष आत्मनो यत्पत्नी वा" इति ।

तत्र **गोपालविवरणभाष्यानुसारेण** अर्थो वर्ण्यते । स इति पुंस्त्वं स्वर्गकामवाक्यगतपुंस्त्ववत् उद्देश्यविशेषणत्वादविवक्षितं तेन पुंस एव प्रवासो न पत्न्या इति शङ्कानिरासः । कुत इत्येतद्तो हेतुं दर्शयति । अविशेषाज्जायापत्योरित्यादिना । अर्धो वा इत्यत्र पत्नीयजमानयोः कथं परस्परमर्धत्वम् । एकस्य हि अंशद्वये अर्धोऽर्ध इति व्यवहारो भवति । यथाहास्यार्ध इति तच्च पत्नीयजमानशरीरयोरात्मनोरपि न संभवति प्रत्यक्षविरोधात् इति चेन्न । विधिनिषेधाभिप्रायमेतत् । अर्धो वा एष आत्मनो यत्पत्नीत्येक एव विधिरुभयोरविशेषाद्विधीयत इति । यथा ब्राह्मणेनेत्यादिनिदर्शनामिति **भाष्यात्।**

नन्वेवं यदि "पत्नी सीमान्त आयादभिनिम्रो चेदभ्युदियाद्वा पुनराधेयं तत्र प्रायश्चित्तिरिति" **भारद्वाजीयस्य** वचसः "सायंप्रातरेषा पत्न्यन्वास्ते" इति **आचार्य**वचसश्च "प्रोषितः स्यादधःशायीत्वरुयुपायीत्वमैथुन" इत्यस्य तस्याः प्रवासाभावे स्त्र्युपायनाप्रसक्तेस्तत्प्रतिषेधानुपपत्तिरिति कृत्वा **मण्डन**वचसश्च का गतिरिति चेन्न । श्रुतोपपत्त्यर्थम् अश्रुतकल्पना न्याय्येति । प्रोषितयजमानस्त्रीविषयम् इति **भारद्वाजीय**तात्पर्यात् । एवम् आहिताग्नेः कयाचिदपि पत्न्या सह प्रवासो नाभ्युपगम्यते । "उभौ त्वेव निष्क्रामत" इति सूत्रात् । इति **भाष्योक्तेराचार्य**वचोविरोधाभावात् । बहुपत्नीकस्य यदि काचित् प्रवसेत् । तत्रास्ति प्रसङ्गस्तत्प्रतिषेधपरतया अनधिकारिकर्मादृष्टद्वाप्रवासेऽस्ति प्रसक्तिरिति तत्प्रतिषेधपरतया वा **मण्डन**वाक्यसङ्गतेः । एवं च अस्ति **बौधायना**नुसारिणां पत्न्या अपि अग्निहोत्रव्यतिरेकेण प्रवास इति निष्कर्षः । अत एव संवत्सराधिकपत्नीप्रवासे पवित्रेष्टिरप्युपपन्ना । अनेनैवाशयेन

"भार्यायां चेदुदेत्यर्को गतायामस्तमेति चेत् । तत्र स्यात्पुनराधेयमन्ये त्वाहुरिहान्यथा ॥

"ज्येष्ठा चेदग्निसंयुक्ता गच्छन्त्यन्या यथारुचि । यजमानेन सहिता यद्वा ता एव केवलम् ॥

"वदन्बौधायनस्त्वित्थमेका चेदग्निसन्निधौ । इतरासां यथाकामं प्रवासमनुमन्यते ॥

"इत्युक्तं भवभाष्येऽपि तानश्लोकैरपीरितम्" ।

इत्यत्रैका पदेतरा पदाभ्यां ज्येष्ठा कनिष्ठाऽविवेकेन स्त्रीसामान्यप्रवासप्रतिपादक**मण्डन**वचः संगच्छते । तत्र प्रथमश्लोके तृतीयपादपर्यन्तेनानेकभार्यस्यैकभार्यस्य च साधारण्येन दोष उक्तः । ततश्चतुर्थपादद्वितीयश्लोकेनानेकभार्यस्य ज्येष्ठामात्रसंनिधाने दोषाभाव उक्तः । तृतीयेन श्लोकेन तदितरस्या यस्याः कस्याश्चित्संनिधाने न दोष इति अनेकऋषिमतानुसारिणस्त्रयः पक्षा अभिहिताः ।

"एकस्यामधितिष्ठन्त्यामग्निहोत्रसमीपतः । पतिस्तिष्ठति चेदग्निनाशो नेत्यपरे विदुः" ॥

इति मतान्तरमपि अभिहितम् । तत्रेति **मण्डनबौधायना**दिप्रामाण्यान्नित्याग्निहोत्रनित्येष्टिवत् चातुर्मास्यमपि भवत्येव ।

"अतोऽग्निहोत्रे नित्येष्टिः पितृयज्ञ इति त्रयम् । कर्तव्यं प्रोषिते पत्या नान्यत्स्वामिक्रियान्वितम्" ॥

इति नियमात्पत्नीवत्पत्युरपि तथेति न न्याय्यम् आज्याद्यङ्गत्ववत्पत्न्या अपि अभ्यर्हिताङ्गत्वस्य **बौधायनादि**संमतत्वेन प्रधानयजमानस्य तत्संकोचकत्वकल्पनस्यात्यन्तानुचितत्वात् । प्राधान्यस्यैव दूरोत्सारितत्वात् । अत एव

"नित्या नैमित्तिकीः कुर्यात्प्रवसत्यपि भर्तरि । तत्रापि नैव कर्तव्या क्रिया सोत्तरवैदिका" ॥

इति वचनात् पत्नीवदस्यापि निषेध इति कल्पनाऽपि निरस्ता दत्तोत्तरत्वात् । अङ्गभूताया अपि पत्न्या आग्रयणादिवच्चातुर्मास्यमपि स्यादित्यनेन निषिध्यते । अतः "तस्माद्विरुद्धधर्मत्वे पतिधर्मो बलाधिका" इति **मण्डन**परिभाषाऽपि संगच्छते । पत्नीवद्वियमाने भर्तरि नाशाभावकथनवत् । तन्नियमस्य तन्नियमातिदेशस्य चानुक्तेश्च । किंच वरुणप्रघासे पत्नीयजमानश्चान्तरावेदीं गत्वा ऐषीके शूर्पे करम्भपात्राण्योप्य द्वयोः शीर्ष्णोः स्थापयित्वा दक्षिणेऽग्नौ शूर्पेण जुहोतीत्यत्र प्रयोगकारैर्व्याख्यायते तत्रानेकासन्निधाने मुख्याया एवान्तरागमनादिनंतरासामिति न तद्विरोधः 'उभौ याज्ञाऽऽ सवीर्यत्वायेति ' मन्त्रे द्वित्वमात्रं विवक्षितं न तु प्राधान्यमपि । **अण्ड्लाकारादि**भिस्ताद्दृग्व्याख्यातत्वात् । इतरथा ज्येष्ठाया असंनिधाने इतरासामाज्यावेक्षणस्याप्यप्राप्तौ मूलस्यैव मीमांसत्वापत्तेः यज्ञप्रवर्तकाचार्यशिरोमणिना स्वग्रामे याज्ञिकैस्तथानुष्ठापितत्वादिति । अत एव यजमानः प्रवसन् "नर्यप्रजां मे गोपाय" इत्यादिनोपस्थाय प्रवसेत् । यजमाने स्थिते पत्न्यपि । प्रवसत्पत्नीयजमानौ न प्रवसेताम् । 'बहुपत्नीकोऽपि नैकया सह प्रवसेत्' इति **प्रायश्चित्तचन्द्रिका**ऽपि । एवं "यजमानः पत्नी वा अग्नीन्विहाय संवत्सरमतिप्रवसेद्यदि तदा पवित्रेष्टिः प्रायश्चित्तम्" इति **प्रायश्चित्तप्रदीपोऽपि** । तथा

"प्रवसेद्यजमानोऽग्नीनुपस्थाय यथाविधि । यजमाने गृहस्थे तु पत्न्यपि प्रवसेत्स्वयम्" ॥

इति **प्रायश्चित्तगोपालकारिकाऽपि** । एवं चैकस्या अपि पत्न्याः प्रवासे सिद्धे कैमुतिकन्यायाज्ज्येष्ठाकनिष्ठयोः एकस्या अपि प्रवासेऽग्नीनां नाशो न भवतीति ।

यस्त्वन्यसूत्रानुसारिणां पत्नीप्रवासनिषेधः स तु तत्तत्सूत्रानुसारिणामेव न **बौधायना**नुसारिणाम् । तदुक्तं **बौधायनेन तृतीयप्रश्नेऽष्टमखण्डे** ।

"अथाप्युदाहरन्ति न वृथाऽग्नीनुद्वासयेन्नैवानापत्सु वीरहा वा एष देवानां योऽग्निमुद्वासयते तस्माच्छ्रद्दधानस्याप्रासङ्गिकस्य च" ।

"ये ये विशेषा लघवो यत्र यत्रोपलक्षिताः । तैः कर्मसंस्तरे कुर्यान्न्यायोपेतं यथा भवेत् ॥

"स्वशास्त्रे विद्यमाने यः परशास्त्रेण वर्तते । भ्रूणहत्यासमं तस्य स्वशास्त्रमवमन्यतः ॥

"आर्षेयस्य स्वशास्त्रस्य प्रदेशास्तद्गुणैः समाः । कर्मणां प्रविचारार्थमापत्सु च समाप्नुयात्" ॥ **इति** ।

तस्मात्संवत्सरावधि यजमानसन्निधाने निःसंदेहं शताधिकयोजनमपि पत्न्या ज्येष्ठायाः कनिष्ठाया वा प्रवासे सति अग्नीनां नाशो नैव वर्षोत्तरं प्रवासे तु पवित्रेष्टिः कार्येति यथापूर्वमग्निहोत्रमनुसर्तव्यमेवेति सिद्धम् ।

इदं तावद्विचार्यते । आधानादिकर्मणि ब्राह्मणोऽग्नीनादधीतेतिवचनाद्यजमानस्यैवाधिकार उत "क्षौमे वाससी परिधाय जायापती अग्निमादधीयाताम्" **इत्यापस्तम्बसूत्राद्भार्यायजमानयोरेवेति** । अत्रापि सवर्णानेकभार्याविशिष्टयोरेव । उत ज्येष्ठयैव सहितस्येति । नाद्यः । **इतर**निरपेक्षसाधनत्वप्रतीतावपि तस्य कालमात्रविधायकत्वात् । अत एव "वसन्ते ब्राह्मणः, ग्रीष्मे राजन्यः, शरदि वैश्य" इत्यादि पठ्यते । "सपत्नी पत्या सुकृतेन गच्छताम् । यज्ञस्य युक्तौ धुर्यावभूताम्" इत्यादिपरिपठितमन्त्रलिङ्गा**दापस्तम्बसूत्राच्च** द्वितीय एव पक्षः सिद्धान्तः ।

ननु जायापती इति द्विवचनश्रवणात्तृतीयपक्षानुत्थितिरेव । किंतु चतुर्थपक्षस्यैवोत्थितिः । अत एव "सवर्णासु विधौ धर्म्ये ज्येष्ठया न विनेतरा" इति **याज्ञवल्क्यः** ( अ. १ श्लो. ८८ ) । यद्वा "सवर्णया ज्येष्ठभार्ययैव समन्वित" इति **मण्डनश्च** संगच्छते इति चेत्। ज्येष्ठारहितमध्यमादेर्विनियोगनिषेधेन धर्मानुष्ठाने सर्वासां साहित्याभ्यनुज्ञानात् । अत एव "भार्याः सन्तीह यावत्यस्ताभिः सर्वाभिरन्वित" इति **मण्डनोक्ति**रुपपद्यते । न च युगान्तरे क्षत्रियादेः परिग्रहस्योक्तत्वेन क्षत्रियादेः साहित्यबोधकता तस्य स्यादिति वाच्यम् । "सत्यामन्यां सवर्णायां धर्मकार्यं न कारयेत्" इति ( अ. १ श्लो. ८८ ) **याज्ञवल्क्यै**[1]कवाक्यतया सवर्णानेकपरत्वेन तद्व्याख्यानस्योचितत्वात् । न च जायापती इत्युत्पत्तिवाक्यादौ द्विवचनासंगतिः तादृशसंस्काररूपजायात्वेन सर्वासां ग्रहणात् । अत एव "धर्मप्रजासंपन्ने दारे नान्यां कुर्वीत । अन्यतराभावे कार्या प्रागग्न्याधेयात् आधाने हि सती कर्मभिः संबध्यते" इति **आपस्तम्बसूत्रम् ।** ( २।५।११।१२-१४ ) अग्निहोत्रपुत्रादिसंपन्ना चेद्भार्या भवति तदा विवाहो न कर्तव्यः । द्वयोर्मध्ये एकस्याभावेऽवश्यंकर्तव्य आधानात्प्राक् । कुतस्तदाह आधने हीति । आधानकर्मणि यासां संबन्धस्ता एवाग्निहोत्रादिभिः संबध्यन्ते नान्या इत्येतदर्थकं संगच्छते ।

नन्वस्त्वनेकभार्याभिः सहैवाधानादिकं कर्म । तत्र तु तासां तस्य च सान्निध्यमेव विवक्षितम् । उतान्यतमसत्तयाऽपि निर्वाहः । अत्राहुः । यजमानस्य द्रव्यार्जनार्थं प्रवासस्य विहितत्वेन तत्सान्निध्यस्यानवश्यकत्वात् । अत एव "यजमानमात्रस्य सत्वेन नाग्निनाश इत्युक्तिरापाततः पत्नीवत् यजमानसंबन्धव्याप्तिबोधकवचनस्याभावात् पत्नीवदस्याग्निहोत्रं भवति स्वआयतने पत्न्युपविशतीति" **आपस्तम्बसूत्रम ।** पत्न्याः नित्यतत्संबन्धबोधकम् । तथाहि पत्नीवदिति मतुप्न वतिः तेनायमर्थः । अस्य यजमानस्य पत्नीसंबन्धविशिष्टमग्निहोत्रं कर्म भवति । अस्येति षष्ठ्या मतुपा चोभयसंबन्धवैशिष्ट्यविधानादन्यतरसत्तायां न भवति। विधुरस्य कर्म नेति यावत् । अनेनोभयोः संबन्धे बोधिते पुनः स्व आयतने पत्न्युपविशतीति पत्न्याः संबन्धबोधनं वृथेति । तस्मात्कर्मजन्मफलभोक्तृत्वस्योभयनिष्ठत्वेऽपि पत्नीसंबन्धरहितं कर्म नानुष्ठेयं पत्न्याश्चाग्निसंबन्धो नित्य इत्यनेन प्रदर्शितं तथा च पत्न्युपरमवत्पत्नीसंबन्धराहित्यमपि पुनराधेये निमित्तम् । एवं च पत्न्यन्तरसंबन्धसत्त्वेन न दोष इति तु पत्न्युपरमेऽपि तुल्यम् । एतेन

"एकस्यामप्यतिक्रान्त्यामग्निहोत्रसमीपतः । पतिस्तिष्ठति चेदग्निनाशो नेत्यपरे विदुः" ॥

इत्यनेन यजमानमात्रसत्तायां नाग्निनाश इति बोधनात्पत्न्यन्तरसत्त्वेऽपि तन्नाश इति वक्तुमप्यनुचितमिति परास्तं पत्न्यन्तरोपरमस्य पुनराधेयनिमित्तत्वोक्तेर्वैयर्थ्यात् कारणविशेषादसंनिहिते पत्न्यन्तरे पत्न्यन्तरमादाय कर्मान्तरमपि स्यात् त्वदुक्तरीत्याऽग्निनाशस्यासत्त्वात् । कर्मान्तरसंबन्धः सर्वासां सांनिध्याभावान्नेति चेत्प्रतिदिनं क्रियमाणस्याग्निहोत्रहोमस्यापि कर्मान्तरत्वात्त्वदिष्टतत्सिद्ध्यनापत्तेः ।

**तत्रायं निष्कर्षः ।** आधाने सवर्णानां सर्वासां संबन्ध आवश्यकः न केवलाया ज्येष्ठाया इति सवर्णासवर्णासंनिधौ तु सवर्णाया एव ज्येष्ठाया इति । अत एव यद्वा सवर्णयेति **मण्डन**पक्षोपपत्तिः । अन्यवियोगस्तु सदा सति संभवे न सर्वासां तदभावे ज्येष्ठाया एव मुख्याधिकारित्वात् । इतरासां यजमानस्य च यथारुचि । अत एव

---

१ मूलैकवाक्यतया इति पाठः ।

"ज्येष्ठा चेदग्निसंयुक्ता गच्छत्वन्या यथारुचि । यजमानेन सहिता यद्वा ता एव केवलाः" ॥

इति **मण्डनः** संगच्छते इति । आपत्तौ सर्वासां सांनिध्यासंभवे ज्येष्ठाया एवोचितत्वं तस्याश्च मुख्याधिकारित्वात् ।

श्रौतानेकमतप्रवर्तकाचार्यशिरोमणि**जयसिंहस्तु** ज्येष्ठां राणावतीं त्यक्त्वा इतराभिः सह श्रौतं जातं संपादितवान् ।

"वदन्बौधायनस्त्वित्थमेका चेदग्निसंनिधौ । इतरासां यथाकामं प्रवासमनुमन्यते" ॥

इति **मण्डनोक्तिश्च** तस्यानुकूला । तथापि **मण्डन**स्यात्यापत्तिविषयत्वेन यथाकाममनुष्ठानाबोधकत्वात् । प्रकृते तु विलक्षणापत्तौ यस्याः कस्याश्चित्सांनिध्यमादाय नाग्नेर्लौकिकत्वं संपादनीयम् । अन्यथा दोष एव सुतरामिति प्रतिभाति प्रायेण वृद्धयाज्ञिकव्यवहारोऽपि तथा वरीवर्तीति विभावनीयम् । ज्येष्ठाया असंनिधानेऽपि कनिष्ठया सह अग्निहोत्रादिकं कर्म यथापूर्वं कर्तव्यमेव । तथाहि ।

"बहुभार्यस्य दाराणां प्रवासे समुपस्थिते । एकस्याः संनिधानेऽपि पतिः कुर्याद्यथोदितम्" ॥

तथा **त्रिकाण्डमण्डने** ।

"वदन्बौधायनस्त्वेवमेका चेदग्निसंनिधौ । इतरासां यथाकामं प्रवासमनुमन्यते" ॥ इति ।

**भवभाष्येऽपि** ।

"बहुभार्यस्य एकस्याः संनिधाने तया सह । अग्निहोत्रादिकं कुर्यात्" इति

**सत्याषाढसूत्रवैजयन्तीव्याख्यायामपि** । बहुभार्यस्य एकया सहभावेऽपि न दोष इति । यजमानस्य पत्न्याश्च उभयोः प्रवासे प्राप्ते विकल्प उक्तः ।

"पत्नीनां गृहिणश्चापि प्रवासे समुपस्थिते । संनिधाने तदाऽग्नीनां ज्येष्ठायाः कश्चिदिष्यते ॥
"बौधायनीयसूत्रं तु भवभाष्यं च कारिकाः । त्रिकाण्डमण्डनश्लोकान्वैजयन्तीं च पञ्चमीम् ॥
"निरीक्ष्य बहुपत्नीकां निर्णयस्त्वयमीरितः" ।

प्रमादादग्नित्यागे दोष उक्तः 'वीरहा वा एष देवानां योऽग्निमुद्वासयते' इति ।

## अथ जीवत्पित्रादिधर्माः ।

तत्र **कर्म** त्रिविधम् । नित्यं नैमित्तिकं काम्यं च । त्रिविधमपि प्रत्येकं त्रिविधम् । विहितं निषिद्धं पर्युदस्तं च । तत्र संध्योपासनसुरापाननिषेध उद्यदादित्येक्षणवर्जनानि **नित्यानि** । ग्रहणस्नानविधानगुर्विणीपतिकर्तृकसमुद्रस्नाननिषेधजीर्णवस्त्रवर्जनानि **नैमित्तिकानि** । लक्षहोमविधानायुःकामाधिकारिकतिथिविशेषीयतैलादिनिषेधगुर्वादिनामग्रहणवर्जनानि **काम्यानि** ।

ईदृशानि कर्माणि जीवदजीवत्पितृकसाधारण्येन कथनाज्जीवत्पितृकस्य तेष्वधिकारो निराबाधः । यानि तु विशिष्य जीवत्पितृकं प्रति निषिद्धानि पुनः प्रतिप्रसूतानि प्रतिप्रसवोत्तरं पुनर्निषिद्धानि च

तान्युच्यन्ते। तत्र काष्ठमय्यौ पादुके तर्जनीरूप्यधारणमुत्तरीयार्थतृतीययज्ञोपवीतधारणं च निषिद्धम्। उत्तरीयं नाम सग्रन्थिपरिमण्डलं वस्त्रम्। सूत्रैः कृतमेकवृत्तं परिमण्डलमेकद्वित्रिचतुरङ्गुलपरिणाहं च। रागादिप्राप्तानामेवैषां निषेधः। यत्र तु नित्यनैमित्तिककाम्येष्वाहत्य पादुकादिधारणं विहितं न तस्य निषेधः। जीवदग्रजस्याप्येते निषिद्धाः। तदुक्तं **वृद्धमनुना**।

"पादुके चोत्तरीयं च तर्जन्यां रूप्यधारणम्। न जीवत्पितृकः कुर्यात् ज्येष्ठे भ्रातरि जीवति"॥ इति।

एवं प्राथमिका आधानाग्निहोत्रदर्शपूर्णमासेष्टिदर्शेष्टिसोमयागवानप्रस्थाश्रमवदस्वीकारमन्त्रदीक्षास्वीकाराः। अकृताधानादिके अधिकारिणि पितरि जीवति तादृशे पितामहे वा जीवति तादृशे ज्येष्ठे सोदरे वा जीवति निषिद्धाः। सोदरत्वं चैकमात्रुत्पन्नत्वे सत्येकपित्रुत्पन्नत्वम्। तेन चैकमातृके पाण्डववत् द्वैपितृके च तादृशे ज्येष्ठे जीवति न निषिद्धाः। अत्र **त्रिकाण्डमण्डनः**।

"क्षेत्रजादावनीजाने विद्यमानेऽपि सोदरे। नाधिकारविघातोऽस्ति भिन्नोदर्योऽपि चाग्रजे"॥ इति।

पितृपितामहसोदराणामधिकारिणामप्याज्ञामन्त्रे तु नाधानादिनिषेधः। **तदुक्तं तत्रैव**

"पिता यस्याग्रजो भ्राता न कुर्याद्वा पितामहः। तयोऽग्निहोत्रं यज्ञं वा ऽऽज्ञया कुर्यात् कदाशयात्"॥ इति।

एवं तेषु व्यसनित्वनास्तिक्यान्धत्वपङ्गुत्वबाधिर्यादिनाऽनधिकृतेषु तु तदाज्ञाविरहेऽप्यदोष इति।

**अन्ये** तु यदि पित्रादयः पातित्यजात्यन्धत्वादिना सर्वथाऽनधिकारिणस्तदैव तदाज्ञयाऽऽधानाद्यधिकारः। यदि तु कादाचित्कान्धत्वनास्तिक्यादिभिस्तत्कालमनधिकारेऽपि तदपगमे पुनः करणसंभावना तदाऽनुज्ञयाऽपि नाधिकारः। यदाऽपि अत्यन्तनास्तिक्यनाधानकरणसंभावनापितृपितामहविषये निवृत्ता तदाऽऽज्ञया नाधिकारः। अग्रजस्य तथात्वे तु तदाज्ञयाऽधिकारः।

"ज्येष्ठे श्रद्धाविहीने सत्याधानं तदनुज्ञया। पितः सत्यप्यनुज्ञाने नादधीत कदाचन"॥

इति **त्रिकाण्डमण्डनोक्त**मित्याहुः। एवं पित्र्यं जीवत्पितृनोक्तम्। तत्र **सङ्ग्रहकारः**।

"न जीवत्पितृकः पित्र्यं कुर्यात्खड्गं न धारयेत्। न कुर्वीतापसव्यं च न कुर्वीतापि मण्डनम्॥

"आप्रकोष्ठात्प्रकर्तव्यं मातापित्रोस्तु जीवतोः"॥ इति।

सपिण्डीकरणान्तश्राद्धजन्यापितृभावापत्तिमन्तो मनुष्यपितरः। अग्निष्वात्तादयस्तु देवपितरः। तत्र मनुष्यपित्राश्रयेणाविहितानि श्राद्धतर्पणस्वधावाचनपितृतृप्त्यर्थदानादीनि पित्र्याणि। तानि च नित्यादिभेदेन त्रिविधान्यपि अहरहरमावास्यादौ सूर्यग्रहणादौ पुत्रादिफलार्थतया च विहितानि सर्वाण्यप्यविशेषेण निषिद्धानि। **सङ्ग्रहे तु**।

"दर्शश्राद्धं गयाश्राद्धं श्राद्धं चापरपक्षकम्। न जीवत्पितृकः कुर्यात्तिलैः कृष्णैश्च तर्पणम्"॥ इति।

**अथ तेषु प्रतिप्रसवः**। स्वस्य द्वितीयादिविवाहाङ्गभूतं नान्दीश्राद्धं स्वकीयापत्यस्य गर्भाधानादिविवाहान्तसंस्काराङ्गभूतं च लक्षहोमतुलापुरुषादिशान्तिकपौष्टिककर्माङ्गभूतं च चातुर्मास्यान्त-

---

१ उत्तरीय इति पाठः।

र्गतमहापितृयज्ञे सोमयागीयतृतीयसवने च पुरोडाशखण्डैः क्रियमाणं पिण्डदानम् "उत्पन्ने ब्राह्मणस्योक्तं मांसं क्षत्रियवैश्ययोः" इत्यादिनिगमाद्युक्तविशिष्टद्रव्यस्य त्रिणाचिकेतात्रिमधुत्रिसुपर्णत्वाद्युत्तमगुणयुक्तब्राह्मणस्य च संपत्तौ विहितं च तीर्थेषु परिगणिता वा समुद्रगामिनीर्नदीः क्षेत्राणि वोद्दिश्य प्रसङ्गाद्वा गमने तन्निमित्तकं तीर्थश्राद्धं तदङ्गभूतमादावन्ते च क्रियमाणं घृतदधिश्राद्धद्वयं च वाणिज्याद्युद्देशेन गमने मध्ये प्रसङ्गाद्गयाप्राप्तौ सत्यां तन्निमित्तकं तीर्थश्राद्धं च तच्चरमाङ्गभूतं घृतश्राद्धं द्वयं च पञ्चस्वन्वष्टकासु विहितं च पिण्डपितृयज्ञकरणपक्षे श्रौताग्निमता स्मार्ताग्निमता वा क्रियमाणं पाक्षिकं पिण्डदानं मातुः क्षयाहश्राद्धं च न निषिद्धम् ।

तथा च **मैत्रायणीयपरिशिष्टे** ।

"उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे । तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः" ॥

उद्वाहोऽत्र द्वितीयादिः प्रथमे पितुरेवाधिकारात् । पुत्रजनने जातकर्माणि इदमपत्यसंस्कारमात्रोपलक्षणं पित्र्येष्ट्यां चातुर्मास्यान्तर्गतायां सौमिके मखे तार्तीयसवनिकैः पुरोडाशखण्डैः स्वचमसाधस्तात्पिण्डदानं ब्राह्मणे आयाते त्रिमधुस्त्रिसुपर्णक इत्यादिगुणयुतविप्रसंपदि च । तथा च ।

"अग्र्यः सर्वेषु वेदेषु श्रोत्रियो ब्रह्मविद्युवा । वेदार्थविज्ज्येष्ठसामा त्रिमधुस्त्रिसुपर्णकः" ॥ इति **सुमन्तुः** ।

तथा च जीवतः पितुः पुत्रस्यैते श्राद्धकालाः षडिति सिद्धम् ।

तथा च **हारीतः** ।

"महानदीषु सर्वासु तीर्थेषु च गयामृते । जीवत्पिताऽपि कुर्वीत श्राद्धं पार्वणधर्मवत्" ॥ इति ।

**स्मृतिसङ्ग्रहे** तथा **परिशिष्टे** ।

"अन्वष्टक्यं गयाप्राप्तौ सत्यां यच्च मृतेऽहनि । मातुः श्राद्धं सुतः कुर्यात्पितर्यपि च जीवति" ॥ इति ।

"येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकः" । इति **सुमन्तुः** ।

"अनग्निकोऽपि कुर्वीत जन्मादौ वृद्धिकर्मणि । येभ्य एव पिता दद्यात्तानेवोद्दिश्य पार्वणः" ॥ इति **हारीतः** ।

तथा अपुत्रायाः सपत्नमातुरपुत्रस्यापत्नीकस्य पितृव्यस्य तादृशस्यैव सोदरस्यासोदरस्य वा ज्येष्ठभ्रातुस्तादृशस्यैव मातामहस्यौर्ध्वदेहिकं सर्वं महालयानन्तरप्रतिपदि मातामहादिश्राद्धं च न निषिध्यते । "पितृपत्न्यः सर्वा मातरः" इति **सुमन्तु**स्मरणात् ।

"सर्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत् । सर्वास्तास्तेन पुत्रेण पुत्रिण्यो **मनु**रब्रवीत्" ॥

तथा **भविष्ये** ।

"दौहित्रपुत्रदाराश्च ये कनिष्ठाः सहोदराः । निःसंताना मृता ये च तेभ्योऽप्यत्र प्रदीयते" ॥ इति ।

"अपुत्रस्य पितृव्यस्य श्राद्धादिपितृवद्भवेत् । भ्रातॄणामेकजातानां ज्येष्ठो भ्राता पितुः समः" ॥ इति ।

तथा च **योगियाज्ञवल्क्यः** ।

"जातमात्रोऽपि दौहित्रो विद्यमानेऽपि मातुले। आश्विनस्य सिते पक्षे श्राद्धं कुर्यात्प्रयत्नतः" ॥ इति।

एवं पिता यदि संन्यस्तः पतितो वा तदा नित्यादिभेदेन त्रिविधान्यपि श्राद्धानि सर्वाण्यपि कार्याणि ।

तत्र **सङ्ग्रहः ।**

"वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति। येभ्य एव पिता दद्यात्तेभ्यो दद्यात् स्वयं सुतः" ॥ इति।

**तर्पणम् ।** सुमन्त्वादीनां देवपितॄणां तर्पणं भवत्येव । एवं स्नानाङ्गतर्पणं प्रधानभूतमग्निष्वात्तादितर्पणं च श्राद्धाङ्गभूतं परेऽहनि क्रियमाणं मनुष्यपितृतर्पणं च न निषिद्धम् । एवं कार्तिककृष्णचतुर्दश्यां विहितं यमतर्पणं कार्तिकशुक्लैकादशीप्रभृतिषु पञ्चसु दिनेषु माघकृष्णाष्टम्यां च विहितं भीष्मतर्पणं च भवति ।

"जीवत्पिताऽपि कुर्वीत तर्पणं यमभीष्मयोः ।" इति **पद्मपुराणात् ।**

तीर्थश्राद्धाशक्तौ प्रतिनिधित्वेन विहितं पितृतर्पणं च भवति । एतेषु तर्पणेषु तिला निषिद्धाः । देवतर्पणे शुक्लतिलानां न निषेध इति केचित् । सर्वतर्पणेष्वपि तिलसामान्यं निषिध्यत इत्यनेन जीवत्पितृकः कुर्यात् । 'तिलैः कृष्णैश्च तर्पणम्' इति **सङ्ग्रहकारवचनात् ।** सर्वत्र शुक्लतिला ग्राह्या इति । तर्पणेऽपि वस्त्रनिष्पीडनं न कार्यम् । एवं खड्गमुद्रिकादिधारणपूर्वकं खड्गपात्रेण वा तर्पणं न कार्यम् ॥ किं तु केवलहस्तेनैव कार्यमिति । तथाऽपसव्यमपि निषिध्यते । तत्राप्याप्रकोष्ठादपसव्यं कर्तव्यमेव । निषेधस्तु प्रकोष्ठादुपर्येवेति शिष्टाः । श्राद्धप्रतिनिधिपिण्डदानं तु न भवति ।

"न जीवत्पितृकः कुर्याद्वस्त्रनिष्पीडनं बुधः। न कुर्वीतापसव्यं च पित्र्ये खड्गं न धारयेत्" ॥ इति **सङ्ग्रहे ।**

श्राद्धे अर्घ्यपात्रेऽपि खड्गनिषेधः । एवं पिण्डदाननिषेधोऽपि । यानि जीवत्पितृकस्य नान्दीश्राद्धादीनि संन्यस्तपितृकस्यामावास्याग्रहणादिश्राद्धानि प्राप्तानि तानि व्यतीपातादिश्राद्धवदपिण्डकान्येव कार्याणीति केचित् । एतत्सङ्कल्पश्राद्धमेव सर्वत्र जीवत्पितृकेण कार्यमिति केचित् । सङ्कल्पस्वरूपमाह **वसिष्ठः ।**

"आवाहनं स्वधाशब्दं पिण्डोऽग्नौकरणं तथा । विकिरं पिण्डदानं च सांकल्पे षड्विवर्जयेत्" ॥

स्वधा स्वधोच्यतामिति शब्दः । पिण्ड उच्छिष्टपिण्डः । केचित्तु "पिण्डमात्रं प्रदातव्यमभावे द्रव्यविप्रयोः" इति विहितं श्राद्धाशक्तौ तत्प्रतिनिधिभूतां पिण्डदानमेव निषिद्धं नान्यदित्याहुः । अन्ये तु होमान्तपिण्डपितृयज्ञपक्षे पिण्डदानाभाव एव निषेधेनानूद्यते न किमपि निषिध्यत इत्याहुः । मातुः क्षयाहे सपिण्डीकरणोत्तरभाविमासिकेष्वान्वष्टक्ये च गयायां च कदापि पिण्डदानं न निषिद्धम् । पूर्वलिखितप्रतिप्रसववाक्यात् । पिण्डदानविषयस्तु **आश्वलायनश्रौतसूत्रस्थ**पिण्डपितृप्रकरणे स्पष्टः । एवं प्रेतवहमालङ्करणदहनादिसपिण्डीकरणान्तमौर्ध्वदेहिकं च न कुर्यात् । न जीवत्पितृकः कुर्यादिति वचनात् । मातुरुपाध्यायस्याचार्यस्य पितृव्यज्येष्ठाग्रजमातामहादेश्च मरणे वहनादिसपिण्डनान्तं प्रेतकर्म कुर्यादेव ।

**मत्स्यपुराणे ।**

"यथा व्रतस्थोऽपि सुतः पितुः कुर्यात्क्रियां नृप । उदकाद्यां महाबाहो दौहित्रोऽपि तथार्हति**॥**

"अपुत्रस्यापि दौहित्रो वार्षिकं पितृवच्चरेत् " ॥ इति ।

"पितृव्यभ्रातृमातॄणां एकोद्दिष्टं न पार्वणम् " इति **पुलस्त्यः ।**

तथा

"भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान्भवेत् । सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् " ॥

'ज्येष्ठो भ्राता पितुः समः' इति च । यद्यविभक्तास्तदा ज्येष्ठ एव कुर्यात्। यदा विभक्तास्तदाऽपि पितुः सर्वेषां वा धनमेकीकृत्य ज्येष्ठ एव कुर्यात् । सपत्नभ्रातृषु त्वविभक्तेष्वपि स्वस्वमातुः कनिष्ठोऽपि तत्तत्पुत्रः कुर्यादेव मुख्यपुत्रत्वात् । विभक्तेषु तु स्वधनेनैव । एवं स्वस्वमातामहतत्पत्न्यादिमरणे । यदा तु ज्येष्ठस्य मुख्यस्य चासंनिधिस्तदा कनिष्ठो गौणोऽपि दाहादिदशाहान्तमेव कुर्यात् । अत्र चैकोद्दिष्टपार्वणयोर्विकल्पः पितृश्राद्धवत् । यदा तु पितामहीप्रपितामह्योरन्यतरस्यां वा जीवन्त्यां माता मृता तदा मातुरेकोद्दिष्टमेवेति व्युत्क्रममृतसपिण्डीकरणाभाववादिनः । तत्सत्त्ववादिनस्तु, पितामह्यां जीवन्त्यां मात्रे प्रपितामह्यै वृद्धप्रपितामह्यै चेति तिसृभ्यो दद्यात् । प्रपितामह्यां जीवन्त्यां तु मात्रे पितामह्यै वृद्ध प्रपितामह्यै च । उभयस्यां जीवन्त्यां तु मात्रे वृद्धप्रपितामह्यै वृद्धतरप्रपितामह्यै चेति सर्वत्र पार्वणमेवेत्याहुः । प्रयोगस्त्वत्र वृद्धप्रपितामहीत्येव न पुनरस्मत्पितृपितामहीत्यादि द्रष्टव्यम् । सपत्नमातुरपि मुख्यपुत्रासत्त्वे स्वयमेव कुर्यात् । तत्र चैकोद्दिष्टमेव । एवं मातामहस्य पुत्रपत्न्योरविभक्तानुजस्याविभक्तभ्रातृव्यस्य च विरहे विभक्तानुजसत्त्वे विभक्तभ्रातृव्यसत्त्वे वा स्वयमौर्ध्वदैहिकादिकं सर्वं कुर्यात् । मातामह्या अपि गौणमुख्यपुत्रपतिरहितायाः कनिष्ठदेवरस्यापि देवरपुत्रस्य चाविभक्तस्याभावे विभक्तयोस्तयोः सत्त्वे वा स्वयं कुर्यात् । महालयानन्तरं प्रतिपदि तु मातुलसत्त्वेऽपि स्वयं कुर्यात् । मातामहश्राद्धं च पार्वणम् । एवं यदि पिता संन्यस्तः पतितो वा तदाऽमावस्यादावहरहश्च क्रियमाणानि नित्यश्राद्धानि ग्रहणादौ क्रियमाणानि नैमित्तिकानि आयुराद्यर्थं विहितानि काम्यानि च सर्वाण्यप्यविशेषेण पित्रिन्यदेवताभ्यः कुर्यात् ।

अत्र **केचित् ।** यदि संन्यस्तादिर्जीवत्पितृको मृतमातृको मृतमातामहकश्च स्यात्तदा स्वपितुः पित्रादित्रयाय दत्वा स्वमात्रादित्रयाय स्वमातामहादित्रयाय च दद्यात् । स एव जीवन्मातामहको मृतकश्चेत्पितुः पित्रादित्रयाय स्वस्य मात्रादित्रयाय पितुर्मातामहादित्रयाय च दद्यात् । एवं स्वमातामह्यां मृतायां स्वीयायैव मातामह्यादित्रयाय दद्यात् । जीवन्त्यां तु तस्यां पितृसंबन्धिने त्रयाय दद्यादिति वदन्ति ।

**साम्प्रदायिकास्तु** मृतमातृमातामहादिकोऽपि पितुर्मातृमातामहादिभ्य एव दद्यादित्याहुः। तत्रास्मत्पितुः पितृपितामहप्रपितामहानामस्मत्पितुर्मातृपितामहीत्यादिरीत्यैव प्रयोगः कार्यो न पुनरस्मत्पितामहप्रपितामहवृद्धपितामहानामित्यादिरीत्या यत्र तीर्थमहालयादावनेकदेवत्यत्वं तत्र स्वमातुः पितृव्यस्य भ्रातुरन्येषां चास्मत्पितुः पत्न्या अस्मत्पितुर्भ्रातुरस्मत्पितुः पुत्रस्येत्यादिरीत्यैव प्रयोगो न पुनरस्मन्मातुरस्मत्पितृव्यस्यास्मद्भ्रातुरित्यादिरीत्या । असंन्यस्तेन पित्रा प्रेरितो यदि तत्प्रतिनिधित्वेन स्वयं

श्राद्धं करोति तदाऽस्मत्पितुरित्यस्य स्थानेऽमुकस्य यजमानस्येति वाच्यम् । न पुनरस्मत्पितुरिति विशेषः स्वाधिकारिकेषु मातृमातामहभ्रातृव्यादिवार्षिकेषु तु अस्मन्मातुरित्यादेव प्रयोगो न पुनरस्मत्पितुः पत्न्या इत्यादिः । यदि तु द्वित्रा भ्रातरः परस्परं विभक्तास्तदा सर्वेऽपि पूर्वोक्तानि श्राद्धानि पृथक् कुर्युः । और्ध्वदैहिके तु विशेषः । यदा त्वविभक्तास्तदा ज्येष्ठ एव कुर्यात् तदशक्त्यादौ तु कनिष्ठोऽपि तदनुज्ञया कुर्यात् । यदा तु सापत्नभ्रातरस्तदा द्वैमातृके ज्येष्ठेऽपि सति कनिष्ठ एव स्वमातृवार्षिकाऽऽन्वष्टक्यादिकं स्वमातामहादिवार्षिकं च कुर्यात् । यदा चाविभक्तेष्वपि भ्रातृषु कस्यचिदेव सुतसंस्कारः स्वद्वितीयाद्युद्वाहो वा प्रसक्तो भवति तदा स एव तदङ्गभूतं वृद्धिश्राद्धं कुर्यात् । अथ यद्यविभक्तेष्वेकैक एव पितरं विना तीर्थं गच्छति तदा स एव तीर्थश्राद्धं पित्रिज्यदेवताभ्य उक्तप्रयोगेण कुर्यात् । पितरं विना भ्रातॄणां सर्वेषां सहैव गमने चेत् ज्येष्ठ एव कुर्यात् । पित्रा सहाविभक्तास्तीर्थं गताश्चेत्पित्रैव कुर्यान्न पुत्राः । पित्रा सह विभक्ताः परस्परमविभक्ताश्चेत्तदाऽपि ज्येष्ठ एव कुर्यात् । यदा पित्रा सह परस्परं च विभक्ताः पुत्रास्तीर्थं प्राप्तास्तदा पित्रा कृतेऽपि तीर्थश्राद्धे स्वयमपि पार्थक्येन कुर्युः । पितुरशक्त्यादौ तत्प्रतिनिधित्वेन त्वविभक्तो विभक्तो वा कुर्यादेव । यदि तु पिता तीर्थे वसति तेन सहाविभक्तोऽपि पुत्रो देशान्तरात्तत्रागतस्तदा सोऽपि कुर्यात् । एवमेव ज्येष्ठभ्रातरि तीर्थे वसति कनिष्ठस्य तत्र गमने तीर्थश्राद्धं भवत्येव । अयं च विभक्ताविभक्तविवेकस्तर्पणेऽपि समानो द्रष्टव्यः । अथ यस्य पिता पितामहश्च जीवति द्वावपि सन्न्यस्तौ पतितौ वा स पितामहज्येभ्यः श्राद्धं दद्यात् । तत्र चास्मत्पितुरित्यस्य स्थानेऽस्मत्पितामहस्येत्युक्त्या प्रयोगवाक्यमुक्तरीत्या रचनीयम् । यस्य च प्रपितामहोऽपि जीवति तेन प्रपितामहज्येभ्यो देयमिति **निगमे** । न देयमिति **विष्णुः** । तेन ग्रहणाग्रहणवद्विकल्पः । तथापि दानेऽप्यदानेऽपि प्रत्यवायाभाव इति ।

**अथ हेमन्तशिशिरयोः** कृष्णपक्षनवमीचतुष्टयं सह यानवमीपञ्चमीति पञ्चान्वष्टकाः । ताश्च पञ्चाप्यस्यान्नित्यकाः शक्तौ न पञ्चम्येका । यस्त्वापरपक्षिकश्राद्धनिषेधः स काम्यापरपाक्षिकस्य न नित्यस्य । अत्र स्वमातरि जीवन्त्यां सपत्नमातृभ्यो दद्यात् मृतायां तु तस्यै ताभ्यश्च । तदुक्तं **सूतेन** ।

"सर्वासामेव मातॄणां श्राद्धं कन्यागते रवौ । नवम्यां हि प्रदातव्यं ब्रह्मलब्धवराय ते" ॥ इति ।

तत्र चासावित्यादिमन्त्रेषु सर्वासां नामनिर्देशनकस्मिन्ब्राह्मणेऽर्घ्ये पिण्डदाने चावाहनादिषु च योजना एकनामत्वे च तथैव द्विवचनबहुवचनयोजनादिप्रयोगविशेषो **नारायणवृत्त्यादौ** द्रष्टव्यः । यस्तु संन्यस्तादिपितृकः सन्पितुरिज्येभ्यो दातुमधिकारी स पित्रिज्येभ्यः स्वमात्रादित्रयाय च दद्यात् । तत्र च पितुः पित्रादित्रिकोत्तरं स्वमात्रादित्रिकनिवेशस्ततोऽवशिष्टमिति क्रमः । व्युत्क्रममरणे तूक्तैव रीतिः । तेन यानि श्राद्धानि पिण्डपितृयज्ञविधानेनैव कर्तव्यत्वेनोक्तानि तेषु तद्विकृतिभूतेषु तद्वदेव चत्वारः पक्षाः । यदा च पिण्डपितृयज्ञानारम्भस्तदाऽपि संन्यस्तादिपितृकस्यामावास्यादिश्राद्धं स्मार्तप्रयोगप्रकारेण भवत्येव ।

**अथ वैश्वदेवः** । तत्र पित्रा सह यद्यविभक्ताः पुत्रा एकत्रैव पक्त्वा भुञ्जते तदा पित्रैव तत्कर्तव्यं न पुत्रैः पृथक् । पितुः प्रतिनिधित्वेन तु येन केनापि पुत्रेण कर्तव्यमेव । अविभक्तानामपि देशान्तरगमने सौकर्येण वा यदि पृथक् पाकस्तदा पृथगेव कर्तव्यमिति **केचित्** । **अन्ये** तु

पृथक्पाके कुक्कुटाण्डप्रमाणकमन्नमग्नावमन्त्रकं संप्रहृत्य भुञ्जीयान्न वैश्वदेवं कुर्यादिति वदन्ति अधिकाराभावात् । **तदुक्तम्** ।

"वैश्वदेवासंभवे तु कुक्कुटाण्डप्रमाणकम् । अन्नमग्नौ संप्रहृत्य किल्बिषात्तु विमुच्यते"॥ इति।

यदि तु पित्रैव विभक्ताः पुत्रा, न परस्परं, तदाऽपि ज्येष्ठभ्रात्रैव कर्तव्यं न पृथगननुज्ञैरित्यादिपूर्ववत्। पित्रा सह वा परस्परं वा यदि विभक्तास्तदा सर्वेऽपि पृथक्कुर्युः । विभक्तानामेकपाकस्तु गणान्नतापरं[1]युक्तः । पाकश्च यदि लौकिकाग्नौ तदा वैश्वदेवमपि तत्रैव यदि तु स्मार्ताग्नौ तदा तदपि तत्रैव भवति । अत्र चासंन्यस्तादिपितृकः स्वधापितृभ्य इत्यन्नत्यागं न कुर्यात् । तस्य मनुष्यपितृदेवत्यत्वेन नित्यश्राद्धरूपत्वादिति **केचित्** । येषां मतेऽत्र देवपितर एव देवतेति न नित्यश्राद्धरूपत्वं किंतु **स्वतन्त्र** एवायं पितृयज्ञो देवभूतयज्ञवत्तेषां मते **सुमन्तवा**दितर्पणवदिदमपि कुर्यादिति । सन्न्यस्तादिपितृकस्य तु मतद्वयेऽपि पितृयज्ञो न निषिध्यते। स्नानसामान्ये"नाभिमात्रे जले गत्वा कृत्वा केशान्द्विधा द्विजः" इति विधाय "जीवत्पिता तु कुर्वीत दक्षिणे केशसंचयान्" इत्युक्तेः केशद्विधाकरणेन स्नानं निषिद्धम् ।

दर्शे शीतोदकस्नानं निषिद्धम् । उष्णोदकस्नानं तु न निषिध्यते । मृतमातृकस्य तु शीतोदकस्नानेऽप्यदोषः । दर्शे तीर्थप्राप्तिरुपरागो वा यदि तदा जीवन्मातृपितृकस्यापि नैमित्तिकं स्नानं काम्यं वा न निषिद्धं । तदुक्तं **याज्ञवल्क्येन** ।

"दर्शे स्नानं न कुर्वीत मातापित्रोस्तु जीवतोः । पुत्रः कुर्वन्निराचष्टे पित्रोरुन्नतिजीविते" ॥

तीर्थे तु कर्तव्यम् । तत्र **यमः** । "तीर्थाभावे तु कर्तव्यमुष्णोदकपरोदकैः" इति ।

अथ **मुण्डनम्** । तच्च "मासि मासि गृहस्थानां रागतः प्राप्तम् । अनुभाविनां च परिवापनम्"**इत्यापस्तम्बोक्तं** मृतादल्पवयसां शिरोमुण्डनं च जीवत्पितृकेण कर्तव्यम् । यत्तु चौलोपनयनव्रतविसर्गाधानदर्शपूर्णमासज्योतिष्टोमादिषु नित्यं तीर्थे प्रायश्चित्ते मातृमरणादौ च नैमित्तिकं काम्यतीर्थयात्राद्वादशाहादियज्ञेषु काम्यं च तत्कर्तव्यमेव । श्मश्र्वादिवपनं त्वनिषिद्धम् । शिरःकेशानामपि कर्तव्ये निर्लुञ्छने वा न दोषः । यत्तु कुम्भकन्याकर्कधनुःसंक्रमणेषु रोमखण्डनमात्रं निषिद्धं तन्न जीवत्पितृकविषयमिति **केचित्** । तत्साधारणमेवेति **न्यायविदः** । ब्रह्मचारियज्वयतीनां जीवत्पितृकाणामपि सदा मुण्डनमेव । अत्र **विष्णुः** ।

"गङ्गायां भास्करक्षेत्रे मातापित्रोर्गुरोर्मृतौ । आधाने सोमपाने च वपनं सप्तसु स्मृतम्" ॥

**सङ्ग्रहेऽपि** ।

"क्षौरं नैमित्तिकं कार्यं निषेधे सत्यपि ध्रुवम् । पित्रादिमृतिदीक्षासु प्रायश्चित्तेव तीर्थके"॥ इति।

अत्र आवश्यकानि मूलवाक्यानि संगृहीतानि प्रासङ्गिकानि हेमाद्र्यादिनिबन्धेषु द्रष्टव्यानि ॥८९॥

इति विवाहप्रकरणम् ।

१ गणान्नतापत्तेर्युक्त इति पाठः

# अथ वर्णजातिविवेकप्रकरणम्

तत्र व्यवहितसंगतिमाह। **ब्राह्मणस्येति** । **भवतीति । विवेकमाहेति । इति** शङ्कायां तेषां भेदज्ञानार्थमादौ चातुर्वर्ण्यप्रयोजकमाहेत्यर्थः । भवतीति विवेकमाहेति पाठान्तरम्। तत्रापीति शङ्कायां तेषां भेदं प्रतिपादयितुमादौ तदाहेत्येवार्थः ।

## याज्ञवल्कीये ९० श्लोकः ।

विनिगमनाविरहादाह । **मातापित्रिति** । ब्राह्मणत्वादिजातियोगिन इत्यर्थः । **पुत्रा इति** । अपत्यानीत्यर्थः । तस्योपलक्षणत्वात् । **इति** इत्यस्य अनन्तरमात्रशेषत्वभ्रमनिरासायाह । **सर्वेति** । **विन्नेति** । यथोक्तविधिनोढासु स्त्रीषु इत्यर्थः । एवमप्यनतिप्रसङ्गायाह । **विन्नेति** ।

नन्वेवमेतद्वीत्येवान्यतरोपादानेनान्यतरलाभेऽन्यतरसवर्णग्रहणवैयर्थ्यापत्तिरत आह । **एक इति** । अत्र वर्णत्वं ब्राह्मणत्वादिजातिचतुष्कान्यतमत्वं तद्व्यापकजात्यन्तरं वा। एवं च तद्वति वर्णशब्दो रूढः "चातुर्वर्ण्यं चरेद्भैक्षम्" इत्यादिषु नियमेन ततस्तदुपस्थितेरन्यानुपस्थितेश्च । "सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु । आनुलोम्येन संभूता जात्या ज्ञेयास्त एव ते" इति । **मानवेऽपि** (अ.१० श्लो.५) तुल्यास्वित्यनेन सवर्णानां पत्नीष्वित्यनेनोढानां चोक्तेरेतत्समानार्थतैव तस्य । यज्ञसंयोगे एव तथाप्रयोगात् । अक्षतयोनिषु अन्याभुक्तासु । आनुलोम्यग्रहणं च तदर्थमेव उत्तरान्वयि । यत्तु संकीर्णेष्वपि मूर्द्धावसिक्तादिषु सजातीयपरिणीतोत्पन्नानां तत्सजातीयत्वाद्वर्णग्रहणं जात्युपलक्षणमिति। तन्न संकीर्णजातीनामत्रालक्ष्यत्वात् अग्रे पृथग्लक्षणाच्च । न हि यावत्सजातीयं तत्सर्वमपीह लक्ष्यं गवादेरपि तथात्वापत्तेः । यदि च वर्णत्वमेव तेषु विधीयेत तदा मूर्द्धावसिक्तादीनां वर्णत्वे चतुर्थ्यनन्तवर्णत्वापत्तौ चत्वार एव वर्णा इति प्रसिद्धिविरोधः । एवं च **मनुयाज्ञवल्क्या**भ्यामुपसंहारात् ।

"ब्राह्मण्यां ब्राह्मणाज्जातः संस्कृतो ब्राह्मणो भवेत् । एवं क्षत्रियविट्शूद्रा ज्ञेयास्तेभ्यः स्वयोनिजाः"॥

इति **देवलोऽपि** विन्नापर एव । अत एव तत्र संस्कृतपदं मुख्यार्थकं संस्कारार्हो मुख्यो ब्राह्मणादिरिति तदर्थः । तेन विन्नायां ब्राह्मण्यां वेत्तुर्ब्राह्मणादुत्पन्नत्वमेव ब्राह्मणत्वप्रयोजकम् एवं क्षत्रियादावपि। एवं च विन्नायामसवर्णायामुत्पन्नेऽनुलोममूर्द्धावसिक्तादौ सवर्णायामविन्नायामुत्पन्ने कुण्डक्षेत्रजादावसवर्णायामविन्नायां चोत्पन्ने प्रतिलोमजादौ ब्राह्मणत्वाद्यभावः ।

**तथाहि** । अत्र सजातित्वं नाम मातापितृसमानजातीयत्वं विशिष्टं लक्ष्यमभिमतमिति प्रागुक्तं तत्प्रयोजकमप्युक्तं तदभावे तदभावः । अभावश्च विशेषणतो विशेष्यत उभयतश्च । तत्राद्ये विशेष्यतो द्वितीये कुण्डादौ विशेषणतस्तृतीये उभयतः । तादृशे क्षेत्रजे मातृसाजात्येऽपि उभयसाजात्याभावः । तादृशे तु गोलके तथा विशिष्टाभाव इति । अत एवोक्तं प्रयोजकविकल्पे क्वचिदन्यतरजातीयतापीष्यते इत्यनुपदमेव स्फुटीभविष्यति ।

तदेतदभिप्रेत्य सामान्येनाह । **अतश्चेति । तत्सेति** । उभयेत्यर्थः । विशेषणव्यावर्त्यमाह । **अतश्चेति** । आदिना पौनर्भवक्षेत्रजादिपरिग्रहः । अन्यत्तु प्रागुक्तमेव बोध्यम् । अत्र तु तस्य सर्वशेषत्वप्रतिपादनमात्रपरत्वात्तावन्मात्रमुक्तम् ।

नन्वेवं तेषां प्रागुक्तषड्विधधर्माप्राप्त्या का गतिरत आह । **ते चेति** । तदधिकारे हेतुगर्भं विशेषणमाह । **सवर्णेभ्य इति** । यद्यप्यनुलोमादिशब्दा अनुकूलादौ रूढाः साधुत्वाय तु असताऽप्यवयवार्थेन व्युत्पादनमात्रं क्रियते तथापि प्रादिसमासेन बहुव्रीहिणा वा व्युत्पत्तौ सादृश्यादत्र प्रवृत्तिरित्याह । **अनुलोमेति** । सामान्यधर्मानुक्त्वा विशेषधर्मानप्याह । **शूद्राणां त्विति** । **मनूक्तिरियम्** । पञ्चम्यन्तस्य क्रियायामन्वयः । अर्थान्तरशङ्कानिरासाय मध्ये एवार्थ**माह** । **अपेति** । **अपिः** प्रागुक्तसमुच्चायकः ।

अन्येषां **तदनुक्तेर्विशिष्य मनू**नमाह । **कुण्डेति** । इदमुपलक्षणं पौनर्भवस्यापि । पौनर्भवस्तथा अवकीर्णी कुण्डगोलाविति तदुक्तेः । दोषान्तरमाह । **न्यायेति** । तमुपपादयति । **यो यदिति** । तृतीयदोषमाह । **तथेति** । उक्तदोषद्वयमपीत्यर्थः । इति वक्ष्यति । **तद्विरोधश्चेति** मूलकृदिति शेषः । **इति वचनविरोधश्चेति पाठे** वक्ष्यमाणेत्यादिः । आपदोषमदर्शयति । **ब्राह्मणेनेति** । यत इत्यादिः । एवमग्रेऽपि ।

यत्तु देवरोत्पन्नक्षेत्रजविषयक एव निषेधः । न च तत्र गोलकत्वसंभावनायामपि कुण्डत्वासंभवः । म्रियेतेत्यस्य महारोगाद्युपलक्षणत्वादिति । तन्न । तत्र मानाभावात् । एवं च कुण्डोऽन्यत्र चारया एव मुक्तेरावश्यकत्वमिति । अत्रापि तथानिर्वाहे गोलकत्वमतीतस्य न देवरस्य जारत्वाभावात एवं कुंडत्वादिकं जात्यन्तरमेव ।

यत्तु तथा सति ब्राह्मणत्वादिना साङ्कर्यापत्तेर्न सा जातिः किन्तु अमुनपातिकर्माजारोत्पन्नत्वादिरूप उपाधिः । अत एव तादृशदेवरोत्पन्ने व्यभिचारजत्वेन न ब्राह्मण्यम् । अन्यथा तु तदुत्पन्नस्य एव वा दानोत्तरविवाहस्य युगान्तरविषयत्वाद्देवरोत्पन्नब्राह्मणोऽपि युगान्तरविषय एवेति तन्न । उक्तरीत्या ब्राह्मणत्वादेस्तत्राभावेन साङ्कर्याप्रसङ्गात् । तस्याद्रूपकत्वाच्च पञ्चोपाधिस्तत्र जात्यभिव्यञ्जकत्वाच्च । अत एव **यमः** ।

"जारजातः सवर्णायां कुण्डो जीवति भर्तरि । मृते गोलकनामा तु जातिहीना तथैव तौ ॥
"असवर्णासु नारीषु द्विजरुत्पादिताश्च ये । परपत्नीषु सर्वासु कुण्डास्ते गोलकाः स्मृताः ॥
"मातृवर्णा न ते प्रोक्ताः पितृवर्णा न च स्मृताः । अविद्याताः सुताश्चैषां सम्भूताः पितृमातृतः"॥ इति

एतेन श्राद्धे कुण्डेत्यादिचिन्त्यमित्यपास्तम् । तदुक्तदूषणमत्राह । **यथेति** । एतेन "ब्राह्मणा ऋत्विज" इत्युक्त्वा "हालयवालयपुत्रिकापुत्रपरक्षेत्रजसहोढकानीनानुजावरद्विप्रवर्ग्यान्परिहास्येति" **बौधायनोक्त**निषेधोऽपि व्याख्यातः । मन्वनुगृहीतस्य पौनर्भवस्य सत्त्वेन विप्रापदे उपलक्षकत्वस्य दुर्वचत्वाच्च ।

न च पुनर्भ्वोऽपि शास्त्रीयविधिना विप्रात्वात्सत्यपि विप्रापदे मुख्यार्थस्वीकारे तस्य सावर्ण्यापत्ति स्तदवस्थैव सपिण्डासगोत्रापुनर्भ्वादिषु अपि प्रयुक्तस्य संस्कारस्य भार्यात्वसंपादकत्वेऽपि निषेधाद्दर्शमाः

मिति सिद्धान्तादिति वाच्यम् । पत्नीष्विति **मानवे** 'पत्युर्न' (सू.४।१।३३)इति सूत्रानुगृहीतपत्नीपदोपस्थापितयज्ञसंयोगार्हत्वरूपविशेषस्य ग्रहणेनाक्षतयोनित्वोक्त्या च । तदेकवाक्यतया विन्नापदेनापि तस्य ग्रहणेन तस्या भार्यात्वेऽपि गर्हितत्वेन सहानधिकाराक्षतिप्रसङ्गादिति बोध्यम् । द्वितीयदोषमुद्धरति । **न चेति** । **स्मृतीति** । तद्रूपप्रमाणगम्येत्यर्थः । तदेवाह । **यथेति** । स्मृतिमनतिक्रम्य सा भवतीत्यर्थः । तदेव सदृष्टान्तं विशदयति । **यथेति** । अत एव **वसिष्ठविश्वामित्रादे**रित्यनुपदं स्फुटीभविष्यति ।

ननु "सवर्णेभ्यः सवर्णासु" इत्यत्र किं सवर्णत्वं यदादिमेव तर्ह्यनवस्था अथान्यत्तर्ह्यत्रापि तदेवास्तु कृतमनेनात आह । **मातेति** । **अनादित्वादिति** । तथा च प्रामाणिकत्वात्सा न दोषायेति भावः । एतदर्थमेवाह । **शब्दार्थेति** । द्वन्द्वोत्तरं षष्ठीसमासः । तृतीयदोषं परिहरति । **स चेति** । **च**स्त्वर्थे । अन्यथा व्याख्याने हेतुमाह । **उक्तेति** । एतेन विन्नास्वित्यनुरोधेन तत्रोपचारेण यथासम्भवं साजात्यग्रहणवद्वैपरीत्यं कुतो नेत्यपास्तम् । क्षेत्रजे कुण्डादितो वर्णतश्च विशेषमाह । **क्षेत्रजास्त्विति** । क्षेत्रप्राधान्यादिति भावः । हेत्वन्तरमाह । **नियोगेति** । स्मरणलक्षणब्राह्मणत्वादिजातिगोत्रवत् इति भावः ।

न च तस्य मातृजातीयत्वे कथमध्ययनं विरुद्धमिति वाच्यम् । तस्योपनयनजातीयत्वरूपत्वात् । **अत्रेदं बोध्यम् । नारदवसिष्ठविश्वामित्रादे**र्ब्राह्मणत्वेऽपि विन्नासुवर्णानुत्पन्नत्वेन नाव्याप्तिर्न ह्यत्र साक्षाद्ब्राह्मणत्वादि लक्ष्यते वाक्यभेदप्रसङ्गात् । अव्याप्तेश्च । किंतु मातापितृसाजात्यमेव । **तच्च** ब्राह्मणादिजन्ये ब्राह्मणत्वादौ पर्यवस्यतीत्येतावत् । तत्र च प्रयोजकीभूतं सवर्णोत्पन्नत्वं नारदादितो व्यावृत्तं मातापितृसजातीयत्वं निवर्तयति ।

न चैतद्विरुद्धं न ह्ययोनिजेषु मातापितृजातीयताऽप्याश्रीयते । ब्राह्मणत्वं तु तेषु स्मरणलक्षणम् । ईश्वरानुग्रहप्रयोज्यत्वादाधुनिकविलक्षणमेव सुवर्णकलशे घटत्वमिव । अत एव विन्नास्वित्युपसंहारोऽपि युक्तः । एषः विशिष्टसावर्ण्यात्मा मूर्धावसिक्तत्वादिरूपश्च विधिर्विन्नास्वेवेति तदर्थः । तेनाविन्नायामुत्पन्ने मातृजातियोगिक्षेत्रजे कुण्डादौ च विशिष्टसाजात्यविधिर्नेति फलितम् । वस्तुतस्तु क्षेत्रजे न मातृजातीयत्वमपि मानाभावात् । नियोगस्मरणं हि पुत्रत्वमात्रप्रापकं न तु जातेरपि । पुत्रत्वमपि न तदाक्षेपकमिति वक्ष्यते । नियोगे क्षेत्रप्राधान्यमित्यपि न हतं बीजमन्यक्षेत्रे प्ररोहतीत्यादि **मानव**न्यायात् । क्षेत्रिणः सुत इत्यादि वचनात्स्वतन्त्रत्वाच्च क्षेत्रिण एव प्राधान्यसंभवात्तज्जात्यापत्तेः ।

न चैवं धृतराष्ट्रादीनां क्षत्रियत्वाभावे तद्धर्माचरणासंगतिः । **विष्णुशङ्खादि**वचनैस्तेषामपि क्षेत्रजातीयधर्मातिदेशात् । विन्नत्वादेर्विशेषस्य तत्राश्रवणात् व्यभिचारोत्पन्नेषु तु शूद्रधर्मा एव । क्षत्रियत्वप्रसिद्धिस्तु तद्धर्मानुष्ठातृत्वादप्युपपन्ना मूर्धावसिक्तादिष्विव । एतेन वर्णत्वस्य ब्राह्मणत्वादिव्यापकजात्यन्तरत्वेन तत्प्रयोजकविन्नसवर्णोत्पन्नत्वस्याभावेन कुण्डादेरवर्णत्वे तद्व्याप्यब्राह्मणत्वादेरप्यभाव इत्युक्त्वा क्षेत्रजो मातृजातीय एवेति सिद्धान्तयन्हेमाद्रिरपि निरस्तः । तत्राप्यविन्नोत्पन्नत्वेनावर्णत्वेन तद्व्याप्यजातेरसंभवात् ।

न च विन्नेत्युपलक्षकं कानीनपौनर्भवादेरवर्णत्वस्यैव प्रतिपादकस्वसिद्धान्तोक्तिविरोधापत्तेः । एतेन "अविन्नास्वपि जातानां क्षेत्रजादीनां वर्णत्वस्वीकाराद्विन्नास्विति शास्त्रविहितपुत्रोत्पत्तिप्रकारोप-

लक्षणम् '' **इत्यपरार्को**क्तमपि निरस्तम् । तत्र मानाभावात् । यथाश्रुतोपपत्तेश्च । किं चैवं पौनर्भवस्यापि तादृशप्रकारकत्वाद्वर्णत्वापत्तेः ।

न च पुनर्भूत्पन्नस्य पुत्रत्वं शास्त्रेण विहितम् न तु तस्य तस्यां नियमेनोत्पादनमपीति वाच्यम् । कानीनादीनामप्यसङ्ग्रहापत्तेः । न हि तत्रापि कन्यात्वे व्यभिचरितव्यमिति विधिरस्ति । किं तु तज्जस्य पुत्रत्वेन स्वीकारविधिः समः । न च पौनर्भवस्य वर्णत्वं युक्तम् । सर्ववर्णेष्विति **मना**वक्षतयोनिपदेन तस्य व्युदासात् । अत एव सर्वज्ञेनाप्यक्षतेति वोढुरन्येनासंस्पृष्टास्वित्यर्थः । एतेन पौनर्भवस्याप्यब्राह्मण्यमुक्तमित्युक्तम् । अन्यथा व्यवच्छेद्याभावेन तद्व्यर्थं स्यात् । क्षतयोनिव्यवच्छेदार्थत्वं तु न सामान्यश्रुतेन विन्नास्वित्यनेनाविन्नयोरुभयोरपि तत्संभवात् । किंचोभयविधस्यापि पौनर्भवस्य शास्त्रेण पुत्रत्वेन स्वीकृतत्वादाद्य एवानयोर्मध्ये **मनुना** निरस्येत। तत्रैव त्वदुक्तनिरुक्तिरतिप्रसज्येत। किं च कुण्डादेरिव कानीनादेरप्यवर्णत्वे का तव हानिः । किं चैषामसवर्णत्वं **देवलेनोक्तम् ।**

''द्वितीयेन तु यः पित्रा सवर्णायां प्रजायते । अवरोढ इति ख्यातः शूद्रधर्मा स जातितः ॥

''व्रतहीना न संस्कार्याः स्वतन्त्रास्वपि ये सुताः । उत्पादिताः सवर्णेन व्रात्या इव बहिष्कृताः'' ॥ इति

वर्णत्ववाह्या इत्यर्थः । **व्यासे**नापि ' भार्याजाताः समानाः स्युः संकरः स्युरतोऽन्यथा' इति 'शूद्राणां त्विति' ( अ. ५ श्लो. १४० ) **मनुस्तू**क्त एव । **बौधायनो**ऽप्येवं द्रष्टव्यः । एवं च ब्राह्मणत्वजातिर्भेदचतुष्टयभिन्ना क्वचिदीश्वरमुखजन्यतावच्छेदिकासृष्ट्यादिब्राह्मणे नारदादौ ।

तदुक्तं **सूतसंहितायां शिवमाहात्म्यखण्डे द्वादशाध्याये**

**मुनय ऊचुः**

''भगवन्सर्वशास्त्रार्थपरिज्ञानवतां वर । जातिनिर्णयमस्माकं वद वेदैकदर्शिनम् '' ॥

**सूत उवाच**

''वक्ष्ये लोकोपकाराय जातिनिर्णयमादरात् । अगस्त्योऽपि पुराऽपृच्छन् प्रणम्य वृषवाहनम् ॥
''पुरा सर्वे मुनिश्रेष्ठाः प्रलये विलयं गते । अन्धकारावृते लोके विष्णोरंशो महाद्युतिः ॥
''सहस्रशीर्षा पुरुषो विश्वो नारायणाभिधः । क्षीराब्धौ चिन्तयन्रुद्रं सुष्वाप ब्रह्मवित्तमाः ॥
''कदाचित्पंकजं विप्रास्तरुणादित्यसंनिभम् । तस्य सुप्तस्य देवस्य नाभ्यां जातं महत्तमम् ॥
''हिरण्यगर्भो भगवान् ब्रह्मा विश्वजगत्पतिः । आस्थाय परमां मूर्तिं तस्मिन्पद्मे समुद्बभौ ॥
''तस्य वेदविदां श्रेष्ठा ब्रह्मणः परमेष्ठिनः । महादेवाज्ञया पूर्वं वासनासहजा मुखात् ॥
''ब्राह्मणा ब्राह्मणस्त्रीभिः सहजातास्तपोधनाः । तस्य हस्तात्सहस्त्रीभिर्जज्ञिरे पृथिवीभुजः ॥
''ऊरुभ्यां सहिता स्त्रीभिर्जाता वैश्याः शिवाज्ञया । पद्भ्यां शूद्राः सह स्त्रीभिर्जज्ञिरे वेदवित्तमाः'' ॥ इति ॥

एतेषां कर्माणि तत्र वक्ष्यन्ते । कर्मजन्यतावच्छेदिका **विश्वामित्रादौ** । इदं च 'विश्वामित्रस्तपस्तेपे' इत्यादिना **महाभाष्ये**ऽपि 'अनृष्यानन्त' (सू.४।१।१४०) इति सूत्रे स्फुटम् । ऊढब्राह्मण्यां वोढृब्राह्मणजन्यतावच्छेदिका सर्वेषु ब्राह्मणेषु । देवरजे तु शास्त्रबोध्या । यद्वाऽत्र तृतीयमेव ब्राह्मण्यम् । तत्रापि '' देवरः

पुत्रकाकाम्यया ऋतौ घृताभ्यक्त इयात्'' इत्युक्त्वा यस्या म्रियेतेत्यादिवाक्येन विधानेन विन्देतेत्यनेन पूर्ववाक्योक्तघृताभ्यक्तत्वविशिष्टवेदनरूपविलक्षणविवाहस्योक्तत्वात् । एवं च तत्त्वमव्याहतमिति त्रैविध्यं बोध्यम् । सर्वसाधारणं तु तत्पदव्यवहार्यत्वरूपं तत् बोध्यम् । ''नञ्'' (सू. २।२।६) ''तेन तुल्य'' (सू.५।१।११५) इति सूत्रयोर्**महाभाष्येऽपि**

''तपः श्रुतं च योनिश्चेत्येतद्ब्राह्मणकारकम् । तपः श्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ॥'' इत्युक्तम् ।

सर्वेषां शब्दानां गुणसमूहे वृत्तिः । तपःश्रुतादिसंग्रहायात्र गुणशब्देन पराश्रितं धर्ममात्रमुच्यते । तत्र स्मृतिशास्त्राश्रयेण ब्राह्मणगुणानाह । तप इति । तपश्चान्द्रायणादिकर्म, श्रुतं वेदवेदाङ्गादीनामध्ययनं, योनिर्ब्राह्मणात् । ब्राह्मण्यां जन्म । इदं च दिक्प्रदर्शनम् । तेन याजनादेरपि सङ्ग्रहः । एतत् तपःप्रभृतिब्राह्मणकारकं शेषषष्ठीसमासः । तेन ' कर्तरि च' (सू.२।२।१६) इति समासनिषेधो न । एषां ब्राह्मणोत्पादकत्वाभावेऽपि तद्व्यवहारकारणत्वं गुणसमुदायाभावेऽपि तदेकदेशे प्रयोगदर्शनादाह । तपःश्रुताभ्यामिति । नामो परिपूर्णो ब्राह्मणः ।

न तु तल्लक्षणस्य तत्राभावे कथं ब्राह्मणपरप्रयोग इति चेन्न योनिप्रतिपाद्यजातिरूपैकदेशाश्रयेण तत्र तत् प्रयोगसंभवात् । अयमेव जातिब्राह्मणपदार्थः । अत एव तस्य न सर्वब्राह्मणक्रियास्वधिकारः । तत्र गौणः प्रयोग इत्यत्र जातिपदं तात्पर्यग्राहकमिति यावत् । एवं लोकप्रसिद्धान्बाहुल्येन तथादृष्टान् गुणानाह । '' गौरः शुच्याचारः पिङ्गलः कपिलकेश '' इति ।

नन्वेतेषामिदानीं व्यभिचरितत्वेन कथं तद्व्यञ्जकत्वमत एव बाहुल्येनेत्युक्तमिति चेन्न पुराकल्पे ते तस्य नियमेन व्यञ्जकत्वेन दृष्टा इत्याद्यत्वेऽपि क्वचित्तथादर्शनेन तेषामपि तत्त्वमित्याशयात् । तत्र

''अष्टवर्षा तु या दत्ता श्रुतशीलसमन्विते । सा गौरी तत्सुतो यस्तु स गौरः परिकीर्तितः'' ॥

इति लक्षितो गौरः शुच्याचारोऽनुपहताचारः । पिङ्गलकपिलकेश इत्येकं पदम् । पिङ्गलाः कपिलाः केशा यस्येत्यर्थः । यद्वा पिङ्गल इति वर्णः एतानप्यभ्यन्तरान् ब्राह्मण्ये गुणान्कुर्वन्ति ब्राह्मणशब्दार्थगुणसमुदाये कुर्वन्ति केचिल्लौकिकाः । एते सर्वे ब्राह्मणशब्दजबोधे प्रकारतया भासन्ते इति परमार्थ इतीति दिक् ।

एवं जात्युत्कर्षवति कर्मोत्कर्षवति च ब्राह्मणे ब्राह्मणत्वभेदो बोध्यः । जात्युत्कर्ष इति वक्ष्यमाणोक्तेः । एवं क्षत्रियत्वादिकमपि भिन्नं बोध्यम् । अत्रापि वक्तव्यमनुपदमेव स्फुटीभविष्यति । अतः सिद्धं मूर्द्धावसिक्तादौ कुण्डगोलकादौ च ब्राह्मणत्वं वर्णत्वं च नास्तीति अत्रापि वक्तव्यं तथा । तदेतदभिप्रेत्याह । **इत्यलमिति** ।

उत्तरार्द्धार्थमाह । **किंचेति** । ब्राह्मादिषु चतुर्षु । वर्द्धने करणे ल्युट् । षष्ठीसमासः (सू. २।२।८) तदन्यथानुपपत्त्या तस्यार्थे सहेतुगर्भविशेषणद्वयमाह । **अरोगीति** । तदुक्तं तत्रैव ''ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणो वेदवित्तमाः'' । अस्य दशभेदा अग्रे स्फुटीभविष्यन्ति । ''नृपायां क्षत्रियाज्जातः क्षत्री'' ''विभास्वेष विधिः स्मृतः'' एतद्भेदास्त्रयो ब्रह्मक्षत्रियाद्या अग्रे स्फुटीभविष्यन्ति ।

"वैश्याद्वैश्यस्य वैश्यस्तु सर्वशास्त्रविशारदः । शूद्राच्छूद्रस्य शूद्रस्तु विन्नास्वेष विधिः स्मृतः"॥ इति ॥ ९० ॥

असवर्णोत्पन्नाश्च द्वादशभेदाः । अनुलोमषट्प्रतिलोमषट्भेदात् । तत्राद्योक्तौ संगतिमाह । **वर्णानिति ।**

## याज्ञवल्कीये ९१ श्लोकः

अनुलोमत्वादिकमुक्तं तत्रैव ।

"स्वस्त्रीषु स्वस्य वीर्येन मार्गेणोत्थः स्वयं भवेत् ।

"अवरासूत्तमाज्जातस्त्वनुलोमः प्रकीर्तितः । उत्तमास्ववराज्जातः प्रतिलोम इति स्मृतः ॥

"वर्णस्त्रीष्वनुलोमेन जातः स्यादान्तरालिकः । वर्णासु प्रतिलोमेन जातो व्रात्य इति स्मृतः ॥

"ब्राह्मण्यां सधवायां यो ब्राह्मणेन द्विजोत्तमाः । जातश्चौर्येण कुण्डोऽसौ विधवायां तु गोलकः"॥इति ।

**हिरे**वार्थे । तेन सावर्ण्यनिरासः ।

एवं च परशुरामस्य ब्राह्मणात्क्षत्रियायामुत्पन्न्या मूर्द्धावसिक्तत्वप्राप्तावपि स्वतपोतिशयादीश्वरानुग्रहाद्वा विश्वामित्रादेरिव ब्राह्मणत्वं ब्राह्मणधर्मत्वमेव जातेरुत्पत्तिनिवृत्त्ययोगात् **इति केचित् ।** एतेषां नामान्तराण्युत्तमेभ्योऽवरासु चौर्येण जातास्तत्तज्जातीया भवन्तीति चोक्तम् । तत्रैव

"नृपायां ब्राह्मणाज्जातः सवर्ण इति कीर्तितः । चौर्यादस्यामनेनोत्थो नाम्ना नक्षत्रजीवनः"॥ इति ।

मूर्द्धावसिक्तस्यैव सवर्ण इति नामान्तरम् । एवमग्रेऽपि ।

"वैश्यायां ब्राह्मणाज्जातो निषादो वेदवित्तमः । अस्यामनेन चौर्येण कुम्भकारोऽभिजायते ॥

"ऊर्ध्वनापित एवासौ नाम्ना वेदविदां वराः" ॥

इति **मूलोक्तम् । मनुना**ऽप्युक्तम् । ( अ. १० श्लो. ६ )

"**स्त्री**ष्वनन्तरजातासु द्विजैरुत्पादितान्सुतान् । सदृशानेव तानाहुर्मातृदोषविगर्हितान्" ॥

**अनन्तरेति** विवाहितक्षत्रियादिषु तान्मातुर्हीनजातीयत्वदोषेण गर्हितान्मातापितृसदृशान्न तु तज्जातीयानाहुरित्यर्थः ।

एवं च ते मातृजातेरुत्कृष्टाः पितृजातेर्हीनाः ।

"अनन्तरासु जातानां विधिरेष सनातनः । द्व्येकान्तरासु जातानां धर्म्यं विद्यादिमं विधिम्" ॥

इमं वक्ष्यमाणम् । "ब्राह्मणाद्वैश्यकन्यायामम्बष्ठो नाम जायते" । ऊढायामिति शेषः ।

"निषादः शूद्रकन्यायां यः पारशव उच्यते" ।

"क्षत्रियाच्छूद्रकन्यायां क्रूराचारविहारवान् । क्षत्रशूद्रवपुर्जन्तुरुग्रो नाम प्रजायते" ॥

जन्तुरित्यनेन निषादादप्यस्य नीचता सूचिता ।

"विप्रस्य त्रिषु वर्णेषु नृपतेर्वर्णयोर्द्वयोः । वैश्यस्य वर्णे चैकस्मिन्षडेतेऽपसदाः स्मृताः" ॥
सवर्णा पुत्रेभ्यो हीनाः । एष्वपि पूर्वपूर्वस्मादुत्तरोत्तरे हीनाश्चेत्यर्थः ।

शूद्रायामित्यार्षमिति सूचयन्नाह । **शूद्रायामिति । मत्स्येति** । "शूद्रान्निषादो मत्स्यघ्नः क्षत्रियायां व्यतिक्रमात्" इति **व्यासो**क्तोऽयम् । अव्ययीभावाशयेनाह । **प्रतिलोमज इति** । एवमग्रेऽपि बोध्यम् । **संज्ञेति** । तेन संज्ञिभेदनिरासः । असंकीर्णव्यवहारायेति भावः । एतेनान्यत्रापि संज्ञान्तरसत्ता सूचिता । तत्र त्वनयोर्व्यवस्थोक्ता ।

"शूद्रायां ब्राह्मणेनोत्थो द्विजः पारशवः स्मृतः । चार्येणास्यां निषादोऽभून्नाम्ना वेदार्थवित्तमाः" ॥ इति ।

एवं च संज्ञेभेद एव । एताः सर्ववर्णादिसंज्ञा **देवला**दिभिरप्युक्तास्तथा च निषादपारशवादिवत्संज्ञाविकल्पो ज्ञेयः सर्वत्र । एतदर्थमेवात्र वाशब्दः व्यवहितत्वादाह । **विप्रादितीति** ।

उभयत्र विरोधं परिहरति ।**यस्त्विति** । अस्याशाब्दत्वादाह । **क्षत्रीति** ।

ननु यथाऽनूढोत्पन्नस्यापि क्षेत्रजस्योभयासावर्ण्याद्वर्णत्वेऽपि मातृजातीयत्वमविहतं तथा मूर्द्धावसिक्तादेरसवर्णोत्पन्नत्वेऽपि मातृजातीयतास्तु न तु तज्जात्यन्तरं किंतु नामभेदमात्रमेव निषादपारशवादिवदिति चेन्न । मूर्द्धावसिक्तादेरुत्कृष्टापकृष्टविरुद्धानेककारणसंप्रयोगोत्पन्नस्योभयजातीयत्वकल्पने व्याप्यव्यापकभावानुपपत्तेः साङ्कर्यप्रसङ्गात् । अन्यतरजातिस्वीकारे च विनिगमनाविरहात् । क्षेत्रप्राधान्यस्य निरस्तत्वाच्च । अत एव **मनुः** ( अ. १० श्लो. ७२ )

"यस्माद्बीजप्रभावेण तिर्यग्जा ऋषयोऽभवन् । पूजिताश्च प्रशस्ताश्च तस्माद्बीजं प्रशस्यते" ॥ इति ।

न च निदानेन तुल्यजातीयत्वे प्रमाणमस्ति । यथाहि योन्यपकर्ष उत्कृष्टजातिं वारयति तथा बीजोत्कर्षोऽप्यपकृष्टजातिं किं नैव वारयेत् । प्रत्युत विरुद्धानेककारणसमुत्पन्नस्य परस्परावरुद्धस्योभयतः समाकृष्यमाणायामिव व्यक्तौ स्वतन्त्रजातिप्रयोजकत्वं न्यायोऽनुजानीते नरसिंहनपुंसकादिष्विव । अत एवातिरिक्तचित्ररूपस्वीकारः । किंच मूर्द्धावसिक्तादावनुगतव्यवहारप्रयोजकतया प्रसिद्धक्षत्रियभेदकतया क्षत्रियादुत्कृष्टं ब्राह्मणात्किञ्चिन्न्यूनं मूर्द्धावसिक्तत्वं नाम जात्यन्तरमेवास्थेयम् । असति बाधके उपाधिना तन्निर्वाहस्य जातिमात्रोच्छेदकत्वेनान्याय्यत्वात् । कथं तर्हि **विष्णुः** प्रकृत**शङ्ख**तुल्यः "समानवर्णासु पुत्राः समानवर्णा भवन्ति, अनुलोमास्तु मातृवर्णाः, प्रतिलोमास्तु विगर्हिताः" इति । सत्यम् । नात्र जातिः प्राप्यते प्रकृतवत् । उक्तयुक्तेः । किंतु तत्तज्जातिप्रयुक्तधर्मा एव स्वेच्छाविनियोगत्वात् । युक्तं चैतत् । जातिविधाने हि सर्वथा न्यायो बाध्येत । न च जातिद्वयं स्वीकर्तुमुचितं तद्धर्मातिदेशमात्रेणापि वचनोपपत्तौ तत्कल्पनायां मानाभावात् । धर्मिकल्पनातो धर्मकल्पनाया एव न्याय्यत्वात् । तदेतदुक्तं **मनुना** ( अ. १० श्लो. ६ )

"स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान्सुतान् । सदृशानेव तानाहुर्मातृदोषविगर्हितान्" ॥ इति ।

मातुरसवर्णत्वरूपदोषेण विगर्हितान्पितृवर्णान्न्यूनीकृताँस्तान्मातुः पितुश्च सदृशानेवाहुर्न तु मुख्यं मातापितृजातीयत्वमपि सादृश्यं च तद्धर्मप्राप्त्यादिनैवेति **शङ्ख**स्याप्ययमेवार्थः । अत एव **मनुनोक्तं** ( अ. १० श्लो. १४ )

"पुत्रा येऽनन्तरस्त्रीजाः क्रमेणोक्ता द्विजन्मनाम्।ताननन्तरनाम्नस्तु मातृदोषात्प्रचक्षते"॥ इति।

अनन्तरेत्युपलक्षणम् । अनन्तरैकान्तरद्व्यन्तरजातिस्त्रीष्वानुलोम्येनोत्पन्नाः प्रागुक्तास्तान्मातुर्हीनजातित्वदोषादनन्तरनाम्नो मातृजातिसंस्कारान्प्रचक्षत इति। एवं च क्षत्रिय इत्यादि नामैव भवति न तु जातिरिति तदर्थः। बीजं प्रशस्यत इति योनेर्धर्माद्यनधिकारे बीजं प्रधानमित्येतत्परम् । अप्सरसां शापेन गृहीतदेहा अपि धर्माद्यनधिकारा एवेति बोध्यं पूर्वं हि ( अ. १० श्लो. ७०।७१ )

"बीजमेके प्रशंसन्ति क्षेत्रमन्ये मनीषिणः। बीजक्षेत्रे तथा चान्ये तत्रेयं तु व्यवस्थितिः॥

"अक्षेत्रे बीजमुत्सृष्टमन्तरैव विनश्यति। अबीजकमपि क्षेत्रं केवलं स्थण्डिलं भवेत्"॥

तत्रोभयप्रशंसावर्णविषये। उभयप्राशस्त्य एव ब्राह्मणत्वाद्युद्बोधकागात् । क्षेत्रप्रशंसा मूर्द्धावसिक्तादिविषये बीजप्रशंसाप्रतिलोमविषये । ते हि बीजदोषवशादधमा एवेत्युक्त्वा मद्विषयेऽपि बीजप्राधान्यप्रतिपादनाय तेनेदमुक्तम् । तथा च **मनुरेव** "जातो नार्याम" इत्यग्रे स्फुटीभविष्यति। तथा **विश्वंभरवास्तुशास्त्रेऽपि** "विप्रान्मूर्द्धावसिक्तो यः क्षत्रिण्यां क्षत्रियैः समः" इति समत्वमेवोक्तम्। एतेन तस्य मातुः सदृशानित्यर्थेन मूर्द्धावसिक्तादीनां मातृसजातीयत्वबोधनात्कथं तत्र ब्राह्मणत्वादिजात्यभाव इत्यपास्तम्। तद्धर्मप्राप्तिबोधने तत्तात्पर्यात् । यत्त्व**परार्के** सिद्धान्तितं विन्नापदम्योपलक्षणत्वेन कानीनादीनां पौनर्भवस्य च वर्णत्वमेव। तथा **शङ्खो**क्त "मूर्द्धावसिक्तादीनां मातृजातीयत्वं वर्णत्वं चात"। यच्च **शङ्खधरेणो**क्तम्। "कुण्डगोलकादीनां सर्वेषामेव व्यभिचारोत्पन्नानामस्ति ब्राह्मणत्वमिति भवत्युपनयनाध्यापनादिसंस्कार" इति। नेत्यन्ये। वेत्यपरे। व्यवस्थितविकल्पश्चायम् । बहुशो व्यभिचारदूषितापत्यानां पातित्यान्न संस्कारः सकृद्बलादन्येनोपभुक्ताया अनिच्छन्त्या अपत्यानामदुष्टत्वादस्ति संस्कार इति तदेतत्सर्वं **यमस्मृति**विरुद्धम् ।

"जारजातः सवर्णायां कुण्डे जीवति भर्तरि। मृते गोलकनामा तु जातिहीनो तथैव तौ॥

"असवर्णासु नारीषु द्विजैरुत्पादिताश्च ये। परपत्नीषु सर्वासु कुण्डास्ते गोलकाः स्मृताः॥

"मातृवर्णा न ते प्रोक्ताः पितृवर्णा न च स्मृताः। अविवाह्याः सुताश्चैषां बन्धुभ्यः पितृमातृतः"॥इति॥

**मेधातिथि**रप्येवम्। अत एव तेषु न वर्णधर्मप्राप्तिः किंत्वाश्रमादिधर्मप्राप्तिः। अत एव

"कृच्छ्रं सान्तपनं कुर्याद्धत्वा संकीर्णयोनिजम्। सूतं हत्वा तु कृच्छ्रात्तु कुण्डं गोलकमेव च"॥

इति **यमेन** प्रतिलोमसममेव कुण्डादिवधे प्रायश्चित्ताल्पमुक्तम् ।

न चैवं पाण्डवेषु क्षत्रियत्वं न स्यात् न स्याच्चायोनिजेषु वसिष्ठादिषु ब्राह्मण्यमिति वाच्यम्। इष्टापत्तेः। षट्कर्मप्रयोजकीभूतादृष्टविशेषवत्त्वेन ब्राह्मणादिपदप्रयोगसंभवात् । न तु तत्प्रवृत्त्यङ्गि अदृष्टादेरतीन्द्रियत्वात् । गत्यन्तरस्य प्रागुक्तत्वाच्च । नान्तरिक्षे न दिवीतिवन्नित्यानुवादत्वेन न प्रागुक्तनिषेधद्वयासंगतिरित्यास्ताम् । तथा च वाशब्दो न एवमेव स्वाभिमतम् । तदेतद्धृदि निधाय तद्धर्मानाह। **अतश्चेति । अत एवाह। प्रागिति ।** तथा चेदं साधारणमेवेति भावः॥ ९१ ॥

## याज्ञवल्कीये ९२ श्लोकः

एवं त्रीनुक्त्वाऽन्यान् त्रीनाह। **वैश्येति**। उभयत्र शूद्रीत्यत्रार्षत्वात् 'जातेरिति' ङीष्।(व्या.सू.४।१।६३) तद्धुनयन्व्याचष्टे । **शूद्रायामिति । सूतास्विति**। उत्पन्नानामिति शेषः। उपसंहरति। **एते चेति**। अन्यत्राप्युक्तम् ।

''विप्रान्मूर्द्धावसिक्तस्तु क्षत्रियायां विशः स्त्रियाम्। जातोऽम्बष्ठश्च शूद्रायां निषादः पारशवोऽपि वा॥
''माहिष्योग्रौ प्रजायेते विट्शूद्राङ्गनयोर्नृपात्। शूद्रायां करणो वैश्याद्विन्नास्वेष विधिः स्मृतः॥
''विप्रस्य त्रिषु वर्णेषु नृपतेर्वर्णयोर्द्वयोः। वैश्यस्य वर्णे चैकस्मिन्षडेतेऽपसदाः स्मृताः'' ॥ इति ॥
त्रिषु क्षत्रियविट्शूद्रेषु द्वयोर्विट्शूद्रयोः एकस्मिञ्छूद्रे सद्यो मुख्यवर्णेभ्योऽपकृष्टा इत्यर्थः॥९२॥

## याज्ञवल्कीये ९३ श्लोकः

**प्रतिलोमानिति** । 'लोमजानिति' पाठ प्राग्वत् । 'ब्राह्मण्यामि'त्यस्याग्रेऽपि संबन्धः। तदेतद्ध्वनयन्भवर्तान्यध्याहारेण शाब्दार्थस्य स्पष्टत्वात्फलितमाह । **ब्राह्मण्यामिति । सर्वेति** । साधारणातिरिक्तपञ्चषड्विधेत्यर्थः ॥ ९३ ॥

## याज्ञवल्कीये ९४ श्लोकः

अत्र विवाहानादरध्वननायाह । **क्षत्रिययोषिदित्यादि** । भूतत्वादेरविवक्षया आह । **जनयतीति** । उपसंहरति । **एते चेति** । अन्यत्राप्युक्तम् ।

''ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहकः स्मृतः । शूद्राज्जातस्तु चाण्डालः सर्वधर्मबहिष्कृतः॥

क्षत्रिया मागधं वैश्याच्छूद्रा क्षत्तारमेव च । शूद्रादायोगवं वैश्या जनयामास वै सुतः''॥इति ।
**मनु**नाऽप्युक्तम् । ( अ. १० श्लो. ११।१२।१३।१६ )

''क्षत्रियाद्विप्रकन्यायां सूतो भवति जातितः । वैश्यान्मागधवैदेहौ राजविप्राङ्गनासुतौ ॥
''शूद्रादायोगवः क्षत्ता चण्डालश्चाधमो नृणाम् । वैश्यराजन्यविप्रासु जायन्ते वर्णसङ्कराः ॥
''एकान्तरे त्वानुलोम्यादम्बष्ठोग्रौ यथा स्मृतौ । क्षत्तृवैदेहकौ तद्वत्प्रातिलोम्येऽपि जन्मनि ॥
''आयोगवश्च क्षत्ता च चण्डालश्चाधमो नृणाम् । प्रातिलोम्येन जायन्ते शूद्रादपसदास्त्रयः ॥
''वैश्यान्मागधवैदेहौ क्षत्रियात्सूत एव तु । प्रतीपमेते जायन्ते परेऽप्यपसदास्त्रयः'' ॥ इति ।

आद्ये क्रमेण वैश्याक्षत्रियाविप्रासु इति । अग्रयोः क्षत्रियाविप्रयोरिति। विप्रायामिति च शेषः। अपसदाः पुत्रकार्यादपगताः । लोमहर्षणोऽपि प्रतिलोमज एवेत्यग्रे स्फुटीभविष्यति ।

**सूतसंहितायां** तु यत्र प्राग्वत् द्विविधाः प्रतिलोमा उक्तास्तथाहि ।

''विप्रायां क्षत्रियाज्जातः सूत इत्युच्यते बुधैः । चौर्येणास्यामनेनोत्थो रथकार इति स्मृतः ॥
''ब्राह्मण्यां वैश्यतो जातः क्षत्ता भवति नामतः। अस्यामनेन चौर्येण म्लेच्छो विप्राः प्रजायते॥

"शूद्राद्विप्राङ्गनायां तु चाण्डालो नाम जायते । अस्याममनेन चौर्येण बाह्यदासस्तु जायते ॥

"जातो वैश्यान्नृपायां यः शालिको मागधश्च सः । अस्याममनेन चौर्येण पुलिन्दो जायते बुधाः ॥

"क्षत्रियस्त्रीषु वैश्यात्तु भोजश्चौर्याद्विजायते ।

"जातः शूद्रेण राजन्यां वैदेहाख्यश्च पुक्कसः[1] । अस्याममनेन चौर्येण बलवाख्यो विजायते ॥

"जातः शूद्रेण वैश्यायां भवेत्पतनशालिकः । अनेनास्यां भवेच्चक्री चौर्याद्ब्रह्मविदां वराः ॥"

चक्री तैलिक इति । तदेते संभूय द्वादशसंपन्नाः ।

अत्र वर्णानुलोमप्रतिलोमेषु तारतम्यमाह **देवलः** ।

"तेषां सवर्णजाः श्रेष्ठास्तेभ्योऽन्वगनुलोमजाः । अन्तराला बहिर्वर्णाः पतिताः प्रतिलोमजाः"॥ इति

सर्वेभ्यस्तावत्सवर्णजाः श्रेष्ठास्तेभ्योऽन्ये अन्तरालाः विजातीयमातापितृजन्याः असवर्णा इति यावत् । ते चानुलोमप्रतिलोमभेदात् द्विविधाः । तत्राद्या उत्तमाः अधमयोनिसंभूतत्वात्तेभ्यो जनकेभ्योऽन्वक् मातृजातिधर्मत्वात्किंचिन्न्यूनाः द्वितीयास्तु योन्युत्कर्षेऽपि अपकृष्टबीजजत्वाद्वर्णबाह्याः । पतिता अधमा इत्यर्थः । संपूर्णसंस्कारपरिभ्रष्टत्वाच्च पतितत्वम् । अमुमेवार्थं पूर्वोत्तरपक्षाभ्यामाह **मनुः** । ( अ. १० श्लो. ६६।६७।६८ )

"अनार्यायां समुत्पन्नो ब्राह्मणात्तु यदृच्छया । ब्राह्मण्यामप्यनार्यात्तु श्रेयस्त्वं क्वेति चेद्भवेत् ॥

"जातो नार्यामनार्यायामार्यादार्यो भवेद्गुणैः । जातोऽप्यनार्यादार्यायामनार्य इति निश्चयः ॥

"तावुभावप्यसंस्कार्याविति धर्मो व्यवस्थितः । वैगुण्याज्जन्मतः पूर्व उत्तरः प्रतिलोमतः"॥ इति ।

अनार्यो निकृष्टः । आर्य उत्तमजातिः । यदृच्छया यथाकथंचित् । अनूढायामपीति **मेधातिथिः** । अबुद्धिपूर्वमपि न पुनर्बुद्धिपूर्वमिति तात्पर्यमित्यन्ये । किं शब्दः क्षेपे । एवं पूर्वपक्षे उत्तरं जात इति । अनार्या नारी शूद्रा । आर्यः शूद्रात् किंचिच्छ्रेष्ठः पाकयज्ञाद्यनुष्ठानात् । अनार्यात् शूद्रात् आर्या त्रैवर्णिकी अनार्यः सर्वधर्महीनः । तावुभाविति । चाण्डालः पारशवश्चासंस्कार्यावनुपनेयौ । तत्र हेतुर्वैगुण्यादिति ब्राह्मणाच्छूद्रायां जातस्य पारशवस्य सत्यपि बीजप्राधान्ये योनिदोषाद्विगुणं जन्मचाण्डालस्योत्तरस्य सत्यपि क्षेत्रप्राधान्ये पितृदोषादत्यन्तप्रातिलोम्यात्तथेति **मेधातिथिः** ।

अन्ये तु तौ उभौ अपकृष्टायामुत्तमबीजजः उत्तमायामपकृष्टबीजजश्च तत्र हेतुर्वैगुण्यादिति जन्मतो योनितः प्रतिलोमतः प्रातिलोम्यात् । असंस्कार्यावितीषदर्थे नञ् मुख्यवर्णापेक्षयेषत्संस्काराविन्यर्थः । अनुलोमानां मातृधर्मातिदेशात्प्रतिलोमानां च मनुना शूद्रधर्मोपदेशात् । यदाह **मनुः** । ( अ. १० श्लो. ४१ )

"सजातिजानन्तरजाः षट्सुता द्विजधर्मिणः । शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः" ॥

इति त्रिभिर्वर्णैः समानजातीयासु जातास्त्रयः अनन्तरजास्त्रयः ब्राह्मणेनाव्रात्येन क्षत्रियावैश्ययोः । क्षत्रियेणाव्रात्येन वैश्यायाम् । एवं षट्पुत्रा द्विजधर्मिण उपनेयास्तद्भिन्नाः सर्वे उक्ता अनुलोमाः प्रतिलोमाश्चापध्वंसजास्ते सर्वे शूद्रधर्माणो नैषामुपनयनमस्तीत्यर्थ इति **मेधातिथिकुल्लूकभट्टौ** । अपध्वंसः शूद्राविवाहः न्यायापेतत्वात् शूद्राविवाहमुपक्रम्य "नैतन्मम मतमिति" मूलकृदुक्तेः (आचारे५६),

---

१ पुल्कसः इत्यपरः पाठः ।

अपध्वंसो व्यभिचारश्च स आनुलोम्येन प्रातिलोम्येन च सवर्णायामप्यन्यपुरुषोत्पन्नस्य प्रागलिखित-**देवल**वचनेन शूद्रसधर्मत्वोक्तेः ब्राह्मणात् ब्राह्मण्यां जातकुण्डादेरुपनयनमात्रं केचिदिच्छन्ति तथा मूर्द्धावसिक्तादीननुलोमप्रतिलोमान्प्रक्रम्य **ब्रह्मपुराणे** उक्तम् । 'एते मातृसधर्माण' इति । **वसिष्ठोऽपि** तानेव प्रक्रम्य "सर्वे बाह्याः सद्धर्मबहिष्कृताः अन्यत्रप्राणिसंरक्षणादिति शिक्षे" त्याह । "अत्र सद्धर्मोऽनुलोमेषु पितृधर्मः प्रतिलोमेषु मातृधर्म" इति तद्व्याख्यातारः । "संपूर्णस्तु संस्कारो वर्णेष्वेव" इत्यप्याह स एव ।

"सुबीजं चैव सुक्षेत्रे जातं संपद्यते यथा । तथाऽऽर्याज्जात आर्यायां सर्वसंस्कारमर्हति" ॥ इति ।

तत्र च षट्कर्माधिकारो ब्राह्मणस्यैवेत्याद्यग्रे स्फुटीभविष्यति ।

नन्वेवमपि अनुलोमादीनां का वृत्तयोऽत आह । **एतेषामिति** । वृत्तयस्त्वित्यर्थः । **औशेति** । तथाहि । **विश्वम्भरवास्तुशास्त्रे उशनसोक्तम्** ।

"क्षत्रियाविप्रसंयोगाज्जातो मूर्द्धावसिक्तकः । राजन्यः क्षत्रधर्मेभ्योऽभ्यधिकः संप्रकीर्तितः ॥
"आथर्वणक्रियां कुर्वन्नित्यनैमित्तिकीं क्रियाम् । अश्वं रथं हस्तिनं वा वाहयेद्वै नृपाज्ञया ॥
"जीवनार्थं च भैषज्यं कुर्याज्जीवेच्च वृत्तिषु । नृपाया विप्रतश्चौर्यात्संजातो यो भिषक् स्मृतः ॥
"अभिषिक्तनृपस्याज्ञां परिपाल्य तु वन्दकः । आयुर्वेदमथाष्टाङ्गं तत्रोक्तं धर्ममाचरेत् ॥
"ज्योतिषं गणितं वाऽपि कायिकीं वृत्तिमाचरेत् । नृपायां नृपसंसर्गात्प्रमादाद्गूढजातकः ॥
"सोऽपि क्षत्रिय एव स्यादभिषेके तु गर्हितः । " इति ।

एतस्य मूर्द्धावसिक्तस्याग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादावप्यधिकारः । उभौ वर्णावृषिरुग्रः पुपोषेति **लिङ्गात्** । अत एव बार्हिद्विराधिकरणोऽभीवर्तो ब्रह्मसामेति सामान्यवचसो मूर्द्धावसिक्तादिकर्तृकप्रयोगविषयत्वं **राणककारै**रुक्तम् ।

"वैश्यायां विधिना विप्राज्जातो ह्यम्बष्ठ उच्यते । कृष्याजीवी भवेत्तस्य तथैव च भिषग्वरः ॥
"नरवाजिगजादीनां चिकित्सा तस्य जीविका" ।
ब्राह्मणबीजजोऽपि योन्यपकर्षादपकृष्टो वचनाच्च मातृजातीयं वैश्यधर्ममात्रमेव लभते ।
न तु मुख्यं ब्राह्मणधर्मं षाट्कर्म्यमेव च ।

"वैश्यस्त्रीद्विजसंभूतोऽम्बष्ठः स्यादनुलोमतः । अन्येभ्यो वैश्यजातिभ्यः षट्कर्मस्त्वधिकः स्मृतः" ॥

इति **वासिष्ठे** । षडित्यस्य षट्कर्मान्तःपातिकर्मत्रये इत्यर्थः । द्विजोऽत्र ब्राह्मणः । **अयमम्बष्ठो** गौडप्रसिद्धाम्बष्ठाद्भिन्नः ।

"शूद्रां शयनमारोप्य ब्राह्मणश्च कथंचन । जनयेद्ग्राम्यधर्मेण तस्यां पारशवं सुतम् ॥
"महाशूद्र इति ख्यातः शूद्रेभ्यः किंचिदुत्तमः । स्वर्णकारस्य तस्येह स्नानं धौत्रं पवित्रकम् ॥
"शौचं शूद्रस्य धर्मेण वर्तनं तस्य च स्मृतम् " ॥

शयनारोपणं विवाहः । एतस्यैव संज्ञान्तरं निषादः । अस्य कर्मसु अग्निहोत्रादिषु अधिकारः "यज्ञियासः पञ्चजनाममाग्निहोत्रं जुषध्वमिति" मन्त्रलिङ्गात् ।'अहितिर्द्यौरिति' ऋग्व्याख्याने पञ्चजनपदस्य चत्वारो वर्णा निषादः पञ्चम इत्यौ**पमन्यव** इति **यास्केन** निषादस्य गणनात् । एवं पञ्चमस्य शूद्रस्येव व्रतद्रव्यनियमोऽपि संगच्छते ।

"वैश्यायां क्षत्रियाज्जातो माहिष्यस्त्वनुलोमतः । अष्टाधिकारनिरतश्चतुष्षष्टयङ्गकोविदः ॥

"व्रतबन्धादिकास्तस्य क्रियाः स्युः सकला विशः । ज्यौतिषं शाकुनं शास्त्रं स्वरशास्त्रं च जीविका ॥

अष्टाधिकाराः अष्टौ वृत्तयः

"सुगन्धं वनिता वस्त्रं गीतं ताम्बूलभोजनम् । शय्या च कुसुमं चैव भोगाष्टकमुदाहृतम्"॥ इति ।

भोगाष्टकम् । चतुष्षष्टयङ्गानि चतुः षष्टिकलास्ताश्च

"वेदांशागमशास्त्रशिल्पकविताविक्रत्वतौर्यत्रिकम् । द्यूतास्त्राद्भुतवादसूपरचनाश्चित्रं पणो वैद्यकम् ॥

"नानारत्नपुरादिलेखपुरुषस्त्रीधातुभाषालिपिः । प्रज्ञानाटककेलिदन्तितुरगप्रेक्षा च सामुद्रकम् ॥

"शय्याभोजनयुद्धमर्दनविभूषाबन्धसेवेङ्गित-। ज्ञानं राजतगसभारथकृतिः सौख्येषु भोगेषु धीः ॥

"घ्राणं वारिविषाग्निनारिषु रथाखेयंगशीर्षेषु यत् । दुर्गारामकृतिः पशुद्विपचमत्कारः शिवार्वादयः"॥ इति ।

"शूद्रायां क्षत्रियादुग्रः क्रूरकर्मा प्रजायते । शस्त्रास्त्राभ्यासकुशलः संग्रामकुशलो भवेत् ॥

"तया वृत्त्या स जीवेच्च शूद्रधर्मा च जायते "॥ इति ।

"शूद्रां क्षत्रादुग्रजातिर्युद्धशस्त्रादिजीविकः । शस्त्रास्त्राभ्यां च कुशलः संग्रामकुशलो भवेत् ॥

"तया वृत्त्या च जीवन्स संग्रामकुशलादिमान् " । इत्यन्यत्र ।

अयमेव लोके सर्वत्र **रजपूत** इति प्रसिद्धः ।

"वैश्याद्धर्मेण शूद्रायां जातो वैतालिकाभिधः । करणोऽसावपि भवेन्न्यूनो वृषलधर्मतः ॥

"राज्ञां च ब्राह्मणानां च गुणवर्णनतत्परः । संगीतं कामशास्त्रं च जीविका तस्य विश्रुता "॥ इति ।

"शूद्राज्जातः सुतो वैश्यात्करणो लिपिलेखकृत् " ।

**इत्यन्यत्र** अयमेव करणो **'नटवा'** इति भाषाप्रसिद्धः । अत्र विन्नास्वित्युक्तेरविन्नोत्पन्नानां नानुलोमत्वम् किंतु व्यभिचारोत्पन्नत्वेन कुण्डगोलकान्यतरत्वामिति केचित् । वस्तुतस्तान्यपि जात्यन्तराणीति प्रागुक्तमेवेति बोध्यम् । अनेनैव प्रकारेणोत्पन्नानां स्त्रीणामनुलोमजानामिमान्येव नामानि षट्कर्माणि च यथा मूर्द्धावसिक्ता अम्बष्ठा निषादी पारशवा माहिष्या उग्राकरणीति । इत्यनुलोमषट्कर्माणि ।

अथ **प्रतिलोमषट्कर्माणि** तत्रैव तेनोक्तानि ।

"ब्राह्मण्यां क्षत्रियात्सूतः प्रातिलोम्येन जायते । क्षत्रियाणामसौ धर्मं कर्तुमर्हत्यशेषतः ॥

"किंचिच्च क्षत्रजातिभ्यो न्यूनता तस्य विद्यते । गजबन्धनमश्वानां वाहनं कर्म सारथेः ॥

"वैश्यधर्मेषु सूतस्य नाधिकारः क्वचिद्भवेत् ॥

"क्षत्रियाणां धर्मे युद्धप्रजापालनादिवृत्तिं न तु वेदाध्ययनादिप्रतिलोमा धर्महीना" इति स्मरणात्॥ इति।

"नृपाद्ब्राह्मणकन्यायां विवाहेषु समन्वयात् । जातः सूतोऽत्र निर्दिष्टः प्रतिलोमविधिर्द्विजः ॥
"वेदानर्हस्तथा चैषां धर्माणामनुबोधकः" । इति ।

"विप्रायां यः सुतः क्षत्रात्सूताख्यो गजबन्धकृत् । दमनं तुरगाणां च कुर्यात्तज्जीवनं परम्" ॥ इत्यन्यत्र । लोमहर्षणोऽपि प्रतिलोमज एव । तथा हि ।

"लोमानि हर्षयांचक्रे श्रोतॄणां यः स्वभाषितैः । कर्मणा प्रार्थितस्तेन लोमहर्षणसंज्ञये" ॥ इति **कौर्मे** ।

"वैन्यस्य तु पृथोर्यज्ञे वर्तमाने महात्मनः । सुत्यायामभवत्सूतः प्रथमं वर्णवैकृतम् ॥
"ऐन्द्रेण हविषा तत्र हविः पृक्तं बृहस्पतेः । जुहावेन्द्राय दैवेन ततः सूतो व्यजायत ॥
"शिष्यहव्येन संपृक्तमभिभूतं गुरोर्हविः । अधरोत्तरचारेण यज्ञे तद्वर्णवैकृतम्" ॥

इति **वायुपुराणे** । वर्णवैकृतं "ब्राह्मण्यां क्षत्रियात्सूत (श्लो. ९३)" इति **मूलकृदा**युक्तं विलोमजत्वम् । अयं रोमहर्षण एव ।

"अग्निकुण्डसमुद्भूतसूतनिर्मलमानसे" । इति ।

रोमहर्षणं प्रति शौनकवाक्यस्य पुराणान्तरे दर्शनात् । अस्य च तपोबलाद्व्याससङ्कल्पात्पुराणाध्ययनेऽधिकारस्तत एव शौनकसंकल्पात् ब्रह्मासनार्हत्वम् । 'अस्य ब्रह्मासनं दत्तमस्माभिर्यदुनन्दन' इति **बलभद्रं** प्रति **शौनकोक्तेः** । रोमहर्षणमासीनमित्युपक्रम्य ।

"कस्मादसाविमान् विप्रानध्यास्ते प्रतिलोमजः । धर्मपालाँस्तथैवास्मान्वधमर्हति दुर्मतिः" ॥ इति ।

तत्रैव **बलभद्रोक्तेर**यं न ब्राह्मणः । अत एव तद्वधस्याजानतैवाचरितस्त्वया ब्रह्मवधो यथेत्यनेन ब्रह्मवधसादृश्यमुक्त्वा ।

"ततश्च भारतं वर्षं परीत्य सुसमाहितः । चरित्वा द्वादशान्मासांस्तीर्थस्नायी विशुध्यसे" ॥

इत्यब्दमात्रं गुरुप्रायश्चित्तमुक्तम् । सूतानां मन्त्रित्वाश्वसारथ्यादाविव पुराणाध्ययनतच्छ्रावणयोरप्यधिकारः । परं त्वन्त्ययोर्ब्राह्मणसंकल्पादेव । यथा व्याससंकल्पादध्ययनं शौनकसंकल्पाच्छ्रावणं तदीयातितपोवशाच्च तयोस्तथासंकल्पः तेन न हीनतः परमभ्यादर्दीतेति निषेधस्य नात्रावकाशः तेन सूतमात्रस्य नात्राधिकारः मन्त्रित्वादि तु संजयादिरथादेः प्रसिद्धमेव । ब्रह्मासनं दत्तमिति ऋष्युक्त्या च ब्राह्मणानामेव श्रावणेऽधिकारो नान्येषामिति सिद्धम् ।

अत एव जनमेजयस्य पुराणश्रावयितृत्वं वैशम्पायनस्य स्मर्यते । तत्पुत्रस्योग्रश्रवसोऽपि तत्संकल्पादेव पुराणाध्ययनश्रावणादावधिकार इति सिद्धम् । एतेन लोमहर्षणो ब्राह्मण एव सूतशब्दस्तु कथाप्रवक्तृत्वसामान्यात्प्रोत्साहनाय प्राचीनराज्ञां शौर्यादिकथाकथनस्यापि तद्वृत्तित्वादित्यपास्तम् ।

"ब्राह्मण्यां जायते वैश्यात्सौ वैदेहिकाभिधः । शुद्धान्तरक्षणं कुर्याद्राज्ञामनुपसंहितः ॥
"सामान्यवनिता पोष्या तासां भाटी च जीविका । तस्योक्तशूद्रधर्माणां नाधिकारोऽस्ति कर्हिचित् ॥
"पण्याङ्गनानां राज्ञां च कुर्यात्सङ्गं तदिच्छया । रूपाजीवासु तास्वेषां निशि यः संगतो विटः ॥

"स एव तासां प्राणेशो नान्यः कान्तोऽपि तत्पतिः। चतुःषष्टिकलाः कामशास्त्रं तदुपजीवनम्॥इति।

"वणिग्जनात्तु विप्रायां जातोऽन्तःपुरपालकः। अन्तःपुरस्य गोप्ता स राज्ञामुदरपुष्टये॥

"सामान्यवनिताः पोष्यास्तासां भाट्टी च जीविका। पण्याङ्ग० ॥

"रूपाजीवासु तास्त्वेषां निशि यः संगतो विटः॥

"स एव शूद्राद्वैश्यायां वणिग्जनः"। इत्यन्यत्र।

"ब्राह्मण्यां तु सुतो जातो वैश्याद्वैदेहकः स्मृतः। पाषाणकाष्ठयोः शिल्पं तस्य जीवनमुच्यते"॥

इति च **सुतार** इति लोके प्रसिद्धः।

"ब्राह्मण्यां शूद्रवीर्येण जातश्चाण्डालसंज्ञकः। सर्वेषामेव तत्स्पर्शात्सचेलं स्नानमुच्यते॥

"स वसेन्नगराद्बाह्यः सर्वधर्मबहिष्कृतः। येऽवध्यास्ते न ते वध्या विविधैर्यातनाशतैः॥

"तेषां वस्त्राद्यलंकारा जीविका तस्य च स्मृता"। इति।

"चाण्डालाख्यः सुतो जातो ब्राह्मण्यां शूद्रजन्मतः। जीवनं चोरवध्यानां कर्पटैर्भूषणैः सह॥इति च।

"सीसमाभरणं तेषां कालायसमथापि वा। वर्ध्रा कण्ठे समाबध्य झल्लरीं कक्षतोऽपि वा॥

"मलापकर्षणं ग्रामे कुर्याद्भूपरिशुद्धिकम्। नापराह्णे प्रविष्टोऽपि बहिर्ग्रामाच्च नैर्ऋते॥

"पिण्डीभूता भवन्त्यत्र नोचेद्वध्या विशेषतः"। इति च **मनुः**।

"अन्नमेषां पराधीनं देयं स्याद्भिन्नभाजने। रात्रौ न विचरेयुस्ते ग्रामेषु नगरेषु च॥

"दिवा चरेयुः कार्यार्थं चिन्हिता राजशासनैः। अबान्धवं शवं चैव निर्हरेयुरिति स्थितिः॥

"वध्यांश्च हन्युः सततं यथाशास्त्रं नृपाज्ञया। वध्यवासांसि गृह्णीयुः शय्याश्चाभरणानि च"॥

**स्मृत्यन्तरे**

"दिवा यदा ते गच्छन्ति नगरं कार्यगौरवात्। सिंचोलेति समुच्चार्य संकुचद्गात्रसंचिताः"॥इति॥

"क्षत्रिया मागधं वैश्याज्जनयामास वै सुतम्। स बन्दीजन इत्युक्तो व्रतबन्धादिवर्जितः॥

"शूद्रेभ्योऽभ्यधिकः किंचित्तस्य जीवनमुच्यते। कथालङ्कारगद्यादिषट्भाषासु विशारदः॥

"गद्यपद्यादिचित्राणि विरूदानि महीभुजाम्"॥ **भाट** इति भाषाप्रसिद्धः

"क्षत्रियाशूद्रसंयोगात्क्षत्तारं जनयेत्सुतम्। निषाद इति विख्यातः सर्ववर्णबहिष्कृतः॥

"शूद्राचारविहीनश्च पापर्द्धिनिरतः सदा। वागुरापाशपाणिस्तु मृगबन्धनकोविदः॥

"अरण्यपशुजातीनामन्तकश्च वनेचरः। क्रोधान्वितो मांसवृत्त्या तया जीवेत्सदैव हि"॥

"घण्टां पापर्द्धिकां कुर्याद्रात्रौ विस्मयकारिणीम्। द्विधा पापर्द्धिरस्योक्ता व्योमभूचारिणामिह॥

"विक्रयं मधुनः कृत्वा धनमिच्छेत्स्ववृत्तये"। **पारधीति** महाराष्ट्रभाषया 'करवाल' इति मध्यदेशभाषया च प्रसिद्धः॥

अन्यत्र तु

"क्षत्रियायां वैश्यजातः क्षत्ता वेत्रधरो भवेत्"।

"प्रतीहार"इत्युक्तम्।

"वैश्यस्त्रीशूद्रसंयोगादायोगवकसंज्ञकः । स शूद्राद्धीयते धर्मे पाषाणतक्षकर्मकृत् ॥

"स कुर्यात्कुट्टिमं भूमिचूर्णेनास्येह जीवनम्" । इति

"शूद्रादायोगवो वैश्यायां जातस्तु सुतो भवेदिति " च ।

**उशनसा** तु

"नृपायां वैश्यसंसर्गादायोगव इति स्मृतः । तन्तुवाया भवन्त्येते वस्त्रकांस्योपजीविनः ॥

"शालिकाः केचिदत्रैव जीवनं वस्त्रनिर्मितम् " इत्युक्तम् ।

अनेनैव प्रकारेणोत्पन्नानां प्रतिलोमजानां स्त्रीणामिमान्येव नामानि कर्माणि च यथा सूता वैदेही चाण्डाली मागधी क्षत्री आयोगवीति । इति प्रतिलोमषट्कर्माणि ।

यथा अनुलोमानामपि मातृधर्मास्तथा तत्संततीनामपि सजातीयमातापितृजन्मानां तद्धर्मा एव । अत एव **मनुः** । ( अ. १० श्लो. २५–२७ )

"संकीर्णयोनयो ये तु प्रतिलोमानुलोमजाः । अन्योन्यव्यतिषिक्ताश्च तान्प्रवक्ष्याम्यशेषतः ॥

"सूतो वैदेहकश्चैव चण्डालश्च नराधमः । मागधः क्षत्तृजातिश्च तथाऽऽयोगव एव च ॥

"एते षट् सदृशान्वर्णान् जनयन्ति स्वयोनिषु । मातृजात्या प्रसूयन्ते प्रवरासु च योनिषु "॥ इति ।

अयमर्थः । व्यतिषङ्गः संबन्धः । स चानुलोमानामन्यैरनुलोमैः प्रतिलोमैश्च । एवं प्रतिलोमानामन्यैः प्रतिलोमैरनुलोमैश्च संज्ञा तु वक्ष्यते ।

**सूत इति** उक्तलक्षणा एते प्रतिलोमा उत्तरार्थं पुनरुपन्यस्यन्ते । **एते इति** । एते प्रतिलोमाः सूतादयः षट् स्वयोनिषु स्वजातीयासु स्त्रीषु सदृशान्स्वसमानधर्माण एव जनयन्ति । यथा सूतात्सूतायां जातः सूतधर्मा एव भवन्ति । तथा ये च मातुर्जात्या उपलक्षिताः स्वयोनिषु प्रसूयन्ते तेऽपि सदृशान्स्वसमानधर्माण एव जनयन्ति । जातेः प्रसवं प्रतिकरणत्वादुपलक्षणे एव तृतीया । यथा मूर्द्धावसिक्तान्मूर्द्धावसिक्तायां विन्नायां जातः मूर्द्धावसिक्तधर्मा एव । एवं माहिष्यादिष्वपि ये च प्रवरासु स्वस्वादुत्तमासु योनिषु प्रसूयन्ते तेऽपि स्वसदृशधर्माण एवेत्यर्थः । यदा तु मूर्द्धावसिक्तादप्यविन्नायां मूर्द्धावसिक्तायां व्यभिचारादुत्पद्यते तदाऽपध्वंसजत्वाच्छूद्रधर्मैव । तथाऽन्येषामपि प्रतिलोमजानां द्रष्टव्यम् । अत एव **मनुः** ( अ. १० श्लो. ४६–५२ )

"ये द्विजानामपसदा ये चापध्वंसजाः स्मृताः । ते निन्दितैर्वर्तयेयुर्द्विजानामेव कर्मभिः ॥

"सूतानामश्वसारथ्यमम्बष्ठानां चिकित्सितम्[1] । वैदेहकानां स्त्रीकार्यं मागधानां वणिक्पथः ॥

"मत्स्यघातो निषादानां तष्टिस्त्वायोगवस्य च । मेदान्ध्रचूचुमद्गूनामारण्यपशुहिंसनम् ।

"क्षत्त्रुग्रपुक्कसानां तु बिलौकोवधबन्धनम् । धिग्वणानां चर्मकार्यं वेनानां भाण्डवादनम् ॥

---

१ चिकित्सनम् इत्यपरः पाठः ।

"चैत्यद्रुमश्मशानेषु शैलेषूपवनेषु च । वसेयुरेते विज्ञाता वर्तयन्तः स्वकर्मभिः ॥

"चण्डालश्वपचानां तु बहिर्ग्रामात्प्रतिश्रयः । अपपात्राश्च कर्तव्या धनमेषां श्वगर्दभम् ॥

"वासांसि मृतचेलानि भिन्नभाण्डेषु भोजनम् । कार्ष्णायसमलंकारः परिव्रज्या च नित्यशः ॥

"न तैः समयमन्विच्छेत्पुरुषो धर्ममाचरन् । व्यवहारो मिथस्तेषां विवाहः सदृशैः सह ॥"

अन्नमेषामित्यादिप्रागुक्तमेवेति । अपसदाः अनुलोमाः । अपध्वंसजाः प्रतिलोमाः । ब्राह्मणवसिष्ठन्यायेन पृथक्ग्रहणम् । एते द्विजानामेव कर्मभिस्तत्संबन्धिशुश्रूषणादिभिरेव, न तु यजनादिभिः 'शूद्राणां तु सधर्माण' इत्युक्तत्वात् । द्विजानामुपयोगिभिः प्रेष्यकर्मभिरात्मानं वर्तयेयुः प्रेष्यकार्यत्वानिन्दितत्वमिति **मेधातिथिः** । स्त्रीकार्यम् । अन्तःपुररक्षाकञ्चुकित्वम् । वणिक्पथः स्थलपथवारिपथादिप्रसिद्धः । तष्टिर्दारुतक्षणं तक्षकर्मविलोकसः अहिनकुलादयः तेषां वधबन्धने क्षत्रादीनां जीविका । चर्मकार्यं कवचादिशीवनम् उपानद्ग्रथनमित्येवमादि । भाण्डवादनं मुरजादिवादनं स्वज्ञातिचिह्नं विघुष्य बहिर्ग्रामादेते निवसेयुः । यस्य यत्स्वकर्म विहितं स तेनैव जीवेत् । उत्कृष्टकर्म संकरकर्म च न लभते । निर्ग्राम इति पाठान्तरम् । प्रतिश्रयो निवासः । अपपात्राः सौवर्णराजतान्यपात्रेषु तैर्भुक्ते तानि न संस्कार्याणि किंतु त्याज्यानि । यद्वा अवपात्राः उभाभ्यां पात्रे भूमौ स्थापयित्वाऽन्यहस्तद्वारा तेषां भक्तादि देयं यद्वा भिन्नं पात्रमवपात्रं तद्वक्ष्यति । "भिन्नभाण्डे च भोजनमिति" । सर्वकालं परितः सर्वतो व्रज्यागमनम् न एकत्र स्थाने वसेयुः । समयः संकेतः । एकत्र स्थानासनविहारास्तैः सह न कार्या इत्यर्थः ।

अथोभयभिन्ना वर्णानां मिथः संकरजा उक्ता **मनुना** ( अ. १० श्लो. २० )

"द्विजातयः सवर्णासु जनयन्त्यव्रतांस्तु यान् । तान्सावित्रीपरिभ्रष्टान्व्रात्यानिति विनिर्दिशेत् ॥"

अव्रतान् अनुपनीतान्कालेऽनुपनीतानित्यन्ये । 'अत ऊर्ध्वं त्रयोऽप्येते' इत्युक्तस्यापि व्रात्यलक्षणस्य पुनः प्रतिलोमप्रकरणे कथनं प्रतिलोमपुत्रतुल्यत्वेन तद्वदेव पुत्रकार्याक्षमत्वप्रतिपादनार्थमिति तद्व्याख्यातारः । ( अ. १० श्लो. २४ ) एषामत्र कथने बीजं **मनुना**ऽप्युक्तम् । एतदग्रे ।

"व्यभिचारेण वर्णानामवेद्यावेदनेन च । स्वकर्मणां च त्यागेन जायते वर्णसंकरः" ॥ इति । व्यभिचारोऽन्योन्यस्त्रीगमनम् । अविवाह्यसगोत्रादिविवाहोऽवेद्यावेदनम् । स्वकर्मणामुपनयनादीनां त्यागः । एवं च व्रात्योत्पन्नत्वमेव व्रात्योत्पन्नस्य संकरत्वबीजं न व्यभिचार इति बोध्यमिति तद्व्याख्यातारः । पूर्वत्र द्विजातयो यान्सवर्णासु जनयन्ति तानव्रतान् वेदव्रतशून्यानब्रह्मचारिणः सावित्रीपरिभ्रष्टान् उपनयनहीनांश्च व्रात्यानित्येवं निर्दिशेदित्यन्वयः । न तु अव्रतान् जनयन्ति इति संबन्धः । न हि सव्रता जन्यन्ते जातानामुपनयनविधानात् । ( **मनुस्मृ**. १०।२१ )

"व्रात्यात्तु जायते विप्रात्पापात्मा भृज्जकण्टकः । आवन्त्यवाटधानौ च पुष्पधशेखर एव च" ॥

अत्र सवर्णास्वित्यनुवर्तते । अत एव वैश्यायां ब्राह्मणजातभृज्जकण्टकान्तरस्यानुलोमत्वेन न पापात्मत्वमिति सूचनाय पापात्मेत्युक्तम् तेन निन्द्यतोक्ता । चत्वार्येकस्यैव नामानि देशभेदेन प्रसिद्धानीति केचित् ।

अन्ये तु भृज्जकण्टकाद्ब्राह्मण्यामावन्त्यस्तस्मात्तस्यां वाटधानस्तस्मात्तस्यां पुष्पशेखर इतीत्यर्थः। एवमग्रेऽपीति व्याचक्षते। भूर्जकण्टक इति पाठे तु पापात्मेत्यनेन निन्द्यतामात्रमनूद्यते इति बोध्यम्।

"झल्लो मलश्च राजन्याद्व्रात्याल्लिच्छिविरेव च"। लिंविचिरितिपाठान्तरम्।

"नटश्च करणश्चैव खसो द्रुमिड एव च।

"वैश्यात्तु जायते व्रात्यात्सुधन्वाचार्य एव च। कारुषश्च विजन्मा च मैत्रः सात्वत एव च"॥ इति। (मनुस्मृ. अ. १० श्लो. २२–२३)

एताभिः संज्ञाभिः प्रसिद्धास्तत्तज्जातीया एवेत्यर्थः। व्याख्याभेदस्तु प्राग्वत् बोध्यः।

उक्ताश्चैते **विश्वम्भरवास्तुशास्त्रेऽपि।**

"ये वर्णसंकराकीर्णास्ते संकीर्णा इति स्मृताः। जीवनं जातिधर्मैव जातिमात्रोपजीवनम्॥

"विप्रः संस्कारहीनश्च व्रात्यतामधिगच्छति। ब्राह्मण्यां तस्य यः पुत्रो भृज्जकण्टः स हि स्मृतः॥

"ब्राह्मण्यां भृज्जकण्टाच्च सुतस्त्वावर्तको भवेत्। ब्राह्मण्यावर्तकाभ्यां यः पुत्रः सकटधानकः॥

"ब्राह्मण्यां कटधानेन सुतोऽसौ पुष्पशेखरः। भृज्जकण्टादयः प्रोक्ताश्चत्वारः पूर्वतः क्रमात्॥

"तेषां कर्माणि वक्ष्येऽहं जीवनाय विशेषतः। वर्ण्यौ हरिहरौ तैश्च गीतगाथाप्रबन्धनैः॥

"चरितैर्देशभाषाभिर्गानं तज्जीविका स्मृता। लोकाचारात्स्मृतास्तेषां शूद्रधर्मा न हि क्वचित्"॥ इति।

अन्यत्राप्युक्तम्।

"व्रात्याद्विप्राद्विप्रपत्न्यां भृज्जकण्टः सुतः स्मृतः। ब्राह्मण्यां भृज्जकण्टाद्यो जात आवर्तकः सुतः॥

"आवर्तात् द्विजभार्यायां कटधानः सुतः स्मृतः। ब्राह्मण्यां कटधानाद्यः पुत्रोऽसौ पुष्पशेखरः॥

"एतैस्तु जीवनार्थाय कार्यं विष्ण्वादिपूजनम्। नृत्यगीतादिवादित्रशङ्खवीणादिवादनम्॥

एतैर्भृज्जकण्टावर्तककटधानपुष्पशेखरैः।

"पुष्पशेखरसंज्ञायां जातो विप्रात्तु यः सुतः। स जात्या भोजको नाम सूर्यपूजनजीविकः॥

"द्विजोढा भोजकसुता ताभ्यां देवलकः स्मृतः। जात्यैकः शाश्वतो ज्ञेयो विष्णुपूजनजीविकः"॥ इति।

एते च नानुलोमजा न प्रतिलोमजा अपि तु ब्राह्मणा एव। मद्यपपतितब्राह्मणादिवत्। दुर्ब्राह्मणा व्यभिचारजा इति संप्रदायः।

"विप्रः स्वीकृत्यसंन्यासमारूढपतितो भवेत्।

"ब्राह्मणीं कारयेद्रण्डां यं तस्यां जनयेत्सुतम्। स दोलः कर्मचाण्डालस्तत्स्पर्शात्पातकं महत्॥

"वापीकूपतडागानां प्रवाहानां च सर्वशः। खननं जीवितार्थाय तस्य प्रोक्तं विशेषतः"॥

१ 'निच्छिविरेवे'त्यप्यपरः पाठः।

कोइरी इति भाषाप्रसिद्धः । तथा

"शुद्धा या क्षत्रिया सूते व्रात्यक्षत्रियमैथुनात् । पुत्रः सज्जल इत्युक्तः शूद्रधर्मविधायकः ॥
"स कुर्याद्राजपुत्रांश्च शस्त्रास्त्रकुशलान् धनम् । तेभ्यो लब्ध्वा स्ववृत्त्यर्थं स्वधर्ममनुपालयेत् ॥
"क्षत्रिणीजलसंयोगाज्जातो मल्लाभिधः परः । लब्ध्वा योऽसौ बलं सम्यक् बलदर्पेण गर्वितः ॥
"राज्ञां कौतुकमुत्पाद्य नियुद्धेन धनार्जनम् । कुर्यात्स्ववृत्तिनिपुणः शूद्रधर्मानिशेषतः ॥
"व्रात्यात्क्षत्रात्सुतो जातः क्षत्रिण्यां शस्त्रजीविकः" ।

जातिजीवी

"व्रात्यक्षत्रियतः शूद्र्यां सल्लः शूद्रविधानकृत्" ।

स कुर्यात् येन राजगुरुरिति प्रसिद्धः । सल्लः । 'तस्मात्मल्लः सुतो जातः क्षत्रिण्यां व्यभिचारतः राज्ञां धनम्' । इत्यन्यत्र पाठः ।

"क्षत्रिणीमल्लसंयोगाच्छिलीन्ध्र इति जायते । स हीनः शूद्रधर्मेभ्यो जीविकाऽस्याङ्गमर्दनम् ॥
नापितभेदो मर्द्दनीति भाषा प्रसिद्धः ।
"शिलीन्ध्रः क्षत्रिणीं गच्छन् जनयेन्नटसंज्ञकम् । हीनोऽसौ शूद्रधर्मेभ्यो नाटकानि समभ्यसेत् ॥
"काह्लाटिकः स एवोक्तो बहुरूपीति विश्रुतः" ।

अत्रापि दुष्टक्षत्रियत्वमेवं न त्वनुलोमजत्वादि ।

"शूद्रकन्यासमुत्पन्नो ब्राह्मणेन तु संस्कृतः । अपरो नापितः प्रोक्तः शूद्रधर्माधिकोऽपि सः" ॥
अत्रापि दुष्टशूद्रत्वमेव न तु तत् । अत एवाधिक इत्युक्तम् । **उशनसा** नापितशब्दो निरुक्तः ।
"सूतके प्रेतके वाऽपि दीक्षाकालेऽथ वापनम् । नाभेरूर्ध्वं तु वपनं तेनासौ नापितः स्मृतः" ॥ इति ।
'अन्यो नापितोऽग्रे वक्ष्यत इति' इति दिक् ॥ ९४ ॥

## याज्ञवल्कीये ९७ श्लोकः

**संकरे** । तद्विशेषे प्रजायते इत्यस्योत्पाद्यते इत्यर्थं सूचयन्नाह । **माहिष्येणोत्पादितो रथेति** । तदेवाह । **यथाह शङ्ख इति** । **नुलोमेति** । अनेन तस्यानुलोमत्वमुक्तं भवति । वाचनिकत्वात्पृथगाह । **अध्ययनेति** ।

**वसिष्ठोऽपि** "क्षत्रियवैश्यानुलोमान्तरजातो रथकार इत्येके । तस्येज्याध्ययनाधानोपनयनसंस्काराश्चाप्रतिषिद्धा रथसूत्रवास्तुविद्याध्ययनवृत्तिता चेति"

अनेन शूद्रासदृशजस्य रथकारस्यैवोपनयनमुक्तम् । अन्ये तु

"नैवोपनयनं तस्य शूद्रधर्माद्बहिः क्वचित् । वर्तनं शिल्पवृत्त्याऽत्र लोके शिल्पस्य शास्त्रवित्" ॥

इत्याहुः । एतस्यैव रथकाराधानेऽधिकार इति **कर्काचार्याः**। वैश्याच्छूद्रायामुत्पन्नस्य करणस्यापि रथकारपदवाच्यता । 'वैश्याच्छूद्रायां रथकार' इति **बौधायना**दिति **मदनपारिजात**कर्तृकर्तृकायां **शूद्रधर्मोत्पलद्योतिन्यां स्मृतिकौमुद्यां** स्पष्टम् । **वसिष्ठो**ऽपि तत्रैव स्पष्टः । तथा "व्रात्यवैश्योत्पन्नसुधन्वाचार्योऽपि रथकार" इति **जैमिनिः** । तथाहि वचनाद्रथकारस्याधाने सर्वशेषत्वात् "वर्षासु रथकार आदधीत" इति वाक्ये ऽवर्णिकस्य रथकारस्याधानं वचनात् अस्मादेव वाक्यात् । अस्य रथकाराधानवाक्यस्य सर्वत्रैवर्णिकाधानविधायकवाक्यशेषे पठितत्वात् । त्रैवर्णिकानामुक्तस्य कालस्य बाधे मानाभावेनेदं वचनमत्रैवर्णिकपरमिति तदर्थ इति तद्भाष्यम् ।

ते च के ? तत्राह **सूत्रकारः** । "सौधन्वनास्तु हीनत्वान्मन्त्रवर्णात्प्रतीयन्त" इति । सौधन्वना ऋभव इति । रथकाराधानमन्त्रे ऋभुपदवाच्यानां रथकाराणां सौधन्वना इत्यनेन सामानाधिकरण्यात्ते रथकाराः । सुधन्वनामाचार्याः सौधन्वनाः ।

ननु व्रात्यवैश्यादुत्पन्नस्य सुधन्वाचार्यस्य वैश्यत्वमेवेति चेत्तत्राह । हीनत्वात् वैश्येभ्योऽपकृष्टत्वादित्यर्थः । अत एव **मनुना** संकरेषूक्ताः । शूद्रेभ्यस्तूत्कृष्टास्ते इति शूद्रत्वप्रयुक्तो निषेधो नास्मिन्निति **शबरस्वामी** । "इदं चाधानं स्वतन्त्रं विश्वजिद्वत्कल्प्यस्वर्गरूपफलं न तु यज्ञादिफलकमुपनयनाभावेनाध्ययनाभावादिति" **तन्त्ररत्नकृत्** । वचनाद्वाधानमिति वदता **जैमिनिना**ऽपीदं ध्वनितम् । एवं च व्रात्यवैश्योत्पन्नस्य नोपनयनसंस्कार इति जैमिनिसंमतं यद्यप्यस्य वृत्तिर्वसिष्ठेन ब्रह्मपुराणे व्यासेन च प्रतिमादिस्थाने पूजोक्ता तथापि जैमिनिप्रामाण्याद्रथकरणवृत्तिरप्यस्य बोध्या । अत एव **शबरस्वामिना** 'सौधन्वना ऋभव' इत्यत्र ऋभुपदस्य रथकारशक्तत्वे 'नेमिं नयन्ति ऋभवो यथेति' मन्त्रः प्रमाणत्वेन दर्शितः । नेमिं नयन्तीत्यस्य काष्ठत्रययोजनेन नेमिं निष्पादयन्तीत्यर्थः । एवं च योगरूढस्तत्र रथकारशब्दः । अन्ये तु शुद्धरूढमेवेच्छन्ति । एवं च रूढेर्बलवत्वादस्यैव ग्रहणं न्याय्यमिति तदाशयः । एवं क्षत्रियव्रात्योत्पन्नोऽप्यसंस्कार्यः **मनुना** 'शनकैस्तु क्रियालोपात्' इत्यादिवक्ष्यमाणे वृषलत्वेन गणितद्रमिडखससंज्ञया व्रात्यक्षत्रियजस्य व्यवहारात् क्रियालोपेन वृषलत्वकथनाच्च । **आपस्तम्बेन** तु "वसन्तो ब्राह्मणस्य ग्रीष्मो राजन्यस्य हेमन्तो वा शरद्वैश्यस्य वर्षा रथकारस्य ये त्रयाणां वर्णानामेतत्कर्म कुर्युस्तेषामेष काल" इत्याधानप्रकरणे उक्तम् । त्रयाणां वर्णानामन्तर्भूतगुणेच्छया कुर्वन्ति रथकरणं ते रथकारा इति तद्भाष्यकृतः । "ग्रीष्मवर्षाशरत्सु क्षत्रियवैश्योपकृष्टा" **इत्याश्वलायनसूत्रव्याख्याया**मपकृष्टो रथकारो वैश्यस्तक्षकर्मोपजीवी उपकृष्ट इत्युच्यते इति तद्व्याख्यातारः ।

न च त्रैवर्णिकस्य शिल्पोपजीवनप्रतिषेधात्तस्य रथकारत्वासंभव इति वाच्यम् । "गुणार्थेनेति" सूत्रेण **जैमिनि**ना समाहितत्वात् । न च तेषामेतद्विधिविषयत्वे रथकारत्वे निमित्ते वर्षाविधानं वाक्येन कार्यं मम तु यस्याप्राप्तं तस्याधानविधानं श्रुत्येति वसन्तादिवाक्यैकरूपमितिवाच्यम् । **आपस्तम्ब**वचनेन तस्य नैमित्तिकत्वबोधनेनाक्षतेः । न हि सर्वेषामैकरूप्यनियमः सर्वत्रास्ति ।

**बौधायन** उपनयनमपि वर्षासु रथकारस्याह । अनेकऋषिप्रामाण्यात्सर्वत्रश्रुतेस्तात्पर्यमिति

तत्वम् । एतेन माहिष्यात्करण्यामुत्पन्नस्य रथकारस्य नाधानाधिकार इति तन्त्ररत्नोक्तमपास्तम् । प्रागुक्तवसिष्ठशङ्खविरोधात् । मूलोक्त एव हि ताभ्यामुक्तः । **संज्ञास्त्विति** । ताश्चोक्ता अनुपदं स्फुटीभविष्यन्ति च ।

न्यूनतां परिहरति । **एतच्चेति । आनन्त्यादिति** । अबुधबोधनाय किंचिदत्रोच्यते ।

"दौष्यन्त्यां ब्राह्मणाज्जात आपीताख्यो भवेद्विजाः। आयोगव्यां तु विप्रेण पिङ्गलो नाम जायते" ॥

इति **सूतसंहितायाम्** । तत्र प्रकरणाद्विप्रापरमिदम् । **विश्वम्भरवास्तुशास्त्रे** उक्तम्

"माहिष्यस्त्रीब्राह्मणेन संगता जनयेत्सुतम् । आभीरपत्न्यामाभीरमिति तं विधिरब्रवीत् ॥

"तेषां सद्यो वसेद्घोषे बहुशष्पजलाकुले । अर्जितं गोमहिष्यादि पोषयेत्तृणवारिणा ॥

"दुग्धं दधि घृतं तक्रं विक्रीणीते धनाय च। शूद्रेभ्यो न्यूनता धर्मे तस्य सर्वस्य विश्रुता" ॥ इति ।

"माहिष्यायां द्विजाज्जात आभीरः क्षीरविक्रयी" अन्यत्र । अत्र माहिष्यायां वैश्यस्त्रियां क्षत्रियतो जातात्वेनानुलोमत्वात्तस्यां ब्राह्मणादुत्पन्नत्वेनाभीरोऽप्यनुलोमः ।

"शूद्राक्षत्रिययोर्जाता वनितोग्राभिधानिका ।

"ब्राह्मणाज्जनयेत्पुत्रमावृत्तं कुम्भकारकम् । स शूद्राद्धीयते धर्मे घटयेन्मृन्मयान्घटान्" ॥ इति।

"उग्रायां यो द्विजाज्जातः कुम्भकारः स उच्यते"॥ क्षत्राच्छूद्रायामुग्रेत्यन्यत्र । अयमनुलोमः ॥

"वैश्यस्त्रीद्विजसंभूता कन्याऽम्बष्ठाभिधानिका । सा त्वम्बष्ठा द्विजाश्लिष्टा जनयेत्तनयं रहः ॥

"स कासार इति ख्यातः सततं कालिकां यजेत्। कांस्यपात्राणि चित्राणि रचयेज्जीवनाय च॥

"शूद्रधर्मेण सर्वत्र स्थितिरस्य विधीयते ॥"

द्विजपदं ब्राह्मणपरं **कसेरा** इति प्रसिद्ध इति ।

"अम्बष्ठायां द्विजाज्जातः पुत्रः कांस्यस्य कर्मकृत्" द्विजाद्वैश्यायामंबष्ठेत्यन्यत्र । अयं **कासारो**ऽप्यनुलोमः । **मनु**नाऽप्युक्तम् ।

"ब्राह्मणादुग्रकन्यायामावृतो नाम जायते। आभीरोऽम्बष्ठकन्यायामायोगव्यां तु धिग्वण" ॥इति।

"द्विजशूद्रासमायोगान्निषादा वनिता भवेत् । निषादो द्विजतः सूते तनयान्मौष्टिकाभिधान् ॥

"ते दोलावाहकाराज्ञां विशेषाद्द्रुतगामिनः । छारालावाहका ते स्युः कावडीवाहका मताः ॥

"विक्रयश्चेन्धनानां च तेषां धर्मा न केचन" ॥ इति ।

"विप्रान्निषायां यो जातो पौष्टिकः स्कन्धवाहकः ।"

विप्राच्छूद्रां निषादी लोके 'कहार' इति प्रसिद्ध इत्यन्यत्र । अयमप्यनुलोमः

"द्विजाज्जातस्तु मागध्यां गोप्तः कारागृहस्पृहः"।

क्षत्रियायां वैश्यामागधी लोके 'बन्दीवान्' इत्युच्यते ।

"ब्राह्मण्यां वैश्यजनिता वैदेहीति निगद्यते । सा संगता ब्राह्मणेन छत्रपं जनयेत्सुतम् ॥

"स स्याच्छत्रधरो राज्ञां लोके वाहीति कथ्यते । समस्तेषु च वर्णेषु कुर्यात्पानीयविक्रयम् ॥

"तस्यैवं जीविका प्रोक्ता शूद्रधर्मो न हि क्वचित्" ॥ इति ।

"उदवाहः सुतो विप्राद्वैदेह्यां व्यभिचारतः । स च्छत्रधारणं कुर्यान्नीरविक्रयणं तथा" ॥

ब्राह्मण्यां वैश्याद्वैदेहीत्यन्यत्र । वैदेह्याः प्रतिलोमत्वादयं प्रतिलोम इति केचित् । तस्याः प्रतिलोमत्वेऽपि ब्राह्मणजन्यत्वादनुलोम इति अपरे ।

"वैश्यस्त्रीशूद्रसंयोगाज्जाताऽऽयोगविकाभिधा । आयोगवीब्राह्मणाभ्यां धिग्वणस्य समुद्भवः ॥

"स चर्मणाऽश्वपर्यायां यथाशोभं प्रकल्पयेत् । अश्वानां पाखरं सोऽपि कर्तुं चिन्तास्तथाऽर्हति ॥

"तत् द्रव्यं जीविका तस्य विहिता लोकविश्रुता" ।

अयं मोचीति प्रसिद्ध इति ।

"आयोगव्यां द्विजाज्जातो धिग्वणः कवचादिकृत् । स चर्मणां च पल्याणं यथाशोभं प्रकल्पयेत्" ॥

इत्यन्यत्र ।

" शूद्राक्षत्रिययोः पारशवी संज्ञा तु जायते । सा सूते क्षत्रियात्पुत्रं विवातं ताम्रकुट्टकम् ॥

"संसर्गं सह कासारैः कुर्यात्स तु विशेषतः ॥ घटनं ताम्रपात्राणां तत्पर्यावर्तजीवनम्" ॥ इति ।

"क्षत्रात्पारशवीपुत्रः किन्नाटस्ताम्रकुट्टकः" । विप्राच्छूद्रायां पारशवीत्यन्यत्र लम्बर इति ख्यातः ॥

"वैश्याच्छूद्रामन्यवध्वां जातो वैतालिकाभिधः । जीवनं कामशास्त्रेण स्तुत्या वा भाट्टकर्मणा ॥

"यो मागधीक्षत्रिययोर्जातिश्चोलूकसंज्ञकः । स लोहकारो विख्यातो लौहं कर्मास्य विश्रुतम् ॥

"तेषां तु गुणसंयोगं संज्ञां शस्त्रविधायकः" ।

अयमनुलोमः ।

"मागध्यां क्षत्रियाज्जात उलूको लोहकर्मकृत् । स लोहकर्मणा जीवेदुत्तमश्वान्यजातितः ॥

"ब्रह्मक्षत्रियविट्शूद्रवर्णेभ्यो हीन एव सः" इति च ॥

"वैश्यवीर्येण शूद्रायां जाता सा करणी स्मृता । करणीवैश्यसंयोगाज्जातो वत्सरसंज्ञकः ॥

"हीनः स शूद्रधर्मेभ्यः शाद्वलं गाश्च पालयेत्" ।

अयमप्यनुलोमः ।

"वैश्यक्षत्रिययोर्जातो माहिष्य इति गीयते । स माहिष्यो निषादस्त्रीसंगमाज्जनयेत्सुतम् ॥
"मालाकारमसौ लोके मालाकारः प्रकीर्तितः । कुसुमानि सशाखानि बद्धयेद्धनलब्धये ॥
"स हीनः शूद्रधर्मेभ्यः संस्कारे सप्तके प्रभुरिति "।
"पारशव्यां च माहिष्यान्मालाकारः स तूच्यते" इत्यन्यत्र । अयमप्यनुलोमः ।

"मालाकाराच्च शालाकः करण्यां मणिरन्ध्रकृत्" । 'मणियारा' इति ख्यातः । तस्यैव स्मृत्यन्तरे मञ्जुरिति संज्ञा ।

"द्विजवैश्यासमायोगाज्जाताऽम्बष्ठापुरान्ध्रिका । ब्राह्मण्यां जायते वैश्याद्योऽसौ वैदेहिकाभिधः ॥
"साऽम्बष्ठा जनयेत्पुत्रं वैदेहाद्वेनसंज्ञितम् । स शूद्रधर्मरहितोऽभ्यसन्नात्यं स लाववम् ॥
"जीविका तस्य कथिता हरिमेखललेखनम् । वैदेहकेनत्वम्बष्ठ्यामुत्पन्नो वेन उच्यते ॥"
इति **मनुः** । अयं प्रतिलोमः ।

"अम्बष्ठायां तु वैदेहाज्जातः स्याद्धरिमेखलः । वैश्याक्षत्रियसंयोगान्माहिष्या जायते सुता ॥
"क्षत्रिणीवैश्यसंयोगाज्जातोऽसौ मागधाभिधः । माहिष्यामागधाच्चैव शुद्धं मार्दकसंज्ञकम् ॥
"जनयेत्तनयं सोऽपि शूद्रधर्मनिराकृतः । गीतं चतुर्विधं वाद्यमभ्यसेज्जीवनाय च ॥"
अयं प्रतिलोमो मृदङ्गवाद्यकरः ।

"शूद्रादायोगवी जाता वैश्यकन्या समुद्भवा । आयोगवी सा सैरन्ध्रं कायस्थाज्जनयेत्सुतम् ॥
"स हीनः शूद्रजातिभ्यः सेवां कुर्यात् द्विजातिषु । पादयोः क्षालनं तेषां धम्मिलानां प्रसाधनम् ॥
"अभ्यङ्गमर्द्दनं चैवं चन्दनेनानुलेपनम् । मृगनाभेश्च संयोगं शृङ्गाररचनं नवम् ॥
"आजीवस्तस्य संप्रोक्तः स्त्री च सैरन्ध्रिका स्मृता । प्रसाधनोपचतुरा सैरन्ध्रीति प्रकीर्तिता" ॥ इति ।
"आयोगव्यं तु करणात्सैरन्ध्रो गन्धकर्मकृत् । पुष्पचन्दनपरागादिविक्रयस्तस्य जीवनी ॥
वैश्याच्छूद्रायां करण इत्यन्यत्र ।

"प्रसाधनोपचारज्ञमदासं दास्यजीवनम् । सैरन्ध्रं वागुरावृत्तिं सूते दस्युरयोगवे" ॥
इति **मनुः** । ( अ. १० श्लो. ३२ ) अनुलोमपुंजन्यत्वादयमनुलोमः ।

"विप्राच्छूद्र्यां समुत्पन्नो नरः पारशवाभिधः । स एव स्यान्निषादोऽत्र लोके व्यापारविश्रुतः ॥
"उग्राशूद्र्यां समुत्पन्ना क्षत्रियादेव केवलात् । सोग्रानिषादसंयोगाज्जाधिकं जनयेत्सुतम् ॥
"स शूद्रधर्मरहितो द्विजानां लेखहारकः । देशादेशान्तरं गच्छेच्छीघ्रं चरणवेगतः" ॥ इति ।
"उग्रायां वै पारशवाज्जाधिकः पादवेगवान्" ।

धावनशीलो 'चारीति' प्रसिद्ध इत्यन्यत्र । अयमनुलोमो **मेवडा** इति मध्यदेशभाषया प्रसिद्धः ।
"क्षत्रिणी शूद्रसंयोगात्क्षत्तारं जनयेत्सुतम् । उग्राशूद्र्यां समुत्पन्ना क्षत्रियादेव केवलात् ॥

"क्षत्तुरुग्रा च जनयेत्क्षेमकं तनयं क्षितौ। स हीनः शूद्रधर्मेभ्यो द्वाररक्षाऽस्य जीवनम्"॥ इति।

"उग्रायां क्षेमकः क्षत्तुः प्रतीहारः स उच्यते"।

क्षत्राच्छूद्रायामुग्रेत्यन्यत्र ।

"क्षत्तुर्जातस्तथोग्रायां श्वपाक इति कीर्त्यते"। इति तु **मनुः** (अ. १० श्लो. १९)।

अयं प्रतिलोमो **दरवाण** इति भाषाप्रसिद्धः।

"ब्राह्मण्यां वैश्यजनिता जाता वैदेहिका मता। विप्राद्वैश्याङ्गनाजातोऽम्बष्ठ इत्यभिधीयते॥

"सा वैदेही च सोऽम्बष्ठस्तयोर्जातः कुशीलवः। नृत्यकर्ता स गीतज्ञो देशाद्देशान्तरं व्रजेत्॥

"साऽस्य वार्ताऽत्र कथिता चारणस्य स्वयंभुवा"।

**अयमनुलोमः।**

"कुशीलवः सुतोऽम्बष्ठाद्वैदेह्यां नर्तनादिकृत्"। विप्रायां वैश्याद्वैदेहीत्यन्यत्र॥

"शैवाः पाशुपताश्चैव योगधर्मपरायणाः। आरूढपतितास्ते स्युः शूद्राः पण्याङ्गनारताः॥

"तेभ्यस्ताभ्यश्च संभूतो भस्माङ्कुर इतीरितः। स जटाभस्मधारी च शिवलिङ्गं प्रपूजयेत्॥

"ताम्बूलमक्षता द्रव्यं गावः क्षेत्राणि शाकिनी। शिवाय प्राणिभिर्दत्तमन्यत्किमपि भक्तितः॥

"चण्डीशं तदिति ख्यातं तेन तस्येह जीवनम्। आरूढपतिताः शूद्राः"॥ शूद्रोऽपीत्यर्थ इति।

"शैवः पाशुपतः कश्चिदासूतः पतितो यदि। तस्माज्जातः शूद्रपत्न्यां पुत्रो भस्माङ्कुरः स्मृतः॥

"शिवार्चनं तु तत्कार्यं शिवदायेन जीवनम्। स जटाभस्मधारी च शिवलिङ्गं प्रपूजयेत्॥

ताम्बूलमित्यादिजीविकेत्यन्तमित्यन्यत्र। अयमनुलोमो **गुरव** इति महाराष्ट्रभाषया प्रसिद्धः।

"शूद्रादायोगवी जाता वैश्यायामिति विश्रुता। ब्राह्मण्यां वैश्यजनितः स च वैदेहकः स्मृतः॥

"आयोगवी सा वैदेहान्मैत्रेयं जनयेत्सुतम्। स्यादुषःसमये नित्यं घण्टावादनतत्परः॥

"प्रबोधं नागराणां च कुर्यान्मङ्गलगायकः। ललितां भैरवीं गायन् धनं सा तस्य जीविका"॥ इति।

"आयोगव्यां तु वैदेहाज्जातो मैत्रेयको भवेत्। घण्टावादनकृत्प्रातस्तथा मङ्गलगानकृत्"॥

शूद्राद्वैश्यायामायोगवीत्यन्यत्र।

"मैत्रेयकं तु वैदेहो माधूकं संप्रसूयते। नॄन्प्रशंसत्यजस्रं यो घण्टाताडोऽरुणोदये"॥

इति **मनुः** (अ. १० श्लो. ३३)। अयं प्रतिलोमो **टोकणकार** इति महाराष्ट्रभाषया प्रसिद्धः।

"ब्राह्मण्यां क्षत्रियात्सूतः संजात इति कीर्तितः। ब्राह्मण्यामपि वैदेही वैश्याज्जातेति कीर्तिता॥

"वैदेही सूतसंयोगात्सूदं सूते सुतं ततः। लेह्यादीनां चतुर्णां च पाकं कुर्याद्यथाविधि॥

"अन्नानमृतयोगेन मांसस्तावकभेदतः। रसैः स्वाद्वम्ललवणतिक्तोषणकषायकैः॥

"वातपित्तकफादीनां क्षयोपचयकारकैः। शूद्रधर्मानधिकृतः सूपशास्त्रविशारदः॥

"पार्वतीनलभीमानां मतेषु परिनिष्ठितः" ॥ इति ।

"सूताज्जातस्तु वैदेह्यां सूपकारः स जायते" ।

ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहीत्यन्यत्र । अयं प्रतिलोमः ।

"क्षत्रिणीवैश्यसंयोगाज्जाता मागधिका सुता । वैश्यशूद्रासमायोगाद्वैदेहायोगवाभिधः ॥

"मागधायोगवाभ्यां च भ्रुकुंस[1] इति जायते । स वर्णबाह्यो धर्मेषु सम्यक् संगीतकोविदः ॥

"कान्तानां नृत्यशीलासु लास्यं गीतं च शिक्षयेत्" ।

अयमनुलोमः ।

"मालाकारात्क्षत्रियायां शिलीन्ध्रो मर्दनक्रियः । हीनः स शूद्रधर्मेभ्यो जीविकाऽस्याङ्गमर्दनी ॥

"शिलीन्ध्रात् क्षत्रियायां च कौलाटी नाम जायते" ।

**बहुरूपीति** प्रसिद्धः ।

"कायस्थजातेर्वनितां मालाकारोऽभिकामयेत् । तस्यां यो ग्राम्यधर्मेण जायते तनयः पुमान् ॥

"शराणां कङ्कपत्रैश्च रचना तस्य जीविका" इति ।

"निर्मण्डलक आभीराज्जातोऽसौ बाणकर्मकृत् । शराणां करपत्रैश्च रचना तस्य जीविका" ॥

इति अन्यत्र । अयं प्रतिलोमः । **सिकिलीगर** इति मध्यदेशभाषया प्रसिद्धः ।

"क्षत्रिणीतनया वैश्याज्जनयामास वन्दिनीं । सा वन्दिनी द्विजात्सूते तनयं मङ्गुसंज्ञकम् ॥

"स मङ्गुः कुम्भकारस्य महिषीं यदि कामयेत् । तस्यां च जनयेत्पुत्रं स भवेच्छाल्मलाभिधः ॥

"स हीनः शूद्रवर्णेभ्यः पर्णवल्लीविधायकः । ताम्बूलवल्लीसंभूतं द्रव्यं तस्येह जीवनम्" ॥ **इति** ।

"कुलाल्यां शाल्मलो मङ्गोर्नागवल्यास्तु विक्रयी" इत्यन्यत्र ।

अयमनुलोम**स्ताम्बोलीति** मध्यदेशभाषाप्रसिद्धः ॥

"ब्राह्मण्यां वैश्यजनितो जातो वैदेहिकाभिधः । तस्य शूद्राङ्गनासूनुर्जातस्त्वान्धसिकाभिधः ॥

"कुर्यादन्नानि चत्वारि विक्रयार्थं स संततम् । अन्नविक्रयतो लब्धं तद्धनं तस्य जीवनम्" ॥**इति**

"वैदेहात्सूपकार्यां च पुत्र आन्धसिको भवेत्" इत्यन्यत्र । अयं प्रतिलोमो **भटिहारा** इति भाषाप्रसिद्धः ॥

"कटधानः स मङ्गुं तां कामतां यदि गच्छति । तयोर्यो जायते पुत्रः स छागलिकसंज्ञकः ॥

"स हीनः शूद्रजातिभ्यश्छागलान् रचयेच्च सः । छागलेभ्यो धनं जातं तस्य तज्जीवनं स्मृतम्" ॥ **इति** ।

"नाम छागलकं पुत्रं कटधानादजीजनत् । मञ्जुभार्या स वै लोके अजापाल इति स्मृतः" ॥

---

१ भृन्कुंश इति अपरः पाठः ।

इत्यन्यत्र । अयं प्रतिलोमो **गडरिया** इति मध्यदेशभाषया प्रसिद्धः ।

"मद्गुसैरन्ध्रयोर्जातः शय्यापालकसंज्ञकः । जातस्तं सततं राजा शय्याकर्मणि योजयेत्" ॥ इति।

"सैरन्ध्रात्क्षेमका लेभे शय्यापालं कुसेवकम्" । क्षेमका प्रतिहारी स्त्री, तज्जः शय्यासंविधान-कुशलस्तेन जीवति इत्यन्यत्र । अयं प्रतिलोमः ।

"कर्मचाण्डालवनिता पुष्पशेखरसंज्ञितात् । जनयेद्यं सुतं सोऽपि ख्यातो मण्डलकाभिधः ॥
"युगलं शुनकानां स धनुर्योज्यो महीभुजा । आखेटकपणेभ्यश्च शुनां जीवनमुच्यते ॥ इति ।
"कर्मचाण्डालभार्यायां यो जातः पुष्पशेखरात् । स वै मण्डलको नाम शुनां मण्डलपोषकः"॥

इत्यन्यत्र । अयं प्रतिलोमः ।

"विधवायां यतेर्जातः कर्मचाण्डाल उच्यते । वापीकूपादिमृत्कर्मकर्ता चास्पृश्य एव सः" ॥
"वन्दिनी शूद्रसंयोगाज्जातः संदोलिकाभिधः । चतुर्वर्णविहीनश्च मञ्जिष्ठारङ्गकारकः ॥
"तेन रङ्गेन वासांसि चित्राणि रचयेत्सदा । हस्तलेख्यं विचिन्त्यं च द्विधा तद्रङ्गसाधनम् ॥
"स एव सूचकः ख्यातः कर्तरीसूचिकार्जकः ।" इति ।

अयमनुलोमो **रंगारी छिपी** इति मध्यदेशभाषाप्रसिद्धः ।

"निषादकन्यका शूद्रसंगाद्यं जनयेत्सुतम् । स क्रोधिकः कुक्कुटक इति प्रोक्तो द्विसंज्ञकः ॥
"टङ्कशालासु सर्वासु नाणकानां विधायकः । जीवनायाष्टधातूनामन्त्यजैः समतां व्रजेत्"॥इति।
"शूद्रो निषाद्यां संजज्ञे कुक्कुटं टङ्कशालिका । रङ्गशालासु सर्वासु नाणकानां विधायकः ॥
"जीवनाच्चाष्टधातूनामन्त्यजैः समतां व्रजेत्" इत्यन्यत्र ।

"शूद्राज्जातो निषाद्यां तु स वै कुक्कुटकः स्मृतः" । इति **मनुः** (अ. १० श्लो. १८) ।

अयं प्रतिलोमः ।

"उग्रवैदेहिकायोगाज्जातो मण्डूषसंज्ञकः । रजको वर्णतो हीनः प्रथमश्चान्त्यजेषु च ॥
"वस्त्रनिर्णेजनं कुर्यादात्मवृत्त्यर्थमेव सः" ॥ इति ।
"उग्राज्जातं तु वैदेह्यां मञ्जूषं रज्जुकं विदुः" । **रजक** इत्यादि
क्षत्राच्छूद्रायामुग्रः ब्राह्मण्यां वैश्याद्वैदेहीत्यन्यत्र । अयमनुलोमः ।
"उग्रपारशवाभ्यां यो जातो मौष्कलिकाभिधः । वहेदसौ तैलयन्त्रमुत्तमस्त्वन्यजातितः ॥
"जीविकाऽस्य समुद्दिष्टा शुद्धतैलस्य विक्रयः । तिलहिंसायंत्ररवाकर्णनात्पापसंभवः ॥
"अतो मौष्कलिको नित्यं निर्वास्यो नगराद्बहिः" ॥ इति ।
"उग्रात्पारशवापुत्रो मौष्कलिस्तैलिको भुवि" । अग्रे प्राग्वत् । तथा च **स्मृतिः** ।

"तिलयन्त्रेक्षुयन्त्राणां यावच्छब्दः प्रवर्तते। तत्र कर्म न कुर्वीत शूद्रान्त्यपतितस्य च" ॥ इति। अयमनुलोमः ।

"रथकारस्य वनिता आयोगवसमागता । सूते यं तनयं सोऽपि सूत्रधार इतीरितः ॥
"जायाजीवश्च शैलूषो नाट्यशास्त्रविशारदः । जलमण्डलिकादीनि सूत्राणि रचयेत्सदा ॥
"लोकविस्मयकारीणि वसेत्स नगराद्बहिः" । इति ।

**गारुडीति** भाषाप्रसिद्धः ।

"कुक्कुटस्येह वनिता कुम्भकारेण संगता । तस्याः सूनुः स विख्यातः कुरुविन्द इति स्फुटम् ॥
"कौशेयानि स वस्त्राणि रचयेदात्मवृत्तये। तुल्योऽसावन्त्यजातीनां स्वधर्ममनुपालयन्" ॥ इति ॥

"कुरुविन्दः कुक्कुटक्यां सूतात्पट्टांशुके रतः । असावेवान्त्यजातीनां तं धर्मं तु समाचरेत्" ॥ इत्यन्यत्र । अयं प्रतिलोमः **जोलाहा** इति भाषाप्रसिद्धः ।

"संगता वेनवनिता वर्तकेन यदा रहः । तस्यां शाम्बरकाभिख्यः पुत्रोऽसौ लोमसम्मतः ॥
"स हीनस्त्वन्त्यजातिभ्यः शुचिवासोविधायकः" ॥ इति ।

"वेन्यां त्वावर्त्तकाज्जातः साम्बरं सूत्रवायकः" ॥ वेनी नटस्त्रीत्यन्यत्र । अयं **साली** इति भाषाप्रसिद्धः ।

"आभीरकुक्कटीभ्यां यो जातः सौवीरसंज्ञकः । स कुर्यात्तसरीणां च वसनान्यात्मवृत्तये ॥
"तद्वैपरीत्याद्यो जातो नीलीकर्ता स कथ्यते" ॥ इति ।

"आभीर्यां कुक्कुटात्पुत्रः सौवीरः कोसटस्तु सः । स कुर्यात्सर्वजातीनां वासांसि त्वात्मवृत्तये"॥ अग्रे प्राग्वत् । इत्यन्यत्र । **कोशटा** इति बङ्गालभाषाप्रसिद्धः ।

"मार्गानापितयोर्जातो योऽसौ सांखिल्यसंज्ञकः । हीनः स गुह्यकेशानां कुर्याद्वपनमञ्जसा ॥
"जलूकास्तु च शृङ्गाणि रक्ताकृष्टौ प्रयोजयेत्" ॥ मार्गा मार्दिलिका । **तेरिव** इति भाषाप्रसिद्धः ।

"उग्रायां मागधाज्जातः कुन्तलः श्मश्रुकर्मकृत् । स नापित इति प्रोक्तः क्षौरकर्मविधानकृत् ॥
क्षत्रियाच्छूद्रायामुग्रा क्षत्रियायां वैश्यान्मागधः ।
"श्मश्रुकर्त्तनकृच्चैव नखकर्त्तनकोविदः । वृत्त्याऽनया ग्राममध्ये तिष्ठन् वर्णेषु सेवकः ॥
"नराणां नापितो धूर्तः शूद्रेभ्योऽभ्यधिकः स्मृतः। कुन्तलान्मङ्गुभार्यायां स जातो व्यतरः स्मृतः" इत्यन्यत्र ।

"जातो मैत्रेयशुक्रेण जाधिकायां तु यः सुतः । असौ वन्धुलसंज्ञोऽत्राधमः सर्वासु जातिषु ॥

"सुवर्णकारविपणे धूल्यां हेम स पश्यति"।

मैत्रेयो नटः। जाधिको मेवडेतिपुत्रो मैत्राज्जाधिकायां बन्धुलः क्षारको भुवीत्यन्यत्र। अयं **झारा** इति भाषाप्रसिद्धः।

"निषादनारीसंयोगात्पौष्टिको जनयेत्सुतम्। स पांशुलकसंज्ञो हि द्विपं तु जनयेत्सुतम्"॥ इति।
"कैवर्त्ती पौष्टिकाल्लेभे पांशुलं शणवायकम्"इत्यन्यत्र।
"औरभ्रं छागली सूते भृज्ञुकण्ठाद्वि यं तु सः। कुर्यादूर्णपटांश्चित्रान्मेषाणां चैव पालनम्"॥ इति।
"छागली भृज्ञुकण्ठाच्च औरभ्रं मेषपालकम्" इति च। अयं **धनगर** इति भाषाप्रसिद्धः।
"आवर्त्तवनिता सूते क्षेमकादत्र पुत्रकम्। स महाङ्कुरीति ख्यात उष्ट्रवाहनतत्परः"॥

क्षेमको द्वारपालकः।

"आवर्त्तस्य तु भार्यायां क्षेमकादुष्ट्रपालकः"। इति च।
"आवर्त्तवनिता सूते मल्लाद्रौमिकसंज्ञकम्। स क्षारोदकमानीय बद्धा केदारखण्डके॥
"तज्जातं लवणं तस्य जीवनं भुवि विश्रुतम्"॥ इति।
"रौमिकं देशिकामल्लाद्युक्तं लवणकर्मणि"। इति च।
"कारावारी यदा नारी वैदेहाज्जनयेत्सुतम्। स मेदसंज्ञस्तुल्योऽन्यैः स्मृतः स फलजीवकः॥
"वातण्डवेषः स वसेदरण्ये वृक्षपर्वते"।

कारावारी कोलस्त्री।

"जज्ञे कारागालिका तु वैदेहान्मेदसंज्ञकम्। वित्तेच्छया च स वसेदरण्ये वृक्षपर्वते"॥

गाई इति प्रसिद्धः।

"आयोगव्यां पारशवाज्जातः कैवर्त्तकाभिधः। स हीनस्तुल्यजातिभ्यो जालं स्वीकृत्य सर्वतः॥
"मत्स्याञ्जलचरांश्चान्यान्घातयेदात्मवृत्तये। नाव्यं कर्म प्रवहणं नद्यां वर्षासु वाहयेत्॥
"नदीमुत्तारयेल्लोकांस्तेभ्यश्चेच्छेद्धनं ततः"॥ इति।
"आयोगवी च कैवर्त्तं जज्ञे पारशवात्सुतम्"। अग्रे प्राग्वदिति च।
"निषादो भार्गवं सूते दाशं नौकर्मजीविनम्। कैवर्त्तमिति यं प्राहुरार्यावर्त्तनिवासिनः॥
"मृतवस्त्रभृत्स्वनार्यासु गर्हिताचाशनासु च। भवन्त्यायोगवीष्वेते जातिहीनाः पृथक् त्रयः।
"कारावारी निषादात्तु चर्मकारं प्रसूयते। वैदेहिकादन्ध्रमेदौ बहिर्ग्रामप्रतिश्रयौ"॥ इति।

**मनुश्च** (३४–३६)।

"जातो निषादवीर्येण शूद्रां पुक्कससंज्ञकः। अन्त्यजानां च सदृशो धर्मेषु विविधेषु च॥

"आरण्यपशुघोषेण वृत्तिरस्यात्मपोषणम् । श्येनपापर्द्धिका तस्य कविता कविसंमता " ॥

**कोलीति** भाषाप्रसिद्धः ।

" निषादाच्छूद्रपत्न्यां च जातः पुक्कससंज्ञकः । अन्त्यजानां स सदृशो धर्मेषु विविधेषु च ॥

"आरण्यजीवघातेन तद्वृत्तिर्देहपोषणे । श्येनपापर्द्धिकात्तस्य कविता सद्विदूषिता " ॥

इति च ।

"जातो निषादाच्छूद्रायां जात्या भवति पुक्कसः" ॥ इति । **मनुश्च** ( अ. १० श्लो. १८ )

"निषादधिग्वणाज्जातः प्राणी कारीवराभिधः । स हीनस्त्वन्त्यजातिभ्यो जीविका तस्य चोच्यते ॥

"उपानदङ्गत्राणानि कुर्यादश्वस्य पाखराः । गोचर्मणा महिष्याश्च चर्मणा त य वर्त्तना " ॥

धिग्वणी **मोचीका** अयं **चांभार** इति प्रसिद्धः ।

"धिग्वणी तु निषादाद्यं चर्मकारः स तु स्मृतः " ।

स हीनः ।

"उपानहौ शिरस्त्राणं कुर्यादश्वस्य पाखराः । गोचर्मणा महिष्याश्च चर्मणा तस्य जीवनम् " ॥इति च ।

"आभीरी वेनसंयोगात्पौष्कलं जनयेत्सुतम् । असावधर्म इत्युक्तः सर्वधर्मबहिष्कृतः ॥

"सुरास्तु कृत्वा विक्रीय कुर्यात्तद्धनवर्तनम् " ।

**कलवार** इति प्रसिद्धः ।

"आभीरस्त्री लभेद्वेनात्पुत्रं शौंडिकसंज्ञकम् " । तस्य शौष्कल इत्यपि संज्ञा स्मृत्यन्तरे ।

"असावधर्म इत्युक्तः सर्वधर्मबहिष्कृतः । सुरां स कृत्वा विक्रीय कुर्यात्तेन च जीवनम् " ॥

इति च ।

"कैवर्तजान्धिकाभ्यां तु जातो मङ्गुष्ठसंज्ञकः । स स्फोटयेच्च कटकान् कृत्वा चूर्णं विशेषतः ॥

"तद्धनं जीवनायालं सोऽपि कुर्यान्निरन्तरम् । न स्पर्शस्तस्य कर्तव्यः कदाचिदपि मानवैः "॥

चूर्णकारः ।

"कैवर्त्ताज्जान्धिका लेभे मङ्गुष्ठरजकं विदुः " ।

रजक इति संज्ञामात्रम् । धर्मास्त्वन्यत्रोक्ताः ॥

"स पाचयेद्वै श्वबकान्कृत्वा चूर्णं विशेषतः । तद्धनं जीविकार्थाय सोऽपि कुर्यान्निरन्तरम्" ॥

अग्रे प्राग्वत् ।

"धिग्वणीकुम्भकाराभ्यां जातोऽसौ चित्रकारकः । स चित्राणि विचित्राणि लेखयेदात्मवृत्तये " ॥

चित्रकारः ।

"धिग्वणी कुम्भकारात्तु लेभे चित्रकरं भुवि । वर्णवासःसुविविधाचित्रलेखेन जीवति ॥

"कुरुविन्दा[1]ङ्गजा सूते धीवरात्किंशुकाभिधः । असावंत्यज इत्युक्तो वंशपात्रानुजीवकः" ॥

**बुरुड** इति भाषाप्रसिद्धः ।

"धीवरात्कुरुविन्दां यां किंशुको लोपकर्मकृत् । असावन्त्यज इत्युक्तो वंशपात्रोपजीवकः" ॥

इति च ।

"वैदेही तनयं सूते निषादादाहितुण्डिकम् । महासर्पान्करण्डेषु क्षिप्त्वा विषपरान्बहून् ॥

"तैः खेलनं जीविकाऽस्य सेवकस्येव भूभृताम्" ।

**गारुडीति** भाषाप्रसिद्धः ।

"जातो निषादाद्वैदेह्यां गारुडी डिण्डिमोत्तमः । सप्तानामन्त्यजातीनां सुधर्मे सदृशः स्मृतः" ॥

इति च ।

"आहिण्डिको निषादेन वैदेह्यामेव जायते" ॥ इति **मनुः** ( अ. १० श्लो. ३७ ) ।

"शौनकं कर्मचाण्डालात्सूते दाशवधूः सुतम् । स कुर्यादजमेषाणां वधं तन्मांसविक्रयी ॥

"तद्धनं जीवनं तस्य स हीनस्त्वन्त्यजातितः" ।

**खाटिक** इति प्रसिद्धः ।

"कैवर्ती सैनिकं लेभे पुत्रं चाण्डालसंगता । स कुर्यादजमेषाणां हिंसां तन्मांसविक्रयम्" ॥ इति ।

"कर्मचण्डालकात्पुत्रं वैदेही पाण्डुसोपाकम् । लेभे बुरुडजातिं तं सदा वंशविदारिणम्" ॥

इति च ।

"चण्डालात्पाण्डुसोपाकस्त्वक्सारव्यवहारवान् ॥" इति । **मनुश्च** ( अ. १० श्लो. ३७ ) ।

"व्याधाहितुण्डिकाभ्यां यो जातो याधीकसंज्ञकः । स कुर्यान्मूषकादीनां हननं भूमिवासिनाम् ॥

"जनेभ्यो याचयेद्वित्तं तेन तद्वर्तनं स्मृतम्" ।

"मेदस्य वंशजनिता तथा वेनेन संगता । सा सूते यवनं पुत्रं तरुष्कः संप्रकीर्तितः ॥

"तस्माद्वरिष्ठश्चाण्डालो दयावान्सोऽतिनिष्ठुरः" ।

यवनः ।

"चाण्डालः पुल्कसीसंगाच्छ्वपाकं जनयेत्सुतम् । गोगर्दभशुनां कुर्याद्ग्रामानिःसरणं बहिः ॥

"सा जीविकाऽस्य कथिता सर्वतो लोकविश्रुता" ।

**महार** इति प्रसिद्धः ।

---

१ कुरुब इत्यपरः पाठः ।

"ब्राह्मण्यां शूद्रतो जातश्चाण्डालः प्राग्निरूपितः। चाण्डालात्पुल्कसी जज्ञे श्वपाकं रात्रिज्ञापकम् ॥
"श्वमांसानि पचेन्नित्यं तन्मांसैनैव वर्तयेत् "॥ इति च ।
"निषादवनिता सूते चाण्डालात् डोम्बसंज्ञकम् । असावन्त्यावसायीति श्मशाननिलये वसेत् ॥
"तत्र रक्षां प्रकुर्वीत प्रेतानां वस्त्रजीवनः " ।

**डोंब** इति प्रसिद्धः ।

"जातो निषायां चाण्डालान्मृताश्वखरहारकः । डोम्बसंज्ञः श्मशानेषु वसेत्प्रेतोपजीवनः " ॥

इति च ।

"निषादस्त्री तु चण्डालात्पुत्रमन्त्यावसायिनम् । श्मशानगोचरं सूते बाह्यानामपि गर्हितम् " ॥

इति **मनुः** ( अ. १० श्लो. ३९ ) ।

"अंध्रस्य वनितासङ्गाच्चण्डालो जनयेत्सुतम् । प्लवसंज्ञं महाडीति लोके सर्वत्र विश्रुतः ॥
"अश्वोष्ट्रगर्दभानां च मृतानां कालयोगतः । कुर्यान्निर्वहणं सोऽपि मांसभक्षणजीवनः ॥
"मेदआयुयतीसङ्गाच्चण्डालो जनयेत्सुतम् । स माङ्गः श्वपचो लोकेऽस्पृश्यः साहसकारकः ॥
"जीविका तस्य कथिता आर्द्रगोचर्मरज्जुभिः " ।
"धिग्वण्यायोगवात्पुत्रं जज्ञे दुर्भटसंज्ञकम् । स कुर्याच्छागला सम्यक्...... रपत्रिकाम् ॥
"अन्त्यजातीसु मुख्योऽसौ कीर्तितो जातिसंकरे ॥
"शौण्डिकी डिण्डिमाल्लेभे कीनाशं कीटहारकम् । मेदयोषित्सु शैलिन्ध्रेरुत्पन्ना म्लेच्छजातयः॥
"चाण्डालेन तु सोपाको मूलव्यसनवृत्तिमान् । पुष्कस्यां जायते पापः सदा सज्जनगर्हितः ॥
"संकरे जातयस्त्वेताः पितृमातृप्रदर्शिताः । प्रच्छन्ना वा प्रकाशा वा वेदितव्याः स्वकर्मभिः" ॥

इति **मनुः** ( अ. १० श्लो. ३८।४० ) ।

"एवं चण्डालपर्यन्ता ब्राह्मणाद्याः प्रकीर्तिताः । प्रातिलोम्यानुलोम्येन स्फुटाः संकरजातयः" ॥

**उशनःस्मृतौ** तु नामान्तराण्युक्तानि । तत्र निषादपारशववन्नाममात्रकृतो भेदो न जातिवृत्तिकृत इत्यवधेयम् । तदिह गौरवान्नोक्तम् ।

"रजकश्चर्मकश्चैव नटो बुरुड एव च । कैवर्तमेदभिल्लाश्च सप्तैते अन्त्यजाः स्मृताः" ॥ इति ।
"शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः । वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ॥
"पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजा द्रविडाः शकाः । पारदाः पल्हवाश्चीनाः किराता दरदाः खसाः ॥
"मुखबाहूरुपज्जानां लोके या जातयो बहिः । म्लेच्छवाचोऽप्यार्यवाचः सर्वे ते दस्यवः स्मृताः"॥ इति ।

**मनुः** । ( अ. १० श्लो. ४३–४५ )

एवमेतेऽनन्ताः संकरजास्ते यथायथमूहनीयास्तत्कारणानि सामान्यतो **मनुनै**वोक्तानि (अ. १० श्लो. २४)।

"व्यभिचारेण वर्णानामवेद्यावेदनेन च । स्वकर्मणां च त्यागेन जायते वर्णसंकरः " ॥ इति ।

व्याख्यातमिदं **सूतसंहिता**यामपि । संकरसंकीर्णा उक्तास्तत्रानुलोमानुलोमाः ।

"अम्बष्ठायां समुत्पन्नः सवर्णेन द्विजोत्तमाः । आग्नेयनर्तकाख्योऽसौ जात्या भवति नामतः "॥ सवर्णेन मूर्द्धावसिक्तेन ।

"करण्यां तु हि विप्रेन्द्रा माहिष्याद्यो विजायते । स तक्षा रथकारश्च प्रोक्तः शिल्पी च वर्धकी ॥

"लोहकारश्च कर्मार इति वेदार्थवेदिभिः " ।

एतेनामभिरुपलक्षितैकैव जातिः ।

## अथ प्रतिलोमप्रतिलोमाः ।

"विप्रव्रात्यात्तु विप्रायां वन्दिको नाम जायते " ॥

अत्र प्रसङ्गादुच्यते । **विप्रो दशविधः ।**

"देवो मुनिर्द्विजो राजा वैश्यशूद्रबिडालकाः । पशुम्लेच्छश्च चाण्डालो दश विप्राः प्रकीर्तिताः ॥ इति । तथा हि ।

"अध्यापकः स्वधर्मी च संतुष्टो विजितेन्द्रियः । वेदशास्त्रार्थतत्त्वज्ञो **देव**विप्रः प्रकीर्तितः ॥

"अकृष्टफलमूलादिवन्यावनरतः सदा । स्वकर्मनिरतश्चैव स विप्रो **मुनि**रुच्यते ॥

"व्यापारकर्मनिरतः पशूनां परिपालकः । कृषिवाणिज्यकर्मा च स विप्रो **वैश्य** उच्यते ॥

"शस्त्रजीवी मसीजीवी देवलो ग्रामयाचकः । धावकः पाककर्ता च स विप्रः **शूद्र** उच्यते ॥

"परकार्यनिहन्ता च दम्भकः स्वार्थसाधकः । सर्वदा भवति क्रूरो विप्रो **मार्जार** उच्यते ।

"भक्ष्याभक्ष्यसमो यस्तु वाच्यावाच्यसमश्च यः । अगम्यागमनं कर्ता स विप्रः **पशु**रुच्यते ॥

"वापीकूपतडागानां खनने सुरवेश्मनि । उच्छेदने निराशङ्कः स विप्रो **म्लेच्छ** उच्यते ॥

"त्रिसंध्या च वृथा यस्य वेदो यस्य पराङ्मुखः । क्रियाहीनश्च यो विप्रः स तु **चण्डाल** उच्यते"॥इति ।

"ब्राह्मण्यां तु निषादेन जनितः स तु नापितः " ।

अत्रैव पूर्वमूर्ध्वनापित उक्तोऽधोनापितश्च वक्ष्यमाण इति द्वैविध्यमुक्तम् । तत्तद्व्यवस्थितं ज्ञेयम् ।

"शूद्रेषु दासगोपालकुलमित्रार्धसीरिणः । भोज्यान्ना नापितश्चेवेति " ॥

**शङ्खेन** तु प्रतिलोमजोऽयमुक्तः ।

"विप्रायां नापिताज्जातो वेणुकः परिकीर्तितः । राज्ञ्यां तु जनितस्तेन कर्मकारः स उच्यते ॥

"विप्रायामुग्रतो जातस्तक्षवृत्तिः प्रकीर्तितः । वैश्यायां तेन निष्पन्नः समुद्रो नाम जायते ॥

"द्विजोत्तमायां दौष्यन्ताद्रङ्गलब्धः प्रजायते " ।

"ब्राह्मण्यां यो मुनिश्रेष्ठा वैदेहेन प्रजायते । स नाम्ना रजको ज्ञेयः पण्डितैः पण्डितोत्तमाः" ॥

"आयोगवेन ब्राह्मण्यां चर्मकारः प्रजायते " ।

' द्विजोत्तमायां चाण्डालाद्यः पुमान्जायते भुवि । श्वपचः स तु विज्ञेयः सर्वशास्त्रविशारदैः ॥
' श्वपचाद्विप्रकन्यायां गुहको जायते सुतः'' ।

उक्तं च ।

''गुहकः श्वपचो भिल्लस्तक्षवृत्ती च नापितः । रजकश्चर्मकारश्च वन्दिको वेणुकस्तथा ॥
''भगलब्धो बाह्यदास इति चण्डालसंस्मृतः'' ।

एवं ब्राह्मण्यामुक्त्वा **क्षत्रियाया**माह ।

''क्षत्रव्रात्यान्नृपायां तु सल्लो मत्तश्च मल्लकः'' । संज्ञात्रयमेकजातीयस्य ।
''मल्ला तु पिच्छिलस्तेन नटाख्यो जायते भुवि । नटात्करणसंज्ञस्तु करणात्कर्मसंज्ञितः ॥
''तेन द्रमिल उत्पन्नो नृपायां वेदवित्तमाः । नृपायां यो निषादेन जातोऽधो नापितः स्मृतः॥
''नृपायां मागधाज्जातः खनकः परिकीर्तितः । खनकाद्राजकन्यायामुद्बन्धो नाम जायते'' ॥

अथ **वैश्यायाम्** ।

''वैश्यव्रात्यात्तु वैश्यायां सुधन्वना जायते द्विजाः । अनेनाचार्यसंज्ञस्तु भारुषो भारुषादपि ॥
''द्विजन्मा जायते तस्मान्मैत्रो भवात्तु सात्वतः'' । आचार्याख्यो भवति ततो भारुषस्ततो द्विजन्मेत्याद्यर्थः ।
''वैश्यायां तु निषादेन सुनिषादोऽभिजायते'' । मणिकारस्तु वैश्यायां चौर्याद्वैश्येन जायते ॥
''वैश्यायां यस्तु चाण्डालाज्जातो दन्तक[1]वेणवः । जनितस्तेन शूद्रायां विप्रा आश्रमिकः स्मृतः'' ॥

अथ **शूद्रायाम्** ।

''चौर्याच्छूद्रेण शूद्रायां जातो मानविको भवेत् । शूद्रायां मागधाज्जातः कुकुन्दः प्रोच्यते बुधैः ॥
''प्रतिलोमनिषादाद्यः शूद्रायां स तु भैरवः'' ॥

अथ **मैत्रायाम्** ।

''मैत्रायां वैदेहकात्तु जातो मातङ्गनामकः । मातङ्गाज्जायते सूतः सूताद्दस्युः प्रजायते ॥
''दस्योर्जातो मुनिश्रेष्ठा मालाकारः समाख्यया । प्रतिलोमनिषादेन कैवर्त्ताख्यो विजायते'' ॥

अथ **तैलिकायाम्** ।

''तैलकारिस्त्रियां जातोऽयोगवेन द्विजोत्तमाः । नीलादिवर्णविक्रेता नाम्ना वेदार्थवित्तमाः ॥
''कारुश्चाभूत्ततस्तस्यां जात्या ज्ञेयस्तथैव च । कारो चाभूत्समाख्याय निषादेन मुनीश्वराः ।
''चर्मजीवी समुत्पन्नः सर्वविज्ञानसागराः ।
कारो कारुस्त्रियां चर्मजीवी जात्या भवति । एवं तावत्तत्रोक्ताः पूर्वतो भिन्ना एवेति बोध्यम् ।

१ वनव इत्यपरः पाठः

## अथ संकाराणां दिक्प्रदर्शनं क्रियते ।

ब्राह्मणात्क्षत्रियायामुत्पन्नो मूर्धावसिक्तः । क्षत्रियाद्वैश्यायां माहिष्यः । वैश्याच्छूद्रायां करणः । ब्राह्मणाद्वैश्यायामम्बष्ठः । ब्राह्मणाच्छूद्रायां निषादः । स एव पारशव उच्यते । क्षत्रियाच्छूद्रायामुग्रः । एते **षडनुलोमाः** संकराः । अथ **प्रतिलोमाः** । क्षत्रियाद्ब्राह्मण्यां सूतः । वैश्यात्तस्यां वैदेहः । शूद्रात्तस्यां चण्डालः । वैश्यात्क्षत्रियायां मागधः । शूद्रात्तस्यां क्षत्ता शूद्राद्वैश्यायामायोगवः । प्रतिलोमजेषु चण्डाल एवैकोऽस्पृश्यः । एषां मातृजातिसंस्कारोऽप्यस्ति चण्डालव्यतिरेकेण । तत्रायोगवक्षत्तृचण्डालाः शूद्रादप्यधमाः पुत्रकार्यादपगताश्च । ब्राह्मणादुग्रकन्यायामावृतः (१) । तत एवाम्बष्ठकन्यायामाभीरः (२)। तत एवायोगव्यां धिग्वणः (३) । निषादाच्छूद्रायामुत्पन्नः पुल्कसः । शूद्रान्निषायामुत्पन्नः कुक्कटकः । क्षत्तुरुग्रायां जातः श्वपाकः । वैदेहकेनाम्बष्ठ्यामुत्पन्नो वेणः । व्रात्याद्ब्राह्मणाद्ब्राह्मण्यां जातो भृज्जकण्टकः । आवन्त्यवाटधानपुष्पवच्छेखरशब्दैरुच्यते । व्रात्यात्क्षत्रियात्क्षत्रियायां जातःझल्लमल्लपिच्छविनटकरणखसद्रमिडशब्दैरुच्यते २ । वैश्याद्व्रात्याद्वैश्यायामुत्पन्नः सुधन्वाचार्यकारुषविजन्ममैत्रसात्वतशब्दैरुच्यते । अव्रतः सावित्रीभ्रष्टो व्रात्यः । दस्योः सकाशादायोगव्यां सैरन्ध्रनामा प्रसाधनाद्युपचारज्ञो भवति । वैदेहात्तस्यामेव मैत्रेयकनामानं मधुरभाषिणं घण्टामातोद्यवादनेनारुणोदये नृणां स्तावको भवति । निषादस्तस्यामेव दाशकैवर्तनामानं नौजीविनं जनयति । निषाद्वैदेह्यां कारावरावराख्यः चर्मोपजीवी जायते । वैदेहकात्तस्यामेव मेदाख्यो बहिर्ग्रामवासी जायते । चण्डालाद्वैदेह्यां पाण्डुसोपाको नाम वेणुजीवी जायते निषादाद्वैदेह्यामाहिण्डकः चण्डालेन पुल्कस्यां सोपाकनामावध्यघाती जायते । चाण्डालान्निषायां श्मशानवासी अन्त्यावसायी जायते । सूतादीनां प्रतिलोमजानामुपनयनसंस्कारो नास्ति ।

"मुखबाहूरुपज्जानां या लोके जातयो बहिः । म्लेच्छवाचोऽप्यार्यवाचः सर्वे ते दस्यवः स्मृताः"॥

ब्राह्मणाद्वैदेहक्यां जातश्चुचुः । तत एव बन्दिस्त्रियां जातो मुद्रः । क्षत्रियेण शूद्रायां जाता बन्दिस्त्रीत्यादि बोध्यम् ।

### अथ कायस्थविवेचनम् ।

"माहिष्यवनितासूनुं वैदेहाद्यं प्रसूयते । स कायस्थ इति प्रोक्तस्तस्य कर्म विधीयते " ॥

क्षत्रियाद्वैश्यायां माहिष्यः ब्राह्मण्यां वैश्याद्वैदेहः ।

"लिपीनां देशजातानां लेखनं स समाचरेत् । गणकत्वं विचित्रं च बीजपाटीविभेदतः ॥

"वृत्त्या तया वर्तनं स्यात्कायस्थस्य विशेषतः । चातुर्वर्ण्यस्य सेवा हि लिपिलेखनसाधनम्॥

"व्यवसायः शिल्पिकर्म तज्जीवनमुदाहृतम् । अधमः शूद्रजातिभ्यः पञ्चसंस्कारवानसौ ॥

अयं प्रतिलोमः । पञ्चसंस्कारास्तु ।

"जातकर्म तथा नाम वपनं कर्णवेधनम् । उद्वाहश्चैव विज्ञेयः कायस्थे पञ्च संस्क्रियाः" ॥ इति ।



छागलेनोक्ताः । भविष्योत्तरे तु

"क्षत्रियाणां त्रिधाख्या च क्षत्री कायस्थ एव च । अराजमहिषीपुत्रो राजपुत्रः प्रकीर्तितः" ॥
इत्युक्तम् । तथा च क्षत्रियस्य त्रयो भेदाः ब्रह्मक्षत्री कायस्थो राजपुत्र इति । तत्राद्यद्वयमुक्तम्

**स्कान्दे।**

"ब्रह्मक्षत्रितया ख्यातो यो जगाम भयाद्वनम्" ॥ इति ।
"ततो रामोऽब्रवीद्दाल्भ्यं यदर्थमहमागतः । क्षत्रियान्तकरश्चाहं तं त्वं याचितवानसि ॥
"प्रार्थितश्च त्वया विप्र कायस्थो गर्भ उत्तमः । तस्मात्कायस्थ इत्याख्या भविष्यति शिशोः शुभा ॥
"कायस्थ एवमुत्पन्नः क्षत्रिण्यां क्षत्रियात्ततः । तस्योपनयनं कृत्वा दाल्भ्यः पुत्रवदाचरन् ॥
"दत्तः कायस्थधर्मोऽस्मै चित्रगुप्तस्य यः स्मृतः" ॥ इति च ।
इदमनुपदमेव स्फुटीभविष्यति । **पुराणान्तरे**ऽप्युक्तम् ।
"नलसूनुश्चन्द्रसेनस्तस्य सूनुश्च धार्मिकः । कायस्थो नाम कायस्थधर्मं प्राप्य तदा बभौ" ॥ इति ।
चित्रगुप्तधर्मस्त्वनुपदमेव वक्ष्यते । **पद्मपुराणे सृष्टिखण्डे रेणुकामाहात्म्ये** त्वन्यथा कायस्थद्वैविध्यमुक्तम् । तथाहि ।

"सृष्ट्यादौ सदसत्कर्मज्ञप्तये प्राणिनां विधिः । क्षणं ध्याने स्थितस्तस्य सर्वकायाद्विनिःसृतः ॥
"दिव्यरूपः पुमान्हस्ते मषीपात्रं च लेखनीम् । दधानश्चित्ररूपेण रक्षितो दैवतैर्हृदि ॥
"चित्रगुप्त इति ख्यातो धर्मराजसमर्पितः । ब्रह्मणा सहितैर्देवैः क्षणं ध्यात्वा नियोजितः ॥
"प्राणिनां सदसत्कर्मलेखनाय स बुद्धिमान् । भोजनादौ बलिस्तस्य भागोऽपि परिकल्पितः ॥
"प्राणिनां सदसत्कर्मलेख्याय स नियोजितः । ब्रह्मणाऽतीन्द्रियज्ञानी देवाग्न्योर्यज्ञभुक् स वै ॥
"भोजनाच्च तदा तस्मादाहुतिर्दीयते द्विजैः" ।

इति पाठान्तरम् ।

"ब्रह्मकायोद्भवो यस्मात्कायस्थ इति गीयते" । 'स्थो जातिरुच्यते' इति पाठान्तरम् ॥
"नानागोत्राश्च तद्वंश्याः कायस्था भुवि सन्ति वै ।
"दक्षप्रजापतेः कन्यां दाक्षायण्यभिधां ततः । उपयेमे ततः पुत्रो जातस्तस्य महात्मनः ॥
"विचित्रगुप्तनामाऽसौ विद्धि चातुर्यवीर्यवान् । ततस्तेन मनोः कन्या यथाविधि विवाहिता ॥
"स्वक्षाभिधा ततस्तस्यां धर्मगुप्तो बभूव ह । धर्मगुप्ताच्च गान्धार्यां रुद्रगुप्तोऽभवत्सुतः ॥
"तस्या अप्सरसो जातं पुत्राणां च चतुष्टयम् । माथुरो गौडसंज्ञश्च नागरो नैगमस्तथा ॥
"तेषां नामानि चत्वारि चतुर्णां च यथाक्रमम् । कायस्थश्चैव शाक्तश्च मौलिकश्च महेश्वरः ॥
"एतेषां काश्यपं गोत्रं तेषां धर्ममतः शृणु । स्नानं द्विकालमेतेषां त्रिकालं संधिवन्दनम् ॥
"अष्टम्यां च चतुर्दश्यां चण्डीव्रतपरायणाः । भौमवारव्रताश्चैव नवरात्रव्रतास्तथा ॥
"तर्पणं पञ्चयज्ञानां विधानं च यथाक्रमम्" ।
सागरमथनकाले कालीशरीरोत्पन्नश्चित्रगुप्त इत्यन्यत्र ।
एवं चित्रगुप्तादिकायस्थोत्पत्तिं तद्धर्मांश्चोक्त्वा द्वितीयोत्पत्तिरुक्ता भार्गवकथाप्रसङ्गेन ।
"एवं हत्वाऽर्जुनं रामः संधाय निशिताञ्शरान् । अन्वधावत्स तान्हंतुं सर्वान्क्षत्रियसत्तमान् ॥

"एवातुरान्नृपान्" इति पाठान्तरम्।
"ततः क्षत्रवराः सर्वे प्रादुद्रावंस्तु तद्भयात्। पाताले प्राविशन्केचित्केचिद्गगनमाश्रिताः॥
"त्यक्त्वा जातसुतान्केचित् ब्रह्मवेषमधारयन्। बभूवुस्तापसाः केचिद्वनमाश्रित्य तद्भयात्॥
"तत्रैवावस्थिताः केचिद्बभूवुर्नटनर्तकाः। केचिद्वैतालिकाः शूरा राजानस्तद्भयार्दिताः॥
"ब्रह्मक्षत्रितया ख्यातो यो जगाम भयाद्वनम्। सगर्भा चन्द्रसेनस्य भार्या दाल्भ्याश्रमं गता॥
"ततो रामः समायातो दाल्भ्याश्रममनुत्तमम्। पूजितो मुनिना रामो ह्यर्घ्यपाद्यासनादिभिः॥
"अथ मध्याह्नसमये तस्मै भोजनमादरात्। ददौ दाल्भ्यमुनिः श्रेष्ठो भार्गवाय महात्मने॥
"भोजनावसरे तत्र गृहीत्वापोशनं करे। रामस्तु याचयामास हृदिस्थं स्वमनोरथम्॥
"तस्मै प्रादादृषिः कामं भार्गवाय महात्मने। याचयामास दाल्भ्योऽपि वरं रामान्महान्मुनिः॥
"ततो द्वौ परमप्रीतौ भोजनं चक्रतुर्मुदा। भोजनान्ते महाभागावुपविश्यासने मुदा।
"कथा बहुविधास्तत्र चक्रतुर्दाल्भ्यभार्गवौ। कथान्ते भार्गवं दाल्भ्यो वरं पप्रच्छ याचितम्॥
"यत्त्वया प्रार्थितं देव तत्त्वं शंसितुमर्हसि"।

**राम** उवाच।

"तवाश्रमे महाभाग सगर्भा स्त्री समागता। चन्द्रसेनस्य राजर्षेः क्षत्रियस्य महात्मनः॥
"तां मे त्वं प्रार्थितां देहि हिंसेयं तां महामुने"।
"सगर्भा मुनिसत्तम इति"। पाठान्तरम्।
"ततो दाल्भ्यः स्त्रियं तस्य समाहूय महीपतेः। रामाय प्रददौ भीतां ततः स प्रीतिमानभूत्॥
"भीतां तां चपलापाङ्गीं कम्पमानां समागताम्। अवेक्ष्य दाल्भ्यः प्रोवाच रामं संहृष्टमानसम्॥
"यन्मया प्रार्थितं देव तन्मे त्वं दातुमर्हसि"।

**राम** उवाच।

"यत्त्वया प्रार्थितं विप्र भोजनावसरे पुरा। तन्मे शंस महाभाग ददामि तव वाञ्छितम्॥

**दाल्भ्य** उवाच।

"प्रार्थितं यन्मया पूर्वं रामदेव जगद्गुरो। स्त्रीगर्भस्थममुं बालं तन्मे दातुं त्वमर्हसि॥
"ततो रामोऽब्रवीद्दाल्भ्यं यदर्थमहमागतः। क्षत्रियान्तकरान्मत्तस्तत्त्वं याचितवानसि॥
"गर्भस्त्वया मुनिश्रेष्ठ कायस्थः प्रार्थितो यतः। तस्मात्कायस्थ इत्याख्या भविष्यति शिशोः शुभा॥
"दुष्टादेनं क्षात्रधर्माद्वारितुं च त्वमर्हसि"।
"ततो दाल्भ्यः प्रत्युवाच भार्गवं प्रतिहर्षितः। मा कुरुष्वात्र संदेहं दुर्बुद्धिर्न भविष्यति"॥
"एवं रामो महाबाहुर्हित्वा तं गर्भमुत्तमम्। निर्जगामाश्रमात्तस्मात्क्षत्रियान्तकरः प्रभुः॥
"ततः प्रकुपितो रामो नानावेषधरान्नृपान्। ज्ञात्वा नारदवाक्येन विशस्त्रानपि चावधीत्॥
"कायस्थ एष उत्पन्नः क्षत्रिण्यां क्षत्रियात्ततः। तस्योपनयनं कृत्वा दाल्भ्यः पुत्रवदाचरन्॥
"रामाज्ञया स दाल्भ्येन क्षात्रधर्माद्बहिष्कृतः। दत्तः कायस्थधर्मोऽस्मै चित्रगुप्तस्य यः स्मृतः॥
"चन्द्रसेनात्मजं धीरं नलवंशसमुद्भवम्। प्राप्तकायस्थनामत्वाल्लेख्यावृत्तिश्च भूभृताम्॥

"तस्य भार्या कृता चित्रगुप्तकायस्थवंशजा । तद्वंशजाश्च कायस्था दाल्भ्यगोत्रास्ततोऽभवन् ॥
"दाल्भ्योपदेशतस्ते वै धर्मिष्ठाः सत्यवादिनः । संस्कारसंस्कृता नित्यं श्राद्धहोमपरायणाः ॥
"प्रणवेन तथा वेदत्रेताकुण्डविवर्जिताः । सदाचाररता नित्यं रता हरिहरार्चने ॥
"देवर्षिपितृपूजार्हा अतिथीनां च पूजकाः । यज्ञदानतपःशीला व्रततीर्थरताः सदा" ॥ इति ।
सङ्करजस्तूक्त एव । एवं च त्रिविधाः कायस्थाः चित्रगुप्तीयाश्चन्द्रसेनीयाः संकरजाश्चेति सिद्धम् ।

**स्मृत्यन्तरे** च ।

"नलसूनुः चन्द्रसेनस्तस्य सूनुश्च धार्मिकः । कायस्थो नाम कायस्थधर्मं प्राप्य तदा बभौ" ॥ इति ।
केचित्तु तत्र यद्धर्मप्राप्तिस्तद्वर्णनं **पद्मपुराणे उत्तरखण्डे । दत्तात्रेय** उवाच ।
"त्रिकालज्ञं महाप्राज्ञं पुलस्त्यं मुनिपुङ्गवम् । पप्रच्छ ह्युपसङ्गम्य भीष्मः शस्त्रभृतां वरः ॥

**भीष्म** उवाच ।

"चतुर्णामपि वर्णानामाश्रमाणां तथैव च । संभवः संकराणां च श्रुतो विस्तरतो मया ॥
"भूय एव महाप्राज्ञ श्रोतुमिच्छामि तत्त्वतः । कायस्थ इति शब्देन व्याख्याता ये महामुने ॥
"तानहं श्रोतुमिच्छामि कथ्यतां मे विशेषतः । एतन्मे संशयं विप्र वक्तुमर्हस्यशेषतः" ॥
"इति पृष्टो मुनिः प्राह गाङ्गेयं शुचिविग्रहम् ॥

**पुलस्त्य** उवाच ।

"शृणु गाङ्गेय वक्ष्यामि कायस्थोत्पत्तिमादृतः । न श्रुतं च त्वया पूर्वं तन्मे कथयतः शृणु ॥
"येनेदं सकलं विश्वं स्थावरं जङ्गमात्मकम् । उत्पाद्यमानं भूयोऽपि निधनायोपकल्पते ॥
"अव्यक्तः पुरुषः शान्तो ब्रह्मा लोकपितामहः । यथाऽसृजत्पुरा विश्वं कथयामि तव प्रभो ॥
"द्विचतुष्पश्चषष्ट्यादिप्लवङ्गमसरीसृपान् । एकाहे सोऽसृजत्सर्वं चन्द्रसूर्यग्रहांस्ततः ॥
"एवं हि बहुधा तेन विश्वमुत्पाद्य भारत । उवाचाथ सुतं ज्येष्ठं कश्यपं चातितेजसम् ॥
"इत्याज्ञाप्य सुतं ज्येष्ठं सृष्टिसंभवहेतुकम् । ततस्तु ब्रह्मणा तेन यत्कृतं तन्निबोधय ॥
"दशवर्षसहस्राणि दशवर्षशतानि च ॥ समाधिं च समाधाय स्थितोऽभूत्कमलासनः ॥
"त्यजन्समाधिं सलिले यद्भूतं तद्वदाम्यहम्" ॥
"तच्छरीरान्महाबाहो श्यामः कमललोचनः । कम्बुग्रीवो गूढशिराः पूर्णचन्द्रनिभाननः ॥
"लेखनीवटिका हस्ते मषीभाजनसंयुतः । निःसृत्य च नरस्तस्थौ ब्रह्मणोऽव्यक्तजन्मनः ॥
"त्यक्त्वा समाधिं गाङ्गेय तं ददर्श पितामहः । अथ ऊर्ध्वं निरीक्ष्याथ पुरुषं चाग्रतः स्थितम् ॥
"पप्रच्छ को भवानग्रे तिष्ठते पुरुषोत्तमः" ॥

**चित्रगुप्त** उवाच ।

"उत्पन्नो विधितो नाथ शरीरादग्रतः स्थितः । नामधेयं हि मे तात कर्तुमर्हस्यतः परम् ॥
"यथोचितं च मत्कार्यं त्वं तन्मामनुशास च" ॥

**ब्रह्मोवाच ।**

“इत्याकर्ण्य ततो ब्रह्मा पुरुषं स्वशरीरजम् । प्रहस्य प्रत्युवाचैवमानन्दितमतिं पुनः ॥
“स्थिरमेधाय मेधावी ध्यानस्थोऽप्यरिसूदनः । मच्छरीरात्समुत्पन्नस्तस्मात्कायस्थसंज्ञकः ॥
“चित्रगुप्तेति नाम्ना वै ख्यातो भुवि भविष्यसि । धर्माधर्मविवेकार्थं धर्मराजपुरे सदा ॥
“स्थितिर्भवतु ते वत्स ममाज्ञां प्राप्य निश्चलाम् । स्वस्ववर्णोचितो धर्मः पालनीयो यथाविधि ॥
“प्रजाः सृजस्व हे पुत्र मयि भावं समाहितः । तस्मै दत्वा वरं ब्रह्मा तत्रैवान्तरधीयत ॥
“प्रजाभ्यः स्थितिमादाय धर्माधर्मावलोकनम् । कर्तव्यं च प्रयत्नेन पुत्रैश्वर्यस्य कामया ॥
“या माया प्रकृतिः शक्तिश्चण्डी चण्डप्रमर्दिनी । तस्यास्तु पूजनं कार्यं सर्वसिद्धिप्रदायकम् ॥
“तस्याः प्रभावतो देवाः सिद्धिं प्राप्य दिवं गताः । स्वर्गाधिकारमासाद्य जाता यज्ञभुजः सदा ॥
“भवद्भिः सा सदा पूज्या मिष्टान्नेन सुरादिभिः । अनुशास्य सुतानेवं चित्रगुप्तो बभूव ह ॥
“एवं भीष्म समुत्पन्नः कायस्थोऽयं प्रकीर्तितः । ये पृष्टास्ते मयाऽऽख्याताः संवादं शृण्वतः परम् ॥
“अहं ते कथयिष्यामि विचित्रं परमाद्भुतम् । प्रभावं चित्रगुप्तस्य समुद्भूतं यथा पुनः” ॥

**पुलस्त्य उवाच ।**

“सुदासो नाम राजाऽभूत्समस्ते क्षितिमण्डले । सदा पापरतः सोऽयं धर्माधर्मौ न वक्ष्यति ॥
“स यथा स्वर्गमासाद्य लभेत्पुण्यफलं शृणु । स च पापो दुराचारो धर्मकार्यविवर्जितः ॥
“राजन्नपि गतं धर्मं न वक्ष्यति कथंचन । स्वदेशे ताडयामास डिण्डिमं स नराधिपः ॥
“न दातव्यं न भोक्तव्यं दैवं पित्र्यं कदाचन । आतिथ्यं जपकर्माणि तपःसाधनमुत्तमम् ॥
“तत्कर्तव्यं यदुक्तं वै मयाऽऽज्ञप्तं महीतले” ।
“एवमाज्ञापिता लोका देवपित्रादिकर्मणि । परित्यज्य स्वकं देशं ते च देशान्तरं ययुः ॥
“ये केचिद्वसतिं चक्रुर्लोकेषु ब्राह्मणादिषु । ततः प्रभृति गाङ्गेय न यज्ञहवनं क्वचित् ॥
“न कोऽपि कुरुते चैव पुण्यं तत्र न सेवितुम् । अग्निहोत्रं ब्राह्मणेभ्यः कर्मधर्मविवर्जितः ॥
“अहो धर्मभृतां श्रेष्ठ शृणु कर्म विपाकजम् । कालेनाल्पेन गाङ्गेय सुदासो विचरन्महीम् ॥
“कार्तिके शुक्लपक्षे या द्वितीया चोत्तमा तिथिः । शुचिर्भूत्वा तु कायस्थचित्रगुप्तस्य पूजनम् ॥
“महता भक्तिभावेन धूपदीपादिकैर्भृशम् । दैवात्तत्र समायातः सौदासः पर्यटन्महीम् ॥
“श्रद्धापूतशरीरेण कृतवान्पूजनं ततः । कृत्वा तु पूजनं तत्र चित्रगुप्तस्य भक्तितः ॥
“गतपापो भवेत्सद्यः सौदासोऽसौ महीपतिः” ॥
“चित्रगुप्तस्य माहात्म्यं चित्रगुप्तप्रभावतः । श्रावितं भूपतिश्रेष्ठ किमन्यच्छ्रोतुमर्हसि” ॥
“इत्याकर्ण्य ततो भीष्मः प्रत्युवाच मुनिं प्रति” ।

**भीष्म उवाच ।**

“विधिना केन विप्रेन्द्र पूजां तत्र चकार सः । को मन्त्रः को विधिस्तत्र तत्सर्वं निगद प्रभो ॥

"यामासाद्य मुनिश्रेष्ठ सौदासः स्वर्गमाप्नुयात्" ।

**पुलस्त्य** उवाच ।

"चित्रगुप्तस्य पूजा या विधानं कथयाम्यहम्" ।
"नैवेद्यं घृतपक्वं च यथाकालोद्भवैः फलैः । गन्धपुष्पोपहाराद्यैर्धूपैश्चातिसुगन्धिभिः ॥
"चित्रगुप्तं च संपूज्य श्रद्धाभक्तिसमन्वितः । नवं कलशमादाय वारिणा परिपूरितम् ॥
"शर्करापूरितं चैव तस्योपरि च विन्यसेत् । पूजाकाले प्रयत्नेन दातव्यं च द्विजन्मने ॥
"माहिषं यानमारूढो विचरति महीतले । लेखनीवटिकां हस्ते चित्रगुप्त नमोऽस्तु ते ॥
"मन्त्रेणानेन राजेन्द्र चित्रगुप्तस्य पूजनम् । संकल्पं तु ततः कुर्याच्चित्रगुप्तस्य तुष्टये ॥
"एवं संपूज्य विधिवत्सौदासः पुण्यभावतः । अचिरेणैव कालेन राज्यं कृत्वा मृतो नृपः ॥
"नीतोऽसौ यमदूतैश्च यमलोकं भयानकम् । चित्रगुप्तं तदाऽपृच्छद्धर्मराजो महाविभुः" ॥

**धर्मराज** उवाच ।

"येनाऽयं पापकर्मा च सौदासो विदितः सदा । सौदासोऽसौ दुराचारः पापकर्मरतः सदा ॥
"कानि कानि च पापानि राजाऽसौ कृतवान्भुवि" ।
"पृष्टोऽसौ धर्मराजेन धर्माधर्मविशारदः । धर्मराजं प्रति प्राह चित्रगुप्तो महामतिः ॥
"विपाकं कर्मणश्चास्य तं प्रहस्याब्रवीदिदम्" ॥

**चित्रगुप्त** उवाच ।

"येनायं पापकर्मा च सौदासो विदितः सदा । इति ज्ञात्वा वदाम्यत्र राजा पापीति मे मतिः॥
"पूजां चकार राजाऽसौ दृष्ट्वा पूजां च मामकीम् । अन्त्ये तुष्टोऽस्मि हे देव यातु विष्णोः पदं नृप ॥
"यमेनाज्ञापितो राजा वैष्णवं पदमाप्नुयात्" ।
"ये चान्ये पूजयिष्यन्ति चित्रगुप्तं महीतले । कायस्थाः पापनिर्मुक्ता यास्यन्ति परमां गतिम् ॥
"तस्मात्त्वमपि गाङ्गेय पूजां कृत्वा विधानतः । सुदुर्लभं विष्णुलोकं गत्वा पूजामवाप्स्यसि" ॥

**दत्तात्रेय** उवाच ।

"मुनेर्वचनमाकर्ण्य भीष्मः प्रयतमानसः । चकार पूजनं तत्र चित्रगुप्ते द्विजोत्तमाः ॥
"कार्तिके शुक्लपक्षे तु द्वितीयायां तु भारत । यमं यमुनया तस्यां भोजयेत्स्वगृहे सदा ॥
"अतो यमद्वितीयां सा संज्ञां लोके जगाम ह । तेनैव भगिनीहस्ते भोक्तव्यं बुद्धिवर्धनम् ॥
"धनं धान्यं तथा पुण्यं सर्वकामार्थसिद्धये । दानानि दापयेद्यस्तु भगिन्याश्च विधानतः ॥
"काले तत्रैव पूज्यैवं चित्रगुप्तं तु लेखकम् । वस्त्रैश्च रक्तपुष्पैश्च रक्तचन्दनमिश्रितैः ॥
"कृष्णधत्तूरकैः पुष्पैः शमीपत्रैर्विशेषतः । नैवेद्यं दापयेत्तेभ्यो मोदकं गुडमिश्रितम् ॥
"उत्पत्तिं प्रलयं चैव भोग्यदानकृतं च यत् । लेखनीपटिकाहस्त चित्रगुप्त नमोऽस्तु ते" ॥

पूजामन्त्रोऽयम् ।

“श्रिया सह समुत्पन्न समुद्रमथनोद्भव । चित्रगुप्त महाबाहो मृत्युस्ते न भविष्यति ” ॥
“स्मरिष्यसि तदा मृत्युं समवाप्स्यसि भारत । इति तस्मै वरं दत्वा विचरन्वै जगाम ह ॥
“अनेन विधिना यस्तु चित्रगुप्तस्य पूजनम् । करिष्यति महाबुद्धिस्तस्य पूजाफलं शृणु ॥
“इहैव विपुलान्भोगान्भुक्त्वा चैव मनोहरान् । लभते वैष्णवं लोकं नरो याति न संशयः ॥
“मनसा भक्तियुक्तेन ये शृण्वन्ति पठन्ति च । दीर्घायुषो भविष्यन्ति सर्वव्याधिविवर्जिताः ॥
“अन्येऽपि तत्पदं यान्ति यत्र यान्ति तपोधनाः ”

इतीत्याहुः । तत्तु कल्पितं निर्मूलप्रमाणमिति मम प्रतिभाति । तस्मात्प्रागुक्तमेव युक्तम् । तत्र संप्रति ब्रह्मक्षत्रियत्वेन प्रसिद्धास्तथाऽऽचारा दृश्यन्ते । वाहीकाख्ये मद्रदेशे ते हि परशुरामेण क्षत्रधर्मं त्याजिता इति पुराणेषु प्रसिद्धं प्रागुक्तं च । चन्द्रसेनीयास्तु संप्रति दक्षिणदेशे **परभु**नामकत्वेन प्रसिद्धाः कायस्थवृत्त्युपजीविनो दृश्यन्ते । एतेऽपि परशुरामाज्ञया दाल्भ्येन क्षात्रधर्मं त्याजिता इति प्रागुक्तम् । अन्ये तु सर्वदेशे प्रसिद्धा एव । तत्राद्ययोः क्षात्रधर्माभावेऽपि क्षत्रियत्वे न विवादः । उक्तहेतोः ।

“वैश्याचाराश्च राजानो धनधान्योपजीविनः । तथा लेखनवृत्त्या ते सदसद्वृत्त्युपजीविनः ॥
“स्थास्यन्ति जटिला मुण्डा युगान्ते हि महर्षयः ” इति **ब्राह्मात्** ।
“ जामदग्न्यवधाद्भीताः क्षात्रधर्मपराङ्मुखाः । सत्याद्याचारनिरतामौरवजां वृत्तिमाश्रिताः ॥
“लिपीनां लेखनं किंचित् विचित्रं चित्रकर्म च । केचिद्वङ्गभृतां वृत्तिं केचिद्धाऽन्योपजीविनः” ॥

इति **स्कान्दाच्च** ।

नन्वेवमध्ययनं त्रेतापरिग्रहादि च स्यात् ।

“ब्राह्मणाः शूद्रयोनिस्थाः शूद्रा वै मन्त्रयोनयः । उपस्थास्यन्ति तान् विप्रा वेदार्थमभिलिप्सवः ”॥

इति **मात्स्यात्** । अभिलिप्सवः धनमिति शेषः । वेदार्थमुपस्थापयिष्यन्ति बोधयिष्यन्ति शूद्रयोनिस्थास्तत्तुल्याः मन्त्रयोनयः मन्त्रयोनिब्राह्मणवदुपनयनादिसंस्कारवन्तः । “अध्यापयन्ति वै वेदान् शूद्रान्धर्मार्थकोविदान्” इति **कौर्मात्** ।

“अधीयन्ते तदा वेदाञ्शूद्रा धर्मार्थकोविदाः । यजन्ते चाश्वमेधेन राजानः शूद्रयोनयः ”॥

इति **लैङ्गमात्स्याभ्यां** च ।

अनेन हि वाक्यजालेन स्पष्टमेव तदधिकारो बोध्यते । अत एव शूद्रमपि कुलगुणसम्पन्नमनुपनीतमध्यापयेदित्येके इत्यायुर्वेदविषये उपनयनीयाध्याये **सुश्रुत** इति चेन्न । जात्युत्कर्ष इति वक्ष्य-

१ उरुजाचार इत्यपरः पाठः ।

माणेनैव समाधानात् । “स्त्रीशूद्रद्विजबन्धूनां न त्रयी श्रुतिगोचरा” इति **भागवते** निषेधात् । **द्विज-** बन्धवो व्रात्याः द्विजेभ्यः शूद्रायामुत्पन्नाश्च । अत एव

“विक्रीणन्मद्यमांसानि ह्यभक्षस्य च भक्षणम् । कुर्वन्नगम्यागमनं शूद्रः पतति तत्क्षणात् ॥

“कपिलाक्षीरपानेन ब्राह्मणीगमनेन च । वेदाक्षरविचारेण शूद्रश्चाण्डालतां व्रजेत् ” ॥

इति **पराशरः** । अभक्षं गोमांसादिवेदाक्षरविचारस्तदुच्चारणं तदर्थज्ञानं च चेरेर्गतिभक्षणार्थत्वात्तत्र गतिर्ज्ञानं तच्चार्थविषयं सामर्थ्यात् । भक्षणं चोच्चारणमेव । ‘कायस्थः पतितो भवेदिति’पाठस्त्वसांप्रदायिकः । इदानींतनपुस्तकेषु तथापाठोपलब्धेः । स्पष्टं चेदं **पराशरव्याख्याने माधवीये** । अथास्य-वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रपूरणं यद्युवा एतच्छ्मशानं यच्छूद्र इति भवति चोदाहरणे जिह्वाच्छेदो-द्धारणे शरीरभेद इति श्रुतिरप्यत एवं संगच्छते । यद्युजङ्गमम् । एवं चोक्त**मात्स्यादि**वचनानामपि “तस्मादायुर्बलं रूपं कलिं प्राप्य प्रहीयते” इति लैङ्गस्थवाक्यशेषेण कलावपि शूद्रादीन्प्रत्येतन्निषिद्ध-मित्यत्रार्थे एव तात्पर्यम् । सांप्रतं कलिरेवेति तत्रोग्रादिरूपक्षत्रियसत्वेऽपि तेषां न क्षत्रियत्वं किंतु शूद्रत्वमेवेति च **गुरुचरणकृतव्रात्यप्रायश्चित्तनिर्णये** स्पष्टम् । तत एव बोध्यम् । स्फुटीकृतं चैत**त्पितृचरणैः कायस्थनिर्णये** । एवं च संकरजवत्तयोर्द्वयोरुपनयनादिसत्वेऽपि तदपत्याना-मिदानींतनानां नोपनयनं न वेदाध्ययनं न त्रेतापरिग्रह इति सिद्धम् । पूर्वमपीत्थमेवोक्तम् । अत एषां ये विशेषधर्मा ये च संस्कारास्तत्सर्वं **गागाभट्टकृतकायस्थप्रदीपे पितृचरण**कृततत्प्रदीपे च स्पष्टमिति नेह प्रपञ्च्यते । तदेतत्सर्वं हृदि विधायैवाह । **अत एतावदिति** ॥ ९५ ॥

व्यवहितसंगतिमाह । **सवर्णेभ्य इति** । **कारणान्तरमिति** । अर्थपर्येनेति शेषः ।

## याज्ञवल्कीये ९६ श्लोकः

एवं च केषांचित्संकराणामप्युत्तमजातिप्राप्तिरिति भावः । इदमुपलक्षणमुत्तमानामधमजाति-प्राप्तिरपि बोध्या । जातिपदं धर्मिपरमित्याह । **मूर्द्धेति** । रूढ्यर्थस्यासंभवेन त्यागालक्ष्यीर्थमाह । **जन्मनीति** । उत्पादयितुः सर्वत्र तुल्यत्वेऽपि योऽन्यातकर्षतारतम्येन सप्तमत्वादिपरिग्रहः । अत एव व्युत्क्रमेण व्याख्यानं सप्तमे इत्यादिप्रयोक्तक्रमेण तथा व्याख्येति तत्वम् । सप्तमत्वस्यात्रासंभवादाह । **षष्ठमिति** । एवमग्रेऽपि बोध्यम् । **अन्यत्रापि** । संकीर्णसंकरादिस्थलेऽपि । **किंचेति** । वर्णस्य वर्णान्तरप्राप्तिमप्याह । पादेनेत्यर्थः । अन्यनिरासायाह । **कृत्यर्थानामिति** । ‘साम्यमि’त्येताद्विशदयति । **यस्येति** । एतत्प्रकारस्य कन्यायामसंभवादाह । **पुत्रमिति** ।

तुर्यचरणस्य प्रकृतासंगत्याऽसंबद्धत्वमसत्संमतमास्त्वत्यस्य व्याख्यातत्वेन परिहरति । **अस्यार्थ इति** । अयं भावः । त्रिविधः संकरः । वर्णसंकरः संकीर्णसंकरः वर्णसंकीर्णसंकरश्चेति । तत्र मुख्यवर्णयोरेव दाम्पत्यं वर्णसंकरः । स चानुलोमप्रतिलोमभेदात् द्वादशविध उक्तः । उभयोः संकीर्णयोरेव दाम्पत्यं संकीर्णसंकरः । यत्र तु पुनरेको वर्णः अपरः संकीर्णस्तयोर्दाम्पत्यं स वर्णसंकीर्णसंकरः सोऽप्यनु-

१ यौगिकार्थ इत्यपरः पाठः । २ वैयर्थ्यं हृदिस्थमित्यपरः पाठः ।

लोमप्रतिलोमभेदात् द्विधेति तदेतदाह । **वर्णेत्यादि ।** अदिग्वृत्तित्वादाह । **अधरे चेति । एवमन्यत्रापीति । पूर्ववत् ।**

अन्ये तु तुर्यचरणमन्यं[1] व्याचक्षते । आद्ये पूर्वोक्तधारान्तःपातिनीनां च कन्यानां पूर्वपूर्वाभ्यो यथोत्तरं श्रेष्ठत्वमिति । कर्मणां व्यत्ययोऽपि जन्मवत् द्विविधः । अनुलोमः प्रतिलोमश्च । नीचानामुच्चकर्मानुष्ठानमुच्चानां नीचकर्मानुष्ठानमिति । तत्राधरोत्तरं भावप्रधानो निर्देशः । अधरत्वमुत्तरत्वं च पूर्ववत् जन्मवद्वेदितव्यम् । यथा ब्राह्मणः शूद्रवृत्तीः श्रेयान् । शूद्रस्तु द्विजवृत्तिरधम इति । तदाह **वसिष्ठः ।** (अ. २ सू. २२।२३) "अजीवन्तः स्वधर्मेणानन्तरां पापीयसीं वृत्तिमातिष्ठेरन्न तु कदाचित् ज्यायसीमिति" ॥ इति ।

इति जातिविवेकप्रकरणम् ।

---

## अथ गृहस्थप्रकरणम ५ ।

व्यवहितसंगतिं दर्शयति । **श्रौतेति ।** गृहिण **इत्यादिः ।** अभ्यर्हितत्वात्तथा क्रमाच्च पूर्वनिपातः प्रकृतोपयोगायाह । **अग्नीति । इत्याह** इत्याशङ्कायामाह ।

## याज्ञवल्कीये ९७ श्लोकः

अनुष्ठानक्रमेणाह । **स्मृत्युक्तमिति ।** प्रत्यहमित्यस्यानर्थक्यं परिहरति । **लौकीति ।** गामश्वमितिवत्समुच्चयप्रतीतेराह । **तदपि ।** न्यूनतां निराचष्टे । **वैश्यादीति । आदिना** श्रोत्रियागारादि । अत्र **बौधायनसूत्रं** (गृ. सू० ६।५।४६–४७)। विवाहहोमोत्तरं **बौधायनेन** । "अनुनयन्त्येनमग्निमथैनं पितुरङ्गादुद्हरति गुरोर्वा ये वध्व" इत्याद्युक्त्वा "आनयन्त्येतमग्निमथ देवयजनोल्लेखनप्रभृति" इत्याद्युक्तम् । (अ. १ गृ. सू. १।६ १–२) "यस्मिन्नग्नावुपनयति तस्मिन्ब्रह्मचर्यं तस्मिन् व्रतचर्या तस्मिन्समावर्तनं तस्मिन् गार्ह्याणि कर्माणि क्रियन्ते तस्मिन्काम्यानि तस्मिन् प्रजासंस्कारा"इत्येके । स एष उपनयनप्रभृतिव्याहृतिभिः समिद्भिर्हूयते आसमावर्तनात्समावर्तनप्रभृत्याज्येन व्याहृतिभिर्हूयते आपाणिग्रहणात्पाणिग्रहणप्रभृति व्रीहिभिर्यवैर्वा हस्तेनैते आहुतीर्जुहोति अग्नये स्वाहा प्रजापतये स्वाहेति सायं सूर्याय स्वाहा प्रजापतये स्वाहेति प्रातरप्यग्निहोत्रहविषामन्यतमेन जुहुयात्पर्वणि पर्वणि चाग्नेयस्थालीपाकः । स एष आधारवान्वा स्यादाग्निहोत्रिको वाप्यापूर्विको वा तेन सर्पिष्मता विद्यावन्तं ब्राह्मणं भोजयेद्योऽस्यापचिततमस्तस्मा ऋषभं ददातीत्येके । तस्यानुगतस्य या प्रकृतिः तत आह । रणमुपवासश्चानुगतेऽन्यतरस्य भार्यायाः पत्युर्वाऽपि चैकां जुहुयादया० ज०स्वाहेत्याहुतो व्याख्यातः । अत्राग्न्याधेयस्य कालो यथाश्राद्धमत ऊर्ध्वं जीवति पितर्यग्नीनादधीतेति **बौधायनः ।** 'जीवति मृते वा जायामवाप्य दशमेऽहनीति' **शालीकिः ।** 'न दुर्ब्राह्मणो भवत्यथाप्युदाहरन्ति यस्य वेदश्च० वृषली-

---

१ अन्यथेत्यपरः पाठः ।

पतिरित्यौपासनो नित्यो धार्य' इति। 'न दुर्ब्राह्मणो भवत्यौपासनं वा धारयमाणो ब्रह्मौदनं कृत्वोत्सृजति' इत्यादि । तदुहेक औपासनमेवोपासते स्त्रिया एव संस्कारार्थम् औपासनो नित्यो धार्योऽनुगतो मन्थ्यः श्रोत्रियागाराद्वाऽऽहार्यो द्वादशाहं विच्छिन्नः पुनराधेयो यदि द्वादशाहं विच्छिन्नः स्याद्या प्रकृतिः । तत आह । रणमित्युक्तमेतत्संतिष्ठते । उपनयनादिरग्निस्तमौपासन इत्याचक्षते । दारकाले दायाद्यकाले धार्योऽनुगते प्रायश्चित्तं प्रसिद्धं तस्मिन्पाकयज्ञिकसंस्थानि दैवानि कर्माणि क्रियन्त उपस्थानादीति । अथातो लौकिकोपासनग्रहणोपावरोहणविधिमनुव्याख्यास्यामस्त्रिविधं समारोहणमात्मन्यरण्योः समिधीति समिधा समारोपयति पालाशीमित्यादि प्रसिद्धमग्निपरिचरणं प्रसिद्धं दर्शपूर्णमासाभ्यां यजनं प्रसिद्धः पञ्चानां महायज्ञानामनुप्रयोग एतदेव विधानमहरहरिति । **अण्डिलायां** न नियतौपासनिकस्य दौर्ब्राह्मण्यमिति ।

अथैनमुष्णोदकैराप्लावयति बलं ते बाहुवोः सविता ददात्वित्येकशिखस्त्रिशिखः पञ्चशिखो वा यथैवैषां कुलधर्मः स्याद्यथर्षीशिखानि दधातीत्यथैनं स्नाप्याच्छायालंकृत्य त्रिवृताऽन्नेन ब्राह्मणान्संपूज्याशिषो वाचयतीति प्रहुतो व्याख्यातः । उपनयने कुमारं भोजयित्वा तस्य चौलवत्तूष्णीं केशानोप्य स्नातं शुचिवाससं बद्धशिखं यज्ञोपवीतं प्रतिमुञ्चन्वाचयन्ति "यज्ञोपवीतं परमं पवित्रम्" इत्यादि । 'धार्य' इति सूत्रस्य 'नित्य' इति सूत्रादिभागेन व्याख्यावसरे **सुदर्शनेन** सूत्रान्तरप्रसिद्धप्रयाणकालिक[1]वैकल्पिकसमारोपणनिषेधं धारणाविधिबलात् उक्तवताऽपि अन्ते असवर्णदारसंग्रहदृष्टान्तेन सूत्रान्तरप्रसिद्धसमारोपणपक्षोऽपि अनुकल्पत्वेनाश्रित इति गम्यते । न च 'धार्य' इति सूत्रतात्पर्यविषयत्वेन स्ववर्णितस्य समारोपणविकल्पनिषेधस्यापेक्षितप्राप्त्युपन्यासार्थ एव अग्रिमः **सुदर्शन**ग्रन्थः । न तु निषिद्धसमारोपणप्रतिप्रसवार्थ इति वाच्यम् । निषेधोपन्यासवेलायामेव अपेक्षितनिषेध्यप्राप्तिकरत्वेन गृह्यान्तरोपन्यासे **सुदर्शनेनै**व कृते सति पुनः प्रापकान्तरानपेक्षणात् । न च प्राक्तनसूत्रेणैव गृह्यान्तरविहितसमारोपणानिषेधे कृते धार्यसूत्रापेक्षितप्राप्त्यभावशङ्कायां पुनः प्राप्त्युपपादनमुचितमेवेत्यपि शङ्क्यम् । किं हि प्राक्तनसूत्रं प्रयाणमात्रे समारोपनिषेधपरतया श्रीमतामभिप्रेतम् । न तावत्समोप्योति प्रथमं सूत्रम् । वधूपश्चाद्भावप्रतिपादकानुशब्दसमभिव्याहारात्तस्य सूत्रस्य विवाहान्तरकालिकप्रयाणविशेषे एव समारोपणनिषेधपरताप्रतीतेः । तन्मात्रगतसमारोपणानिषेधपरत्वे विवाहाग्निमग्रतोऽजस्रं नयन्तीत्या**श्वलायन**सूत्रसंवादाच्च । नापि 'नित्य' इति सूत्रं तस्य विवाहहोमसमाप्तौ अग्निगतसंस्कारापवर्गनिषेधपरत्वात् । उक्तसूत्रद्वयानन्तरसूत्रेण प्रयाणमात्रे समारोपणनिषेध धार्य इति सूत्रार्थोपजीवनेन प्रयाणान्तरेषु विवाहानन्तरप्रयाणतुल्यकर्तव्यतोपदेशानुपपत्तेश्च । यत्र हि समारोपणनिषेधः प्रथमतो ज्ञापितः तत्रैव समारोपाभावे प्रयाणं कथं कर्तव्यमित्याकाङ्क्षायां तद्गतप्रकारोपदेश उचितो नान्यत्रेति अवहितचेतोभिः सुधीभिरालोचयितुमुचितम् । किं च 'धार्य' इति सूत्रेण प्रयाणमात्रे समारोपस्य आत्यन्तिकनिषेधबोधने विवाहान्तरप्रयाणेऽपि तत एव तन्निषेधसिद्धेः 'एतम्' इतिपदेन तत्रत्यसमारोपनिषेधकथनं **सुदर्शनीयं** व्यर्थमापद्येत । प्रयाणान्तरे अनुकल्पत्वेन **सुदर्शनीये** समारोपाङ्गीकारे तु भवति तद्व्याख्यानं नियमार्थम् । विवाहान्तरप्रयाणे अनुकल्पत्वेनापि समारोपो न भवतीति सकृत्प्रवृत्तेनैव निषेधेन प्राप्तिमात्रस्य बाधोत्पत्तौ सूत्रद्वयेऽपि समानविषयनिषेधप्रतिपादनं नानर्थकम् एकतात्पर्य-

१ कालीन इत्यपरः पाठः । २ यव इत्यपरः पाठः ।

ग्राहकत्वादपरस्येति चेत् नित्यो धार्य इति स्वारसिककवाक्यत्वस्य समानप्रकरणे हिरण्यकेशिसूत्रे मातृदत्तस्वीकृतस्य त्यागेनापि । सूत्रविभागाश्रयणं हि तदैव संगच्छते यदि त्रीण्यपि सूत्राणि विधायकानि भवन्ति । संगच्छते चैवं कारिकाऽपि ।

"समिध्यात्मन्यरण्योर्वा न समारोपणं भवेत् । अपि प्रयाणे गृह्याग्निरिति प्राह **सुदर्शनः** " ।

"प्रयाणोद्विकल्पेन केचिदाहुर्न चान्यथेत्यलमतिप्रसङ्गेनेत्य**नन्तदेवात्मजकोण्डदेव**स्यायं परामर्शः ।

' नित्यो धार्य ' **इत्यापस्तम्बसूत्रम्** । तस्यार्थः । नित्यो यावज्जीविको धार्यः । यावज्जीवं धार्य इत्यर्थः । एवं चाधारणे प्रत्यवायो बोध्यते । न तु समारोपाभावः । तथा च प्रयाणे सूत्रान्तरप्राप्तं समारोपणं भवत्येव । समारोपणं चोक्तं **बौधायनेन** । ( गृ. सू. ४।१६।४४–४६ ) "अथास्याध्वनि समारोपणम् । अयं ते योनिर्ऋत्विय इत्यरण्योर्वा समारोप्य मथित्वा जुहुयादपि वाऽऽत्मनि समारोपणं भवति " या ते अग्ने यज्ञिया तनूरिति " । स्वसूत्रे यदपि सूत्रान्तरस्थग्रहणमनुजानाति सूत्रकारः । स त्रयाणां वर्णानामिति । एतदर्थो भाष्ये ।

**स्मृत्यन्तरेण** तिस्रो भार्या अभ्यनुज्ञाताः । ताश्च सूत्रकारस्यापि संमता इत्यर्थः । एवमन्यत्रापि विकल्पस्य ज्ञापकमेवेति ।

**सुदर्शनभाष्येऽपि** ' नित्यो धार्य ' इत्येतद्व्याख्याने समारोपणविकल्प एकीयमतेन प्रतीयते ।

**कारिकाकारेण** तु स्पष्ट उक्तः ।

"समिध्यात्मन्यरण्योर्वा न समारोपणं भवेत् । अपि प्रयाणे गृह्याग्नेरिति प्राह **सुदर्शनः** ॥

"प्रयाणे तद्विकल्पेन केचिदाहुर्न चान्यथा" ॥ इति ।

' अन्यथा प्रयाणं विनेति ' **नीलकण्ठभट्टा**दिसम्मतं धार्यः ।

अत्र **सुदर्शने**न प्रथमं याज्ञिकमतमनूद्यान्ते स्वमतं लिखितम् । तथा हि । **याज्ञिकमत**मित्थम् । ' यत्स्वसूत्रे ज्ञापकवशात्सिद्धेन विहितेन वा सूत्रान्तरस्थेन विरुद्धेन न विकल्पते' । यथा प्रायश्चित्तेऽध्वर्युकर्तृकत्व**मापस्तम्बोक्तमाश्वलायनोक्त**ब्रह्मकर्तृकत्वेन न विकल्पते । एवं स्मार्तधारणं सूत्रान्तरविहितसमारोपणेन न विकल्पते । श्रुतिविहितारणीसमारोपात्मसमारोपयोराधानसर्वमेधविषयत्वात् । समित्समारोपस्य श्रुतावभावात् । अतः स्मार्तस्य समारोपो नास्त्येवेति याज्ञिकमतम् ।

**स्वमतं** तु । यथा असवर्णापरिणयनिषेध **आपस्तम्ब**सूत्रोक्तोऽपि ज्ञापकवशात्स्मृत्यन्तरविहितत्रैवर्णिकविवाहेन विकल्पते तथैव धारणमपि समारोपेण विकल्पत इति स्वमतम् इति **गागाभट्टाः** ॥

'समोप्यैतमग्निमिति' सूत्रस्य 'धार्य' इति सूत्रस्य च व्याख्यावसरे वैवाहिकप्रयाणे प्रयाणान्तरे च गृह्यान्तरप्रसिद्धस्य समिध्यरण्योर्वा समारोपस्य निषेधं वदताऽऽत्मसमारोपस्य चाधानसर्वमेधमात्रविषयत्वं विशिष्य निरूपयता सुदर्शनेन सर्वस्मिन्प्रयाणे प्रत्यक्षाग्निनयनमेव तैत्तिरीयाणामुचितमिति दर्शि-

तम् । यत्त्वन्ते असवर्णदारसंग्रहदृष्टान्तेन गृह्यान्तरोक्तसमारोपविकल्पाभ्यनुज्ञानं तेनैवाकारि तत्स्वपरगृह्योक्तयोः प्रत्यक्षनयनसमारोपयोर्मुख्यकल्पानुकल्पविधयैवेति मन्तव्यम् । अत एव तदुक्तिः असवर्णदारसंग्रहो न सर्वथैव निषिद्ध इति गम्यत इति । उचितं चैतत् । बह्वल्पं वा स्वगृह्योक्तमिति शास्त्रपरिपालनासंभव एव सर्वशाखाप्रत्ययन्यायोत्थानादिति सुधीभिरूह्यम् । **इत्यनन्तदेवापदेवपुत्राणां लेखनम् ।**

आपस्तम्बभाष्यसुदर्शनग्रन्थस्वारस्यादपि औपासनाग्नेर्विवाहकालीनप्रयाणे अन्यकालीनप्रयाणे च समारोपः शाखान्तरविहितो भवत्येवेति प्रतीयते ।

यद्यपि हि "समोप्येतमग्निमनुहरन्ति नित्यो धार्य" इत्येतत्सूत्रव्याख्यावेलायां प्रत्यक्षनयनमेव भवतीति तेनोक्तम् । तथाप्येवंविधे विषये याज्ञिका इत्यादिनाऽन्ते शाखान्तरविहितेनापि विकल्पे ज्ञापकबलात्तेनोपपादित एव । यत्तु एतस्य ग्रन्थस्य स्वसूत्रविहितप्रत्यक्षनयननियमापेक्षितविकल्पोपपादनार्थत्वमिति कैश्चिदुक्तं तत्स्वसूत्रविहितस्य शाखान्तरविहितेन विकल्पाङ्गीकारे नियमायोगादुपेक्षितम । न हि प्रयाणद्वयेऽपि प्रत्यक्षनयनं वारद्वयं श्रुतम् । स्वसूत्रे येन पुनः श्रवणस्य नियमार्थता कल्प्येत । सकृदेव तु समोप्येतमित्यादिना प्रयाणद्वयेऽपि तद्विहितम् । अस्तु वा कथंचित्तद्द्वितीयप्रयाणे, वैवाहिके तु सकृदेव तच्छ्रवणमिति तस्य ज्ञापकबलेन शाखान्तरविहितेन विकल्पो दुष्परिहर एव । अतः स्वसूत्रे प्रत्यक्षनयनमपूर्वमेव विधीयते । तस्य च शाखान्तरविहितसमारोपेण विकल्प इत्येव तद्ग्रन्थार्थ इति **खण्डदेवः सम्मतोऽर्थः ।**

## अथापस्तम्बीयानां गृह्याग्निसमारोपश्चिन्त्यते ।

तत्र यद्यपि तावत् ।

"समिध्यात्मन्यरण्योर्वा न समारोपणं भवेत् । अपि प्रयाणे गृह्याग्नेरिति माह **सुदर्शनः** ॥

"प्रयाणे तद्विकल्पेन केचिदाहुर्नचान्यथा " ॥

इति कारिकास्थनिषेधविकल्पमात्रपर्यालोचनेन निषेधो विकल्पश्च मतभेदेन सुदर्शनभाष्यतः प्रतीतिपथमवतरति सुधियां, तथापि पूर्वापरभाष्यग्रन्थपर्यालोचनेन विकल्पो मोषमेष्यति । तत एव च गृह्याग्नेरपि प्रयाणे समिदादिषु समारोपो न भवेदित्येव **सुदर्शनः** सोपपत्तिकमाहेति औत्सर्गिकसर्ववाक्यन्यायलब्धं निर्द्धारणमपि कारिकायामुपपत्स्यते ।

उपवर्णितं च "समोप्येतमग्निमनुहरन्ति नित्यो धार्य" इत्यत्रैतमित्यस्य सर्वप्रयाणे औपासनप्रत्यक्षसिद्ध्यर्थत्वेऽनुधार्य इत्यस्य च प्रायश्चित्ते ब्रह्मकर्तृकत्वविकल्पनिषेधनिदर्शनेनोपपादितस्वशास्त्रसिद्धप्रत्यक्षनयनगृह्यान्तरविहितसमारोपविकल्पानिवर्तकत्वेन सप्रयोजनतामभिदधानैः **सुदर्शनाचार्यै**रेवमेव एतत्पदधार्यपदलब्धवैवाहिकयादृच्छिकप्रणीयौपासनप्रत्यक्षनयनस्य शाखान्तरीयसमारोपेणांशे विकल्पं संभाव्य वैवाहिकप्रयाणधर्मस्य सर्वप्रयाणार्थतोपपादनोपसंजातस्य याज्ञिकानभिमतस्वपरशास्त्रार्थविकल्पस्य निवर्तकत्वेनोपवर्णितस्य धार्यपदस्य वैयर्थ्यं संभाव्य दृष्टान्तप्रदर्शनोपपादितस्य च विकल्पस्योपन्यसनं तु निवर्त्य सिद्ध्यर्थमेवेति उपवर्णितपदप्रयोजनपरमेव सर्वमभिधानमिति निपुणतरं

विभावनीयम्। कारिकाशेषस्थविकल्पस्तु **हिरण्यकेशिसूत्रभाष्या**नुसारेण तत्समानानुपूर्वीकं 'समोप्य' इत्यादिसूत्रं व्याख्याय सर्वशाखान्यायेन समर्थनीयः ।

अथैवं **हिरण्यकेशी**सूत्रे अत्र च धार्यपदं व्यर्थमिति चेत् न । प्रकारान्तरेण सार्थक्यात् । तथाहि एतत्पदं तावत्सर्वप्रयाणे औपासनप्रत्यक्षनयनार्थमित्यविवादमेव । धार्यग्रहणं च विवाहहोमोत्तरं गृहप्रवेशनीयहोमोत्तरं वा अपवृक्तन्यायेन लौकिकत्वनिवृत्त्यर्थं नित्यग्रहणं च **कात्यायनो**क्तावसथ्याध्यानं विकल्पेनापि मा भूदित्येतदर्थम् ॥ ९७ ॥

## याज्ञवल्कीये ९८ श्लोकः

इति प्रक्रमादाह । **गृहस्थेति** । आदौ करणे बीजमाह । **आवश्यकामिति । पूर्वकमिति** क्रियाविशेषणम् । **विष्णु**माह । **कंटकीति । पूर्वार्ध**मङ्गुष्ठपर्वार्धम् । **दन्तधावनं** दन्तमलापकर्षकं काष्ठम् । तथा तावन्माना तत्संबन्धिनी च तृणेत्यादि । तथा च **वृद्धयाज्ञवल्क्यः** ।

"इष्टकालोष्ठपाषाणैरितराङ्गुलिभिस्तथा । मुक्त्वा चानामिकाङ्गुष्ठौ वर्जयेद्दन्तधावनम्" ॥

इति **माधवीये वृद्धयाज्ञवल्क्यः** । कुत एव 'नाङ्गुल्या धावयेत्कचिद्'इति **कौर्मे**ऽङ्गुलीपदमनामिकाङ्गुष्ठाभिन्नपरम्। अत एव च "तृणपर्णोदकेनाङ्गुल्या दन्तान्धावयेत्प्रदेशिनीवर्जमिति" **पैठीनसिः**। तत्र प्रदेशिनीग्रहणं निषिद्धाङ्गुल्युपलक्षणम् ।

इदं निषिद्धतिथिविषयं दन्तधावनाप्राप्तिविषयं च जिह्वोल्लेखः सदैव त्विति **व्यासः** ।

तृणव्यवस्था त्वित्थम् ।

"कुशाकाशमिषीकोत्थं तृणं काष्ठं त्वचं विना । दन्तकाष्ठं नरः कृत्वा तस्य यद्विहितं त्वचम् ॥

"अग्रस्य भागिनी तस्य परिमिथ्या वदेद्वचः " ॥ इति

**नारदीयशपथवाक्ये** पठन्ति च ।

"गुवाकं तालहिन्तालौ तथा ताडी च केतकी । खर्जूरनारिकेलौ च सप्तैते तृणराजकाः ॥

"तृणराजशिरापत्रैर्न कुर्याद्दन्तधावनम्" ॥ इति ।

अत एव तृणपर्णैर्मध्यमानामिकाङ्गुष्ठैर्वा निषिद्धाहेऽपि कुर्युरिति उक्तम् । अत्र विहितोक्त्यैवार्थादितरनिरासे सिद्धे पुनर्निषेधकथनं प्रतिनिधित्वेनापि तदुपादाननिरासार्थं विहितप्रतिषिद्धस्य केवलविहितालाभे उपादानम् । तस्याप्यसंभवेऽविहिताप्रतिषिद्धमुपादेयम् । निषिद्धं तु सर्वथा नोपादेयमेव । इदं च यज्ञोपवीतिना । "बाहू जान्वन्तरा कृत्वा भक्षणीयामिति" **भारते** त्वग्विहीनसपत्राज्जातानि कीटाग्निदूषितानि च हेयानीति च प्रक्षाल्य च शुचौ देशे दन्तधावनमुत्सृजेत् । "पतितेऽभिमुखे सम्यग्भोज्यमाप्नोत्यभीप्सितम्" इति च ।

तदेतदभिप्रेत्याह । **पालाशेति** । तथा च न पालाशं दन्तधावनं न श्लेष्मातकारिष्टबिभीतक-

१ अयमेव चार्थ इत्यपरः पाठः ।

धवधन्वनशमीपीलुपिप्पलेङ्गुदगुग्गुलुजं न बर्बुरनिर्गुण्डीशिग्रुतिन्दुकाञ्जनपारिभद्राम्लिकामोचकशाल्मलीशणजनमधुरं नाम्लं नोर्ध्वशुष्कं न सशुषिरं न पूतिगन्धि न पिच्छलं न दक्षिणापराशामुखोऽद्यात् उदङ्मुखः प्राङ्मुखो वेति। अधिकमन्यतो ज्ञेयम्। मन्त्रश्च **आयुरिति**। दन्तकाष्ठग्रहणे वनस्पत्याभिमन्त्रणमन्त्र इत्यर्थः। घर्षणमन्त्रस्तु मुखदुर्गन्धीति बोध्यः। तथा **चाङ्गिराः**।

"प्रक्षाल्य भक्षयेत्काष्ठं प्रक्षाल्यैव तु संत्यजेत्। आयुरित्यादिमन्त्रोऽयमुक्तः शाखाभिमन्त्रणे॥

"विनाभिमन्त्रणं तूष्णीं वृथा स्याद्दन्तधावनम्"। इति।

**छन्दोगपरिशिष्टं च।**

"उत्थाय नेत्रे प्रक्षाल्य शुचिर्भूत्वा समाहितः। परितप्य च मन्त्रेण भक्षयेद्दन्तधावनम्"॥

मुखदुर्गन्धीत्यादिमन्त्रेण दन्तमलापकर्षकं काष्ठं दन्तेषु घर्षयेदित्यर्थः। भक्षयेदिति गौणः प्रयोगः। पूर्वोत्तराचमनरूपभक्षणधर्मप्राप्त्यर्थः।

**पारस्करेण** तु (२।६।१७)

"अन्नाद्याय व्यूहध्वं सोमो राजाऽयमागमत्। स मे मुखं प्रमार्क्ष्यते यशसा च भगेन च"

इति मन्त्र उक्तः स **कात्यायनानां** बोध्यः। पूर्वोक्तछन्दोगानाम् अन्येषां त्वैच्छिको विकल्प इति अत्र तथोक्तम्।

अन्ये तु आयुरित्यनेन काष्ठाभिमन्त्रणं द्वितीयेन मुखशोधनं मन्त्रलिङ्गादिति सर्वेषां मन्त्रसमुच्चयः। अत एवेमौ मन्त्रौ लिखित्वा

"मन्त्रावेतौ समुच्चार्य यः कुर्याद्दन्तधावनं। वनस्पतिगतः सोमस्तस्य नित्यं प्रसीदति"॥

इत्युक्तम् **काशीखण्डे** इत्याहुः। तन्न। "बह्वल्पं वा स्वगृह्योक्तमिति" परिशिष्टवाक्येनानाकाङ्क्षितस्य पारशाखिकस्य ग्रहणानौचित्यात्। काशीखण्डं त्वन्यपरत्वेनाप्युपपन्नम्। यतेस्तु प्रणवो मन्त्रः। "प्रणवं दीर्घमुच्चार्य भक्षयेद्दन्तधावनमिति" तत्पद्धतौ पाठात्। शूद्रस्य तु 'नम' इत्येव मन्त्र इत्यादि बोध्यम्।

**तन्निषेधादिति**। ब्रह्मचारिणो दन्तधावननिषेधादित्यर्थः।

अनेन वारुणप्रातःस्नानासंभवे तत्काले भस्मादिस्नानं कृत्वा तदवश्यं कार्यमित्यपि सूचितम्। पूर्वोक्तैवङ्गुणविशेषणविशिष्टायां पुण्यतिथौ बाह्याभ्यन्तरशुद्ध्यर्थं मन्त्रस्नानमहं करिष्ये। आपो हि ष्ठेति तृचस्य सिन्धुद्वीप ऋषिः। आपो देवता। गायत्री छन्दः। बाह्याभ्यन्तरशुद्ध्यर्थं मन्त्रस्नाने विनियोगः। ॐ आपोहिष्ठामयो भुवः। पादयोः। ॐ ता न ऊर्जे दधातन। मूर्द्धनि। ॐ महेरणाय चक्षसे। हृदये। ॐ यो वः शिवतमो रसः। पादयोः। ॐ तस्य भाजयते हनः। मूर्द्धनि। ॐ उशतीरिव मातरः। हृदये। ॐ तस्मा अरंगमामवः। पादयोः। ॐ यस्य क्षयाय जिन्वथ। मूर्द्धनि। ॐ आपोजनयथा च नः। हृदये। इति पच्छः। ॐ आपोहिष्ठामयो भुवस्ता न ऊर्जे दधातन। मूर्द्धनि। ॐ महेरणाय चक्षसे। हृदये। ॐ यो वः शिवतमो रसस्तस्य भाजयते हनः। पादयोः।

ॐउशतीरिव मातरः। मूर्द्धनि।ॐतस्मा अरंगमामवो यस्य क्षयाय जिन्वथ। हृदये।ॐआपो जनयथा च नः। पादयोः। इत्यर्द्धर्चशः। ॐ आपोहिष्ठा मयो भुवस्ता न ऊर्जे दधातन। महेरणाय चक्षसे। हृदये।ॐ यो वः शिवतमो रसस्तस्य भाजयते हनः। उशतीरिव मातरः। पादयोः। ॐ तस्मा अरंगमामवो यस्य क्षयाय जिन्वथ। आपोजनयथा च नः। मूर्द्धनि। ऋक्शः। आपोहिष्ठामयो भुव इति ऋचां त्रीणि समस्तेन शिरः।

इति मन्त्रस्नानप्रयोगः।

---

"उत्तिष्ठन्त्विह भूतानि भूमौ तिष्ठति भूपतिः। सर्वेषामविरोधेन ब्रह्मकर्म समारभेत्॥

"वायव्यं राजसं प्रोक्तं दिव्यमातपवर्षणम्। गङ्गास्नानसमं वाचा प्राप्तं सारस्वतं स्मृतम्॥

"गुरुपादोदकं तीर्थं सर्वतीर्थमयं भवेत्।

"उत्तिष्ठंत्विह भूतानि भूमौ तिष्ठति भूपतिः। सर्वे[illegible]विरोधेन ब्रह्मकर्म समारभेत्"॥

ॐ सहस्राणि सहस्रधा बाहुवोस्तव हेतयः। तासामीशानो भगवः पराचीना मुखाकृधि। पृथिव्या मेरुपृष्ठऋषिः। कूर्मो देवता। सुतलं छन्दः। आसने विनियोगः।

"पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता।त्वं च धारय मां देवि पवित्रं कुरु चासनम्"॥

अन्तरितं रक्षोऽन्तरिता अरातयः। विश्वशक्त्यै नमः। मायाशक्त्यै नमः। ॐ भूर्भुवः स्वः आत्मासनाय नमः। ऊर्ध्वकेशीति मन्त्रस्य। प्रचण्ड ऋषिः। चामुण्डा देवता। अनुष्टुप्छन्दः। शिखा-ब्रह्मग्रन्थिबन्धने विनियोगः।

"ऊर्ध्वकेशि विरूपाक्षि मांसशोणितभोजने। तिष्ठ देवि शिखाबन्धे चामुण्डे ह्यपराजिते"॥

सर्वभूतनिवारकाय शार्ङ्गाय सशरायास्त्रराजाय सुदर्शनाय हुंफट्। श्रीगुरुभ्यो नमः। गुरुपादुकाभ्यां नमः। परमगुरुभ्यो नमः। आचार्येभ्यो नमः। आचार्यगुरुभ्यो०। पूर्वसिद्धेभ्यो नमः। नमो महद्भ्यः। ॐ गोविन्दाय नमः।ॐ अङ्गुष्ठाभ्यां नमः। ॐ महीधराय नमः।ॐ तर्जनीभ्यां नमः। ॐ हृषीकेशाय नमः। ॐ मध्यमाभ्यां नमः। ॐ त्रिविक्रमाय नमः। ॐ अनामिकाभ्यां नमः। ॐ विष्णवे नमः। ॐ कनिष्ठिकाभ्यां नमः। ॐ माधवाय नमः। ॐ करतलकरपृष्ठाभ्यां नमः। इत्यङ्गुलिन्यासः॥ ॐ गोविन्दाय नमः।ॐ हृदयाय नमः। ॐ महीधराय नमः। ॐ शिरसे स्वाहा। ॐ हृषीकेशाय नमः। ॐ शिखायै वषट्। ॐ त्रिविक्रमाय नमः। कवचाय हुं। ॐ वामनाय नमः। नेत्रत्रयाय वौषट्। पद्मनाभाय न०। अस्त्राय फट् इति॥ ९८॥

## याज्ञवल्कीये ९९ श्लोकः

संगतिमाह। **प्रातरिति**। बहुवचनादाह। **आहवनीयेति**। प्रकारस्योक्तत्वादाह। **यथोक्तेनेति**। न्यूनतां निराचष्टे। **औपेति**। अनेन सांप्रतं तत्रानधिकार इति सूचितम्। अभिद्वयसत्वे कमभ।ह **भरद्वाजः**

“होमं वैतानिकं कृत्वा स्मार्तं कुर्याद्विचक्षणः। स्मृतीनां वेदमूलत्वात्स्मार्तं केचित्पुरा विदुः”॥ इति।

त्वार्थमाह । **तदेति** । मन्त्रार्थस्मरणावश्यकत्वसूचनायाह । **समेति** । **अविक्षीति** । विषयान्तरासंबद्धचित्त इत्यर्थः । उक्तवक्ष्यमाणानामत्र क्रमप्रतिपादनेऽपि तात्पर्यमिति ध्वनयन्पुनरप्याह । **तदेति** । एवमग्रे सर्वत्र बोध्यं तदुपयोगिनमाह । **निरुक्तेति** । असाधारणत्वादस्य प्रागुल्लेखः । विस्मरणे दोषस्मरणादाह । **चकारादिति** । निषिद्धस्य तत एव निरासेऽप्यनुपयुक्तनिरासायाह । **मीमांसेति** । **धर्मेति** । धर्मशास्त्रनीतिशास्त्रवैद्यकेत्यर्थः । अत एव “न वेदमनधीत्यान्यां विद्यामधीयीतान्यत्र वेदाङ्गश्रुतिभ्यः” इति **शङ्खः** ।

“जपेदध्यापयेच्छिष्यान् धारयेद्वै विचारयेत् । अवेक्षेत च शास्त्राणि धर्मादीनि द्विजोत्तमः” ॥

इति **कौर्मं** च ॥ ९९ ॥

## याज्ञवल्कीये १०० श्लोकः

मुख्यार्थकल्पमाह । **अभीति** । तदसंभवे वृत्तेरावश्यकत्वात्ततोऽपि गौणार्थमाह । **अन्यं वेति** । उपयुक्तत्वादेवाह । **श्रीमन्तमिति** । वक्ष्यमाणनिषेधात्प्रकृतोपयुक्तमविरोधायाह । **अकुत्सितमिति** । उभयोरिदं विशेषणद्वयं तथा चेश्वरमित्यस्य तादृशलक्ष्मीवत्त्वे तात्पर्यं न तु तत्र । अत एव **गौतमः** ( अ. ९ सू. ६३–६४ ) “योगक्षेमार्थमीश्वरमधिगच्छेन्नान्यमन्यत्र गुरुदेवधार्मिकेभ्यः” इति । अन्यमनीश्वरम् । अत एव **दक्षः** ।

“भरणं पोष्यवर्गस्य प्रशस्तं स्वर्गसाधनम् । माता पिता गुरुर्भार्या प्रजा दीनः समाश्रितः ॥

“अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्ग उदाहृतः । पोष्यवर्गार्थसिद्ध्यर्थं धनमिच्छेत बुद्धिमान्” ॥

आत्मनेपद**मार्षमिति** । योगक्षेमविषयार्थसिद्ध्यर्थमिति शाब्दोऽर्थस्तत्र सिद्धिपदमनतिप्रयोजनमिति सूचयन्तद्राहित्येन फलितार्थमाह । **योगेति** । लक्ष्यार्थमाह । **उपासीतेति** । तत्फलमाह । **उपेयादिति** । उत्तरार्द्धमर्थान्मध्याह्नपरमित्याह । **ततो मेति** ।

### अथ स्नानविधिनिर्णयः ।

**तत्रापस्तम्बः** ( धर्मसू. २।२२।१३–१४ ) “शनैरपोऽभ्यवेयान्नाभिघ्नन्नभिमुखमादित्यमुदकमुपस्पृशेत्सर्वत्रोदकस्पर्शनविधिरिति” । अत्र सर्ववर्णाश्रमसाधारणमेतदग्रिमसूत्रे तस्येति निर्देशादिति **हरदत्तः** ।

**अस्यायमाशयः** । सर्वत्र प्रवहदप्रवहज्जलादावयमुदकस्पर्शनस्य स्नानस्य विधिर्ज्ञातव्य इति । तस्येति ग्रहणं तु पुनर्वानप्रस्थमात्रस्यैव प्राप्त्यर्थम् । तत्रोदकं शनैरभ्यवेयान्न धावेदन्तःपातिशर्करादिभिः । शरीराबाधार्थमेतत् । तथोदकं हस्तादिनाऽनभिघ्नन्नताडयन्नुपस्पृशेत्स्नायात् । प्लवनादिवृथाचेष्टानिरासार्थमेतत्तद्देशंन्नियमयन्नाह । **अभिमुखमादित्यमिति** । सूर्याभिमुखमित्यर्थः ।

ननु “स्रोतसोऽभिमुखः स्नायान्मार्जनं चाघमर्षणम् । अन्यत्रार्कमुखो रात्रौ प्राङ्मुखोऽग्निमुखोऽपि वा” ॥

इति **व्यास**वचनस्य का गतिरिति चेत्सत्यम् । “स्रोतोऽभिमुखः सरित्सु स्नायादन्यत्र सविताभिमुखः”

इति **बह्वृचपरिशिष्टोक्तेस्तत्परत्वादिति कातीयतैत्तिरीयाणां** सर्वत्रार्काभिमुखं स्नानम् । तत्सूत्रे तथोक्तेः ।

**आचारदर्पणेऽ**प्येवम् । तेषामपि रात्रौ प्रवाहाभिमुखत्वम् अघमर्षणमार्जने सर्वेषां स्रोतोऽभिमुखमेव । **आश्वलायनः** । "गृहे गृहमुखं विद्यादन्यत्राभिमुखं रवेः" । एतद्बह्वृचपरम् । अन्येषां तु **याज्ञवल्क्यः** । "स्थावरेषु गृहे चैव सूर्यसंमुखमाप्लवेत्" । तस्मादेतद्वचनपर्यालोचनया यजुर्वेदिनां सर्वेषामादित्याभिमुखमेवेति निष्कर्षः ।

अन्यत्र निबन्धेऽप्युपस्पर्शपदस्य स्नानपरत्वम् । यथाह **दक्षः**

"उपस्पृश्याशुचिस्पृष्टं तृतीयं चापि मानवः। हस्तौ पादौ च तोयेन प्रक्षाल्याचम्य शुद्ध्यति"॥इति।

अस्यार्थः । प्रथमोऽशुचिः। तत्स्पृष्टो द्वितीयः। तत्स्पृष्टस्तृतीयः। तत्स्पर्शे आचमनमात्रम्। चतुर्थादौ न। मानाभावात्। कामतः स्पर्शे तृतीयस्यापि स्नानम् । "पतितचण्डालसूतिकोदक्याशवस्पृष्टं यत्तत्स्पृष्टिस्पर्शने सचैलमुदकोपस्पर्शनाच्छुध्येदिति" **गौतमोक्तेः** (अ. १४ सू. २७)।

अभिषिक्तश्च जुहुयात् । यदा जुहुयात्तदाऽभिषिक्तो जुहुयादनुवादोऽयं स्नानविशेषणं विधातुं शनैरप्स्वेयाञ्चाभिघ्नन्नभिमुखमादित्यमुदकमुपस्पृशेदित्यादिसूत्राणां व्याख्या **हरदत्तीया लिख्यते।** नाभिघ्नन्हस्तेनोदकमताडयन् उदकमुपस्पृशेत्स्नायात्सर्वत्रोदकस्पर्शनाविधिः । सर्ववर्णाश्रमसाधारणमेतत्तथा चोत्तरत्र तस्येतिग्रहणादिति ।

एवं सामान्यतः स्नाने प्राप्ते ब्रह्मचारिणो विशेषमाह । "नाप्सु श्लाघमानः स्नायाद्यदि स्नायाद्दण्डवत् प्लवेदिति"। अयमर्थः। यदि नाम यदा ब्रह्मचारी स्नायात्तदा दण्डवत्प्लवेद्दण्डवन्मज्जनमेवं स्नानं कुर्यादिति। तथा यदप्सु स्नायात् तन्न श्लाघमानः स्नानीयैर्द्रव्यैर्मलापकर्षणं श्लाघा क्रीडा वा। तामकुर्वन्किंतु पावमान्यादिविधिनेति । अत्राङ्गानि न प्रक्षालयीतेत्युपादिमसूत्रं **तदिना शिरः सुखार्थाभ्यङ्गस्नानप्रतिषेधार्थम्** । कश्चित्वंगानीत्या समावर्तनान्नित्यस्नाननिषेधः । प्रक्षालयीत त्वशुचिलिप्तानीति नैमित्तिकस्नानविधिर्नाप्स्विति तत्रैव श्लाघाप्रतिषेध इति सूत्राणि व्याचष्टे ।

गृहस्थस्य तु सामान्यतः स्नाने प्राप्ते विशेषमाह । 'सशिरावमज्जनमप्सु वर्जयेदिति'। गृहस्थः सह शिरसाऽप्सुवमज्जनमवमज्जनं न कुर्यात्। मज्जनेन शिरःस्नानं नाचरेदित्यर्थः। अत्र शिरःस्नानं निषिध्यत इति **हरदत्तादयः।**

अस्यैव गृहस्थस्य तन्यमानचातुर्मास्यस्यावभृथे विशेषः श्रूयते । "सशिरस्कावनुपमक्षन्तौ स्नातः पत्नी यजमानश्चेति"। तस्यार्थः। यदेवाशिरस्कानवमज्जनं सामान्यतः प्राप्तं तदपनोद्यते । सशिरस्कौ अनुपमक्षन्तावनवमज्जंतौ स्नातः सलिलोत्क्षेपणेन प्रकारेणेति **रुद्रदत्तः।** यत्त्वनुपमक्षन्तावशोधयन्तावङ्गानीति व्याख्यातम् तन्न । स्नानादर्वागशोधनप्रतिषेधस्यात्यन्ताप्राप्तत्वात्। स्नानकाले च शोधनस्य 'अन्योन्यस्पृष्टे प्रधावत' इति सूत्रेण व्यक्तमुक्तत्वात् । तस्य नवनीतादिदीक्षादिवृङ्मलाङ्गमलविमोकार्थप्राप्तधावनस्य स्वपृष्ठे स्वस्य कर्तुमशक्यत्वाद्दम्पत्यन्योन्यान्यतरकर्तृकत्वविधानादिति पूर्वोक्तमेव श्रेयस्तरमवगंतव्यम् ।

अत्राशिरस्कानवमज्जत्स्नानमल्पोदकविषयम् ।

"तडागादिषु तोयेषु प्रत्यर्कं स्नानमाचरेत् ॥ नाल्पाम्भसि शिरो मज्जेदि"त्यादि वचनादिति केचित्तच्चिन्त्यम् । उत्तरसूत्रासंगतेः । आवभृथिके स्वतन्त्रविशिष्टस्नानविधिकल्पने तु गौरवात् । एतेनात्यशक्तविषयमेवाशिरस्कस्नानं गौणं न मुख्यम् "अशक्तावशिरस्कं च स्नानं मंत्रविधानत"इति **चतुर्विंशतिमतो**क्तत्वादित्यपि मंदम् । आवभृथिकसूत्रस्य नियन्त्रकस्य सद्भावादन्यथार्थकरणस्यायुक्तत्वात् । तस्मान्नित्यं स्नास्य**न्नापस्तम्बो**ऽमज्जन्नशिरस्कं स्नायादवभृथे चेतसलिलोत्क्षेपेण सशिरस्कमिति । तेन स्नातकान्यः सशिरस्कं ब्रह्मचारी दण्डवच्छूद्रादिश्च मज्जन्स्नायान्नित्यं नैमित्तिकं च स्नातकोऽपी**त्यापस्तम्ब**सूत्रार्थनिष्कर्षः । स्वगृह्योक्तेत्यस्य मध्यमणिन्यायेनान्वयः । तर्पणाकरणे प्रत्यवायः स्मर्यते ।

"देवताश्च मुनींश्चैव पितॄन्यो न हि तर्पयेत् । देवादीनामृणीभूत्वा नरकं प्रतिपद्यते"॥ इति ।

इदं च स्नानाङ्गतर्पणमुक्तम् । ब्रह्मयज्ञाङ्गं त्वग्रे ऊह्यम् । तेनैव स्वतंत्रस्यापि सिद्धिर्बोध्या ।

**अथ देवऋषिपितृतर्पणम् ।**

तत्र प्राङ्मुख उपविश्य पूर्ववदाचम्य प्राणानायम्य देवर्षिपितृतर्पणं करिष्य इति संकल्प्य हेमरूप्यताम्रपात्राणामन्यतमेन सकुशेनार्द्रवाससा जले शुष्कवाससा स्थले अंजलिना कुशाग्रैर्देवान् कुशमध्यैर्ऋषीन् द्विगुणीकृतकुशमूलाग्रैः पितॄंश्चोपवीती देवतीर्थेन देवान् निवीती प्रजापतितीर्थेन ऋषीन्प्राचीनावीती पितृतीर्थेन पितॄन् ।

"कनिष्ठादेशिन्यंगुष्ठमूलान्यग्रं करस्य तु । प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ।

"एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः । अर्हंति पितरस्त्रींस्त्रींस्त्रियस्त्वेकैकमञ्जलिम्" ॥

कासुचित्स्त्रीषु विशेषमाह **सांख्यायनः**

"मातृमुख्यास्तु यास्तिस्त्रस्तासां त्रींस्त्रीञ्जलाञ्जलीन् । सापत्नाचार्यपत्नीनां द्वौ द्वौ दद्यात् जलाञ्जलीन्॥"

तत्र दक्षिणहस्तेन प्रतितर्पणमक्षतग्रहणं देवर्षिषु पितृतर्पणे तु । वारातिथिनक्षत्रादिनिमित्तानि परिहृत्य कृष्णतिलान्वामे कृत्वा सव्यंजान्वाच्यपूर्वोक्तपात्राणामन्यतमेनाञ्जलिना वा सकृन्मंत्रमुक्त्वा द्वितूष्णीमित्यादिप्रयोगेण स्मृतिरीत्या तर्पयेत् । तद्यथा । "ब्रह्मादयो ये देवास्तान्देवांस्तर्पयामि । सर्वान्देवांस्तर्पयामि । सर्वा देवपत्नीस्तर्पयामि । सर्वान् देवपुत्रांस्तर्पयामि । सर्वान्देवपौत्रांस्तर्पयामि । सर्वान् देवगणांस्तर्पयामि । भूर्देवांस्तर्पयामि । भुवर्देवांस्तर्पयामि । स्वर्देवांस्तर्पयामि । भूर्भुवःस्वर्देवांस्तर्पयामि" । निवीती उदङ्मुखः "कृष्णद्वैपायनादयो ये ऋषयस्तानृषींस्तर्पयामि । सर्वानृषींस्तर्पयामि । सर्वा ऋषिपत्नीस्तर्पयामि । सर्वानृषिपुत्रांस्तर्पयामि । सर्वानृषिपौत्रांस्तर्पयामि । सर्वानृषिगणांस्तर्पयामि । प्रजापतिं काण्डर्षिं तर्पयामि । सोमं काण्डर्षिं तर्पयामि । अग्निं काण्डर्षिं तर्पयामि । विश्वान्देवान् काण्डर्षीस्तर्पयामि । सा९हितीर्देवता उपनिषदस्तर्पयामि । याज्ञिकीर्देवता उपनिषदस्तर्पयामि । वारुणीर्देवता उपनिषदस्तर्पयामि । ब्रह्माण९स्वयंभुवं तर्पयामि । सदसस्पतिं तर्पयामि ।"

सदसस्पतेस्तर्पणे मूलं मृग्यम् ।

"भूर्ऋषींस्तर्पयामि । भुवर्ऋषींस्तर्पयामि । सुवर्ऋषींस्तर्पयामि । भूर्भुवः स्वर्ऋषींस्तर्पयामि "

प्राचीनावीती । दक्षिणामुखः सोमः पितृमान्यमोऽगिरस्वानाग्निष्वात्ताग्निकव्यवाहनादयो ये पितरस्तान्पितॄंस्तर्पयामि । सर्वान्पितॄंस्तर्पयामि । सर्वाः पितृपत्नीस्तर्पयामि । सर्वान् पितृपुत्रांस्तर्पयामि । सर्वान्पितृपौत्रांस्तर्पयामि । सर्वान्पितृगणांस्तर्पयामि । भूः पितॄंस्तर्पयामि । भुवःपितॄंस्तर्पयामि । सुवःपितॄंस्तर्पयामि । भूर्भुवःसुवःपितॄंस्तर्पयामि " ।

एतदन्तम् जीवत्पितृकस्यापि । परं तु तेन तिलाः शुक्ला ग्राह्याः । अजीवत्पितृकस्य तु

**वसिष्ठः**

"संबंधमनुकीर्त्यैव नाम गोत्रमनन्तरम् । वस्वादिरूपसंकीर्त्य स्वधाकारेण तर्पयेत्" ॥ इति ।

**यमः**

"संबन्धनामगोत्रेण स्वधान्तेन नमोन्ततः । वस्वादिरूपं निर्दिश्य तर्पयेत्पितृपूर्वकम् " ॥ इति ।

अत्रास्मत्पितरममुकशर्माणममुकगोत्रं वसुरूपं स्वधानमस्तर्पयामीत्यादि प्रयोगः ।

**वोपदेवः**

"ताताम्बात्रितय सपत्नजननी मातामहादित्रयम् ।
सस्त्रीस्त्रीतनयादि तातजननी स्वभ्रातरस्तत्स्त्रियः ।
ताताम्बात्मभगिन्यपत्यधवयुग्जाया पिता सद्गुरुः ।
शिष्याप्ताः पितरो महालयविधौ तीर्थे तथा तर्पणे ॥

आप्तान्तान्संतर्प्य ।

"यत्र क्वचन संस्थानां क्षुत्तृषोपहतात्मनाम् । इदमक्षय्यमेवास्तु मया दत्तं तिलोदकम् " ॥

इत्यञ्जलिं दद्यात् ।

"ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः । तेषां हि दत्तमक्षय्यमिदमस्तु तिलोदकम्" ॥

इत्यञ्जलिं दद्यात् ।

"आब्रह्मस्तम्बपर्यंतं देवर्षिपितृमानवाः । तृप्यन्तु पितरः सर्वे मातृमातामहादयः ॥

"अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् । आ ब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम्" ॥

इत्येकोऽञ्जलिर्देयः ।

अशक्तौ संक्षेपतर्पणम् **विष्णुपुराणे**

"**आब्रह्मस्तम्बपर्यन्तं जगत्तृप्यत्विति ब्रुवन् । क्षिपेत्तोयाञ्जलींस्त्रींस्त्रीन्कुर्वन्संक्षेपतर्पणम्**" ॥

अन्त्यमञ्जलिमाह **कात्यायनः**

"पितृवंश्या मातृवंश्या ये चान्ये मत्त उदकमर्हंति तांस्तर्पयामीत्यवसानाञ्जलिरिति"

ततः। स्नानवस्त्रं चतुर्गुणीकृत्य

"ये के चास्मत्कुले जाता अपुत्रा गोत्रिणो मृताः। ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकम्"॥

इति जलादन्यत्र पीडयेत्।

"यावद्देवानृषींश्चैव पितॄंश्चापि न तर्पयेत्। तावन्न पीडयेद्वस्त्रं येन स्नातो भवेन्नरः"॥ इति।

तत आचम्य सूर्यायार्घ्यं दद्यात्। **विष्णुपुराणे**

"दत्वा कामोदकं सम्यक् प्रेतेभ्यः श्रद्धयाऽन्वितः। आचम्य च ततो दद्यात्सूर्याय सलिलाञ्जलिम्"॥

"नमो विवस्वते ब्रह्मन् भास्वते विष्णुतेजसे। जगत्सवित्रे शुचये सवित्रे कर्मदायिने"॥ इति

तत आचम्य हस्तस्थान्कुशांस्त्यजेत् इति तर्पणम्।

**गन्धे**त्युपलक्षणम्।

अथान्यत्रोक्तः **पुष्पाध्यायो** वितन्यते। **भविष्यत्पुराणे**

"पुष्पैररण्यसंभूतैः पत्रैर्वा गिरिसंभवैः। अपर्युषितनिश्छिद्रैः प्रोक्षितैर्जंतुवर्जितैः॥

"आत्मारामोद्भवैर्वाऽपि भक्त्या सम्पूजयेत्सुरान्। कृमिकीटावपन्नानि शीर्णपर्युषितानि च॥

"स्वयंपतितपुष्पाणि त्यजेदुपहितानि च"।

मलादिभिरुपहितानि।

"मुकुलैर्नार्चयेद्देवमपक्वं न निवेदयेत्। फलं च कृमिबद्धं च प्रयत्नात्तद्विवर्जयेत्॥

"अलाभे तु सुपुष्पाणां पत्राण्यपि निवेदयेत्। पत्राणामप्यलाभे तु फलान्यपि निवेदयेत्॥

"फलानामप्यलाभे तु तृणगुल्मौषधीरपि। औषधीनामप्यलाभे तु भक्त्या भवति पूजितः॥

"प्रत्येकमुक्तपुष्पेण दशसौवर्णिकं फलम्। स्रग्भिश्च नृपशार्दूल तदेव द्विगुणं भवेत्"॥

**विष्णुधर्मोत्तरे।**

"धर्मार्जितधनक्रीतैर्यः कुर्यात्केशवार्चनम्। उद्धरिष्यत्यसंदेहात्सप्त पूर्वांस्तथा परान्"॥ इति।

इदं विप्रातिरिक्तपरम्।

"समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत्। शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन्पतत्यधः"॥ इति।

**भविष्ये।**

"लक्षपुष्पार्चनादौ तु क्रयक्रीतम्"। इति **मंत्रकोशकारः।**

"समित्पुष्पकुशादीनि वहन्तं नाभिवादयेत् । तद्धारी चैव नान्याह्नि निर्माल्यं तद्भवेत्तयोः" ॥

तथा

"देवोपरि धृतं यच्च वामहस्ते धृतं च यत् । अधोवस्त्रधृतं यच्च जलेऽन्तः क्षालितं च यत् ॥

"देवतास्तन्न गृह्णन्ति पुष्पं निर्माल्यतां गतम् ।

नित्यपूजार्थं परोपवनादेरपि ग्राह्यं न तच्चौर्यम् । "देवतार्थं च कुसुममस्तेयं मनुरब्रवीत्" । इति वचनात् । पूजार्थं पुष्पादि न याचेत ।

"याचितैः पत्रपुष्पाद्यैर्यः करोति ममार्चनम्" इति **वाराहे** तस्यापराधिषु गणितत्वात् ।

**भविष्यत्पुराणे**

"प्रहरं तिष्ठते जाती करवीरमहर्निशम् । तुलस्यां बिल्वपत्रेषु जलजेषु च सर्वशः ।

"न पर्युषितदोषोऽस्ति मालाकारगृहेषु च । मुद्गराणि कदम्बानि रात्रौ देयानि भास्करे ॥

"कनकानि कदम्बानि रात्रौ देयानि शङ्करे । दिवा चान्यानि पुष्पाणि दिवा रात्रौ च मल्लिका ॥

"वर्ज्यं पर्युषितं पुष्पं वर्ज्यं पर्युषितं जलम् । न वर्ज्यं तुलसीपत्रं न वर्ज्यं जाह्नवीजलम् ॥

"तुलसी पर्युषिता नैव बिल्वं तु त्रिदिनावधि । पद्मं पञ्चदिनात्त्याज्यं शेषं पर्युषितं विदुः ॥

"पलाशं दिनमेकं तु पङ्कजं च दिनत्रयम् । पञ्चाहं बिल्वपत्रं च दशाहं तुलसीदलम्" ॥ इति ।

**मात्स्ये**

"बिल्वपत्रं च माच्यं च तमालामलकीदले । कल्हारं तुलसी वै तु पद्मं च मुनिपुष्पकम् ॥

"एतत्पर्युषितं न स्यात्कुशाश्च कलिकास्तथा । जलजानां च सर्वेषां पत्राणामहतस्य च ॥

"कुशपुष्पस्य रजतसुवर्णकृतयोरपि । न पर्युषितदोषोऽस्ति व्यतीतो यस्य चैव हि ॥

"मुकुलैर्नार्चयेद्देवं पङ्कजैर्जलजैर्विना" ॥ इति ।

"बिल्वापामार्गजाती-तुलसी-शमी शताकेतकीभृङ्गदूर्वा ।
मन्दाम्भोजाहिदर्भामुषितिलतगरब्रह्मकल्हारमल्लि ।
चम्पाश्वारातिकुम्भी दमनकरुचकाबिल्वतोहानिशस्ता ।
त्रिंश[१] त्र्यैका[२] पर्द्वरीशो[३] दधि[४] निधि[५] वसु[६] भूं[७] भूं[८] यमा[९] भूय एवम् ।"

अस्यार्थः । **शता** शतावरी । **मंदो** मन्दारः । **अहिर्नागकेशरः** । **निधयो** नव । **वसवोऽष्टौ** । **भूरेको** । **यमा** द्वौ । बिल्वमारभ्याहिपर्यन्तं गणयित्वा दर्भमारभ्य पुनस्त्रिंशदादि गणयेदित्यर्थः । एतद्दिनोत्तरं पर्युषितानीत्यर्थः । तत्रैव

"जाती शमी कुशाः कङ्कु मल्लिका करवीरजम् । नागपुन्नागकाशोकरक्तनीलोत्पलानि च ॥

"चम्पकं बकुलं चैव पद्मं बिल्वं पवित्रकम् । एतानि सर्वदेवानां विहितानि सुमानि च" ॥

१ (३०), २ (१३), ३ (११), ४ (४), ५ (९), ६ (८), ७ (१), ८ (१), ९ (२) ।

**कङ्कु** कुब्जम् । **नागो** नागकेसरम् ।

"पाटला च शमीपत्रं दुर्गायास्तु हिताहितम्" ॥ विहितं प्रतिषिद्धं चेत्यर्थः ।

"कुन्दं पलाशकुसुमं दूर्वा च शिवपूजने । कुमुदं कुङ्कुमं द्रोणं तगरं सूर्यपूजने" ॥

विहितं निषिद्धं चेत्यर्थः । कुङ्कुमं केसरपुष्पम् ।

"अवकः कर्णिकारस्तु किंकरातो हरेस्तथा" ॥

किंकरातः पीतायुकः ।

"तिलकं मालती बाणस्तुलसी भृङ्गराजकम् । तमालं शिवदुर्गार्थे निषिद्धं विहितं भवेत्" ॥ बाणः करसला इति प्रसिद्धः ।

"जयाकाशः श्वेतपद्मः श्वेतमन्दारकं तथा । दुर्गायाश्चैव विष्णोश्च निषिद्धं विहितं भवेत् " ॥

जया जयंती ।

"अगस्तिरतिमुक्तश्च तिरीटं च हरे हरौ । अपामार्गस्य पुष्पं च दुर्गायाश्च हिताहितम्" ॥ अतिमुक्तो माधवीलता । तिरीटं लोध्रम् ।

"धूस्तूरः शिंशपापुष्पं मन्दारश्चापराजिता । सूर्यविष्णोर्न हि हितं दमनं शिवसूर्ययोः" ॥

अथ **शंभौ निषिद्धानि ।**

"केतकी चातिमुक्तश्च कुन्दो यूथो मदन्तिका । शिरीषसर्जबन्धूककुसुमानि विवर्जयेत् ॥

"अङ्कोलपत्रकुसुमं करजेंद्रतरूद्भवम्" ॥

सर्जः शालः । इंद्रतरुः सिंधुवारः ।

"शिवे विवर्जयेत्कुन्दमुन्मत्तं च तथा हरौ । देवानामर्कमन्दारो सूर्यस्य तगरं तथा" ॥

अर्कनिषेधो दुर्गेतरदेवीविषयः । 'दुर्गापूजाधिकारे करवीरार्कपुष्पैरि'त्युक्तत्वात् ।

**विष्णुः** "नोग्रगन्धानि नागन्धानि पुष्पाणि न कण्टकितमपि न मुक्तगन्धमपि दद्यात् । न रक्तं दद्यात् । रक्तमपि कुङ्कुमजं जलजं च दद्यात् । अजलजमपि पाटलानि संध्याकरवीरपारिभद्र-शमीपत्रपालाशाशोककुशवर्जं च दद्यात्" ।

**विष्णुधर्मोत्तरे**

"कुटजं शाल्मलीपुष्पं शैरीषं क्रकचं तथा । धूस्तूरं कृष्णपुष्पार्कं विष्णौ वर्ज्यं सदा बुधैः" ॥

**नृसिंहपुराणे**

"न मालायोग्यतापुष्पं निर्माल्यं तत्स्फुटं भवेदि"त्युक्तम् ।

**"तुलसीचंदनादीनां न निर्माल्यत्वमीरितम्" । तेन प्रातःकालेऽप्यपनये न दोषः ।**

अथ **विहितानि** । तत्रा**र्कस्य** । **भविष्ये** ।

"मालती मल्लिका चैव दूर्वाकाशोऽतिमुक्तकः । पाटलाकरवीराणि जया जयंतिरेव च ॥
"चम्पको रोलकः कंदोषाणोपर्वरमल्लिका । अशोककर्णिकारौ च तथैव चाटरूषकः ॥
"शतपत्राणि चान्यानि बकुलं च विशेषतः । अगस्तिकिंशुकौ तद्वत्पूजार्थं भास्करस्य तु ॥
"विहितानि सदा भक्त्या पूजयेत्रिगुणात्मकम्" ॥ इति ।

रेवः पत्राण्यपि ।

"बिल्वपत्रं शमीपत्रं भृङ्गराजस्य पत्रकम् । तमालपत्रं च हरेः सद्यस्तुष्टिकरं रवेः ॥
"तुलसी कालतुलसी तथा रक्तं च चन्दनम् । केतकीपत्रकुसुमं सदैव तपनप्रियम्" ॥ इति रवेः ।

अथ **शिवे** ।

"करवीरो चक्रश्चैव अर्क उन्मत्तकस्तथा । पाटला बृहती चैव तथा च गिरिकर्णिका ॥
"तथाऽऽकाशस्य पुष्पाणि मन्दारश्चापराजिता । शमी पुष्पाणि चान्यानि कुब्जकं शिखिनी तथा ॥
"अपामार्गस्तथा पद्मं शमीपत्रं सरोचकम् । चम्पकोशीरतगरं तथा वै नागकेसरम् ॥
"पुन्नागं किङ्किरातं च द्रोणपुष्पं तथा शुभम् । शिंशपोदुम्बरश्चैव जपा मल्ली तथैव च ॥
"पुष्पाणि यज्ञवृक्षस्य तथा बिल्वं प्रियं शुभे । कुङ्कुमस्य च पुष्पाणि तथा वैकङ्कतस्य च ॥
"नीलं च कुमुदं चैव तथा रक्तोत्पलानि च । सुरभीणि च सर्वाणि स्थलजान्यौदकानि च ॥
"गृह्णामि शिरसा देवि यो मे भक्त्या निवेदयेत्" ।
"नीलोत्पलसहस्रस्य यो मालां मे प्रयच्छति । शिवाय विधिवद्भक्त्या तस्य पुण्यफलं शृणु ।
"कल्पकोटिसहस्राणि कल्पकोटिशतानि च । वसेच्छिवपुरे श्रीमाञ्छिवतुल्यपराक्रमः ॥
"एकेन करवीरेण रक्तेनाथ सितेन वा । हरं वा हरिमभ्यर्च्य परमं पदमाप्नुयात्" ॥
अर्कधुस्तूरादिपुष्पदानफलं ग्रन्थगौरवभयान्न लिखितम् । सामान्यफलं शिवलोकावाप्तिः ॥
"एकमात्रं फलं पक्वं यः शिवाय निवेदयेत् । वर्षाणामयुतं भोगैः शिवलोके महीयते ॥
"एकं मिष्टं फलं पक्वं यः शिवाय निवेदयेत् । सर्वभक्ष्यमहाभोगैः शिवलोके महीयते" ॥

**शिवधर्मे** ।

"तस्मात्पुष्पप्रदानेन लिङ्गेषु प्रतिमासु च । अशीतिवर्षकोटीनां दुर्गतिं न नरो व्रजेत्" ॥

**स्कान्दे** ।

"शुष्काण्यपि च पत्राणि श्रीवृक्षस्य सदैव हि । शिवे भक्त्या प्रदेयानि शिवभक्तो यदा नरः" ॥

**भविष्ये** ।

"धुस्तूरकैश्च यो लिङ्गं सकृत्पूजयते नरः । स गोलक्षफलं प्राप्य शिवलोके महीयते ॥
"बिल्वपत्रैरखण्डैश्च यो लिङ्गं पूजयेत्सकृत् । सर्वपापविनिर्मुक्तः शिवलोके महीयते ॥

"सर्वकामप्रदं बिल्वं दारिद्र्यस्य विनाशनम् । बिल्वपत्रात्परं नास्ति येन तुष्यति शङ्करः ॥
"वामपत्रे स्थितो ब्रह्मा पद्मनाभश्च दक्षिणे । मध्यपत्रे स्थितः साक्षात्साम्बः सर्वार्थदः शिवः ॥
"इन्द्रादयो लोकपाला वृन्ताग्रे परिकीर्तिताः । पृष्ठभागे स्थिता यक्षा ह्यभक्तानां निषेधकाः ॥
"पूर्वभागेऽमृतं न्यस्तं देवैर्ब्रह्मादिभिः पुरा । तस्माद्वै पूर्वभागेन त्वर्चयेद्गिरिजापतिम्" ॥

अथ **दुर्गायाः** ॥ **देवीपुराणे** ।

"शृणु शुक्र प्रवक्ष्यामि पुष्पाध्यायं समग्रतः । ऋतुकालोद्भवैः पुष्पैर्मल्लिकाजातिपुष्पकैः ॥
"सितरक्तैस्तथा पुष्पैः पद्मैश्च पाण्डुरैस्तथा । किंशुकैस्तगरैश्चैव किङ्किरातैः सचम्पकैः ॥
"बकुलैश्चैव मंदारैः कुन्दमुस्तैस्तिरीटकैः । करवीरार्कपुष्पैश्च शैंशपैश्चापराजितैः ॥
"सितरक्तैस्तथा पीतैः कृष्णैश्चैव चतुर्विधैः । धुस्तूरकान्तिपुष्पैश्च बंधूकागस्तिसंभवैः ॥
"मदनैः सिन्धुवारैश्च सुरभिर्मरुवकैस्तथा । लताभिर्ब्रह्मवृक्षस्य दूर्वाकुंदैः सुशोभनैः ॥
"मञ्जरीभिः कुशानां च बिल्वपत्रैः सुशोभनैः । रक्तान्वितैस्तथा सर्वैर्जलजैः स्थलसंभवैः ॥
"पुष्पैः पत्रैर्यथान्यायं सर्वौषधिमयैः शुभैः । धान्यानां सर्वपत्रैश्च पुष्पैश्चैव प्रपूजयेत् ॥
"बिल्वपत्रैः पूजनेन राजसूयफलं लभेत् । करवीरस्रजा चैव अग्निष्टोमफलं लभेत् ॥
"बकुलेन वाजपेयं द्रोणे राजसूयस्य च । एवमम्बार्चनफलं कुसुमैर्मुनिभिरीरितम्" ॥

**ततो विष्णोः** ।

"पत्रं वा यदि वा पुष्पं फलं नेष्टं त्वधोमुखम् । पुष्पाञ्जलिविधिं हित्वा यथोत्पन्नं तथाऽर्पयेत् ॥

"दूर्वाः स्वाभिमुखाग्रा स्युर्बिल्वपत्रं त्वधः कृतम् । अधःकृतमनुत्तानं बिल्वपत्रम्"। दूर्वाः स्वाभिमुखाग्रा इत्युक्तत्वात् तत्साहचर्यात् बिल्वपत्रस्य स्वाभिमुखत्वम् ।

"पुष्पं तु सम्मुखं योज्यं पत्रं योज्यमधोमुखम् । फलादिकं तु यत्किञ्चिद्यथोत्पन्नं तथाऽर्पयेत्"

इत्यपि ग्रन्थान्तरे । **नृसिंहपुराणे** ।

"मालती–मल्लिका–जाती–केतक्याशोकचम्पकैः । पुन्नागनागबकुलैः पद्मकैरुत्पलादिभिः ॥
"एतैरन्यैश्च कुसुमैः प्रशस्तं पूजनं हरेः । नाङ्गुष्ठैर्मर्दयेद्देवं नाधः पुष्पैः समर्चयेत् ॥
"कराग्रेण क्षिपेत्तोयं चण्डालस्य समं भवेत्" ।

**वामनपुराणे**

"जातीशताह्वासुमनाकन्दं चाम्बुपुटस्तथा । बाणं च चम्पकाशोकं करवीरं च यूथिका ॥
"पारिभद्रं पाटला च बकुलं गिरिशालिनी । तिलकं जासुवनजं पीतजं त्वगरं त्वपि ॥
"एतानि हि प्रशस्तानि कुसुमान्यच्युतार्चने । सुरभीणि तथाऽन्यानि वर्जयित्वा तु धूस्तुरम्" ॥

**शताह्वाऽशोक इति प्रसिद्धा । सुमनाः सुवर्णजातीः । अम्बुपुटः कर्णिकारः । जसुवनं जया । गिरिशालिनी श्वेतकुटजम् ।**

**अथ पत्राणि ।**

"अपामार्गस्य प्रथमं भृङ्गराजमतः परम् । तस्माच्च खादिरं श्रेष्ठं शमीपत्रमतःपरम् ॥
"दूर्वापत्रं ततः श्रेष्ठं ततोऽपि कुशपत्रकम् । बिल्वपत्रं तथा विष्णोस्तुलसीपत्रमुत्तमम् ॥
"एतेषां तु यथालाभं पत्रैर्यश्चार्चयेद्धरिम् । सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥
"कृष्णमस्तकविन्यस्ता तुलसीपत्रमञ्जरी । सुवर्णकोटिपुष्पाणां पुण्यं यच्छत्यहर्निशम् ॥

**तुलसीरोपणमंत्रः ।**

"महाप्रसादजननी सर्वसौभाग्यवर्धिनी । आधिव्याधिहरा नित्यं तुलसी त्वं नमोऽस्तु ते" ॥

अथ **तुलसीग्रहणम् ।**

"वैधृतौ च व्यतीपाते भौमभार्गवभानुषु । पर्वद्वये च संक्रान्तौ द्वादश्यां सूतकद्वये ॥
"तुलसीं ये विचिन्वंति ते छिन्दन्ति हरेः शिरः" ।

**विष्णुधर्मे !**

"न छिंद्यात्तुलसीं विप्रो द्वादश्यां वैष्णवः क्वचित् । देवार्थे तुलसीछेदो होमार्थे समिधस्तथा ॥
"इन्दुक्षये न दुष्येत गवार्थे तु तृणस्य च" ।

**ग्रहणमंत्रः । पाद्मे ।**

"तुलस्यमृतजन्माऽसि सदा त्वं केशवप्रिये । केशवार्थे विचिन्वामि वरदा भव शोभने" ॥ इति ।
"सामित्पुष्पकुशादीनां द्वितीयः प्रहरो मतः । द्रोणपुष्पे तथैकस्मिन्साधकाय निवेदिते ।
"दश दत्वा सुवर्णस्य तत्फलं लभते नरः" ।
"अगस्तिकुसुमैर्देवं योऽर्चयेच्च जनार्दनम् । दर्शनात्तस्य देवर्षेर्नरकान्कोऽनुयास्यति ॥
"द्रोणपुष्पं खादिरं च शमी बकुलबिल्वकौ । नन्द्यावर्त्तं करवीरं तथा श्वेतं च किंशुकम् ॥
"कुशपुष्पं तमालं च चम्पकाशोककेतकी । त्रिसन्ध्यं मालतीपुष्पं त्रिसन्ध्यं श्वेतजातया ॥
"कुन्दं च शतपुष्पा च मल्लिका जातिपुष्पकम् । पूर्वपूर्वसहस्रेभ्योऽधिकं स्यादुत्तरोत्तरम् ॥
"जातीपुष्पसहस्रेण यच्छेन्मालां सुशोभनाम् । विष्णवे विधिवद्भक्त्या तस्य पुण्यफलं शृणु ॥
"कल्पकोटिसहस्राणि कल्पकोटिशतानि च । वसेद्विष्णुपुरं श्रीमान् विष्णुतुल्यपराक्रमः ॥
"मञ्जरीसहकारस्य केशवोपरि नारद । यच्छंति ते महात्मानो गोकोटिफलभागिनः ॥
"पुरंध्रिपुष्पं यो दद्यादेवमप्यथ पंडितः । तिलपात्रप्रदानस्य फलमाप्नोत्यसंशयम्" ॥
पुरंध्रिः पंगुरिति पूर्वदेशे प्रसिद्धाः ।

इति पुष्पाध्यायः ।

**हरीति** तदुक्तं **कौर्मे** ।

"ब्रह्माणं शङ्करं सूर्यं तथैव मधुसूदनम् । अन्यांश्चापि मतान्देवान्भक्त्या त्वक्रोधनो नरः ॥
"स्वैर्मंत्रैरर्चयेन्नित्यं पत्रैः पुष्पैस्तथाऽम्बुभिः" ॥ इति ।

**स्कान्दे** तु ।

"ब्रह्मा कृतयुगे देवस्त्रेतायां भगवान्हरिः । द्वापरे भगवान् विष्णुः कलौ देवो महेश्वरः" ॥

इत्युक्तम् । प्रभृतिपदेन सूर्यादयः । तत्र नियामकमाह । **यथेति** । द्विजानां मुख्यपक्षमाह । **ऋगिति** । शूद्रसाधारणगौणपक्षमाह । **स्वेति** ॥ १०० ॥

## याज्ञवल्कीये १०१ श्लोकः

ब्रह्मयज्ञमाह । **वेदाथर्वेति** । ब्राह्मणवसिष्ठन्यायेनाथर्वणः पृथगुक्तिः । अङ्गादिसंग्रहायाह । **आदीनिति** । असंभवे आह । **व्यस्तानि वेति** । एकदेशाध्यायिना पुरुषसूक्तादिपाठेन सावित्रीमात्रवता प्रणवेन स कार्य इत्युक्तं **गुरुचरणैः** । **विद्यां** ब्रह्मविद्याम् । अस्याः समुच्चयः ।

तत्रादौ **ब्रह्मयज्ञस्य काल**माह **बृहस्पतिः** ।

"प्रातश्चेत्सङ्गवादूर्ध्वमन्ते वा नित्यकर्मणाम् । अथवा वैश्वदेवान्ते ब्रह्मयज्ञस्त्रिधा स्मृतः" ॥

इदं शाखान्तरविषयम् । **आश्वलायनतैत्तिरीयाणां** कालमाहतुः **शाकलशौनकौ** ।

"आवर्तनेऽवगाह्यापः कुशपाणिस्तु बह्वृचः । ब्रह्मयज्ञं प्रकुर्वीत सन्ध्यां मध्याह्निकीं ततः ॥
"स्नानं कृत्वा तु मध्याह्ने द्विजाः सन्ध्यामुपासते । ब्रह्मयज्ञं ततः कुर्यात्तर्पणं तैत्तिरीयकाः" ॥

**वसिष्ठः** ।

"कृत्वाऽऽदौ तर्पणं सन्ध्यां कुर्याद्बह्वृच एव हि । आवर्तनात्परं सन्ध्यां कृत्वा कुर्याच्च तर्पणम्" ॥

आवर्तनं मध्याह्नः । **आश्वलायनस्मृतौ** ।

"मध्याह्ने ब्रह्मयज्ञश्च नानुबन्धवशाद्भवेत् । प्रातरौपासनादूर्ध्वं यावदस्तमयावधि ॥
"नैत्यकं तर्पणं कुर्याद्ब्रह्मयज्ञपुरःसरम् । वैश्वदेवं तथा श्राद्धं ब्रह्मयज्ञं च सूतके ॥
"न कुर्यात्स्वयमन्यैश्च कारयेन्न च सर्वथा । दिवोदितानि कर्माणि प्रमादादकृतानि वै ॥
"शर्वर्याः प्रथमे यामे तानि कुर्याद्यथाक्रमम् । विना सौरं चावगाहं ब्रह्मयज्ञं च तर्पणम्" ॥

केचिद्रात्रावपि ब्रह्मयज्ञं तर्पणं चेच्छन्ति तत् "यामे मनसा स्वाध्यायमधीयीत दिवानक्तं चेति" **आपस्तम्ब**विषयम् ।

तथा च **स्मृतिः** ।

"आचार्याः केचिदिच्छन्ति रात्रावपि हि तर्पणम् । तद्यजुः शाखिनामेव नान्येषां तु विधीयते" ॥

ततः प्रागग्रेषु दर्भेषु प्राङ्मुख उपविश्योपस्थं कृत्वा सव्यं पाणिं प्रागङ्गुलिमुत्तानं निधाय तस्मिन्पवित्रे प्रागग्रे दर्भे निधाय दक्षिणं न्यञ्चं प्रागङ्गुलं तेन संदध्यात् ।

तदाह **कारिकाकारः** ।

"दर्भान् बहून् शुचौ देशे प्रागग्रानास्तृणात्यथ । दर्भेषूपविशेत्कर्मण्यत्र प्राङ्मुख एव सन् ॥
"कृत्वोपस्थं करे सव्ये उत्ताने प्राग्दिगङ्गुलौ" ।

**शाकलः** ।

"वामं संपादयेज्जाप्यं दक्षिणं स्यात्समुन्नतम् । पादे वामे न्यसेत्पादं दक्षिणं स्यादुपस्थकम्" ॥

**आश्वलायनः** ।

"सव्यस्य पाणेरङ्गुष्ठप्रदेशिन्योस्तु मध्यगाः । दक्षिणाङ्गुलयः स्थाप्याश्चतस्रोऽङ्गुष्ठवर्जिताः ॥
"तथा सव्यकराङ्गुष्ठं दक्षिणाङ्गुष्ठवेष्टितम् । संम्बन्धमेके कुर्वीत न्यसेद्दक्षिणसक्थिनि" ॥

**कारिका** ।

"पवित्रं स्थापयेदुक्ते प्रागग्रे दक्षिणेन तु । न्यञ्चप्रागङ्गुलं तेन संदध्याद्दक्षिणं करम्" ॥

ततो द्यावापृथिव्योरनिरीक्षमाणः सम्मीलिताक्षो वा सूक्ताद्यन्यतमं यद्ध्येयं तदभिसंधाय ॐकारं व्याहृतीश्च सकृदुच्चार्य गायत्रीं पच्छोऽर्धर्चशो सर्वां च त्रिर्जपेत् ।

तदुक्तं **कारिकायां** ।

"ऊर्ध्वं तिर्यगधस्ताच्चानीक्षते यदि वाऽक्षिणी । संमील्याग्रेण चात्मानं समाहितमना भवेत् ॥
"सूक्तादन्यतमं पूर्वमभिसंधाय शक्तितः । ॐ पूर्वा व्याहृतीरितस्रः समस्तास्तु सकृद्वदेत् ॥
"पच्छस्त्वर्धर्चशः सर्वां सावित्रीं त्रिर्वदेदथ" ।

ततः पूर्वाभिसंहितं यथाशक्त्यधीयीत । तदाह **शौनकः** ।

"ततो यावत्प्रतिज्ञातमध्यायं सूक्तमेव वा । ऋचं वाऽप्यंततोऽवश्यमधीयीत स्वशक्तितः" ॥ इति ।

**संग्रहे** ।

"न च स्मरेदृषिः छंदः श्राद्धे वैतानिके मखे । ब्रह्मयज्ञे च वै तद्वत्तथोङ्कारं तु नोच्चरेत्" ॥

**वृद्धवसिष्ठः** ।

"सर्वत्र ॐकारमुच्चार्य श्राद्धमन्त्रेषु नोच्चरेत् । आर्षच्छन्दांसि वै तद्वद्यज्ञे तर्पणकर्मणि" ॥

उपविश्य ब्रह्मयज्ञं कर्तुमशक्तस्तु किञ्चिदङ्गुलितोयेन यथाशक्ति कुर्यादित्याशयेनाह **गृह्यकारः** ।

"स यदि तिष्ठन् व्रजन्नासीनः शयानो वा यं यं क्रतुमधीते तेन तेनेहास्य कतुनेष्टं भवतीति विज्ञायते तस्यैतस्य द्वावनध्यायौ यदात्माऽशुचिर्देशः" इति ।

अनध्यायान्तरेषु अल्पं पठनीयम्। तदाह **आपस्तम्बः**। ( ध. सू. १।१२।५ )

"अथ यदि वातो वायात्स्तनयेद्वा विद्योतेत वाऽवस्फूर्जेद्वैकां चर्चमेकं वा यजुरेकं वा सामानि व्याहरेद्भूर्भुवः स्वः सत्यं तपः श्रद्धायां जुहोमीति वैतत्तेनोहैवास्यैतदहः स्वाध्यायमुपात्तो भवति नमो ब्रह्मण इति च त्रिः पठेत्"।

तथा च **श्रुतिः**।

"नमो ब्रह्मण इति परिधानीयां त्रिरन्वाहेति"।

**अथ तर्पणम्।**

"अपां समीपमागत्य तर्पयेदथ देवताः। अन्वारब्धेन सव्येन दक्षिणेन तु पाणिना"॥

**याज्ञवल्क्यः**।

"सवर्णेभ्यो जलं देयं नासवर्णेभ्य एव च। नामगोत्रस्वधाकारैः प्रत्यहं तर्पयेत्सुधीः॥

"देवतानां पितॄणां च जले दद्याज्जलाञ्जलिम्। असंस्कृतप्रमीतानां स्थले दद्याज्जलाञ्जलिम्"॥

**स्मृत्यर्थसारे**।

"पवित्रं कौशिकं ताम्रं राजतं हैममेव च। धारयेद्दक्षिणे पाणौ पवित्रं चोत्तरात्रयम्"॥

**याज्ञवल्क्यः**।

"तिलदर्भयुतं तोयं स्वधया यत्र दीयते। तत्तोयममृतं भूत्वा पितॄणां दत्तमक्षयम्॥

"भूमौ यस्तर्पणं कुर्याल्लोहे कांस्ये च मृन्मये। तर्जन्यङ्गुष्ठयोगे च स पुत्रः पितृघातकः॥

"स्थले वाऽपि शुचौ देशे कुशास्तीर्णे च भाजने। ताम्रादिके च वर्णे वा तर्पयेत्सलिलैर्जलैः॥

"पाणिनैकगुणं प्रोक्तं दर्भैः शतगुणं भवेत्। अक्षय्यं खड्गपात्रेण पितॄणां तर्पणं भवेत्॥

"तृप्यंते येन तीर्थेन गृह्णीयात्तेन वै जलम्। अन्यथा कुरुते यस्तु नरके वै प्रपद्यते।

"व्यतीपाते च संक्रान्तौ युगमन्वन्तरादिषु। तर्पयित्वा पितॄन्पश्चाच्छ्राद्धं कुर्यात्प्रयत्नतः"॥

श्राद्धाङ्गतर्पणमित्यर्थः। **गर्गः**।

"पूर्वं तिलोदकं दत्वा अमाश्राद्धं तु कारयेत्। प्रत्यब्देन भवेत्पूर्वं परेऽहनि तिलोदकम्"॥

**अयमर्थः**। अमा अमावास्या तन्निमित्तकश्राद्धे पूर्वं तिलमिश्रितोदकैस्तर्पणं कृत्वा पश्चात्तन्निमित्तकं श्राद्धाङ्गमित्यर्थः। नित्यतर्पणं तु श्राद्धानन्तरमेवेति।

केचित्त्वत्र श्राद्धाङ्गतर्पणस्य पूर्वं विहितत्वाद्ब्रह्मयज्ञोत्तरं नित्यतर्पणेनैव श्राद्धाङ्गतर्पणस्य प्रसङ्गसिद्धिरित्याहुः। आब्दिकश्राद्धे तु न तद्दिने नैत्यिकं तिलतर्पणं कार्यम्।

"नैव श्राद्धदिने कुर्यात्तिलैस्तु पितृतर्पणम्" इति **संग्रह**वचनात्।

परं तु श्राद्धोत्तरं वैश्वदेवो ब्रह्मयज्ञस्तिलमिश्रितजलैस्तर्पणं चानुष्ठेयम्।

प्रक

ष्टं चेदम् **आश्वलायनस्मृतावष्टोदशे**ऽध्याये ।

स्प

"पितृयज्ञमकृत्वा तु पित्रोश्चैवाब्दिके यदि । यज्ञान्यः कुरुते पश्च स याति नरकं ध्रुवम् ॥
"कुरुते ब्रह्मयज्ञं च श्राद्धात्पूर्वं मृतेऽहनि । निराशाः पितरस्तस्य श्राद्धान्नं न लभन्ति ते ॥
"तर्पणं कुरुते पित्रोः श्राद्धात्पूर्वं मृतेऽहनि । निराशाः पितरस्तस्य स च गच्छेदधोगतिम् ॥
"कर्तव्याः पञ्चयज्ञाश्च निवृत्ते श्राद्धकर्मणि । पित्रोराब्दिक एवाहुराचार्याः शौनकादयः" ॥

अत्राब्दिकपदं प्रत्याब्दिकपरम् । पञ्चयज्ञाश्चेत्यत्र चकाराद्ब्रह्मयज्ञस्तर्पणं च । श्राद्धानन्तरं कर्तव्यमिति सिद्धम् ।

**आश्वलायनस्मृतौ** द्वितीयाध्याये

"न कुर्याद्ब्रह्मयज्ञं च श्राद्धात्पूर्वं मृतेऽहनि । पित्रोः श्राद्धं विधायाथ वैश्वदेवं च तर्पणम् ॥

"ब्रह्मयज्ञं च वै कुर्यात्सन्ध्यां मध्यं दिनस्य च । उपस्थानं च सूर्यस्य पूर्वोक्तमिह तद्भवेत्" ॥ इति । तिलरहितमिति शेषः । **हारीतः ।**

"पित्रोः प्रत्याब्दिके प्राप्ते तर्पणं तु कथं भवेत् । जलेनैव प्रकुर्वीत निवृत्ते पितृकर्मणि ॥

"श्राद्धं तु कृत्वा विधिवद्वैश्वदेवादिकं ततः । ब्रह्मयज्ञं ततः कुर्यात्तर्पणं तु तिलैर्विना" ॥

यत्तु **संग्रह**नाम्ना पठन्ति ।

"पित्रोः क्षयाहे संप्राप्ते यः कुर्यात्तिलतर्पणम् । आसुरं तद्भवेच्छ्राद्धं तत्तोयं रुधिरं भवेत् ॥
"सर्वदा तर्पणं कुर्यात् ब्रह्मयज्ञपुरःसरम् । मृताहे नैव कर्तव्यं कृतं चेन्निष्फलं भवेत्" ॥ इति ।

यच्च "आब्दिके न परं पूर्वं परेऽहनि तिलोदकम्" । इति तच्छ्राद्धात्पूर्वं सतिलविषयं च । उक्तस्मृत्यनुरोधात् । परेऽहनि तु तिलोदकैस्तर्पणमनुष्ठेयमेव ।

**गर्गः ।**

"यस्तर्पयति तान्विप्रः श्राद्धं कृत्वा परेऽहनि । पितरस्तेन तृप्यन्ति न चेत्कुप्यन्ति वै भृशम्" ॥ **बृहन्नारदीये ।** आब्दिकश्राद्धमुपक्रम्य

"परेद्युः श्राद्धकृन्मर्त्यो यो न तर्पयते पितॄन् । तस्य ते पितरः क्रुद्धाः शापं दत्वा व्रजन्ति हि" ॥ इति ।

इदं च श्राद्धाङ्गतर्पणं भिन्नमेव ज्ञेयम् । न तु नित्य तर्पणस्यैव परेऽहन्युत्कर्ष इति । प्रत्यब्दाङ्गतिलं दद्यादिति **संग्रह**वचनेऽङ्गग्रहणात् । पक्षश्राद्धे महालयापरपक्षनैमित्तिकश्राद्धे ।

"सकृन्महालये श्वः स्यादष्टकास्वन्त एव हि" ॥ इति । **गर्ग**वाक्यात्परेऽहन्येव ।

"पक्षश्राद्धं तु निर्वर्त्य तर्पणं तु दिने दिने । दर्शे तिलोदकं पूर्वं पश्चाद्दद्यान्महालये" ॥

**कपिलः ।**

"अर्द्धोदये गजच्छाये षष्ठ्यां चैव महालये । भरण्यां च मघाश्राद्धे पिण्डान्ते तर्पणं भवेत्" ॥ इति षष्ठ्यां कपिलाषष्ठ्याम् । पिण्डान्ते श्राद्धसमाप्तावित्यर्थः ।

यदाकदाचित्कर्तव्ये हिरण्यश्राद्धे च श्राद्धीयब्राह्मणविसर्जनानन्तरं तिलमिश्रितोदकैस्तर्पण मनुष्ठेयमिति ।

"पक्षश्राद्धे हिरण्ये च पश्चाद्दद्यात्तिलोदकम्" । इति **संग्रह**वचनात् । **मनुः ।**

"श्राद्धाङ्गतर्पणं कुर्यात्सतिलं त्वपरेऽहनि । पित्रोर्विषय एव स्यान्नान्यस्य विषयो भवेत्" ॥

एतेन कारुण्याद्भ्रातृपितृव्याद्याब्दिकश्राद्धे नित्यतर्पणं कृत्वैव तत् कर्तव्यम् । अङ्गतर्पणं तु तदनन्तरमेव न परेऽहनीति ध्वनितम् ।

"जीवमानः पिता यस्य माता यदि विपद्यते । मातुः श्राद्धं सुतः कुर्यान्न कुर्यात्तिलतर्पणम्"॥
"तिलतर्पणं तु यः कुर्यान्मातुरुद्दिश्य वै पुनः । तत्तोयं शोणितं दद्यादित्येवं मनुरब्रवीत्" ॥

**संग्रहे ।**

"तीर्थश्राद्धे गयाश्राद्धे प्रत्यब्दे च महालये । परेऽहनि द्विजः कुर्यात्तर्पणं तिलसंयुतम्" ॥
एतेन तीर्थश्राद्धे विशेषाभावाद्दर्शवत्तर्पण ज्ञेयमिति परास्तम् ।

**तिलतर्पणरहितश्राद्धान्युच्यन्ते ।**

तत्र **बृहन्नारदीये ।**

"वृद्धिश्राद्धे सपिण्डे च प्रेतश्राद्धे च मासिके । सांवत्सरविमोके च न कुर्यात्तिलतर्पणम्" ॥

श्राद्धाङ्गमित्यर्थः । कैश्चित्सांवत्सरिकश्राद्धोत्तरदिनेऽनुष्ठीयमानं संवत्सरविमोकनामकं श्राद्धमभिधीयते । अत्र पूर्ववचनैकवाक्यतया "उपरागे पितुः श्राद्धे" इति वक्ष्यमाणवचनैकवाक्यतया चैवं पर्यवसन्नम् । यत् क्षयाहे तिलतर्पणं निषिद्धं तत् द्वितीयदिने निषिद्धयोगेऽप्यनुष्ठेयमेवेति ।

**गर्गः ।**

"कृष्णे भाद्रपदे मासि श्राद्धं प्रतिदिनं भवेत् । पितॄणां प्रत्यहं कार्यं निषिद्धाहेऽपि तर्पणम् ॥
"उपरागे पितुः श्राद्धे पातेऽमायां च संक्रमे । निषिद्धेऽपि हि सर्वत्र तिलैस्तर्पणमाचरेत्" ॥ इति ।

यत्तूक्तम् । अमापदं सकलश्राद्धदिनोपलक्षणमिति तन्न । पितुः श्राद्धे इत्यस्य वैयर्थ्यप्रसङ्गात् पूर्ववचनेन तद्दिने तिलतर्पणस्यानिषिद्धत्वाच्च । उपरागपातसंक्रमाणां पृथक् कथनवैयर्थ्यप्रसङ्गात् तन्मते अमापदस्यैव सकलतदुपलक्षत्वस्य वक्तुं शक्यत्वात् । पातपदस्य वैधृत्युपलक्षत्वमपि साहसम् लक्षणायां प्रमाणाभावात् ।

**संग्रहे ।**

"प्रेतपक्षे व्यतीपाते संक्रान्तौ तिथिपर्वसु । निषिद्धेऽपि तिथौ वारे कर्तव्यं तिल

"उपरागे व्यतीपाते गङ्गायामथ पर्वणि । आदित्यादिनिषेधेऽपि कर्तव्यं तिलतर्पणम्" ॥
"नद्यां तीर्थविशेषेषु प्रेतकार्ये तथैव च । निषिद्धेऽपि दिने कुर्यात्पिण्डदानं तिलोदकम् ॥
"प्रेतपक्षेऽपि गङ्गायामुपरागे तथैव च । कृतोद्वाहोऽपि कुर्वीत तर्पणं तिलसंयुतम्" ॥

**पृथ्वीचंद्रोदये ।**

"तिथितीर्थविशेषे च गङ्गायां प्रेतपक्षके । निषिद्धेऽपि दिने कुर्यात्तर्पणं तिलमिश्रितम्" ॥

**स्मृत्यर्थसारेऽपि ।**

"तिथितीर्थविशेषेषु प्रेतकार्ये च सर्वदा । पुण्यकालनिमित्तं यत्तर्पणं क्रियते यदि ।
"पितॄणां केवलं तद्धि प्रवदन्ति महर्षयः । निमित्तं चोपरागादे रात्रावपि तथैव हि ॥
"तीर्थान्तरेऽपि तद्वत्स्यादेकाहेऽप्यसकृद्भवेत्" ॥ इति ।

**हारीतः ।**

"ततः परेऽह्नि कुर्वीत तर्पणं पुरुषः सुधीः । तच्छेषैस्तिलदर्भैश्च प्रातः स्नात्वाऽमृतैर्जलैः ॥
"श्राद्धं कृत्वा तु पूर्वेद्युः प्रातः स्नायात्परेऽहनि । तर्पयेत्पितॄंस्त्रीनादौ पश्चात्संध्यादिकाः क्रियाः"॥
इति **प्राञ्चः । परे तु** श्राद्धाङ्गतर्पणं तु सन्ध्यावन्दनं कृत्वैव कार्यम् ।

"सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु । यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत्" ॥

इति **दक्ष**वचनात् । 'तर्पयेत्पितॄंस्त्रीनादाविति' दर्शित**हारीत**वचने स्नानाङ्गतर्पणं त्रीनुद्दिश्य कृत्वा पश्चात्संध्यां कुर्यात् ततोऽङ्गतर्पणमित्यर्थ इति वदन्ति ।

**श्राद्धांङ्गतर्पणविधिः । प्रयोगपारिजातोदाहृते संग्रहे**

"स्नात्वा तीरं समागत्य उपविश्य कुशासने । सन्तर्पयेत्पितॄंस्त्रींश्च स्नात्वा वस्त्रं च धारयेत्" ॥
स्नानाङ्गतर्पणोत्तरं नित्यस्नानं कृत्वेत्यर्थः ।

"अपसव्यं ततः कृत्वा सव्यं जान्वाच्य भूतले । नामगोत्रस्वधाकारैर्द्वितीयान्तेन तर्पयेत्" ॥

अत्र वस्वादिरूपतोक्ता **स्मृत्यर्थसारे ।**

"वसुरुद्रादितिसुतान् श्राद्धे वै तर्पयेत्पितॄन्" ।

तच्च बह्वृचानां दक्षिणेनैव । "अनादेशे दक्षिणं प्रतीयादिति" सूत्रात् ।

"उभाभ्यामपि हस्ताभ्यामुदकं यः प्रयच्छति । स मूढो नरकं याति कालसूत्रमवाक्शिरः" ॥
इति **व्याघ्रपाद**वचनाच्च ।

यदुक्तं **कार्ष्णाजिनिना ।**

"श्राद्धे विवाहकाले च पाणिनैकेन दीयते । तर्पणे तूभयेनैव ह्यन्यत्र विधिरीरितः" ॥

**संग्रहे ।**

"एकहस्तेन तोयेन न कुर्यात्तिलतर्पणम् । पितरो न प्रशंसन्ति न प्रशंसन्ति च देवताः" ॥

इदं नित्यतर्पणविषयम् । **आश्वलायनः** ।

"श्राद्धाङ्गतर्पणं यामे प्रथमे मधुवद्भवेत् । पयोनीरं च रुधिरं क्रमाद्यामेषु च त्रिषु" ॥

**हारीतः** ।

"तर्पणं त्वमृतं प्रातर्द्वितीये प्रहरे पयः । तृतीये जलमित्याहुश्चतुर्थे रुधिरं भवेत् " ॥ इति ॥

श्राद्धाङ्गतर्पणमित्यर्थः । अत्रेदं प्रतिभाति । सकृन्महालये चिकीर्षिते तु क्षयाह्नेव श्राद्धं कर्तव्यम् ।

तदुक्तं **हेमाद्रौ नागरखण्डे** ।

"आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे । यो वै श्राद्धं नरः कुर्यादेकस्मिन्नपि वासरे ॥
"अशक्तः पक्षमध्ये तु करोत्येकदिने यदि । या तिथिर्यस्य मासस्य मृताहे तु प्रवर्तते ॥
"सा तिथिः पितृपक्षेऽपि पूजनीया प्रयत्नतः । तिथिच्छेदो न कर्तव्यो विना शौचं यदृच्छया"॥

**स्मृत्यन्तरे** ।

"मृताहनि पितुर्यो वै श्राद्धं दास्यति मानवः । तस्य संवत्सरं यावत् तृप्ताः स्युः पितरो ध्रुवम्"॥

इत्यादिवचनात्तद्दिने एव श्राद्धे प्राप्ते तत्र नैत्यिकतिलतर्पणस्य श्राद्धात्पूर्वं निषिद्धत्वेनात्रापि निषेधोऽर्थसमाजग्रस्तः ।

"नैव श्राद्धदिने कुर्यात्तिलैस्तु पितृतर्पणम्" इति **संग्रह**वचनाच्च ।

तस्माच्छ्राद्धोत्तरं तिलरहितं नैत्यिकं तर्पणं तद्वत्सिद्धम् । विशेषानुपलम्भात् । श्राद्धाङ्गं तिलतर्पणं तु परेऽहनीत्युभयत्र समानत्वेनोक्तत्वाच्च ।

यदा तु "तातस्य कृष्णपक्षे तु श्राद्धं कुर्याद्दिने दिने । " इति **ब्रह्माण्डपुराणो**क्तपक्षाङ्गीकारस्तदा तु पूर्वलिखितवचनाच्छ्राद्धान्ते प्रत्यहं तिलतर्पणं कार्यम् । तेनैव तद्दिने नैत्यिकतिलतर्पणस्यापि प्रसङ्गसिद्धिरिति सिद्धम् । नित्यतर्पणविषये विषयान्तरं **संग्रहे** ।

"नन्दायां भार्गवदिने कृत्तिकासु मघासु च । भरण्यां भानुवारे च गजच्छायाह्वये तथा ॥
"अयनद्वितये चैव मन्वादिषु युगादिषु । पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् " ॥

**वृद्धमनुः** । **बौधायनश्च** ।

"सप्तम्यां भानुवारे च मातापित्रोः क्षयेऽहनि । तिलैर्यस्तर्पणं कुर्यात्स भवेत्पितृघातकः ॥
"भानौ भौमे त्रयोदश्यां नन्दाभृगुमघासु च । पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् " ॥

**मरीचिः ।**

"सप्तम्यां रविवारे च गृहे जन्मदिने तथा । भृत्यपुत्रकलत्रार्थी न कुर्यात्तिलतर्पणम् " ॥

**बौधायनः ।**

"सप्तम्यां रविवारे च जन्मर्क्षदिवसेषु च । गृहे निषिद्धं सतिलं तर्पणं तद्बहिर्भवेत् " ॥

**वृद्धमनुः संग्रहे च ।**

"विवाहे चोपनयने चौले सति यथाक्रमम् । वर्षमर्धं तदर्धं च न कुर्यात्तिलतर्पणम् " ॥

"संस्कारेषु तथाऽन्येषु मासं मासार्धमेव च । वृद्धावनन्तरे चैवं यावन्मासः समाप्यते " ॥

"तावत्पिण्डनिवृत्तिः स्यान्न कुर्यात्तिलतर्पणम् " ॥

"अर्के शुक्रे त्रयोदश्यां मघायां निशिसन्ध्ययोः । गृहे मृताहे जन्मर्क्षे न कुर्यात्तिलतर्पणम् " ॥

**स्मृत्यन्तरे ।**

"यावन्मासः समाप्येत तावत्पिण्डांश्च वर्जयेत् । वृद्धावनन्तरं प्राज्ञस्तथैव तिलतर्पणम् " ॥ इति ।

**स्मृत्यर्थसारे च** । विवाहे इत्याद्युक्त्वा

"वृद्धौ सत्यां च तन्मासि नेत्याहुस्तिलतर्पणम् " । इति ॥

अयं तीर्थे नास्ति तीर्थे इत्यादिवचनात् ।

स्नानाङ्गतर्पणे तु न तिलानां निषेधः । यदाह **वृद्धमनुः ।**

"संक्रान्त्यादिनिमित्तेषु स्नानाङ्गे तर्पणे तथा । तिथिवारर्क्षदोषेऽपि तिलैस्तर्पणमाचरेत् " ॥ इति ।

इदं च **दीक्षितै**राह्निके प्रतिप्रसवत्वेन लिखितम् । **कात्यायनोऽपि** प्रतिप्रसवमाह ।

"उपरागे पितुः श्राद्धे पातेऽमायां च संक्रमे । निषेधेऽपि हि सर्वत्र तिलैस्तर्पणमाचरेत् " ॥ इति ॥

अत्र पातो वैधृतेरप्युपलक्षणम् । पितृग्रहणं पितृव्यादेरपि । संक्रान्तिग्रहणं त्वयनद्वयव्यतिरिक्तसंक्रान्तिपरमिति **पारिजाते** स्थितम् ।

तिलाभावे **गोभिलः ।**

"तिलाभावे निषिद्धाहे सुवर्णरजतान्वितम् । तदभावे निषिञ्चेत्तु दर्भैर्मन्त्रेण वा पुनः" ॥

**स्मृत्यन्तरे** । "तिलाभावे राजतेन खड्गहेमकुशैरपि" ।

**गोभिलः** । स्थले स्थित्वा जलेऽञ्जलिप्रक्षेपो न कार्यः यदाह ।

"स्थले स्थित्वा जले यस्तु प्रक्षिपेदुदकाञ्जलिम् । नोपतिष्ठति तद्वारि पितॄणां तन्निरर्थकम्" ॥ इति ।

तिलानां वर्णविशेषात्तृप्तिमाह **गोभिलः ।**

"**शुक्लै**स्तु तर्पयेद्देवान्मनुष्याञ्छबलैस्तिलैः" । मनुष्यान्सनकादीन्सप्त ।

"**पितॄं**स्तु तर्पयेत्कृष्णैस्तर्पयेत्सर्वतो द्विजान्" इति ॥ सर्वतः श्वेतकपिलकृष्णैः सर्वैरपि **यथालाभमर्जितैः** । **द्विजान्ब्राह्मणान्** ।

**मरीचिः ।**

"मुक्तहस्तेन दातव्यं मुद्रं तत्र न दर्शयेत् । वामहस्ते तिला ग्राह्या मुक्तहस्तस्तु दक्षिणम् " इति॥ मुद्रा तर्जन्यंगुष्ठयोगः ।

वामहस्ते तिलग्रहणे स्थानविशेष उक्तः **संग्रहे ।**

"हस्तमूले तिलान्क्षिप्त्वा यः कुर्यात्तिलतर्पणम् । तज्जलं रुधिरं ज्ञेयं ते तिलाः कृमिसंज्ञिताः"॥ इति।

मूलातिरिक्तेऽपि वामकरे अलोमकस्थाने एव तिला निक्षेप्या इत्यर्थः । तद्यतिरेकं दोषदर्शनेन दर्शयति **गोभिलः ॥**

"लोमसंस्थांस्तिलान्कृत्वा यस्तु तर्पयते पितॄन् । पितरस्तर्पितास्तेन रुधिरेण मलेन च " ॥

एतत्सर्वमनुद्धृतजलेन तर्पणमभिप्रेत्य क्वचित्पात्रे जलमुद्धृत्य तज्जलेन तर्पणकरणे तु तत्पात्रे एव तिलाः प्रक्षेप्याः । **तदुक्तं योगीश्वरेण**

"यदुद्धृतं निषिञ्चेत्तु तिलान् संमिश्रयेज्जले । अतोऽन्यथा तु सव्येन तिला ग्राह्या विचक्षणैः"॥इति । प्रसङ्गात्तर्पणविषये किंचिदुच्यते । **स्मृतिभास्करे ।**

"कुशाग्रैस्तर्पयेद्देवान्मनुष्यान्कुशमध्यतः । द्विगुणीकृत्य मूलाग्रैः पितॄन्संतर्पयेद्द्विजः ॥

"धातुनैवाथ परस्मै पदेन वचनं यथा ।

"सिञ्चेत्प्रजापतिस्तृप्यत्वित्यपो देवतीर्थतः । प्रतिमन्त्रं निवीतीति तर्पयेदृषितीर्थतः ॥

"ऋषीन् द्वादश संतर्प्य सनकादींश्च सप्त वै । प्राचीनावीत्यथेदानीं तर्पयेत्पितृतीर्थतः" ॥

**आश्वलायनः ।**

"सव्येन तर्पयेद्देवान् ऋषींश्चैव निवीतिना । पितॄंश्चैवापसव्येन विधिरेष उदाहृतः" ॥

अञ्जलिसंख्योक्ता **व्यासेन ।**

"एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः । अर्हन्ति पितरस्त्रींस्त्रींस्त्रिय एकैकमञ्जलिम्" ॥ इति।

**स्मृतिरत्नावल्याम् ।**

"मातृमुख्यास्तु यास्तिस्रस्तासां दद्याज्जलाञ्जलीन् । त्रीन्त्रींस्तु दद्यादन्यासां स्त्रीणामेकैकमञ्जलिम्" ॥ इति

**स्मृत्यन्तरे ।**

"मातुस्त्रीनञ्जलीन् दद्यादन्यासामेकमञ्जलिम् । सपत्न्या चार्यपत्नीनां द्वौ द्वौ दद्याञ्जलाञ्जलीन्"॥ इति ।

**संग्रहे ।**

"संबन्धमनुकीर्त्यैव नामगोत्रमनन्तरम् । वस्वादिरूपं संकीर्त्य तर्पयेत्पितृपूर्वकम्" ॥ इति ।

तथा

"तृप्यत्विति समुच्चार्य तृप्यतामित्यथापि च । विधितः प्रक्षिपेत्तोयं देवादीनां विशेषतः" ॥

नामग्रहणे विशेषमाह **बौधायनः ।**

---

वृद्धमनुश्च ।

"शर्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य तु । गुप्तान्तं चैव वैश्यस्य दासान्तं शूद्रजन्मनः"॥इति।
तर्पणक्रमस्तु **आश्वलायनस्मृतौ** ।

"पित्रादयस्त्रयश्चादौ तिस्रो मात्रादयस्ततः । सापत्नजननी मातामहादयस्त्रयस्तथा ॥
"मातामह्यादयस्तिस्रः स्त्रीसुतभ्रातरस्तथा । पितृव्यो मातुलश्चैव दुहिता भगिनी तथा ॥
"दौहित्रो भागिनेयश्च पितुर्मातुश्च वै स्वसा । श्वशुरो गुरुरर्थी च मित्रश्चैवेति केचन॥
"पुत्रादयः सपत्नीका स्त्रियश्चैव हि केवलाः । तर्पणे विहितास्तीर्थे गयायां च महालये" ॥

**अथ यवाः** । तत्प्रशंसा **हेमाद्रौ** । "प्रजाकामः पुरा त्वष्टा तुष्टाव परमेष्ठिनाम्" । इत्यादिना वृत्रासुरसमुत्पत्तिं वर्णयित्वा तत्कृतं विश्वोपद्रवं चाभाष्य बृहस्पतिसहितैर्देवैस्तन्नाशं चोपवर्ण्य तस्माद्यवादिरूपमहौषधीनामुत्पत्तिं वर्णयित्वा

"आरण्यानामौषधीनां ग्राम्यानामप्ययं रसः । राज्ञः सोमस्य सारोऽयमाविर्भूतो यवात्मना ॥
"एते पवित्रमस्माकमेत एव परं हविः । एते पीयूषमधुराः सर्वदा प्रीणयन्तु नः ॥
"हविर्यज्ञाः प्रवर्तन्तामेतैरमृतभोजिनाम् । कर्मण्येते नियोज्यन्तां शान्तिके पौष्टिकेऽपि च ॥
"यत्किंचिद्देवदैवत्यं श्राद्धे यच्च प्रदीयते । तदेतन्मिश्रितैरेव सलिलैः संप्रदीयताम् ॥
"श्राद्धेषु वैश्वदेवानि यानि कर्माणि कानिचित् । एतैरेव विधीयन्तां तानि श्रोत्रियपुंगवैः ॥
"यवैरर्चा यवैर्दानं यवैरक्षा यवैर्हविः । वैश्वदेवे तु यत्र स्यात्तत्र तृप्तिस्तु शाश्वती" ॥
इत्युक्त्वा वैश्वदेविकश्राद्धे अत्यावश्यकत्वमुक्तम् ।

**अथ तिलाः** । तत्र **सत्यव्रतः** ।

"जर्तिलास्तु तिलाः प्रोक्ताः कृष्णभूमौ समुद्भवाः" ।

जर्तिललक्षणमुक्तं **तेनैव** । "जर्तिलास्तु तिलाः प्रोक्ता अकृष्टोत्पादितास्तु ये" ॥ इति ।

अत **एवापस्तम्बः** ।

"अटव्यां ये समुत्पन्ना अकृष्टफलिताश्च ये । ते वै श्राद्धे प्रशस्ताः स्युस्ते तिला न तिलास्तिलाः"॥ इति ।
तदलाभे क्षेत्रजा अपि । अत एवोक्तं **संग्रहे** ।

"अरण्यजास्तिला ग्राह्याः सयवाः पितृकर्मणि । अलाभे क्षेत्रजा ग्राह्याः" इति ।

प्रसङ्गा**त्तिलतर्पणे विशेषः** कथ्यते ।

"पूर्वं तिलोदकं दत्वा अमाश्राद्धं तु कारयेत् । प्रत्यब्दं न भवेत्पूर्वं परेऽहनि तिलोदकम् "॥
"पक्षश्राद्धे हिरण्ये च अनुव्रज्य तिलोदकम्" ॥ इति । **गर्गः** ।

तस्यायमर्थः०ः—अमा अमावास्या तन्निमित्तकश्राद्धे पूर्वं तिलमिश्रितोदकैस्तर्पणं कृत्वा पश्चात्तन्निमित्तकं श्राद्धमनुष्ठेयम् । अत्र श्राद्धाङ्गतर्पणस्य श्राद्धात्पूर्वं विहितत्वाद्ब्रह्मयज्ञोत्तरं नित्यतर्पणेनैव श्राद्धाङ्गतर्पणस्य प्रसङ्गसिद्धिरिति केचिदाहुः ।

**कपिलः ।**

"मन्वादिषु युगाद्यासु दर्शे संक्रमणेऽपि च । पौर्णमास्यां व्यतीपाते दद्यात्पूर्वं तिलोदकम्" ॥

श्राद्धाङ्गमित्यर्थः । नित्यतर्पणं तु श्राद्धानन्तरमेव । आब्दिकश्राद्धे तु न तद्दिने तिलतर्पणं कार्यमित्युक्तम् । इदं च श्राद्धाङ्गतर्पणभिन्नमेव ज्ञेयं न तु नित्यतर्पणस्यैव परेऽहन्युत्कर्ष इति ।

'प्रत्यब्दान्तं तिलं दद्यादिति' **संग्रह**वचनेऽङ्गग्रहणात् ।

एतच्च "यस्तर्पयति तान्विप्रः श्राद्धं कृत्वा परेऽहनि । पितरस्तेन तृप्यन्ति न चेत्कुप्यन्ति वै भृशम्"॥

इति **गर्गोक्तेः ।**

"परेद्युः श्राद्धकृन्मर्त्यो यो न तर्पयते पितॄन् । तस्य ते पितरः क्रुद्धाः शापं दत्वा व्रजन्ति हि" ॥

इति **बृहन्नारदीय**वचनाच्चावश्यकं " नैव श्राद्धदिने कुर्यात्तिलैस्तु पितृतर्पणमिति " **संग्रह**वचनाच्च किं तु तिलमिश्रितैरेव जलैः । परेऽहनि तु तिलोदकैस्तर्पणमनुष्ठेयमेव । पक्षश्राद्धे महालयापरपक्षनिमित्तिकश्राद्धे यदाकदाचिदपि कर्तव्ये हिरण्यश्राद्धे च श्राद्धीयब्राह्मणविसर्जनानन्तरं तिलमिश्रितोदकैस्तर्पणमनुष्ठेयम् ।

**तिलतर्पणरहितश्राद्धान्युच्यन्ते**

तत्र **बृहन्नारदीये ।**

"वृद्धिश्राद्धे सपिण्डे च प्रेतश्राद्धे तु मासिके । सांवत्सरविमोके च न कुर्यात्तिलतर्पणम्" ॥ इति ।

श्राद्धाङ्गमित्यर्थः । कैश्चित्सांवत्सरिकश्राद्धोत्तरदिनेऽनुष्ठीयमानं सांवत्सरविमोकनामकश्राद्धमभिधीयते । अत्र पूर्ववचनैकवाक्यतया 'उपरागे पितुः श्राद्धे' इति वक्ष्यमाणवचनैकवाक्यतया चैवं पर्यवसन्नं 'यत्क्षयाहे तिलतर्पणं निषिद्धं तत् द्वितीयदिने भानुवारादिनिषिद्धयोगेऽप्यनुष्ठेयमेवेति' सकृन्महालये तु परेद्युरेव ।

"सकृन्महालयश्चः स्यादष्टकास्वन्त एव हि" इति **गर्ग**वाक्यात् । तद्विधिः **संग्रहे ।**

"स्नात्वा तीरं समागत्य उपविश्य कुशासने । संतर्पयेत् पितॄन्सर्वान्स्नात्वा वस्त्रं च धारयेत् ॥

"अपसव्यं च वै कृत्वा सव्यं जान्वाच्य भूतले । नामगोत्रस्वधाकारैर्द्वितीयान्तेन तर्पयेत्" ॥ इति ।

तच्च स्नानोत्तरं सन्ध्यावन्दनं कृत्वैव कार्यम् ।

"सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु । यदन्यत्कुरुते कर्म न तस्य फलमाग्भवेत्" ॥

इति **दक्ष**वचनात् । तथा

" निष्पीडयति यः पूर्वं स्नानवस्त्रमतर्पणात् । निराशाः पितरो यान्ति शापं दत्वा सुदारुणम्"॥

**संग्रहे ।**

"एकहस्तेन तोयेन न कुर्यात्पितृतर्पणम् । पितरो न प्रशंसन्ति न प्रशंसन्ति देवताः" ॥ इति । इदं नित्यतर्पणविषयम् । यत्तु

"उभाभ्यामपि हस्ताभ्यामुदकं यः प्रयच्छति । स मूढो नरकं याति कालसूत्रमवाक्शिराः" ॥

इति **व्याघ्रपादवचनं** तच्छ्राद्धाहतर्पणपरम् । तदुक्तं **कार्ष्णाजिनिना**

"श्राद्धे विवाहकाले च पाणिनैकेन दीयते । तर्पणे तूभयेनैवान्यत्रेति विधिरीरितः" ॥ इति ।

**ब्रह्मयज्ञप्रयोगो लिख्यते ।**

तं प्रातर्होमानन्तरं कुर्यात् । तत्राकरणे मध्याह्नसन्ध्योत्तरं प्राक् तर्पणात्कुर्यात् । तत्रापि दैवादकरणे मनुष्ययज्ञान्तं वैश्वदेवं निर्वर्त्य कुर्यात् । ग्रामाद्बहिः प्राच्यामुदीच्यां प्रागुदीच्यां वा यावति दूरे गते गृहच्छर्याऽदिकं न दृश्यते तावद्दूरं गत्वा नद्यादितीरे पादौ प्रक्षाल्याचम्य ब्रह्मयज्ञेन यक्ष्ये इति संकल्प्य विद्युदसि विद्यमे०मि अप उपस्पृश्य । हस्ताववनिज्य । त्रिराचामेद्भिः परिमृज्य । सकृदुपस्पृश्येत्यादिहृदयमालभ्येत्यन्तं कृत्वा सव्यं पाणिं पादौ प्रोक्ष्य वामपादोपरि दक्षिणपादं प्रतिष्ठाप्य करयोर्गर्भदर्भे संपुटीकृत्य गायत्रीं त्रिरन्वाह । ॐभूर्भुवःस्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् । तत्सवितुर्वरेण्यं भर्गो देवस्य धिमहि धि० तत् । इति जपित्वा वेदस्यादितश्चतुरोऽनुवाकान्यथाशक्ति वा कंचिद्भागं जपित्वा नमो ब्रह्मणे नमो अस्त्व०रोमि इति त्रिः पठित्वा "वृष्टिरसि वृश्च मे पाप्मानमृतात्सत्यमुपागाम्" इत्यस्य उपस्पृशेत् एवमहरहः कुर्यात्कृतान्ताद्वाऽऽरभ्योत्तरदिनेऽधीयीतैवं क्रमेण संपूर्णं वेदमधीत्य वैश्वदेवमन्त्रानधीयीत । अतः प्रसुग्मंतेति प्रश्नद्वयं ऋग्वेदादयोऽपि यद्यधीताः तर्हि तान्यपि क्रमेणाधीत्याङ्गान्यधीयीत । ततः स्मृतीतिहासपुराणानि क्रमेणाधीयीत । ततः षड्दर्शनसूत्राणि क्रमेणाधीयीत ऋगध्ययनसमयेऽनध्यायेष्वेकामृचं यजुरध्ययनसमये एकं यजुः सामाध्ययनसमय एकं सामाधीयीत । यद्वा गायत्रीजपान्ते भूर्भुवःस्वः सत्यंतपः श्रद्धायां जुहोमि इति अनध्यायेष्वभिव्याहृत्य परिधानीयां पठेत् । एवमनधीतवेदोऽस्वाधीनस्वाध्यायोऽपि कुर्यात् । एवं यावज्जीवं ब्रह्मयज्ञं कुर्वीत । ग्रामे मनसा अरण्ये प्रबलेन दिवानक्तं वा तिष्ठन् व्रजन्नासीनः शयानो वा सर्वथा स्वाध्यायमधीयीत न त्वङ्गासक्त्या प्रधानत्याग इति आपत्कल्पः ।

इनि ब्रह्मयज्ञप्रकरणम् ।

---

अथ **तर्पणम् ।**

माध्याह्निकसन्ध्यानन्तरं देवर्षिपितृतर्पणं कुर्यात् । अकृतब्रह्मयज्ञश्चेत्ब्रह्मयज्ञं कृत्वा प्राङ्मुख उपविश्य शुचिदेशे प्रागग्रान्दर्भानास्तीर्य ताम्रपात्रेऽक्षतसंयुक्तं जलमादाय देवांस्तर्पयेत् ताम्रादिभाजनांतरे वा तर्पयेत् । निवीतं कृत्वा शबलैस्तिलैः प्राजापत्येनोदङ्मुखे उदगग्रेषु कुशेषु ऋषींस्तर्पयेत् ॥ १०१ ॥

## याज्ञवल्कीये १०२ श्लोकः

पञ्चमहायज्ञानाह । **बलीति** । उभयत्र द्वंद्वे यथासंख्यमन्वयः । तदाह । **बलीत्यादि** । अधिकमाह । **एते इति** । **नित्येति** । इदमनुपदमेव स्फुटीभविष्यति । तथा च **व्यासो**ऽपि ।

"पञ्चयज्ञास्तु यो मोहान्न करोति गृहाश्रमी । तस्य नायं न च परो लोको भवति धर्मतः ॥

"होमाग्रदानरहितं न भोक्तव्यं कथंचन । अविभक्तेषु संसृष्टेष्वेकेनापि कृतं तु वा ॥

"पयोमूलफलैर्वाऽपि पञ्चयज्ञान्समाचरेत् । अकृत्वा पञ्चयज्ञांस्तु भुक्त्वा चान्द्रायणं चरेत्" ॥ इति

**फलेति** । तथा च **शातातपः** ।

"वैश्वदेवः प्रकर्तव्यः पञ्चसूनापनुत्तये" ॥ इति । तत्पञ्चकमाह **यमः**

"पञ्चसूना गृहस्थस्य वर्ततेऽहरहः सदा । कण्डनी पेषणी चुल्ली जलकुम्भ उपस्करः" ॥ इति ॥

सूना हिंसा स्थानानि । कण्डनी मुसलोलूखलादि । पेषणी दृषदुपलादिउपस्करः शूर्पादि । अवस्कर इति पाठे मार्जन्यादिर्द्रष्टव्यः ।

**माधवीये** पुराणवचनम्

"यत्फलं सोमयागेन प्राप्नोति धनवान्गृही । सम्यक् पञ्चमहायज्ञैर्दरिद्रस्तदवाप्नुयात्" ॥ इति ॥

न काम्येति तन्मात्रेत्यर्थः । नित्यत्वोक्तिविरोधापत्तेरितिभावः ।

तथा च **शङ्खः**

"पञ्चयज्ञविधानं तु गृही नित्यं न हापयेत्" ॥ इति । धर्मप्रश्नेऽपि "यस्याग्नौ न क्रियते यस्य चाग्रं न दीयते न तद्भोक्तव्यमिति" । एवं च न केवलं काम्यो नैमित्तिकश्च किंतु नित्योऽपि । तथा च शुचिजीवित्वमेवात्राधिकारो न कामनेति तत्त्वम् । एतेनाफलस्यैव नित्यत्वमिति निरस्तम् । एते च पञ्चमहायज्ञा **आश्वलायना**द्यनुरोधेनोक्ताः ।

तथा च **गृह्यम्** "अथातः पञ्चमहायज्ञाः । देवयज्ञो ब्रह्मयज्ञो भूतयज्ञः पितृयज्ञोः मनुष्ययज्ञः" इति तत् यदग्नौ जुहोति स देवयज्ञो, यत्स्वाध्यायमधीते स ब्रह्मयज्ञो, यत् बलिं करोति स भूतयज्ञो, यत्पितृभ्यो ददाति स पितृयज्ञो, यन्मनुष्येभ्यः स मनुष्ययज्ञ इति तानेतान्यज्ञानहरहः कुर्वीतेति । अत्र यज्ञत्रयं वैश्वदेवमित्युच्यते । तच्च देवयज्ञभूतयज्ञपितृयज्ञाख्यम् । तत्राग्नौ दशाहुतिरूपो देवयज्ञः, यच्चाथ बलिहरणमित्युक्तं बलिं करोति स भूतयज्ञः, यच्च स्वधापितृभ्य इति पितृभ्यो ददाति स पितृयज्ञः । अत एवाथ सायमित्यादिना निनयेदित्यन्तेन देवयज्ञमुक्त्वा स्वाहेत्यथ बलिहरणमित्यादिना भूतयज्ञमुक्त्वा स्वधेत्यादिना पितृयज्ञ उक्तस्तेनैव ब्रह्मयज्ञस्तु ।

**अथ स्वाध्यायविधिः** । प्राग्वोदग्वा ग्रामादित्यादिना पृथगेव तेनोक्तः । मनुष्ययज्ञस्तु स्मृत्यन्तरोक्तातिथिभोजनम् । तदाह **मनुः** "अतिथिभ्योऽन्नदानं तु नृयज्ञः स तु पञ्चमः" **इति** ।

अयमनुवादः। यच्छब्दयोगात् अपूर्वविधानेऽग्नौ जुहुयादित्येवावक्ष्यदिति वृत्तिः। अत्र प्रागुक्तब्रह्मयज्ञस्य कालो धनार्जनमाध्याह्निकस्नानतर्पणदेवपूजोत्तरमुक्त आश्वलायनानामनुरोधेनैव । यदाह सः

"प्रातरेवार्चयित्वैवं महायज्ञांस्ततश्चरेत् । स्वगृह्यविधिना कृत्वा ब्रह्मयज्ञं पुरा द्विजः ॥

"स्वाध्यायतर्पणाभ्यां च गृहमेत्याचरेत्परान् । " इति ।

**आश्वलायनस्मृतिश्च** ।

"मध्याह्ने ब्रह्मयज्ञश्च नानुबन्धवशाद्भवेत् । प्रातरौपासनादूर्ध्वं यावदस्तमयावधि ॥

"नैत्यकं तर्पणं कुर्याद्ब्रह्मयज्ञपुरःसरम् । वैश्वदेवं तथा श्राद्धं ब्रह्मयज्ञं च सूतके ॥

"न कुर्यात्स्वयमन्यैश्च कारयेन्न च सर्वथा । दिवोदितानि कर्माणि प्रमादादकृतानि वै ॥

"शर्वर्याः प्रथमे यामे तानि कुर्याद्यथाक्रमम् । विना सौरं चावगाहं ब्रह्मयज्ञं च तर्पणम् "॥ इति।

केचिद्रात्रावपि ब्रह्मयज्ञं तर्पणं चेच्छन्ति **तदापस्तम्ब** विषयम् । तथा च तदीय**श्रुतिः**।

"ग्रामे मनसा स्वाध्यायमधीयीत । दिवानक्तं वा तिष्ठन्नुत व्रजन्नुतासीन उत शयानोऽधीयीतैव स्वाध्यायं तपस्वी पुण्यो भवति" इति । यावज्जीवमेवं यथासंभवं कुर्यान्न त्वङ्गासक्त्या प्रधानत्याग इति तात्पर्यम् । मनसा चानध्यायो न तु त्यागो नित्यस्वाध्यायत्वात् सर्वथा त्यागस्तूभयत्र "तस्य वा एतस्य द्वावनध्यायौ यदात्माऽशुचिर्यद्देश" इति । तथा च **स्मृतिः**

"आचार्याः केचिदिच्छन्ति रात्रावपि हि तर्पणम् । तद्यजुःशाखिनामेव नान्येषां तु विधीयते"॥इति।

**बह्वृचश्रुतिरपि** " मध्यंदिने प्रबलमधीयीत य एवं विद्वान्महारात्रे उषस्योदिते" **इति** चेति ।

**शाकलशौनकौ** च

"आवर्तनेऽवगाह्यापः कुशपाणिस्तु बह्वृचः । ब्रह्मयज्ञं प्रकुर्वीत संध्यां माध्याह्निकीं ततः ॥

"स्नानं कृत्वा तु मध्याह्ने द्विजाः संध्यामुपासते । ब्रह्मयज्ञं ततः कुर्यात्तर्पणं तैत्तिरीयकाः" ॥ इति।

**वसिष्ठोऽपि** ।

'कृत्वा द्वा तर्पणं संध्यां कुर्याद्बह्वृच एव हि । आवर्तनात्परे संध्यां कृत्वा कुर्युश्च तर्पणम्" ॥ इति।

आवर्तन मध्याह्नः । ल्यब्लोपे पञ्चमी । एवं चापस्तम्बानां सूत्रे विशिष्य कालानुक्त्योदाहृतश्रुत्या च यदा कदाचित्स्मृतिसूत्रान्तरप्रागुक्तकालेऽनुष्ठानमिति बोध्यम् । 'उदिते सूर्ये' इति तदीयश्रुतिस्तु मुख्यकालपरेति तत्त्वम् ।

यत्तु **छन्दोगपरिशिष्टम्** । अध्यापनं ब्रह्मयज्ञः ।

"यश्च श्रुतिजपः प्रोक्तो ब्रह्मयज्ञस्तु स स्मृतः । स चार्वाक् तर्पणात्कार्यः पश्चाद्वा प्रातराहुतेः ॥

"वैश्वदेवावसाने वा नान्यत्रतोर्निमित्ततः" ।

इति तत्कातीयछन्दोगविषयमत एव तत्र श्रुतिजपरूपस्तर्पणात्प्राक् । अत एवैतदनन्तरमेव **कात्यायनेन** तर्पणमुक्तम् । अध्यापनरूपब्रह्मयज्ञकालमाह । पश्चाद्वेति । ग्रहणाध्ययनरूपब्रह्मयज्ञस्याप्ययमेव **कालः** ।

"गुरावध्ययनं कुर्वञ्शुश्रूषादिसमाचरेत्। स सर्वो ब्रह्मयज्ञः स्यादिति" **भट्टभाष्य**धृतवचनात्सोऽपि ब्रह्मयज्ञः वामदेव्यगानरूपस्तु स वैश्वदेवावसाने इति तद्भाष्यकृतः अन्यत्रर्ते इति जलस्थतर्पणादिनिमित्तं विनेत्यर्थः । एतेषां च संभवासंभवाभ्यां समुच्चितानामनुष्ठानमेकैकस्य वा नित्यश्राद्धतर्पणपित्र्यबलिरूपाणां पितृयज्ञानामिव । अत एव

"प्रातश्चेत्संगवादूर्ध्वमन्ते वा नित्यकर्मणाम् । अथ वा वैश्वदेवान्ते ब्रह्मयज्ञस्त्रिधा स्मृतः"॥ इति ।

"यदि स्यात्तर्पणादर्वाक् ब्रह्मयज्ञः कृतो न हि । कृत्वा मनुष्ययज्ञं वै ततः स्वाध्यायमारभेत्"॥

इति च **बृहस्पतिः**। स चार्वागित्यादि**र्मरीचिर्बृहस्पति**श्च तद्विषय एव । अर्वाक् तर्पणादिति तु साधारण्येन सर्वविषयमिति बोध्यम् । तैत्तिरीयादीनां पञ्चमहायज्ञेषु विशेषस्तत्तत्सूत्रतोऽवगन्तव्यः ॥ १०२ ॥

## याज्ञवल्कीये १०३ श्लोकः

एतेषां क्रममन्यविशेषं चाह । **देवेभ्यस्त्विति** । बहुवचनेन सामान्येनोक्त्या सर्वेषां समदेवतात्वेन समप्राधान्यं सूचितमित्यन्यत्र स्पष्टम् । शेषादित्यत्र कर्मणि यत् । अन्नस्य विशेषणं करणस्य हेतुत्वविवक्षायां पञ्चमी हुतस्यावयविनोपादानत्वविवक्षया तत्र पञ्चमीत्याशयेन व्याचष्टे । **तद्वेति** । एवं चादौ देवयज्ञः । अत एव देवभूतपितृब्रह्ममनुष्याणामनुक्रमादिति **परिशिष्टोक्तिः** । ब्रह्मयज्ञस्य तु काल उक्त एव। स चार्वाक् तर्पणादित्यादिना तर्पणरूपपितृयज्ञस्तु पूर्वमेव "स्नात्वा पञ्चनखानां तु प्रथमं तर्पणं स्मृतमिति" **जाबालात्** । एवं च 'कृत्वैतद्बलिकर्मैवमिति' **मनू**क्तमतिथिभोजनस्य बलिकर्मानन्तर्यं नित्यश्राद्धाकरणे बोध्यं तत्करणे तु तदनन्तरमेवेति तत्त्वम् । प्रागुक्तभूतबलिनिरासायाह । **भूतेभ्य इति** । पृथिव्यादिभ्य इत्यर्थः । अन्नशब्दस्य तु ओदने रूढत्वेऽपि स्मृत्यन्तरानुरोधेनात्र यौगिकत्वेनादनीयमात्रपरत्वमित्याशयेनाह। **अन्नेति** । **अपक्वेति** । मुख्यकल्पोऽयम् । अत एव " सिद्धस्य हविष्यस्य" इत्युक्तं **गृह्ये** । अनुकल्पास्तु श्रुतिस्मृत्यन्तरोक्ता अन्यत्र द्रष्टव्याः । तथा च **श्रुतिः** । "अहरहः स्वाहा कुर्यादाकाष्ठादिति संस्कृतान्नैर्हविष्यैश्च हविष्यव्यंजनान्वितैरिति" **व्यासः** । **शुनामिति** । 'समीपे' इति सर्वत्र शेषः । भयकृतपलायनादिनिरासाय शनकैरिति केचित् । यथाऽन्नोपघातो न भवति तथा वायसादिबलिर्देयः । यत्र तेषामुपयोगो भवति तत्र देय इति यावदित्यर्थम् । **शनकैरिति** । परे । **एतच्चेति** । वैश्वदेवाख्यं कर्म चेत्यर्थः । **सायंप्रातरिति** । सायंशब्दो रात्रेर्लक्षकः । प्रातः शब्दस्त्वह्नः। प्रयोगोपपत्तिस्तु स्फुटीभविष्यति । सिद्धस्य पक्वस्य करणस्य शेषत्वविवक्षया षष्ठी । मुख्यपक्षोऽयमनुकल्पद्वयं त्वग्रे स्फुटीभविष्यति। **केचिदिति** । **शौनकादयः** इत्यर्थः । तदुक्तं तेन ।

"वैश्वदेवमिति प्रोक्तं पूर्वैरेव मनीषिभिः । अन्नस्य चात्मनश्चैव संस्कारार्थं तदिष्यते"॥ इति ।

**वृत्तिकृन्नारायणो**ऽप्येवम् । व्युत्क्रमेणोभयत्र हेतू आह । **अथेति** । यत इत्यादिः । एकस्य तूभयत्वे संयोगपृथक्त्वमिति न्यायेनोभयार्थत्वमिति तेषां भावः । सिद्धान्तानुरोधेनाह । **पुरुषार्थत्वे इति** । सिद्धान्तभूते इत्यर्थः । अत एवाह । **पक्षे इति** । **विरोधादिति** । उभयलाभासंभव इति शेषः ।

नन्वेवं विनिगमनाविरहात्सिद्धान्तासिद्धिरत आह । **पुरुषेति** । तत्र हेतुमाह । **महेति । तनुरितीति** । वचनादिति शेषः । हेत्वंतरमाह । **तथेति । वैश्वदेवे त्विति** । बलिहरणात्पूर्वं वचनमात्रवैश्वदेवे जातेऽन्योऽतिथिश्चेदागच्छेदित्यर्थः । ततः पूर्वागतातिथये तु वैश्वदेवार्थमन्नं निष्कास्य भिक्षा दत्तैवेति भावः । पूर्वपाकसमाप्तौ पुनरन्यातिथ्यागमनेन पुनः पाकेऽपि न वैश्वदेवान्तरमित्यर्थः । इदं च पुरुषार्थत्वे एव संगच्छते न तु पक्षान्तरे तावताऽपि तत्संस्कारासंभवान्निषेधानर्थक्यापत्तेः । अत एव "यद्यन्नसंस्कारः स्यात्तर्हि बलिं वैश्वदेवं च न कुर्यादिति" **मेधातिथ्यादिः** ।

हेत्वन्तरं सूचयन्नाह । **पुरुषेति** । पक्षान्तरे तु "प्रतिप्रधानं गुणावृत्तिः" इति न्यायेन प्रतिपाकं तदावृत्तिः स्यात् । अविभक्तैश्च सर्वैः पृथगनुष्ठेयः स्यात्संध्यावन्दनादिवत् । न च "यद्येकस्मिन्काले पुनः पुनरन्नं पच्येत सकृदेव बलिं कुर्वीताथ यद्येकस्मिन्काले बहुधाऽन्नं पच्येत गृहपतिर्महानसादेवैनं कुर्वीतेति" **गोभिल**वचनान्नायं दोष इति वाच्यम् । अस्य **छन्दोगकातीय**विषयत्वेनाव्यापकत्वात् । प्रकृतस्य **चाश्वलायन**विषयत्वात् । अत **एवाश्वलायनः**

"वसतामेकपाकेन विभक्तानामपि प्रभुः । एकस्तु चतुरो यज्ञान्कुर्याद्वाग्यज्ञपूर्वकान् ॥

वाग्यज्ञो ब्रह्मयज्ञः

"अविभक्ता विभक्ताश्च पृथक्पाका द्विजातयः । कुर्युः पृथक् पृथक् यज्ञान्भोजनात्प्राक् दिने दिने॥
"पृथगप्येकपाकानां ब्रह्मयज्ञो द्विजन्मनाम् । सूतकाद्यैस्त्वशुद्धात्मा न कुर्यान्न च कारयेत्"॥ इति ।

यद्यपीत एव तेषां पक्षान्तरस्यैव लाभस्तथाप्येकस्यैव प्रतिपाकमावृत्त्यापत्त्या दोषान्तरेण च तन्न युक्तमिति तात्पर्यम् । नन्वेवं प्रागुक्तगृह्ययोः का गतिरत आह । **तस्मादिति** । जुहुयादित्यन्तादिनोत्पत्तिविधयो निनयेदित्यन्तादिना प्रयोगविषयाश्च दर्शिता इत्यर्थः ।

**अधिकारेति** । प्रत्यवायप्रागभावपरिपालनेनेति भावः । तत्र कर्मस्वरूपमात्रबोधको विधि**रुत्पत्तिविधि**रिति तस्य तत्त्वात्तत्त्वम् । अविलम्बापरपर्यायप्रयोगप्राशुभावबोधको विधिः **प्रयोगविधि**रिति तस्य तत्त्वात्तत्त्वम् । कर्मजन्यफलभोक्तृत्वरूपफलस्वाम्यबोधको विधि**रधिकारविधि**रिति तस्य तत्वात्तत्त्वम् । अङ्गसंबन्धबोधकरूप**विनियोगविधि**रप्याद्य एवेति बोध्यम् । **हरदत्त**स्त्वाह । सूतकेऽपि ब्रह्मयज्ञभिन्नाश्चत्वारोऽनुष्ठेया एव तानेतानि**त्याश्वलायनो**क्तेः । इदं हि वचनं नाप्राप्तप्रापणार्थं तद्विधिरेव प्रातिस्विकैस्तेषां प्राप्तत्वात् किं तु द्वादशरात्रं वा महागुरुषु दानाध्ययने वर्जयेरन्निति वक्ष्यमाणस्य बाधनार्थमहरहरिति वचनम् । न चैवं ब्रह्मयज्ञोऽपि प्रसज्येतेति वाच्यम् । तस्मिंतस्य द्वावनध्यायाविति वक्ष्यमाणत्वात् । एवं च सूतकाद्यैरित्युदाहृतवचनं ब्रह्मयज्ञमात्रपरमिति ।

**वृत्तिकारा**स्त्वाहुः "सूतके वैश्वदेवादि न कार्यमेव । पञ्चयज्ञविधानं तु न कुर्यान्मृत्तिजन्मनोरिति" स्मृतेः । अहरहरिति वचनं तु सर्वथापाकसंभवे कन्दमूलफलादिभिरपि कुर्यादित्येवमर्थम् । "आपन्नमपि दातव्यं काष्ठमपि जुहुयादाऋचमपि ब्रह्मयज्ञं कुर्यादिति" वचनान्तराच्चेति ।

**अथाश्वलायनवैश्वदेवप्रकारः ।**

तत्रादौ 'एवं गुणविशेषणविशिष्टायां तिथावस्मिन्काले ममोपात्तदुरितपंचसूनाजनितदुरित-

क्षयान्नात्मसंस्कारद्वारा श्रीपरमेश्वरप्रीत्यर्थं सिद्धेनान्नेन हविषाऽऽवृत्त्या तन्त्रेण वा सायंप्रातिकवैश्वदेवाख्यं कर्म करिष्ये, इति संकल्पः । स्वस्वकालानुष्ठाने तु प्रातःकालिकं सायंकालिकमिति यथायथं करिष्ये इति संकल्पः । यथाकालानुष्ठानपक्षेऽस्मिन्काले इत्यस्य आवृत्त्या तन्त्रेण वेत्यन्यतरस्याप्यनुल्लेखः । अत्र प्रमाणं **शौनकः** ।

"वैश्वदेवमिति प्रोक्तं पूर्वैरेव मनीषिभिः । अन्नस्य चात्मनश्चैव संस्कारार्थं तदिष्यते ॥
"प्रातरेव द्विरावृत्त्या कुर्याद्वा सह तत् द्विजः । सूर्यादिभ्यो हरेत्पूर्वमग्न्यादिभ्यस्ततः परम् ॥ .
"हुत्वा व्याहृतिभिः पश्चाद्भूतयज्ञस्तथैव च । सायं वा यदि भुंजीयात्तत्कृत्वा जात्वपि स्वयम्" ॥ इति ।

**आश्वलायनस्मृतिश्च ।**

"सायंप्रातर्वैश्वदेवौ कर्तव्यौ बलिकर्म च । अनश्नताऽपि कर्तव्यावन्यथा किल्बिषी भवेत् ॥
"वैश्वदेवो दिवानक्तं न भवेच्च पृथक् पृथक् । प्रातरेव द्विरावृत्त्या कुर्याद्वा सह तत् द्विजः ॥
"सायं वा यदि भुञ्जीयात्तत्कृत्वा जात्वपि स्वयम् " ॥ इति ॥

तत्र प्रथमश्लोकार्थः स्पष्टः । द्वितीयोत्तरार्द्धार्थस्तु उच्यते । पृथक् कर्म न कर्तव्यं किंत्वावृत्ति स्तन्त्रं वेति । तच्च द्विवैवेत्यर्थः । प्रातः शब्दो मध्याह्नपरः सायं शब्दो रात्रिपरः । तत्रावृत्तिर्द्विधा । दण्डकलितवदावृत्तिः स्वस्थानावृत्तिश्च । तत्राग्नौ प्रातःकालिकदशाहुतिहोमं कृत्वा बलिहरणं कृत्वा पुनः सायंकालिकदशाहुतिहोमबलिकर्तव्यौ । सेयं दण्डकलितावृत्तिः । अग्नौ प्रातस्तनदशाहुतीर्हुत्वा पुनः सायंतनदशाहुतीर्हुत्वा क्रमेण बलिद्वयं कर्तव्यम् । सेयं स्वस्थानावृत्तिः । वा अथवा । सहशब्दात्तन्त्रेणानुष्ठानम् । तच्च सायंप्रातिकाग्निहोत्रदेवतोद्देश्यकाहुतिचतुष्टयं क्रमेण हुत्वा 'सोमाय वनस्पतये' इत्याद्यष्टाहुतीः सकृद्धुत्वा बलिहरणं सकृत्कृत्वा 'दिवाचारिभ्यो नक्तंचारिभ्यश्चेति' पृथक्कुर्यान्नानयोस्तन्त्रत्वम् । एवं प्रजापतेरुक्तिरिष्यते इति गृह्यपरिशिष्टात् "समानां समानार्थां देवतामव्यवहितां सकृदिति" **गृह्य**वचनाच्च प्रजापतेर्न तन्त्रता बोध्या । एवं चात्र पक्षे संप्रतिपन्नदेवताकाहुतीनां तन्त्रत्वं बोध्यम् । "विश्वेदेवे विश्वेदेवा" **इत्यापस्तम्बोक्तेः** । सर्वेषां प्रधानत्वं न कस्याप्यङ्गत्वमिति । अङ्गमात्रस्य तन्त्रता न प्रधानस्येति वक्तुमशक्यमिति बोध्यम् । अत्र प्रमाणान्तरं ग्रन्थान्तरे प्रसिद्धम् । अत्र **कारिका** च

"गृहस्थो वैश्वदेवाख्यं कर्म प्रारभते दिवा । तन्त्रं नास्त्यत्र भगवद्वृत्तिकृद्वचनं यथा " ॥ इति ।

"अथ वैश्वदेवो दिवाऽस्य प्रारम्भो नात्र पाकयज्ञं तन्त्रमिति" **गृह्यपरिशिष्टं** च । एवं च वैश्वदेवस्य मध्याह्ने एव प्रारम्भो नाग्निहोत्रादिवत् उपक्रमे । सायंप्रातरित्यत्र सायंशब्दस्य पूर्वं पाठात्सायं प्रातश्च सायं चेति द्वंद्वे 'राजदन्तादित्वेन' प्रातःशब्दस्य परनिपाते सायं शब्दस्य पूर्वनिपातेन तस्योकार्थासाधकत्वात् । अत एव 'दिवाचारिभ्य' इति 'दिवानक्तंचारिभ्य' इति नक्तमित्युक्तं **गृह्ये** । अन्यथा सायंप्रातरित्युपक्रमानुरूपमेव निर्दिशेत् । एवं च प्रातः सायं वैश्वदेवौ तन्त्रेणावृत्त्या वा करिष्ये इति संकल्प इति केषांचिदुक्तिरसंगता । द्वंद्वस्यावश्यकत्वेन तत्र च सायंशब्दस्यैव पूर्वनिपातेन साधुत्वस्य बोधनात् । अत एव 'पृष्ठ्यः षडहो बृहद्रथन्तरसामाकार्य' इत्यत्र बृहच्छब्दस्य पूर्वनिपातोऽपि रथन्तरस्य पूर्वमनुष्ठानम् । 'ततो बृहत' इति **याज्ञिक**सिद्धान्तः । 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन ' इत्यादौ

दर्शशब्दस्य पूर्वनिपातोऽपि पौर्णमासानुष्ठानं पूर्वं याज्ञिकानाम् इत्यादि'सायंप्रातर्द्विजातीनाम्' इत्यादिप्रयोगश्च संगच्छते इति दिक् ।

उक्तगृह्यपरिशिष्टात्कारिकायां 'तन्त्रं नास्ती'त्यत्र तन्त्रपदेन पाकयज्ञतन्त्रं विवक्षितं तेन तदिति कर्तव्यता नेति नोल्लेखनादीति बोध्यम् । अथ "सायं प्रातः सिद्धस्य हविष्यस्य जुहुयादग्निहोत्रदेवताभ्यः सोमाय वनस्पतये" इत्याद्या**श्वलायन**गृह्ये जुहोतेः करणाकाङ्क्षायानैयत्येन तृतीयान्ते वाच्ये हविष्यस्येति षष्ठ्या संस्कार्यसंस्कारकत्वसंबन्धो होमस्य तेन सह बोधितः ।

"एते पञ्च महायज्ञा ब्राह्मीयं कुर्वते तनुम्" इत्यादि स्मृत्या पुरुषसंस्कारता च बोधिता। आश्वलायनादिसंमतमिदमेव प्रागुक्तं तु मतान्तरमिति न विरोध इति बोध्यमिति ।

यत्तु 'सोमाय वनस्पतये' इत्येकाहुतिः वनस्पतिशब्दस्य यौगिकत्वेन विशेष्यापेक्षत्वेन संनिहितसोमान्वयात् । यथा पात्नीवतमालभेतेत्यत्र पात्नीवत्शब्दस्य त्वाष्ट्रपदान्वयः । अग्नये भ्राजस्वते सौर्यं चरुमित्यादौ च यथा भ्राजस्वत्सौर्यशब्दयोराग्निचर्वादावन्वयः । अग्निर्गृहपतिः सोमो वनस्पतिरित्यादौ वनस्पतेर्गुणत्वस्य दर्शनाच्चेति दशाहुतीर्हुत्वेत्यादिवृत्तिकारिकाग्रन्थौ 'अन्धस्येवान्धलग्नस्येति' **न्याये**नोपेक्षणीयौ इति । तन्न ; भ्रान्तत्वान्न ह्यग्निहोत्रदेवताभ्य इत्यनेनैकाऽऽहुतिः प्रतिपाद्यते । तस्यामन्त्रत्वात् । किंत्वग्निहोत्रदेवतामन्त्रप्रतिपादनम् । तथा च सायमग्निः प्रातः सूर्यः प्रजापतिरुभयत्र एभ्य इति तदर्थः । एवं च विश्वेभ्यो देवेभ्य इतिवत्सोमाय वनस्पतये इत्यस्यैकाहुतित्वमेवेति ब्रह्मणे इति दशमी आहुतिरिति न तद्ग्रन्थासंगतिः ।

यदपि वनस्पतेर्भिन्नदेवतात्वदर्शनात् उपसर्जनत्वे पूर्वनिपातापत्तेश्च सोमवनस्पत्योर्भिन्नदेवतात्वं युक्तम् । एवं च एकादशाहुतय इति तदुक्तिरसंगतैवेति ध्येयमिति नवीनैरुक्तम् । तदपि चिन्त्यम् । असमभिव्याहृतस्थले क्वचिद्वनस्पतेर्देवतात्वेऽपि समभिव्याहृतस्थले क्वापि तस्य देवतात्वस्यादर्शनात् । अन्यथा 'अग्नये भ्राजस्वते' 'अग्नये पथिकृते' इत्यादिष्वपि द्वयोर्देवतात्वस्यापत्तेः । श्रुतेः स्मृतेर्वाऽत्रार्थे नियामकत्वानुपलम्भाच्च । उपसर्जनत्वे इत्युक्तिस्तु स्वाज्ञानप्रकाशिका न तु प्रकृतेष्टभिन्नदेवतात्वसाधिका। पूर्वनिपातो हि समस्तस्थले नियामकोऽसति बाधके न तु व्यस्तस्थलेऽपि नियामक इति सकलशास्त्रसिद्धान्तात् नेह प्रयोगनियम आरभ्यते इत्यादि**वृद्धिसूत्रस्थमहाभाष्यग्रन्थाच्च** । तस्माद्दशाहुतीर्हुत्वेति कारिकादिग्रन्थः साधुरेवेति बोध्यम् ।

यदपि नवीनैरुक्तं 'प्रातरेव द्विरावृत्त्या कुर्याद्वा सह तत् द्विज' इत्युत्तरार्द्धस्यायमर्थः । वाऽथवा प्रातः दिवसे सहैव द्विरावृत्त्या तत्कर्म द्विजः कुर्याद्विंशतिमाहुतीर्जुहुयादिति। न तु तन्त्रेण द्वादशाहुतयोऽन्धपरंपरया लोकैः क्रियमाणा अपि तदर्थः । एवं च तन्त्रानुष्ठानमप्रमाणमिति । तदप्यप्रमाणम् । सहशब्दस्य वैयर्थ्यात्प्रातरेव द्विरावृत्त्या वा कुर्यादिति यथाश्रुतव्याख्यानेनैव भवदिष्टार्थलाभात् । तस्मात्तद्बलादुक्तप्रकारेणावृत्त्या तन्त्रेण वाऽनुष्ठानं तदर्थ इति युक्तमिति । एवं च द्वादशाहुतिपक्षोऽपि सप्रमाण एवेति दिक् । तैत्तिरायादीनां विशेषस्तु तत्तत्सूत्रतोऽवगंतव्य इति बोध्यम् । यत्तु तन्त्रेणावृत्त्या वा वैश्वदेवद्वयानुष्ठानं भोजनद्वयकर्तुरेवेति कश्चित्, वैश्वदेवदेवता उपक्रम्य "पूजयित्वा ततः पश्चाद्गृहस्थः शेषभुग्भवेत्"इति **मनु**वाक्यात्सकृद्भुञ्जानेन सकृदेव स कार्य इति तदाकूतं तन्नानश्नताऽपीति प्रागुक्तस्मृतिविरोधात् ।

**छन्दोगपरिशिष्टे**ऽप्येवमुक्तं तत्राश्नतोऽकरणे प्रत्यवायद्वयं भोजनकृतोऽकरणकृतश्च । अनश्नतस्त्वकरणकृत एव ।

एवं चैकादश्यादौ भुज्यभावेऽपि वैश्वदेवादिकं कार्यमेवानेन चास्य पुरुषार्थत्वमेव लभ्यते । अथ तत्प्रयोगः । पूर्वोच्चरिति एवं गुणविशेषणविशिष्टायां पुण्यतिथौ ममोपात्तेत्यादि आत्मसंस्कारार्थं वैश्वदेवाख्यं कर्म करिष्ये । चत्वारि शृङ्गेत्यस्य मन्त्रस्य 'चत्वारि शृङ्गेति' मूर्तिध्यानम् । पर्युक्षणम् । परिसमूहनम् । 'विश्वानिनो दुर्गहे'त्यग्न्यर्चनम् । अधिश्रयणं प्रोक्षणम् । दक्षिणं जान्वाच्य । प्रातः सूर्याय स्वाहा प्रजापतये । सायमग्नये स्वा० प्रजापतये इति । सोमाय वनस्पतये । अग्नीषोमाभ्याम् इन्द्राग्निभ्याम् द्यावापृथिवीभ्याम् धन्वन्तरये इन्द्राय । विश्वेभ्यो देवेभ्यः । ब्रह्मणे स्वाहा । परिसमूहनम् । पर्युक्षणम् । मानस्तोके इति विभूतिग्रहणम् । अथ बलिहरणम् । एताभ्यश्चैतेभ्यः । अद्भ्यः स्वाहा । ओषधिवनस्पतिभ्यः स्वाहा । गृह्याभ्यः स्वाहा । गृहदेवताभ्यः स्वाहा । वास्तुदेवताभ्यः । इन्द्राय । इन्द्रपुरुषेभ्य इति पूर्वतः । यमाय यमपुरुषेभ्य इति दक्षिणतः । वरुणाय वरुणपुरुषेभ्य इति पश्चिमतः । सोमाय सोमपुरुषेभ्य इत्युत्तरतः । ब्रह्मणे ब्रह्मपुरुषेभ्य इति मध्ये । विश्वेभ्यो देवेभ्यः द० । सर्वेभ्यो भूतेभ्यः । दिवा दिवाचारिभ्यः । रात्रौ नक्तंचारिभ्यः । रक्षोभ्य इत्युत्तरतः । स्वधापितृभ्यः इति द० । गोभ्यः । इदमन्नं स्वाहा । अस्मत्पितृपितामहप्रपितामहेभ्यः अमुकगोत्रेभ्यः अमुकशर्मभ्यो वसुरुद्रादित्यस्वरूपेभ्यः सपत्नीकेभ्यस्तथा मातामहेभ्य इदमन्नं स्वधा । श्यामाय स्वाहा । शबलाय स्वाहा । श्वचाण्डालभूतपतितवायसेभ्य इदमन्नम् । हस्तौ पादौ प्रक्षाल्याचम्य गृहं प्रविशेत् "शान्ता पृथिवी शिवमन्तरिक्षं द्यौर्नोदिव्यभयन्नो अस्तु । शिवा दिशः प्रदिश उदिशो न आपो विद्युतः परिपान्तु सर्वतः" शान्तिः ३ सनकादिमनुष्येभ्य इदमन्नं हन्त ।

इति वैश्वदेवः ।

---

## अथ तैत्तिरीयाणां पञ्चमहायज्ञप्रयोगः ।

'ते च पञ्चयज्ञा देवयज्ञपितृयज्ञभूतयज्ञमनुष्ययज्ञब्रह्मयज्ञाभिधा वैश्वदेवान्ते क्रमेण कर्तव्या' इति वैश्वदेवकर्मादौ लिख्यते । वैश्वदेवं कर्तुं देशकालौ संकीर्त्य 'ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं वैश्वदेवाख्यं कर्म करिष्य' इति संकल्प सिद्धमन्नमेव पात्रे क्षारलवणाद्यसंसृष्टमुपादायापरत्र क्षारलवणसंसृष्टमादायौपासनाग्नौ पचनाग्नौ वा परिसमूहनमलंकरणं च कृत्वा अग्निध्यानं 'चत्वारि शृङ्गेति' मन्त्रेण कृत्वा अन्नपात्रे अग्नेरुपरि स्थापयित्वा प्रोक्ष्याज्येनाभिघार्योत्तार्योदक्पुनरन्नमभिघार्य पूर्वाभिमुखस्थितस्य स्वस्याग्रे अन्नपात्रे स्थापयेत् । तत उदकमादायाग्निं परिषिञ्चेत् । 'अदितेऽनुमन्यस्व'इत्यादिभिः । ततो हविष्यमन्नं हस्तेनाङ्गुष्ठयोगेनादाय अग्नये स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा । ध्रुवाय भूमाय स्वाहा । ध्रुवक्षितये स्वाहा । अच्युतक्षितये स्वाहा । अग्नये स्विष्टकृते स्वाहा" । सर्वत्राग्नये इदं न ममेति त्यागः । तत अदितेऽन्वमꣳस्थाः०प्रासावीरिति विशेषः । अथोदीचीनमुष्णं भस्मापोह्य तस्मिन् हविष्यमन्नं स्वाहाकारेण जुहुयात् । अग्नये त्यागः । अथ पात्रद्वयस्थमन्नं संसृज्य बलीन्दद्यात् । तत्र बलिनिवापात्पूर्वं परिमार्जनावोक्षणे अनन्तरं च परिषेकः सर्वत्र चतुर्थ्यन्तेन त्यागः । "धर्माय स्वाहा" । तत उत्तरतः "अधर्माय स्वाहा" । आयात्पुरतः "अद्भ्यः स्वाहा" । ततः परः "ओषधिवनस्पतिभ्यः

स्वाहा"। ततः पुरः "रक्षोदेवजनेभ्यः स्वाहा"। उत्तरस्मादुत्तरतः क्रमेण "गृह्याभ्यः स्वाहा। अवसानेभ्यः स्वाहा। अवसानपतिभ्यः स्वाहा। रक्षोदेवजनेभ्यः स्वाहा"। मध्यमात्पुरतः क्रमेण "कामाय स्वाहा। अन्तरिक्षाय स्वाहा। यदेजति जगति यच्च चेष्टति नाम्नो भागो यन्नाम्ने स्वाहा"। आद्याद्दक्षिणतः क्रमेण "पृथिव्यै स्वाहा। अन्तरिक्षाय स्वाहा"। दिवे स्वाहा। सूर्याय स्वाहा। चंद्रमसे स्वाहा। नक्षत्रेभ्यः स्वाहा। इन्द्राय स्वाहा। बृहस्पतये स्वाहा। प्रजापतये स्वाहा। ब्रह्मणे स्वाहा"। प्राचीनावीती। ततो दक्षिणेन "स्वधापितृभ्यः स्वाहा। उत्तरेण "नमो रुद्राय पशुपतये स्वाहा" वैश्वदेवमीश्वरार्पणं कृत्वाऽऽचम्य प्राणानायम्य देवयज्ञेन यक्ष्ये इति संकल्प्य सर्वत्रादावन्ते च "विद्युदसि-वृष्टिरसि इत्येताभ्यामप उपस्पृशेदन्यदन्नमादाय पूर्ववत्संस्कृत्याग्निं च परिषिच्य "देवेभ्यः स्वाहा" इति जुहुयात् त्यागः। ततः परिषिच्य पूर्ववत्। पितृयज्ञेन यक्ष्य इति संकल्प्य प्राचीनावीती "पितृभ्यः स्वधास्तु" इति वैश्वदेवस्थादिबलेर्दक्षिणतः वृष्टि०। पुनर्भूतयज्ञेन यक्ष्य इति संकल्प्य विद्युद०"भूतेभ्यो नम" इति पश्चात्त्यागः वृष्टि०। मनुष्ययज्ञेन यक्ष्य इति संकल्प्य विद्युद०"मनुष्येभ्यो हन्तेति" सन्निधावेव त्यजेत् त्यागः। वृष्टिरसि। ततः सर्वावशिष्टमन्नमादाय "ये भूताः प्रचरन्ति दिवा नक्तं बलिमिच्छन्तो वितुदस्य प्रेष्याः। तेभ्यो बलिं पुष्टिकामो हरामि मयि पुष्टिं पुष्टिपतिर्दधातु स्वाहा" इति बहिर्बलिं दद्यात् त्यागः। पादौ प्रक्षाल्याचम्य यस्य स्मृत्या च० एवं सायं नक्तं बलिमिच्छन्त इति विकृत्या बहिर्बलिं च कुर्यात्। वैश्वदेवबलिपरिषेचनेन विशेषः।

"द्वावेकं द्वौ च चतुरः प्रत्येकं तु त्रयोदश। उत्सृज्यावोक्ष्य प्रत्येकं परिषिञ्चेद्बलीन्निहेति" अयमाचारप्राप्तप्रयोग उक्तः। अथ वैश्वदेवप्रयोगो मुख्यस्तेषामुच्यते। तत्र **कात्यायनः**।

"सायंप्रातर्वैश्वदेवः कर्तव्यो बलिकर्म च। अनश्नताऽपि सततमन्यथा किल्बिषी भवेत्"॥

स च वैश्वदेव औपासने पचनं वा कार्यः। औपासनवत औपासने अन्यस्य पचने केचित्समानविकल्पं मन्यन्ते। तत्र वैश्वदेवस्य स्थाने स्थण्डिलमनुकल्प्य यत्र क्व चाग्निमुपसमाधास्यन्स्यात्तत्र प्राचीरुदीचीश्च तिस्रस्तिस्रो रेखा लिखित्वाऽद्भिरवोक्ष्य भूर्भुवःसुवरोमित्यग्निं प्रतिष्ठाप्याग्निमुपसमिंध्यादुत्सिच्यैतदुदकमन्यदुपदध्यात्। सिद्धेऽन्नादौ संस्कर्ता भूतमिति स्वामिने प्रब्रूयात्। स्वामी तत्सुभूतं विराडन्नं तन्माक्षायीति प्रतिब्रूयात्। ततो होमार्थं हविष्यमन्नं पात्रे कल्पयति अहविष्यं क्षारलवणवरान्नसंसृष्टं द्वितीये हविष्यमन्नं देवयज्ञार्थं तृतीये। सर्वतः समवदायाग्रदानार्थं चतुर्थे सर्वत एव समवदाय मनुष्ययज्ञार्थं पञ्चमे। यदि ब्राह्मणतर्पणं नावकल्पते मनुष्येभ्यो यथाशक्तिदानमिति वचनात्। आचम्य प्राणानायम्य देशकालादि संकीर्त्य श्रीपरमेश्वरप्रीत्यर्थं वैश्वदेवं करिष्य इति संकल्प्याग्निमलंकृत्यादितेऽनुमन्यस्वेत्यादिना परिषिच्य प्रथमकल्पितादन्यत् अङ्गुष्ठपर्वमात्रं हस्तेन जुहोति। अग्नये स्वाहा। विश्वेभ्यो देवेभ्यः स्वाहा। ध्रुवाय भूमाय स्वाहा। ध्रुवक्षितये स्वाहा। अच्युतक्षितये स्वाहा। अग्नये स्विष्टकृते स्वाहा। ततः पूर्ववदुत्तरं परिषिच्य। अत्र स्विष्टकृतः प्राक्सोमाय स्वाहेति केचिन्मन्यन्ते। स्थण्डिलादुदीचीनमुष्णं भस्मापोह्य तस्मिन्नहविष्यं स्वाहाकारेण जुहोति। अग्नय इदम्। अथ षडाहुतिशेषम् हविष्यशेषेमसंसृज्य अन्नेन सूपसंसृष्टेन बलीन्दद्यात्। बलिस्थानमद्भिर्हस्तेन परिमृज्य प्रत्येकमवोक्ष्य बलीन्युप्य प्रत्येकं समंतं परिषिञ्चेत्। एकदेशविहितानामपि मार्जनावोक्षणे पृथक्परिषेचनमन्ते सकृत्। अपरेणाग्निं धर्माय स्वाहा।

अधर्माय स्वाहा । इत्युदगपवर्गं दद्यात् । उदधानसन्निधौ अद्भ्यः स्वाहा । गृहमध्ये ओषधिवनस्पतिभ्यः स्वाहा । रक्षोदेवजनेभ्यः स्वाहा । प्रागपवर्गम् । अगारस्योत्तरपूर्वदेशे । गृह्याभ्यः स्वाहा । अवसानेभ्यः स्वाहा । अवसानपतिभ्यः स्वाहा । रक्षोदेवजनेभ्यः स्वाहाः । सर्वभूतेभ्यः स्वाहा । इत्येतैः प्रागपवर्गम् । शय्यादेशे "कामाय स्वाहा" । द्वाराधस्ताद्दारुणितदधोवेद्यां वा । "अन्तरिक्षाय स्वाहा" । कपाटे अर्गले वा "यदेजति जगति यच्च चेष्टति नाम्नो भागोयन्नाम्ने स्वाहा"। वायुर्देवता । अग्नेर्दक्षिणतः यत्र ब्रह्मा निषीदति तत्र "पृथिव्यै स्वाहा । अन्तरिक्षाय स्वाहा । दिवे स्वाहा। सूर्याय स्वाहा । चन्द्रमसे स्वाहा । नक्षत्रेभ्यः स्वाहा । इन्द्राय स्वाहा । बृहस्पतये स्वाहा । प्रजापतये स्वाहा । ब्रह्मणे स्वाहा" । इत्येतैः प्रागपवर्गम् । एतद्बलीनां दक्षिणतः । प्राचीनावीती सव्यं जान्वाच्य दक्षिणं पाणिमुत्तानं कृत्वाऽङ्गुष्ठतर्जन्योरन्तरालेन "स्वधा पितृभ्यः स्वाहा" इति निवपेत् । तदुत्तरतः "नमो रुद्राय पशुपतये स्वाहा" । एकदेशस्थयोरपि प्राचीनावीतोपवीतादिधर्मभेदान्नानापरिषेचनम् । अप उपस्पृश्य वैहायसं तु रात्रावेव कुर्यात् । "नक्तमेवोत्तमेन वैहायसम्" इति वचनात् । ततोऽग्रं च ग्रासपरिमितमन्नरूपं दद्यात् । ततः प्राणानायम्य देवयज्ञेन यक्ष्य इत्युक्त्वा विद्युदसि विद्यमेपाप्मानमृतात्सत्यमुपैमि । अप उपस्पृश्य । अदितेन्वित्यादिना परिषिच्य तृतीये पात्रे समुद्धृताद्धविष्याद्धस्तेनादाय देवेभ्यः स्वाहेति हुत्वोत्तरं परिषिच्य 'वृष्टिरसि-वृश्चमे पाप्मानमृतात्सत्यमुपागां' इत्यप उपस्पृशेत् । ततः पूर्ववत् प्राणानायम्य प्राचीनावीती पितृयज्ञेन यक्ष्य इति संकल्प्य विद्युदसि वि० अप उपस्पृश्य० अङ्गुष्ठतर्जन्योरन्तरेण पितृभ्यः स्वधाऽस्तु इत्याहुतिमात्रं शुचौ भूमौ परिमृज्यावोक्षितायां निवपेत् । पितृभ्य इदम् । अप उपस्पृश्य । वृष्टिरसि० । अप उपस्पृश्य पूर्ववत्प्राणानायम्य भूतयज्ञेन यक्ष्ये । विद्युदसि वि०। अप उपस्पृश्य पूर्वकल्पितस्य दानम् । वृष्टिरसि० अप उपस्पृश्य । यज्ञोपवीत्येव कुर्यात् । ततो बलिदानावशिष्टं किंचिद्गृहीत्वाऽङ्गणे अपि वा बहिर्गत्वा भूमौ दीर्घतया जलं क्षिप्त्वा ।

"द्वौ श्वानौ श्यामशबलौ वैवस्वतकुलोद्भवौ । ताभ्यां बलिं प्रदास्यामि स्यातामेतावहिंसकौ ॥
"ऐन्द्रवारुणवायव्या याम्या वै नैर्ऋतास्तथा । वायसाः प्रतिगृह्णन्तु भूमौ पिण्डं मयाऽर्पितम्"॥इति ।

हस्तगतमन्नं भूमौ क्षिप्त्वा पादौ प्रक्षाल्याचम्य पादघटिकामात्रमतिथिं प्रतीक्ष्य पूर्वसंकल्पितान्नेन भोजयेत् । वैश्वदेवे होमा बलयश्च प्रधानभूताः । तत्रैकमपि विस्मृत्य कर्मणि समापिते प्राक्भोजनात्स्मरणे भूर्भुवःसुवःस्वाहेति कर्माग्नौ सर्वप्रायश्चित्तं हुत्वा विस्मृतमात्रमनुष्ठेयम् । भोजनादूर्ध्वं स्मरणे परेद्युश्चतुर्गृहीतेन सप्तहोतारं सग्रहं जुहुयात् । पञ्चमहायज्ञानां लोकेऽप्येवमेव ।

इति वैश्वदेवः ।

---

अदितेऽनुमन्यस्वेत्याद्यर्थः प्रसंगादुच्यते । अदितिर्नाम देवमाता । हे अदिते अनुमन्यस्व मया क्रियमाणं कर्म अनुजानीहि । अनुमतिः अनुमन्त्री ऊनचंद्रा पौर्णमासी सरस्वती वाग्देवता । छान्दसो गुणः हे देवसवितः सर्वस्यानुज्ञातः अस्मानपि प्रसुव अनुजानीहि । ॐ अग्नये स्वाहा । ॐमित्यनुज्ञाक्षरस्तथा स्वाहाकारः प्रदानार्थः । सोमाय स्वाहा । केचिदिमं मन्त्रं नाधीयते । विश्वेभ्यो देवेभ्यः स्वाहा । सर्वेभ्यो देवेभ्यः० । ध्रुवाय भूमाय स्वाहा० ध्रुवायैकरूपाय जन्मक्षयरहिताय भूमाय भूमा भूम्ने ब्रह्मणे भूमा त्वेवं विजिज्ञासितव्य इति छान्दोग्यं । ध्रुवक्षितये । ध्रुवा निश्चला क्षितिर्गतिर्व्याप्तिर्यस्य कार्यवर्गं प्राति तस्मै

ध्रुवक्षितये ब्रह्मणे एवमच्युतक्षितये अग्नये स्विष्टकृते । रुद्रोऽग्निः स्विष्टकृत्स्विष्टं सुहुतं करोति। पूर्ववत्परिषेचनमन्वमꣳस्था । अनुज्ञातवती आसावीरनुज्ञातवान् इति ॥ १०३ ॥

## याज्ञवल्कीये १०४ श्लोकः

पितृयज्ञान्तरं मनुष्ययज्ञस्वरूपं चाह । **अन्नमिति**। 'नृयज्ञोऽतिथिभोजनमि'त्यादावातिथित्वमविवक्षितम् । अतिथेरनित्यत्वात् । मनुष्ययज्ञस्य च नित्यत्वात्। अत एव "अहरहर्ब्राह्मणेभ्योऽन्नं दद्यादा मूलफलशाकेभ्योऽथैष मनुष्ययज्ञः समाप्नोतीति" (२।६।५).**बौधायन**स्तदेदभिप्रेत्याह । **मनुष्येभ्य इति**। अनेन तत्र ब्राह्मणत्वमप्यविवक्षितमिति सूचितम्। अन्वहमित्यस्य व्याख्या **प्रत्यहमिति** । बहुवचनान्तद्वंद्वसूचनायाह । **पितृभ्य इति** । अनुकल्पत्वसूचनायाह । **अन्नाभावे इति** । ननु मध्यमस्थात्रानुक्तस्य कथं लाभोऽत आह । **अपिशब्दादिति** । तथा चापेरन्नपदसंबन्धेन उक्तस्मृत्यन्तरोक्तकन्दादेस्तेन समुच्चयेनोक्तस्मृत्यन्तरानुरोधेनैव तथा व्याख्यानमिति भावः । अत एव **मनुः**।

"दद्यादहरहः श्राद्धमन्नाद्येनोदकेन वा। पयोमूलफलैर्वाऽपि पितृभ्यः प्रीतिमावहन्" ॥ इति । अयं न क्रमपरः । **स्वाध्यायमिति**। तं चेत्यर्थः। अन्वहमित्यस्य व्याख्या **सततमिति** । ब्रह्मयज्ञस्वरूपस्य प्रागुक्तत्वादपौनरुक्त्यायाह । **अर्वीति** । अन्नपदस्य भक्ते शक्तत्वेऽपि सकलसंग्रहायात्र यौगिकत्वमन्यथा दोषापत्येरित्याह । **अन्नेति** । शेषं पूरयितुं शङ्कते । **कथं तर्हीति** । पचेदिति उभयत्र शेषः । समाधत्ते । **देवेति** । एवं चाशौचे वैश्वदेवानधिकारे तदर्थपाकस्याभावात् गृहस्थितेनापि तेन फलाहारादिकमेव कार्यं साग्निकेन। एवं निरग्नेरपि। तत्र तदभावात्पाको न भवति यदि त्वन्यार्थं पाकस्तदा तच्छेषः स्वयमपि भोक्तव्यो नो चेत्फलादिभोजनमेवेति भावः ॥ १०४ ॥

## याज्ञवल्कीये १०५ श्लोकः

वैधस्वभोजने वैधक्रममाह । **बालेति** । तथा च **मनुः** ( अ. ३ श्लो. ११४।११८) ।
"सुवासिनीः कुमारीश्च रोगिणो गर्भिणीस्तथा । अतिथिभ्योऽग्र एवैतान्भोजयेदविचारयन् ॥
"अदत्वा तु य एतेभ्यः पूर्वं भुंक्तेऽविचक्षणः । स भुञ्जानो न जानाति श्वगृध्रैर्जग्धिमात्मनः॥
"भुक्तवत्सु च विप्रेषु स्वेषु भृत्येषु चैव हि । भुञ्जीयातां ततः पश्चादवशिष्टं तु दंपती ॥
"देवानृषीन्मनुष्यांश्च पितॄन् गृह्याश्च देवताः । पूजयित्वा ततः पश्चाद्गृहस्थः शेषभुग्भवेत् ॥
"अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात्। यज्ञशिष्टाशनं ह्येतत्सतामन्नं विधीयते"॥ इति।

अग्रे प्रथमं प्रकृते **मनु**वाक्ये च द्विवचनबलाद्दंपत्योरेककाले भोजनं न तु तयोः पूर्वापरीभाव इति प्रतीयते। यत्तु भोजयेदित्याद्युक्तेः पत्युः प्राक्भार्याभोजनमिति अन्यथा तैः सह भार्या न भुञ्जीतेत्यर्थकल्पनायां यथाश्रुतपदान्वयभङ्गः स्यादिति । यत्तु **महाभारते** "दर्शनं तद्दर्शनमेव न विधानं विधौ वा विकल्प एष्टव्य" इति तन्न । अस्यानुवादत्वात् । न च गृहस्थ इत्याद्येकवचनविरोधः । तस्य धर्मपरत्वे नोभयोरपि संग्रहात् । अत एवाग्रे दंपती इत्याद्युक्तिः । तस्मान्नान्यतरस्य प्राग्भोजनमनुवादोऽयं प्रतिपत्तिदार्ढ्यार्थम् । 'यः पचत्यात्मकारणादि'त्यस्य केचिदेवमर्थमाहुः । पचेदित्यत्रण्यर्थान्तर्भावः । अत एव **यमः** ।

"नात्मार्थे पाचयेदन्नं नात्मार्थे घातयेत्पशून्। देवार्थे ब्राह्मणार्थे च पचमानो न लिप्यते" ॥ इति । धर्मप्रश्नश्च नात्मार्थमभिरूपमन्नं पाचयेदिति। अभिरूपं स्वाद्वपूपादिकं नात्मानमुद्दिश्य पाचयेत्क्षुधितोऽहमिति मह्यं चेदं रोचते इति वा पच्यतामिति । इदं चानातुरपरम् । आतुरस्य शरीरधारणस्यावश्यकत्वाद्भवत्येव तत्सर्वत एवात्मानं गोपायेदित्युक्तेरिति । तन्न ।

"यद्यदिष्टतमं लोके यच्चास्य दयितं गृहे । तत्तद्गुणवते देयं तदेवाक्षयमिच्छता" ॥

इति स्मृतिविरोधापत्तेः । दयितं स्पृहणीयं यदि पाकाभावस्तर्हि दानसंभवः कुतस्तस्य । तस्मादयमर्थः । नित्यपाके तदुद्देशो न तत्रातिथ्यादिभ्यो दानं विधीयते सुहृदादिसमागमे तु तदुद्देशः । तथा च तेभ्योऽदत्वा भोजने दोषप्रतिपादकमिदम् । यद्वा अतिथ्यादिभिः सर्वस्मिन्भुक्ते सति नात्मार्थं पुनः पाकः कर्तव्यः। तथा च **वसिष्ठः** (अ. ११ सू. ११–१२) । "शेषं दंपती भुञ्जीयातां सर्वोपयोगेन न पुनः पाकः" इति । यज्ञशिष्टेत्यनेन शेषभोजनप्रशंसेति **मेधातिथिः । गौतमश्च** (अ. ५ सू. २३) "भोजयेत्पूर्वमतिथिकुमारव्याधितगर्भिणीसुवासिनीस्थविराञ्जघन्यांश्च" । आत्मनः पूर्वमेतान्भोजयेदिति । जघन्याः भृत्याः यस्त्वेषामतिथिभोजनात्पूर्वभोजनमुक्तं **मनुना**, तत्तु क्षुधातुराणामवश्यभोजनीयत्वाय, न तु तत्रैव तात्पर्यं वाक्यशेषे दातुः पूर्वभोजने निन्दाश्रवणात् । तस्माद्दंपत्योः शेषभोजने एव वचनानां तात्पर्यं अतिथिकुमारादिभोजने पौर्वापर्यं तु अनियतम् । एतदर्थमेव पूर्वं मनुष्ययज्ञत्वेनातिथिभोजनस्योक्तत्वेऽपि पुनरग्रे बालेत्यादिवाक्येऽतिथ्युल्लेखो मूले कृत इति बोध्यम् । शूद्राणां तु भृत्यानां पश्चादेवात्मभोजनोत्तरम् । "स्त्रीशूद्रं तर्पयेत्पश्चादिति" **यमोक्तेः । पितृगेहे इति** । इदं प्रकृतसंभवाभिप्रायं न तु विशेषणम् ।

अत्र प्रसंगादुच्यते । **लक्षसागरे सुवासिनीभोजनमाहात्म्यम् ।**

**देव्युवाच ।**

"देवदेव महादेव सर्वतन्त्रार्थकोविद । यद्यत्पृष्टं मया नाथ तत्सर्वं कथितं प्रभो ॥
"तथाप्येकः संशयो मे हृदि तिष्ठति सर्वदा । निःसंशयं कुरु प्राज्ञ यदि चास्मि तव प्रिया ॥
"सर्वेषां मन्त्रतन्त्राणां सिद्धिरुक्ता द्विजार्पणैः । शक्तीनामपि देवेश तत्र कारणमुच्यताम्" ॥

**ईश्वर उवाच ।**

"शृणु देवि प्रवक्ष्यामि लोकानां हितकाम्यया । प्रश्नोऽयं गिरिजे प्रोक्तः सावधाना भवाधुना ॥
"ब्रह्मवेत्ता ब्राह्मणस्तु मद्रूपोऽसौ न संशयः । त्वद्रूपाऽसौ तथा शक्तिरुभयोरर्पणं परम् ॥
"जगतः पितरावेतौ सर्वकामार्थसिद्धिदौ । पूजनीयौ विशेषेण यदीच्छेच्छ्रेय आत्मनः ॥
"लोके रूढिर्ब्राह्मणानां शक्तीनां न कुतो भवेत् । उपासकाः पंचविधाः पंचायतनभेदतः ॥
"शिवो विष्णुर्गणाधीशः सूर्यश्चत्वार एव ते । बाहुल्याद्ब्राह्मणानां तु भोजने रूढिरीरिता ॥
"त्वमेकैव तु देवेशि दुर्लभास्त्वदुपासकाः । शक्तीनामर्पणं देवि शाक्तानां सर्वसिद्धिदम् ॥
"शैवादीनां विशेषेण ब्राह्मणाः समुदीरताः । भेदे भेदस्त्वभेदे तु उभयं परिकीर्तितम् ॥
"इति ते सर्वमाख्यातं यत्पृष्टोऽहमिह त्वया। अतः किं श्रोतुकामाऽसि ब्रूहि सर्वं वदामि ते" ॥

इति । अतएव

"स्त्रीमृताहे स्त्रियो भोज्याः पितरः स्त्रीसपिण्डने। होमं तु पितृणामेव पिण्डदानं तु वर्गयोः"॥

इति **कपर्दः** संगच्छते। अनयोः क्रमानियमसूचनायावश्यकत्वसूचनाय च पुनरातिथ्युपादानम्। भृत्योऽवश्यपोष्यः। बहुवचनान्तेन द्वन्द्व इत्याह। **अतिथिभृत्यांश्चेति**। विधिरयं नानुवाद इत्याशयेनाह। **कर्तव्यमिति**। अध्याहारोऽयं दंपत्योरिति कृत्यानामिति षष्ठी॥ १०५॥

## याज्ञवल्कीये १०६ श्लोकः

भोजनविधिमाह। **आपोशानेनोपेति**। तथाशब्दार्थमाह। **चेति**। अपः अशानेत्येवं यत्राभिधीयते तदपोशानमिति कर्मनामधेयं मयूरव्यंसकादिस्तदाह। **शानाख्येन कर्मणेति**। अत्रान्नमित्युक्त्वा तस्य चौदनमात्रे रूढेस्तदन्यत्रापोशानं नेति सूचितमिति केचिदाहुः। अन्ये तु।

"अद्यतेत्ति च भूतानि तस्मादन्नं तदुच्यते"॥ इति **तैत्तिरीयश्रुतौ** कर्मकर्तृव्युत्पत्तिप्रदर्शनेनौदनेऽपि योगाविशेषाद्भक्ष्यमात्रवाच्यन्नशब्दः। अत एव "अन्नसत्रप्रवृत्तानामाममन्नमगर्हितम्। भुक्त्वा पक्वान्नमेतेषां त्रिरात्रं तु पयः पिबेत्"॥ इत्यपि संगच्छते। तस्मात्सर्वत्रापोशानमित्याहुः। वस्तुतस्तु अत्र प्रकरणेऽन्नशब्दस्य यौगिकत्वेऽप्युक्तरीत्या धान्यमात्रे रूढेः। "आश्रमश्राद्धे भवेन्नैतदपोशानं च पञ्चमम्" इति **हेमाद्रौ** मरीच्याद्यैरामश्राद्धेऽपोशाननिषेधात्पक्वान्नभोजने एवापोशानं न भक्ष्यमात्रे पाकश्च विकृतिः। सा च जलसंसर्गे एव। तेन तत्संसर्गपक्केऽन्ने सर्वत्रापोशानम्। अत एव तत्र शूद्रस्पर्शदोषोऽपि तदपक्के तु अन्ने सक्तुपृथुकचणकादौ न। एवं कन्दमूलफलादौ पक्केऽपि न। अन्नत्वाभावात्। एवमामे चणकादावपि न पाकाभावादित्यादिबोध्यम्। एवः कार्यपदेन संबंध्यते। तेनावश्यकत्वसूचनद्वाराऽतत्करणे दोषः सूचितः। अत एवोक्तं **चिन्तामणौ**।

"अपोशानमकृत्वा तु यो भुङ्क्ते द्विजसत्तमः। भुञ्जानो यदि वा ब्रूयाद्गायत्र्यष्टशतं जपेत्"॥ इति।

ननु प्रकरणादेव पूर्ववद्गृहस्थलाभे द्विजन्मग्रहणमधिकमत आह। **द्विजन्मेति**॥ १०६॥

## याज्ञवल्कीये १०७ श्लोकः

अथोत्तरार्धेन सायंकालिकधर्मं वक्तुं तत्प्रसङ्गादुभयकालसाधारणधर्मं पूर्वत्रानुक्तमाह पूर्वार्धेन। **अतिथित्वेनेति**। अत एवानन्तर्यात्स्वभोजनान्तरमिति भ्रमनिरासाय शेषमाह। **वैश्वेति**। इदं च दिनविषयम्। अत **एवाश्वमेधिके**।

"क्षुत्पिपासाश्रमार्त्ताय देशकालगताय च। सत्कृत्यान्नं प्रदातव्यं यज्ञस्य फलमिच्छता॥

"दूराच्चोपगतं श्रान्तं वैश्वदेवे उपस्थितम्। अतिथिं तं विजानीयान्नातिथिः पूर्वभागतः"॥ इति॥

यथाश्रुतेऽन्वयानुपपत्तेः शेषमाह। **युगपत्प्राप्तानामिति**। उद्देश्यस्य संबन्धत्वेन विवक्षायां षष्ठी। अनुपूर्वश इत्यस्य समुच्चित्य द्योतकतयोभौ ब्राह्मणाविति वदुपपत्तावपि एकेनैव निर्वाह इति सूचनाय तस्य धर्मपरत्वमावश्यकमित्याह। **ब्राह्मणाद्येति**। तदुक्तं **वसिष्ठेन** (अ. ११ सू. ६) "ततोऽतिथीन्भोजयेत्। श्रेयांसं श्रेयांसमानपूर्व्येणेति" श्रेयांसं जात्याद्युत्कृष्टम्। **मनुना**ऽपि

"मन्त्रकर्मविपर्यासाद्दुरितादर्गतादपि। तत्फलं नश्यते कर्तुरिदं न श्रद्धया हुतम्"॥ इति।

तत्फलं अग्निहोमफलमिदं विप्रायान्नदानरूपं पूर्वप्रक्रमात् । शक्त्येत्यस्य व्याख्या **यथेति** । यद्यपि ब्राह्मणगृहे राजन्यस्य नातिथित्वं तथापि सति विभवे ब्राह्मणं प्रति तस्य पूज्यत्वमाह **पराशरः** । ( १।१।५४ )

"यस्य छत्रं हयांश्चैव कुञ्जरारोहमृद्धिमत् । ऐन्द्रं स्थानमुपासीत तस्मात्तं न विचारयेत्" ॥ इति ।

कुञ्जरेत्यादिद्वयमैन्द्रस्थानविशेषणम् । जात्यादिभिर्हीनस्य पूजा कर्तव्या न वेति न विचारयेत् । अपि तु फलकामेनेश्वरविभूतित्वात्पूजनीय एवेत्यर्थः । अत्र विशेषमाह **मनुः** । ( अ. ३ श्लो. १०७ )

"आसनावसथौ शय्यामनुव्रज्यामुपासनम् । उत्तमेषूत्तमं कुर्याद्धीने हीनं समे समम्" ॥ इति ।

अन्नादिकं तु सममेवैकपङ्क्तौ ।

"विद्यातपोधिकानां तु प्रथमासनमुच्यते । पङ्क्तौ सह स्थितानां तु भोजनादि समं स्मृतम्" ॥

इति **हारीतात्** ।

"यद्येकपङ्क्तौ विषमं ददाति स्नेहाद्भयाद्वा यदि वाऽर्थहेतोः ।
वेदेषु दृष्टामृषिभिश्च गीतां तां ब्रह्महत्यां मुनयो वदन्ति" ॥

इति **वसिष्ठाच्च** ।

अग्नेर्मध्यमणिन्यायेनान्वयादाह । **सायं कालेऽपीति** । यदा कदाचिन्न तु वैश्वदेवावसाने एवेत्यर्थः । तथा प्राप्तोऽप्यातिथिरेवेति भावः । अनेन दिनतो वैलक्षण्यं सूचितम् । तत्र तु वैश्वदेवोपस्थितस्यैव तत्वं न तु ततः प्राक्तनादेरित्युक्तं प्राक् । निवारणे दोषबाहुल्यादाह । **प्रत्याख्येय एवेति** । तदुक्तं **मनुना** । ( अ. ३ श्लो. १०५ )

"अप्रणोद्योऽतिथिः सायं सूर्योढो गृहमेधिना । काले प्राप्तस्त्वकाले वा नास्यानश्नन्गृहे वसेत्" ॥ **इति** ।

सूर्योढः अस्तं गच्छता सूर्येण देशान्तरगमनाशक्तिमुत्पाद्य गृहं प्रापित इत्यर्थः । **यद्यप्येति** । क्षीणवृत्तित्वादिति भावः । अत्र संमतिमाह । **यथाहेति** । **सूनृता** प्रिया सत्या । **अपिस्त्वर्थे** ।

"शिलानप्युञ्छतो नित्यं पञ्चाग्नीनपि जुह्वतः । सर्वं सुकृतमादत्ते ब्राह्मणोऽनर्चितो वसन्" ॥

इतीतः प्राक्तनो **मनुः** ( ३।१०० ) । अयं प्रकारोऽग्रे भिक्षास्थलेऽपि बोध्यः । अत एव **आपस्तम्बः** (२।४।१३–१४) । "काले स्वामिनावन्नार्थं न प्रत्याचक्षीयाताम् । अभावे भूमिरुदकं तृणानि कल्याणी वागित्येतानि वै सतोऽगारे न क्षीयन्ते कदाचनेति" ।

"अतिथिर्यस्य भग्नाशो गृहस्थस्य तु गच्छति । तस्मात्सुकृतमादाय दुष्कृतं तु प्रयच्छति" ॥

इति **विष्णुः** । 'कृशवृत्तेरपि ब्राह्मणोऽनश्नन्सुकृतमादत्ते' इति **शङ्खश्च** । कृशवृत्तेरपि दरिद्रस्यापि । **पराशरश्च** ( १।५७–५८ ) ।

"वैश्वदेवविहीना ये आतिथ्येन बहिष्कृताः । सर्वे ते नरकं यान्ति काकयोनिं व्रजन्ति च ॥

"पापो वा यदि चाण्डालो विप्रघ्नः पितृघातकः । वैश्वदेवे तु संप्राप्तः सोऽतिथिः स्वर्गसंक्रमः" ॥ **इति** ।

पाप उपपातकी । एषां भोजनीयत्वमेव न त्वशेषातिथ्यसत्कारार्हत्वं विप्रगृहे क्षत्रादीनामप्यतिथित्वाभावप्रतिपादनात् । तथा च **मनुः** । ( अ. ३ श्लो. १०२ )

---

१ क भयात ।

"एकरात्रं तु निवसन्नतिथिर्ब्राह्मणः स्मृतः। अनित्यं हि स्थितो यस्मात्तस्मादथितिरुच्यते॥

"ब्राह्मणस्य त्वनतिथिर्गृहे राजन्य उच्यते। वैश्यशूद्रौ सखा चैव ज्ञातयो गुरुरेव च"॥ इति॥

एवं च प्रियस्य यदतिथित्वमुक्तं **शातातपेन**।

"प्रियो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा। प्राप्तस्तु वैश्वदेवान्ते सोऽतिथिः स्वर्गसंक्रमः"॥ इति।

सोऽविचार्य भोजनीय एवेत्यर्थः। तत्संबन्धपुरस्कृत्य देवादागतस्य मत्प्रियस्य मच्छिष्यस्य चेदं गृहमिति संबन्धं पुरस्कृत्यागतस्य तु मनूक्तस्तत्वाभाव इति बोध्यम्। उक्त**शातातपा**देव।

"काममभ्यर्चयेन्नित्यं नाभिरूपमपि त्वरिम्। द्विषता हि हविर्भुक्तं भवति प्रेत्य निष्फलम्"॥ इति॥

"नष्टशौचे व्रतभ्रष्टे विप्रे वेदविवर्जिते। दीयमानं रुदत्यन्नं किं मया दुष्कृतं कृतम्"॥

इति च **मनूक्तं** नातिथिविषयमिति बोध्यम्॥ १०७॥

## याज्ञवल्कीये १०८ श्लोकः

तत्प्रसङ्गादतिथिवद्यतिब्रह्मचार्यादिष्वपि पूज्यमित्याह। **सत्कृत्येति**। स्मृत्यन्तरानुरोधेनाधिकसंग्रहायान्यथा व्याचष्टे। **भिक्षवे सामान्येनेति**। तदवच्छिन्नायासत्कारेणेत्यर्थः। **तथा चोक्तम्**।

"ब्रह्मचारी यतिश्चैव विद्यार्थी गुरुपोषकः। अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः स्मृताः"॥

"भिक्षाहारो निराहारो भिक्षा नैव प्रतिग्रहः। अवधूता च पूता च सोमपानं दिने दिने"॥ इति।

विद्यार्थी ब्रह्मचारिभिन्नो व्रतस्नातकादिः। यस्य पाकसामग्रीवैकल्यं तादृशोऽध्वगः अनध्वगोऽपि सामग्रीविकलः क्षीणवृत्तिः। एते भिक्षायां पक्वान्ने अधिकारिणः। सोमपानमिति वाक्यशेषः प्रशंसापरो बोध्यः। सत्कृत्येत्यस्य व्याख्या विधिनेत्यन्ता। तत्र **गौतममाह**। **स्वस्तीति**। स्वस्तिशब्दं भिक्षुकं वाचयित्वा उदकं दत्वा भिक्षादानं कर्तव्यमित्यर्थः। अयं यतिब्रह्मचारिविषयक इति भावः। अत एव **व्यासः**।

"यतिहस्ते जलं दद्याद्भैक्षं दद्यात्पुनर्जलम्। भैक्षं पर्वतमात्रं स्यात्तज्जलं सागरोपमम्॥

"यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ। तयोरन्नमदत्वा तु भुक्त्वा चान्द्रायणं चरेत्"॥ इति।

अत **एवापस्तम्बः** (१।३।२६)।

"प्रत्याचक्षणानां समाहितो ब्रह्मचारीष्टं दत्तं हुतं प्रजां पशून्ब्रह्मवर्चसमन्नाद्यं वृङ्क्ते तस्मादुह वै ब्रह्मचारिसङ्घं न प्रत्याचक्षीत" इति। **ब्रह्मचारीति** यतेरप्युपलक्षणम्। अत्र संघेत्युक्तिः समर्थपरा।

अत एव **पराशरः** (१।५२)।

"दद्याच्च भिक्षात्रितयं परिव्राड्ब्रह्मचारिणाम्। इच्छया च ततो दद्याद्विभवे सत्यवारितम्"॥ इति। एतेन बहुषु भिक्षुष्वागतेष्वशक्तेन किं कर्तव्यामिति शङ्का समाहिता।

**बौधायनश्च** (२।३।१३) "यदि बहूनां न शक्नुयादेकस्मै गुणवते दद्याद्यो वा प्रथममागतः स्यादिति"। युगपदागमने आद्यः पक्षः क्रमेणागमने द्वितीय इति व्यवस्थितो विकल्पः। **मनुरपि**।

"अपूर्वः सुव्रती विप्रो ह्यपूर्वश्चातिथिस्तथा। वेदाभ्यासरतो नित्यं त्रयोऽपूर्वादिने दिने"॥ इति। सुव्रती यतिः। वेदाभ्यासरतो ब्रह्मचारी। तावप्यतिथिवत्पूज्यावित्यर्थः। अत एव **पाद्मे**

"यः पात्रपूर्णां भिक्षां यतिभ्यः संप्रयच्छति। विमुक्तः सर्वपापेभ्यो नासौ दुर्गतिमाप्नुयात्"॥ इत्युक्तम्। पाखण्डिपतितादीनामपि 'नमोऽस्तु धर्मायेति' वदन् गृहाद्बहिरवश्यं भिक्षां दद्यादिति। **ब्राह्मे** उक्तम्। अत एव **मनुशातातपाभ्यां** पाखण्डिन इत्यादिनाऽर्चानिषेध एवोक्त इत्यग्रे स्फुटीभविष्यति।

**मनुः** ( अ. ३ श्लो. ९६ )।

"कृत्वैतद्बलिकर्मैवमतिथिं पूर्वमाशयेत्। भिक्षां च भिक्षवे दद्याद्विधिवद्ब्रह्मचारिणे॥
"यत्पुण्यफलमाप्नोति गां दत्वा विधिवद्गुरोः। तत्पुण्यफलमाप्नोति भिक्षां दत्वा तु भिक्षवे॥
"भिक्षामप्युदपात्रं वा सत्कृत्य विधिपूर्वकम्। वेदतत्त्वार्थविदुषे ब्राह्मणायोपपादयेत्"॥ इति।

पूर्वं नित्यश्राद्धतः। इदं च तत्कालेऽतिथिप्राप्तौ इति बोध्यम्। **ग्राससम्मितेति**। ग्रासप्रमाणेत्यर्थः। ग्रासमात्रेत्यत्र मात्रच्। **च चतुरिति**। तच्चतुरिति पाठान्तरम्। हन्तस्तैस्तु चतुर्भिरिति पाठः। **तत्त्रिगुणमिति**। तद्विगुणमिति पाठान्तरम्।

"पुष्कलानि च चत्वारि हन्तकारं विदुर्बुधाः" इत्युत्तरार्द्धे पाठान्तरं तन्मते पुष्कलस्यैवाग्रमित्यपि संज्ञा। अत एव **मनुः**।

"ग्रासमात्रं भवेद्भिक्षा ह्यग्रं ग्रासचतुष्टयम्। अग्रं चतुर्गुणीकृत्य हन्तकारो विधीयते"॥ इति। अयमप्यनुकल्पो बोध्यः। अत एव प्रागुक्त**पाद्म**संगतिः। **शातातप**श्च।

"भिक्षां वा पुष्कलं वाऽपि हन्तकारमथापि वा। असंभवे सदा दद्यादुदपात्रमथापि वा"॥ इति। अनया रीत्या ब्राह्मणभोजनपर्याप्तान्नदानरूपमनुष्ययज्ञकरणशक्त्यभावेऽनुकल्पो बोध्यस्तदुक्तं **कौर्मे**।

"हन्तकारमथाग्रं वा भिक्षां वा शक्तितो द्विजः। दद्यादतिथये नित्यं बुध्येत परमेश्वरम्"॥ इति।

अतिथिं परमेश्वरबुद्ध्या पूजयेदित्यर्थः। मित्रादीनामतिथित्वाभावो **मनु**नोक्तः। प्राक्**मार्कण्डेयेन** चोक्तम्।

"आचम्य च ततः कुर्यात्प्राज्ञो द्वारावलोकनम्। मुहूर्तस्याष्टमं भागमुदीक्ष्यो ह्यतिथिर्भवेत्॥
"न मित्रमतिथिं कुर्यान्नैकग्रामनिवासिनम्। अज्ञातकुलनामानं तत्काले समुपस्थितम्॥
"बुभुक्षुमागतं श्रान्तं याचमानमकिंचनम्। ब्राह्मणं प्राहुरतिथिं संपूज्यः शक्तितो बुधैः"॥ इति।

एवं च तेषां भोजनावश्यकत्वप्राप्तावुक्तमुत्तरार्द्धेन तत् तत्र प्रत्यासत्त्याऽऽह। **भोजने**ति संबन्धिपदेनैव सिद्धे बान्धवपदवैयर्थ्यं परिहरति। **संबन्धिन इति**। **वा** चार्थो। मातापितृसंबन्ध इति पाठः। मातापितृसंबन्ध्या इति पाठे मध्यमपदलोपिसमासः। तथा च साक्षात्संबन्धिन आद्येन ग्रहणं व्यवहितसंबन्धिनो द्वितीयेनेति तात्पर्यं तत्काले समागतस्य विमुखगमनं सर्वथा नोचितमिति तत्त्वम्॥ १०८॥

## याज्ञवल्कीये १०९ श्लोकः

यत्तु **वसिष्ठः** ।

"ब्राह्मणाय राजन्याय वा महोक्षं महाजं वा पचेत् । एवमस्यातिथ्यं कुर्वन्तीति" ॥

यत्तु कलिवर्ज्ये ।

"दीर्घकालं ब्रह्मचर्यं धारणं च कमण्डलोः । गोत्रान्मातुः सपिण्डाद्वा विवाहो गोवधस्तथा ॥

"नराश्वमेधौ मद्यं च कलौ वर्ज्यं द्विजातिभिः" इति **ब्राह्मात्** । तदेतत्ध्वनयन्नाह । **महोक्षमिति** । विशेषेण व्याख्या । **धौरेयमिति** । भारवहनसमर्थमित्यर्थः । **श्रोत्रियायोक्तेति** । ब्राह्मणाय राज्ञे चेत्यर्थः । उपकल्पनमाह । **भवदिति** ।

ननु किमर्थमिदमत आह । **तत्प्रीत्यर्थमिति** । तथोक्तिस्वारस्यादेवाह । **न त्विति** । उक्तक्रमेणैवाकाङ्क्षोदयादादौ अस्यादृष्टचरत्वनिरासायाह । **यथेति** । तत्राद्ये हेतुमाह । **प्रतीति** । **उक्षेति** । उक्षादीत्यर्थः । द्वितीये तमाह । **अस्वर्ग्यमिति** । हिंसायाः सर्वथा निषिद्धत्वेन तत्कल्पनानौचित्येनात्र तस्यानविहितत्वमेवोक्तरीत्योपपत्तेः । **वसिष्ठ**स्य तु कलिवर्ज्यत्वेन श्रौतहिंसा तुल्यत्वशङ्काऽपि न । अत एव लोकविरोधोऽपि नेतिभावः ।

नन्वेतावता न तस्य कश्चनोपकार इति न प्रीत्यातिशयोऽत आह । **तस्मात्सत्क्रियाद्येव कर्तव्यमिति** । तस्मादुक्तरूपबुद्धिस्थाद्धेतोः । एतदर्थमेवोत्तरार्धोक्तिर्विध्यध्याहार इति भावः । वचनान्तस्य दानान्तेन समाहारद्वंद्वः दानपदस्य संबन्धमात्रार्थकत्वं वा । प्रियसत्यवाक्यस्यान्यस्य प्रकृतेऽसंभवादाह । "**धन्या इति** । **गौतमो**ऽपि ( अ. ५ सू. ३० ) । श्रोत्रियस्य तु पाद्यमर्घ्यमन्नविशेषांश्च कारयेदिति" । श्रोत्रियस्य श्रुताध्ययनसम्पन्नस्य ब्राह्मणस्य राज्ञश्च । अयं च मूलोक्तादग्रिमः । वसिष्ठवत्सामान्ये वाच्ये मौलविशेषोक्तिफलमाह । **अश्रोत्रिये इति** । **पुन**स्त्वर्थे । एवं चैतदर्थमेवात्र तथोक्तिर्न पूर्वार्द्धोक्तार्थमिति न **वसिष्ठ**विरोधः । श्रोत्रियत्वस्य साधारणत्वाद्राजन्यस्यापि संग्रहः । यद्वा एतदनुरोधेन **वासिष्ठे**ऽपि ब्राह्मणराजन्यपदे श्रोत्रियपदे एवेति न विरोधः । 'अश्रोत्रियस्यासनोदके' इति **गौतम**पाठः (अ.५सू.२९) । व्यक्तिप्राधान्यविवक्षयेतरेतरद्वंद्वः । ब्राह्मणस्य राज्ञश्चेत्यर्थः । पादप्रक्षालनार्थमुदकदानामिति **हरदत्तः** ॥ १०९ ॥

## याज्ञवल्कीये ११० श्लोकः

केषांचित्पूजाप्रसंगादाह । **प्रतिसंवत्सरमिति** । अत एव वैलक्षण्यसूचक**स्तुः** । विनिगमनाविरहादाह । **विद्येति** । **विवाह्यः** पाणिं ग्राहणीयः । तदाह । **जामातेति** । **उपस्थिताये**त्यस्य मध्यमणिन्यायेनान्वयः । अग्रे च विभक्तिविपरिणामेनान्वयः । तत्र चोद्देश्यस्य संबन्धत्वेन विवक्षया षष्ठी । अत्र चेन पूर्वत्रादिना एततुल्यऋत्विजादिपरिग्रहः । **आश्वलायना**नुरोधेनैवाह । **गृहमिति** । **मधुपर्केणेति** च । ननु नायं शब्दार्थः शक्त्यभावादत आह । **अर्घशब्द इति** । तथेत्यादेरयमर्थः । **पुन**स्त्वर्थे । तेन प्रागुक्तसंग्रहः । **प्रति**र्वीप्सायाम् । यज्ञग्रहणम् विवाहस्याप्युपलक्षणम् । **तथाशब्दो**ऽर्घ्या इत्यर्थकः । तथा च यावत् यज्ञविवाहयोर्ऋत्विजादयः पूज्यास्तदाह । **संवत्सरादर्वागपीति** । लब्धम् ।

तथा च **गौतमः** ( अ. ५ सू. २५–२८ )। "ऋत्विगाचार्यश्वशुरपितृव्यमातुलानामुपस्थाने मधुपर्कः। संवत्सरे पुनः परिगते यज्ञविवाहयोरर्वाक् राज्ञश्च श्रोत्रियस्येति"। संवत्सरे इत्यनेन प्रात्यहिकत्वनिरासोऽन्तरा **च** । यज्ञेत्यनेनान्तराऽपि स उक्तः । अभिषेकादिगुणयुक्तस्य श्रुताध्ययनसंपन्नस्य गृहमागतस्य मधुपर्केण पूजा कर्तव्येत्यर्थः। चेनान्यस्यापि तत्तुल्यस्य प्रागुक्तस्य प्राग्वत्संग्रहः। **मनुरपि** ( अ. ३ श्लो. ११९।१२० )।

"राजर्त्विक्स्नातकगुरून्प्रियश्वशुरमातुलान् । अर्हयेन्मधुपर्केण परिसंवत्सरान्पुनः ॥

"राजा च श्रोत्रियश्चैव यज्ञकर्मण्युपस्थितौ। मधुपर्केण संपूज्यौ न त्वयज्ञे इति स्थितिः"॥ इति। परिसंवत्सरानिति मातुलविशेषणं बहुव्रीहिः। अन्तराऽऽह। **राजा चेति**। श्रोत्रियग्रहणं प्रागुक्तताद्भिन्नपरं यज्ञपदमुपलक्षणं प्राग्वत् तदेतत्सर्वं हृदि निधायाह। **ऋत्विज इति** । उपलक्षणमिदम्। एवं मतियज्ञामित्यपि । तथाशब्दार्थमाह । **पूज्या इति** ॥ ११० ॥

## याज्ञवल्कीये १११ श्लोकः

आवश्यकत्वं सूचयन्स्नातिथिलक्षणं विशेषमाह। **अध्वेति**। उत्तरार्धानुरोधेन पुनरुक्तेश्च गामश्वमिति वत्समुच्चयप्रतीतेराह **पारगाविति**। एतेन श्रोत्रिय इत्यादेरुत्तरार्द्धेऽन्वयो न पूर्वत्र प्रत्येकं तल्लक्षणाव्याप्त्यापत्तिरिति सूचितम्। एतावित्यस्यार्थमाह । **अध्वनीति** । प्रकृतत्वात्तत्वे न मान्यतेत्याह। **मान्यावतिथी इति**। पौनरुक्त्यं परिहरति। **यद्यप्येति**। पाणिनीयसूत्रानुसारादितिभावः। **त्रेति** अन्यथाऽन्यतरवैय्यर्थ्यं स्पष्टमेव ॥ १११ ॥

## याज्ञवल्कीये ११२ श्लोकः

धर्मान्तरमाह। **परेति**। दोषबाहुल्यसूचनाय सर्वं वाक्यमिति न्यायेनाह। **नैवेति**। अनिन्द्यामन्त्रणादित्यत्र तस्येति शेषः। अत एव कर्तरि तृतीया। तदेतदभिप्रेत्याह। **अनिन्द्येनामन्त्रणं विनेति**। साधनं कृतेति समासः। निषेधं पोषयति । **अनिन्द्येनेति**। **पादमिति**। प्राण्यङ्गत्वात्समाहारद्वंद्वः साकाङ्क्षत्वेन सामर्थ्यात्। मध्यमणिन्यायेन समुच्चयलाभेन तत्र चस्य वैयर्थ्यादाह **चकारादिति**। तथा च चस्य चापल्यमित्यत्रान्वयः। तत्र संमतिमाह। **न शिश्नोदरेति**। शिश्नचापलमकाले मैथुनेच्छा। उदरचापलं सर्वदा बिभक्षयिषा। पाणिचापलं शिल्पकर्मशिक्षाभिलाषः। पादचापलं पर्यटनम्। वाक्चापलं 'नापृष्टः कस्य चिद्ब्रूयान्न चान्यायेन पृच्छतः' (**मनुः**२।११०) इत्येतदतिक्रमेण व्यवहारः। चक्षुश्चापलं नृत्तादिदिदृक्षा। एतानि न कुर्यादित्यर्थः। उक्तहेतोरेवाह। **अतिभोजनं चेति**।

'निषेधस्य दृष्टादृष्टफलकत्वेन द्वैविध्येऽपि संभवतीति' **न्यायेन** प्रकृते आद्यफलकत्वं कथयन् व्यतिरेके हेतुमाह। **अनारोग्यादिहेतुत्वादिति**। **आदिना** मरणपरिग्रहः ॥ ११२ ॥

## याज्ञवल्कीये ११३ श्लोकः

सिंहावलोकनन्यायेन व्युत्क्रमेण प्रागुक्तद्वयशेषद्वयमर्धद्वयेनाह। **अतिथिमिति**। अत एवाह। **पूर्वोक्तमिति**। एकवचनोपपत्त्यर्थमेकवचनोपन्यासः। अत एवास्योपलक्षणत्वादाह । **वेदेति**।

आदिना सत्कारादिपरिग्रहः ।आ सीमांतमित्यत्राङ्मर्यादायामित्याह । **सीमान्तं यावदिति** । आ सीमान्तादिति क्वचित्तत्र पाठः । उक्ताशयेनैवाह। **ततो भोजनेति**। दंपत्योः शेषभोजनमिति । प्रागुक्त-भोजनान्तरामित्यर्थः । **तत इति** तु प्राग्वदाह्निककर्मक्रमसूचनायेति बोध्यम् । **शेषमिति**। अकर्मक-धातुभिरिति । कर्मत्वात् द्वितीया च। पृथगुक्तिभ्यां शिष्टादीनां भेदमाह । **प्रकृते शिष्टैरितीति** । अन्यथा सर्वत्र प्रसिद्धार्थपरित्यागे तयोर्वैयर्थ्यं स्पष्टमेव सहासने विशेषाभावात् । **आदिना** स्मृत्यादि-परिग्रहः । **चस्य** व्युत्क्रमेण सर्वत्र समुच्चयप्रतीतेराह । **इष्टैश्चेत्यादि । सहेति** । समासीतेत्यपपाठ इत्यनेन सूचितम् ।

तथा च **दक्षः** ।

"भुक्त्वा तु सुखमास्थाय तदन्नं परिणामयेत् । इतिहासपुराणाद्यैः षष्ठसप्तमकौ नयेत् "॥
"अष्टमे लोकयात्रा तु बहिः संध्या ततः पुनः "॥

अन्नपरिणामो यथा भवति तथा सुखावस्थानं कुर्यादित्यर्थः । पुराणाद्यैस्तच्छ्रवणादिभिः । बहिः संध्येति ब्रह्मचार्यादिपरम् । अग्निमतां त्वाग्निविहरणाद्यनुरोधेन गृहेऽपि संध्याद्वयं भवति ।

अत **एवात्रिः** " उभे संध्ये तु कर्तव्ये ब्राह्मणैस्तु गृहेष्वपि "इति ॥ ११३ ॥

## याज्ञवल्कीये ११४ श्लोकः

एवं दिनकृत्यमुक्त्वा रात्रिप्रथमकृत्यमाह । **उपास्येति** । अत एवाह । **तत इति** । प्रागुक्ता-देवात्रापि न्यूनतां परिहरति । **अग्नीनाग्निं वेति** । पूर्वोक्तेन विधिनेत्यत्रापि बोध्यम् । **तान्** अग्नीन् । पूर्वतो विशेषमाह । **भृत्यैरिति** ।भरणीयैरित्यर्थः । अत एवेदमुपलक्षणमित्याह। **स्ववेति** । उक्तहेतोः रात्रावस्यात्यावश्यकत्वसूचनाय पुनराह । **नातितृप्त्येति** । नशब्देन नैकधेत्यादिवत्समासः। चस्य भुक्त्वेत्यग्रेऽन्वय इति सूचयन्नाह । **चकारादिति** । वैश्वदेवादिसमुच्चायकोऽपि स बोध्यः ।

तत्र वैश्वदेवे कश्चिद्विशेषो **विष्णुपुराणे** ।

"पुनः पाकमुपादाय सायमप्यवनीपते । वैश्वदेवनिमित्तं तु पत्न्या सार्धं बलिं हरेत् ॥
"तत्रापि श्वपचादिभ्यस्तथैवान्नापवर्जनम् । अतिथिं चागतं तत्र स्वशक्त्या पूजयेन्नृप ॥
"देवातिथौ तु विमुखे गते यत्पातकं नृप । तदेवाष्टगुणं पुंसां सूर्योढे विमुखे गते ॥
"कृतपादादिशौचश्च भुक्त्वा सायं ततो गृही । गच्छेच्छय्यामस्फुटितामपि दारुमयीं नृप" ॥ इति।

सार्धमित्यनेन सायंपत्नीसाहित्यं विशेष उक्तः। पत्न्यमन्त्रमिति पाठान्तरं तदन्यासंभवे बोध्यम् । **अष्टगुणमिति** । अत एवाप्रत्याख्येय एवेति एव गर्भे प्रागुक्तम्। **दक्षः** ।

"भुक्त्वा चैव ततः पश्चात्स्वाध्यायं किंचिदाचरेत् । प्रदोषपश्चिमौ यामौ वेदाभ्यासरतिर्भवेत् ॥

"यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते" ॥ इति । **शङ्खः** । "त्रयाणामपि वर्णानां पूर्वरात्रे प्रजागरः" इति पूर्वत्र वेदग्रहणमङ्गोपाङ्गयोरप्युलक्षणम् । तदुक्तं **चतुर्विंशतिमते** ।

"वेदवेदान्तवेदाङ्गमीमांसान्यायदर्शनम्। इतिहासपुराणं च धर्मशास्त्राणि चाभ्यसेत्"। इति। अत्र दर्शनान्तः पुराणांतश्च समाहारद्वंद्वः। वेदानामन्त उपनिषद्भागः। ब्राह्मणवसिष्ठन्यायेन पृथक्तदुक्तिः प्राधान्यद्योतनार्थेति बोध्यम्। अथशब्दार्थमाह। **अनन्तरमिति**। स्मृत्यन्तरानुरोधेनाह। **स्वप्यादिति**। तद्विधिर्विष्णुपुराणे।

"नाविशालां न वा लग्नां नासमां मलिनां न च। नापि जन्तुमयीं शय्यामधितिष्ठेदनास्तृताम्॥
"प्राच्यां दिशि शिरः शस्तं याम्यायामथ वा नृप। सदैव स्वपतः पुंसो विपरीतं तु रोगदम्"॥ इति।

**वृद्धश्च**।

"स्वगृहे प्राक्शिराः शेते आयुष्यं दक्षिणाशिराः। प्रत्यक्शिराः प्रवासे तु न कदाचिदुदक्शिराः"॥ **इति**।

**स्कान्दे** च

"रात्रिसूक्तं जपेत्स्मृत्वा सर्वांश्च सुखदायिनः। नमस्कृत्याव्ययं विष्णुं समाधिस्थं जपेन्निशि"॥ इति।

**गोभिलश्च**।

"अगस्तिर्माधवश्चैव मुचुकुंदो महामुनिः। कपिलो मुनिरास्तीकः पञ्चैते सुखशायिनः"॥ **इति**। अधिकमन्यतोऽवगन्तव्यम्॥ ११४॥

## याज्ञवल्कीये ११५ श्लोकः

**ततः** स्वापानन्तरम्। **अर्धप्रहरे इति**। तत्रापि प्रसिद्धत्वात्तस्य ब्रह्मदैवत्यत्वाच्च। तदुक्तं **विष्णुपुराणे**।

"रात्रेः पश्चिमयामस्य मुहूर्तो यस्तृतीयकः। स ब्राह्म इति संज्ञो हि विहितः स प्रबोधनः"॥ इति।
"यामिन्याः पश्चिमे यामे त्यक्तनिद्रो हरिं स्मरेत्"॥ इति **व्यासोक्तेः**।

रात्रिचतुर्थयामस्यापि ब्राह्मत्वम्। तत्रेत्थं व्यवस्था। वेदाभ्यासादिबहुतरकर्मचिकीर्षुर्यामाद्यमुहूर्ते बुध्येत अन्यस्तृतीये इति। तत्र स्वापे प्रायश्चित्तमुक्तं **स्मृतिचंद्रिकायाम्**।

"ब्राह्मे मुहूर्ते या निद्रा सा पुण्यक्षयकारिणी। तां करोति तु यो मोहात्पादकृच्छ्रेण शुध्यति"॥ **इति**।

'आत्मन' इति संबन्धत्वेन विवक्षया षष्ठी। विनिगमनाविरहादाह। **कृतमिति**। **चस्य हित**मित्यग्रे संबन्धेन तत्समुच्चेयमाह। **वेदार्थेति**। अत्र हेतुमाह। **तदानीमिति**। **तत्वप्रतिभासेति**। **यथार्थज्ञानेत्यर्थः**। तत्त्वप्रतिपत्तीति पाठान्तरम्।

तथा च **कूर्मपुराणम्**।

"ब्राह्मे मुहूर्ते चोत्थाय धर्ममर्थं च चिन्तयेत्। कायक्लेशं तदुद्भूतं ध्यायीत परमेश्वरम्"॥ **इति**।

**विष्णुश्च**

"उत्थायोत्थाय बोद्धव्यं किमद्य सुकृतं कृतम्। दत्तं वा दापितं वाऽपि वाक्सत्या चापि भाषिता॥

"उत्थायोत्थाय बोद्धव्यं महद्भयमुपस्थितम्। मरणव्याधिशोकानां किमद्य निपतिष्यति" ॥ इति।

**मनुश्च** ( अ. ४ श्लो. ९२–९३ )

"ब्राह्मे मुहूर्ते बुध्येत धर्मार्थौ चानुचिंतयेत्। कायक्लेशांश्च तन्मूलान्वेदतत्वार्थमेव च ॥

"उत्थायावश्यकं कृत्वा कृतशौचः समाहितः" इति।

**कायेति**। तेन यत्र महान् क्लेशोऽल्पौ च धर्मार्थौ तदा तं परिहरेदित्यर्थः। वेदतत्वार्थो ब्रह्म तत्रोत्थानोत्तरं विष्णुमिष्टदेवतां पुण्यश्लोकादींश्च स्मरेत्।

"ब्राह्मे मुहूर्ते प्रथमं विबुध्य ह्यनुस्मरेद्देववरान्मुनींश्च" इति **वामनपुराणात्**।

"शयनादुत्थितो यस्तु कीर्तयेन्मधुसूदनम्। कीर्तनात्तस्य पापानि नाशमायांत्यशेषतः" ॥

इति **स्कान्दाच्च**। अधिकमन्यतो बोध्यम्।

अथाह्निकं सामान्येनाह। **तत इति**। स्वशब्द आत्मीयवाचीत्याह। **स्वोचिते इति**। हापयेदित्यत्र निवृत्तप्रेषणात्प्राकृतेऽर्थे णिजित्याह। **न परीति**। फलितम् तात्पर्यविषयीभूतमर्थमाह। **यथासामिति**। सेवतिः स्वरितेत्। **न पूर्वाह्णेति**। त्रेधा विभागाभिप्रायमिदम्। हेतौ पञ्चमी। **तेषु** तेषां मध्ये। पुरुषोत्तम इतिवद्धर्मोत्तर इत्यत्र समासः। तेषु धर्मोत्तरः स्यादित्यनुरोधेनाह। **अत्र यद्यपीति**। **याज्ञवल्क्य**वाक्ये इत्यर्थः। **तपोधर्मेति**। प्रतिपादितमिदमधस्तात्। आह्निकप्रकरणसमाप्तिं सूचयन्नुपसंहरति। **एवमिति** ॥ ११५ ॥

## याज्ञवल्कीये ११६ श्लोकः

अथ धर्मान्तराण्याह। **विद्येत्यादि विद्याः पूर्वोक्ता इति**। चतुर्दशेत्यर्थः। **स्मार्तं चेति**। स्मार्तं वेति पाठान्तरम्। साधारण्येनाह। **सततया वेति**। तेनानतिरिक्तत्वेऽपि तत्सिद्धिः। एषां पूजोपकरणत्वभ्रमनिरसायाह। **युक्ता इति**। ब्राह्मणादयस्त्रय इत्यर्थः। **क्रमेणेति**। ब्राह्मणादिक्रमेण विद्यादिक्रमेण चेत्यर्थः। एतेन पूर्वपूर्वबलीयस्त्वं सूचितम्। तथा च **गौतमः** "वित्तबन्धुकर्मजातिविद्यावयांसि मान्यानि"।

"पञ्चानां त्रिषु वर्णेषु भूयांसि गुणवन्ति च। यत्रः स्युः सोऽत्र मानार्हः शूद्रोऽपि दशमीं गतः"॥

( **मनुस्मृ.** अ. २ श्लो. १३७ )

परं बलीयांसि श्रुतं सर्वेभ्यो गरीयस्तन्मूलत्वात्तु धर्मस्येति विद्याया असंभवाद्वयसोऽग्रे विशिष्यान्यथोपादानादाह। **कर्मबन्धुवित्तैरिति**। विनिगमनाविरहादाह। **समस्तैरिति**। द्विजतोऽत्र विशेषमाह। **अशीतोर्ध्वमिति**। गर्भतोऽशीतेरित्यर्थः। तत्र प्रमाणमाह। **शूद्रोऽप्योति**। अशीतिवर्षप्रमाणकः पूज्य इत्यर्थः ॥ ११६ ॥

## याज्ञवल्कीये ११७ श्लोकः

वक्ष्यमाण**शङ्का**नुरोधेनाह। **भाराक्रान्त इति**। **भूपतिः**रभिषेकादिगुणयुक्तः। वक्ष्यमाण**शङ्का**नुरोधेनेत्थमुक्तम्। विनिगमनाविरहादाह। **विद्येति**। विद्या च व्रतं चोभयं च तैः स्नातक इति।

---

१ क त्ययुक्तम्।

साधनं कृतेति समासः। चस्य चक्रिणामित्यत्रान्वयं सूचयन्नाह। **चकारादिति** । आदिपदग्राह्यं प्रसिद्धमेव । **पहतेति** । अङ्गाविकलेत्यर्थः । शङ्कानुरोधेनैवात्र संबंधत्वेन विवक्षायां षष्ठीत्याह। **एतेभ्य इति** ।

ननु यथोदानासंभवोऽत आह। **एतेष्वभीति** । नृपस्तेषामित्यस्यार्थमाह । **वृद्धादीनामिति** । मान्यत्वस्याविवक्षया तात्पर्यार्थमाह । **तस्मा इति** । एवमग्रेऽपि बोध्यम्। स्नातश्चेत्यस्यार्थमाह । **भूपतेरपीति** । **मात्रं** कार्त्स्न्ये **सदैव**। सर्वावस्थायाम्। **अग्रे पंथा इति** । देय इति शेषः । एकीयमतं खण्डयति । **तच्चेति** । **चो**ह्यर्थे । **शेते** इत्यग्रे इतीति शेषः ।

युक्त्या न्यूनतां परिहरति। **वृद्धादीनामिति**। **विद्याकर्मेति**। प्रागुक्तरीत्या आह। **विद्येति**। ॥ ११७ ॥

## याज्ञवल्कीये ११८ श्लोकः

द्विजानां[1] सर्वेषां व्युत्क्रमेण धर्मानाह । **इज्याध्ययनेत्यादिना** । उत्तरार्द्धानुरोधेनाह। **चकारादिति** । प्रतिलोमानां शूद्रधर्मत्वादाह । **द्विजानुलोमानां चेति** । इज्यार्थो **यागेति** । संबन्धिनोऽधिकरणत्वविवक्षया सप्तमीति सूचयन्नाह । **ब्राह्मणस्येति** । याजनप्रतिग्रहेति पाठः। मौलक्रमानुरोधेन तथा वा ।

"शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च। ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्" ॥ इति **गीतायां**। ( अ. १८ श्लो. ४२ )

**मनुः**। ( अ. ३ श्लो. २८६ )।

"एतद्वोऽभिहितं कृत्स्नं विधानं पाञ्चयज्ञिकम्। द्विजातिमुख्यवृत्तीनां विधानं श्रूयताम् ॥ इति ॥

द्विजातिमुख्या विप्राः। तेषां वृत्तयो जीवनोपाया इति कश्चित् । द्विजातीनां मुख्या वृत्तय इति तु **मेधातिथिः**। ( **मनु**स्मृ. अ. १० श्लो. ७४–७५ )।

"ब्राह्मणा ब्रह्मयोनिस्था ये स्वकर्मण्यवस्थिताः। ते सम्यगुपजीवेयुः षट्कर्माणि यथाक्रमम्" ॥

उपजीवेयुरनुतिष्ठेयुर्धातूनामनेकार्थत्वात् ।

"अध्यापनमध्ययनं यजनं याजनं तथा। दानं प्रतिग्रहश्चैव षट्कर्माण्यग्रजन्मनः" ॥ इति

तथा। ( अ. ४ श्लो. २–६ )।

"अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः। या वृत्तिस्तां समास्थाय विप्रो जीवेदनापदि ॥
"यात्रामात्रप्रसिद्ध्यर्थं स्वैः कर्मभिरगर्हितैः। अक्लेशेन शरीरस्य कुर्वीत धनसञ्चयम् ॥
"ऋतामृताभ्यां जीवेत मृतेन प्रमृतेन वा। सत्यानृताभ्यामथ वा न श्ववृत्त्या कथं च न ॥
"ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम्। मृतं च याचितं भैक्षं प्रमृतं कर्षणं स्मृतम् ॥

---

१ क सर्वेषाम्। २ क वृत्तिमाह।

"सत्यानृतं तु वाणिज्यं तेन चैवोपजीव्यते। सेवा श्ववृत्तिराख्याता तस्मात्तं परिवर्जयेत्" ॥

उञ्छशिलयोर्वक्ष्यमाणस्वरूपयोः सत्यलोकप्राप्तिहेतुत्वादृतत्वेनोक्तिः । पराहिंसनात्तस्यामृतत्वम् । याचितस्य परदुःखोत्पादकत्वेन हिंसाहेतुत्वान्मृतत्वं याचितस्य संज्ञातरं भैक्षमिति । भिक्षाभिक्षाया-मित्युक्तेः । अत्र भैक्षशब्देन सामूहिकतद्धितांतेन बहवो याचितव्यानैकः कदर्थनीय इति सूच्यते । अत एव पुनरुक्तिः । प्रकर्षेण प्राणिनां मारकत्वात्प्रमृतत्वम् । एकदेशे सत्योक्तेः सत्यानृतत्वम् । अत्र याजनाध्यापनप्रतिग्रहैर्लाभोऽपि याचितोऽयाचितो वा भवतीति न स पृथगुक्त इति । अत्र 'द्विजाति-मुख्यवृत्तीनामिति' 'विप्रो जीवेदनापदीति' चोपक्रम्य कृषिवाणिज्ययोर्**मनु**नोक्तत्वान्न तयोरापद्येव वर्णान्तरवृत्तितया ब्राह्मणैरनुष्ठानं किं तु स्ववृत्त्यैवेति लभ्यते । तथा च क्षत्रियवृत्त्यपेक्षया उत्कृष्टत्वं तदेतत्ध्वनयन्नाह । **तथेतीति** । ब्राह्मणस्येति शेषः । विनाऽपि तं समुच्चयलाभोऽन्यथान्यूनतापत्ति-रिति भावः । **कृषीति** । ब्राह्मणस्येति पूर्वतोऽनुवर्तते । **अस्वेति** । छेदः तेन स्वयंकृते अन्येन कारिते ब्राह्मणस्याधिके कुसीदमपि अस्वयं कृतमेवाधिका वृत्तिरिति **हरदत्तः** । पृथक् कुसीदग्रहणं स्वयंकृतस्याप्यभ्यनुज्ञानार्थं कुसीदवृत्तिर्धर्म्येति प्रदेशान्तरे उक्तेरिति **कल्पतरुः** । युक्तस्तु आद्यः । तस्यान्यथासुयोजत्वात्तयोर्भेदाच्च । अत्र द्वितीयपक्षः कृषिवाणिज्ययोरभावे । तथा च **कूर्मपुराणम्** ।

"कुसीदकृषिवाणिज्यं प्रकुर्वीतास्वयंकृतम् । कृषेरभावे वाणिज्यं तदभावे कुसीदकम्" ॥ इति ।

अत्र स्वयंकृतास्वयंकृतादिव्यवस्थाऽग्रे विशदीभविष्यति ।

**पराशरोऽपि** ( १।१।२ ) । "षट्कर्मसहितो विप्रः कृषिकर्म समाचरेत्" इति ।

"हिंसायां तु बहुक्लेशः कृषिं यत्नेन वर्जयेदिति" विप्रक्षत्रियावुद्दिश्य कृषिनिषेधकं **मनु**वचनं तु स्वकृताभिप्रायमित्यविरोधः । एवम् ।

"न कुर्यात्कृषिवाणिज्यं सेवावृत्तिं तथैव च । ब्राह्मण्याद्धीयते तेन तस्मात्तानि विवर्जयेत् ॥
"कुर्याद्धर्माविरोधेन धनधान्यस्य संग्रहम्" ॥ इति **चतुर्विंशतिमत**स्यापि गतिर्बोध्या ।

अत्र नपुंसकमनपुंसकेनेत्येकशेषेण तानीति साधुरितिबोध्यम् ।

यत्तु "कुसीदकृषिवाणिज्यं प्रकुर्वीत स्वयंकृतम् । आपत्कालेऽन्यथा कुर्वन्नेनसा युज्यते द्विजः" ॥

इति **बृहस्पति**वचस्तत्कर्षकान्तरासंभवे ज्ञेयं आपत्काले इत्युक्तेरितिबोध्यम् ।

ऋतादिवृत्त्यनुवृत्तौ **यमः** । "आद्याश्चतस्रः श्रेष्ठाः स्युर्ब्राह्मणानां च वृत्तयः" ॥ इति ।

अध्यापनसमीपतथाशब्देनाद्यार्थोक्तेस्तस्यापि समुच्चय इति ध्वनयन्न्यूनतां परिहरति । **अध्यापनमिति** । **आपदिति** । तत्र विधिरित्यर्थः । **अब्राह्मेति** । नञिव युक्तन्यायेन क्षत्रियाद्वैश्याद्वा विद्योपादानमित्यर्थः । एवं सति प्राप्तसर्वशुश्रूषावारणाय परिसंख्यामाह । **अनुगमनमिति** । पश्चाद्गमनमेव शुश्रूषासमाप्तिपर्यंतमित्यर्थः । **समाप्ते इति** । प्रपाठकेऽध्ययने वा समाप्तिं गते सति स एव ब्राह्मणस्तस्य गुरुरित्यर्थः । अत एवोक्तम् । "अनुव्रज्यानुशुश्रूषा यावदध्ययनं गुरोरिति" । आपदि कर्मान्तरस्य वक्ष्यमाणत्वादाह । **एतान्यनापदीति** । प्रकृताशयेनाह । **षडित्यादि** । **अस्य** ब्राह्म-

णस्य । विशुद्धाच्चेति **चोव्युत्क्रमे** । यदीयप्रतिग्रहे विशिष्यप्रायश्चित्तानुक्तिस्तस्मादित्यर्थः । अतः धर्मार्थत्वात् । **नप्रतीति** । वक्ष्यमाणप्रकारान्तरेण निर्वाहसंभवादिति भावः । प्रागुक्तक्रमानुरोधेनाह । **प्रवचनयाजनेति** । **नियमः** । आवश्यकत्वम् ॥ ११८ ॥

## याज्ञवल्कीये ११९ श्लोकः

धर्मार्थप्रागुक्तकर्मत्रयसत्वादाह । **प्रधानमिति** ।

**मनुः** ( अ. १० श्लो. ७७।७८।८० ) ।

"त्रयो धर्मा निवर्तन्ते ब्राह्मणाः क्षत्रियं प्रति । अध्यापनं याजनं च तृतीयश्च प्रतिग्रहः ॥
"वैश्यं प्रति तथैवैते निवर्तेरन्निति स्थितिः । न तौ प्रति हि तान्धर्मान्मनुराह प्रजापतिः ॥
"वेदाभ्यासो ब्राह्मणस्य क्षत्रियस्य तु रक्षणम् । वार्ता कर्मैव वैश्यस्य विशिष्टानि स्वकर्मसु"॥इति।

ब्रह्मण इमे ब्राह्मणाः । ब्राह्मणसंबन्धिन इत्यर्थः ।

"शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् । दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥
"कुसीदं कृषिवाणिज्यं वैश्यकर्म स्वभावजाम्"॥ इति । **गीतायाम्** (अ.१८श्लो.४३–४४)।

'क्षत्रिये' इति सप्तमी प्राग्वदित्याशयेनाह । **क्षत्रियस्येति** । कर्तृप्रत्ययान्तपशुपालशब्दाद्भावे ष्यञित्याह । **पशुपालनेति** । तयोर्भेदमाह । **कुसीदमित्यादि** । उभयत्र वृत्त्यर्थत्वयोर्मानमाह । **शस्त्रेति** । प्राधान्येनाभ्यर्हितत्वविवक्षया पूर्वनिपातः । मन्त्रामन्त्रकृतो भेदः **वणिग्**वाणिज्यम् । **पशुकृषी** इति द्विवचनम् । पशुशब्दस्तत्पालनपरः । धर्मस्त्वित्याद्युत्तरान्वयि ।

**हारीतः** । "धनुर्वेदव्रतस्नातोऽध्ययनयजनदानधर्मशिष्टपालनाशिष्टनिग्रहानाभिजितषड्भागवृत्तिर्वेदव्रतैकदेशीति" । अत्र स्नातशब्दो धनुर्वेदव्रतैः प्रत्येकं संबध्यते । तेन धनुःस्नातः अधिगतशस्त्रास्त्रविद्यो, वेदस्नातो, व्रतस्नातश्चेत्यर्थः । **अभीति** अभिजितानां परभूम्यादीनां षड्भागग्रहणवृत्तिः । **वेदव्रतैकदेशी** वेदव्रतयोरेकदेशेनापि चरितार्थः ।

**पराशरः** ( १।१।६१ ) ।

"क्षत्रियेण प्रजाः पाल्याः शस्त्रपाणिः प्रचण्डवान् । निर्जित्य परसैन्यानि क्षितिं धर्मेण पालयेत्"॥ **इति**
प्रचण्डवान् वीरपुरुषसहितः । **विष्णुपुराणे** ।

"दानानि दद्यादिच्छातो द्विजेभ्यः क्षत्रियोऽपि हि । यजेच्च विविधैर्यज्ञैरधीयीत च पार्थिवः ॥
"शस्त्राजीवी महारक्षा प्रवरा तस्य जीविका । तस्यापि प्रथमे कल्पे पृथिवी परिपालनम् ॥
"धरित्री पालनेनैव कृतकृत्यो नराधिपः । भवन्ति नृपतेरंशो यतो यज्ञादिकर्मणः" ॥ इति ।

**अग्निपुराणे** ।

"न्यायेनार्जनमर्थस्य वर्द्धनं रक्षणं चरेत् । सत्पात्रप्रतिपत्तिश्च राजवृत्तिश्चतुर्विधा" ॥ **इति** ।
अत्र राजशब्दः क्षत्रियमात्रपरः । न्यायेन धर्मेनार्जनादेः सर्वसाधारणत्वात् ।

**पराशरः ।**

"यजनाध्ययने दानं पाशुपाल्यं तथा विशि । वाणिज्यं च कुसीदं च कर्मषट्कं प्रकीर्तितम् ॥
"लोककर्मरथानां च गवां च परिपालनम्" । इति

**देवलः** । "वैश्यधर्मोऽध्ययनयजनप्रदानैर्धर्मानुष्ठानं ब्राह्मणक्षत्रियशुश्रूषा पापवर्जनं कलत्रपोषणं कर्षणपशुपालनभारोद्वाहनपण्यव्यवहारनर्त्तनगायनतालावतरणामिति" । अत्र वादनं रंगमल्लभूमिस्तेन मल्लविद्योपलक्ष्यते ।

**मनुः** । ( अ. ९ श्लो. ३२६–३३३ )

"वैश्यस्तु कृतसंस्कारः कृत्वा दारपरिग्रहम् । वार्तायां नित्ययुक्तः स्यात्पशूनां चैव रक्षणे ॥
"प्रजापतिर्हि वैश्याय सृष्ट्वा परिददे पशून् । ब्राह्मणाय च राज्ञे च सर्वाः परिददे प्रजाः ॥
"न च वैश्यस्य कामः स्यान्न रक्षेयं पशूनिति । वैश्ये चेच्छति नान्येन रक्षितव्याः कथं चन ॥
"मणिमुक्ताप्रवालानां लोहानां तांतवस्य च । गन्धानां च रसानां च विद्यादर्घबलाबलम् ॥
"बीजानामुप्तिविच्च स्यात् क्षेत्रदोषगुणस्य च । मानयोगान्विजानीयात्तुलायोगांश्च सर्वशः ॥
"सारासारं च भाण्डानां देशानां च गुणागुणम् । लाभालाभं च पण्यानां पशूनां च विवर्द्धनम् ॥
"भृत्यानां च भृतिं विद्याद्भाषाश्च विविधा नृणाम् । द्रव्याणां स्थानयोगांश्च रूपं विक्रयमेव च ॥
"धर्मेण च यत्नवृद्धावातिष्ठेयत्नमुत्तमम् । दद्याच्च सर्वभूतानामन्नमेव प्रयत्नतः " ॥ इति
वार्तायां कृषौ । कृषिगोरक्ष्यवाणिज्यानि वार्तापदेनोच्यन्ते इति केचित् ।

लोहानां हिरण्यादीनाम् । अर्थबलाबलं मूल्योत्कर्षापकर्षौ । बीजानामुप्तीति धनजलबीजवपनस्य वेदिता स्यात् । मानयोगान्प्रस्थद्रोणादीन्मानप्रकारात्तुलायोगान्तुलाधारणप्रकारान्पलदीन्वा । भाण्डानां विक्रेयद्रव्याणां सारं चिरकालावस्थायि तद्विपरीतमसारं देशान्तराणां गुणागुणं लाभालाभहेतुत्वं भृतानां कर्मकाराणां भृतिं कर्मरूपवेतनं स्थानयोगान्तद्रूपावस्थानोपायान्क्रयविक्रयान् अयमस्य क्रयो विक्रय इत्यत्र वैश्येनापि क्रयविक्रयौ न्यूनाधिकौ न कार्यौ । तथा च **शान्तिपर्वणि जाजलोपाख्याने** प्रसंगेन वैश्यकर्मधर्मा**स्तूलाधात्रेणा**नूदिताः ।

"यद्ददासि न तन्न्यूनं यद्गृह्णासि न चाधिकम् । विक्रीणासि रसांश्चापि मद्यवर्जममायया " ॥ इति ।

**कालिकापुराणे ।**

"कृषिगोरक्षवाणिज्यं किल वैश्यस्य संमतम्" । इत्यत्र कृषिगोरक्षाविषये विशेषो वक्ष्यते । पाशुपाल्ये वर्जनीया उक्तास्तत्रैव ।

"श्वशूकरखरोष्ट्राणां मार्जारनकुलादिषु । स्वधर्ममाचरन् वैश्यो नैव कुर्यात्परिग्रहम्" ॥ इति । वणिज्यायामप्यविक्रेयाण्युक्तानि तत्रैव ।

"लवणं चाश्ममयं च तिलं दधि घृतं पयः । मधूच्छिष्टं तथा लाक्षां चर्मनीलीं तथा विषम् ॥

"शस्त्रं मांसं तथा हिङ्गुगन्धाद्यान्वर्गकांस्तथा । गुडपिण्याकसिद्धान्नं वृन्ताकानि फलानि च ॥
"सशास्त्रमुदके देवान्मुक्तानि विविधानि च । शैलेयान्कुतपान्वैश्यस्त्वेवमादि न विक्रयेत्" ॥

**महाभारते ।**

"तिलान्गधान्नसांश्चैव न विक्रीणीत वै क्वचित् । वणिक्पथमुपासीनो वैश्यः सत्पथमास्थितः" ॥ इति ।

## अथ प्रसङ्गात्कुसीदादीनां स्वरूपं विधिश्च सप्रपञ्चमुच्यते ।

तत्र तत्स्वरूपं **नारदः** (अ. १ श्लो. ९८) ।

"स्थानलाभनिमित्तं यद्दानं ग्रहणमिष्यते । तत्कुसीदमिति प्रोक्तं तेन वृत्तिः कुसीदिनाम्" ॥ इति । स्थानमवस्थानं मूलधनस्य । तेन मूलावस्थान एव लाभनिमित्तं धनादिप्रयोगरूपं ऋणदानं कुसीदमित्यर्थः । कलाहीने तु तस्मिंस्तत्तुल्यत्वाद्गौणः प्रयोगः ।

**मनुः** (अ. १० श्लो. ११७) ।

"ब्राह्मणः क्षत्रियो वाऽपि वृद्धिं नैव प्रयोजयेत् । कामं तु खलु धर्मार्थं दद्यात्पापीयसेऽल्पकम्" ॥ इति ।

पापीयसे निष्कृष्टकर्मणे । तदप्यल्पं यावतो धनस्य वृध्या आवश्यकं कर्म सिध्यति तावद्देयमित्यर्थः । ब्राह्मणराजन्यानुवृत्तौ **वसिष्ठोऽपि** (अ. ३ सू. ४३) । "कामं वा परिलुप्तकृत्याय पापीयसे दद्यातामिति" । यत्तु

"आपदं निस्तरेद्वैश्यः कामं वार्द्धुषिकर्मणा । आपत्स्वपि तु कष्टासु ब्राह्मणस्य न वार्द्धुषम्" ॥ इत्याद्यन्यानि (अ.१श्लो.१११) च **नारदा**दिवचनानि तानि समर्घधनाद्यादानपूर्वकमहार्घधनादिप्रदानरूपवृद्धिपराणि विहितवृध्यातिरिक्तवृद्धिपराणि च ज्ञेयानि ।

तथा च **वसिष्ठः** (अ. २ सू. ४०।४१) **पैठीनसिश्च ।**

"ब्राह्मणराजन्यौ वार्द्धुष्यं न दद्याताम् । अथाप्युदाहरन्ति ।
"समर्घं धनमुद्धृत्य महार्घं यः प्रयच्छति । स वै वार्द्धुषिको नाम ये च वृद्ध्या प्रयुञ्जते" ॥ इति ।

अर्घमिति शेषः । समर्घमत्र यथाप्रचरन् मूल्यं महार्घं शास्त्रानुमतलाभातिरिक्तमूल्यम् ।

निषिद्धवृद्धिमाह **बृहस्पतिः ।**

"भोगाद्या द्विगुणादूर्ध्वं चक्रवृद्धिश्च गृह्यते । मूलं च सोदयं पश्चाद्वार्धुषं तद्विगर्हितम्" ॥ इति ।

भोगाद्द्विगुणीभूतधनात् । अधिकवृद्धिग्रहणं चक्रवृद्धिः । "वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृतेति" **नारदोक्ता** (अ. १ श्लो. १०४) सोदयं यावद्दित्तं तावतोऽधिकमूलं ग्राह्यत्वेन व्यवस्थापितम् । अन्यापि गर्ह्या वृद्धिर्न ग्राह्या । सा च ऋणादानप्रकरणे स्फुटीभविष्यति । एवं च ब्राह्मणस्यापद्यनापदि च कृषिगोरक्षवाणिज्यासंभवे विहिता कुसीदवृत्तिरपि जीवनोपाय इति बोध्यम् । तां प्रशंसति **बृहस्पतिः ।**

"बहवो वर्तनीयाया ऋषिभिः परिकीर्तिताः । सर्वेषामपि चैतेषां कुसीदमधिकं विदुः ॥

"अनावृष्ट्या राजभयान्मूषकाद्यैरुपद्रवैः । कृष्यादिके भवेद्धानिः सा कुसीदे न विद्यते ॥
"शुक्लपक्षे तथा कृष्णे रजन्यां दिवसे तथा । उष्णे वर्षेऽथ वाते वा वर्द्धते न निवर्तते ॥
"दिशं गतानां या वृद्धिर्नानापत्योपजीविनाम् । कुसीदं कुर्वतः सम्यक् सास्थितेश्चैव जायते"॥इति ।

**अथ कृषेः** । तत्र तावत् **बृहत्पराशरः**।

"अतः परं गृहस्थस्य कर्माचारं कलौ युगे । धर्मं साधारणं शक्त्या चातुर्वर्ण्यसमागतम् ॥
"संप्रवक्ष्याम्यहं पूर्वं **पराशर**वचो यथा" ॥ इति ।

अतः परं आमुष्मिकप्रधानधर्मोक्त्यनन्तरम् । कर्मशब्दो व्यापारमात्रपरः । आचारशब्दश्च धर्मरूपशास्त्रीयव्यापारपरः । कृष्यादेश्च युगान्तरे कर्मत्वं कलावाचारत्वं कलौ युगे इति कृतादिषु वैश्यस्यैवाधिकारः । कलौ तु गृहस्थमात्रस्यैवेत्यर्थः ।

"तथाऽन्नेन प्रदत्तेन सर्वं दत्तं भवेदिह । अतोऽप्यन्नार्थमप्येतत् कर्तव्यं कर्षणं द्विजैः"॥
इति **पराशरस्तु** प्रागुक्त एव । कर्षणे विहितवृषानाह । **पराशरः** ( अ. १।२१४ ) ।
"स्थिराङ्गं नीरुजं तृप्तं सुरदं षण्ढवर्जितम् । वाहयेद्दिवसस्यार्धं पश्चात्स्नानं समाचरेत्" ॥

तृप्तं क्षुत्तृड्भ्यामपीडितं सुरदं दृढं षण्ढवर्जितमिति भावप्रधानो निर्देशः पुंस्त्वोपेतमित्यर्थः । स्नानं समाचरेत् बलीवर्दान्स्नापयेदित्यर्थः ।

**बौधायनः** ( २।२।७३—७४ ) । "प्राक्प्रातराशंकृषी स्यात् अस्यूतनासिकाभ्यां समुष्काभ्यां अतुदन्नारया मुहुर्मुहुरभ्युच्छन्दयन्निति" । प्रातराशमित्यव्ययीभावः । तेन दिवाभोजनात् प्राक्कर्षेदित्यर्थः । अभ्युच्छन्दयन् विश्रमयन् वर्ज्यं वृषमाह । **वृद्धपराशरः** ।

"हीनाङ्गं व्याधिसंयुक्तं प्राणहीनं च दुर्बलम् । क्षुद्युक्तं दुर्बलं श्रान्तमनड्वाहं न वाहयेत् " ॥

दुर्बलं अल्पबलं बालिशमिति यावत् ।

**रामायणे** ।

"यो दुर्बलं परिश्रान्तं बालिशं पापनिर्भयः । वाहयिष्यत्यनडुहं स गोघ्नः पापमाप च " ॥

एकहले वृषसंख्यामाह **हारीतः** ।

"अष्टगवं धर्महलं बहुदं जीवितार्थिनाम् । चतुर्गवं नृशंसानां द्वित्रवं ब्रह्मघातिनाम् " ॥ इति ।

**कर्षणे** वर्ज्यमहीमाह **स** एव ।

"देवतायतनोद्यानिपानस्थानगोव्रजान् । श्रीमान्श्मशानभूमिं च वृक्षच्छायाक्षितीस्तथा ॥

"भूमिं निखातपूर्वां च रणस्य स्थानमेव च । अन्यामपि हि चावाह्यां न कृषेत्कृषिकृद्बलात् ।
"नोखेत्संवाहयेद्भूमिं तथाऽश्मशर्करैर्युताम् । वाहयेन्नाप्रदक्षां च न नदीपुलिनं तथा ॥
"यद्यसौ वाहयेल्लोभाद्द्वेषाद्वाऽपि हि मानवः । क्षीयते सोऽचिरात्पापः सपुत्रपशुबान्धवः ॥
"नरकं घोरतामिस्रं पापीयान्याति चैनसा " ॥

कृषिप्रारम्भे कर्तव्यमाह स एव ।

"योजनं तु हलस्याथ प्रवक्ष्यामि यथा तथा । ज्येष्ठानक्षत्रसंयुक्ते पुण्येऽह्नि तद्विधीयते ॥
"अन्यत्र वा शुभे चैव तच्च कार्यं विपश्चिता ॥
"मातृश्राद्धं द्विजः कुर्याद्यथोक्तविधिना गृही । द्रव्यकारणसंपत्त्यै कुर्वतो धर्मतः कृषीन् ॥
"प्रोल्लिख्य मण्डलं पुष्पधूपदीपैः समर्चयेत् । भद्राय च तथाऽश्विभ्यां मरुद्भ्यश्च तथा द्विजः ॥
"कुर्याद्बलिहृतिं विद्वान् तदगाः कश्यपाय च " ॥

भद्रो बलभद्रः ।

"तथा कुमार्यै सीतायै अनुमत्यै तथा बल—भद्रः स्वाहेति मन्त्रेण स त्विच्छन्नात्मनो हितम् ॥
"दधिगन्धाक्षतैः पुष्पैः शमीपुष्पैस्तिलैस्तथा । दद्याद्बलिं वृषाणां च मध्वाज्यप्राशनं तथा ॥
"संबध्य सीरकाग्रेण हेम्ना वा राजतेन वा । प्रलिप्य मधुसर्पिर्भ्यां कुर्यात्तत्र प्रदक्षिणम् ॥
"अग्न्योक्ष्णोर्मण्डनं कृत्वा कुर्यात्सीरप्रवाहणम् । पुण्यलाङ्गूलकल्याणकल्याणाय नमोऽस्त्विति ॥
"सीतायाः स्थापनं कृत्वा पराशरमृषिं स्मरन् । 'सीता संयुजे' इत्याद्यैर्मन्त्रैः सीरं प्रवाहयेत् ॥
"दधिदूर्वाक्षतैः पुष्पैः शमीपत्रैश्च पुण्यदैः । सीतापुण्यवृषौ भक्त्या रक्तवस्त्रविषाणकैः ॥
"सप्तधान्यानि चादाय प्रोक्ष्य पूर्वामुखो हली । तानि दत्वा क्षयौ क्षेत्रे किरन्भूमिं कृषेद्द्विजः" ॥ इति ।

तथा ।

"यथोक्तेन विधानेन लाङ्गूलादिप्रयोजनम् । सीते सौम्ये कुमारित्वं देवि देवार्चिते प्रिये ।
"शक्तिसूनोर्यथा सिद्धा तथा मे सिद्धिदा भव " ॥
"शक्तिसूनोर्विना नाम्ना सीतायाः स्थापनं विना । विप्राक्ष्युक्षणरक्षाभ्यां सर्वं हरति राक्षसः ॥
"वापने लवने क्षेत्रे खले गन्त्रीप्रवाहने । एष एव विधिर्ज्ञेयो धान्यानां च प्रवेशने " ॥ इति ।

तथा ।

"नखैर्विलेखने यस्याः कुर्युर्दोषं मनीषिणः । तस्याः सीरविदारेण किं तु पापं क्षितेर्भवेत् ॥
इत्यादिवचनैः पापान्यभिधायोक्तं " वर्णानां च गृहस्थानां तत्पापं कृषिजीवनाम् " ॥ इति ।

अनन्तरं चोक्तम् ।

"तदेनसो विशुद्ध्यर्थं प्राह सत्यवतीपतिः । द्वादशो नवमो वाऽपि सप्तमः पञ्चमोऽपि वा ॥

"धान्यभागः प्रदातव्यः सीरिणा क्षेत्रिणो ध्रुवम् ।" क्षेत्रिणः क्षेत्रस्वामिनः ॥ इति ।

तथा ।

"ब्राह्मणस्तु कृषिं कुर्वन्वाहयेदिच्छया धराम् । न किंचित्कस्यचिद्दद्यात्स सर्वस्य: प्रभुर्यतः"॥ इति

तथा ।

"ब्राह्मणश्चैव राजा च द्वावप्येतौ धृतव्रतौ । नैतयोरन्तरं किंचित्प्रजाधर्माभिरक्षणात् ॥
"तस्मान्न ब्राह्मणो दद्यात्कुर्वाणो धर्मतः कृषिम् । ग्रामेशस्य नृपस्यापि क्रियतामप्यसौ बलिम् ॥

इति **बृहस्पतिः** ।

"राज्ञे दत्वाथ षड्भागं देवतानां च विंशकम् "। इति **मनुः** ।

"पञ्चाशद्भाग आदेयो राज्ञा पशुहिरण्ययोः । धान्यानामष्टमो भागः षष्ठो द्वादश एव वा ॥ "
एते च भागदाने पक्षा भूवर्णादितारतम्येन व्यवस्थिता द्रष्टव्याः । **पराशरः** (१।२।१०–११)
"वृक्षं छित्त्वा महीं भित्त्वा हत्वा तु कृमिकीटकम् । कर्षकः खलु यज्ञेन सर्वपापैः प्रमुच्यते ॥
"यो न दद्यात् द्विजातिभ्यो राशिमूलमुपागतः । स चौरः स च पापिष्ठो ब्रह्मघ्नं तं विनिर्दिशेत्" ॥ इति ।

तथा

"स्वयं कृष्टे तथा क्षेत्रे धान्यैर्वा स्वयमर्जितैः । निर्वपेत्पञ्चयज्ञांस्तु क्रतुदीक्षां तु कारयेत् ॥
"क्षत्रियोऽपि कृषिं कुर्यात् द्विजदेवांश्च पूजयेत् । वैश्यशूद्रौ च कुर्यातां कृषिवाणिज्यशिल्पकम् ॥
"चतुर्णामपि वर्णानामेष धर्मः सनातन " । इति ।

**अथ वाणिज्यस्य** । तत्र तावन्**मनुः** । ( अ. १० श्लो. ८६–९० )

"इदं च वृत्तिवैकल्प्यात्यजतो धर्मनैपुणम् । विट्पण्यमुद्धृतोद्धारं विक्रेयं वित्तवर्धनम् "॥ इति ।

इदं वक्ष्यमाणं वृत्तिवैकल्याद्वृत्त्यभावात्धर्मनैपुण्यं धर्मवृत्तिं मुख्यां वृत्तिं त्यजत इति यावत् । विट्पण्यं विशां विक्रेयम् । उद्धृतोद्धारं उत्ध्रियत इत्युद्धारो मांसादि तदुद्धृतं यत्र तत्तथा त्यक्तपातित्यादिहेतुमांसादिरूपमिति यावत् । क्वचित्तु वित्तवैकल्यादिति पाठः । तदेवाह ( अ. १० श्लो. ८६–९० ) ।

"सर्वान् रसानपोहेत कृतान्नं च तिलैः सह । अश्मनो लवणं चैव पशवो ये च मानुषाः ॥
"सर्वं च तांतवं रक्तं शाणक्षौमाविकानि च । अपि चेत्स्युररक्तानि फलमूले तथौषधीः ॥
"अपः शस्त्रं विषं मांसं सोमं गन्धांश्च सर्वशः । क्षारं क्षौद्रं दधि घृतं तैलं मधु गुडं कुशान् ॥
"आरण्यांश्च पशून्सर्वान्दंष्ट्रिणश्च वयांसि च । मद्यं लाक्षां च नीलिं च द्विशफैकशफांस्तथा ॥
"त्रपु सीसं तथा लोहं तैजसानि च सर्वशः । बालांश्चर्म तथाऽऽस्थ्यानि वसा स्नायूनि वर्जयेत्" ॥

स्नायूनि रोचनामिति पाठान्तरम्। इति रसान्पत्रकाष्ठादिनिर्यासाभिर्यासादिपाकप्रधानानि द्रव्याणि रसास्तानिति तु **कल्पतरौ**। केचित्तु रसान् लवणादीन्पुनर्लवणोपादानं दोषाधिक्यप्रतिपादनार्थ-मित्याहुः। अपोहेत वर्जयेत् विक्रये त्यजेत्। अस्य सर्वत्रानुषङ्गः। कृतान्नं पक्वान्नमश्मनः "पाषाणान्पन्नरागादीन्पशवो ये च मानुषाः" इत्यत्र तानिति शेषः। तान्तवं रक्तं तन्तुकृतपटादिकं कुसुंभादिना रक्तं क्षौममतसीसूत्रकृतं दुकूलमत्रशाणक्षौमयोर्विकारयोः प्रतिषेधात्प्रकृतेरप्रतिषेध इति **विज्ञानेश्वरः**। शाणादित्रिकमरक्तमपि मूलं फलं अन्यस्या "अक्रीतपण्यैर्व्यवहरेतमुञ्जबल्वजैर्मूलफलैः" इति **आपस्तम्बे** (१।२०।१६।१।२।१।१) विक्रेतव्यतयाऽभिधानादिति **नारायणः**। अन्ये तु नाम्ना कदलीपनसादिफलं मूलं बिल्वदरेङ्गुदभिन्नं न विक्रेयामित्याहुः। तथा च **शङ्खलिखितौ** "शुष्ककाष्ठबदरेङ्गुदकार्पासिकरज्जुकार्पासिकसूत्रैः कृतैर्द्रव्यं नाहरेदिति"।

**नारदोऽपि** ( अ. १ श्लो. ६५ )।

"स्वयं शीर्णानि पर्णानि फलानि बदरेङ्गुदे। रज्जुः कार्पासिकं सूत्रं तच्चेदविकृतं भवेत्"॥ इति।

ओषध्यस्त्रिवृत्प्रभृतयः। क्षारो यवक्षारादिः। क्वचित्क्षीरमिति पाठः। त्रपुरङ्गबालाश्चामरादयः। स्नानानि स्नायूनि। क्वचित् स्नायूनिति पाठः। ब्राह्मणानुवृत्तौ।

**गौतमः**। ( अ. ७ सू. ८–१५ )।

"तस्यापण्यम्। गन्धरसजातान्नतिलशाणक्षौमाजिनानि। रक्तनिर्णिक्ते वाससी। क्षीरं सविकारम्। मूलफलपुष्पौषधमधुमांसतृणोदकापथ्यानि। पशवश्च हिंसासंयोगे पुरुषवशा कुमारी। वेहतश्च नित्यम्। भूमिव्रीहियवाजाव्यश्ववृषानड्वांश्चैके" इति।

रक्तं च निर्णिक्तं च रक्तनिर्णिक्ते। क्षीरं सविकारं दध्यादयो विकाराश्च अपण्यमित्यव्ययम्। अपथ्यं विषादिपशवश्च हिंसासंयोगे। येभ्यः सौनकादिभ्यो विक्रये हिंसासंयोगो भवति तत्र न विक्रेयाः। पुरुषेत्यादि पुरुषो नावशावन्ध्या गौः कुमारी अल्पवयस्का गौरेवेति **कल्पतरुः**। वेहत् गर्भोपघातिनी गौः एतदन्तमेकं पदम्। अत्र नित्यग्रहणात्पूर्वोक्तेषु तिलादिषु नित्यत्वप्रतिषेधत्त्वेन स्वयमुत्पादितास्तिलादयो विक्रेया इति **हरदत्तः**। अविर्मेषः वृषभः। पुंगवोऽनड्वान् अनोवहनयोग्यो बलीवर्दः। अत्र च भूम्यादीनामपण्यत्वमित्येकेषां मतम्।

**पराशरः**।

"वेदविद्यानि मानानि न विक्रीणीत कर्हिचित्। नापत्यानि न सत्वानि भूवृत्तिं चान्वये तथा॥

**यमः**।

"स्नेहद्रव्यवसानां च सत्वानां जीवतामपि। विक्रेता दानपुण्यादौ प्रोच्यते भ्रूणहा बुधैः॥

"वक्ता च दानपुण्यानां शपथे सोमविक्रयी"।

अत्र भ्रूणहेत्यस्यानुषङ्गः। सत्वानां प्राणिनां शपथे शपथकरणे दानपुण्यानां वक्तेति संबन्धः। "गवां विक्रयकारी च गवि रोमाणि यानि तु। तावद्वर्षसहस्राणि गवां गोष्ठे कृमिर्भवेत्"॥ इति।

**मनुः**। ( अ. १० श्लो. ९२।९३ )

"सद्यः पतति मांसेन लाक्षया लवणेन च। अह्ना च शूद्रो भवति ब्राह्मणः क्षीरविक्रयात्॥
"इतरेषां तु पण्यानां विक्रयादिह कामतः। ब्राह्मणः सप्तरात्रेण वश्यभावं नियच्छति॥
"इतरेषामपण्यानां निषिद्धानाञ्च कामतः। अकामतस्तु कीतानां पापमात्रं नियच्छति"॥

प्राप्नोति। **बौधायनः**। ( २।१।५३—५४ )

"पितॄन्वा एष विक्रीणीत यस्तिलान्विक्रीणीते। प्राणान्वा एष विक्रीणीते यस्तण्डुलान् विक्रीणीते सुकृतांशान्वा एष विक्रीणीते यः पणमानो दुहितरं ददाति"।

**मनुः**। ( अ. १० श्लो. ९१ )

"भोजनाभ्यञ्जनाद्दानाद्यदन्यत्कुरुते तिलैः। कृमिभूतः स्वविष्ठायां पितृभिः सह मज्जति"॥ इति।
अत्र विशेषमाह **स एव**। ( अ. १० श्लो. ९० )
"काममुत्पाद्य कृष्यां तु स्वयमेव कृषीवलः। विक्रीणीते तिलान् शुद्धान्धर्मार्थमचिरस्थितान्" ॥ इति।

विक्रीणीते हिरण्येनापि शुद्धान् निस्तुपान् अचिरस्थितान् लाभार्थं चिरमस्थापितान्धर्मार्थं यज्ञश्राद्धादिनिष्पत्त्यर्थमेवं च "कृश्युत्पन्नत्वशुद्धत्वधर्मार्थत्वाचिरस्थत्वादिविशिष्टतिलविक्रयो ब्राह्मणस्याप्यापद्वृत्तिरिति" **नारायणः**।

रसविषये विशेषमाह **स एव**। ( अ. १० श्लो. ९४ )

"रसा रसैर्निमातव्या न त्वेव लवणं रसैः। कृतान्नं वा कृतान्नेन तिला धान्येन तत्समाः"॥ इति।

रसा गुडादयः। निमातव्याः परिवर्तनेन ग्राह्याः। लवणं तु निर्यासतया रसभूतत्वेन निमेयमपि रसैर्न विनिमातव्यम्। कृतान्नमोदनलड्डुकादि। अकृतान्नेन व्रीह्यादिना तिला धान्येन निमातव्याः। परं तु तत्समा धान्यसमाः।

**गौतमः** (अ. ७ सू. १६—२१)। "नियमस्तु। रसानां रसैः। पशूनां च। न लवणकृतान्नयोः। तिलानां च। समेनामेन तु पक्वस्य संप्रत्त्यर्थे। नियमः परिवर्तने" इति। पशूनां च पशुभिरेवेति शेषः। यथाऽविंदत्वाऽजो गृह्यते। न लवणेत्यादिना लवणादीनां विनिमयप्रतिषेधः। मन्वादिभिस्तु धान्येन समेन विनिमय उक्तः। तथा च सर्वथाऽऽवश्यककर्मासंभवे विनिमयः संभवे तु नेति व्यवस्था। यद्वा समेन धान्येन विनिमय इत्येतत्परं **मन्वा**दिवचनं विषमविनिमयनिषेधकं **गौतम**वचनमिति न विरोधः। कृतान्नविषये प्रतिप्रसवमाह। **समेनेत्यादि**। समेनामान्नेन पक्वस्यान्नस्य विनिमयो भवति। यदि तदानीमेव तत्पक्वमुपजीव्यते। यथा क्षुधितस्य प्रस्थमिततण्डुलदानपूर्वकतावत्परिमितौदनाद्यादानम्।

**हारीतः** ।

"नियमस्तु रसादीनां विक्रयो नैव दुष्यति। यज्ञार्थं दक्षिणार्थं च प्रजापतिवचो यथा ॥

विनिमये विशेषमाह **वसिष्ठः** (अ. २ सू.३७-३९)। "रसा रसैः समतो हीनतो वा निमातव्या। न त्वेव लवणं रसैस्तिलतण्डुलपक्वान्नविमनुष्याश्च विहिताः परिवर्तकेनेति" । अत्र समतो हीनतो वेति तृतीयान्तात्तसिः । अत्र समतो हीनत इत्युपादानात्परिवर्तनेऽधिकग्रहणनिषेधः।तेन तिलतण्डुलादिभिरधिकैरपि विनिमयः कार्यः। तण्डुलानुवृत्तावा**पस्तम्बेन** (१।२०।१४-१६) "विहितश्चैषां मिथो विनिमयोऽन्नेन चान्नस्य मनुष्याणां मनुष्यैरसानां च रसैर्गन्धानां च गन्धैर्विद्यया च विद्यानामक्रीतपुण्यैर्व्यवहरेत् " इति ।

**अथ पाशुपाल्यस्य**। तत्र तावत् **शङ्खलिखितौ** । 'गाः रक्षेत्' ब्राह्मण इत्यस्यानुषङ्गः। विप्रकर्मानुवृत्तौ **वृद्धपराशरः** ।

"बन्धनं पालनं रक्षां द्विजः कुर्याद्गृहाद्गवाम्। वत्साश्च यत्नतो रक्ष्या वर्धनीया यथाक्रमम् ॥
"न दूरतस्तु नेतव्याश्चरणाय कदाचन । दूरे गावो विचरन्त्यो न भवन्ति शुभावहाः ॥
"प्रातरेव हि दोग्धव्या दुह्यात्सर्वं तु नो गृही । दोग्धुर्विपयसो नैव वर्धन्ते ताः कदाचन ॥
"अनादेय्यनृणास्ताश्च स्रवत्यनुदिनं पयः। पुष्टिदा देवतादीनां पूज्या गावः कथं न ताः ॥
"स्पृष्टाश्च गावः शमयन्ति पापं संसेविताश्चोपनयन्ति वित्तम् ।
"ता एव दत्तास्त्रिदिवं नयन्ति गोभिर्न तुल्यं धनमस्ति तस्मात्" । इति ।

गा इत्यनुवृत्तौ ।

**शङ्खलिखितौ** । "तास्वनापीतासु नो पिबेत् । न तिष्ठन्तीषुपविशेन्न स्वयमुत्थापयेच्छनैरार्द्रशाखया पृष्ठतोऽभिहन्यान्न तीर्थे न विषमे नाल्पोदकेऽवतारयेद्बालवृद्धरोगार्तास्त्रायीत। उपासीत। शक्तौ तत्प्रतीकारं कुर्याद्गवामेष धर्मान्यथाविप्लव" इति ।

"गौरवत्सा न दोग्धव्या न वेहद्गर्भसंधिनी । प्रसूताया दशाहार्वाक् दोग्धि चेन्नरकं व्रजेत् ॥
"दुर्बला व्याधिसंयुक्ता पुष्पिका या विवत्सका। साधुभिर्न च दोग्धव्या वर्णिभिर्धर्ममीप्सुभिः"॥ इति।

**बृहत्पराशरः** ।

"उक्षाणो वेधसा सृष्टाः सस्यस्योत्पादनाय वै । तैरुत्पादितसस्येन सर्वमेतद्विधीयते ॥
"यश्चैतान्पालयेद्यस्तान् वर्धयेच्चैव यत्नतः । जगन्ति तानि सर्वाणि साक्षात्स्युः पालितानि चेत् "॥ इति ।

तथा

"दक्षिणाभिमुखा गाव उत्तराभिमुखा अपि । बन्धनीयास्तथैतास्युर्न प्राक्पश्चिमतो मुखाः ॥

"गोवृषाश्वादिशालायां सुतीक्ष्णं लोहवात्रकम् । स्थाप्यं तु सर्वदा न स्यादवरुद्धविमोक्षकृत्" ॥ इति ।

वयोविशेषेण वृषनासावेधनादिप्रकारमाह स एव ।

"तृतीयेऽब्दे चतुर्थे वा यदा वत्सो दृढो भवेत् । तदा नासा तु भेत्तव्या नैव प्रागदुर्बलस्य च ॥
"नासाबन्धनकीलं तु खादिरं वाऽथ शैंशपम् । द्वादशाङ्गुलकं कार्यं ततः सूक्ष्ममुखं समम्" ॥ इति ।

**ब्रह्मपुराण ।**

"परिभूय च गामोहादवीचि नरके नरः । तस्मान्मार्गान्नयेत्तास्तु क्षीरिवृक्षोत्थवल्कलैः ॥
"गोब्राह्मणार्थे संग्रामे निहतः शाङ्करं पदम् । योऽपि कश्चिन्नरो याति किंपुनर्ब्राह्मणादयः" ॥ इति ।

**इत्यलम्** ॥ ११९ ॥

## याज्ञवल्कीये १२० श्लोकः

शूद्रधर्ममाह । **शूद्रस्येति** । तयेत्याद्यनुरोधेनाह । **प्रधानमिति** । प्रकरणात्तस्यानुवृत्तिरिति भावः । अनुक्तं विशेषमाह । **तत्रेति** । द्विजानां मध्ये इत्यर्थः । **इतीति** ।

"विप्राणां वेदविदुषां गृहस्थानां यशस्विनाम् । शुश्रूषैव तु शूद्रस्य धर्मो निःश्रेयसं परम्" ॥
इति चेत्यपि बोध्यम् । एवं च ।

"शूद्रस्य द्विजशुश्रूषा परमो धर्म उच्यते । यदन्यत्कुरुते कर्म तद्भवेत्तस्य निष्फलम्" ॥

इति **पराशरोक्तौ** । द्विजपदं विप्रपरं परमपदं प्रधानपरं चेति न विरोधः । तत्र परमत्वोक्त्या क्षत्रियवैश्ययोरपि शुश्रूषा शूद्रधर्म एवेति तेनापि सूचितम् ॥

अत एव **मनुरपि** । ( अ० ९ श्लो० ३३५ ) ॥

"शुचिरुत्कृष्टशुश्रूषा मृदुवागनहंकृतः । ब्राह्मणाद्याश्रयो नित्यमुत्कृष्टां गतिमश्नुते" ॥ इति ।

उत्कृष्टौ क्षत्रियवैश्यौ ब्राह्मणाद्याश्रय इति वृत्त्यर्थं क्षत्रियादि शुश्रूषापरोऽपि ब्राह्मणे निवेदितात्मा भवेदित्यर्थः । उत्कृष्टां जातिमश्नुते इति क्वचित्पाठः । तत्र निष्फलत्वं च धर्माजनकत्वेन बोध्यम् ।

आजीवन्निति छेदेनाह । **यदेति** । **पुनस्त्वर्थे** । **वणिग्वृत्त्येति** । तथा च विनापि वतिमिति रीत्या पद्ये वणिक् पदमिति देशपरमिति भावः । **शिल्पैरिति** । जीवेदित्यस्यानुषङ्गः । पूर्वार्धे वाक्यद्वयेऽपि उत्तरार्धमेकं वाक्यमित्याह । **द्विजातीति** । तथा जीवने तत्सेवाया असंभवेन सेवाकृतहितासंभवादाह । **याहशैरिति** । वादनानीतीति पाठः ॥ १२० ॥

---

१ शूद्रवृत्तिमित्यपरः पाठः ।

## याज्ञवल्कीये १२१ श्लोकः

सर्वपक्षेऽपि धर्मान्तरमाह । **किंचेति** । सामर्थ्यादवधारणगर्भतया व्याचष्टे । **भार्यायामेवेति**। एवव्यवच्छेद्यमेवाह । **न साधारणेति** । वाराङ्गनास्वित्यर्थः । **वा** चार्थे। अभिलाषे बाधकाभावादाह । **अभीति** । विनिगमनाविरहादाह । **बाह्येति** । अस्य साधारणधर्मत्वं सूचयन्प्रागुक्तरीत्या प्रागवद्भृत्यग्रहण-मुपलक्षणमित्याह । **द्विजवद्भृत्यादीति** । कर्मधारये क्रियापदवैयर्थ्याद्द्वंद्वेनाह । **श्राद्धानीति** । प्राग्व-दाह । **नित्येति** । उपनयनाभावेन ब्रह्मचर्याद्यभावादाह । **स्नातकव्रतान्यपीति** । नमः क्रियते येनेति व्युत्पत्त्याऽऽह । **नम इत्यनेनेति** । नित्यत्वादाह। **अहरहरिति** । प्राग्वदाह । **अनुतिष्ठेदिति**।नमः क्रियते उच्चार्यते यस्मिन्निति व्युत्पत्याऽऽह । **मन्त्रं च केचिदिति** । केचित्त्वित्यर्थः । अत्र धातोर्गौणा-र्थत्वापत्तिररुचिरत एव । प्रागुक्तमेव सिद्धान्तमाह । **नम इत्यन्ये इति** । अयं तेषां सर्वमन्त्रस्थाने बोध्य इत्यनुपदमेवाग्रे **गौतमा**दिवाक्यात्स्फुटीभविष्यति । अन्ये तु ।

"अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते " इति **वराहपुराणा**त्सर्वत्र विप्रेण मन्त्रः पठनीयः। तदसंभवेऽङ्गहान्यपि नित्यं कार्यमेवेत्याहुः । अपरे तु शूद्रा वाजसनेयिन इत्युक्तेः **पारस्करो**क्तविधिना कार्यं मूले तु पौराणविधिरुक्त इति विकल्प इत्याहुः ।

तत्र "आमं शूद्रस्य पक्वान्नं पक्वमुच्छिष्टमुच्यते" इत्युक्तेः शिष्टाचाराच्चामेनैव तेषां वैश्वदेव इति बोध्यम् ।

अग्नौ होमश्चैषां निषिद्ध इति भ्रमनिरसायाह। **तत्रेति** तदनुष्ठाने सतीत्यर्थः । **वैश्वदेवं** तदाख्यं कर्म तस्य साधारणत्वादिति भावः ।

नन्वनग्नेः शूद्रस्य कथमग्निसाध्यकर्माधिकारः विवाहाग्निस्तु न, शूद्रस्य विवाहहोमाभावात् । न ह्यमन्त्रकोऽस्ति होमः। न हि शूद्रो मन्त्रवान्नमस्कारमन्त्रस्य पञ्चयज्ञेष्वेव विहितत्वात् । इति चेन्न। अनग्ने-रपि तस्य लौकिकाग्नौ तं प्रति साक्षाद्विधायकवचनादधिकारान्निषादस्थपतीष्टवत् । किं च द्विजातेरपि विवाहाग्नौ तन्नियम्यते किमुत शूद्रस्य। एवं च तस्य यत्र यत्र होमविधिस्तत्र लौकिकाग्नावेव मन्त्रान्तरा-विधाने च नमस्कारमन्त्र एवेति बोध्यम् ।

एवं तु विवाहहोमसत्वेऽपि तदग्नेरपि प्रागुक्तरीत्या लौकिकत्वेनाधार्यत्वेन तस्यैवाभावेन न वैवाहिके इत्ययुक्तं तत्सत्वे तु अत्र न मानमित्यरुचिः । तदेतत्सर्वमुक्तं **गौतमेन** । (अ. १० सू. ५१–६७)

"शूद्रश्चतुर्थो वर्ण एकजातिः। तस्यापि सत्यमक्रोधः शौचम्। आचमनार्थे पाणिपादप्रक्षालनमेवेत्येके। श्राद्धकर्म। भृत्यभरणम्। स्वदारवृत्तिः। परिचर्या चोत्तरेषाम्। तेभ्यो वृत्तिं लिप्स्येत। जीर्णान्युपानच्छत्रवासः कूर्चादीनि। उच्छिष्टाशनम्। स्वयं चार्याश्रितो भर्तव्यस्तेन चोत्तरः।तदर्थोऽस्य निचयः स्यात्।अनुज्ञातोऽस्य नमस्कारो मन्त्रः। पाकयज्ञैः स्वयं यजेतेत्येके" इति । एकजातिः उपनयनरूपद्वितीयजन्माभावादेकजन्मा आचेति करचरणप्रक्षालनमेवाचमनार्थे इत्येकेषां मतं तथा चान्येषां मते सर्वोऽप्याचमनकल्पः । सकु-

दिति तु विशेषः। आस्योपस्पर्शादिकं च वर्णान्तरवदेव । **श्रीदत्तात्रयस्तु** आचमनार्हजलाभावे इद-मित्याहुः । "आर्याश्रितानां तदन्नसंस्कर्तॄणां शूद्राणां तदार्यवदेवाचमनकल्प" **इत्यापस्तम्बीय-बौधायनीययोः** स्पष्टम् । अन्येषां सच्छूद्राणां वैश्यवदाचमनकल्पः ।

"मासिकं वपनं कार्यं शूद्राणां न्यायवर्तिनाम् । वैश्यवच्छौचकल्पश्च द्विजोच्छिष्टं तु भोजनम्"॥

इति **मनोः**। शौचकल्पः सूतकादौ आचमनं चेति **मेधातिथिः**। न्यायो द्विजशुश्रूषा पञ्चमहायज्ञाश्च। भृत्यभरणं पोष्याणां भरणम् । स्वदारवृत्तिः स्वेषु स्वेषु दारेषु वृत्तिः ।

**केचित्तु** स्वदारवृत्तिरेवास्य नाश्रमान्तरप्राप्तिरित्याहुः । उत्तरेषां ब्राह्मणादीनां त्रयाणां तेभ्यः वृत्तिर्जीवनम् । जीर्णान्युपभुक्तानि पूर्वैः परिचरते देयानि कुर्वन्तृणादेरासनमुच्छिष्टाशनं भोजनं पात्रेयं यद्भुक्तशेषं तदस्याशनमेतच्च दासविषयम् । यत्तु नाब्राह्मणायोच्छिष्टं प्रयच्छेदिति तददास-विषयम् । गृहस्थशूद्रविषयमित्यन्ये ।

"उच्छिष्टमन्नं दातव्यं शूद्राय गृहमेधिना । गृहस्थाय तु दातव्यं न तूच्छिष्टं दिने दिने" ॥

इति **व्याघ्रपादोक्तेः** । भर्तव्यस्तेन क्षीणोऽपि परिचर्यया भजमानः शूद्रो यदि क्षीणः कर्म कर्तुमसमर्थस्तथाप्यसौ पूर्वमाश्रितस्तेन भर्तव्य इत्यर्थः । तेन चोत्तरः । तेन शूद्रेण उत्तर आर्यः क्षीणो वृत्तिहीनः शिल्पादिनोपार्जितेन भर्तव्यः। तदर्थः उत्तरपोषणार्थः । अस्य शूद्रस्य निचयो धनसंचयः । अस्य नीचाश्रयणे नीचकर्तव्यमाह **जातूकर्ण्यः** ।

"यो नीचमाश्रयेदार्य आत्मानं दर्शयेत्सदा । आत्मानं दासवन्मत्वा चरेन्नीचोऽपि तं प्रति ॥

"दरिद्रो ब्राह्मणो दक्षो वेदानां चैव पारगः। शूद्रेणापि सदाऽप्येष भर्तव्यो नाश्रितोऽपि सन्" ॥ इति।

अनुज्ञातोऽस्येति । अस्य शूद्रस्य कर्ममात्रे नम इत्येव मन्त्र इत्यर्थः । वैश्वदेवादिषु चतुर्थ्यन्त तत्तद्देवतापदघटितनम इत्येवंरूपो मन्त्रो धर्मज्ञैरनुज्ञात इत्यर्थ इत्यन्ये । पाकयज्ञैरित्यादि पत्नीपुत्रादिना पाकयज्ञान्कारयेदित्येके मन्यन्ते इत्यर्थः । एवं च ब्राह्मणादेरन्येनापि पाकयज्ञादि कारयतो न दोष इति गम्यते ।

**ननु पाकयज्ञादेरग्निसाध्य**त्वादग्नेः शूद्रस्य कथं तत्राधिकारः । "स्मार्तं कर्म विवाहाग्नौ कुर्वीत प्रत्यहं गृही । दायकालाहृते वाऽपि तदभावात् द्विजेप्सु वेति" वचनात् 'न चास्य विवाहाग्निरस्ति मन्त्रेण तु होम' इति **गोभिलेन** विवाहहोमस्य समन्त्रत्वाभिधानात् शूद्रस्य मन्त्ररहितस्यापि निवृत्तेः । नमस्कारमन्त्रस्तु शृङ्गग्राहिकया पञ्चमहायज्ञेष्वेवेति । न तेन वैवा-हिकहोम इति चेन्न । स्मार्तं कर्मेत्यादिवचनानां त्रैवर्णिकोपक्रमेण पाठाच्छूद्रस्य पाकयज्ञादेरसाक्षाच्छि-ष्टत्वाद्गौतमेन नमस्कारमन्त्रस्य साधारण्येनोक्तत्वाच्च लौकिकाग्नावेव तेषां संभवात् त्रैवर्णिकानामपि हि इदानीं विवाहाग्निर्न भवति किं पुनः शूद्रस्येति **मेधातिथ्याद**योऽप्येवम् ।

**अन्ये तु** तत्रैव स्मार्ताग्न्यभावे जलादेरुपदिष्टत्वात्तद्वदेव शूद्रस्यापि जले एव वैश्वदेवादी-त्याहुः । **स्कान्दे प्रभासखण्डे च** ।

१ ध. सू. १।५।७६। २ तृणादिनामासनमित्यपरः पाठः।

"न दर्भानुद्धरेच्छूद्रो न पिबेत्कापिलं पयः । मध्यपात्रे न भुञ्जीत ब्रह्मवृक्षस्य भामिनि ॥
"नोच्चरेत्प्रणवं मन्त्रं पुरोडाशं न भक्षयेत् । न शिखां नोपवीतं च नोच्चरेत्संस्कृतां गिरम् ॥
"न पठेद्वेदवचनं त्रिषवं न हि सेवयेत् । नमस्कारेण मन्त्रेण क्रियासिद्धिर्भवेद्ध्रुवम् ॥
"निषिद्धाचरणं कुर्वन् पितृभिः सह मज्जति " । इति ।

न शिखामिति एतदपकृष्टशूद्रपरम् । सच्छूद्रे तु तदप्यनुजानाति **वसिष्ठः** (अ.२सू.२०–२१) " एतेषां परिचर्या शूद्रस्य नियता वृत्तिरनियताः केशवेषाः सर्वेषां वा मुक्तशिखावर्जितम्" इति। एतेषां त्रैवर्णिकानां केशवेषाः शिखाबन्धनार्थमुपयुक्ताः केशा अनियताः । एतेना शिखाया वैकल्पिकत्वमुक्तम्। मुक्तशिखावर्जं सर्वमुण्डनं शिखाविमुक्तकेशमुण्डनं वेति वाशब्दार्थः । तच्च सदसद्विषयतया व्यवस्थाप्यम् । तथा च **मनुः** शूद्राणामित्यनुपदमुक्त एव । तत्र मासिकमित्यस्य मासि मासि वपनं कार्यमित्यर्थः । न्यायवर्तिनां द्विजशुश्रूषा पञ्चमहायज्ञानुष्ठातॄणामित्युक्तमेव । शूद्रस्य दीक्षा दर्शिता **वाराहे ।**

"ब्राह्मणक्षत्रियविशां पाञ्चरात्रं विधीयते । शूद्रादीनां च तच्छोत्रपदवीमुपयास्यति "

**भविष्ये ।**

"ब्राह्मणं क्षत्रियं वैश्यं कुलीनं शूद्रमेव वा । पुरुषं वा स्त्रियं वाऽपि दीक्षयेत्पूर्णमण्डले॥" इति।

एवं च शैवादिमन्त्रेष्ववैदिकेष्वधिकार इत्यन्यत्र स्फुटम् । **मनुः** । ( अ. १० श्लो. १२१–१२२ )

"शूद्रस्तु वृत्तिमाकाङ्क्षन् क्षत्रमाराधयेद्यदि । धनिनं चाप्युपाराध्य वैश्यं शूद्रो जिजीविषुः ॥
"स्वर्गार्थमुभयार्थं च ब्राह्मणानेव राधयेत् । जातब्राह्मणशब्दो हि सा ह्यस्य[1] कृतकृत्यता"॥इति।

स्वर्गार्थं स्वर्गप्राप्त्यर्थम् । उभयार्थं स्वर्गवृत्तिलिप्सया राधयेत् आराधयेत् । जातब्राह्मणशब्दः । ब्राह्मणशुश्रूषकोऽयमिति जातप्रसिद्धिः।सा ब्राह्मणशुश्रूषकत्वेन प्रसिद्धिः । तथा च शूद्रस्य द्विजशुश्रूषा धर्मः । विप्रशुश्रूषा परमो धर्मः । तत्र विप्राज्जीवनोपादाने स्वर्गार्थत्वं जीवनार्थत्वं चेति विप्रशुश्रूषाया उभयार्थत्वं तदनुपादाने तु स्वर्गार्थत्वमेव। क्षत्रियवैश्यशुश्रूषा तु धर्मजीवनार्थैव न तु स्वर्गार्था। **मूलोक्तानुकल्पविषये मनुः** ( अ. १० श्लो. ९४–१०० )

"अशक्तो यस्तु शुश्रूषां शूद्रः कर्तुं द्विजन्मनाम् । पुत्रदारात्ययं प्राप्तो जीवेत्कारुककर्मभिः" ॥

अत्ययं कृच्छ्रं अशक्नुवंस्त्विति पाठान्तरम् ।

"यैः कर्मभिः प्रचरितैः शुश्रूष्यन्ते द्विजातयः।तानि कारुककर्माणि शिल्पानि विविधानि च " ॥

**प्रचरितैः** समाचरितैस्तदेवोक्तं यादृशैरित्यादिना कारुककर्माणि तक्षणछेदनादीनि शिल्पानि यत्र छेदरूपलेख्यानि ।

**पराशरः** । ( १।१।६५ )

"लवणं मधु मद्यं च तक्रं दधि घृतं पयः । न दुष्येच्छूद्रजातीनां कुर्यात्सर्वेषु विक्रयम्"॥**इति ।**

---

१ 'त्वस्य' इत्यपरः पाठः ।

यत्तु

"विक्रीणन्मद्यमांसानि ह्यभक्षस्य च भक्षणम्। कुर्वन्नगम्यागमनं शूद्रः पतति तत्क्षणात् "॥

इति **लघुपराशरवाक्यम्।**

यदपि

"विक्रयं सर्ववस्तूनां कुर्वञ्छूद्रो न देशभाक्। मधु चर्म सुरां लाक्षां मुक्त्वा मांसं च पञ्चममिति॥" मध्वादिनिषेधकम् **कालिकापुराणवाक्यं** तदनापदि ज्ञेयम्।

तथा

"कपिलाक्षीरपानेन ब्राह्मणीगमनेन च। वेदाक्षरविचारेण शूद्रश्चाण्डालतां व्रजेत् " ॥ इति।

अभक्ष्यं गोमांसादि। विचारो ज्ञानम्। चरेर्गत्यर्थत्वाद्ये गत्यर्थास्ते ज्ञानार्था इति न्यायात्। ज्ञानं च श्रवणेनाध्ययनेन तदर्थचिन्तनेन च भवतीति तत्त्रयं प्रतिषिध्यते। अर्थान्तरमपि प्रागुक्तम्। तथा चापशूद्राधिकरणे **व्याससूत्रम्।** ( १।३।९।२८ ) 'श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्चेति'। शूद्राधिकरणे **गौतमोऽपि** ( अ. २ श्लो. ४ ) प्रागुक्त एव 'अथ हास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रपूरणं पद्युवा एतत्श्मशानं यच्छूद्र इति भवति चोदाहरणे जिह्वाच्छेदो धारणे शरीरभेद' इति। अस्य शूद्रस्य उपसृत्य बुद्धिपूर्वं शृण्वतः तेन ध्वनिमात्रश्रवणे यदृच्छया ग्रहणे वा न दोष इति। केचित् त्रपुरङ्गं जतुलाक्षा पद्युवामूर्तिमदेतत्श्मशानमेव यच्छूद्र इत्यर्थः। पद्युजङ्गममिति प्राग्व्याख्यातमुदाहरणे उच्चारणे धारणे शब्दतोऽर्थतश्चानुसंधानरूपे बौद्धे। एतेन वेदार्थविचारात्मकं यद्यत्तत्सर्वं निषिध्यते तत्र कर्मब्रह्ममीमांसाद्वयेन वेदवाक्यानि पूर्वोत्तरपक्ष्यादिना स्पष्टमेव विचार्यन्ते। **न्यायशास्त्रे**ऽपि "द्वे ब्रह्मणी वेदितव्ये परं चापरं च द्वा सुपर्णा सयुजा सखायावि"त्यादि श्रुत्यवगत 'एकमेवाद्वितीयं ब्रह्मे'त्यादिश्रुत्यर्थपरिपन्थितयाऽवभात आत्मनो भेद एव चिन्त्यते। षोडशपदार्थनिरूपणं तु तस्यैव परिकरः। 'एकमेवाद्वितीयं ब्रह्मे'त्यादिश्रुत्या तदेतन्मम शास्त्रमित्याचक्षते परीक्षन्ते परीक्षकाः यदाहु**रुदयनाचार्याः।**

"न्यायचर्चैवमीशस्य गमनव्यपदेशभाक्। उपासनैव क्रियते श्रवणानन्तरागते " ॥

अत एव वेदाङ्गाध्ययनमपि निषिध्यते तेषामपि। तदर्थावधारणाफलत्वात्। एवं हि तान्यङ्गानि भवन्ति। अपि च स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिरेवार्थावधारणपर्यन्तमध्ययनं विदधानस्तद्धेतुतयाऽङ्गान्यप्यध्यापयति। तथा च शूद्रं प्रति वेदाध्ययनरूपस्योपेयस्यैव बाधितत्वादुपायाङ्गाध्ययनमपि स्वत एव निवर्तते। अत एव **कूर्मपुराणम्।**

"वेदं वेदौ तथा वेदान्साङ्गांश्च चतुरो द्विजः। अधीत्य चाधिगम्यार्थं ततः स्नायात् द्विजोत्तमः"॥इति।

यच्च व्याकरणमार्षं पाणिनीयादि तत्स्मृतित्वाद्वेदाङ्गत्वाच्च निषिध्यते। यच्चावैदिकं तन्त्रादि तत्रैव प्राप्नोति वेदानुपकारकत्वेन तत्र विधेरभावात्। ननु साधुभिर्भाषेत न म्लेच्छितवै नापभाषित वै म्लेच्छोह वा एष यदपशब्द इत्यादिविधिनिषेधार्थवादैः साधुप्रयोगे विहितैतद्विवेकोपायतया विहितं व्याकरणं तदर्थिनं शूद्रमप्यधिकरिष्यतीति चेन्न। यर्वास्तर्वाणो नामऋषयो बभूवुरिति **महाभाष्योक्तेः।** 'स वाग्वज्रो यजमानं हिनस्ती'त्यादि श्रुतेश्च तेषां यज्ञकर्मतोऽन्यत्रापभाषणे दोषाभावात्। न च नमस्का-

रेण मन्त्रेणेति मूलोक्तेरस्ति तेषामपि यज्ञकर्मेति तत्र साधुभाषणमपेक्षितमिति चेन्न। न दर्भानिति प्रागुक्त- **स्कान्दप्रभासखण्डस्थ**वाक्येन शूद्रस्यापि विशेषणसंस्कृतशब्दोच्चारणनिषेधात् । न च संस्कृता गीर्वेद इति वाच्यम् । "नोच्चरेत्प्रणवमन्त्रं न पठेद्वेदवचनमिति" पृथक्निषेधात्। एवं च नापभाषितवा इति निषेधः स्त्रीशूद्रेतरविषयः । अत एवावैदिकस्यापि व्याकरणस्य संस्कृतशब्दात्मकत्वात्सिद्धमध्येयत्वम्। स्मृत्यध्ययनमपि निषिद्धं **मनुना** । ( अ. २ श्लो. १६ )

"निषेकादि श्मशानान्तो मन्त्रैर्यस्योदितो विधिः। तस्य शास्त्रेऽधिकारोऽस्मिन् ज्ञेयो नान्यस्य कस्यचित्"॥

इति । अस्मिन् स्मृतिशास्त्रे । श्रवणेऽप्यनधिकार उक्तो **भविष्यत्पुराणे** ।

"श्रूयतां धर्मशास्त्राणि मनुर्विष्णुर्यमोऽङ्गिरा ' इत्यादिना स्मृतिपरिगणनानन्तरम् ।
"एतानि धर्मशास्त्राणि श्रुत्वा ज्ञात्वा च भारत। वृन्दारकपुरं गत्वा मोदते नात्र संशयः "॥

इति **सुमन्तु**वचनानन्तरं **शतानीक** उवाच ॥

"यान्येतानि त्वयोक्तानि धर्मशास्त्राणि सुव्रत । नेच्छामि श्रोतुं विप्रेन्द्र गुह्यान्येतानि हि द्विज ॥
"त्रयाणामेव वर्णानां प्रोक्तान्येतानि पण्डितैः । श्रेयस न तु शूद्राणामत्र मे वचनं शृणु ॥
"ब्राह्मणादिषु वर्णेषु त्रिषु चेन्द्राः प्रतिष्ठिताः। मन्वादीनि च शास्त्राणि न योग्यानि समन्ततः " ॥

इति पुराणाध्ययनमपि निषिद्धं **कौर्मे** । पुराणान्यधिकृत्य ।

"अध्येतव्यमिदं नित्यं विप्रैः पर्वणि पर्वणि । नाध्येतव्यमिदं शास्त्रं वृषलस्य च सन्निधौ ॥
"योऽधीते चैव मोहात्मा स याति नरकान्बहून् " इति ।

**वायवीयसंहितायाम्** ।

"नावेदविद्भ्यः कमनीयमेतत्पुराणरत्नापरशास्त्रमस्याम् ।
नाभक्तशिष्याय न नास्तिकेभ्यो दत्तं हि यत्ते निरयं प्रयान्ति " ॥ इति ।

ननु पुराणश्रवणेऽधिकारः स्मर्यते **भविष्ये** ।

"शूद्राश्च मे भृशं दीनाः प्रतिभान्ति ममाग्रतः । आगमेन विहीनास्तु अहो कष्टतरं मम ॥
"कश्चैषामागमः प्रोक्तः पुरा द्विजमनीषिभिः " । इति ।

**शतानीक**प्रश्नानन्तरं **सुमन्तु**रुवाच ।

"साधु साधु महाबाहो श्रूयतां परमं वचः । चतुर्णामपि वर्णानां यानि प्रोक्तानि श्रेयसे ॥
"धर्मशास्त्राणि राजेन्द्र शृणु तानि नृपोत्तम । विशेषतस्तु शूद्राणां पावनानि मनीषिभिः ॥
"अष्टादश पुराणानि चरितं राघवस्य च । रामस्य कुरु शार्दूल स्तवं कामार्थसिद्धये " ॥

तथा पुराणान्यधिकृत्य ।

"एतानि कुरु शार्दूल धर्मशास्त्राणि पण्डितैः । साधारणानि प्रोक्तानि वर्णानां श्रेयसे सदा ॥
"चतुर्णामिह राजेन्द्र श्रोतुमर्हाणि सुव्रत । इति ।

**स्कान्दे सूतसंहितायाम् ।**

"अस्ति शूद्रस्य शुश्रूषा पुराणे नैव वेदनम् । वदन्ति केचिद्विद्वांसः स्त्रीणां शूद्रसमानताम् " ॥

तथा

"सिद्धान्तश्रवणं प्राहुर्द्विजानां मुनिसत्तम । शूद्राणां च विरक्तानां तथा स्त्रीणां महामुने ॥
"सिद्धान्तश्रवणं प्रोक्तं पुराणश्रवणं बुधैः " ॥ इति ।

**भागवतेऽपि ।**

"स्त्रीशूद्रद्विजबन्धूनां न त्रयी श्रुतिगोचरा । तेन भारतमाख्यातं कृपया मुनिना शुभम् " ॥ इति ।

एवमन्यान्यपि बोध्यानि । सत्यम् । श्रवणनिषेधकवाक्यपर्यालोचनया शूद्रस्य प्राधान्येन श्रवणं श्रावणं च निषिध्यते । श्रवणविधयश्च पुराणश्रवणायोपविष्टेषु द्विजेषु तच्छुश्रूषाप्रसंगसंगतेन शूद्रेण श्रोतव्यं न तु प्राधान्येनेत्येवंपराः । अत एव **भविष्ये** श्रवणप्रकार उक्तः ।

"देवार्चां पुरतः कृत्वा ब्राह्मणैश्च नृपोत्तम । श्रोतव्यमेव शूद्रेण तथाऽन्यैश्च द्विजातिभिः " ॥
"श्रौतं स्मार्तं हि वै धर्मं प्रोक्तमस्मिन्नृपोत्तम । तस्माच्छूद्रैर्विना विप्रं न श्रोतव्यं कदाचन " ॥इति ।

अर्चां प्रतिमां पुरतः कृत्वा प्रधानतया श्रवणे विप्रं पुरस्कृत्य तत्सेवानुषङ्गेन स्वयमपि श्रोतव्यं न तु स्वातन्त्र्येण तदिदमुक्तम् ।

'विना विप्रं न श्रोतव्यं कदाचनेति' विप्रमन्यैः श्रोतृत्वेन पुरस्कृत्येत्यर्थः । श्रावयितुरप्येषैव गतिः । "नाध्येतव्यमिदं शास्त्रं वृषलस्य च संनिधौ " । इति ।

संनिधौ तमुद्दिश्येत्यर्थात् । अन्ये तु अतिक्रान्तनिषेधेन पुराणे श्राव्यमात्रेण श्रावयितैव प्रत्यवैति न श्रोतेत्याहुः । सूतस्य श्रवणं तु न शूद्राधिकारप्रतिपादकं सूतस्य संकरजातत्वेनाशूद्रत्वात् । "ब्राह्मण्यां क्षत्रियात्सूत' इति प्रागुक्तेरन्यदप्यत्र विषये प्रागुक्तम् । यद्वा 'ब्राह्मणैर्ब्राह्मणाद्वा धर्मानवगत्य शूद्रोऽनुतिष्ठेन्नमस्कारेण मन्त्रेणेति' **लिङ्गा**द्देवेभ्यो नमः पितृभ्यो नम इति नमस्कारान्तो नाममन्त्र एव सर्वकर्मसु शूद्रेण पाठ्यो न वैदिक इत्यर्थस्तस्येत्यादिप्रागुक्तम् । किं चैषां ब्राह्मणद्वारा कर्माधिकारः। स च द्रव्ये स्वस्वत्वोपादनेन तत्संनिधौ तदनुमत्या वा ।

"उपवासो व्रतं होमस्तीर्थस्नानजपादिकम् । विप्रैः संपादितं यस्य संपन्नं तस्य तत्फलम् " ॥

इति **धर्मविवृत्त्युक्तेः ।**

"शूद्रस्यापि प्रवक्ष्यामि मद्भक्तस्य वरानने । यां तु दीक्षां समासाद्य मुच्यते सर्वकिल्बिषैः " ॥

इति **वाराहोक्तेः ।**

"नमोऽन्तेन शिवेनैव स्त्रीणांपूजा विधीयते । शिवमन्त्रेण शूद्राणामेवं पूजा प्रकीर्तिता " ॥

इति **सूतसंहितोक्तेश्च** । एतेन शिवगायत्रीजपादौ नाधिकार इति परास्तम् । अत एव **द्विजेतरेण क्रियमाणे श्राद्धे ब्राह्मणेन मन्त्राः** पठनीयाः ।

"अमन्त्रस्य तु मन्त्रस्येति" **वाराहोक्ते**रिति **मयूखोक्तं** संगच्छते । अत्र पौराणो वैदिको वा मन्त्र इति द्वैते वैदिक एवेति तदाशय उन्नीयते । अन्यथा "स्त्रीशूद्रद्विजबन्धूनाम् । श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः" इति **भारतात्** 'ब्राह्मणक्षत्रियविशामिति' प्रागुक्त**वाराहात्** 'शिवमन्त्रेणेति' प्रागुक्तवचनाच्च पौराणिकमन्त्राणां श्रवणोच्चारणाद्यधिकारसत्वेन । "शूद्रोऽप्यमन्त्रवत्कुर्यादनेन विधिना ततः " इति **मात्स्यादीनि** वचनानि स्वयं मन्त्रप्रयोगो न कर्तव्य इत्येवंपराणीति कथं व्याख्यातं तत्र । अत एव ।

"तस्माच्छूद्रं समासाद्य सदा धर्मपथस्थितम् । प्रायश्चित्तं प्रदातव्यं जपहोमविवर्जितम् " ॥

**इत्याङ्गिरो**वचनस्य स्वयं कर्तृकजपहोमयोर्निषेधः । अतो ब्राह्मणेन जपे होमे वा कारिते न दोष इति व्याख्यानमभियुक्तकृतं संगच्छते ।

"दक्षिणार्थं तु यो विप्रः शूद्रस्य जुहुयाद्धविः । ब्राह्मणस्तु भवेच्छूद्रः शूद्रस्तु ब्राह्मणो भवेत् " ॥ इति ।

**पराशर**वचनं त्वनिष्पन्नस्वत्वकहविष्परमित्याहुः ।

किं च "सर्वेषामेव वर्णानां पूर्ते दानेऽप्यहिंसने" इति **धर्मविवृत्ति**वचनात्पूर्तादावेषां साक्षादधिकारो बोध्यः । अमन्त्रकवस्त्रहिरण्यादिदाने चण्डालादीनामपि । अत एव

"अहिंसासत्यमस्तेयं शौचमिन्द्रियनिग्रहः । दानं दमो दया शान्तिः सर्वेषां धर्मसाधनम् " ॥

( १।१२२ )

इति **मूल**वाक्यं ब्राह्मणादिचण्डालान्तसाधारण्येन व्याख्यातम् । पूर्तपदार्थमाह **जातुकर्ण्यः**

"वापीकूपतडागादि देवतायतनानि च । अन्नप्रदानमारामः पूर्तमित्यभिधीयते " ॥

"बहिर्वेदि च यद्दानं तत्पौर्तिकमुदाहृतम् " । इति **स्मृत्यन्तरं** चेति दिक् ।

ब्राह्मणादीनां स्वस्वधर्माभिरतानां फलमुक्तं **कौर्मे** ।

"प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं कृपावताम् । स्थानमैन्द्रं क्षत्रियाणां संग्रामे ष्वपलायिनाम् ॥

"वैश्यानां मारुतं स्थानं स्वधर्मपरिवर्तिनाम् । गान्धर्वं शूद्रजातीनां परिचर्याऽनुवर्तिनाम्" ॥ इति ।

अत्र शूद्रविषये साक्षादनुकल्पोक्त्या विप्रादिविषयेऽप्यनुकल्पः सूचितः । स चेत्थम् । तत्र तावत् ब्राह्मणस्य सः । तत्रापत्कल्पे ब्राह्मणस्येत्यनुवृत्तौ **गौतमः** । ( अ. ७ सू. ४–७ ) "याजनाध्यापनप्रतिग्रहाः सर्वेषां । पूर्वः पूर्वो गुरुस्तदलाभे क्षत्रवृत्तिस्तदलाभे वैश्यवृत्तिरिति" । **सर्वेषां** प्रशस्तानामपि सर्वेषां विप्रक्षत्रियविशामिति तु **हरदत्तः** । पूर्व इति याजनादीनां यो यः पूर्वं **निर्दिष्टः** स स उत्तरस्माद्गुरुर्दोषावह इत्यर्थः । ततश्चोत्तरासंभवे पूर्वेण जीवेदिति सिद्धम् । या तु 'प्रतिग्रहः प्रत्यवर'(अ.१०श्लो.१०९) इति **मनौ** प्रतिग्रहनिन्दा सा विशिष्टयाजनापेक्षेयति न विरोधः । निषिद्धप्रतिग्रहविषयेति केचित् । **यमो**ऽपि । "प्रतिग्रहाध्यापनयाजनानां प्रतिग्रहं श्रेष्ठं प्रवदेदिति" । सदसत्प्रतिग्रहविवेकमाह **व्यासः** ।

"द्विजातिभ्यो धनं लिप्सेत्प्रशस्तेभ्यो द्विजोत्तमः । अपि वा जातिमात्रेभ्यो न तु शूद्रात्कथं चन" ॥ इति ।

"राजा" न्तेवासीति मूलमप्यग्रे स्फुटम् । राजप्रतिग्रहप्रशंसामाह **नारदः** ।

"अर्थानां भूरिभावाच्च देवत्वाच्च महात्मनाम् । श्रेयान्प्रतिग्रहो राज्ञां नान्येषां ब्राह्मणादृते" ॥
"ब्राह्मणश्चैव राजा च द्वावप्येतौ धृतव्रतौ । न ताभ्यामुत्तरौ किंचिन्मतौ धर्माधिरक्षणात् ॥
"धर्मकृत्यकृतरतस्य रक्षार्थं शासतो शुचीन् । मेध्यमेव धनं प्राहुस्तीक्ष्णस्यापि महीयते ॥
"शुचीनामशुचीनां तु संनिपातो यथार्णसाम् । समुद्रे समतां याति तद्वद्राज्ञां धनागमः" ॥
अशुचीन्कृतपराधान् अर्णसामंभसाम् ।

"यथाऽग्नौ संस्थितं दीप्ते शुद्धिमायाति सत्वरम् । स्वधर्मे ब्राह्मणस्तिष्ठन्वृत्तिमाहारयेन्नृपात् ॥
"नाराज्ञः प्रतिगृह्णीयाद्ब्राह्मणो विभवे सति । अशुचिर्वचनाद्यस्य शुचिर्भवति पूरुषः ॥
"शुचिश्चैवाशुचिः सद्यः कथं राजा न दैवतम् । विदुर्य एवं देवत्वं राज्ञो ह्यमिततेजसः ॥
"तस्येति प्रतिगृह्णन्तो लिप्यन्ते न कथंचन" । इति ।
लोकपालाष्टकांशरूपत्वेन देवत्वम् **मानवे**ऽऽपि स्पष्टमुक्तम् ।
**विष्णुधर्मोत्तरे** तु राजप्रतिग्रहो निन्दितः ।
"लोभात्मानो न जानीयुर्ब्राह्मणा राजकिल्बिषम् इत्यादिना । इदं च सर्वमग्रे स्फुटीभविष्यति ।

**अथ क्षत्रियस्य ।**

तत्र क्षत्रियमुपक्रम्य **विष्णुधर्मोत्तरे** । "तस्याप्यापदि वैश्यस्य या वृत्तिः साभिधीयते" । इति ।
विप्रस्य वैश्यवृत्तिविधानान्तरं **मनुः** । ( अ. १० श्लो. ९५ )
"जीवेदेतेन राजन्यः सर्वेणाप्यनयं गतः । न त्वेव ज्यायसीं वृत्तिमभिमन्येत कर्हिचित्" ॥ **इति** ।

एतेन ब्राह्मणं प्रतिनिषिद्धेन सर्वेणापीति **नारायणः** । अनयमापदं गतः ज्यायसीमध्यापनादिकां ब्राह्मणवृत्तिमभिमन्येत स्वीकुर्यात् ।

यत्तु

"अब्राह्मणादध्ययनमापत्काले विधीयते । अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोः" ॥ इति ।

( अ. २ श्लो. २४१ ) **मनु**ना अब्राह्मणात् क्षत्रियाद्वैश्याच्च ब्राह्मणस्याध्ययनविधानात्क्षत्रियवैश्ययोरध्यापनबोधनं यच्च आपत्कल्प इत्यादि प्रागुक्त**गौतमे**नापि तथा तद्विप्रस्यात्यन्तापदि तत्प्रेरिताभ्यां क्षत्रियवैश्याभ्यां धर्मार्थं कर्तव्यं न तु वृत्त्यर्थमिति बोध्यम् । तथा च **बौधायनः** । ( १।२।४२–४४ ) "अब्राह्मणादध्ययनमापदि । शुश्रूषानुव्रज्या च यावदध्ययनम् । तयोस्तदेव पावनमिति" तयोः क्षत्रियवैश्ययोः । तदेव यद्ब्राह्मणाय विद्यादानं पावनं पवित्रीकरणमेतेन क्षत्रियवैश्ययोरपि पुण्यार्थमध्यापनमनुमतं **गौतम**सूत्रार्थस्तूक्त एव । अत्यन्तापदि वैश्यवृत्त्याऽपि जीवनासंभवे क्षत्रियः प्रतिग्रहमपि कुर्यात् । तथा च **पाद्मे भूमिखण्डे रामागस्त्यसंवादे ।**

"कष्टां तु सद्दशामाप्य क्षत्रियोऽपि प्रतिगृहम् । कुर्वन्न दोषमाप्नोति न तु वै पात्रकारणात्" ॥

**गौतमेन** त्वत्यन्तापदि क्षत्रियवैश्ययोर्याजनमप्युक्तम् । स च **गौतमः** प्रागुक्तो याजनाध्यापनेति याजनादयो ब्राह्मणस्य वृत्तयस्ता आपदि सर्वेषां भवन्तीति तदर्थं इति **हरदत्तः** ।

**अथ वैश्यस्य ।**

त्र **मनुः** । (अ. १० श्लो. ९८)

"वैश्योऽजीवन्स्वधर्मेण शूद्रवृत्त्याऽपि वर्तयेत् । अनाचरन्नकार्याणि निवर्तेत च शक्तिमान्"॥ इति । वणिजो यथोक्तधर्माचरणे फलमुक्त**माश्वमेधिके** ।

"वणिग्धर्ममंमुंचन्वै देवब्राह्मणपूजकः । स वणिक् स्वर्गमाप्नोति पूजामानोऽप्सरोगणैः" ॥ इति । वैपरीत्ये दोषाः **शान्तिपर्वणि** दर्शिताः (प्रा. ३५)

"यः करोति जनान्साधून्वणिक्कर्मणि वञ्चनम् । स याति नरकं घोरं धनैश्चापि विहीयते" ॥ इति । अत्र विप्रविषये मूलकृदपि आपद्धर्मप्रकरणे ।

"क्षात्रेण कर्मणा जीवेत्" इत्यादिना तं सप्रपञ्चं वक्ष्यति । अन्यविषये व्याख्याता तत्रैव प्रतिपादयिष्यतीति दिक् ॥ १२१ ॥

## याज्ञवल्कीये १२२ श्लोकः

सर्वान्ते कथनात्सर्वेषामित्युक्तिस्वारस्याच्चाह । **इदानीं साधारणेति** । ब्राह्मणादिचाण्डालान्तसाधारणेत्यर्थः । अधिकसंग्रहाय लक्ष्यार्थमाह । **हिंसाप्राणीति** । यथार्थवचनस्यापि तत्वेऽधर्मत्वादाह । **सत्यमप्राणीति** । एवं च परदुःखानुत्पादकस्य तत्वमन्यस्य त्वतत्वमिति तात्पर्यं ब्राह्मणवसिष्ठन्यायोऽत्र बोध्यः । दत्तोपादानस्यापि संग्रहायाह । **अदत्तेति** । प्राग्वदाह । **बाह्येति** । **बुद्धीति च** । ज्ञानेन्द्रियाणां कर्मेन्द्रियाणां चेत्यर्थः । सर्वसंग्रहायाह । **यथेति** । **आपन्नेति** । शरणागतेत्यर्थः । **अपेति** । परकृत्येत्यादिः । उक्ताशनेनैवाह । **सर्वेषामेवेति** । एवेन विशेषव्यवच्छेदः । पुलिङ्गनिर्देशादाह । **पुरुषाणामिति** । इदमुपलक्षणमन्यस्यापि । मूले सर्वेषामित्यत्र पुमान्स्त्रियेत्येकशेष इति तत्वं बोध्यम् । यथासंभवं तानेवाह । **वयोबुद्ध्यर्थेति** । अष्टानां द्वन्द्वः । **नैसेति** । स्वाभाविकीत्यर्थः । अनेन कृत्रिमव्यावृत्तिः । नैष्ठकीति पाठान्तरम् । परिनिष्ठतेति तदर्थः ॥ १२२ ॥

## याज्ञवल्कीये १२३ श्लोकः

प्रकृतोपयुक्तत्वादाह । **लौकीति** । शब्दादेरविवक्षया भावक्विबन्ततया चाह । **कथनमिति** । सर्वसंग्रहायाह । **पुरुषार्थेति** । **कुलमिति** । "अभिजनः कुले ख्यातौ जन्मभूम्यां कुलध्वने" इति **विश्वः** । धर्मस्य प्रतिपाद्यत्वादाह । **वृत्त्यर्थमिति** । शक्यार्थासंभवादाह । **उचितामिति** ।

"वृत्तिर्विवरणे जीवे कैशिक्यादिषु वर्तिनीति" प्रसिद्धार्थासंभवादाह । **आचरणमिति** । **स्वीकुर्यादिति च** ।

"शठो मध्यस्थपुरुषे शठो धत्तूरधूर्तयोः । शठोऽलसे च मूर्खे चेति" **विश्वा**द्युक्तार्थासंभवात्तात्पर्यार्थमाह । **अमत्सरामिति** । मूले **तथा** चार्थे ।

**मनुरपि** (अ. ४ श्लो. १८)

"वयसः कर्मणोऽर्थस्य श्रुतस्याभिजनस्य च । वेषवाग्बुद्धिसारूप्यमाचरेद्विचरेदिह" ॥ इति ।

वयसो बाल्यादेः कर्मणो यागादेः अर्थस्य धनस्य वेषसारूप्यं बाल्यादिप्रकर्षापकर्षोचितवेषधारणं वाक्सारूप्यं तदनुरूपभाषणं बुद्धिसारूप्यं तदनुरूप आत्मन्युत्कर्षप्रत्यय इति व्याख्यातारः ॥ १२३ ॥

## याज्ञवल्कीये १२४ श्लोकः

अनुष्ठानक्रमेणैवाह । **एवमिति** । कालवाचकाज्ज्ञानार्थे ( व्या. सू. ४।३।११ ) ठञ्यपि प्रकृते तदसंभवादुभयलक्ष्यार्थमाह । **त्रिवर्षजीवनपर्याप्तमिति** । एवमग्रेऽपि । समाहारे द्विगुः। पात्रादित्वात्स्त्रीत्वाभावः। ( व्या. सू. २।४।१७ वार्तिके ) । यद्यपि द्वन्द्वस्तथापि यौगपद्ये आद्यवैयर्थ्यापत्तिरत आह। **अधिकं वेति**। एकत्रान्वयात्सह विवक्षाया न हानिः । उभयोरादानात् हि त्वन्यतरदेवार्थे निपातानामनेकार्थत्वादित्याह । **स एवेति** । एवन्यवच्छेद्यमाह । **नात इति**। एवं व्याख्यानेऽन्यसाधकमप्याह । **अतस्त्विति** । स्मार्थे ईयसुन् यथा चैतत्तथाऽन्यत्र स्पष्टम् । पीतः सोमो यैस्ते पूर्वे पित्रादयो यस्येत्यर्थः । त्रिपदबहुव्रीहौ तु पूर्वपदानर्थक्यम् । आहिताग्न्यादित्वात्परनिपातः । अनेनाधिकारः सूचितः सोमपूर्वकाधानमात्रपरं वा । **श्रवणादिति** । एतदाशयेनैवात्र तथोक्तमिति भावः । उक्तैकवाक्यतयैव विरोधं परिहरति । **एतच्चेति** । तत्र बीजमाह । **नित्येति** । यत इत्यादिः । उत्तरार्धार्थमाह । **यस्येति** । लिङ्गार्थाविवक्षया आह । **भवतीति** । **सोमात्प्रागिति**। अपपरीत्यव्ययीभावः ( व्य. सू. २।१।१२ ) । **तद्वीति** । पवित्रेष्ट्यादय इत्यर्थः॥ १२४ ॥

## याज्ञवल्कीये १२५ श्लोकः

एतानि व्युत्क्रमेणोक्तानीति सूचयन्नाह । **एवमिति** । प्रतिर्वीप्सायामित्याह । **संवत्सरे समिति** । एवमग्रेऽपि । **सोम इति** । यागनामधेयमित्याह । **सोमयागमिति** । एवमग्रेऽपि । कर्तव्येत्यस्य लिङ्गविपरिणामेनान्वय इत्याह । **कार्य इति** । एवमग्रेऽपि । तथेत्यधिकं व्याचष्टे । **प्रतिसंवत्सरं वेति** । तत्र मानमाह । **पशुनेति** । **इति स्मरणादिति** । **बौधायनोक्तेरित्यर्थः** । क्वचित्तद्घटितपाठ एव । श्रवणादिति पाठान्तरम् । श्रुत्यनुरोधेनाह। **सस्योत्पत्ताविति**। तथा च प्रतिसंवत्सरमाग्रयणत्रयमृतुभेदेनोक्तं भवति । यथेत्यनेन परामृष्टस्य प्रतिसंवत्सरमित्यस्यैवानन्तरत्वादग्रे संबन्ध इत्याह । **च प्रतीति** । एवेनावश्यकत्वं सूचितमत एव हिर्हेतौ नित्यत्वादिति तदर्थः । तेनाकरणे प्रत्यवायः सूचितः ॥ १२५ ॥

## याज्ञवल्कीये १२६ श्लोकः

अत एवाह । **एषामिति** । असंभवस्यानेकविधत्वात्सर्वसंग्रहायाह । **कथंचिदिति** । केनापि प्रकारेणेत्यर्थः । **तत्तत्काले इति** । यस्य यस्य यो यः काल उक्तस्तत्र तत्रेत्यर्थः । एतेन सर्वाभावे तत्प्रायश्चित्तत्वेनान्ते एकैवेष्टिः कार्येत्यर्थः परास्तः। निमित्तानन्तरं नैमित्तिकमिति न्यायेन तथौचित्यादिति भावः। नित्यकाम्यस्थले विशेषमाह । **किंचेति** । द्रव्ये इत्यन्तं भिन्नं वाक्यमग्रिमञ्च भिन्नमन्यथाफलप्रदमित्यस्य वैयर्थ्यमित्याशयेन व्याचष्टे । **योऽयमिति** । वैश्वानरीष्टिकरणरूप इत्यर्थः । पूर्वस्य तु सत्यपि द्रव्ये कथंचिदसंभवेऽकर्तव्यत्वमिति सूचयन्नाह । **न कर्तव्यमेवेति** ॥ १२६ ॥

## याज्ञवल्कीये १२७ श्लोकः

धर्मान्तरं प्रसंगादाह । **चण्डाल इति** । तदुत्पत्तौ करणं हेतुस्तत्र च । **भिक्षितमिति** । यद्यपि तथापि तदर्थं तद्याचनं सर्वथा निषिद्धमयाचिततल्लाभेन तत्करणे तु नायं दोषः किंत्वन्य इति

सूचयन्नन्यथा व्याचष्टे । **यज्ञार्थमिति** । अत्र जन्मसंभवादाह । **जन्मान्तर इति** । अत एव जायते इत्युक्तं न तु भवतीति । द्विजातियाचितेऽप्याह । **यः पुनरिति । पुनर**त्वर्थे । याचितं तत्पूर्वकं लब्धम् । अददादित्यस्य व्याख्यानं **न प्रेति** । ततोऽप्याधिकसंभवात्तस्यापि व्याख्यानं **परीति** । न्यूनतां निराचष्टे । **वर्षशतमिति** । तत्र मानमाह । **यथाहेति । शकुन्त इति** । तदाख्यः पाक्षि-विशेष इत्यर्थः । तथा च **हेमचन्द्रः** । "भासस्तु भासि गृध्रशकुन्तयोरिति" । यद्वा शकुन्तविशेष इत्यर्थः । तथा च **विश्वः** ।

"भासो भासि समाख्यातो गोष्ठकुक्कुटगृध्रयोः" । इति ॥ १२७ ॥

## याज्ञवल्कीये १२८ श्लोकः

द्रव्याभावनिमित्तमाह । **कुसूलेति । उष्ट्रिकेति** । मृद्भाण्डविशेष इत्यर्थः । तथा **हेमचन्द्रः** । "कुंम्युषायां पाटलायां वारिपर्ण्यां च कट्फले" इति पूर्वपूर्वापकर्षस्य विवक्षितत्वात्कुसूलस्य पूर्वनिपातः । मध्यमपदलोपिसमासं सूचयन्नाह । **ताभ्यामिति** । द्वन्द्वान्ते श्रूयमाणस्य प्रत्येकं संबन्धेन विकल्पः फलित इत्याशयेनाह । **कुसूलधान्यः स्यादिति** । यद्यपि कुसूलादयोऽनवस्थितप्रमाणास्तथापि उत्तरपक्षानुरोधे-नानयोर्भेदमाह । **तत्रेति** । तयोर्मध्ये इत्यर्थः । त्र्यहशब्दस्य लक्ष्यार्थं प्रकृतोपयोगिनमाह । **त्र्यहःपर्याप्त-मिति** । त्र्यहः पर्याप्तमिति पाठे त्र्यह इत्यस्यैवार्थः पर्याप्तमिति तदित्यादिः । अत इति ठनाविति ठन् । (व्या.सू.५।२।११५) त्र्याहिक इत्यपपाठः । **कुसूलधान्यादिसामिति** । तत्परिमितधान्यादीत्यर्थः । कर्म-धारयः । **योपायमिति** । प्रागुक्तोपायासंभवात् उपायान्तरमित्यर्थः । अत एव विकल्पोक्तिः । स च प्रतिग्रहाद्य-पेक्षयेत्यग्रेऽनुपदमेव स्फुटीभविष्यति । परित्यक्तेत्यनेनास्वामित्वसूचनद्वारा चौर्याभावः सूचितः । **वल्लरी** मञ्जरी तेन । एवं पदार्थानुक्त्वोभयाकांक्षयैकवाक्यार्थमाह । **शिलोञ्छेन वेति** । अयं प्रतिग्रहाद्यपेक्षया विकल्पो बोध्यः । अनयोरपि विकल्पस्तुल्यार्थास्त्विति न्यायेन बोध्यः । **जीवेदिति** । तेन तावत्संचयं कृत्वा जीवेदित्यर्थः । श्रेयानित्यस्य व्याख्या **उत्कृष्टेति** । तद्व्याख्या **प्रशस्येति** । उभयथाऽपीति भावः । अनयोरपि मध्ये परः श्रेयानित्यपि बोध्यम् ।

ननु वैश्वानरीं द्विज इति द्विजस्य प्रक्रमाद्ब्राह्मणानामिति न्यूनमत आह । **एतच्चेति** । अर्हती-त्यत्रान्वयः । तत्र मानमाह । **तथा च मनुनेति** । अभिहितमित्यत्राप्यन्वयः । **अद्रोहेणैवेति** । देहि देहीति याच्यमानस्य यः परस्य चित्तविकारः खेदात्मको जायते स द्रोहो न पुनर्हिंसैव तस्याः सर्वसामान्येन प्रतिषेधात् । स्वल्पयाचनामल्पद्रोहः तेनाद्याभावोऽयाचितं द्वितीयं याचितं तद्रूपा या वृत्तिर्जीवनोपायः कृषिसेवादिस्तां समास्थायाश्रित्य विप्रो जीवेत् यस्यां वृत्तौ परपीडा न भवति स्वल्पा वा साऽऽश्रयितव्येति सामान्योपदेशोऽयम् । अनापदीत्यनेनापदि परपीडाजनिकाऽप्यभ्यनुज्ञाता । **इत्याद्यमीति** । आदिना । ( **मनुः** अ. ४ श्लो. ७–८ )

"त्र्यहैहिको वाऽपि भवेदश्वस्तनिक एव वा ।

"चतुर्णामपि चैतेषां द्विजानां गृहमेधिनाम् । ज्यायान्परः परो ज्ञेयो धर्मतो लोकजित्तमः" ॥

---

१ क एतदुभयाभावेन ।

इत्यस्य संग्रहः। ईहायां भवमैहिकमत्र्यहमैहिकं यस्य त्र्यैहिकः । त्र्यैहिकी कुटुम्बस्य नित्यकर्मार्थं यश्चेष्टां करोति स तथेत्यर्थः । श्वो भवं श्वस्तनं धान्यं तदस्यास्तीति श्वस्तनिकः । न श्वस्तनिकोऽश्वस्तानिक इति मत्वर्थीयं कृत्वा नञ्समासः । अस्य विकल्पस्य व्यवस्थामाह । चतुर्णामिति । यो यः स्वल्पसंचयः स स धर्मैर्ज्यायानधिको धर्माधिक्याच्च फलाधिक्यं भवति । लोकजित्तमः । लोकाञ्जयति स्वाधिपत्येनावति भोग्यतया स्वीकरोति प्रकर्षविवक्षायां तमः लोकोऽत्र स्वर्गः अविशेषणोक्तः ।

**मेधातिथि**स्तु संवत्सरपर्यन्तस्वकुटुम्बपोषणपर्याप्तधान्यः कुसूलधान्यः, षण्मासपर्यन्तस्वकुटुम्बपोषणपर्याप्तधान्यः कुम्भीधान्य इति व्याचष्टे । **कल्पतरु**स्तु अश्वस्तनिकापेक्षया त्र्यैहिकेनान्नादिना दिनत्रैगुण्यदर्शनात्तदनुसारेणैव तयोस्त्रैगुण्यं तथैव ग्राह्यमित्याह । एवमेव च व्याख्यानं पूर्वविरोधं परिहर्तुं तत्रापि विशेषमाह । **एतच्चेति** । धर्मातिशयार्थं वृत्तिविशेषपरिग्रहणं चेत्यर्थः । चतुर्णामित्यनेनोत्तरं श्रेयस्त्वमुक्त्वा षट्क इति **मनूक्ते**रित्यनुपदमेव स्फुटीभविष्यति ।अत्र मानमाह । **तथा चेति** । उक्तरीत्या भेदादेव चेत्यर्थः । तत्र तत्र स्मृतौ तदेव विशिष्याह । **यथाहेति**। **प्रवरः**श्रेष्ठः । **रिक्थं** विभागप्राप्तिद्रव्यम् । शालीनमाह । **षडिति**। अविष्ठितस्तत्र तत्परः । शालायां भवः सः यायावरोत्तरो यातेर्यङन्ताद्वरच् । एतौ द्वौ तयोर्योगरूढौ । **इतिर्द्वैवल**समाप्तौ ।

प्रसंगाद्विशेषान्तरमाह। **शालीनोपीत्यादिना** । अत्र मानमाह । **यथाहेति** । **षडिति** । एकः कुसूलधान्यः षट्कर्मा याजनादिप्रागुक्तषट्कर्मा । **अन्यः** कुम्भीधान्यः। **त्रिभिर्याजनादिभिः**। **प्रवर्तते** जीवति ।**एक**स्त्र्यैहैहिकः । **द्वाभ्यां** याजनाध्यापनाभ्यां । **चतुर्थः** । अश्वस्तानिकः। **ब्रह्मसत्रेण** वेदादिनिरन्तराध्यापनेन । जीवतीत्यर्थः ।

**चन्द्रिकाकारादयो**ऽप्येवम्। **मेधातिथिकल्पतरुपारिजात**प्रभृतयस्तु षट्कर्मेत्यादेरन्यथाऽर्थमाहुः । तत्तथा हि षट्कर्मा उञ्छशिलायाचितायाचितलाभकर्षणवाणिज्याख्यषट्कर्मा याजनाध्यापनप्रतिग्रहाणां याचितायाचितग्रहणात्तत्रैवान्तर्भावः। इदं च समुचितवृत्तिसेवनं बहुकुटुम्बस्य नित्यकर्मसंपत्त्यर्थम्। त्रिभिरुञ्छशिलायाचितैः द्वाभ्यामुञ्छशिलाभ्याम् ब्रह्मसत्रेण उञ्छेन । ब्रह्मसत्रशब्दो ब्राह्मणानां सततत्रायकत्वेनोञ्छपर इति ब्रह्मलोकप्राप्तिहेतुत्वेन सत्रयागतुल्यफलेनोञ्छेनेति तु **मदनोमेधातिथिस्तु** उञ्छशिलयोरन्यतरेणेत्याह ।

**सर्वज्ञनारायण**स्त्वन्यथाऽऽह । **षडिति** । याजनाध्यापनप्रतिग्रहामृतमृतमृतामृतभेदेन षट् बोध्याः । त्रिभिरमृतभेदभूतैर्याजनादिभिर्द्वाभ्यां शिलोञ्छाभ्यां ब्रह्मसत्रेणोञ्छेन ब्रह्मलोकप्राप्तिहेतुना सत्रयागेन तुल्यफलकतया तत्त्वम् ।

अत्र **मनु**वाक्यस्य मध्यमव्याख्यैव युक्ता न त्वायन्ते प्रकरणविरोधात् । टीकायास्तु भेदमात्रकथने तात्पर्यं न तु तथैवेत्यत्रेत्याहुः । तथा च व्यवस्थितविकल्प इत्याह । **अत्र चेति** । **याज्ञवल्क्य**प्रणीते इत्यर्थः ।

**मनुः ( अ. ४ श्लो. ११ )**

**"न लोकवृत्तं वर्तेत वृत्तिहेतोः कथं चन । अजिह्मामशठां शुद्धां जीवेद्ब्राह्मणजीविकाम् " ॥**

इति । लोकवृत्तं धनिकस्तुत्यादि अजिम्हामकुटिलां अशठां दम्भादिरहितां शुद्धां वृत्यन्तरेणामिश्रां वृत्तिसंकररहितामिति यावत् । जीवेद्ब्राह्मणेति तां जीवनार्थमनुतिष्ठन्न क्षत्रियवैश्यवृत्तिमित्यर्थः । एतेन जीवेत्कर्मकत्वात्कथं द्वितीया कथं चैकस्य धातोर्द्विप्रयोग इति शङ्काद्वयमपास्तमिति दिक् ॥ १२८ ॥

इति गृहस्थधर्मप्रकरणम् ।

---

## अथ स्नातकप्रकरणम् ६



प्रकरणसामान्यसंगतिमाह । **एवमिति** । गृहस्थस्य तन्मात्रस्य स्नानादारभ्येत्यनेन ब्रह्मचारिसबन्धिनां निवृत्तिर्गृहस्थसम्बन्धिनां साधारणानां च केषांचित् संग्रहः पर्युदासे आर्थिकनिषेधसत्वादाह । **प्रतीति** । व्रतशब्दार्थमेवाह । **मानसेति** । अत एव तस्यैतस्य व्रतानि भवन्तीति प्रारम्भे **आश्वलायने**नोक्तं तच्च न नक्तं स्नास्यामीति संकल्पयेदित्याद्यर्थम् । अत एव **कारिका** ।

"ततः संकल्पयेन्नोक्तं न स्नायीत्युत्तराण्यपि" । इति

ततः होमसमाप्त्यनन्तरं मेखलाविसर्गात्प्राक् । तत्र तावच्छुचिरित्यन्तेन स्नातकस्यैवोक्तानीत्याह । **स्नातकेति** । प्रायेणेत्यादिः । अन्यव्रतानामपि केषांचिदत्र सत्वात् । तच्चाग्रे स्फुटीभविष्यति ।

## याज्ञवल्कीये १२९ श्लोकः

विशेषसंगतिमाह । **ब्राह्मणस्येति** । **विरोधिनमिति** । वेदाभ्यासविरोधिनमित्यर्थः । तथा च **मनुः** । ( अ. ४ श्लो. १७ )

"सर्वान्परित्यजेदर्थान्स्वाध्यायस्य विरोधिनः । यथा तथाऽध्यापयंस्तु सा ह्यस्य कृतकृत्यता" ॥

इति । अस्य स्नातकस्य । ( अ. ४ श्लो. १३ )

"अतोऽन्यतमया वृत्त्या जीवंस्तु स्नातको द्विजः । स्वर्गायुष्ययशस्यानि व्रतानीमानि धारयेत्" ॥

इति प्रागुक्तेः । विरुद्धं शास्त्रनिषिद्धमकुलोचितं च । तदाह । **अयाज्येति** । प्रसज्यते यत्रेति अधिकरणव्युत्पत्त्याऽऽह । **नृत्येति** । उभयत्रानुषङ्गमाह । **अर्थमीहेतेतीति** । एतेनैकदेशानुवृत्तिः पृथक्पदं वा सूचितम् ।

नन्वेवं नञपि सकृदेवोपादेयोऽत आह । **नञ इति** । अन्यथा यतस्ततो विरुद्धप्रसंगेन स्वाध्यायविरोधिनमर्थं नेहेतेत्येक एवार्थः स्यात्संभवतीति न्यायात् । नन्वसमस्तत्वेन नञः प्रसज्यप्रतिषेधार्थ-

कत्वमुचितमत आह । **सर्वत्राप्येति** । न केवलमत्रैवेत्यपि सूचितोऽर्थः । पर्युदासे चाभावस्याननुष्ठेयत्वात्तद्वाचिव्रतशब्दोपक्रमात्तेन नञिव युक्तन्यायेन च तद्भिन्नसङ्कल्पशक्तिमायाः सामान्यतः प्राप्तत्वाच्चानीक्षणसंकल्पे लक्षणा अन्यथा 'व्रतानीमानि धारयेदिति' **मानवः** 'तस्यैतस्य व्रतानि भवन्ती' **त्याश्वलायनोक्तो** 'अथ स्नातकव्रतानी'**त्यापस्तम्बोक्तेश्च** ( १।३०।६ ) । तथोपक्रमविरोधः स्पष्ट एवेति भावः । वस्तुतस्तु ईक्षणभिन्नसंकल्पे तात्पर्याभावात्तथा शिष्टाचाराभावान्नेक्षिष्यामीतीक्षणाभावसंकल्पस्यैव सर्वैराचरणात्स्वयमप्यग्रे मांसभक्षणविध्यादौ **मन्वा**द्येकवाक्यतया तथैव संकल्पस्वरूपस्य प्रदर्शितत्वाच्चेदं प्राचामनुरोधेन तस्मात्प्रसज्यप्रतिषेधार्थक एव । तत्र चानुष्ठेयवाचिव्रतशब्दोपक्रमाद्भावस्य चाननुष्ठेयत्वादीक्षतेर्नञ्समभिव्यवहारादीक्षणाभावसंकल्पबोधकता । अत एव 'उद्यंतमस्तं यान्तमादित्यं दर्शने वर्जयेत्' इति स्नातकप्रकरणे **आपस्तम्बः** । ( १।३१।१८ ) संगच्छते । एवं सर्वत्रेति बोध्यम् ।

अत्रेदं बोध्यम् । **आश्वलायनो**क्तानि(३।९।६)'न नग्नायादित्यादीनि' **आपस्तम्बो**क्तानि।(१।३०।७) 'पूर्वेण ग्रामान्निष्क्रमणप्रवेशनानि शीलयेदुत्तरेण वा इत्यादीनि च समावर्तनप्रकरणपाठात्तदङ्गानि तत्प्रयोगमध्ये एवानुष्ठेयानि । यानि तु "नेक्षेतोद्यन्तमि" त्यादिना **मन्वा**दिभिरुक्तानि तानि पुरुषार्थानि । तथा च तुर्याध्यायपादे प्रयोजकलक्षणे तदुत्सर्गे कर्माणि पुरुषार्थाय शास्त्रस्यानतिशङ्क्यत्वान्न च द्रव्यं चिकीर्ष्यते तेनार्थेनाभिसंबन्धात्क्रियायां पुरुषं श्रुतिरिति **जैमिनिसूत्रम्** । तदुत्सर्गे पीत्युत्सर्गे उपक्रमे श्रुतं ब्रह्मचारिव्रतपदं यतः तदन्वयबलात्कर्मविशेषोऽतोऽत्र चोद्यते । तेन लक्षणयाऽप्यत्र पर्युदासः । स च क्रतोर्बहिःश्रुतफलाकाङ्क्षी पुरुषार्थत्वमृच्छति । श्रुत्यादिकतुसंबन्धे प्रमाणं नात्र विद्यते । पुरुषापेक्षितार्थत्वं विधिना चावबोधितं साक्षाच्छ्रुतमतस्तस्य फलमेव न तु क्रतुः । अतः फलार्थता तच्च वाक्यशेषादवक्षय इति **पार्थसारथिश्च** । वाक्यशेषः एतावता हैनसा युक्तो भवतीत्येवंरूपः । यद्यपि तत्राधिकरणे ब्रह्मचारिधर्मभूतप्रजापतिव्रतान्तर्गतं 'नेक्षेतोद्यन्तमि'त्येतदुदाहृत्य विचारितं तथापि समानन्यायत्वात्स्नातकव्रतान्तर्गतेऽपि तत्राप्रकरणपठिते तत्सिद्धान्तप्रवृत्तिरत एव **हरदत्त**श्चिन्त्य इति प्रागुक्तम् ।

एवं स्थिते कदा संकल्प इत्याकाङ्क्षायां नोद्यन्तमिति शतृप्रत्ययेनादित्योदयस्य निमित्तत्वप्रतिपादनात्तत्तदवस्थे आदित्ये सति तदीक्षणाभावः संकल्पयितव्यः । नोद्यन्तमीक्षेनास्तं यान्तमित्यादीति **तन्त्ररत्ने** स्थितम् । तत्र प्राचां श्लोकोऽप्युदाहृतः ।

"त्रिसंध्यं जपताऽनेन सावित्रीं नेक्ष इत्ययम् । आदित्यं ध्यायता कार्यः संकल्पः पापनाशनः"॥ इति ।

अत्र वदन्ति । शतृप्रत्ययो लटःशत्रिति लक्षणहेत्वोरिति च विहितः । तत्रायं हेतावेवेत्यत्र प्रमाणाभावः । किं च हेतुः फलमिति व्याख्यायार्जयन्वसतीति अवैय्याकरणैरुदाहृतत्वादर्जनफलकवासवानिति च विवरणात्प्रकृते तदन्वयः । अथ लक्षणं परिचायकमिति व्याख्याय 'शयाना भुञ्जते यवना' इति चोदाहृत्य शयनोपलक्षितभोजनकर्तार इति विवरणात्तद्वदिहापीत्यभिमतं तर्हि उदयपरिचायितं यदीक्षणं तदभावसंकल्पस्य व्रतान्तरसंकल्पकाले सकृदेव चानुष्ठाने को विरोधः । नाप्यत्र शतृबलाद्वर्तमानता प्रतीतिरुतयन्नवात्सीद्वत्स्यति वेत्यादिवत् । तथा च पाणिनिरसूत्रयत् । ( ३।४।१ ) "धातुसंबन्धे प्रत्ययाः" इति उत्पत्स्यमानेऽपि सोमयाजी पुत्रो भवितेत्यादि च भाष्यादावुदाहृतं वसन्ददर्शेत्यादिप्रयोगाश्चैवं संगच्छते । किं च । ( **मनुस्मृ.** अ. ४ श्लो. ४३ ) ।

---

१ गृ. सू. (३।९।५)।

"नाश्नीयाद्भार्यया सार्धं नैनामीक्षेत चाश्नतीम् । क्षुवतीं जृम्भमाणां च" इत्यादिपुरुषार्थानीमान्यपि व्रतानि संकल्पयेदित्येव युक्तं न च प्रत्यहं संकल्प इत्यंशे तदुत्सर्गे इत्याद्यधिकरणस्य कश्चिद्व्यापारोऽस्ति क्रत्वर्थत्वं पूर्वपक्षीकृत्य पुरुषार्थतासमर्थनमात्रेणाधिकरणपर्यवसानादिति तदेतदुक्तम् **मनुना**ऽपि । ( अ. ४ श्लो. १५ )

"नेहेतार्थान्प्रसंगेन न विरुद्धेन कर्मणा । न कल्पमानेष्वर्थेषु नार्त्यामपि यतस्ततः" ॥

इति पूर्वार्द्धं व्याख्यातम् । तत्र प्रसंगेन प्रकृष्टसंगेन अत्यन्ततत्परतया नेहेतेति **नारायणः** । पित्र्याद्यागतेषु धनेषु कल्पमानेषु स्थितिसमर्थेषु न अन्यानिच्छेत् ।

आर्त्यामापद्यपि निषेधानुक्त्वा विधिरुच्यते इति सूचयन्नाह । **किंचेति** । प्रकृतत्वादर्थाभावकृतासंतोषव्युदासकमेवेदमित्याशयेन सदेत्यस्यार्थमाह । **अर्थेति** । संतोषी यथाकथंचिदक्लेशेन जीवने याच्ञादिकृतक्लेशाभाववान् तदेवाह । **परेति** । **संयत इति** । निर्वाहकधनादधिके धनेऽभिलाष इत्यर्थः । सुखार्थीति सन्तोषमूलं हि सुखदुःखमूलं विपर्ययः ।

"अतोऽन्यतमया वृत्त्या जीवंस्तु स्नातको द्विजः । स्वर्गायुष्ययशस्यानि व्रतानीमानि धारयेत्" ॥

इति । ( श्लो. १३ ) तदग्रे तदुक्तेः ॥ १२९ ॥

## याज्ञवल्कीये १३० श्लोकः

न यतस्तत इत्यस्य प्रतिप्रसवोऽयम् । अत एव 'कुतस्तर्हीं'त्येवमवतारितं तदेतध्वनयन्नाह । **विवितेति** । मध्यमणिन्यायेनान्वयः । एतेन न गङ्ग इति निषेधस्याप्यनवसर इत्यपि सूचितम् । विशेषपरिग्रहायाह । **वक्ष्येति** । अर्हार्थे कृत्य इत्याह । **याजनार्हाद्येति** । क्षुत्क्षान्तेरिच्छामात्रेणाभावेन तत्पूर्त्यर्थं लक्षणया आह । **आदद्दीतेति** । सन्तोषी संयत इत्यपि अनेन दृढीकृतमत एवार्थालाभेऽपीत्युक्तं न त्वर्थाभावेऽपीत्याह । **क्षुधेति । न कुत इति** । कस्माच्चिदपीत्यर्थः । तदुक्तं **मनुना**ऽपि । ( अ. ४ श्लो. ३३ )

"राजतो धनमन्विच्छेत्संसीदन्स्नातकः क्षुधा । याज्यान्तेवासिनोर्वाऽपि न त्वन्यत इति स्थितिः "॥ इति ।

"न सीदेत्स्नातको विप्रः क्षुधा शक्तः कथंचन" इति च ( श्लो. ३४ ) । शक्तः अर्जनसमर्थः । **नारदो**ऽपि' ।

"शुचीनामशुचीनां च सन्निपातो यथाऽम्भसाम् । समुद्रे समतां याति तद्वद्राज्ञां धनागमः" ॥

"यथाऽग्नौ संस्थितं सर्वं शुचिमायाति काञ्चनम् । एवं प्रतिग्रहाः सर्वे शुचितां यान्ति राजनि "॥

इति । विधिमुक्त्वा निषेध उच्यते इत्याह । **किं चेति** । प्रकरणाद्धनग्रहणे एवेति भ्रमो न कार्यः । मनूक्तेरिति सूचयन्नाह । **सकलेति** । क्वापि तत्संगं न कुर्यादित्यर्थः । मनूक्तक्रमेणैवाह ।

**विकर्मेति** । मानवे चेन दंभिसंग्रह इति सूचयन्नाह । **लोकेति** । एवेन धर्मबुद्धिव्यवच्छेदः । **युक्तीति** । वेदविरुद्धतर्कनिष्ठ इति यावत् । **त्रैविद्येति** । वेदत्रयाध्येतृवृद्धैरस्वीकृताश्रमविशिष्टा इत्यर्थः । 'विरुद्धैरिति' पाठे तद्विरुद्धैः परिगृहीतो य आश्रमस्तद्विशिष्टा इत्यर्थः । 'त्रैविद्यविद्येति' पाठे तेषां विद्यायां वेदत्रय्यामयुक्ताश्रमविशिष्टा इत्यर्थः । वेदबाह्यागमार्थानुष्ठातार इति यावत् । **वर्तनामिति** । अनेन भावक्तिन्नन्तेन बहुव्रीहिरिति बोधितम् । **अधोदृष्टिः** । अधोनिरीक्षणकृत्नीचदृष्टिर्वा । नीचो दीनः । निकृतिर्निष्ठुरता तया चरति तत्प्रधानो **नैकृतिकः**।**प्रतीति** आश्रमस्था एवानापद्याश्रमधर्मानुष्ठानहीनाश्चापि तथेत्यपि बोध्यम् । बिडालस्य व्रतं तेन चरतीति **बैडालव्रतिकस्त**त्फलितमाह । **बिडाल इति** । **स्वभाव इति** । तमुद्दिश्य व्रतपदवाच्यताविधेर्नानुपपत्तिः । **धर्मेति** । धर्मो ध्वजमिवेति व्याघ्रादिस्तत इनिः । सर्वधनात्यादिवत् । यः ख्यात्यर्थमेव धर्मं करोति न शास्त्रपरतया स एवमुच्यते । **लुब्धः** समत्सरः कृपणश्च । छद्मना व्याजेन चरति **छाद्मिकः** । प्रकाशधार्मिको रहसि निक्षिप्तमपहरति यः सः । लोकान् दम्नोति वञ्चति **लोकदम्भकः** । **हिंस्रः** परद्रोहकृत् । अभिसंधत्ते हन्तीत्य**र्थभिसंधः** । आतश्चोपसर्गे इति कः । ततः स्वार्थिकः कुत्सायां कः सर्वेषामभिसंधक इति षष्ठीसमासः । वक इति समर्थोऽपि व्याजेन कर्मत्यागीत्यपरे ।

न्यूनतां निराचष्टे । **एतैः संसर्गेति** । अनेन किंचित्कालं संसर्गो यत्र कार्ये जायते तत्रैवैतेषां वर्जनमिति भिक्षादानं गृहाद्बहिर्भवत्येवेति न प्रागुक्तविरोधः । अत एवान्नदानमेवाधिकृत्य **व्यासः** 'न जन्म न श्रुतमिति' नात्र पात्रगवेषणाकर्तव्येति तदर्थः । एवं च सर्वकार्यपदं प्रागुक्तं तदन्यपरम् । अत एव **मनुना** पूर्वमर्चानिषेध एव कृतः न च दानमपि **मनुना** निषिद्धमेतत्प्रकरणे । ( अ. ४ श्लो. १९२–१९८ )

"न वार्यपि प्रयच्छेत बैडालव्रतिके द्विजे । न बकव्रतिके पापे नावेदविदि धर्मवित् ॥
"त्रिष्वप्येतेषु दत्तं हि विधिनाऽप्यर्जितं धनम् । दातुर्भवत्यनर्थाय परत्रादातुरेव च ॥
"यथा प्लवेनोपलेन निमज्जत्युदकेऽन्तरम् । तथा निमज्जतोऽधस्तादज्ञौ दातृप्रतीच्छकौ ॥
"धर्मध्वजी सदा लुब्धश्छाद्मिको लोकदम्भकः । बैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसंधिकः ॥
"यस्य धर्मध्वजो नित्यं सुराध्वज इवोच्छ्रितः । प्रच्छन्नानि तु पापानि बैडालं नाम तद्व्रतम् ॥
"अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः । शठो मिथ्याविनीतश्च बकव्रतचरो द्विजः ॥
"ये बकव्रतिनो विप्रा ये च मार्जारलिङ्गिनः । ते पतन्त्यन्धतामिस्रे तन पापेन कर्मणा ॥
"न धर्मस्यापदेशेन पापं कृत्वा व्रतं चरेत् । व्रतेन पापं प्रच्छाद्य कुर्वन् स्त्रीशूद्रदम्भनम्"।

इत्यादि **मनूक्ते**रिति वाच्यम् । तस्य धनदाननिषेधकत्वान्नान्नस्य वार्यपीत्यस्य कैमुतिकन्यायेन तत्रैव तात्पर्यात् । यद्वा विशिष्टजलदाननिषेधे तात्पर्यात् तेन सामान्यतः सर्वार्थत्वाद्वारिणो न निषेधः । **अत एव प्रतिग्रहीतुरतिशयोक्ति**रिति बोध्यम् । अर्धेन स्नातकस्य विध्यात्मकव्रतान्तरमुच्यत **इत्याह** । **किं चेति** । ॥ १३० ॥

## याज्ञवल्कीये १३१ श्लोकः

'नैकवासा' इति वक्ष्यमाणनिषेधवक्ष्यमाण**वसिष्ठा**द्यनुरोधेनाह। **शुक्के इति** । धरतीति पाठः । धारयतीति पाठे निवृत्तप्रेषणाद्धातोः प्राक्रुतेऽर्थे णिजुच्यते इति गतिर्बोध्या । पचादौ विशिष्टपाठादच् तेनाण् न स्पष्टं चेदमन्यत्र "पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम्"(२।६।८३)**इत्यमरान्नखाश्चेति** न विरुद्धम् । लघूक्षरत्वान्नखस्य पूर्वनिपातप्राप्तावप्यभ्यर्हितत्वात्केशस्य पूर्वनिपातः । नीचपदस्वारस्यात् "क्लृप्तकेशनखश्मश्रुर्दांतः शुक्लाम्बरःशुचिरिति" । ( अ. ६ श्लो. ५२) **मानवा**नुरोधाच्चाह। **क्लृप्त-मिति** । कर्तनाद्ध्रस्वमित्यर्थः । अनेन तस्य मुण्डनाभावः सूचितः । तथा **चापस्तम्बः** । ( १।१०।७ ) "न समावृत्ता मुण्डयेरन्नन्यत्र विहारादिति" **मनुस्थ**क्लृप्तमित्यस्य कर्तनादिना ह्रस्वतां नीतं न तु मुण्डितमिति **नारायणो हरदत्तो मेधातिथिश्च** । एतेन श्मश्र्वादिप्ररोहणमपि निषिद्धं भवति। तथा च **गौतमः** । ( अ. ९ सू. ८ ) । 'न रूढश्मश्रुरकारणादिति' श्मश्रुग्रहणं नखादीनामप्युपलक्षणमकारणान्न रूढश्मश्रुः स्यात्कारणं तु **स्मृत्यन्तरे** पठितम् ।

"षष्ठाब्दे षोडशाब्दे च विवाहाब्दे तथैव च । अन्तर्वत्न्यां च जायायां क्षौरकर्म विवर्जयेत्" ॥ इति

**दान्तो** दर्परहितः । प्राग्वदाह । **अतिरिति** । क्लृप्तकेशादित्वादेव बाह्यशौचं स्नानेन अन्यथा दीर्घकेशस्य स्नानादिषु क्लेशसाध्यत्वेनालस्यापत्तावशुचित्वापत्तिस्तदेतद्ध्वनयन्न्यूनतानिरासायान्यस्मृत्यनुरोधेन शेषं पूरयति । **स्नानेति** । सुगन्धिश्चेति पाठः। पुष्पानुलेपनयोरनेन पृथगनुपलम्भः सूचितः । सर्वत्र वाक्यार्थपरिसमाप्तये शेषमाह । **भवेदिति** । बाह्यशौचत्वसाधकं हेतुगर्भं विशेषणं **स्नानेति** । इदमुपलक्षणमनुलेपनादेरपि । प्रसंगात्प्राग्वदाह । **सुगन्धित्वेति** । **धारयेदिति** । प्राग्वत् । बिभृयादिति तदर्थः । अभ्यर्हितत्वाद्धिरण्यस्य पूर्वनिपातः। एतावत्पर्यन्तं स्नातकस्यैव व्रतानीति सूचयितुमग्रे विशेषं वक्तुमस्य कादाचित्कत्वभ्रमनिरासाय **गौतमोक्त**नित्यपदानुरोधेनोपसंहरति । **सदेति** । मनूक्तिमाह । **न जीर्णेति** । अथ गृहस्थसाधारणव्रतमाह । **न चेति** । एकवाक्यमिदम् । एवमग्रेऽपि । अत एव किं चेति प्रागुक्तम् । एवं सर्वत्र तत्कर्मकदर्शने इति नार्थः । किं तु तत्कर्तृकदर्शने इति तत्सूचयन् तदर्थमाह । **तस्यामिति** । अत एव भार्यायां पश्यंत्यामिति **कल्पतरुः** । दृष्टार्थोऽयं निषेध इत्याह । **अवीर्यवदिति** । असुव्वत इति भाष्यप्रयोगवदुपपत्तिर्बोध्या । अत एवाग्रे न छान्दसत्वस्वीकारः । **अन्ते** निकटे । "अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोरवयवेऽपीति" **हैमः**। तत्वं च तथा । एवं तत्दृष्टिवशात्तथेति भावः । अतस्तद्दर्शने निषेधादेव एतेन न्यूनता निरस्ता। तथा च **मनुः** ( अ. ४ श्लो. ४३ ) । "नाश्नीयाद्भार्यया सार्द्धं नैनामीक्षेत चाश्नतीम् " । इति ।

सार्धम् एकपात्रे इति **नारायणः** । एककाले भोजननिषेध इति **हरदत्त**कृतं व्याख्यानातरम् । भार्यया असवर्णया

"ब्राह्मण्या भार्यया सार्धं क्वचित् भुञ्जीत चाध्वनि। असवर्णया स्त्रिया सार्धं भुक्त्वा पतति तत्क्षणात् "॥

इति **ब्राह्मात्** । **माधवोदाहृतादित्यपुराणाच्च** क्वचिदुत्सवादौ । अत **एवाङ्गिराः** ।

---

१ अ. ४ श्लोक ३४.

"भार्यया सह योऽश्नीयादुच्छिष्टं वा कदाचन । न तस्य दोषं मन्यन्ते नित्यमेव मनीषिणः ॥
"उच्छिष्टमितरस्त्रीणां योऽश्नीयाद्ब्राह्मणः क्वचित् । प्रायश्चित्ती स विज्ञेयः " इति ॥

**स्मृत्यर्थसारेऽपि** । "न शिशुभिः सह भुञ्जीत न भार्यया सह विवाहवर्जमिति" । इदमपि सर्वथा दोषाभावपरं न । किं तु दोषाल्पत्वपरमिति **माधवः** । अथ साधारणव्रतान्याह । **न चैकेति** । **मनुरपि** ( अ. ४ श्लो. ४५ ) ।

"नान्नमद्यादेकवासा न नग्नः स्नानमाचरेत्" इति । "एकवासा नग्नो वा नाद्यान्न च स्नायादिति" **नारायणः** । **उत्थित इति** । सन्निति शेषः ॥ १३१ ॥

## याज्ञवल्कीये १३२ श्लोकः

प्राग्वदाह । **कदाचिदपीति** । सर्वत्रेदं बोध्यम् । पदयोर्लक्ष्यार्थं आह । **प्राणेत्यादि** । **उपेति** । आक्रान्तेत्यर्थः । साधारण्यसूचनायाह । **कंचिदपि पुरुषमिति** । तं प्रतीत्यर्थः । कारीति उद्वेगकरमिति पाठे पंचादिर्बोध्यः । ननु नाप्रियमित्यनेनैव सिद्धे निषेधद्वयवैयर्थ्यमत आह । **प्रियमपीति** । उभयशेषोऽयमेतदर्थमेव विद्यमाननञस्त्यागेनैकस्यैवोभयत्रान्वयस्वीकारेण विकल्पपरतया व्याख्यातं तदुक्तं **मनुना** ( अ. ४ श्लो. १३८ )

"सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् । प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः" ॥ इति ।

प्राग्वदाह । **मात्स्येऽपि** शर्मिष्ठावाक्यं ययातिं प्रति न धर्म० । **चकारादिति** । **असभ्यम**श्लीलं बीभत्सा घृणा **अकस्मान्न वदेदितीति** । **एतच्चेति** । चस्तेन पदार्थमाह । **अन्येति** एकं वाक्यम् । प्राग्वदाह । **अदत्तेति** । स्यादित्यस्य मध्यमणिन्यायेनान्वयं सूचयन्नाह । **न वार्धुषी स्यादिति** । तदर्थमाह **प्रतीति** ॥ १३२ ॥

## याज्ञवल्कीये १३३ श्लोकः

**तदस्यास्तीति** । **दाक्षायणीति** पाठो मत्वर्थीय इति वक्ष्यमाण**मन्व**नुरोधेन यथाश्रुतमसंभावितं त्यक्त्वा वेणुमानिति व्याचष्टे । **कमण्डेति** । मोदकेत्यादिः पूर्वतोऽनुषङ्गमाह । **स्यादितीति** । विशेषमाह । **अत्रेति** । **द्वितीयमिति** । तेषामन्तर्वासः स्यात्तथोत्तरं द्वितीयं वासः स्यादित्यर्थः । स्यादित्यस्य यथासंभवं सर्वत्र संबन्धः । विशेषान्तरमाह । **अत्र चेति** । **यज्ञोपवीतमिति** । द्वितीयमिति भावः । **वेदमिति** । दर्भमुष्टिमित्यर्थः । ऐष्टिकवेदप्रकृतिं कुशमयीं मुष्टिमिति **नारायणः** । **रौक्मे** सुवर्णविकारभूते धारयेदित्यस्यानुवृत्तिः ।

उत्तरार्द्धार्थमाह । **तथेति** । अभ्यर्हितत्वाद्देवस्य पूर्वनिपात इति सूचयन् तथैव व्याचष्टे । **देवं** देव**प्रतिमामिति** । देवतार्चामिति पाठेऽर्च्यते इत्यर्चा देवताया अर्चेति व्युत्पत्त्या स एवार्थः । असंभवनिरासायाह । **उद्धृतामिति** । तीर्थादित्यादिः । क्वचित्तथैव पाठः । तत उद्धृत्य स्थापितामित्यर्थः । 'ण्वनेति पाठः' । **प्रदक्षिणमिति** । क्रियाविशेषणमन्यथा बहुवचनौचित्यमिति ध्वनयन् अर्थान्तरनिरासाय लक्षणया पुनर्व्याचष्टे । **एतानिति** । न्यूनतां निराचष्टे । **एवमिति** । **गामश्व-**

१ व्या. सू. ३।१।११४ ।

मितिवद्विनापि चं समुच्चयप्रतीतेराह । **प्रदक्षिणानीति** । अजहल्लिङ्गत्वेनाग्रेऽप्यन्वयः । वनस्पतीनां प्रज्ञातत्वं च प्रमाणतः पुष्पफलातिशयतो देवतारूपत्वेन वा प्रसिद्धत्वं तेन तदन्यनिरासः। तदुक्तम**श्वत्थादिमिति । न तु मेहेदिति** । नदीत्यादिषण्णामितरेतरद्वंद्वः । अभ्यर्हितत्वान्नद्याः पूर्वनिपातः । **प्रतीति** भिन्नं पदम् । अग्रे गवादिजन्मान्तं तथा द्वंद्वं कृत्वा पुनरर्कस्य तेन सह तं कृत्वा पुनरग्नेस्तेन सह स इति भावः । पुनर्नञुक्तिर्वाक्यभेदार्था । तथा च **मनुः** (अ.४ श्लो.४५।४६।४७।५२)।

“न मूत्रं पथि कुर्वीत न च भस्मनि गोव्रजे ।

“न फालकृष्टे न जले न चित्यां न च पर्वते । न जीर्णदेवायतने न वल्मीके कदाचन ॥

“न ससत्वेषु गर्तेषु न गच्छन्नापि च स्थितः । न नदीतीरमासाद्य न च पर्वतमस्तके ॥

“प्रत्यग्निं प्रतिसूर्यं च प्रतिसोमोदकद्विजम् । प्रतिगु प्रतिवातं च प्रज्ञा नश्यति मेहतः ” ॥ इति ।

मूत्रं पुरीषस्याप्युपलक्षणम् । गोव्रजो गोष्ठं चितिः श्येनचित्यादिश्चिता वा जीर्णपदं दृष्टार्थं इष्टकादिपातसंभवात् । 'जीर्णे शीर्णे प्राकारादौ देवतायतने च इत्यर्थ' इति **दीक्षिताः** । 'सत्वं प्राणीस्थित ऊर्ध्वं न च पर्वतमस्तके' इत्यनेन पुनरुक्तेनाशक्यपरिहारस्थले पर्वतस्याभ्यनुज्ञाऽपि सूचिता ।

**देवलो**ऽपि ।

“वापीकूपनदीगोष्ठचैत्याम्भःपथि भस्मसु । अग्नौ काम्ये श्मशाने च विण्मूत्रं न समाचरेत् ”॥ इति ।

अत्र वाप्यादित्रयं जलरहितमम्भसः पृथगुपादानात् ।

इदं तडागादीनामप्युपलक्षणम् । चैत्यो ग्रामप्रधानो वृक्षः । 'चैत्यमायतनं तुल्ये' इति **कोशा**[1]दावासगृहमिति कश्चित्काम्यं रमणीयो देशः । **विष्णुरपि** “न छायायां नोषरे न शाद्वले न रथ्यायां न पराशुचौ नोद्याने नोद्यानोदकसमीपयोर्नाङ्गारेषु न गोमये नाकाशे” इति । 'आकाशोऽट्टालिकेति' **कल्पतरुः । असं**वृतदेश इति **श्रीदत्तः** स प्रकाशः ।

“आहारं च रहः कुर्यान्निर्हारं चैव सर्वदा । युज्यते हि श्रिया गुप्ते प्रकाशे हीयते श्रियाः” ॥

इति **हारीतात्** । निर्हारो मूत्रपुरीषयोरेतयोः त्याग इत्यन्ये । “न सोपानत्पादुको वा न छत्री नान्तरिक्षके” इति **कौर्मा**दाकाशपदमन्तरिक्षपरं नित्यानुवाद इत्यपरे । उपानच्चर्ममयी पादुका काष्ठमयी अत्रोपानन्निषेधः पादुकासाहचर्यात्स्नानदेवयात्राद्युपयुक्तोपानत्परो दृष्टार्थः । अत एव “सोपानत्कः प्रकुर्वीत मूत्रोच्चारविसर्जनमिति” **स्मृत्यन्तरं** संगच्छते । पराशुचौ परकीयमूत्राद्यशुचिदेशे **यमो**ऽपि ।

“तुषाङ्गारकपालानि देवतायतनानि च । राजमार्गश्मशानानि क्षेत्राणि च खलानि च ॥

“उपरुद्धो न सेवेत छायां दृश्यं चतुष्पथम् । वर्जयेद्वृक्षमूलानि चैत्यश्वभ्रबिलानि च ” ॥ इति ।

खलं सस्यमर्दनदेशः । उपरुद्धो मूत्राद्युत्सर्गकारी । दृश्यं शोभनं पथि निषेधेनैव सिद्धे राजमार्गचतुष्पथोपादानं दोषाधिक्यायेति **कल्पतरुः** । दण्डविशेषरूपदृष्टदोषान्तरख्यापनार्थमिति **श्रीदत्तादयः** । अन्ये तु समीपलक्षणमाहुः । वृक्षे उक्ते चैत्योक्तिरप्येवम् । श्वभ्रं विदीर्णभूभागः बिलं विवरम् । छाया सर्वत्र पथिकाद्युपजीव्या मेघच्छाया तूपजीव्याऽपि न निषिद्धा । तथा च **वसिष्ठः** (अ. ६ सू. १२) 'नोप्ते न शाद्वलोपजीव्यच्छायास्विति'' । उप्ते कृतबीजावापे । **आपस्तम्बः**

१ अमरः २।२।७ ।

(११३०।१६-१७)।"छायायां मूत्रादिकर्म वर्जयेत्स्वान्तु छायामवमेहेत्"।सूर्याभिमुखत्वनिषेधात्स्वच्छायायामवमेहनासंभवेऽपि सति संभवेऽभ्यनुज्ञामात्रमेतत्। तेनानुपजीव्याऽपि परकीयच्छाया निषिध्यते। छायामित्यस्य प्रतीतिशेषः। तेन स्वच्छायां लक्षीकृत्य मेहेदित्यर्थः। यत्तु **विष्णुपुराणम्**।

"आत्मच्छायां तरुच्छायां गोसूर्याग्न्यनिलांस्तथा। गुरुदेवद्विजांश्चैव न मेहेत कदाचन"॥ इति।

तत्रात्मपदं शरीरपरं परकीयच्छायामित्यर्थ इति न तद्विरोधः। वस्तुतस्तु **वासिष्ठे** उपजीव्यशब्दो न छायाविशेषणं किं तु क्षेत्रादिपरः स्वतन्त्रनिमित्तबोधकः। अत एव तत्र बहुवचनम्। आत्मच्छायां तरुच्छायामिति मेवच्छायासंग्रहार्थं यथाश्रुतमेव। स्वां तु छायामिति तु मध्याह्नपरम्। एवं चोपजीव्यानुपजीव्यसर्वच्छायानिषेध इति बोध्यम्॥ १३३॥

## याज्ञवल्कीये १३४ श्लोकः

तदनुरोधेन प्रकृतार्थमाह। **न मूत्रपुरीति**। तदनुरोधेनैव चार्थव्युत्क्रमत्कसमुच्चयमाह। **एवमिति**। अस्य निषेधस्य दृष्टार्थतामाह। **भूतेति**। 'जन्मन इति' द्वितीयाबहुवचनमित्याह। **तथाऽग्न्यार्कान्प्रतीति**। प्रत्यर्थमाह। **अभीति**। **भारतेऽपि**।

"प्रत्यादित्यं प्रत्यनस्तं प्रतिगां च प्रतिद्विजम्। मेहन्ति ये च पथिषु ते भवन्ति गतायुषः"॥ इति।

इदं गोदेवतासांमुख्यस्याप्युपलक्षणम्। **यमो**ऽपि।

"प्रतिसोमं प्रतिजलं प्रतिसंध्ये च नित्यशः। प्रत्यादित्यं न मेहेत न पश्येदात्मनः शकृत्॥

"दृष्ट्वा सूर्यं निरीक्षेत गामग्निं ब्राह्मणं तथा"। इति।

संध्या चात्रोदयास्तवती। दिग्गुरुविप्रस्त्रीगोदेवदेवालयसंमुखेऽपि नेति। **कौर्मेऽपि सांख्यायनगृह्येऽपि** नादित्यमभिमुखो न जघनेनेति तिर्यङ्मुखत्वादिना स्वस्य रविसांमुख्यपरिहारेऽपि प्रसक्तस्य जघनसांमुख्यस्य निषेधोऽयम्। यद्वाऽतिनम्रतया स्वस्यैव जघनसांमुख्यं निषिध्यते। **मनु**स्तूक्त एव। इत एवार्थाल्लब्धं न्यूनतानिरासायाह। **नाप्येतानिति**। मेहेतेत्यस्यानुषङ्गः। तत्र मानमाह। **यथाहेति त्याप**। इत्यत्रानित्यत्वात्समासान्तो न। प्रतीतिभिन्नं सांमुख्यनिषेधपरम्। अत एवाह। **पश्यन्वेति**। संमुखमुपलभ्यमान इत्यर्थः। **उदस्ये**त्याक्षिपेत्। **अमेध्यं** ष्ठीवनादि। अमेध्यग्रहणेनैव सिद्धे मूत्रपुरीषयोः पृथगुक्तिस्तयोरतिशयेन वर्जनार्थमन्यथा दोषाधिक्यापत्तिरिति **हरदत्तः**। **अपि नैता देवता इति**। अपिशब्दात्प्रागुक्तसर्वसमुच्चयः। 'न ज्योतींषि निरीक्षन्निति' **कौर्मे**। **मनु**रपि(अ०४श्लो०४८।५२)

"वाय्वग्निं विप्रमादित्यमपः पश्यंस्तथैव गाः। न कदाचन कुर्वीत विण्मूत्रस्य विसर्जनम्"॥ इति।

"नामेध्यं प्रक्षिपेदग्नौ न च पादौ प्रतापयेत्"। इति। 'न चैनं पादतः कुर्यात्'। इति (५४)।
"नाप्सु मूत्रं पुरीषं वा ष्ठीवनं वा समुत्सृजेत्। अमेध्यलिप्तमन्यद्वा लोहितं वा विषाणि वा"॥ इति। (५६)

विशेषं प्रागवदाह। **एतद्देशेति**। यथाह **वसिष्ठ** इति। **अङ्गिरा** अपि।
"उत्थाय पश्चिमे यामे रात्रेराचम्य चोदकम्। अन्तर्धाय तृणैर्भूमिं शिरः प्रावृत्य वाससा॥

"वाचं नियम्य यत्नेन निष्ठीवोच्छ्वासवर्जितः । कुर्यान्मूत्रपुरीषे तु शुचौ देशे समाहितः॥ " इति ।

स्नापादिनिमित्तमिदमाचमनं तृणैः शुष्कैः इदं चायज्ञियशुष्ककाष्ठपत्रलोष्ठवेणुदलमृण्मयभाजनानामप्युपलक्षणम् ।

"शुष्कैस्तृणैर्वा काष्ठैर्वा पत्रैर्वेणुदलेन वा । मृण्मयैर्भाजनैर्वाऽपि अन्तर्धाय वसुंधराम्" ॥ इति **वायुपुराणात्** ।

"अयज्ञियैरनार्द्रैश्च तृणैः संछाय मेदिनीम्" ॥ इति **यमाच्च** ।

"वेणुदलं पाटिततद्भागविशेषः शिरः प्रावरणं द्विवस्त्रत्वपक्षेन त्वेकवस्त्रत्वेनोत्तरीयमधःकार्यं नोपर्यधस्त्यम्बरमिति" **व्यासेन** निषेधकरणात् । उच्छ्वासश्वासाहजिको व्यावर्त्यते । साहजिकस्याशक्यवर्जनत्वात् । **मनुयमाव**पि ( अ. ४ श्लो. ४९ )

"तिरस्कृत्योच्चरेत्काष्ठं पत्रं लोष्ठं तृणानि च । नियम्य प्रयतो वाचं संवीतांगोऽवगुण्ठितः" ॥ इति ।

तिरस्करणमन्तर्धानम् । संवीताङ्गो वेष्टितदेहः । अवगुण्ठितः प्रावृतशिरस्कः । लोष्ठं मृत्खण्डम् । विशेषान्तरमन्यतो बोध्यम् । तथा चात्र क्रमः । "शिरः परिवेष्टनमाद्यं निवीतं द्वितीयम् उदङ्मुखत्वादिभवनं तृतीयं तृणादिनाऽन्तर्धानं चतुर्थं मौनं पञ्चमं पुरीषं षष्ठं मृद्ग्रहणं सप्तममुदकमष्टमामिति" ॥१३४॥

## याज्ञवल्कीये १३५ श्लोकः

सर्वं वाक्यमिति न्यायेन व्याचष्टे । **नैवार्कमिति** । तत्र शङ्कापूर्वं विशेषं प्राग्वदाह । **यद्यप्यत्रेति** । उदयास्तमयशब्दाभ्यामर्श आंग्यजन्ताभ्यां तत्कालिकयोर्ग्रहणं समाहारद्वंद्वः । एव व्यवच्छेद्यमेवाह । **न सर्वदेति । यंतं** गच्छन्तम् । **उपसृष्टं** राहूपरक्तं तेन गृहीतम् । नोपरक्तमिति पाठान्तरम् । स्नानार्थं सकृद्दर्शने तु न दोषः । दृष्ट्वा स्नायादिति विधानादिति **नारायणः** । वस्तुतो दर्शनं नैव विधेयमिति स्फुटमन्यत्र । वारिस्थं जले प्रतिबिम्बितं नभसोऽन्तरिक्षस्य मध्यं गतं मध्याह्नकालिकम् । प्राग्वदाह । **उपेति । न नग्नामिति** । यत इत्यादिः । भूतक्तस्वारस्येन पौनरुक्त्यं परिहरति । **उपभोगान्ते इति** । प्राग्वदाह । **चकारादिति** । भार्यया सार्द्धमित्यत्र विशेषः प्रागुक्तः । अन्वादेशसत्वादेनादेशः । **क्षुवंती** । क्षुतं छिक्कां कुर्वतीं टुक्षु शब्दे । **जृम्भमाणां** जृम्भां कुर्वतीं । **चः** समुच्चये । वेति पाठे स तत्रैव । **यथासुखमिति** । अनवग्रथितकेशीं भूमौ निपातितगात्रां वा इत्यर्थः । **नाश्नेति** । एतच्च न भार्यामात्रविषयं किं तु स्त्रीमात्रपरं "भार्ययासहभोजनमञ्जनावेक्षणं च वर्जयेदिति" ( अ. ९ सू. ३२ ) । **गौतम**स्वरसरसादिति मतान्तरं **हरदत्ते**नोक्तम् ।

**स्वके** इत्यनेन परांजनकर्त्र्या अनिषेधः । अनावृतामपावृतवसनां प्रसवन्तीं जायमानबालां, प्रसुवन्तीमिति पाठान्तरं, पुत्रं प्रापयन्तीमिति तदर्थः । नुम्छांदसः सु प्रसवणे । **तेजस्काम इति** । तेजोवर्णः । ललनायामुत्साहप्रयोगश्च । अनेन दृष्टादृष्टार्थत्वमस्य सूचितं तत्र प्रीत्यभावनिरासो दृष्टफलं सर्वत्र तदवस्थायां विकृतदर्शनेन तत्संभवात् । न च मूत्रपुरीषे चेति पाठं सूचयन्नाह । **मूत्रपुरीषे चेति** ।

१ व्या. सू. ५।२।१२७ ।

प्रागवदाह । **चकारादिति** । एकेनैव मिथः समुच्चयसिद्धेरतिरिच्यमानाद्वितीयादित्यर्थः । **मनुमाह** । **न चोदके इति** । स्वस्य रूपं शरीरसंस्कारं स्वग्रहणात्परस्य रूपप्रेक्षणानिषेधः । **इति धारणाशास्त्रेष्वेव** निश्चयः । इन्त्विति पाठान्तरम् ॥ १३५ ॥

## याज्ञवल्कीये १३६ श्लोकः

सर्वपदनैष्फल्यं सूचयन्नाह । **इति मन्त्रमिति** । मन्त्रत्वस्य तत्रैव सत्वात्स्पष्टार्थं तु **भगवता** तदुक्तं सर्वमिति शेषः । **अप्रेति** तच्छिरस्क इत्यर्थः । **गौतमीये** ( अ. ९ सू. ३५ ) 'न प्रावृत्यशिरोऽहनि पर्यटेत्' । अयं प्रावृतशिरसो दिवा चङ्क्रमणप्रतिषेधः । आसीनस्य यथारुचि मार्गे वर्षातपाधिबाधे प्रावृत्याऽपि चङ्क्रमणे न दोषः । 'सर्वत एवात्मानं गोपायेदि'त्युक्तेः (सू. ३४)। गच्छेदित्यस्य व्यावर्त्यं प्रागवदाह । **न धावेदिति । मनु**माह । **न प्रधावेच्च वर्षतीति** । इतः प्राक् न लङ्घयेद्वत्सतन्तीमिति पाठः । गोवत्सबन्धनं दामवत्सतन्तीति **नारायणः** । वत्सशब्दो गोजातेरुपलक्षणमिति तु नोपरिवत्सतन्तीं गच्छेदिति **गौतमीय**व्याख्यायां **हरदत्तः** । **न च प्रत्यगिति** । इदं गृहविषयम् । अत एव ।

"स्वगृहे प्राक्शिराः शेते आयुष्यं दक्षिणाशिराः । प्रत्यक्शिराः प्रवासे तु न कदाचिदुदक्शिराः"॥

इति **गार्ग्य**विरोधो न । अत एव चेदमुपलक्षणमत एव **हारीतः** "न तिर्यगुदक्प्रत्यक्शिराः" इति । प्रागवदाह । **चकारादिति । गृहे इति** । न शयीतेत्यस्यानुषङ्गः । यत्र कश्चिन्न वसति तत्रेत्यर्थः । शयीतेतीति पाठः । हे इति चेति च भिन्नस्थानत्वात्पृथगुक्तिः । **हारीतोऽपि** "न नग्नो नाशुचिः" इति ॥ १३६ ॥

## याज्ञवल्कीये १३७ श्लोकः

**ष्ठीवनेति** । अत्र शकृदादि द्वंद्वं कृत्वा पुनः पूर्वाभ्यां क्रमेण द्वंद्वद्वयम् । **शेषमिति** । जातावेकवचनं चाभावादाह । प्रागवत् । **एवमिति** । अप्सु न निक्षिपेदित्यस्यानुषङ्गः । तत्र मानमाह । **यथाह शङ्ख इति । केशाः** शिरस्थाः । **लोमानि** शरीरस्थानि । इदमुपलक्षणं श्मश्रुणोऽपि । **करीषं** स्वभावतः शुष्कगोमयं प्राण्यङ्गमात्रत्वाभावात्समाहारो न । अत्र **मनुः** प्रागुक्त एव । **पाणिना** । तेन च क्वचिद्वेति पाठः । सोऽपि चार्थे । न चैनमित्यस्य व्याख्या **नाप्यग्निमिति** । एनः प्रागवत् । अग्नेर्निष्फलत्वं सूचयति । **लङ्घयेति** । 'नाग्निरपश्च युगपद्धारयेत्' इति । एकेन हस्तेनाग्निमपरेणापश्च युगपन्न धारयेदित्यर्थक**गौतमो**क्तनिषेधस्तु ( अ. ९ सू. ९ ) स्नातकस्य न

"न धारयेदपश्चाग्निमपश्चान्नं तथैव च । युगपत्स्नातको नित्यं तद्भार्याऽपि तथैव चेति ॥"

**व्याघ्रेण** विशेषोक्तेः । प्रागवदाह । **चकारादिति** । न च पादाविति साक्षादिति शेषः । तेन पटाद्याच्छादिततापने न दोष इति **मेधातिथिः** । **अधस्तादिति** । खट्वादेरिति शेषः । उपधानं स्थापनम् एनमग्निमभिलङ्घनमुत्प्लुत्य गमनम् । **न चैनं पादत इति** । सार्वविभक्तिकस्तसिः । एवं प्रतिपादौ न कुर्यादित्यर्थः । पादप्रदेशे एनं न कुर्यादिति केचित् । **प्राणेति** । प्राणस्याबाधा येन तत् प्राणपीडाकरमतिश्रमकरमित्यर्थः ॥ १३७ ॥

## याज्ञवल्कीये १३८ श्लोकः

अञ्जलिशब्दव्याख्या **संहतेति** । तथा च **गौतमः** ( अ. ९ सू. १० ) 'नाञ्जलिना पिबेदिति' । यत्किंचित्क्षीरोदकादिपेयं संयुक्ताभ्यां हस्ताभ्यां न पिबेदिति **हरदत्तः** । **मनुरपि** ( अ. ४ श्लो. ६३ ) 'न वार्यञ्जलिना पिबेदिति' । न्यूनतां निराचष्टे । **जलेति** । मंत्रकात्स्न्र्ये वारिग्रहणात् । क्षीरादेरनिषेध इति तु **मेधातिथिः** ।

**प्रयोगपारिजाते जलपानविषये विशेषमाह मनुः**

"न पिबेन्न च भुञ्जीत द्विजः सव्येन पाणिना । नैकहस्तेन च जलं शूद्रेणावर्जितं पिबेत्" ॥ **इति** ।

सव्यपाणिर्वामपाणिः । अनेन दक्षिणहस्तेनोपपात्रेण जलं पिबेदित्युक्तम् ।

"दक्षिणेन पिबेद्विप्रो भुञ्जानः पाणिनोदकम् " इति वचनात् । एकहस्तेन शूद्रेण चावर्जितं शूद्रेण च दत्तम् । आह च **शातातपः** ।

"उद्धृत्य वामहस्तेन यत्तोयं पिबति द्विजः । सुरापानेन तत्तुल्यं मनुराह प्रजापतिः " ॥ **इति** ।

**स्मृत्यन्तरेऽपि** ।

"जलपात्रं तु निक्षिप्य मणिबन्धे तु दक्षिणे । भुक्तिकाले तु विप्रो वै पिबेदन्यत्र पाणिना ॥

"एकहस्तेन चेत्तोयं पिबेत्तत्सुरया समम् " । इति ।

तत्र केवलपाण्यादिना जलपाननिषेधमा**हात्रिः** ।

"तोयं पाणिनखाग्रैस्तु ब्राह्मणो न पिबेत्कचित् । सुरापानेन तत्तुल्यमित्येवं मनुरब्रवीत्" ॥ **इति** ।

पाणिना च नखाग्रैश्च पाणिनखाग्रैः । तत्र विशेषमाह **मनुः** ।

"पिबतो यत्पिबेत्तोयं भाजने नखनिःसृतम् । अभोज्यं तद्भवेदन्नं भुक्त्वा भुञ्जीत किल्बिषम्" ॥ **इति**

यत्तु **पराशरप्रायश्चित्तकाण्डे यमवचनम्** ।

"अदुष्टाः सन्तता धारा वातोद्धताश्च रेणवः । स्त्रियो वृद्धाश्च बालाश्च न दुष्यन्ति कदाचन" ॥ **इति**

कमण्डल्वादिभ्यो निर्गत्य मुखपर्यन्तमविच्छिन्ना अप्युदकधारा नोच्छिष्टाः । नानाविधादशुचिप्रदेशादुद्धता आप रेणवः स्पर्शार्हाः पुरुषवत्यः स्त्रियो वृद्धा बालाः स्नानाद्यभावे शुद्धाः । एतद्भोजनव्यतिरिक्तकाले दक्षिणहस्ते कमण्डल्वादिना उदकपानविषयम् । भोजनकाले तु दक्षिणपाणेः । उच्छिष्टस्याप्रसक्तेः । तथापि वामपाणिना जलपानं करोति चेत् । न पिबेन्न च भुञ्जीतेति **मनुवचन**विरोधात्तन्नादरणीयम् ।

**एतदुक्तं भवति । एतद्वचननिकरपर्यालोचनया भोजनमध्यजलपाने यावदपेक्षितं तन्मात्रजल**

मुपपात्रे अन्येन ब्राह्मणेनोभाभ्यां हस्ताभ्यां आसेचयित्वा निःशेषं जलपानं कुर्यात् । तत्राप्यवशेष्य पुनस्तज्जलपाने प्रायश्चित्तविधानात् । तदुक्तं **कूर्मपुराणे** ।

"समुच्छिष्टं द्विजो भुक्त्वा त्रिरात्रेण विशुध्यति । गोमूत्रयावकाहारः पीतशेषं च वारिणः" ॥ इति । पयो जलम् । **अमरः** (१।१०।३)

"आपः स्त्रीभूम्निवार्वारि सलिलं कमलं जलम् । पयः कीलालममृतं जीवनं भुवनं वनम्" ॥

इत्यभिधानात् । भोजनव्यतिरिक्तकाले कमण्डल्वाख्यभृङ्गारनालेन जलपानं कुर्यादिति ।

अत्राप्यैहिकदोषमाह **वैद्यः** । "नालेन न पिबेदूर्ध्वं श्रोत्रनेत्रार्तिकृत् भवेत्" ॥ इति ।

**इति जलपाननिर्णयः ।**

प्राग्वदाह । **विद्यादीति** । आदिना वयोवृत्तादिपरिग्रहः । अन्यनिरासायाह । **आत्मन इति** । तेन तत्र न दोषः । बोधनं नार्थस्यासंभवात्प्रदानर्थक्यापाताच्चात आह । **नात्थेति** । तत्र मानं **मनु**माह । **श्रेयांसमिति** । इति वचनादिति पाठो विशेषादिति पाठान्तरं विशेषोक्तेरिति तदर्थः । 'इति निषेधादि' त्यपरः पाठः । इति **मनूक्त**निषेधादिति तदर्थः । एतेनेदं ते युक्तमिदमयुक्तमिति उपदेशादिना न प्रबोधयेदिति व्याख्यानं **मेधातिथि**कृतमपास्तमेतदेकवाक्यतया स्वापप्रक्रमाच्चैवमेवौचित्यात् । अक्षग्रहणमुपलक्षणमित्याह । **अक्षादिभिरिति** । तेन शलाकादीनां परिग्रहः । तेन द्यूतसामान्यनिषेधोऽयं । **मनुरपि** (४।७४)। 'नाक्षैः क्रीडेत्कदाचित्तु' इति गलहं विना परिहासेनापि न कार्यमिति सूचनार्थं कदाचिदिति पुनरनुक्तेः स्वतन्त्रमिदं निमित्तं पूर्वान्वयी चेत्याह । **धर्मघ्नैः पार्श्वेति** । प्राग्वन्मात्र करणे तृतीयेत्याह । **द्यभिभूतैः सहैकत्रेति** । तथा च सहार्थे सति भावः । तात्पर्यार्थमाह । **न शयीतेति** । **वा**चार्थे । तेन चण्डालादिसमुच्चयः । तदुक्तं **मनुना** (अ. ४ श्लो. ७९)।

"न संविशेच्च पतितैर्न चण्डालैर्न पुल्कसैः । न मूर्खैर्नावलिप्तैश्च नान्त्यैर्नान्त्यावसायिभिः" ॥ इति ।

पुल्कसो निषादाच्छूद्रायां जातः । अन्त्यो म्लेच्छः । अन्त्यावसायी निषादस्त्रियां चण्डालाज्जातः । अवलिप्तो मदोद्धतो धनादिना गर्वितश्च । अत्र च संवेशो न शयनमात्रं किं तु संव्यवहारः । स च दानग्रहणादिना मैत्रीकरणं तद्गृहसमीपवासः । एकतः स्थित्वोपजीवनमित्यादि । अत एवास्य मनोर्नाधार्मिकजनावृतेन पाखण्डजनाक्रान्ततेनोपसृष्टेऽन्त्यजैर्नृभिरिति स्वोक्तेनापौनरुक्त्यमिति बोध्यम् । एवं "नाधार्मिके वसेद्ग्रामे न व्याधिबहुले भृशम्" ॥ इति (४।६०) **मनू**क्तस्यापि तेन समुच्चयो बोध्यः ॥ १३८ ॥

## याज्ञवल्कीये १३९ श्लोकः

विनिर्गमनाविरहादाह । **जनपदेति** । चतुर्णां द्वन्द्वः । अभ्यर्हितत्वात्पूर्वनिपातः । एवं केशेऽपि बोध्यम् । **प्रेतेति** । बालातपः । **प्रेतधूम इति** । **मनु**रपि । बालातपः सङ्गवकालातपः । शरदि पुनः संन्धुक्षणादादित्यस्य बाल्यतया तदातपो बालातप इत्यन्ये

"विण्मूत्रमुदीक्षेत न बाहुभ्यां नदीं तरेत्" ॥ इति (४।७७) **मन्वनुरोधेनाह** । **बाहुभ्या-**

**मिति** । तरेत्यत्र भावेऽबित्याह । **तरणं चेति** । इध्मप्रव्रश्चनवत्समासः । चेनोभयोः समुच्चयस्तेनात एव कर्मपदव्यवहितत्वादसंबन्धभ्रमनिरासायाह । **वर्जयेदितीति** । एवमग्रेऽपि बोध्यम् । अत्र नदीग्रहण तडागादेरप्युपलक्षणमिति **हरदत्तो नारायणश्च** । बाहुभ्यामिति तु विवक्षितं तेनोडुपादिना पारगमने न दोषः । इह जलं पिबेदित्यत्र जलस्य नदीतरमित्यत्र नद्याश्चाविवक्षा तत्रैव बाहुभ्यामित्यस्य श्रेयांसं न प्रेत्यत्र श्रेयस्त्वस्य चादेश्यविशेषणत्वेऽपि विवक्षेति वैषम्ये व्याख्यातृवचनमेव शरणमेवमग्रेऽपि । प्राग्वदाह । **चकारादिति** । चेन संस्थितिं वर्जयेदित्यस्यानुषङ्गः । अस्थिकार्पासमेध्येष्विति पाठः । त्रयाणां द्वंद्वः । तथा च **मनुः** (अ. ४ श्लो. ७८)

"अधितिष्ठेन्न केशांस्तु न भस्मास्थिकपालिकाः । न कार्पासास्थि न तुषान्दीर्घमायुर्जिजीविषुः"॥इति ।

कपालिका भग्नस्य घटस्य शकलानि कार्पासस्तदस्थि तद्बीजं च । तद्बीजमेवेति **दीक्षिताः** । जिजीविषुरिति कर्तृविशेषणोक्तमेव स्पष्टार्थं करणफलमाह । **दीर्घमायुरिति** । योगक्रियाध्याहारेणान्वयः ॥ १३९ ॥

## याज्ञवल्कीये १४० श्लोकः

"न वारयेद्गां धयन्तीं न चाचक्षीत कस्यचिदिति" (४।५९) **मनूक्तेराह** । **परस्येति** । आदिना जलादिपरिग्रहः । गामात्मीयां परकीयां वा । **परस्मै** तस्मै । **आ चेति** । कथयेदित्यर्थः । कर्तृप्रत्ययः। वत्सेन धीयमानां गां स्वामिने न ब्रूयादिति यावत् । वस्तुतस्तु धयन्तीं धापयन्तीमन्तर्भावितण्यर्थाच्छतेति बोध्यम् । **हरदत्तेन** त्वन्यथा व्याख्यानम् । तत एव नाचक्षीतेत्युपलक्षणमित्याह । **न च निवेति** । निवारयेदित्यर्थः । प्राग्दोहकालादयं विधिः । दोहकाले तु प्रस्रवणं विहितम् । स्त्रीलिङ्गनिर्देशात्पुंवत्सादिनिवारणे न निषेधः । अद्वारेणेत्यस्य यथाश्रुतार्थकत्वे बाधात्त्रिव युक्तन्यायेन तात्पर्यार्थमाह । **कापथेनेति** । क्वचिन्न प्रविशेदन्यत्र तु प्रविशेदेवेत्यर्थवारणायाह । **क्वचिदपीति** ।

"अद्वारेण च नातीयाद्ग्रामं वा वेश्म वाऽऽवृतम्"॥ इति (४।७३) **मनोस्तदर्थमाह** । **नगरे इति** । **वा** चार्थे । वाटपरिक्षेपादिनाऽऽवृतस्य तस्यायमद्वारप्रतिषेधः । अनावृतस्य तु द्वारवतोऽपि यथेच्छमिति तात्पर्यम् । तथा **चापस्तम्बः** (१।३१।२१) । "न कुसृत्या ग्रामं प्रविशेत् । यदि प्रविशेन्नमो रुद्राय वास्तोष्पतये इत्येतामृचं जपेदन्यां वा रौद्रीम्" । इति विशेषणद्वयार्थं क्रमेणाह । **न कूपांति** । लुब्धस्येति पंचम्यर्थे षष्ठीति सूचयन्नाह । **सकाशादिति** । यद्वा सकाशादिति शेषपूरणेन सर्वस्य षष्ठ्यन्तत्वं सूचितम् ॥ १४० ॥

## याज्ञवल्कीये १४१ श्लोकः

'न राज्ञ' इत्युपपादयति । **प्रतिग्रहे इति** । प्रतिग्रहे इति विषयसप्तमीत्याह । **प्रतिग्रहे साध्ये इति** । एते इत्यस्यार्थमाह । **सून्यादयः पञ्चेति** । एते यथाक्रमं दशगुणं दुष्टा इति । मूले भिन्नं वाक्यं

विप्रतः सून्यपि दुष्ट इति तात्पर्यं तस्यैव विवरणं **पूर्वात्पूर्वादिति**। स्पष्टार्थं भिन्नं वाक्यं तदर्थमाह। **पूर्वस्मादिति**। शेषपूरणमन्यत्। भूम्नि इनिरिति सूचयन्नाह। **पर इति**। राजतो धनमन्विच्छेदुपेयादीश्वरं चैवेत्याद्यविरोधायाह। **अनन्तरोक्त इति**। एवं च तस्यापवादो न राज्ञ इति तस्यैवोपपादकमिदमानन्तर्यादेतदर्थमेवात्रेदमुक्तमिति भावः। तदेतदुक्तं **मनुना** (अ ४श्लो. ८४–९१)

"न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतितः। सूनाचक्रध्वजवतां वेशेनैव च जीविताम्॥
"दशसूनासमं चक्रं दशचक्रसमो ध्वजः। दशध्वजसमा वेश्या दशवेश्यासमो नृपः॥
"दश सूनासहस्राणि यो वाहयति सौनिकः। तेन तुल्यः स्मृतो राजा घोरस्तस्य प्रतिग्रहः॥
"यो राज्ञः प्रतिगृह्णाति लुब्धस्योच्छास्त्रवर्तिनः। स पर्यायेण यातीमान्नरकानेकविंशतिम्॥
"तामिस्रमन्धतामिस्रं महारौरवरौरवे। नरकं कालसूत्रं च महानरकमेव च॥
"संजीवनं महावीचिं तपनं संप्रतापनम्। संघातं च सकाकोलं कुड्मलं पूतिमृत्तिकम्॥
"लोहशङ्कुमृजीषं च पन्थानं शाल्मलीं नदीम्। असिपत्रवनं चैव लोहदारकमेव च॥
"एतद्विदन्तो विद्वांसो ब्राह्मणा ब्रह्मवेदिनः। न राज्ञः प्रतिगृह्णन्ति प्रेत्यः श्रेयोऽभिकाङ्क्षिणः"॥इति।

राजशब्दस्य क्षत्रियजातौ तद्भिन्ने जनपदेश्वरे च प्रयोगात्। राजतो धनमित्यत्र द्वितीयग्रहनिरासाय। **न राज्ञ इति**। राजन्याद्यस्य प्रसूतिर्न तस्माज्जनपदेश्वरान्नेत्यर्थः। सून्यादेस्तन्निषेधमाह। **सूनेति**। सूनी खटिक इति लोके प्रसिद्धः। व्रीह्यादित्वादिनिरप्यत्र बोध्यः। अन्यदाह। **वेशेनैव चेति**। वेशः पण्यवृत्तिस्तया ये जीवन्ति तेभ्य इत्यर्थः। स्त्रीपुंससाधारणमिदं तत्राद्ये उत्तरोत्तरस्य दोषगुरुत्वमाह। **दशसूनेति**। सूनादयोऽर्श आद्यजन्ता इति केचित्। वस्तुतो द्वयोः स्वरूपतो निंद्यत्वं त्रयाणां न तु तथा किं तु सूनादिकृतमिति सूचनाय वैषम्योक्तिस्तात्पर्यं तु तन्नैवेति यथाश्रुतमेव साध्विति बोध्यम्। **दशेति** भिन्नं पदम्। वाहयति स्वार्थसाधने व्यापारयति। सूनया चरति सौनिकः घोरः नरकादिहेतुत्वात्। भीषणत्वमवयुत्यनुवादो राजप्रतिग्रहनिन्दातिशयार्थः। लुब्ध आदानशीलः असद्दण्डपरस्त्रीहरणादिकर्ता उच्छास्त्रवर्ती पर्यायेण एकत्र फलमनुभूयान्यत्र गच्छाति नरकान्निरतिशयदुःखानि। अग्रिमस्तु तद्विशेषपरः। तानेवाह। **तामिस्रमित्यादि**। **एतदिति**। प्रागुक्तप्रतिग्रहनिषेधविध्युपसंहारोऽयं एतद्राजप्रतिग्रहो विविधदुःखनरकादिहेतुरिति विन्दतो जानाना विद्वांसो ब्राह्मणा न तथा कुर्युः। लेट् बोध्यः। प्रेत्येति भवान्तरे कल्याणं ये कामयन्ते ते इत्यर्थः। गुणभूतक्रियान्वयात्। कः साधुत्वमेतेन ल्यबन्तप्रतिरूपकमिदमिति **मेधातिथ्युक्त**मपास्तम्। विद्वद्ग्रहणं ब्रह्म वेदस्तं विदन्ति पठन्तीत्यर्थकम्। ब्रह्मवेदिग्रहणं च दुःखातिशयप्रदर्शनार्थमिति बोध्यम्। **यमोऽपि**।

"अराजन्यप्रसूतस्य राज्ञः स्वच्छन्दवर्तिनः। घोरः प्रतिग्रहस्तस्य मध्वास्वादो विषोपमः॥
"तस्मात्प्रतिग्रहं राज्ञो वर्जयन्ति मनीषिणः।
"तथैव राजमहिषी राजामात्यपुरोहिताः। पापेनार्द्धेन संयुक्ताः सर्वे ते राजधर्मिणः"॥ इति।

**एवं चेदृशान्निषेधोऽन्यतो विधिरिति व्यवस्था सिद्धेति न विरोधः**। एवं च

"लोभात्मानो न जानीयुर्ब्राह्मणा राजकिल्बिषम्। वरं चर्मादि मन्तव्यं न तु राजप्रतिग्रहः॥

"राजकिल्बिषदग्धानां ब्राह्मणानां युधिष्ठिर। खिन्नानामपि जीवानां पुनर्जन्म न विद्यते"॥ प्रशस्तमिति शेषः।

"पाषाणखण्डसंकीर्णं न राजब्राह्मणोत्तरी। एनसां तु सहस्राणां दशानां भागिनो नृपाः"॥ इति।

**विष्णुधर्मोत्तरोक्तिः।**

"ईशसूनासहस्राणि अह्ना राजा करोति वै। तान्येव कुरुते राज्ञो घोरस्तस्य प्रतिग्रहः॥

"अर्धार्धेन ततोऽमात्याः सेनानीदण्डनायकौ। ततोऽर्धार्धमथार्धार्धमाश्रितोपाश्रितेषु च"॥ इति

**हारितोक्तिश्चै**तत्परैवेति बोध्यम्। अस्य प्रतिप्रसव उक्तो **बृहस्पतिस्मृतावादित्यपुराणे**।

"अतिपापकृतां राज्ञां प्रतिगृह्णन्ति साधवः। पृथिवीं नान्यदिच्छन्ति पावनं ह्येतदुत्तमम्॥" इति।

आपद्धर्मस्त्वग्रे तत्र तत्र स्फुटीभविष्यति॥ १४१॥

## याज्ञवल्कीये १४२ श्लोकः

**अध्ययनधर्मानिति।** यथाकथंचित्पठ्यमानवेदनिमित्तकब्रह्मचर्यादिसकलाध्ययनधर्माना-हेत्यर्थः। अत एव बहुवचनमेतस्यापि सत्वादत्रोक्तिः। संबन्धो निमित्तनिमित्तीभावाख्यः। यद्यप्युपाकर्म-शब्दः कर्मविशेषपरस्तथापि योगरूढः स इत्याह। **उपक्रममिति।** उपक्रम्यते प्रारभ्यते येनेत्युप-क्रमं करणे घञ्। नोदात्तोपदेशेति वृद्धिनिषेधः। तत्प्रारम्भहेतुकर्मविशेषमित्यर्थः। उत्तरार्धस्थयोरपि सर्वत्रान्वय इति सूचयन् तावदाह। **ओषधीनामिति।** तत्र श्रवणग्रहणस्योपलक्षणत्वादाह। **पौर्णेति। श्रवणेनेति।** नक्षत्रे च लुपीति तृतीयेत्याशयेनाह। **श्रवणनक्षत्रेति।** एकवाक्यत्वे तु तदानर्थक्यं स्मृत्यन्तरविरोधश्चेति भावः। हस्तेनेति न प्राग्वत्किंतु यथाश्रुतं विशेषणं चैतत्। अत एव युक्तायामित्यध्याहारस्तदाह। **हस्तेनेति।** स्वरूपं त्वस्य तत्तद्गृह्यतोऽवसेयमित्याह। **स्वगृह्यो-क्तेति।** विस्तरस्तु मत्कृततत्प्रयोगादवगन्तव्यः।

**तथा चाश्वलायनगृह्यम्** (३।५।१-३) "अथातोऽध्यायोपाकरणमोषधीनां प्रादुर्भावे श्रवणेन श्रावणस्य पंचम्यां हस्तेन वेति"। **आपस्तम्ब**सूत्रं च (१।९।१-३) "श्रावण्यां पौर्णमास्या-मध्यायमुपाकृत्य मासं प्रदोषे नाधीयीत तैष्यां पौर्णमास्यां रोहिण्यां वा विरमेदर्धपञ्चमांश्चतुरो मासा-नित्येके" इति। श्रवणेन युक्तायां पौर्णमास्यां वेदोपाकरणं कृत्वा स्वाध्यायमधीयानो मासं प्रदोषे रात्रिप्रथमभागे नाध्ययनं कुर्यात्। श्रावण्यामित्यनेनैव पौर्णमासीलाभाच्छ्रवणतद्योगस्य पाक्षिकत्वेन पुनः पौर्णमासीग्रहणं पौर्णमास्या एव मुख्यत्वार्थम्। एवं तैष्यां पौर्णमास्यां रोहिण्यां वा विरमेदुत्सर्जनं कुर्यात्तदेतत्पक्षे श्रावण्युपाकर्मोत्तरं पञ्चमासानधीते। प्रौष्ठपद्युपकरणनिमित्तं सूचयन्नाह। **अर्धेति।** अर्धः पञ्चमो येषां तेऽर्धपञ्चमाः सार्धचतुरो मासानधीते इत्येके मन्यन्ते। एतत्पक्षे उत्सर्जनस्याप्रतिकर्षः। उत्सर्जने च कृते श्रावण्याः प्राक् शुक्लपक्षेषु साधारणाध्ययनं वेदस्य कृष्णपक्षेषु व्याकरणाद्यङ्गाध्ययनं पुनः श्रावण्यामुपाकृत्यागृहीतवेदस्य ग्रहणाध्ययनमिति **हरदत्तः।** इदं च ब्रह्मचारिधर्मः उपाकृत्या-

१ व्या. सू. ७।३।३४। २ व्या. सू. २।३।४५।

धीयीतेति ग्रहणाध्ययनाङ्गत्वप्रतीतेः। ग्रहणाध्ययनं च ब्रह्मचारिण एव 'वेदमधीत्य स्नायादिति' स्नानात्प्राचीनत्वावगमात्। यदा तु व्रतानि वा पारं नीत्वेति विधिबलाद्वेदमसमाप्यैव स्नाति तदा समावृत्त[1]-गृहस्थयोरपि ग्रहणाध्ययनेऽधिकारसंभवादस्त्येवोपाकर्म। अत एव **शौनकः** "समावृत्तो ब्रह्मचारिकल्पेन यथान्यायमितरे जायोपेत" इत्येके इति। अधीयीतेत्यनुवर्तते। येन नियमविशेषेण युक्तो ब्रह्मचार्यधीते तेनैव नियमेन समावृत्तोऽप्यधीयीत। समावृत्तादितरे ब्रह्मचारिणस्तु यथान्यायं स्वविध्युक्तप्रकारेणाधीयीरन्। तथा जायोपेतो गृहस्थोऽपि ब्रह्मचारिवन्नियमोपेतोऽधीयीतेति। अत एव **मनुयाज्ञवल्क्यस्मृत्यो**र्गृहस्थस्नातकधर्मप्रकरणे उपाकर्मादिपाठसंगतिरिति **माधवः**। तथा च ब्रह्मचारिस्नातकगृहस्थानां त्रयाणां ग्रहणाध्ययनं कुर्वतां तदङ्गभूतेऽत्र कर्मण्यधिकार इति तन्निबन्धफलितोऽर्थः।

**दीपिकाविवरणे तु** 'समावृत्त' इत्यादि **शौनक**वाक्ये जायोपेयीत्येके इति पठित्वा समावृत्तः सन् जायोपेयी गृहस्थः। इतरे ब्रह्मचारिणः। तथा च द्वयोरधिकार इत्युक्तम्। **हरदत्तस्तु** उपाकृत्याधीयीतेत्यत्र न ग्रहणाध्ययनमात्रस्य ग्रहणं किं तु वेदोच्चारणस्याध्ययनपारायणादिसाधारणस्य। तदङ्गं चेदं प्रतिसंवत्सरमनुष्ठेयं "श्रावणादिवार्षिकमिति" (अ. १६ सू. १) **गौतम**स्मरणात्। तथा च सकलब्रह्मचारिस्नातकगृहस्थादिसाधारणमिदं तत्र 'न मांसं भुञ्जीत' इत्यादि (अ. १६ सू. ३) **गौतमो**क्तनियमोऽध्यापकस्य व्रतमात्रस्नातकस्याध्येतुश्च तत्राप्यध्यापकस्य ऋतुद्वयं मासद्वयं वा शक्त्यपेक्षं वैकल्पिकं ब्रह्मचर्यं "प्रवचनयुक्तो वर्षाशरदि मैथुनं वर्जयेदि" **त्यापस्तम्बोक्तेः** (१।३२।१)। 'द्वैमास्यो वा नियम' इति (अ. १६ सू. ४) **गौतमोक्ते**श्च। व्रतस्नातकस्याध्येतुर्ग्रहणान्तं ब्रह्मचर्यं तस्य तादृशस्य ऋतुगमनं तु पाक्षिकमिति सिद्धान्तयित्वा तत्र प्रमाणत्वेन समावृत्त इत्यादि जायोपेयेत्येके इत्यन्तं तद्वाक्यं पठित्वा ब्रह्मचारिकल्पेनेति प्रसक्तस्य स्त्रीसंगनिषेधस्य प्रतिप्रसवोऽयं पाक्षिकऋतौ जायोपेयतीति व्याचख्यौ। 'उपाकृत्य यथाविधियुक्त' इति **मनु**व्याख्यायां **नारायणो**ऽप्येवम्। युक्तं चैतत् "समावृत्तोऽप्यधीयानो मधुमांसादि वर्जयेत्। ऋतुस्नातोपगमनं समावृत्तस्य मन्यते" इति **कारिका**नुगुण्यात्स्मृत्यन्तरानुगुण्याच्च।

तथा च **नृसिंहकृतप्रयोगरत्ने गोभिलः**।

"उपाकर्मोत्सर्जनं च वनस्थानामपीष्यते। धारणाध्ययनाङ्गत्वाद्गृहिणां ब्रह्मचारिणाम्"॥ इति।

**कात्यायनोऽपि**।

"प्रत्यब्दं यदुपाकर्म सोत्सर्गं विधिवद्द्विजैः। क्रियते छन्दसां तेन पुनराप्यायनं भवेत्॥

"अयातयामैश्छन्दोभिर्यत्कर्म क्रियते द्विजैः। क्रीडमानैरपि सदा तत्तेषां सिद्धिकारणम्॥

"उत्सर्जनं च वेदानामुपाकरणकर्म च। अकृत्वा वेदजप्येन फलं नाप्नोति मानवः"॥ इति।

तस्मादाश्रमत्रयेऽपीदमावश्यकमिति बोध्यम्।

**चार्थक**तुसमुच्चेयद्वयमाह। **यदा त्विति**। क्वचिच्चेत्येव पाठः। 'नक्षत्र'इत्युपलक्षणं पौर्णमास्या अपि। **उपाकृत्य**। उपाकर्माख्यं कर्म कृत्वा। यथाविधीत्यस्य मध्यमणिन्यायेनान्वयः। तेन तत्र

1 आश्वलायन गृ. सू. ३।५।१५-१७।

तत्रोक्तसकलविधिस्मरणं युक्तस्तत्परः छन्दश्शब्दो वेदवचनो न तु गायत्र्यादिवाची तेन ब्राह्मणाद्यध्ययनेऽप्येष विधिः । विप्र इत्यनेन कलौ क्षत्रियवैश्ययोरसत्ता ध्वनिता ॥ १४२ ॥

## याज्ञवल्कीये १४३ श्लोकः

**अष्टकायां** कृष्णाष्टम्याम् । बहिरित्यस्य सापेक्षत्वादाह । **ग्रामादिति** । 'अनावृतदेशे' इति **मेधातिथिः** । जलान्ते इत्यस्य व्याख्या **जलसमीपे इति** । प्राग्वदाह । **स्वेति** । अपिसमुच्चेयमाह । **यदा पुनरिति** । यदा त्वित्यर्थः । तथा च व्यवस्थितो विकल्प इति भावः । **पुष्ये त्विति** । अर्धपञ्चमेषु मासेषु गतेषु यः पुष्यो नक्षत्रं तत्रेत्यर्थः । उत्सर्जनं उत्सर्गाख्यं कर्म । द्विज इत्यनेन सर्वाधिकारिकत्वमात्रं सूचितम् । तथा च विशेषपरता प्रागुक्तैकवाक्यतया बोध्या । बुध इत्येव प्रचुरः पाठः प्रागुक्त**मनोः** । "श्रावणीपक्षे पुष्यमासस्य शुक्लप्रतिपदि पूर्वाह्णे प्रौष्ठपदीपक्षे माघस्येति व्यवस्थितविकल्प" इति **दीक्षिताः** ।

**गोभिलः** ।

"छन्दोगा मिलिताः कुर्युः प्रातरौत्सर्गिकीं क्रियां । अपराह्णे ह्युपाकर्म पुष्यहस्तर्क्षयोर्द्विजाः" ॥ इति [1]

हस्तर्क्षेऽपराह्णे उपाकर्म पुष्ये प्रातरुत्सर्जनं मिलितास्ते कुर्युरित्यर्थः । इदं च सिंहस्थे सवितरि तेषां बोध्यम् ।

"सिंहे रवौ तु पुष्यर्क्षे पूर्वाह्णे विचरेद्बहिः । छन्दोगा मिलिताः कुर्युरुत्सर्गं स्वस्वछन्दसाम् ॥
"शुक्लपक्षे तु हस्तेन ह्युपाकर्मापराह्णिकम्" ॥ इति **गर्गोक्तेः** ।

सिंहे रवावित्येतदुत्सर्गोपाकर्मभ्यां संबध्यते । कदाचिद्भाद्रपदेऽपि । तथा च **परिशिष्टे** ।

"मासे प्रौष्ठपदे हस्तात्पुष्यः पूर्वो भवेद्यदा । तदा च श्रावणं कुर्यादुत्सर्गं छन्दसां द्विजः" ॥ इति

**बौधायनः**(१।५।१४३)। "श्रावण्यां पौर्णमास्यामाषाढ्यां वोपाकृत्य तैष्यां माघ्यां वोत्सृजेदिति"।

**कात्यायनः** ।

"उपाकृत्योदगयने ततोऽधीयीत धर्मवित् । उत्सर्गश्चेत्तथा तिष्यतिथ्यां प्रौष्ठपदेऽपि वा" ॥ इति ।

तथा **चाश्वलायनैर्माघ्या**मुत्सर्जनं कार्यम् । तथा च **गृह्यं** 'माघ्यामष्टकायामिति' । **कारिका** च । 'अध्यायोत्सर्जनं माघ्यां पौर्णमास्यां विधीयते' इति । अनुकल्पः स्मर्यते **खादिरगृह्ये** ।

"पुष्ये तूत्सर्जनं कुर्यादुपाकर्मदिनेऽथ वा " । इति ।

एवं चाद्यव्याख्यैव युक्ता, न दीक्षितीयेति बोध्यम् । तैत्तिरीयाणां त्वेतत्काल उक्त एव विस्तरस्तु तत्रैव बोध्यः ।

१ गृ. सू. ३।५।२० ।

**अथ**शब्दसूचितं तत्समुच्चेयमेव वक्तुं तदर्थमाह । **तदनन्तरमिति** । उत्सर्गानन्तरमित्यर्थः । अत्राद्ये पक्षे उत्सर्गयुक्तदिनादारभ्य द्वितीयदिनावसानपर्यन्तं नाध्येयम् । तद्वात्रावध्येयं द्वितीयपक्षे तु तद्दिनरात्र्यन्तपर्यन्तं नाध्येयं द्वितीयदिनप्रारम्भादारभ्याध्येयं **संपठेदिति । कारिका**ऽपि "अत आरभ्य षण्मासान्षडङ्गानि त्वधीयते" इति । एवं च तथोत्सृष्टस्यापि पुनर्धारणाध्ययनं प्रागुपाकरणात्कालविशेषे न सर्वदेति तात्पर्यम् ॥ १४३ ॥

## याज्ञवल्कीये १४४ श्लोकः

**अनध्यायानिति** । उपाकर्मादिप्रसङ्गादिति भावः । ते च ते द्विविधाः । नित्या नैमित्तिकाश्च । तत्र तत्प्रसंगादादौ नैमित्तिकानेव तानाह । **त्र्यहमिति** । नित्यास्त्वनुपदमेव वक्ष्यन्ते इति बोध्यम् । अत्र तद्वनसंदंशपाठेनैतेषामपि तद्रूपतामूचनेन धर्मत्वसूचनादकरणे प्रत्यवायः सूचित इति बोध्यम् । पूर्ववदस्यापि साधारणत्वं सूचयन्पूर्वसंगतिमाह । **उक्तेनेति । शिष्येति** । प्राग्वत्द्वंद्वोपपत्तिर्बोध्या । **त्र्यहमिति** । कालाध्वनोरिति द्वितीया । अहःशब्दश्च समुदायपर इत्याह । **त्रीनहोरात्रानिति** । तद्दिनादारभ्येत्यर्थः । एवमग्रेऽपि बोध्यम् । अत्र प्रकरणे सर्वत्र सत्सप्तमी बोध्या । निमित्तानन्तरं नैमित्तिकमिति न्यायेनाह । **कृते इति** । पूर्वविरोधं परिहरति । **उत्सर्गे त्विति** । एवं च तद्दिनादारभ्य दिनत्रयमित्यर्थः । एवं सर्वत्र बोध्यम् । **मनु**नाऽपीदमुक्तम् । ( अ. ४ श्लो. ११९ ) ।

"उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षपणं स्मृतम । अष्टकासु त्वहोरात्रं ऋत्वन्तासु च रात्रिषु" ॥ इति ।

उपाकर्मानन्तरमपि विशेष **आपस्तम्बेनो**क्तः । स च प्रागुक्तः । तत्र प्रदोषे रात्रेः प्रथमयामे । तथा च **गौतमः** । ( अ. १६ सू. ४४ ) "प्राधीतस्य च निशायां चतुर्मुहूर्तमिति" । उपाकृत्याध्येतु प्रवृत्तः प्राधीतः । आदिकर्मणि क्तः । कर्तरि चेति[2] क्तः । तस्य निशायां चतुर्मुहूर्तमष्टौ नाडिका अनध्याया इत्यर्थः । यद्यपि "हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका" ( २ । ४ । १ ) इति मार्गशीर्षप्रभृतिमासचतुष्टयकृष्णाष्टमीनामष्टकाश्राद्धदिनत्व**माश्वलायनसूत्रे** उक्तं तथापि सप्तमी नवमी युतास्ता एव तिस्रोऽष्टका इव ग्राह्याः । तथा च **गौतमः** ( अ. १६ सू. ३८।३९ ) "तिस्रोऽष्टकास्त्रिरात्रमन्त्यामेके" इति । त्रिष्वपरपक्षेषु तिस्रोऽष्टकास्त्रिरात्रमनध्यायहेतवः । तदहः पूर्वेद्युरपरेद्युश्च । एके फाल्गुनस्थामपि मन्यन्ते इत्यर्थः । हेमन्तशिशिरयोरित्युदाहृत**ाश्वलायन**सूत्रादिति भावः । यद्वा अन्त्यां तामेवेत्यर्थः । तथा **चाश्वलायनः** । ( २।४।२ ) "एकस्यां वेति" । **आपस्तम्बोऽपि** "या माघ्याः पौर्णमास्या उपरिष्टादष्टमी ज्येष्ठया संपद्यते तामेकाष्टकेत्याचक्षत" इति ।

यद्यपि चान्द्रमासपठितानां ऋतूनामन्त्यासु रात्रिषु अनध्ययनं पर्वत्वादेव सिद्धं तथापि सौरमासद्वयकृतानामृतूनामन्त्ये दिनेऽनध्ययनसिद्ध्यर्थमिदमिति **नारायणः** ।

१ आ. सू. २।३।५ । २ पा. सू. ३।४।७१ ।

सविशेषणे[1] हीति न्यायेनाह । **स्वशाखाध्यायिनीति** । तथा शब्दार्थमाह । **प्रेते इति** । एतेन मृते इत्यस्यापपाठत्वं सूचितम् । **त्र्यहमिति** प्राग्वद्बोध्यम् ॥ १४४ ॥

## याज्ञवल्कीये १४५ श्लोकः

**सन्ध्येति** समाहारद्वंद्वः । संध्येत्यस्य गर्जितेनैवान्वय इत्याह । **संध्यायामिति** । निपातने इत्यत्र प्रार्थयन्तीति वा णिजिति सूचयन्नाह । **उल्कानिपतने इति** । समाप्य वेदमित्यस्यार्थमाह । **मन्त्रस्येति** । तयोरन्यतरसमाप्तावित्यर्थः । शाखासमाप्ताविति तु **हरदत्तः** । **अध्ययने चेति** । समाप्ते इति शेषः । द्युशब्दो दिवसपर्यायोऽपीति "द्युद्रुभ्यां म इति" (व्या. सू. ५।२।१०८) सूत्रे न्यासकरोक्तिराह । **अहोरात्रमिति** ॥ १४५ ॥

## याज्ञवल्कीये १४६ श्लोकः

तत्प्रसंगान्नित्यान्तानाह **पञ्चेति** । अथ पुनः सिंहावलोकनन्यायेन नैमित्तिकानेवाह । **राहुसूतके इत्यादि** । अत्र नैमित्तिकसंदंशपाठेन नित्यानामपि तत्तुल्यत्वध्वननेन धीसत्वे तथात्वेऽपि तदभावे तत्रापि तदभावः सूचितः । अत एव प्रतिपदोऽनुल्लेखस्तत्र सर्वथा तत्सत्वात् । अविनिगमकात्तदर्थमाह । **पौर्णेति** । तथा च धर्मसूत्रं । ( आपस्तं. १।९।२८ ) "अहोरात्रावमावास्यासु" । अमावास्यासु द्वावहोरात्रौ नाधीयीत तासु पूर्वेद्युश्चतुर्दशीषु चेत्यर्थः । **मनुर**पि । (अ. ४ श्लो. ११३) "अमावास्याचतुर्दश्यौ पौर्णमास्यष्टकासु च" । इति ।

**हारीतो**ऽपि ।

"प्रतिपत्सु चतुर्दश्यामष्टम्यां पर्वणोर्द्वयोः । श्वोऽनध्यायेऽद्य शर्वर्यां नाधीयीत कदाचन" ॥ इति ।

फलितार्थमाह । **चन्द्रेति** । शब्दस्त्वनुपदमेव वक्ष्यते । **मनु**विरोधं परिहरति । **यस्त्विति** । **चो** भिन्नक्रमः । राज्ञश्च चन्द्रस्य च तेन सूर्यसमुच्चयः । राहोः सकाशात्सूतके प्रसवे राहुच्छायाभिभूतस्य पुनरुद्भवे तत इति यावन्न तु राज्ञः सूतके इति नृपमरणमुच्यते । लक्षणाप्रसंगात् । "विषयस्थे च राजनि प्रेते" इति **गौतमेन** (अ. १६ सू. ३२) तत्र सज्योतिरनध्याय इत्युक्तत्वाच्च । **ब्रह्म** वेदः । जनपदेश्वरस्य राज्ञः सूतके पुत्रजन्मोत्सवे इति तु पक्षान्तरत्वेन **मेधातिथि**राह । यद्यपि तत्र गृहस्थानामाशौचादेवानध्यायः सिद्धस्तथापि ब्रह्मचार्यर्थमिदम् । तथा च **मनुः** ।

"उभयत्र दशाहानि कुलस्यान्नं न भुज्यते । दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्तते" ॥ इति ।

उभयत्र जनने मरणे च । एवमन्यत्रापि । तथापि **धर्मे** (१।१०।३–४) । "तथासंबन्धेषु ज्ञातिषु" तथैव संनिकृष्टतरा ये ज्ञातयो भ्रात्रादयस्तेष्वपि मृतेषु त्र्यहमनध्यायः "मातरि पितरि आचार्ये इति द्वादशाहाः" मात्रादिषु मृतेषु द्वादशाहमनध्यायः ।

**स्मृत्यर्थसारे** तु "ग्रहणे रात्रौ मोक्षे त्रिरात्रं दिवा मोक्षे त्र्यहमि"त्युक्तम् ।

१ स विशेषेण हि वर्तमानो विधिनिषेधौ सति विशेषबाधे विशेषणमुपसंक्रामन इति न्यायः ।

**गौतम**स्तु "आकालिका निर्घातभूमिकम्पराहुदर्शनोल्का" इत्याह । ( अ. १६ सू. २२ ) निर्घातोऽशनिपातो ग्रहणं राहुदर्शनमिति तत्र **हरदत्तः** । एवं च विकल्पो बोध्यः । ऋतुसन्धिष्वित्यस्य लक्ष्यार्थमाह । **ऋतुसन्धीति** । ऋतुसंध्युपलक्षितास्वित्यर्थः । पूर्णिमान्तमासाभिप्रायमिदम् । ऋतुसन्धिषु वापयेदिति वत् 'ऋत्वन्तासु रात्रिष्विति' प्रागुक्त**मनु**ना समानार्थमिदमिति **दीक्षिताः** । 'भुक्त्वा वेति' पाठे वा चार्थे । क्वचिच्चेत्येव पाठः । स चानयोस्समुच्चायक इत्याह । **श्राद्धिकेति** । चरमचः सर्वसमुच्चायकः । अत्राद्ये श्राद्धिकमित्यस्यासंबन्धेन भोजनस्य तन्निमित्तत्वमुत्सवविषयकम् । तथा च **गौतमः** । ( अ. १६ सू. ४३ ) "ऊर्ध्वं भोजनादुत्सवे" इति । उपनयनादावुत्सवे भोजनादूर्ध्वं तदहरनध्याय इत्यर्थ इति **हरदत्तः** इत्यन्ये । **गौतम**स्तु । ( सू. ४७–४८ ) "श्राद्धिनामाकालिकमकृतान्नश्राद्धिकसंयोगेऽपी" त्याह । अत्र **हरदत्तः** । श्राद्धी श्राद्धकर्मा न तु भोक्ता । तत्र श्राद्धमनुयज्ञभोजनेष्वहोरात्रस्योक्तत्वात् । यद्वा श्राद्धे केवलं भुक्तवतां न तु पित्राद्यर्थं पात्रतया तेषां पूर्वोक्तमहोरात्रं पित्राद्यर्थभिन्नानां तु आकालिको बोध्यः । अकृतान्नमामान्नं तदेव श्राद्धिकं श्राद्धे दीयमानं तत्प्रतिग्रहेऽपीत्यर्थ इति । **मनु**माह । **प्रतीति** । **केतनं** निमन्त्रणम् । तथा च तत्प्रतिगृह्याङ्गीकृत्यामन्त्रणात्प्रभृतित्र्यहं वेदं न पठेदित्यर्थः । चरमपादस्तु प्रागुक्त एवेत्यत्र नोक्तः । अत्रैकोद्दिष्टशब्देन नवश्राद्धमिति **मेधातिथिः** । महैकोद्दिष्टविषयमिदमिति **स्मृत्यर्थसारे-नारायणीये** च । यदा तु त्रिरात्रादूर्ध्वमपि गन्धलेपावनुवर्तेते तदा तत्क्षयपर्यन्तमनध्यायस्तदुक्तं तेनैव ( **मनुः** अ. ४ श्लो. १११ ) ।

"यावदेकानुदिष्टस्य गन्धो लेपश्च तिष्ठति । विप्रस्य विदुषो देहे तावद्ब्रह्म न कीर्तयेत् " ॥ इति ।

एकमुद्दिश्यानुदिष्टं विहितं श्राद्धं तस्यैकोद्दिष्टस्य तत्संबन्धी तत्कृत इति यावत् । अपगतगन्धादिरेवाध्ययनार्ह इति भावः । इदमुपलक्षणमजीर्णस्यापि । एवं च तदभावेऽपि तत्सत्वेऽपि नाध्येयम् । **विदुष इति** तस्यैव श्राद्धभोजनाधिकारानुवादकम् ॥ १४६ ॥

## याज्ञवल्कीये १४७ श्लोकः

**पशुमण्डूकेति** । श्वादिद्वंद्वं कृत्वा पुनः पश्वादिभिस्त्रिभिस्तेन सः । **अध्येतॄणामिति** । मिथो गुरुणा चेत्यर्थः । अन्तरं व्यवधानं तच्च गमनं विनाऽनुपपन्नं इत्याह । **अंतरागमने इति** । तथेत्यनेन शक्रपरामर्शी इति सूचयन् शक्रेत्यादेस्तात्पर्यार्थमाह । **शक्रध्वजस्येति** । **अवरोपणं** निखातः । **उच्छ्राय** उत्खातः । **आकालिकत्वेति** । तस्यापीत्यर्थः । अत्रतोरेवार्थस्य भिन्नक्रमत्वेनाहोरात्रमेवेत्यर्थेनात्रेतरव्यवच्छेदसूचनद्वारा तत्र पूर्वोक्तेऽन्यदप्यस्तीति सूचितत्वात् । तथा च विकल्पः फलित इति प्राक्प्रतिपादितमाकालमित्यव्ययीभाव इत्याह । **निमित्तेति** । शेषपूरणमेतत् । सिंहावलोकनन्यायेन प्रागनुक्तं विशेषमत्रैव प्रसंगादाह । **एतच्चेति** । **रात्रिमेवेति** । द्वितीया प्राग्वत् । एवमग्रेऽपि । **गौतमोऽपि** ( अ. १६ सू. २३ ) "स्तनयित्नुवर्षविद्युतश्च प्रादुष्कृताग्निष्विति" । आकालिका इत्यनुवर्तते । स्तनयित्नुर्मेघशब्दः । प्रादुरिति अग्निहोत्रहोमकाले संध्यायामिति यावत् । प्रत्येकमाकालिका अनध्यायहेतव एते । इदमप्यपर्तौ । वर्षाकाले तु प्रातश्चेद्गर्जवर्षादयस्तदाऽहर्मात्रमनध्यायः । तदाह **गौतमः** । ( अ. १६ सू. २४ ) "अहन्यृताविति" । सायं तु सूर्योदयपर्यन्तम् । तदुक्तं **मनुना** । स चाग्रे स्फुटीभविष्यति ।

प्रादुष्कृतेष्वित्यादिना कृषिवाक्ये विरोधं परिहरति । **यत्पुनरिति । उपवासो** भक्तच्छेद इति केचित् ।

"व्यावृत्तस्यैव दोषेभ्यः सहवासो गुणैर्हि यः। उपवासं तमाहुस्तु न शरीरविशोषणम्" ॥ इत्यपरे ।

विप्रकृष्टदेशे मिथो वासो **विप्रवासः । च**शब्दादनालापश्चेति **हरदत्तः । यनविषयमेवेति हरदत्तोऽपि ।**

"पशुमण्डूकमार्जारश्वसर्पनकुलेषु च । अन्तरागमने विद्यादनध्यायमहर्निशम्" ॥ इति ।

**मनु**वचनमुदाहृत्येदं च धारणाध्ययनविषयम् । **गौतमीयं** तु ग्रहणाध्ययनविषयमित्याह ॥१४७॥

## याज्ञवल्कीये १४८ श्लोकः

**साम सामानीति** । तथा च **मनुः** । ( अ. ४ श्लो. १२४ )

"ऋग्वेदो देवदेवत्यो यजुर्वेदस्तु मानुषः । सामवेदः स्मृतः पित्र्यस्तस्मात्तस्याः शुचिर्ध्वनिः"॥इति।

तेन ह्यन्नं क्रियते इति वद्धेत्वर्थवादपुरःसरमाह ।

"सामध्वनावृग्यजुषी नाधीयीत कदाचन" । इति । ( **मनुस्मृ.** अ. ४ श्लो. १२३ ) ।

**बाणो वंश इति** । बाणशब्दे तन्मोक्षशिक्षादशायुत्पन्ने शब्दे इति **नारायणः । निस्वने इति ।** शब्दश्रवणे इत्यर्थः । वक्ष्यमाणानुरोधेनाह । **तावदिति** । प्राग्वदाह **एवमिति । वेणुवीणेति । हरदत्तस्तु** बाणभेरीति पाठं धृत्वा बाणो **वी**णाविशेषः । बाणः शततन्तुरिति महाव्रते दर्शनादित्याह । गर्इः शकटमिति । **गन्त्र्यार्तेति** । गन्त्रीशकटमिति । च पाठान्तरम् ।

'क्लीबेऽनः शकटोऽस्त्री स्याद्गन्त्रीकं बलिवाह्यकम्" । **इत्यमरः** ( २।८।५२ ) ।

**हरदत्त**स्तु गर्तशब्देष्विति पठित्वा **गर्त** रथः । "आरोहथो वरुणामित्रगर्तस्तु हि श्रुतं गर्तसदं युवानम्" । इत्यादौ । गर्ता हि रथ उच्यते इति **निरुक्ते** च दर्शनादिति व्याचख्यौ । 'अमेध्ये' त्यत्र शवादिद्वंद्वं कृत्वा लघ्वक्षरत्वाच्छवस्य पूर्वनिपाते पुनरमेध्येनसः । तदाह । **अमेध्यादीनामिति** । अमेध्याः सूतिकादयः । तथा च **वसिष्ठः** ( अ. २३ सू. ३४ ) "पतितचाण्डालशवसूतिकाश्रावणे तु त्रिरात्रं वाग्यता आसीरन्"इति प्रायश्चित्तं स्मरति ॥१४८॥

## याज्ञवल्कीये १४९ श्लोकः

अशुचावित्यस्य मध्यमणिन्यायेनान्वय इत्याह । **अशुचाविति** । चार्थमाह । **तथेति । द्वंद्वान्ते** श्रूयमाणस्य प्रत्येकं संबन्धादाह । **विद्युत्संप्लवे इति । नारायणस्तु** । ( **मनुस्मृ.** अ. ४ श्लो. १०३ )

"विद्युत्स्तानितवर्षेषु महोल्कानां च संप्लवे। आकालिकमनध्यायमेतेषु मनुरब्रवीत्" ॥ इति ।

१ अ. ४ श्लो. १२६ । २ गर्तो इत्यपरः पाठः ।

**चतुर्विंशतिमत**मुदाहृत्य विद्युदादित्रये संध्याकालादन्यकाले मिलितानां त्रयाणामुत्पत्तौ तथा 'महोल्कानां च संप्लवे' विद्युदाद्यन्यतरेण सह युगपदुत्पादे आकालिकं यत्र काले निमित्तमुत्पन्नं द्विनान्तरीयतत्कालोत्पत्तिपर्यन्तम्। एतच्च वर्षाव्यतिरिक्तकाले द्रष्टव्यमिति व्याचख्यौ। युक्तं चैतत्। अन्यथा "प्रादुष्कृतेष्वग्निषु तु विद्युत्स्तनितनिःस्वने। सज्योतिः स्यादनध्यायः शेषे रात्रौ यथा दिवा"॥ इत्यग्रिम**मनु**ग्रंथासंगत्यापत्तेरिति सज्योतिः प्रातश्चेद्यावदादित्यदर्शनं सायं तु यावन्नक्षत्रस्थितिः। विद्युत्तु यदि नक्तं दृश्यते न संध्यायां तदाऽपररात्रपर्यन्तमनध्यायस्तदाह **गौतमः** (अ. १६ सू. २५)। "विद्युति नक्तं चापररात्रादिति" यद्यहरतृतीयभागादारभ्य विद्युत्प्रवर्तते न संध्यायां नापि नक्तं तदा सर्वरात्रमनध्यायः। तदाह **गौतमः** (अ.१६सू.२६–३१)। "त्रिभागादिप्रवृत्तौ सर्वरात्रमिति" 'उल्काविद्युत्समेत्येकेषां" यथा विद्युत्यनध्यायस्तथोल्कायामपीत्येकेषां मतमित्यर्थः। "**स्तनयित्नुरपराह्णे**" अपराह्णे यो गर्जः स विद्युत्समः। "अपि प्रदोषे" प्रदोषेऽपि भवः स्तनयित्नुर्विद्युत्समः। आपररात्रादनध्यायहेतुः "सर्वं नक्तमर्धरात्रात्" प्रथमाद्रात्रिभागादारभ्यार्धरात्रात्प्रवृत्तः स्तनयित्नुः सर्वं नक्तमनध्यायहेतुः। "अहश्चेत्सज्योतिः"। आह्नि चेत्स्तनयित्नुर्भवति तदा सर्वं दिनमनध्याय इत्यर्थः। इदं च प्रागपराह्णाद्गर्जे सति बोध्यमिति **हरदत्तः**।

एवं चात्र व्याख्याकृदुक्तं तावत्कालिकत्वमुक्तविशेषानाक्रान्तेऽपराह्णोत्तरकालिकगर्जे विद्युदाद्यमिलिते इति बोध्यम्। **धर्मसूत्रे**(आपस्तंबीये अ.सू.१।११।३०)"सूर्याचन्द्रमसोर्ग्रहणे भूमिचलनेऽवस्वान उल्कायामग्न्युत्पाते च सर्वासां विद्यानाᳲसार्वकालिकमिति"। अङ्गानि वेदा इत्युक्तानां सर्वासां विद्यानां सार्वकालिकमाकालमनध्याय इत्यर्थः।

शेषमाह। **नाधीति**। अंभोन्तरित्यस्य व्याख्या **जलेति**। **द्वयं इति**। रात्रेर्मध्यमदण्डदशके इति तु उदके मध्यरात्रे चेति **मनुव्याख्यायां नारायणः**। **निर्णयामृते** तु द्वितीययामस्यान्त्यघटिकाद्वयं तृतीययामस्याद्यघटिकाद्वयं चेति चतस्रो घटिकामहानिशाख्या अर्धरात्रः। तथा च **बौधायनः**।

"महानिशा तु विज्ञेया मध्यं मध्यमयामयोः। तस्यां स्नानं न कुर्वीत स्वाध्यायं पितृतर्पणम्"॥ इति।

मध्यं च कियदित्यपेक्षायां स एवाह "महानिशा तु विज्ञेया चतस्रो घटिकास्तथा" इति तथा च दण्डचतुष्टयमेव नाध्येयमिति सिद्धान्तितम्। **अपि**ना रात्रिसंग्रहः। अत्र विशेषमाह**गौतमः** (अ. १६ सू. ५) "नाधीयीत वायौ दिवा पांसुहरे कर्णश्राविणि नक्तमिति"। पांसून् हरतीति पांसुहरः। अपांसुहरे तु दिवा न दोषः। पांसुहरेऽपि रात्रौ न दोषः। कर्णाभ्यां श्रूयते इति कर्णश्रावि। एवंभूते महाघोषे वायौ नक्तं नाधीयीतेत्यर्थः। एतेन "कर्णश्रावेऽनिले रात्रौ दिवापांसुसमूहने" (अ. ४ श्लो. १०२) इति **मनु**रपि व्याख्यातः॥ १४९॥

## याज्ञवल्कीये १५० श्लोकः

उक्त**गौतमा**द्यनुरोधादेवाह। **औत्पेति**। तत्सूचके इत्यर्थः। **यत्र** काले। मुख्यदाहासंभवादाह। **ज्वलिता इवेति**। **कायामिति**। तथा च **मनुः** (अ. ४ श्लो. ११३)

१ अ ४ श्लो. १०६।

"नीहारे बाणशब्दे च संध्ययोरेव चोभयोः" । इति ।

**पूतीत्यस्य** व्याख्या । **कुत्सीति** । तद्व्याख्याऽ**मेध्येति** । **तदन्विति** । तथा च **मनुः** (अ. ४ श्लो. १२२) "अतिथिं चाननुज्ञाप्येति" ॥ १५० ॥

## याज्ञवल्कीये १५१ श्लोकः

**खरोष्ट्रेति** । लघ्वक्षरत्वादभ्यर्हितत्वाच्च पूर्वनिपातः । एतेषामारोहणे प्रत्येकमनध्याय इति पूर्वार्धार्थमाह । **खरादीनामिति** । खरोष्ट्रयुक्तं यद् यानं शकटादीति तु **मनौ नारायणः** । उत्तरार्धार्थमाह । **एवमिति** । उक्तप्रकारेणेत्यर्थः । **एतानि**त्यस्यार्थमाह । **श्वेति** । अग्रे उक्तानिति शेषः। तावतैव संख्यापूर्तेरिति भावः । ज्ञेया इति अवोचामिति वा वाच्ये विदुरिति ऋष्यन्तरपरिग्राहकस्योक्तस्यार्थमाह । **अध्ययनेति** । अत एवाह । **विदुरित्येति** । **शयान इति** । **धर्मेऽपि** "शयानश्चाध्ययनं वर्जयेदिति" । स्वयं तु धारणार्थमधीयानस्य न दोष इति **हरदत्तः** । **प्रौढेति** पादे पादान्तराधायी पीठाद्यासनार्पितपादो वेति **हरदत्तः** । **अवसेति** । उत्तरीयादिना पृष्ठेन सह जानुद्वयवेष्टनम् । **आमिषं** मांसम् । **सूतेति** सूतकिसंबन्ध्यन्नादिकम् । एतच्चानध्ययनमा प्रायश्चित्तकरणादिति **नारायणः** । अन्नजरणान्तामिति तु **स्मृत्यर्थसारे** । **आदिना**ऽन्यपरिग्रहस्तथा हि **गौतमः** । (अ.१६ सू. १०–११) "अभ्रदर्शने चापर्त्तोरन्यत्र सोदकमेवस्य दर्शने नाधीयीत मूत्रित उच्चारितः" । संजातमूत्रेच्छुर्निरुद्धमूत्रः उच्चारितः । निरुद्धपुरीषः । कृतमूत्रपुरीषे तु विशेषं वक्ष्यति । "वर्षति च" (अ. १६ सू. १३) वर्षति देवे तावन्नाधीयीत । "एके वलीके सन्तान" (सू. १४) वलीकं गृहपटलं तत्र वर्षधारासंन्तानं यथा तथा वर्षति सति नाध्येयमित्येके । "कार्तिकी फाल्गुन्याषाढी पौर्णमासीति" (सू. ३७) त्रिरात्रमिति वक्ष्यमाणमनुषज्यते । उक्तपौर्णमासीरारभ्य त्रिरात्रमनध्यायः। तथा च तदुत्तरद्वितीयास्वपि नाध्येतव्यमिति फलितमिति **माधवः** ।

**स्मृत्यर्थसारेऽपि** "आषाढीकार्तिकीफाल्गुनीसमीपस्थासु द्वितीयासु चेति" चातुर्मास्यद्वितीयास्वित्यादिना वक्ष्यमाणवचनेनाप्ययमर्थो लभ्यते । **हरदत्त**स्तु तिस्रः पौर्णमास्योऽनध्यायहेतवः पौर्णमास्यन्तरे तु अनध्याये मूलान्तरं द्रष्टव्यमिति व्याचख्यौ। तदा नित्यानध्यायोक्तिरियमिति बोध्यम् । **कौर्मे** ।

"श्लेष्मातकस्य छायायां शाल्मलेर्मधुकस्य च । कदाचिदपि नाध्येयं कोविदारकपित्थयोः" ॥ इति

"**गौतमः** (अ. १६ सू. ४५) "नित्यमेके नगरे" इति मतभेदेनानध्ययममाह । **मनुस्तु** (अ. ४ श्लो. १०७) व्यवस्थामाह । "नित्यानध्याय एव स्याद्ग्रामेषु नगरेषु च ॥

धर्मनैपुणकामानामिति" । व्रतसमानमात्रेण विद्यामसमाप्यैव ये स्नास्यन्ति ते विद्यानिरपेक्षब्रह्मचारिधर्ममात्रानुरोधकत्वाद्धर्मनैपुणकामाः ये तु विद्यानैपुणकास्तत्र प्राथमिकानां ग्रामेऽनध्यायो न तु द्वितीयानामिति **नारायणः** ।

---

१ आपस्तं. अ. सू. (१।१२।१) ।

**मनुः** ( अ. ४ श्लो. १०५ )

"निर्घाते भूमिचलने ज्योतिषां चोपसर्जने । एतानाकालिकान्विद्यादनध्यायानृतावपि" ॥ इति। उपसर्जने उपसर्गसूचके विकारे युद्धच्छिद्रादावित्यर्थः ।

**गौतमः** ( अ. १६ सू. १५–१६)। "आचार्यपरिवेषणे ज्योतिषोश्चेति" आचार्यौ गुरुशुक्रतयोर्ज्योतिषोश्चन्द्रसूर्ययोश्च परिवेषे । तावत्कालं नाधीयीत । यद्वा परिवेषणमन्नोपहरणम् । आचार्यस्य गुरोः परिवेषणेनाधीयीतेति **हरदत्तः** ।

**मनुः** ( अ. ४ श्लो. १२१–१२२ )

"न विवादे न कलहे न सेनायां न सङ्गरे । न भुक्तमात्रे नाजीर्णे न वमित्वा न सूतके" ॥

"अतिथिं चाननुज्ञाप्य मारुते वाति वा भृशम् । रुधिरे वा स्रुते गात्राच्छस्त्रेण च परीक्षते" ॥ इति।

विवादे ऋणादानादिविप्रतिपत्तिशब्दश्रवणे । भुक्तमात्रे इति भुक्तार्द्रपाणिरित्यनेन तुल्यार्थमजीर्णो जरणोचितकालेऽप्यन्नस्याजरणे सतीत्यर्थ इति **नारायणः** ।

**स्मृत्यर्थसारे** "ऐन्द्रेश्रवणद्वादशीमहाभरण्योश्च अपरपक्षान्ते प्रेतद्वितीयायां रथसप्तम्यां च शवानुगमनपरिचरणेषु च आकाशे शवदर्शने चाहोरात्रं महागुरौ मृते द्वादशरात्रमसपिण्डे गुरौ त्रिरात्रमाचार्ये उपाध्याये च पक्षिणी समानविद्ये सब्रह्मचारिणि च आचार्यभार्यापुत्रशिष्येष्वहोरात्रं ऋत्विग्याज्यस्वयोनिसंबन्धेषु चैवमग्न्युत्पाते गोविप्रमृतौ त्रिरात्रमयने विषुवे च पक्षिणी अकालवृष्टौ च" आर्द्रादिज्येष्ठान्तादन्यत्राकालवृष्टिः । "काकोलूककुक्कुटमूषकमण्डूकाद्यन्तरागमने सति दिने दिनान्तं रात्रौ चेद्रात्र्यन्तमनध्यायः । गवाश्वमहिषपशुस्त्रीशूद्रादावहोरात्रं श्वमार्जारयोश्च आरण्यमार्जारसर्पनकुलपश्वनखादेरन्तरागमने त्रिरात्रमारण्यश्वशृगालादिवानरजकादौ द्वादशरात्रं खरवराहोष्ट्रादिचाण्डालादिसूतिकोदक्याशवादौ मासं गोगवयाजाविब्रह्मघ्ननास्तिकादौ त्रिमासं शशमेषश्वपाकादौ षण्मासं गजगण्डसारससिंहव्याघ्रमहापापिकृतघ्नादावब्दमनध्यायः । शोभनगृहे शोभनदिने चानध्यायः । विवाहमौञ्जीबन्धनप्रतिष्ठोद्यापनादिष्वासमाप्तेः सपिण्डसगोत्राणामनध्यायः" ।

"यज्ञे चानुबन्ध्यान्तमृत्विजामाचार्याणां च एकानध्याययुग्मत्वे त्वन्त्यापररात्रे नानध्यायः" अनध्याययुग्मे पूर्व दिनापरात्रे चेत्येके ।

"अभ्यङ्गस्नानकाले च महाखेदेऽतिकम्पने । गोविप्ररोधने सर्वशब्देषु श्राद्धपङ्क्तिषु" ॥

"उदयेऽस्तमये वाऽपि मुहूर्तत्रयगामि यत् । तद्दिनं तदहोरात्रं चानध्यायविदो विदुः" ॥

"केचिदाहुः क्वचिद्देशे यावत्तद्दिननाडिकाः । तावदेव त्वनध्यायो न तन्मिश्रे दिनान्तरे" ॥ इति।

**धर्मसूत्रे** "अभ्रं चापर्त्तौ सूर्याचन्द्रमसोः परिवेष इन्द्रधनुः प्रतिसूर्यमत्स्येषु वाते पूतिगन्धे नीहारे च सर्वेष्वेतेषु तावत्कालम्" (आपस्तं. १।११।३१।२५) । सूर्यसमीपे प्रतिकृतिः प्रतिसूर्ये मत्स्यः पुच्छवन्नक्षत्रं वाते घोषवति पूतिगन्धे दुर्गन्धे नीहारे दिवान्धकारे "विद्युत्स्तनयित्नुर्वृष्टिश्चापर्त्तौ यत्र संनिपतेयुस्त्र्यहमनध्यायः" यद्देशे यो वर्षाकालस्ततोऽन्यत्रापर्त्तुस्तत्र त्रयमेलने त्र्यहमनध्यायः । यत्रान्यो व्यवेयादेतमेव शब्दमुत्सृज्याधीयीत श्वगर्दभनादाः सालावृककाकोलूकशब्दाः सर्वे वादित्रशब्दारोदनगीतसामशब्दाश्चेति अधीयानेष्वेते श्रूयमाणा अनध्यायहेतव इत्यर्थः । अन्यानपि नित्यानाह **नारदः** ।

"अयने विषुवे चैव शयने बोधने हरेः। अनध्यायस्तु कर्तव्यो मन्वादिषु युगादिषु" ॥ इति।

"या च सोपपदातिथिरिति" तुर्यपादयुतमिदं **नारदीयं** च। अयने मकरे कर्कटे च विषुवे तुलामेषयोः। शयने आषाढशुक्लद्वादश्यां बोधने कार्तिकशुक्लद्वादश्यां **मन्वादिषु**।

"आश्वयुक् नवमी कृष्णे कार्तिके द्वादशी तथा। तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥
"फाल्गुनस्य त्वमावास्या पुष्यस्यैकादशी तथा। आषाढस्यापि दशमी माघमासस्य सप्तमी ॥
"श्रावणस्याष्टमी कृष्णा आषाढस्यापि पूर्णिमा। कार्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी सिता ॥
"मन्वन्तरादयश्चैते दत्तस्याक्षयकारकाः"। इति।

**मत्स्यपुराणोक्तासु** इत्यर्थः। अत्राष्टमी कृष्णेत्युपादानात्। द्वादश्यादयः शुक्ला गृह्यन्ते। युगादिषु।

"वैशाखमासस्य च या तृतीया नवम्यसौ कार्तिकशुक्लपक्षे।
नभस्य मासस्य च कृष्णपक्षे त्रयोदशी पञ्चदशी च माघे" ॥ इति। **विष्णुपुराणे**।

"शुक्ला तृतीया वैशाखे प्रेतपक्षे त्रयोदशी। कार्तिके नवमी शुक्ला माघे दर्शश्च पूर्णिमा" ॥ इति। चोक्तास्वित्यर्थः। **सोपपदेति**।

"सिता ज्येष्ठे द्वितीया च आश्विने दशमी सिता। चतुर्थी द्वादशी माघे एताः सोपपदाः स्मृताः" ॥ इति **निर्णयामृते** श्लोकभीष्मः।

"चातुर्मास्यद्वितीयासु मन्वादिषु युगादिषु। पक्षाधिकत्रयोदश्यां तस्या एवोत्तरा तिथिः ॥
"दर्शस्पृक् चेद्दिवैव स्यादनध्यायः श्रुतावपि"। इति।

पक्षेत्यादेरयमर्थः। द्वितीयादित्रयोदश्यन्तानामेकादशस्वाध्यायानां यदि तिथिवृद्ध्या त्रयोदश्यधिका भवति तस्यां नाध्येयं किं च तस्यास्त्रयोदश्या उत्तरा चतुर्दशी दिवैव दर्शं स्पृशति साऽप्यनध्यायः।

श्रुतौ श्रवणद्वादश्यां चातुर्मास्यद्वितीया **गर्गेणोक्ताः**।

"शुचावूर्जे तपस्ये च या द्वितीया विधुक्षये। चातुर्मास्यद्वितीयास्ताः प्रवदन्ति मनीषिणः" ॥ इति।

विधुक्षये इति बहुव्रीहिः। कृष्णपक्षे इत्यर्थः। युगादिमन्वादिचातुर्मास्यद्वितीयात्वेन निषेधितानां प्रतिप्रसवमुपनयने आहतुर्**वसिष्ठभरद्वाजौ**

"या चैत्रवैशाखगता तृतीया माघेऽथ सप्तम्यथ फाल्गुनस्य ॥
"कृष्णे द्वितीयोपनये प्रशस्ता प्रोक्ता भरद्वाजमुनीन्द्रवर्यैः" ॥ इति।

**अथ प्रदोषः**। "उपाकर्मोत्तरं मासं प्रदोषे नाधीयीतेति" प्रागुक्तम्। **धर्मेऽपि** "वैरमणो गुरु-

१ आपस्तं. अ. सू. १।१०।२।

ब्रह्मास्य इति। प्रदोषश्च पूर्वरात्रिर्विवक्षितेति **माधवः**। तथा **माधवीये पुराणम्**।

"मेधाकामस्त्रयोदश्यां सप्तम्यां च विशेषतः। चतुर्थ्यां च प्रदोषेषु न स्मरेन्न च कीर्तयेत्"॥ इति।

चतुर्थ्यादितिथिद्वैविध्ये त्वाह **प्रजापतिः**।

"षष्ठी च द्वादशी चैव अर्धरात्रोननाडिका। प्रदोषे न त्वधीयीत तृतीया नवनाडिका"॥ इति।

**निर्णयामृते गर्गोऽपि**।

"रात्रौ यामत्रयादर्वाक् सप्तमी वा त्रयोदशी। प्रदोषः स तु विज्ञेयः सर्वविद्याविगर्हितः॥

"रात्रौ नवसु नाडीषु चतुर्थी यदि दृश्यते। प्रदोषः स तु विज्ञेयो वेदाध्ययनगर्हितः"॥ इति।

**स्मृत्यर्थसारे**।

"अनध्यायेष्वध्ययने प्रज्ञामायुः प्रजां श्रियम्। ब्रह्मचर्यं श्रियं तेजो निकृन्तति यमः स्वयम्॥

"मन्त्रवीर्यक्षयभयादिन्द्रो वज्रेण हन्ति च। ब्रह्मराक्षसता चान्ते नरकश्च भवेद्ध्रुवम्"॥ इति।

प्रागुक्तेष्वनध्यायेषु उच्चारणमेव निषिद्धं न तु चिन्तनमपि। अत एव।

"उदये चार्धरात्रे च विण्मूत्रस्य विसर्जने। उच्छिष्टः श्राद्धभुक् चैव मनसाऽपि न चिन्तयेत्"॥ इति

( अ. ४ श्लो. १०९ ) **मनु**वचनव्याख्यावसरे **नारायणः**। 'अत्र मनसाऽपि चिन्तनस्य निषेधादन्यत्र मनसा चिन्तने दोषाभावोऽवगम्यते' इति। तथा च मानसनिषिद्धं भवतीति **मनुः**। ( अ. २ श्लो. १०५ )

"वेदोपकरणे चैव स्वाध्याये चैव नैत्यके। नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि"॥ इति।

वेदोपकरणमङ्गोपाङ्गादि। अत्र विशेषः **कौर्मे**।

"अनध्यायस्तु नाङ्गेषु नेतिहासपुराणयोः। न धर्मशास्त्रेष्वन्येषु पर्वण्येतानि वर्जयेत्"॥ इति।

**स्मृत्यर्थसारे**ऽपि

"चतुर्दश्यष्टमी पर्वप्रतिपद्वर्जितेषु तु। वेदाङ्गन्यायमीमांसाधर्मशास्त्राणि चाभ्यसेत्"॥ इति।

तथा दुर्मेधसां विस्मृतिशीलानां च बहुवेदपाठिनां च वेदेऽप्यनध्यायसंकोच उक्तः **स्मृत्यर्थसारे**

"चतुर्दश्यष्टमीपर्वप्रतिपत्स्वेव सर्वदा। दुर्मेधसामनध्यायस्त्वन्तरागमनेषु च॥

"तथा विस्मृतिशीलानां बहुवेदप्रपाठिनाम्"। इति। स्वाध्याये चेति ब्रह्मयज्ञे इत्यर्थः। तथा च **शौनकः**।

"नित्ये जप्ये च काम्ये च क्रतौ पारायणेऽपि च। नानध्यायोऽस्ति वेदानां ग्रहणे ग्राहणे स्मृतः"॥ इति।

नित्यादावनध्यायो न किं तु ग्रहणादावित्यर्थः।

**स्मृत्यर्थसारेऽपि ।**

"नित्यनैमित्तिके कर्मव्रते यज्ञक्रतौ तथा। प्रवृत्ते काम्यकार्ये च नानध्यायाः स्मृतास्तथा ॥

"देवतार्चनमन्त्राणां नानध्यायः कदाचन" । इति ।

**मनुः** । ( अ. ४ श्लो. १२७ )

"द्वावेव वर्जयेन्नित्यमनध्यायौ प्रयत्नतः । स्वाध्यायभूमिं चाशुद्धामात्मानं चाशुचिं द्विजः"॥ इति।

नित्ये नित्यकर्तव्ये ब्रह्मयज्ञे । तथा च **श्रुतिः** "तस्य वा एतस्य ब्रह्मयज्ञस्य द्वावनध्यायौ यदात्माऽशुचिर्यद्देशश्चेति" । इत्यलं भूयसा ॥ १५१ ॥

## याज्ञवल्कीये १५२ श्लोकः

**देवेति** । अभ्यर्हितत्वात्पूर्वनिपातः । एवमग्रेऽपि मध्यमणिन्यायेनान्वितस्य नाक्रामेदित्यस्य प्रकरणाद्यनुरोधेनार्थद्वयमाह । **नाधीति** । बुद्धिपूर्वमित्यत्र मानमाह । **यथाहेति** । एवं चोभयत्राप्युभयोक्तिरूपलक्षणमिति भावः । **देवता** अत्र प्रतिकृतिरूपा तासां छायासंभवात् । **गुरुः** पिता । **आचार्य** उपनेता । पृथगुक्तिरातिदेशिकगौरवनिवृत्त्यर्था । तेनान्यत्र नायं निषेधस्तथा च ब्राह्मणवसिष्ठन्यायेन पृथगुक्तिरिति तत्त्वम् 'कामत' । इत्युक्त्याऽबुद्धिपूर्वे न दोषः । बभ्रुः कपिलो वर्णस्तद्गुणयुक्तं द्रव्यं प्राणिरूपं तस्य कपिलायाः सोमलताया वा उभयत्र बभ्रुशब्दस्य वेदे प्रयोगदर्शनात् । तदाह । **बभ्रुण इति** । उभयसंग्रहार्थमेव तथालिङ्गनिर्देश इति भावः । उत्तरार्धार्थमाह । **रक्तादीति** । लङ्घननिषेधस्य प्रागुक्तत्वादाह । **नाधीति** । अभ्यङ्गे पिष्टादिभिर्मलापकर्षणमुद्वर्तनम् । **अपस्नानं** स्नानविषयजलम् ॥ १५२ ॥

## याज्ञवल्कीये १५३ श्लोकः

**विप्रेति** । अभ्यर्हितत्वात्पूर्वनिपातः । स्मृत्यन्तरानुरोधेनाह । **बह्विति** । तत एवाह । **नृपतिरिति** । **एते इति** । केनापीति भावः । अत एव भेदेनाह । **आत्माचेति** । आचार्यादाया-मित्याह । **यावदिति** ॥ १५३ ॥

## याज्ञवल्कीये १५४ श्लोकः

**दूरादिति** । विडादिद्वंद्वं कृत्वा पुनरुच्छिष्टेन सः । उपस्थितत्वादाकाङ्क्षितावधिमाह । **गृहादिति** ॥ १५४ ॥

## याज्ञवल्कीये १५५ श्लोकः

**गोब्राह्मेति** । अल्पाच्तरत्वात्पूर्वनिपातः । सर्वसंग्रहाय प्राग्वच्च रूढिमपहाय यौगिकमाह । **अदनीयमिति** । वक्ष्यमाणमनूक्तेरुच्छिष्टग्रहणमुपलक्षणमित्याह । **अशुचिरिति**। अवैयर्थ्यायाह ।

**पादेन त्विति** । न स्पृशेदिति संबन्धः । **कालमिति** । क्रियाविशेषणं सर्वत्र तथैव क्रमस्य दृष्टत्वादत्र तदुक्तिः नित्यं सदा अद्भिर्जलग्रहणपूर्वम् । **इत्येवमिति** । इति **मनू**क्तप्रकारेणेत्यर्थः ।

वक्ष्यमाणविध्यनुरोधेन नेदं गवादिमात्रपरमित्याह । **कस्यचिदपीति** । विशेषमाह । **एतश्चेति** । **मनु**मत्रमानमाह । **अयुध्येति** । **अन्ततः** पर्यवसाने । **प्रेत्य** मृत्वा । **अप्राज्ञेति** अज्ञानेत्यर्थः ।

शिक्ष्यर्थं ताडयेच्च ताविति **मनो**राह । **शिक्षेति** । तथा च विवादान्तरप्रसंगे तावपि न ताडनीयाविति भावः । प्राग्वदाह । **चकारादित्यादि** । तत्राद्ये मानमाह । **शिष्येति** । ताडनं विना तथाकर्तुमशक्ताविन्यर्थः । **तनुभ्यां** कृशाभ्याम् । **अन्येन** उभयभिन्नेन स्थूलाभ्यां ताभ्यां चेत्यर्थः । द्वितीये तदाह । **पृष्ठत इति** । तथाचोत्तमाङ्गशब्देन कण्ठत ऊर्ध्वभागग्रहणम् ॥ १५५ ॥

## याज्ञवल्कीये १५६ श्लोकः

धर्मस्य कर्मत्वेन यथाश्रुतासंगतेः । समभिव्याहाराच्च तदाश्रयरूपतात्पर्यविषयार्थपरत्वं तस्येत्याह । **कायेनेति** । 'यत्नादि'त्यस्यार्थमाह । **यथेति** । एवं च कृत्यसाध्याननुष्ठानादौ न दोष इति भावः । आचरणं च यथासंभवं भिन्नं भिन्नमित्याह । **अनुतिष्ठेदित्यादि** । **तमेव** अनुष्ठीयमानमेव । **एवेन** तद्व्यावृत्तिः । धर्ममित्यस्य व्याख्या विहीति । धर्म्यमिति पाठे तत एव धर्मादनपेतमित्यर्थः । लोकैर्विद्विष्टं निन्दितमित्यर्थस्तत्फलितमाह । **लोकेति** । शिष्टेत्यादिः । **अभिशस्ति**र्निन्दा **मधुपर्के गोवधेति** । अत एव 'नामांसो मधुपर्को भवति' **इत्याश्वलायनः** ( १।२४।२६ ) । आदिना पञ्चपञ्चनखा भक्ष्या इत्यादिविहिततद्भक्षणादिविशेषणस्य हेतुगर्भत्वमाह। **यस्मादिति** । इदानीमिति शेषः । कलौ तद्विशेषे वेति तदर्थः । तदेवाह । **अग्नीति** । वैधर्म्ये दृष्टान्तः । अस्य कलिनिषिद्धेषु गणनेन तत्समकक्षत्वाभावात् । वस्तुतस्तु साधर्म्य एव दृष्टान्तः । अस्य तत्र गणनेन निषेधवत्तस्यापि चतुःशताधिकचतुःसहस्रवर्षोत्तरं कलेर्मूलभूताग्निहोत्रस्यैव व्यासादिना निषिद्धत्वेन निषिद्धत्वात् इति बोध्यम्। स्फुटं चेदं **व्रात्यप्रायश्चित्तनिर्णये गुरुचरणकृते** एवं सामंजस्ये तस्य तत्वमस्ति। अस्य तु नेत्युक्तेरभिप्रायश्चिन्त्य इति **दीक्षितो**क्तमपास्तं वेदितव्यम्। तद्भक्षणमपि अपूर्वसाधनं न किं तु अभ्यनुज्ञानमात्रमित्यग्रे स्फुटीभविष्यति ।

अत्रैव प्रसंगान्**मधुपर्कभोजनविचारः** क्रियते। तत्र तत्प्रतिपादकवाक्यानि तत्रादौ **व्यासः**।

"भुक्त्वा समुद्वहेत्कन्यां सावित्रीग्रहणं तथा। उपोषितः सुतां दद्यादर्चिताय द्विजाय तु" ॥इति ।

**आश्वलायनः**(१।२४।२६)। "नामांसो मधुपर्को भवतीति"। **भरद्वाजः** "अथास्या अन्नं मांसेन घृतेन वोपहरति तत्प्राश्नातीति"। **तत्रैव परिशिष्टं** "समांसं मधुपर्काङ्गभोजनं तत्कलेः पुरा। कलावमांसं साज्यं तदभावे शार्करादिकमिति"। इदमपि प्रागुक्तवस्तुतस्त्विति मते साधकं बोध्यम्।

**सत्याषाढः**। "अथ सूपापूपादिभिरन्नमस्मा उपहरति तत्प्राश्नातीति"

**सुदर्शनेन** तु अन्नं प्रोक्तमुपांशूत्तरेरभिमन्त्र्योकल्पयतेत्युच्चैरि**त्यापस्तम्बसूत्र**गतान्नकल्पनस्य (१३।५।१८) **दृष्टार्थतायाः संभवात्कल्पान्तराच्च स्फुटं भोजनमित्युक्तम्**

**मातृदत्तेन भरद्वाजसूत्रव्याख्या**वसरे उक्तपरिशिष्टमुदाहृत्य भोजनमुक्तम्। **सत्याषाढेनापि** स्पष्टं भोजनमुक्तम् ।

तथा **बौधायनः**।(१।२।५९–६०) "अन्नमस्मा उपहराति तत्प्राश्नाति विराडसि विराडन्नं विराट् विराजो मयि धेहीति" ।

इदं सर्वं मनसि निधायैव **सुद**र्शनाचार्यैर्गोवधपक्षे वपाहोमोत्तरं अवशिष्टैरवदानैस्सहान्नं भोजये- दित्युक्तम् । तत्रान्नशब्दो रूढो यौगिको वा ग्राह्य इति केचित् । आद्य एव तु युक्तः । **सुदर्शनः** । "अन्नं यजमानेन जातमिति प्रोक्तं सद्रुपांशूनरैर्मन्त्रैर्भूतं साविराडित्यादिपञ्चभिरभिमंत्र्योंकल्पयत निवेद्- यत इत्युच्चैर्वरो ब्रूयात्" । अत्रान्नपदमोषधविशेषे रूढमन्नप्राशनमित्याचार्यप्रसिद्धियोगात् । "अद्यतेऽत्ति च भूतानीति" सत्यामपि **श्रौत**व्युत्पत्तौ **प्रजापतिः** "प्रजान्प्रसृजत ता अस्मात्सृष्टाः । पराचीरा- यन्स एतं प्रजापतिरोदनमपश्यत् सोऽन्नं भूतोऽतिष्ठत्" तथा च "एतत्खलु वै साक्षादन्नं यदेष चरुः" इत्यादिभी रूढिरेव प्रतीयते न योगः । योगरूढ्योः समानविषयत्वे रूढिर्बलीयस्त्वं रथकाराधिकरणे उक्तं च । एवं चान्नमौषधमेव । भूतमिति पदं नपुंसकं तत्परामर्शकस्य तच्छब्दस्याक्लीबत्वेऽपि विधेय- विराट्पदसामानाधिकरण्येन तल्लिङ्गत्वं युज्यते यथा सा वैश्वदेवीति तन्मा क्षायीत्यत्रापि तत्पदं भूत- परामर्शकमित्यविरोध इति ।

एवं **बौधायनमन्त्रे**ऽपि "विराडसि विराट्छन्दोऽसि" प्रागुक्तमन्त्रे साविराडिति सामानाधि- करण्यात्तस्यैव विराडन्नमिति व्याख्यानमुत्तमप्रयाजार्थवादे विराजैवान्नाद्यमवरुन्धे इति प्रसिद्धं विराजः अन्नानि मयि धेहि अत्र तस्य तेऽशीयेति तुर्यमन्त्रेऽशनप्रकाशनसामर्थ्यात्तद्विधिः कल्प्यते तदुद्देशेन- नामांस इत्यनेन मांसं विधीयते। तच्च होमानुनिष्पन्नमेवाभ्यनुज्ञायते तदभावे त्वन्नेन भोजनं भविष्यतीति। एतेन मांसातिरिक्तान्नेन स्फुटमेव भोजनम् । **अण्ड्रलाकारब्रह्मविद्यातीर्था**दिभिरपि भोजनं लिखितं **वल्लभाचार्यैर**पि स्वकृतसामप्रयोगे वरणोत्तरमत्रभोजनान्तो मधुपर्कः कर्तव्य इत्युक्तम् । तथा चैतैर्भुक्तस्य प्रतिग्रहनिषेधस्यात्र प्रतिप्रसवः क्रियते उत्तरार्धनात एव "उपवासव्रता कार्यं सायं संध्याहुती विना" इति ।

"जलस्यापि नरश्रेष्ठप्राशनाद्भेषजादृते । नित्यक्रिया निवर्तेत काम्यनैमित्तिकैः सह" ॥ इति **लिङ्गपुराणं** च संगतमिति ।

अत्र केचिदाक्षिपन्ति । निवेदनस्य दृष्टार्थत्वेऽपि तदनन्तरं भोजने न मानं भोजनोत्तरं प्रति- ग्रहनिषेधादुद्वाहोत्तरमेव भोजनप्रसंगौचित्यादन्यथा निषेधासामंजस्यापत्तेः । **व्यास**वाक्यं तु कल्पान्तर- वाक्यैकवाक्यतापन्नं **नापस्तम्ब**परं मानाभावेन शाखान्तराधिकरणन्यायेन चैकवाक्यत्वाभावे तु सामान्यविशेषाभावेन पुरोडाशाग्नेयवदुपसंहाराभावेऽपि गृहमेधीयात् यावतीतिकर्तव्यता यत्र श्रूयते तच्छाखीयानां तत्र तावतीति व्यवस्थाकल्पने शाखान्तरानपेक्षमेवानुष्ठानं प्रयोगप्राशुभ वश्च भविष्यतीति। तन्न । स्मृत्याचारव्यवस्थायाः स्मृतिचरणे निरस्तत्वात् । निबन्धकारैः सहस्रशो निबन्धान्तरसंवाद- कथनाच्च। अत एवोक्तं "दृश्यते हि निबन्धानां मिथः संवादकथनम्" इति । प्रयोगप्राशुभावविरहस्तु प्रमाणिको न दोषाय । एवं च प्रतिप्रसवसिद्ध्या **व्यास**वाक्यगतक्त्वाप्रत्ययबलेनोद्वाहोत्तरकालसिद्ध्य- न्यथानुपपत्त्या मधुपर्कोत्तरमेव भोजनम् । एतेनानारभ्याधीतयो**र्व्यास**वाक्यनिषेधयोस्तुल्यबलयोस्तत्र

प्रकरणं निविशतोर्ग्रहणाग्रहणवद्विकल्पापादकयोः सतोः कथं नित्यवद्भोजनविधिनिषेधपक्षोत्थानमिति निरस्तम्। 'भुक्त्वेति' **व्यास**वाक्येन प्रतिग्रहविशेषे भोजनोत्तरकालविधानात्।

स्यादेतत्। अनारभ्याधीतं सप्तदश्यं मित्रविन्दाप्रकरणगतेन साप्तदश्यवाक्येन तत्प्रकरणे यथा सन्निवेश्यते, एवमनारभ्याधीतेन **व्यास**वाक्येनोद्वाहे विहितमपि भोजनोत्तरकालत्वं कल्पान्तरवाक्यैकवाक्यतापत्त्या तत्कल्पानुष्ठाने एवोपयोक्ष्यते इति। तन्न। साप्तदश्यवाक्यं हि अपौरुषेये तत्र मित्रविन्दाप्रकरणगतेन वाक्येनाङ्गत्वनिर्वाहेऽनारभ्याधीतसाप्तदश्यवाक्यानर्थक्यशङ्कापनोदायैकवाक्यत्वमिष्यते चाभ्युदयफलकत्वम्। एते च वाक्ये द्वे अपि पौरुषेये भिन्नग्रन्थनगते परस्परानवगतभिन्नपुरुषतात्पर्यगोचरीभूतार्थके इतरेतरानर्थक्यशङ्काहे न स्तः। न हि लोके कविकृतीनामितरेतरानर्थक्यशङ्काऽपि। तस्मान्नोपसंहार इति दिक्। अन्ये तु किमिदं भोजनं क्रत्वर्थमुत पुरुषार्थमाद्येऽपि संनिपत्योपकारकत्वमारादुपकारकत्वं वा मधुपर्काङ्गमुद्वाहाङ्गं वेति यावत्। तत्राद्येऽपि फलिसंस्कारो न वा पुरुषार्थत्वेऽपि रागप्राप्तस्योद्वाहोत्तरकालविधिरुतास्यैव कालनियम इति। तत्र क्रतुसंदंशपातात्तदर्थत्वं रागतः प्राप्तस्यापि संयोगपृथक्त्वन्यायेनोभयार्थत्वम्। एतेन संदंशपातेऽपि रागतः प्राप्तस्य कथमङ्गत्वमिति निरस्तम्।

यद्यपि नात्र खादिरतावत्संयोगपृथक्त्वमस्ति तथाऽपि रागतः प्राप्तस्य क्रतुसंदंशपातेनान्यार्थत्वमस्त्येव। यथा चमसेनापः प्रणयेद्गोदोहनेन पशुकामस्येति पशुफलार्थत्वेन विहितस्य गोदोहनस्य प्रणयनावान्तरप्रकरणात्तदुपयोगित्वम्। यथा वाऽक्षैर्दीव्यतीत्यनेन विदेवनादेः। स्यादेतत्। कथमत्राङ्गत्वम्। न तावत्सन्निपत्योपकारकतयाऽङ्गत्वं संनिपत्योपकारः प्रतिग्रहीतरि जायमानो दृष्टादृष्टजनकोऽप्यत्र दृष्टमेव जनयति। अदृष्टस्यान्याय्यत्वात्। तच्च तृप्तिरूपं तत्वस्वरूप आनर्थक्यप्राप्तिर्निवेदनरूपक्रियाफलसामानाधिकरण्याभावात्। न च तृप्तिविशिष्टस्योपयोग इति वाच्यम्। जातेष्टौ हि न पुत्रगतपूतत्वादिनाशे मानमस्ति। इह तु तृप्तिविनाशित्वस्य प्रत्यक्षोपलम्भात्। तृप्तेरपूर्वकल्पेन तु तद्धेतोरेवास्तु। तद्धेतुत्वं 'किं तेनेति' न्यायेन सौत्रविवेदनादेवापूर्वकल्पना स्यात्। किमन्तर्गडुना भोजनेनेति। उच्यते। तृप्तिनाशे मानाभावात्। न हि मधुपर्कोत्तरभोजनजन्यतृप्तेरुद्वाहसमये विनाशोऽस्तीति दृष्टसन्निपत्योपकारमाहुः।

केचित्तु 'भुक्त्वा समुद्वहेत्कन्यामि'त्येतद्वाक्योपात्तभोजनोत्तरकालतासिध्यर्थं तत्कल्पनम्। अननुष्ठयोऽप्युत्तरकालोऽर्थात्सिध्यतीति आहुः। अन्ये तु एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा 'पशुकामो ह्येतेन यजेते'ति वद्भुक्त्वा समुद्वहेदि'त्यत्र भावनोपसर्जनभावान्तरविधाने भोजनस्य प्रतिग्रहीतृवरसंस्कारद्वारोद्वाहाङ्गत्वमूचुः। परे तु निवेदितस्यान्नस्य प्रतिपत्त्याकाङ्क्षस्य दृष्टैव भोजनरूपा प्रतिपत्तिः कल्प्यत इति सन्निपत्योपकारकत्वमाहुः। अपरे तु न सन्निपत्योपकारकत्वे मानमस्ति। आरादुपकारत्वं तु कल्पनासौ कुर्यात्। सन्निपत्योपकारकत्वे प्रयोगसमवेतार्थसंस्कारकत्वम्। तच्चोपयुक्तोपयोक्ष्यमाणभेदभिन्नम्। तत्र निवेदनान्ताङ्गकलापे वरस्योपयुक्तत्वात्तदुत्तरत्र चोपयोक्ष्यमाणत्वात्तत उपयोक्ष्यमाणस्य बलीयस्त्वात्तदर्थत्वकल्पनमेव युक्तम्। एवं च दृष्टोपकारासंभवाददृष्टमेव कल्प्यम्। **आपस्तम्ब**सूत्रोक्तनिवेदनदृष्टार्थताकल्पितभोजनस्यानर्थक्यपरिहार कल्पिततृप्तावपि तत्तद्वत्स्यात्।

ननु वरसंस्कारकतयाऽवगतस्य भोजनतस्य कथमारादुपकारकत्वम्। उच्यते। नास्य वरसंस्कारकत्वे मानमस्ति तद्वाचकद्वितीयाद्यभावात्। न च वरकर्तृकभोजनस्य तत्संकारकत्वमेव युक्तमिति वाच्यम्।

यद्यत्कर्तृकं तत्तत्संस्कारकमिति नियमाभावात् । जातेष्टौ व्यभिचारात् । जातेष्टिर्हि पितृकर्तृका पुत्रसंस्काराय भवति। नापीडाभक्षणवत्कर्तृनियमांशेन सन्निपत्योपकारकत्वं शंक्यम्। तत्र यजमानपञ्चमा इडां भक्षयन्तीति अन्योन्यनियमविधानात् । अत्र च विध्यभावान्न परस्परनियमः । आर्थिकनियम इति चेन्न। तावता वरकरवदनान्नसंयोगस्य भोजनसामग्रीत्वेन प्रतीयमानगुणप्रधानभावप्रतीतिर्भ्रान्तिरेवेत्यदृष्टद्वारकमारादुपकारकत्वमाहुः ।

**अन्ये** तु 'भुक्त्वा समुद्वहेत्कन्याम्' इत्यनेन वाक्येन रागप्राप्तभोजनोत्तरकाले सेतिकर्तव्यताकोद्वाहो विधीयते । यथा 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते'त्यत्र सेतिकर्तव्यताकज्योतिष्टोमकरणकभावनाया दर्शपूर्णमासोत्तरकालसंबंधस्तथेहापि उद्वाहप्रयोगबहिर्भूतभोजनोत्तरतायास्तदङ्गत्वम्। एवं च नैतन्मधुपर्कोत्तरभोजनविषयं वाक्यं कथं तर्हि मधुपर्के भोजनं कल्पान्तरादिति गृहाणेत्याहुः । **अपरे** तु रागतः प्राप्तस्यैव भोजनस्योद्वाहपूर्वकालनियमः। "समानकर्तृकयोः पूर्वकाले क्त्वा" (व्या.सू.३।४।२१) इत्यनुशासनात्। तत्र निवेदनस्य दृष्टार्थत्वाद्भोजनस्य च निवेदनाकाङ्क्षत्वात्परस्परं संबन्धं कल्पयन्तीति आहुः । **अन्ये** तु न भोजनं फलिसंस्कारः परस्वत्वापादयितुर्विवाहजन्यफलभोक्तृत्वं भोजनस्य तु वरार्थत्वमिति क्रियाफलसामानाधिकरण्याभावात्। न च जातेष्टिन्यायेन तृप्तिविशिष्टस्य जामातुः फलत्वं वैषम्यात्। तथाहि। यस्मिन् जात एतामिष्टिं निर्वपति पूतस्तेजस्व्यन्निद्याविी पशुमान् भवतीत्यार्थवादिकफलसंबन्धवैयधिकरण्यापनोदाय पूतत्वादिविशिष्टपुत्रस्यैव फलत्वमाश्रीयते । अत्र तु न्यायबलेन निवेदनस्य भोजनार्थत्वम् । तस्य च दृष्टार्थत्वनिर्वाहाय तृप्त्यर्थत्वम् । तत्र तु वैयधिकरण्यमिति तत्समअसतायै विशिष्टफलकल्पनमिति भिन्नफलार्थत्वेऽपि निवेदनदृष्टार्थता न प्रकरणं विच्छिनत्ति । नापि मधुपर्कोन्ताङ्गकलापस्य विश्वजिन्न्यायेन स्वर्गफलकल्पनम् । विशिष्टस्य प्रतिग्रहे उपयोगात् । तृप्तिविशिष्टस्योद्वाहसंबन्धे आनर्थक्यशङ्का तदवस्थैवावघातजन्यवितुषीभावस्य पुरोडाशोपयुक्तस्य यागनिर्वृत्तावुपयोग इति न तृप्तेस्तदभावेऽप्युद्वाहसंभवात् । अर्जुनफलस्य द्रव्यस्य क्रत्वर्थत्वेऽपि न तत्फलत्वहानिः । तद्वज्जातेष्टिन्यायेऽपीत्याहुः ।

अत्र वदन्ति । 'नामांसो मधुपर्को भवती'त्यत्र मधुपर्कपदेन भोजनं लक्ष्यते। तदमांसं निषिध्यते। कलौ तु मांसनिषेधाद्भोजननिषेध इति । ननु मधुपर्के एव मांसविधिरमांसनिषेधो वाऽस्तु

" देवराच्च सुतोत्पत्तिर्मधुपर्के पशोर्वधः " इति हिंसानिषेधादाहृतमांसेन मधुपर्को भविष्यति । अथ वा मधुपर्के पशुवधनिषेधात्तदनुनिष्पन्नमांसाभावादमांसमधुपर्कस्य कलौ निषेध इति चेत् 'नामांसो मधुपर्को भवतीति' हि निषेधोऽमांसे मधुपर्को भवतीति प्राप्तिमपेक्षते। तत्र अमांसो मधुपर्क इति समानाधिकरणं पदद्वयं विशिष्टमर्थं ब्रूते । यदमांसो भवति तन्नेति नञोऽन्वये कलौ मधुपर्कविच्छित्तिः स्यात् । एतेन सूत्रकारेण दधिमधुसंसृष्टं द्रव्यं मधुपर्कशब्देनोक्तं तस्य प्राशनं चोक्तं तदमांसं न भवतीत्युच्यते इत्यप्यपास्तम् । कलौ तद्विच्छेदापत्तेः । यन्मधुपर्को भवति तन्नेति निषेधेऽष्टदोषदुष्टविकल्पापत्तिः । पक्षद्वयेऽपि एकैकपदवैयर्थ्यापातश्च । विशिष्टनिषेधे कलौ न मधुपर्कप्राप्तिस्तथा च सूत्रविरोधः। यदि तु अमांसपदेन मांसादन्यल्लौकिकं भोजनं गृह्यते तन्नञा निषिध्यते मधुपर्कपदार्थः स एवेत्युच्यते तर्हि मधुपर्को भिन्नः भोजनं भिन्नं मांसं भिन्नम् । अत्र कस्य निषेधः क्रियते । अमांसभोजनस्येति चेत्प्राप्तौ सत्यां

निषेधो न चात्र प्राप्तिरिति बोध्यम् । वस्तुतस्तु यत्र मांसं तत्र निषेधः। तच्च भोजने प्राप्तमित्यानर्थक्यात्तदङ्गेष्विति न्यायेन मधुपर्कपदे भोजनलक्षणा। यन्मधुपर्काङ्गं भोजनं अमांसं भवति तन्नेति निषेधाद्विधिरुन्नीयते ।

अथ च सूत्रकारेण षट् पदार्था उक्ताः । भोजनं सप्तमः पदार्थः । तस्मिन्मांसविधिः । मधुपर्काङ्गं भोजनं मांसेन भवतीति । तथा च यत्र प्राप्तिस्तत्र निषेध इति सिद्धम् । कलौ तु मधुपर्को हिंसानिषेधादनुनिष्पन्नमांसाभावादमांसं भोजनं तच्च लोकसिद्धमिति न बाध्यते इति लौकिकं तद्भवत्येव । एवं च मन्त्रलिङ्गमपि भूतं सा विराट् तन्माक्षायि तस्य तेऽशीय तन्म ऊर्ज्जं धा इत्युपपन्नं भवति तथा च सिद्धे अङ्गाङ्गिभावे यत्र मधुपर्कस्तत्र भोजनसिद्धिरित्यलम् । यत्तु भुक्त्वेति **व्यास**वाक्याद्विवाहात्पूर्वं यदा कदाचिद्भोक्तव्यमिति तन्न । **लिङ्गपुराणे** यानि नित्यनैमित्तिककाम्यानि कर्माणि तानि भुक्तवता न कार्याणीति पूर्वं भोजननिषेधात् । कथं तर्हि अन्ननिवेदनस्य दृष्टार्थत्वादिति **सुदर्शनो**क्तमिति चेत् । दृष्टफलमत्र तृप्तिर्ग्राह्या । न चैवं क्षुद्बोधे सति भोक्तव्यमन्यथा नेति प्राप्तमिति वाच्यम् । अजीर्णे सति कर्मानधिकारापत्तेः । तस्माद्भुक्त्वेति क्त्वाप्रत्ययान्मधुपर्कोत्तरमुद्वाहात्पूर्वं कालो नियम्यते । अत एव "भुक्तवते कन्यां प्रयच्छेत्"इति मतुप्संगतिः । अत एव "उपवासवता कार्यं सायंसंध्याहुती विने"त्यस्यात्राप्रसक्तिरित्याद्यन्यत्र विस्तर इति दिक् ॥ १५६ ॥

## याज्ञवल्कीये १५७।१५८ श्लोकौ

**मातृपित्रतिथीति** । अत्र सर्वत्राभ्यर्हितत्वात्पूर्वनिपातः । अनुत्तरपदपरत्वादानङ् न । **तु**श्चार्थे धर्मान्तरत्वसूचकः । **गृहीति** । भाविगृहस्थाश्रयक इत्यर्थः । 'गृहस्थ उद्वहेद्भार्या'मितिवत् । गृहस्थसाधारणधर्मत्वसूचकं वा । **स्त्रियः** भगिन्याः । भिन्नोदर्योऽपीत्यपि बोध्यम्। **वैवेति** । द्विविधा इत्यर्थः । योगादाह । **विद्वानिति** । रूढेराह। **भिषगिति** । बान्धवत्वेनैव सिद्धेराह । **मातुलेति**। कर्मकर इति पाठः । योगरूढ्यर्थमाह । **सोदरा इति** ।

नन्वत्र भ्रातृग्रहणे सामान्येन भ्रातृग्रहणेनैव सिद्धमत आह । **भ्रातृभ्य इति** । जामिभगिनीनामपि सामान्येन तेनैव सिद्धमत आह। **अजामीति** । अविद्यमानभर्तृकेत्यर्थः । एवं कारणभूतपदार्थज्ञानाय पदार्थानुक्त्वा वाक्यार्थमाह । **एतैरिति** । विवाहपदार्थमाह । **वाक्कलहमिति** । जपेदित्यस्य तात्पर्यार्थमाह । **प्राप्नोतीति** । तदुक्तं **मनुना**ऽपि । ( अ. ४ श्लो. १७९–१८५ )

"ऋत्विक्पुरोहिताचार्यैर्मातुलातिथिसंश्रितैः । बालवृद्धातुरैर्वैद्यैर्ज्ञातिसंबन्धिबान्धवैः ॥
"मातापितृभ्यां जामीभिर्भ्रात्रा पुत्रेण भार्यया । दुहित्रा दासवर्गेण विवादं न समाचरेत् ॥
"एतैर्विवादान्संत्यज्य सर्वपापैः प्रमुच्यते । एतैर्जितैश्च जयति सर्वलोकानिमान् गृही ॥

एतैर्विवादैः ।

"आचार्यो ब्रह्मलोकेशः प्राजापत्ये पिता प्रभुः । अतिथिस्त्विन्द्रलोकेशो देवलोकस्य चार्त्विजः ॥
"जामयोऽप्सरसां लोके वैश्वदेवस्य बान्धवाः । संबन्धिनो ह्यपां लोके पृथिव्यां मातृमातुलौ ॥

---

१ व्या. सू. ६।३।२५ ।

"आकाशेशास्तु विज्ञेया बालवृद्धकृशातुराः। भ्राता ज्येष्ठः समः पित्रा भार्या पुत्रः स्वका तनुः॥

"छाया स्वा दासवर्गस्तु दुहिता कृपणं परम्। तस्मादेतैरधिक्षिप्तः सहेतासंज्वरः सदा"॥ इति ॥ १५७ ॥ १५८ ॥

## याज्ञवल्कीये १५९ श्लोकः

कृत्रिमेषु विशेषनिषेधमाह। **पञ्चेति**। अकृत्रिमेषु विधिं सामान्यत आह। **स्नायादिति**। अभ्यर्हितत्वान्नद्याः पूर्वनिपातः। **चेन** कृत्रिमेषु वक्ष्यमाणविशेषसमुच्चयः। परवापिष्वित्यस्य परकारितेषु परस्वत्ववत्सु चेत्यर्थद्वयम्। विनिगमनाविरहात्स्मृत्यन्तरानुरोधाच्च क्रमेणाह। **परसंबन्धिष्विति**।परकारितेष्वित्यर्थः। **सत्वं** प्राप्णी। अनभ्यनुज्ञातेष्वित्यपि बोध्यमत एव त्रयाणां क्रमेण व्यावर्त्यं त्रयमाह। **अनेनात्मीयं त्सृष्टेति**। इदमेव चसमुच्चेयम्। **अपिना** तत्रापि तथाकरणेऽभ्युदय एवेति सूचितम्। अकरणे दोषो नेति भावः। अत एव सर्वार्थमुत्सृष्टेषु परकीयत्वाभावादनुद्धरणे न दोष इति **हेमाद्रिः** संगच्छते। अयं च स्नानमात्रविषयो न पानस्नानतर्पणादेः। तथा च **मनुः**। (अ. ४ श्लो. १२९)

"न स्नानमाचरेद्भुक्त्वा नातुरो न महानिशि। न वासोभिर्न चाजस्रं नाविज्ञाते जलाशये"॥ इति।

अविज्ञाते गाधागाधतया नक्रादिरहिततया च कृत्रिमे निन्दितानिन्दितकर्तृकतया प्रतिष्ठितत्वाप्रतिष्ठितत्वाभ्यां च।

**विष्णुश्च** "परनिपानेषु न स्नानमाचरेदाचरेद्वा पञ्चपिण्डानुद्धृत्यापदीति"। आपदि अन्यजलालाभे। अत एव।

"परकीयनिपानेषु न स्नायान्न कदाचन। निपानकर्तुः स्नात्वा हि दुष्कृतांशेन लिप्यते॥

"उद्धृत्य पञ्चपिण्डांश्च पारक्ये स्नानमाचरेत्। स्नात्वा तु तर्पयेद्देवान् पितॄंश्चैव विशेषतः"॥

इति। **मनुः** (अ. ४ श्लो. २०१)। परकृतान्सेतून्कूपांश्च वर्जयेदंशभाक्। तत्र "सेतुकृत् त्रीन्पिण्डानुद्धृत्य स्नायादिति" **पैठीनसिश्च** यथाक्रमं बोध्यः। अत्रान्त्येऽपि निषेधः। सर्वत्र स्नानमात्रे प्रतिप्रसव आपदि।

"अनुद्धृत्य तु यः स्नायात्परकीयजलाशये। वृथा तस्य भवेत्स्नानमिति" **शौनकश्च**। कूपे तु **बौधायनेन** विशेष उक्तः (२।३।७)। "निरुद्धासु तु त्रीन्पिण्डान्कूपाच्च त्रीन्घटांस्तथेति"। **पैठीनसि**वाक्ये परकृतं प्रतिष्ठितमप्रतिष्ठितं चाविशेषेणोक्तः। स्वकारिते तु न दोष इति **राजा**। अप्रतिष्ठितमेव तु युक्तम्।

अत एव 'अप्रतिष्ठितपानीयेष्वपेयं सलिलं भवेदिति'।

"यत्र सर्वार्थमुत्सृष्टं यच्चाभोज्यनिपानजम्। तद्वर्ज्यं सलिलं तात सदैव पितृकर्मणि"॥ इति

च **स्मृत्यन्तर**संगतिः। तस्मादात्मीयादौ स्नानोपयोगे चौर्याभावात्पानादेर्वर्ज्यत्वेऽप्यत्र वर्ज्य-

त्वाभावाच्च तं विना तथाकरणे न दोष इति सिद्धम्। एतेन 'प्रतिष्ठितेषु परकृतेषु पञ्चपिण्डाद्युद्धारः स्वकृतेषु तु नाप्रतिष्ठितं तु स्वकीयं परकीयं च वर्ज्यमेवेति' **श्रीदत्ता**द्युक्तमपास्तम्। यत्तु **वाचस्पतिना** "स्वयमुत्सृष्टमुदकं स्वयं न पातव्यं दत्तापहारापत्तेः। वृषोत्सर्गादौ स्वयमुत्सृष्टवृषस्य स्वयमुपादानापत्तेश्च" इत्युक्तं तन्न।

"सर्वभूतेभ्य उत्सृष्टं मयैतज्जलमर्जितम्। रमन्तु सर्वभूतानि स्नानपानावगाहनैः" ॥

इति इत्युत्सर्गमन्त्रे सर्वपदेनोत्स्रष्टुरप्युपादानात्। अनुत्सृष्टस्य कर्मानर्हत्वोक्तेः। तत उत्सर्गं कुर्याद्देवाः पितरो मनुष्याः प्रीयन्तां यश्चोत्सृजते इति **कल्पतरुधृतबह्वृचपरिशिष्टे**नोत्स्रष्टुरुद्देश्यताप्रतीतेश्च।

**कथं तर्हीत्याहेति**। आर्तीयादिभिरत्नेनोक्तप्रकारद्वयमध्ये केन प्रकारेण स्नानं कार्यमित्यत आहेत्यर्थः। विनिगमनाविरहात्सर्वसंग्रहाय चाह। **साक्षादिति**। स्रवन्त्य इत्यनेन शुष्काव्यवच्छेदः। तत्र स्नानासंभवात्। तथाचाशोष्यसलिलत्वमर्थकं भवति। एवं चाशोष्यसलिला स्रवन्तीत्यन्यत्र। **ह्रद इति**। 'गर्तेति' पाठान्तरम्।

"धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते। न ता नदीशब्दवहा गर्तास्ते परिकीर्तिताः" ॥

इति **छन्दोगपरिशिष्टम्**।

"द्वादशाङ्गुलिकः शङ्कुस्तद्द्वयं तु शयः स्मृतः। तच्चतुष्कं धनुः प्रोक्तं क्रोशो धनुःसहस्रिकः" ॥

इति **विष्णुधर्मोत्तरम्**। शयो हस्तः। एवं च तदधिकगतिमती नदीत्यर्थात्सूचितम्। **एतेष्विति** अकृत्रिमत्वेनापरकीयत्वादिति भावः।

विशेषमाह। **एतच्चेति**। नद्यायभावेनतत्प्रवृत्तिरित्याह। **सतीति**। **मनु**माह। **नदीष्विति**। देवेत्यस्याग्रे उभयत्रान्वयः। **गर्तेति** द्वन्द्वः। तथाच नैमित्तिकादिव्यवच्छेदकं नित्यग्रहणं स्नानविशेषणं न तु सर्वदेत्यर्थकमाचरणक्रियाविशेषणं तदभावेऽसंभवादिति भावः। यद्वा देवखातेति भिन्नं निमित्तं देवैः खातमिति यत्प्रसिद्धं **तद्देवखातं** प्रागुक्तम्। सहस्रहस्तद्वयाधिकपरिमाणः कृत्रिमो जलाशय**स्तटाकः**। सहस्रहस्ताधिकपरिमाणं तटाकान्न्यूनं **सर** इति भेदः।

**शङ्खेन** तु तर्पणेऽपि पञ्चपिण्डोद्धार उक्तः। "आपीतडागोदपानेषु सप्त पञ्च त्रीन्वा पिण्डानुद्धृत्य देवापितॄंस्तर्पयेदिति"। उदपानं कूपः। अत्रेयं व्यवस्था **पैठीनस्युक्तः** स्नानकर्तुर्मृत्पिण्डत्रयोद्धरणं सेतौ सप्रचारे कूपे च। **बौधायनोक्तो**ऽप्रचारे कूपे घटत्रयपरिमिताम्बूद्धारः। मृत्पिण्डोद्धारस्तु तत्राशक्यत्वान्न। **याज्ञवल्क्या**द्युक्तपञ्चपिण्डोद्धारस्तु सेतुकूपभिन्नपरजलाशयविषयः। **शङ्खोक्तं** तु तर्पणविषये क्रमेण वाप्यादिषु सप्तपञ्चपिण्डोद्धार इत्यर्थकम्। उदपानं च तत्र सप्रचारमेव। अन्यत्र तु स्नानवद्घटत्रयपरिमिताम्बूद्धरणमेव। एतत्त्रितयान्यजलाशये तु स्नानवदेव, पाने तु प्रतिष्ठितत्वमात्रं निमित्तं न तु पिण्डोद्धारः। स्नानाङ्गतर्पणाय पिण्डोद्धारस्तु स्नानात्पूर्वमेव तेनैव चाधिकेन स्नानाङ्गस्यापि तस्य निर्वाहः। यत्र तु शुद्ध्यर्थादिस्नाने तर्पणाभावस्तत्र

स्नानाङ्गतया तद्विधायकवचनावकाश इति केचित् । परे तु साङ्गस्नानोपक्रमेण तद्विधानात्स्नानाङ्गतर्पणेन पृथक् पिण्डोद्धारः । यत्र तु स्नानं विनैव स्वतन्त्रतर्पणं क्रियते तत्रैव तर्पणार्थं पिण्डोद्धार इत्याहुः । प्रतिष्ठितत्वं तु तर्पणे सर्वत्रापेक्षितं प्रागुक्तस्मृतेः । यत्तु निम्नभूमौ वर्षादिषु प्रभूतं जलं तत्र नद्यादिभिन्नेऽपि स्नातव्यमेव गुणलोपन्यायात्पिण्डोद्धारस्तु नाकृत्रिमत्वात् पिण्डश्च बिल्वप्रमाणः पिण्डपरिमाणे तथोक्तेरित्याहुः । "यावान्हस्ताभ्यामुद्धर्त्तुं शक्यते तावानिति" **रत्नाकर** इति । **हेमाद्रिस्तु** पिण्डोद्धारविषये यथासामर्थ्यं व्यवस्थेत्याह ।

तदेतदभिप्रेत्याह । **शौचाद्यर्थं त्विति** । नित्यं नैमित्तिकं स्नानं क्रियाङ्गं "मलकर्षमि"त्यादिना स्नानस्यानेकविधत्वस्योक्तत्वात् इति भावः । तत्प्रपञ्चस्त्वन्यत्र स्पष्टः । **अत्रापस्तम्ब**धर्मसूत्रे द्वितीयप्रश्ने ( २।२२।६।१३ ) "अथ वानप्रस्थस्यैवानुपूर्व्यमेके उपदिशन्ति इत्येवं वानप्रस्थप्रकरणे द्वाविंशे खण्डे सूत्रं "शनैरपोऽभ्यवेयान्नाभिघ्नन्नभिमुख आदित्यमुदकमुपस्पृशेदिति सर्वत्रोदकस्पर्शनविधिः" इति । अत्र **हरदत्तः** शनैर्वेगेन जलाशयं प्रविशेत् प्रविश्यानभिघ्नन् हस्तेनोदकमताडयन् उदकमुपस्पृशेत्स्नायात्सर्वत्रोदकस्पर्शनविधिः । सर्ववर्णाश्रमसाधारणमेतत् । तथा चाग्रे । तस्य द्वन्द्वं पात्राणामेकैके उपदिशन्तीति तस्य ग्रहणं कृतमिति । अस्यायमाशयः । सर्वत्र प्रवहदप्रवहज्जलादावयमुदकस्पर्शनस्य स्नानस्य विधिर्ज्ञातव्यः । तदग्रिमसूत्रे प्राकरणिकव्यवहितवानप्रस्थमात्रपरामर्शकस्य तस्येति पदस्य निर्देशात्तथा च तत्र तस्येत्यनेन वानप्रस्थस्यैव ग्रहणम् । तत्रोदकं शनैरभ्यवेयान्न धावेत् । अन्तःपतितशर्करादिकृतपीडानिरासार्थमिदं तथोदकं हस्तादिनाऽनभिघ्नन्नताडयत्प्लवनादिवृथाचेष्टानिरासार्थमेतत् । 'अभिघ्नन्निति' पाठे पाणिनोदकताडनरूपाभिहननमन्तःपातिजलचरप्राण्यपसरणार्थमेतत् । तत्र विशेषमाह । **अभिमुख आदित्यमिति** । सूर्याभिमुखमित्यर्थः । कथं तर्हि

"नद्यां स्रवत्सु च स्नायात्प्रतिस्रोतः स्थितो द्विजः । तडागादिषु तोयेषु प्रत्यर्कं स्नानमाचरेत्" ॥ इति ।

**नृसिंहपुराणस्य** ।

"स्रोतसां संमुखो मज्जेद्यत्रापः प्रवहन्ति वै । स्थावरेषु गृहे चैव सूर्यसंमुखमाप्लवेत्" ॥ इति ।

**वृद्धयाज्ञवल्क्यस्य** ।

"स्रोतसोऽभिमुखः स्नायान्मार्जनं चाघमर्षणम् । अन्यत्रार्कमुखो रात्रौ प्राङ्मुखोऽग्निमुखोऽपि वा" ॥ इति ।

**व्यासस्य** ।

"अन्त्यजैः खानिताः कूपास्तडागा वाप्य एव च । एषु स्नात्वा च पीत्वा च प्राजापत्येन शुध्यति ॥

"एकेन वाससाऽऽस्नायाद्वाभ्यामनियमः स्मृतः । बहुभिः प्रतिषेधस्तु स्नाने फलमभीप्सितम् ॥

"मलस्नानं बहिः कृत्वा ह्याचम्य प्राङ्मुखः स्थितः । प्राणायामांस्ततः कुर्यात्ततो ध्यात्वा दिवाकरम् ॥

"सङ्कल्पपूर्वकं स्नानं कुर्याद्विप्रः समाहितः । स्रोतसोऽभिमुखः स्नायान्मार्जनं चाघमर्षणम् ॥

"ततोऽङ्गुष्ठाङ्गुलीभिस्तु श्रोत्रदृङ्नासिकामुखम् । पिधायन्तः प्रतिस्रोतस्त्रिर्जपेदघमर्षणम्" ॥

**आपस्तम्बस्य** च दर्शनाज्जलमात्रसाधारण्येन व्याख्यानमिति चेत् ? शृणु ।

"प्रवाहाभिमुखो मज्जेद्बह्वृचोऽथर्वसामगः । यजुषां चैव सर्वेषां सूर्यसंमुखमज्जनम् " ॥ इति स्मृतेः ।

"स्रोतोऽभिमुखः सरित्सु स्नायादन्यत्रादित्याभिमुखः" **बह्वृचपरिशिष्टो**क्ते "नद्यादावित्युपक्रम्य सूर्याभिमुखो मज्जेदिति " **कातीयसूत्राच्च** कातीयापस्तम्बादियजुर्वेदाद्यतिरिक्तपरत्वेन तेषां स्वतन्त्रविधित्वेनोपपत्तेः ।

"गृहे गृहमुखं विद्यादन्यत्राभिमुखं रवेः" इत्**याश्वलायनोऽपि** बह्वृचादिपर एव । अत एव प्रागुक्त**वृद्धयाज्ञवल्क्य**संगतिः । तस्मात्**कातीयतैत्तिरी**यादिसकलयजुर्वेदिनां सर्वत्रार्काभिमुखमेव स्नानमिति निष्कर्षः । तत्सूत्रेषु तथोक्ते**राचारदर्पणे**ऽप्येवम् । तेषामपि रात्रौ प्रवाहाभिमुखत्वमवमर्षणमार्जने च सदा सर्वेषां प्रवाहाभिमुखे एव अत एव प्रागुक्त**व्यासापस्तम्ब**संगतिरिति दिक् ।

एवं सामान्यतः प्राप्तनित्यस्नानविधेर्ब्रह्मचारिणो विशेषमाह ( १।२।३०।२८।२९ ) । " नाप्सु श्लाघमानः स्नायाद्यदि स्नायाद्दण्डवत्प्लवेदिति " । अयमर्थः । यदि नाम ब्रह्मचारी अप्सु स्नायात्तदा दण्डवत् प्लवेत् । दण्डवत् प्लवनं मज्जनं तद्रूपमेव स्नानं कुर्यात् । तथा यदप्सु स्नायात्तत्र श्लाघमानः स्नानीयैर्द्रव्यैर्मलापकर्षणं श्लाघा जलक्रीडा वा तामकुर्वन् किं तु पावमान्यादिविधिनेति । अत्र "अङ्गानि न प्रक्षालयीत" इत्युपादिमसूत्रं तद्विना शिरसोष्णोदकादिना सुखार्थाभ्यङ्गस्नाननिषेधार्थम् । तत उत्तरं सूत्रं "प्रक्षालयीतत्वशुचिलिप्तानि गुरोरसंदर्शने" । यानि तु मूत्रपुरीषाद्यशुचिलिप्तानि अङ्गानि तानि कामं मृदाऽद्भिः प्रक्षालयेत् । यावद्गन्धो लेपश्चापैति । तदपि गुरोरसंदर्शने यत्र स्थितं गुरुर्न पश्यति तत्राचार्यप्रकरणे गुरुग्रहणात्पित्रादीनामपि ग्रहणम् कश्चित्त्वङ्गानीत्या समावर्तनान्नित्यस्नाननिषेधः प्रक्षालयीत त्वशुचिलिप्तानीति नैमित्तिकस्नानविधिर्नाप्स्विति । तत्रैव श्लाघाप्रतिषेध इत्येवं त्रिसूत्रीं व्याचष्टे । एवं नित्यस्नातुः स्नातकस्य विशेषमाह (१।३२।७–८) । "सशिरोऽवमज्जनमप्सु वर्जयेदस्तमिते च स्नानम्" इति । 'वमज्जनमि'त्यत्र **भागुरि**[1]मतेनालोपः । तत्स्नानं शिरसा सह न कुर्यात्स्नातकः । अप्सु मज्जनेन शिरःस्नानं नाचरेदिति यावत् । अवगाहनविधयः सर्वे स्नातकव्यतिरिक्ते चरितार्थाः । नैमित्तिकाश्च स्नातकस्य तु नित्यं स्नानमवगाहनरूपं न भवतीत्याचार्यस्य पक्ष इति **हरदत्तः** । अर्थात्कण्ठस्नानं नित्यमत्रेत्यवगम्यते । **श्रीदत्त**स्तु "सशिरोवमज्जनम्" इति पठित्वा शिरोनैरुज्यार्थं सशिरस्कस्नानमप्सु प्रविश्य न कार्यमित्यर्थमाह । **हेमाद्रि**स्तु सशिरोमज्जननिषेधः स्थावरोदकविशेषः ।

"मग्नो नदीजले स्नायात्प्रविश्यान्तर्जले द्विजः । तडागादिषु तोयेषु प्रत्यक्षं स्नानमाचरेत्" ॥ इति

**नन्दिपुराणा**दित्याह । **केचित्त्वशिरोवमज्जनमिति** पठित्वा गात्रप्रक्षालनमात्रं जलं प्रविश्य न कार्यमित्याहुः । यत्त्वेतदल्पोदकविषयम् ' नाल्पाम्भसि शिरो मज्जेदिति ' स्मृतेर्यच्चैतन्न मुख्यं किंतु "अशक्तावशिरस्कं च स्नानं मन्त्रविधानतः " इति **चतुर्विंशति मतोक्ते**रशक्तविषयं गौणमित्येवं व्यवस्थाकल्पनं तदुभयमप्युत्तरसूत्रानालोचननिबन्धनमिति न युक्तम् । तथाहि अस्यैव तन्यमानसौमिकवारुणप्रघासिकावभृथस्य विशेषसूत्रं " सशिरस्कावनुपमक्षन्तौ स्नातः पत्नी यजमानश्चेति " यदेवाशिरस्कावमज्जनं सामान्यतः प्राप्तं तदपोद्यानुपम-

१ वष्टि भागुरिरल्लोपमवाप्य उपसर्गयोः ।

क्षन्तावमज्जन्तौ सशिरस्कौ स्नातः सलिलोत्क्षेपणप्रकारेणेति **रुद्रदत्तः ।** यत्त्वनु**पमक्ष**न्तावङ्गान्यशोधयन्ताविति तन्न। स्नानादर्वागङ्गशोधनस्यात्यन्तमप्रसक्तत्वात्स्नानकाले च नवनीताद्यङ्गमलविमोकान्यथानुपपत्तिप्राप्तेऽङ्गशोधने स्वपृष्ठधावनस्य स्वयं कर्तुमशक्यत्वात् "अन्योन्यस्य पृष्ठे प्रधावत" इति सूत्रेण शोधनस्य व्यक्तमुक्तत्वेन दम्पत्योरन्योन्यकर्तृकत्वनियमेन निषेधानुपपत्तेः। 'शुक्रादीक्षायै तपसो विमोचनी'रित्यादिमन्त्रवर्णाच्च । तस्मात्प्रागुक्तमेव ज्यायः । एवं चाशिरस्कं तत्प्राप्तमनूद्य सशिरस्कत्वस्य विधौ लाघवात् आवभृथिके स्वतन्त्रविशिष्टस्नानविधिकल्पने गौरवादावभृथिकसूत्रस्य नियन्त्रकस्य सद्भावादन्यथार्थकरणस्यायुक्तत्वाच्छास्त्रान्तरीयमुख्यशिरःस्नानस्योपस्थापकाभावाद्यथाकथंचित्तद्भावे त्वर्थतोऽपि तत्तत्समानप्राप्तेरेतद्विधिवैयर्थ्यापत्तेरयमेवार्थः पर्यवस्यति तस्मान्नित्यं स्नास्य**न्नापस्तम्बो**ऽ"मज्जन्नशिरस्कं स्नायात् । कण्ठस्नानं कुर्यात्। अवभृथे च सशिरस्कं सलिलोत्क्षेपादिना नैमित्तिकान्तरे च मज्जन्नपि सशिरः स्नानं स्नातकान्यः सशिरस्कं ब्रह्मचारी तु दण्डवत्सशिरस्कं शूद्रादिश्च मज्जन् सशिरः स्नायात्" । नित्यं नैमित्तिकं च स्नातकोऽपीत्य**ापस्तम्ब**सूत्रार्थनिष्कर्ष इति सर्वं समञ्जसम् ।

"अस्तमिते स्नानम्" (१।३२।८) इत्यत्र वर्जयेदित्यस्यानुषङ्गः । अस्तमिते आदित्ये सर्वप्रकारं स्नानं वर्जयेदित्यर्थः। अत एव

"सततं प्रातरुत्थाय दन्तधावनपूर्वकम् । आचरेदुषसि स्नानं तर्पयेद्देवमानुषान् ॥
"नदीस्नानानि पुण्यानि तडागे मध्यमानि च । वापीकूपे जघन्यानि गृहेष्वत्यवराणि च ॥
"अलाभे देवखातानां सरितां सरसां तथा । उद्धृत्य च चतुःपिण्डान्पारक्ये स्नानमाचरेत् ॥
"न तीर्थे रुयाकुले स्नायान्नामज्जनसमात्रेण। दर्भहीनोऽन्यचित्तश्च न नग्नो न शिरो विना" ॥ इति

**जाबालिः** संगच्छते इति दिक् । अयं पिण्डचतुष्टयोद्धारो **याज्ञवल्क्योक्त**पञ्चपिण्डोद्धारेण सहाल्पत्वमहत्त्वाभ्यां व्यवस्थापनीयः । वस्तुतस्तु तत्स्नातकविषयमिदं गृहस्थविषयमिति न कोऽपि दोष इति बोध्यम् ॥ १५९ ॥

## याज्ञवल्कीये १६० श्लोकः

एतत्प्रसंगादाह । **परेति** । आसमनान्तं द्वन्द्वं कृत्वा पुनर्द्वन्द्वः । आद्येऽल्पाच्तरत्वात्पूर्वनिपातः । द्वितीये लघ्वक्षरत्वात् । एवं तृतीये तुरीये च बोध्यम् । परकीये दत्तत्वासंभवेन विशेषणवैयर्थ्यं तत्तत्परिहारायाह । **अननुज्ञातानीति** । तथा चानुज्ञायां दोषाभावः । वर्जयेदित्यस्य गृह्णीयादित्यर्थो न दानाभावादत आह । **नोपयुञ्जीतेति** । तदुक्तं **मनुना**ऽपि ( अ. ४ श्लो. २०२ )

"यानशय्यासनान्यस्य कूपोद्यानगृहाणि च । अदत्तान्युपभुञ्जान एनसः स्यात्तुरीयभाक्" ॥ इति

'जस्य चेति' पाठः । **रहितेति** तत्परिग्रहर्हानस्येत्यर्थः। अविधिनोत्सृष्टाग्नेश्चेत्य**परार्कः** । इदमुपलक्षणमित्याह । **प्रतीति** । अर्थसिद्धोऽयमर्थो न शाब्द इति सूचयन् व्यतिरेकमाह । **तस्मादिति** । प्रशस्तानामिति पाठान्तरम् ।

---

१ क्षान्तावनुमज्जन्तौ । २ आ. सू. १।३२।७-९ ।

तत्र शूद्रविषयेऽ**ङ्गिरा** अपि ।

"षण्मासान्यो द्विजो भुङ्क्ते शूद्रस्यान्नं विगर्हितम् । स तु जीवन्भवेच्छूद्रो मृतः श्वा चाभिजायते ॥
"एते दोषा भवन्त्यत्र शूद्रस्यैव प्रतिग्रहे । अनुग्रहप्रवृत्तस्य न दोषोऽङ्गिरसो मतम्" ॥ इति ।
अनुग्रहेति गुर्वाद्यनुग्रहार्थं प्रवृत्तस्येत्यर्थः । अत एवाह **स** एव ।
"गुर्वर्थमतिथीनां च भृत्यानां च विशेषतः । शूद्रान्नं प्रतिगृह्णीयान्न तु भुङ्क्ते स्वयं मतः" ॥ इति ।
इदमापद्विषयमेतदेव ध्वनयितुमनापदीत्युक्तं स्फुटीभविष्यति चैतद्दानधर्मप्रकरणान्ते । **यमोऽपि ।**
"ब्राह्मणस्य सदाऽश्नीयात्क्षत्रियस्य च पर्वसु । प्राकृतेषु च वैश्यस्य शूद्रस्य न कदाचन" ॥ इति

पर्व पूर्णिमादि । प्राकृतं गोमङ्गलादि । अयं च शूद्रनिषेधोऽसच्छूद्रविषयो गवादिप्राप्त्यभावे सच्छूद्रविषयश्च ।

"राज्ञां पर्वणि वैश्यानामश्नीयान्मङ्गले गवाम् । गोभूमिरत्नहेमार्थं सच्छूद्रस्य गृहे तथा" ॥ इति

**ब्राह्मात् ।**

इदमपि वृत्त्यन्तराभावे सकृदेव "नात्यन्तमन्वस्येद्वृत्तिं प्राप्य विरमेत्" (१।१८।७-८) **इत्यापस्तम्बात् ।** न पुनरत्यन्तमवसीदेत् । वृत्त्यन्तराभावेऽपि 'सकृत्प्रवृत्तायाः किमवगुण्ठनेनेति' न्यायेन तदीयान्नरतिर्न स्याद्विहितस्ववृत्तिलाभे निषिद्धाया विरमेदित्यर्थः । ब्रह्मचारिविषये **गौतमः** ( अ. २ सू. ४१ ) "सार्ववर्णिकं भैक्षचरणमभिशस्तपतितवर्जमिति" । इदं युगान्तरविषयम् । **आपस्तम्बः ।** ( १।१८। १–१३ ) "त्रयाणां वर्णानां क्षत्रियप्रभृतीनां समावृत्तेन न भोक्तव्यं प्रकृत्या ब्राह्मणस्य भोक्तव्यं कारणादभोज्यं यत्राप्रायश्चित्तं कर्मासेवते प्रायश्चित्तवति चरितनिर्वेशस्य भोक्तव्यं सर्ववर्णानां स्वधर्मे वर्तमानानां भोक्तव्यं शूद्रवर्जमित्येके" इति । पूर्वमापद्वृत्तिर्नात्यन्तमित्यनेनोक्ता इदानीमनापदि तामाह । **त्रयाणामिति ।** समावृत्तो द्विजातिः क्षत्रादीनां गृहे न भुञ्जीत ब्राह्मणस्य त्वन्नं प्रकृत्या स्वभावेनैव भोज्यं कारणादेव त्वभोज्यं इति **हरदत्तः । प्रकृतिः** स्वभावस्तज्जन्यकर्मणा युक्तस्य तस्येत्याद्यर्थः । तच्च गीतायामुक्तम् ( अ. १८ श्लो. ४२ ) ।

"शमो दमस्तपः शौचं सत्यमिन्द्रियनिग्रहः । ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म स्वभावजम्" ॥ इति ।

ज्ञानं शास्त्रीयं विज्ञानमनुभवः । कारणादभोज्यान्नत्वनिमित्तादिति तु **गुरुचरणाः ।** कारणमेवाह । **यत्रेति ।** यत्र यदा प्रायश्चित्तनिमित्ते सत्यपि चोदितं प्रायश्चित्तमकृत्वा ततोऽन्यदप्रायश्चित्तरूपं नित्यमाभ्युदयिकं वाऽग्निहोत्रवैश्वदेवादिकं कर्मासेवते तात्पर्येण करोति तदा तस्मात्कारणात्तस्यान्नमभोज्यं चरितेति निर्वेशः प्रायश्चित्तं प्रायश्चित्तहेतुरापवतः कृतप्रायश्चित्तस्यैव भोक्तव्यं तद्भोजनेन न दोषः । निष्ठयाऽचर्यमाणेऽपि निर्वेशेन भोक्तव्यमिति सूचितम् । **सर्वेति ।** शूद्रभिन्नानां स्वधर्मरतानां सर्वेषामेवान्नं भोज्यं न ब्राह्मणस्यैवेत्येके मन्यन्ते । अत्र क्षत्रियादभ्यनुज्ञातं पर्वादिविषयं प्रागुक्तयुक्तेः । (**आप.** १।१८।१४–१५) "तस्यापि धर्मोपनतस्यापत्कल्पश्चायं सुवर्णं दत्वा पशुं वा भुञ्जीत नात्यन्तमन्वस्येत् । वृत्तिं प्राप्य विरमेत्" । शूद्रस्यापि धर्मार्थमुपनतस्याश्रितस्यान्नं भोज्यं धर्मग्रहणादर्थार्थमाश्रितस्याभोज्यम् । **आपदीति ।** तत्र गुणविधिः । **सुवर्णमिति ।** उपसंहरति नात्यन्तमिति । **मनुः** (अ. ४ श्लो. २२३) ।

"नाद्याच्छूद्रस्य पक्कान्नं विद्वानश्राद्धिनो द्विजः। आददीतान्नमेवास्माद्वृतावेकरात्रिकम्॥ इति।

श्राद्धं पाकयज्ञादिक्रिया तद्रहितस्येत्यर्थ इति **मेधातिथिः**। नित्यं श्राद्धरहितस्येत्यर्थ इति **कल्पतरुः**। केचित्तु अश्राद्धितः शूद्रमात्रस्य विप्रस्वीकारान्तपित्रुद्देश्यकहविस्त्यागो हि श्राद्धं हविश्च पक्कमेव। पक्कान्नश्राद्धे च तस्यानधिकारः स्मृतिसिद्धः। तस्माच्छूद्रमात्रस्वामिकपक्कान्नभोजनं विप्रस्य निषिद्धमित्याहुः। तदप्यवृत्तावेवापद्येव। तत्राप्येकदिननिर्वाहयोग्यमेव। यत्तु शूद्रात्प्रतिग्रहविधिना आममन्नं प्रतिगृह्य स्वगृहे संस्थाप्य पक्त्वा भुज्यते न तच्छूद्रान्नं प्रतिग्रहेण तत्र विप्रस्वत्वोपपत्तेः। अत एव

"तावद्भवति शूद्रान्नं यावन्न स्पृशति द्विजः। द्विजाग्न्यकरसंस्पृष्टं सर्वं तद्धविरुच्यते" ॥

इति स्मरन्ति। यत्पुनराममेवास्माभिर्भोजनार्थं भवन्तो निमन्त्रिता इत्युक्त्वा दीयते तत्र कर्तृव्यापारस्य भोजनार्थत्वेन तच्छूद्रान्नमेव। एतद्विषयाण्येव

"शूद्रान्नं रुधिरं स्मृतमि"त्यादिवचांसि। आममपि सच्छूद्रादेवेति बोध्यम्॥

"शूद्रान्नेनोदरस्थेन यः कश्चिन्म्रियते द्विजः। संभवेच्छूकरो ग्राम्यस्तस्य वा जायते कुले" ॥

इति त्वसच्छूद्रविषयम्। **यमः**।

"यश्चाहिताग्निर्विप्रस्तु शूद्रान्नान्न निवर्तते। पञ्च तस्य प्रणश्यन्ति आत्मा ब्रह्म त्रयोऽग्नयः"॥इति।

**भविष्ये**।

"उपक्षेपकधर्मेण शूद्रान्नं यः पचेद्द्विजः। अभोज्यं तद्भवेदन्नं स च विप्रः पुरोहितः॥

"अभोज्यं ब्राह्मणस्यान्नं वृषलेन निमन्त्रितम्। तथैव वृषलस्यान्नं ब्राह्मणेन निमन्त्रितम्॥

"शूद्रान्नं शूद्रसंपर्कः शूद्रेण च सहासनम्। शूद्राज्ज्ञानागमः कोऽपि ज्वलन्तमपि पातयेत्"॥ इति।

उपक्षेपणधर्मः शूद्रस्वामिकान्नस्य पाकार्थं ब्राह्मणगृहे समर्पणमेवं च निमन्त्रणपूर्वकं यच्छूद्रेण पाकार्थं विप्रगृहे भोजनाय समर्पितं यच्च विप्रस्वामिकं वृषलेन मदर्थं पाकः कर्तव्य इति स्वार्थं विप्रद्वारा याचितं तच्चाभोज्यमित्यर्थ इत्येके। शूद्रगृहे भोजनार्थमागन्तव्यमिति ब्राह्मणकर्तृकनिमन्त्रणे तदन्नमभोज्यमित्यर्थ इत्यन्ये

"शूद्राद्विप्रगृहेष्वन्नं प्रविष्टं हि सदाऽशुचि" ॥

**इत्यङ्गिरा**स्तच्छूद्राद्ब्राह्मणेन प्रतिग्रहलब्धमान्नविषयं "संप्रोक्ष्यैव तु गृह्णीयाच्छूद्रान्नं तु गृहागतम्" इति च॥ १६०॥

## याज्ञवल्कीये १६१ श्लोकः

**कदर्येति**। अत्र सर्वत्र द्वंद्वप्रकारः प्राग्वद्बोध्यः। **केवलमाह**। **आत्मानमिति**। भृत्यानित्यत्र

१ वासिष्ठे अ. ६ सू. २७।

वृद्धानिति पाठान्तरम् पितरौ भृत्यानित्यत्र प्रचितोऽत्यर्थमिति पाठान्तरमित्युक्तः इति लक्षितः। **आदिना** रज्ज्वादिग्रहणम्। पतितस्याग्रे वक्ष्यमाणत्वादाह। **ब्राह्मणेति। नटचारेति।** अत एव नटगायकव्यतिरिक्तोऽपि प्रतिरङ्गं यो गच्छति कुतुकात्स इति **मेधातिथिः। वेणुच्छेदेति।** उलोपश्छान्दसः। वीणावादनजीवी वेण इति **माधवः।** अत एव वादित्रजीवनो वेण इति **मेधातिथिः।** वार्द्धुष्यशब्दोऽर्श आद्यजन्त इत्याशयेनाह। **वार्द्धुषीति।**

"समर्घं पण्यमुद्धृत्य महार्घं यः प्रयच्छति। स वै वार्द्धुषिको नाम यश्च वृद्ध्या प्रयोजयेत्" ॥ इति **यमः।**

"यस्तु निन्देत्परं जीवं प्रशंसत्यात्मनो गुणान्। स वै वार्द्धुषिको नाम" इति तु **विष्णुः। बद्धेति। माधवस्तु** 'गणिकान्नं गणान्नं दीक्षितान्नं चेति' व्याचख्यौ। तथा च **मनुः** (अ. ४ श्लो. २०९) "गणान्नं गणिकान्नं च" इति 'दीक्षितस्य कदर्यस्येति' च। तत्र गणः संघो भ्रात्रादीनामविभक्तानां न गणव्यपदेशः। दीक्षितस्य दीक्षणीया संस्कृतस्य अन्नं सोमक्रयात्प्राक् अग्नीषोमीयवपायागाद्वा प्राङ्न भोक्तव्यम्। "असंस्थितेऽग्नीषोमीये यजमानस्य गृहे नाशितव्यमिति" **श्रुतेः।** "क्रीतराजको भोज्यान्नः" **इत्याथर्वण**वैदिकं वाक्यं तु आपदि अभ्यनुज्ञानार्थम्। तदुक्तं **भट्टैः** "तथैव प्राणपीडायां क्रीतराजकभोजनमिति" "सामान्येनाभ्यनुज्ञानाद्विशेषश्च विशिष्यते। विशेषोऽत्यन्तनिर्दोषः स्तोकदोषेतरक्रिया इति" च। **वर्तते इति।** एवमग्रेऽपि उभयत्र अनापदीत्यस्य सर्वत्रानुवृत्तिर्बोध्या॥१६१॥

## याज्ञवल्कीये १६२ श्लोकः

योगारूढ्याऽऽह। **शत्रुरिति।** अत एव **विः। द्वेजक इति।** दारुणकर्मा स इति। **गुरुचरणाः।** वैश्याशूद्र्योरिति लक्षित उग्र इति तु **नारायणः। वञ्चक इति** छद्मना धर्मचारीत्यर्थः। **परभुक्तोज्झितेति।** निषिद्धतद्भोजीत्यर्थः ॥ १६२ ॥

## याज्ञवल्कीये १६३ श्लोकः

**अवीरेति।** रूढ्यर्थमाह। **स्वतन्त्रेति।** पुंश्चल्या उक्तत्वादाह। **व्यभीति।** पुंवत्कर्मेति (व्या. सू. ६।३।४२) पुंवद्भावाभाव आर्षः। योगार्थमाह। **पतीति।** वस्तुतस्तु स्त्रीति भिन्नं निमित्तं सूतिकापरमुग्रान्नं चेति **मनोः** सूतिकामुद्दिश्य यत्कृतं तत्तत्कुलजैरप्यभोज्यमिति तदर्थः। तत्कर्तुरसंभवादनिषिद्धत्वाच्चाह। **विकारेति।** आभूषणेत्यर्थः। 'स्त्रीजितानां च सर्वश' इति **मनुः** (४।२१७)। सर्वशः सर्वकर्मसु स्त्रीजितानां तत्परतन्त्राणामिति यावत्। तदाह। **सर्वत्रेति।** तेन क्वचित्तथासत्वेऽपि न दोषः। कादाचित्के दोषाभावायाह। **शस्त्रेति। सूचीति।** वसनादिवायकश्चेत्यपि बोध्यम्। एवमग्रेपि। वृत्तमित्यस्य व्याख्या **वर्तनमिति।** तद्व्याख्या **जीवनमिति।** अत इति ठनाविवतीनिः। एकाक्षरात्कृतो जातेरित्यस्यानित्यत्वात्। अत एव "श्ववतां शौण्डिकानां चेति" **मनौ** (अ. ४ श्लो. २१६)। अखेटाद्यर्थं श्वपोषकाणामिति **मेधातिथिः** ॥ १६३ ॥

## याज्ञवल्कीये १६४।१६५ श्लोकौ

**भूपतिरिति** । जनपदेश्वरः इत्यर्थः । इदमुपलक्षणमित्याह । **तत्सोहेति** । **शङ्ख इति** । **लिखितोऽप्येवम्** । **अवगीतः** पतितोऽभिशस्तश्च । **आक्रन्दो** दुःखितया सन्ततशब्दकरणम् । **अवघुष्टेति** । भुज्यतामत्र निःशङ्कं ये केचिदन्नार्थिन इत्याघुष्य यद्दीयते तदवघुष्टान्नमन्यस्मै प्रतिश्रुत्य यदन्यस्मै दीयते तत्तदिति तु **मेधातिथिः** । 'घुष्टान्नं च विशेषतः' (४।२०९) इति **मनौ** विशेषत इति तु दोषाधिक्यायेति बोध्यम् । 'अवक्रुष्टेति' पाठान्तरम् । जुगुप्सितेति तत्रार्थः । क्षुधितेत्यत्र क्षुदितेति पाठान्तरम् । छिक्कावानित्यर्थः । परिभुक्तो निःशेषान्नभोजनशीलः । **अवधूतः** । साधुबहिष्कृतः सर्वत्रादिकर्मणि क्तः । तेन वर्तमाना एव भयादयो निमित्तं पुरोहितोऽत्र यस्य कस्यचिदिति **गुरुचरणाः** । चेलधावस्याग्रे उक्त्या धात्वर्थानुसारेण चाह । **नीलादीति** । तदुपजीवीत्यर्थः । एवमग्रेऽपि । **वस्त्रेति** । तत्क्षालनजीवीत्यर्थः । सर्वसंग्रहाय तात्पर्यार्थमाह । **मद्येति** । **सहोपेति** । बहुव्रीहिद्वयमार्षत्वात्सादेशो न 'यस्य चोपपतिर्गृहे' (४।२१६) इति **मनुः** । **शाकेति** । शकटोपजीवीत्यर्थः । तत्र हेतुं **गौतम**माह । **अभीति** । एतदर्थं मूले बहुवचनमिति बोध्यम् । भ्रमनिरासायाह । **सर्वे चैते इति** ॥ १६४॥१६५ ॥

## याज्ञवल्कीये १६६ श्लोकः

संगतिमाह । **अर्धीति** । **तत्र** शूद्रविषये । **जीवतीति** । स च यस्यैव गाः पालयति तस्यैव भोज्यान्न इति **भर्तृयज्ञः** । **क्रमायातं** क्रमायातमित्रमित्यर्थः । **भागग्राहीति** । मिलित्वा कर्षक इति **कल्पतरुः** । **कर्मेति** चौलोपनयनादीत्यर्थः । अयमपि स्वकीय एव । **कर्मभिरिति** । कुलतः शीलतो दृष्टादृष्टप्रयोजनेनोपचारविशेषेण च स्वाभिप्रायकथनपूर्वं तदाश्रयणमित्यर्थः । तदाकारमाह । **तवेति** । त्वदीयोऽहमस्मीत्यर्थः । शूद्रेष्विति निर्धारणसप्तमीत्याह । **शूद्राणामिति** । तदुक्तं सर्वं **मनुना** (अ. ४ श्लो. २५३–२५६)

"आर्द्धिकः कुलमित्रं च गोपालो दासनापितौ । एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत् ॥
"यादृशोऽस्य भवेदात्मा यादृशं च चिकीर्षितम् । यथा चोपचरेदेनं तथात्मानं निवेदयेत् ॥
"योऽन्यथा सन्तमात्मानमन्यथा सत्सु भाषते । स पापकृत्तमो लोके स्तेन आत्मापहारकः ॥

"वाच्यर्था नियताः सर्वे वाङ्मूला वाग्विनिःसृताः । तां तु यः स्तेनयेद्वाचं स सर्वस्तेयकृन्नरः" ॥ इति ।

**गौतम**माह । **गोपेति** । **इवलोऽपि** ।

"स्वदासो नापितो गोपः कुम्भकारः कृषीवलः । ब्राह्मणैरपि भोज्यान्नाः पञ्चैते शूद्रयोनयः" ॥ इति पञ्चेत्यनुवादमात्रं मूलैकवाक्यत्वात् अयमपि स्वकीय एव । 'शूद्रस्य चास्त्रभृतश्च (अ. १४

---

१ क. वा स्वभूतस्य ।

सू. ४–५ ) **वासिष्ठात** । अत एवाभोज्यत्वपरशूद्रयाजककुलालेति **यमे**नाविरोधस्तस्यास्वकीयपरत्वात् । शूद्रविशेषस्य भोज्यान्नत्वं चात्यन्तापाद्विषयमिति **हरदत्तः** । **नारायणस्तु** ।

“कन्दुपक्वं शूलपक्वं पायसं दधिसक्तवः । एतानि शूद्रात् ग्राह्याणि भोज्यानि **मनु**रब्रवीत्” ॥

इति **हारीत**वचनमुदाहृत्यान्नविशेषपरतामाह । वस्तुतस्तु कलिनिषिद्धेषु शूद्रेषु सगोपालकुलमित्रार्द्धसीरिणामित्युक्तेनैतन्निष्कर्षे पतितव्यमिति बोध्यम् । **गौतमः** (अ. १७ सू. ७) ‘वणिक् चाशिल्पीति’। यः शूद्रो वणिक् स चेदशिल्पी तक्षादिको न भवति तदाभोज्यान्न इत्यर्थः । अत्र **मनु**नाऽसच्छूद्रपक्वान्ननिषेधात्सच्छूद्रपक्वान्नमनुज्ञातं तच्च आह्निकवाक्यतया गवादिप्राप्तिसंभवे एव । तदभावे तु तस्याप्याममेव ग्राह्यमित्युक्तम् । सच्छूद्रभिन्नदासादीनामापदि पक्वान्नमपि ग्राह्यमनापद्यामं सर्वदा दासभिन्नासच्छूद्राणामापद्येकरात्रिकमाममेवेति व्यवस्थेति **कल्पतर्वादयः** । **माधवादय**स्तु मन्वेकवाक्यतया दासादीनामपि सच्छूद्राणामेव भोज्यान्नत्वमाहुः ।

योऽपि शूद्रपक्वान्ननिषेधः । सोऽपि कतिपयपक्वान्नव्यतिरिक्तविषयः । तदाह **अङ्गिराः** ।

“गोरसं चैव सक्तूंश्च तैलं पिण्याकमेव च । अपूपान्भक्षयेच्छूद्राद्यच्चान्यत्पयसा कृतम्” ॥ इति ।

गोरसो दुग्धादि । सक्तवो भ्रष्टयवचूर्णम् । पिण्याकं तिलखलिः । अपूपाः अस्नेहपक्वगोधूमादिविकारः । अपूपाः पयसा कृता एव अन्यथाऽन्यदित्यस्य वैयर्थ्यापत्तेः । पयसा दुग्धेन कृतं किलाटकूर्चिकादि । अन्यदपि **स** एवाह ।

“स्वपात्रे यत्तु विन्यस्तं दुग्धं यच्छति नित्यशः । पात्रान्तरगतं ग्राह्यं शूद्रात्स्वगृहमागतम् ॥

“शूद्रवेश्मनि विप्रेण क्षीरं वा यदि वा दधि । निवृत्तेन न भोक्तव्यं शूद्रान्नं तदपि स्मृतम्” ॥ इति ।

**मनु**ना ( अ. ४ श्लो. १३ ) ।

“अतोऽन्यतमया वृत्त्या जीवंस्तु स्नातको द्विजः । स्वर्गायुष्ययशस्यानि व्रतानीमानि धारयेत्” ॥

इत्युपक्रम्य सर्वाण्युक्त्वाऽध्यायान्ते ( अ. ४।२५९–२६० )

“एषोदिता गृहस्थस्य वृत्तिर्विप्रस्य शाश्वती । स्नातकव्रतकल्पश्च सत्त्ववृद्धिकरः शुभः ॥

“अनेन विप्रो वृत्तेन वर्तयन् वेदशास्त्रवित् । व्यपेतकल्मषो नित्यं ब्रह्मलोके महीयते” ॥

इत्युपसंहृतम् । तत्रानेनेत्यनेन ब्रह्मचारिणोऽपि अविरुद्धानि स्नातकव्रतानि प्राप्यन्ते अत एव ‘नेक्षेतोद्यन्तमि’त्यनेन स्नातकप्रकरणस्थेन विशेषेण भास्करालोकननिषेधस्य ब्रह्मचारिप्रकरणे सामान्यतः श्रुतस्याप्युपसंहारो व्याख्यात्रोक्तः । **मनु**ग्रन्थस्य भास्करालोकसामान्यनिषेधस्य तद्ग्रन्थस्थेनैव विशेषेणोपसंहारे सामान्यवाक्यवैयर्थ्यापत्तिरिति नात्रोपसंहार इति तु **हरदत्तादयः** ।

एतद्व्रतप्रकरणे च **मनुयाज्ञवल्क्या**भ्यामुपाकर्मानध्यायावुक्तौ । अत एव ग्रहणाध्ययनप्रकरणाभावाद्धारणाध्ययनेऽप्यङ्गमुपाकर्म । **गोभिल**वाक्यं च धारणाध्ययनाङ्गत्वसाधकमेवं चानध्याया अपि धारणाध्ययनादिसाधारणाः । अत एव ब्रह्मयज्ञाध्ययनादौ अनध्यायप्रतिप्रसवाः प्रागुक्ताः संगच्छन्ते ।

अत एव च श्वनकुलादीनामन्तरागमने ऽग्यैहिकैहिकयोर्ग्रहणाध्ययनधारणाध्ययनपरत्वेन व्यवस्था व्याख्यातृ**हरदत्ता**द्युक्ता संगच्छते।

यत्तु प्रसंगलक्षणे तृतीयचरणे "मन्त्राणां कर्मसंयोगे स्वधर्मेण प्रयोगः स्याद्धर्मस्य तन्निमित्तत्वादि" त्यधिकरणे पर्वणि नाध्येतव्यमित्यादीनां प्रकरणाद्ग्रहणाध्ययनाङ्गतेत्युक्तं तत्तु धारणाध्ययनाङ्गता-ग्राहकं नास्तीति कृत्वा चिन्तामनुरुध्य उपयोक्ष्यते च समानन्यायेषु भिक्षाचर्यादिषु। न चैवं सिद्धान्ते कर्मकालेऽप्यनध्याये मन्त्रप्रयोगानुपपत्तिः। वाचनिकस्य प्रतिप्रसवस्य प्रागेवोक्तत्वात्।

एते च स्नातकधर्मा अविरुद्धाः शूद्रेणाऽप्यनुष्ठेयाः। तथा च **मूले** 'शूद्रस्य द्विजशुश्रूषे'-त्यादि 'न हापयेदि'त्यन्ते श्राद्धानि च क्रियाश्चेति द्वंद्वं कृत्वा क्रियाः स्नातकव्रतानीत्युक्तं व्याख्यात्रा। एतेन **गौतमीये** दशमेऽध्याये (सू.५१) 'शूद्रश्चतुर्थो वर्ण' इत्युपक्रम्य 'श्राद्धकर्मभृत्यभरणस्वदार-तुष्टिरि'त्युक्तौ श्राद्धकर्मपदमपि समाहारद्वंद्वरूपं कर्मपदं च स्नातकव्रतोपसंग्राहकमिति ध्वनितम्। **हरदत्त**स्त्वाह। श्राद्धक्रियेति श्राद्धकर्मेति च श्राद्धमेवोच्यते न तु द्वंद्वः। स्नातकधर्माणामप्रकृतानां क्रियादिशब्दमात्रेणालाभात्। प्रत्युत स्मृतिविरोधः।

"स्नातकव्रतलोपेषु प्रायश्चित्तं विधीयते। राजब्राह्मणयोरेव नेतरेषां कथंचन"॥

इति वचनात्। अत एव वैश्यस्यापि नैते धर्माः किं तु ये वैश्यंप्रति विशिष्य स्मृतिषूक्तास्ता-वन्त एवेति **गौतमीय**नवमाध्याये मिताक्षरायां स्फुटतरमिदम्। युक्तं चैतत्। शूद्रधर्म-ताभ्युपगमे संकीर्णेष्वपि "शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः" इत्यतिदेशात्तत्प्राप्तौ उदाहृतस्मृतेर्निर्विषयतापत्तेः। यानि तु व्रतेषु पठितान्यपि पुनरन्यत्र पठ्यन्ते तेषां यथायथं शूद्रेषु प्राप्तिरिष्टैव। यथा "नाहितं नानृतं चैवेति" व्रतेषु पठितं "सत्यं दया दम" इति च साधारणधर्मेषु अनृतप्रतिपक्षभूतं सत्यमुच्यमानं शूद्रादीनां भवत्येव। यथा वा शूद्रेषु दासादीनां भोज्यान्नता **मनु**मूलादिभिर्व्रतेषु पठिता। **गौतमेन** तु नवमे व्रतान्युक्त्वा सप्तदशे भक्ष्याभक्ष्यप्रकरणे पठिता वैश्यस्यापि भवन्त्येव। एवं तत्रान्येऽपि व्रतान्तर्गताः पठ्यन्ते। अत एव स्नातकव्रतव्याख्यानशेषे **नारायणः**।अन्यत्रोक्तामपीह पुनरुक्तिः संकल्पप्राप्त्यर्था व्रतलोपनिमित्तत्र्यहाभोजनादिप्रायश्चित्तप्राप्त्यर्थं चेति। अत्र **चाश्वलायनो**क्तानि(३।९।६) "न नक्तं स्नायादि"त्यादीनि समावर्तनप्रकरणपाठात्तदङ्गानि तत्प्रयोगमध्ये एवानुष्ठेयानीत्यन्यत्रोक्तम्। यानि तु 'नेक्षेतोद्यन्तमि'त्यादिना **मनु**मूलाद्युक्तानि तानि पुरुषार्थानि। तथा च प्रयोजकलक्षणे प्रथमचरणे **जैमिनि**सूत्रं "तदुत्सर्गे कर्माणि पुरुषार्थाये"त्यादि उप-क्रमे श्रुतं ब्रह्मचारिव्रतपदं यतः तदन्वयबलात्कर्मविशेषोऽतोऽत्र चोद्यते तेन लक्षणयाऽप्यत्र पर्युदासः। स च क्रतोः बहिःश्रुतफलाकाङ्क्षी पुरुषार्थत्वमृच्छति। श्रुत्यादिक्रतुसंबन्धे प्रमाणं नात्र विद्यते पुरुषा-पेक्षितार्थत्वं विधिना चावबोधितं साक्षाच्छ्रुतं च तत्तस्य फलमेव न तु क्रतुः। अतः फलार्थता तच्च वाक्यशेषादवक्षय इति **पार्थसारथिश्च**। वाक्येति एतावता हैनसा युक्तो भवतीत्येवं रूपादित्यर्थः। यद्यप्यस्मिन्नधिकरणे ब्रह्मचारिधर्मभूतप्रजापतिव्रतान्तर्गतं नेक्षेतोद्यन्तमित्येतदुदाहृत्य विचारितं तथापि समानन्यायत्वात्स्नातकव्रतान्तर्गतेऽप्येतत्सिद्धान्तप्रवृत्तिरित्याशयेनेदमुच्यते। एवं च ब्रह्मचारिणं प्रत्यविशेषेण सूर्यदर्शनं निषिध्यते इति **हरदत्तोक्तिः पार्थसारथि**प्रभृतिग्रन्थैर्विरुध्यते इति

चिन्त्यम् । एवं स्थिते कदा संकल्प इत्याकाङ्क्षायां नोद्यन्तमिति शतृप्रत्ययेनादित्योदयस्य निमित्तत्वप्रतिपादनात्तत्तदवस्थे आदित्ये सति तदीक्षणाभावः संकल्पयितव्यः । नोद्यन्तमीक्षेत नास्तं यन्तमित्यादीति **तन्त्ररत्ने** स्थितं तत्र प्राचां श्लोकोऽप्युदाहृतः ।

"त्रिसंध्यं जपताऽनेन सावित्रीं नेक्ष इत्ययम् । आदित्यं ध्यायता कार्यः संकल्पः पापनाशनः"॥इति।

अत्र वदन्ति शतृप्रत्ययो 'लटः शत्रि[1]'त्यनेन लक्षणहेत्वो[2]रित्यादिना च विहितः । तत्रायं हेतावेवेत्यत्र प्रमाणभावः । किं च हेतुः फलमिति व्याख्यायार्जयन्वसतीति वैयाकरणैरुदाहृतत्वादर्जनफलकवसनमिति च विवरणात्प्रकृते तदनन्वयः । अथ लक्षणं परिचायकमिति व्याख्या 'शयाना भुञ्जते यवना' इति चोदाहृत्य शयनोपलक्षितभोजनकर्तार इति विवरणात्तद्वदिहापीत्यभिमतं तर्हि उदयपरिचायितं यदीक्षणं तदभावसंकल्पस्य व्रतान्तरसंकल्पकाले सकृदेव चानुष्ठाने को विरोधः । नाप्यत्र शतृबलाद्वर्तमानत्वप्रतीतिः । अर्जयन्नवात्सीद्वत्स्याति वेत्यादिवत् । तथा च पाणिनिना सूत्रितं ( व्या. सू. ३।४।१ ) 'धातुसंबन्धे प्रत्यया' इति 'सोमयाज्यस्य पुत्रो भवितेत्यादि' च **भाष्याद**ावुदाहृतं वसन्ददर्शेत्यादिप्रयोगाश्चैवमेव संगच्छन्ते । किं च ( **मनु**. अ. ४ श्लो. ४३ )

"नाश्नीयाद्भार्यया सार्द्धं नैनामीक्षेत चाश्नतीम् । क्षुवतीं जृम्भमाणां च" इत्यत्र एतत्प्रकरणान्ते द्विजातिभिरित्युक्तेराह । **द्विजातीति** । समाप्यापुरुषार्थानीमान्यपि व्रतानि संकल्पयेदित्येव युक्तम् । न च प्रत्यहं संकल्प इत्यंशेन तदुत्सर्ग इत्याद्याधिकरणस्य कश्चिद्व्यापारोऽस्ति । क्रत्वर्थत्वं पूर्वपक्षीकृत्य पुरुषार्थतासमर्थनमात्रेणाधिकरणपर्यवसानादितीति अलम् । यद्यपीदं प्रागुक्तं तथापि **द्विर्बद्धमिति** न्यायेन पुनरुक्तम् । यद्यप्यत्रान्यदप्युक्तं तथापि मल्लग्रामादिवद्भूयसा व्यवहारात्स्नातकव्रतप्रकरणत्वमिति बोध्यम् ॥ १६६ ॥

इति स्नातकव्रतप्रकरणम् ।

---

## अथ भक्ष्याभक्ष्यप्रकरणम् ७

## याज्ञवल्कीये १६७।१६८ श्लोकौ

संगतिमाह । **न स्वाध्यायेति** । **ब्राह्मेति** । राज्ञ इत्यपि बोध्यम् । अपूजितमसंस्कृतामित्यर्थे वृथामांसमित्यनेन पौनरुक्त्यापत्तिरत आह । **अर्चार्हायेति** । एतेन सुहृदादये दीयमानं न तथेति सूचितम् । विनिगमनाविरहादाह । **वक्ष्येति** । तद्रूपनिमित्तव्यतिरेकेणेत्यर्थः । द्वितीयमाह । **देवेति** । अत एव **चः** । उभयतात्पर्यमाह । **आत्मेति** निरुपद्रवशरीरपुष्ट्यर्थमेवेत्यर्थः । केशग्रहणं नखरोमदूषिकादीनां मलानामप्युपलक्षणम् । समाचारात् कीटग्रहणं क्षुद्रजन्तूनां कृमिपतङ्गादीनामपि प्रदर्शनार्थम् । तदाह । **कीटकादिभिरिति** । तत्र कीटाः केचिन्मृता एव दूषयन्ति न जीवन्तः । यथा

---

१ व्या. सू. ३।२।१२४ । २ व्या. सू. ३।२।१२६ ।

मक्षिकादयः । अन्ये तु जीवन्त एव । उभयोरपि निषेधः । प्रागवदाह । **यदिति** । केवलपदेन द्रव्यान्तरसंसर्गव्यवच्छेदः । विशेषमाह । **दध्यादीति । रागेति** ।

"पिप्पलीशुण्ठियुक्तस्तु मुद्गयूषस्तु खाडवः । रागखाडवतां याति शर्करासहितश्च सः" ॥ इति । किं च

"कफघ्नो दीपनो हृद्यः शुद्धानामपि दोषहृत् । उक्तः पथ्यतमश्चापि मुद्गयूषः कृताकृतः ॥

"स तु दाडिममृद्वीकायुक्तः स्याद्रागखाडवः । स वृष्यो लघुपाकश्च दोषाणामपि रोधकृत् ॥

"लघवो बृंहणावृष्या हृद्या रोचनदीपनाः । भ्रममूर्च्छातृषाच्छर्दिश्रमघ्ना रागखाडवाः ॥

"आममाम्रफलं खण्डद्रवपक्वं घृतान्वितम् । एलामरिचसंयुक्तं ज्ञातव्यः स च खाडवः ॥

"खण्डाम्रखाडवः स्निग्धो मधुरोपो गुरुस्तथा । परं रुचिकरो बल्यस्तुष्टिपुष्टिप्रदो मतः" ॥ इति ।

**चुक्रेति** "सहस्रवेधी चुक्रोम्लवेतसः शतवेध्यपि" । **इत्यमरः** ( २।४।१४१ ) ।

"तित्तिडीकं[1] च चुक्रं च वृक्षाम्लमिति च" । पर्युषीति समाहारद्वंद्व इत्याह । **पर्युषीति** । **एवमग्रेऽपि** बोध्यम् । **तरितमिति** । तद्शुक्तमपीति भावः । 'उदयास्तसमयान्तरितं पर्युषितमिति' **हरदत्तः** । पतितग्रहणं सजातीयोपलक्षणमत एव । "यद्दृष्टं पतितैः पृथगिति" बहुवचनं **भविष्ये** । तदभिप्रेत्याह । **पतितादिभिरिति** ।

**चाण्डालेति** । प्रथमेऽहनि चाण्डालीत्युक्तेः साजात्यादिति भावः । उभयत्र मानमाह । **अमेध्येति** । तत्प्रकरणस्यानित्यत्वादस्य पूर्वनिपातः । पुल्कसश्चण्डालावान्तरभेदः । **क इति** । इदं प्राक् प्रतिपादितम् । **मनुमाह** । **ब्राह्मेति** । भावे क्त इत्याह । **ग्रहणमिति** । इदमुपलक्षणमित्याह । **आचमनात्प्रागिति** । तत्र चेत्यर्थः । पार्श्वशब्दस्य तत्स्थलक्षणया कर्तृकान्तेन समानाधिकरणं बहुव्रीहावाहिताग्न्यादित्वात्परनिपात[2] इत्याशयेनाह । **कस्यामिति** । इदं च ससंबन्धिकत्वाल्लब्धं पार्श्वस्थश्च गुरुव्यतिरिक्तः कश्चित् अगुरुभिरुत्थाने आचमने चेत्**युशनः**स्मृतेः । तत्रापि विशेषमाह । **भस्मोदकेति** । तथा सति तु पङ्क्तिभेद एवेति न दोषः । तथा च **बृहस्पतिः** ।

"अप्येकपङ्क्तौ नाश्नीयाद्ब्राह्मणैः स्वजनैरपि । को हि जानाति किं कस्य प्रच्छन्नं पातकं भवेत् ।

"एकपङ्क्त्युपविष्टानां दुष्कृतं तद्दुरात्मनाम् । सर्वेषां तत्समं तावद्यावत्पङ्क्तिर्न भिद्यते ॥

"अग्निना भस्मना चैव स्तम्भेन सलिलेन च । द्वारेणैव च मार्गेण पङ्क्तिभेदो बुधैः स्मृतः" ॥ इति ।

सांनिध्यात्तेनैव संबन्ध इति भ्रमनिरासायाह । **वर्जयेदितीति** । शकुनाश्चात्र क्रव्यादा गृध्रवायसादयो न तु हंसादयः समाचारात्तदाह । **काकादिनेति** । **आस्येति** 'पतत्रिणावलीढं चे'ति **मनोः** । कामत इत्यस्य व्याख्या **बुद्धीति** । तथा च प्रमादतः स्पर्शे न दोषः । **स्पृष्टं** स्पृष्टं चेत्यर्थः । तथाशब्दस्यैतदर्थकत्वे तु यथाश्रुतमेव साधु ॥ १६७ ॥ १६८ ॥

१ अमरकोशः २।९।३५ । २ व्या. सू. २।२।३७ ।

## याज्ञवल्कीये १६९ श्लोकः

पर्युषितस्य सर्वस्याभक्ष्यत्वस्योक्तत्वात्तदनुरोधेन सर्वसंग्रहाय यौगिकत्वमाह । **अन्नमदनीयमिति** । भूतत्वमप्यविवाक्षितमिति भावः । स्नेहाक्तमित्यस्यर्थमाह । **घृतेति** । न केवलं तावदेवेत्याह । **चिरेति** । अभ्यार्हितत्वाद्गोधूमस्य पूर्वनिपात इत्याह । **गोधूमेति** । **विक्रिया** विकारः । तत्र गोधूमविकारो मण्डकः । माण्डेति महाराष्ट्रभाषया प्रसिद्धः । यवविकारः सक्तुः । किलाटादयः क्षीरविकारः । "कूर्चिकाक्षीरविकृतिः" **इत्यमरः** ( २।९।४४ ) । सुविपाकेन गोलकीभूतं कीलाटः । जलासंसृष्टं वस्त्रक्षालितं दधि **कूर्चिका** । **चिरेति** । तथा सति पर्युषितस्य सुतरां तत्त्वलाभ इति पृथगनुक्तिः । विशेषमाह । **यदीति** । इदं प्रागपि बोध्यम् । विलक्षणगन्धरसादिकामित्यर्थः । तत्र मानमाह । **अपूपेति** । अस्नेहपक्वगोधूमविकारोऽपूपः । अयं च पयसा कृत एवेति प्रागुक्तम् । **धाना**-भृष्टयवाः । **करम्भो** दधिसक्तवः ।

"स्याद्यावकस्तु कल्माष" **इत्यमरः** ( २।९।१८ ) । शाकमस्त्रीति च । प्रायश्चित्तप्रकरणोक्त यावको वा । नाशुक्तानीति विकारान्तरमनापन्नानि न वर्जयेदित्यर्थः ।

**भविष्येऽपि** ।

"जातिदुष्टं क्रियादुष्टं कालाश्रयविदूषितम् । संसर्गाश्रयदुष्टं च संहृल्लेखं स्वभावतः ॥
"वार्ताकनाडिकालाबु उपेयाज्जातिदूषितम् । न भक्षयेत् क्रियादुष्टं यद्दृष्टं पतितैः पृथक् ॥
"कालदुष्टं च विज्ञेयं ह्यस्तनं चिरसंचितम् । दधिभक्ष्यं विकाराश्च मधुवर्जं तदिष्यते ॥
"सुरालशुनसंसृष्टं पेयूषादिसमन्वितम् । संसर्गदुष्टमेतद्धि शूद्रोच्छिष्टवदाचरेत्" ॥

शूद्रोच्छिष्टं पूर्वं शूद्रे प्रदर्शितम् ।

"विचिकित्सा तु हृदये अन्ने यत्र प्रजायते । संहृल्लेखं तु विज्ञेयं पुरुषं तु स्वभावतः ॥
"रसदुष्टं विकाराद्धि रसस्येति प्रदर्शितम्" ॥ इति ।

ह्यस्तनं पर्युषितं सर्वमेवाभक्ष्यम् । यच्च स्नेहाक्तं पर्युषितं भक्ष्यत्वेनानुज्ञातं, ये च गोधूमविकाराः पर्युषिता अपि भक्ष्यत्वेनानुज्ञाताः, दधि च तत्सर्वमपि चिरसंचितमतिविकृतगन्धरसं चेदभक्ष्यमेव । मधु पुनश्चिरसंस्थितमपि भक्ष्यमित्यर्थः । वार्ताकं श्वेतं अलाबुश्च वर्तुलाकारः "अलाबुं वर्तुलाकारं वार्ताकं कुन्दसन्निभम्" इति निषेधवाक्यान्तरैकवाक्यत्वात् । नालिका कलंबिका ॥ १६९ ॥

## याज्ञवल्कीये १७० श्लोकः

**या वृषेणेति** । या ऋतुमती वृषामिच्छतीत्यर्थ इति **गुरुचरणाः** । अत एव "सन्धिनी वृषस्यंती तस्याः पयो न पिबेदृतुमद्भवतीति" **हारीतः** । या गर्भिणी सति दुग्धे सा संधिनीति **हरदत्तः** ।

१ अमर. २।९।४५ । २ अमर. २।९।४८ ।

**या चैकामिति । हरदत्तो**ऽप्येवम् । **या च वत्सांतरेणेति ।** मृतवत्सात्वादिति भावः । **साऽपीति ।** द्विधाऽपीत्यर्थः । **नतिक्रान्तेति ।** यस्याः सूताया दशदिनानि न गतानीत्यर्थः । **अवत्सा मृतवत्सेति ।** वत्सहीना वत्सान्तरसंबन्धं विनापि दुह्यमानेत्यर्थः । अत एव तादृशसन्धिन्या पौनरुक्त्यं न । एतेन "मृतवत्सा संधिनीति" **गौतम**पर्यालोचनया पुनरुक्तमिदमिति **दीक्षितोक्त**मपास्तम् ।

एतदंशे गोत्वमविवक्षितम् । अत एव "गोश्च क्षीरमनिर्दशायाः सूतकेऽजामहिष्योश्च नित्यमाविकमपेयमौष्ट्रमैकशफं च स्यन्दिनीयमसूसंधिनीनां च विवत्सायाश्चेति" **गौतमः** ( अ. १७ सू. २२–२६) । अत्र विवत्साया गवादेरिति **हरदत्तः । बौधायनश्च** ( १।५।१३६ ) "अपेयं विवत्सान्यवत्सयोरिति" । अन्यवत्सा अन्यवत्सेन या दुह्यते । **हारीतोऽपि ।** 'न विप्रकृष्टवत्साया न हतवत्साया न निःशेषेण दुग्धायाः ।

"द्वौ मासौ पाययेद्वत्सं तृतीये द्विस्तनं दुहेत् । चतुर्थे त्रिस्तनं दुह्याद्यथान्यायं यथाबलम्" ॥ इति ।

वस्तुतस्तु संयोगवद्विप्रयोगस्यापि विशेषावगतिहेतुत्वेन सर्वत्र गोरेव ग्रहणमुचितं स्मृत्युक्तविशेषस्तु नोपलभ्यते इति यथाश्रुतमेव समंजसमिति **हरदत्तो**क्तिश्चिन्त्यैवेति बोध्यम् । अत एव **मनु**रपि ( ५।८ )

"अनिर्दशाया गोः क्षीरमौष्ट्रमैकशफं तथा । आविकं संधिनीक्षीरं विवत्सायाश्च गोः पयः" ॥ इति ।

एवं पदार्थानुक्त्वा वाक्यार्थमाह । **संधिनी चेति ।** ताश्च ता गावश्चेति समासान्तविधेरनित्यत्वान्नटच् । जलभ्रमनिरासायाह । **क्षीरमिति ।** यमस्वोरप्युपेति पाठः । ओः सुपीति यणादेशप्रवृत्तेः । सुवोरित्यपपाठः । स्वोरुपेति पाठे तयोरपीत्यर्थः । तत्र मानमाह । **यथाहेति । स्रवदिति**वत्सबन्धं विनैव यस्याः स्तनेभ्यः क्षीरं स्यन्दते सा सेत्यर्थः । **यमलेति ।** अपत्यद्वयेत्यर्थः । उक्त**गौतमा**दवत्सांशे इवानिर्दशांशेऽपि गोत्वमविवक्षितमित्याशयेनाह । **एवमिति ।** गोरिवेत्यर्थः । तत्र मानान्तरमप्याह । **गोमहिष्येति ।** न्यूनतां परिहरन् प्रकृतिग्रहणे विकृतेरपि ग्रहणमिति न्यायेनाह । **पयोग्रहेति ।** चातुर्मास्यव्रतप्रकरणे तु यथा नैवं तथाऽन्यत्र स्पष्टम् । तत्र लौकिकयुक्तिमाह । **न हीति ।** तद्व्यावर्त्यमाह । **पयोनिषेधादिति ।**

उत्तरार्धार्थमाह । **उष्ट्रादिति । जातमिति ।** आगतामित्यर्थः । प्रभूतमित्यर्थो वा । अत एव पञ्चम्यविरोधो वक्ष्यमाणैकवाक्यता च । वक्ष्यमाणरीत्याऽऽह । **मूत्रादीति ।** एवमग्रेऽपि । एतदर्थमेव जात्यभिप्रायेण तथोक्तं **क्षीरमिति । मनु**रपि (५।९) । "स्त्रीक्षीरं चैव वर्ज्यानीति" ।

एतेनात्रविकारप्रत्ययनिर्देशेन संभवात् क्षीरमेव न तु सूत्रादीति सूचितम् । **भवा इति ।** रुरुपृषतादय इत्यर्थः । क्षीरग्रहणे तद्भेदे च मानं **मनु**माह । **आरण्यानामिति ।** पय इत्यनुवर्तते । **मृगाणां** जन्तूनां । **अवेर्जातमिति** प्राग्वत् । प्राग्वदाह । **वर्जयेदितीति ।** पृथक्पदत्वाभावेनान्वयस्याक्लिष्टत्वेऽपि यदि तथाऽभिमतं स्यात्तर्हि षष्ठ्यन्तनिर्देश **एवो**चितः यतस्तु तथा नातस्तथा नेत्याह । **औष्ट्रमिति ।** स्थलत्रये इत्यर्थः । **मात्रं** कार्त्स्न्ये । तत्रोभयत्र मानमाह । **नित्यमिति ।** अत एवादौ सामान्येनैव तत्र व्याख्यातम् । अत एव च **मनुना**ऽपि (५।८)

"अनिर्दशाया गोः क्षीरमौष्ट्रमैकशफं तथा। आविकं संधिनीक्षीरं विवत्सायाश्च गोः पयः" ॥ इति।

आदौ पयोघटितमुक्त्वा मध्ये विकारप्रत्ययनिर्देशं कृत्वा पुनर्द्विः पयस उपादानं कृतं तेन मध्ये तदसंबंधः सूचितः। अन्यथाऽग्रेऽपि तथैव सिद्धे पुनरुक्तिर्व्यर्था स्यात्। अत एव च साहचर्यन्यायोऽप्यनित्यत्वान्न प्रवर्तते इति बोध्यम्।

**ब्राह्मे**

"घृताक्तेन घृताभ्यक्तं पेयूषमथ वाऽपि गोः। सगुडं च मरिचाक्तं तथा पर्युषितं दधि॥

"दीर्णं तक्रमपेयं च नष्टस्वादं च फेनवत्। प्रमादाद्भक्षितैर्वाऽपि वने पक्षव्रतं चरेत्" ॥ इति।

"अपि प्रयाणसमये रात्रौ न प्राशयेद्दधि। मधुपर्कप्रदानं तु वर्जयित्वा तु कामतः॥

"दिवा धानासु लक्ष्मीस्तु रात्रौ च दधिसक्तुषु। अलक्ष्मीः कोविदारेषु कपित्थेषु सदा स्थिता" ॥

इति च **भविष्ये**।

"कापिलं यः पिबेच्छूद्रो नरके स विपच्यते। हुतशेषं पिबेद्विप्रो विप्रः स्यादन्यथा पशुः" ॥ इति।
एतानि सर्वाणि द्विजस्यैवाभक्ष्याणि। तेन शूद्राणां लशुनादिभक्षणेऽपि न दोषः।
"एतदुक्तं द्विजातीनां भक्ष्याभक्ष्यमशेषतः"। (५।२६)

इति **मनू**क्तेः। एतन्मध्यपातिकाकाद्युच्छिष्टभक्षणं तु शिष्टविगीतत्वाद्दोषावहमिति **कल्पतरुः** ॥ १७० ॥

## याज्ञवल्कीये १७१ श्लोकः

**देवतार्थमिति**। अत्राष्टवर्ज्यानि। **बल्युपेति**। देवतादीत्यादिः। अत एव सामान्येन व्याख्यातमेवं च देवताग्रहणमुपलक्षणमिति भावः। **सिद्धमिति**। पुरोडाशादिकमित्यर्थः। अत्रैवं विशेषमाह। **प्रागिति**। तदनन्तरं भक्षणस्य श्रुत्यादिविहितत्वादि भावः। **सौभाञ्जन इति**। मुणगेति शेवगेति भाषया प्रसिद्धः। यद्यप्यत्रैकवाक्यता संभवति तथापि **मनु**वाक्ये पृथगुक्तिसामर्थ्येन लब्धं तात्पर्यार्थमाह। **वृक्षेति**। तद्वर्णान् तानित्यर्थः। लक्ष्यार्थमाह। **व्रश्चनप्रभेति**। तात्पर्यार्थमाह। **वृक्षेति**। पौनरुक्त्यं परिहरति। **आलोहितानपीति**। उभयत्र मानमाह। **यथाहेति**। उक्तहेतोरेवाह। **लोहितेति**। तेषां तत्त्वेऽपि श्वेतत्वादिति भावः। अनुप्रेत्यत्र नञ्समासपूर्वकषष्ठीतत्पुरुषः। पशुयागे मन्त्रवद्दर्भाभ्यां प्लक्षशाखया च स्पर्शनमुपाकरणं तद्रहितस्य पशोर्मांसानीत्यर्थस्तस्यापि होमात्प्राक् एव निषेध इत्याशयेन फलितमाह। **यज्ञेऽहुतस्येति**। "सप्तम्यां जनेर्डः" (३।२।९७) पञ्चम्याम् "जाताविति" (३।२।९८) सूत्रद्वयानुरोधेनाह। **मनुष्यादीति**। बहुव्रीहिरयम्। तद्विशिष्टपुरीषेत्यर्थः। **तण्डुलीति**।

१ घृताभ्यंडं इत्यपरः पाठः।

"तण्डुलीयोऽल्पमारिषः" **इत्यमरः** (२।४।१३६)। चवलाई इति भाषाप्रसिद्धोऽयम्। **छत्राकाणीति**। छत्राकाराणीत्यर्थः। अनुवृत्तिं सूचयति। **वर्जेति** ॥ १७१ ॥

## याज्ञवल्कीये १७२ श्लोकः

अथ निषिद्धपक्ष्यादीनाह। **क्रव्यादेति**। व्याघ्रादिव्यावृत्तये। **पक्षीति**। तथा चैकनिमित्तमिदम्। अभ्यर्हितत्वात्पूर्वनिपातस्तदाह। **क्रव्यादा इत्यादिना दय** इत्यन्तेन। न तूभयभक्षका मयूरादय इति भावः। **चातक इति**। दात्यूहः 'कालकंठक' **इत्यमरः** (२।५।२१)। **गुरुचरणा** अप्येवं। **श्येनेति** 'शशादनः। पत्री श्येन' **इत्यमरः**। (२।५।१४-१५) **तच्छब्देति**। **टीति** शब्दानुकारी पक्षिविशेष इत्यर्थः। **लक्ष्मण इति**। दीर्घगलजङ्घो नीलाङ्गः। पक्षीत्यर्थः। 'पुष्कराह्वस्तु सारसः' **इत्यमरः** (२।५।२२)। रुवानिति यथा संभवमन्यत्रापि विशेषणम्। **पारावतेति**। अक्रव्यादा अपीत्यर्थः। 'पारावतः कालरवः कपोतः' **इत्यमरः** (२।५।३५)। प्राग्वदाह। **वर्जेति**। एवमग्रेऽपि बोध्यम् ॥ १७२ ॥

## याज्ञवल्कीये १७३ श्लोकः

**कोयष्टीति**। पूर्वनिपातः प्राग्वत्। **क्रौञ्चक इति**। 'कोयष्टिकष्टिट्टिभक' इति **अमरः** (२।५।२२)। आरण्यपक्षिविशेषोऽयमिति तु **गुरुचरणाः**। **जलेति** 'मद्गुः कारण्डवः प्लवः' **इत्यमरः** (२।५।३४)। चक्राह्व इति 'कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः' **इत्यमरः** (२।५।२२)। बलाकाबकाविति। "शरारिराटिराडिश्च बलाका बिसकण्टिका। बकः कङ्कः" **इत्यमरः** (२।५।२५-२२)। 'नखविष्किरानिति' **मन्वनुरोधेनाह**। **नखेरिति**। एकव्यवच्छेद्यमाह। **लावकेति**। 'तित्तिरिः ककुभो लाव' **इत्यमरः** (२।५।३५)। 'अन्यत्रान्यथासिद्धिमाह। **ग्रामेति**। तथा चारण्यस्यानिवृत्तिः।

एवं च टिट्टिभादीनां केषांचित् ग्रामवासित्वादेव प्रतिषेधे सिद्धे पुनरुक्तिरारण्यानामपि तेषां निषेधार्थेति बोध्यम्। लघ्वक्षरत्वात्कृसरस्य पूर्वनिपातः। **वृथेति** भिन्नं पदं सर्वविशेषणमित्याह। **वृथा देवेति**। केवलमात्मार्थं याचिता इत्यर्थः। कृसरशब्दः क्लीबे। **सिद्ध इति**। तदुभयसाहित्येन पक्व इत्यर्थः। **आदिना** गोधूमचूर्णम्। **उत्करीति**। लापशीति भाषाप्रसिद्धः। पयसा क्षीरेण। **लीस्नेहेति**। मुद्गादिचूर्णसिद्धा सतिला अल्पकेति तु **कल्पतरुः**। **इति**। इत्यनेनैव। **पुनरिति**। पुनर्निषेधोक्तिरित्यर्थः। **गौरवेति**। पक्षिप्रकरणमध्यपाठस्यापीदमेव फलमेवं च तद्वत्सर्वथा एतेषां तदभावे वर्ज्यत्वमिति बोध्यम् ॥ १७३ ॥

## याज्ञवल्कीये १७४ श्लोकः

**ग्रामचटक इति**। 'चटकः कलविङ्कः स्यात्'**इत्यमरः**(२।५।१८)। **उभयेति**। तथा च तन्मात्रवासिन एव तत्र तत्वेन ग्रहणमिति भावः। एवमपि विशेषणत्वे बीजं चिन्त्यमिति केचित। वस्त-

तस्तु अग्रामचटक इति छेदः । तत्र बीजमाह । **ग्रामेति** । तस्येत्यादिः । **उभयेति** । तथा चारण्यसंग्रहार्थमिदमेकस्यैवोभयवासित्वेन मानमत एव ग्रासादवासिन्यायानवतारः । अत एव ग्रामवासित्वादेव प्रतिषेधे पुनरुक्तिरारण्यस्यापि तस्य निषेधार्थेति **गुरुचरणै**रुक्तम् इति बोध्यम् । **द्रोणेति** । 'द्रोणकाकस्तु काकोल' **इत्यमरः** ( २।५।२१ ) । डोंबकावळेति भाषाप्रसिद्धः । **उत्क्रोश इति** । 'उत्क्रोशकुररौ समावि'**त्यमरः** (२।५।२३) । **वृक्षेति** तदीयकाग्रेत्यर्थः । **कारेति** तत्सदृशेत्यर्थः । यद्यपि चाषोऽप्येवं तथापि तस्य पृथगुक्तेर्हंसानामत्र ग्रहणम् । अत एव वैयर्थ्यं परिहरन्नाह । **जालेति** । **वै** निश्चये । **खञ्जन इति** । 'खञ्जरीटस्तु खञ्जनः' **इत्यमरः** ( २।५।१५ ) । **मृगा इति** । पशव इत्यर्थः । द्विजपदार्थमाह । **पक्षिणश्चेति** ॥ १७४ ॥

## याज्ञवल्कीये १७५ श्लोकः

**किक्कीति** । 'अथ चाषः किकीदिविः' **इत्यमरः** (२।५।१६) । **कादंबेति** 'कादंबः कलहंसस्यादि'**त्यमरः** (२।५।२३) । सूना वधस्थानं तत्र भवं सौनामित्याह । **घातेति** । वैयर्थ्यं परिहरति । **भक्ष्येति** । अस्य मध्यमणिन्यायेनाग्रेऽप्यन्वयः । इष्टार्थप्रतिपत्तयेऽन्याविरोधाय च मत्स्यांश्चेत्यन्तस्य पूर्वेणान्वयेन पृथग्वाक्यतेत्याह । **तांश्चाषादीनिति** । तदेतत्सर्वमुक्तं **मनु**नाऽपि ( ५।११–१४ ) ।

"क्रव्यादान् शकुनीन्सर्वांस्तथा ग्रामनिवासिनः । अनिर्दिष्टांश्चैकशफान् टिट्टिभं च विवर्जयेत् ॥
"कलविङ्कं प्लवं हंसं चक्राहं ग्रामकुक्कुटम् । सारसं रज्जुदालं च दात्यूहं शुकसारिके ॥
"प्रतुदान् जालपादांश्च कोयष्टिनखविष्किरान् । तथा निमज्ज्य मत्स्यादान्सौनं वल्लूरमेव च ॥
"चकं चैव बलाकां च काकोलं खञ्जरीटकम् । मत्स्यादान् विड्वराहांश्च मत्स्यानेव च सर्वशः" ॥ इति ।

शकुनेर्मध्यमणिन्यायेनान्वयः । अनिर्दिष्टाः श्रुतौ भक्ष्यत्वेन नोक्ताः । ये तूक्तास्ते तत्रैव भक्षणीयाः । यथा त्वाष्ट्रं वाडवमालभेत तस्य मांसमश्नीयात् । प्लवादीनां जालपादत्वादेव निषेधे सिद्धे पुनरुक्तिर्निषेधार्था तेन चाषादीनां विकल्पेन भक्ष्यत्वं गम्यत इति **मेधातिथिः** । तत्र चाषग्रहणं **याज्ञवल्क्या**दिविरुद्धं तस्याप्यत्र पुनरुक्तेरिति बोध्यम् । निमज्ज्य मत्स्यानां भक्षका निमज्ज्य मत्स्यादा जलवायसादयो मत्स्यादः नक्रादयः । विड्वराहानित्युक्तेरारण्यस्याभ्यनुज्ञा । **सर्वशः** सर्वप्रकारेण । **देवलेन** तु भृङ्गराजकाचित्रकउलूकश्येनगृध्रचकोरकोकिलकङ्कभासशतपत्रप्लवङ्गमबर्हिकौञ्चपारावतकपोता अभक्ष्या " इत्यर्थकं पठितम् । भृङ्गराजस्तेनैव नाम्ना प्रसिद्धः । चित्रकश्चित्रकपोतः । कङ्कोलो हितपत्रः । भासो गृध्रविशेषः । प्लवङ्गमो मण्डूकः ।

**वसिष्ठ**स्तु "विधुतवायसकुक्कुटसारङ्गपाण्डुकपोतककरमद्गुमन्थाननक्तंचरचातकवैलातकहारीता अप्यभक्ष्या' इत्यर्थकमाह । विधुतः पक्षिविशेषः । ककरः कृकलासः । मंथानो वायादः । नक्तंचरा उलूकादयः । हारीतो हरितपक्षः पक्षिविशेषः ।

**आपस्तम्बश्च** "विष्किराणां कुक्कुट एवाभक्ष्यः । प्रतुदानां प्लव एव वाध्रीणसलक्ष्मणावर्जं कुञ्चक्रौञ्चा अभक्ष्या" इत्याह । वाध्री चर्म तदाकारा नासिका येषां तान् । लक्ष्मणां सारसस्त्रियं च वर्जयित्वा कुञ्चक्रौञ्चा अभक्षभक्ष्या इत्यर्थः ।

**गौतमश्च** (अ. १६ सू. ३५) "भक्ष्याः प्रतुदा विष्किरा जालपादाश्चेति"। प्रतिषिद्धानामप्येषां भक्ष्यत्वकथनमापद्विषयमिति **हरदत्तः**।

**बौधायनश्च** (१।५।१३३) "पक्षिणस्तित्तिरिकपोतकपिञ्जललावकतृणमयूरचातका भक्ष्या" इत्याह। तृणमयूरो मयूरविशेषः। कपोतो वनकपोतः।

**शङ्खोऽपि**।

"तित्तिरिश्च मयूरं च लावकं च कपिञ्जलम्। वाध्रीणसं वर्तकं च भक्ष्यानाह यमः स्वयम्"॥

कपिञ्जलो गौरातित्तिरिः। मयूरोऽत्र तृणमयूर एव **बौधायनै**कवाक्यत्वात्। इति दिक्। न्यूनतां निराचष्टे। **चकारादिति**। वर्जयादिति शेषः। नालिकाकलं विकाशणः। अम्बाडेति प्रसिद्धः। कुसुम्भं तत्पत्रम्। अलाबुर्वर्तुलाकारः। वृन्ताकं श्वेतम्। अत्रोभयत्र बीजं प्रागुक्तम्। तथा तद्वत्। **अकालेति**। छेदः। स्मृत्यन्तरमाह। **तथेति**। आदिग्राह्यं तूच्यते। तत्र तावद्यमः। "विलयसुमुखावप्यभक्ष्याविति"। विलयो घृतमलम्। सुमुखः सर्पविशेषः। "भुजङ्गोपितृदोषघ्नो ह्यर्शोघ्नो दीपनः स्मृतः" इति **वैद्यका**द्भक्ष्यत्वप्रसक्तिः।

**हारीतश्च**।

"छत्राकं विड्वराहं च पलाण्डुं लशुनं तथा। भक्षयन्वै पतेद्विप्रो यदि स्यात्सर्ववेदवित्"॥ इति। विड्वराहो ग्रामशूकरः।

**देवलोऽपि** "कौसुम्भकुंभाण्डावभक्ष्याविति"। कौसुम्भं कुसुम्भपत्रं कुभाण्डः दाडिमसदृशः। फलविशेषः। किसलयक्याकू अभक्ष्ये इति च। सः किसलयः पल्लवाग्रप्ररोहः। क्याकुरहिछत्राकम्।

**आपस्तम्बः**। "कीलालौषधिकालंजपरारीका अप्यभक्ष्या" इति। सुरानिमित्तं स्थापिता ओषधयो व्रीह्यादयः। कालंजं रक्तलशुनं। परारीकः श्वेतपलाण्डुः।

"रसोनो दीर्घपत्रश्च पिच्छगन्धो महौषधम्। हिरण्यश्च पलाण्डुश्च नवतर्कः परारिका॥

"गृञ्जनो यवनेष्टश्च पलाण्डोर्दश जातयः" इति **वैद्यकम्**।

शिष्टं विगीतं कोविदारादि चाभक्ष्यमिति च सः। 'पलाण्डुवत्पौतिकमि'**त्युशनाः**। 'पौतिकं कण्ठकिकरंजसंभवम् अश्मन्तकाख्यवृक्षोऽपि वर्ज्य' इति **पैठीनसिः**। **विष्णुः** "न कदाचन वटपिप्पलशाकम्। ऋजीषपक्वमभक्ष्यमिति"। **यमः** 'ऋजीषं भौमोष्मा'।

**विष्णुः**। "नोधृतस्नेहं न दिवा धाना न रात्रौ तिलसंबद्धौदनदधिसक्तूनिति"। एवमात्रासारं मथितं 'दध्यप्यभक्ष्यमिति' **गौतमः**। **देवलः**।

"न बीजान्युपभुञ्जीत रोगापत्तिमृते द्विजः। फलान्येषामनन्तानि बीजानां हि विनाशयेत्॥

"नाश्नीयात्पयसा नक्तं भुङ्क्ते चेन्निशि न स्वपेत्। न क्षीरमुत्सृजेत् प्राप्तं पवित्रं हि पयः स्मृतम्"॥

बीजानि अङ्कुरजन्मयोग्यानि अप उपहतानां दलितानां पक्वानां वा न निषेधः ।

**यमः** ।

"दिवा दधित्थधानासु रात्रौ तु दधिसक्तुषु । कोविदारे च रजके तस्करे सूतके तथा ॥
"श्लेष्मातके तथाऽलक्ष्मीर्नित्यमेव कृतालया" । इति ।

दधित्थः कपित्थः ।

**ब्राह्मे** ।

"राजमाषाः स्थूलमुद्गास्तथा वृषयवासकौ । मसूराः शतपुष्पाश्च कुसुम्भं श्रीनिकेतनम् ॥
"सस्यान्येतान्यभक्ष्याणि न च देयानि कस्यचित्" । इति ।

प्रादेशमात्रशिबिका राजमाषाः । स्थूलमुद्गाः मोथीति प्रसिद्धाः । वृषोवासाः यवासको दुरालभाः । **आपस्तम्बः** । ( २।१८।१–४ )

"विलयनं मथितं पिण्याकं मधुमांसं च वर्जयेत् । कृष्णधान्यं च ये चान्येऽनाश्यसंमिताः ॥
"अहविष्यमनृतं क्रोधं येन च क्रोधयेत्परम् । इच्छन्स्वर्गं यशो मेधां द्वादशैतानि वर्जयेत्" ॥ इति ।

कृष्णधान्यं कलिङ्गकादि । अनाश्यं मण्डूकादितत्तुल्याः । प्रसंगात्पूर्वत्रानुक्तमत्रोच्यते । तत्र तावत् **वसिष्ठः** । ( अ. १४ सू. २०–२२) "उच्छिष्टमगुरोरभोज्यं स्वमुच्छिष्टमुच्छिष्टोपहतं च वसनकेशकीटोपहतं चेति" । स्वमुच्छिष्टं यत्स्वयमेव किंचिद्भुक्त्वा त्यक्तं वसनपरिहितम् ।

**सुमंतुः** । "केशकीटवचोपहतं श्वभिराघ्रातं श्वभिः प्रोक्षितम् अदधिपर्युषितम् । द्विःपक्वं चण्डालावेक्षितमभोज्यमन्यत्र हिरण्योदकस्पृष्टात्" इति । वचोपहतं यस्योपरि वागुच्चरिता ।

**मनुः** । ( अ. ४ श्लो. २०७ )

"मत्तक्रुद्धातुराणां च न भुञ्जीत कदाचन । केशकीटावपन्नं च पादस्पृष्टं च कामतः ॥

"भ्रूणघ्नावेक्षितं चैव संस्पृष्टं चाप्युदक्यया । पतत्रिणावलीढं च शुना संस्पृष्टमेव च" ॥ इति ।

श्वग्रहणं काकादेरप्युपलक्षणम् । कामत इत्युक्तेरकामतः पादस्पर्शेऽपि न दोषः । **आपस्तम्बः** "अशुचिस्पृष्टमन्नमग्न्यधिश्रयणादिना शुद्धिं कृत्वा भोज्यम् । अशुचिशूद्रस्पृष्टं सर्वथाऽभोज्यं केशकीटनखादि यत्र पाककाले पतितं तदभोज्यम् । अमेध्यपलांड्वादिसंस्पृष्टं चामेध्यसेविकीटादिसंस्पृष्टं च मूषकविष्ठापुच्छपादादि यत्र तदभोज्यम् क्षालितेनापि परिहितवस्त्रान्तेन स्पृष्टं च । पतितसूतक्यादिस्पृष्टं तद्दृष्टं च दास्या नक्तमाहृतं दिवा हृते न दोष" इति । दास्येति स्त्रीत्वमविवक्षितमिति **भूपः** । अन्ये तु तस्य विवक्षितत्वाद्दासाहृते न दोषः इत्याहुः । भुञ्जानं यत्र शूद्र उपस्पृश्येत्तदर्धभुक्तमप्यभोज्यम् । अयोग्यैरभिजनाचारादिभिरेकपङ्क्त्यावभोज्यं विषं भुङ्क्ष्वेत्येवमादिनिर्भर्त्सनया यद्दीयते तदभक्ष्यं मनुष्यैः कामतोऽवघ्रातं मार्जारमूषकादिभिश्चावघ्रातमभोज्यमिति च सः । **बृहस्पतिः** ।

"अत्यम्लं शुक्तमाख्यातं निन्दितं ब्रह्मवादिभि"रिति । **देवलः** । "पर्युषितमभोज्यमन्यत्र मधुसक्तुभ्यां भक्ष्येभ्यः सर्पिषो गुडादिति" । भक्ष्या लड्डुकादयः । **हारीतः**। 'न रजस्वलया दत्तं न पुंश्चल्या न क्रुद्धया । नामेध्यालिप्तवस्त्रया न मुख्यद्वारातिरिक्तद्वारेणानीतं न द्विःपक्कं न शुक्तं न पर्युषितमन्यत्र गुडपिण्डसक्तुस्नेहगोरसतैलादिपक्केभ्यो भोजनान्तेन तैलदधिपानामिति' । "शानमांसे पर्युदिते भोज्ये" इति **गौतमः । शङ्खः** । "नापणीयं कृतान्नमश्नीयान्न भुक्तं पर्युषितं चान्यत्र रागषांडवदधिगुडगोधूमयवपिष्टविकारेभ्य " इति । मुद्गद्राडिमसांसार्दीनां वस्त्रगालिता रसाः प्रलेहाः खाडवाः स्वाद्वम्लकटुकस्वादाः प्रलेहा एव। ऐक्यपक्षे तु पूर्वं व्याख्यातम् । **वसिष्ठः** । "पर्युषितं भावजुष्टं द्विःपक्कं सहृल्लेखमाममृजीषपक्कमभोज्यं कामं तु घृतेन दध्नाऽभिघारितमुपभुञ्जीतेति " । इदं भोज्यान्तराभावे । **आपस्तम्बः** "रसजन्यं गुडाद्यापणीयं भक्ष्यं तैलसर्पिषी उदपात्रे मणिकादौ निधायोपयोज्ये भक्ष्यभोज्यपेयानि अपर्युषितान्यपि शुक्तानि चेदभक्ष्याणि इक्षुरसविकारविशेषरूपकाणि तच्चिपिटदधिसक्तुधानासक्तुमांसशाकापिष्टविकारक्षीरविकारौषधवनस्पतिमूलेषु न पर्युषितत्वदोषः" इति । **बृहस्पतिः** ।

"दधि भक्ष्यं शुक्तमपि तथैव दधिसंभवम् । कन्दमूलफलैः शान्तैर्योजितं यच्च शुक्तकम् ॥

"अविकारि भवेन्मेध्यमभक्ष्यं तद्विकारकृत्" इति प्रशस्तकन्दादिभिः कृतसंधानं शुक्तं यदि मोहादिविकारकृत्तदैवाभक्ष्यमित्यर्थः ।

**यमः** ।

"शुक्तानिह द्विजोऽन्नानि न भुञ्जीत कदाचन । प्रक्षालितानि निर्दोषाण्यापद्धर्मो यदा भवेत् ॥

"मसूरमाषसंयुक्तं शुक्तं पर्युषितं च यत् । तत्तु प्रक्षालितं कृत्वा भुञ्जीताज्याभिघारितम् " इति ।

इदमप्यापदि । शुक्तं तु सर्वथा वर्ज्यमेवेति 'अन्नं पर्युषितामि'त्यत्रोक्तम् ।

"काञ्जिका सकला या तु गृहे सुस्थापिता भवेत् । काञ्जिका सैव भक्ष्या स्यान्नान्यथा तु कदाचन " ॥

इति । **व्याख्याकृत्** ।

"उच्छिष्टेन तु शूद्रेण संस्पृष्टः परिवेषकः । द्रव्यहस्तस्तु यत्किंचिद्दद्यात्तच्च न भक्षयेत् "॥

इति **देवीपुराणे । भविष्ये** ।

"आयसेन तु पात्रेण यदन्नमुपनीयते । भोक्ता विष्ठासमं भुङ्क्ते दाता च नरकं व्रजेत् ॥

"अङ्गुल्यादन्तकाष्ठं च प्रत्यक्षलवणं च यत् । मृत्तिकाभक्षणं चैव तुल्यं गोमांसभक्षणम् " ॥ इति ।

**ब्राह्मे** ।

"एकेन पाणिना दत्तं शूद्रादत्तं न भक्षयेत् । घृतं तैलं च लवणं पानीयं फाणितं तथा ॥

"भिक्षा च हस्तदत्ता या सा न ग्राह्या तु कुत्रचित् "। इति ।

---

१ अ. १४ सू. २८ ।

**यमः ।**

"पानीयं फाणितं शाकं गोरसं लवणं घृतम् । हस्तदत्तानि भुक्त्वा तु भोक्ता सांतपनं चरेत्"॥ इति।

**षट्त्रिंशन्मते ।**

"दीपोच्छिष्टं च यत्तैलमभ्यङ्गे योजितं च यत्। रात्रौ रथ्याहृतं यच्च भुक्त्वा नक्तेन शुध्यति "॥

तथा

"शणपुष्पं शाल्मलं च करनिर्मथितं दधि। बहिर्वेदिपुरोडाशं भुक्त्वा चान्द्रायणं चरेत् "॥ इति।

बहिर्वेदिर्वेद्युपलक्षितकर्मासंबद्धमित्यलं भूयसा । प्रकृतमनुसरामः ।

द्वितीयं शेषवाक्यार्थमाह । **एतानिति** । ततः पूर्वत्र प्रायश्चित्तान्तरस्य **मन्वा**द्युक्तत्वादाह । **संधिनीति** । तत्संबन्धे निमित्तमाह । **अनुक्रान्तानिति** । तथा च प्रकरणतोऽस्य लाभ इति भावः । तत्फलितार्थमाह । **त्रिरात्रमिति** । कामत इत्यस्य फलमाह । **अकामतास्त्विति** । **अहोरात्रमिति** । उपवसेदित्यस्यानुषङ्गः । क्रियाविशेषणत्वान्नपुंसकत्वम् । **शेषेष्विति** । प्रागुक्तभिन्नेषु इत्यर्थः ।

**मन्व**विरोधं संपाद्य **शङ्ख**विरोधं परिहरति । **यदिति** । कारण्डवशाङ्गलिकौ पक्षिविशेषौ । यावकस्वरूपं प्रायश्चित्ताध्याये स्फुटीभविष्यति । फलितप्रत्येकभक्षणान्वये आह । **तद्वद्विति** । द्वंद्वबललब्धशाब्दान्वये आह । **मतीति** ॥ १७५ ॥

## याज्ञवल्कीये १७६ श्लोकः

**सर्पच्छत्रं** शाकविशेषः । तत्पर्यायमाह । **रसोनमिति** । एतदाख्यमित्यर्थः । **कारीति** ह्रस्वान्तपाठः । कश्मीरदेशे शलगमेति प्रसिद्धमित्याहुः । वक्ष्यमाण**मन्वा**देराह । **सकृदिति** । **कामत इति च** । इदमनुवृत्तिलब्धं पौनरुक्त्यं परिहरति । **ग्रामेति** । कवकत्वेन ग्रामवासित्वेन चेति भावः । **समानेति** । तथा च प्रागुक्तत्रिरात्रोपवास एतद्भिन्नपर इति भावः । सकृदुक्तिफलमाह । **मतीति** । **पतेदिति** । तथा च तत्प्रत्युक्तं प्रायश्चित्तं तत्र बोध्यम् । उभयकृत्यमाह । **अमतीति** । **मनु**मेवाह । **अमत्यैतानीति** । केवलं कामत इत्यस्य कृत्यमाह । **अमतीति** । **मनु**रपि । ( अ. ५ श्लो. ६ )

"लशुनं गृञ्जनं चैव पलाण्डुं कवकानि च । अभक्ष्याणि द्विजातीनाममेध्यप्रभवाणि च ॥

"लोहितान् वृक्षनिर्यासान्वृश्चनप्रभवांस्तथा। शेलुं गव्यं च पेयूषं प्रयत्नेन विवर्जयेत्" ॥ इति।

कवचं छत्राकसदृशं कुमुदमुकुलाकृति । एवं चैतदंशे प्रागुक्तव्याख्याकृता यदुभयत्र तच्चिन्त्यमिति बोध्यम् । अमेध्यप्रभवाणि साक्षाद्विष्ठाजातानि तन्दुलीयकादीनि मनुष्यादिजग्धपुरीषोत्पन्नानि च यानि साक्षान्न विड्जानि भवन्ति अमेध्याक्रान्तभूप्रभवा वृक्षास्तेषां पुष्पफलान्यदुष्टान्येव ।

"अमेध्येषु च ये वृक्षा उप्ताः पुष्पफलोपगाः। तेषामपि न दुष्यन्ति पुष्पाणि च फलानि च"॥

इति ( १।५।५१ ) बौधायनात् । अत्र वृक्षग्रहणादेवंविधशाकादीनां प्रतिषेध एव निर्यासः कठिनतां गतो वृक्षरसः । व्रश्चनं छेदनं तत्प्रभवाः अलोहिता अपि तेन हिङ्गुकर्पूरादीनां न निषेधः। शैलुः श्लेष्मातको गव्यं च पेयूषमभिनवसूतायाः क्षीरं यदल्पाग्निसंयोगात्कठिनं भवति तद्द्रव्यमपि वर्ज्यमित्यर्थः ॥ १७६ ॥

## याज्ञवल्कीये १७७।१७८ श्लोकौ

अथ पशुषु भक्ष्यानाह । भक्ष्या इति । पञ्चनखानि येषां ते भक्ष्या इत्यर्थः। ते च पञ्चैव श्रुत्युक्तेरिति सूचयन्तान् गणयति । सेधेत्यादि । श्वाविदिति। 'श्वावित्तु शल्ल' इत्यमरः(२।५।७)। कृकेति । 'सरटः कृकलासः स्यादि' त्यमरः । (२।५।१२) 'गन्धर्वः शरभो रामः सृमरो गवयः शश' इति च ( अमरे २।५।११ ) । महतीति । महाकायेत्यर्थः । परिसंख्येयमित्याह । पञ्चेति । एते इति । पञ्चेत्यर्थः । खड्गोऽपीति 'गण्डके खड्गखड्गिनावि'त्यमरः ( २।५।४ ) । पञ्चनखा इति । शशेत्यादि भक्ष्या इति शेषः । पञ्चनखेष्विति छात्रन्यायेनेदम् । उष्ट्रभिन्ना एकभागदन्तका भक्ष्या इत्यर्थः। विरोधं परिहरति । यद्विति । आपस्तम्बोऽपि (१।१७।३७) । "पञ्चनखानां गोधाकच्छपश्वाविट्शल्यखड्गशशपूतिखगवर्जं" इति । श्वाविट् वराहविशेषः। 'पूतिखगो हिमवति प्रसिद्ध" इति कपर्दी । अग्निमत्स्यादावन्वयमाह । तथेति । मत्स्येष्विति निर्धारणसप्तमी । मत्स्यानां सामान्येनाभक्ष्यत्वमुक्तं तत्र प्रतिप्रसवोऽयमित्याह । मत्स्यानामिति । मध्ये तत्रापि विशेषमाह । एते चेति । आद्याविति । श्राद्धाद्यर्थं विनियुक्तावेव भक्ष्यावित्यर्थः । अत्राभक्ष्यास्ते उच्यन्ते। तत्र तावद्देवलः ।

"अभक्ष्याः पशुजातीनां गोखरोष्ट्राश्वकुञ्जराः। सिंहव्याघ्रर्क्षशरभाः सर्पाजगरकस्तथा ॥

"आखुमूषकमार्जारनकुलग्रामशूकराः । श्वशृगालकपिद्वीपिगोलाङ्गूलकमर्कटाः" ॥

इति । ऋक्षो भल्लूकः । शरभोऽष्टापदः । अजगरः सर्पविशेषः । आखुः स्थूल उन्दुरुः । मूषकः स्वल्पः सः । कपिः प्लवङ्गः । द्वीपी महाव्याघ्रः । गोलाङ्गूलः कृष्णमुखो वानरः । मर्कटो गौरवानरः । कल्पतरौ तु नृमर्कटा इति पाठस्तदा ना मनुष्यः । गौतमः ( अ. १७ सू. २८ ) "उभयतोदत्केश्यरोमाण अभक्ष्या" इति । उभयतो दतो मनुष्यादयः केशी चमरी अलोमानः सर्पादयः अपन्नदद्वसन्नश्चेति च । यावत्स्वभावतो दन्ताः न पतन्ति तावद्भक्ष्योऽप्यभक्ष्यः । अवसन्नो व्याधितः । वसिष्ठः (अ. १४ सू. ४३–४६) "गौरगवयशरभाजा अभक्ष्याः। धेन्वनड्वाहौ मेध्यौ वाजसनेयके विज्ञायेते खड्गे तु विवदन्तेऽग्राम्यशूकरे चेति" । गौरोऽश्वसदृश आरण्यपशुः । अजा छागी मेध्यौ यज्ञियौ खड्गारण्यशूकरयोर्भक्ष्यत्वं केचिदाहुरन्येऽभक्ष्यत्वं ततश्च विकल्पः । स च श्राद्धनियुक्तानियुक्ततया व्यवस्थितः ।

ब्राह्मे ।

"पशोश्च मार्यमाणस्य न मांसं ग्राहयेत् द्विजः। पृष्ठमांसं गर्भशय्यां शुष्कमांसमथापि वा ॥

"भूमेरन्तरितं कृत्वा मृद्भिश्चाच्छादितं तु यत्। पक्वमांसमृजीषन्तत्प्रयत्नेन विवर्जयेत् " ॥ इति ।

**मनुः** ( अ. ५ श्लो. १७ )।

"न भक्षयेदेकचरा न ज्ञातांश्च मृगद्विजान्" । इति । एकचराः सर्पादयः ।

**भारते ।**

"आजं गव्यं च यन्मांसं मसूरं च विवर्जयेत्" इति ।

**हारीतः** "ग्राम्यारण्यानां पशूनामश्नन्ति यथाऽजमेषहरिणखड्गरुरुपृषतऋश्यन्यङ्कुमहारण्यवासिनश्च वराहान्तथा शशकशल्यकसेधागोधाकूर्मवर्तकतित्तिरिमयूरवाध्रीणसलावककुररकपिञ्जलान्शशकान्मत्स्यानन्यानपि समुपपन्नान् भक्षयेयुरिति" । रुरुर्बहुशाखशृङ्गो मृगः । पृषतो बिन्दुचित्रितो मृगः । ऋश्यो मृदुशृङ्गो रोझ इति प्रसिद्धः । न्यङ्कुः संबरसदृशोऽशृङ्गः ।

**पैठीनसिः** "ग्राम्यारण्याश्चतुर्दशगौरविरजोऽश्वोऽश्वतरो गर्दभो मनुष्यश्चेति सप्तग्राम्याः । महिषवानरपक्षिसरीसृपरुरुपृषतमृगाश्चेति सप्तारण्याः पशवः" ।

अथ मत्स्यविषये **मनुः** । ( अ. ५ श्लो. १५ )

"मत्स्यादः सर्वमांसादस्तस्मान्मत्स्यान्विवर्जयेदिति" । **आपस्तम्बः** ( १।१८।३८–३९ ) अभक्ष्यश्चेटो मत्स्यानां सर्पशीर्षामुदरः क्रव्यादो ये चान्ये विकृतास्या यथा मनुष्यशिरस" इति । चेटो मत्स्यविशेषः । सर्पसदृशमस्तकाः सर्पशीर्षामुदरो मकरः । क्रव्यादाः शिशुमारादयः । मनुष्यशिरसो जलमनुष्याः ।

**यमः** "स एव जलौकसो जलकाकः जलचरः मयूरसदृशः । अल्पसर्पसदृशमत्स्यः । नक्रः जलकुक्कुटः । ये चान्ये हयकर्णकाः । ये चान्येऽशल्कामत्स्या ये चोभयतोमुखा मत्स्यास्तेऽप्यभक्ष्या" इति ।

**पैठीनसिः** "कुलीरवार्ताकपतनजलावर्तक्षिप्रगांश्चेत्यभक्ष्या" इति ।

**देवलः** "शम्बुशुक्तिनखशुक्तिप्लवङ्गमा अभक्ष्या" इति । नखशुक्तिर्दीर्घशुक्तिका प्लवङ्गमो मण्डूक इत्यलम् ।

**शूद्रेति** । प्रकरणशेषोऽयम् । अत एव द्विजातिधर्मानाहेत्यवतारितम् । अग्रेऽत इत्युक्त्वा च प्रकरणविच्छेदः सूचितः । अत एव प्रकरणान्ते तत्पदमुक्तं तदेतदभिप्रेत्याह । **नार्चितमिति** । इत्यत आरभ्येत्यर्थः । स्वार्थे ष्यञ् । **अतो** द्विजातिधर्मकथनानन्तरम् । एतेन व्याप्यधर्मकथनानन्तरं व्यापकधर्मकथनमत्रेति परिपाटी सूचिता । **भक्षणे**त्यत्र समाहारद्वंद्वः । विषयसप्तमी च इत्याह । **मांसस्येति** । निषिद्धस्यतत एवाप्राप्तेराह । **चानिषिद्धस्येति** । तादृशस्य तस्य वर्जने चेत्यर्थः । वर्जनस्वरूपमाह । **प्रोक्षितादीति** । आदिना वक्ष्यमाणपरिग्रहः प्रकरणान्तरप्रारम्भसूचनायैव मुनीनां प्रत्यवमर्शः ॥१७७॥१७८॥

## याज्ञवल्कीये १७९ श्लोकः

**तत्र** तयोर्मध्ये । **प्राणेति** । अत्र षण्निमित्तानि तत्राद्यं व्याचष्टे । **अन्नेति** । विनिगमनाविरहादाह । **व्याध्यभिभवेन वेति** । **अन्यथा** चिकित्सनीयव्याधिग्रस्तत्वेनेत्यर्थः । तत्रापि विशेष-

माह । **मांसेति** । नियमे हेतुं **गौतम**माह । **सर्वत एवेति** । ननु नायमेतस्य विषयोऽत आह । **तस्माद्गुहोति** । व्याख्यातेयं प्राक् ।

द्वितीयं व्याचष्टे । **तथेति** । **निमन्त्रित इति** । अनेनान्यथादोषाभावः सूचितः। वक्ष्यमाणतो लब्धमिदं नियमे हेतुमाह । **अभक्षणे इति** । तदेव **मनु**वाक्यमाह **यथेति प्रेत्य** मृत्वा । **संभवात्** जन्मानि । **इति**स्तत्समाप्तौ । **क्वचित्तु** इति । **मनु**स्मरणादिति पाठ एव ।

तृतीयं व्याचष्टे । **प्रोक्षेति** । श्रौतेत्यनेनान्यव्यवच्छेदः । **देर्हुतेति** । तथा च प्रोक्षितपदं लाक्षणिकमिति भावः । **तादिति** । नियमेनेत्यादिरत एवाह । **अभक्षणे इति** । अङ्गवैकल्यादिति भावः अत एव स्थलत्रये योग्यक्रियाध्याहारेण पृथगेव व्याख्यातम् । न तूत्तरार्धशेषेण संबंधः कृतः । अत एव चाग्रे त्रितयं तथैव व्याचष्टे । **द्विजेत्यादि** । नात्र निजकर्तृककामनयेत्यर्थः । तस्य दोषापत्तेः । किं तु तत्कर्तृक भोजनविषयकस्वकर्तृकेच्छयेत्यर्थस्तदाह । **ब्राह्मणभोजनार्थमिति** । देवान्पितॄनित्यस्यार्थमाह । **देवेति** । **तान्** द्विजदेवपितॄन् । न्यूनतां निराचष्टे । **एवमिति** । भक्षयन्नित्याद्यनुषङ्गः । एवं च मूलमुपलक्षणमिति भावः । **चरतथेतीति** । चरत्पुरेतीति पाठान्तरं श्रूयते च षट्त्रिंशत्संवत्सरे सत्रे संस्थितेऽहनि गृहपतिर्मृगयां याति स तत्र यान्मृगान्हन्ति तेषां तरसमया सवनीयाः पुरोडाशा भवन्तीति" संस्थिते समाप्ते तरसमयाः मांसमयाः । तथा भेदेन व्याख्यानफलमाह । **न दोषेति** । मात्र पदेनावश्यकत्वव्यवच्छेदः । **वदता** मुनिना । **तिथ्येति**। अनेन द्विजोऽतिरूपः सूचितः । **आदिना** देवपितृपरिग्रहः । **वत्** तत्त्रितयवत् । प्रतिज्ञातार्थं प्रतिपादयाति । **एवमिति** । उक्तप्रकारेण सामान्येनेत्यर्थः । **प्रतीति** तद्विषयकेत्यर्थः ॥ १७९ ॥

## याज्ञवल्कीये १८० श्लोकः

प्रसंगसंगतिमाह । **इदानीमिति** । षड्विधभिन्नस्येत्यर्थः। प्रत्यासत्तेराह। **तस्येति** । **समितत्वं** तुल्यत्वं तद्रोमभिस्तच्च संख्याकृतं नान्यकृतमित्याह । **यावन्तीति** । यत्संख्याकानीत्यर्थः । **लिङ्गर्थो** न विवक्षित इत्याह । **वसतीति** । न्यूनतानिरासाय प्राग्वद्विशेषमाह । **हन्तीति** । हन्तीत्यनेनेत्यर्थः । न तु साक्षाद्धन्तैवेति भावः । **यमोऽपि** ।

"अनुमन्ता विशस्ता च निहन्ता क्रयविक्रयी । घातकाः सर्व एवैते संस्कर्ता षष्ठ उच्यते ॥
"घातकाः षट्समाख्याता भोक्ता तत्र तु सप्तमः। षण्णां तेषां सकाशात्तु उपभोक्ताऽतिरिच्यते॥
"क्रेतारं भजते पादः पादो भोक्तारमृच्छति । घातकं भजते पादः पादमृच्छन्त्यतस्त्रयः ॥
"खादको घातकः क्रेता त्रयस्तुल्या न संशयः" । इति ॥ १८० ॥

## याज्ञवल्कीये १८१ श्लोकः

अवसरसंगतिमाह । **इदानीमिति** । **सर्वानिति** । यद्यप्येकं वाक्यं संभवाति तथापि सर्वसंग्रहाय वाक्यत्रयेण व्याचष्टे । **य इति** । **प्रोक्षीति** । प्राग्वत् न तथा संकल्पमात्रेण तदवाप्तिरित्याह ।

**तत्तदिति** । अन्यथा तस्य निष्फलत्वापत्तेः । **निर्विघ्नमिति** । क्रियाविशेषणमिदं तत्संकल्पफलम् । तत्र मानमाह । **यथेति** । **रति**मिच्छाम् ।

ननु विघ्नाभावस्यान्यथाऽपि संभवान्नैतदसाधारणं फलमत आह । **एतच्चेति** । प्राग्वदाह । **एतच्चेति** । प्रतिसंवत्सरं क्रियमाणेत्यर्थः । **समाः** वर्षाणि हयमेधफलसमानजातीयमपि फलमल्पमेवोत्पद्यते तेन नेतरवैयर्थ्यं तदुक्तं **भट्टैः** ।

"फलानामल्पमहतां कर्मणां च स्वगोचरे। विभागः स्थानसामान्यादविशेषेण चोदितः" ॥ इति ।

तृतीयवाक्यार्थमाह । **तथेति** । उक्तरीत्या विप्रग्रहणमुपलक्षणमित्याह । **ब्राह्मणादिरिति** । अन्यत्रान्यशब्द इति न्यायेनाह । **मुनिवदिति** । न प्रति तत एव तस्याप्राप्तेः । **नापि प्रोक्षीति**। तन्नियतभक्षणावश्यकत्वस्य प्रागुक्तत्वात् । अर्थादाह । **पारीति** । एतदर्थमेव तथा व्याख्यातमिति भावः । इदमेव स्फुटीक्रियते आदितः । तत्र तावन्**मनुः** ( अ. ५ श्लो. २६।२७।३१।२८।३२ )।

"मांसस्यातः प्रवक्ष्यामि विधिं भक्षणवर्जने ।

"प्रोक्षितं भक्षयेन्मांसं ब्राह्मणानां च काम्यया । यथाविधिनियुक्तस्तु प्राणानामेव चात्यये ॥

"यज्ञाय जग्धिर्मांसस्येत्येष दैवो विधिः स्मृतः । अतोऽन्यथा प्रवृत्तिस्तु राक्षसो विधिरुच्यते ॥

"प्राणस्यान्नमिदं सर्वं प्रजापतिरकल्पयत् । जङ्गमं स्थावरं चैव सर्वं प्राणस्य भोजनम् ॥

"क्रीत्वा स्वयं वा व्युत्पाद्य परोपहृतमेव वा । देवान् पितॄंश्चार्पयित्वा खादन्मांसं न दुष्यति" ॥ इति।

इदं चातुर्वर्ण्यसाधारणं वर्जने तु विधिः । सूर्यानीक्षणवत्संकल्परूपः प्रोक्षितं यज्ञार्थं **मन्त्रैः** संस्कृतं ब्राह्मणानां चेति यं ब्राह्मणा कामयन्ते त्वया मांसं भोक्तव्यमिति तेषामिच्छया एकवारमप्रोक्षितमपि मांसं तस्य भक्षयतो न दोषः । इदं च ततो निवृत्तस्य 'सकृद्ब्राह्मणकाम्ययेति' **यमोक्तेः** । **एवं च** तस्यैव ब्राह्मणस्य कामनान्तरे ब्राह्मणान्तरकामनायां च न भोक्तव्यम् । सकृदिति भोजनाभिप्रायं न ग्रासपरं तथैव व्यवहारात् ।

"आरण्याः सर्वदेवत्याः प्रोक्षिताः सर्वशो मृगाः । आगस्त्येन पुरा राजन्मृगया येन पूज्यते" ॥

यथाविधि नियुक्तः । मधुपर्के श्राद्धे च नियुक्तः सन् अप्रोक्षितमपि भक्षयेत् । 'प्राणानामेव चात्यये' इति । यदा रोगेणान्नाभावेन वा मांसभक्षणव्यतिरेकेण प्राणात्ययसंभवस्तदा मांसं भक्ष्यमित्यर्थः । **अतोऽन्यथा** पूर्वोक्तादन्यत्र स्वयमुत्पाद्येति क्षत्रियविषयम् ।

"अतो राजर्षयः सर्वे मृगयां यान्ति भारत । लिप्यन्ते च न दोषेण न चैतत्पातकं विदुः" ॥

इति **भारतात्** । क्रीत्वेत्यादिना देवपित्रर्चनपूर्वके मांसभक्षणे दोषाभाव उक्तः । एवं च चतुर्षु मांसभक्षणं नियम्यते । श्राद्धे निमन्त्रितस्य मांसाभक्षणे प्रत्यवायश्रुतेश्च अत्र श्राद्धे मांसभक्षणं युगान्तरविषयम् ।

"अग्निहोत्रं गवालम्भं संन्यासं पलपैतृकं । देवरेण सुतोत्पत्तिः कलौ पञ्च विवर्जयेत्" ॥ इति

स्मृतेरिति दाक्षिणात्याः । प्राच्यास्तु इदं निर्मूलम् अत एव गवालम्भेऽस्वर्ग्यं लोकविद्विष्टमिति व्याख्यात्रा प्राक्लिखितमत एव **कल्पतरुणा**

"गोत्रान्मातृसपिण्डाद्वा विवाहो गोवधस्तथा । कलियुगे त्विमान्धर्मान्वर्ज्यानाहुर्मनीषिणः" ॥

इत्येवोक्तम् । **बृहस्पतिः** ।

"रोगी तु युक्तो विधिना हुतं विप्रवृतस्तथा । मांसमद्याच्चतुर्धैषा परिसंख्या प्रकीर्तिता" ॥ इति ।

रोगी मांसभक्षणैकनाश्यरोगवान् । तेन यत्र मांसभक्षणं विना रोगापनयो न भवतीति वैद्यशास्त्रनिश्चयस्तत्र प्राणात्ययसंभावनाविरहेऽपि तद्रोगनाशाय भक्षयतो न दोषः । परिसंख्यानियम इति **हेमाद्रिः**। **कल्पतरौ** तु परिसंख्यागणनम् । नेतरवर्जनं **स्मृत्यन्तरे** । "देवान्पितॄन्समभ्यर्च्येति" प्रकारान्तरेणापि मांसभक्षणाभ्यनुज्ञानादित्युक्तम् ।

**यमः** ।

"भक्षयेत्प्रोक्षितं मांसं सकृद्ब्राह्मणकाम्यया । दैवे नियुक्तः श्राद्धे वा नियमे तु विवर्जयेत्" ॥ इति ।

सकृदिति ब्राह्मणेत्यनेनान्वितम् । नियमे मांसवर्जनसंकल्परूपे व्रते सति । एतच्च प्रोक्षितातिरिक्तैः **सर्वैरेव** संबध्यते । प्रोक्षिते तु प्रत्यक्षश्रुतिविरोधान्न संबध्यते । एवमन्यत्रापि बलवत्प्रमाणविषयं प्राणात्ययादिकं विहाय संबंधनीयमिति **कल्पतरुः** । प्रोक्षितमपि मन्त्रवत्प्रोक्षितमेव "मन्त्रैस्तु संस्कृतानद्याश्छाश्वतं विधिमास्थितः" ॥ इति **विष्णूक्तेः** । तेन सामयिकाचारेषु सीतायज्ञादिषु नेदं विधानमिति **मेधातिथिः** । शाश्वतं नित्यवद्यानियाग्यं तेन मन्त्राविदि(?) एव । अत एव **यमः** ।

"यजुषा संस्कृतं मांसं भक्षयेत्तु यथाविधि । न भक्षयेद्वृथामांसं पृष्ठमांसं च वर्जयेत्" ॥ इति ।

पृष्ठमांसं पृष्ठसंबंन्धि तत् । अनुज्ञातविषयेऽपि **पैठीनसिः** ।

"श्राद्धे मांसं समश्नीयं तथाऽतिथिनिमित्तके । यावंति पशुरोमाणि तावन्नरकमृच्छति" ॥ इति

श्राद्धे निमन्त्रित इति शेषः । अतिथीति आतिथ्यं यदुपात्तं तदतिथिना भक्ष्यमित्यर्थः । यो नाश्नाति तं प्रत्याह । यावन्तीति । इदं नियमरहितस्य बोध्यम् । **हारीतः** ।

"क्षत्रियैस्तु मृगव्यविधिना समुपार्जितामिति" । तिर्यंचः सिंहाद्यन्ये । "व्यालहतादृष्टदोषवाक्प्रशस्तानभ्युक्ष्योपभुञ्जीतेति" **गौतमः** ( अ. १८ सू. ३८ ) ।

"श्राद्धकाले प्रशंसन्ति सिंहव्याघ्रहतं च यत् । विषच्छद्महतं चैव व्याधतिर्यक् हतं च यत्" ॥

व्यालाः सिंहादयः । "न प्रशंसन्ति वै श्राद्धे यच्च मन्त्रविवर्जितम्" । यत् शुचित्वेन संदिग्धं तदन्येन शुचीत्युक्तं तदभ्युक्ष्योपयुंजीतेत्यर्थः । **आपस्तम्बः** ( १।१६।१६ ) । "हिंसार्थेनासिना छिन्नं मांसम-

भोज्यमिति'' प्राणिवधाय निर्मितेनास्यादिना यत्पाकार्थं छिन्नं तदभोज्यमित्यर्थः । **मनुः** ( अ. ५ श्लो. ५५ ) ।

''मांसभक्षयिताऽमुत्र यस्य मांसमिहाद्म्यहम् । इति मांसस्य मांसत्वं वदन्ति मनीषिणः ॥

''स्वमांसं परमांसेन यो वर्धयितुमिच्छति । अनाभ्यर्च्य पितॄन्देवान्न ततोऽन्योऽस्त्यपुण्यकृत् ॥

नियुक्तस्तु यथान्यायं श्राद्धे मांसं न भक्षयेत् । स प्रेत्य पशुतां याति संभवानेकविंशतिम्'' ॥ इति ।

**देवलः** । ''आत्मार्थं साधुकामत्वाज्जीवघातं न कारयेत्'' । इति ।

**हारीतः** ।

''भक्षयित्वा तु यो मांसमद्भिः शौचं समाचरेत् । हसन्ति देवताः सर्वा अशुचेः शुचिदर्शिनः'' ॥

**मनुः** ( अ. ५ श्लो. ५० ) ।

''यस्तु भक्षयते मांसं विधिं हित्वा पिशाचवत् । स लोकेऽप्रियतां याति व्याधिभिश्चैव पीड्यते'' ॥ इति ।

एवं च सर्वोऽपि निन्दार्थवादो निषिद्धमांसविषयः । 'विधिं हित्वेति' श्रवणात् । **यमः** ।

''अभक्षणेन मांसानां साक्षाद्धर्मस्तु तुष्यति । सर्वेषामेव मांसानां महान्दोषस्तु भक्षणे ॥

''अभक्षणे तु धर्मः स्याद्विशिष्ट इति नः स्मृतम्'' । इति ।

अत्र च प्रोक्षिताद्यतिरिक्तनिषिद्धमांसवर्जनसंकल्पविधिः । धर्मपदश्रवणात् । **मनुः** ( अ. ५ श्लो. ५४ ) ।

''फलमूलाक्षतैर्मेध्यैरुत्पन्नानां च भोजनैः । न तत्फलमवाप्नोति यन्मांसपरिवर्जनात्'' ॥ इति ।

**नन्दिपुराणे** ।

''क्लेदिदुर्गन्धिविकृतं जुगुप्सास्पदमेव च । मांसं न भक्षयेद्विद्वान्न चास्वादुत्तरं च यत्'' ॥ इति ।

**भारते** ।

''कौमुदं तु विशेषेण शुक्लपक्षं नराधिप । वर्जयेत्सर्वमांसानि धर्मो ह्येष विधीयते ॥

''चतुरो वार्षिकान्मासान्यो मांसं परिवर्जयेत् । चत्वारि भद्राण्याप्नोति कीर्तिमायुर्यशो बलम्'' ॥ इति ।

कौमुदः । कार्तिकः **बृहस्पतिः** ।

''रोगार्तोऽभ्यर्थितो वाऽपि यो मांसं नान्यलोलुपः । फलं प्राप्नोत्ययत्नेन सोऽश्वमेधशतस्य तु'' ॥ इति ।

**मनुः** ( अ. ५ श्लो. ५६ ) ।

''न मांसभक्षणे दोषो न मद्ये न च मैथुने । प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफलः'' ॥ इति ।

मांसेऽनिषिद्धे । मद्ये क्षत्रादीनां मैथुने निषिद्धातिरिक्ते निवृत्तिर्वर्जनसंकल्पः । महाफला-पूर्वोक्तार्थवादिकफला ।

**अथ पशुहिंसाविधिप्रतिषेधौ ।** तत्र तावन्**मनुः** ( अ. ५ श्लो. ३९।४१।४४ )
"यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयंभुवा । यज्ञोऽस्य भूत्यै सर्वस्य तस्माद्यज्ञे वधोऽवधः ॥
"मधुपर्के च यज्ञे च पितृदैवतकर्मणि । अत्रैव पशवो हिंस्या नान्यत्रेत्यब्रवीन्मनुः ॥
"या वेदविहिता हिंसा नियताऽस्मिँश्चराचरे । अहिंसामेव तां विद्याद्वेदाद्धर्मो हि निर्बभौ" ॥

तथा ।

"नावेदविहितां हिंसामापद्यपि समाचरेत् । कुर्याद्घृतपशुं संगे कुर्यात्पिष्टपशुं तथा ॥
"न त्वेव तु वृथा हन्तुं पशुमिच्छेत्कदाचन । यावन्ति पशुरोमाणि तावत्कृत्वेह मारणम् ॥
"वृथा पशुघ्नः प्राप्नोति प्रेत्य जन्मनि जन्मनि" । इति ।

आपदि क्षुत्पीडादौ प्राणात्ययसंभावनायां तु विहितत्वात्कर्तव्यैव हिंसा । यत्र त्वविहिताऽपि हिंसा सीतायज्ञादावाचारतः प्राप्ता यत्र च चण्डिकायागादौ पशुवधोपयाचितेन सस्यसंपत्तिदर्शनादाचारतः प्राप्ता तत्र संगे पशुवधप्रसंगे घृतं पिष्टं वा पशुं कुर्यान्न तु पशुहिंसामिति **कल्पतरुमेधातिथी ।**

**पैठीनसिः ।**

"नात्मार्थं पाचयेदन्नं नात्मार्थं घातयेत्पशून् । देवार्थं ब्राह्मणार्थं वा पचमानो न लिप्यते" ॥ इति ।

ब्राह्मणोऽत्रातिथिः । **वसिष्ठः** (अ. ४ सू. ५।८) । "पितृदेवतातिथिपूजायामेव पशुं हिंस्यादपि ब्राह्मणाय राजन्याय चाभ्यागताय महोक्षं महाजं वा पचेदिति" । इत्यलं भूयसा । अत्र **मनुवाक्ये** नञोऽल्पार्थकत्वेन यागीयहिंसायामपि स्वल्पदोषोऽस्त्येवेति प्रतिपादितं **गुरुचरणैः । मञ्जूषायां** विशदीकृतं चैतत्**पाषण्डखण्डनेऽपि अन्नपशुप्रकरणे**ऽस्माभिरिति दिक् ॥ १८१ ॥

इति भक्ष्याभक्ष्यप्रकरणम् ।

---

# अथ द्रव्यशुद्धिप्रकरणम् ८

## याज्ञवल्कीये १८२।१८३ श्लोकौ

प्रागुक्तप्रायश्चित्तप्रसंगसंगत्या आह । **इदानीमिति । सौवर्णेति** । अभ्यर्हितत्वात्पूर्वनिपातः । **एवमग्रेऽपि । अब्जमित्यस्य** जलमित्यर्थस्तदाह । **मुक्तेति** । ऊर्ध्वपात्रमित्यस्योर्ध्वमुखमूर्ध्वदिगवस्थितं वा पात्रमित्यर्थः । तत्र विशेषमाह । **यज्ञीति** । तत्रोत्तरद्वयसाहचर्यमाह । **ग्रहादीति** । दृषत् पेषणाधारः । पाटेति भाषाप्रसिद्धः । चक्षुष्यत्वेन हविष्यत्वेन चाह । **वास्तुकादीति** । वथुवेति भाषाप्रसिद्धः । **चर्मविकारे** वक्ष्यमाणत्वादाह । **बल्वजादीति** । 'मुंभूमनि तु वल्वजा' **इत्यमरः** (२।४।१६३) ।

'एको वल्वजः' इति भाष्योक्तरेकवचनान्तोऽपि बाब इति ख्यातोऽयम् । **आदिना** वृक्षत्वगादि-परिग्रहः ।

"चैलवच्चर्मणां शुद्धिर्वैदलानां तथैव च । शाकमूलफलानां च धानावच्छुद्धिरिष्यते" ॥

इति (अ. ५ श्लो. ११९) **मनो**राह । **विदलचर्मणोरिति** । तेषामपीत्यर्थः । अत एव पुनरजिनेति वक्ष्यमाणविरोधो न । "नध्री वध्री वरत्रा स्यात्" **इत्यमरः** (२।१०।३१)। उत्तरसाहचर्या-द्वक्ष्यमाणानुरोधाच्चाह । **प्रोक्षणीति** ।

"निर्लेपं कांचनं भांडमद्भिरेव विशुध्यति । अब्जमश्ममयं चैव राजतं चानुपस्कृतम्" ॥

इति ( अ. ५ श्लो. ११२ ) **मनो**स्तत्र विशेषस्य वक्ष्यमाणत्वाच्चाह । **लेपरहीति** । तथा सति तन्निमित्तमाह । **उच्छिष्टेति** ।

शुष्कामेध्यादेरप्युपलक्षणमिदमार्द्रे तु स्वयमेव वक्ष्यति । **अमेध्येति** लक्ष्यार्थे । "चमसानां ग्रहाणां च शुद्धिः प्रक्षालनेन च" इति **मनो**राह । **प्रक्षेति** । विशेषमाह । **चरु इति** । प्राग्वत् । ओदननिरासायाह । **चरुस्थालीति** । पूर्वसाहचर्यादाह । **प्राशित्रेति** । प्रागुक्तक्रियान्वयासंभवात्पृथगुक्तिमध्याहारेण योजयति । **शुध्यन्तीति** । अत एव वारिणेत्यस्य पुनरुक्तिः । उभयत्र निर्लेपांशे मानं साधारणमाह । **निर्लेपमिति** । **अखातेति** । अत्यन्तानुपहतामिति पक्षान्तरतया **मेधातिथिः** । अनुत्कीर्णरेखादि-रहितामिति कश्चित्सर्वशेषश्चायम् । अत एव न्यूनतां निराचष्टे । **सलेपेत्यादि** । एवमग्रेऽपि । त्रितय-समुच्चयनिवारणायाह । **मृदिति** ।तुल्यार्थास्तु विकल्परन्निति न्यायादिति भावः । **एकेति** बहुव्रीहिः । **निर्लेखनं** घर्षणम् । **न प्रेति** । उक्तशुद्धिं विनेत्यर्थः । **गौतमोऽयम्** । **दर्वी** होमसाधनपात्रम् ॥ ॥ १८२ ॥ १८३ ॥

## याज्ञवल्कीये १८४ श्लोकः

इन्द्रायुधनिरासायाह । **यज्ञाङ्गमिति** । "वज्रो वै स्फ्यः" इति **श्रुते**रिति भावः । **शेषमिति** । जातावेकवचनम् । तुपाङ्गाध्याहारावाह । **एतेषामिति** । अत एव पृथगुक्तिः । चर्मतः पृथगुक्ति-फलमाह । **पुनरिति** । तथा च स्नेहसंबन्धसंभवादुष्णोदकप्राप्त्यर्थमिदं तत्वे तदन्यपरमिति भावः । **मनु**रपि । ( अ. ५ श्लो. ११७ )

"चरूणां स्रुक्स्रुवाणां च शुद्धिरुष्णेन वारिणा । स्फ्यशूर्पशकटानां च मुसलोलूखलस्य च" ॥ इति । यद्यप्यस्यार्थान्तरं वक्ष्यमाणं स्फुटतयाऽवभासते तथाऽपि स्मृत्यन्तरानुरोधादन्यथा व्याचष्टे । **संहतानामिति** । अस्य प्रतीयमानशब्दार्थं विहाय तात्पर्यार्थमाह । **उक्तेति** । उक्तविशुद्धिकाभिन्नद्रव्यनि-ष्पादितसमूहकानामित्यर्थः । बहुशब्दबलाद्बहुवचनोल्लेखाच्च बहुवचनान्तानां द्वंद्व इत्याशयेनाह । **बहूनां वाससामिति** । न्यूनतां निराचष्टे । **वासोग्रहणमिति** । उक्तशुद्धिकानां यथासंभवं सर्वेषामि-त्यर्थः । अत एवाग्रे आदिशब्दः स्मृतौ वाससः शुद्धेरुक्तत्वेन तदुक्त्यै तदर्थलाभः । तथा सति वाक्यार्थमाह । **उक्तेति** । प्रभृतिग्रहणं प्रकारार्थम् । उक्तशुद्धित्वेन च सादृश्यरूपप्रकारः । संहताना-

मित्यस्य शाब्दार्थमाह। **राशीति**। यद्यपि सर्वं वाक्यमिति न्यायेन प्रोक्षणमेव शुद्धिकरमिति शाब्दोऽर्थस्तथापि फलितमाह। **प्रोक्षणेनैवेति**। बहुत्वस्य ससंबन्धिकत्वादनुक्ततदर्थमाह। **बहुत्वं चेति**। स्पष्टत्वायाह। **एतदिति**। **वस्त्राणीति**। तदानीत्यर्थः। **प्रोक्षेति**। तदेवेत्यर्थः। यदनुरोधेनेत्थं व्याख्यातं तदाह। **तथा चेति**। **दूषणादिति**। दूषणे इति पाठान्तरम्। **समुद्धृत्येति**। प्रक्षालनार्थमिति भावः। इदं च पूर्वोक्तमेवेति प्रतिपादयति। **यदेति**। **पुनस्त्वर्थे**। **अद्भिरिति**। अत्र **मनु**वाक्ये पूर्वार्धमाद्यार्धतात्पर्यकमुत्तरार्धं द्वितीयार्धतात्पर्यकम्। अत एव तु शब्दद्वयमद्भिरित्यादेः पुनरुक्तिश्च संपूर्णस्य प्रागुक्तार्थपरत्वे तदानर्थक्यं स्पष्टमेव। विशेषान्तरमाह। **स्पष्टानामिति**। तत्र वचनाभावेऽपि ज्ञापकमाह। **बहूनामिति**। उक्तैकवाक्यतयेति भावः। **वचनस्य** मानवस्य। **समेषु** तेष्वपि। एवं च बहुत्वमलाभिन्नत्वं तत्र बोध्यम्। प्राग्वदाह। **इयदिति**। तथाज्ञाने एव प्रागुक्तार्थ संभव इति भावः। संहतानां राशीकृतानां बहूनामेकपुरुषीयप्रयत्नासाध्यशुद्धीनां तेषां सर्वेषां यथाकथंचित्स्पर्शयुक्तानां प्रोक्षणमेवेति प्रतीयमानार्थानुरोधेन मतान्तरमाह। **अनेकेति**। तुर्व्युत्क्रम इतरग्रे योज्यः। अत्रेदं तत्वम्। धान्यस्थले बहुत्वं द्रोणादाधिक्ये न स्मर्यते। अन्ये तु देशकालपुरुषापेक्षया तदित्याहुः। इदं चाग्रे स्फुटीभविष्यति। तथा च **बौधायनः** ( १।५।४७ )।

"देशं कालं तथाऽऽत्मानं द्रव्यं द्रव्यप्रयोजनम्। उपपत्तिमवस्थां च ज्ञात्वा शुद्धिं प्रयोजयेत्"॥ इति

एवं वासःस्वपि बहुत्वं त्रिभ्य ऊर्ध्वं यद्यपि त्रिप्रभृतिषु बहुत्वमस्ति तथापि अल्पानामिति बहुवचनश्रवणात्तावत्पर्यंतमल्पत्वं ततोऽग्रे बहुत्वमिति केचित्। **अद्भिरिति**। नियमार्थमिति॥१८४॥

## याज्ञवल्कीये १८५ श्लोकः

**स्पर्शेति**। उच्छिष्टचाण्डालादिसर्वस्पर्शेत्यर्थः। अत एव सामान्येनोक्तं सलेपानां विलक्षणलेपानां केषांचित् दारूणां सामान्येन काष्ठानाम्।

"क्षौमवच्छङ्खशृङ्गाणामस्थिदन्तमयस्य च। शुद्धिर्विजानता कार्या गोमूत्रेणोदकेन वेति"॥ (अ. ५ श्लो. १२१) **मनो**राह। **अस्थीति**। प्रागुक्त**मन्व**विरोधायाह। **मृदिति**। **आदि**नोष्णोदकादिग्रहणमत एव स्नेहस्य पृथगुक्तिः। तैजसानामिति प्रागुक्त**मनो**र्विशेषविषयत्वान्मन्वन्तरमाह। **यावदिति**। अमेध्यग्रहणमुपलक्षणम्। **अक्तत्वं** लिप्तत्वम्। **तदिति**। अमेध्यादीत्यर्थः। "प्रोक्षणं संहतानां च दारवाणां च तक्षणमिति" **मनुः** (अ.५श्लो.११५)। तक्षणे नाशापत्तेराह। **उद्धर्षणमिति**। योग्यतयाऽध्याहारोऽयम्। मार्जनमित्यनेन **मनु**समानाकारेण न शुद्धिरुच्यते दृष्टार्था तस्या उक्तत्वेन वैयर्थ्यापत्तेरतोऽदृष्टार्थमिदमित्याशयेन शुद्धिपदा घटितं व्याचष्टे। **यज्ञेत्यादि**। अविनिगमकादाह। **स्रुगिति**। वामस्य निषिद्धत्वादनादेशे तस्य विहितत्वाच्चाह। **दक्षिणेनेति**। पाणिग्रहणमुपलक्षणमित्याह। **दर्भैरित्यादि**। ऊर्णातन्तुकार्पासतन्तुनिर्मितं वस्त्रं दशापवित्रम्। व्यवस्थितोऽयं विकल्प इत्याह। **यथाशास्त्रमिति**। उक्तहेतोरेवाह। **कर्माङ्गेति**। तथा चेयं प्रायोगिकी शुद्धिरदृष्टार्था। अस्य प्रकृते उपयोगमाह। **एतच्चेति**। **पुनः** तु। पात्राणामिति शेषः॥१८५॥

## याज्ञवल्कीये १८६ श्लोकः

उषशब्दार्थमाह । **उषरेति** । एककार्यत्वाद्विकल्पमाह । **गोमूत्रेणोदेति** । सोऽपि व्यवस्थित इत्याह । **लेपेति** । आविकेत्यत्र समाहारद्वन्द्व इत्याह । **आविकमिति** । नन्वेवं द्विवचनौचित्यमत आह । **उदकेति** । तथोदके च गोमूत्रं चेति द्वंद्वः कार्य इति भावः । **फेनकेति** । रीठेति प्रसिद्धः । साकाङ्क्षत्वादाह । **उदकेति** । **मनु**रपि ( अ. ५ श्लो. १२० ) ।

"कौशेयाविकयोरूषैः कुतपानामरिष्टकैः । श्रीफलैरंशुपट्टानां क्षौमानां गौरसर्षपैः" ॥ इति ।

विशेषं वक्तुमाह । **एतच्चोच्छिष्टेति** । **क्षालनेति** । अल्पोपघातस्य बहुशः संभवेन बहुवारं क्षालने नाशापत्त्या तदसहत्वादित्यर्थः । तदाह । **सर्वत्रेति** । महापातकिविशेषभिन्नस्थले प्रक्रान्ते इति भावः। उक्तव्यवस्थायां मानमाह । **तथा चेति** । **देवल**वाक्ये कौशेयपदे नटसर्पायेव पट्टस्य पृथगुक्तेः । दुकूलं सूक्ष्मस्निग्धकार्पासतन्तुनिर्मितं वस्त्रम् । तज्जस्तूलिकादि । सर्वसंग्रहाय पुंस्त्वनिर्देशः। अन्यथा उपदानस्यैव ग्रहणं स्यात् । **आदिना** करसंमार्जनपरिग्रहः । अमेध्यग्रहणमुपलक्षणं यौगिकं वा । **स्वकैः** स्वीयैः । **शोधनैः** करणे ल्युट् तत्साधनैर्द्रव्यैस्तान्येवाह । **धान्येति** । **तु**श्चार्थे । क्वचित्तथा पाठ एव । **क्षारानुगैरपीतीति** । क्षारानुगामिभिः फलजै रसैरपीत्यर्थः । क्षाराम्बुगैरपीति पाठान्तरम् । तन्मिश्रोदकसंयुक्तैरपीति तदर्थः । क्षौमग्रहणमुपलक्षणमित्याह । **क्षौमेति** । **समानेति** । वृक्षप्रभवत्वस्योभयत्र तुल्यत्वादित्यर्थः ।

दुकूलजसमभिव्याहारान्न्यूनतानिरासमाह । **ऊर्णादीति** । तत्प्रतिपादकाविकादिग्रहणमित्यर्थः । **प्राप्त्यर्थमिति** । तत्प्राप्त्यर्थमपीत्यर्थः । **तस्य** तस्यापि । एवं च तुल्यतैवेति भावः । तत्र मानमाह । **तूलिकामिति** । सुपेतीति प्रसिद्धम् । **उपधानम्** । उशीति प्रसिद्धम् । नाशभयादेवाह । **किंचिदिति** । करैरित्यस्य मध्यमणिन्यायेनान्वयः । किरणैर्हस्तैश्चेत्यर्थः । नाशाभावेन सर्वत्र संमार्जनार्थं **मुहुरिति** । **अतीति** । इन्नन्तादिष्ठन् समुच्चित्य द्योतकयाऽतेः प्रयोगो न विरुद्धः । जातावेकवचनमित्याशयेनाह । **पुष्परक्तानीति** । **कुसुमादीति** । केसरपुष्पादीत्यर्थः । **आदिना** कुसुम्भपुष्पादिग्रहः । पुष्परक्तग्रहणं तत्र क्षालनासहप्रतिपादकं न तु स्वार्थबोधकमित्याह । **पुष्पेति** । मञ्जिष्ठया रक्तं मञ्जिष्ठं यत् । एवं व्याख्यातं तत्सूचयन्नाह । **शङ्खेनेति** । **अपिर्देवल**समुच्चये । अत्र सामान्योक्तिस्ततो विशेषः । रागशब्दे कर्मणि घञ् ॥ १८६ ॥

## याज्ञवल्कीये १८७ श्लोकः

**गौरेति** । पीतेत्यर्थः । अनुवृत्त्याऽऽह । **उदकेति** । एवमग्रेऽपि । त्रैरित्यग्रे क्षुमेत्यादिपाठः । शिरशीति प्रसिद्धा । **च मृदिति** । मृन्मयं त्वित्यर्थः । क्वचित्तदपाठ एव । विशेषमाह । **एतच्चोच्छिष्टेति** । **उपघातः** स्पर्शः । **आदिना** मद्यादयः । अत एव "पुनः पाकेन मृन्मयमि"त्युक्त्वा

"मद्यैर्मूत्रपुरीषैश्च ष्ठीवनैः पूयशोणितैः । संस्पृष्टं नैव शुध्येत पुनः पाकेन मृन्मयम् ॥

इत्युक्तं ( अ. ५ श्लो. १२३ ) **मनुना** ।

एवं शुद्धिमुक्त्वा क्वचिदशुचित्वमेव नेत्याह । **कार्विति** । बहुवचनान्तेन समासादाह । **कारव इति** । **रजको** रङ्गारीति प्रसिद्धः । **चैलेति** धोबीति प्रसिद्धः । 'नित्यं शुद्धः कारुहस्त' इति ( अ. ५ श्लो. १२९ ) **मनो**राह । **सद्देति** । अमेध्यलेपादौ नैतदित्याह । **शुचित्वं चेति** । **आदिना** मरणाशौचसंग्रहः । **शिल्पिन**स्तक्षादयः । **दासीति** । बहुवचनान्तद्वंद्वः । तथा च तेषां तत्र स्वकर्माविच्छेद इति भावः । 'पण्यं यच्च प्रसारितमिति' ( अ. ५ श्लो. १२९ ) **मनो**राह । **विक्रेयामिति** । विशेषेण क्रेयमित्यर्थः । क्रय्यामिति यावत् । तथा तु वक्तुमुचितम् । तत्राशुचित्वनिमित्तमाह । **अनेकेति** । **परीति** । परिमृष्टमित्यर्थः । **अप्रेति** । अशुचीत्यर्थः । निमित्तान्तरमाह । **सूतेति** । **ते चेति** । तदीयत्वात्तत्संस्पर्शाच्चेति भावः । तदित्यस्याग्रे क्रियायामन्वयः । ''ब्रह्मचारिगतं भैक्षं नित्यं मेध्यमिति स्थितिः''इति (अ. ५ श्लो. १२९) **मनो**राह । **ब्रह्मेति** । **आदिना** यतिपरिग्रहः । एवं च **मनु**वाक्ये तदुपलक्षणं बोध्यम् । तत्र तन्निमित्तमाह । **अनाचान्तेति** । प्रदानाशुचीति पाठः । तत्कर्तृकप्रदानेत्यर्थः । क्वचिद्भेदेन पाठः । **आदिना** निषिद्धद्रष्ट्र्यादिपरिग्रहः । **अपिना**ऽन्यदोषसमुच्चयः । ''नित्यमास्यं शुचिस्त्रीणामिति'' (अ. ५ श्लो.१३०) **मनु**रपि ॥१८७॥

## याज्ञवल्कीये १८८ श्लोकः

सेकस्य दैवमानुषभेदेन द्वैविध्यमाह । **सेक इति** । उल्लेखनस्याल्पत्वबहुत्वाभ्यां विकल्पमाह । **उल्लेखेति** । उपघातापेक्षया विकल्पमाह । **व्यस्तैरिति** । भूमेस्त्रैविध्यमाह । **अमेध्येति** ।

उभयत्र मानमाह । **तथा चेति** । **एवमिति** । उक्तप्रकाराणि कश्मलानि दूषणानि भूयिष्ठानि यस्यामित्यर्थः । अग्रेऽपि । **अमेध्या** दुष्टा मलिना चेतीति पाठः । दुष्टं दोषस्तदन्विता । दुष्टेति यावत् । मूलाविरोधाय व्यवस्थितविकल्पं प्रतिपादयंस्तदर्थमाह । **यत्रेत्यादि** । आद्यन्तौ विहाय आह । **दहनेत्यादि** । आदिग्राह्यमाह । **ग्रामेति** । त्यक्तयोर्गतिमाह । **मार्जनेति** । एतेन तदसंबन्धनिरासः । **मनुना** तु ( अ. ५ श्लो. १२४ )

''मार्जनेनाञ्जनेनैव सेकेनोल्लेखनेन च । गवां च परिवासेन भूमिः शुध्यति पञ्चधा'' ॥

इत्युक्तम् । पूर्वेण सिद्धेराह । **गृहस्थेति** । अत एव 'मार्जनोपाञ्जनैर्वेश्मेति' ( अ. ५ श्लो. १२२ ) **मनुः** ॥ १८८ ॥

## याज्ञवल्कीये १८९ श्लोकः

इदानीमन्नशुद्धिमाह । **गोघ्रात इति** । प्रागुक्तवर्जत्वनिषेधायाह । **निश्वासेति** । अन्नशब्दस्य सर्वसंग्रहाय यौगिकत्वमाह । **अदनीयेति** । **मात्रं** कार्त्स्न्ये । शिरःस्थानामेव केशवत्वात्सर्वसंग्रहायाह । **लोमादीति** । संभवाभिप्रायको विकल्प इत्याह । **यथेति** । **गौतम**विरोधं परिहरति । **यत्त्विति** ।

"पक्षिजग्धं गवाघ्रातमवधूतमवक्षुतम् । दूषितं केशकीटैश्च मृत्प्रक्षेपेण शुद्ध्यति" ॥ इति **मनुः** ( अ. ५ श्लो. १२५)। यस्योपरि वासोवधूतं तदवधूतं तदिति । एतेन स्वपूर्वविरोधपरिहारोऽपि सूचितः ॥ १८९ ॥

## याज्ञवल्कीये १९० श्लोकः

धात्वादिशुद्धिमाह । **त्रप्विति** । क्षाराम्लोदकवारिभिरित्यत्र द्वंद्वपूर्वककर्मधारयपूर्वकद्वंद्व इत्याशयेनाह । **क्षारोदेति** । वारिणेति पाठेऽप्येवम् । व्यवस्थितविकल्पमाह । **उपेति** । अप्शब्दस्य बहुवचनान्तत्वादाह । **भस्मोदकेनेति** ।समाहारद्वंद्वः। न्यूनतां निराचष्टे। **ताम्रेति** । **रीतिका** पित्तलं **वृत्तलोहं** भरतेति प्रसिद्धम् । **एकेति** । उभयतोस्ताम्रजन्यत्वात्तयोरपि ग्रहणमित्यर्थः । अविरोधायाह । **एतच्चेति** । तत्र मानं **शङ्ख**माह । **मलमिति** । यस्य शोध्यद्रव्यस्योच्छिष्टादिसंयोगजं तज्जं स्वभावजं मलं येन भस्मादिनोदकसहितेनोपहन्यते तस्य तच्छोधनं भवतीत्यर्थः। उक्तार्थं द्रढयति । **अत एवेति** । **साम्येति** । मूलवद्द्वैविध्याभावेनेत्यर्थः । अन्यथा विरोधः स्पष्ट एव । **रैत्यं** पित्तलं यथार्हमित्यपि स्मृत्यन्तरोक्तपरामर्शकं सदुक्तार्थपोषकमेव । एवमपि मूलसदृशस्मृत्यन्तराविरोधायाह । **यस्त्विति** । **परामिति** । अनेन मूलस्यापि अत्रैव तात्पर्यमिति सूचितमत एव तथैव व्याख्यातमपि उक्तार्थस्यावश्यकत्वध्वननाय नियमपक्षेणाप्यनिर्वाहमाह । **यदा त्विति** । **दशभिरिति** । ते च काञ्जिकदाडिमादियोजिता अन्यत्र प्रसिद्धाः ।द्रुगतावित्यानुशासनिकार्थनिरासायाह । **द्रवद्रव्येति**। तत्वावच्छिन्नस्येत्यर्थः । विनिगमकाभावात् । तदाह । **घृतादेरिति** । अत एव वक्ष्यमाण**मनु**संगतिः। तदविरोधायाह । **श्वेति** । **अमेध्यसंस्पृष्टेति च** । अभिपूरणे अवधिमाह । **यावदिति** । द्रवद्रव्यस्यैवेति भावः। । शुद्धिरित्यस्य मध्यमणिन्यायेनान्वयः। एतत्सूचनार्थमेव तथाप्रतीकधारणं तदाह । **शुद्धिरित्यन्विति** । प्रस्थेत्युक्तिफलमाह । **तत इति** । एवं परिमाणतो बह्वल्पत्वमुक्त्वा सामान्यतः प्रकारान्तरेणाप्याह । **बह्वल्पत्वं च देशकालाद्यपेक्षयाऽपीति** । **अपिः** प्रागुक्तसमुच्चये । **आदिना** वक्ष्यमाणपरिग्रहः । तत एव विशेषमाह । **कीटादीति** । **आदिना** मध्यादिपरिग्रहः । स्मार्त्तादावुत्पवनस्यान्यादृशस्य प्रसिद्धत्वादाह । **उत्पवनं चात्रेति** । योग्यतयेति भावः । तदेवाह । **अन्यथेति** । विशेषमाह । **शूद्रेत्यादि** । **स्थितस्य** तु तन्मात्रस्य तु । **नयना** तन्मात्रात् । ताद्विकाराः । **दध्यादयो वर्णापसदाः** प्रागुक्ताः । **अभ्यर्वेति** भक्ष्यभोज्यानां घृतेनाभिधारणाच्छुद्धिरित्यर्थः । पुनःपचनेनैव पात्रान्तरानयनमाक्षिप्तम् ॥ १९० ॥

## याज्ञवल्कीये १९१ श्लोकः

**एवेन**ल्पावनिरासः । संगतिमाह । **एवमिति** । **अमेध्योपेति** । एवं च प्रकरणशेषोऽयम् । अत एव तत्र जातावेकवचनम्। अन्यथैतदानर्थक्यं स्पष्टमेव। तानेवाह। **वसाशुक्रमिति** । अत्र सर्वाणि भिन्नानि पदानि। मूत्रं विडिति पाठः ।**वसा** कायस्नेहः।**मज्जा** शिरोवस्थितपिण्डितस्नेहः। **कर्णविट्** कर्णमलः । **'नखमस्त्रियामि'त्यमरः** ( २।६।८३ ) । **दूषिका** नेत्रमलः । तत्र द्वादशत्वमुपलक्षणमिति सूचयन् **मनु**मुक्त्वा नृपदं मनुष्यमात्रपरम् ।

"मृगाणां महिषाणां च करीषान्वह्निकारणादिति" **रामायणे** मुनीनां महिषादिपुरीषसंग्रहश्रवणात्।

द्वादशत्वमुपलक्षणमिति सूचयन् **मनु**मुक्त्वा **देवलमाह । तथेति ।** अत्रापि पदानि तथैव। मूर्तेत्यत्र श्लेष्मेत्यत्र च समाहारद्वंद्वः। **आर्तवं** शोणितम् । अत्र चेनान्येषामपि लोमादीनां समुच्चयः। मलाधिकारे **बौधायनः ।**

"आददीत मृदोऽपश्चषट्सु पूर्वेषु शुद्धये। उत्तरेषु च षट्स्वद्भिः केवलाभिर्विशुध्यति"॥ इति।

मृत्तोयैरित्यत्र बहुत्वमावृत्तिसूचकमिति ध्वनयन् तदवधिमाह । **गन्धेति ।** एतद्विषयकं प्रागुक्त**मनुं** मनसि निधायास्याः शुद्धेरमेध्याक्तत्वे एव न नियमः, किं त्वन्यत्रापीति, सामान्यत्वं प्रागुक्तमेव प्रथमत्वरूपविशेषकथनद्वारा प्रतिपादयति । **सर्वेति ।** तद्विषये इत्यर्थः । **अशक्ताविति ।** तेषां तत्र शक्त्यभावे इत्यर्थः। उक्ताग्रिममेव **गौतम**माह । **तदद्भिरिति ।** प्रथममद्भिर्मृदा चेत्यर्थः ।

तत् लेपगन्धापकर्षणं **मनो**रेव । मन्वादौ विशेषमाह । **वसार्शाति । मनु**मेवाह । **मद्यैरिति ।** अनतिप्रसंगायाह । **मेध्यत्वं चेति ।** मनुमाह । **अदेहादिति ।**

"ऊर्ध्वं नाभेर्यानि खानि तानि मेध्यानि सर्वशः । यान्यधस्तान्यमेध्यानी"ति तदादिः। तत्र देहात् च्युता एव मला इत्यर्थः। **खानि** इन्द्रियाणि। स्त्रीपुंसोपस्थभेदादुत्तरार्द्धे यानीति बहुवचनम्। **चः** पूर्वसमुच्चये । अत एव भगवान्**पतञ्जलि**रपि "लोमनखं स्पृष्ट्वा शौचं कर्तव्यं व्यपवृक्तं स्पृष्ट्वा नियोगतः कर्तव्यमव्यपवृक्ते कामचारः" इति । तत्रापि विशेषमाह । **पुरुषेति ।** तत्रान्यामेध्यस्पर्शे इत्यत्र मानमाह । **मानुषेति ।** परस्यैतानि व्यपवृक्तानि स्पृष्ट्वेत्यर्थः । **स्वानि** स्वीयानि व्यपवृक्तानि प्रक्षाल्य तावन्मात्रम्

"मज्जानं शोणितं वाऽपि परस्य यदि संस्पृशेत्। स्नात्वाऽपमृज्य लेपादीनाचम्य शुचितामियात्॥

"तान्येव स्वानि संस्पृश्य पूतः स्यात्परिमार्जनात्" ॥ इति पाठान्तरम् ।

क्षालनादित्यर्थः । नाभेरुर्ध्वमित्याद्यंशे तमेव मानमाह । **तथेति । वागिति ।** वाचा शस्तं प्रस्तुतं तदर्थमाह । **शुद्धमिति। अंब्विति।** अंबुना जलेन तन्मात्रेण निर्णिक्तं प्रक्षालितं शिशिरशुद्धौ आरम्भोक्तेनापौनरुक्त्यायास्य विषयमाह । **यत्रेति ।** प्रतिपदोक्ताविशिष्यविहिता अस्यार्थांतरमपि सूचयन्नुक्तरीत्याऽऽह । **प्रक्षेति । अज्ञातं च सदेति** प्रतीकं तदर्थमाह । **यत्काकेति । उपहतं** स्पृष्टम् । **उपयुक्तम् ।** उपभुक्तं च। क्वचित्तथैव पाठः । सदेत्यस्यार्थः **कदाचिदपीति ।** 'मतिबुद्धीति' वर्तमानेक्त इत्याह । **ज्ञायत इति ।** दुष्टदोषनिवारणकरणादाह । **तदुपेति । मनु**रपि ( अ. ५ श्लो. १२७ ) ।

"त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन् । अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते" ॥ इति।

**अदृष्टदोषेऽपीति ।** अज्ञातदोषकेऽपीत्यर्थः । **जग्धि**र्भोजनम् । **अन्योपयोगेति ।** भोजनान्येत्यर्थः ॥ १९१ ॥

१ न्या. सू. ३।२।१८८

## याज्ञवल्कीये १९२ श्लोकः

तोयपदार्थमाह । **उदकमिति** ।

"आपः शुद्धा भूमिगता वैतृष्ण्यं यासु गोर्भवेत् । अव्याप्ताश्चेदमेध्येन गन्धवर्णरसान्विताः" ॥ इति ।

( अ. ५ श्लो. १२८ ) **मनो**राह । **एकगवीति** । **चण्डालादीति च** । **आदिना** मेध्यादिपरिग्रहः । गन्धोऽत्रौपाधिको ग्राह्यः । यद्वा 'गुणसमूहो द्रव्यमिति' **पातञ्जल**सिद्धान्ताभिप्रायकमिदम् । तत्र स्नानासंभवादाह । **आचमेति** । **आदिना** तर्पणादिपरिग्रहः । अशुचित्वनिमित्ताभावादेव सिद्धे पुनरुक्त्यवैयर्थ्यायैवं व्याख्यातं तत्र अविरोधाय मह्यते पूज्यते इति मही त्यर्थानुरोधेन विशेषमाह । **महीति** । अन्तरिक्षस्येदमान्तरिक्षम् **नापीति** शुद्धत्वेत्याद्यनुषङ्गः । अत्र मानमाह । **उद्धृताश्चापीति** । शुध्यन्तीत्यत्रान्तर्भावितण्यर्थता । **चे**नान्तरिक्षसमुच्चयः । **अन्त्यै**रन्त्यजैश्चण्डालादिभिः कूपादौ कृते सत्यपि तत्रेत्याद्यर्थः । **पुल्कसेति** । ते च प्रागुक्ताः । प्रागुक्तनिषेधाविरोधायाह । **निपातितेति** ॥ १९२ ॥

## याज्ञवल्कीये १९३ श्लोकः

**रश्मिरिति** । पदानि प्राग्वत् । रज्जुनिरासायाह । **सूर्यादेः प्रकाशकेति** । **रेकेणेति** उपलक्षितमिति शेषः । **तत्रा**जादिसंबन्धिनि । **पक्षिणा**मित्यत्र रेणुसंस्पर्शादित्यध्याहारः । **मनु**रपि ।

"अजारजः खररजस्तथा संमार्जनीरजः । दीपमञ्चकयोश्छाया हन्ति पुण्यं पुराकृतम्" ॥ इति ।

**तत्स्पर्शे** श्वादिरेणुसंस्पर्शे । **आदिना** प्रक्षालनादि । **अवश्यायेति** । 'अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्'**इत्यमरः** ( १।३।१८ ) । संकोचे मानमाह । **मुखेति** । बहुवचनान्तपाठादाह । **मक्षिकाश्चेति** । गामश्वमितिवत्समुच्चयः । स्पर्श इत्यस्य सर्वान्वय इत्याह । **एते इति** । रश्म्यादिमक्षिकान्ता इत्यर्थः । अशुचित्वनिमित्तसत्वेऽपि न दोष इत्याह । **चाण्डेति** । प्रस्रवणे इत्यत्रान्तर्भावितण्यर्थतेत्याह । **अधोगतेति** । न्यूनतां परिहरति । **वत्सेति** । बालमात्रस्येत्यर्थः । **अनुपरीति** । आक्रान्तमित्यर्थः । **मनुरपि** । ( अ. ५ श्लो. १३० )

"शकुनिः फलपातने ।"प्रस्रवे च शुचिर्वत्सः श्वा मृगग्रहणे शुचिः ।

"श्वभिर्हतस्य यन्मांसं शुचि तन्मनुरब्रवीत् । क्रव्याद्भिश्च हतस्यान्यैश्चाण्डालाद्यैश्च दस्युभिः ॥

"मक्षिकाविप्रुषच्छाया गौरश्वः सूर्यरश्मयः । रजोभूर्वायुरग्निश्च स्पर्शे मेध्यानि निर्दिशेत्" ॥ इति । ॥ १९३ ॥

## याज्ञवल्कीये १९४ श्लोकः

**अजाश्वमिति** समाहारद्वंद्वो वैकल्पिकः । मुखत इत्यत्र सार्वविभक्तिकस्तृतीयान्तात्सप्तम्यन्ताद्वा तसिस्तत्फलितमाह । **अजाश्वयोरिति** । गौर्मुखतो न मेध्येत्यर्थस्तत्फलितमाह । **न गो-**

**रिति** । पूर्वान्वयः । **लक्षणेति** । सोपाधिके चेतने तस्य शक्तेरित्यर्थः । **देहं** तन्मात्रं, **तज्जाः** ततश्च्युताः सर्वेषां सर्वत्र समुच्चयासंभवात् । द्वंद्वपूर्वकषष्ठीतत्पुरुषपूर्वकद्वंद्वेन यथासंभवं व्याचष्टे । **रात्राविति** ॥ १९४ ॥

## याज्ञवल्कीये १९५ श्लोकः

अथाचमनापवादमाह । **मुखजा इति** । विशेषमाह । **अनीति** । तत्र मानमाह । **नेति** । मुखे भवा **मुख्याः** । आचमने करणे ल्युट् । आचमनतोयाबिंदव इत्यर्थः । तत्फलितमाह । **तथा चामतोये इति** । सक्तस्य त्यागासंभवादाह । **स्वयमेवेति** । कालादिवशात् इति भावः । **त्यक्त्वेति** । तत इति शेषः । **मूले** तथोक्तेः ।तावन्मात्रादिति तदर्थः । तेनाचमनानिरासः। अत एव **बौधायनः** ( १।५।१९ ) "स्रस्तेषु तेषु नाचामेत्तेषां संस्रावणाच्छुचिरिति" । संस्रावणं मुखात् बहिर्निरसनमेतेन दन्तसक्तं त्यक्त्वाऽऽचम्य शुद्धिरित्यपास्तम् । पुरुष इति शेषः । विशेषमाह । **अच्युतं त्विति** । **दन्तेति** । तेषु दन्ततुल्यता यथामुखस्थैस्तैर्नाशुचिता तथा तत्सक्तैरपि जिह्वास्पर्शं विहाय यावज्जिह्वया दन्तेषु नोपलभ्यन्ते तावद्दन्तवच्छुचीत्यर्थः । दन्तवदिति च रसानुपलब्धिविषयकम् ।तथा च तान्यप्युपलभ्यमानरसानि चेदशुचीन्येव। तथा च **शङ्खः** ।

"दन्तवद्दन्तलग्नेषु रसवर्जमन्यत्र जिह्वाभिमर्शनादिति" । रस्यते इति रसः । आस्वाद्यमान इत्यर्थः । परमतमाह । **प्रागिति** । भेदेनोपलभ्यमानान्यपि यदि जिह्वासंबन्धादिना न च्यवन्ते तथाऽपि शुचीन्येवेत्येके मन्यन्ते। तदुद्धाराय भूयान्यत्नोऽपि न कार्यस्तदाह **देवलः** ।

"भोजने दन्तलग्नानि निर्हृत्याचमनं चरेत् । दन्तलग्नमसंहार्यं लेपं मन्येत दन्तवत् ॥

"न तत्र बहुशः कुर्याद्यत्नमुद्धरणे पुनः । भवेदशौचमत्यर्थं तृणवेधाद्व्रणे कृते" ॥ इति ।

दन्तलग्नं जिह्वास्पृष्टं दन्तलग्नं 'दंतस्पष्टस्य संहार्यस्यापि अन्यत्र जिह्वेति' **गौतमो**क्त्याऽऽचमननिमित्तत्वाभावात् । च्युतेषु आस्रावतुल्यता भवेत् । आस्रावो मुखस्थः श्लेष्मा लालेति यावत् । तानि गिलन्नेव शुचि । आस्रावस्य हि त्यागे एवाशुचित्वं न गिलने तद्वत् इति तात्पर्यम् । स यथाऽशुचिकरो निगीर्णो न भवति एवमेतेऽपि तथाकृताः समा न भवन्तीत्यर्थः। विरोधं मिथ परिहरति । **निगेति** । नन्वेवं तत्रैवानर्थक्यं त्यागनिरासेनैव तस्य तत्वस्य वक्तव्यत्वादत आह । **निगिरन्निति** । चर्वणनिगरणे पर्यायववाचकाविति भावः । **हेमाद्रिस्तु** चर्वणनिगलनयोर्लोकसिद्धभेदमाश्रित्य चर्वणनिवृत्तये एवकारः । तेन चर्वणे **विष्णू**क्तमाचमनं भवत्येव। एवं च चर्वणं विना गिलनत्यागौ नाचमननिमित्ते इत्याह । **आचमे**दित्यस्याग्रेऽप्युभयत्र संबन्धः प्रसंगादाह । **तांबूलेति** । फलादेरपीत्यर्थः ताम्बूलेक्ष्विति द्वंद्वोत्तरपदकः समाहारद्वंद्वः । लेचफले चैवेति वा पाठः । **पैठीनसिः** । "भूमिगता बिन्दवः परामृष्टाः पूता विप्रुषश्च शुद्धाद्विरोमक्लिन्नेष्वाचामेदिति" । बिन्दवोऽत्राचनाबिन्दवः । मूले तथोक्तेः । परामृष्टाः स्पृष्टाः पूतानाप्रायत्यकराः । विप्रुषश्च मुखभवा भूगताः शुद्धाः ते च ताश्चाङ्गपतिता अपि रोमद्वयार्द्रीभावमापादयितुं समर्था एवाचमननिमित्तं रोमद्वयपर्यन्तं तैरङ्गेषु क्लिन्नेषु सत्स्वित्यर्थः। **आपस्तम्बः** ( १।१६।११ )"न श्मश्रुभिरुच्छिष्टो भवत्यन्तरास्ये सद्भिर्यावन्न हस्ते नोपस्पृशति" । इति **मनुः** । ( अ. ५ श्लो. १४१ ) "नोच्छिष्टं कुर्वते मुख्या विप्रुषोऽङ्गं नयन्ति याः" । इति ।

"स्पृशन्ति बिन्दवः पादौ य आचामयतः परान्। भूमिगैस्ते समाज्ञेया न तैरप्रयतो भवेत्" ॥

इति च । भूमिगैः भूगताचमनबिन्दुभिः। पादावित्युक्तेरङ्गांतरस्पर्शो दुष्ट एवेति **मेधातिथिः। एवं** च यत्रापि स्मृतौ शरीरपदं तत्पादपरमेवेत्याहुः। अन्ये तु पादग्रहणमविवक्षितम् । तथा च **यमः।**

"प्रयान्त्याचमतोऽश्वापि शरीरे विप्रुषो नृणाम्। उच्छिष्टदोषो नास्त्यत्र भूमितुल्यास्तु ताः स्मृता"॥इति।

एते च भूम्यभिघातोत्थिता एव स्पृष्टाः शुद्धाः नान्तरालस्पृष्टाः । "भूमिगता बिन्दवः परामृष्टाः पूता" इति प्रागुक्त**पैठीनसेः। वसिष्ठः**

"वेदाभ्यासे मुखाज्जाताः शुद्धा एव तु विप्रुषः। श्मश्रु चास्यगतं शुद्धं यद्यङ्गैर्न तु संस्पृशेत्"॥ इति। दन्तसक्तविषये **वसिष्ठः** ( अ. ३ सू. ४१ )

"दन्तवद्दन्तलग्नेषु यच्चाप्यन्तर्मुखे भवेत्। आचान्तस्यावशिष्टं स्यान्निगिरन्नेव तच्छुचिः" ॥ इति।

दंन्तलग्नादन्यदपि अन्नकणादि यत्प्रमादावशिष्टमाचमनोत्तरमुपलभ्यते तदपि गिलन्नेव शुचिरित्यर्थः ।

**अङ्गिराः ।**

"मधुपर्के च सोमे च अप्सु प्राणाहुतीषु च। नोच्छिष्टस्तु भवेद्विप्रो यथाऽत्रेर्वचनं तथा"॥ इति।

इदं च प्राणाहुतिसाहचर्यादापोशनविषयमाचमनोदकपानविषयम् । अन्यत्र पीत्वाऽपोऽध्येषमाणश्चेत्याचमनविधेरिति **भूपः। हेमाद्रिस्तु** "अप्सु 'अमृतापिधानमसी'त्यनेनोदकपाने कर्तव्ये भुक्तवानपि मन्त्रोच्चारणं प्रतिपन्नोच्छिष्ट"इत्याह । तन्न । मन्त्रपाठविधिबलादेवोच्छिष्टस्यापि मन्त्रप्राप्तेः फलादौ विशेषमाह **शातातपः ।**

"दन्तलग्ने फले मूले भुक्तस्नेहावशिष्टके। ताम्बूले चेक्षुदण्डे च नोच्छिष्टो भवति द्विजः" ॥ इति । पाठान्तरम् ।

"दन्तलग्ने फले मूले भक्ष्ये स्नेहे तथैव च । ताम्बूले चेक्षुदण्डे च नोच्छिष्टो भवति द्विजः" ॥ इति ।

व्याख्याकृदुक्तपाठस्तु अन्य एव। **फले** कटुतिक्तकषाये जातीफलादौ सदाचारादिति **राजा**। फलमूले चाग्निपक्वभिन्ने आचारादिति **रत्नाकरः** । भक्ष्ये फलमूलातिरिक्ते कटुकषाये भुक्तस्नेहे इति पाठान्तरमत्यन्तानिर्हार्ये इति तदर्थः।

**अभियुक्ताः पठन्ति ।**

"खर्जूरी तालकंदश्च मृणालं पद्मकेसरम् । नारिकेलं कशेरुं च नोच्छिष्टं मनुरब्रवीत् ॥

"ताम्बूलं च कषायं च सर्वं च जलसम्भवम् । मधुपर्कं च सोमं च लवणार्कं तथा क्वचित् ॥

"त्वग्भिः पत्रैर्मूलफलैस्तृणकाष्ठमयैस्तथा। सुगन्धिभिस्तथा द्रव्यैर्नोच्छिष्टो भवति द्विजः"॥ इति।

अत्र सर्वत्रानुच्छिष्टत्वोक्त्योत्तराचमननिषेधः । भोक्ष्यमाणत्वनिमित्तमाद्याचमनं तु भवत्येवेति बोध्यम् ।

अन्ये तु "पीत्वापोऽध्येष्यमाणश्चाचामेत्प्रयतोऽपि सन्निति" **मनुना** प्रयतस्यापि नैमित्तिकतद्विधानादुच्छिष्टत्वनिषेधेनाशुचित्वाभावे सिद्धे तन्निमित्तकाचमननिवृत्तावपि पानभोजनादिनिमित्तकं तदावश्यकमेव । अत एव "मधुपर्कानन्तरमाचम्य प्राणान्संस्पृशती"त्यादिना **गृह्ये** आचमनं विहितम् । अत एव **भट्टै**रपि ताम्बूलभक्षणोत्तरमनाचमनमनाचार इत्युक्तम् । अनुच्छिष्टत्वोक्तिश्च तत्संभाषणे तत्स्पर्शे वा परेषामप्रायत्याभावाय तस्यापि शूद्रादिस्पर्शे दोषाभावाय च केषुचित्तदुत्तरमाचमनं विनैव कर्माधिकारबोधनाय च पुरुषप्रत्यवायेऽपि कर्मणः सांगत्वाक्षतेः । **श्रीदत्तस्वरसो**ऽप्येवमेव । 'भुक्त्वा ताम्बूलचर्वणमि'त्यस्य त्वयमर्थः । ताम्बूलेतरभोजनेष्वादावाचमनमावश्यकम् इह तु नेति । यद्वा चर्वणानिमित्तं न, भक्षणनिमित्तं तु भवत्येव । यदि भक्षणचर्वणयोर्भेद इति अप्स्वित्यस्यापि विधिपूर्वकाचमने इत्यर्थः। अन्यथाऽनवस्थाप्रसंगात् । एतदर्थसिद्धमेव वचनम् । "अवैधाचमने त्वप्रायत्यमेव। हृदयस्पृशस्त्वेवाप उपस्पृशेदुच्छिष्टो हैवातोऽन्यथा भवतीति" **गोभिला**दित्याहुः । **पैठीनसिः** । "अन्तरुदकमाचान्तोऽतरेव शुद्धो भवति बहिरुदकमाचान्तो बहिरेव शुद्धो भवति तस्मादन्तरेकं पादं बहिरेकं पादं कृत्वाऽऽचामेत्सर्वत्र शुद्धो भवतीति" ।

**गौतमः** ( अ. १ सू. २७ ) "द्रव्यहस्त उच्छिष्टो निधायाचामेदिति" । मूत्रपुरीषादिकर्म भोजनादि चोच्छिष्टनिमित्तं द्रव्यपदमन्नादिभक्ष्यपरम् । तथा च **वसिष्ठः**

"प्रचरन्नभ्यवहार्येषूच्छिष्टं यदि संस्पृशेत् । भूमौ निधाय तत् द्रव्यमाचम्य प्रचरेत्पुनः" ॥ इति ।

प्रचरन् गच्छन्नभ्यवहार्येषु हस्ते सत्सु इत्यर्थः । उच्छिष्टशब्दोऽत्राचमनार्हाशुचिवचनः । स्नानार्हाशुचिवचनत्वे तु आचमनमात्रविधिविरोधः स्यात् । **शङ्खः** । 'अभ्युक्षेद्द्रव्यं चेति' । द्रव्यमभ्यवहार्यमेवं च द्रव्यहस्तस्याचमनाच्छुद्धिर्द्रव्यस्य निधानाभ्युक्षणाभ्यामिति दर्शितम् । यदा तु द्रव्यस्यैव साक्षादुच्छिष्टस्पर्शस्तदा तत् त्याज्यमेव । "उच्छिष्टमगुरोरभोज्यं स्वमुच्छिष्टमुच्छिष्टोपहतं चेति" **वसिष्ठात्** ( अ. १४ सू. २०–२१ ) ।

"अनिधायैव तत्द्रव्यमाचान्तः शुचितामियादिति" ( अ. ५ श्लो. १४३ ) **मनुस्तु** अभ्यवहार्यातिरिक्तद्रव्यविषय इति **विश्वरूपादयः । बौधायनः** ( १।५।२२ ) । "तैजसं चेदादायोच्छिष्टी स्यात्तदुदस्याचम्यादास्यन्नद्भिः प्रोक्षेत स चेदन्येनोच्छिष्टी स्यात्तदाऽप्येवमथ चेदद्भिरुच्छिष्टी स्यात्तदाऽप्येवमेतदेव विपरीतममत्रे वानस्पत्ये विकल्प" इति । तैजसं स्वर्णपात्रादिसपात्रग्रहीता अन्येनोच्छिष्टेन स्पृष्ट उच्छिष्टी स्यात् अथ चेदिति अद्भिरुच्छिष्टोदकैः । अमत्रं मृत्पात्रं विपरीतमादानापेक्षं वैपरीत्यं तेन तदुदस्य परित्यज्याचमेत् न पुनस्तद्गृह्णीयादिति **राजा** । विपरीतमनुदस्येदिति यावदिति **स्मृतिचन्द्रिका** । अमत्रं तैजसातिरिक्तं वानस्पत्ये वार्क्षे । इदं वस्त्रादीनामुपलक्षणं विकल्पो वैपरीत्यस्य । **बृहस्पतिः** ।

"अरण्येऽनुदके रात्रौ चौरव्याघ्राकुले पथि । कृत्वा मूत्रं पुरीषं च द्रव्यहस्तो न दुष्यति ॥

"शौचं तु कुर्यात्प्रथमं पादौ प्रक्षालयेत्ततः । उपस्पृश्य तदभ्युक्ष्य गृहीतं शुचितामियात्" ॥ इति ।

---

१ [illegible] ।

द्रव्यपदमन्नादेरपि संग्राहकमिति **स्मृतिचन्द्रिका** । अत्र 'गृहीतं शुचितामियात्' इत्यनेन शौचात्पूर्वं भूमौ द्रव्यनिधानमाक्षिप्यते ।

**स्मृतिचन्द्रिकायाम्** ।

"भूमावन्नं प्रतिष्ठाप्य कृत्वा शौचं यथाविधि। उत्संगोपात्तपक्वान्नमुपस्पृश्य ततः शुचिः" ॥ इति ।

**आपस्तम्ब**वाक्यमुदाहृत्य पक्वान्नं प्रथमं भूमौ निधाय शौचं कृत्वा **तदन्नमङ्के** निधायाचम्य शुध्यतीत्युक्तम् ।

**मार्कण्डेयस्तु** । शौचमप्यनिधायैवेत्याह ।

"पक्वान्नेन गृहीतेन मूत्रोच्चारं करोति यः । अनिधायैव तद्द्रव्यमङ्के कृत्वा समाश्रितम् ॥

"शौचं कृत्वा यथान्यायमुपस्पृश्य यथाविधि । अन्नमभ्युक्षयेच्चैवमुद्धृत्यार्कस्य दर्शयेत् ॥

"त्यक्त्वाऽग्रमात्रं वा तस्माच्छेषं शुद्धिमवाप्नुयात्" । इति ॥ १९५ ॥

## याज्ञवल्कीये १९६ श्लोकः

आचमनप्रसंगात् क्वचित् द्विराचमनेन शुद्धिं प्रतिपादयन् द्विराचमननिमित्तान्याह । **स्नात्वेति** । बहनृतभाषणे प्रायश्चित्तान्तरसत्वादाह । **अल्पानृतोक्त्यादीति** । तत्र रोदनांशे मानमाह । **तथा चेति** । अन्यांशे मानमाह । **मनुरपीति** । **प्रयतोऽपि** । आचान्तोऽपि इदमल्पानृतपरमिति न विरोधः। अनेन न कृत्स्नाचमनपदार्थस्याभ्यासो विधीयते [ तेन ] द्विराचामेदित्यत्र पानोद्देशेन द्वित्व-संख्याविधानात्रिराचामेदितिवन्न कृत्स्नाचमनपदार्थस्याभ्यासः । भोक्ष्यमाणस्तु प्रयतोऽपि **द्विराचामेद्भिः** परिमृजेत्सकृदुपस्पृशेदित्यत्र क्लृप्तोपकारपरिमार्जनोपस्पर्शनयोः पुनश्रवणादहमेधीयावत् । किन्तु द्वित्वसंख्याविशिष्टमाचमनमपूर्वं विधीयते तेनान्यत्र नाचमनपदार्थाभ्यास इति तत्वमाचमननियमाति-क्रमे सौत्रं प्रायश्चित्तमानमितोः प्राणायाम इति ।

**स्मृत्यन्तरेऽपि** ।

"गायत्र्यष्टशतं चैव प्राणायामत्रयं तथा । प्रायश्चित्तमिदं प्रोक्तं नियमातिक्रमे सति" ॥ इति ।

'प्राणायामशतं कार्यम्'इत्यादिना मूलेऽप्यग्रे व्यक्तीभविष्यति व्याख्याने । **आदिना** कलिला-दिपरिग्रहस्तथा च **पैठीनसिः** । "कलिलकासश्वासागमे रथ्याचत्वरश्मशानक्रान्तेष्वाचान्तः पुनरा-चामेदिति" । कलिलं कठिणः श्लेष्मा श्वासो व्यायामादिकृतः प्राकृतस्य सदातनत्वात्। चत्वरो भूतादि-बलिस्थानमिति **राजा** । **शङ्खः** "शुक्तवाक्याभिधाने पुनराचामेदिति" । शुक्तं परुषम्। **विष्णुः** "रुदि-त्वाऽऽचान्तः पुनराचामेदोष्ठौ च संस्पृश्य यत्रालोमकाविति" । **अपिना**ऽन्तपरिग्रहः । आपेति । **व्यासोऽपि** ।

"प्रक्षाल्यपाणिपादौ च भुञ्जानो द्विरुपस्पृशेत्" । इति । भुञ्जानो भोक्ष्यमाणः ।

**बौधायनोऽपि** ।

"भोजने हवने दाने उपाहारे प्रतिग्रहे । हविर्भक्षणकाले च तद्विराचमनं स्मृतम्" ॥ इति ।

इदं संध्याद्वयस्य जपपूजयोश्चोपलक्षणमि**त्यभियुक्ताः** । एतानि च ज्ञातान्येव निमित्तानि 'द्रप्साविद्धां तनुं लक्ष्येति' **देवल**वचने एकत्र दृष्टत्वात् । द्रप्सा घनीभूतः श्लेष्मा । आचाराच्च पर्यवसितं स्पष्टार्थं वक्तुमादौ विशेषमाह । **स्नानपानयोरिति** । तथा च जलमित्यनुवृत्तौ **हारीतः** । 'नोत्तरेदनुपस्पृश्येति' । उत्तरेदाप्लवेदित्यर्थः ।

**यमोऽपि ।**

"उत्तीर्योदकमाचम्य अवतीर्य उपस्पृशेत् । एवं स्यात् श्रेयसा युक्तो वरुणश्चैव पूजितः" ॥ इति ।

आचम्यावतीर्योत्तीर्य चोपस्पृशेदित्यन्वयः । अवतीर्य प्रविश्य उत्तीर्य निर्गत्येति **भूपः** । पानांशे मूलं चिन्त्यमारम्भे तत्रैव शेषेषु अध्ययनान्येषु स्नानादिषु एतद्दार्ढ्यायैवात्र प्रसंगादाचमननिमित्तान्यन्यान्यप्युच्यन्ते । तत्र ताव**द्देवलः** ।

"रेतोमूत्रशकृन्मोक्षे भोजनेऽध्वपरिश्रमे । शौचमेवं विधं प्रोक्तमीषच्चान्यत्र वर्तते" ॥ इति ।

भोजने कृते करिष्यमाणे च अध्वपरिश्रमे वर्षासु ग्रामसंकरादिदूषिताध्वसंचरणे । तत्र **यमोक्तं शौचं** कर्तव्यम् । यथा

"सकर्दमे तु वर्षासु प्रविश्य ग्रामसंकरम्। जङ्घाभ्यां मृत्तिकास्तिस्रः पद्भ्यां तु द्विगुणाः स्मृताः" ॥इति।

ग्रामसंकरं ग्रामावकरस्थानम् । एतेभ्योऽन्यत्रेषदपि किंचिदङ्गत्यागेऽप्याचमनं सिध्यतीत्यर्थः ।

**वायुपुराणे ।**

"निष्ठीवने तथाऽभ्यङ्गे तथा पादावसेचने । उच्छिष्टस्य च संभाषादशुच्युपहतस्य च ॥

"सन्देहेषु च सर्वेषु शिखां मुक्त्वा तथैव च" ।

संदेहेषु आचमनविषयकेषु तन्निमित्तविषयकेषु वेति **भूपः** । शिखामोचननिमित्तमाचमनं पुनः शिखां बध्वैव कार्यं तद्बन्धनस्य सर्वकर्माङ्गत्वात् । तथा

"विना यज्ञोपवीतेन नित्यमेवमुपस्पृशेत् । उच्छिष्टस्यापि संस्पर्शे दर्शने चान्त्यजन्मनः" ॥ इति ।

यज्ञोपवीतत्यागनिमित्तं तद्धारणोत्तरमेवोक्तयुक्तेः ।

**ब्राह्मे ।**

"क्षुते श्लेष्मपरित्यागे धीते वा भक्षिते सति । अववर्णस्य संभाषे सुप्ते वा दन्तधावने" ॥

आचामेदिति । धीते पीते । अववर्णश्चण्डालादिः । संलापः परस्परभाषणम् ।

**संवर्तः ।**

"चर्मारं रजकं वेणं धीवरं नटमेव च । एतान् स्पृष्ट्वा नरो मोहादाचामेत्प्रयतोऽपि तान्" ॥ इति ।

**रजको वस्त्ररञ्जनकर्ता ।**

**कौर्मे** ।

"चाण्डालम्लेच्छसंभाषे स्त्रीशूद्रोच्छिष्टभाषणे । उच्छिष्टं पुरुषं स्पृष्ट्वा भोज्यं वाऽपि तथाविधम् ॥
"आचामेदश्रुपाते वा लोहितस्य तथैव च । अग्नेर्गवामथालम्भे स्पृष्ट्वा प्रयतमेव वा ॥
"स्त्रीणामथात्मनः स्पर्शे नीवीं वा परिधाय च । उपस्पृशेज्जलं चार्द्रं तृणं वा भूमिमेव वा ॥
"केशानां चात्मनः स्पर्शे वाससोऽक्षालितस्य च" ॥ इति ।

**आपस्तम्बः** ( १।१६।१४ ) "समूत्रपुरीषलेपानन्नलेपान् रेतसश्च ये लेपास्तान् प्रक्षाल्य पादौ वाऽऽचम्य प्रयतो भवतीति" । अन्नलेपोऽन्नमयोद्वर्तनादिलेपः । उच्छेष उच्छिष्टम् । **हेमाद्रौ हारीतः** " रथ्यामाक्रम्य सुषुप्सुः कृतमूत्रपुरीषो भक्षित्वा चेति " । **बृहस्पतिः** ।

"अधो वायुसमुत्सर्गे आक्रन्दे क्रोधसंभवे । मार्जारमूषकस्पर्शे प्रहासेऽनृतभाषणे ॥
"निमित्तेष्वेषु धर्मार्थे कर्म कुर्वन्नुपस्पृशेदिति" । उपस्पर्श आचमनम् ।

**बौधायनः**।(१।५७४)"नीवीं विस्रस्य परिधायोपस्पृशेदार्द्रगोमयं तृणं भूमिं वा संस्पृशेदिति"। **आपस्तम्बः** । (१।१६।१४) ॥ " स्वप्ने क्षवथौ शिंघाणिकाश्रवालम्भे लोहितस्य केशानामग्नेर्गवां ब्राह्मणस्य स्त्रियाश्चालम्भे महापथं गत्वाऽमेध्यं चोपस्पृश्याप्रयतं मनुष्यं नीवीं च परिधायाप उपस्पृशेदिति" । स्वप्नः स्वापः । क्षवथुः क्षुतं । शिंघाणिका नासिका मलमश्रुनेत्रमलं तयोरालम्भे स्पर्शे । लोहितस्य रुधिरस्य केशानां शिरोगतानां भूगतानां चाग्न्यादीनां चतुर्णामालम्भे अमेध्यं मूत्रपुरीषादि ताम्बूलनिषेकादि च उपस्पृश्याप्रयतं च मनुष्यं नीवीं प्रसिद्धां तद्योगादधोवासो लक्ष्यते । परिधायाप उपस्पृशेत् केषुचित्स्नानं केषुचिदपामुपस्पर्शनं केषुचिदाचमनं स्पर्शनमात्रं यावता प्रयतो मन्यते इति **हरदत्तः** । प्रच्युतानामिति तु **स्मृत्यर्थसारे** । अत्राग्निगोविप्रस्पर्शे यदाचमनं तदाचमनानुकल्पत्वेन विहिततत्स्पर्शेतरतत्स्पर्शनिमित्तकं न तु तत्स्पर्शजन्याप्रायस्त्यनिमित्तकमिति **कल्पतरुः** । कर्मकालिक एव तेषां स्पर्शः । आचमननिमित्तमिति तु **स्मृत्यर्थसारे** । महापथो राजमार्गः । अमेध्यानि मलाश्च प्रागुक्ताः 'ऊर्ध्वं नाभेर्वसाशुक्रम्' इत्यादिना । **देवलः** ।

"उच्छिष्टं मानवं स्पृष्ट्वा भोज्यं वाऽपि तथाविधम् । तथैव हस्तौ पादौ च प्रक्षाल्याचम्य शुध्यति" ॥ इति।

तथाविधमुत्सृष्टम्

"यदंभः शौचनिर्मुक्तं क्षितिं प्राप्य विनश्यति। प्राक्षाल्याशुचिलिप्तं च तत्स्पृष्ट्वाऽऽचम्य शुध्यति" ॥ इति।

शौचजलार्द्रभूभागं संस्पृश्याशुचिलिप्ताङ्गं प्रक्षाल्याचम्य शुध्यतीत्यर्थः ।

**हारीतः** " मूत्रपुरीषोत्सर्गदर्शने देवतामभिगन्तुकाम आचामेदिति " । **आपस्तम्बः** ( १।१५।७ ) " रिक्तपाणिर्वयसे उद्यम्याप उपस्पृशेच्छक्तिविषये न मुहूर्तमप्यप्रयतः स्यान्नग्नो वेति" । रिक्तपाणिर्लोष्ठादिशून्यहस्तः वयसे पक्षिणे तदपसरणाय द्वितीयाबहुवचनान्तत्वे तन्नोद्दिश्येति शेषः । उद्यम्य पाणिं तत्त्वेति शेषः । शक्तिविषये शक्तौ सत्यां नग्नो वेत्यत्रापीदं संबध्यते । आचमनयोग्यस्थलं दृष्ट्वैव मूत्रपुरीषादि कृत्वाऽऽचमनादि कुर्यादित्यर्थः ।

**शङ्खः ।**

"कृत्वा मूत्रं पुरीषं च स्नात्वा भोक्तुमनास्तथा । रथ्यामाक्रम्य चाचामेद्वासो विपरिधाय च" ॥ इति ।

**मार्कण्डेयपुराणे ।**

"देवार्चनादि कार्याणि तथा गुर्वभिवादनम् । कुर्वीत सम्यगाचम्येति" ।

**प्रजापतिः ।**

"उपक्रमे विशिष्टस्य कर्मणः प्रयतोऽपि सन् । कृत्वा च पितृकर्माणि सकृदाचम्य शुध्यति" ॥ इति ।

विशिष्टस्य विहितस्य । **विष्णुः** "पञ्चनखास्थ्यस्नेहं स्पृष्ट्वाऽऽचामेदिति" । **पाद्मे ।** "चण्डालादीन् जपे होमे दृष्ट्वाऽऽचामेद्द्विजोत्तमः । श्वादीन् दृष्ट्वा तथैवापि कर्णं वा दक्षिणं स्पृशेत्" ॥ इति ।

**मनुः ।** (अ. ५ श्लो. १४) ।

"वांतो विरिक्तः स्नात्वा तु घृतप्राशनमाचरेत् । आचामेदेव भुक्त्वाऽन्नं स्नानं मैथुनिनां स्मृतम्" ॥ इति ।

विरिक्तः प्रकृताधिकविरेकवान् । भुक्त्वाऽऽन्नं वान्तो विरिक्तो वाऽऽचामेदेव न स्नायादित्यर्थः ।

**शातातपः ।**

"रजकश्चर्मकृच्चैव व्याधजालोपजीविनौ । चेलनिर्णेजकश्चैव नटः शैलूषकस्तथा ॥
"मुखेभगस्तथा श्वा च वनिता सर्ववर्णगा । ध्वजी चक्री वध्यघाती ग्रामकुक्कुटशूकरौ ॥
"एभिर्यदङ्गं संस्पृष्टं शिरोवर्जं द्विजातिषु । तोयेन क्षालनं कृत्वा आचान्तः शुचितामियात्" ॥ इति ।

चक्री तैलिकः । ध्वजी शौण्डिकः । **देवलः ।**

"उपस्पृश्याशुचिस्पृष्टं तृतीयं वाऽपि मानवः । हस्तौ पादौ च तोयेन प्रक्षाल्याचम्य शुध्यति" ॥ इति ।

तृतीयमशुचिस्पृष्टस्पृष्टम् ।

"विप्रो विप्रेण संस्पृष्ट उच्छिष्टेन कथञ्चन । आचम्यैव तु शुद्धः स्यादापस्तम्बोऽब्रवीन्मनुः" ॥ इति च ।

स्नानानन्तरभाव्याचमने विशेषमाह **दक्षः ।**

"स्नात्वाऽऽचमेत्सदा विप्रः पादौ कृत्वा स्थले जले । उभयोरप्यसौ शुद्धस्ततः क्षेमो भवेदि"ति ॥

एवं प्रागपि । इत्यन्यत्र स्पष्टमाचमनं त्रिविधं कर्माङ्गं शुध्यर्थं नैमित्तिकं चेति तदुक्तं **स्मृत्यन्तरे ।**

"स्वाध्याये भोजनारम्भे स्नाने श्राद्धे कृते सति । यत्पिण्डं पितृयज्ञे च तदङ्गार्थमुपेष्यते ॥
"कृत्वा मूत्रपुरीषे च भुक्त्वा पीत्वा तथैव च । निष्ठीव्यं दन्तलग्ने च एतच्छुद्ध्यर्थमिष्यते ॥
"क्षुते रथ्यागमे स्वप्ने अभक्ष्यस्पर्शने तथा । यन्नीवीपरिधानादौ तन्नैमित्तिकमुच्यते" ॥ इति ।

एवमन्यत्राप्यनुसंधेयम् ।

अथाचमनकल्पः तत्र **पराशरः** ( १।१२।१९ ) ।

"पतितानां च संभाषे दक्षिणं श्रवणं स्पृशेत्" । इति ।

"प्रभासादीनि तीर्थानि गङ्गाद्याः सरितस्तथा । विप्रस्य दक्षिणे कर्णे सन्तीति मनुरब्रवीत्" ॥

इत्यर्थवादेनायं विप्रं प्रत्येवानुकल्प इति लभ्यते ।

"कुर्यादाचमनं स्पर्शं गोपृष्ठस्यार्कदर्शनम् । कुर्वीतालम्भनं वाऽपि दक्षिणश्रवणस्य तु" ॥

इति **मार्कण्डेयपुराणे** ।

आर्द्रतृणगोमयभूमिस्पर्शोऽपि **बौधायनो**क्तत्वेन प्रागुक्तः । तथा सत्यामाचमनाशक्तावभावे सलिलस्य च पूर्वोक्तेषु निमित्तेषु दक्षिणं श्रवणं स्पृशेत् ।

"मूत्रोच्चारं महारात्रौ कुर्यान्नाचमनं तु यः । प्रायश्चित्तीयते विप्रः प्राजापत्यार्द्धमर्हति" ॥

इत्यलम् । तन्निषेधादिकं त्वन्यत्र स्फुटं तत एव बोध्यम् । तत्र किंचिदुच्यते । "तिष्ठन्नाचामेत्प्रह्वो वेति" **आपस्तम्बः** (१।१६।१–२)। अयं च पानीयपानस्य निषेधः । "आसीनस्त्रिराचामेदिति" सूत्रात् । **गौतमोऽपि** । ( अ. ९ सू. १०–११ ) "नाञ्जलिना पिबेन्न तिष्ठन्निति" । **अन्ये तु** अस्मादेव निषेधात् क्वचित्तिष्ठतः प्रह्वस्य चाचमनमनुज्ञातं भवति । तेन भूमिगतास्वप्सु तीरस्यायोग्यत्वे ऊरुदघ्ने नाभिदघ्ने वा जले स्थितस्याचमनं भवति । आचमनं संध्यादेरप्युपलक्षणमत एव **गौतमेनापि** ( अ. ९ सू. ११ ) । "अनुतिष्ठन्नुद्धृतोदकेनाचामेदिति" । उद्धृतोदकेन तिष्ठतः प्रतिषेध उक्तः ।

एवं चेदं स्थलविषयमुक्तरीत्येति जले तथाऽऽचमने न दोषः । अत एव **विष्णुः** ।

"जान्वोरूर्ध्वं जले तिष्ठन्नाचान्तःशुचितामियात् । अधस्ताच्छतकृत्वोऽपि समाचान्तो न शुध्यति" ॥ इति ।

अत्राधोनिषेधं कुर्वता जानुमात्रेऽपि तिष्ठत आचमनमनुमतं तदधःस्थितो बहिरुत्तीर्यैवाचामेदित्यर्थः।

**हारीतः** ।

"आर्द्रवासा जले कुर्यात्तर्पणाचमनं जपम् । शुष्कवासाः स्थले कुर्यात्तर्पणाचमनं जपम्" ॥

"आर्द्रवासाः स्थलस्थस्तु यदाचामेन्नराधमः । वस्त्रनिश्च्योतनं तस्य प्रेतास्तत्र पिबन्ति हि" ॥ इति ।

**हेमाद्रौ कौशिकः** ।

"अपवित्रकरः कश्चिद्ब्राह्मणोऽप उपस्पृशेत् । अपूतं तस्य तत्सर्वं भवत्याचमनं तथा" ॥ इति ।

अकृतमिति पाठान्तरम् । तत्कर्मार्थकाचमनपरम् ।

"पवित्रकर आचामेच्छुचिः कर्मार्थमादरात् । कुशमात्रकरो वाऽपि दर्भमात्रकरोऽपि वा" ॥

इति **स्मृत्यर्थसारात्** । एवं च ।

**"अपवित्रेण हस्तेन कुर्यादाचमनक्रियाम् । नोच्छिष्टं तत्पवित्रं तु भुक्त्वोच्छिष्टं तु वर्जयेत्" ॥**

इति **मार्कण्डेयवाक्य**मपि तत्परमेव । अन्यत्र पवित्रदोषाभावपरं च । एवम् ।

"उभयत्र स्थितैर्दर्भैः समाचामति यो द्विजः । सोमपानफलं तस्य भूत्वा यज्ञफलं लभेत्" ॥ इति ।

हस्तद्वये पवित्रप्रशंसापर**गोभिलो**ऽपि तत्पर एव । यत्तु

"वामहस्ते कुशान्कृत्वा समाचामति यो द्विजः । उपस्पृष्टं भवेत्तेन रुधिरेण मलेन वा" ॥ इति ।

[1] **हारीतः** ।

"वामहस्ते स्थिते दर्भे दक्षिणेनाचमेद्यदि । तद्रक्तं तु भवेत्तोयं पीत्वा चांद्रायणं चरेत्" ॥ इति ।

**कौशिकश्च**, तद्वामहस्तमात्रधृतकुशपरम् ।

**मदनरत्नादौ हारीतः** ।

"सव्यापसव्यौ कुर्वीत सपवित्रौ करौ द्विजः । ग्रन्थिर्यस्य पवित्रस्य न तेनाचमनं चरेत्" ॥ इति ।

"जातिमात्रो भवेद्दर्भः सपवित्रः कुशः स्मृतः । सप्तपत्रस्तु कुतपश्छिन्नाग्रस्तृणमुच्यते" ॥ इति ।

सपवित्रो द्विशलाक इत्यलम् ॥ १९६ ॥

## याज्ञवल्कीये १९७ श्लोकः

**रथ्येति** । पूर्वनिपातप्रकरणस्यानित्यत्वात्सर्वत्र प्रयोगसाधुता बोध्या । 'इष्टकचिते'त्यत्रेष्टकेषीकेति ह्रस्वः । रथं वहतीति रथ्येत्यर्थेनिरासायाह । **मार्गमात्रमिति** । मात्रं कात्स्न्र्ये । एवं पदार्थानुक्त्वा द्वंद्वोत्तरपदकः षष्ठीतत्पुरुष इति हृदि निधाय तत्फलितार्थकथनपूर्वकं वाक्यार्थमाह । **रथ्यास्थीति** । प्राग्वदर्थभ्रमनिरासायाह । **शुद्धिमिति** ।

नन्वेवं द्विवचनौचित्यमत आह । **वह्निति** । इष्टकाग्रहणमुपलक्षणं पाषाणादेरपीत्याह । **कादिभिरिति** । **चितानि** रचितानि । ननु मारुताभावे शुद्धिर्न स्यात्, किं च तेन शुद्धिकरणं न संभवतीत्याह । **तच्चेति** । एवं च तत्र तात्पर्यं न तु तत्र एतदर्थमेवैवकार इति भावः । सामान्यं विहाय विशेषोक्तेः फलमाह । **तृणेति** । तथा च तेषां स्वाभाविकवायुसंस्पर्शाच्छुद्धिरेव सदा न कदाऽप्यशुचित्वं तत्कृतमिति न तदर्थमुपाय इति तात्पर्यम् ॥ १९७ ॥

इति द्रव्यशुद्धिप्रकरणम् ।

---

१ न्या. सू. ६।३।६५

# अथ दानप्रकरणम् ९.

## याज्ञवल्कीये १९८ श्लोकः

उक्तसर्वधर्मान्तर्गतसाधारणधर्मान्तर्गतदानांशे विशेषजिज्ञासायामाह । **इदानीमिति** । सर्वधर्मकथनानन्तरमित्यर्थः । प्रकरणसंगतिर्द्रव्यप्रसंगरूपा बोध्या । **दानधर्मं** दानरूपं धर्मं तदिति पात्रेत्यर्थः । भौतिकसृष्टिमध्ये प्रथमसृष्टित्वादाह । **हिरण्येति** । अत एवाह । **कल्पादाविति** । तैपादेर्व्याख्या **ध्यानमिति** । तप आलोचने इत्यनुसारात् । अनुपयुक्तान्यनिरासाय तदाकारमाह । **कानिति** । पूर्वान्वयः । तृप्त्यर्थमिति तत्कृततदुद्देश्यककर्मत इति भावः । **धर्मरक्षणं** वर्धनेनेत्याह । **अनुष्ठानेति** । तात्पर्यार्थमाह । **अत इति** । अत एव प्रतिज्ञातार्थनिर्वाहः ॥१९८॥

## याज्ञवल्कीये १९९ श्लोकः

एवं सामान्येनोक्त्वा विशेषमाह । **सर्वस्येति** । तस्य पृथगुक्तेराह । **क्षत्रीति** । अग्रिमानुरोधेनाह । **श्रेष्ठा इति** । **जात्येति** । प्रथमसृष्टत्वान्मुखसृष्टत्वाच्च **कर्म** शमदमादि तत एव अध्याहारेण व्याचष्टे । **ब्राह्मेति** । एवमग्रेऽपि । **वक्ष्यमाणेति** बहुव्रीहिः । **मार्गः** प्रकारः । 'वक्ष्यमाणलक्षणेति' पाठान्तरम् । तमवर्थमाह । **निरता इति** । समुच्चये सतीति शेषः । तथा च तस्य तत्र निमित्तत्वं बोध्यम् ॥ १९९ ॥

## याज्ञवल्कीये २०० श्लोकः

सामान्येन पात्रत्वस्य प्रतिपादनादाह । **संपूर्णेति** । केवलेत्यस्य लिङ्गविपरिणामेनाग्रेऽन्वयमाह । **केवलेनेति** । न्यूनता परिहारमुखेनापि सफलयति । **अपीति** । एवमेवाह । **चशब्दादिति** । सर्वं वाक्यमिति न्यायेनाह । **तदेवेति** । हिमध्याहारेण सफलयति । **हि यस्मादिति** । प्राग्वत्तात्पर्यार्थमाह । **अत्र चेति** । पञ्चानां द्वंद्वः । निर्धारणे षष्ठी ॥ २०० ॥

## याज्ञवल्कीये २०१ श्लोकः

देयविशेषेण विशेषमाह । **गोभूतिलेति** । **पात्रे** यथालब्धे तदन्यतमस्मिंस्तस्य तत्वविवक्षया सप्तमी । एवमग्रेऽपि । पात्रभिन्नत्वमनुक्त्या दोषेण च द्विधेत्याह । **क्षत्रीति** । प्रकृतोपयोगिज्ञानमाह । **पात्रेति** । किंचित्फलस्य तत्रापि सत्वादाह । **संपूर्णेति** । अत एव श्रेय इति प्रकर्षप्रत्ययान्तोऽक्तिः । तदेवाह । **श्रेयोग्रेति** ।

ननु देवदत्तो वामेनाक्ष्णेति न्यायेन सिद्धे उत्तरार्द्धं व्यर्थमत आह । **अपात्रे इति** । असन्नित्यस्य मध्यमणिन्यायेनान्वयः । तत्राद्ये आह । **तदुद्देशेनेति** । द्वितीये आह । **तस्मा इति** । विशेषान्तरमाह । **तथेति** । 'ज्ञाते' इति पाठः । 'जाते' इति पाठे शेषः पूरणीयः । ज्ञानस्यैव निमित्तत्वाद्द्वैतममाह । **प्रतीति** । प्रतीति निषेधमित्यर्थः ॥ २०१ ॥

१ क । द्रव्यमसक्तादाह । २ क-तच्छुद्धि । ३ क इत्यादि । ४ व्या. सू. २।३।४१ ।

## याज्ञवल्कीये २०२ श्लोकः

भावप्रत्ययान्तत्वे पौनरुक्त्यमतः कर्मप्रत्ययान्तत्वेनाह । **सुवर्णादिरिति** । त्वर्थमाह । **यस्मादिति** । क्वचित्तथापाठ एव । **एवः** अधः इत्यत्र योज्यः । तेन सर्वथा तेन तत्र कार्यमिति सूचितम् ॥ २०२ ॥

## याज्ञवल्कीये २०३ श्लोकः

शक्तित इति सर्वान्वयीत्याह । **शक्तीति** । विशेषमाह । **स्वेति** । तत्पर्याप्तं स्थापयित्वेत्यर्थः । तद्भरणे दोषश्रवणात् । याचितमित्यत्र भावे क्तः । मुख्यश्रद्धायास्तत्रासंभावादाह । **अनसूयेति** । **तुर्निमित्तेषु** इत्यत्र योज्यः । अत एव **मनुः** । ( अ. ४ श्लो. २२८ )

"यत्किंचिदपि दातव्यं याचितेनानसूयया । उत्पत्स्यते हि तत्पात्रं यत्तारयति सर्वतः" ॥ इति । **गत्वेति** । तथा स्मृत्यन्तरम् ।

"अभिगम्य कृते दानं त्रेते चाहूय दीयते । द्वापरे याच्यमानं तु सेवादानं कलौ युगे" ॥ इति । ॥ २०३ ॥

## याज्ञवल्कीये २०४ श्लोकः

**तत्र** तेषां मध्ये । षष्ठीतत्पुरुषेण फलितमाह । **हेममये इति** । असुब्वत इतिवत्प्रयोगः । रौप्यैरिति पाठस्तदाह । **राजेति** । शेषमाह । **समिति** । क्षीरिणीत्यत्र भूम्नि इनिरित्याह । **बह्विति** ॥ २०४ ॥

## याज्ञवल्कीये २०५ श्लोकः

प्राग्वदाह । **रोमसंख्येति** । **सा** गौः । क्वचित्तथा पाठ एव । चेदर्थमाह । **यदीति** । कपिलालक्षणमुक्तं मूल्याध्यायव्याख्यायां सविशदं तत एव ज्ञेयम् । **केवेति** । दातारमेवेत्यर्थः । चार्थमाह । **किं त्विति** । आङभिविधावित्याह । **सततमभीति** । तदेवाह । **पित्रेति** ॥ २०५ ॥

## याज्ञवल्कीये २०६ श्लोकः

फलितमाह । **वत्सस्येति** । युगानीत्यस्य व्याख्या **कृतेति** । प्राप्तिमात्रमेव न फलमित्याह । **अनुभेति** । तत्र हेतुमाह । **पूर्वेणेति** । अस्या इति शेषः ॥ २०६ ॥

## याज्ञवल्कीये २०७ श्लोकः

अन्यस्यासंभवादाह । **गर्भादिति** । यावदादिः कालपर इत्याह । **यावत्कालमिति** । आद्योत्तरार्थे शेषमाह **उभेति** । पार्श्वद्वये इत्यर्थः । अत एव तुर्यचरणसार्थक्यमत एवाह । **यावदिति** । मुख्यपृथिवीत्वाभावादिनापि वतिमिति न्यायेनाह । **समेति** । **अत इति** । तत्तुल्यत्वादित्यर्थः । तथा च द्वितीयोत्तरमिदमिति भावः ॥ २०७ ॥

## याज्ञवल्कीये २०८ श्लोकः

धेन्वादौ कर्मणि प्रत्ययः। 'दोग्ध्री धेनुरिति' **श्रुतिः**। एवव्यवच्छेद्यं सूचयन्पर्युदासलब्धार्थमाह। **अवन्ध्यामिति**। तस्यानिष्फलत्वादिति भावः। पर्यर्थमाह। **अत्यन्तेति**। अनत्यन्तदुर्बलामित्यर्थः। महीङ् पूजायां कड्वादियगन्त इत्याह। **पूज्यते इति**॥ २०८॥

## याज्ञवल्कीये २०९ श्लोकः

**सुरेति**। पूजा च देवतोद्देशेन द्रव्यत्यागात्मकत्वाद्याग एव। तत्र यद्यप्यावाहनादीनां न यागत्वं तथापि यागायागसमुदाये प्रीतिहेतुक्रियात्वोपाधिको रूढः पूजाशब्दः। ईश्वरे प्रीतिस्तु अंतःकरणाभावेऽपि मायावृत्तिविशेषरूपैव सिसृक्षादिवद्बोध्या। सा चापूर्ववत्। यावत्फलं तिष्ठतीत्याह। अस्यां च सर्वेऽधिकारिणः। अस्याः कालाश्चानेके। मध्याह्नतर्पणानन्तरम् वैश्वदेवानन्तरमिष्टदेवविष्णुपूजान्यदेवपूजायां पूर्वाह्णः कालः सामान्येन प्रातर्मध्याह्नसायंकालाश्च नित्यकाम्यत्वं चास्याः। अस्याः स्थानान्यपि जलाग्न्यादीनि। शालग्रामे सर्वदेवपूजेति शिष्टाः।

"पृथगप्येकपाकानां ब्रह्मयज्ञो द्विजन्मनाम्। अग्निहोत्रं सुरार्चा च संध्या नित्यं भवेत्ततः"॥

**इत्याश्वलायनः**। तत्र हर्यादिपूजा प्रसिद्धैव। हिरण्यगर्भपूजा **भविष्ये**।

"पितामहः सदेवानां भूतानां च पितामहः। तस्मादेव सुसंपूज्यो यतो लोकगुरुः परः"॥

"न हि वेधोऽर्चनात्पुण्यमन्यत्रास्त्यधिकं क्वचिदिति" अस्य गायत्र्या नाममन्त्रेण वा पूजा। प्रणवेनैव वा। पुष्पाण्यस्य **विष्णू**क्तानि बोध्यानि। **आदिना** सूर्यादिपरिग्रहः। '**द्विजेति**' लुप्तषष्ठीबहुवचनान्तं पृथक्पदमुभयान्वयीत्याशयेनाह। **पादशौचमित्यादि**। अविनिगमकादाह। **समेति**। आनन्तर्यात्सामान्योक्तेश्चाह। **अनन्तरोक्तेनेति**। यथाकथंचिदित्यनेनोक्तेनेत्यर्थः॥ २०९॥

## याज्ञवल्कीये २१० श्लोकः

एवं गोदानप्रपंचमभिधाय अन्यदानफलमाह। **भू द्दीपेति**। अश्वान्नेति पाठः। निष्फलदाने वैयर्थ्यादाह। **फलेति**। **यत्कन्यादीति**। आदिना तदुपयोगिसामग्रीपरिग्रहः। धुरं वहतीति धुर्यस्तत्फलितमाह। **भारेति**। **शेषमिति** प्राग्वत्। अविरोधायायं नियमो न किं तूपलक्षणमिदमित्याशयेनाह। **स्वर्गेति**। तद्रूपफलं चेत्यर्थः। 'भूमी'त्यस्योभयतोऽन्वयः। **मनु**माह। **यदिति**। गोचर्ममात्रेणापीत्यर्थः। सचाधिकसमुच्चये प्रमाणे मात्रच् भूमिष्ठस्य तस्य दाने उपचारः इत्यादीत्यादिना।

"अनडुहः श्रियं पुष्टां गोदो ब्रध्नस्य विष्टपम्। यानशय्याप्रदो भार्यामैश्वर्यमभयप्रदः॥

"धान्यदः शाश्वतं सौख्यं ब्रह्मदो ब्रह्मसार्ष्टिताम्। सर्वेषामेव दानानां ब्रह्मदानं विशिष्यते॥

"वार्यन्नगोमहीवासास्तिलकांचनसर्पिषाम्।

---

१ मनु. अ. ४ श्लो. २३१–२३४।

"येन येन तु भावेन यद्यद्दानं प्रयच्छति । तत्तत्तेनैव भावेन प्राप्नोति प्रतिपूजितः" ॥ इत्यादिपरिग्रहः । **तान्येव** निवर्तनान्येव ॥ २१० ॥

## याज्ञवल्कीये २११ श्लोकः

**गृहेति** समाहारद्वंद्वः । निर्गन्धादौ नैष्फल्यादाह । **मल्लीति** । अश्वस्य प्रागुक्तत्वादाह । **रथादीति** । प्राग्वदाह । **उपेति** । अधर्मादिनिरासायाह । **धर्मेति** । लिङर्थाविवक्षायाह । **भवतीति** । **धर्मस्य दीनां संभेति** । **धर्मादेरिति** पाठान्तरम् । हेत्वन्तरमाह । **स्मृत्यन्तेति** । **अपि**श्चार्थेऽन्ते योज्यः । **देवेति** संबन्धत्वेन तस्य विवक्षायां षष्ठी । तुर्यचरमार्थे हेतुं सूचयन्नाह । **अपुण्येति** । न केवलमिदं दातुरेव किंतु ग्रहीतुरपीत्याह । **प्रतीति** । उभयत्र मानमाह । **य इति** । **अबलं** दुर्बलं अनिष्टाजनकमिति यावत् । द्विगुणेति समाहारद्वन्द्वः । प्राग्वदाह । **इह चेति** ॥ २११ ॥

## याज्ञवल्कीये २१२ श्लोकः

यत इत्यस्य व्याख्या **यस्मादिति** । वेदस्य तद्रूपत्वाभावादाह । **अवेति** । साकाङ्क्षत्वादाह । **तस्मादिति** । प्रार्थमाह । **सर्वेति** । कर्मणि ल्युटा सर्वेभ्यः प्रदीयमानेभ्य इत्यर्थः । तद्दानमिति पाठस्तु न स्वारस्यमावहतीत्ययुक्तः । **अविच्युत**मित्यत्र भावे क्तः । क्रियाविशेषणं चैतत् । ब्रह्मलोक-विशेषणं तु न तस्य व्यवहारदशायां तत्पर्यन्त मन्वन्तरमात्रिकत्वस्य तत्राप्यभावात् तावताऽपि प्रकृतोत्कर्षासिद्धेश्चेत्याशयेनाह । **च्युतिरिति** । तस्यापि तात्पर्यमाह । **अभूतेति** । कल्पपर्यन्त-मित्यर्थः । अत्रास्मिन्मात्रव्यवच्छेद्यमाह । **स्वत्वनिवृत्तेरिति** । संगतिमाह । **दान इति** ॥ २१२ ॥

## याज्ञवल्कीये २१३ श्लोकः

तत्सामर्थ्यमाह । **पात्रेति** । पूर्णेत्यादिः । प्राप्तमित्यनेन याचनानिरासः । प्राग्वदाह । **सुवेति** । अन्यत्यागेनान्यदानफलावाप्तेरसंभवादाह । **यद्यत्प्राप्तमिति** । पुष्कलानित्यस्यार्थः **समग्रानिति** । संपूर्णानित्यर्थः ॥ २१३ ॥

## याज्ञवल्कीये २१४ श्लोकः

संगतिमाह । **इदानीमिति** । **भृष्टेषु** 'भृष्टयवेषु धाना' इति **त्वमरः** (२।९।४७) । चातुर्मास्ये धानाः करम्भ इत्यादावनुष्ठानमप्येवम् । भूमः प्रागुक्तत्वात् क्षि क्षये इति निष्पन्नक्षितिपदस्वारस्याच्चाह । **मृत्तिकेति** । **शेषमिति** प्राग्वत् । याचनायां निषेधासंभवादाह । **स्वयमिति** । **निर्णुदेत्** प्रत्याच-क्षीत । असान्निध्यसूचनायाह । **तथेति** । एधः शब्दस्य सांतत्वे उदकपर्यायोदकशब्दः । तस्यादन्तत्वे उदकशब्दः समाहारद्वन्द्वः सर्वत्र चेन्धनकाष्ठवाचकः । **अन्नं** पक्वमपक्वं वा । **अभ्युद्यत**मभिमुखमुप-नीतम् । तदनुरोधेनैव प्राक् स्वयमिति व्याख्यातम् । **मनु**वाक्ये इदमभयदक्षिणाभिन्नसर्वविशेषणमिति

१ क चरणार्थे ।

व्याख्यातृतात्पर्यम् । प्रत्यासत्याऽन्नस्यैव तद्विशेषणम् । अत एधादिषु याच्ञाऽप्यविरुद्धेति तु **मेधातिथिः**। सर्वतः पतितादिभिन्नात् । इदमनुपदमेव स्फुटीभविष्यति । **मधु** माक्षिकम् । **अभयेति** । अत्राभयस्य मुख्यदानासंभवाद्दृष्टान्तार्थमुपादानं स्तुत्यर्थं च दक्षिणाशब्दप्रयोगः । यथाऽरण्यादौ महासंकटे यतः कुतश्चित्तदङ्गीकारे न दोषस्तथैतेषामपीति भावः । निपातानामनेकार्थत्वादथशब्दो यथार्थे इति तात्पर्यम् । अत एव प्रतिगृह्णीयादित्यस्यापि तत्रासंबन्धः ॥ २१४ ॥

## याज्ञवल्कीये २१५ श्लोकः

अयाचितं न स्वतन्त्रमितिप्रसंगापत्तेः । किं तु पूर्वोपपादकमित्याह । **किमिति** । अत एव श्लोकयोरेकवाक्यत्वाय कैमुतिकन्यायेनाह । **यस्मादिति** । कर्मधारयं सूचयति । **अथेति । आहृतं** उपानीतम् । अपिर्व्युत्क्रमे इत्याह । **णोपीति** । दोषाधिक्यसूचनाय पञ्चमीं विहाय षष्ठीं सूचयति । **संबंधीति** । तमेव तात्पर्यार्थमाह । **तस्मादिति** । तथा द्विष इत्यस्य व्याख्या। **शत्रोश्चेति** । यद्यपि कुलटा व्यभिचारिणीमात्रं तथापि प्रागुक्तसर्वसंग्रहायाह। **कुलं कुलमिति** । 'कुलात्कुलमिति' पाठान्तरं सर्वथा बहुवचनान्तेन समासे तात्पर्यं पचादिः। अयं च फलितार्थः। **आदिना** पुनर्भूपरिग्रहः॥२१५॥

## याज्ञवल्कीये २१६ श्लोकः

**कत्वादिति** । अकरणे प्रत्यवायोक्तिरिति भावः । कृते इत्यव्ययस्यार्थमाह । **तदर्थमिति** । सर्वत इत्यस्य संकोचमाह । **अनापदीति** । एतेनापदि तेभ्योऽपि ग्राह्यमेवं प्रागपीति सूचितम् । वृद्धौ चेति मतमाह । **गुरवो मातेत्यादि** । आदिना आचार्यादयः । तत एव भृत्यशब्दस्य यौगिकत्वादाह। **भरेति** । आदिना दासादीनामपि ग्रहणमात्मवृत्त्यर्थमित्यर्थस्यात्मप्राणपरित्राणार्थमित्यर्थः 'सर्वत एवात्मानं गोपायेदिति'**श्रुतिरपि** । आपदि तु उक्तं **विष्णुधर्मोत्तरे** ।

"ग्राह्यं प्राणप्रदानं तु चाण्डालात्पुल्कसादपि । जीवन्सर्वमवाप्नोति जीवन्सर्वं करोति च" ॥

**स्कान्दे** ।

"दुर्भिक्षे दारुणे प्राप्ते कुटुम्बे सीदति क्षुधा । असतः प्रतिगृह्णीयात्प्रतिग्रहमतन्द्रितः" ॥ इति ।

**यमः** ।

"अनिर्दशाह प्रेतस्य प्रतिगृह्णन्ति ये द्विजाः । समाः शतं सहस्रं ते नरकं पर्युपासते" ॥ इति। अत्रैव विशेषमाहाङ्गिराः ।

"संस्कारैः शुध्यति ह्यामं धान्यं तेन शुचि स्मृतम् । तस्मादामं न हातव्यं मृतसूतान्तरेष्वपि ॥
"पक्वान्नं वर्जयेद्विप्रो गोधनं क्षत्रिये तथा । वैश्येभ्यः सर्वधान्यानि शूद्राद्ग्राह्याः पणास्तथा"॥

**संस्कारैः** कण्डनदलनादिभिः । पणः कर्षिकसाधिकः । एतत्सर्वमापद्विषयम् ।

**गौतमः** । (अ. १७ सू. ३–५) "एधोदकयवसमूलफलमध्वन्नपाण्युद्यतशम्यासनावसथयानपयोदधिधानाशफरीप्रियङ्गुस्रक्मार्गशाकान्यप्रणोद्यानि सर्वेषां पितृदेवभृत्यभरणे चान्यद्वृत्तिश्चेन्नान्तरेण शूद्रादिति"। यवसं हरिततृणम्। आवसथो गृहम्। शफरी मत्स्यविशेषः। इदं च मत्स्यमात्रोपलक्षणम्। मूलवचनात्। प्रियङ्गुः कङ्गुः। स्रक् माला। मार्गं मृगमांसम्। पितृदेवेति पितृभरणम् श्राद्धम्। देवभरणमग्निहोत्रादि पित्राद्यर्थेषु पूर्वोक्तादन्यदपि दत्तं प्रत्याख्येयमित्यर्थः। 'वृत्तिश्चेदिति' यदि शूद्रप्रतिग्रहमन्तरेण जीवनं न जायते तदा शूद्रादपि प्रतिगृह्णीयादित्यर्थः।

**अङ्गिरा बौधायनश्च** ।

"खलक्षेत्रकृतं धान्यं वापीकूपगतं जलम्। अभोज्यादपि तद्ग्राह्यं यच्चगोष्ठगतं पयः॥
"विच्छिन्नेषु च पक्षेषु हविष्याग्रहणेषु च। इष्टिं त्वविकृतां कुर्यात् सुकृतं तु न लोपयेत्"॥

पक्षेषु पक्षाधिकरणकालेषु। तथा आग्रायणादिषु अयनान्तेष्टिकालेषु। हविःषु विच्छिन्नेषु विच्छेदं प्राप्तेषु सत्सु सकलेष्टिपवितोधान्यादि भवति। तावदभोज्यान्नादपि यथोक्तधान्यादिकं ग्राह्यमित्यर्थः। तथा

"पक्वान्नवर्जं विप्रेभ्यो गोर्द्धनं क्षत्रियादपि। वैश्यात्तु सर्वधान्यानि शूद्राद्ग्राह्यं न किंचन॥
"यत्र क्षेत्रगतं धान्यं खले वाऽथ गृहाद्बहिः। सर्वकाले गृहीतव्यं शूद्रेभ्योऽप्यङ्गिरोमतम्"॥
"प्रतिवर्णमिदं द्रष्टुं प्रतिग्राह्यं द्विजोत्तमैः। तथापि च **यमः** पेयं द्विजेभ्यो**ऽप्यङ्गिरो**मतम्॥
"स्वपात्रे यत्र विन्यस्तं दुग्धं तच्छुचि नित्यशः। पात्रान्तरगतं ग्राह्यं शूद्रात्स्वगृहमागतम्॥
"शूद्रवेश्मनि विप्रेण क्षीरं वा यदि वा दधि। निवृत्तेन न भोक्तव्यं शूद्रान्नं तदपि स्मृतम्॥
"आमं मांसं मधु घृतं धाना क्षीरमथौषधम्। गुडतक्ररसादीनि द्विजैर्ग्राह्याणि सर्वतः"॥

निवृत्तेन प्रतिग्रहान्निवृत्तेन। रसाः लवणादयः। कंबूकाः तण्डुलकणाः। आहृताभ्युद्यताग्रहणे दोषमाह **मनुः** (अ. ४ श्लो. २४८।२४९)।

"आहृताभ्युद्यतां भिक्षां पुरस्तादप्रणोदिताम्। मेने प्रजापतिर्ग्राह्यामपि दुष्कृतकर्मणः॥
"नाश्नन्ति पितरस्तस्य दशवर्षाणि पञ्च च। न च हव्यं वहत्यग्निर्यस्तामभ्यवमन्यते"॥

आहृतां प्रतिगृह्णन्ति संनिधिमानीतामभ्युद्यतां पुरस्तादप्रणोदितां प्रतिग्रहीत्रा स्वयं परमुखेन पूर्वमयाचितामभ्यवमन्यते प्रतिक्षिपति। एतदपवादमाह।

"किंचित्सदा कृतघ्नानां शल्यहर्तुस्तु वार्धुषेः। षण्ढस्य कुलटायाश्च उद्यतामपि वर्जयेत्"॥

शल्यहर्ता शस्त्रवैद्यः। वार्धुषिलक्षणं प्रागुक्तं विषयादिविशेषेण विशेष उक्तो**ऽग्निपुराणे** ।

"हस्त्यश्वरथयानानि मृतशय्यासनानि च। कृष्णाजिनं न गृह्णन्ति यद्यनापद्गतो द्विजः॥
"तथोभयमुखीं घोरां सशैलां मेदिनीं द्विजः। कुरुक्षेत्रे च यद्दानं चण्डालपततां तथा॥

"मासिके च पितृश्राद्धे भुञ्जन्प्रेतत्वमाप्नुयात्"। शय्यासनादीत्यत्रादिशब्दादन्येषामपि प्रेतसंबन्धिवाहनवसनभाजनादीनामुपग्रहः। एकादशाहशय्यामधिकृत्य **पद्मपुराणे**।

"तेन दुष्टा तु सा शय्या न ग्राह्या द्विजसत्तमैः। गृहीतायां तु तस्यां हि पुनःसंस्कारमर्हति॥
"वेदेषु च पुराणेषु शय्या सर्वत्र गर्हिता। गृहीतायां तु जायन्ते सर्वे नरकगामिनः"॥

**स्कान्दे**।

"अजिनं मृतशय्यां च मेषीं चोभयतोमुखीम्। कुरुक्षेत्रे च गृह्णानो न भूयः पुरुषो भवेत्"॥

**पाद्मे**।

"ब्रह्माण्डं भूमिदानं च ग्राह्यं नैकेन तद्भवेत्। गृह्णन्दोषमवाप्नोति ब्रह्महत्यां न संशयः"॥

अत्र भूमिदानं पदं षोडशमहादानान्तर्गतहिरण्यमहादानपरं ब्रह्माण्डसाहचर्यात्**स्कान्दे प्रभासखण्डे**।

"ब्रह्मर्षिर्गालवश्चाहं कुरुक्षेत्रे पुरा स्थितः। अश्वप्रतिग्रहान्नूनमश्वयोनिं समाश्रितः"॥

तथा **तत्रैव**।

"प्रतिग्रहसमर्थानां निवृत्तानां प्रतिग्रहात्। य एव ददतां लोकः स एव प्रतिगृह्णताम्"॥ इति।
"त्रीण्येतान्यतिदानानि गावः पृथ्वी सरस्वतीति"। **मनुः** (अ. ४ श्लो. २५१–२५२)
"गुरून्भृत्यांश्चोज्जिहीर्षन्नर्चिष्यन्देवतातिथीन्। सर्वतः प्रतिगृह्णीयान्न तु तृप्येत्स्वयं ततः॥
"गुरुषु त्वभ्यतीतेषु विना वा तैर्गृहे वसन्। आत्मनो वृत्तिमन्विच्छन् गृह्णीयात्साधुतः सदा"॥

इतीत्यलम्।

**अथ गोदानप्रयोगः**। देशकालौ संकीर्त्य आत्मना सह एकविंशतिपुरुषतारणार्थं सकलपृथ्वीदानफलप्राप्त्यर्थं सर्वपापक्षयार्थं च गोदानमहं करिष्ये। गणपतिपूजनपूर्वकं पात्रं कृत्वा। अमुकप्रवरान्वितोऽमुकगोत्रोत्पन्नोऽहममुकशर्मा अमुकप्रवरान्वितामुकगोत्रोत्पन्नामुकवेदान्तर्गतामुकशाखाध्यायिनममुकशर्माणं ब्राह्मणं गोदानार्थं वृणे। वस्त्रादिना संपूज्य 'गवे नम' इति मन्त्रेण गां पूजयेत्। खुरप्रक्षालनादिगन्धपुष्पधूपदीपनैवेद्यफलतांबूलदक्षिणानीराजनमन्त्रपुष्पम्। 'आ गावो अग्मन्निति' सूक्तेन तद्देहे देवानावाहयेत्। शृङ्गमूले ब्रह्माविष्णुभ्यां नमः। ब्रह्माविष्णू आ.। शृङ्गाग्रे सर्वतीर्थेभ्यो नमः। सर्वतीर्थान्या. २। शिरोमध्ये महादेवाय. महादेवं. ३। ललाटाग्रे गौर्यै० गौरीं. ४। नासावंशे षण्मुखाय षण्मुखं. ५। नासापुटयोः कंबलाश्वतराभ्यां. कंबलाश्वतरौ. ६। कर्णयोरश्विभ्यां. अश्विनौ. ७। नेत्रयोः शशिभास्कराभ्याम्. शशिभास्करौ० ८। दन्तेषु वायुभ्यो०। वायून्. ९। जिह्वायां वरुणाय. वरुणं. १०। हुंकारे सरस्वत्यै. सरस्वतीम् ११। गण्डयोर्मासपक्षाभ्याम्. मासपक्षौ. १२। ओष्ठयोः संध्याद्वयाय. संध्याद्वयम् १३। ग्रीवायाम् इन्द्राय. इन्द्रम् १४। कक्षयोः रक्षोभ्यो. रक्षांसि १५। जङ्घासु साध्येभ्यः साध्यान् १६। खुरमध्ये धर्माय. धर्मम् १७। खुराग्रेषु गंधर्वेभ्यो. गंधर्वान् १८। खुरपश्चिमेषु पन्नगेभ्यः पन्नगान् १९। पृष्ठे अप्सरोगणेभ्योऽप्सरोगणान् २०। सर्वसंधिषु एकादश-

रुद्रेभ्यः० एकादशरुद्रान् २१ । श्रोणौ वसुभ्यो० बसून् २२ । पुच्छे पितृभ्यः पितॄन् २३ । केशेषु सोमाय. सोमम् २४ । गोमूत्रे सूर्यरश्मिभ्यः सूर्यरश्मीन् २५ । गोमये गंगायै. गङ्गाम् २६ । क्षीरे यमुनायै. यमुनाम् २७ । दध्नि सरस्वत्यै. सरस्वतीम् २८ । घृते नर्मदायै. नर्मदाम् २९ । रोमसु वह्नये. वह्निम् ३० । उदरे देवकोटिभ्यो. देवकोटीन् ३१ । स्तनेषु पृथ्वीसागरेभ्यः पृथ्वीसागरान् ३२ । वस्त्रस्वर्णशृङ्गादिकृत्वा ।

"दशसौवर्णिके शृङ्गे खुराः पञ्चपलानि च । पञ्चाशत्पलिकं कांस्यं ताम्रं चापि तथैव च" ॥

दोहनपात्रं निधायाग्रे तदनन्तरं वक्ष्यमाणतर्पणं कुर्यात् । देवाँस्तर्पयामि । पितॄन्० । नदीः० । पर्वतान्० । वनस्पतीन्० । समुद्रान्० । ओषधीः० । अश्विनौ० । भूमिं० । पृथ्वीम् । ततः स्वपितृतर्पणम् । प्राङ्मुखो यज्ञोपवीती दाता कांस्यमये आज्यपात्रेषु गोपुच्छं निक्षिप्य तिलकुशहेमयुतं गोपुच्छं उदङ्मुखविप्रकरं च गृहीत्वा देशकालौ स्मृत्वा पूर्वोक्तफलमुद्दिश्य इमां गां रुद्रदैवत्यां सवत्सां स्वर्णशृङ्गादियुतां अमुकगोत्रामुकवेदान्तर्गतामुकशाखाध्यायिनेऽमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे । न ममेति दत्वा ।

"यज्ञसाधनभूता या विश्वस्याघप्रणाशिनी । विश्वरूपधरो देवः प्रीयतामनया गवा ॥
"घृतक्षीरप्रदा गावो घृतयोन्यो घृतोद्भवाः । घृतनद्यो घृतावर्तास्ता मे सन्तु सदा गृहे ॥
"गवामङ्गेषु० गावो मेऽग्रतः सन्तु" ।

गोदानोत्तरं दक्षिणा देया । गोदानकर्मणः सांगतासिध्यर्थमिमां दक्षिणां तुभ्यमहं संप्रददे । विप्रस्तु 'देवस्य त्वा' 'रुद्राय गाम्' 'क इदं' । दक्षिणा ।

"सुवर्णं दक्षिणामाहुर्गोप्रदाने विशेषतः" इति । गोमतीं जपेत् ।
"गावो मामुपतिष्ठन्तु हेमशृङ्ग्यः पयोमुचः । सुरभ्यः सौरभेय्यश्च सरितः सागरास्तथा ॥
"गां वै पश्याम्यहं नित्यं गावः पश्यन्तु मां सदा । गावोऽस्माकं वयं तासां यतो गावस्ततो वयम् ॥
"अन्नमेव परं गावो देवानां हविरुत्तमम् । पावनं सर्वभूतानां रक्षन्ति च वदन्ति च ॥
"नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च । नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमोनमः" ॥

ततो ब्राह्मणभोजनं संकल्प्य भूयसीं दत्वा कर्मेश्वरार्पणं कृत्वाऽऽशिषो गृह्णीयादिति ॥

**अथ गोदानविधिः** । संभृतिमुपकल्प्य कुशतिलयवानादाय "अद्येत्यादि श्रुतिस्मृतिपुराणोक्तफलप्राप्तिकामो गोदानमहं करिष्ये" इति संकल्पः । संप्रदानं संप्रदानत्वेन वृणे । वृतोऽस्मीति 'व्रतेन दीक्षामि'त्यादि । ततो देयद्रव्यं संप्रोक्ष्य गां सवत्सां पूजयेत् । 'गवामङ्गेष्विति' पूजा ।

"आच्छादनं मया सम्यक्शुद्धं चैव सुनिर्मलम् । सुरभिर्वस्त्रदानेन प्रीयतां परमेश्वरि" ॥

इति वस्त्रेण गामाच्छाद्य ।

"ग्रासं गृहाण मे दत्तं गोमातस्त्रातुमर्हसि । सुरभि त्वं जगन्माता देवि विष्णुपदे स्थिता" ॥

इति ग्रासं दत्वा गोपुच्छे देवर्षिपितॄंस्तर्पयेत् । श्लोकैस्तत्तर्पणम् ।

"ब्रह्माद्या देवताः सर्वे ऋषयो मुनयस्तथा । असुरा यातुधानाश्च मातरश्चण्डिकास्तथा ॥
"दिक्पाला लोकपालाश्च ग्रहदेवाधिदेवताः । ते सर्वे तृप्तिमायान्तु गोपुच्छोदकतर्पिताः ॥
"विश्वेदेवास्तथाऽऽदित्याः साध्याश्चैव मरुद्गणाः । क्षेत्रपीठोपपीठानि नदा नद्यश्च सागराः ॥
"पातालनागकन्याश्च वायुराकाशमेव च । दिवि भुव्यन्तरिक्षे च ये च पातालवासिनः ॥
"शिवः शिवा तथा विष्णुः सिद्धिर्लक्ष्मीः सरस्वती । तपोवनानि देवाश्च भगवान्परमेश्वरः ॥
"क्षेत्रौषधिलतावृक्षा वनस्पत्यधिदेवताः । कपिलः शेषनागश्च तक्षकोऽनन्त एव च ॥
"अन्ये जलचरा जीवा असंख्यातास्त्वनेकशः । चतुर्दश यमाश्चैव ये चान्ये यमकिङ्कराः ॥
"सर्वेऽपि यक्षराजानः पक्षिणः पशवस्तथा । स्वेदजोद्भिद्जा जीवा अण्डजाश्च जरायुजाः ॥
"अन्येऽपि वनगावो ये दिवानिशि विहारिणः । अजागोमहिषीरूपा ये चान्ये पशवस्तथा ॥
"शान्तिदाः शुभदास्ते स्युर्गोपुच्छोदकतर्पिताः ।
"आब्रह्मस्तम्बपर्यन्तं ये चान्ये गोत्रिणो मृताः । ते सर्वे तृप्तिमायान्तु गोपुच्छोदकतर्पिताः ॥
"सर्पव्याघ्रहता ये च शस्त्रघातहताश्च ये । संस्काररहिता ये च रौरवादिषु गामिनः ॥
"आब्रह्मस्तम्बपर्यन्तं देवर्षिपितृमानवाः । तृप्यन्तु पितरः सर्वे मातृमातामहादयः ॥
"अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् । आब्रह्मभुवनालोकादिदमस्तु तिलोदकम् ॥
"पितृवंशे मृता ये च मातृवंशे च ये मृताः । गुरुश्वशुरबन्धूनां ये चान्ये बान्धवाः स्मृताः ॥
"ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः । क्रियालोपगता ये च जात्यन्धाः पङ्गवस्तथा ॥
"विरूपा आमगर्भाश्च ज्ञाताज्ञाताः कुले मम । ते पिबन्तु मया दत्तं गोपुच्छस्य तिलोदकम् ॥
"ये बान्धवाबान्धवाश्च अन्यजन्मनि बान्धवाः । ते सर्वे तृप्तिमायान्तु गोपुच्छस्य तिलोदकैः ॥
"वृक्षत्वं च गताः केचित्तृणगुल्मलतास्थिताः । यातनासु च घोरासु जातीषु विविधासु च ॥
"नरकेषु च घोरेषु पतिता ये स्वकर्मणा । देवत्वं मानुषत्वं च तिर्यक्प्रेतपिशाचताम् ॥
"कृमिकीटपतङ्गत्वं याता ये च स्वकर्मभिः । तेषामुद्धरणार्थाय जलमेतद्ददाम्यहम् " ॥

ततो देवतान्यासः ।

"पञ्च गावः समुत्पन्ना मथ्यमाने महोदधौ । तासां मध्ये तु या नंदा तस्यै धेन्वै नमो नमः" ॥

पृष्ठे ब्रह्मणे नमः । मुखे रुद्राय० । मध्ये देवगणेभ्यो० । रोमकूपे महर्षिभ्यो० । पुच्छे नागेभ्यः० । खुराग्रेषु कुलपर्वतेभ्यो न० । मूत्रे गङ्गादिनदीभ्यो० । नेत्रयोः शशिभास्कराभ्यां० ।

"एते यस्याः स्तनौ देवाः सा धेनुर्वरदाऽस्तु मे " । प्रार्थना ।

"या लक्ष्मीः सर्वभूतानां या च देवेष्ववस्थिता । धेनुरूपेण सा देवी मम पापं व्यपोहतु ॥
"देहस्था या च रुद्राणी शङ्करस्य सदा प्रिया । धेनुरूपेण सा देवी मम पापं व्यपोहतु ॥
"विष्णोर्वक्षसि या लक्ष्मीः स्वाहा या च विभावसोः । चंद्रार्कशक्रशक्तिर्या धेनुरूपाऽस्तु सा प्रिया॥
"चतुर्मुखस्य या लक्ष्मीर्या लक्ष्मीर्धनदस्य च । लक्ष्मीर्या लोकपालानां सा धेनुर्वरदाऽस्तु मे ॥

"त्वं स्वधा पितृमुख्यानां स्वाहा यज्ञभुजां तथा। सर्वपापहरा धेनुस्तस्माच्छान्तिं प्रयच्छ मे ॥
"आज्यपात्रं करे धृत्वा कनकेन समन्वितम्। निक्षिप्य पुच्छं तस्मिंस्तु घृतदुग्धं प्रगृह्य च ॥
"सतिलं विप्रपाणौ तु प्रागग्रं तं निधाय च। सतिलं सकुशं चापि गृहीत्वा दानमाचरेत्" ॥

ततः कुशयवजलान्यादाय अद्येत्यादिदशपूर्वदशापरात्मीयपुरुषसहितात्मनः संभाद्वारणपूर्वकैहिकसकलसमृद्धिप्राप्तिपूर्वकसमस्तगोरोमसमसंख्यवर्षस्वर्गप्राप्तिकाम इमां गां रुद्रदैवत्यां सुवर्णशृङ्गीं रौप्यखुरां ताम्रपृष्ठीं कांस्यदोहां मुक्तादामघण्टाचामरविभूषितां रत्नपुच्छीं सुवस्त्रच्छन्नाममुकगोत्रायामुकशाखाध्यायिने अमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे।

"यज्ञसाधनभूता या विश्वस्याघप्रणाशिनी। विश्वरूपधरो देवः प्रीयतामनया गवा" ॥

ब्राह्मणः 'क इदमिति' मन्त्रं पठेत्। कृतगोदानसाङ्गतासिद्ध्यर्थं सुवर्णं दक्षिणां दद्यात्। ततः
"गावो मामुपतिष्ठन्तु हेमशृङ्ग्यः पयोमुचः। सौरभ्यः सौरभेयाश्च सरितः सागरास्तथा ॥
"गा वै पश्याम्यहं नित्यं गावः पश्यन्तु मां सदा। गावोऽस्माकं वयं तासां यतो गावस्ततो वयम् ॥
"ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम्। एकत्र मन्त्रास्तिष्ठन्ति हविरन्यत्र तिष्ठति ॥
"गावः सुरभयो नित्यं गावो गुग्गुलुगन्धिकाः। गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं महत् ॥
"अन्नमेव परं गावो देवानां हविरुत्तमम्। पावनं सर्वभूतानां रक्षन्ति च वदन्ति च ॥
"हविषा मन्त्रपूतेन तर्पयन्त्यमरान् दिवि। ऋषीणामग्निहोत्रेषु गावो होमे प्रतिष्ठिताः ॥
"सर्वेषामपि देवानां गावः शरणमुत्तमम्। गावः स्वर्गस्य सोपानं गावो धन्याः सनातनाः ॥
"घृतक्षीरप्रदा गावो घृतयोन्यो घृतोद्भवाः। घृतनद्यो घृतावर्तास्ता मे सन्तु सदा गृहे ॥
"घृतं मे हृदये नित्यं घृतं नाभ्यां प्रतिष्ठितम्। घृतं मे सर्वतश्चैव घृतं मे मनसि स्थितम्" ॥

ततः 'गावो मे' प्रदक्षिणां कुर्यात्।

"नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च। नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः" ॥ इति।

इति नत्वा द्विजाय गां विसृज्य भूयसीं दक्षिणां दत्वा ब्राह्मणान्क्षमापयेत्।

"या लक्ष्मीः सर्वभूतानां सर्वदेवेष्ववस्थिता। स्वधा च पितृमुख्यानां स्वाहा यज्ञभुजामपि ॥
"शङ्करस्य प्रिया या च जगत्त्रितयपावनी। धेनुरूपेण सा नित्यं मम पापं व्यपोहतु" ॥

इति। **धेनुप्रार्थना**।

"अग्निकुण्डसमुत्पन्ने सुभद्रे सुरभे शुभे। गृहाणार्घ्यं मया दत्तं प्रसीद वरदा भव ॥
"गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश। यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च" ॥

इति **धेनुदानम्**।

**"नमस्ते कपिले भद्रे नमस्ते लोकपावनि। नमस्ते सर्वसंभूते जगत्पूज्ये नमो नमः ॥**
**"यच्च बाल्ये कृतं पापं यौवने च कृतं तथा। वाचा कृतं कर्मकृतं मनसा दुर्विचिन्तितम् ॥**

"कपिले हर मे यस्माद्दुष्कृतं सर्वपातकैः" । इति कपिलाप्रार्थना ।

"कपिले सर्वदेवानां पूजनीयाऽसि रोहिणी । तीर्थदेवमयी यस्मात्ततः शान्तिं प्रयच्छ मे" ॥

कपिलादानम् ।

"कृष्णप्रिये नमस्तुभ्यं ब्रह्मशङ्करयोस्तथा । जन्मप्रभृति पापानि कृष्णे नाशय मे सदा" ॥

कृष्णधेनुप्रार्थना ।

"यस्मात्त्वं पृथिवी सर्वा धेनुः कृष्णेन सन्निभा । सर्वपापहरा नित्यमतः शान्तिं प्रयच्छ मे ॥

"देवकीपुत्रचाणूरकंसारिष्टविनाशन । नाशाय गृहिणी कृष्णा गोष्ठां जनमहोत्सवे" ॥

इति कृष्णधेनुदानम् ।

"नमस्ते देवदेवात्मा त्वमेव भगवान्पते । सर्वभूतधरा धात्री भूमिर्माता त्वमेव च ॥

"वायुरग्निश्च वसवः शक्राद्याः सर्वदेवताः । खेचरा भूचराः सर्वास्त्वमेव परमेश्वरि ॥

"एताभिर्मूर्तिभिर्या हि देवी संसारसागरात्" इति भूप्रार्थना ।

"सर्वसस्या तु या भूमिर्वाराहेण समुद्धृता । अनन्तसस्यफलदा अतः शान्तिं प्रयच्छ मे" ॥

भूदानम् ।

"यस्माद्रोहन्ति बीजानि काले कृष्यां महीतले । तव प्रसादात्सकला मम सन्तु मनोरथाः" ॥

इति वृत्तिभूदानम् ।

"दानान्यन्यानि सर्वाणि गोकन्यादीनि यानि च । तानि भूमिप्रदानस्य कलां नार्हन्ति षोडशीम्" ॥

भूप्रशंसा ।

"महर्षेर्गोत्रसंभूताः कश्यपस्य तिलाः स्मृताः । तस्मादेषां प्रदानेन पापसंघातपञ्जरम् ॥

"विलयं यातु ते शीघ्रमामपात्रमिवाम्भसि" । इति तिलदानम् ।

"हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे" ॥

इति हिरण्यदानम् ।

"कामधेनुसमुद्भूतं सर्वक्रतुषु संस्थितम् । देवानामाज्यमाहारमतः शान्तिं प्रयच्छ मे" ॥

इत्याज्यदानम् ।

"धन्यं करोषि दातारं ग्रहीतारं धिनोति च । यस्मात्प्रमुच्यते धान्यमतः शान्तिं प्रयच्छ मे" ॥

इति धान्यदानम् ।

"ब्रह्मणा निर्मितं साक्षादम्भोनिधिसमुद्भवम् । अगस्त्यस्य प्रभा वंशामतः शान्तिं प्रयच्छ मे" ॥

लवणदानम् ।

"शीतवातोष्णसंत्राणं लज्जाया रक्षणं परम् । देहालंकरणं वस्त्रमतः शान्तिं प्रयच्छ मे" ॥

वस्त्रदानम्

"पीतवस्त्रयुगं यस्मात्सदादित्यस्य वल्लभम् । तस्माद्दत्तं मया देव मम पापं व्यपोहतु " ॥

पीतवस्त्रदानम् ।

"षण्मुखस्य प्रियं नित्यं चित्रवस्त्रं मनोहरम् । तस्मादस्य प्रदानेन शान्तिरस्तु सदा मम" ॥

चित्रवस्त्रदानम् ।

"मनोहरं कृष्णवस्त्रं बलभद्रप्रियं महत् । आयुर्वर्धय मे नित्यं ब्रह्मणा निर्मितं पुरा " ॥

कृष्णवस्त्रदानम् ।

"रक्तवस्त्रयुत यस्मात्तदादित्यस्य वल्लभम् । प्रदानं तस्य मे भानुः शान्तिं यच्छतु सर्वदा " ॥

रक्तवस्त्रदानम् ।

"सर्वदेवस्तु देवानां महादेवस्तु योगिनाम् । प्रणवः सर्वमन्त्राणां नारीणां पार्वती तथा" ॥
"तथा रसानां प्रवरः सदैवेक्षुरसो मतः । तस्मान्मां परमां लक्ष्मीं ददस्व गुड सर्वदा" ॥

गुडदानम् ।

"अमृतस्य रसोत्पन्नामिक्षुधात्रा तु शङ्कर । मनोभवधनुर्मध्यादुद्धृता शर्करामृता" ॥
"सूर्यप्रीतिकरा नित्यमतः शान्तिं प्रयच्छ मे " । शर्करादानम् ।
"पितॄणां वल्लभं शस्माद्विष्णोर्वै शङ्करस्य च । रजतं पाहि यस्मात्त्वं शोकसंसारसागरात्" ॥

रजतदानम् ।

"जन्मजन्मसहस्रेषु यत्कृतं दुष्कृतं मया । सुवर्णपात्रदानेन मम पापं व्यपोहतु" ॥

सुवर्णपात्रदानम् ।

"कन्यादूषणतः पापं परदाराभिमर्शनम् । रौप्यपात्रप्रदानेन हर नाशय मे सदा"

रौप्यपात्रदानम् ।

"परोपवासपैशून्यदुष्टमांसस्य भक्षणात् । पापं गोत्रस्थितं ताम्रपात्रदानेन नश्यतु" ॥

ताम्रपात्रदानम् ।

"यानि पापान्यनेकानि कामाकामकृतानि च । कांस्यपात्रप्रदानेन तानि नश्यन्तु मे सदा" ॥

कांस्यपात्रदानम् ।

"ज्ञानाज्ञानकृतं पापं मया लोहकृतानि च । लोहपात्रप्रदानेन अतः शान्तिं प्रयच्छ मे" ॥

लोहपात्रदानम् ।

"सूर्यप्रीतिकरं ताम्रं प्राणेयं बलवर्धनम् । तस्मादस्य प्रदानेन प्रीयतां मे दिवाकरः" ॥

ताम्रदानम् ।

"कांस्यं ब्रह्मशिवं साक्षात्स्वयमेव विभावसुः । कांस्यं विष्णुमयं साक्षादतः शान्तिं प्रयच्छ मे" ॥

कांस्यदानम् ।

"यस्मादायसकर्माणि त्वदाधाराणि सर्वदा । गदाद्यादीनि तस्माद्यदतः शान्तिं प्रयच्छ मे" ॥

शस्त्रायसदानम् ।

"त्वमेवावरणं यस्माल्लोकानामिह सर्वदा । कार्पास तस्मात्त्वं मे पापप्रशमनो भव" ॥

**कार्पासदानम् ।**

"और्णं आवरणं नित्यं शीतवातभयापहम् । तस्माद्दुःखनिवारि त्वमतः शान्तिं प्रयच्छ मे" ॥

**कम्बलदानम् ।**

"धान्यचूडामणिर्जम्बूद्वीपे गोधूमसंज्ञकः । गन्धवर्धनसंख्याय अतः शान्तिं प्रयच्छ मे" ॥

**गोधूमदानम् ।**

"यस्मान्मधुवधे काले विष्णोर्देहसमुद्भवाः । पितृप्रीतिकरा माषा अतः शान्तिं प्रयच्छ मे" ॥

**माषदानम् ।**

"मुद्गबीजानि वै यस्मात् प्रियाणि परमेष्ठिनः । तस्मान्मुद्गप्रदानेन प्रीतिः सिध्यतु मे सदा" ॥

**मुद्गदानम् ।**

"गोवर्धनगिरिर्भीरुसमये हरिरक्षिताः । चणकाः सर्वपापघ्ना अतः शान्तिं प्रयच्छ मे" ॥

**चणकदानम् ।**

"अग्निगर्भोद्भवाः सौम्या बलामेययशःप्रदाः । कुरुच्छाः सर्वपापघ्ना अतः शान्तिं प्रयच्छ मे" ॥

**कुरुच्छदानम् ।**

"जन्मत्रयकृतं पापमवस्थात्रयसंचितम् । प्राणाय भुवनिष्पावा अतः शान्तिं प्रयच्छ मे" ॥

**निष्पावदानम् ।**

"धान्यस्य परमाङ्गल्या द्विजप्रीतिकराश्च ये । तस्मादेषां प्रदानेन ममास्त्वव्याहतं फलम्" ॥

**प्रियङ्गुदानम् ।**

"प्राणिनां जीवनोपायाः सोमेनाधिष्ठिताः पुरा । तस्मादेषां प्रदानेन प्रीयतां मे जनार्दनः" ॥

**तण्डुलदानम् ।**

"अन्नं प्रजापतिर्विष्णुरुद्रेशशशिभास्कराः । अग्निर्वायुश्च सोमश्च तस्माच्छान्तिं प्रयच्छ मे ॥

"नमस्ते सर्वदेवानामाधारसुरपूजिताः । वित्तहीनो मम कुले मा भवत्विह कश्चन ॥

"अच्छिन्नमक्षयं सम्यक्सर्वदाऽस्तु जनार्दनः" । **अन्नदानम् ।**

"आदित्यतेजसोत्पन्नाः सर्वमङ्गलदायकाः । मण्डकाः सर्वदोषघ्ना अतः शान्तिं प्रयच्छ मे" ॥

**मण्डकदानम् ।**

"यस्मात्पितॄणां रौद्रादिर्प्रीतिदं ह्यमृतोपमम् । तस्मादस्य प्रदानेन त्राहि मां भवसागरात्" ॥

**क्षौद्रदानम् ।**

"नराणां मङ्गलार्थाय ब्रह्मणा निर्मितं पुरा । तैलदानेन मे पापं विलयं यातु मे सदा" ॥

तैलदानम् ।

"क्षीरार्णवसमुद्भूतं विष्णुतुष्टिकरं परम् । नवनीतं प्रदास्यामि प्रीतिं मे देहि केशव" ॥

नवनीतदानम् ।

"दधि त्वं भजतः पुंसः सदा संतुष्टिमुत्तमम् । अतस्तव प्रदानेन इह मन्त्रोऽस्तु शर्मणे" ॥

दधिदानम् ।

"सवानामव्ययममृतं प्राणिनां बलतुष्टिकृत् । पायसोऽस्य प्रदानेन सर्वदा शान्तिरस्तु मे " ॥

क्षीरदानम् ।

"मनोहिरण्यपुष्पाणि विप्रेभ्यः प्रददाम्यहम् । मनः प्रसन्नतां यातु सदा मम जनार्दन" ॥

पुष्पदानम् ।

"अथाफलेषु सर्वेषु वसन्ति नरकोदयाः । तथा मम फलावाप्तिर्भवेज्जन्मानि जन्मानि " ॥

फलदानम् ।

"देवदेवो जगन्नाथः शूलहस्तो महेश्वरः । संक्रान्तिशूलसंभूतं मम दोषं व्यपोहतु " ॥

संक्रांतिशूलदानम् ।

"छत्रं वर्षातपत्राणं भूषणं सर्वसंपदाम् । वामने प्रीतिदं यस्मादतः शान्ति प्रयच्छ मे" ॥

छत्रदानम् ।

"उपानहौ प्रदास्यामि कण्टकोच्छित्तिवारणे । पादत्राणाय ते विप्र गृहाण त्वं सुखाय ते" ॥

उपानद्दानम् ।

"तापत्रयहरां दातुः पूर्णां संस्कृतवारिणा । पितॄणां तुष्टिदां नित्यं गृहाण करपत्रिकाम्" ॥

करपत्रिकादानम् ।

"व्यजनं वायुदेवाय धर्मकालसुखप्रदम् । यस्य दानेन मे शान्तिं सदा यच्छन्ति मारुतः" ॥

व्यजनदानम् ।

"प्रियेयं सर्वसामान्यं भूतेभ्यः प्रतिपादिता । एतद्दानेन पितरः प्रीतिं यान्तु पितामह" ॥

प्रियादानम् ।

"नारायण जगन्नाथ विश्वात्मन्दत्तया मम । प्रभो शिबिकया देव सौम्यमस्तु सदा मम" ॥

शिबिकादानम् ।

"काष्ठानामुत्तमं सारं महादेवेन निर्मितम् । गन्धानां प्रवरं पुण्यमतः शान्तिं प्रयच्छ मे " ॥

चन्दनकाष्ठदानम् ।

"अशून्यं शयनं यस्मात्केशवस्य प्रिया सदा । सौभाग्यमस्तु मे नित्यं शय्यादानेन माधव" ॥

शय्यादानम् ।

"महापुण्यप्रदा देव चक्राद्यैरतिशोभिताः । दानेनानेन मे पापं प्रणाशय जनार्दन" ॥

शालग्रामदानम् ।

"शिवनाभिः शिवः साक्षात्साक्षाद्देवो जनार्दनः । प्रयच्छेतां ममानेन सौख्यसौभाग्यवर्धनः" ॥

शिवनाभिदानम् ।

"चक्राङ्कित नमस्तुभ्यं सदा द्वारवतीप्रिय । तस्मात्तव प्रदानेन मम पापं व्यपोहतु" ॥

चक्राङ्कितदानम् ।

"सरस्वति नमस्तुभ्यं जगज्जाड्यापहारिणि । पुस्तकं संप्रयच्छामि भारती वसतान्मयि" ॥

पुस्तकदानम् ।

"तिलस्वर्णसहायुक्त दुरितक्षयकारणम् । विश्वमूर्तेरधिष्ठानं तिलपात्र नमोऽस्तु ते ॥

"देव देव जगन्नाथ वाञ्छितार्थफलप्रद । तिलपात्रं प्रदास्यामि रूपाग्रे सुस्थितोऽस्म्यहम्" ॥

तिलपात्रदानम् ।

"सर्वदेवमयं धान्यं सर्वप्रीतिकरं महत् । प्राणिनां जीवनं धान्यमतः शान्तिं प्रयच्छ मे" ॥

सर्वधान्यदानम् ।

"यमप्रीतिकरा नित्यं राजमाषा महीतले । तस्मादेषां प्रदानेन सौख्यमस्तु सदा मम" ॥

राजमाषदानम् ।

"सौवर्णं पायसं पात्रं वस्त्रयुग्मेन वेष्टितम् । आवयोस्तारको यस्मादतः शान्तिं प्रयच्छ मे" ॥

आमन्त्रणाभदानम् ।

"यथा सर्वेषु रत्नेषु सर्वे देवा व्यवस्थिताः । तथा शान्तिं प्रयच्छन्तु रत्नदानेषु मे सुताः" ॥

शङ्खदानम् ।

"ब्रह्महत्त्यापनुत्यर्थं ब्रह्मणा निर्मितं पुरा । कूष्माण्डबहुबीजाढ्यमतः शान्तिं प्रयच्छ मे"

कूष्माण्डदानम् ।

"शरण्यं सर्वलोकानां लज्जाया रक्षणं परम् । सुवेशधारि त्वं यस्माद्वासः शान्तिं प्रयच्छ मे" ॥

वस्त्रस्य दानम् ।

"चन्द्रमण्डलमध्यस्थं चन्द्राम्बुजसमप्रभम् । कृष्णपं तस्य दानेन प्रीयतां मा मनो मम" ॥

कृष्णजस्य ।

"पानीयसहितं चैव सदध्योदकपात्रकम् । समर्चितं च सफलं दक्षिणं च गृहाण मे" ॥

सपानीयदध्यन्नस्य ।

"सर्वात्मा सर्वलोकेशः सर्वव्यापी सनातनः । नारायणः प्रसन्नः स्यात्कृसरान्नप्रदानतः" ।

कृसरस्य ।

"पायसं परमानन्दं सर्वदानोत्तमोत्तमम् । सर्वदैवतयोग्यं च श्रेयः पुष्टिं प्रयच्छतु" ॥

पायसान्नस्य ।

"आदित्यतेजसाऽभ्यक्तं ज्ञातिश्रैष्ठ्यकरं परम् । तद्दन्ते मम विप्रत्वं प्रतीच्छापूपमुत्तमम्" ॥

अपूपान्नस्य ।

"प्राजापत्या यतः प्रोक्ताः सक्तवो यज्ञकर्मणि । तस्मात्सक्तुं प्रयच्छामि प्रीयतां मे प्रजापतिः"॥

सक्त्वन्नस्य ।

"दर्शनेन त्वमादर्श नृणां मङ्गलदायक । शौर्यसौभाग्यसत्कीर्तिनिर्मलज्ञानदो भव" ॥

दर्पणस्य ।

"यथा रत्नेषु सर्वेषु सर्वे देवा व्यवस्थिताः । तथा शान्तिं प्रयच्छन्तु रत्नदानेन मे सुराः" ॥

रत्नस्य ।

"ताम्रवर्ण्यर्णवोत्पन्नाः पर्णाद्याः कल्पवर्णिताः । मुक्ताः शुक्त्युद्भवाः सन्तु मुक्तिभुक्तिप्रदा मम" ॥

मुक्तानाम् ।

"कान्तारनद्दुर्गेषु चोरव्यालाकुले पथि । हिंसका मात्र हिंसन्तु सिंहदानप्रभावतः" ॥

सिंहस्य ।

"हिरण्यगर्भसंभूतं सौवर्णं चाङ्गुलीयकम् । धर्मप्रदं प्रयच्छामि प्रीयतां कमलापतिः" ॥

अङ्गुलीयकस्य ।

"काञ्चनं हस्तवलयं रूपकान्तिसुखप्रदम् । विभूषणं प्रदास्यामि विभूषयतु मां सदा" ॥

वलयस्य ।

"क्षीरोदमथनं पूर्वमुद्धृतं कुण्डलद्वयम् । श्रिया सह समुद्भूतं ददे श्रीः प्रीयतां मम" ॥

कुण्डलस्य ।

"मणिकाञ्चनपुष्पाणि मणिमुक्तामयानि च । तुलसीपत्रदानस्य कलां नार्हन्ति षोडशीम्" ॥

सुवर्णतुलस्याः ।

"तुलसीपत्रदानादि ब्रह्मणः कायसंभवम् । पापं प्रशममायातु सर्वे सन्तु मनोरथाः" ॥

तुलस्याः ।

"कामधेनोः समुद्भूतं देवानामुत्तमं हविः । आयुर्विवर्धनं दातुराज्यं पातु सदैव माम्" ॥

**आज्यस्य**

"कण्टकोच्छिष्टपाषाणवृश्चिकादिनिवारणे । पादुके संप्रदास्यामि विप्र प्रीत्या प्रगृह्यताम्" ॥

**पादुकयोः ।**

"शशाङ्ककरसंकाशं हिमडिण्डीरपाण्डरम् । प्रोत्सारयाशु दुरितं चामरामरवल्लभं" ॥

**चामरस्य ।**

"नन्दनावासमन्दारसखवृन्दारकाश्रित । चन्दन त्वत्प्रसादान्मे सांद्रानन्दप्रदो भव" ॥

**चन्दनस्य ।**

"श्रीखण्डागरुकर्पूरकस्तूरीकुङ्कुमान्वितम् । विलेपनं प्रयच्छामि सौख्यमस्तु सदा मम" ॥

**गन्धस्य ।**

"समस्तेभ्योऽपि वस्तुभ्यः संस्तुताऽसि सुरासुरैः । विन्यस्ताङ्गेषु कस्तूरी सुखदाऽस्तु सदा मम" ॥

**कस्तूर्याः ।**

"कन्दर्पदर्पदं यस्मात्कर्पूरं प्राणतर्पणम् । अहर्पतिभवस्तापस्तद्दानादपसर्पतु " ॥

**कर्पूरस्य ।**

"यद्भून्मङ्गलं लग्नं कुङ्कुमादिविलेपनम् । जलक्रीडासु गोपीनां द्वारवत्यां जलार्पितम् ॥
"गोपीचन्दनमित्युक्तं मुनीन्द्रैः किल्बिषापहम् । तस्मादस्य प्रदानेन विष्णुर्दिशतु वाञ्छितम् " ॥

**गोपीचन्दनस्य ।**

"त्वया सुराणाममृतं विधाय हालाहलं संहृतमेव यस्मात् ।
तथा सुराणां त्रिपुरं च दाहमेकेपुणा लोकहितार्थमीश ॥
"त्वद्रूपदानादहमेव दोषैर्यथा विमुक्तस्तु गुणान्प्रपद्ये । तथा कुरु त्वं शरणं प्रपन्ने मयि प्रभो देववरप्रसादम्" ॥

**शिवप्रतिमायाः ।**

"प्रसीदतु भवो नित्यं कृत्तिवासा महेश्वरः । पार्वत्या सहितो देवो जगदुत्पत्तिकारकः " ॥

**उमामहेश्वरस्य ।**

"शिवशक्त्यात्मकं यस्माज्जगदेतच्चराचरम् । तस्मादनेन सर्वं मे करोतु भगवान् शिवम् ॥
"कैलासवासी गौरीशो भगवान्भगनेत्रभृत् । चराचरात्मको लिङ्गरूपी दिशतु वाञ्छितम् " ॥

**लिङ्गस्य ।**

"सर्वभूताश्रया भूमिर्वराहेण समुद्धृता । अनन्तसस्यफलदा ह्यतः शान्तिं प्रयच्छ मे " ॥

**भूमेः ।**

"ऊर्णा मेषसमुत्पन्ना शीतवातभयापहा । यस्मात्तुषारहारी स्यादतः शान्तिं प्रयच्छ मे" ॥

**और्णस्य ।**

"धान्यं करोति दातारमिह लोके परत्र च । यस्मात् प्रदीयते धान्यमतः शान्तिं प्रयच्छ मे" ॥

**धान्यस्य ।**

"धान्यराजाश्च माङ्गल्याद्द्विजप्रीतिकरा यवाः । तस्मादेषां प्रदानेन ममास्त्वभिमतं फलम्" ॥

**यवानाम् ।**

"मनोभवधनुर्मध्यादुद्भूता शर्करा इति । तस्मादस्य प्रदानेन मम सन्तु मनोरथाः" ॥

**गुडखण्डस्य ।**

"यस्मात्पितॄणां श्राद्धे त्वं प्रीतं मध्वमृतोद्भवम् । तस्मात्तव प्रदानेन रक्ष मां दुःखसागरात्" ॥

**मधुनः ।**

"वारिपूर्णघटोपेतं देवत्रयमयं पयः । प्रीयतां धर्मराजस्तु दानेनानेन पुण्यदः" ॥

**उदकुम्भस्य ।**

"पानीयसहितं चैव सदध्योदकपात्रकम् । समन्वितं दक्षिणया सफलं च गृहाण मे" ॥

**पानीयदध्योदनस्य ।**

"इदं गृहं गृहाण त्वं सर्वोपस्करसंयुतम् । तव विप्र प्रदानेन ममास्त्वभिमतं फलम्" ॥

**गृहस्य ।**

"गवामङ्गेषु तिष्ठन्ति०" । **गोः ।**

"यमद्वारे महाघोरे या सा वैतरणी नदी । तां तर्तुकामो गच्छामि उत्तराय सुखेन माम्" ॥

**वैतरण्याः ।**

"मृत्यूत्क्रान्तौ प्रवृत्तस्य सुखोत्क्रान्तिनिवृत्तये । तुभ्यं संप्रददे नाम्ना गां समुत्क्रान्तिसंज्ञिकाम्" ॥

**उत्क्रान्तिगोः ।**

"धर्मस्त्वं वृषरूपेण जगदानन्दकारक । अष्टमूर्तेरधिष्ठानमतः शान्तिम्०" ॥

**वृषस्य ।**

"विष्णुस्त्वमश्वरूपेण यस्मादमृतसंभवः । चन्द्रस्य वाहनं नित्यमतः शान्तिम्०" ॥

**अश्वस्य ।**

"रथाय रथनाथाय नमस्ते विश्वकर्मणे । विश्वभूतादिनाथाय अरुणाय नमो नमः" ॥

**रथस्य ।**

"इन्द्रादिलोकपालानां या राजमहिषी सदा । महिषीदानमाहात्म्यादस्तु मे सर्वकामदा" ॥

**महिष्याः ।**

"महिषीं वत्ससंयुक्तां सुशीलां च पयस्विनीम् । रक्तवस्त्रेण पुष्पेण दत्त्वा मृत्युं जयेन्नरः" ॥

**मृत्युमहिष्याः ।**

"यस्मात्त्वं छागयज्ञानामाहुतित्वे व्यवस्थितः । यानं विभावसोर्नित्यमतः शान्तिम्०" ॥

**छागस्य ।**

"देवानां यो मुखं हव्यवाहनः सर्वदेवतः । तस्य त्वं वाहनं पूज्यं देवैः सेन्द्रैर्महर्षिभिः" ॥

"अग्निमान्द्यं पूर्वकर्मविपाकोत्थं तु यन्मम । तत्सर्वं नाशय क्षिप्रं जठराग्निं विशालय" ॥

**मेषस्य ।**

"वाङ्मनःकायजनितं यत्किंचिन्मम दुष्कृतम् । तत्सर्वं विलयं यातु त्वद्दानेनोपसेवितम्" ॥

**मेष्याः ।**

"भगवन्शूलहस्तेश दक्षाद्यरिविनाशन । तवायुधप्रदानेन शूलं नश्यतु सर्वदा" ॥

**शूलस्य ।**

"तिलाः स्वर्णमया युक्ता दुरितक्षयकारकाः । विष्णुप्रीतिकरा नित्यमतः शान्तिम्०" ॥

**हिरण्यतिलपात्रस्य ।**

"शङ्कुकर्णप्रलम्बोष्ठलम्बभ्रूर्दीर्घनासिक । अष्टनेत्रचतुर्वक्त्रविस्तीर्णशतयोजन" ॥

"व्यतीपात नमस्तेऽस्तु सोमसूर्यसुत प्रभो । यद्दानादिकृतं किंचित्तदक्षय्यमिहास्तु मे" ॥

**व्यतीपातस्य ।**

"या लक्ष्मीर्यच्च मे दौःस्थ्यं सर्वाङ्गेषु व्यवस्थितम् । तत्सर्वं शमयाज्यत्वं लक्ष्मीं पुष्टिं च वर्धय" ॥

**आरोग्यार्थाज्यस्य ।**

"आज्यं तेजः समुद्दिष्टमाज्यं पापहरं स्मृतम् । आज्यं सुराणामाहारमाज्ये देवाः प्रतिष्ठिताः" ॥

**पापक्षयार्थाज्यस्य ।**

"यस्मादायसकर्माणि त्वदधीनानि सर्वदा । लाङ्गलाद्यायुधादीनि अतः शान्तिं०" ॥

**अयःपिण्डस्य ।**

"त्वं देवानां मनुष्याणां रक्षसामायुधं ह्यसि । तस्मात्सर्वप्रयत्नेन शान्तिर्भवतु मे सदा" ॥

**आयुधस्य ।**

"केशवप्रीतिदा भक्त्या शम्भुब्रह्मार्कपुष्टिदाः । पृथग्विधापूपकाद्या यच्छन्तु बलमौरसम्" ॥

**भक्ष्याणाम् ।**

"मासोद्भवानि दारूणि जातवेदःप्रियाणि च । तस्मादेषां प्रदानेन श्रियं देहि विभावसो" ॥

**काष्ठस्य ।**

"ह्लादयन्ति मनो यस्मात्तस्मात्सुमनसः स्मृताः। दत्ता ददतु मे नित्यमत्याह्लादं सदा श्रियम्"॥

**सुमनसाम् ।**

"जरा नो जायते यस्मान्मण्डनं शुभकर्मसु । तस्माज्जीरकदानेन प्रीयतां गिरिजा मम" ॥

**जीरकस्य ।**

"ताम्बूलं श्रीकरं भद्रं ब्रह्मविष्णुशिवात्मकम् । अस्य प्रदानाद्ब्रह्माद्याः श्रियं ददतु पुष्कलाम्"॥

**ताम्बूलस्य ।**

"पूरितं पूगपूगेन नागवल्लीदलान्वितम् । पूर्णेन चूर्णपात्रेण कर्पूरपिटिकेन च" ॥

"सपूगखण्डनं दिव्यं गन्धर्वाप्सरसां प्रियम् । करङ्कत्वं निरातङ्कं त्वत्प्रसादात्कुरुष्व माम्" ॥

**करङ्कस्य ।**

"लक्ष्मीप्रिया च लक्ष्मीदा लक्ष्मी च वसनाश्रया । सौभाग्यकृद्वरस्त्रीणां हरिद्रा श्रीप्रदाऽस्तु मे" ॥

**हारिद्रायाः ।**

"गम्भीमिमां प्रयच्छामि विश्वकर्माधिदैवताम् । दानेनानेन भगवान्प्रीयतां मे वरः पुमान्" ॥

**शकट्याः ।**

**दशदानानां** परिमाणं **मदनरत्नेऽभिहितम्** । तत्र गोमूल्यं सुवर्णरूप्ययोर्निष्कं तदर्धं वा । भूपरिमाणं च उत्तमपक्षे गोचर्ममात्रम् । लक्षणं च ।

"दशहस्तेन दण्डेन त्रिंशद्दण्डानिवर्तनम् । दश तान्येव" गोचर्मेति ज्ञेयम् । मध्यमपक्षे दशहस्ताः समन्ततः । अधमपक्षे पञ्चहस्ताः । निष्कमात्रं सुवर्णं दक्षिणा । तिलराशिदानम् । राशिपरिमाणं च पुरुषमात्रम् । द्रोणमात्रतिलदानं वा द्रोणपरिमाणं च ।

"पलं च कुडवः प्रस्थ आढको द्रोण एव च । धान्यदानेषु बोद्धव्या क्रमशोऽमी चतुर्गुणाः" ॥ इति ।

पलपरिमाणं च 'मुष्टिरेकपलमिति' **महार्णवानु**सारेण षट्पञ्चाशदधिकशतद्वयं मुष्टयः ।

"पलं सुवर्णाश्चत्वारः पञ्च वाऽपि प्रकीर्तिताः" । इति मते तु षोडशसेरा अष्टादशसेरा वा । तिलदानं तिलपात्रदानमिति केचित् । पात्रमानं च षोडशपलानि । एतद्दक्षिणामाषचतुष्टयं सुवर्णम् । हिरण्यप्रमाणमेकस्तोलकः । तावत्येव दक्षिणा । आज्यप्रमाणं तु उत्तमपक्षे षष्टिपलानि ६० । मध्यमपक्षे चत्वारिंशत् ४० । अधमपक्षे १२ । दक्षिणा सुवर्णं माषाः । लवणं तावदेव । गुडो द्विगुणः । दक्षिणा पूर्ववत् । धान्यं च पञ्चद्रोणपरिमितं । दक्षिणा यथाशक्ति । इति दशदानपरिमाणानि ।

**दिवोदासनिबन्धे ।**

"दृष्ट्वा स्थानस्थमासन्नमर्धोन्मीलितलोचनम् । भूमिस्थं पितरं पुत्रो यद्धि दानं प्रदापयेत् ॥

"तद्विशिष्टं गयाश्राद्धादश्वमेधशतादपि" । तत्रैव **पुराणान्तरं** ।

"भूमिरश्वो यथाशक्ति तिलद्रोणोच्चयं तथा। गौः सुशीला च दोग्ध्री च कुम्भेराज्यं च पञ्चभिः॥
"पलमेकं तु रौप्यस्य सुवर्णस्य सुवर्णकम्। दशवस्त्रैर्महादानं दातव्यं च मुमुक्षुणा"॥ इति।

अथ तत्रैवोक्तं **मोक्षधेनुदानम्**। तत्र मन्त्राः।

"मोक्षं देहि हृषीकेश मोक्षं देहि जनार्दन। मोक्षधेनुप्रदानेन मुकुन्दः प्रीयतां मम"॥

अथ **ऋणधेनुः**।

"ऐहिकामुष्मिकं यच्च सप्तजन्मार्जितमृणम्। तत्सर्वं शुद्धिमायातु गामेतां ददतो मम"॥

अथ **पापधेनुः**।

"आजन्मोपार्जितं पापं मनोवाक्कायकर्मभिः। तत्सर्वं नाशमायातु गोप्रदानेन केशव"॥ इति।

अथ **नवग्रहदानानि जातकाभरणे सारावल्याम्**।

"माणिक्यगोधूमसवत्सधेनुः कौसुम्भवासो गुडहेमताम्रम्।
"आरक्तकं चन्दनमम्बुजं च वदन्ति दानं हि **विरोचनाय**॥
"सद्वंशपात्रस्थिततण्डुलाश्च कर्पूरमुक्ताफलशुभ्रवस्त्रम्।
युगोपयुक्तं वृषभं च रौप्यं **चन्द्राय** दद्याद्घृतपूर्णकुम्भम्॥
प्रवालगोधूममसूरिकाश्च वृषोऽरुणश्चापि गुडः सुवर्णम्।
"आरक्तवस्त्रं करवीरपुष्पं ताम्रं च **भौमाय** वदन्ति दानम्॥
"चैलं च नीलं कलधौतकांस्यं मुद्गाज्यगारुत्मतसर्वपुष्पम्।
"दासी च दन्तौ द्विरदस्य नूनं वदन्ति दानं **विधुनन्दनाय**॥
"शर्करा च रजनी सुरङ्गमः पीतधान्यमपि पीतमम्बरम्।
"पुष्परागलवणं सकाञ्चनं प्रीतये **सुरगुरोः** प्रदीयते॥
"चित्राम्बरं शुभ्रतरस्तुरङ्गो धेनुश्च वज्रं रजतं सुवर्णम्।
"सतण्डुलान्योत्तरमन्नयुक्तं वदन्ति दानं **भृगुनन्दनाय**॥
"गोमेदरत्नं च तुरङ्गमश्च सुनीलचैलामलकं बलोजः।
"तिलाश्च तैलं खलु लोहमिश्रं **स्वर्भानवे** दानमिदं वदन्ति॥
"वैदूर्यरत्नं सतिलं च तैलं सुकंबलश्चापि मदो मृगस्य।
"शस्त्रं च केतोः परितोषहेतोश्छागश्च दानं कथितं मुनीन्द्रैः"॥

अथ **दक्षिणानिर्णयः**। तत्र **शतपथश्रुतिः**। "स एष यज्ञो ह तेन ददृक्षे तं देवा-दक्षिणाभिरक्षयंस्तद्यदेनं दक्षिणाभिरदक्षयंस्तस्माद्दक्षिणा नामेति"।

**भविष्यपुराणे**।

"अथ ह्यदक्षिणं दानं व्रतं चैव नृपोत्तम। विफलं तद्विजानीयाद्भस्मनीव हुतं हविः॥

**षड्विंशतिमतात्** ।

"श्रद्धायुक्तः शुचिर्दान्तो दानं दद्यात्सदक्षिणम् । अदक्षिणं तु यद्दानं तत्सर्वं निष्फलं भवेत्" ॥

**मैत्रायणीयपरिशिष्टम्** । दक्षिणालाभे मूलानां भक्षाणां ददाति न त्वेवं यजेत । तथा च **शतपथश्रुतिः** । "तस्मान्नादक्षिणं हविः स्यादिति" । **भविष्योत्तरे** ।

"काम्यं यद्दीयते किंचित्तत्सर्वं च सुखावहम् । असमग्रं च दोषाय भवतीह परत्र च ॥
"तस्मान्न दक्षिणाहीनं विधानविकलं तव । देहि दानं महाराज समग्रफलकाङ्क्षया ॥
"अन्यथा दीयमानं तदपकाराय केवलम् । प्रत्यक्षतश्चार्थहानिर्नैव तत्फलदं भवेत्" ॥

आह भगवान् **व्यासः** ।

"सुवर्णं परमं दानं सुवर्णं दक्षिणापरम् । सर्वेषामेव दानानां सुवर्णं दक्षिणेष्यते" ॥

एतच्च विशेषविहितगोवस्त्रादिदक्षिणकदानवर्जं सामान्यविहितदक्षिणेषु दानेषु व्यवतिष्ठते । तत्रापराश्रेष्ठतमेऽतिप्राशस्त्यं दर्शयति । न त्वन्यां दक्षिणां निराचष्टे आनन्त्यार्थत्वाच्च । दक्षिणायाः सुवर्णे । न च ततः प्रकृष्टत्वात्सर्वदानेषु सुवर्णं दक्षिणेति वचनार्थः । अन्यदपि पुरुषस्याहारौपयिकं तण्डुलादिकं दक्षिणार्थं नियोज्यम् । यत्तु श्रूयते ।

"अन्येषां सर्वदेवानां सुवर्णं दक्षिणा स्मृता । सुवर्णे दीयमाने तु रजतं दक्षिणेष्यते" ॥

इति तदेतत्कौतस्त्यं परिज्ञाय श्रद्धातव्यम् । **स्मृत्यन्तरे** ।

"सुवर्णं रजतं ताम्रं तण्डुला धान्यमेव तु । नित्यश्राद्धं देवपूजा सर्वमेतददक्षिणम्" ॥

**स्कन्दपुराणे** ।

"देयद्रव्यतृतीयांशं दक्षिणां परिकल्पयेत् । अनुक्तदक्षिणे दाने द्रव्यांशं वाऽपि शक्तितः" ॥

तुलापुरुषादिदानान्यधिकृत्य **लिङ्गपुराणे** ।

"दक्षिणा च शतं चार्द्धं तदर्द्धं वा प्रदापयेत् । ऋत्विजां चैव सर्वेषां दशनिष्कान्प्रदापयेत्" ॥

**भविष्योत्तरे** ।

"ज्ञेयं निष्कशतं पार्थ दानेषु विधिरुत्तमः । मध्यमस्तु तदर्द्धेन तदर्द्धेनाधमः स्मृतः ॥
"मेध्यां च कालपुरुषे तथाऽन्येषु मखेषु च । एवं वृत्ते रथेन्द्रे च धेनोः कृष्णाजिनस्य च ॥
"अशक्तस्यापि क्लृप्तोऽयं पञ्चसौवर्णिको विधिः ।
"अतोऽप्यल्पेन यो दद्यान्महादानं नराधिप । प्रतिगृह्णाति वा तस्य दुःखशोकावहं भवेत्" ॥

जपाभिषेकमुदाहृत्य **लिङ्गपुराणे** ।

"अष्टषष्टिपलोन्मानं दद्याद्वै दक्षिणा गुरोः । होतॄणां चैव सर्वेषां त्रिंशत्पलमुदाहृतम् ॥
"अध्येतॄणां तदर्द्धेन द्वारपानां तदर्द्धतः" ।

एतेन अन्यत्रापि गुरोरर्द्धमृत्विजाम् तदर्द्धं जापकानाम् तदर्द्धं द्वारपालानामिति दक्षिणाविभागोऽवगंतव्यः । एतानि च मानानि अर्वाक्निषेधपराणि च । उक्तं हि **गरुडपुराणे** ।

"शतनिष्कमथोपेतं तदर्द्धार्द्धमथाऽपि वा । अतो न्यूनं न दातव्यमनाकफलमूर्ज्जितम्" ॥

**ब्रह्मवैवर्ते । सुबाहुरुवाच ।**

"देवानां प्रतिमां विप्र गृहीत्वा ब्राह्मणः स्वयम् । आत्मोपयोगं कुरुते विक्रीत्वा वा विभज्य वा ॥
"तिलधेन्वादयश्चैव कथं भक्त्या विजानता । धेनुत्वाद्रक्षणं शस्तं न शस्तं वेति संशयः" ॥

**विश्वामित्र उवाच ।**

"धर्मस्य मूलं प्रथमं श्रुतिं वेदविदो जगुः । श्रुतिमूलं स्मृतीनां च पुराणं सेतिहासकम् ॥
"श्रुतिमूलं समाख्यातं तदुक्तं नैव चालयेत् । दानकाले तु देवत्वं प्रतिमानां प्रकीर्तितम् ॥
"धेनूनामपि धेनुत्वं श्रुत्युक्तं दानयोगतः । दातुर्वै दानकाले तु धेनवः परिकीर्तिताः ॥
"विप्रस्य व्ययकाले तु द्रव्यं तदिति निश्चयः ।
"दानसंबन्धि विप्रेण द्रव्यमादाय गच्छता । तत्सर्वं विदुषा तेन विक्रेयं स्वेच्छया विभो ॥
"कुटुम्बभरणं कार्यं धर्मकार्यं च सर्वशः । अन्यथा नरकं यातीत्येवमाह पितामहः ॥
"कथं तिलानां धेनुत्वं देवत्वं प्रतिमासु च । उभयोः शास्त्रतो विद्याद्धेनुत्वं देवतां तथा ॥
"शास्त्रं प्रमाणं परमं प्रमाणानामिति स्थितिः । आगमादेव लोकस्य प्रतीतिर्नान्यतः कुतः ॥
"पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम् । आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः"॥२१६॥

इति दानधर्मप्रकरणम् ।

---

# अथ श्राद्धप्रकरणम् १०



अवसरसंगत्या आह । **इदानीमिति** । तत्र तावद्वक्ष्यमाणसंगतये उत्तरोत्तरोपयोगि पूर्वपूर्वकमुपोद्घातं वक्तुमादौ तल्लक्षणमाह । **श्राद्धमिति** । 'अदनीये'त्यनेन शय्यादानादावतिप्रसंगो वारितः । आमादिसंग्रहायाह । **तदिति** । मूलभूतसपिण्डीकरणाशयेनाह । **प्रेतोद्देशेनेति** । तदुक्तं **चतुर्विंशतिमते** ।

"मृतानां तु भवेच्छ्राद्धं ब्राह्मणैर्वेदपारगैरिति"। अग्रे तु पित्रुद्देशेनेति बोध्यम् । यद्वा प्रेतशब्दो यौगिकोऽत्र पितृसामान्यपरः प्रेतादीत्यर्थो वा । तदुक्तं **ब्रह्माण्डे**

"देशे काले च पात्रे च श्रद्धया विधिना च यत् । पितॄनुद्दिश्य विप्रेभ्यो दत्तं श्राद्धमुदाहृतम्"॥ **इति** ।

**त्याग इति** । विशेष इत्यर्थः । तथा च शुद्धिसत्यादिसंयुत इति **गृह्यविदः** । जीवच्छ्राद्धादौ प्रयोगस्तु गौण इति तात्पर्यम् । सङ्केतविशेषसंबन्धेन श्राद्धपदवत्त्वं तदिति तत्वम् । तत्र

येषां कल्पसूत्रे यावदितिकर्तव्यताकं कर्मोक्तं तेषां तावदेव प्रधानस्य सूत्रोक्ताङ्गकलापेनैवाकाङ्क्षाशान्ते-रन्यस्मृताद्युक्ताकाङ्क्षाभावात् । येषां तु प्रधानमात्रं सूत्रे उक्तं नाङ्गकलापस्तत्रेतिकर्तव्यताकाङ्क्षायां स्मृत्याद्युक्ततदन्वयः । एतन्न्यायफलकमेव पठन्ति ।

"बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रचोदितम् । तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत्" ॥ इति **गृह्यविदः** ।

"स्वकं कर्म परित्यज्य यदन्यत्कुरुते नरः । अज्ञानादथवा लोभात्स तेन पतितो भवेत्" ॥ इति च।

तस्मात्स्वगृह्योक्तं बह्वल्पं वा यादृशमुक्तं तत्तथैवानुष्ठेयम् । न तु शास्त्रान्तरापेक्षयाऽन्यथ-यितव्यम् । येषां तु स्मृत्यन्तरोक्तस्य कस्यचिदङ्गस्य निषेधस्तत्र किंचिन्निषेधद्वारा तत्स्मृत्युक्तस्या-न्यस्याभिमतत्वबोधनात्तदनुष्ठेयमेवेति **संप्रदायविदः** । एतन्मूलकमेव पठन्ति ।

"आत्मतन्त्रेषु यन्नोक्तं तद्ग्राह्यं पारतन्त्रिकम् । विशेषाः खलु सामान्या वेदोक्ता वेदवादिभिः"॥इति।

ये स्वशास्त्रेऽनुक्ता विशेषास्ते खलु निश्चितं सामान्याः साधारणा इत्यर्थः । अत एव **लौगाक्षिः** ।

"ऊनो वाऽप्यतिरिक्तो वा यः स्वशाखोदितो विधिः । तेन संतनुयाद्यज्ञं न कुर्यात्पारतन्त्रिकम्"॥इति।

अत्र यज्ञग्रहणमुपलक्षणम् ।

"एकमुद्दिश्य यच्छ्राद्धमेकोद्दिष्टं प्रकीर्तितम् । त्रीनुद्दिश्य तु यद्दत्तं तत्पार्वणमुदाहृतम्" ॥

इति **कण्वोक्तेराह** । **तत्र त्रीति** । तयोर्मध्ये इत्यर्थः । एवमग्रेऽपि पुरुषत्वमविवक्षितमुभयत्र । तत एव प्रकारान्तरेण विभजते । **पुनश्चेति** । एवमग्रेऽपि । **नियतेति** । कर्मधारयद्वयम् । एवमग्रेऽपि बोध्यम् । **यथा स्वर्गेति** । इदं तिथीनामप्युपलक्षणम् । स्फुटीभविष्यति चैतदग्रे । **पार्वणं** दर्शश्राद्धादि । **एकोद्दिष्टं** नवश्राद्धम् । **इत्यादिनोक्तमिति** । तस्य कालः स्वरूपं चोक्तमित्यर्थः । तथा च **मनुः** ( अ. ३ श्लो. ८२ ) ।

"दद्यादहरहः श्राद्धमन्नाद्येनोदकेन वा । पयोमूलफलैर्वाऽपि पितृभ्यः प्रीतिमक्षयाम्" ॥ इति ।

तत्र **श्राद्धदेश उच्यते** । तत्र तावद्**विष्णुधर्मोत्तरे** ।

"दक्षिणाप्रवणे देशे तीर्थादौ वा गृहेऽपि वा । भूसंस्कारादिसंयुक्ते श्राद्धं कुर्याद्विचक्षणः"॥ इति।

दक्षिणाप्रवणे दक्षिणतोऽवनते । भूसंस्कारो गोमयेनोपलेपः ।

"दक्षिणाप्रवणे देशे श्राद्धं कुर्यात्तु पैतृकम्" । इति **बृहत्पराशरोऽपि** । पैतृकमित्युक्ते-र्थादैवमुदक्प्रवणे बोध्यम् । **गोभिलः** ।

"परकीयप्रदेशे तु श्राद्धं यत्क्रियते नरैः । तद्भूमिस्वामिपितृभिर्हन्यते श्राद्धकर्म तत् ॥

"अग्रभागं ततस्तेभ्यो दद्यान्मूल्यं च जीवताम्" । इति **शङ्खः** ।

"गोगजाश्वादिपृष्ठेषु कृत्रिमायां तथा भुवि । न कुर्याच्छ्राद्धमेतेषु पारक्यासु च भूमिषु" ॥

पारक्यासु परपरिगृहीतासु । ताश्च गोष्ठारामादयो न पुनस्तीर्थादिस्थानानि ।

तथा **चादिपुराणम् ।**

"अटवीपर्वताः पुण्या नदीतीराणि यानि च। सर्वाण्यस्वामिकान्याहुर्न हि तेषु परिग्रहः" ॥ इति।

**यमोऽपि** अटवीत्यादि । नद्यस्तीर्थानि यानि चेति विशेषः । **देवलः ।**

"श्राद्धस्य पूजितो देशो गया गङ्गा सरस्वती । कुरुक्षेत्रं प्रयागश्च नैमिषं पुष्कराणि च"॥

**व्यासः ।**

"पुष्करेष्वक्षयं श्राद्धं जपहोमतपांसि च । महोदधौ प्रयागे च काश्यां च कुरुजाङ्गले" ॥

एवं पूतिगन्धिरुक्षकृमिपूर्णपदार्थान्तरसंकीर्णपिपीलिकाव्यालादिजुष्टखरखरोष्ट्रादिजुष्टकृत्रिमश्रूयमाणानिष्टशब्दभूमयो वर्ज्यास्तन्मूलान्यन्यत्र स्पष्टानि ।

"उत्तरेण महानद्या दक्षिणेन तु कीकटात् । एष त्रैशङ्कवो देशः श्राद्धकर्मणि वर्जितः"॥ इति।

**वायुपुराणे ।**

"येषु देशेषु गमने पुनःसंस्कारः श्रूयते । तेऽपि वर्ज्याः" । पुनः संस्कारश्च मेखलाजिनदण्डकमण्डलूपवीतरहितो मौञ्जीबन्ध इति दिक् । **पार्वणमिति** । दार्शिकमित्यर्थः । **एकोद्दिष्टं** महैकोद्दिष्टम् । **तयोरिति** । नित्यनैमित्तिकयोरित्यर्थः । काम्यकालास्तु अग्रे वक्ष्यन्ते ।

## याज्ञवल्कीये २१७।२१८ श्लोकौ

**प्रकीर्तिता इति । गालवोऽपि ।**

"कृष्णपक्षोऽष्टका वृद्धिर्दर्श आदित्यसंक्रमः। चन्द्रसूर्यग्रहः पातः श्राद्धे सा च गजच्छविः"॥इति।

अमा सह वसतश्चन्द्रार्कौ यस्यामिति व्युत्पत्तेराह । **यत्रेति** । कुह्वाशयकमिदम् । **चस्त्वर्थे** । वृक्षशाखेतिवत् **दिने** इति सप्तमी । **त्रिमुहूर्त इति** । त्रिंशत्घटिकात्मकदिनाभिप्रायेणेदमन्यथा तु न्यूनाधिकभावोऽपि बोध्यः । अस्यां श्राद्धं नित्यम् ।

"श्राद्धं कुर्यादवश्यं तु प्रमीतपितृको द्विजः। इन्दुक्षये मासि मासि वृद्धौ प्रत्यब्दमेव च" इति।

**लौगाक्षेः ।**

"न निर्वपति यः श्राद्धं प्रमीतपितृको द्विजः । इन्दुक्षये मासि मासि प्रायश्चित्तीयते तु सः" ॥

इति **मनोश्च । हेमन्तेति । शौनकोऽप्येवम् ।** 'अष्टमी चाष्टका' इति विशेषः । अष्टमीष्वित्युपलक्षणम् । सप्तम्यादिदिनत्रयसाध्यकृत्स्नकर्मणोऽभिधानात् । तत्रैवाशक्तावेकस्यां वेत्यप्युक्तम् । तत्र पक्षे माघकृष्णाष्टम्यामाचारा**दापस्तम्ब**संवादाच्च । तथा च पूर्वोक्तं **बह्वृचा**दिविषयं तैत्तिरीयाणां तु माघपूर्णिमान्तराष्टम्येवाष्टका । तथा **चापस्तम्बः** (गृह्यसूत्रे ८।१०) । "या माघ्याः पौर्णमास्या उपरि **व्यष्टका तस्याष्टमी ज्येष्ठया संपद्यते तामेकाष्टकेत्याचक्षते"**

इति । तिथित्रयकरणाशक्तं प्रति **बौधायने**नाष्टमीमात्रकर्तव्यताप्युक्ता । तत एवानुसंधेया । अत्रापि तन्नित्यम् ।

"अमावास्याव्यतीपातपौर्णमास्याष्टकासु च । विद्वान्श्राद्धमकुर्वाणः प्रायश्चित्तीयते तु सः"॥ इति

**पितामहात्**। "अप्यनडुहोयवसमाहरेदग्निना वा कक्षमुपोषेदेषा मेऽष्टकेति नत्वेवानष्टकः स्यात्" **इत्याश्वलायनाच्च** (२।४।८–११)। कक्षं तृणमुपोषेद्दहेत् । अपरं चाष्टकाकर्मवन्नभस्यस्यापरे पक्षे सप्तम्यादिदिनत्रयेऽतिदिश्यन्ते एतेन "माघ्या वर्षं प्रौष्ठपद्या अपरपक्षे" **इत्याश्वलायनात्** (२।५।९)। एतेनाष्टकाकर्मणा सदृशमित्यर्थः । तथा च **पाद्मे** अग्निष्वात्तपितृकन्याया वसुनाम्ना पित्रा शप्तायाः पुनरनुगृहीताया भाद्रपदापरपक्षाष्टकात्वेनोत्पत्तिर्दर्शिता ।

"प्रौष्ठपद्यष्टका भूयः पितृलोके भविष्यसि । आयुरारोग्यदा नित्यं सर्वकामफलप्रदा" ॥ इति ।

तथा च पञ्चाष्टकाः संपन्नाः । **जन्मादिरिति** । तेन तद्विशिष्टः कालो लक्ष्यते । एवं द्रव्यमित्यत्रापि व्याख्यातृमतेऽसमस्तपाठे तथा च तन्निमित्तेषु क्रियमाणं श्राद्धं वृद्धिश्राद्धं तत्कालाश्च गर्भाधानादिसर्वसंस्काराग्न्याधेयप्रभृतिश्रौतकर्मवाप्याद्युत्सर्जनगृहप्रवेशपुत्रास्यावलोकाश्रमस्वीकारादयोऽन्यत्र स्पष्टाः । **पक्ष इति** । अमान्तमानेन कृष्णपक्षः । स च सर्वेषां मासानां न तु भाद्रपदस्यैवेति वक्ष्यते । तथा च प्रतिमासं सर्वदा कृष्णपक्षे श्राद्धम् । अत एव **कात्यायनः** । "अपरपक्षे श्राद्धं कुर्वीतोर्ध्वं चतुर्थ्या वा यदहः संपद्यते तदहर्वेति" । "कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीमिति" **मनुः** (अ. ३ श्लो. २७६)। "मासि मासि चैवं पितृभ्योऽयुक्षु प्रतिष्ठापयेत्" **इत्याश्वलायनः** (२।५।१०)। अयुक्षु विषमदिनेषु । अत्रैकदिनपक्षेऽपि दर्शे पृथगेवेति बहवः । दर्शेनैव तत्सिद्धमिति तु **भगवान्नारायणो वृत्तिकृत्** । दर्शश्राद्धमासिकयोरेककार्यकरत्वादिति तद्भावः । **मांसेति** । खड्गेत्यादिः । षष्ठीतत्पुरुषं मत्वा आह । **वक्ष्यति** । 'अग्रचा' । इत्यादिना । द्रव्यब्राह्मणेति समस्तपाठः । द्रव्यस्य खड्गमांसादेर्ब्राह्मणानां श्रुताध्ययनादिसंपन्नानां संपत्तिर्लाभो यस्मिन्काले इति बहुव्रीहिरिति **माधवस्मृतिचन्द्रिकाकारादयः** । **संक्रान्तीति** । सूर्यसंक्रम इत्यनेनैव सिद्धेऽपीत्यर्थः । **योगेति** । प्रसिद्धतर इत्यर्थः । इदं वैधृतेरप्युपलक्षणम् । तत्र पातविषये केचित्पठन्ति

"लक्षं फलं समुत्पत्तौ भ्रमणे कोटयः स्मृताः । पतने शतकोट्यस्तु पाते वै दत्तमक्षयम्" ॥

तत्परिमाणं च । **ज्योतिःशास्त्रे** ।

"द्वाविंशतिस्तथोत्पत्तौ भ्रमणे चैकविंशतिः । पतने दशनाड्यस्तु पाते वै सप्त नाडिकाः" ॥

इति तिथिनक्षत्रविशेषयुक्तो वासः । तल्लक्षणं **स्मृतिचन्द्रिकायां वृद्धमनुः** ।

"श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तके । यद्यमा रविवारेण **व्यतीपातः** स उच्यत" ॥ इति ।

नागदैवतमाश्लेषा। मस्तकं मृगशिरः। तथा च यद्यमावास्या रविवारेण श्रवणादिष्वन्यतमनक्षत्रेण च युक्ता व्यतीपात इत्यर्थः । **माधवादिग्रन्थे** स्फुटमेतत् । स्मृत्यन्तरमाह । **यदेन्दुरिति** । पितृदैवत्यं मघानक्षत्रं।हंसः सूर्यः।करो हस्तनक्षत्रम् । याम्या तिथिस्त्रयोदशी । इयमेव तत्र **गजच्छविः** ।

१ २१९ श्लोके।

"यदेन्दुः पितृदैवत्ये हंसश्चापि करस्थितः । तिथिर्वैश्रवणीया च गजच्छाया प्रकीर्तिता" ॥

इति **स्कान्दे** पाठः ।

"हंसे हंसस्थिते या तु मघायुक्ता त्रयोदशी । तिथिर्वैवस्वती नाम सा छाया कुञ्जरस्य तु" ॥ इति **पुराणान्तरे** पाठः ।

"हंसे करस्थिते या तु अमावास्या करान्विता । सा ज्ञेया कुञ्जरच्छाया" ॥

इति **बौधायनस्मृतिः** ।

"हंसे हंसस्थिते या तु अमावास्या करान्विता । सा ज्ञेया कुञ्जरच्छाया इति बौधायनोऽब्रवीत्" ॥

इति **पुराणे** । हंसः सूर्यः । तद्देवताकत्वाद्धस्तनक्षत्रमपि चन्द्रसूर्ययोर्हस्तस्थयोरिति फलितोऽर्थः । स्फुटं चैतत् **हेमाद्रौ** । अन्या अपि गजच्छाया पुराणान्तरेभ्योऽवगन्तव्याः । अस्यां मधुपायसेन श्राद्धमत्यावश्यकम् । **स्मृतिचन्द्रिका**कारमतमाह । **हस्तीति** । हस्तिच्छायेत्यर्थः । तथा च **काठकश्रुतिः** । "एतद्ध्येव पितॄणामयनं यद्धास्तिश्राद्धं तस्माच्छायायां श्राद्धं दद्यादिति" एवं च

"गजच्छायासु कुर्वीत कर्णव्यजनवीजितः' इति **भारते** लिङ्गदर्शनमप्युपपद्यते । पूर्वदिगवच्छिन्नगजसम्बन्धिच्छायावान्देश इति परे तन्मतं खण्डयति । **सेहेति प्रक्रेति** । अमेत्यादिनेति भावः । श्राद्धकाला इत्युपसंहाराच्चेत्यपि बोध्यम् । इदं च द्रव्यमित्यादिस्वोक्तिविरुद्धं यदि तु तत्र वृद्ध्यादौ च स्वोपलक्षितकालग्रहणं तर्ह्यत्रापि तथैवेति न विरोध इति बोध्यम् । **उपराग इति** । तत्रापि स्पर्शकालो ग्राह्यः ।

"त्रिदशाः स्पर्शसमये तृप्यन्ति पितरस्तथा । मनुष्या मध्यकाले तु मोक्षकाले तु राक्षसाः" ॥

इति **वृद्धवसिष्ठात्** । तदेवाह । **यदा चेति** । **रुचि**रिच्छा । **युगादीति** । स्मृत्यन्तरोक्त इत्यर्थः । तथा च **स्मृतिचन्द्रिकायां जातूकर्ण्यः** ।

"ग्रहोपरागे च सुते च जाते पित्र्ये मघायामयनद्वये च ।

"नित्यं च शङ्खे च तथैव पद्मे दत्तं भवेन्निष्कसहस्रतुल्यम्" ॥ इति । नित्यं दत्तमित्यन्वयः । तेन नित्यतालाभ इति **चन्द्रिका** । पित्र्ये नभस्यापरपक्षे या मघा तस्यामित्यर्थः । **शङ्खः** । अमावास्यापद्मोऽष्टका ।

"शङ्खं प्राहुरमावास्यां क्षीणसोमां द्विजोत्तमाः । अष्टकासु भवेत्पद्मं तत्र दत्तं तथाऽक्षयम्" ॥

इति तेनैवोक्तत्वात् । यद्वा शङ्खोक्तं पद्मं ग्राह्यम् ।

"यदा विष्टिव्यतीपातौ भानुवारस्तथैव च । पद्मकं नाम तत्प्रोक्तमयनात्तु चतुर्गुणम्" ॥

इति **देवलः** ।

**"इन्दुक्षयो गजच्छाया मन्वादिषु युगादिषु । एते कालाः समुद्दिष्टाः पितॄणां प्रीतिवर्द्धनाः" ॥ इति ।**

तथा सत्येोत्पत्तिदुःखस्वप्नजन्मर्क्षग्रहपीडाश्रयाः कल्पाद्याश्च श्राद्धकाला बोध्याः । अत्र मूलमन्यतो बोध्यम् । तथा प्रत्यब्दं मृताहमहालयावपि श्राद्धकालावित्यग्रे स्फुटीभविष्यति । एवं पदार्थानुक्त्वा वाक्यार्थमाह । **एते इति । भोक्तुरिति ।** तथा च तत्रापि भोक्तृब्राह्मणलाभे पाकेनैव श्राद्धम् । तत्रामश्राद्धविधायकानि भोक्तृविप्रालाभे इत्याहुः । केचित्तु सर्वथा तत्रामश्राद्धमेवेति वदन्ति । **कल्पादयश्च हेमाद्रौ मात्स्ये**

"वैशाखस्य तृतीया या कृष्णा वै फाल्गुनस्य च । पञ्चमी चैत्रमासस्य तथैवान्त्या तिथिः परा ॥
"शुक्ला त्रयोदशी माघे कार्तिकस्य च सप्तमी । नवमी मार्गशीर्षस्य सप्तैताः संस्मराम्यहम् ॥
"कल्पानामादयो ह्येता दत्तमक्षय्यकारकाः" ॥ इति ॥ २१७ ॥ २१८ ॥

नित्यश्राद्धे ब्राह्मणपरिक्षाया निषिद्धत्वादाह । **अहरहरिति । संपत्तिमिति ।**

"श्राद्धं परीक्ष्य दातव्यमितीयं वेदिकी श्रुतिरिति" **स्कान्दात् ।**

"यस्मिन्दोषाः प्रदृश्येरन्सद्भिर्यो वर्जितस्तु यः । जानीयाद्वाऽपि संवासाद्वर्जयेत्तं प्रयत्नतः" ॥

इति **ब्रह्मवैवर्ताच्च** । तत्परीक्षाया आवश्यकत्वात् । अत एव **मनुः** (अ. ३ श्लो. १४९)।

"न ब्राह्मणं परीक्षेत दैवे कर्मणि धर्मवित् । पित्र्ये कर्मणि तु प्राप्ते परीक्षेरन् प्रयत्नतः" ॥

इति संभवद्विषयमेतादिति **मेधातिथिः ।**

## याज्ञवल्कीये २१९ श्लोकः

**अपि**र्व्यापारान्तरसमुच्चायकः । वेदग्रहणे पौनरुक्त्यापत्त्या आह । **वक्ष्यमाणमिति ।** तृतीयाध्यायादावितेि भावः । अग्न्यादिवन्नेदं स्वतन्त्रनिमित्तमित्याह । **सर्वेति ।** मन्त्रब्राह्मणयोर्वेद इति नामधेयमित्याह । **मन्त्रेति । तद्व्रतं चेति ।** अत्र सर्वत्र लक्षणा बोध्या तदध्ययनाङ्गव्रतं चेत्यर्थः । एवमग्रेऽपि ॥ २१९ ॥

## याज्ञवल्कीये २२० श्लोकः

**अन्यदिति ।** प्राग्वत् पूर्वतुल्यतां **मन्वा**द्यविरोधाय निराचष्टे । **एते चेति । एषः ।** पितृयज्ञमित्यादिनोक्तोऽसंबन्धिदानरूपः । **प्रथमं** मुख्यः । **कल्पो** विधिः ।

"देया प्रवरभेदेन यथा कन्या द्विजैरिह । तथा श्राद्धमगोत्रेषु दद्यादप्रवरेष्विह" ॥

इति **कौर्मात् । अयं** वक्ष्यमाणः । मुख्याभावे योऽनुष्ठीयते सोऽनुकल्प इत्युच्यते प्रतिनिधिन्यायेन । **सर्वेत्यादि**स्तुत्यर्थं सद्भिरनुष्ठित इति पाठः । **स्वस्रीयादीनामिति ।** मौलक्रमानुरोधेनेदम् । **मनु**स्तु इत्थम् ( अ. ३ श्लो. १४८ ) ।

"मातामहं मातुलं च स्वस्रीयं श्वशुरं गुरुम् । दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोजयेत्" ॥ **इति ।**

विट्पतिर्जामाता । प्रजावाचित्वाद्विट्शब्दस्य अतिथिर्वेति **माधवादयः । स हि** सर्वविशां

पतिर्गृहाभ्यागतो लोकेऽपि विट्शब्देनोच्यते । बन्धुः शालसगोत्रादिः । अत्रानुकल्पत्वं तु दौहित्रातिरिक्तविषयम् ।

"व्रतस्थमपि दौहित्रं श्राद्धे यत्नेन भोजयेदिति" **मनोः** ( अ. ३ श्लो. २३४ ) । व्रतस्थं ब्रह्मचारिमात्रमध्ययनादिराहितमपि । एतच्च स्मृत्यन्तरानुरोधेन । विट्पतिर्भागिनेयादीनामप्युपलक्षणम् । एवं चैतदन्यसंबन्धिनामनुकल्पत्वं पर्यवसितम् ॥ २२० ॥

## याज्ञवल्कीये २२१ श्लोकः

मुख्यानाह । **कर्मेति** । **सभ्येति** । तथा च **सुमंतुः** ।

"पचनः पाचनस्त्रेता यस्य पञ्चाग्नयो गृहे । सायं प्रातश्च दीप्यन्ते स विप्रः पङ्क्तिपावनः" ॥ **इति** ।

पचनः औपासनः । पाचनः सभ्यः । **आपस्तम्बोऽपि** (२।१७।५–६) "गुणवदलाभे सोदर्योऽपि भोजयितव्यः । एतेनान्तेवासिनो व्याख्याताः" । इति **बौधायनः** (२।८।४) । "तस्मादेवंविधं सपिण्डमप्याशयेत्" इति । **विष्णुपुराणेऽपि** ।

"पितृव्यगुरुदौहित्रानृत्विक्स्वस्रीयमातुलान् । पूजयेद्धव्यकव्येन वृद्धानतिथिबान्धवान्" ॥ **इति** ।

अत्र ऋत्विक्सपिण्डसोदर्यपितृव्यादयो वैश्वदेवस्थाने नियोज्या । न तु पित्रादिस्थाने । तथा **चात्रिः** ।

"पिता पितामहो भ्राता पुत्रो वाऽथ सपिण्डकः । न परस्परमर्घ्याः स्युः श्राद्धादौ ऋत्विजस्तथा ॥

"ऋत्विक्पुत्रादयो ह्येते सकुल्या ब्राह्मणा द्विजैः । वैश्वदेवे नियोक्तव्या यद्येते गुणवत्तराः:" ॥ **इति** ।

विनिगमनाविरहादाह । **पञ्चेति** । एवमग्रेऽपि पितृमातृशब्दौ तत्पूजायां लाक्षणिकावत एवानङ्कृतस्तदाह । **तत्पूजेति** । **ज्ञानेति** । तदुक्तं **मनुना** । ( अ. ३ श्लो. १३४–१३७ )

"ज्ञाननिष्ठा द्विजाः केचित्तपोनिष्ठास्तथापरे । तपःस्वाध्यायनिष्ठाश्च कर्मनिष्ठास्तथैव च ॥

"ज्ञाननिष्ठेषु कव्यानि प्रतिष्ठाप्यानि यत्नतः । हव्यानि तु यथान्यायं सर्वेष्वेव चतुर्ष्वपि ॥

"अश्रोत्रियः पिता यस्य पुत्रः स्याद्वेदपारगः । अश्रोत्रियो वा पुत्रः स्यात् पिता वा वेदपारगः ॥

"ज्यायांसमनयोर्विद्याद्यस्य स्याच्छ्रोत्रियः पिता" ॥ इति । उक्तविशेषणत एव तल्लाभे तदुक्तिफलमाह । **नक्षत्रेति** । स्वतःश्राद्धे संपत्तेरभावादाह । **श्राद्धेति** । 'संपदे' इति तादर्थ्ये **चतुर्थी** । तत्फलितमाह । **श्राद्धेष्वित्यादिना** । तथा च चतुःशुद्धो ब्राह्मणः श्राद्धे उपादेयः ।

"यस्य माता पिता चात्मा शुद्धा भार्या च स द्विजः । चतुःशुद्धः स्मृतस्तज्ज्ञैः सदाचारस्तु पञ्चमः" ॥ **इत्युक्तेः** ।

**"न जातिर्न कुलं राजन्न स्वाध्यायः श्रुतं न च । कारणानि द्विजत्वस्य वृत्तमेव हि कारणम्" ॥ इति ।**

VISVA-BHARATI

**वह्निपुराणे** । जातिर्महाराष्ट्रत्वादिः ।

"अनादाविह संसारे दुर्वारे मकरध्वजे । कुले च कामिनीमूले का जातिपरिकल्पना" ॥ इति । **पुराणान्तरं** ।

"गायत्रीमात्रसारोऽपि वरं विप्रः सुयन्त्रितः । नायन्त्रितस्त्रिवेदोऽपि सर्वाशी वेदविक्रयी" ॥ इति । **व्यासः** ।

"अयाचतः सीदमानान्सर्वोपायैर्निमन्त्रयेत्" । इति **वसिष्ठः** ।

"गृहस्थानां सहस्रेण वानप्रस्थशतेन च । ब्रह्मचारिसहस्रेण यतिरेको विशिष्यते" ॥ इति

**वायुपुराणम्** । यतिर्ज्ञाननिष्ठो जपशीलोऽत्र पूज्यः ।

"भिक्षार्थमागतांश्चैव काले संयमिनो यतीन् । भोजयेत्प्रणिपाताद्यैः प्रसाद्य यतमानसः" ॥

इति **मार्कण्डेयपुराणम्** । यतिनिषेधकानि तु अदृष्टतत्वाव्रतियतिपराणि बोध्यानि । तथा च **वृद्धशातातपः** ।

"योगाभ्यासरतं शान्तं पूजयेद्यो यतिं गृही । दृष्टतत्वं विशेषेण स याति परमां गतिम्" ॥ इति । **यत्तु भविष्ये** ।

"ममाप्येतन्मतं वीर ब्राह्मणं न परीक्षयेत् । केवलां चिन्तयेज्जातिं गुणान्नो विनतात्मजः" ॥ इति

"न ब्राह्मणं परीक्षेत कदाचिदपि बुद्धिमान्" । इति **विश्वामित्रः** ।

"दानार्थं यो द्विजं पृच्छेदधीतं च श्रुतं कुलम् । यश्च तस्मै परिब्रूते ता उभौ नरकाश्रयौ" ॥ इति

**गौतमश्चे**त्यादीनि विप्रपरीक्षानिषेधकानि तानि श्राद्धेतरदानपराणि । नित्यश्राद्धपराणि वा तीर्थश्राद्धपराणि अतिथिपूजापराणि वा ।

"अज्ञानकुलनामानं द्वारदेशमुपागतम् । विपाश्रितोऽतिथिं प्राहुर्विष्णुवत्तं प्रपूजयेत् ॥

"न वृत्तं न कुलं शीलं नैव विद्यां विचिन्तयेत्" । इति **पुराणात्** ।

"तीर्थे तु ब्राह्मणं नैव परीक्षेत कदाचन । अर्चयेत् समनुप्राप्तं भोजयेन्मनुशासनात्" ॥ इति ।

**मात्स्याच्च** । एतदपि विशिष्टब्राह्मणालाभे एव वेदितव्यम् । ननु विशिष्टब्राह्मणालाभे श्राद्धान्तरं किं त्याज्यमेव नेत्याह **पराशरः** ।

"युगानुरूपतो यस्तु विद्याचारादिसंयुतः । संपूज्योऽनभिशस्तश्च षट्कर्मनिरतो द्विजः" ॥ इति ।

**आश्वलायनगृह्ये** ( ४।७।२ ) "ब्राह्मणान् श्रुतशीलवृत्तसंपन्नान् तदभावे एकेन वेति" । एकेन वा विशिष्टगुणेन युक्तानित्यर्थः । एवं च पङ्क्तिपावनादयो मुख्यास्तथा च **मनुः** ( अ. ३ श्लो. १८३–१८६ ) ।

"अपांक्त्योपहता पंक्तिः पाव्यते यैर्द्विजोत्तमैः । तान्निबोधत कार्त्स्न्येन द्विजाग्र्यान्पङ्क्तिपावनान् ॥

"अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च । श्रोत्रियान्वयजाश्चैव विज्ञेयाः पङ्क्तिपावनाः ॥

"त्रिणाचिकेतः पञ्चाग्निस्त्रिसुपर्णः षडङ्गवित् । ब्रह्मदेयात्मसंतानो ज्येष्ठसामग एव च ॥

"वेदार्थवित् प्रवक्ता च ब्रह्मचारी सहस्रदः । शतायुश्चैव विज्ञेया ब्राह्मणाः पङ्क्तिपावनाः" ॥ इति।

न केवलं तावन्मात्रमित्याह । सर्वेष्विति 'प्रोच्यन्ते व्याख्यायन्ते यैर्वेदास्तानि प्रवचनानि व्याकरणादीन्यङ्गानि तेष्वपि न केवलं तावन्मात्रमित्याह । **श्रोत्रीति । सुमन्तुः ।**

"श्रुतवन्तः शीलवन्तो व्रतस्थाः श्रोत्रिया दृढाः। अव्यङ्गास्त्रिणाचिकेता इत्येते पंक्तिपावनाः"॥इति **वृद्धमनुः ।**

"यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम् । आत्मकेवलविच्चैव पङ्क्तिपावनपावनाः" ॥

इति सिद्धमपाङ्क्तया अभोज्यान्नाश्च ये ते सर्वथा त्याज्या इति । **मात्स्येऽपि ।**

"पञ्चाग्निः स्नातकश्चैव त्रिसुपर्णः षडङ्गवित् । श्रोत्रियः श्रोत्रियसुतो विधिवाक्यविशारदः ॥

"सर्वज्ञो वेदवित्सत्री जातिवंशकुलान्वितः । पुराणवेत्ता धर्मज्ञः स्वाध्यायी जपतत्परः ॥

"शिवभक्तः पितृपरः सूर्यभक्तोऽथ वैष्णवः । ब्रह्मण्यो योगविच्छान्तो विजितात्माऽथ शीलवान् ॥

"भोजयेच्चापि दौहित्रं यत्नतः श्वशुरं गुरुम् । द्विजातिं मातुलं बन्धून् ऋत्विगाचार्यसोमपान् ॥

"यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम् । सामस्वरविधीज्ञश्च पङ्क्तिपावनपावनाः ॥

"सामगो ब्रह्मचारी च देवभक्तोऽथ धर्मवित्" इति ॥ २२१ ॥

## याज्ञवल्कीये २२२ श्लोकः

इदानीं साधारणवर्ज्यानाह । **वर्ज्यानिति** । साधारणसंग्रहायाह । **महेति** । निमित्तद्वयमिदमित्याह । **हीनमिति** । एवमन्यत्राऽपि बोध्यम् । शास्त्रप्रसिद्धेरन्यथात्वेऽपि लोकप्रसिद्ध्यनुरोधेनाह । **एकेनेति । मन्वाद्यनुरोधेनेदमुपलक्षणमित्याह । एतस्मादेवेति । विद्धप्रेति** । छिन्नशिश्नेत्यर्थः । **खलतीति** । खल्वाटेति पाठान्तरं । **मनुमाह** । **परेति** । विशेषमाह । **समिति** । कृत्रिमसंग्रहायाह । **स्वभेति** ॥ २२२ ॥

## याज्ञवल्कीये २२३ श्लोकः

तत्पुरुषाशयेनाह । **वेतनग्रेति** । व्यधिकरणबहुव्रीहिराह । **वेतनदेति । सोमस्य** तदाख्यलतायाः । **एवमिति** । मूलस्योपलक्षणत्वेन परिवित्तिसंग्रहवदनयोरपि संग्रह इत्यर्थः । **मनुमाह** । **परीति** । 'यया च परीति' पाठः । दातृयाजकौ पञ्चमौ तुर्यपञ्चमौ येषामित्यर्थः । प्रथमयोरिति वत् अयं दोषः क्वचिन्नास्तीति प्रायश्चित्तप्रकरणे स्फुटीभविष्यति ॥ २२३ ॥

## याज्ञवल्कीये २२४ श्लोकः

**मातेति** । अत्र द्वन्द्वगर्भो द्वन्द्वः । अत एवानङ् । एवमग्रेऽपि विशेषमाह । **विनेति** । पाति-

---

१ व्या. सू. ६।३।२५ ।

त्यादिनेत्यर्थः। इदमुपलक्षणमित्याह। **एवमिति।** एवमग्रेऽपि। तत्र ज्ञापकं मनुमाह। **वृद्धौ चेति।** कृत्वाऽपीत्यर्थः। यथाश्रुतार्थबाधादाह। **कुण्डस्येति।** तुल्यत्वादिदमुपलक्षणमित्याह। **एवमिति।** तत्र मानं तमेवाह। **य इति।** शौशी च वक्ष्यमाणरीत्या शूद्रस्याप्रसंगालक्ष्यार्थमाह। **निर्धर्म इति।** प्राग्वदाह। **अदत्तेति। चकारादिति।** तथा च **मनुः** ( अ. ३ श्लो. १३८ )।

"न श्राद्धे भोजयेन्मित्रं धनैः कार्योऽस्य संग्रहः। नारिं न मित्रं यं विद्यात्तं श्राद्धे भोजयेद्द्विजम्"॥**इति** ( **मनुस्मृ.** अ. ३ श्लो. १५०–१८२ )

"ये स्तेनाः पतिताः क्लीबा ये वा नास्तिकवृत्तयः। तान्हव्यकव्ययोर्विप्राननर्हान्मनुरब्रवीत्॥
"जटिलं चानधीयानं दुर्बलं कितवं तथा। याजयन्ति च ये पूगांस्तांश्च श्राद्धे न भोजयेत्॥
"चिकित्सकान्देवलकान्मांसविक्रयिणस्तथा। विपणेन च जीवन्तो वर्ज्याः स्युर्हव्यकव्ययोः॥
"प्रेष्यो ग्रामस्य राज्ञश्च कुनखी श्यावदन्तकः। प्रतिरोद्धा गुरोश्चैव त्यक्ताग्निर्वार्द्धुषिस्तथा॥
"यक्ष्मी च पशुपालश्च परिवेत्ता निराकृतिः। ब्रह्मद्विट्परिवित्तिश्च गणाभ्यन्तर एव च॥
"कुशीलवोऽवकीर्णी च वृषलीपतिरेव च। पौनर्भवश्च काणश्च यस्य चोपपतिर्गृहे॥
"भृतकाध्यापको यश्च भृतकाध्यापितस्तथा। शूद्रशिष्यो गुरुश्चैव वाग्दुष्टः कुण्डगोलकौ॥
"अकारणे परित्यक्ता मातापित्रोर्गुरोस्तथा। ब्राह्मैर्यौनैश्च संबन्धैः संयोगं पतितैर्गतः॥
"अगारदाही गरदः कुण्डाशी सोमविक्रयी। समुद्रयायी बन्दी च तैलिकः कूटकारकः॥
"पित्रा विवदमानश्च कितवो मद्यपस्तथा। पापरोग्यभिशस्तश्च दाम्भिको रसविक्रयी॥
"धनुःशराणां कर्ता च यश्चाग्रे दिधिषूपतिः। मित्रध्रुग् द्यूतवृत्तिश्च पुत्राचार्यस्तथैव च॥
"भ्रामरी गण्डमाली च श्वित्र्यथो पिशुनस्तथा। उन्मत्तोऽन्धश्च वर्ज्याः स्युर्वेदनिन्दक **एव च**॥
"हस्तिगोऽश्वोष्ट्रदमको नक्षत्रैर्यश्च जीवति। पक्षिणां पोषको यश्च युद्धाचार्यस्तथैव च॥
"स्रोतसां भेदकश्चैव तेषां चावरणे रतः। गृहसंवेशको दूतो वृक्षारोपक एव च॥
"श्वक्रीडी श्येनजीवी च कन्यादूषक एव च। हिंस्रो वृषलवृत्तिश्च गणानां चैव याजकः॥
"आचारहीनः क्लीबश्च नित्ययाचनकस्तथा। कृषिजीवी श्लीपदी च सद्भिर्निन्दित एव च॥
"उरभ्रिको माहिषिकः परपूर्वापतिस्तथा। प्रेतनिर्यातकश्चैव वर्जनीयाः प्रयत्नतः॥
"एतान्विगर्हिताचारानपाङ्क्तेयान् द्विजाधमान्। द्विजातिप्रवरो विद्वानुभयत्र विवर्जयेत्॥
"ब्राह्मणोऽप्यनधीयानस्तृणाग्निरिव शाम्यति। तस्मै हव्यं न दातव्यं न हि भस्मनि हूयते॥
"अपाङ्क्त्यदाने यो दातुर्भवत्यूर्ध्वं फलोदयः। दैवे हविषि पित्र्ये वा तं प्रवक्ष्याम्यशेषतः॥
"अव्रतैर्यद्द्विजैर्भुक्तं परिवेत्रादिभिस्तथा। अपाङ्क्तैर्यदन्यैश्च तद्वि रक्षांसि भुञ्जते"॥ **इति।**
"भ्रातुर्मृतस्य भार्यायां योऽनुरज्येत कामतः। धर्मेणापि नियुक्तायां स ज्ञेयो दिधिषूपतिः॥
"परदारेषु जायेते द्वौ सुतौ कुण्डगोलकौ। पत्यौ जीवति कुण्डः स्यान्मृते भर्तरि गोलकः॥

"तौ तु जातौ परक्षेत्रे प्राणिनौ प्रेत्य चेह च । दत्तानि हव्यकव्यानि नाशयेते प्रदायिनाम् ॥
"अपाङ्क्त्यो यावतः पाङ्क्त्यान् भुञ्जानाननुपश्यति । तावतां न फलं प्रेत्य दाता प्राप्नोति बालिशः॥
"वीक्ष्यान्धो नवतेः काणः षष्टेः श्वित्री शतस्य तु । पापरोगी सहस्रस्य दातुर्नाशयते फलम् ॥
"यावतः संस्पृशेदङ्गैर्ब्राह्मणान् शूद्रयाजकः । तावतां न भवेद्दातुः फलं दानस्य पौर्तिकम् ॥
"वेदविदपि विप्रोऽस्य कृत्वा लोभात्प्रतिग्रहम् । विनाशं व्रजति क्षिप्रमामपात्रमिवाम्भसि ॥
"सोमविक्रयिणे विष्ठा भिषजे पूयशोणितम् । अप्रतिष्ठं वार्द्धुषिके नष्टं देवलके भवेत् ॥
"यत्तु वाणिजके दत्तं नेह नामुत्रके भवेत् । भस्मनीव हुतं हव्यं तथा पौनर्भवे द्विजे ॥
"इतरेषु त्वपाङ्क्त्येषु यथोद्दिष्टेष्वसाधुषु । मेदोऽसृङ्मांसमज्जास्थि वदन्त्यन्नं मनीषिणः" ॥इति च

अत्र नक्षत्रैरिति अन्यत्र गणकेति च नक्षत्रसूचकपरं न तद्वृत्त्युपजीवकपरम् । **वसिष्ठेन** विषयविभागस्योक्तत्वात् तथा हि ।

"त्रिस्कन्धपारंगम एव पूज्यः श्राद्धे सदा भूसुरवृन्दमध्ये ।
नक्षत्रसूची खलु पापरूपो हेयो द्विजेन्द्रैः खलु धर्मकृत्ये" ॥ तल्लक्षणं **वराहः ।**
"तिथ्युत्पत्तिं न जानन्ति ग्रहाणां नैव साधनम् । परवाक्येन वर्तन्ते ते वै नक्षत्रसूचकाः" ॥ इति

**मात्स्येऽपि ।**

"पतिताभिशस्तक्लीबान्धपिशुनव्यङ्गरोगिणः । कुनखी श्यावदन् श्वित्री कुण्डो गोलोऽजपालकः ॥
"परिवित्तिर्विमुक्ताशी मत्तोन्मत्तविकारिणः । बैडालव्रतवृत्तश्च दम्भिदेवलकादयः ॥
"कृतघ्नान्नास्तिकांस्तद्वत्म्लेच्छदेशनिवासिनः । त्रिशङ्कुबर्बरौण्ड्रान्ध्रान् चीनद्रविडकोंकणान् ॥

"वर्जयेल्लिङ्गिनः सर्वानिति" पौनरुक्त्यं परिहरति । **अग्र्या इति । मनू**क्तसर्वेषामनुक्तेराह । **केषां चिदिति ।** निषेधवैयर्थ्यायाह । **प्रतीति ।** एवं च ते आचारादिगुणवत्वे मध्या इति भावः । एवं काणादयोऽपि मन्त्रविदोऽन्यासंभवे ग्राह्या एव ।

"अथ चेन्मन्त्रविद्विप्रः शारीरैः पङ्क्तिदूषणैः । अदूष्यं तं यमः प्राह पङ्क्तिपावन एव सः " ॥

**वसिष्ठात्** ( अ. ११ सू. २० ) । एवमपि महाराष्ट्रैर्विजातीया न ग्राह्यास्तत्रापि कोङ्कणस्थादयः सर्वथा न ग्राह्या इति **श्राद्धदीपकलिकादिषु** प्रामाणिकनिबन्धेष्विति सर्वशिष्टसंमतम् । तथा हि केचित्तेषु पक्षपातातिशयात् कोङ्कणत्वाद्यपलपन्ति तथापि तत्वेन निर्णीतवत्संदिग्धा अपि ते हेया एव श्राद्धवैगुण्यसंभावनयाऽपि शिष्टवर्ज्यत्वात् । वर्ज्याश्च द्विविधाः दोषवन्तः सजातीया गुणवन्तोऽपि विजातीयाः । सुतरां दोषवन्तः । तत्र सजातीयेषु अनिषिद्धालाभेऽभिशस्तत्वादिबलवद्दोषरहितो दुष्टोऽपि ग्राह्यः । विजातीयस्तु गुणवानपि तत्वादेव त्याज्यः किमुत दोषवान् । तथा च **श्राद्धदीपकलिकायां भविष्यत्पुराणे आदित्यः ।**

"तस्मात्संपूजयेदेनं गुणांस्तस्याविचिन्तयन्। केवलां चिन्तयेज्जातिं गुणाचो विनतात्मजः"॥ इति।

कन्यादानादिसंबन्धयोग्यां जातिं 'यथा कन्या तथाहविरि'त्युक्तेस्तेन तेऽपि सर्वथा हेया एवेति दिक् ॥ २२४ ॥

## याज्ञवल्कीये २२५ श्लोकः

**प्रयोगमिति** । दार्शप्रयोगमित्यर्थः । तत्र पूर्वदिने प्रथमकृत्यमुक्तम् । **वाराहे** ।

"वस्त्रशौचादि कर्तव्यं श्वः कर्ताऽस्मीति जानता। दक्षिणाप्रवणां भूमिं गोमयेनोपलेपयेत्"॥ इति। गोमयं च सवत्सायाश्चिरप्रसूतायाः कपिलायाः प्रशस्ततरम् । ततस्तत्र तिलान्विकिरेद्दर्जांश्च बध्नीयात् ॥

"तिलांश्च विकिरेत्तत्र सर्वतो बन्धयेद्दजान्। असुरोपहतं सर्वं तिलैः शुध्यत्यजेन च" ॥ इति ।

**देवलात्** । ततः कृत्यमाह । **निमन्त्रयेतेति** । साधारणनिरासायाह । **पूर्वोक्तानिति** । "श्राद्धं श्वो भविता तत्र भवद्भिर्दीयतां क्षणः" । इति ।

**कारिकोक्ते**राह । **श्राद्धे इति** । क्षणपदेन शास्त्रानुमतश्राद्धविरोधिव्यापारराहित्यमङ्गीकारसूचकोयमिति वचनम् । वा अमुकगोत्रस्य शर्मणः पार्वणश्राद्धे 'विश्वेदेवार्थं त्वया क्षणः करणीय' इत्यादिनिमन्त्रणवाक्यं "दक्षिणं जानु चान्वालभ्य त्वं मयाऽत्र निमन्त्रितः" इति । **मात्स्ये** ।

"ते तं तथेत्यविघ्नेन गतेयं रजनी यदि। यथाश्रुतं प्रतीक्षेरन् श्राद्धकर्मण्यतन्द्रिताः" ॥

**इत्यत्रिः** ।

"दक्षिणं चरणं विप्रः सव्यं वै क्षत्रियस्तथा। पादावादाय वैश्यो द्वौ शूद्रः प्रणतिपूर्वकम्"॥ इति।

**प्रचेताः** । इदं च सायमौपासनोत्तरं श्वः श्राद्धं करिष्यामीत्यपसव्येन संकल्प्य स्वयं कार्यम् । स्वस्याशक्तौ पुत्रशिष्यादिभिः कारणीयम् । तथा च **देवलः** ।

"दिवा भुक्त्वा शुचिर्भूत्वा हुत्वा विप्रान्निमन्त्रयेत्। पुत्रं वा प्रेषयेत्तत्र हीनजातिं न जातु चित्"॥ इति। तथा च सवर्णा एव योज्याः ।

"अभोज्यं ब्राह्मणस्यान्नं वृषलेन निमन्त्रितम्। तथैव वृषलस्यान्नं ब्राह्मणेन निमन्त्रितम्"॥

'प्रार्थनायां लिङि'त्याह । **प्रार्थेति** । विशेषमनुक्तमाह । **अपेति** । श्राद्धदिने इत्यर्थः ।

**मन्विति** । **कौर्मेऽपि** ।

"श्वो भविष्यति हि श्राद्धं पूर्वेद्युरभिपूजयेत्। असंभवे परेद्युर्वा यथोक्तैर्लक्षणैर्युतान्"॥ इति।

**देवलः** ।

"श्वः कर्ताऽस्मीति निश्चित्य दाता विप्रान्निमन्त्रयेत्। निरामिषं सकृद्भुक्त्वा सर्वभुक्तजने गृहे॥

---

१ व्या. द्व. ३।३।१६१ ।

"असंभवे परेद्युर्वा ब्राह्मणांस्तान्निमन्त्रयेत्" । इति ।

आमिषं च ।

"मसूरमामिषं धान्ये फले जम्बीरमामिषम् । गोवर्ज्यमामिषं क्षीरमारनालकमामिषम् ॥

"प्राण्यङ्गमामिषं चूर्णे चर्मण्युदकमामिषम् । साक्षादग्निद्विपकं च मांसं चेत्यष्टधामिषम्" ॥ इति ।

स्मृत्युक्तम् ।

तदहर्निमन्त्रणं च यतिब्रह्मचारिविषयमसंभवे तद्दिनेऽपि ।

"हित्वा योषित्प्रसङ्गिनमिति" **मार्कण्डेयोक्तेः** । एवं च व्यवस्थितोऽयं विकल्पः तथाकरणे विशेषणं हेतुतया योजयति । **आत्मेति** । वैयर्थ्यात्तात्पर्यार्थमाह । **शोक्तोन्मेति** । ब्रह्मचर्यस्य

"भोक्तुर्भोजयितुश्चैव ब्रह्मचर्यमतः परम्" इति **कारिकया** "स्यादान्नपरिणामात्तु ब्रह्मचर्यं द्वयोस्ततः" इति **स्मृत्या** चोक्तत्वादाह । **यद्वेति** । बाह्यादिशौचस्य तत एव लाभादाह । **प्रेति** । चस्यात्रान्वयादाह । **चेति** । 'तैरपी' **त्यपि** कर्तृसमुच्चये एव । करणमाह । **मनोवागिति** । तथा च निमन्त्रितान् विप्रान्प्रति ।

"अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः । भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा" ॥ इति ।

नियोगं श्रावयेत् "निमन्त्रयीत तान्भक्त्या नियोगाख्यानपूर्वकम्" इति **पराशरात्** । ब्रह्मचर्यं च ।

"स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् । संकल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च ॥

"एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः । विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम्" ॥ इति

**स्मृत्युक्तम्** । केलिर्मैथुनानुकूलक्रीडाविशेषः । अन्यत्प्रसिद्धम । स्मरणादीनि संभोगचिकीर्षया निषिद्धानि न स्वरूपतः । 'भावस्तत्र प्रयोजक' इति **स्मृतेः** । इदं च ऋत्वन्यकालविषयमिति केचित्-ऋतुकालेऽपि षोडश्यन्यपरं तस्यां सन्निहितस्य भवत्येवेत्यपरे ।

"द्विनिशं ब्रह्मचारी स्याच्छ्राद्धकृच्छ्राद्धिकैः सह" । इति **बृहस्पतिः** ।

" न च छन्दांस्यधीयीत द्विजः श्राद्धे निमन्त्रितः" । इति । **मनुः** ।

"निमन्त्र्य विप्रांस्तदहर्वर्जयेन्मैथुनं क्षुरम् । प्रमत्ततां च स्वाध्यायं क्रोधं शोकं तथानृतम्" ॥ इति

**वृद्धमनुः** । आचारसिद्धं त्वन्यत्र स्फुटम् । तत्रादौ विश्वेदेवनिमन्त्रणं सव्येन प्राङ्मुखो देवानुदग्भूत्वा निमन्त्रयेत् ।

"आग्नेय्यादिमुखः पित्र्यान्प्राचीनावीत्युदङ्मुखान्" इत्याचारप्राप्तः प्रकारः ।

"दैवाद्यन्तं तदीहेत पित्र्याद्यन्तं न तद्भवेत् । पित्राद्यन्तं त्वीहमानः क्षिप्रं नश्यति सान्वयः" ॥ इति । ( अ. ३ श्लो. २०५ ) **मनुश्च** । **स्मृतिरत्नावलीकारादयस्तु** देवानां रक्षकत्वाद्रक्ष्याभावे 'किं रक्षकैः कार्यमिति न्यायेन

"कृतापसव्यः पूर्वेद्युः पितॄन्पूर्वं निमन्त्रयेत् । भवद्भिः पितृकार्यं नः संपाद्यं च प्रसीदत ॥

"सव्येन वैश्वदेवार्थं प्रणिपत्य निमन्त्रयेत् । निमन्त्रणाद्ब्रह्मचर्यं यावदन्नं प्रजीर्यते" ॥

इति **प्राचेतसाद्** देवानां पूर्वं निमन्त्रणं स्मृतित्वाविशेषा**न्मनू**क्तेनेदं विकल्पते इत्याहुः । निर्मूलमपि वचनं पठन्ति । **विष्णुः** ।

"पुनर्भोजनमध्वानं भाराध्ययनमैथुनम् । दानप्रतिग्रहौ होमं श्राद्धभुक्त्वष्ट वर्जयेत्" ॥ इति ।

"दन्तधावनताम्बूलं तैलाभ्यङ्गमभोजनम् । रत्यौषधे परान्नं च श्राद्धकृत्सप्त वर्जयेत् ॥

अनृतवदनदिवास्वापम्लेच्छपतितादिभाषणपुनर्भोजनाध्वगमनायासद्यूतस्वाध्यायकलहहिंसाद्युभयोरपि निषिद्धमाचारात् । तन्मूलान्येव वाक्यान्यप्यन्यत्र दृश्यमानान्यनाश्वास्य मूलानीति बोध्यम् । आमन्त्रितोऽन्यदन्नं प्रतिगृह्णीयादिति **कात्यायनः** । अन्यस्मादामान्नाद्यं न प्रतिगृह्णीयादित्यर्थः । अन्यस्य क्षणकरणं तु कैमुतिकन्यायेनैव पराहतम् । **मनुरपि** ( अ. ३ श्लो. १९० ) ।

"निमन्त्रितो यथान्यायं हव्ये कव्ये द्विजोत्तमः। कथंचिदप्यतिक्रामेत्पापः शूकरतां व्रजेत्" ॥

इति कथंचिन्मिष्टान्नदक्षिणादिलोभेन एतद्दोषनिवृत्तये प्रायश्चित्तं तु यतिचान्द्रायणमित्याहुः। भोजनासामर्थ्ये नातिक्रमे तु न दोषः । यस्तु परान्ननिवृत्तस्तेन निमन्त्रणकाले एव प्रत्याख्येयं न त्वङ्गीकृत्य । इदमेवाभिप्रेत्य भगवता **पतञ्जलि**नोक्तं 'विधिनिर्मन्त्रणेति'[1]सूत्रे । यन्नियोगतः कर्तव्यं श्राद्धादि तस्य निमन्त्रणविषयत्वादेव निमन्त्रणं किं पुनस्तद्धव्यं कव्यं वा ब्राह्मणेन सिद्धं भुज्यतामित्युक्तेऽधर्मः प्रत्याख्यातुरिति । वाचार्थे । सिद्धं हव्यं कव्यं च भुज्यतामिति ब्राह्मणेनोक्तेऽर्थात् ब्राह्मणं प्रति प्रत्याख्यातुर्ब्राह्मणस्याधर्म इत्यर्थः । हव्यं कव्यं ब्राह्मणेनेत्युक्तेरन्यदीयनिमन्त्रणप्रत्याख्याने ब्राह्मणकृतेऽपि हव्याद्यन्यविषयामन्त्रणप्रत्याख्याने नाधर्म इति लभ्यते । एवं चेदं द्वितीयामन्त्रणविषयकमत एव सिद्धमित्युक्तमिति स्मृतिविरोधाधिकरणनिष्ठाद्यन्यायेनायमेवार्थस्ततो लभ्यते इति दिक् । 'अनिन्द्येनामन्त्रितो नापक्रामेदिति' **कात्यायनः** । इदं च लिप्सूनां परान्नभोजनाभ्यनुज्ञामात्रमन्यथा परान्नभोजननिन्दावाक्यानां वैयर्थ्यापत्तेः "कामं प्रतिश्रवस्तेषामनिन्द्यामन्त्रणे कृते" इति **देवलः** । तस्मात्तादृशपरान्नभोजनेऽल्पः प्रत्यवायो न तु सर्वथा प्रत्यवायाभावः संपन्नस्य त्वाधिक एव । तत्रापदि द्रुपदा शतजपः प्रायश्चित्तमतिसंकटे तु मनस्तापमात्रेण शुद्धिः । तद्विषय एव परान्नभोजनानुवादेन "न लिप्यैतैनसा विप्रो ज्वलनार्कसमो हि सः" इति **मनुः** । 'एवं कर्तापि निमन्त्रितान्नापक्रामेदिति' **यमः** । तदुत्तरं कस्यचिद्दोषोत्पत्त्यां मिथोऽतिक्रमे तु न दोषः । आमन्त्रिताश्च कुतपकालातिक्रमं न कुर्युः । एवं निमन्त्रितविप्राणामक्रोधनैरिति पुनः श्रावणानन्तरं ते 'उपह्वये सुदुघाम्' इत्यादीनि जपेयुस्तत्कर्ता प्रातः स्नानादि कृत्वा पाकसामग्रीं संपाद्य गृहिण्या पाकं कारयेत् ।

"गृहिणी चैव सुस्नाता पाकं कुर्यात्प्रयत्नतः । निष्पन्नेषु च पाकेषु पुनः स्नानं समाचरेत्" ॥

इति **व्यासोक्तेः** चादन्या अपि तत्रैता वर्ज्या रजस्वला पाखण्डा पुंश्चली पतिता शूद्रा

---

१ न्या. सू. ३।३।१६१ ।

वन्ध्या विधवाऽन्यगोत्रजा त्रुटितकर्णा अमातृपितृवंशजा चतुर्थाहःस्नाता रजस्वला च मूलमन्यत्र स्पष्टम्। पाके सहायार्थं सुतादयोऽपि शुचयो ग्राह्याः।

"तथैव यन्त्रितो दाता प्रातः स्नातः सहाम्बरः। प्रारभेत नवैः पात्रैरन्नारम्भं समाहितः" ॥

इति **हारीतेन** तु श्राद्धकर्तृकर्तृक एव पाक उक्तः। "गोमयेनोदकैर्भूमिं भाण्डानि च विशोधयेत्" **इत्युशनाः**। भाण्डानि पाकपात्राणि तत्रायसान्यभाण्डेषु पाकः मृन्मयैर्नवैरेव।

"न कदाचित्पचेदन्नमयःस्थालीषु पैतृकम्। आमृतादर्शनादेव पितरो विद्रवन्ति हि" ॥

इति पठन्ति। मूलं त्वत्र चिन्त्यम्। पक्वान्नस्थापनार्थं यज्ञियदारुजान्यपि अत्र श्राद्धीयपाक्यं इदं पितृभ्यो निर्वपामीति वदता भूमौ दर्भकूर्चेषु संस्थाप्य ततो गृह्याग्नौ लौकिके वा पाचनीयमित्याहुः। अनिश्चितमूलं वचनं च पठन्त्यत्रार्थे। अत्र मातामहाद्यर्थं पृथक्पाक इति केचित्। एक एवेत्यपरे।

"पृथक्तयोः केचिदाहुः श्राद्धस्य करणं नृप।
एकत्रैकेन पाकेन वदन्त्यन्ये महर्षयः" इति **विष्णुपुराणात्**।

"शुद्धानि वृत्तिलब्धानि न्यायप्राप्तानि यानि तु। द्रव्यैस्तैरेव कुर्वीत श्राद्धं धीमान्विधानवित्" ॥

इदं न्यायसिद्धमेव पणपूर्वकन्यासप्रदानेन लब्धं प्रति वादिनं पणपूर्वं वादे निर्जित्य यल्लब्धं स्त्रियास्वातन्त्र्यात्कुसीदसेवनादिनार्जितं धनं यच्च क्लीबेभ्यो लब्धं यच्च वेदविक्रयाल्लब्धं यच्च श्राद्धार्थं मे प्रयच्छेत्युक्त्वोपार्जितं परवृत्त्या यल्लब्धं यच्च स्त्रीधनं तत्सर्वं वर्ज्यं तत्षड्विधं विवाहकाले यद्दत्तमग्निसमीपे तदग्न्यधीत्युच्यते। यच्च श्वशुरगृहगमनकाले पितृगृहे लब्धमध्यावहनिकं तदुच्यते। श्वश्रूश्वशुराभ्यां पादवन्दनकाले प्रीत्या दत्तं पश्चान्मातुः पितुर्वा भर्तुर्वा सकाशाल्लब्धं सौगन्धिकाख्यं त्रिविधं **मात्स्ये**।

"अपहृत्य परस्यार्थं दानं यस्तु प्रयच्छति। स दाता नरकं याति यस्यार्थस्तस्य तत्फलम्" ॥

**अथ श्राद्धादपसारणीयानि**। मद्यपस्वैरिणीपरपूर्वापतिश्वित्रकुष्ठिकाणदातृप्रेक्षकचरुप्रेक्षकहीनातिरिक्ताङ्गवैद्यस्तेनश्वपाककुक्कुटवराहवृषलीपतिवृषलषण्ढरजस्वलाकाषायवसननीलवसनमलिनांतरवासपतितभ्रूणहसंकीर्णयोनिविप्रखञ्जकुणिकुष्ठिबीभत्साशुचिव्यग्रमत्तधूर्तप्रस्वेदशीलपङ्गुलब्रणिपुल्कसचण्डालादयः। कालायससीसपादुकोपानच्छत्ररक्तचित्राम्बररक्तपुष्पमार्जारनीलीतद्वस्त्राणि च वस्त्रहीनो वेदत्यागी च नग्नः सोऽप्यपसारणीयः। मूलमत्रान्यत्र स्पष्टम्। कथंचित्तादृशदुष्टदर्शने तु श्राद्धीयप्रधाननिष्पत्तिपर्याप्तमन्यदन्नं संपाद्य श्राद्धं कार्यं तदन्नं चान्येभ्यो दातव्यमित्याहुः। अन्यान्नासामर्थ्ये तु सिद्धार्थकृष्णतिलैस्तस्यावकिरणं गुरुसूर्याग्न्यजानां दर्शनीयं **चेत्यभियुक्ताः**। कीटमक्षिकाकेशदूषिते तानपसार्याद्भिः संप्रोक्ष्य भस्म किंचित्प्रक्षिपेत्। एवं गोघ्रातक्षुदुपहतवसनावधूतेष्वपि। यत्तु कीटकेशादिभिः पक्वं तदभोज्यमेव। "नित्यमभोज्यं कीटकेशविपन्नमिति" (अ. १७ सू. ८—९) **गौतमोक्तेरिति** प्रागुक्तम्। अन्योपघाते शुद्धयस्तु शुद्धिप्रकरणोक्ता द्रष्टव्याः **पराशरः**।

"गृहाग्निशिशुदेवानां यतीनां ब्रह्मचारिणाम्। श्राद्धपाको न दातव्यो यावत्पिण्डान्न निर्वपेत्" ॥ इति।
तथाऽन्यत्र "प्राक् पिण्डदानाद्गन्धाद्यैर्नालं कुर्यात्स्वविग्रहम्" इति केचिदूर्ध्वपुण्ड्राद्यपि न।
"ऊर्ध्वपुण्ड्रं द्विजातीनामग्निहोत्रसमो विधिः। श्राद्धकाले तु संप्राप्ते कर्ता भोक्ता च तत् त्यजेत्" ॥

इति **विष्णुः** ऊर्ध्वपुण्ड्रग्रहणं तिलकमात्रोपलक्षणमित्याहुः । तत्रानाश्वासो बहूनाम् ।

**अथ कुशग्रहणविधिः ।**

"ततः श्राद्धदिने कर्ता दिशं गच्छेच्च दक्षिणाम् । दक्षिणाप्रणतान्दर्भान्समूलानाहरेच्छुचिः"॥

इदं चाष्टधा विभक्तस्याह्नोद्वितीयभागे

"प्राग्यामात्संभृतान्दर्भान्वर्जयेच्छ्राद्धकर्मणि । सद्यः समाहृताः शस्ताः कुशास्तु श्राद्धकर्मणि"॥

इत्युक्तेः । **कात्यायनः ।**

"मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः । अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः" ॥इति अत्र संपादितसमुदायात्पुनः पुनर्योज्या इत्यर्थः न तु विनियुक्तानां पुनर्विनियोगः ।

"जीर्णं च परिभुक्तं च यातयाममिदं द्वयम् " । इति **कोशात् ।** ( ३।३।१४५ ) अयातयामा इत्यस्य जीर्णत्वरूपयातयामत्वाभावयन्त इत्यर्थात् ।

"ब्रह्मयज्ञेषु ये दर्भा विनियुक्ता न तेऽन्यतः । इत्यनेन विनियुक्तविनियोगनिषेधाच्चात एव **रामायणे** (अयोध्याकाण्डे एकषष्टिसर्गे । )

"हविराज्यं पुरोडाशा कुशा यूपाश्च खादिराः । नैतानि यातयामानि कुर्वन्ति पुनरध्वरे " इत्युक्तमत्र यातयामत्व विनियुक्तत्वरूपमुपभुक्तत्वम् । **स्मृत्यर्थसारे ।**

"सप्तपत्राः कुशाः शस्तास्तिलक्षेत्रसमुद्भवाः । अच्छिन्नाग्रा अशुष्काग्राः पित्र्ये तु हरिता मताः ।।

"गोकर्णदीर्घाश्च कुशाः सकृच्छिन्नाः समूलकाः"। इति पित्र्ये इति दैवस्याप्युपलक्षणम्। "अमूला दैवकार्येषु प्रयोज्याश्च जपादिषु" इति **सुमन्तुः ।** प्रत्यमं संगृहीताः कुशा मासं कर्मार्हा इति केचित्तत्र मूलानाश्वासः । कुशाभावे **त्वभियुक्ताः ।**

"कुशाः काशा यवा दूर्वा उशीराश्च सगुन्दुराः । गोधूमा व्रीहयो मुञ्जा दश दर्भाः सबल्वजाः" ॥ इति।

"येत्वन्तर्गर्भिता दर्भा ये च च्छिन्नास्तथैव च । क्वथितानग्निदग्धांश्च कुशान्यत्नेन वर्जयेत् " ॥ इति **शङ्खः ।** तत्र ।

"विरिञ्चिना सहोत्पन्न परमेष्ठिनिसर्गज । नुद सर्वाणि पापानि दर्भस्वस्तिकरो भवेत्" ॥ इति **मन्त्रेण** संप्रार्थ्य ऐशान्यभिमुखो भूत्वा खनित्रेण भुवं शिथिलीकृत्य हुंफडिति मन्त्रेण पितृतीर्थेनोत्पाटयेदित्याचारः । तच्च स्वयं पुत्रशिष्यादिभिर्वा कार्यम् । समित्पुष्पकुशादीनि श्रोत्रियः स्वयमाहरेत् ॥

"शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन्पतत्यधः " । इति **हारीतात् ।**

इति दर्भविधिः ।

अन्यदपि तिलयवपात्रादिकं श्राद्धनिर्वाहार्थं पूर्वमेव संपाद्यम् । तत्र **तिलाः ।**

---

१ क– स्मृताः ।

"अटव्यां ये समुत्पन्ना अकृष्टफलिताश्च ये। ते वै श्राद्धे पवित्राः स्युस्तिला न तु तिलास्तिलाः"॥ **इत्यापस्तम्बः**। एते एव च जर्तिलाः। तथा च **सत्यव्रतः**।

"जर्तिलास्तु तिलाः प्रोक्ताः कृष्णवर्णा वने भवाः" इति। जर्तिलानामभावे तु ग्राम्यास्तिला ग्राह्याः। "अभावे क्षेत्रजा ग्राह्याः स्त्रीनामरहिताश्च ये" इत्य**भियुक्ताः**। "नामृतेनापि नः कृत्यं तिलान्यदि लभामहे"। इति **वाराहे पितृवचः**। तत्र कृष्णा अतिप्रशस्तास्तदलाभे श्वेता अपि। अथ **निमन्त्रितानामभ्यङ्गविधिः**। **कात्यायनः**।

"तैलमुद्वर्तनं स्नानं दन्तधावनमेव च। कृतरोमनखेभ्यस्तु दद्यात्तेभ्योऽपरेऽहनि"॥ इति।

स्नानं करणे ल्युट् तत्साधनमेवदन्तधावनमित्यत्राऽपि कृतेति कृतक्षुरकर्मभ्य इत्यर्थः। उद्वर्तनं कर्पूरादिवासितं तैलापकर्षकद्रव्यं च देयम्। इदं सर्वं ताम्रपात्रे देयमित्य**भियुक्ताः**। "तैरभ्यङ्गस्तु कर्तव्योवर्ज्यं कालं न चिन्तयेत्" इति **कात्यायनः**। एतेन तैलाभ्यङ्गनिषेधतिथिषु तु आमलकोदकं देयमिति दीक्षितोक्तमपास्तम्। दर्शषष्ठीसप्तमीनवमीत्रयोदशीरविवारवर्जमामलकस्नानमपि कार्यम्। तथा च **मार्कण्डेयः**।

"अह्नः षट्सु मुहूर्तेषु गतेष्वथ च तान्द्विजान्। प्रत्येकं प्रेषयेत्प्रेष्यानादावामलकोदकम्" ॥ इति।

'धात्रीफलैरमायां न स्नायादिति' **स्मृत्यन्तरम्**। दन्तधावनदानं पूर्वेद्युर्निमन्त्रणकाले दानाभावे द्रष्टव्यम्। दन्तधावननिषेधस्तु श्राद्धकर्तृविषयः श्राद्धभुग्भ्यो नखश्मश्रुच्छेदनं चैव कारयेदिति **प्रचेताः**। इदं सर्वं कुतपात्प्राक्। अत एवानिवृत्ते मध्याह्ने इमानि देयानीति स्मरन्ति। निवृत्ते इति पाठे आरब्धे इत्यर्थः। **माधवादय**स्तु "दन्तधावनं न तु कारयेदिति" **प्रचेतो**वाक्यं धृत्वा तन्निषिद्धतिथिविषयकमित्यूचुः। इति ब्राह्मणाभ्यङ्गविधिः।

ततो मध्याह्ने पुण्यतीर्थादौ स्वयं स्नायात्।

"शुक्लान्येव तु वस्त्राणि स्वयं संधारयेच्छुचिः। कौपीनं मलिनं रक्तं चित्रं खण्डं परांशुकम्॥

"काषायं कारुधौतं च पूर्वधौतमधौतकम्"॥ एतानि वर्ज्यानि।

"द्वादश्यां पञ्चदश्यां च संक्रान्तौ श्राद्धवासरे। वस्त्रं निष्पीडयेन्नैव न च क्षारे नियोजयेत्"॥ इति **पराशरः**। तद्दिने क्षारयोजितं न ग्राह्यमिति भावः।

"नैकवासा द्विजः कुर्यात्कर्म किंचित्तु वैदिकम्। सव्यादंसात्परिभ्रष्टं नाभिदेशे व्यवस्थितम्"॥ तदप्येकवस्त्रम्।

"अकच्छोऽनुत्तरीयश्च नग्नश्चावस्त्र एव च। न कुर्यात्कर्म किंचिद्वै०" मलिनवस्त्रार्धपटदग्धवस्त्रस्यूतपटा नग्नाः। "अकच्छः पुच्छकच्छो वा द्विकच्छः कटिवेष्टनः। यावदास्ते द्विजस्तावच्छूद्र एव न संशयः" इत्य**भियुक्ताः**। ततः कृतमाध्याह्निकक्रियो नित्यदानादिकर्म कृत्वैव श्राद्धं कुर्यात्।

"दानाध्ययनदेवार्चाजपहोमव्रतादिकान्। न कुर्याच्छ्राद्धदिवसे प्राग्विप्राणां विसर्जनात्"॥ नित्यकर्मान्यविषयमिदमित्य**भियुक्ताः**॥ २२५॥

---

१ क-छेदनं।

## याज्ञवल्कीये २२६ श्लोकः

श्राद्धकाले कर्त्रा मौनं कार्यं विप्रैश्च श्राद्धोपयोग्यन्यविषये तल्लोपे विष्णुस्मरणं चार्थात् सूचितमाह । **आहूयेति** । आगतानिति शेषः ।

"विप्रान्समागतान्दृष्ट्वा प्रत्युत्थाय कृताञ्जलिः । दर्भं हस्ते समादाय स्वागतं च वदेत्पृथक्" ॥ "सुस्वागतमिति ब्रूयुः वक्त्रा संबोधिता द्विजाः"। इति **मार्कण्डे**यात्तस्य शब्दपरत्वमाह। **स्वागतेति** ।

"ततः स्नात्वा निवृत्तो यः प्रत्युत्थाय कृताञ्जलिः । पाद्यमाचमनीयं च संप्रयच्छेद्यथाक्रमम्" ॥

एवं तत्प्रकारः । भवनस्याग्रतो भुवि "गोमयेनानुलिप्तायां गोमूत्रेण तु मण्डले" इति गोमयसहितेन गोमूत्रेण मण्डले कार्ये इति शेषः । **शंभुः** "उदक्प्लवमुदीच्यं स्याद्दक्षिणं दक्षिणाप्लवम्" । इति । उदीच्यं वैश्वदेविकं मण्डलमुदक्प्रवणं दक्षिणं पित्र्यं मण्डलं दक्षिणाप्रवणं कुर्यात् ।

"उत्तरे क्षतसंयुक्तान्पूर्वाग्रान्विन्यसेत्कुशान् । दक्षिणे दक्षिणाग्रांस्तु सतिलान्विन्यसेद्बुधः ॥

"पाद्यं चैव तथैवार्घ्यं दैवमाद्यैः प्रयोजयेत् । 'शन्नो देवीति' मन्त्रेण पाद्यं चैव प्रदापयेत्"॥इति।

"रथ्योपहतिशुध्यर्थं पादप्रक्षालनाय वै । दद्याच्छुद्धोदकं तेभ्यो देवपूर्वं पृथक् पृथक् ।

"दद्यादाचमनार्थं च तोयं विप्राहृतं तथा" । इति । **यमोक्ते**राह । **कृतेति** ।

"स्नाने दाने जपे होमे स्वाध्याये श्राद्धकर्मणि। सपवित्रौ सदर्भौ वा करौ कुर्वीत नान्यथा"॥इति। **काश्यपा**न्मूलोक्तमुपलक्षणमित्याह । **पवित्रेति** । तथा च **यमः** ।

"पवित्रपाणयः सर्वे ते च मौनव्रतान्विताः। ब्रह्माद्याश्च कथाः कुर्युः पितॄणामेतदीप्सितम्"॥ इति। यथासंभवं स्वर्णरजताद्यपि धार्यमत्रैवं क्रमोक्त्या केवलकुशहस्तस्यैवाचमनं न पवित्रसब्रह्मग्रन्थिककुशहस्तस्येति सूचितम् । तथा च ।

"कुशहस्तः प्रयत्नेन कुर्यादाचमनक्रियाम् । न ब्रह्मग्रन्थिनाऽऽचामेन्न दूर्वाभिः कदाचन"॥ इति।

"यत्कृतं कुशहस्तेन जपहोमव्रतादिकम् । भुक्तं चापि विशेषेण तस्य पुण्यमनन्तकम्" इति चाभियुक्ताः । **उपवेशयेदिति** । **सुमन्तुरपि**

"दर्भपाणिर्द्विराचम्य लघुवासा जितेन्द्रियः । परिश्रिते शुचौ देशे गोमयेनोपलेपिते ॥

"दक्षिणाप्रवणे सम्यगाचान्तान्प्रयतान् शुचीन् । आसनेषु सदर्भेषु विविक्तेषूपवेशयेत्" ॥ इति **स्मृत्यन्तरा**विरोधायात्रापराह्णशब्दो यौगिको दिनोत्तरार्धवाचको न तु तथेति । तथा शङ्कापूर्वमाह । **यद्यपीत्यादिना** ।

"प्रारभ्य कुतपे श्राद्धं कुर्यादारौहिणाद्बुधः । विधिज्ञो विधिमास्थाय रौहिणं तु न लङ्घयेत्" ॥ इति श्लोक**गौतमोक्ते**राह । **कुतपेति** । तदेव विशदयन्नादौ **मात्स्य**वचनमाह । **अह्न इति** ।

"प्रातःकालो मुहूर्तान् त्रीन् संगवस्तावदेव तु । मध्याह्नस्त्रिमुहूर्तः स्यादपराह्णस्ततः परम् ॥

---

१ कर्ता ।

"सायाह्नस्त्रिमुहूर्तः स्यात्तत्र श्राद्धं न कारयेत् । राक्षसी नाम सा वेला गर्हिता सर्वकर्मसु" ॥ इत्यादि **स्मृत्यन्तर**माह । **मध्याह्ने इति** । दिवसस्याष्टमे भागे इत्यर्थः । योगवशात् । तथा **च वायवीयम्** ।

"कुं यत्र गोपतिर्गोभिः कात्स्न्र्येन तपति क्षणे । स कालः कुतपस्तत्र पितॄणां दत्तमक्षयम्" ॥

"दिवसस्याष्टमे भागे मन्दीभवति भास्करः । सका०" । स्मृत्यन्तरमाह । **ऊर्ध्वमिति** । **स्वधागमनं** श्राद्धनिष्पत्तिः । **अपिना** तस्य समुच्चयः । उक्तं **मात्स्ये** एव । **मध्याह्न इति** । तथा **च वासिष्ठः** ।

"पूर्वाह्णे दैविकं कर्म ह्यपराह्णे तु पैतृकम् । एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्" ॥ इति ।

कुशब्दार्थमाह । **पापमिति** । तदिरन्तर्भावितण्यर्थ इत्याह । **सन्तापेति** । तथा च कुं तापयन्तीति व्युत्पत्तिर्बोध्या । अत एव कुतपं चासने दद्यादिति **मनुः** । 'कुतपो नेपालकम्बल' इति **मेधातिथिः** । अभ्यतिथिब्राह्मणा अपि कुतपा इत्यन्यत्र । साग्निकानां पिण्डपितृयज्ञस्यापराह्णे करणानन्तरं श्राद्धविधानान्न कुतपादर इति बोध्यम् ।

"पितृयज्ञं तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान् । पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम्" ॥ इति ।

( अ. ३ श्लो. १२२ ) **मनोः** । "अमायामपराह्णे पितुः पितृयज्ञेन चरन्तीति" **श्रुतिः** । 'पिण्डान्वाहार्यकं पार्वणं तत्रापि नातिसंध्यासमीपत" इति **कात्यायनः** महालयप्रत्याब्दिकादौ तु तैरापि कुतप आदर्तव्य एव ।

"आरभ्य कुतपे श्राद्धं रौहिणं तु न लङ्घयेत्" । इति । **अन्यत्रा**पि । **रौहिणो हि द्वादशो मुहूर्तः** । इदं चासमर्थं प्रत्युत्तरावधिसमर्पणं तदूर्ध्वं निषेधात् ।

"सायाह्नस्त्रिमुहूर्तः स्यात्तत्र श्राद्धं न कारयेत्" इति **गौतमः** ।

"त्रिमुहूर्तं तु सायाह्नस्तत्र श्राद्धं विवर्जयेत् । उपसन्ध्यं न कुर्वीत पितृपूजां कथंचन" ॥

"स काल आसुरः प्रोक्तः श्राद्धं तत्र विवर्जयेत्" । इति । **वायवीयं स्कान्दं च** ।

"संध्यारात्र्योर्न कर्तव्यं श्राद्धं खलु विचक्षणैः । तयोरपि च कर्तव्यं यदि स्याद्राहुदर्शनम्" ॥ इति **विष्णुः** । इदं नैमित्तिकमात्रोपलक्षणम् ।

"रात्रौ श्राद्धं न कुर्वीत राहोरन्यत्र दर्शनात् । सूर्योदयमुहूर्ते च संध्ययोरुभयोस्तथा" ॥ इति **शातातपः** ।

"रात्रौ श्राद्धं न कुर्वीत राक्षसी कीर्तिता हि सा । संध्ययोरुभयोश्चैव सूर्ये चैवाचिरोदिते" ॥ इति ।

**मनुश्च** ( अ. ३ श्लो. २८० ) । संध्ययोर्लक्षणे मूले एव स्पष्टे "उदयात्प्राक्तनी संध्येति" "नैमित्तिकेषु श्राद्धेषु न कालनियमः स्मृतः" इति न्यायसिद्धम**भियुक्ताः** । तथा हि **वासिष्ठे** "अपराह्णे तु पैतृकमिति" काले कर्मविधानात्कर्मप्रधानमेवं चात्यन्तिकेऽपि कार्ये उपस्थि-

तेऽपराह्णादिकालाभावेऽपि कर्म कार्यमेव कर्मणोऽवश्यकर्तव्यत्वात् । नित्यनैमित्तिकेषु यथाशक्त्युपबन्धस्मरणाच्च । तस्माद्गौणेऽपि काले कार्यं गौणकालश्च स्वकालादुत्तरः पूर्वश्च । तथा च **त्रिकाण्डमण्डनः** ।

"मुख्यकाले यदाऽवश्यं कर्म कर्तुं न शक्यते । गौणकालेऽपि कर्तव्यं गौणोऽप्यत्रेदृशः स्मृतः ॥
"स्वकालादुत्तरो गौणः कालः पूर्वस्य कर्मणः । यद्वा पूर्वः क्रियामुख्यः कालः स्यादन्तरालवत् ॥
"गौणं कालं समिच्छन्ति केचित्प्राक्तनकर्मणि । गौणेष्वेतेषु कालेषु कर्मानेदितमाचरन् ॥
"प्रायश्चित्तप्रकरणप्रोक्तां निष्कृतिमाचरेत् । प्रायश्चित्तमकृत्वा वा गौणकाले समाचरेत्" ॥ इति ।

ईदृशो मुख्यवदेव । प्रायश्चित्तमत्र संध्यावन्दनप्रकरणोक्तम् । विकल्पश्च शक्ताशक्तभेदेन व्यवस्थितः । एतदेवाभिप्रेत्योर्ध्वं मुहूर्तादित्यत्र प्राक्पठिते दाक्षिणात्यसंमते मुहूर्तपञ्चकं प्राक्च स्वधाभवनमिष्यते इति **प्राच्याः** पठन्ति ।

"मुख्यकालमुपाश्रित्य गौणमप्यस्तु साधनम् । न मुख्यद्रव्यलोभेन गौणकालप्रतीक्षणम्" ॥

तस्मान्मुख्यद्रव्यलोभेन मुख्यकालातिक्रमो न कार्य इत्य**भियुक्ताः** ॥ २२६ ॥

## याज्ञवल्कीये २२७ श्लोकः

अथ श्राद्धमात्रे ब्राह्मणसंख्यामाह । **युग्मानिति** । वैश्वदेवे विशिष्यानुपदं वक्ष्यमाणत्वात् । अत्र " अथाभ्युदयिके युग्मा ब्राह्मणा " इति वक्ष्यमाणा**श्वलायना**नुरोधेन दैवशब्देनाभ्युदयिकमित्याह । **दैवं आभ्युदयिके श्राद्धे इति** । पूर्वतोऽनुषङ्गेणावश्यकेनाह । **एवेति** । एवमग्रेऽपि । अनियमप्रसंगादाह । **कथमिति** । उत्तरमाह । **यथेति** । तदेव विशदयति । **तत्रेति** । आभ्युदयिके इत्यर्थः । तत्र मात्रादिक्रमस्य वक्ष्यमाणत्वादाह । **मात्रादीनामिति** । स्थाने इति शेषः । सर्वत्र एवं च यथाशक्तीति । पूर्वस्यैव शेषोऽग्रे विशेषस्य वक्ष्यमाणत्वादिति भावः । 'तन्त्रं वेति' वक्ष्यमाणमुभयोः शेषोऽपीत्याह । **वर्गेति** । एकोद्दिष्टे एकस्यैव विप्रस्य सत्वादयुग्मानिति बहुवचनादाह । **पार्वणे श्राद्धे इति** । **तथैव चेति** । किं चेत्यर्थं एवं तथेत्यपीत्याह । **एतच्चेति** । दक्षिणेत्याजन्तमित्याह । **दक्षिणा इति** । वाक्यपूर्त्यर्थमाह । **कार्यमिति** ॥ २२७ ॥

## याज्ञवल्कीये २२८ श्लोकः

**इति** इत्यनेन । तत्र तु आभ्युदयिकस्यैव ग्रहणमेवं च नेदं वचनं व्यर्थमपि तु तत्रैव व्यवस्थापकमिति भावः । प्राग्वदाह । **प्राङ्मुखाविति** । एवमग्रेऽपि । **आदिपुराणेऽपि** ।

"विप्रौ तु प्राङ्मुखौ तेभ्यो द्वौ तु पूर्वं निवेशयेत् । उत्तराभिमुखान् विप्रान् त्रीन्पितृभ्यश्च सर्वदा" ॥ इति ।

उपेत्यस्यानुषङ्गेण वक्ष्यमाणानुरोधेन फलितलक्ष्यार्थमाह । **उपेति** । अत्र पित्र्यशब्दो न पार्वणश्राद्धपर इत्याह । **पित्रादीति** । उभयत्र पक्षान्तरमित्याह । **वैश्वेति** । शक्त्यपेक्षया व्यवस्थिते

---

१ श्लोके २२८ ।

विकल्प इत्याह । **संभेति** । तद्धेतुक इत्यर्थः । त्र्यवरानिति प्रागुक्त**मनु**रप्येतत्पक्षाशयकः । दर्शे अतिदेशेन मातामहश्राद्धमाह । **मातेति** । अत एवाह । **पितृश्राद्धे इति** । उभयोर्युगपत्प्रसङ्गे इत्यर्थः । स्वार्थे ठञित्याह । **वैश्वदेवमिति** । **मरीचि**रपि

"तथा मातामहश्राद्धं वैश्वदेवसमन्वितम् । कुर्वीत भक्तिसंपन्नस्तन्त्रं वा वैश्वदेविकम्" ॥ इति ।

अत्र द्वयोरपि श्राद्धयोर्वैश्वदेविककर्मणस्तन्त्रावृत्तिविधानादेकप्रयोगताभिन्नप्रयोगता वा ततश्चैकाधिकारापूर्वसाधनताभिन्नतत्साधनता वेति **माधवः** । **वसिष्ठो**ऽपि ( अ. ११ सू. २७ ) ।

"द्वौ दैवे पितृकृत्ये त्रीनेकैकमुभयत्र वा । भोजयेत्सुसमृद्धोऽपि विस्तरं तु विवर्जयेत्" ॥ इति ।

विस्तरं "न वावरान्भोजयेदयुजो वा यथोत्साहम्" इति (अ.१५सू.७।८) **गौतमो**क्तं तस्य तु अत्यन्तसमृद्धोऽधिकारीत्यर्थः । **आश्वलायनगृह्येऽपि** ( ४।७।२ ) "एकैकमेकैकस्य "द्वौ द्वौ त्रींस्त्रीन्वा वृद्धौ फलभूयस्त्वं न त्वेवैकं सर्वेषां काममनाद्ये" इति । वृद्धौ त्रिभ्योऽपि वृद्धौ द्वौ दैवे पितृकार्ये त्रीनेकैकमुभयत्र वा । भोजयेत्सुसमृद्धोऽपि न प्रसज्जेत विस्तरे" (अ. ३।१२५) इति **मन्वा**द्युक्तं निषेधति । न त्वेवैकमित्यादि अस्य **मन्वा**द्युक्तस्य निषेधं कुर्वता इतरत्तदुक्तमनुज्ञातं तेन विश्वेदेवा अपि कार्या इति **वृत्तिकृत्** तदितिकर्तव्यता च स्मृतितो ज्ञेया । पित्र्ये तु तद्गृह्येति कर्तव्यतामात्रं न च शास्त्रान्तरदृष्टो विस्तरः कार्य इति च "बह्वल्पमि"त्यादि**गृह्यविदु**क्तेश्च न प्रेति तु अल्प विप्रभुजेरर्थवादो न तु बहुब्राह्मणभुजेर्निषेधः । न हि निन्द्येति न्यायादित्याहुः । अशक्तं प्रतिपक्षान्तरमाह । कामामिति । आद्यं प्रथमं सपिण्डीकरणं तद्भिन्ने कामं त्रयाणामेकमपि भोजयेदित्यर्थः । तत्र तु नियतं त्रय एवेति फलितम् । अनाद्येऽभोजने आमश्राद्धादावित्यर्थ **इत्यन्ये** । आद्यमन्नं तदभावे दुर्भिक्षे इत्यर्थ इति **अपरे** । आद्यं पार्वणं तत्र **गृह्ये** प्रथमनिर्देशात्तद्भिन्ने इत्यर्थ इति **परे** । सर्वपक्षेऽपि विश्वेदेवार्थे द्वावेव ।

"दशैकं पञ्च वा विप्रान्पार्वणे विनियोजयेत् । द्वौ दैवे प्रागुदक्पैत्र्ये एकैकस्यापि ते त्रयः" ॥

इति **वृद्धयाज्ञवल्क्यात्** । "चत्वारो वैश्वदेविके" इति **पराशरः** । तदेतद्ध्वनयन्नाह । **यदा त्विति** । वैश्वदेवे तन्निमित्तम् उभयत्र पित्रादौ मातामहादौ च **एकं** प्रत्येकमेकं सर्वस्य वर्गद्वयस्य । **तत इति** । यथाविधि निवेदयेदिति पाठान्तरम् । यदा त्वेक एव ब्राह्मणो लभ्यते तदाऽप्येवं वैश्वदेवे उभयत्र पात्रकल्पनेति इत एव लभ्यते । अत एव

"भोजयेदथ वाऽप्येकं ब्राह्मणं पङ्क्तिपावनम् । दैवे कृत्वा तु नैवेद्यं पश्चात्तस्य तु निर्वपेत्" ॥

इति **शङ्खो**क्तिः संगच्छते । **गोभिलः**

"एक एव यदा विप्रो द्वितीयो नोपपद्यते । पितॄणां ब्राह्मणो योज्यो दैवे त्वग्निं नियोजयेत्" ॥ इति ।

तत्साग्निपरम् । **पारस्करो** दर्भबटुमनग्नेराह "अनग्नेः कुशमुष्टिः स्याच्छ्राद्धकर्मणि सर्वदा" इति **गोभिलोऽपि** "दर्भबटुं चासने निधायेति" । एवं च तुल्यन्यायात्सर्वथा ब्राह्मणालाभे पित्र्येऽपि कुशबटुः स्नानादौ प्रतिनिधित्वेन तस्य दर्शनात् । " देवतायतने इति " **वसिष्ठोक्त** पक्षस्तूभयसाधारणस्तृतीयः । तदन्नप्रतिपत्तिमाह । **प्रास्येदिति** । **ब्रह्मेति** । तदर्थिने विशिष्टब्राह्मणायेत्यर्थः । अत्र श्राद्धोक्तनियमभङ्गप्रसंगेन बहुब्राह्मणपक्षं न मन्यन्ते शिष्टाः "सत्क्रियाकालपात्रादि न संपद्येत विस्तरे" इति **बृहस्पत्युक्तेश्च**

"शुचिं निमन्त्र्य दैवे द्वौ त्रीन्विप्रान्पितृकर्मणि । दैवे पित्र्येऽथ वैकैकं सपिण्डीकरणं विना" ।

इति **कारिकोक्तेश्च** । तत्र श्राद्धभेदेन विश्वेदेवभेदानाह **शङ्खः** ।

"इष्टिश्राद्धे क्रतुर्दक्षः संकीर्त्यौ वैश्वदेविके । नान्दीमुखे सत्यवसू काम्ये च धुरिलोचनौ ॥

"पुरुरवार्द्रवौ चैव पार्वणे समुदाहृतौ । नैमित्तिके कामकालावेवं सर्वत्र कीर्तयेत्" ॥ इति ।

इष्टिश्राद्धं कर्माङ्गश्राद्धं तच्च **पारस्करेणो**क्तम् ।

"निषेककाले सोमे च सीमन्तोन्नयने तथा । ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत्कृतम्" ॥ इति ।

वृद्धिवदित्यनेन वृद्धिश्राद्धात्कर्माङ्गश्राद्धमन्यदिति ज्ञायते । नान्दीमुखं वृद्धिश्राद्धम् । तच्च **वृद्धवसिष्ठेनो**क्तम् ।

"पुत्रजन्मविवाहादौ वृद्धिश्राद्धमुदाहृतम्" ॥ इति ।

"आदिनाऽन्नप्राशनचूडाकरणादिसंस्कारग्रहः । न तु गर्भाधानपुंसवनसीमन्तोन्नयनानि । तत्र क्रियमाणस्य कर्माङ्गश्राद्धत्वेन पृथगुक्तत्वात्पार्वणममावास्यादिश्राद्धं नैमित्तिकम् । नवान्नलाभादिनिमित्तकं संपिण्डनेऽपि कामकालाविति **बृहस्पतिरिति गुरुचरणाः** । नैमित्तिकं सपिण्डीकरणम् । यद्यपि "एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते" इति परिभाषितं तथापि तदप्यदैवं कर्तव्यमिति वाक्यशेषेण तत्र विश्वेदेवहीनतावगमादिह नैमित्तिकशब्देनैकोद्दिष्टयुक्तं सपिण्डीकरणं लक्ष्यते इति **माधवादयः** । उपवेशनानन्तरं कृत्यमुक्तं **पुराणे** ।

"श्राद्धभूमौ गयां ध्यात्वा ध्यात्वा देवं गदाधरम् । ताभ्यां चैव नमस्कृत्य ततः श्राद्धं प्रवर्तयेत् ॥

**इदं** काशीभिन्नपरम् ।

"उभौ हस्तौ समौ कृत्वा जानुभ्यामन्तरास्थितौ । सप्रयत्नश्चोपविष्टान्सर्वान्पृच्छेद्द्विजोत्तमान्" ॥ इति ।

श्राद्धं करिष्ये इति पृच्छेदित्यर्थः । ततः कुरुष्वेत्यनुज्ञातो देवताभ्यश्चेति त्रिः पठेदुक्तं च **ब्रह्माण्डे** । देवता. नमो नमः । "आद्येऽवसाने श्राद्धस्य त्रिरावृत्तं जपेत्सदा" इति । ततः कृत्यमुक्तं **निगमे** । 'अपहता' इति तिलान्विकिरेदिति ॥ २२८ ॥

## याज्ञवल्कीये २२९ श्लोकः

ततः कर्तव्यमाह । **पार्णीति** । तदेवाह । **तदनन्तरमिति** । 'विश्वेदेवार्थं ब्राह्मणेति' पाठः । तत्स्थानिकब्राह्मणेत्याद्यर्थः ।

"आसने चासनं दद्याद्वामे वा दक्षिणेऽपि वा । पितृकर्मणि वामे वै दैवे कर्मणि दक्षिणे" ॥

इति **पुराणात्** । "देवानां सयवा दर्भा" इति **काठकात्** ।

"आसनेष्वासनं दद्यान्न तु पाणौ कदाचन । देवानामृजवो दर्भाः प्रदातव्याः पृथक् पृथक् ॥

"धर्मोऽसीति मन्त्रेण गृह्णीयुस्ते पृथक् पृथक्" इति **प्रचेतसः** ।

"पितॄणामासनं वामे देवानां दक्षिणे तथा" । इति **जमदग्नेः** ।

"देवानामृजवो दर्भा अच्छिन्नाग्रा अमूलकाः । पितृकार्ये समूलास्ते दक्षिणाग्रा हि भुग्नकाः ॥

"युग्माश्च दैविके कार्ये अयुग्मास्ते तु पैतृके । आसनाद्युपचारेषु सर्वत्रैवं विधिः स्मृतः ॥

"सर्वत्र पितृकार्येषु विधानं दैवपूर्वकम् । पितृपूर्वं भवेदेकं श्राद्धान्ते तु विसर्जनम्" ॥

इति **बौधायनाच्चाह** । **युग्मानित्यादि** । "विश्वान्देवानिति" पाठः । ओमित्यादिः । **इत्यृचेति** । अत एव मन्त्रलिङ्गात् विश्वेदेवयोर्द्वित्वेऽप्यावाहनादौ बहुवचनान्तमेव संकीर्तनीयमित्यभियुक्ताः । **यमोऽपि** ।

"यवहस्तस्ततो देवान्पृष्ट्वाथावाहनं प्रति । आवाहयेदनुज्ञातो 'विश्वेदेवा स' इत्यृचा ॥

"विश्वेदेवाः शृणुतेति" मन्त्रं जप्त्वा ततोऽक्षतान् । 'ओषधय' इति मन्त्रेण विकिरेत्तु प्रदक्षिणम्" ॥

इति पादादिमस्तकान्तमक्षतानारोपयेदित्यर्थ इति **माधवः** । अत एव **शङ्खः**

"सयवं पुष्पमादाय चरणादिशिरोन्तकम् । अर्चेनेत्यर्चनं कुर्यादन्तरे चोदकं तथा" ॥

इति अर्चत प्रार्चतेति मन्त्रः । एतदनन्तरं विश्वेदेवाः शृण्विति आगच्छन्त्विति च मन्त्रपाठ इत्यभियुक्ताः । छन्दोगानां त्वोषधय इत्यादि पारयामसीत्यन्तद्वितीयमन्त्रपाठः । मूलमुपलक्षणमित्याह । **आगच्छन्त्वति** । विशेषमाह । **एतच्चेति** । तदुक्तं **हेमाद्रौ**

"प्राचीनावीतिना पित्र्यं सव्यजानुनि पातिना । दक्षिणास्येन कर्तव्यमप्रदक्षिणतस्तिलैः ॥

"देवार्चा दक्षिणादि स्यात्पादजान्वं समूर्धनि । शिरोंऽसवामपादेषु वामाङ्गादिषु पैतृके ॥

"अन्वाच्य दक्षिणं जानु प्राग्वोदग्वा प्रदक्षिणम् । यज्ञोपवीती स्वाहेति दैवे कुर्याद्यवैस्तथा ॥

"पितृभ्यो निखिलं दद्यात्स्वधाकारेण सर्वदा । अक्षय्यमासनं चैव वर्जयित्वाऽर्घ्यमेव च ॥

"यज्ञोपवीतिना कार्यं दैवं कर्म प्रदक्षिणम् । प्राचीनावीतिना कार्यं पितृकर्माप्रदक्षिणम्"॥ इति ।

दक्षिणास्यत्वं शाखान्तराभिप्रायम् । **आश्वलायनाना**माग्नेयीदिङ्मुखत्वोक्तेः । अर्थाद्दैवमुदङ्मुखेन कार्यम् । एवं दैवे दक्षिणं जान्वन्वाच्येत्युक्तेः पित्र्ये वामं जान्वन्वाच्येति बोध्यम् । **जमदग्निः** ।

"सूक्तस्तोत्रजपं त्यक्त्वा पिण्डाघ्राणं तु दक्षिणाम् । आह्वानं स्वागतं चार्घ्यं विना च परिवेषणम् ॥

"विसर्जनं सौमनस्यं आशिषः प्रार्थनां तथा । विप्रप्रदक्षिणां चैव स्वस्तिवाचनकं तथा ॥

"पित्र्यमन्यत्प्रकर्तव्यं प्राचीनावीतिना तथा" । इति दैवं देवतीर्थेन पित्र्यं पितृतीर्थेन "दैविके हव्यमित्युक्त्वा पैतृके कव्यमित्यपीति" **गर्गः** । **मनुरपि** । ( अ. ३ श्लो. २७९ ) ॥

"प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा । पित्र्यमा निधनात्कार्यं विधिवद्दर्भपाणिना" ॥ इति ।

आ निधनात् आ समाप्तेः । **कात्यायनः** ।

"दक्षिणं पातयेज्जानु देवान्परिचरन्सदा । पातयेदितरज्जानु पितॄन् परिचरन्सदा" ॥ इति

**शातातपः** । "उदङ्मुखस्तु देवानां पितॄणां दक्षिणामुखः" । इति ।

**बौधायनः** ।

"प्रदक्षिणं तु देवानां पितॄणामप्रदक्षिणम् । देवानामृजवो दर्भाः पितॄणां द्विगुणाः स्मृताः ॥ इति **स्मृत्यर्थसारे** ।

"अक्षय्यासनयोः षष्ठी द्वितीयाऽऽवाहने स्मृता । अन्नदाने चतुर्थी स्याच्छेषाः संबुद्धयः स्मृताः" ॥ यद्वा चतुर्थ्येव सर्वत्र प्रयोज्याऽऽवाहनवर्जमिति । **मात्स्ये** "नाम गोत्रं पितॄणां तु प्रापकं हव्यकव्ययोः" । इति वक्ष्यमाणं मूलमाह । **अपेति** ॥ २२९ ॥

## याज्ञवल्कीये २३० श्लोकः

ततोऽर्घ्यपात्रद्वयासादनादि कुर्यादित्याह । **यवैरिति** । तदाह । **तत इति** । तदावाहनानन्तरमित्यर्थः । **मात्स्येऽपि** ।

"विश्वान्देवान्यवैः पुष्पैरभ्यर्च्यासनपूर्वकम् । पूरयेत्पात्रयुग्मं तु स्थाप्यं दर्भपवित्रके" ॥ इति

"अवकीर्याथेत्यनयोः क्रमेणार्थावाह । **आस्तीर्येति** । क्वचित्तयोरपि पाठः ।

"राजतानि प्रशस्तानि पित्र्ये हैमानि दैविके । अथ वा ताम्रपात्राणि दैवे पित्र्ये च कर्मणि" ॥

इति **बौधायनात्** ।

"मृन्मयं दारुजं पात्रमयःपात्रं तथैव च । राजतं दैविके कार्ये शिलापात्रं च वर्जयेत्" ॥ इति । **मनोः** । "सौवर्णराजतौदुम्बरखड्गमणिमयानां पात्राणामन्यतमेषु यानि वा विद्यन्ते पत्रपुटके वा" इति **कातीया**च्चाह । **तैजसादीति** । यानि वेत्यस्य कांस्यादीनीत्यर्थः । तथा चार्घ्यपात्रे न नियम इति **दीक्षिताः** ।

"अथ दर्भान्समास्तीर्य प्रागग्रान्सयवान्भुवि । स्थापयेदर्घ्यपात्रे द्वे न्युब्जे तत्र कुशोपरि ॥

"द्वे द्वे पवित्रे विधिवत्पात्रयोश्चोपरि क्षिपेत्" । इति **वृद्धमनो**रेवाह । **कुशेति** । शं नो देव्येति रेफं विहायानुकरणं तयोश्च भेदविवक्षा तदाह । **शंनोदेवीरभीति** । ततो **वसिष्ठः** ।

"तूष्णीं प्रोक्ष्यांभसा पात्रे कुर्यादूर्ध्वविले ततः । पूरयेत्पात्रयुग्मं तु कृत्वोपरि पवित्रके" ॥ इति । **यवोऽसीति** । **छन्दोगानां** तु "यवोऽसि सोमदेवत्यो गोसवो देवनिर्मितः । प्रत्नमद्भिः[1] पृक्तः स्वाहया विश्वान्देवान्प्रीणयाहि नः स्वाहेति" मन्त्रः । **पराशरः** ।

"प्राङ्मुखोऽमरतीर्थेन शन्नोदेव्योदकं क्षिपेत् । यवोऽसीति यवांस्तत्र तूष्णीं पुष्पाणि चन्दनम्" ॥ इति । तदाह । **ततो गन्धेति** । तथेत्यनेन चार्थेन समुच्चितामिदं तदाह । **चेति** ॥ २३० ॥

## याज्ञवल्कीये २३१।२३२ श्लोकौ

**अनन्तरमिति** । स्वाहेति चैव देवानामिति **गार्ग्या**त्स्वाहार्घ्या इति मन्त्रेण देवतार्थब्राह्मणसमीपेऽर्घ्यपात्रस्थापनानन्तरमित्यर्थः । तत्रायं मन्त्रो न त्वर्घ्यदाने इति **माधवादयः** । "दत्वा हस्ते

---

१ प्रत्नवद्भिः प्रत्तः ।

पवित्रे तु संपूज्यार्घ्यं विनिक्षिपेत्" । इति **गार्ग्यो**दाह । **अर्घ्येति । विनिक्षिपेदिति ।** तत्प्रकारो **ब्राह्मे ।**

"ततो वामेन हस्तेन गृहीत्वा चमसान्क्रमात् । ततोऽर्घ्यं दक्षिणे कृत्वा देवतीर्थेन दापयेत्" ॥ इति । अर्घ्यदानं हस्तेनैव न पात्रेण ।

"अर्घ्यं पिण्डप्रदानं च स्वस्त्यक्षय्ये तथैव च । गन्धपुष्पादिकं सर्वं पात्रेण तु न दापयेत्" ॥ इति **गभस्त्युक्तेः** । अत्र मूलेऽर्घ्यपूरणान्ते आवाहनमुक्तं **स्मृत्यन्तरे** तु आवाहनानन्तरमर्घ्यपूरणमुक्तम् । तथा च विकल्पः । **केचित्तु** भाजने सपवित्रके "शंनो देव्या पयः क्षिप्त्वेति" मूले एकवचननिर्देशात्तथैव व्याख्यानस्वारस्याच्च वैश्वदेविकब्राह्मणद्वित्वेऽप्येक एवार्घ्य इत्याहुः । करेत्यस्य पूर्वत्राप्यन्वय इत्याह । **अथ करेति ।** क्रमत्यागे बीजाभावादाह । **यथेति ।** दानं च पुनस्तदर्थमम्बुदानं च कुर्यादित्यपि बोध्यमत्र गन्धादिकमाच्छादनस्याप्युपलक्षणमिति **माधवाद्युक्त्या** मूले तथेत्याद्युत्तरार्धपाठाभावो गम्यते । आख्यानं तु साधारणत्वादुभयथाऽपि सुयोजं तमेवाह । **चन्दनेत्यादिना दद्यादितीत्यन्तेन । नोक्तमिति । ब्रह्माण्डेऽपि ।**

"श्वेतचन्दनकर्पूरपद्मकं कुङ्कुमं तथा । विलेपनार्थं दद्यात्तु प्रीतिदं पितृवल्लभम्" ॥ इति ।

तत्र कुङ्कुमं गन्धमिश्रितमेव देयं न केवलम् ।

"केवलं कुङ्कुमं वर्ज्यं देयं गन्धविमिश्रितम् । उग्रगन्धास्तथा वर्ज्या असद्द्रव्यविमिश्रिताः" **इत्यभियुक्तोक्तेः । व्यासः ।** "अपवित्रकरो गन्धैर्गन्धद्वारेति पूजयेदिति" दर्भरहितकर इत्यर्थः । **शातातपोऽपि ।**

"पवित्रं तु करे कृत्वा यः समालभते द्विजान् । राक्षसानां भवेच्छ्राद्धं निराशाः पितरो गताः" ॥ इति

समालम्भनमनुलेपनम् । केचित्तु **व्यास**वचसि विपवित्रकर इति पठित्वा विविधपवित्रहस्त इत्यर्थं कृत्वा सग्रन्थिकं पवित्रं त्यक्त्वा मुक्तदर्भकरेणेदं कार्यमित्याहुः । यदा यजमानो गन्धाद्भिर्ब्राह्मणसात्करोति तदा सोऽप्यदर्भकरेणैव तिलकं कुर्यात् ।

"सदर्भेण तु हस्तेन यः कुर्यात्तिलकं बुधः । आचम्यैव विशुध्येत्तु दर्भत्यागेन चैव हि" ॥ इति ।

**स्मृते**रित्यन्ये । तदत्र सर्वत्र मूलेऽनाश्वासः । **जात्य इति ।** "न जातीकुसुमानां न कदलीपत्रभोजनम्" **इत्याङ्गिरस**जातीनिषेधस्तु पिण्डपूजाविषयः "पिण्डे जातीं च नो दद्याद्देवीमर्केण नार्चयेत्" इति **वृद्धयोग्युक्तेः** । 'जात्यो विहितनिषिद्धत्वाद्वैकल्पिका' इति **माधवः ।** तत्र निषेध उक्त एव । विधिस्तु **मार्कण्डेये ।**

"जात्यश्च सर्वा दातव्या मल्लिका श्वेतयूथिका । जलोद्भवानि सर्वाणि कुसुमानि च चम्पकम्" ॥ **इति ।**

ईदृग्विषये वाक्यद्वयवैफल्योद्धारश्चिन्त्यः । देशाचाराद्व्यवस्थायां तु साफल्यं सुलभं होलाकाधिकरणं त्वस्त्येव विहितोदासीनाभ्यां सतुल्यकक्षतालाभः फलमित्येके उभयालाभे सत्यनुज्ञा तत्फलमि-

त्यन्ये इति **दीक्षिताः । चैत्यवृक्ष इति ।** चतुष्पथमध्यवर्ती जैनबन्धो वृक्षविशेषः। **शुक्रमिति ।** "तगरमरुबकमालतीकुङ्कुमशतपत्रभृङ्गराजादीनि शुक्राः सुमनश्चेति" । **स्मृत्यन्तरे वृद्धयोगी ।**

"तुलसीगन्धमात्रेण पितरस्तुष्टमानसाः। प्रयान्ति गरुडारूढास्तत्पदं चक्रपाणिनः " ॥ इति

तुलसी निषिद्धेति **स्मृत्यर्थसारोक्ति**स्तु बहुस्मृतिपुराणाद्यनुक्तेश्चिन्त्या। मञ्जरीपरो निषेध इत्यन्ये। **जलजं चेति ।** तथा च **शङ्खः ।**

"जलोद्भवानि देयानि रक्तान्यपि विशेषतः" ।

"उग्रगन्धीनि चैत्यवृक्षोद्भवानि च पुष्पाणि वर्जनीयानीति" **विष्णु**नोक्त इति। **ब्राह्मेऽपि ।**

"केवलं गुग्गुलं त्वेकं न दद्याच्छ्राद्धकर्मणि। अन्यगन्धैश्च संमिश्रं ददत् श्राद्धे न दोषभाक्॥

"प्राण्यङ्गं वर्जयेद्धूपे तथा कस्तूरिकामपि। घृतं न केवलं दद्यात् दुष्टं वा तृणगुग्गुलुम्" ॥ इति ।

**घृतेनेति ।** "दशां विवर्जयेत् प्राज्ञो यद्यप्यहतवाससः" । इति च सः । तथा च वर्तिरूर्णासूत्रेण नव कार्पासेन वा । **मरीचिः ।** "घृताद्वा तिलतैलाद्वा नान्यं दद्याच्च दीपकम्" इति । "दीपहीनं ददच्छ्राद्धमन्धे तमसि मज्जति" । इति **ब्रह्माण्डे ।** अहतलक्षणं **कात्यायनः ।**

"ईषद्धौतं नवं वस्त्रं सदशं नान्यधारितम्। अहतं तत्सितं वस्त्रं जानीयाच्छ्राद्धकर्मणि" ॥ इति ।

ईषद्धौतं क्षारादिसंपर्करहितं जलमात्रप्रक्षालितमित्यर्थः । तथा च शुभ्रं नवं सदृशं यदहतं तद्दद्यादित्यर्थः । अनेन विवाहाद्युपयोगिस्मृत्यन्तरलक्षिताहतान्तरानिरासः । **ब्राह्मे ।** "अङ्गलग्नमसद्वस्त्रं विभवे तद्युगं शुभम्" । इति । **हेमाद्रौ**

"नव्याभावे तु देयं स्यात्सवर्णैः क्षालितं च यत्। प्रदेयं पितृकार्येषु कारुधौतं न जातुचित्" ॥ इति

"कौशेयं क्षौमकार्पासं दुकूलमहतं तथा । श्राद्धेष्वेतानि यो दद्यात्कामानाप्नोति पुष्कलान्" ॥ इति

**शङ्खः । भगवतीपुराणे** "निष्क्रयो वा यथाशक्ति वस्त्राभावे प्रदीयते" इति । **ब्रह्मवैवर्ते** "यज्ञोपवीतं दातव्यं वस्त्राभावे विजानता" इति । कृष्णवर्णानि नीलीरक्तानि कार्पासजानि वर्ज्यानि अन्यान्यपि क्षौमादीनि यथाविभवं देयानि कञ्चुकोष्णीषादीनि च स्त्रीश्राद्धे सुवासिनीभ्यः स्त्रीपरिधेयानि कूर्पासकादीनि. । अत्र गन्धादिदाने 'गन्धद्वारां' 'आयनेते धूरसि' 'उद्दीप्यस्व' 'युवं वस्त्राणि' 'युवासुवासा' इति वेति मन्त्रानिच्छन्ति केचित् । **ब्राह्मे** तु अयं वो गन्धः । इदं वो माल्यमयं वो धूपः । इदं वो ज्योतिरिदं व आच्छादनमित्येवं मन्त्रा उक्ताः । एवं पूजिता विप्रा आसनादौ क्रमेण स्वासनं स्वर्घ्यः सुगन्धः सुपुष्पाणि सुज्योतिः स्वाच्छादनमिति वदेयुरित्य**भियुक्ताः ।** गन्धादिधारणे विशेषः ।

"उपवीतं कटौ कृत्वा कुर्याद्गात्रानुलेपनम्। एकवासाश्च योऽश्नीयान्निराशाः पितरो गताः" इति **शातातपः ।** तस्मात्स्कन्धादुपवीतं नावतारणीयमित्यर्थः । **पराशरः ।**

"ऊर्ध्वं च तिलकं कुर्यान्न कुर्याच्च त्रिपुण्ड्रकम् । निराशाः पितरो यान्ति दृष्ट्वा चैव त्रिपुण्ड्रकम्"॥ इति ।

"नामन्त्रितः शिखावर्ज्यं मालां शिरसि धारयेत्" इति **शातातपः** ।

"भाले त्रिपुण्ड्रकं दृष्ट्वा स्कन्धे मालां तथैव च । निराशाः पितरो यान्ति दृष्ट्वा च वृषलीपतिम्" ॥

इति अहतं निश्छिद्रं विशेषमाह । **एतच्चेति** । सर्वमासनाद्याच्छादनान्तं ततः **पराशरः**

"वाचयेत्परिपूर्णत्वं दत्वा वासो विधानतः । अस्त्वेतत्परिपूर्णं तु प्रतिब्रूयुर्द्विजातयः" ॥

इति तदेवमासनप्रभृत्याच्छादनान्तं वैश्वदेविकार्चनं काण्डानुसमयेन कृत्वा तदादि तदन्तं प्राचीनावीत्यप्रदक्षिणं दक्षिणामुखः कुर्यादित्याह । **अपेत्यादि** ॥ २३१ । २३२ ॥

## याज्ञवल्कीये २३३ श्लोकः

तदाह । **तत इति** । अपसव्यमित्यस्य व्याख्या । **यज्ञोपेति** । सदिति शेषः । तच्च दैविकविप्राज्ञया कार्यमित्य**भियुक्ताः** । अत्र त्वपसव्यं ततः कृत्वेति वैश्वदेविकासनादिपदार्थकाण्डादूर्ध्वं पित्रर्चनविधानात्काण्डानुसमयो न्यायेन इत्याह । **अत्र तत इति** । **माधवादयो**ऽप्येवं बहुवचनादाह। **पित्रादीनामिति** । आसनादौ विशेषमाह । **अयुग्मानिति** । द्विगुणानित्यस्यार्थः **द्विगुणभुग्नानिति** । सतिलानित्यपि बोध्यम् । "पितॄणां द्विगुणैस्तिलैरिति" **काठकोक्तेः** । शेषेण व्याचष्टे । **वामत इत्यादि** । कृत्वेत्यस्यार्थो **दत्वेति** । उभयत उदकदाने मानमाह । **उप इति** । "अपः प्रदाय दर्भान् द्विगुणभुग्नानासनं प्रदायापः प्रदायेति" (आश्व.४।७।५–७) तत् **गृह्य**पाठः । आसनमिति सप्तम्यर्थे द्वितीया तदर्थमित्यर्थस्तदर्थत आह । **द्विगुणेति** । ते च सोदकाः समूलाः । त्रयः पञ्च सप्त वेत्य**भियुक्ताः** । इदमुपलक्षणमित्याह । **एतच्चेति** । अग्रिमं व्याचष्टे । **अथेति** । उदकदानोत्तरमित्यर्थः । प्राग्वदाह । **पितॄनिति** । तिलानादायेत्यादिः प्रणवपूर्वं तान् गोत्रान्शर्मणः । भवत्स्वित्यर्थः । **आवाह्येति** । 'नमो वः पितर इष' इत्यादिमन्त्रेण शिरसि सव्यांसे दक्षिणांसे जानुनोः पादयोश्चेति एवं मस्तकादिदक्षिणपादान्तं प्रत्येकं तिलानारोप्य यज्ञोपवीती पितॄन्ध्यायन्निति शेषः । **उपेति** । उपतिष्ठेत्तन्मन्त्रं जपेदित्यर्थः । मूले तथैव सत्वात्तथा च **प्रचेताः** "शिरप्रभृतिपादान्तं नमो व इति पैतृके" इति । **पुराणमपि** ।

"अपसव्यं ततः कृत्वा तिलानादाय मन्त्रतः । पितॄनावाहयामीति पृच्छेद्विप्रानुदङ्मुखान् ॥

"आवाहयेत्यनुज्ञात 'उशन्तस्त्वे'त्यृचा पितॄन् । ततः क्षिप्त्वाऽपसव्यं च पितॄन्ध्यायन्समाहितः ॥

"जपे'दायन्तु न' इति मन्त्रं सम्यगशेषतः । रक्षार्थं पितृपात्रस्य त्रिः कृत्वः सर्वतो दिशम् ॥

"तिलांस्तु प्रक्षिपेन्मन्त्रमुच्चार्या'पहता' इति" ॥ २३३ ॥

## याज्ञवल्कीये २३४।२३५ श्लोकौ

**स्मृत्यन्तरानु**रोधेनाह । **तत्रार्यमित्यादिना** । तानि च यथा । दक्षिणाग्रेषु दक्षिणापवर्गेषु **चमसेषु** त्रिष्वप आसिञ्चे'च्छन्नो देवीरिति' दक्षिणाग्रेषु दर्भेषु दक्षिणापवर्गतया आसादितेषु

पवित्रान्तर्हितेषु चमसेषु त्रिष्वर्घ्यपात्रेषु 'शन्नोदेवीरभिष्टये' इति मन्त्रेण प्रतिपात्रमप आसिञ्चेदित्यर्थः । **शौनकः** । "पात्रेषु दर्भान्तर्हितेषु अपः प्रदाय शन्नोदेवीरभिष्टय इत्यनुमन्त्रितासु तिलानावपति ।

"तिलोसि सोमदेवत्यो गोसवे देवनिर्मितः। प्रत्नवद्भिः प्रत्तः स्वधया पितॄनिमांल्लोकान्प्रीणयाहि नः स्वधा नम" इति । **आश्वलायनः** (४।७।८) तैजसाश्ममृण्मयेषु पात्रेषु एकद्रव्येषु वा दर्भान्तर्हितेष्वपः प्रसिच्य शन्नोदेवीरित्यभिमन्त्र्य तिलानावपति "तिलोसि० प्रत्नवाद्भिः प्रत्तः स्व० नम इति" तानि चाग्नेयीसंस्थानि निधाय तेषु त्रीन्दर्भानन्तर्धायापो निषिच्य शन्नोदेवीरित्यृचा-सकृदनुमन्त्रणमपां न मन्त्रावृत्तिस्ततस्तेषु मन्त्रावृत्त्या प्रत्येकं तिला देयाः पितृशब्दस्योहो नास्तीति । **वृत्तिकृतः** तत्र मृण्मयं हस्तघटितमेव ग्राह्यं न कुलालचक्रनिर्मितमित्यभियुक्ताः ।

"अर्घ्याः पुष्पैश्च गन्धैश्च ताः प्रपूज्याश्च मन्त्रवित्" । इति **ब्राह्मणम्** । या अर्घार्हास्ताः अपः पूज्या इत्यर्थः । **शौनकः** ताः प्रतिग्राहयिष्यन्स्वधाऽर्घ्या इति ता अपो ब्राह्मणैः प्रतिग्राहयिष्यन्स्वधाऽर्घ्या इति मन्त्रेण तत्र स्थापयेदित्यर्थः । अर्घ्यपात्रपूरणस्यावाहनस्य च व्यवस्था प्राग्वद्बोध्या। **पैठीनसिः**।"ततो ब्राह्मणहस्तेषूदकपूर्वं दर्भान्प्रदायोदकमर्घ्योदकं ददाति "या दिव्या" इत्युक्त्वाऽसावेतत्तेऽर्घ्योदकमित्यप उपस्पृश्यैवमेवेतरयोरिति"। **आश्वलायनः**(४।७।९–१३) "प्रसव्येनोपवीतीदक्षिणेन सव्योपगृहीतेन" "पितरिदं तेऽर्घ्यं पितामहेदं तेऽर्घ्यं प्रपितामहेदं तेऽर्घ्यम् इत्यप्पूर्वं ताः प्रतिपादयिष्यन्सकृत्सकृत्स्वधाऽर्घ्या इति विप्रप्रसृष्टा अपोऽनुमन्त्रयीत "या दिव्या आपः पृथिवी० शंस्योना भवन्तु" इति।अत्र **वृत्तिः**। पित्र्यं कर्म सर्वं प्रसव्येनाप्रादक्षिण्येन कार्यं प्रकृत्यादित्वात्तृतीया अत एव प्रदक्षिणमुपचार इत्याभ्युदयिकेऽपवादः। अत एव प्रागपवर्गा विप्रपङ्क्तिः । एवं ह्यप्रदक्षिणं भवति वामसंनिधानेन प्रचारात् । एवं च पितृपिण्डरेखातो मातामहादिपिण्डरेखा पूर्वा एवोचिता । मातृरेखा तु पश्चिमे । अत एवान्वष्टक्यसूत्रे पूर्वासु पितृभ्योऽपरासु स्त्रीभ्य इत्युक्तम् । अपरासु पश्चिमादिक्स्थास्विति तद्वृत्तिः । स्त्रीणां भर्तृवामपार्श्वेऽवस्थानौचित्याच्च इदानीं **त्वाश्वलायनः** । प्रत्यगपवर्गमेव पिण्डान्प्रयच्छन्ति तत्राचार एव मूलं पूर्वोक्तसूत्रस्थमातृक्रम एव सर्वेषामिति भ्रमो वा मूलमन्त्रोपवीतविधानात्सर्वमन्यत्पित्र्यं प्राचीनावीतिना कार्यमित्युक्तम् । अधुनोपवीतित्वादिति हेतुनिर्देशाद्गन्धादिदानादर्वाग्यज्ञोपवीतिना कार्यमिति **गृह्यविदः** । अत्र यद्यपि वामपाणिपितृतीर्थेन देयमित्यपि पक्षः सूत्रे तथापि स शिष्टगर्हित इति नोक्तः । अप्पूर्वमित्यनेन पूर्वमन्या अपि अपो दद्यादिति सूचितं स्वधार्घ्या इत्यस्य निवेदयेदिति शेषः सकृदित्यनेनैकस्थाने ब्राह्मणबहुत्वेऽपि तत्तत्स्थानीयार्घ्यनिवेदनं सर्वान्प्रति सकृदेवेति सूचितम् एवं द्वितीयं पितामहानां सकृदेवेत्यादिबोध्यम् । निवेदने सकृत्वनियमादब्दानस्यार्घ्यमन्त्राणां चावृत्तिरेवेति बोध्यम् । **प्रसृष्टा** इत्यादिकर्मणि क्तः । प्रसृज्यमाना इत्यर्थः । भूतकालत्वे आनर्थक्यप्रसंगात्प्रतिब्राह्मणं चाभिमन्त्रणमिति अर्घ्यदानोत्तरं पुनरन्या आपो विप्रहस्ते देया इत्याचारः । अर्घ्यपात्रेऽपि कश्चिज्जलशेषः स्थापनीयः यदैकस्थाने बहवो विप्रास्तदा तन्त्रेण सकृदर्घ्यं निवेद्यैकत एवार्घ्यपात्रात्किंचित् किंचिज्जलमुपवेशनक्रमेण सर्वेभ्यो दद्यात् यदा त्रयाणामेक एव तदार्घ्यत्रयमपि क्रमेणैकस्मा एव देयमिति **शौनकेन** स्पष्टमुक्तमेवं च पित्रादीनां त्रयाणामेकैकस्यानेकब्राह्मणनिमन्त्रणेऽपि त्रीण्येवार्घ्यपात्राणि न तु ब्राह्मणसंख्यया । तथा च **बैजवापः**

१ प्रत्नमद्भिः पृक्तः ।

"स्तीर्त्वा पितॄणां त्रीण्येव कुर्यात्पात्राणि धर्मवित्। एकस्मिन्वा बहुषु ब्राह्मणेषु यथाविधि" ॥ इति।

स्तीर्त्वा तिलानर्घ्योदकेषु क्षिप्त्वेति। तदाह **एकैकमिति**। अपिनोक्तपक्षसमुच्चयः। **त्रयं** त्रयमेव दत्वेत्यादि व्याचष्टे। **एवमित्यादि**। तेषामित्यस्य व्याख्या **अर्घ्याणामिति**। **गलितेति**। पात्रेष्विति भावः। अत एव विधानत इत्युक्तमध इत्यस्यार्थो **भूमाविति**। देवपितृमध्ये इति भावः। करोतीति लेडित्याह। **कुर्यादिति**। **दीक्षिता** अप्येवमधोभूमौ निदध्यादिति तु विशेषः।

"तस्योपरि कुशान्दत्वा प्रदद्याद्दैवपूर्वकम्। गन्धं पुष्पाणि धूपं च दीपं वस्त्रोपवीतके" ॥ इति। **बैजवापादाह तस्योपरीति**। **अनन्तरमिति**। च अत्र दैवपूर्वकमित्यतः पदार्थानुसमयो लभ्यते स च मूलाभिमतकाण्डानुसमयेन सह विकल्पित इति **माधवः**। अत एव **स्मृत्यर्थसारे**ऽपि आसनादिनामाच्छादनान्तानां काण्डानुसमयः पदार्थानुसमयो वेति उक्तम्। अत्र **गुरुचरणाः**। "संस्रवान्समवनीयताभिरद्भिः पुत्रकामो मुखमनक्ति" इति। तदग्रिम**माश्वलायनसूत्रं** (४।७।१३) सर्वेषामर्घ्ये दत्ते संस्रवान्पात्रगताञ्जलशेषानेकीकरोति उत्तरे द्वे पात्रे प्रथमे आसिञ्चतीति तद्वृत्तिः। अत एव **शौनकः**।

"द्वितीयपात्रतः किंचिज्जलमादाय पूर्ववत्। इदं ते अर्घ्यमित्येव पितामहपदादिकम्" ॥ इति। एवं च संस्रवशब्दार्थं विप्रहस्तगलितोदकमिति मत्वा तज्जलग्रहणाय विप्रहस्तादधस्तादर्घ्यपात्रस्थापनाचारो **विज्ञानेश्वर**भ्रांतिमूलकः। **कारिकाया**मपि।

"पितृपात्रे प्रसिच्याथार्घ्यशेषं पात्रद्वये स्थितम्"। इति पुत्रकाम इत्युक्त्या तदभावेनेति बोध्यमित्याहुः। **मम तु प्रतिभाति** संस्रवशब्दार्थो विभक्तानि जलानि अर्घ्यसंबन्धीनि तद्धस्तगलितानि पात्रावशिष्टानि च नान्यतरमात्रमत एव मूले विधानत इत्युक्तम्। ब्राह्मणहस्तेत्यस्य ब्राह्मणहस्तगलितानि चार्घ्योदकानि चेत्यर्थः। गलनं चार्घ्यपात्रान्यपात्रेषु अत एव पात्रेष्विति सामान्येनोक्तं **दीक्षितैः**। **वृत्ता**वपि पात्रगतान्। जलशेषांश्चैकीकरोतीत्यर्थः। एवं च विशिष्ट एव तदर्थस्तस्याभिमतः। तत्र दिङ्मात्रमुक्तमुत्तरे इति तदपि बोध्यमयमेवाशयः **कारिकायाः**। अत एव **शौनक**विरोधोऽपि नेति सर्वैकवाक्यता। **गुरुचरणो**क्तिस्तु तदभिप्राया। अत एव मत्वेति तैरुक्तमिति ततस्तत्सूत्रम्।

"नोद्धरेत्प्रथमं पात्रं पितॄणामर्घ्यपातितम्। आवृत्तास्तत्र तिष्ठन्ति पितरः शौनकोऽब्रवीत्॥

"न्यग्बिलं पितृपात्रं स्यादा समाप्तेर्न चालयेत्। उत्तानं वा तृतीयेन पिहितं तन्न चालयेत्" ॥

इति **कारिका**ऽपि।

"पृथगुद्धतमन्यत्र नीतमुद्घाटितं तथा। पात्रं दृष्ट्वा व्रजन्त्याशु पितरस्तं शपन्ति चेत्"। इति। **मनु**रपि अत्र गन्धादिपञ्चानामेव दानं तत्सूत्रे एतस्मिन्काले गन्धमाल्येत्याद्युक्तेस्तेन गोभूहिरण्यादीनां प्राक् स्वधावाचनात्प्रदानम्।

"दद्याच्च दक्षिणां शक्त्या स्वधाकारमुदाहरेत्" इति **स्मृतेः**। अत्र प्रागुक्त**बैजवापा**दुपवीतदानमपि। इदं च शूद्राणामपि विप्रोद्देश्यकत्वादित्याहुः। ततो भोजनपात्रस्थापनम्।

"पूर्वं पात्राणि निक्षिप्य पश्चादर्चनकं तथा। तत्पात्रे निक्षिपेदन्नं सुरापानेन तत्समम्" ॥ **इत्यभियुक्तोक्तेः**। तत्रादौ तदर्थं भूमौ मण्डलानि कुर्यात्।

"आदित्या वसवो रुद्रा ब्रह्मेन्द्रार्कदिवाकराः। मण्डलान्युपजीवन्ति तस्मात्कुर्वीत **मण्डलम्**"॥ इति **शङ्खात्**।

"हरन्ति हि रसं क्रूरा अकृते मण्डले सति" **इत्यभियुक्ताः। बौधायनः।**

"चतुरस्रं त्रिकोणं च वर्तुलं चार्धपुण्ड्रकम्। कर्तव्यमानुपूर्व्येण ब्राह्मणादिषु मण्डलम्"॥ **इति।**

तत्र दैविके नैर्ऋतीमारभ्यैशान्यां समाप्तिः। पित्र्ये ऐशानीमारभ्य नैर्ऋत्यां तत्समाप्तिः। **यवदर्भतिलाश्च तदुपरि क्षेप्या इत्यभियुक्ताः।** मण्डलद्रव्याणि नीवारसक्तुगौरमृत्तिकाभस्मगोमयानि। **अथ तद्योग्यपात्राणि।**

"सौवर्णानीह पात्राणि संपाद्यानि प्रयत्नतः। तदभावे तु रौप्याणि कांस्यानि तदसंभवे"॥

"तत्र कांस्यपात्रं द्विपंचाशत्पलिकम्" इति **वाराहे**। "कांस्यपात्रमपि दैवे हेमघृष्टं पित्र्ये **रजतघृष्टं कार्यम्" इत्यभियुक्ताः**। "राजतं रजताक्तं वा पितॄणां पात्रमुच्यते" इति **वायुपुराणं** च। तेषां विप्रेभ्य उत्सर्गे पितॄणां ब्रह्मलोकप्राप्तिरित्यपि **नारदीये** स्पष्टम्।

"श्राद्धे पलाशपात्राणि मधुकोदुम्बरद्वयम्। पालिकाकूटकलभक्रकचानि क्रमाज्जगुः॥

"कदलीचूतपनसजम्बुपुंनागचम्पकाः। अलाभे मुख्यपात्राणां ग्राह्याणि पितृकर्मणि॥

"न जातीकुसुमं न कदलीपत्राणि" **इत्यङ्गिरसा** कदली निषिद्धा।

"वल्लीपलाशपत्रे तु स्थलजे पौष्करे तथा। गृहस्थश्चेत्समश्नीयाच्छुद्ध्यै चान्द्रायणं चरेत्"॥ इति।

स्मृतिम**भियुक्ता** लिखन्ति। पलाशासंभवेऽन्यपर्णपात्राणि नेत्या**हात्रिः**।

"पालाशेभ्यो विना न स्युः पर्णपात्राणि भोजने"। इति **हेमाद्रौ**।

"नायसानि तु कुर्वीत पैत्तलानि न तु क्वचित्। न च सीसमयान्यत्र शस्यन्ते त्रपुजान्यपि॥

"मृण्मयेषु तु यः श्राद्धे कश्चिद्भोजयते पितॄन्। स याति नरकं घोरं भोक्ता च स पुरोहितः"॥ इति। पात्राणि च द्विः परिमृज्य दद्यात्। अत्र पात्रसमंताद्भस्ममर्यादां कृत्वा विप्रपाणिक्षालनं कुर्या-द्वैपरीत्ये दोष **इत्यभियुक्ताः**। तद्वक्ष्यति "मृण्मयवर्जम्" इत्यादि ततोऽग्नौकरणम्।

"कृत्वा गन्धादि धूपांश्च सर्पिष्मद्धविरुद्धरेत्। पैतृकैरभ्यनुज्ञातो जुहोति पितृयज्ञवत्"॥ **इति। पारस्करात्**॥ २३४॥ २३५॥

## याज्ञवल्कीये २३६।२३७ श्लोकौ

तदनुष्ठानप्रकारमाह। **अग्नौ करिष्यन्नित्यादि**। तदाह **अनन्तरमिति**। यद्यपि **रूढिपक्षे** न दोषस्तथाऽपि यौगपक्ष आह। **घृतेति**। अन्यथा संस्कारकत्वेन तस्य प्राप्त्या तद्वैयर्थ्यं **स्पष्टमेव**। अतिदेशलब्धमाह। **प्राचीति। अग्निमुपेति**। काष्ठप्रक्षेपणप्रदीपनमुपसमाधानमितिमन्त्र-

द्वयेन अग्रिमार्थमाह । **पिण्डेति** । तस्य निषिद्धत्वादाह । **मृन्मेति** । **वर्जमिति** णमुलन्तम् । **न वैश्वेति** । रौप्येष्विति **लिङ्गात्** ।

"निक्षेप्यं हुताशिष्टान्नं पितृपात्रे न दैविके । न हि स्मृताः शेषभाजो विश्वेदेवाः पुराणगैः" ॥

इति **माधवाद्युदाहृत**वचनाच्च विशेषमाह । **अत्रेत्यादिना** । **सर्वाधानेति** । श्रौतस्मार्ताग्न्यपृथक्कृतीत्यर्थः । दक्षिणाग्निपरिग्रहे नियामकमाह । **पिण्डेति** । नन्विदं 'कर्म स्मार्तमिति' वचनविरुद्धमत आह । **कर्मेति** । तमेवाह । **यथाहेति** । **औपसदे** आवसथ्ये **द्विजे** तत्पाणौ । "अनाहिताग्निर्गृह्येऽग्नौ पित्र्यपाणावथाप्सुवा" इति पाठान्तरम् । गृह्याग्न्यभावे पित्र्यपाणौ । अप्सु इति तीर्थश्राद्धविषयम् ।

"पितृयज्ञेन जुहुयात्त्रिरग्निर्लौकिकेऽनले । अनग्निर्दूरभार्यश्च पार्वणे समुपस्थिते ॥

"संधायाग्निं ततः कुर्याद्धोममग्निं समुत्सृजेत्" । इति **त्रिकाण्डमण्डनोक्तं** तु तैत्तिरीयादिपरम् । बहृचानां तु पिण्डपितृयज्ञेन तन्त्रे गृह्याग्नौ होमः केवले तु साग्नेरपि पाणिहोम एवेति ।

"स्नातको विधुरो वीरा वनस्थब्रह्मचारिणः । सर्वाधानेन नष्टाग्निः पाणौ होमं करोति तु" ॥ इति ।

**बह्वृचसंग्रहे** । **अर्धेति** तयोः पृथक्कृतीत्यर्थः । तथा च **लौगाक्षिः** ।

"अर्धाधानं स्मृतं श्रौतस्मार्ताग्न्योस्तु पृथक्कृतिः । सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रिता" ॥ इति ।

पूर्वयुगानि द्वापरान्तानि तदाश्रितेत्यर्थः । कलावर्धाधानमेव । तदपि चतुःशताधिकचतुःसहस्रवर्षपर्यन्तमेवेति **व्यासे**नोक्तमित्यन्यत्र स्पष्टम् । यत्तु युगस्य पूर्वं पूर्वयुगं कलेः पूर्वभाग इत्यर्थ इति तन्न । पूर्वाणि च तानि युगानि चेति कर्मधारयस्यैवौचित्यात् । द्वापरकल्योः संधावेव स्मृतीनां प्रवृत्त्या तथार्थस्यैव युक्तत्वाच्च । **औपासनेति** । तदुक्तं **स्मृत्यर्थसारे** "औपासनाग्निं परिसमुह्य पर्युक्ष्य वामेनोपस्तीर्य दक्षिणेनावदाय जुहुयात्" । इति ।

अत्र **स्मृतिचन्द्रिकाकारः** । विप्रानुज्ञा नेत्ययुक्तमनग्निश्चेदाज्यं गृहीत्वा भवत्स्वेवाग्नौ करणमिति पूर्ववत्तथाऽस्त्विति **शौनक**गृह्यविरोधात् । मेक्षणाभावोक्तिरपि मेक्षणकार्येऽन्यस्य विध्यभावादयुक्ता । परिसमूहनपर्युक्षणसद्भावोक्तिश्चायुक्ता । पांसुनिरसनलक्षणस्य दृष्टकार्यस्य लोपात् । नियमादृष्टमात्रस्य चाप्रयोजकत्वादिति । **हेमाद्रिस्तु** उक्त**स्मृत्यर्थसारं स्मृतिचन्द्रिको**क्तत्खण्डनं च संलिख्य 'पर्यस्तदर्भानास्तीर्येति' **यमो**क्तौ 'पर्युक्ष्य दर्भानिति' पाठान्तरमुक्त्वा परिस्तरणपरिसमूहनादिपरिसंख्यापरं **कर्क**ग्रन्थं चोपन्यस्य यदत्र युक्तं तद्ग्राह्यमित्युपसंजहार । विशेषमाह । **काम्येति** । न्यूनतां निराचष्टे । **एवमिति** । तत्रैव होम इत्यर्थः । तत्र हेतुमाह । **पिण्डेति** । **तुरुक्त**वैलक्षण्ये । अन्येषामपि साग्नीनामिति भावः । कृष्णपक्षे तत्सामान्ये यद्दर्शश्राद्धं काम्यं पुत्रादीच्छया क्रियमाणम् । 'अभ्युदयो वृद्धिश्राद्धमिति' **गुरुचरणाः** । द्वितीयेन भेद इत्याह । **पुत्रोत्पेति** । **लक्षयतीति** । गृह्यकृदिति शेषः । तत्र बीजमाह । **तत्रैकोद्दिष्टेति** । **अपिना** पार्वणसमुच्चयः । **मदनपारिजातः स्मृतिरत्नावली** चाप्येवम् । शक्यर्थसंग्रहसंभवे लक्षणा नोचितेत्याह । **अथवेति** । पदार्थमुक्त्वा वाक्यार्थमाह । **एतेषामिति** । निर्धारणे षष्ठी

आहिताग्निबह्वृचानां तु पिण्डपितृयज्ञोत्तरमेव पृथक्तन्त्रेण श्राद्धोक्तेस्तत्रापि पाणावेव होमः । ब्राह्मणसमीपे भुक्तशेषेण पिण्डदानं कृताकृतम् ।

"अत्र कर्मणि पिण्डानां दानं नेच्छन्ति केच न" इति आहिताग्निश्राद्धप्रकरणे **शौनकोक्तेः** ।

एवं साग्नेरुक्त्वा निरग्नेराह । **निरग्नीति** । नित्यत्वे मानमाह । **न निर्वपेति** । तस्यैवान्यत्राप्याह । **एवमिति** । तस्यान्वष्टक्यादेरभावादाह । **काम्येति** । सर्वत्र तत्र मानमाह । **अग्न्यभावे त्विति** ।

चतुर्विधो द्विजातिरनाग्निः स्मार्तमात्राग्निकः श्रौतस्मार्ताग्निकः श्रौतमात्राग्निकश्चेति । तत्रानग्नेर्लक्षणमुक्तम् । "अग्न्यभावस्मृतिस्तावद्यावद्भार्यां न विन्दति" इति । तच्च यद्यपि विवाहपूर्वकालमात्रप्रतीतेर्विधुरेऽव्यापकं तथाप्यस्याग्न्यभावे तु विप्रस्य पाणावेवोपपादयेदिति वाक्यशेषेण पाणिहोमार्थपरिभाषात्वावगमात्पाणिहोमस्य च

"यावत्स्यान्नाग्निसंयुक्त उत्सन्नाग्निरथोऽपि वा । आमश्राद्धं द्विजः कुर्याद्धस्तेऽग्नौकरणं भवेत्" ॥

इत्यनेनोत्सन्नाग्निकर्तृकतयाऽप्यभिधानादग्न्यभावस्मृतिरित्यत्रैवं व्याख्येयम् । यावद्भार्यां प्रथमां तन्नाशेऽपि "आहरेद्विधिवद्दारानग्नींश्चैवाविलंबयन्" इत्याहर्तव्यतयोक्तां द्वितीयादिकां वा न प्राप्नोति तत्कालावच्छिन्नः स्मृतिष्वग्न्यभावोक्त्या ग्राह्य इति । एवं च

"आपद्यनग्नौ तीर्थे च अग्न्यभावे द्विजेष्सु वा । अग्न्यभावे तु विप्रस्ये"त्यादिषु अकृतविवाहविधुरौ गृह्येते । तयोः पाणौ होमः । औपासनमात्राग्निकस्यार्धाधानिनश्चानाहिताग्नित्वादौपसद इति गृह्याग्नौ । अस्यार्थः । उद्सीदति कर्मणि कर्मणीति उपसद्भार्या तद्योगनिमित्तक औपसदो गृह्याग्निस्तत्रानाहित आहितभिन्नोऽग्निर्नेत्रिव युक्तन्यायेनाहितसदृशो वैदिकः स्मार्तो यस्य सोऽनाहिताग्निरिति व्युत्पत्त्या द्वयोरपि होम इति । एवमर्धाधानिनः संग्रहणे 'कर्म स्मार्तं विवाहाग्न्यावि'त्यस्याबाधेन सर्वाधानिनि लब्धावकाशतयोपपद्यमानेनापि "आहिताग्निस्तु जुहुयाद्दक्षिणाग्नौ" इत्यनेन निरर्थं बाधः कल्पितः स्यात् । तस्मादाहिताग्निरिति आहित एवाग्निर्यस्येति व्युत्पत्त्या रथन्तरसामादिवद्विशेषणव्यवच्छेदसर्वाधान्यभिधीयते तस्याऽपि पार्वणे एव दक्षिणाग्नौ होमो न श्राद्धान्तरे । विहृतदक्षिणाग्निसद्भावादिति वदता **विज्ञानेश्वरेण** स्मार्तश्राद्धाङ्गाग्नौकरणस्य श्रौताग्निप्रणयनानाक्षेपकत्वस्य सूचनात् । युक्तं चैतत् । **शुल्बसूत्रेषु** आयतनपरिमाणनियमस्याग्नीनां तद्बहिरनयनार्थत्वात् । वचनं च स्मार्तप्रत्यक्षश्रुतिमूलकात्कल्पसूत्रात् दुर्बलम् । **मदनपारिजाता**दीनामविशेषेण सर्वाधानिकर्तृकश्राद्धे दक्षिणाग्न्यधिकरणकहोमाभिधानमपि विशेषाभिसंधिनैव । न हि **मिताक्षराटीकाकर्तु**स्तस्य तद्ग्रन्थादर्शनं घटते ।

इदमपि **नाश्वलायनानाम्** । तद्**गृह्ये** ( ४।८।६ ) "पाणिमुखाः पितर इति हि ब्राह्मणम्" इति श्रुत्या कर्षणपाणिहोमस्यौत्सर्गिकताया दर्शनाद्यत्र सप्तमीनवमीमासिश्राद्धेषु विशिष्य पिण्डपितृयज्ञकल्पप्राप्तिस्तत्रैव निरवकाशया तया तद्बाधौचित्यात् दक्षिणाग्निविधायकवाक्यस्य शाखान्तरेऽपि चरितार्थत्वात् । अत एव **वृत्तिकारः** शिष्टपर्वस्थलीये पार्वणेऽपि पाणिहोममाह । तत्र कः प्रसंगः सांवत्सरिके दक्षिणाग्नौ होमस्य तमपि च गृहसिद्धान्तेन केचित्कुर्वन्ति तदपीदानीं विचार्यते । यद्यपि "उद्धृत्य घृताक्तमन्नमनुज्ञापयतीत्यथाग्नौ जुहोति" इति सूत्रे श्राद्धपाकावधिर्यद्यङ्गतया स्यात्तत्रोक्तं

१ आ. गृह्यसूत्रे ४।८।२-४ ।

वृत्तिकृतैव नात्रापूर्वः स्थालीपाकश्चोद्यते सर्वश्राद्धेषु प्रसंगादिति । न च सांवत्सरिके तमङ्गीकुर्वतां नानिष्टमिति वाच्यम् । सूत्रकृद्दृष्ट्या तदसत्वात् । अत एवायात इत्यादिना तद्रहितमेवोक्तम् । सत्वेऽपि वा अष्टम्यादिष्वपि प्रसंगादिति तदर्थात् । न च "काम्यमभ्युदयेऽष्टम्यामेकोद्दिष्टमथाष्टमम्" इत्यादि वचनेन पाणिहोमं विदधतां तदपवाद इति शङ्क्यम् । स्थालीपाकादप्युद्धृत्य पाणिहोमसंभवेन विरोधाभावात् । पाणिहोमो ह्यग्निहोमेन सह विरुध्यते न स्थालीपाकेनेति । अथाभ्यनुज्ञायां पाणिष्वेव वेत्यत्राभ्यनुज्ञायां पिण्डपितृयज्ञकल्पप्राप्त्यभाव इति व्याख्यातत्वात्पाणिहोमाक्षिप्तपितृयज्ञकल्पप्राप्त्यभावात्तत्र स्थालीपाकनिवृत्तिरिति । तन्न । एवं हि अग्निहोमपाणिहोमयोर्न्यायादेव भवताऽपि विषयव्यवस्थाऽऽश्रिता स्यादित्यन्वष्टक्यं च पूर्वेद्युरित्यादि तद्व्यवस्थापकं वाक्यं न्यायमूलकं सर्वैरेव गृह्यकारीयतयैवोदाहृतत्वाच्चानार्षमित्यपि त्वयैवोक्तम् । ततश्चाष्टम्यादिश्राद्धेषु शास्त्राभ्यनुज्ञाविषयत्वाभावात्पाणिहोमायोग्येष्वपि स्थालीपाकप्रसंगोक्तिर्युक्तैव । तस्माच्छ्रौतसूत्रविहितस्मार्तपिण्डपितृयज्ञचरोरुद्धृत्य घृताक्तमन्नमित्यत्रोद्धारावधित्वेन निर्देशस्तदुक्तम् ।

"पितृयज्ञचरोरन्नमुद्धृत्याभ्यज्य सर्पिषा । अग्नौ करिष्य इत्येतानुक्त्वोक्तिः क्रियतामिति" । तस्यैषाथाग्नौ जुहोतीत्यत्र तस्यैव च स्थालीपाकेन सह पिण्डार्थमुद्धृत्येत्यत्रानुवाद इति । एवं ह्यथ शब्दस्याकस्मिकता परिहृता भवति । विशेषमाह । **पाणिदत्तेति** । तत्र हुतस्येत्यर्थः । न विद्यते इति । **स्मृत्यर्थसारे** तु सर्वधानां दक्षिणाग्नौ जुहुयाद्विप्रपाणौ वेति कल्पमुक्त्वा तेन पाणिहुतं तदैव प्राश्याचम्योपविशेत् । यद्वा भाजने क्षिप्त्वाऽऽचम्योपविशेत् । विधुरादिभिरग्निहीनैर्हुतं तु पूर्वं नाश्नीयाद्भोजनकाले एव त्वश्नीयात् । त्यक्ताग्निहुतं तु नैवाश्नीयादित्युक्तम् । **तद्गृह्यभाष्यकारेणापीदं** पक्षान्तरमुक्तं परं त्वाचारविरुद्धम् । अत एव तत्कारिकाप्रथितेषु हुतेष्वन्नेष्वन्यदन्नं दद्यात्यथ उदीच्याः प्राहुरेवं न प्राश्नीयात्करे हुतं निधाय तद्धुतं पात्रे आचम्योपविशेदितीति । ततः **स्मृत्यर्थसारे** "देवपूर्वमुपस्तीर्य स्वयं पत्नी वा अन्यो वा नियुक्तः प्रशस्तहविष्यान्नपूर्वं परिवेषणं कुर्युः" इति । तत्र हुतशेषदानानन्तरं परिवेषणमिति **मूलोक्तम्** । **प्रचेता** अपि "हुतशेषं पितृभ्यस्तु दत्वाऽन्नं परिवेषयेत्" इति । तत्र परिवेषणप्रकारः **मनुः** ( अ. ३ श्लो. २२४ ) ।

"पाणिभ्यामुपसंगृह्य स्वयमन्नस्य वर्द्धितम् । विप्रान्तिके पितॄन् ध्यायन् शनकैरुपनिक्षिपेत्" ॥

इति विप्रसमीपभूमौ स्थापयेदित्यर्थः । **शौनकः** ।

"पाकं सर्वमुपानीय संवेद्य च पृथक् पृथक् । विधिना दैवपूर्वं तु परिवेषणमाचरेत्" ॥ इति संवेद्य मधुरमिदं तिक्तमिदमित्यादि नानागुणान्निवेदितान्कृत्वेत्यर्थः ।

"द्विवारं वा चतुर्वारं हविर्दद्याच्च दैविके । एकवारं त्रिवारं वा पैतृकं प्रथमं स्मृतम्" ॥

**इत्यभियुक्ताः** । तेन भुञ्जानेषु विप्रेषु अपेक्षितान्नदानेनैव संख्यानियमः । तथा

"अन्नं मध्ये प्रतिष्ठाप्य दक्षिणे घृतपायसम् । शाकादिपुरतः स्थाप्यं भक्ष्यं भोज्यं च वामतः॥

"पानीयं पायसं चैव दद्याद्धोकुश्च दक्षिणे" इति **हारीतः** ।

"पङ्क्त्या चैवोपविष्टेभ्यः समं गन्धादिभोजनम् ।

कुनदीसेतुकारस्य कन्याविघ्नकरस्य च। पङ्क्त्यां विषमदातुश्च निष्कृतिर्नैव विद्यते"॥ इति।
"सर्वं कर्मापसव्येन पितृकर्माणि कुर्वता। अन्नदानादृते कार्यं तद्वद्विप्रविसर्जनम्"॥

**इत्यभियुक्ताः**। तत्र स्त्रीणां सव्यापसव्यधर्मासंभवात्स्वयं परिवेषणं मुख्यम्। एवं पाकोऽपि परं तु सोऽपसव्येनैवान्नदानादृते इत्युक्तेः। **वायुपुराणं** च।

"फलस्यानन्तता प्रोक्ता स्वयं तु परिवेषणे। परिवेषः प्रशस्तो वा भार्यया पितृतृप्तये"॥ इति।

अत्र भार्याग्रहणं पाककर्त्रुपलक्षणम्। **मात्स्ये** "परिविष्यान्नं सतिलं दर्भपाणिरशेषतः" इति। **तेन पृथक्** तिलपरिवेषणं न कार्यम्। तथा च **पराशरः**।

"भोज्यपात्रे तिलान्दृष्ट्वा निराशाः पितरो गताः"। इति परिवेषणमपि पाणिद्वयेन।
"समूहभाण्डमादाय पाणिनैकेन दीयते। तत् द्रव्यं पितृपात्रेषु सदृशं कृमिराशिभिः"॥
अतो हस्तद्वयेन दर्व्यादिसाधनेन परिवेषयेत्।
"दर्व्यैव संप्रदातव्यं न हस्तेन तु किं चन" इत्युक्तेरि**त्यभियुक्ताः**। **मनुः**।
"दर्व्या देयं घृतान्नं तु समस्तं व्यञ्जनानि च। अपक्वं स्नेहपक्वं च न तु दर्व्या कदाचन"॥ इति।
दर्वी च ताम्रमयी शस्ते**त्यभियुक्ताः**। व्यञ्जनपदं लवणघृततैललेह्यपेयानामप्युपलक्षणम्।

**शातातपः**।

"हस्तदत्तानि चान्नानि प्रत्यक्षं लवणं तथा। मृत्तिकाभक्षणं यच्च गोमांसाशनवत्स्मृतम्"॥ इति।

**तत्र भविष्ये** विशेषः।

"समुद्रं सैन्धवं चैव लवणे परमाद्भुते। प्रत्यक्षे अपि ते ग्राह्ये निषेधस्त्वन्यगोचरः"॥ इति।
पाणिदत्तनखादिश्रुतभोजने पादकृच्छ्रं प्रायश्चित्तमि**त्यभियुक्ताः**। **मनुः**। (अ.३ श्लो.२०२)
"राजतैर्भाजनैर्देयमथ वा राजतान्वितैः"। इति। "आयसेन परिवेषणे तृणपर्णान्तरितेन तत्"

इति **हारीतः**।

"यावदुष्मा भवत्यन्ने यावद्भुञ्जन्ति वाग्यताः। पितरस्तावदश्नन्ति यावन्नोक्ता हविर्गुणाः"॥ इति।
अत एवाल्पमल्पमन्नं वारं वारं देयं यथा पात्रे शीतं न दद्याद्दध्योदनं शीतमि**त्यभियुक्ताः**।

**वायवीये**।

"घृतेन भोजयेद्विप्रान्घृतं भूमौ समुत्सृजेत्। शर्कराक्षीरसंयुक्ताश्चिपिटा नित्यमक्षयाः" ॥ इति।

घृतं यथा भूमौ पतति तथा देयमित्यर्थः। मधु तु कलौ निषिद्धम्। तत्स्थाने घृतमधु वा। **यद्यपि "मधुदानं समन्त्रकं"** तथापि तत्स्थानीय घृतदानममन्त्रकमेवे**त्यभियुक्ताः**। परिविष्टं चान्नं **संकल्पात्पूर्वं विप्रा न स्पृशेयुः**।

**"असंकल्पितमन्नाद्यं पाणिना यद्युपस्पृशेत्। अभोजनं भवेच्छ्राद्धं पितॄणां नोपतिष्ठते"** ॥ इति **शातातपात्** ॥ २३६ ॥ २३७ ॥

## याज्ञवल्कीये २३८ श्लोकः

ततस्तदन्नं घृतेनाभिघार्य पात्रालम्भः कार्यः । तत्प्रकारमाह । **दत्वाऽन्नमिति** । अन्नशब्दो यौगिक एवेत्याह । **ओदनसूपेति** । मूले छन्दोऽनुरोधात्ते शब्दं विहायानुकरणमित्याह । **पृथिवी ते इति** तत्प्रकारः । **पाद्मे** ।

"दक्षिणं तु करं कृत्वा वामोपरि विधानवत् । दैवपात्रमथालभ्य 'पृथ्वी ते पात्र'मुच्चरन् ॥
"दक्षिणोपरि वामं च पितृपात्रस्थलम्भने" । इति । विधानं च **चतुर्विंशतिमते** ।
"उत्तानं दक्षिणं सव्ये नीचे पात्राण्यभिस्पृशेत् । नीचे तु दक्षिणे सव्यमुत्तानं पितृकर्मणि ॥
"स्वस्तिकेन पितॄन्ध्यायन्नधश्चोर्ध्वं प्रदापयेत्" इति । अत एव **पराशरः** ।
"करमध्ये स्थिता देवाः करपृष्ठे तु राक्षसाः । पात्रस्यालम्भनादौ तु तस्मात्तन्न प्रदर्शयेत्" ॥ इति ।
"उभाभ्यामपि हस्ताभ्यां पात्रं धृत्वा तु तत् दृढम्" । इति **कात्यायनो**क्तावप्ययमेव प्रकारो बोध्यः ।

"उत्तानेन तु हस्तेन द्विजाङ्गुष्ठे निवेशनम् । यः करोति द्विजो मोहात्तद्वै रक्षांसि गच्छति" ॥ **इत्यभियुक्ताः । पाद्मे तु** तु द्विजाङ्गुष्ठग्रहणोत्तरं पृथिवी ते इति मन्त्र पाठ इत्युक्तम् । "तत्र **इदं** विष्णुरि"त्यादिपञ्चकपाठः ।

"इदं विष्ण्वादिभिर्मन्त्रैः पञ्चभिः श्राद्धकर्मणि । अङ्गुष्ठग्रहणं कुर्यात्तेन रक्षो न बाधते" ॥ इति । **ऋग्विधानोक्तेः । कात्यायनः** ।

"मोचयेद्दक्षिणं हस्तमन्नं संकल्पयेद्यदा । हस्तेन मुक्तमन्नाद्यमिदमन्नमितीरयेत् ॥
"स्वाहेति च ततः कुर्यात्स्वसत्ताविनिवर्तनम् । गोत्रसंबन्धनामानि इदमन्नं ततः स्वधा" ॥
"पितृकर्मादुदीर्येति स्वसत्तां विनिवर्तयेत्" । इति । **धर्मप्रदीपे** ।
"तिलदर्भसमायुक्तं तोयं भूमौ प्रदापयेत् । पात्रस्य संनिधौ पित्र्ये दैवे यवसमन्वितम् ॥

"वैश्वदेवस्य वामे तु पितृपात्रस्य दक्षिणे । संकल्पोदकदानं स्यादिति" ॥ भूमावित्यनेन पाणिषु न देयमिति लभ्यते । "तत्रोपतिष्ठतेऽन्नं तु न तु भूमौ कदाचनेति" **यमात्** । तत्र भूमौ प्रक्रमात्संकल्पश्चापोशानात्प्रागेव "आपोशानं प्रदायान्नं न तत्संकल्पयेद्विजः" इति **पराशरात्** । काशीगङ्गातीरभिन्ने गयादिभावना ततो "ये देवास" इति "ये चेह पितरः" इति च यथाक्रममुपस्थानमुक्तम् **स्मृत्यर्थसारे** एकैकत्र ब्राह्मणानेकत्वे प्रत्येकं तेष्वेवमेव त्यागः सर्वेषामेकब्राह्मणपक्षे यावन्त उद्देश्यास्तावतो भागानेकस्मिन्नेव भाजने परिविष्टान्नादेर्बुद्ध्या कल्पयित्वा एकैकं पित्रादिकमुद्दिश्य त्यजेत् । यदतिथिस्तिष्ठति तर्हि तदनन्तरं देववदर्चयित्वा विष्णुरूपायातिथये इदमन्नमित्यादि यथापूर्वं संकल्प्य "ये देवास" इत्युपतिष्ठेत् । तदुक्तं **यमेन** ।

"भिक्षुश्च ब्रह्मचारी वा भोजनार्थमुपस्थितः । उपविष्टेष्वथ प्राप्तः कामं तमपि भोजयेत्" ॥ इति ।

ततो "देवताभ्यः पितृभ्यश्चेति" मन्त्रं "सप्तव्याधा" इति मन्त्रौ "चतुर्भिश्चेति" मन्त्रं "एको विष्णुरिति" मन्त्रं "हरिर्दाते"ति मन्त्रं च जपेत्। ततो **लघुयमः।**

"अन्नहीनं क्रियाहीनं भक्तिहीनं च यद्भवेत्। सर्वमच्छिद्रमित्युक्त्वा ततो यत्नेन भोजयेत्" ॥ इति। एतदप्यपोशानात्प्रागेव न तदुत्तरं **प्रचेतसा** दोषस्मरणादि**त्यभियुक्ताः। रक्षेतीति।** अयं परस्मैपदी क्वचिद्रक्षस्वेत्यात्मनेपदं तु छान्दसम्॥ २३८॥

## याज्ञवल्कीये २३९ श्लोकः

तदेतदभिप्रेत्याह। **अनन्तरमिति। अनन्तरमपोशानमिति।** तदुक्तं **ब्राह्मे** "तेभ्यो दद्यादपोशानं भवन्तः प्राशयन्त्विति"। अपोशानजलं च दक्षिणभागवक्त्रेण पेयमन्यथा सुरापानसम**मित्यभियुक्ताः।** तत्र सर्वत्रोक्ते पूरिते च मानमाह। **संकल्प्येति।** श्राद्धे निवेद्येति पाठः। **आदिना**

"अपोशानं प्रदायाथ सावित्रीं त्रिर्जपेदथ। 'मधु वाता' इति तृचं मध्वित्येतत्त्रिरावदेत्" ॥ इति **प्राचेतस**परिग्रहः। **मूले तृच**मित्यत्र 'त्रिकमिति' पाठान्तरम्। ततो देवेभ्य उदङ्मुखो देवेभ्यः स्वाहा नम इति वदन्वारिधारां भूमौ क्षिपेत्। तथैव पितृसमीपेऽपसव्येनाग्नेय्यभिमुखः पितृभ्यः स्वधा नम इति घृतधारां क्षिपेदि**त्यभियुक्ताः।**

अत्रेत्थं क्रमः "जप्त्वाऽथ वैष्णवान्मन्त्रान्विप्रान्ब्रूयाद्यथासुखम्"॥ इति **पराशरः। कात्यायनः।**

"ये देवास इमं दैवे पित्र्ये ये चेह वै पठेत्। मन्त्रान्ते तु ततो ब्रूयादमृतं भोज्यताम् इति"॥

"ततो ध्यात्वा पितॄन्देवान्गन्धपुष्पाक्षतोदकैः। नमस्कृत्य प्रवक्तव्यं जुषध्वमिति सादरात्"॥ इति।

**वृद्धगार्ग्यः।**

"यथासुखं जुषध्वं भो इति वाच्यमनिष्ठुरम्। अपेक्षितं याचितव्यं त्याज्यमिति ततः पठेत्"॥

**व्यासः।**

"जुषध्वमिति तेनोक्ताः सम्यग्विधृतभाजनाः। कृतमौनाः समश्नीयुरपोशानादनन्तरम्" ॥

पात्रधारणे **संवर्तः** "अङ्गुष्ठतर्जनीमध्यमाः प्रशस्ता" इति। यावद्भोजनं पात्रं वामेन धार्यं कण्डूयनाद्यर्थं वामे व्यापृते तु दक्षिणेन समालभ्य वर्तेते**त्यभियुक्ताः।** अत्र भोक्तॄणां बलिदानं निषिद्धम्

"पितॄणामन्नमादाय बलिं यस्तु प्रयच्छति। स्तेयेन ब्राह्मणस्तेन स सर्वस्तेयकृद्भवेत्" ॥

इति **भरद्वाजात्।** बलिदाने अन्नमालभ्य त्रिः सावित्रीजपः प्रायश्चित्तमि**त्यभियुक्ताः।** अत्रापोशानविधानबलिनिषेधाभ्यामन्ये नित्यभोजननियमाः पर्युलक्षणादयः प्राणाहुत्यन्ताः सन्तीति गम्यते। अपोशानानन्तरमेवान्नमर्दनम्।

"आदावन्नं न गृह्णीयाद्यावत्तोयं न संपिबेत्" इति **स्मृतेः।** कर्तृपठितप्राणाहुत्यादिमन्त्रान् श्रुत्वा विप्रा जुहुयुरि**त्यभियुक्ताः।** अत्र सर्वैरेकदैव भोक्तव्यम्।

"अग्रासनोपविष्टस्तु यो भुङ्क्ते प्रथमं द्विजः। बहूनां पश्यतां सोऽज्ञः पङ्क्त्या हरति किल्बिषम्"॥ इति **यमात्**। अत्र च भोजनसमाप्तिपर्यन्तं मौनम्।

"यवीयान्स पिता यश्च भुक्त्वा श्राद्धिकभोजनम्। प्राणाग्निहोत्रादन्यत्र नासौ मौनं समाचरेत्"॥ **इत्यभियुक्ताः**॥ २३९॥

## याज्ञवल्कीये २४० श्लोकः

ततः कर्तव्यमाह। **आन्नमिति**। प्राग्वदाह। **भक्ष्येति**। विनिगमनाविरहादाह। **यद्यद्विति**। तथा च **कार्ष्णाजिनिः**।

"यदिष्टं जीवितस्य स्यात्तद्दद्यात्तस्य यत्नतः। स तमो दुस्तरं मार्गं ततो याति न संशयः॥
"यदिष्टं जीवितस्य स्यात्तद्दद्याच्छ्राद्धकर्मणि। विना मांसं च मद्यं च गृंजनं लशुनद्वयम्"॥ इति।
हविष्यमत्र नैकादशीप्रकरणोक्तमित्याह। **श्राद्धेति**। **गोधूमेति**।
"तैलपक्वान्नरहितं मुद्गमाषविवर्जितम्। अगोधूमं तु यच्छ्राद्धं कृतमप्यकृतं भवेत्"॥
**इत्यत्रिः**। **मुन्यन्नेति**। तथा चात्रेयः।

"मुन्यन्नामिषमाध्वीकैर्विप्रद्विजजघन्यजाः। श्राद्धं विदधुरसति द्रव्येऽप्यसति चापरैः"॥ इति।

**वृद्धशातातपः**।

"मुन्यन्नामिषमध्वाज्यैरभावे प्रोक्तवस्तुतः। क्रमाद्विप्रादिभिर्वर्णैर्विधेयमिति शुश्रुमः॥
"परमान्नेन मांसेन शाकैर्मधुघृतादिभिः। सर्ववर्णैः प्रकर्तव्यं श्राद्धं वै वित्तशाठ्यतः"॥ इति।

**पैठीनसिः**।

"परमान्नं कालशाकं मधु मांसं घृतं पयः। मुन्यन्नानि तिला विप्राः प्रकृत्या हविरष्टधा॥
"शस्तान्यष्टौ तु सर्वेषां युगेषु मुनिसत्तमाः। पितॄणां देवतानां च दुर्लभानि कलावपि"॥ इति।

"नागरं चात्र वै देयं दीर्घमूलकमेव च"। इति **वायवीयम्**। हिङ्गुस्तु विहितप्रतिषिद्धत्वाद्वैकल्पिकः। तत्र विधि**रादित्यपुराणे**।

"मधुकं रामठं चैव कर्पूरं मरिचं गुडम्। श्राद्धकर्मणि शस्तानि सैन्धवं त्रपुसं तथा"॥ इति।
त्रपुसमम्लदधि निषेधं **व्यासः**।
"अश्राद्धे यानि धान्यानि कोद्रवाः पुलकास्तथा। हिङ्गुर्द्रव्येषु शाकेषु कालानलशुभास्तथा"॥ इति।
शुभाख्यः शाकविशेष इति **माधवः**। चणका अपि विहितप्रतिषिद्धाः। तथा च **मरीचिः**।
"कुलत्थाश्चणकाः श्राद्धे न देयाश्चैव कोद्रवाः" इति। **मार्कण्डेयः**।
"गोधूमैरिक्षुभिर्मुद्गैः सूरणैश्चणकैरपि। श्राद्धेषु दत्तैः प्रीयन्ते मासमेकं पितामहाः"॥ इति।

"कदल्यादिफलैः शस्तैर्मूलैरार्द्रादिकैरपि। गोरसैर्मधुना दध्ना श्राद्धे संतर्पयेत्पितॄन्"॥

इत्याश्वलायनः। **कालशाकः** कश्मीरदेशे प्रसिद्धः। **महाशल्को** मत्स्यभेदः। प्रभृतिशब्देन तिलप्रियङ्गुश्यामाकनीवारमहाशाकमेध्यमांसेक्षुआम्रातकखर्जूरराजजम्बूकगोस्तनीद्राक्षापियालामलकत्रपुसोर्वारुकचिपिटगुडफलमधुफलमकरोत्तमफलार्द्रकपिप्पलीमधुकादिपरिग्रहः। घृतं दधि च माहिषमपि शाकादिकमीषदम्लकटुयुक्तं देयमम्लं निम्बूफलादिकरम्भइष्टकाकृसरघृतपूरकाश्च करम्भो- दधि सक्तु इष्टकाः कासारखण्डाः।

"ओदनस्तिलमिश्रस्तु कृसरः परिकीर्त्यते। तिलकल्कान्विनिक्षिप्य श्रितो वा कृसरो भवेत्"॥

बीजपूरो मध्यमः। कालशाकोऽतिप्रशस्तः। आढकी विहितप्रतिषिद्धेत्यन्ये। अयोग्यत्वे हेतुगर्भं विशेषणमाह। **स्मृत्यन्तरप्रतिषिद्धस्येति**। तदेवाह। **कोद्रवेत्यादिपायसादिरित्यन्तेन**।

"कोद्रवान् राजमाषांश्च कुलत्थान् वरकांस्तथा। निष्पावांश्च विशेषेण पंचैतांस्तु विवर्जयेत्॥

"यावनालानपि तथा वर्जयन्ति विपश्चितः" इति। 'वरका वनमुद्गा' इति **माधवः**। निष्पावोऽत्र कृष्णनिष्पावः। "निष्पावाश्चात्र शोभनाः" इति **मार्कण्डेयं** तु कृष्णान्यनिष्पावपरम्।

"कृष्णधान्यानि सर्वाणि वर्जयेच्छ्राद्धकर्मणि"। इति वचनान्तरा दिति **माधवः**। **देवलः**।

"कण्डूरं श्वेतवृन्ताकं कुंभाण्डं च विवर्जयेत्" इति। "वृन्ताकनालिकापोतकुसुमाश्मंतकाश्चेति" **पैठीनसिस्मृतौ** वृंताकेत्यपि श्वेतवृन्ताकपरमिति **माधवः**। **भविष्यपुराणे**।

"लशुनं गृञ्जनं चैव पलाण्डुं कवकानि च। वृन्ताकनालिकालाबुजातीयाजातियामिति"॥

श्वेतकन्दः पलाण्डुविशेषो गृञ्जनम्।

"लशुनं दीर्घपत्रश्च पिच्छगन्धो महौषधम्। फरण्यश्च पलाण्डुश्च लतार्कश्च पराक्रिका॥

"गृञ्जनं पनवेष्टश्च पलाण्डोर्दश जातयः" इति **सुश्रुतोक्त**रिति श्राद्धप्रकरणे **माधवः**। प्रायश्चित्तप्रकरणे तु गृञ्जनं पत्रविशेषः। यदीयं चूर्णं गायकाः कण्टशुद्धयर्थं भक्षयन्ति विटाश्च मदार्थं मूलविशेषो वा गाजरापरपर्याय इति द्वेधा तेनैव व्याख्यातम्।

"गन्धाकृतिरसैस्तुल्यो गृञ्जनस्तु पलाण्डुना। सूक्ष्मनालाग्रपत्रत्वाद्भिद्यतेऽसौ पलाण्डुतः"॥ इति

**वाग्भट्टटीकायां हेमाद्रौ**। बाप्पचन्द्रवचनमेव विनिगमकं त्विह परिभावनीयम्। **हारीतः** "न वटप्लक्षोदुम्बरदधित्थनीपमातुलिङ्गानि भक्षयेदिति"। दधित्थः कपित्थः। "अथ कपित्थे स्युर्दधित्थग्राहिमन्मथाः" **इत्यमरः** (२।४।२१)। **माहिषेति** आरण्येत्यादिः। **आदिना** यावनालरक्तमाषसत्वगाढकीमुद्गमाषतिलान्यकृष्णधान्यपालकीतुलशीशिग्रुशणमहासर्षपपत्रशाककृष्णसर्षपपूरितगन्धशाकपटोलिकालाबुगान्धारमर्कटिकापिण्डमूलबिल्वमूलकाञ्चनकापित्थकरञ्जकरवन्दकालिङ्गसर्वकृष्णकेशपुष्पीपरिग्रहः। **मर्कटको** मर्करेति प्रसिद्धः। तैलतकादिविहितप्रतिषिद्धं जम्बूफलमपि। तथा द्विःपक्वपिण्याकतन्दुलीयकादिनिषेधो **ब्रह्माण्डे**।

"आसनारूढमन्नाद्यं पादोपहतमेव च। अमेध्यैर्जन्तुभिः स्पृष्टं शुक्तं पर्युषितं च यत्॥

"द्विः स्विन्नं परिदग्धं च पिण्याकांग्रावलेहिते। शर्कराकेशपाषाणैः कीटैर्यच्चाप्युपद्रुतम्॥

"पिण्याकं मथितं चैव तथाऽतिलवणं च यत्। सिद्धाः कृताश्च ये भक्ष्याः प्रत्यक्षलवणीकृताः॥
"वाग्भावदुष्टाश्च तथा दुष्टैश्चोपहतास्तथा। वाससा चावधूता ये वर्ज्यास्ते श्राद्धकर्मणि"॥ इति।

अमेध्यैः श्वादिभिः शुक्तं कालपरिवासद्रव्यान्तरसंसर्गाभ्यामनम्लमप्यम्लतां यातं पायसादि पर्युषितं रात्र्यन्तरितं द्विःपक्वं तत्र यस्य प्रथमपाकेन भक्षणयोग्यतैव न भवति तत् द्विःपक्वं न दोषायेत्याहुः। पिण्याकं तैलिकयन्त्रभ्रमणवशात् घनीभूतं तिलकल्कं मथितं जलसंबन्धं विनाऽऽलोडितम्। दधिसिद्धा आमलकादयः कृतावटकादयः। ते वस्त्वन्तराच्छादितप्रत्यक्षलवणेन न भोक्तव्या इत्यर्थः केचित्तु

"वर्ज्यान्यथापदि प्राज्ञाः संप्रयच्छन्ति याज्ञिकाः" इति वचनात्

"इङ्गुदैर्बदरैर्बिल्वैरामस्तर्पयते पितॄन्। यदन्नः पुरुषो लोके तदन्नास्तस्य देवताः" ॥ इति **रामायणा**च्चावर्ज्यवस्त्वभावे वर्ज्यैरपि श्राद्धं कुर्यादेव तस्य नित्यत्वादित्याहुः।

हेत्वभावे तत एव तदभावे सिद्धे विशेषणवैयर्थ्यादाह । **क्रोधेति** । आ तृप्तेरित्यस्य तथा पठितस्य मध्यमणिन्यायेनान्वय इत्याह । **आ तृप्तेरिति** । वैयर्थ्यं परिहरति । **तु शब्दादिति** । समुच्चयार्थकादित्यर्थः । तथा चाऽभिव्याप्ताविति भावः । अत **एवाश्वलायनः** ( ४।८।८-९ )। "अन्नमभे सृष्टं दत्तमृध्नुकमिति" । **शौनको**ऽप्येवं सृष्टं प्रभूतं दत्तमृध्नुकमृद्धिकरणशीलमिति **तद्वृत्तिः** ।

"भोजनस्य तु पर्याप्तं किंचिद्देयं ततोऽधिकम्" इति **तद्गृह्यपरिशिष्ट**मपि । **दायेति** । तस्य तत एव तृप्तेरिति भावः । **तथेति** मूलस्थं 'तत एवाह । आतृप्तेरिति' शेषमाह । **तृप्तानिति** । जपं चेत्यस्य कुर्यादिति शेषस्तदर्थमाह । **सव्येति** । व्याहृतिसहितगायत्रीं 'मधुवाता' इति तृचं 'मध्विति' त्रिकं चेत्यर्थः । अत्रान्यपाठोऽपि । तदुक्तं **तत्कारिकायाम्** ।

"भुञ्जानान् श्रावयेद्विप्रान् राक्षोघ्नीः पितृलिङ्गकाः। पुराणानि पवित्राणि ऋषिगीतां पितृस्तुतिम्"॥ इति । राक्षोघ्नीः 'कृणुष्वपाज' इत्यादयः । पितृलिङ्गकाः 'उदीरतामवर' इत्याद्याः ।

"अग्निमीळे' जपेत्सूक्तं पापघ्नं श्रीकरं भवेत्। पारायणफलं तस्य वेदानां चैव सर्वशः" ॥ इति

**ऋग्विधाने** ।

"ब्रह्मोद्याश्च कथाः कुर्युः पितॄणामेतदीक्षितम्" इति **मनुः** (३।२३१) । **ब्राह्मे**

"वीणावंशध्वनांश्चैव विप्रेभ्यः श्रावयेत्सदा" । इति **मात्स्ये** । "अभावे सर्वमन्त्राणां गायत्रीजपमाचरेत्" । इति । अयं जपः सव्येन ।

"अपसव्येन कर्तव्यं सर्वं श्राद्धं यथाविधि । सूक्तस्तोत्रजपं मुक्त्वा विप्राणां च विसर्जनम्" ॥ इति **जमदग्न्युक्तेः** । अत्र विप्रभोजनकाले कर्तृभोक्तृनियमा अन्यतो बोध्याः । तत उक्तवचनैर्भोजने भुक्तशेषं त्यजेयुः ।

"भोजनं तु न निःशेषं कुर्यात्प्राज्ञः कथंचन । अन्यत्र दध्नः क्षीराद्वा घृतात्सक्तुभ्य एव च" ॥ इति । **पुलस्त्योऽपि ।**

"यच्च शिष्टं भाजने तु तदश्नन्त्यतिहर्षिताः । दासा मृतस्य ये दीनास्तस्मात्तत्परिशेषयेत्" ॥ **इत्यभियुक्ताश्च** ॥ २४० ॥

## याज्ञवल्कीये २४१ श्लोकः

ततः कृत्यमाह । **अन्नमिति** । तदाह । **अनन्तरमिति** । सर्वं भुक्तशेषं यावत् । अनुमेत्यस्यार्थोऽ**भ्युपेति** ।तद्व्याख्या **अनुज्ञां प्राप्येति** । 'अभ्युपेत्यस्यार्थः । **मनुरपि**। (अ.३श्लो.२५३)।

"ततो भुक्तवतां तेषामन्नशेषं निवेदयेत् । यथा ब्रूयुस्तथा कुर्यादनुज्ञातस्तु तैर्द्विजः" ॥ इति ।

यथा ब्रूयुरित्यनेनान्यथावचने तथैव कार्यमिति सूचितम् । तच्च **आश्वलायनसूत्रे**[1] स्पष्टम् । **तदिति** । यदनुज्ञातं तदन्तर्गतं किंचिद्भक्तमित्यर्थः । अयं क्रमः शाखान्तरविषयः । **आश्वलायनानां**-**तेन** पिण्डदानान्ते "प्रकीर्यान्नमिति" विकिरस्य विहितत्वात् । तत्रानाचान्तेषु पिण्डदानपक्षे आचमनोत्तरकालमुच्छिष्टसमीपे विकिरदानम् । आचान्तेष्विति पक्षे पिण्डदानोत्तरमुच्छिष्टसमीपे इति **वृत्तिः** । "समुत्सृजेद्भुक्तवतामग्रतः प्रकिरेद्भुवे" इति **मनुः** ( ३।२४४ ) । तच्च दर्भास्तृतायाम् ।

"असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम् । उच्छिष्टभागधेयानां दर्भेषु विकिरासनम्" ॥

इति **विष्णोः** । भूमावेवेत्यन्ये । तत्र'असोमपाश्चेति' विश्वेदेवसमीपे तत् ।

"येऽग्निदग्धाः कुले जाता येऽप्यदग्धाः कुले मम । भूमौ दत्तेन तृप्यन्तु तृप्ता यांतु परां गतिम्"॥

इत्यनेन पितृमुख्यब्राह्मणसंनिधावि**त्यभियुक्ताः** । **गण्डूषार्थमिति** । तत्र **विष्णुः** । "उदङ्मुखेषु आचमनमादौ दत्वा ततः प्राङ्मुखेषु दद्यादिति" । **मरीचिः** ।

"हस्तं प्रक्षाल्य गण्डूषं यः पिबेदविचक्षणः । आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते" ॥ इति । गण्डूषग्रहणाय हस्तशोधनं न कार्यमिति भावः । तत्प्रकारस्तु

"अर्धं पिबति गण्डूषमर्धं त्यजति भूमिषु । प्रीणन्ति पितरः सर्वे ये चान्ये भूमिदेवताः" ॥ इति । तत्प्राशने 'अमृतापिधानमसीति' मन्त्रस्तत्त्यागे च

"रौरवेऽपुण्यनिलये पद्मार्बुदनिवासिनाम् । अर्थिनामुदकं दत्तमक्षय्यमुपतिष्ठतु" ॥ इति मन्त्रः । ततो हस्तप्रक्षालनादि । तच्च न पीठादुत्थाय । तथाकरणे तु

"स्नात्वा शुचिर्भवेच्छ्राद्धे श्राद्धहा स नराधमः" । इति "हस्तादीन्क्षालयेद्विद्वान् शरावादौ तु कुत्रचित्" ॥ इति च पाणिक्षालनादि च पवित्रग्रन्थिमुत्सृज्य कार्यम् ।

---

१ आ. गृ. सू. ( ४।८।१४ ) ।

"पवित्रग्रन्थिमुत्सृज्य मण्डले भुवि निक्षिपेत् । पात्रे वै निक्षिपेद्यस्तु स विप्रः पङ्क्तिदूषकः" ॥

इत्युक्तेः । **व्यासः**

"ताम्बूलोद्गिरणं चैव गण्डूषोद्गिरणं तथा । कांस्यपात्रे तथा ताम्रे न कुर्वीत कदाचन ॥

"दधिक्षीरघृतैर्भुक्त्वा प्राक्तैर्व्यञ्जनैस्तथा । उष्णोदकैर्धान्यचूर्णैः करैः श्मश्रूणि शोधयेत्" ॥ इति । **मरीचिः** ।

"आचम्य च ततः कार्यं दन्तकाष्ठस्य भक्षणम् । भोजने दन्तलग्नानि निर्हृत्याचमनं चरेत्" ॥ इति । गण्डूषसंख्यायाम**भियुक्ताः** ।

"चतुरष्टद्विषट्काष्ठगण्डूषैः शुद्ध्यते क्रमात् । मूत्रे पुरीषे भुज्यन्ते रेतः प्रस्रवणेषु च" ॥ इति ॥२४१॥

## याज्ञवल्कीये २४२ श्लोकः

ततः कर्तव्यमाह । **सर्वमन्नमिति** । सर्वप्रकारमन्नमित्यर्थः । न्यूनतां पूरयन् तदाह । **पिण्डेति** । पिण्डपितृयज्ञेन व्यतिषंगपक्ष इत्यर्थः । **सन्निधाविति** । अतिप्रणीतसमीपे तत्रैवस्तीर्णबर्हिषीत्यर्थः । अन्येषां निरग्न्यादीनामाह । **तदभावे इति** । **उच्छिष्टेति** । तत्रोच्छिष्टादरत्नित्रयाद्दूरे **इत्यत्रिः** । आसन्नादित्य**न्ये** । हस्तमात्रदूरे इति **केचित्** । अरत्निमात्रोत्सर्ग इति **व्यासः** । सर्वथोच्छिष्टस्याति-समीपं न कार्यम् ।

तुर्यपादं व्याचष्टे । **पिण्डेति** । तत्प्रकारस्त्वित्थम् । पिण्डदानार्थं तावद्वेदी चतुरस्रा कार्या ।

"ततो दक्षिणपूर्वस्यां कार्या वेदिस्तथा दिशि । हस्तमात्रा तथा भूमेश्चतुरङ्गुलमुच्छ्रिता ॥

"पिण्डनिर्वपणार्थाय रमणीया विशेषतः" । इत्युक्तेः ।

"मण्डलं चतुरस्रं वा दक्षिणावर्तकं महत् । एकदर्भेण तन्मध्ये उल्लिखेत्त्रिश्च तं त्यजेत्" ॥

इति **देवलाच्च** । **ब्रह्माण्डे** ।

"दक्षिणोत्तराभ्यां हस्ताभ्यां कुर्यादुल्लिखनं बुधः । वज्रेणाथ कुशैर्वाऽपि उल्लिखेत्तु महीं द्विजः" ॥ इति ।

**आपस्तम्बः** "सकृदाच्छिन्ने बर्हिषि दक्षिणापवर्गान् पिण्डान्दद्यात्येतत्तेतत्तासौ ये च त्वामन्वित्येतैः प्रतिमन्त्रं तूष्णीं चतुर्थमित्यादि असाविति संबुध्यन्त पित्रादिनामोपलक्षणामिति" ।

"कराभ्यामुल्लिखेत् स्फ्येन कुशैर्वापि महीं द्विजः । तूष्णीमभ्युक्ष्यतां रेखां तस्यां बर्हिः स्तृणात्यथ" ॥ इति **तत्कारिका** ।

"सकृदेवास्तरे दर्भान् पिण्डार्थं दक्षिणामुखः । प्राग्दक्षिणाग्रान्नियतो विधिस्तस्यात्र वक्ष्यते" ॥ इति **वायवीयं च** । कुशाभावे काशा अतिदीर्घदूर्वा वा । तदुक्तं **चन्द्रिकायाम्** ।

"पिण्डनिर्वपणं कार्यं कुशाभावे विचक्षणैः । काशेषु राजदूर्वासु पवित्रे परमाद्भुते" ॥ इति ।

सैव राजदूर्वा "अम्भोनिनयनाद्यन्तं पितृयज्ञं समापयेत्" । इति **कारिका** । "सुप्रोक्षितमिति मन्त्रेण श्राद्धदेशं प्रोक्ष्य पिण्डदानं समारभेदिति" **विष्णुः** । तत्र पिण्डमर्दनं स्वयं कुर्यात्पत्नीवेति **वायवीयं** तत्र पार्वणे आर्द्रामलकोपमाः बिल्वोपमा वा पिण्डा 'एकोद्दिष्टे बिल्ववत्खर्जूरवद्वा' बदरोपमाः सर्वत्रेत्यन्ये सपिण्डीकरणे द्वादशाङ्गुलदीर्घं एकोद्दिष्टपिण्डवत्स्थूलः । नवश्राद्धे एकोद्दिष्टादधिकस्थूलः । दशगात्रेषु ततोऽपि स्थूलतर **इत्यभियुक्ताः** । ततः प्राचीनावीती "शुन्धंतां पितर" इत्यादिना प्रोक्ष्य वस्त्रादीन् शुक्लाम्बरादिधरान्स्वाभिमुखान्ध्यात्वा पिण्डान्दद्यात् ।

"महालये गयाश्राद्धे प्रेतश्राद्धे दशाहिके । पिण्डशब्दप्रयोगः स्यादन्नमन्यत्र कीर्तयेत्" ॥ इति ।

**स्मृत्यन्तरे** । एतत्ते पिण्डान्नमिति **कल्पलतायामे**तत्सर्वमाचारविपरीतं पिण्डदानं चानुच्छ्वासं कार्यम् ।

"यावदेवोच्चरेन्मन्त्रं तावत्प्राणान्निरोधयेत्" । इति **स्मृतेः** । प्रमादादिना पिंडोपहतावत्रिः ।

"मार्जारमूषकस्पर्शे पिण्डे च द्विदले कृते । पुनः पिण्डः प्रदातव्यस्तेन पाकेन तत्क्षणात्" ॥ इति ।

**बौधायनोऽपि**

"श्वचाण्डालादिभिः स्पृष्टः पिण्डो यद्युपहन्यते । प्राजापत्यं चरित्वाऽथ पुनः पिण्डं समाचरेत्" ॥ इति ।

यत्तु विप्रभोजनात्प्रागपि पिण्डदानमुक्तं तदन्यविषयकम् । आपस्तम्बानां मासि श्राद्धे विप्रविसर्जनोत्तरं पिण्डदानस्य विहितत्वात् । **आश्वलायनगृह्येऽपि** । (४।८।१२।१३) "भुक्तवत्स्वनाचान्तेषु पिण्डान्निदध्यादाचान्तेष्वेके" इत्युक्तम् । भुक्तवत्स्वित्यनेन भोजनात्पूर्वं **मनू**क्तस्य पिण्डदानस्य निषेधः । अतो **मनू**क्तस्यान्यस्येच्छातः क्रियेति ध्वनयति । पक्षान्तरमाह चान्तेष्विति । अत्र किंचिदुच्यते । किं पिण्डपङ्क्त्यः प्रागुपक्रमाः पश्चादपवर्गाः किं वा पश्चादुपक्रमाः प्रागपवर्गा इति । अत्र केचित् "पूर्वभागे पितृवर्गार्थं संस्तरणं पश्चाद्भागे तु मातृवर्गार्थं तत्"**इत्यापस्तम्बगृह्य**वचनात्स्त्रीभ्यस्तु पिण्डा इह पश्चिमाः स्युरिति तद्भाष्यार्थसंग्राहकवचनाच्चायपक्ष एव युक्तः पिण्डात्पश्चिमेन तत्पत्नीनां किंचिदन्तर्द्धायेति" **शाङ्खायन**सूत्रमप्येवं सत्यनुगृहीतं भवतीत्याहुः ।

अन्ये तु प्रागुपक्रमपक्षे प्रदक्षिणोपचारः प्रसज्येत । न चैवमिष्टं । दैवं तूष्णीमप्रदक्षिणोपचार इति परिभाषाविरोधापत्तेः । किं च **बौधायनेन** ब्राह्मणोपवेशने पश्चिमोपक्रमत्वं कथयता पिण्डपङ्क्तीनामपि क्रमो ज्ञापित एव । अणुरपि विशेषोऽध्यवसायकर इति न्यायात् "प्रत्यगुपक्रमा प्रागपवर्गापित्र्यब्राह्मणसंख्या भवति दक्षिणदिगुपक्रमोत्तरदिगपवर्गा वैश्वदेवद्विजसंख्या भवतीति" हि तत्सूत्रमुक्तवचनानां तच्छाखाविषयतया न तद्विरोधः । यत्तु

"पूर्वभागस्थदर्भेषु पितृपिण्डान्विनिक्षिपेत् । पश्चात्तनेषु दर्भेषु मातृपिण्डान्विनिक्षिपेत्" ॥ इति

**वृद्धवसिष्ठः** । सोऽप्यापस्तम्बपरस्तस्माद्द्वितीय एव युक्त इत्याहुः ।

**अपरे तु** पिण्डवेदिकायां रेखात्रयं पिण्डदानं च किं दक्षिणोपक्रमकमुदक्संस्थं कार्यं किं वोदगुपक्रमकं दक्षिणसंस्थं वेत्यपि संशये उदक्संस्थतायां मानाभावात् "प्रदक्षिणमुपचार" इति सूत्रप्रमाणकं दक्षिणसंस्थत्वमेव न्याय्यम् । तथा च **कात्यायनः** ।

"द्वितीयं च तृतीयं च मध्यदेशाग्रदेशयोः । मातामहादिप्रभृतीनेतेषामेव वामतः" ॥ इति ।

एतेषां पित्रादीनां तथा च तेषां मुख्यत्वेन प्रश्नादौ संबोध्यत्वेन स्वसम्मुखत्वात्ततो दक्षिणभागस्थित्या स्वसम्मुखीकृतपित्रादिवामभागगतत्वं निर्वहति स्वदक्षिणभागस्यैव स्वसम्मुखस्थितवामभागत्वसंभवात् ।

यत्तु पिण्डानामवयवाभावात्पिण्डदातुरेव वामभागत्वादिकमाश्रयणीयमित्युक्तं केनचित्तदेतेषामेव वामत इत्येतन्मूलविरुद्धं कर्तुरेकत्वादेतेषामिति बहुवचनासंगतिग्रस्तं च । स्त्रीविषये **वृद्धयाज्ञवल्क्यः ।**

"जीवद्भर्तरि वामाङ्के मृते भर्तरि दक्षिणे" इति । **स्मृत्यन्तरे**

"श्राद्धे सदैव वामाङ्के पत्नीनामुदकं हरेत् । वृद्धिश्राद्धेषु नारीणां दक्षिणाङ्के सदा भवेत्" ॥ इति ।

तत्र वामाङ्के सदे**त्यापस्तम्ब**विषयम् । तेषां पित्रादिपिण्डपश्चिमत एव पत्नीपिण्डविधानात् । वृद्धिश्राद्धेषु नारीणामिति सर्वविषयम् । तस्माद्वृद्धिश्राद्धेषु रेखाकरणपिण्डदानादिकं प्राङ्मुखकर्तुर्दक्षिणसंस्थमेव सर्वत्र भवतीति सिद्धान्त इत्याहुः ।

**मम त्वत्र प्रतिभाति** पिण्डानां दक्षिणसंस्थत्वमेवार्घ्यपात्रासादनादिवत् । तत्र मूलं "दक्षिणापवर्गान्" **इत्यापस्तम्ब**सूत्रोक्त**कार्तीया**येव प्रदक्षिणमुपचार इति तु आभ्युदयिकप्रकरणस्थमिति नात्र तन्मूलं वामसंनिधानेन प्रचारादेवमपि अप्रदक्षिणं भवतीति अप्रदक्षिणमुपचार इत्यनेन विरोधः । एवं "प्रसव्येनोपवीति दक्षिणेन सव्योपगृहीतेन पितरिदं तेऽर्घ्यं पितामहेदं तेऽर्घ्यं प्रपितामहेदं तेऽर्घ्यमित्यप्पूर्वं ताः प्रतिपादयिष्यन्सकृत्सकृत्स्वधाऽर्घ्या इति विप्रसृष्टा अपोऽनुमन्त्रयीत । "या दिव्या आपः पृथिवी० शंस्योनाभवन्तु" (४।७।९–१३)**इत्याश्वलायनसूत्रे** पित्र्यं कर्म सर्वं प्रसव्येनाप्रादक्षिण्येन प्रकृत्यादित्वात्तृतीया । अत एव प्रदक्षिणमुपचार इत्याभ्युदयिके एतदपवादः अत एव "प्रागपवर्गा विप्रपङ्क्तिः" इत्युक्तमेवं ह्यप्रदक्षिणं भवति वामसंनिधानेन प्रचारादिति वृत्तिकारोक्त्या पितृपिण्डरेखातो मातामहादिपिण्डरेखापूर्वा एवोचिता प्रागुक्त**बौधायनो**ऽप्यत्रानुग्राहकः । एतेषामेवेति **कातीय**स्य तु एतेषां पित्रादिपिण्डानां समीपे स्ववामत एवेत्यर्थ इति न तद्विरोधः । एवं च यत्त्विति मताभिमतमेव युक्तं न त्वन्योक्तमेवं चाप्रदक्षिणमुपचारः संवृत्त इति न तद्विरोध इति प्रथमपक्ष एव युक्तः । परं तु मातृरेखा पश्चिमे अत **एवाश्वलायना**न्वष्टक्यसूत्रे (२।५।७–८) "पूर्वासु पितृभ्योऽपरासु स्त्रीभ्य" इत्युक्तम् । अपरासु पश्चिमदिक्स्थास्विति वृत्तिः । स्त्रीणां भर्तृवामपार्श्वेऽवस्थानौचित्यात् प्रागुक्त**आपस्तम्ब**वचनात् । उक्त**शाङ्खायन**सूत्रात् उक्तसंग्राहकवचनादुक्त**वृद्धवसिष्ठ**वचनाच्च **वृद्धयाज्ञवल्क्योक्तेः स्मृत्यन्तरोक्ते**च मूलेऽनाश्वासः । एवं च सर्वैकवाक्यता सिद्धा । अत्र स्त्रीभ्यः सामान्योक्त्या सर्वत्र पुरुषपिण्डदानोत्तरं तत्स्त्रीभ्य एवमेव समाप्तिस्तु पुरुषपिण्डेष्वेवेति तत्वं सिद्धम् । यत्र स्त्रिय एवोद्देश्यत्वं तद्भर्तॄणामङ्गत्वं तत्रापि तथैवेति न कोऽपि दोषः । एवं च यदिदानीमाश्वलायनादयः प्रत्यगपवर्गमेव पिण्डान्प्रयच्छन्ति तत्राचार एव मूलं पूर्वोक्तसूत्रादिस्थमातृक्रम एव सर्वेषामिति भ्रमो वा मूलमिति तत्वमिति । ततो **मनुः** । ( अ. ३ श्लो. २१६ ) ।

"न्युप्य पिण्डांस्ततस्तांस्तु प्रयतो विधिपूर्वकम् । तेषु दर्भेषु तं हस्तं निमृज्याल्लेपभागिनाम्" ॥ इति ।

दर्भेषु दर्भमूलेषु प्रपितामहात्परे लेपभाजः । तत्र हस्तमार्जने "अत्र पितरो मादयध्वम्" इति मन्त्रः

"अत्र पितरो मादयध्वमिति दर्भमूले करार्पणम्" इति **विष्णोः। सुमन्तुः** "प्रेतैकोद्दिष्टे न करावमार्जनम्। "एकोद्दिष्टेषु वर्षात्प्राग्लेपस्तु न विधीयते । सपिण्डीकरणादौ तु लेपः सर्वत्र शस्यते" इति । ततः कुशाग्रे लेपभागिनामयं भागोऽस्त्विति शिष्टमन्नं किंचिद्दद्यात् । "कुशाग्रे संप्रदातव्यं प्रीयन्तां लेपभागिनः" इति **वृद्धयोग्युक्तेः** । तत अत्र पितरो मादयध्वं यथाभागमावृषायध्वमिति पिण्डाननुमन्त्र्याप्रदक्षिणमावृत्त्योदङ्मुखो यथाशक्ति प्राणं नियम्य पुनस्तेनैव पार्श्वेन पर्यावृत्य 'अमीमदन्त पितर' इति मन्त्रेणानुमन्त्रयेत् । **मनुस्तु** इत्थम् । ( अ. ३ श्लो. २१७ )

"आचम्योदक्परावृत्य त्रिरायम्य शनैरसून् । षडप्यृतून्नमस्कुर्यात्पितॄनेव च मन्त्रतः"॥ इति ।

शनैरसून्निरुध्य सकृन्नमेदित्यर्थः । ततस्तत्**कारिका**

"चरुशेषमवघ्राय निनयेत्पूर्ववज्जलम्" । इति । अत्रावघ्राणोत्तरमाचम्य "शुन्धन्ताम्"इत्यादिमन्त्रैः पूर्ववज्जलदानं पिण्डेष्वित्यर्थः । अत्र **व्याघ्रः** ।

"अद्भिः प्रक्षाल्य तत्पात्रं प्रतिपिण्डं तु पूर्ववत् । कृत्वाऽवनेजनं कुर्यात्पिण्डपात्रमधोमुखम्" ॥इति ।

पिण्डपात्रप्रक्षालनोदकेनैव सेक इत्यर्थः । ततस्तत्**कारिका** ।

"अभ्यङ्क्ष्वेति वदन् दद्याद्दर्भैर्घृतमनुक्रमात् । यथा महादेवशर्मन्नभ्यङ्क्ष्वेति तथाऽञ्जनम् ॥

"अङ्क्ष्वेति च वदन्दद्याद्दर्भेण पितृतीर्थतः" इति । यद्यप्यन्यत्र स्मृतावञ्जनदानमादावुक्तं तथाप्याश्वलायनेन "अभ्यञ्जनाञ्जने वासो दद्यादिति" सूत्रेऽभ्यञ्जनमेवादावुक्तम् । ततः **कारिका**

"दद्याद्दशामथैतद्व इति पिण्डेष्वनन्तरम्" "एतद्वः पितरो वास" इति मन्त्रः । **शौनकः**

"दद्यात्पिण्डेषु वस्त्रान्तं सूत्रच्छेदमथाऽपि वा। ऊर्णासूत्रैकशकलं दर्भेण पितृतीर्थतः" ॥ इति ।

**पराशरः**

"पञ्चाशद्वार्षिको यस्तु दद्याल्लोम स्वकं शुभम्। तदवश्यं प्रदेयं स्याद्विधिसंपूर्णता कृते" ॥ इति।

लोम च प्रकोष्ठस्थम् । लोमदानेऽपि मन्त्रः स एव । दद्यात्क्रमेण वासांसीति वस्त्रदानं **ब्राह्मोक्तं** शाखान्तरविषयम् । **आश्वलायनेन** साक्षाद्दशामात्रस्यैव विधानात् । ततः

"दशां दत्वाऽथ पिण्डेषु गन्धपुष्पैः समर्चयेत् । धूपैर्दीपैश्च नैवेद्यैर्विधिसंपूर्णता कृते" ॥

**इत्यभियुक्ताः । देवलः ।**

"दक्षिणां सर्वभोगांश्च प्रतिपिण्डं प्रदापयेत्। भक्ष्यानपूपानिक्षूंश्च व्यञ्जनान्यशनानि च" ॥ इति।

**ततः ।**

"अप्रदक्षिणवद्भूमौ पिण्डानां परितो जलम् । दत्वा च विकिरेदन्नं तथाऽम्बु च पुनस्ततः ॥

"सर्वत्र विकिरं कुर्यान्मध्ये कशिपुबर्हिषोः" **इत्यभियुक्ताः** । ततः **कारिका** "नमो व इत्युपस्थाय 'मनोन्वेति' तृचेन च"। इति। उपस्थानं च कृताञ्जलिना नमो व इति सर्ववरहितमन्त्रपाठः इति **वृत्तिः** ।

ततः पिण्डाघ्राणं **कात्यायनः** । "अवधार्यावजिघ्रेत यजमान" इति । अवधार्य गृहीत्वा । **मनु**रपि (अ. ३ श्लो. २१८) । "अवजिघ्रेच्च तान्पिण्डान्यथा न्युप्तान्समाहितः" । इति प्रदानक्रमेणावजिघ्रेदित्यर्थः । ततः 'परेत' इति मन्त्रेण पिण्डांस्तान्वै प्रवाहेयत् इति। ततोऽग्निसमीपं गत्वा मन्त्रजपः । विप्रसमीपे पिण्डदानेनायं जपः ।

"ब्राह्मणानां समीपे तु पिण्डनिर्वापणं यदा । न कार्यमग्निं प्रत्येयादित्याद्यत्र तु कर्मणि" ॥ इति **कारिको**क्तेः । निरग्निविषये तु सुतरां लोपः ।

अथ **पिण्डप्रतिपत्तिः** । तत्र **वायवीयम्** । "पत्न्यै प्रजार्थी दद्यात्तु मध्यमं मन्त्रपूर्वकम्" इति मन्त्रो **मात्स्ये** ।

"आधत्त पितरो गर्भं मन्त्रः सन्तानवर्धनम्" इति। तत्प्रकारः **कारिकायां** "'वीरं मे दत्त' मन्त्रेण पिण्डमादाय मध्यमम् । पिण्डं तं प्राशयेत्पत्नीमाधत्तेत्यादिमन्त्रतः" ॥ तेन गृहीत्वा तेन तां प्राशयेत्पत्न्येव मन्त्रं ब्रूयादिति **वृत्तिः** । षट्प्रयोगे द्वयोर्मध्यमयोस्तदित्य**भियुक्ताः** । तत्फलमाह **मनुः** (अ.३श्लो.२६३)।"आयुष्मन्तं सुतं सूते यशोमेधासमन्वितम्" इति। अनेकपत्न्यां तु प्राचीनावीतिना पिण्डं विभज्य प्रतिपत्ति मन्त्रमावर्त्य यथासंख्यं भागान्कृत्वा क्रमेणैकैकां प्राशयेत् । **छागलेयः** ।

"अक्षता गुर्विणी वन्ध्या गतरक्ता रजस्वला। नाश्नीयान्मध्यमं पिण्डं जारिणी च प्रसूतिका"॥

अक्षताऽजातरजस्का एवं व्याधिताऽननुकूलाऽपि न प्राश्नीयात् । तथा

"अन्यदेशगता पत्नी गर्भिणी रोगिणी तथा। तदा तं जीर्णवृषभश्छागो वा भोक्तुमर्हति" ॥ इति। **बृहस्पतिः** ।

"ततः कर्मणि निर्वृत्ते तान्पिण्डांस्तदनन्तरम्। ब्राह्मणोऽग्निरजो गौर्वा भक्षयेदप्सु वा क्षिपेत्"॥इति।

एतच्च पुत्रार्थित्वाभावविषयकं मध्यमपिण्डेतरविषयकम् तादृशपत्नीविषयकं वा । तीर्थश्राद्धे तु अप्स्वेव पिण्डप्रक्षेपः । **तदुक्तम्** ।

"तीर्थश्राद्धे सदा पिण्डान् क्षिपेत्तीर्थे समाहितः। दक्षिणाभिमुखो भूत्वा पित्र्या दिक् सा प्रकीर्तिता" ॥इति।

**शौनकः** ।

"प्रक्षिपेदितरावप्सुप्रणीतो चोल्मुकेऽनले । अचिकित्स्यमहारोगग्रस्तो वा भक्षयेदिमौ ॥

"रोगान्मुक्तिर्मृतिर्वाऽस्य भवेदन्यतरा गतिः" इति **वायवीये** गोभ्यो दाने उत्तमा गतिः । अप्सु-कीर्तिमेधाप्रज्ञाः । वायसेभ्यो दाने दीर्घायुष्यमिति । इदमग्रे **मूले**ऽपि किंचिद्वक्ष्यति । ततः **पराशरः** "प्रक्षाल्य हस्तावाचम्य ततः प्रोक्षणमाचरेत्" । अत्राचमनाकरणे दोषं **मरीचिः** "पितरस्तस्य तन्मासं भवन्त्युच्छिष्टभोजनम्" इति । **मात्स्ये** "तथा चान्तेषु चाचम्य वारि दद्यात्पृथक् पृथक्" इति ।

---

अग्रे २५४ श्लोके ।

**पाद्मे** ।

"आचान्तेषूदकं दद्यात् पुष्पाणि सयवानि च । पित्र्येऽपि तिलयुक्तानि वारि चापि सकृत्सकृत्" ॥ इति । तानि दत्तानि विप्रास्त्यजेयुरिति । **चन्द्रिकायाम्** ।

"सुप्रोक्षितादिकर्तव्यमाचान्तेषूपवीतिना" । तत्राब्दाने 'शिवा आपः सन्त्विति' मन्त्रः । पुष्पदाने 'सौमनस्यमस्त्विति' 'अक्षय्यं पुण्यादि मेऽस्तु' इत्यक्षतदाने इत्यभियुक्ताः । ततो **देवलः** "ततोऽभिवाद्य प्रयतो वरान्याचेत तान्पितॄन्" इति ।

"अघोराःपितरः सन्तु सन्त्वि'त्युक्ते पुनर्द्विजैः । गोत्रं तथा वर्द्धतां नो तथेत्युक्तश्च तैः पुनः ॥

"एताः सत्याशिषः सन्तु सन्त्वित्युक्ते च तैः पुनः । आशीः पूर्वं द्विजैर्दत्ता मूर्ध्ना धार्या ततोऽक्षता" ॥ इति । ततो **वृद्धयोगी** ।

"ततश्च तिलकं कुर्यान्मन्त्रेणानेन भक्तितः । नित्यानुष्ठानसंनिष्ठाः सर्वदा यज्ञबुद्धयः ॥

"पितृमातृपराः सन्तः सन्त्वस्मत्कुलजा नराः" । इति । तत उच्छिष्टपात्रचालनं **जातूकर्ण्यः** ।

"पात्राणि चालयेत् श्राद्धे स्वयं शिष्योऽथवा सुतः । न स्त्रियो न च बालाश्च नासजात्याः कदाचन" ॥ पात्राणि चालयित्वा क्वचिद्देशे स्थापयेत् । उच्छिष्टमा अस्तमयान्नैव मार्जयेत् ।

"श्राद्धे नोद्वासनीयानि उच्छिष्टान्या दिनक्षयात् । श्च्योतन्ते मधुधारायास्ताः पिबन्त्यकृतोदकाः" ॥ इति **वृद्धवासिष्ठात्** । येषां मृतानामुदकं न कृतं ते तथोक्ताः ।

"भृत्यवर्गावृतो भुङ्क्ते कव्यशेषं स्वगोत्रजैः । आसायं श्राद्धशालायां द्विजोच्छिष्टं न मार्जयेत्" ॥ इति **प्रचेतसश्च** । इदं च गृहान्तरसंभवविषयमेकगृहे तु विप्रविसर्जनानन्तरं परिमार्जनं कार्यमिति **मनुः** ( अ. ३ श्लो. २६५ ) ।

"उच्छेषणं ततस्तिष्ठेद्यावद्विप्रान्विसर्जयेत्" । इति । भुक्तवत्सु विप्रेषु यत्पात्रस्थमन्नं पतितं तत्तस्माद्देशान्नापकष्टव्यं यावद्विप्रनिर्गमं गतेषु तेषु मार्ष्टव्यमिति भावः । अत एव वक्ष्यमाणमूलमपि । **सत्स्विति** । सत्सु विद्यमानेषु अविसृष्टेष्विति यावत् । सपिण्डीकरणविषयममार्जनमित्यन्ये ॥ २४२ ॥

## याज्ञवल्कीये २४३ श्लोकः

अतिदेशमाह । **मातेति** । ततः पूर्वतनस्य पूर्वमतिदिष्टत्वादाह । **विश्वेदेवेति** । इदं मातामहश्राद्धं पुत्रिकापुत्रस्यापुत्रमातामहदौहित्रस्य चावश्यकम् । अयमेव च **धौम्यस्य** विषयः । एवं च दौहित्रमात्रस्य तदनावश्यकत्वे मघात्रयोदश्यां तदावश्यकत्वविधायकं श्राद्धं नैवेकवर्गस्य त्रयोदश्यामुपक्रमेदिति । वचनं **धौम्य**वचसि आश्वासाभावेऽपि तयोर्येषां सूत्रे उक्तं तेषां चावश्यकम् । यद्वा आचारान्मूलोक्तेश्च सर्वेषां तत्तथाऽप्यालस्यादिनाऽकरणवारणार्थं श्राद्धं नैवेति । **आश्वलायनानां** तु सूत्रानुक्तत्वात्तदनावश्यकमेव[1] अत एव **वृत्तिकारो** न त्वेवैकमिति-**मनू**क्तनिषेधेन देवस्य **मनू**क्तस्याभ्यनुज्ञानमुक्तवान्न तु स्मृत्यन्तरोक्तमातामहानामपि अस्मद्गृह्येतिकर्तव्यतामात्रमेव कार्यं न शास्त्रान्तरं दृष्ट्वा विस्तारः कार्यः । "बह्वल्पं वा स्वगृह्योक्तमिति" वचनादिति चाह ततः कृत्यमाह । **अनन्तरमिति** । तत इत्यस्यायमर्थः । एवमग्रे प्रागपि तदाकारमाह । **स्वस्तीतीति** । वाच्यमित्यत्र ण्यन्तात्प्रत्यय इत्याह । **वाचेति** । अक्षय्येति विभक्तिं विहायानुकरणमभेदविवक्षा चेत्याह । **अक्षय्यमिति** । दद्यादित्यनुषङ्गेणाह । **दानमिति** । **बृहस्पतिः** ।

---

१ मेव तेषां ।

"अक्षालयित्वा तत्पात्रं स्वस्ति कुर्वन्ति ये द्विजाः। निराशाः पितरस्तस्य दृष्ट्वा यान्ति यथागतम्"॥ तत्प्रकारान्तरम्। **पारस्करः।**

"स्वस्तीति भगवन्ब्रूहीत्युक्त्वा दद्यात्तिलोदकम्। देवपाणौ तथा पित्र्ये सव्येनैव तिलोदकम्"॥इति।

कर्ता उदकं दत्वा स्वस्तीति भगवन्ब्रूहीति ब्रूयात्। विप्रेण देवेभ्यः स्वस्तीति वाच्यम्। एवं पित्र्यविप्रहस्तेऽपो दत्वा गोत्रेभ्यः शर्मभ्यः पितृभ्यः स्वस्तीति भगवन्तो ब्रूतेति कर्ता। पितृभ्यः स्वस्तीति विप्रा वदेयुः। "देवपूर्वं जलं दद्यादक्षय्यं श्राद्धस्त्विति। अस्त्वक्षय्यमिति ब्रूयुर्ब्राह्मणास्ते समाहिताः"॥ इति **स्मृति**रिदमपि नामगोत्रपूर्वकमेव ॥ २४३ ॥

## याज्ञवल्कीये २४४ श्लोकः

ततः कृत्यमाह। **दत्वेति।** तदाह। **अनन्तरमिति।** दक्षिणायां विशेषमाह **पारस्करः।** "हिरण्यं विश्वेभ्यो देवेभ्यो रजतं पितृभ्य" इति। "दद्याद्यज्ञोपवीत्येव ताम्बूलं दक्षिणां तथा"। ताम्बूलदानं श्रीलाभफलं पितॄणां तृप्तिकरं च। "सतिलं नामगोत्रेण रजतं दक्षिणा ततः" इति **जमदग्निः** 'देवेभ्यो हिरण्यं यथाशक्तीति' **शौनकोऽपि।**

"दक्षिणाहीनकर्माणि निष्फलानि भवन्ति हि। तस्माद्यत्नेन दातव्या दक्षिणा च स्वशक्तितः"॥इति।

**पाद्मेऽपि।**

"हतमश्रोत्रियं श्राद्धं हतो यज्ञस्त्वदक्षिणः। तस्मात्पणं काकिणीं वा फलं पुष्पमथाऽपि वा॥

"प्रदद्याद्दक्षिणां श्राद्धे तथा तु सफलं भवेत्"। इति। तदाह। **यथेति। पारस्करः।**

"एकपङ्क्त्युपविष्टानां विप्राणां श्राद्धकर्मणि। भक्ष्यं भोज्यं समं देयं दक्षिणा त्वनुसारतः"॥ इति।

निमन्त्रितविप्राणां विद्यादिगुणतारतम्येनेत्यर्थः। पित्र्ये दक्षिणादानं च प्राचीनावीतिना कार्यम्। तथा च **जमदग्निः।** "अपसव्यं तु तत्रापीति"। तत्रापि दक्षिणादानेऽपि यत्तु "अपसव्यं कर्म सर्वं दक्षिणादानवर्जितम्"। इति तद्ब्राह्मणोद्देशेन दक्षिणादानविषयकम्। स च पक्षो **देवलेन** दर्शितः "आचान्तेभ्यो द्विजेभ्यस्तु प्रदद्यादथ दक्षिणाम्"। इति। तत्र क्रमं **स** एवाह "दक्षिणां पितृविप्रेभ्यो दद्यात्पूर्वं ततो द्वयोः" इति। द्वयोः द्वाभ्यां देवविप्राभ्यामस्मिन्नेवावसरे विप्राणामात्मनः पित्रादेश्च यद्यदिष्टं तद्यथाशक्ति देयमन्यान्यपि गोतिलपात्रालङ्कारभूमिछत्रोपानच्चामराङ्गुलीयककटककेयूरदण्डकमण्डलुव्यजनशय्यातदुपकरणादीनि देयानीति बोध्यम् ॥ २४४ ॥

## याज्ञवल्कीये २४५ श्लोकः

ततः कृत्यमाह। **ब्रूयुरिति।** तदाह। **ते चेति।** तत इत्यस्यार्थः। **अनन्तरमिति।** विश्वेदेवाश्चेति च फलमाह। **चकारादिति** ॥ २४५ ॥

## याज्ञवल्कीये २४६ श्लोकः

**एवञ्चेति** समुदायः समुच्चये इत्याह। **सन्ततिश्चेति।** अस्य पूर्वत्रान्वय इत्याह। **इतीति।** **स्मृत्यन्तरे।**

"अन्नं च नो बहु भवेदतिथींश्च लभेमहि । याचितारश्च नः सन्तु मा च याचिष्म कंच न" ॥ इत्यधिकं ते च तथाऽस्त्वित्यनुमोदयेयुरित्य**भियुक्ताः** ॥ २४६ ॥

## याज्ञवल्कीये २४७ श्लोकः

ततः कृत्यमाह । **इत्युक्त्वोक्त्वेति** । इतीत्यस्यार्थः **एवमिति** । जपेदित्यनुरोधेनाद्योक्त्वेत्यस्यार्थमाह । **जप्त्वेति** । तत्स्वरूपमाह । **धन्या इति** । **प्रणीति** । परिजनैः सह कृताञ्जलिरितिशेषः । ते च तेषु अक्षतान्क्षिप्त्वाऽऽशिषो दद्युरिति **शौनकः** । **इत्याह** । इत्याशङ्कामाह । पितृपूर्वकमित्यस्यादौ पित्रादीनां ततस्तयोरिति नार्थः किन्तु व्युत्क्रमेणेत्यर्थ इत्याह । **प्रपितामहादीति** । **दर्भान्वारम्भणे** विशेषः पितृषु मूलतो देवेष्वग्रत इति । इदं शाखान्तरविषय**माश्वलायनसूत्रे** ( ४।८।१४–१५ ) "उपवीयों स्वधेति विसृजेयुरस्तु स्वधेति वे"त्युक्तेः । उपवीय यज्ञोपवीतं कृत्वा ॐ स्वधेति अस्तु स्वधेति वा विसृजेत् । तेऽपि तदेव प्रत्यूचुरिति **वृत्तिः** । एवं पितॄन्विसृज्य ततः **शौनकः** ।

"विश्वेदेवा इति पुनः प्रोच्चार्य तदनन्तरम् । प्रीयन्तामिति निर्दिश्य तौ विप्रौ विसृजेदिति ॥

"तथोक्त्वा तेऽपि गच्छेयुरालयादनपेक्षकाः" ॥ इति । अत्र मूले वरयाचनं सुरप्रीतिसंप्रश्नोत्तरमुक्तं प्रश्चात्प्रागिति तु **प्रचेताः** । स्वस्तिवाक्योत्तरमिति **पारस्करः**

"विसर्जितेषु विप्रेषु बहिर्ष्टेष्विति" । **मनुः** ( अ. ३ श्लो. २५८ )

"विसृज्य ब्राह्मणांस्तांस्तु नियतो वाग्यतः शुचिः । दक्षिणां दिशमाकाङ्क्षन्याचेतेमान्वरान् पितॄन्"॥

"दातारो नोऽभीति" तदुक्तेः । एषां पक्षाणां स्वस्वगृह्यानुसारेण व्यवस्था । **आश्वलायनानां** तु **मनू**क्तकालादरः । **वृत्तिकृ**दप्येवमेव ।

"न गृह्यादिस्मृतिर्येषां श्राद्धादावुपलभ्यते । कर्तुमिच्छन्ति ते कृत्स्नं यस्य कस्य मुनेर्मतम्" ॥ **इत्यभियुक्ताः** ॥ २४७ ॥

## याज्ञवल्कीये २४८ श्लोकः

ननु विसर्जनस्य पूर्वमुक्तत्वात्पुनरिदं कृत्वा विप्रविसर्जनोक्तिरसंबद्धाऽत आह । **एतच्चेति** । पूर्वशेषत्वमेवास्येत्याह । **आशीर्मन्त्रेति** । **जपादूर्ध्वमित्य**नेन प्रियवाक्कथनप्रणिपातोत्तरमिदं ततः पूर्वं वेति सूचितम् । तथा च यद्विप्रान् विसर्जयेदिति तदिदं कृत्वेति मूलार्थो बोध्यः । **पराशरोऽपि** ।

"न्युब्जीकृतार्घ्यपात्रं तु कृत्वोत्तानं च संस्रवान् । कृत्वा पिण्डेष्वतो विप्रान् पितृपूर्वं विसर्जयेत्" ॥इति संस्रवाणां पिण्डेषु दानं तृतीयपात्रेणाच्छादनपक्षे ॥ २४८ ॥

## याज्ञवल्कीये २४९ श्लोकः

ततः कृत्यमाह । **प्रदक्षिणमिति** । क्रियाविशेषणमिदम् । व्युत्क्रमेणान्वय इत्याह । **अनन्तरमिति** ।

ब्राह्मे ।

"पृषदाज्यं समादाय विप्रपादान्प्रसेचयेत् । गन्धोदकादिभिः क्षाल्य प्रणिपत्य प्रसादयेत्" ॥ इति । क्षाल्येत्यार्षम् । **बृहस्पतिः**

"अद्य मे सफलं जन्म भवत्पादादिवन्दनात् । अद्य मे वंशजाः सर्वे याता वोऽनुग्रहाद्दिवम् ॥ "पत्रशाकादिदानेन क्लेशिता यूयमीदृशाः । तत्क्लेशजातं चित्तात्तु विस्मृत्य क्षन्तुमर्हथ" ॥ इति । ततः

"मन्त्रहीनं क्रियाहीनं भक्तिहीनं द्विजोत्तमाः । श्राद्धं संपूर्णतां यातु प्रसादाद्भवतां मम" ॥ इति प्रार्थयेत् । तेऽपि सर्वं 'संपूर्णमस्त्विति' ब्रूयुः ।

**वसिष्ठः** । "श्राद्धावसाने कर्तव्या द्विजैरत्र गुणस्तुतिः" ॥ इति । **वृद्धयोगी**

"बहिः प्रदक्षिणं कुर्यात्पदान्यष्टावनुव्रजेत् । बन्धुवर्गेण सहितः पुत्रभार्यासमन्वितः" ॥ इति । तत उच्छेषणमार्जनं **मनुः** ( अ. ३ श्लो. २६५ ) ।

"उच्छेषणं तु तत्तिष्ठेद्यावद्विप्रा विसर्जिताः" ।इति गच्छेयुरिति शेषः ।

मार्जितोच्छिष्टप्रतिपत्तिं **प्रचेताः** ।

"खनित्वा निक्षिपेद्भूमावन्यथा स्पर्शसंभवात् । निषिद्धं स्पर्शनं तेषां तस्मात्खननमुत्तमम्" ॥ इति । सायं मार्जनेऽप्येवमेव । **ब्राह्मे तु** ।

"अस्तं याते ततः सूर्ये विप्रपात्राणि चाम्भसि । निक्षिपेत्प्रयतो भूत्वा सर्वाण्यधोमुखान्यपि ॥ "द्वितीयेऽहनि पात्राणां सर्वेषां चालनं तथा । अनन्ता जायते तृप्तिः पितॄणां चैव सर्वदा" ॥ इति उक्तम् ।

**ततो वैश्वदेवः** । स चोच्छिष्टमार्जनोत्तरम् । "ततो गृहबलिं कुर्यादिति" (३।२६५) **मनूक्तेः** । **ब्रह्माण्डे** तु

"वैश्वदेवाहुतीरग्नावर्वाक्ब्राह्मणभोजनात् । भूतयज्ञादिकं यत्तु श्राद्धं कृत्वा तु तत्स्फुटम्"॥इति । इतश्चाग्नौ करणानन्तरं वैश्वदेवहोमः । भूतयज्ञादिदेवश्राद्धान्त इति प्रतीयते । **भविष्ये** तु

"पितॄन्संतर्प्य विधिवद्बलिं दत्वा विधानतः । वैश्वदेवं ततः कुर्यात्पश्चाद्ब्राह्मणवाचनम्" ॥ इति । अत्र बलिशब्देन विकिरः । तत्रैवाग्रे तथोक्तेः । एवं च विकिरानन्तरं कृत्स्नवैश्वदेवं कर्म । **आश्वलायनानां** तु किंचिन्निषेधेन **मनू**क्तसंग्रहस्य वृत्तिकृदुक्तत्वाच्छ्राद्धान्ते एव सः । तत्राहिताग्नीनां विशेषो **लौगाक्षिस्मृतौ** ।

"पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः । पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः" ॥ इति ।

पक्षान्तं कर्म दर्शपूर्णमासादिपूर्वाङ्गमन्वाधानाख्यम् पिण्डयज्ञः पिण्डपितृयज्ञः । अन्वाहार्यं दर्शश्राद्धम् । क्रमस्तु स्मृतावेव एकादशाहिके तु साग्नेरपि श्राद्धान्त एवेति **शालङ्कायनः**। यच्छ्राद्धादौ । वैश्वदेवकरणे दोषश्रवणं तदनग्निपरमत्र साग्निः सर्वोऽपि । तत्र येषामादौ मध्ये वा वैश्वदेवस्तेषां वैश्वदेवार्थं पृथक्पाक एव ।

"पित्रर्थं निर्वपेत्पाकं वैश्वदेवार्थमेव च । वैश्वदेवं न पित्रर्थं न दार्शं वैश्वदेविकम्" ॥ इति **लौगाक्षेः** । ननु श्राद्धान्ते वैश्वदेवेऽपि तुल्यमेतत् । अत एव **पैठीनसिः** ।

"पितृपाकात्समुद्धृत्य वैश्वदेवं करोति यः । आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते" ॥

इति चेन्न तदुद्देशेन श्राद्धे कृते तत्संबन्धनिवृत्तेर्न दोष इति **मदनपारिजातादयः** । यदा तु श्राद्धशेषाभावस्तदाऽर्थात्पृथक्पाक एव । न हि श्राद्धशेषेणैवेति नियमोऽस्ति । तस्माच्छ्राद्धान्ते वैश्वदेवपक्षे श्राद्धशेषेण पाकान्तरेण वा वैश्वदेव **इत्यभियुक्ताः** ।

यत्तु

"वृद्धावादौ क्षये चान्ते मध्ये जुह्वति पर्वणि । महालये च पिण्डान्ते वैश्वदेवो विधीयते" ॥

इति तत्र मूलेऽनाश्वासः । नित्यश्राद्धविषये तु

"नित्यश्राद्धं न कर्तव्यं प्रसंगायत्र सिद्ध्यति । श्राद्धान्तरे कृतेऽन्यत्र कर्तव्यमिति निश्चयः" ॥

तेन यत्र षट्पुरुषश्राद्धं तत्र प्रसंगादेव सिद्धेर्न पुनरावृत्तिः । येषां तु नित्यश्राद्धेऽपि मातामहा अनावश्यकास्तेषां तु त्रिपुरुषेऽपि नावृत्तिरि**त्यभियुक्ताः** । तस्य प्रक्रिया तु वैश्वदेववत् । नित्यश्राद्धं तु श्राद्धान्तरे कृते सति कृताकृतमिति **दीक्षितो**क्तेरप्ययमेवाशयः । 'श्राद्धशेषेणैवोभयमिति' तदुक्तिरपि संभवाभिप्रायेति बोध्यम् । सा च प्रसंगसिद्धिरुक्ता **कालादर्शे**

"नित्यदार्शिकयोश्चोदकुम्भमासिकयोरपि । दार्शिकस्य युगादेश्च दार्शिका लभ्ययोगयोः ।

"दार्शिकस्य च मन्वादेः संपाते श्राद्धकर्मणाम् । प्रसंगादितरस्यापि सिद्धेरुत्तरमाचरेत्" ॥

इति नित्यदार्शिकश्राद्धसंनिपाते दर्शश्राद्धेनैव नित्यसिद्धिः पश्वर्थमनुष्ठितैः प्रयाजैरिव पशुपुरोडाशेन चाविनिगमकाद्वैपरीत्यं पिण्डाद्यङ्गबहुलत्वेन दर्शस्यावश्यकत्वात् । अत एव संक्रात्यादिश्राद्धैर्दर्शस्य गृह्यमाणविशेषतया न तन्त्रमितियुगादिनिमित्तकं संक्रान्तिनिमित्तकं व्यतीपातनिमित्तकममानिमित्तकं चेत्येतानि श्राद्धानि तन्त्रेण करिष्ये इति न तत्र संकल्पः । यत्र तु निमित्तानां यौगपद्यं संप्रतिपन्नदेवताकत्वं च तत्रागृह्यमाणविशेषत्वान्न्यायलभ्यमेव तन्त्रमिति दर्शभिन्नोक्तविषये तथा संकल्पः । एवमन्यत्राऽपि प्रसंगे तु संकल्पे तदनुल्लेखेऽपि तस्य सिद्धिरिति बोध्यम् । तथा मासिकेनैवोदकुम्भश्राद्धसिद्धिः । एवं माघ्याममायां युगादिश्राद्धेनैव दार्शिकसिद्धिः । तथा ग्रहणार्धोदयाद्यलभ्ययोगश्राद्धेनैव दार्शिकसिद्धिः एवं फाल्गुनामायां मन्वादिश्राद्धेनैव दार्शिकसिद्धिरिति तदर्थः ।

ननु दर्शे पिण्डदानमङ्गंयुगादौ तदभावोऽङ्गं तथा च **बृहत्पराशरः** ।

"युगादिषु मघायां च विषुवेऽप्ययने तथा । भरणीषु च कुर्वीत पिण्डनिर्वपणं न हि" ॥ इति ।

**ब्राह्मे**ऽपि

"यदा च श्रोत्रियोऽभ्येति गृहं वेदविदग्निवित् । तेनैकेन तु कर्तव्यं श्राद्धं विषुववच्च तत्" ॥

विषुमवत् अपिण्डम् । **पाद्मे**ऽपि

"अयनद्वितये श्राद्धं विषुवद्वितये तथा । संक्रान्तिषु च कर्तव्यं पिण्डनिर्वपणादृते" ॥ इति ।

"पुत्रे जाते व्यतीपाते ग्रहणे चन्द्रसूर्ययोः । श्राद्धं कुर्यात्प्रयत्नेन पिण्डनिर्वपणादृते" ॥ इति ।

**हेमाद्रौ ।**

"संक्रान्तौ ग्रहणे पाते युगमन्वन्तरादिषु । भरण्यां चापि कुर्वीत श्राद्धं पिण्डैर्विनैव तु " ॥ इति ।

**ज्योतिः । पराशरः ।**

"विवाहे विहिते मासान्त्यजेयुर्द्वादशैव हि । सपिण्डाः पिण्डनिर्वापं मौञ्जीबन्धे षडेव हि " ॥ इति ।

"विवाहव्रतचूडासु वर्षमर्धं तदर्धकम् । पिण्डान्सपिण्डा नो दद्युः सपिण्डीकरणं विना" ॥

"वृद्धौ पिण्डान्विनिर्वाप्य पुनः पिण्डान्ददाति यः । गोत्रवृद्धिविघाती स्यान्नरकं प्रतिपद्यते " ॥

**इत्यभियुक्ताः** । अत्र वृद्धिशब्द उक्तविशेषपरः । **विष्णुः** । विवाहव्रत. ।

"अतिलं तर्पणं कुर्यात् श्राद्धं कुर्यादपिण्डकम् " । इति । अस्यापवादं **स** एवाह ।

"महालये गयाश्राद्धे मातापित्रोः क्षयेऽहनि । यस्य कस्यापि मर्त्यस्य सपिण्डीकरणे तथा ॥

"कृतोद्वाहोऽपि कुर्वीत पिण्डदानं यथाविधि" ।

**बृहस्पति**रप्येवमत्र मूलेऽनाश्वास इति **गुरुचरणाः** ।

अत्र मातापित्रोरित्युपलक्षणं भ्रात्रादेरपि हविरुभयत्ववत् । तेन भ्रात्रादिवार्षिकेऽपि पिण्डदानं कार्यम् ।

"मातापितृसुतभ्रातृक्षयाहे श्राद्धकृन्नरः । पिण्डदानं प्रकुर्वीत निषिद्धेऽपि च सर्वदा" ॥ इति ।

**स्मृतेः** । इदमपि साग्निकपरम् ।

"त्यक्ताग्नेः पार्वणं नास्ति नैकोद्दिष्टं च सर्वदा । अत्यक्ताग्नेस्तु पिण्डोक्तिस्तस्मात्संकल्प्य भोजयेत्"॥इति

**व्यासोक्तेः** । विकल्प इत्यन्ये इति **विधानपारिजाते** विवाहेत्यस्यापवादान्तरम् । **दिवोदासीये** ।

"तीर्थे संवत्सरे प्रेते पितृयागे महालये । पिण्डदानं प्रकुर्वीत युगादिभरणीमघे " ॥ इति ।

तीर्थे तत्प्रयुक्तश्राद्धे, सांवत्सरे मातापित्रोः क्षयेऽहनि, प्रेते दाहादिसपिण्डीकरणान्तप्रेतश्राद्धे । पितृयज्ञे पिण्डपितृयज्ञे च । अत्र युगाद्यादौ पिण्डदानं पक्षश्राद्धपरम् । अन्यथा स्वातन्त्र्येण तत्र निषेध एवेति ईदृशं श्राद्धं संकल्पाख्यं तदुक्तम् ।

"पिण्डहीनं तु यच्छ्राद्धं संकल्पाख्यं प्रचक्षते । तच्चापि हि द्विजः कुर्यादित्येवं मनुरब्रवीत्" ॥ इति ।

"अङ्गानि पितृयज्ञस्य महाकर्तुं न शक्नुयात् । संकल्पश्राद्धमेवासौ कुर्यादर्घ्यादिवर्जितम् " ॥ इति

**छागलेयः** ।

"पिण्डो यत्र निवर्तेत मघादिषु कथंचन । सांकल्पं तु तदा कुर्यान्नियमात् ब्रह्मवादिभिः " ॥ इति ।

**संवर्तः** ।

"पात्रे भोज्यस्य चान्नस्य त्यागः संकल्प उच्यते । तत्प्रयुक्तो विधिर्यस्तु स तेन व्यपदिश्यते ॥

"तावन्मात्रेण संबद्धं श्राद्धं संकल्पमुच्यते" । इति । **वृद्धशातातपः** ।

"पिण्डनिर्वापरहितं यत्तु श्राद्धं विधीयते । स्वधावाचनलोपोऽत्र विकिरश्च विलुप्यते ॥

"अक्षय्यं दक्षिणा स्वस्ति सौमनस्यं यथास्थितम्" । इति विसर्जनकाले ॐ स्वधेति न वाच्यमित्यर्थः ।

"आवाहनाग्न्यादौ करणे विकिरं पात्रपूरणम् । पिण्डहीनेन कर्तव्यमेतच्छ्राद्धे चतुष्टयम्" ॥
"अर्घ्यं दत्वा न यः कुर्यात्पिण्डदानावनेजने । आसुरं तद्भवेच्छ्राद्धमिति" । **व्यासः** ।
"सांकल्पं तु यदा कुर्यान्न कुर्यात्पात्रपूरणम् । नावाहनाग्नौ करणे पिण्डांस्तत्र न निर्वपेत् ॥
"विकिरश्च न दातव्यो नैवाक्षय्यं च वारि च" इति । **स्मृतिसंग्रहे**
"अग्नौ करणमर्घ्यं च विकिरावाहने स्वधा । पिण्डयुक्ते प्रकुर्वीत पिण्डहीने विवर्जयेत्" ॥

इति आवाहनस्य च समन्त्रकस्य निषेधः । ततश्चावाहने मन्त्रानपठित्वैव देवान्पितॄंश्च विप्रेषु ध्यायेदिति **चन्द्रिकाया**मिति दिक् । तथा च विरुद्धाङ्गयोः कथं प्रसंगोऽपीति चेदत्राहुः । **शाबरभाष्ये** प्रसंगेन "न तौ पशौ करोतीति" प्रकरणान्तरस्थस्यापि पर्युदासाभ्युपगमात्**प्रभाकरैश्च** तथैव समर्थनात्तद्वदिहापि पिण्डेतरदंगं न तु पिण्डाभावः । **महाभाष्येऽपि** ल्युन्विधावेवमेव स्थितम् । उक्तं च **हरिणा** ।

"भिन्नप्रकरणस्थं च वाक्यं न्यायापवादयोः । एकमेवेष्यते कैश्चिद्भिन्नरूपमिव स्थितम् ॥

"द्वितीये योऽलुगाख्यातस्तच्छेषमलुकं विदुः" इति न्याय्य उत्सर्गः । अलुकं चातुर्थिकं षाष्ठं चेत्यर्थ इति **हेलाराजः** । **भट्टमते** तु "न तौ पशौ"इत्यादाविवेहापि विकल्पो दुर्वारः । न च दीक्षितो न ददातीत्यादाविव विशेषवचनेन सामान्योक्तस्य बाधः । निषेधेन विधायकप्राप्तेरभ्युपेतव्यतया तस्य च विषयान्तरालाभेन विकल्पस्य दुर्वारत्वात् । न त्वेतदङ्गप्रापकस्यांगान्तरविषयः । अन्यथा 'न तौ'इत्यत्रापि तथात्वापत्तेरिति तथाभाष्यादिरीत्याऽपि दार्शिकेन युगादौ प्रसंगसिद्धिरस्तु नाम युगादिमन्वादिकाभ्यां चापिण्डकाभ्याममायाः प्रसंगासिद्धिर्दुरुपपादैवेति **कालादर्शा**द्युक्तं चिन्त्यं देवताभेदे तु न तन्त्रं तदप्युक्तं तत्र

"नित्यस्य चोदकुम्भस्य दर्शमासिकयोरपि । नित्यस्य चाब्दिकस्यापि दार्शिकाब्दिकयोरपि ॥
"युगाद्याब्दिकयोश्चापि मन्वाद्याब्दिकयोरपि । प्रत्याब्दिकेषु चालभ्य योगेषु विहितस्य च ॥
"संपाते देवताभेदाच्छ्राद्धयुग्मं समाचरेत्" ॥ इति ।

अत्र नित्यदार्शिकयोः षड्देवताकत्वान्मासिकोदकुम्भयोरेकोद्दिष्टत्वाद्देवताभेदः । तथानित्यदार्शिकयुगादिमन्वादिप्रभृतीनामलभ्ययोगनिमित्तानां च षट्देवतत्वात्प्रत्याब्दिकस्य तु त्रिदेवतत्वादेकोद्दिष्टत्वाद्वा देवताभेद इत्याहुः । वस्तुतस्तु एकादशप्रयाजैः पाशुकैः पौरोडाशिकानामिवेहापि अधिकदेवत्येन न्यूनदेवत्यस्य प्रसंगसिद्धिर्दुर्वारा । तस्मादुक्तसिद्धान्तस्थैर्यार्थं वचनमेवान्विष्य शरणीकरणीयमत एव जीवन्मातामहवर्गस्यापि दर्शेनात्यन्तसमानदेवतेन प्रत्याब्दिकस्य तन्त्रप्रसंगो नेत्यवधेयम् । अत्राप्य-

नियतनिमित्तनित्यदार्शिकादिप्रथमं कुर्यात् । तदप्युक्तं तत्र निमित्तानियतिश्चात्र पूर्वानुष्ठानकारणमिति क्रमेण निमित्तागमे तु पृथक्कार्याण्येवेति न्यायसिद्धमेवार्थम् । **कात्यायनो**ऽप्याह ।

"द्वे बहूनि निमित्तानि जायेरन्नेकवासरे। नैमित्तिकानि कार्याणि निमित्तोत्पत्त्यनुक्रमात्" ॥ इति।

दर्शप्रत्यब्दश्राद्धयोर्युगपत्प्राप्तौ प्रत्यब्दं कृत्वाऽमाश्राद्धं कार्यमित्य**भियुक्ताः** । आहुरेवं तैर्थिकवार्षिकयोस्तथाप्राप्तौ तैर्थिकं कृत्वा वार्षिकं कार्यं तथाश्राद्धतिथिऋक्षयोगादिमेलने तिथिमधिकृत्यैव श्राद्धम् ।

"तिथिनक्षत्रयोगे तु प्राधान्यं तु तिथेः स्मृतम्। सवाश्रयत्वात्तस्यास्तु यथाद्रव्ये गुणादिकम्" ॥

**इत्यभियुक्तोक्तेः** । सर्वथा दर्शोत्तरं नित्यश्राद्धं नेति प्रागुक्तं निर्विवादमिति दिक् ।

ततः कृत्यमाह । **पितृसेवितमिति** ।

"ततश्च वैश्वदेवान्ते सभृत्यः सह बान्धवः । भुञ्जीतातिथिसंयुक्तः सर्वं पितृनिषेवितम्" ॥

इति **मात्स्योक्ते**राह । **इष्टैरिति** । सहितः सुतबान्धवैरिति तत्र पाठान्तरम् । पितृसेवितमित्युक्त्या पितृभ्यो यत्र दत्तं तत्र भुञ्जीतेति गम्यते । भक्ष्यादिकं प्रक्रम्य **यमोऽपि** ।

"न भोक्तव्यं पितॄणां तदनिवेद्य कथंचन" ॥ इति । **देवलोऽपि** ।

"निवृत्ते पितृमेधे तु दीपं प्रच्छाद्य पाणिना । आचम्य पाणी प्रक्षाल्य ज्ञातीन् शेषेण भोजयेत् ॥

"पश्चात्स्वयं च पत्नी च भुञ्जीत पितृसेवितम्" । इति । निमन्त्रितविप्रमध्ये यदि प्रमादात्कश्चिन्नाहूतस्तदा तमप्याहूय भोजयेत् ।

"प्रमादाद्विस्मृतं ज्ञात्वा प्रसाद्यैनं प्रयत्नतः । पूजयित्वा विशेषेण सर्वं तत्फलमाप्नुयात्" ॥ इति **हारीतात्** । **ब्राह्मे** ।

"अश्रीभण्डपखण्डाश्च तथाऽन्ये दीर्घरोगिणः । बन्दिमागधसूताश्च तौर्यत्रिकविदस्तथा ॥

"अलब्धभागाः श्राद्धेषु नाशयन्ति महद्यशः । तस्मात्तेऽपि च भर्तव्याः सकलं च विभज्य वै" ॥ इति । अश्रीरकिंचनः । असति तु पितृशेषे दत्तसजातीयमन्यत् पक्त्वाऽपि भोक्तव्यमेव । तथा च **देवलः** ।

"श्राद्धं कृत्वा तु यो विप्रो न भुङ्क्तेऽथ कदाचन। देवा हव्यं न गृह्णन्ति कव्यानि पितरस्तथा" ॥ इति। श्राद्धं कृत्वा स्वगृहे एव भुञ्जीत ।

"श्राद्धं कृत्वा परगृहे यो भुङ्क्ते मदविह्वलः । पतन्ति पितरस्तस्य लुप्तपिण्डोदकक्रियाः" ॥ इति **शातातपात्** । **जातूकर्ण्योऽपि** ।

"अहन्येव तु भोक्तव्यं कृते श्राद्धे द्विजन्मभिः । अन्यथा ह्यासुरं श्राद्धं परपाके च सेविते" ॥ इति तस्माद्रात्रेः प्रागेव सूर्ये विद्यमाने भोक्तव्यम् । "यस्यापि तद्दिने क्षुन्नास्ति तेनापि किंचिद्भोक्तव्यमि"**त्यापस्तम्बः** । एकादश्यादौ भोजनप्रत्याम्नायं **कात्यायनः** ।

"उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत् । उपवासं तदा कुर्यादाघ्राय पितृसेवितम्" ॥ इति । अनेन हि भोजनकार्ये आघ्राणं विधीयते । अन्ये त्वत्रानाश्वस्ताः । अत एव रागतः प्राप्तेराह । **नियम इति । परीति** । युगपदप्राप्तेः । विशेषमाह । **मांसे त्विति** । ततः कृत्यमाह । **यस्मिन्निति** । तदो यदाकाङ्क्षत्वादिति भावः ।

"तां निशां ब्रह्मचारी स्याच्छ्राद्धभुक्श्राद्धिकैः सह" इति **बृहस्पते**राह । **भोक्तृभिरिति** । "ब्रह्मचारी भवेत्तस्यां रजन्यां ब्राह्मणैः सह" । इति त**त्कारिकायां** तु शब्दादिति चार्थकादित्यर्थः । एतेन न्यूनता परिहृता **विष्णुं** तत्रत्यक्रमेणाह । **पुनरिति** । भारमायासेति पाठान्तरम् । तथा सन्ध्यां प्रतीति पाठान्तरम् । स्मृत्यन्तरमाह । **दन्तेति** । भोक्तुस्तु नास्य निषेधः । तथा च **प्रचेताः** ।

"श्राद्धभुक्प्रातरुत्थाय प्रकुर्याद्दन्तधावनम् । श्राद्धकर्ता न कुर्वीत दन्तप्रक्षालनं बुधः" ॥ इति ।

"स्निग्धस्नानमभ्यङ्गस्नान मभोजनमुपवासं निमन्त्रितविप्रेभ्यः परेऽहनि देयमिति" **कात्यायनः** ।

"तैलमुद्वर्तनं स्नानं दन्तधावनमेव च । कृतरोमनखेभ्यस्तु दद्यात्तेभ्योऽपरेऽहनि" ॥ इति । स्नानं दन्तधावनमित्यत्र करणे ल्युट् । तैलाभ्यङ्गनिषेधातिथिषु तु आमलोदकं देयं च **मार्कण्डेयः** ।

"अह्नः षट्सु मुहूर्तेषु गतेष्वथ च तान्द्विजान् । प्रत्येकं प्रेषयेत्प्रेष्या नादायामलकोदकम्" ॥ इति । एतदप्यमाभिन्नविषयं "धात्रीफलैरमायां न स्नायादिति" **स्मृतेः** । यत्तु **प्राचेतसम्** । "श्राद्धभुग्भ्यो नखश्मश्रुच्छेदनं न तु कारयेत्"। इति तन्निषिद्धतिथिविषयकमिति **माधवः** । **मात्स्येऽपि** ।

"पुनर्भोजनमध्वानं यानमायास मैथुनम् । श्राद्धकृच्छ्राद्धभुक्चैव सर्वमेतद्विवर्जयेत्" ॥

"स्वाध्यायं कलहं चैव दिवा स्वप्नं तथेच्छया" । इति **वृद्धयाज्ञवल्क्यः** ।

"अध्वनीनो भवेदश्वः पुनर्भोजी च वायसः । होमकृन्नेत्ररोगी स्यात्पाठादायुः प्रहीयते ॥

"दानं निष्फलतामेति प्रतिग्राही दरिद्रताम् । कर्मकृज्जायते दासो मैथुनी शूकरो भवेत्" ॥ इति होमस्य निषेधः स्वकर्तृकस्य । अन्यद्वारा तु भवत्येव । अन्याभावे तु ।

"दशकृत्वः पिबेदापो गायत्र्या श्राद्धभुग्द्विजः । ततः संन्ध्यामुपासीत जपेच्च जुहुयादपि" ॥ इति **भविष्ये** । नेदं श्राद्धभोजने प्रायश्चित्तं तस्य गुरुणो वक्ष्यमाणत्वात् किं तु संध्याधिकारायेति **पारिजाते** इति **दीक्षिताः** । । एवं च सन्ध्याहोमयोः प्रतिषेधोऽकृतप्रायश्चित्तपर इति भावः । एषु कर्मसु पितृगतानिष्टमपि स्मरन्ति एते निषेधा उभयोरपीति **मात्स्यतः** स्पष्टमेव । अन्येऽपि नियमा बोध्या अन्यतः । श्राद्धभोक्तॄणाम्" । जप्यमुक्तम् **गोभिलेन** ।

"भुक्त्वाऽऽचम्य यदस्तोऽभीज्जपेत्सूक्तं समाहितः । गोसूक्तं चाश्वसूक्तं च इन्द्रसूक्तं च सामनी

"तरत्समस्य यत्साम तच्च जप्यं बुधैः सदा । गीत्वाऽऽसीनः शुचौ देशे वामदेव्यं ततो जपेत्" ॥

"एवं सामभिराच्छिन्नो भुक्तवांस्तु द्विजोत्तमः । श्राद्धभोजनदोषैश्च महद्भिर्नोपलिप्यते" ॥ इति ।

"अन्यथैव हि भुञ्जानो हव्यकव्येषु मन्त्रवित् । आत्मानमन्नदातॄंश्च गमयत्यासुरीं गतिम्" ॥ इति ।

"श्राद्धात्परतरं नान्यच्छ्रेयस्करमुदाहृतम् । तस्मात्सर्वप्रयत्नेन श्राद्धं कुर्याद्विचक्षणः" ॥ इति ।

**श्राद्धमाहात्म्यं मनुः ।**

"न सन्ति पितरश्चेति कृत्वा मनसि यो नरः । श्राद्धं न कुरुते तत्र तस्य रक्तं पिबन्ति ते" ॥

**इत्यादित्यपुराणे ।**

"अन्यायोपार्जितैरर्थैर्यच्छ्राद्धं क्रियते नरः । तृप्यन्ति तेन चण्डालाः पुल्कसाद्याश्च योनयः" ॥

इति **मार्कण्डेयः ।** तस्माच्छुद्धप्रतिग्रहार्जितेनैव श्राद्धं नेतरेणेत्यर्थः ।

"स्तेयादौ तु स्वत्वमेव दुरुपपादम्" ।

"जीवतो वाक्यकरणात्प्रत्यब्दं भूरिभोजनात् । गयायां पिण्डदानेन त्रिभिः पुत्रस्य पुत्रता" ॥

इत्यन्यत्र भूरिभोजनं श्राद्धपश्चाद्भावि । इष्टैः सह भोजनम् ।

"न ते शिष्या न ते पुत्रास्तर्पयन्ति न ते पितॄन् । प्रायश्चित्तं न तेष्वस्ति गुर्वतिक्रमकर्तृषु" ॥ इति **पुलस्त्यः ।**

**अथान्यदप्युच्यते ।** "नाम गोत्रं पितॄणां तु प्रापकं हव्यकव्ययोरिति" **मात्स्ये ।** वस्वादिरूपोच्चारोऽपि दाक्षिणात्याचारः । पितॄणां गोत्राणां शर्मणां वस्वादिरूपाणामिति पठन्ति च ।

"संबन्धं प्रथमं ब्रूयाद्गोत्रं नाम तथैव च । पश्चाद्रूपं विजानीयात्क्रम एषः सनातनः" ॥ इति ।

अत्र जानीयादित्युक्त्या वस्वादिरूपं स्मरेदित्यर्थ इत्यन्ये । अत्र गोत्रविषये सगोत्र इति सयुतः प्रयोगः सकारस्य पापहरत्वात् ।

"सकारेणैव कर्तव्यं गोत्रं सर्वत्र धीमता । सकारः कुतपो ज्ञेयस्तस्मात्सर्वत्र तं वदेत्" ॥ इति ।

**स्मृतेश्च ।** गोत्रसगोत्रशब्दौ पर्यायाविति यथाचारं व्यवस्थेति केचित् । दान्तं नाम स्त्रीणामिति **गोभिलोक्तेर्लक्ष्मीदे** लक्ष्मीदायै लक्ष्मीदामिति प्रयोगः । लक्ष्मकृदामित्यादि प्रयुञ्जाना भ्रान्ताः । केचित्तु लक्ष्मीदेवीत्यादि पठन्ति तावताऽपि नाम्नोदान्तत्वसिद्धिरस्त्येव । **क्षणोऽपि ।**

"क्षणावाहनसंकल्पे पिण्डदानान्नदानयोः । पिण्डाभ्यञ्जनकाले च तथैवाञ्जनकर्मणि ॥

"अक्षय्यासनपाद्येषु गन्धाद्याच्छादनेषु च । श्राद्धकर्मणि चैतेषु गोत्रं नाम प्रकाशयेत्" ॥ इति ।

"गोत्रस्य त्वपरिज्ञाने काश्यपं गोत्रमिष्यते । पृथिवी यत्पिता वाच्यस्तत्पिता त्वन्तरिक्षसत् ॥

"अभिधानापरिज्ञाने दिविषत्प्रपितामहः" । इति । एतच्छाखान्तरविषयं यदि नामान्यविद्वांस्तदा ततः पितामहप्रपितामहेति वदेदिति **त्वाश्वलायनः । स्मृत्यर्थसारे ।**

"अक्षय्यासनयोः षष्ठी द्वितीयाऽऽवाहने तथा । अन्नदाने चतुर्थी तु शेषाः संबुद्धयः स्मृताः" ॥ इति । **सर्वत्र चतुर्थी** वेति च ।

"चतुर्थी चासने नित्यं संकल्पे च विधीयते । प्रथमा तर्पणे प्रोक्ता संबुद्धिरपरत्र तु" ॥ इति **व्यास**नाम्ना लिखन्ति तत्र देशभेदेन व्यवस्थेत्याहुः ।

"श्राद्धारम्भेऽवसाने च पादशौचार्चनं तयोः। विकिरे पिण्डदाने च कुर्यादाचमनं कृती" ॥

तत्रारम्भे द्विरन्येषु सकृदिति **संप्रदायः**।

"दैविके सयवं वारि पैतृके सतिलं क्षिपेत्"। **आपस्तम्बः**।

"दर्भैर्मन्त्रैस्तिलैर्नाम्ना रजतेन विना जलम्। दत्तं हरन्ति रक्षांसि तस्माद्द्यान्न केवलम्" ॥ इति।

"मार्जनं तर्पणं श्राद्धं न कुर्याद्वारिधारया। कुर्यादज्ञानतो यस्तु स मूढो निरयं व्रजेत्" ॥ **इत्यभियुक्ताः**।

अथ **दर्भत्यागेऽभियुक्ताः**।

"श्राद्धारम्भेषु ये दर्भाः पादशौचे विसर्जयेत्। अर्चनादौ तु ये दर्भा उच्छिष्टादौ विसर्जयेत् ॥

"मार्जनादौ तु ये दर्भाः पिण्डोत्थाने विसर्जयेत्। उत्थानादौ तु ये दर्भा दक्षिणान्ते विसर्जयेत् ॥

"प्रार्थनादौ तु ये दर्भा नमस्कारे विसर्जयेत्। आयंतुन" "स्तिलोऽसीति" "उशन्तस्त्वेति" यानि तु ॥

"केवलः पितृशब्दस्तु पितृसामान्यवाचकः"।

"तस्मात्तेषु मातृपितामहादिपदानां नोहं" **इत्यभियुक्ताः**।

"अर्घ्यप्रदानमन्त्रेषु मात्रादिपदमूहयेत्। शुन्धन्तामिति पित्रादेर्मात्रादिपदमावपेत्" ॥

इति **तत्कारिका**। अर्घ्यप्रदानमन्त्राः 'पितरिदं तेऽर्घ्यमि'त्यादयः पिण्डमन्त्रे ये च त्वामत्रानु इत्यत्रोहो नेति **तद्वृत्तिकारस्तथा** च **तत्कारिका**।

"नोहेद्या इति शब्दं तु वृत्तिकारवचो यथा। जयन्तस्वामिनः शिष्या ऊहं कुर्वन्ति या इति ॥

"मातृश्राद्धेऽप्यनूहेन कुर्यात्पिण्डानुमन्त्रणम्। दशादानमुपस्थानं तद्वत्कार्यमिति स्थितिः ॥

"प्रवाहणमनूहेन तद्वत्प्राशनमिष्यते" **इत्यभियुक्ताः**। उपस्थानाभिमन्त्रणयोरुपांशुमन्त्रपाठोऽन्यत्र स्फुटमिति संप्रदायः। मन्त्राणां करणत्वात्कार्यस्य करणपूर्वकत्वाच्च मन्त्रपाठान्ते कर्म कर्तव्यम्।

"मन्त्रार्थैश्चिन्तयन्नेव देवतां चानुसंस्मरन्। कर्म कुर्यात्प्रयत्नेन ह्यन्यथा तु वृथा भवेत्" ॥

इति न्यायसिद्ध**मभियुक्ताः**। **स्मृत्यर्थसारे**

"प्रधानस्याक्रियायां तु साङ्गं तत्क्रियते पुनः। तदङ्गाकरणे कुर्यात्प्रायश्चित्तं न कर्म तत्" ॥ **इति**।

"विधिहीनं भावदुष्टं मन्त्रहीनमदक्षिणम्। अश्रद्धया कृतं यत्तु तद्वै रक्षांसि गच्छति" ॥

अत्र मौनमप्यावश्यकम्।

"यदि वाग्यमलोपः स्याज्जपहोमार्चनादिषु। व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम् ॥

"यस्य स्मृत्या च नामोक्त्या" इत्यादि पठित्वा। "आदिमध्यावसानेषु श्राद्धस्येदमुदाहृतम्" **इत्यभियुक्ताः**।

"त्रीणि चात्र प्रशंसन्ति शौचमक्रोधमत्सरमिति" **मनुः**।

"कृष्णाजिने तु संभारान्संस्थाप्य च कुशादिकान्। श्राद्धारम्भं प्रकुर्वीत विधिवद्द्विजसंनिधौ" ॥ इति कृष्णाजिनस्य श्राद्धे प्राशस्त्यमूलकमिदं तत्प्राशस्त्यं च **हेमाद्रौ नागरखण्डे** द्रष्टव्यमिति श्राद्धोपयुक्तमुक्तम्।

## अथ विप्रभोजनकाले कर्तृभोक्तृनियमाः।

**ब्रह्माण्डे।**

"न चाश्रुपातयेच्छ्राद्धे न शुष्कां गिरमीरयेत्। न चोद्वीक्षेत भुञ्जानान्न च कुर्वीत मत्सरम्" ॥ इति। शुष्कां निष्ठुरां मानुषीं च।

"नाप्रोक्षितं स्पृशेत् किं चित्" इत्यन्यत्र।

"अपेक्षितं द्विजो मोहाद्भुञ्जानो यो न याचते। अपेक्षितं न दद्यात्तु तावुभौ पितृघातकौ" ॥ इत्यन्यत्र

"तथा क्रोधेन यद्दत्तं दत्तं च त्वरया पुनः। उभयं तद्विलुम्पन्ति यातुधानाः सराक्षसाः ॥

"नचात्यन्ताधिकं दद्याद्ददामीति न कीर्तयेत्। आनीय दर्शयेदग्रे ज्ञात्वेच्छां परिवेषयेत्" ॥ इति। याचनमपि हस्तेनैव न मुखेन मौनभङ्गप्रसंगात्प्रतिषेधोऽप्येवमेव हुंकारोऽपि न कार्य **इत्यभियुक्ताः।**

"तर्जनी हस्तसंकेते वर्जनीया प्रयत्नतः" ॥ इति च
अन्नादिरसानां वैगुण्यप्रश्नोऽपि न कार्य इति **शङ्खः।**
"श्राद्धे नियुक्तान्भुञ्जानान्न पृच्छेल्लवणादिषु। उच्छिष्टाः पितरो यान्ति पृच्छतो नात्र संशयः ॥
"दातुः पतति वै पायुर्भोक्तुर्जिह्वा च भिद्यते" ॥ इति
"न च द्विजातयो ब्रूयुर्दात्रा पृष्टा हविर्गुणान्" ॥
इति **मनुः।** "हस्तसंज्ञयाऽपि प्रश्नोत्तरे निषिद्धे" **इत्यभियुक्ताः। शङ्खः।**
"भूतलान्नोद्धरेत्पात्रं मुंचेद्धस्तेन नो पिबन्। प्रौढपादो बहिः कक्षो बहिर्जानुकरोऽथवा ॥
"अङ्गुष्ठेन विनाऽश्नाति मुखशब्देन वा पुनः। पीतावशिष्टतोयादि पुनरुद्धृत्य वा पिबेत्" ॥
"खादितार्धं पुनः खादेन्मोदकानि फलानि च। मुखेन वा धमेदन्नं निष्ठीवेद्भाजनेऽपि वा ॥
"इत्थमन्नं द्विजो भुक्त्वा श्राद्धे गच्छत्यधोगतिम्" ॥ प्रौढपादः। आसनारोपितपादः। **ब्रह्माण्डे**
"न स्पृशेद्वामहस्तेन श्राद्धेऽन्नं तु कदाचन। न पादौ न शिरो बस्तिं न पदा भाजनं स्पृशेत्" ॥ इति
बस्तिर्नाभेरधोदेशः। "ग्रासशेषं न पात्रे स्यात्" इति च
"पेयादिपानं हस्तेन वर्जयेच्च सदा द्विजः" इति च **जमदग्निः।**
"भुक्त्वा पीत्वा तु यः कश्चिद्रिक्तपात्रं समुत्सृजेत्। स नरः क्षुत्पिपासार्त्तो भवेज्जन्मानि जन्मनि"॥

**वृद्धमनुः।**

"पिबतो यत्पतेत्तोयं भाजने मुखनिःसृतम्। अभोज्यं तद्भवेदन्नं भोक्ता भुङ्क्ते तु किल्बिषम्" ॥ इति

तथा ।

"क्षीरं भुक्त्वा पिबेत्तक्रं ब्राह्मणो ज्ञानदुर्बलः । षष्टिवर्षसहस्राणि कुम्भीपाके स पच्यते" ॥

**इत्यभियुक्ताः । ब्राह्मे**

"यश्च पाणितले भुङ्क्ते यश्च फूत्कारसंयुतम् । अङ्गुलीश्चोद्धरेयस्तु गोमांसाशनवत्स्मृतम्" ॥

**यमः ।**

"अवधूतमवज्ञातं सरोषं विस्मयान्वितम् । गुरोरपि न भोक्तव्यमन्नं संस्कारवर्जितम्" ॥

कृमिकेशकीटादिसंयोगे शुद्धिः प्रागुक्तैव

"वामभागे करं न्यस्य कटिभग्नस्तु यो द्विजः । हसते वदते चैव निराशाः पितरो गताः" ॥ इति **मार्कण्डेयः** । "सर्वेन्द्रियाणां चापल्यं न कुर्यात्पाणिपादयोः" इति **प्रचेताः । हारीतः ।**

"उद्धृत्य पाणिं विहसन्सक्रोधो विस्मयान्वितः । श्राद्धकाले च यो भुङ्क्ते न तत्प्रीणाति वै पितॄन्"॥ इति ।

"पादेन पादमाक्रम्य यो भुङ्क्ते नारकी तु सः" । "अन्नं ब्रह्मत्वेन ध्यात्वाऽगर्हयन्नन्नं भुञ्जीत"

**इत्यभियुक्ताः । आपस्तम्बः ।**

"कौशं तु बिभृयान्नित्यं पवित्रं दक्षिणे करे । भुञ्जानस्तु विशेषेण गर्हितान्नविशोधनम्" ॥

"पवित्रं तु परित्यज्य श्राद्धे भुङ्क्ते तु यो द्विजः । तदन्नमसुरान्गच्छेत्"**इत्यभियुक्ताः ।**

**यत्तु ।**

"ग्रन्थिकृतपवित्रेण न भुंजीयान्न चाचमेत्" । इति निषेधः । सवर्तुलग्रन्थिव्यतिरेकेण । "भोजने वर्तुलः प्रोक्त एवं धर्मो न हीयते" इति **स्मृत्यन्तरो**क्तेरित्याहुः । **उशनाः ।**

"नियुक्तश्चैव यः श्राद्धे यत्किंचित्परिवर्जयेत् । पितरस्तस्य तन्मासं नैराश्यं प्रतिपेदिरे" ॥ इति । परिवेष्टुरुच्छिष्टकर्तृकस्पर्शे **स्मृतिः संग्रहश्च ।**

"उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तो नरो यदि । भूमौ निधाय तद्द्रव्यमाचान्तोऽभ्युक्षणाच्छुचिः" ॥ इति पुनः परिवेष्टव्यमित्यर्थः । भोक्तॄणामन्योन्यस्पर्शे **ऽत्रिशङ्खौ ।**

"श्राद्धपङ्क्तौ तु भुञ्जानो ब्राह्मणो ब्राह्मणं स्पृशेत् । तदन्नमत्यजन्भुक्त्वा गायत्र्यष्टशतं जपेत्"॥ इति।

"भुञ्जानस्य तु विप्रस्य सिक्थोच्छिष्टं तु यः स्पृशेत् । प्रक्षाल्य भुक्त्वा स्नात्वा च गायत्रीं द्विशतं जपेत् ॥

"उच्छिष्टभोजने चैव सहस्रं समुपोषणम्" । इति च । सहस्रं जप उपोषणं चेत्यर्थः । अन्योन्यं भोजनपात्रस्योच्छिष्टसंस्पर्शे **व्यासः ।**

"उच्छिष्टोच्छिष्टसंस्पर्शे स्पृष्टपात्रं विहृत्य च । सर्वान्नं पूर्ववत्क्षिप्त्वा भोजयेत्तु द्विजोत्तमान्" ॥ इति । अन्योच्छिष्टलेपनस्पर्शे **शङ्खः ।**

"उच्छिष्टलेपनस्पर्शे प्रक्षाल्यान्येन वारिणा । भोजनान्ते नरः स्नात्वा गायत्रीं त्रिशतं जपेत्"॥**इति ।**

चाण्डालादिस्पर्शे **भरद्वाजः ।**

एतेषां पित्रादीनां तथा च तेषां मुख्यत्वेन प्रश्नादौ संबोध्यत्वेन स्वसम्मुखत्वात्ततो दक्षिणभागस्थित्या स्वसम्मुखीकृतपित्रादिवामभागगतत्वं निर्वहति स्वदक्षिणभागस्यैव स्वसम्मुखस्थितवामभागत्वसंभवात् ।

यत्तु पिण्डानामवयवाभावात्पिण्डदातुरेव वामभागत्वादिकमाश्रयणीयमित्युक्तं केनचित्तदेतेषामेव वामत इत्येतन्मूलविरुद्धं कर्तुरेकत्वादेतेषामिति बहुवचनासंगतिग्रस्तं च । स्त्रीविषये **वृद्धयाज्ञवल्क्यः ।**

"जीवद्भर्तरि वामाङ्गे मृते भर्तरि दक्षिणे" इति । **स्मृत्यन्तरे**

"श्राद्धे सदैव वामाङ्गे पत्नीनामुदकं हरेत् । वृद्धिश्राद्धेषु नारीणां दक्षिणाङ्गे सदा भवेत्" ॥ इति ।

तत्र वामाङ्गे सदे**त्यापस्तम्ब**विषयम् । तेषां पित्रादिपिण्डपश्चिमत एव पत्नीपिण्डविधानात् । वृद्धिश्राद्धेषु नारीणामिति सर्वविषयम् । तस्माद्वृद्धिश्राद्धेषु रेखाकरणपिण्डदानादिकं प्राङ्मुखकर्तुर्दक्षिणसंस्थमेव सर्वत्र भवतीति सिद्धान्त इत्याहुः ।

**मम त्वत्र प्रतिभाति** पिण्डानां दक्षिणसंस्थत्वमेवार्घ्यपात्रासादनादिवत् । तत्र मूलं "दक्षिणापवर्गान्" **इत्यापस्तम्ब**सूत्रोक्त**कातीया**येव प्रदक्षिणमुपचार इति तु आभ्युदयिकप्रकरणस्थमिति नात्र तन्मूलं वामसंनिधानेन प्रचारादेवमपि अप्रदक्षिणं भवतीति अप्रदक्षिणमुपचार इत्यनेन विरोधः । एवं "प्रसव्येनोपवीति दक्षिणेन सव्योपगृहीतेन पितरिदं तेऽर्घ्यं पितामहेदं तेऽर्घ्यं प्रपितामहेदं तेऽर्घ्यमित्यप्पूर्वं ताः प्रतिपादयिष्यन्सकृत्सकृत्स्वधाऽर्घ्या इति विप्रमृष्टा अपोऽनुमन्त्रयीत । "या दिव्या आपः पृथिवी० शंस्योनाभवन्तु" (४।७।९–१३)**इत्याश्वलायनसूत्रे** पित्र्यं कर्म सर्वं प्रसव्येनाप्रादक्षिण्येन प्रकृत्यादित्वात्तृतीया । अत एव प्रदक्षिणमुपचार इत्याभ्युदयिके एतदपवादः अत एव "प्रागपवर्गा विप्रपङ्क्तिः" इत्युक्तमेवं ह्यप्रदक्षिणं भवति वामसंनिधानेन प्रचारादिति वृत्तिकारोक्त्या पितृपिण्डरेखातो मातामहादिपिण्डरेखापूर्वा एवोचिता प्रागुक्त**बौधायनो**ऽप्यत्रानुग्राहकः । एतेषामेवेति **कातीय**स्य तु एतेषां पित्रादिपिण्डानां समीपे स्ववामत एवेत्यर्थ इति न तद्विरोधः । एवं च यत्त्विति मताभिमतमेव युक्तं न त्वन्योक्तमेवं चाप्रदक्षिणमुपचारः संवृत्त इति न तद्विरोध इति प्रथमपक्ष एव युक्तः । परं तु मातृरेखा पश्चिमे अत **एवाश्वलायना**न्वष्टक्यसूत्रे (२।५।७–८) "पूर्वासु पितृभ्योऽपरासु स्त्रीभ्य" इत्युक्तम् । अपरासु पश्चिमदिक्स्थास्विति वृत्तिः । स्त्रीणां भर्तृवामपार्श्वेऽवस्थानौचित्यात् प्रागुक्त**ापस्तम्ब**वचनात् । उक्त**शाङ्खायन**सूत्रात् उक्तसंग्राहकवचनादुक्त**वृद्धवसिष्ठ**वचनाच्च **वृद्धयाज्ञवल्क्योक्तेः स्मृत्यन्तरोक्ते**श्च मूलेऽनाश्वासः । एवं च सर्वैकवाक्यता सिद्धा । अत्र स्त्रीभ्यः सामान्योक्त्या सर्वत्र पुरुषपिण्डदानोत्तरं तत्स्त्रीभ्य एवमेव समाप्तिस्तु पुरुषपिण्डेष्वेवेति तत्वं सिद्धम् । यत्र स्त्रिय एवोद्देश्यत्वं तद्भर्तॄणामङ्गत्वं तत्रापि तथैवेति न कोऽपि दोषः । एवं च यदिदानीमाश्वलायनादयः प्रत्यगपवर्गमेव पिण्डान्प्रयच्छन्ति तत्राचार एव मूलं पूर्वोक्तसूत्रादिस्थमातृक्रम एव सर्वेषामिति भ्रमो वा मूलमिति तत्वमिति । ततो **मनुः ।** ( अ. ३ श्लो. २१६ ) ।

"न्युप्य पिण्डांस्ततस्तांस्तु प्रयतो विधिपूर्वकम् । तेषु दर्भेषु तं हस्तं निमृज्याल्लेपभागिनाम्" ॥ इति ।

दर्भेषु दर्भमूलेषु प्रपितामहात्परे लेपभाजः । तत्र हस्तमार्जने "अत्र पितरो मादयध्वम्" इति मन्त्रः



VISVA BHARATI

"अत्र पितरो मादयध्वमिति दर्भमूले करार्पणम्" इति **विष्णोः । सुमन्तुः** "प्रेतैकोद्दिष्टे न करावमार्जनम्। "एकोद्दिष्टेषु वर्षात्प्राग्लेपस्तु न विधीयते । सपिण्डीकरणादौ तु लेपः सर्वत्र शस्यते" इति । ततः कुशाग्रे लेपभागिनामयं भागोऽस्त्विति शिष्टमन्नं किंचिद्दद्यात् । "कुशाग्रे संप्रदातव्यं प्रीयन्तां लेपभागिनः" इति **वृद्धयोग्युक्तेः** । तत अत्र पितरो मादयध्वं यथाभागमावृषायध्वमिति पिण्डाननुमन्त्र्याप्रदक्षिणमावृत्त्योदङ्मुखो यथाशक्ति प्राणं नियम्य पुनस्तेनैव पार्श्वेन पर्यावृत्य 'अमीमदन्त पितर' इति मन्त्रेणानुमन्त्रयेत् । **मनु**स्तु इत्थम् । ( अ. ३ श्लो. २१७ )

"आचम्योदक्परावृत्य त्रिरायम्य शनैरसून् । षडृतूंश्च नमस्कुर्यात्पितॄनेव च मन्त्रतः" ॥ इति ।

शनैरसून्निरुध्य सकृन्नमेदित्यर्थः । ततस्त**त्कारिका**

"चरुशेषमवघ्राय निनयेत्पूर्ववज्जलम्" । इति । अत्रावघ्राणोत्तरमाचम्य "शुन्धन्ताम्"इत्यादिमन्त्रैः पूर्ववज्जलदानं पिण्डेष्वित्यर्थः । अत्र **व्याघ्रः** ।

"अद्भिः प्रक्षाल्य तत्पात्रं प्रतिपिण्डं तु पूर्ववत् । कृत्वाऽवनेजनं कुर्यात्पिण्डपात्रमधोमुखम्" ॥इति ।

पिण्डपात्रप्रक्षालनोदकेनैव सेक इत्यर्थः । ततस्त**त्कारिका** ।

"अभ्यङ्क्ष्वेति वदन् दद्याद्दर्भैर्घृतमनुक्रमात् । यथा महादेवशर्मन्नभ्यङ्क्ष्वेति तथाऽञ्जनम् ॥

"अङ्क्ष्वेति च वदन्दद्याद्दर्भेण पितृतीर्थतः" इति । यद्यप्यन्यत्र स्मृतावञ्जनदानमादावुक्तं तथाप्या**श्वलायनेन** "अभ्यञ्जनाञ्जने वासो दद्यादिति" सूत्रेऽभ्यञ्जनमेवादावुक्तम् । ततः **कारिका**

"दद्याद्दशामथैतद्व इति पिण्डेष्वनन्तरम्" "एतद्वः पितरो वास" इति मन्त्रः । **शौनकः**

"दद्यात्पिण्डेषु वस्त्रान्तं सूत्रच्छेदमथाऽपि वा। ऊर्णासूत्रैकशकलं दर्भेण पितृतीर्थतः" ॥ इति ।

**पराशरः**

"पञ्चाशद्वार्षिको यस्तु दद्याल्लोम स्वकं शुभम्। तदवश्यं प्रदेयं स्याद्विधिसंपूर्णता कृते" ॥ इति।

लोम च प्रकोष्ठस्थम् । लोमदानेऽपि मन्त्रः स एव । दद्यात्क्रमेण वासांसीति वस्त्रदानं **ब्राह्मोक्तं** शाखान्तरविषयम् । **आश्वलायनेन** साक्षाद्दशामात्रस्यैव विधानात् । ततः

"दशां दत्वाऽथ पिण्डेषु गन्धपुष्पैः समर्चयेत् । धूपैर्दीपैश्च नैवेद्यैर्विधिसंपूर्णता कृते" ॥

**इत्यभियुक्ताः । देवलः** ।

"दक्षिणां सर्वभोगांश्च प्रतिपिण्डं प्रदापयेत् । भक्ष्यानपूपानिक्षूंश्च व्यञ्जनान्यशनानि च" ॥ इति।

ततः ।

"अप्रदक्षिणवद्भूमौ पिण्डानां परितो जलम् । दत्वा च विकिरेदन्नं तथाऽम्बु च पुनस्ततः ॥

"सर्वत्र विकिरं कुर्यान्मध्ये कशिपुबर्हिषोः" **इत्यभियुक्ताः** । ततः **कारिका** "नमो व इत्युपस्थाय 'मनोन्वेति' तृचेन च"। इति। उपस्थानं च कृताञ्जलिना नमो व इति सर्ववरहितमन्त्रपाठः इति **वृत्तिः** ।

ततः पिण्डाघ्राणं **कात्यायनः** । "अवधार्यावजिघ्रेत यजमान" इति । अवधार्य **गृहीत्वा** । **मनुरपि** (अ. ३ श्लो. २१८) । "अवजिघ्रेच्च तान्पिण्डान्यथा न्युप्तान्समाहितः" । इति प्रदानक्रमेणावजिघ्रेदित्यर्थः । ततः 'परेत' इति मन्त्रेण पिण्डांस्तान्वै प्रवाहयेत् इति। ततोऽग्निसमीपं गत्वा मन्त्रजपः । विप्रसमीपे पिण्डदानेनायं जपः ।

"ब्राह्मणानां समीपे तु पिण्डनिर्वापणं यदा । न कार्यमग्निं प्रत्येयादित्याद्यत्र तु कर्मणि" ॥

इति **कारिकोक्तेः** । निरग्निविषये तु सुतरां लोपः ।

अथ **पिण्डप्रतिपत्तिः** । तत्र **वायवीयम्** । "पत्न्यै प्रजार्थी दद्यात्तु मध्यमं मन्त्रपूर्वकम्" इति मन्त्रो **मात्स्ये** ।

"आधत्त पितरो गर्भं मन्त्रः सन्तानवर्धनम्" इति। तत्प्रकारः **कारिकायां** "'वीरं मे दत्त' मन्त्रेण पिण्डमादाय मध्यमम् । पिण्डं तं प्राशयेत्पत्नीमाधत्तेत्यादिमन्त्रतः" ॥ तेन गृहीत्वा तेन तां प्राशयेत्पत्न्येव मन्त्रं ब्रूयादिति **वृत्तिः** । षट्प्रयोगे द्वयोर्मध्यमयोस्तादि**त्यभियुक्ताः** । तत्फलमाह **मनुः** (अ.३श्लो.२६३)।"आयुष्मन्तं सुतं सूते यशोमेधासमन्वितम्" इति। अनेकपत्न्यां तु प्राचीनावीतिना पिण्डं विभज्य प्रतिपत्ति मन्त्रमावर्त्य यथासंख्यं भागान्कृत्वा क्रमेणैकैकां प्राशयेत् । **छागलेयः** ।

"अक्षता गुर्विणी वन्ध्या गतरक्ता रजस्वला। नाश्नीयान्मध्यमं पिण्डं जारिणी च प्रसूतिका"॥

अक्षताऽजातरजस्का एवं व्याधिताऽननुकूलाऽपि न प्राश्नीयात् । तथा

"अन्यदेशगता पत्नी गर्भिणी रोगिणी तथा। तदा तं जीर्णवृषभश्छागो वा भोक्तुमर्हति" ॥ इति। **बृहस्पतिः** ।

"ततः कर्मणि निर्वृत्ते तान्पिण्डांस्तदनन्तरम्। ब्राह्मणोऽग्निरजो गौर्वा भक्षयेदप्सु वा क्षिपेत्"॥इति।

एतच्च पुत्रार्थित्वाभावविषयकं मध्यमपिण्डेतरविषयकम् तादृशपत्नीविषयकं वा । तीर्थश्राद्धे तु अप्स्वेव पिण्डप्रक्षेपः । **तदुक्तम्** ।

"तीर्थश्राद्धे सदा पिण्डान् क्षिपेत्तीर्थे समाहितः। दक्षिणाभिमुखो भूत्वा पित्र्या दिक् सा प्रकीर्तिता" ॥इति।

**शौनकः** ।

"प्रक्षिपेदितरावप्सुप्रणीतो चोल्मुकेऽनले । अचिकित्स्यमहारोगग्रस्तो वा भक्षयेदिमौ ॥

"रोगान्मुक्तिर्मृतिर्वाऽस्य भवेदन्यतरा गतिः" इति **वायवीये** गोभ्यो दाने उत्तमा गतिः । अप्सु-कीर्तिमेधाप्रज्ञाः । वायसेभ्यो दाने दीर्घायुष्यामिति । इदमग्रे **मूले**ऽपि किंचिद्वक्ष्यति । ततः **पराशरः** "प्रक्षाल्य हस्तावाचम्य ततः प्रोक्षणमाचरेत्" । अत्राचमनाकरणे दोषं **मरीचिः** "पितरस्तस्य तन्मासं भवन्त्युच्छिष्टभोजनम्" इति । **मात्स्ये** "तथा चान्तेषु चाचम्य वारि दद्यात्पृथक् पृथक्" इति ।

---

१ अग्रे २५४ श्लोके ।

**पाद्मे ।**

"आचान्तेषूदकं दद्यात् पुष्पाणि सयवानि च । पित्र्येऽपि तिलयुक्तानि वारि चापि सकृत्सकृत्" ॥ इति । तानि दत्तानि विप्रास्त्यजेयुरिति । **चन्द्रिकायाम् ।**

"सुप्रोक्षितादिकर्तव्यमाचान्तेषूपवीतिना" । तत्राब्दाने 'शिवा आपः सन्त्विति' **मन्त्रः** । पुष्पदाने 'सौमनस्यमस्त्विति' 'अक्षय्यं पुण्यादि मेऽस्तु' इत्यक्षतदाने इत्य**भियुक्ताः** । ततो **देवलः** "ततोऽभिवाद्य प्रयतो वरान्याचेत तान्पितॄन्" इति ।

"अघोराः पितरः सन्तु सन्त्वि'त्युक्ते पुनर्द्विजैः । गोत्रं तथा वर्द्धतां नो तथेत्युक्तश्च तैः पुनः ॥

"एताः सत्याशिषः सन्तु सन्त्वित्युक्ते च तैः पुनः । आशीः पूर्वं द्विजैर्दत्ता मूर्ध्ना धार्या ततोऽक्षता"॥इति। ततो **वृद्धयोगी ।**

"ततश्च तिलकं कुर्यान्मन्त्रेणानेन भक्तितः । नित्यानुष्ठानसंनिष्ठाः सर्वदा यज्ञबुद्धयः ॥

"पितृमातृपराः सन्तः सन्त्वस्मत्कुलजा नराः" । इति । तत उच्छिष्टपात्रचालनं **जातूकर्ण्यः ।**

"पात्राणि चालयेत् श्राद्धे स्वयं शिष्योऽथवा सुतः । न स्त्रियो न च बालाश्च नासजात्याः कदाचन" ॥ पात्राणि चालयित्वा क्वचिद्देशे स्थापयेत् । उच्छिष्टमा अस्तमयान्नैव मार्जयेत् ।

"श्राद्धे नोद्वासनीयानि उच्छिष्टान्या दिनक्षयात् । श्च्योतन्ते मधुधारायास्ताः पिबन्त्यकृतोदकाः"॥ इति **वृद्धवासिष्ठात्** । येषां मृतानामुदकं न कृतं ते तथोक्ताः ।

"भृत्यवर्गावृतो भुङ्क्ते कव्यशेषं स्वगोत्रजैः । आसायं श्राद्धशालायां द्विजोच्छिष्टं न मार्जयेत्"॥ इति **प्रचेतसश्च** । इदं च गृहान्तरसंभवविषयमेकगृहे तु विप्रविसर्जनानन्तरं परिमार्जनं कार्यमिति **मनुः** ( अ. ३ श्लो. २६५ ) ।

"उच्छेषणं तत्तिष्ठेद्यावद्विप्रान्विसर्जयेत्" । इति । भुक्तवत्सु विप्रेषु यत्पात्रस्थमन्नं पतितं तत्तस्माद्देशान्नापकृष्टव्यं यावद्विप्रनिर्गमं गतेषु तेषु मार्ष्टव्यमिति भावः । अत एव वक्ष्यमाणमूलमपि । **सत्स्विति ।** सत्सु विद्यमानेषु अविसृष्टेष्विति यावत् । सपिण्डीकरणविषयममार्जनमित्यन्ये ॥ २४२ ॥

## याज्ञवल्कीये २४३ श्लोकः

अतिदेशमाह । **मातेति** । ततः पूर्वतनस्य पूर्वमतिदिष्टत्वादाह । **विश्वेदेवेति** । इदं मातामहश्राद्धं पुत्रिकापुत्रस्यापुत्रमातामहदौहित्रस्य चावश्यकम् । अयमेव च **धौम्यस्य** विषयः । एवं च दौहित्रमात्रस्य तदनावश्यकत्वे मघात्रयोदश्यां तदावश्यकत्वविधायकं श्राद्धं नैवैकवर्गस्य त्रयोदश्यामुपक्रमेदिति । वचनं **धौम्य**वचसि आश्वासाभावेऽपि तयोर्येषां सूत्रे उक्तं तेषां चावश्यकम् । यद्वा आचारान्मूलोक्तेश्च सर्वेषां तत्तथाऽप्यालस्यादिनाऽकरणवारणार्थं श्राद्धं नैवेति । **आश्वलायनानां** तु सूत्रानुक्तत्वात्तदनावश्यकमेवं अत एव **वृत्तिकारो** न त्वेवैकमिति-**मनू**क्तनिषेधेन देवस्य **मनू**क्तस्याभ्यनुज्ञानमुक्तवान्न तु स्मृत्यन्तरोक्तमातामहानामपि अस्मद्गृह्येतिकर्तव्यतामात्रमेव कार्यं न शास्त्रान्तरं दृष्ट्वा विस्तारः कार्यः । "बह्वल्पं वा स्वगृह्योक्तमिति" वचनादिति चाह ततः कृत्यमाह । **अनन्तरमिति** । तत इत्यस्यायमर्थः । एवमग्रे प्रागपि तदाकारमाह । **स्वस्तीतीति** । वाच्यमित्यत्र ण्यन्तात्प्रत्यय इत्याह । **वाचेति** । अक्षय्येति विभक्तिं विहायानुकरणमभेदविवक्षा चेत्याह । **अक्षय्यमिति** । दद्यादित्यनुषङ्गेणाह । **दानमिति** । **बृहस्पतिः**।

१ मेव तेषां ।

"अचालयित्वा तत्पात्रं स्वस्ति कुर्वन्ति ये द्विजाः। निराशाः पितरस्तस्य दृष्ट्वा यान्ति यथागतम्"॥ तत्प्रकारान्तरम्। **पारस्करः।**

"स्वस्तीति भगवन्ब्रूहीत्युक्त्वा दद्यात्तिलोदकम्। देवपाणौ तथा पित्र्ये सव्येनैव तिलोदकम्"॥इति।

कर्ता उदकं दत्वा स्वस्तीति भगवन्ब्रूहीति ब्रूयात्। विप्रेण देवेभ्यः स्वस्तीति वाच्यम्। एवं पित्र्यविप्रहस्तेऽपो दत्वा गोत्रेभ्यः शर्मभ्यः पितृभ्यः स्वस्तीति भगवन्तो ब्रूतेति कर्ता। पितृभ्यः स्वस्तीति विप्रा वदेयुः। "दैवपूर्वं जलं दद्यादक्षय्यं श्राद्धस्त्विति। अस्त्वक्षय्यमिति ब्रूयुर्ब्राह्मणास्ते समाहिताः" ॥ इति **स्मृति**रिदमपि नामगोत्रपूर्वकमेव ॥ २४३ ॥

## याज्ञवल्कीये २४४ श्लोकः

ततः कृत्यमाह। **दत्वेति।** तदाह। **अनन्तरमिति।** दक्षिणायां विशेषमाह **पारस्करः।** "हिरण्यं विश्वेभ्यो देवेभ्यो रजतं पितृभ्य" इति। "दद्याद्यज्ञोपवीत्येव ताम्बूलं दक्षिणां तथा"। ताम्बूलदानं श्रीलाभफलं पितॄणां तृप्तिकरं च। "सतिलं नामगोत्रेण रजतं दक्षिणा ततः" इति **जमदग्निः** 'देवेभ्यो हिरण्यं यथाशक्तीति' **शौनकोऽपि।**

"दक्षिणाहीनकर्माणि निष्फलानि भवन्ति हि। तस्माद्यत्नेन दातव्या दक्षिणा च स्वशक्तितः"॥इति।

**पाद्मेऽपि।**

"हतमश्रोत्रियं श्राद्धं हतो यज्ञस्त्वदक्षिणः। तस्मात्पणं काकिणीं वा फलं पुष्पमथाऽपि वा ॥

"प्रदद्याद्दक्षिणां श्राद्धे तथा तु सफलं भवेत्"। इति। तदाह। **यथेति। पारस्करः।**

"एकपङ्क्त्युपविष्टानां विप्राणां श्राद्धकर्मणि। भक्ष्यं भोज्यं समं देयं दक्षिणा त्वनुसारतः"॥ इति।

निमन्त्रितविप्राणां विद्यादिगुणतारतम्येनेत्यर्थः। पित्र्ये दक्षिणादानं च प्राचीनावीतिना कार्यम्। तथा च **जमदग्निः।** "अपसव्यं तु तत्रापीति"। तत्रापि दक्षिणादानेऽपि यत्तु "अपसव्यं कर्म सर्वं दक्षिणादानवर्जितम्"। इति तद्ब्राह्मणोद्देशेन दक्षिणादानविषयकम्। स च पक्षो **देवलेन** दर्शितः "आचान्तेभ्यो द्विजेभ्यस्तु प्रदद्यादथ दक्षिणाम्"। इति। तत्र क्रमं **स** एवाह "दक्षिणां पितृविप्रेभ्यो दद्यात्पूर्वं ततो द्वयोः" इति। द्वयोः द्वाभ्यां देवविप्राभ्यामस्मिन्नेवावसरे विप्राणामात्मनः पित्रादेश्च यद्यदिष्टं तद्यथाशक्ति देयमन्यान्यपि गोतिलपात्रालङ्कारभूमिछत्रोपानच्चामराङ्गुलीयककटककेयूरदण्डकमण्डलुव्यजनशय्यातदुपकरणादीनि देयानीति बोध्यम् ॥ २४४ ॥

## याज्ञवल्कीये २४५ श्लोकः

ततः कृत्यमाह। **ब्रूयुरिति।** तदाह। **ते चेति।** तत इत्यस्यार्थः। **अनन्तरमिति।** विश्वेदेवाश्चेति च फलमाह। **चकारादिति** ॥ २४५ ॥

## याज्ञवल्कीये २४६ श्लोकः

एवचेति समुदायः समुच्चये इत्याह। **सन्ततिश्चेति।** अस्य पूर्वत्रान्वय इत्याह। **इतीति।** स्मृत्यन्तरे।

"अन्नं च नो बहु भवेदतिथींश्च लभेमहि । याचितारश्च नः सन्तु मा च याचिष्म कंच न" ॥ इत्यधिकं ते च तथाऽस्त्वित्यनुमोदयेयुरित्य**भियुक्ताः** ॥ २४६ ॥

## याज्ञवल्कीये २४७ श्लोकः

ततः कृत्यमाह । **इत्युक्त्वोक्त्वेति** । इतीत्यस्यार्थः **एवमिति** । जपेदित्यनुरोधेनाद्योक्त्वेत्यस्यार्थमाह । **जप्त्वेति** । तत्स्वरूपमाह । **धन्या इति** । **प्रणीति** । परिजनैः सह कृताञ्जलिरितिशेषः । ते च तेषु अक्षतान्क्षिप्त्वाऽऽशिषो दद्युरिति **शौनकः** । **इत्याह** । इत्याशङ्कामाह । पितृपूर्वकमित्यस्यादौ पित्रादीनां ततस्तयोरिति नार्थः किन्तु व्युत्क्रमेणेत्यर्थ इत्याह । **प्रपितामहादीति** । **दर्भान्वारम्भणे** विशेषः पितृषु मूलतो देवेष्वग्रत इति । इदं शाखान्तरविषय**माश्वलायनसूत्रे** ( ४।८।१४–१५ ) "उपवीयों स्वधेति विसृजेयुरस्तु स्वधेति वे"त्युक्तेः । उपवीय यज्ञोपवीतं कृत्वा ॐ स्वधेति अस्तु स्वधेति वा विसृजेत् । तेऽपि तदेव प्रत्यूचुरिति **वृत्तिः** । एवं पितॄन्विसृज्य ततः **शौनकः** ।

"विश्वेदेवा इति पुनः प्रोच्चार्य तदनन्तरम् । प्रीयन्तामिति निर्दिश्य तौ विप्रौ विसृजेदिति ॥

"तथोक्त्वा तेऽपि गच्छेयुरालयादनपेक्षकाः" ॥ इति । अत्र मूले वरयाचनं सुप्रीतिसंप्रश्नोत्तरमुक्तं प्रश्नात्प्रागिति तु **प्रचेताः** । स्वस्तिवाक्योत्तरमिति **पारस्करः**

"विसर्जितेषु विप्रेषु बहिर्गतेष्विति" । **मनुः** ( अ. ३ श्लो. २५८ )

"विसृज्य ब्राह्मणांस्तांस्तु नियतो वाग्यतः शुचिः। दक्षिणां दिशमाकाङ्क्षन्याचेतेमान्वरान् पितॄन्"॥

"दातारो नोऽभीति" तदुक्तेः । एषां पक्षाणां स्वस्वगृह्यानुसारेण व्यवस्था । **आश्वलायनानां** तु **मनू**क्तकालादरः । **वृत्तिकृ**दप्येवमेव ।

"न गृह्यादिस्मृतिर्येषां श्राद्धादावुपलभ्यते । कर्तुमिच्छन्ति ते कृत्स्नं यस्य कस्य मुनेर्मतम्" ॥ **इत्यभियुक्ताः** ॥ २४७ ॥

## याज्ञवल्कीये २४८ श्लोकः

ननु विसर्जनस्य पूर्वमुक्तत्वात्पुनरिदं कृत्वा विप्रविसर्जनोक्तिरसंबद्धाऽत आह । **एतश्चेति** । पूर्वशेषत्वमेवास्येत्याह । **आशीर्मन्त्रेति** । **जपादूर्ध्वमित्य**नेन प्रियवाक्कथनप्रणिपातोत्तरमिदं ततः पूर्वं वेति सूचितम् । तथा च यद्विप्रान् विसर्जयेदिति तदिदं कृत्वेति मूलार्थो बोध्यः । **पराशरोऽपि** ।

"न्युब्जीकृतार्घ्यपात्रं तु कृत्वोत्तानं च संस्रवान् । कृत्वा पिण्डेष्वतो विप्रान् पितृपूर्वं विसर्जयेत्" ॥इति संस्रवाणां पिण्डेषु दानं तृतीयपात्रेणाच्छादनपक्षे ॥ २४८ ॥

## याज्ञवल्कीये २४९ श्लोकः

ततः कृत्यमाह । **प्रदक्षिणमिति** । क्रियाविशेषणमिदम् । व्युत्क्रमेणान्वय इत्याह । **अनन्तरमिति** ।

**ब्राह्मे ।**

"पृषदाज्यं समादाय विप्रपादान्प्रसेचयेत् । गन्धोदकादिभिः क्षाल्य प्रणिपत्य प्रसादयेत्" ॥ इति । क्षाल्येत्यार्षम् । **बृहस्पतिः**

"अद्य मे सफलं जन्म भवत्पादादिवन्दनात् । अद्य मे वंशजाः सर्वे याता वोऽनुग्रहाद्दिवम् ॥

"पत्रशाकादिदानेन क्लेशिता यूयमीदृशाः । तत्क्लेशजातं चित्तात्तु विस्मृत्य क्षन्तुमर्हथ" ॥ इति । ततः

"मन्त्रहीनं क्रियाहीनं भक्तिहीनं द्विजोत्तमाः । श्राद्धं संपूर्णतां यातु प्रसादाद्भवतां मम" ॥ इति प्रार्थयेत् । तेऽपि सर्वे 'संपूर्णमस्त्विति' ब्रूयुः ।

**वसिष्ठः** । "श्राद्धावसाने कर्तव्या द्विजैरत्र गुणस्तुतिः" ॥ इति । **वृद्धयोगी**

"बहिः प्रदक्षिणं कुर्यात्पदान्यष्टावनुव्रजेत् । बन्धुवर्गेण सहितः पुत्रभार्यासमन्वितः" ॥ इति । तत उच्छेषणमार्जनं **मनुः** ( अ. ३ श्लो. २६५ ) ।

"उच्छेषणं तु तत्तिष्ठेद्यावद्विप्रा विसर्जिताः" ।इति गच्छेयुरिति शेषः ।

मार्जितोच्छिष्टप्रतिपत्तिं **प्रचेताः** ।

"खनित्वा निक्षिपेद्भूमावन्यथा स्पर्शसंभवात् । निषिद्धं स्पर्शनं तेषां तस्मात्खननमुत्तमम्" ॥ इति । सायं मार्जनेऽप्येवमेव । **ब्राह्मे तु** ।

"अस्तं याते ततः सूर्ये विप्रपात्राणि चाम्भसि । निक्षिपेत्प्रयतो भूत्वा सर्वाण्यधोमुखान्यपि ॥

"द्वितीयेऽहनि पात्राणां सर्वेषां चालनं तथा । अनन्ता जायते तृप्तिः पितॄणां चैव सर्वदा" ॥ इति उक्तम् । **ततो वैश्वदेवः** । स चोच्छिष्टमार्जनोत्तरम् । "ततो गृहबलिं कुर्यादिति" (३।२६५) **मनूक्तेः** । **ब्रह्माण्डे** तु

"वैश्वदेवाहुतीरग्नावर्वाक्ब्राह्मणभोजनात् । भूतयज्ञादिकं यत्तु श्राद्धं कृत्वा तु तत्स्फुटम्" ॥इति । इतश्चाग्नौ करणानन्तरं वैश्वदेवहोमः । भूतयज्ञादिदेवश्राद्धान्त इति प्रतीयते । **भविष्ये** तु

"पितॄन्संतर्प्य विधिवद्बलिं दत्वा विधानतः । वैश्वदेवं ततः कुर्यात्पश्चाद्ब्राह्मणवाचनम्" ॥ इति । अत्र बलिशब्देन विकिरः । तत्रैवाग्रे तथोक्तेः । एवं च विकिरानन्तरं कृतन्नवैश्वदेवं कर्म । **आश्वलायनानां** तु किंचिन्निषेधेन **मनू**क्तसंग्रहस्य वृत्तिकृदुक्तत्वाच्छ्राद्धान्ते एव सः । तत्राहिताग्नीनां विशेषो **लौगाक्षिस्मृतौ** ।

"पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः । पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः" ॥ इति ।

पक्षान्तं कर्म दर्शपूर्णमासादिपूर्वाङ्गमन्वाधानाख्यम् पिण्डयज्ञः पिण्डपितृयज्ञः । अन्वाहार्यं दर्शश्राद्धम् । क्रमस्तु स्मृतावेव एकादशाहिके तु साग्नेरपि श्राद्धान्त एवेति **शालङ्कायनः** । यच्छ्राद्धादौ । **वैश्वदेवकरणे दोषश्रवणं** तदनग्निपरमत्र साग्निः सर्वोऽपि । तत्र येषामादौ मध्ये वा **वैश्वदेवस्तेषां वैश्वदेवार्थं पृथक्पाक एव** ।

"पित्रर्थं निर्वपेत्पाकं वैश्वदेवार्थमेव च । वैश्वदेवं न पित्रर्थं न दार्शं वैश्वदेविकम्" ॥ इति **लौगाक्षेः** । ननु श्राद्धान्ते वैश्वदेवेऽपि तुल्यमेतत् । अत एव **पैठीनसिः** ।

"पितृपाकात्समुद्धृत्य वैश्वदेवं करोति यः । आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते" ॥

इति चेन्न तदुद्देशेन श्राद्धे कृते तत्संबन्धनिवृत्तेर्न दोष इति **मदनपारिजातादयः ।** यदा तु श्राद्धशेषाभावस्तदाऽर्थात्पृथक्पाक एव । न हि श्राद्धशेषेणैवेति नियमोऽस्ति । तस्माच्छ्राद्धान्ते वैश्वदेवपक्षे श्राद्धशेषेण पाकान्तरेण वा वैश्वदेव **इत्यभियुक्ताः ।**

यत्तु

"वृद्धावादौ क्षये चान्ते मध्ये जुह्वति पर्वणि । महालये च पिण्डान्ते वैश्वदेवो विधीयते" ॥

इति तत्र मूलेऽनाश्वासः । नित्यश्राद्धविषये तु

"नित्यश्राद्धं न कर्तव्यं प्रसंगाद्यत्र सिद्ध्यति । श्राद्धान्तरे कृतेऽन्यत्र कर्तव्यमिति निश्चयः" ॥

तेन यत्र षट्पुरुषश्राद्धं तत्र प्रसंगादेव सिद्धेर्न पुनरावृत्तिः । येषां तु नित्यश्राद्धेऽपि मातामहा अनावश्यकास्तेषां तु त्रिपुरुषेऽपि नावृत्तिरि**त्यभियुक्ताः ।** तस्य प्रक्रिया तु वैश्वदेववत् । नित्यश्राद्धं तु श्राद्धान्तरे कृते सति कृताकृतमिति **दीक्षितो**क्तेरप्ययमेवाशयः । 'श्राद्धशेषेणैवोभयमिति' तदुक्तिरपि संभवाभिप्रायेति बोध्यम् । सा च प्रसंगासिद्धिरुक्ता **कालादर्शे**

"नित्यदार्शिकयोश्चोदकुम्भमासिकयोरपि । दार्शिकस्य युगादेश्च दार्शिका लभ्ययोगयोः ।

"दार्शिकस्य च मन्वादेः संपाते श्राद्धकर्मणाम् । प्रसंगादितरस्यापि सिद्धेरुत्तरमाचरेत्" ॥

इति नित्यदार्शिकश्राद्धसंनिपाते दर्शश्राद्धेनैव नित्यसिद्धिः पश्वर्थमनुष्ठितैः प्रयाजैरिव पशुपुरोडाशेन चाविनिगमकाद्वैपरीत्यं पिण्डाद्यङ्गबहुलत्वेन दर्शस्यावश्यकत्वात् । अत एव संक्रात्यादिश्राद्धैर्दर्शस्य गृह्यमाणविशेषतया न तन्त्रमितियुगादिनिमित्तकं संक्रान्तिनिमित्तकं व्यतीपातनिमित्तकममानिमित्तकं चेत्येतानि श्राद्धानि तन्त्रेण करिष्ये इति न तत्र संकल्पः । यत्र तु निमित्तानां यौगपद्यं संप्रतिपन्नदेवताकत्वं च तत्रागृह्यमाणविशेषत्वान्न्यायलभ्यमेव तन्त्रमिति दर्शभिन्नोक्तविषये तथा संकल्पः । एवमन्यत्राऽपि प्रसंगे तु संकल्पे तदनुल्लेखेऽपि तस्य सिद्धिरिति बोध्यम् । तथा मासिकेनैवोदकुम्भश्राद्धसिद्धिः । एवं माघ्याममायां युगादिश्राद्धेनैव दार्शिकसिद्धिः । तथा ग्रहणार्धोदयाद्यलभ्ययोगश्राद्धेनैव दार्शिकसिद्धिः एवं फाल्गुनामायां मन्वादिश्राद्धेनैव दार्शिकसिद्धिरिति तदर्थः ।

ननु दर्शे पिण्डदानमङ्गंयुगादौ तद्भावोऽङ्गं तथा च **बृहत्पराशरः ।**

"युगादिषु मघायां च विषुवेऽप्ययने तथा । भरणीषु च कुर्वीत पिण्डनिर्वपणं न हि" ॥ इति ।

**ब्राह्मे**ऽपि

"यदा च श्रोत्रियोऽभ्येति गृहं वेदविदग्निवित् । तेनैकेन तु कर्तव्यं श्राद्धं विषुववच्च तत्" ॥

विषुमवत् अपिण्डम् । **पाद्मे**ऽपि

"अयनद्वितये श्राद्धं विषुवद्वितये तथा । संक्रान्तिषु च कर्तव्यं पिण्डनिर्वपणादृते" ॥ इति ।

"पुत्रे जाते व्यतीपाते ग्रहणे चन्द्रसूर्ययोः । श्राद्धं कुर्यात्प्रयत्नेन पिण्डनिर्वपणादृते" ॥ इति ।

'अद्य प्रतिसांवत्सरिकं श्राद्धं भविष्यति तत्र भवद्भिर्विश्वेदेवार्थे क्षणः प्रसादश्च कर्तव्यः' 'करिष्याम' इति प्रतिवचनम् । ततः प्राचीनावीती पूर्ववत् 'पित्राद्यर्थे क्षणः प्रसादश्च कर्तव्यः' । 'अक्रोधनैः' इति तान्संप्रार्थ्य तत उपवीती आत्मादिशुद्ध्यर्थं प्रायश्चित्तसूक्तजपं करिष्ये । "यद्देवादेवहेलनं देवासश्चकृमा वयम् । आदित्यास्तस्मान्मामुञ्चतर्तस्यर्तेनमामित" ।

"देवाजीवनकाम्यायद्वाचानृतमूदिम । तस्मान्न इह मुञ्चत विश्वेदेवाः सजोषसः । ऋतेन द्यावापृथिवी ऋतेन त्वꣳ सरस्वति । कृतान्नः पाह्येनसो यत्किंचानृतमूदिम । इंद्राग्नी मित्रावरुणौ सोमो धाता बृहस्पतिः । ते नो मुञ्चन्त्वेनसो यदन्यकृतमारिम । सजातशꣳसादुतजामिशꣳसाज्ज्यायसः शꣳसादुतवाकनीयसः । अनाधृष्टंदेवकृत यदेनस्तस्मात्त्वमस्मांजातवेदो मुमुग्धि । यद्वा चायन्मनसा बाहुभ्यामूरुभ्यामष्ठीवद्भ्याꣳशिश्नैर्यदनृतं चकृमा वयम् । अग्निर्मा तस्मादेनसः प्रमुञ्चतु चकृमयानिदुष्कृता । येन त्रितो अर्णवान्निर्बभूव येन सूर्यं तमसो निर्मुमोच । येनेन्द्रो विश्वा अजहादरातीस्तेनाहं ज्योतिषा ज्योतिरानशान अक्षि । यत्कुसीदमप्रतीतं मयेह येन यमस्य निधिनाचरामि । एतत्तदग्ने अनृणो भवामि जीवन्नेव प्रति तत्ते दधामि । यन्मयि माता गर्भे सत्येनश्च कारयत्पिता । अग्निर्मा तस्मादेनसः प्रमुञ्चतु दुरितायानि चकृम करोतु मामनेन सम् । यदा पिपेष मातरपुत्रः प्रमुदितो धयन् । अहीꣳसितौ पितरौ मया तत्तदग्ने अनृणो भवामि । यदन्तरिक्षं पृथिवीमुतद्यां यन्मातरं पितरं वाजिहिꣳसिम । अग्निर्मा तस्मादेनसः । यदाशसा निशसा यत्पराशसा । यदेनश्चकृमा नूतनं यत्पुराणं । अग्निर्मा तस्मादेनसः. अति क्रामामिदुरितं यदेनः । जहामिरिप्रं परमे सधस्थे । यत्र यन्ति सुकृतो नापि दुष्कृतस्तमारोहामि सुकृतान्नु लोकम् । त्रित देवा अमृजेततेदनस्त्रित एतन्मनुष्येषु मामृजे । ततो मा यदि किंचिदानशे । अग्निर्मा तस्मादेनसः. । दिवि जाता अप्सु जाता या जाता ओषधीभ्यः । अथो या अग्निजा आपः स्ता नः शुन्धन्तु शुन्धनीः । यदापो नक्तं दुरितं चराम यद्वा दिवा नूतनं यत्पुराणम् । हिरण्यवर्णास्तत उत्पुनीत न । इमं मे वरुण० । तत्वायामि० त्वन्नो अग्ने० स त्वन्नो अग्ने० त्वमग्ने अयासि० यददीव्यं नृणमहं बभूवादित्सन्वासंजगरजनेभ्यः । अग्निर्मा तस्मादिन्द्रश्च संविदा नौ प्रमुञ्चताम् । यद्धस्ताभ्यां चकरकिल्बिषाण्यक्षाणां वग्नुमुपजीव्यमानः । उग्रं पश्ये च राष्ट्रभृच्च तान्यप्सरसावनुदत्तामृणानि । उग्रं पश्ये राष्ट्रभृत् किल्बिषाणि यदक्षवृत्तमनुदत्तमेतत् । नेन्नऋणातृणवइत्समानोयमस्य लोके अधिरज्जुराय । अव ते हेडो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः । क्षयन्नस्मभ्यमसुरप्रचेतो राजन्नेनाꣳसिशिश्रथः कृतानि । उदुत्तमं वरुण० इमं मे वरुण० तत्वायामि० त्वन्नो अग्ने० स त्वन्नो अग्ने० संकुसुको विकुसुको निर्ऋथो यश्च निस्वनः । तेयेस्मद्यक्ष्ममनागसोदूराद्दूरमचीचतम् । निर्यक्ष्ममचीचतेकृताम्निर्ऋतिं च । तेनयोऽस्मत्समृच्छातैतमस्मैप्रसुवामसि । दुःशꣳसानुशꣳसाभ्यां घणेनानुघणेन च । तेनभ्यो १ स्मत्समृच्छातैतमस्मैप्रसुवामसि । संवर्चसा पयसा संतनूभिरगमन्महिमनसा स ꣳशिवेन । त्वष्टा नो अत्र विदधातुरायोनुमार्ष्टुतन्वो १ यद्विलिष्टम् । आयुष्टे विश्वतो दधदयमग्निर्वरेण्यः । पुनस्ते प्राण आयतिपरायक्ष्मꣳसुवामि ते । आयुर्दाअग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि।घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभिरक्षतादिमम्।इममग्न आयुषे वर्चसे कृधि. तिग्ममोजो वरुणसꣳशिशाधि. मा ते वास्मा अदिते शर्म यच्छ विश्वेदेवा जरदष्टिर्यथासत्। अग्न आयूꣳषिपवसआसुवोर्जमिषंच नः । आरे बाधस्वदुच्छुनां, अग्ने पवस्वस्वपाअस्येवर्चःसुवीर्यम् । दधद्रयिं

१ जिघ्नमानः ।

मयिपोषम् । अग्निर्ऋषिः पवमानः पांचजन्यः पुरोहितः । तमीमहेमहागयम्. । अग्ने जातान्प्रणुदानः सपत्नान्प्रत्यजातां जातवेदो नुदस्व. । अस्मेदीदिहिसुमना अहेलं छर्मंते स्याम त्रिवरूथ उद्भौ । सहसा जातान्प्रणुदानः सपत्नान्प्रत्यजातां जातवेदो नुदस्व । अधि नो ब्रूहि सुमनस्यमानो वयऽस्यामप्रणुदानः सपत्नान् । अग्ने यो नोऽभितो जनो वृको वारो जिघाऽसाति। ताऽस्त्वं वृत्रहं जहि वस्वस्मभ्यमाभर । अग्नेयोनोऽभिदासातिसमानो यश्चनिष्ट्यः । तं वयऽसमिधं कृत्वा तुभ्यमग्ने पिदध्मासि। यो नः शपादशपतो यश्च नः शपतः शपात् । उषाश्च तस्मै निम्रुक् च सर्वं पापऽसमूहतां । यो नः सपत्नो योरणो मर्तोऽभिदासति देवाः । इध्मस्येव प्रक्षायतो मातस्योच्छेष किंचन । यो मां द्वेष्टि जातवेदो यंचाहं द्वेष्मि यश्च माम् । सर्वाऽस्तानग्ने संदहयाऽश्चाहं द्वेष्मि ये च माम्। यो अस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः । निन्द्राद्यो अस्मां दिप्साच्च सर्वाऽस्तान्मष्म षाकुरु । सऽशितं मे ब्रह्म सऽशितं वीर्यं बलम् । सऽशितं क्षत्रं मे जिष्णु यस्याहमस्मि पुरोहितः। उदेषां बाहू अतिरमुद्वर्चो अथो बलम् । क्षिणोमि ब्रह्मणामित्रानुन्नयामि स्वाऽअहम् । पुनर्मनः पुनरायुर्म आगात्पुनश्चक्षुः पुनःश्रोत्रं म आगात् । पुनः प्राणः पुनराकूतं म आगात् पुनश्चित्तं पुनराधीतं म आगात् । वैश्वानरो मे दब्धस्तनूपा अवबाधतां दुरितानि विश्वा। वैश्वानराय प्रतिवेद् यामो यदीनृणऽसंगरो देवतासु।स एतान्पाशान्प्रमुंचन्प्रवेद सनोमुञ्चातुदुरितादवद्यात् । वैश्वानरः पवयान्नः पवित्रैर्यत्संगरमभिधावाम्याशाम् । अनाजानन्मनसायाचमानो यदत्रैनो अव तत्सुवामि । अमी ये सुभगे दिवि विचृतौ नाम तारके । प्रेहामृतस्य यच्छतामेतद्बद्धकमोचनम् । विजिहीर्ष्व लोकान्कृधि बंधान्मुञ्चासिबद्धकम् । योनेरिव प्रच्युतो गर्भः सर्वान्यथो अमुष्व सप्रजानन्प्रतिगृभ्णीत विद्वान्प्रजापतिः प्रथमजाऋतस्य । अस्माभिर्दत्तंजरसः परस्तादच्छिन्नं तंतुमनुसंचरेम । ततंतंतुमन्वेके अनुसंचरन्ति येषां दत्तं पित्र्यमायनवत् । अबंध्वेके ददतः प्रयच्छाद्दातुं चेच्छक्नवाऽसस्वर्ग एषां । आरभेथामनुसऽरभेथाऽसमानं पथांमवथो घृतेन । यद्वां पूर्तं परिशिष्टंयैदग्नीतस्मै गोत्रायेह जायापतीसऽरभेथाम् । यदन्तरिक्षं पृथिवी मुत द्यां यन्मातरं पितरं वा जिहिऽसिम । अग्निर्मा तस्मादेनस उन्नोनेषत्दुरितायानिचकृम । भूमिर्मातादितिर्नोजनित्रं भ्रातान्तरिक्षमभिशस्त एनः । द्यौर्नः पिता पितृयाच्छंभवासिजामिमित्वामाविवित्सिलोकात् । यत्र सुहार्दः सुकृतो मदंते विहाय रोगं तन्वा १ ऽस्वायाम् । अश्लोणांगैरह्रुताः स्वर्गे तत्र पश्येम पितरं च पुत्रम् । यदन्नमद्म्यनृतेन देवा दास्यन्नदास्यन्नुत वा करिष्यन्। यद्देवानां चक्षुष्या गो अस्ति यदेव किंच प्रतिजग्राहमग्निर्मा तस्मादनृणं कृणोतु। यदन्नमग्निबहुधाविरूपं वासो हिरण्यमुत गामजाविम्।यद्देवानां चक्षुष्या गो अस्ति यदेव किं च प्रतिजग्राहमग्निर्मा तस्मादनृणं करोतु। "यन्मया मनसा वाचा कृतमेनः कदाचन । सर्वस्मात्तस्मान्मेलितो मोग्धि त्वऽहि वेत्थ यथातथम्" । ततस्तदङ्गत्वेन तिलोदकं यवोदकं च करिष्ये । "इमं मे गङ्गे यमुने सरस्वति शुतद्रिस्तोमऽसचतापरुष्णिया । असिक्नियामरुद्वृधेऋतस्ययार्जीकीयेशृणुह्यासुषोमया" जलम् । "शरासः कुशरासो दर्भासः सैर्याउत. । मौञ्जाअवृष्टा वैरिणः सर्वे साकं न्यलिप्सत" । चटम् ।

"यवोऽसि धान्यराजो वा वारुणो मधु संयुतः । निर्णोदः सर्वपापानां पवित्रमृषिभिः स्मृतम्" ॥

यवान् ।

"तिलोऽसि सोमदेवत्यो गोसवे देवनिर्मितः । प्रत्नवद्भिः प्रत्तः स्वधया पितॄन्मिमाँल्लोकान्प्रीणयाहि नः स्वधा नमः" । तिलान् ।

"गन्धद्वारां धुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्" ॥

गन्धान् ।

"आयने ते परायणे दूर्वारोहं तु पुष्पिणीः॥ ह्रदाश्च पुण्डरीकानि समुद्रस्य गृहा इमे" ।

पुष्पाणि ।

"पवमानः सुवर्जनः । पवित्रेण विचर्षणिः । यः पोता स पुनातु मा । पुनन्तु मा देवजनाः । पुनन्तु मनवोधिया । पुनन्तु विश्व आयवः । जातवेदः पवित्रवत् । पवित्रेण पुना हि मा । शुक्रेण देवदीयत । अग्नेक्त्वा क्रतु५रनु । यत्ते पवित्रमर्चिषि । अग्ने विततमन्तरा । ब्रह्म तेन पुनीमहे । उभाभ्यां देवसवितः । पवित्रेण सवेन च । इदं ब्रह्म पुनीमहे । वैश्वदेवी पुनती देव्यागात् । यस्यै बह्वीस्तनुवो वीतपृष्ठाः । तया मदन्तः सदमाद्येषु । वय५स्याम पतयो रयीणाम् । वैश्वानरो रश्मिभिर्मा पुनातु । वातः प्राणेनेषिरो मयो भूः । द्यावापृथिवी पयसा पयोभिः । ऋतावरी यज्ञिये मापुनीताम् । बृहद्भिः सवितस्तृभिः । वर्षिष्ठैर्देवमन्मभिः । अग्ने दक्षैः पुनाहिमा । येन देवा अपुनत । येनापो दिव्यंकशः । तेन दिव्येन ब्रह्मणा । इदं ब्रह्म पुनीमहे । यः पावमानीरध्येति । ऋषिभिः संभृत५रसम् । सर्व सपूतमश्नाति । स्वधितं मातरिश्वना । पावमानीर्यो अध्येति । ऋषिभिः संभृत५रसम् । तस्मै सरस्वतीदुहे । क्षीर५सर्पिर्मधूदकम् । पावमानीः स्वस्त्ययनीः । सुदुघा हि पयस्वतीः । ऋषिभिः संभृतो रसः । ब्राह्मणेष्वमृत५हितम् । पावमानीर्दिशन्तु नः । इमं लोकमथो अमुम् । कामान्समर्धयन्तु नः । देवीर्देवैः समाभृताः । पावमानीः स्वस्त्ययनीः । सुदुघा हि घृतश्च्युतः । ऋषिभिः संभृतो रसः । ब्राह्मणेष्वमृत५हितम् । येन देवाः पवित्रेण । आत्मानं पुनते सदा । तेन सहस्रधारेण । पावमान्यः पुनन्तु मा । प्राजापत्यं पवित्रम् । शतोद्याम५हिरण्मयं । तेन ब्रह्मविदो वयम् । पूतं ब्रह्म पुनीमहे । इन्द्रः सुनीतीसह मा पुनातु । सोम स्वस्त्या वरुणः समीच्या । यमो राजाप्रमृणाभिः पुनातु मा । जातवेदा मोर्जयंत्या पुनातु । शुची वो हव्या मरुतः शुचीना५ शुची५हिनोम्यध्वर५ शुचिभ्यः । ऋतेन सत्यमृतसाप आयन् शुचिजन्मानः शुचयः पावकाः । अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः । शुची रोचत आहुतः । उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते तव ज्योती५ष्यर्चयः ।

"अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा । यः स्मरेत्पुण्डरीकाक्षं सबाह्याभ्यन्तरः शुचिः"॥ इति स्वांगं श्राद्धभूमिं च प्रोक्ष्य ।

"समस्तसंपत्समवाप्तिहेतवः समुत्थितापत्कुलधूमकेतवः ।
अपारसंसारसमुद्रसेतवः पुनन्तु मां ब्राह्मणपादपांसवः ॥
"आपद्घनध्वान्तसहस्रभानवः समीहितार्थार्पणकामधेनवः ।
समस्ततीर्थाम्बुपवित्रमूर्तयो रक्षन्तु मां ब्राह्मणपादपांसवः ॥

"विप्रौघदर्शनात्क्षिप्रं क्षीयन्ते पापराशयः । वन्दनान्मङ्गलावाप्तिरर्चनादच्युतं पदम् ॥

"आधिव्याधिहरं नृणां मृत्युदारिद्र्यनाशनम् । श्रीपुष्टिकीर्तिदं वन्दे विप्रश्रीपादपङ्कजम्" ।

"यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति तस्माद्ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवे नमस्कुर्यान्नाश्लीलं कीर्तयेदेता एव देवताः प्रीणाति ।

"अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः । भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा"॥ इति

ब्राह्मणान्संप्रार्थ्य प्राचीनावीती "पित्रादीनां गोत्राणां शर्मणां वसुरु. प्रत्याब्दिकश्राद्धं कर्तुं ममाधिकारसंपदस्त्विति भवन्तो 'ब्रुवन्तु' अस्तु श्राद्धाधिकारसंपत्। 'श्राद्धस्य मुख्यकालोस्त्विति भ.' 'मुख्य कालोऽस्तु.' 'पाकादीनां पवित्रतास्त्विति' 'पाकादीनां प.'। सव्येन नेत्रस्पर्शनं प्राचीनावीती पूर्वोच्चरित "एवम् पित्रादीनां गोत्राणां शर्मणां वसुरु० उपवीती पुरूरवआर्द्रवसंज्ञकानां विश्वेषां देवानां च प्रत्याब्दिकश्राद्धं सदैवं सपिण्डं मासिश्राद्धविधिना अन्नेन हविषा युष्मदनुज्ञया सद्यः करिष्ये" 'कुरुष्व'। ततः पूर्ववत्सव्यापसव्याभ्यां 'अद्यात्र प्रत्याब्दिकश्राद्धं भविष्यति तत्र पुरू. त्वया क्षणः प्रसादश्च करणीयः' 'करिष्यामि'। इत्यादि प्रकारेण द्वितीयामन्त्रणं कार्यम्। ततोऽङ्गणेऽवटं खात्वा तत्र पाद्यादि दद्यात्। उपवीती सितवस्त्रधरो धृतत्रिपुण्ड्ररुद्राक्षस्तादृशानेव ब्राह्मणान् कृत्वा गोमयेनोपलिप्योत्तरे चतुरस्रेऽवटे उदगग्रान्दर्भान्संस्तीर्य दक्षिणे वर्तुलेऽवटे दक्षिणाग्रान्दर्भान्संस्तीर्य गन्धपुष्पैरभ्यर्च्य उत्तरे दैविकं ब्राह्मणं प्राङ्मुखमुपवेश्य तत्पादाववटे निधाय दक्षिणं जान्वाच्याञ्जलौ पात्रे वा शुद्धं जलं दर्भद्वययवचन्दनपुष्पसहितमादाय 'देवाः स्वागतं' 'सुस्वागतं'। देवाः अन्नं न मम गन्धं न मम यवाक्षतपुष्पं न मम।

"नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे।
सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटियुगधारिणे नमः"॥

अत्र प्रत्याब्दिकश्राद्धे "पुरूरवआर्द्रवसंज्ञका विश्वेदेवा इदं वः पाद्यं" पवित्रे निष्कास्य सुपाद्यं देवतीर्थेन द्विः "शन्नोदेवीरभिष्टय आपो भवन्तु पीतये शंयोरभिस्रवन्तुनः"। इति पादौ प्रक्षालयेत्। एवं पुनः। ततः प्राचीनावीती दक्षिणेऽवटे पित्राद्यर्थमुदङ्मुखं ब्राह्मणमुपवेश्य तत्पादाववटे निधाय दक्षिणामुखः सव्यं जान्वाच्य दर्भत्रयतिलसहितं जलं पूर्ववदादायोपवीती 'पितः स्वागतं' 'सुस्वागतम्'। ततः प्राचीनावीती पितः अन्नं न मम गन्धमित्यादिनाऽभ्यर्च्य "इदं पितृभ्यो नमो अस्त्वद्य ये पूर्वासो य उपरास ईयुः। ये पार्थिवे रजस्यानिषत्ता येवानूनं सु वृजनासु विक्षु। पितः गोत्रशर्मन् वसुरूप इदं ते पाद्यमिति" पितृतीर्थेन त्रिः सुपाद्यमित्यादि। पवित्रे निष्कास्य "शन्नोदेवीर." । ततो ब्राह्मणान्द्विराचमय्य सव्येन पादौ प्रक्षाल्य द्विराचम्य मण्डलादेरे ततो गृहमेत्य प्रागग्रौ दर्भौ दक्षिणाग्रान्दर्भान्तित्र संस्थाप्य। भूर्भुवः सुवरिति यथाक्रमं ब्राह्मणानुपवेशयेत्। 'देवताभ्यः' इति जपित्वा पूर्वोच्चरित.। पुण्यतिथौ 'उपक्रान्तं श्राद्धकर्म करिष्ये' 'कुरुष्व'। "अपहता असुरा रक्षांसि पिशाचाः। ये क्षयंति पृथिवीमनु अन्यत्रेता गच्छन्तु। यत्रैतेषां गतं मनः" इति परितस्तिलान्विकीर्य "उदीरतामवर उत्परास उन्मध्यामः पितरः सोम्यासः। असुं य ईयुरवृकाऋतज्ञास्तेनोवन्तु पितरो हवेषु" इति कुशोदकेन श्राद्धभूमिं प्रोक्ष्य गृहभूमिरियं गयागदाधरोऽत्र सन्निहित इति ध्यात्वान्तादण्डवत्प्रणम्य 'भवदनुज्ञया प्रत्याब्दिकश्राद्धं प्रवर्तये' प्रवर्तय।

"श्राद्धकाले गयां ध्यात्वा ध्यात्वा देवं गदाधरम्। वस्वादींश्च पितॄन्ध्यात्वा ततः श्राद्धं प्रवर्तये"॥

'प्रवर्तय' सव्येन देवताभ्यः। प्राचीनावीती पितृभ्यश्च.। सव्येन गायत्रीमन्त्रेण पाकप्रोक्षणं 'संपादितपदार्थाः श्राद्धयोग्या भवन्त्विति भवन्तो ब्रुवन्तु' 'श्राद्धयोग्या भवन्तु'। अपो दत्वा. 'पुरूरव. देवानामिदमासनं। सयवान्दर्भान् प्रागग्रान् दक्षिणभागे पूर्वासनोपरि दद्यात्स्वासनमास्यतां धर्मोऽसि' इति विप्रः अपो दत्वा। ब्राह्मणस्य निरङ्गुष्ठदक्षिणहस्तं दक्षिणहस्तेन गृहीत्वा 'भोशर्मन्विश्वेदेवार्थे त्वया क्षणः करणीय' इति तृतीयामन्त्रणम्। ॐ तथेति भोक्ता.। 'प्राप्नोतु भवान्' इति कर्ता

प्राप्नुवानीति प्रतिवचनमपो दत्वा 'पुरूरव. देवानभवत्स्वावाहयिष्ये' इति यवहरतो विज्ञाप्यावाहयेत्यनुज्ञातः "ॐविश्वे देवास आगत शृणुतामइम५.हवंएदं बर्हिर्निषीदत"इत्यावाह्य आगतान्ध्यात्वा कांश्चियवान्ब्राह्मणंदक्षिणपादादिमूर्धान्तं प्रदक्षिणं क्षिप्त्वा"विश्वेदेवाः शृणुतेम५हवं मे ये अन्तरिक्षे य उपद्यविष्ठ । ये अग्निजिह्वाउतवायजत्राआसद्यास्मिन्बर्हिषि मादयध्वम्।ओषधयः संवदन्ते सोमे न सह राज्ञा यस्मै करोति ब्राह्मणस्त५ राजन्पारयामसि । आगच्छन्तु महाभागा विश्वेदेवा महाबलाः । ये अत्र विहिताः श्राद्धे सावधाना भवन्तु ते" इत्युपस्थाय यवान्ब्राह्मणपरितो विकीर्यापो दत्वा ततः प्रागग्रेषु दर्भेषु पुटद्वयं प्रागपवर्गं प्रत्येकं दर्भाग्रे यथावकाशं निधाय 'पवित्रेस्थो "वैष्णवीवायुर्वो मनसा पुनातु"इति मन्त्रेण पुटसंख्यया पवित्राणि तृणमन्तर्धाय मन्त्रावृत्त्याऽनखेन छित्वा उपस्पृश्यैकैकमेकैकपुटे निधाय पूर्वाग्रं 'शन्नोदेवी.' 'यवोसि.' 'गन्धद्वारां.' 'आयनेते०' । दर्भैराच्छाद्यापो दत्वा देवपात्रे संपन्ने सुसंपन्ने । "पुरूरव. विश्वेदेवाः संपादिता वः स्वाहार्घ्याः सन्त्वर्घ्याः स्वाहा" पवित्रे प्रागग्रे विप्रहस्ते दत्वार्घ्यपात्रोदकं पात्रान्तरेणादाय पुरूरव. देवाः इदं वोऽर्घ्यमिति द्विर्देवतीर्थेनार्घ्यं दत्वा "या दिव्या आपः पयसा संबभूवुर्या अन्तरिक्ष उत पार्थिवीर्याः' । हिरण्यवर्णा यज्ञियास्ता न आपः शंस्योना सुहवा भव तु" इति स्रवज्जलमनुमन्त्रयेत् अपो दत्वा.पवित्रं विहाय"अर्चत प्रार्चत प्रियमेधासो अर्चत अर्चन्तु पुत्रका उतपुरंनधृष्ण्वर्चत गन्धद्वारां पुरूरवदेवा अमी वो गन्धाः सुगंधाः। अपः । पवित्रे धृत्वा "आयनेते. पुरूरव देवाः" इमानि पुष्पाणि । "सुपुष्पाणि । अपः । "धूरसिधूर्वधूर्वन्तंधूर्वतंयोऽस्मान्धूर्वतितंधूर्वयंवयंधूर्वामः पुरूरव. । देवाः एष वो धूपः" । सुधूपः "उद्दीप्यस्व जातवेदोपघ्नंनिर्ऋतिं मम। पशू५श्च मह्यमावह जीवनं च दिशोदिश" । "पुरूरव. देवाः एष वो दीपः"सुदीपः । अपः । "युवासुवासाः परिवीत आगात्सउश्रेयान्भवति जायमानः। तं धीरासः कवय उन्नयंति स्वाध्यो३मनसा देवयंतः" । 'पुरूरवा. देवाः' इदमाच्छादनं स्वाच्छादनम् । धारणार्थे यज्ञोपवीतं सूपवीतमर्चनविधेः संपूर्णताऽस्तु संकल्पसिद्धिरस्तु सकलाराधनैः स्वर्चितमस्तु न्यूनातिरिक्तं सर्वं विधिवदस्तु । तथाऽस्तु । 'यस्य स्मृत्या.' 'युष्मदनुज्ञया पित्राद्यर्चनं करिष्ये.' कुरुष्व. । प्राचीनावीती, पित्रादेः गोत्रस्य शर्मणः रूपस्यैदमासनमिति सतिलान् दर्भान्द्विगुणभुग्नान्दक्षिणाग्रान् वामभागे पूर्वासनोपरि दद्यात्स्वासनमास्यतां धर्मोऽसि । अपो दत्वा तिलहस्तः पित्रादीन् गोत्रानित्यादिभवत्सु आवाहयिष्ये । आवाहय । "उशंतस्त्वाहवामह उशंतः समिधीमहि । उशं नु शत आवह पितॄन्हविषेअत्तवे" इति प्रत्येकमेकवचनान्तेनावाह्य पित्रादींस्तस्मिन्नागतान्ध्यात्वा कांश्चित्तिलान्मूर्धादिवामपादान्तमपसव्यं क्षिप्त्वा "आयं तु नः पितरः सोम्यासो अग्निष्वात्ताः पथिभिर्देवयानैः । अस्मिन्यज्ञे स्वधया मदंत्वधिब्रुवंतु ते अवन्त्वस्मान्" इत्युपस्थाय"नमो वः पितरो रसाय नमो वः पितरः शुष्माय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो मन्यवे नमो वः पितरो घोराय पितरो नमो वः" इति नमस्कृत्य 'अपहता' इति परितस्तिलान्विकिरेत् । अपो दत्वा विप्राग्रे दक्षिणाग्रेषु दर्भेषु पुटत्रयं दक्षिणापवर्गं प्रत्येकं निधाय प्राग्वत्पुटसंख्यया पवित्राणि निधाय दक्षिणाग्राणि ततः प्राग्वत् 'शं नो देवी.' 'तिलोऽसि सोमदेवत्यो.' 'गन्धद्वारां.' 'आयनेते.' दर्भैराच्छाद्यापो दत्वा पितृपात्राणि संपन्नानि सुसंपन्नानि। संपादिता वः स्वधाऽर्घ्याः संत्वर्घ्याः स्वधा । अपो दत्वा दक्षिणाग्राणि पवित्राणि तद्धस्ते दत्वाऽर्घ्यपात्रोदकं पात्रान्तरेणादायोपवीती प्राचीनावीती वा. वामहस्तान्वारब्धेन दक्षिणहस्तेन पितृतीर्थेन त्रिः पितरिदं तेअर्घ्यमित्यादि । अत्र न गोत्राद्युक्तिः अस्त्वर्घ्यं । "या दिव्या आपः" । 'पृथिवी.' जलमनुमन्त्र्यापो दत्वा ततः प्रपितामहपात्रस्थं पितामहपात्रे आनीय तत्पितृपात्रे आनीय एवं मातृस्थले मातामहस्थले च तज्जलेन मुखमङ्क्त्वा तत्पात्रं पित्र्यविप्रसमीपे वामभागे दर्भेषु 'पितृभ्यः स्थानमसी'त्युत्तानं निधाय तदुपरि

विप्रहस्तवृत्तान्यर्घ्यपात्रपवित्राणि निदध्यात् । प्राचीनावीती । पवित्रे निष्काश्य "अर्चत प्रार्चत." 'गंधद्वारां.' पितः गोत्रशर्मन्रूपअमी ते गन्धाः स्वधा न मम । सुगन्धा इत्यादिपवित्रे धृत्वा आद्यंतयोरपो दत्वा 'आयनेते.' । 'धूरसि.' 'उद्दीप्यस्व.' 'युवासुवासाः प०' यज्ञोपवीतम्. अर्चनविधेः संपूर्णताऽस्तु संकल्पसिद्धिरस्तु सकलाराधनैः स्वर्चितमस्तु न्यूनातिरिक्तं विधिवदस्तु. अस्त्विति प्रतिवचनम्. । उपवीती युष्मदनुज्ञया पात्रासादनं करिष्ये. कुरुष्व । देवद्विजाग्रे गोमयेन चतुरस्रे मण्डले कृत्वा तदुपरि सयवदर्भान्प्रागग्रान्निक्षिप्य महापात्राणि लघुपात्राणि च द्विःपरिमृष्टानि संस्थाप्य प्राचीनावीती पितृविप्राग्रे गोमयेन वर्तुलमण्डलानि कृत्वा तदुपरि सतिलान्कुशान्दक्षिणाग्रान्निक्षिप्य प्रागवत्पात्राणि संस्थाप्य सर्वत्र पात्राणि परितो नैर्ऋतीमारभ्य नैर्ऋत्यन्तं भस्मना चतुरस्रां मर्यादां कृत्वा विप्रहस्तक्षालनं कारयित्वा स्वहस्तौ प्रक्षाल्याचामेत्। ततो ब्राह्मणान्स्वरविशेषेण "उद्ध्रियतामग्नौ च क्रियताम्" इत्यामन्त्र्य तैस्तथैव "काममुद्ध्रियतां काममग्नौ च क्रियताम्" इति प्रत्युक्तो ब्राह्मणभोजनार्थादन्नाद्धविष्यमोदनापूपादिकमेकपात्रे सहकृत्याहविष्यं च क्षारादिसंसृष्टमन्यस्मिन्पात्रे उद्धृत्यान्यपात्रे घृतं चादाय हविष्यं प्रतिष्ठितमभिघार्याग्निमिध्वा प्राचीनावीती पश्चात्पुरस्ताच्च दक्षिणाग्रान्परिस्तीर्य तूष्णीं समन्तमप्रदक्षिणं सकृत्परिषिच्य दर्व्यामुपस्तीर्याङ्गुष्ठपर्वमात्रमवदानधर्मेण द्विरवदाय सकृदभिघार्य जुहोति. "ॐयन्मे मातरौ प्रलुलुभतुश्चरत अननुव्रते. तन्मे रेतः पितावृङ्क्तामाभूरन्योवपद्यतां" वैद्यनाथशर्मणे पित्रे स्वाहा वैद्यनाथशर्मणे पित्रे इदम्. । एवमग्रेऽपि. । यास्तिष्ठन्ति या धावन्ति या आर्द्रोघ्नीः परितस्थुषीः अद्भिर्विश्वस्य भर्त्रीभिरन्तरन्यं पितुर्दधे"- वैद्य०वैद्य० इदम्. "यन्मे पितामही प्रलुलोभ चरत्यननुव्रता. तन्मे रेतः पितामहो वृङ्क्तामाभुरन्योपपद्यतां" महादेवशर्मणे पितामहाय स्वाहा. महा. येदम्. "ॐअन्तर्दधे पर्वतैरन्तर्मह्यापृथिव्याः. आभिर्दिग्भिरनन्ताभिरन्तरन्यं पितामहाद्दधे महादे. यस्वाहा." । महा. येदम् । "यन्मे प्रपितामही प्रलुलोभ चरत्यननुव्रता । तन्मे रेतः प्रपितामहो वृङ्क्तामाभुरन्योपपद्यतां" मेघनाथशर्मणे प्रपितामहाय स्वाहा । मेघ. येदम्. । "अन्तर्दधऋतुभिरहोरात्रैः सुसन्धिभिः अर्धमासैश्च मासैश्चान्तरन्यं प्रपितामहाद्दधे" मेघना. प्रपिता० मेघ. येदम् । पुनरवदायाभिघार्य हविः पुनरभिघार्य "ये चेह पितरो ये च नेह यांश्च विद्मयां उचन प्रविद्म । अग्ने तान्वेत्थ यदि ते जातवेदस्तया प्रत्तं स्वधाया मदन्तु स्वाहा"।ज्ञाताज्ञातपितृभ्य इदं तत आज्याहुतीः स्वाहा । पित्रे. पित्र इदं पित्रे स्वाहा. पित्रे इदं. स्वाहा पित्रे. पित्रे. पित्रे स्वाहा० पित्रे० स्वधा स्वाहा स्वधा इदम्. अग्नये कव्यवाहनाय स्वधा स्वाहा. अग्नये कव्यवाहनायेदम्. एवं मातुरपि कृतोपवीती उभयोरन्नशेषं गृहीत्वा अग्नये स्विष्टकृते स्वाहेति सकृत्स्विष्टकृतं हुत्वा प्राचीनावीती । उदीचीनमुष्णं भस्मापोह्याहविष्यात्किंचिदादाय स्वाहेति हुत्वा अग्नय इदम्. तत उपवीती भूर्भुवः सुवरिति प्रायश्चित्ताहुतीर्हुत्वा प्राचीनावीती तूष्णीं संमंतमप्रदक्षिणं परिषिच्योपवीती "मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृताय जातमग्निम् । कविं संम्राजमतिथिं जनानामासन्नापात्रं जनयन्त देवाः"इति देवपात्रेऽभिघार्य प्राचीनावीती । "आमासु पक्वमैरय आसूर्यं रोहयो दिवि । घर्मं न सामं तपसा सुवृक्तिभिर्जुष्टं गिर्वणसे गिरः" इति पितृपात्राण्यभिघार्याग्नौ करणशेषं पित्रादिपात्रेष्वेव किंचिद्दत्वोपवीती देवपूर्वं स्वयं पत्नी वा अहस्तेनायसादिपात्रभिन्नेन प्रशस्तहविष्यान्नपायसभक्ष्यघृतव्यञ्जनसूपादिकमेण परिविष्य प्राचीनावीती पित्रादिपात्रस्थानानि हविष्याण्यहविष्याणि च सर्वाणि युगपत् प्रत्येकमभिमृश्य प्रत्येकं मन्त्रं पठेत्।एष ते तत मधुमां ऊर्मिः स्वरस्वान्यावानग्निश्च पृथिवी च तावत्यस्य मात्रा तावतीं त एतां मात्रां ददामि यथाग्निरक्षितोऽनुपदस्त एवं मह्यं पित्रेक्षितोऽनुपदस्तः स्वधाभवतांत्वं स्वधांतैः सहोपजीवर्चस्ते महिमा ।

एष ते पितामह मधुमा९ऊर्मिः सरस्वान्यावान्वायुश्चान्तरिक्षं च तावत्यस्य मात्रा तावतीं त एतां मात्रां ददामि यथा वायुरक्षितोऽनुपदस्त एवं मह्यं पितामहायाक्षितोनुपदस्तः स्वधा भवतां त्व९ स्वधांतैः सहोपजीवयजू९षि ते महिमा। एष ते प्रपितामह मधुमा९ऊर्मिः सरस्वान्यावानादित्यश्च द्यौश्च तावत्यस्य मात्रा तावतीं त एतां मात्रां ददामि यथादित्योऽक्षितोनुपदस्त एवं मह्यं प्रपितामहायाक्षितोऽनुपदस्तः स्वधा भवतां त्व९ स्वधांतैः सहोपजीवसामानितेमहिमेति[1]। **सुदर्शनाचार्य**मतेनात्र तृतीयामामन्त्रणं देवे क्षणः कर्तव्य इत्यादि प्राग्वत्। उपवीती हविष्याद्धुतशेषादन्यस्माद्वा एकं ग्रासमादाय विश्वेदेवपात्रे निधाय परिविष्टमभिघार्य विश्वेदेवसमीपे उदङ्मुखो भोजनपात्रं कुशैः परिस्तीर्य सप्रणवव्याहृतिपूर्वकं गायत्र्या प्रोक्ष्य दक्षिणं जान्वाच्य दक्षिणोर्ध्वोत्तानकराभ्यां स्वस्तिकाकारेण पात्रमालभ्य "पृथिवीतेपात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखे जुहोमि। ब्राह्मणानां त्वाप्राणापानयोर्जुहोम्यक्षितमसि मैषांक्षेष्ठा। अमुत्रामुष्मिंल्लोके विश्वेदेवाः शृणुतेम९हवंमये अंतरिक्षे यउपद्यविष्ठ। ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन्बर्हिषि मादयध्वम्" इति पात्रमन्नमभिमन्त्र्य "इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं समूढमस्यपा९सुरे। विष्णो हव्य९ रक्षस्वेति" अनखद्विजांगुष्ठस्य अनुत्तानेन स्वदक्षिणहस्तेन सर्वेष्वन्नेषु निवेशनेनोपस्पर्शयित्वा पात्रसमन्ताद्यवान्विकीर्य वामेन दृढं पात्रं धारयन्नेव दक्षिणेन सयवमुदकमादाय पात्रे 'पुरू. देवादेवता इदमन्नं हव्यं परिविष्टं परिवेक्ष्यमाणं चातृप्तेर्ब्राह्मणस्त्वाहवनीयार्थे काशीगङ्गाव्यतिरिक्तदेशे इयं भूमिर्गया अयं भोक्ता गदाधरः। अन्नं ब्रह्माहं ब्रह्मभोक्ता च ब्रह्म ब्रह्मरूपमन्नं कल्पितसुवर्णपात्रस्थं तदन्यत्रैवाक्षयवटच्छायेयं पुरूरव आर्द्रवसंज्ञकेभ्यो विश्वेभ्यो देवेभ्य इदमन्नममृतरूपं सोपस्कारं सोदकुम्भादिअक्षय्यतुष्ट्यर्थममृतरूपेण स्वाहा हव्यमातृप्तेर्न ममेति यवोदकेन विप्रवामे भूमौ दद्यात्। गयायां समस्तपादेषु दत्तमक्षय्यमस्त्विति तदन्यदेशे. काश्यां विश्वेश्वरपादे दत्तमक्षय्यमस्तु ततो भक्त्या प्रणमेत्। एवं द्वितीयेऽपि। ततो "यदेवादिव्येकादशस्थपृथिव्यामध्येकादशस्थाप्सुषदोमहिनैकादशस्थते-देवायज्ञमिमंजुषध्वम्" इत्युपतिष्ठेत्। ततः प्राचीनावीती प्राग्वद्ग्रासं पात्रे निधायान्नमभिघार्य सव्यं जान्वाच्य दक्षिणामुखः कुशैः परिस्तीर्य तादृशगायत्र्या प्रोक्ष्य वामोर्ध्वोत्तानकराभ्यां स्वस्तिकाकारेण पात्रमालभ्य "पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखे जुहोमि ब्राह्मणां त्वा.', इति पात्रमभिमन्त्र्य "इदं विष्णु. सुरे विष्णो कव्य. रक्षस्वेति" प्राग्वदुपस्पर्शयित्वा "अपहता असुरा. मन" इति पात्रसमन्तात्तिलान्विकीर्य वामेन पात्रं धृत्वा दक्षिणेन सतिलमुदकमादायात्र प्रत्याब्दिकश्राद्धे पितरः पितामहाः मातर इत्यादयो देवता इदमन्नं परिविष्टं परिवेक्ष्यमाणं च कव्यं आतृप्तेरियं भूमिः काशी भोक्तायं विश्वेश्वर अन्नं ब्रह्माहं ब्रह्म भोक्ता च ब्रह्मरूपमन्नं कल्पितरजतपात्रस्थितमन्नमक्षय्यवटच्छायेयं पित्रे गोत्राय शर्मणे रूपाय इदमन्नममृतरूपं सोपस्कारं सोदकुम्भादि अक्षय्यतुष्ट्यर्थमातृप्तेरमृतरूपेण कव्यं स्वधा न ममेति तिलोदकेन विप्रदक्षिणे भूमौ दद्यात्। काश्यां वि. मस्तु भक्त्या प्रणमेत्. । एवं पितामहादौ "ये चेह पितरो ये च नेह या९श्च विद्मया९ उचन प्रविद्म. अग्ने तान्वेत्थ यदि ते जातवेदस्तथाप्रत्तः स्वधया मदन्तु" इत्युपस्थाय।

"पितापितामहश्चैव तथैव प्रपितामहः। तृप्तिं प्रयान्तु वै भक्त्या यदिदं श्राद्धमाहितम्॥

1 बालंभट्टमतेनायं पाठ एव काश्यां साधीयान्।

"मातामहस्तृप्तिमुपैतु तस्य तथा पिता त्वस्य पितामहोऽन्यः ।
"विश्वे च देवाः परमां प्रयान्तु तृप्तिं प्रणश्यंतु च यातुधानाः ॥
"यज्ञेश्वरो हव्यसमस्तकव्यभोक्ताऽव्ययात्मा हरिरीश्वरोऽत्र ।
"तत्सन्निधानादपयन्तु सद्यो रक्षांस्यशेषाण्यसुराश्च सर्वे ॥

"देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च । नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ॥
"सप्त व्याधा दशार्णेषु मृगाः कालाञ्जने गिरौ । चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे ॥
"तेऽभिजाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः । प्रस्थिता दीर्घमध्वानं यूयं तेभ्योऽवसीदथ ॥
"अमूर्तानां च मूर्तानां पितॄणां दीप्ततेजसाम् । नमस्यामि सदा तेषां ध्यायिनां योगचक्षुषाम् ॥

"चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च । हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु" ॥ इति जप्त्वा सकुशतिलोदकमादाय ।

"ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् । ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म समाधिना ॥
"हरिर्दाता हरिर्भोक्ता हरिरन्नं प्रजापतिः । हरिर्विप्रशरीरस्थो भुङ्क्ते भोजयते हरिः ॥

"चतुर्भिश्च चतुर्भिश्च. दतु । येषामुद्दिष्टं तेषामक्षय्यातृप्तिरस्तु इति भूमौ जलं विसृज्य नैवेद्यमर्पयित्वा ।

"एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः । त्रींल्लोकान्व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः" ॥

अनेन ब्राह्मणभोजनेन पितृरूपी जनार्दनवासुदेवः प्रीयतां न ममेति भूमौ तादृशं जलं निक्षिप्य नमस्कृत्य ।

"ईशानविष्णुकमलासनकार्तिकेयवह्नित्रयार्करजनीशगणेश्वराणाम् ।
क्रौञ्चामरेन्द्रकलशोद्भवकश्यपानां पादान्नमामि सततं पितृभक्तिहेतून्" ॥ इदमपि काशीत अन्यत्र ।

"अन्नहीनं क्रियाहीनं मन्त्रहीनं च यद्भवेत् । भक्तिहीनं च तत्सर्वमच्छिद्रं मेऽस्तु सर्वदा" ॥

इति संप्रार्थ्य तथास्त्विति तैरुक्ते उपवीती परिविष्टेषु अन्नेषु सर्पिरासिच्य मधु च दत्वा "ॐभूर्भुवः सुवः ॐतत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्" "मधुवाता ऋतायते मधु क्षरंति सिंधवः । माध्वीर्नः सन्त्वोषधीः । मधुनक्तमुतोषसि मधुमत्पार्थिव५रजः । मधुद्यौरस्तु नः पिता । मधुमान्नो वनस्पतिर्मधुमा५अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः । मधु मधु मधु" इति जपित्वा वामहस्ते पात्रान्वारम्भं कारयित्वा 'सत्यं त्वर्तेनेति' प्रोक्षणपूर्वकं पृथक् पृथक् परिषेचयित्वा विप्रहस्तेषु अपोशनार्थमुदकं दत्वा बलिदानवर्ज्यं "श्रद्धायां प्राणे निविष्टोऽमृतं जुहोमि । श्रद्धायामपाने निविष्टोऽमृतं जुहोमि । श्रद्धायां व्याने निविष्टोऽमृतं जुहोमि । श्रद्धायामुदाने निविष्टोऽमृतं जुहोमि । श्रद्धाया५समाने निविष्टोऽमृतं जुहोमि । ब्रह्मणि म आत्मामृतत्वायामृतोपस्तरणमसि" इत्यपः प्राशयित्वा । "श्रद्धायां प्राणे

निविष्टोऽमृतं जुहोमि । शिवो मा विशाप्रदाहाय । प्राणाय स्वाहा। श्रद्धायामपाने निविष्टोऽमृतं जुहोमि । शिवो मा विशाप्रदाहाय । अपानाय स्वाहा । श्रद्धायां व्याने निविष्टोऽमृतं जुहोमि । शिवो मा विशाप्रदाहाय । व्यानाय स्वाहा । श्रद्धायामुदाने निविष्टोऽमृतं जुहोमि । शिवो मा विशाप्रदाहाय । उदानाय स्वाहा । श्रद्धायाꣳसमाने निविष्टोऽमृतं जुहोमि । शिवो मा विशाप्रदाहाय । समानाय स्वाहा । ब्रह्मणि म आत्मामृतत्वाय'' । नेत्रस्पर्शयित्वोदङ्मुखो देवेभ्यः स्वाहा नममेति वदन् वारिधारां भूमौ क्षिपेत् । ततः प्राचीनावीती पितृसमीपे दक्षिणामुखः । 'पितृभ्यः स्वधा न मम' इति घृतधारां क्षिपेत् ततो भुञ्जानेषु आहवनीयार्थत्वेन विश्वेदेवब्राह्मणान् पित्रादित्वेनान्नं चामृतत्वेनात्मानं च ब्रह्मत्वेन ध्यात्वा गन्धपुष्पाक्षतैर्नमस्कृत्य ''अमृतं भोज्यतां यथासुखं जुषध्वम्'' ।

''अपेक्षितं याचितव्यं त्याज्यं चैवानपेक्षितम् । उपविश्य सुखेनैव भोक्तव्यं स्वस्थमानसैः ॥

''विद्यमानेषु शा०'' ते च वामहस्तेन मुख्यपात्रमाभोजनं धृत्वा अन्तर्जानु मौनेनाशब्देन चातृप्तेर्भुञ्जीरन् । ततः पराङावृत्य उपवीती गायत्र्यादि श्रावयिष्ये श्रावयेत्यनुज्ञातः श्रावयेत् । तृप्तान् ज्ञात्वा 'मधुवाता' इति तृचं 'अक्षन्नमीमदंत ह्यवप्रिया अधूषत अस्तोषत स्वभानवो विप्रानविष्टया मती । योजान्विंद्रते हरी' इति संश्राव्य 'पुरूर. देवास्तृप्ताः स्थ' 'तृप्ताः' स्म प्राचीनावीती पित्रादयः गोत्राः शर्माणः रूपाः तृप्ताः स्थ तृप्ताः स्मः । ततः पित्राद्युच्छिष्टसंनिधौ दर्भत्रयं दक्षिणाग्रं निधाय तत्र तिलोदकं दत्वा सर्वव्यञ्जनाद्युपेतं जलतिलसहितमन्नमादाय षडङ्गुलं पिण्डं कृत्वा ।

''ये अग्निदग्धा येऽनग्निदग्धा ये वा जाताः कुले मम । भूमौ दत्तेन पिण्डेन तृप्ता यान्तु परां गतिम्'' ॥

इति तत्र पिण्डं दत्वा तदुपरि पुनस्तिलोदकं दत्वा पादौ प्रक्षाल्याचम्य पवित्रे त्यक्त्वा धृत्वोच्छिष्टभाग्भ्योऽन्नं दीयतामित्युक्ते ।

''यजमानकुले जाता दासा दास्योऽन्नकाङ्क्षिणः । ते सर्वे तृप्तिमायान्तु मया दत्तेन भूतले '' ॥

इत्युच्छिष्टमन्नं वामभागे भूमौ निवपेयुस्ते ततो हस्तेष्वपो दत्वा ''अमृतापिधानमसि । श्रद्धायां प्राणे निविश्यामृतꣳहुतं प्राणमन्नेनाप्यायस्व । श्रद्धायामपाने निविश्यामृतꣳहुतं अपानमन्नेनाप्यायस्व श्रद्धायां व्याने निविश्यामृतꣳहुतं व्यानमन्नेनाप्यायस्व । श्रद्धायामुदाने निविश्यामृतꣳहुतं उदानमन्नेनाप्यायस्व । श्रद्धायाꣳसमाने निविश्यामृतꣳ हुतं समानमन्नेनाप्यायस्व । अङ्गुष्ठमात्रः पुरुषोङ्गुष्ठं च समाश्रितः । ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक्'' इत्यपः प्राश्य चान्तेषु तेषु वैश्वदेवार्घ्यपात्रमादाय पवित्रं तस्य हस्ते गृहीत्वाऽर्घ्यपात्रे निधाय पित्रादयः इयं वस्तृप्तिः प्राग्वत् पवित्रं निधाय रोचते इति दैविकं प्रत्युक्ते सुरोचत इति तेनोक्ते स्वदितमिति पित्र्यान्प्रयुक्ते सुस्वादितमिति ते ब्रूयुः । **सुदर्शनमते** विपरीतमिदं तत उपवीती सुप्रोक्षितमस्तु अस्तु सुप्रोक्षितं । शिवा आपः सन्तु सन्तु शिवा आपः सौमनस्यमस्तु अस्तु सौमनस्यम् । अक्षतं चारिष्टं चास्तु अस्त्वक्षतमरिष्टं च । दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिश्चास्तु अस्तु दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिश्च । प्राचीनावीती सुप्रोक्षितमास्त्वित्यादि. ततोऽभिवाद्य ।

**''अघोराः पितरः सन्तु गोत्रवृद्धिस्तथाऽस्तु मे । स्वस्तिर्वृद्धिस्तथा चैताः सन्तु सत्याशिषः सदा''॥**

इति संप्रार्थ्य तथाऽस्त्वित्याशिषः संगृह्य पात्राणि चालयित्वा उपवीती ‘देवाः स्वस्तीति ब्रूत’ ‘स्वस्ति’। प्राचीनावीती ‘पितरश्च स्वस्तीति ब्रूत’ ‘स्वस्ति’। उपवीति ‘विश्वेषां देवानां यद्दत्तं प्रत्यब्दं श्राद्धीयमन्नमुदकादि तदक्षय्यमस्तु’ ‘अस्त्वक्षय्यम्’। प्राचीनावीती ‘पित्रादीनां गोत्राणां शर्मणां रूपाणां यद्दत्तं प्रत्यब्दं श्राद्धीयमन्नमुदकादि तदक्षय्यमस्तु’ ‘अस्त्वक्षय्यम्’। तत उपवीति ‘दक्षिणाः पान्तु’ ‘पान्तु दक्षिणाः’ पित्रायर्थेभ्यः। रजतं ताम्बूलादीनि च दत्वा देवार्थाय हिरण्यं ताम्बूलादीनि च दद्यात्ततः सर्वान्नशेषेभ्यः पिण्डार्थं प्राशनार्थं चोद्धृत्य ‘शेषमन्नं किं क्रियताम्’ ‘इष्टैः सह भुज्यताम्’।

“दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव नः। श्रद्धा च नो मा व्यगमद्बहु देयं च नोऽस्तु॥

“अन्नं च नो बहु भवेदतिथींश्च लभेमहि। याचितारश्च नः सन्तु मा च याचिष्म कंचन॥

“दातारो वोऽभिवर्द्धन्तां वेदाः सन्ततिरेव वः। श्रद्धा च वो मा व्यगमद्बहुदेयं च वोऽस्तु।

“अन्नं च वो बहु भवे दतिथींश्च लभध्वं। याचितारश्च वः सन्तु मा च याचिढ्वं कंचन।

“स्वादुषᳪसदः पितरोवयोधाः कृच्छ्रे श्रितः शक्तिवंतो गभीराः।

चित्रसेना इषुवला अमृध्राः सतो वीरा उत वो व्रातसाहाः॥

“ब्राह्मणासः पितरः सोम्यासः शिवे नो द्यावापृथिवीअनेहसा पूषानः पातुदुरितादृतावृधोरक्षामाकिर्णो अघशᳪस ईशत। सुपर्णं वस्ते मृगो अस्यादंतो गोभिः सन्नद्धापतति प्रसूता यत्रानरः सं च विचद्रवन्ति तत्रास्मभ्यमिषवः शर्मयᳪसम् इहैवस्तं मा व्यौष्टं विश्वमायुर्व्यश्नुतं क्रीडन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे।

“आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च। प्रयच्छन्तु तथा राज्यं प्रीता नृणां पितामहाः”॥

“सत्या एता आशिषः सन्तु पितॄणां प्रसादोऽस्तु” इति पठित्वाऽक्षतांस्ते दद्युः तान्स्वस्य स्वीयानां च शिरसि क्षिप्त्वा प्राचीनावीती ॐस्वधेति उक्ते अस्तु स्वधेति प्रत्युक्ते

“उत्तिष्ठत पितरः प्रेतशूरा यस्य पन्थामनुवेतापुराणम्।

धत्तादस्मासु द्रविणं यच्च भद्रं प्रणो ब्रूताद्भागधां देवतासु” ॥ इति पितॄनुत्थाप्य

“ऋचे त्वा रुचे त्वा समित्स्रवन्ति सरितो न धेनाः। अन्तर्हृदा मनसा पूयमानाः घृतस्य धारा अभि चाकशीहि॥

“हिरण्ययो वेतसो मध्य आसांतस्मिन्सुपर्णो मधुकृत्कुलायी। भजन्नास्ते मधुदेवताभ्यः। तस्यासते हरयः सप्ततीरे स्वधां दुहानाममृतस्य धारां।

“वाजे वाजे वत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः। अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः॥

“उत्तिष्ठत पितरः विश्वेदेवैः सहेति”प्रपितामहादिविश्वेदेवान्तं दर्भैरुपस्पर्शपूर्वं विसृज्योपवीती सर्वैः सह तान् गृहसीमान्तमनुव्रज्य प्रदक्षिणीकृत्य ‘नमो वः पितर’ इति प्रणमेत्।

“अद्य मे सफलं जन्म भवत्पादाभिवन्दनात्। अद्य मे वंशजाः सर्वे याता वोऽनुग्रहाद्दिवम्॥

“पत्रशाकादिदानेन क्लेशिता यूयमीदृशाः। तत्क्लेशजातं चित्तात्तु विस्मृत्य क्षन्तुमर्हथ॥

“मन्त्रहीनं क्रियाहीनं भक्तिहीनं द्विजोत्तमाः। श्राद्धं संपूर्णतां यातु प्रसादाद्भवतां मम”॥

तेऽपि 'सर्वं संपूर्णमस्त्विति' ब्रूयुः । ततस्तैरास्यतामित्युक्ते गृहं प्रत्येत्याग्निसमीपमेत्य श्राद्धाङ्गभूतं पिण्डप्रदानं करिष्ये प्राचीनावीती ।

"अपां मेध्यं यज्ञियꣳसदेवꣳशिवमस्तु ते आच्छेत्ता वो मा रिषं जीवानि शरदः शतम्" इति समूलं बर्हिराच्छिनत्ति अप उपस्पृश्य "अपहता असुरा रक्षाꣳसि पिशाचा वेदिषद" इति मन्त्रवृत्त्या प्रत्यक्संस्थं रेखाद्वयं दक्षिणाग्रदर्भमूलेनोल्लिख्य दर्भं निरस्याप उपस्पृश्य 'शुन्धन्तां पितर' इति मन्त्रावृत्त्या रेखाद्वयमद्भिरवोक्ष्य 'आयन्तु नः पितरो मनोजवस' इति सकृदभिमन्त्र्य सकृदाच्छिन्नं बर्हिरूर्णा मृदुस्योनं पितृभ्यस्त्वाभराम्यहं अस्मिन्सीदन्तु मे पितरः सोम्याः पितामहाः प्रपितामहाश्चानुगैः सहेति मन्त्रावृत्त्या रेखाद्वयं प्रत्यगपवर्गं दक्षिणाग्रान्दर्भान् द्वेधमास्तीर्य दक्षिणामुखोऽन्वाचितसव्यजानुः 'मार्जयन्तां मम पितरो मार्जयन्तां मम पितामहा मार्जयन्तां मम प्रपितामहाः । मार्जयन्तां मम मातरो मार्जयन्तां मम पितामह्यो मार्जयन्तां मम प्रपितामह्य" इति उत्क्रमेण बर्हिषि मूलमध्याग्रेषु पित्राद्यर्घ्यजलं तिलोदकेन संसृज्य पितृतीर्थेन ता आपो दत्वा व्यञ्जनपायसहुतशेषतिलादिमिश्रितान्नानां पिण्डान्वृद्धान्कृत्वा प्रत्येकं जलदानक्रमेण दत्तजलप्रदेशेषु अवाचीनपाणिर्भूत्वाऽङ्गुष्ठतर्जन्योरन्तरालेन दक्षिणापवर्गं ददाति ।

"शुक्लाम्बराः शुक्लगन्धाः शुक्लयज्ञोपवीतिनः । आत्मनोऽभिमुखासीना ज्ञानमुद्रा निरायुधाः ॥

"वसवः पितरो ज्ञेया रुद्रास्तत्र पितामहाः । पितुः पितामहाः प्रोक्ता आदित्या बर्हिषि स्थिताः" । इति ध्यायन् "एतत्ते ततः पितः गोत्रशर्मन् रूप ये च त्वामत्रानु पित्रे गोत्राय शर्मणे रूपायायं पिण्डस्तस्मै ते स्वधा नमः तेभ्यश्च काश्यां विश्वेश्वरपादे दत्तमक्षय्यमस्तु" "एतत्ते पितामह गोत्रादि ये च त्वामत्रानु पितामहाय गोत्रायेत्यादि" । "एतत्ते प्रपितामह गोत्रादि ये च त्वामत्रानु प्रपितामहाय गोत्रायेत्यादि" । द्वितीयबर्हिषि एतद्वां मातरौ गोत्रे लक्ष्मीदा भवानीदे वसुरूपे याश्च त्वामत्रानु मातृभ्यां गोत्राभ्यां लक्ष्मीदाभवानीदाभ्यां वसुरूपाभ्यामयं पिण्डस्ताभ्यां वां स्वधा नमः का." । "एतत्ते पितामहि. याश्च त्वामत्रानु. पितामह्यै." । 'एतत्ते प्रपितामहि. याश्च त्वामत्रानु प्रपितामह्यै. मस्तु' । ततो "मार्जयन्तां मम पितर" इत्यादिना प्राग्वदपो दत्वा अङ्क्ष्व ततो भारद्वाजगोत्र वैद्यनाथशर्मन्वसुरूपेत्यादि सकृन्मन्त्रेण द्विस्तूष्णीं दत्वा अञ्जाथां मातरौ भारद्वाजगोत्रे लक्ष्मीदाभवानीदे रूपे इत्यादि अभ्यङ्क्ष्व ततो भारद्वाजगोत्र वैजनाथशर्मन् रूपेत्यादि अभ्यञ्जाथां मातरौ भारद्वाजगोत्रे लक्ष्मीदाभवानीदे रूपेत्यादि एतानि वः पितरो वासाꣳस्यतोन्योन्यपितरोमापोष्टेतिभुक्तवाससो दशांश्छित्वा निदधाति प्रतिपिण्डं मंत्रावृत्तिःपूर्ववयस्येतत् । उत्तरवयसि स्वहृदयस्थं प्रकोष्ठस्थं वा लोम देयं तत आचारादुपवीती कुलाभिवृद्ध्यर्थं पिंडपूजां करिष्ये । प्राचीनावीती पिंडसंस्थितेभ्यः पितृभ्यः अत्र स्वधा अक्षतान्स्वधा गन्धं पुष्पं धूपं दीपं वस्त्रं नैवेद्यं फलं ताम्बूलं दक्षिणामित्येतैरुपचारैः सर्वान्पिण्डान्समभ्यर्च्य "नमो वः पितरो रसाय नमो वः पितरः शुष्माय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो मन्यवे नमो वः पितरो घोराय पितरो नमो वो य एतस्मिँल्लोकेस्थयुष्माꣳस्तेन येऽस्मिँल्लोके मान्तेनु य एतस्मिंल्लोके स्थ यूय तेषां वसिष्ठा भूयास्त येऽस्मिँल्लोकेऽहंतेषां वसिष्ठो भूयासमिति" सर्वं नमस्कृत्य "ये च वो ये चास्मान्स्वाशꣳसंते ते च वहंतां तृप्यन्तु भवंतः याश्च वोऽत्र याश्चास्मान्स्वाशꣳसंते ताश्च वहंतां तृप्यंतु भवत्य" इति यथाक्रमं पितृपिंडान्मातृपिंडांश्चोपस्थाय ततः "तृप्यत तृप्यत तृप्यतेति त्रिवारमनुच्छ्वसन्सर्वान्पिंडानुपस्था-

य ततः पुत्रान्पौत्रानभितर्पयंतीरापो मधुमतीरिमाः स्वधापितृभ्यो "अमृतं दुहाना आपो दैवीरुभयाऽ स्तर्पयन्तु" इति मन्त्रेण प्रोक्षणीपात्रे पिण्डार्थपात्रप्रक्षालनजलमर्घ्यपात्रस्थजलं चानीय तेन सर्वान्पिण्डान्युगपदुदपात्रेण त्रिः प्रसव्यं अविच्छिन्नं परिषिञ्चेत् । ततो होमपात्राण्यर्घ्यपात्राणि पिण्डार्थपात्राणि च न्युब्जानि कृत्वा ' तृप्यत तृप्यत तृप्यत ' इति त्रिवारमनुच्छ्वसन्नावर्त्य न्युब्जपात्राणि प्रोक्ष्योत्तानानि कृत्वा द्वंद्वमभ्युदाहृत्य स्थापनदेशादुद्धृत्य बहिष्कृत्य सर्वं व्यञ्जनपायसाऽपूपान्नादि यत्प्राशनार्थमुद्धृतं तद्ग्रासमात्रमादाय 'प्राणे निविष्टोऽमृतं जुहोमि । ब्रह्मणि मआत्मामृत त्वाय' इति मन्त्रेण प्राश्योपवीत्याचम्य प्राचीनावीती " उत्तिष्ठत पितरः प्रेतशूरा यमस्य पंथामनुवेतापुराणं धत्तादस्मासु द्रविणं । यच्च भद्रं प्रणो ब्रूताद्भागधां देवतासु" इति पितॄनुत्थाप्य "परेत पितरः सोम्या गंभीरे पथिभिः पूर्व्यैः । अथा पितॄन्सुविदत्राँ अपीतयमेनयेसधमादं मदंति" इति पितॄन्प्रवाहयति । "अपां त्वौषधीनां ँ रसं प्राशयामि भूतकृतं गर्भं धत्स्व " मध्यमं पिंडं पिंडौ वा पत्न्यै प्रयच्छति । " आधत्त पितरो गर्भं कुमारं पुष्करस्रज यथेह पुरुषो सत्" इति पत्नी प्राश्नाति । तद्विष्णोरिति स्थाल्यां पिण्डानादाय गोजविप्रेभ्यो दत्वाऽग्निजलयोः प्रक्षिप्य वा "प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयँ स्याम पतयो रयीणाम् । यदंतरिक्षं पृथिवीमुतद्यां यन्मातरं पितरं वाजिहिँसिमा अयमग्निर्मा तस्मादेनसः प्रमुञ्चतु दुरितायानि चकृम करोतु मामेननसम्" इत्यग्निमुपस्थाय यस्य स्मृत्येत्यादि पठित्वा । "अनेन प्रत्याब्दिकश्राद्धेन भगवान् परमेश्वरः प्रीयताम् ओंतत्सत्" इति जलं विसृज्य "प्रमादात्कुर्व." पठित्वा विष्णुं संस्मृत्य दशवारं पवित्रग्रन्थिं विस्रस्य शुद्धदेशे निक्षिप्याचम्य प्राणानायम्य उच्छिष्टपात्राणि निरस्य भूमिशुद्धिं विधायेष्टैः सहोपभुंजीतेत्यलम् । सूत्रवृत्तिमात्रानुसारेण मासि श्राद्धविधिना **मातुः प्रत्याब्दिकश्राद्धप्रयोगो लिख्यते ।** पूर्वेद्युः कृतसायंहोमः प्राचीनावीती कृतप्राणायामो मासिश्राद्धविधिना प्रत्याब्दिकश्राद्धं कर्ताऽस्मीति संकल्प्य निर्दुष्टब्राह्मणेभ्यः कृतसायमाशेभ्यो निवेदयेत् तच्चेत्थं प्रथमं यज्ञोपवीती 'श्वोऽमुकश्राद्धं भविता तत्र भवद्भिर्विश्वेदेवार्थे क्षणः कर्तव्यः प्राचीनावीती 'पित्रर्थे क्षणः कर्तव्य इत्यादीनि अत्र विश्वेदेवपदार्थेषु सर्वेषु स्विष्टकृति प्रदक्षिणा नुव्रजनयोः प्रायश्चित्ताहुतौ च यज्ञोपवीतं इतोन्यत्रासमाप्तेः सर्वत्र प्राचीनावीतमेव. । ततो द्वितीयेऽह्नि तान्ब्राह्मणान् गृहमानीयासनेपूपवेश्य प्राग्वत् द्वितीयं निमन्त्रणम् 'अद्य श्राद्धं भविष्यतीति' भेदः । 'पूर्वेद्युर्निवेदनमपरेद्युर्द्वितीयं तृतीयमामन्त्रणमिति' वचनात् । अथ तेषां पादान्कुण्डेषु सकूर्चयवतिलेषु अवनिज्याचमय्य गन्धपुष्पाक्षतताम्बूलांजनाभ्यञ्जनानि दत्वा नद्यादौ तान् संस्नाप्य स्वयं च तत्र स्नातो ब्राह्मणभोजनादन्येनान्नेन वैश्वदेवं पञ्चमहायज्ञांश्च कुर्यात् । ततः संकल्प्य तिलोदकादि कृत्वाऽपराह्णे ब्राह्मणान्प्रक्षालितपादानाचान्तानासनेपूपवेशयति । तत्र दैवे प्राङ्मुखान्प्रागग्रेषु दर्भेषु पित्र्ये उदङ्मुखान्द्विगुणभुग्नेषु दक्षिणाग्रेषु दर्भेषु ततोऽर्घ्यपात्राण्यासाद्य दर्भेषु दर्भैः प्रच्छाद्य जलं दत्वा तानि गन्धादिभिरभ्यर्च्य विप्रहस्ते पात्रान्तरेण जलमादाय 'विश्वेदेवा इदं वो अर्घ्यं' 'पितरिदं तेऽर्घ्यमि'त्यादिना दत्वाऽऽदौ पश्चाच्च जलं दत्वा ततो गन्धादिभिर्वासोभिश्चाङ्गुलीयादीभिश्च यथाविभवं तानभ्यर्च्य 'उद्ध्रियतामग्नौ च क्रियतामि'त्यामन्त्रयेत् । ते च 'काममुद्ध्रियतामग्नौ च क्रियतामिति' प्रतिब्रूयुः । ततो ब्राह्मणभोजनार्थादन्नाद्धविष्यमोदनमपूपादिकं चैकस्मिन्पात्रे सहोद्धृत्याहविष्यमक्षारादिसंमृष्टमन्यपात्रे सहोद्धृत्यान्यपात्रे घृतं च गृहीत्वाऽग्नौ प्रतिष्ठितं हविष्यमभिघार्य जुहोति "यन्मे मातरो प्रलुलुभतुश्चरत अनुव्रते. तन्मे रेतः पितावृङ्क्तामाभरन्योवपद्यतां" लक्ष्मीदाभवानीदाभ्यां मातृभ्यां स्वाहा । ल. मा. इदम्. । "यास्तिष्ठन्ति या धावन्ति

या आर्द्रोर्द्राः परितस्थुषीः । अद्भिर्विश्वस्य भर्त्रीभिरन्तरन्यं पितुर्दधे ल. मा. स्वाहा." ये. पि. त्वा इदम् । "अंतर्दधे । पर्वतैरंतर्मह्या पृथिव्या आभिर्दिग्भिरनंताभिरंतरन्यं पितामहाद्दधे वेणीदायै पिता. स्वाहा." । वे. पि. ह्या इदम्." । यन्मे प्रपितामही प्रलुलोभचरत्यननुव्रता. तन्मे रेतः प्रपितामहो वृङ्क्ता-माभुरन्योवपद्यतां लक्ष्मीदायै प्रपितामह्यै स्वाहा." । लक्ष्मी. प्रपि. ह्या इदम् । "अन्तर्दधऋतुभिरहोरात्रैः सुसंधिभिः । अर्धमासैश्च मासैश्चांतरन्यं प्रपितामहाद्दधे लक्ष्मी. स्वा."। लक्ष्मी. प्र. इदं. । ये चेह पितरो ये च नेह यांश्च विद्मया ँ उ च न प्रविद्म अग्ने तान्वेत्थ यदि ते जातवेदस्तया प्रत्तं स्वधया मदंतु स्वाहा । ज्ञाताज्ञातपितृभ्य इदं तत आज्याहुतीर्जुहोति स्वाहा" । पित्रे. पित्र इदं न. । पित्रे स्वाहा पित्र इदं स्वाहा पित्रे. पित्र. । पित्रे स्वाहा पित्र. । स्वधा स्वाहा स्वधा इदं अग्नये कव्यवाहनाय स्वधा स्वाहा । अग्नये कव्यवाहनायेदं । तत अन्नघृतयोः शेषं गृहीत्वोपवीती अग्नये स्विष्टकृते स्वाहा। प्राचीनावीती उदीचीनमुष्णं भस्मापोह्याहविष्यादवदाय स्वाहा। अग्नय इदं । तत उपवीती व्याहृतिभिः प्रायश्चित्ताहुतीर्हुत्वा प्राचीनावीती अप्रदक्षिणं परिषिच्य पात्रासादनादिपरिवेषणान्तं कृत्वाऽन्नाभिमर्शः। एष ते तत मधुमाँ ऊर्मिः सरस्वान्यावानग्निश्च पृथिवी च तावत्यस्य मात्रा तावतीं त एतां मात्रां ददामि यथाऽग्निरक्षितोऽनुपदस्त एवं मह्यं पित्रेक्षितोऽनुपदस्तः स्वधा भवतां त्वँस्वधांतैः सहोपजीवर्चस्ते महिमा.। एष ते पितामह मधुमाँ ऊर्मिः सरस्वान्यावान्वायुश्चान्तरिक्षं च तावत्यस्य मात्रा तावतीं त एतां मात्रां ददामि यथा वायुरक्षितोऽनुपदस्त एवं मह्यं पितामहायाक्षितोऽनुपदस्तः स्वधावतां त्वँस्वधांतैः सहोपजीवयजूँषिते महिमा.।एष ते प्रपितामह मधुमाँ ऊर्मिः सरस्वान्यावानादित्यश्च द्यौश्च तावत्यस्य मात्रा तावतीं त एतां मात्रां ददामि यथाऽऽदित्योक्षितोऽनुपदस्त एवं मह्यं प्रपितामहायाक्षितोऽनुपदस्तः स्वधा भवतां त्वँस्वधांतैः सहोपजीवसामानि ते महिमा । अथ प्राग्वत्तृतीयामन्त्रणम् । ॐ तथेति प्रतिवचनं सर्वत्र नः प्राप्नोतु भवानिति प्रार्थनं प्राप्नवानीत्यङ्गीकारः । ततः पात्रस्थान्नान्ब्राह्मणानुपस्पर्शयति 'पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वामुखे जुहोमि । ब्राह्मणानां त्वाप्राणापानयोर्जुहोम्यक्षितमसि मैषां क्षेष्ठा अमुत्रामुष्मिँल्लोके । इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं समूढमस्यपाँसुरे । विष्णो हव्यं रक्षस्वेति' यथा यथं. भुञ्जानान् विप्रानाहवर्नीयार्थेन ध्यायेत् पित्रादीनां देवतात्वेनान्नं चामृतत्वेनात्मानं च ब्रह्मत्वेन भुञ्जानेषु तेषु पराङ्मावृत्य गायत्र्यादि श्रावयेत् तृप्तान्ज्ञात्वा मधुमतीः श्रावयति । "अक्षन्नमीमदन्तेति च". । अथ भूमावन्नं प्रकिरति ।

"ये अग्निदग्धा येऽनग्निदग्धा ये वा जाताः कुले मम । भूमौ दत्तेन पिण्डेन तृप्ता यान्तु परां गतिम्" ॥

अथाचान्तेषु पुनरपो दत्वा स्वदितमिति पित्राद्यर्थान्याचयति रोचते इति विश्वेदेवार्थान्ततो यथाशक्ति दक्षिणां दत्वा सर्वान्नशेषेभ्यः पिण्डार्थं प्राशनार्थं चोद्धृत्यान्नशेषः किं क्रियतामिति निवेदयेत् । इष्टैः सह भुज्यतामिति ते प्रतिब्रूयुः। ततः कर्ता

"दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च । श्रद्धा च नो मा व्यगमद्बहुदेयं च नोऽस्तु ॥

"अन्नं च नो बहुभवेदतिथींश्च लभेमहि । याचितारश्च नः सन्तु मा च याचिष्म कंचनेति" ॥

प्रार्थयेत् । ततस्ते प्रतिब्रूयुर्दातारो वोऽभिवर्द्धन्तामित्यादि. । अथ 'ॐस्वधेति' कर्ता. 'अस्तु स्वधेति' । प्रतिवचनम् । ततो ब्राह्मणविसर्जनं पित्रादिपूर्वम् । निवेदनादिकं तु प्रागुक्तं दैवपूर्वमेव । अथोपवीती अनुव्रज्य प्रदक्षिणीकृत्य

"अद्य मे सफलं जन्म भवत्पादाब्जवन्दनात् । अद्य मे वंशजाः सर्वे याता वोऽनुग्रहाद्दिवम् ॥

"पत्रशाकादिदानेन क्लेशिता यूयमीदृशाः । तत्क्लेशजातं चित्तात्तु विस्मृत्य क्षन्तुमर्हथ" ॥

"मन्त्रहीनं क्रियाहीनं भक्तिहीनं द्विजोत्तमाः । श्राद्धं संपूर्णतां यातु प्रसादाद्भवतां मम" ॥ इति। संप्रार्थ्य "संपूर्णं सर्वमस्त्विति" प्रतिश्रुत्य तदाज्ञया गृहमेत्याग्निसमीपे प्राचीनावीती पिण्डदेशे द्विधा दक्षिणाग्रान् दर्भानास्तीर्य पुरस्तात्पित्रार्थं पश्चाच्च मात्रार्थं तेषु दर्भेषु "मार्जयन्तां मम पितरो मार्जयन्तां मम पितामहाः । मार्जयन्तां मम प्रपितामहाः मार्जयन्तां मम मातर" इत्याद्येवं यथार्हं दक्षिणापवर्गं जलदानम् । तत "एतत्ते तातासौ ये च त्वामन्वेतत्ते पितामहासौ ये च त्वामन्वेतत्ते प्रपितामहासौ ये च त्वामन्वेतत्ते मातरसौ याश्च त्वामन्वेतत्ते पितामह्यसौ याश्च त्वामन्वेतत्ते प्रपितामह्यसौ याश्च त्वामन्विति" त्रींस्त्रीन् पिण्डान्यथालिङ्गं दत्तजलस्थाने दक्षिणापवर्गान्ददाति । पिण्डांश्च हुतशेषान् भुक्तशेषांश्च समादाय कार्याः । असावित्यत्र संबुध्यन्त तत्तन्नामनिर्देशः सामान्यसिद्धस्यापि दक्षिणापवर्गत्वस्य पुनर्वचनं पिण्डदाने एव । तथा द्विधा दर्भास्तरणे तु पश्चिमापवर्गत्वमिति ज्ञापनार्थमुभयेषां पिण्डानां प्रत्येकं दक्षिणापवर्गत्वसिद्ध्यर्थं च ततः पूर्ववदेव 'मार्जयन्तामि'त्यादिभिरेवापो दत्वा 'ये च वो त्रये चास्मांस्त्वांश्च संतेयाश्च वो त्रयाश्चास्मास्त्वाश्च संते ते च वहन्तां ताश्च वहन्तां तृप्यंतु भवन्तस्तृप्यंतु भवत्य इति षड्भिर्मन्त्रैर्यथाक्रमं यथालिङ्गं पितॄन्मातॄंश्च त्रिस्त्रिरुपस्थाय 'तृप्यत तृप्यत तृप्यत'इत्यनेनोभयांस्तन्त्रेणोपस्थाय "पुत्रान्पौत्रानभितर्पयन्तीरापो मधुमतीरिमाः । स्वधापितृभ्यो अमृतं दुहाना आपो देवीरुभयाः स्तृप्यन्तु" इत्यनेनोभयपिण्डान्युगपदुदपात्रेण त्रिः प्रसव्यमविच्छिन्नं परिषिञ्चति । सामान्यसिद्धस्यापि प्रसव्यस्य पुनर्वचनं पूर्वं प्रदक्षिणीकृत्येति दर्शनादिहापि प्रदक्षिणं स्यादिति शङ्कानिरासार्थं ततः पात्राणि होमार्थानि पिण्डदानार्थानि चाधोबिलानि कृत्वा 'तृप्यत तृप्यत तृप्यत'इति यजुरनुच्छ्वसन् त्रिरावर्तयित्वा न्यग्भूतानि पात्राणि प्रोक्ष्य द्वंद्वमभ्युदाहृत्य सर्वेभ्योऽन्नभेदेभ्यः समवदाय शेषस्यान्नस्य ग्रासमात्रं "प्राणे निविष्टोऽमृतं जुहोमि ब्रह्माणि म आत्माऽमृतत्वायेति" मन्त्रेण प्राश्नीयात् । एतच्च भोजनेच्छायामसत्यामप्यवश्यं कार्यं कर्माङ्गत्वात् । ततः शुद्ध्यर्थं यज्ञोपवीती भूत्वा आचामेत् । इति तत्सत् । अनेन मातृ. प्रीयतां. । यस्य स्मृ. प्रमादात् ॥ २४९ ॥

## याज्ञवल्कीये २५० श्लोकः

आतिदेशिकीमनन्तरप्रकरणसंगतिं सूचयन्नवतरति । **एवमिति** । तत्रादावतिदेशमाह । **वृद्धाविति** । अयं सत्याभामेतिवदित्याह । **पुत्रेति** । बहुव्रीहिः । एवमर्थ **उक्तेनेति** । **तत्र** अतिदेशेन प्रागुक्तसर्वप्राप्तौ । **पद्धति**स्तत्परिपाटीविशेषणदानफलमाह । **अतश्चेति** । अत एव पूर्वं नान्दीमुखशब्दसंकीर्तनमिति **गोभिला**दिसंगतिः । **तेत्याह** इत्याशङ्कायामाह । शेषमाह । **दत्वेति**। पूर्वान्वयमाह । **यजेततीति** । वक्ष्यमाणानुरोधेनाह । **तिलेति** । उक्तैकवाक्यतामाह । **अत्र चेति** । न्यूनतां विशेषे परिहरति । **प्रदक्षिणेति** । वृतकत्वादीत्यादिना नान्दीत्यादिपरिग्रहः । **परिगणनं** गणनमात्रं **अमूलाः** छिन्नमूलाः **प्रदेति** क्रियाविशेषणम् । **तिलार्थाः** । तिलकार्याणि । **इति** अयमर्घ्यप्रदानमन्त्रः । स्त्रीषु विशेषमाह । **यथालिङ्गमिति** । होममन्त्रावाह । **अग्नये इति** । **तृचः** ऋक्त्रयस्य । **आचान्तेषु** ब्राह्मणेषु **भुक्ताशया**न्भोजनस्थानानि सर्पींषि दध्यानयति एतदेव पृषदाज्यं **दध्यादिति** तेनैव मन्त्रेण मन्त्रावृत्त्येति भावः । **अन्ये तु** नान्दीमुखेभ्यः पितृभ्यः स्वाहेत्येवं यथालिङ्गपिण्डा-

त्रिपृणन्ति अनुमन्त्रणादि पूर्ववत्। अन्येऽनुमन्त्रणादि नेच्छन्ति ॐस्वधोच्यतामिति स्थाने उपसम्पन्नामिति। द्राक्षामलकं दक्षिणाप्रस्थपरिमितामिति **हेमाद्रिः**। आढकपरिमितामित्**यन्ये**। शेषं पूर्ववत् तदाह। **इत्यादीति**। आन्वष्टक्यप्रकरणेऽपि युग्मान्वृद्धिपूर्तेषु प्रदक्षिणमुपचारो यवैस्तिलार्थ इति सूत्रं पिण्डांशे बदरफलमिश्रणं मूले विशेषः। इदं च नैकं श्राद्धं किं तु श्राद्धत्रयं तदाह। **यद्यपीति**। **क्रमश्चेति**। चेन श्राद्धभेदसमुच्चयः। **मातृश्राद्धं** मातृपितामहीश्राद्धं **पितॄणां** पितृपितामहप्रपितामहानाम्। अत एवाग्रे आदीत्युक्तिः। **आश्वलायनोऽपि**।

"माता पितामही चैव संपूज्या प्रपितामही। पित्रादयस्त्रयश्चैव मातुः पित्रादयस्त्रयः। एतेन षार्चनीयाः स्युः पितरोऽभ्युदये द्विजैः" इति। **वृद्धौ** वृद्धिश्राद्धविषये। यत्तु **वृद्धवसिष्ठः**।

"नान्दीमुखे विवाहे च प्रपितामहपूर्वकम्। नाम संकीर्तयेद्विद्वानन्यत्र पितृपूर्वकम्"॥ इति।

**स्मृत्यर्थसारश्च**

"वृद्धमुख्यास्तु पितरो वृद्धिश्राद्धेषु भुञ्जते" इति तच्छाखान्तरविषयकम्। **आश्वलायनानां** त्वानुलोम्येन मात्रादिक्रमेणै**वाश्वलायना**चार्यवचनादिति" **दीक्षिताः**। वस्तुतस्तु तद्वदन्येषामपि उक्त**शातातप**वाक्येन

"मातृश्राद्धं तु पूर्वेद्युः कर्माहन्येव पैतृकम्। मातामहं चोत्तरेद्युर्वृद्धिश्राद्धत्रयं स्मृतम्"॥
इति तद्वाक्यात्।

"तत्राद्ये मातृकं कर्म द्वितीयेऽहनि पैतृकम्। उत्तरेद्युर्भवेच्छेषमिति" **गार्ग्यात्**। वक्ष्यमाण**वसिष्ठ**वाक्याच्च। तथैव **स्मृत्यर्थसार**स्य विषयो वक्ष्यते। **वृद्धवसिष्ठ**स्य तु विवाहसाहचर्यान्नान्दीमुखे इत्युक्तेश्च मङ्गलारम्भे मङ्गलाचरणादौ तथा कुर्यादन्यत्र व्यवहारे ऋणादौ तथा कुर्यादित्यर्थो न तु तस्य श्राद्धविषयता। अत एव नान्दीश्राद्धे इति नोक्तम्। एतेन प्रपितामहपितर इत्येवं तत्रोल्लेखं कुर्वन्तो वदन्तश्च परास्ता। अत एव नान्दीमुखाः पितरः पितामहाः प्रपितामहाश्च प्रीयन्तामिति **कात्यायनगृह्यपरिशिष्टं** संगच्छते। नान्दीमुखाः पितर इदं वोऽर्घ्यमित्या**श्वलायनसूत्रं** च प्रपितामहसंयुक्तं मन्त्रमुक्त्वा "तमेव तु तदर्थमुपविष्टेभ्यस्तृतीयं सकृदेव तत्" इति **तत्कारिका च** उक्त्वा 'पितरिदं तेऽर्घ्यमिति' पित्रेऽर्घ्यमानयेदित्युक्त्वा "एवमेवार्घ्यदानं तु कुर्यादुत्तरयोर्द्वयोः" इति **शौनकोक्तिश्च**। एवमेव **जयन्तो**क्तिश्च।

"एवं पित्रर्थविप्रेभ्यः प्रदायार्घ्यं यथाविधि। पितामहाय विप्रेभ्यो दत्वाऽर्घ्यं च यथा पुरा"॥
"प्रपितामहशब्दादिदं तेऽर्घ्यमितीरयेत्"। इति **पारिजातोदाहृतभागवतस्मृतिश्च**. इति बोध्यम्

अत्र दिनत्रयेण श्राद्धत्रयं देयमिति केचित्तथा च **वसिष्ठः**।

"पूर्वेद्युर्मातृकं श्राद्धं कर्माहे पैतृकं तथा। उत्तरेद्युः प्रकुर्वीत मातामहगणस्य तु"॥ इति।

**शातातपोक्तः** कर्माहन्येव तु सांप्रतमाचारस्तत्पूर्वदिने एव वा। तथा च **वृद्धशातातपः**

"पृथग्दिनेष्वशक्तश्चेदेकस्मिन्पूर्ववासरे। श्राद्धत्रयं प्रकुर्वीत वैश्वदेवं तु तान्त्रिकम्"॥ **इति**।

अत्रैकस्मिन्नित्यनेन प्रधानवाचिना कर्माहकरणपक्ष उक्तस्तथा च विकल्पः । अन्यथा तदनतिफलं स्पष्टमेव । तत्राप्यशक्तौ **वृद्धमनुः ।**

"अलाभे भिन्नकालानां नान्दीश्राद्धत्रयं बुधः। पूर्वेद्युर्वा प्रकुर्वीत पूर्वाह्णे मातृपूर्वकम्" ॥ इति ।

वा शब्देन कर्माहपक्ष उक्तः । युक्तं चैतत्

"पुत्रजन्मनि आशौचे नोत्तरेऽहन्यनधिकारात्" इति नान्दीश्राद्धात्पूर्वं षोडशमातृकापूजा वसुधारापञ्चकं च घृतेनेत्यादि । तथा च **कर्मप्रदीपः ।**

"कर्मादिषु च सर्वेषु मातरः सगणाधिपाः । पूजनीयाः प्रयत्नेन पूजिताः पूजयन्तिताः ॥

"कुड्यलग्ना वसोर्धाराः पञ्चधारा घृतेन तु । प्रकुर्यात्सप्त धारा वा नातिनीचा न चोच्छ्रिता ॥

इति । नान्दीमुखं विना वैदिककर्मानुष्ठाने निषेधमाह **मनुः ।**

"नानिष्ट्वा तु पितॄन् श्राद्धे वैदिकं किंचिदाचरेत् । तेभ्योऽपि मातरः पूर्वं पूजनीयाः प्रयत्नतः" ॥

इति वैदिकमाधानदर्शपूर्णमासादि । तत्रापि प्रथमप्रयोगे एव । तथा च **कर्मप्रदीपः ।**

"असकृद्यानि कर्माणि क्रियेरन्कर्मकारिभिः। प्रतिप्रयोगं नैताः स्युर्मातरः श्राद्धमेव च" ॥ इति ।

अत्र विश्वेदेवाः कृताकृताः ।

"विश्वेदेवविहीनं तु केचिदिच्छन्ति मानवाः" इति **मार्कण्डेयपुराणात् ।** दानमत्र देवतीर्थेन नमः शब्देन च स्वाहाशब्देनैव वा शीघ्रमुच्छिष्टमार्जनं मधुरं भोजनं नाम्लं दधिवर्जम् । तथा च **प्रचेताः ।**

'न जपेत्पैतृकं जाप्यं न मांसं तत्र दापयेत् । प्राङ्मुखो देवतीर्थेन क्षिप्रं देशविमार्जनम्" ॥

**कर्मप्रदीपः ।**

"स्वाहाकारनमस्कारवषट्कारा दिवौकसाम् । स्वधाकारः पितॄणां तु हन्तकारो नृणां तथा" ॥

**भविष्यत्पुराणम् ।**

"मधुरं भोजनं दद्यान्न चाम्लं परिवेषयेत् । रक्तपुष्पं तिलांश्चैव अपसव्यं विसर्जयेत्" ॥

"दध्नोऽत्यन्तमाङ्गलिकत्वेन पिण्डांश ग्रहणेन च पर्युदासः । रक्तपुष्पं जलजमपि न देयं प्रागग्रा दर्भास्तेपूदगपवर्गं पिण्डदानं "प्रागग्रेषु च दर्भेषु पिण्डान्दद्यात्तु वृद्धिषु" । इति तत्रैव ब्रह्मचर्यादिसाधारणम् । तथा च **पारस्करः ।**

"अतः परं प्रवक्ष्यामि विशेष इह यो भवेत् । प्रातरामन्त्रितान्विप्रान्युग्मानुभयतस्तथा" ॥ इति ।

अत्र प्रातरामन्त्रणोक्त्या कृतब्रह्मचर्याणामेव श्राद्धभोजनेऽधिकारादर्थात्पूर्वेद्युस्तत्तज्ज्ञानमात्रं कार्यम् । यथा ते ब्रह्मचारिणः स्युः पिण्डदानमपि बहिः शालायां नोच्छिष्टसंनिधाविति **शातातपः ।**

"प्रदद्यात्प्राङ्मुखः पिण्डान्तन्नाम्ना स हि श्राद्धतः" इति । तथा च तद्देशे विकल्पः । स चेच्छिको व्यवस्थितो वा । केचिदत्र पिण्डदानं नेत्याहुः । तन्मूलं मृग्यमाचार एव वा मूलमिति **गुरुचरणाः । भविष्यत्पुराणे सुमन्तुः ।**

"पिण्डनिर्वपणं कुर्यान्न वा कुर्याद्विचक्षणः । वृद्धिश्राद्धे महाबाहो कुलधर्ममवेक्ष्य च" ॥ इति ।

अत्र साग्निकनिरग्निककृतो विकल्पः । तथा च **स्मृत्यन्तरम् ।**

"योऽग्नौ तु विद्यमानेऽपि वृद्धौ पिण्डान्न निर्वपेत् । पतन्ति पितरस्तस्य नरके स तु पच्यते" ॥ इति ।

अत्र निन्दयाऽऽवश्यकत्वयोगेनानेन तस्य काम्यकर्माङ्गवृद्धिश्राद्धविषयत्वं तत्रैव सकलाङ्गोपसंहारनियमात् । अन्यथा फलानुत्पत्तेश्च । यद्वा कुलधर्मापेक्षया उभयोरप्यैच्छिको विकल्प इति **स्मृतिरत्नावली ।** अत्र च पित्रादय एव नान्दीमुखसंज्ञकाः । **मत्स्यपुराणादौ** तथोक्तत्वात् । यत्तु

"पिता पितामहश्चैव तथैव प्रपितामहः । त्रयस्त्वश्रुमुखा ह्येते पितरः संप्रकीर्तिताः ॥

"तेभ्यः पूर्वे त्रयो ये तु ते तु नान्दीमुखाः स्मृताः" इति **ब्राह्मम् ।**

"तेभ्यः पूर्वतरा ये च प्रजावन्तः सुखैधिताः । ते तु नान्दीमुखा नान्दी समृद्धिरिति कथ्यते" ॥

इति पाठान्तरं तत्प्रोष्ठपदीश्राद्धमात्रविषयकम् । तथा च **दक्षः ।**

"इष्ट्वा प्रोष्ठपदीश्राद्धं वृद्धान्नान्दीमुखान्पितॄन् । श्राद्धषोडशकं कार्यं सकृद्वाऽपि मृतेऽहनि" ॥ इति ।

**प्रयोगपारिजाते ब्रह्माण्डे ब्राह्मे च**

"नान्दीमुखानां प्रत्यब्दं श्राद्धं कन्यागते रवौ । पौर्णमास्यां तु कर्तव्यं वराहवचनं यथा" ॥

"ये स्युः पितामहादूर्ध्वं ते स्युर्नान्दीमुखास्त्विति" । 'पितामहशब्देन प्रपितामहो लक्ष्यते' इति **दीक्षिताः ।** प्रशब्दलोप इति तत्त्वम् । तथा च तदुपक्रमेण तथोक्त्या तत्रैव नान्दीमुखशब्देन प्रपितामहात्परे प्रयोजनान्यत्र नान्दीश्राद्धे प्रकरणादिति तत्र पित्रादीनामेवोपादानमिति **हेमाद्रिप्रयोगपारिजातकृद्दीक्षितादयः ।** वस्तोऽस्यानाश्वस्ता इति **गुरुचरणाः ।** अत एव प्रागुक्त**स्मृत्यर्थसार**संगतिः । तेषामयं भावः । उक्त**ब्राह्मेण** नान्दीमुखसंज्ञां कृत्वा तदनुवादेनानुपदमेव कर्मण्यथाभ्युदयिके मङ्गल्यवति शोभने जन्मन्यथोपनयने विवाहे पुत्रकस्य च "पितॄन्नान्दीमुखान्नाम तर्पयेद्विधिपूर्वकम्" इत्युक्तम् । अत एव पुनस्तेनैव तद्विषये ये स्युरित्याद्युक्तम् । अन्यथा तदनर्थकमेव स्यादिति । वस्तुतस्तु आद्यमेव युक्तम् । अन्यथा वस्त्याद्यपत्तेर्मातृमातामहवर्गयोस्तादृशयोस्तदुक्तत्वानुक्तेः । मूलविष्णुब्राह्मादितस्तु तयोरिव तद्वर्गस्याप्यविशिष्टं तत्त्वम् । अत एव प्रौष्ठपद्यामेकवर्गानुष्ठानमन्यत्र वर्गत्रयानुष्ठानम् "एकस्य द्विरूपत्वं तु" यमवत् । **स्मृत्यर्थसार**स्तु प्रोष्ठपदीविषयकः । वृद्धब्राह्मणमुख्यत्वप्रतिपादको नेति बोध्यम् । एतेन प्रमीतपित्रादित्रिकस्य स्वीया एव ते "नान्दीमुखाः पितरः पितामहाः प्रपितामहाश्च प्रीयन्तामिति" **कात्यायना**दिसूत्रात्सपित्रादिकस्य तु **ब्राह्मोक्त**मेवेति **कल्पतरू**क्तमपास्तम् । सर्वथाऽत्र नवदैवत्यत्वमिष्टं तद्यथा । संपद्यते तथा कार्यं वर्गत्रयान्यतमसत्वेऽन्यवर्गसंबंध्येव सर्वसत्वेनेवेति मतमपास्तमेवं जीवत्पित्रादित्रयस्यापि वृद्धौ श्राद्धदैवतात्वसिद्ध्यर्थं **ब्राह्ममन्यथा मात्स्य**विरोधो दुष्परिहरः । एवं च विध-

मानपित्रादित्रयस्यापि वृद्धौ नान्दीश्राद्धावश्यकत्वप्रतीतिर्न पार्वणादिश्राद्धस्य "तत्र जीवति नैव कुर्यादिति" **विष्णुना** निषेधात् । एवं मात्रादिषु मातामहादिषु ज्ञेयं न्यायसाम्यात् । एवं च पितृवर्गे सति न तन्नान्दीश्राद्धम् । एवं मात्रादिष्वपीति कथं न त्राह्माज्ञाननिबन्धनमुपेक्ष्यामिति **मद-नोक्त**मप्यपास्तम् । एतच्च समानगोत्रजानामेकदैव यदोद्वाहादि प्रसंगः एकस्यैव वा एकदा जातकर्मादि सकलसंस्कारप्रसंगस्तदा एकमेवेति **वसिष्ठः** ।

"गणशः क्रियमाणानां मातॄणां पूजनं सकृत् । सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु" ॥ **इति** ।

अत्रादिषु जन्मादिसंस्कारेषु यद्विहितं तन्निमित्तकमिति यावत् । तेषामादौ सकृदेव कार्यं न पृथगित्यन्वयः । तथा च तन्त्रेण करिष्ये इति संकल्पः । **भविष्यत्पुराणे सुमन्तुः** ।

"माता पितामही चैव तथैव प्रपितामही । एता भवन्तु मे प्रीताः प्रयच्छन्तु च मङ्गलम्" ॥ इति ।

इदं च श्राद्धान्ते कार्यं श्राद्धादौ तासां विशिष्टपूजनेन पितरस्तुष्यन्तीति **व्याघ्रपादा**ह ।

"यथा मनुष्यास्तुष्यन्ति दृष्ट्वा पत्नीः सुपूजिताः । पूजितास्त्विह पत्नीषु तुष्यन्ति पितरस्तथा" ॥ **इति** ।

एतच्च गर्भादानमारभ्य पुत्रस्य प्रथमविवाहपर्यन्तं पित्रा कार्यं तदुपरि पुत्रेण । तथा च **वैष्णवे** ।

"जातस्य जातकर्मादिक्रियाकाण्डमशेषतः । पुत्रस्य कुर्वीत पिता श्राद्धं चाभ्युदयार्थकम्" ॥ **इति** ।

**विष्णुधर्मोत्तरे** च ।

"नान्दीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे पुनः । अत ऊर्ध्वं प्रकुर्वीत स्वयमेव तु नान्दिकम्" ॥ **इति** ।

"स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्मसु । पिण्डानोद्वहनात्तेषां तस्याभावे तु तत्क्रमात्" ॥ **इति** ।

इदं **कात्यायन** इति केचित् । **कर्मप्रदीप** इति **स्मृतिरत्नावली** । अत्र पिण्डशब्दो लक्षणया श्राद्धपरः "पिण्डदोऽशहरश्चैषाम्" इत्यादिवत् । यद्यपि पितृशब्दस्य ससंबंधिकत्वादेव स्वत्व-लाभस्तथापि तुर्यपादार्थप्रकाशनार्थं तद्व्यतिरेकार्थस्य स्पष्टप्रतिपादनार्थं स्वपदं, पितृशब्दश्च तत्रत्य-संप्रदानमात्रपरः । बहुवचनेन सर्वेषां तत्वं सूचितम् । तथा च पितुः सपितुरपितुश्च तथा द्विविधज्येष्ठ-भ्रात्रादेश्च शास्त्रान्तरे श्राद्धीयदेवतात्वेन येऽवगताः पित्रादयो मात्रादयो मातामहादयश्च तेषामेव स्वपितृभ्य इति निर्देशः । स्वेत्यत्र स्वत्वस्य षष्ठ्यर्थत्वात्सापित्रा स्वपित्रादिश्राद्धानुष्ठानस्य बाधात् । यद्यपि सुतस्य संस्कारकर्माणि इति व्याख्याने बहुवचनासंगतिः, संस्काररूपकर्मणीति व्याख्यानेऽप्येवं कर्मपदानर्थक्यं च एतेन तस्य संस्काररूपेषु कर्मस्विति व्याख्यानमपि निरस्तम्, अन्यथाऽन्यपितृभ्यो दद्यादित्यनर्थापत्तेश्च, तथाऽपि सुतश्च संस्कारश्च कर्म चेति द्वंद्वो बोध्यः । अत्र सुतशब्देन तज्जननं लक्ष्यते । पुत्रजनने इति तत्रोक्तेः । अस्य पृथगुक्तिस्तु तत एव प्राधान्यख्यापनार्थं तेन तन्निरूपितं पितृत्वमित्यपि स्फुटतयाऽभिव्यक्तमेतदनुरोधेनैव तत्र पुत्रजनन इत्यन्येषामपि नान्दीमुखश्राद्धानामुपलक्ष-णम् । संस्कारशब्देन गर्भाधानादयः प्रसिद्धाः । कर्मशब्देनेष्टापूर्तव्रतादि । अत एव तदुक्तिरपि सफला । अन्यथा संस्कारशब्देन प्रसिद्धानामेव ग्रहणेनाव्याप्त्यापत्तेः । संस्कारपदानुक्तावप्येवम् । एवं च न कस्यापि वैयर्थ्यं नापि बहुवचनासंगतिः । द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यादिति वत् । तथा च पिता सुतादिषु त्रिषु गर्भाधानादिषु इष्टापूर्तव्रतादिषु च स्वपितृभ्यः आत्मपितृभ्यः

आत्मीयपितृपितृभ्यश्च पिण्डान्श्राद्धानि दद्यात् संस्कारांशेऽनतिप्रसंगायाह । **उद्वाहनादिति** । आ उद्वहनादिति छेदः । 'आङभिविधौ' 'आङ्मर्यादेति' **पाणिन्युक्तेः** (व्या. सू. २।१।१३) **विष्णुधर्मोत्तर**पर्यालोचनया मर्यादायास्त्यागः । अत एव विवाहोऽप्याद्य एव तस्यैव संस्कारत्वाच्च । तथा च तेषां संस्काराणां मध्ये आद्यं विवाहमभिव्याप्येत्यर्थः । एतेन तेषां सुतानामोद्वाहनादिति **रत्नावल्युक्त**मपास्तमुक्त उक्तेः । द्वितीयविवाहो द्वेधा अपत्नीकस्याद्येन संस्कृतत्वेन तदर्थत्वाभावेऽपि आश्रमधर्मार्थः सपत्नीकस्य रतिपुत्रार्थ इति बोध्यम् । तेषामित्यस्य मध्यमणिन्यायेनाग्रेऽपि संबंधः । तथा च तस्य पितुरभावे दिवं गतत्वेऽसांनिध्ये वा तत् क्रमात् पितृक्रमात्पितृपितामहादिक्रमेणैव पितृकर्तव्यश्राद्धीयदेवताक्रमेणैव वा यः कोऽपि दद्यादित्यर्थः । अत्राद्ये **हेमाद्युक्तः** । तथा पितृव्याचार्यमातुलादयः संस्कार्यस्योपनेयादरेव पितृभ्यः श्राद्धं दद्युर्न स्वपितृभ्य इति । अत्र विधेयं तत्वमन्यथा स्वपितृभ्य इत्यस्यानुषङ्गकल्पनाया अन्याय्यत्वात् पितृव्यादीनामपि पितृवत्स्वपितृभ्यो दानाविशेषे स्वपितृभ्य इत्यस्यानर्थक्यापत्तेः । पितुः पितृव्यादिषु वैलक्षण्यद्योतकतुशब्दानुपपत्तेरुपनेयदेयकन्ययोर्मुख्याधिकारित्वेन तदीयपित्रादीनामिज्यत्वौचित्याच्च । **महार्णवो**दाहृते "गर्भाष्टमे वर्षे ब्राह्मण आत्मानमुपनाययेत्" इत्यादि **बुधस्मृत्या**दिवाक्ये णिजन्तमुपनाययशब्दं व्याचक्षाणै**रपरार्कादि**भिरुपपादितम् । आद्ये एव विवाहे विशेषोक्तिरत एव तुः प्रयुक्तः । एवं च द्विविधतदभावे आद्योद्वाहे एवं तत्सत्वे तत्र स एव स्वपितृभ्यो दद्यादिति पर्यवसितम् । स च जीवत्पिताऽन्यो वेत्यन्यदेतत् । एतेनेदं वचनं जीवत्पितृकमात्रविषयमित्यपास्तम् । गमकाभावात् । तुर्यपादस्य प्रत्युत साधारण्ये गमकस्य सत्वाच्चेति दिक् ।

**अन्ये तु पारिजातादयः** । प्रवासादिना चोपनयनादिकर्तुरभावे उपनेकन्ययोरेवोपनयनादौ मुख्याधिकारित्वमयमेव प्रकारः पितृव्यकर्तृकविवाहे बोध्यः । न च तत्र मानाभावः पित्रभावे नामकरणे कर्त्रन्तरप्रापकशङ्खेऽन्यो वा कुलवृद्ध इत्यस्य नामकरणादिसंस्कारविषयताया **हेमाद्रिणै**वोक्तत्वात् । अत्रापि पित्रभावो द्वेधा मरणेन देशान्तरगमनेन वा । तत्र पितुरभावे तत्क्रमात् "भ्राता वा भ्रातृपुत्रो वा सापिण्डः शिष्य एव वा"इति **लघुहारीतोक्तेः** । "असंस्कृतास्तु संस्कार्या" इति **मूलोक्तेश्च** (व्यवहारे १२४) । तेष्वेव कर्मसु तन्निमित्तः पित्रसंनिधिनिमित्तो योऽधिकारिक्रमस्तद्रूपभ्रात्रादिक्रमात्स्वपितृभ्यो दद्यात्समावर्तनस्यापि विवाहपूर्वसुतसंस्कारत्वाज्जीवत्पितृकसमावर्तने पिता स्वपितृभ्यो दद्याज्जीवत्पितृकस्तु पूर्वसंस्कृतभ्रात्रसंभवे स्वपितृभ्यो दद्यात् । उपनयनेन कर्माधिकाराद्विवाहेऽप्येवमेवात एव समावर्तनस्य माणवककर्तृकत्वेऽपि तदङ्गभूतनान्दीश्राद्धे पितुस्तदभावे ज्येष्ठभ्रात्रादेरप्राप्तकर्तृत्वप्रापणादिना वचनमर्थवदिति तदाशयेन तदुपन्यासः । अजीवत्पितृक इति जीवदसंनिहितपितृकस्याप्युपलक्षणम् । स्वपितृभ्य इति पूर्ववत् । आद्यस्येज्या जनकादय एव परस्य पितुर्जनकादय एव न तु तत्परिशिष्टात्पितृपार्वणत्यागेन मात्रादयः समावर्तनस्यात्मसंस्कारत्वेन सुतसंस्कारत्वाभावादित्याहुः । अस्य क्रमस्य वचनान्तरेण सिद्धत्वात्तुशब्दवैयर्थ्यापत्तेश्च नेदं युक्तम् । किं तु तदेवेति तत्वम् । अत्र च जीवत्पितुरप्यधिकारः । तथा च **मैत्रायणीयपरिशिष्टम्** ।

"उद्वाहे पुत्रजनने पित्रेष्ट्यां सौमिके मखे । तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः" ॥

इति षट्त्वसंख्यान्यूनत्वव्यवच्छेदाय तेन तत्रावश्यकत्वं प्रतिपादितं भवति । उद्वाहोऽत्र द्वितीयः । आद्ये पितुरेवाधिकारस्योक्तत्वादिति केचित्तन्न । आद्योद्वाहे सपितुः पितुः पुत्रोद्वाहप्रयुक्तश्राद्धानधिकारापत्तेः । तस्माद्यदा यस्य तत्प्राप्तं तदा तेन सपितृत्वेऽपि कार्यमिति यथाश्रुतमेव साधु

पुत्रेत्युपलक्षणमित्युक्तम् । पित्रेष्ट्यां साकमेधमहापितृयज्ञे सौमिके मखे तार्तीयसवनिकैः पुरोडाशखण्डैः स्वस्य चमसस्याधस्ताद्यत् क्रियते तत्र जीवतः पितुः पुत्रस्येति शेषः संख्याया आधिक्याव्यवच्छेदकत्वादेव निमित्तान्तरमपि तत्रैवोक्तम् ।

"आन्वष्टक्ये गयाप्राप्तौ सत्यां यच्च मृतेऽहनि। मातुः श्राद्धं सुतः कुर्यात्पितर्यपि च जीवति"॥

इति **वैष्णवादी**न्यग्रेऽपि निमित्तान्तराणि वक्ष्यन्ते । गयायामित्येव सिद्धेः प्राप्तौ सत्यामित्युक्तेः प्रासङ्गिकगयाप्राप्तौ सत्यामित्यर्थः । गयाश्राद्धोद्देशेन गयागमनं तु न ।

"गयां प्रसंगतो गत्वा मातुः श्राद्धं समाचरेत्" इत्युक्तेः ।

"दर्शश्राद्धं गयाश्राद्धं श्राद्धं चापरपक्षिकम् । न जीवत्पितृकः कुर्यात्तिलैः कृष्णैश्च तर्पणम्"॥

इति **लौगाक्षि**कृतनिषेधाच्च । तच्च पार्वणवदेवेत्याह **वृद्धमनुः** ।

"अन्वष्टक्यं च यन्मातुर्गयामहालयं तथा। पितृपत्नीषु च श्राद्धं कार्यं पार्वणवद्द्विजैः"॥ इति

अत्र मूलेऽनाश्वासः । मातृवत्सापत्नमातॄणामपीत्यर्थः । अत्रान्वष्टक्यं श्राद्धविधेः ॥

"अष्टकासु च संक्रान्तौ मन्वादिषु युगादिषु

"चन्द्रसूर्यग्रहे पाते स्वेच्छया पुज्ययोगतः। जीवत्पिता नैव कुर्याच्छ्राद्धं काम्यं तथाऽखिलम्"॥

इति कृतनिषेधोऽन्वष्टकाभिन्नविषयः । अत्र **पारिजातादयः** केचित्सर्वत्र जीवत्पितुः साग्नेरेवाधिकारः ।

"न जीवत्पितृकः कुर्याच्छ्राद्धमग्निमृते द्विजः। येभ्य एव पिता दद्यात्तेभ्यो दद्यात्तु साग्निकः ॥

"पितामहेऽप्येवमेव कुर्याज्जीवति साग्निकः । साग्निकोऽपि न कुर्वीत जीवति प्रपितामहे" ॥

इति **सुमन्तूक्तेः** । साग्निकोऽत्राहिताग्निरौपासनाग्निमांश्चात एवाग्निमिति जातावेकवचनम् ॥

"अनग्निरपि कुर्वीत जन्मादौ वृद्धिकर्मणि । येभ्य एव पिता दद्यात्तानेवोद्दिश्य पार्वणम्" ॥

इति **हारीत**वचनस्थानग्निपदमनाहिताग्निपरमन्यथा **सुमन्तु**विरोधापत्तेरित्याहुः । अन्ये तु सर्वस्याप्यधिकारः **सुमन्तु**वचसो निर्मूलत्वात् परिशिष्टस्थोद्वाह इत्यस्यासंगत्यापत्तेश्च तदा तस्य साग्निकत्वाभावात् । मातुः क्षयाहेऽपि विवाहात्पूर्वं श्राद्धानापत्तेश्च । अत एव

"कुर्यादहरहः श्राद्धं प्रमीतपितृको द्विजः। साग्निकोऽनग्निको वाऽपि तीर्थेष्वपि विशेषतः" ॥

**इत्युशनाः** संगच्छते । एतेन **पारिजातोक्त**मपास्तं नान्दीश्राद्धान्यतीर्थश्राद्धादिपरं वा । आचारोऽप्येवमेवेत्याहुः । यद्यपि **स्मृतिरत्नावल्या**मित्थं व्यवस्था शाखाभेदेन कृता तथा हि इदं प्रागुक्तं **पराशरसूत्रो**पजीविनां **मैत्रायणीया**नामेव **तद्गृह्यपरिशिष्टे** एव श्रवणात्तत्रापि साऽग्निकानामेव नान्येषां तेषामपि । **कातीयानां तु**

"सपितुः पितृकृत्येषु त्वधिकारो न विद्यते । न जीवन्तमतिक्रम्य किंचिद्दद्यादिति श्रुतेः" ॥

इति **कात्यायनात्** ।

"पित्र्यं जीवत्पितुर्नोक्तमग्नौ होमोऽपि पाक्षिकः"

"येभ्यो वाऽपि पिता तेभ्यो दद्याद्वैतानकर्माणि । दद्यात्त्रिभ्यः परेभ्यस्तु जीवेच्च त्रितयं यदा" ॥

इति **यमात्** 'जीवत्पितृकस्य होमान्तमनारम्भो वेति' **कात्यायन**सूत्रात्प्रतिप्रसवाभावाच्च जीवत्पितृकाणां साग्निकानां निरग्निकानामपि क्वाप्यधिकारो न सपितुः पित्रा सहितस्य । एवं **तैत्तिरीयाणाम**पि "यदि जीवेत्पिता न दद्यादाहोमात्कृत्वा विरमेत्" **इत्यापस्तम्बोक्तेः** । न दद्यात्पिण्डं पिण्डनिर्वपणमकृत्वैव विरमेदित्यर्थः । **यत्त्वाश्वलायनसूत्रे** एवानेकमतानि एषां पितृपितामहप्रपितामहानां ये प्रेताः स्युस्तस्मै तस्मै पिण्डान्निर्वृणुयात् । ये तु जीवन्ति तान्प्रत्यक्षमर्चयेदस्याः क्रियायाः पित्राद्यर्थत्वादिति तावद्**गाणगारिः** । यद्यपि जीवन्तस्तथापि पितृभ्यः प्रेतेभ्य एव दद्यान्न जीवतामर्चनं कार्यं प्रतिषिद्धत्वादिति **तौल्वलिः** । तथा च **भविष्यत्पुराणे सुमन्तुः** ।

"प्रत्यक्षमर्चनं श्राद्धे न युक्तं मनुरब्रवीत् । पिण्डयोर्वपनं वापि महापातकसंमितम्" ॥ इति ।

वपनं निर्वपणं मनुर्ज्ञानी मन्त्रो वा । एतेन **मनुनैव** प्रत्यक्षार्चनस्योक्तत्वादत्र **मनुरिति** तद्विरुद्धमित्यपास्तम् । किं च क्रियांप्रति पित्रादीनां गुणत्वाद्गुणत्वस्य च नानाजातिगतानां पिण्डभोक्तृत्वायोगेनासंभवादिति दिक् । पित्रादीनां मध्ये यो जीवति तस्मा अपि पिण्डदानमेव कार्यं "क्रिया ह्यर्थकारितेति" **गौतमः** इति । तत्र तावदाद्यं न युक्तं पापिष्ठतरत्वात् । लोकविद्विष्टत्वात् अनधिकारत्वाच्चैतेनान्यान्यपि निरस्तानीति तानि सर्वाणि न युक्तानि किं तर्ह्यत्रानुष्ठेयमिति चेदुच्यते । यः पित्रादीनां मध्ये जीवति तस्मै पिण्डो न मृतेभ्य एव दद्यात् । यस्य तु सर्वे जीवन्ति तस्य न किमपि । अत्राचार्याणां विप्रतिपत्तिदर्शनादन्यत्रापि न जीवन्तमिति येभ्य एवेति चोभयविधशास्त्रार्थदर्शनादुक्तातिरिक्तानां बह्वृचादीनां जीवत्पितृकाणां नान्दीमुखविकल्प एव साधारण**मनुविष्णुजातूकर्ण्यलौगाक्षिभि**रुपायविधानाच्चेति दिक् । **छन्दोगाना**मपि नान्दीमुखविकल्पः सपितुरिति ।

"जीवन्तमपि दद्याद्वा प्रेतायान्नोदके द्विजः । पितुः पितृभ्यो निपृणेत्स पितेत्यपरा श्रुतिः" ॥

इति च **कर्मप्रदीपे कात्यायनात्** । वाऽवधारणे । पित्रा सहितः सपिता । अस्य पक्षद्वयस्य तुल्यश्रुतिमूलत्वाद्व्रीहियवादिवद्विकल्प एव । तदकरणपक्षेऽप्यक्षतमातरः सर्वैः पूज्या एव । "कर्मादिषु तु सर्वेषु मातरः सगणाधिपाः । पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः" । इत्युक्तेरिति । तथापि सा न युक्ता आचारविरोधात्क्षयाहादौ मातृश्राद्धाभावप्रसंगात् । तत्प्रतिपादकस्मृत्यन्तरविरोधापातात्साधारणमन्वादिविरोधात् ।

"नानिष्ट्वा तु पितॄन् श्राद्धे वैदिकं किंचिदाचरेत्" । इति **मानवशातातपाभ्याम्** ।

"कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः । नामकर्मणि बालानां चूडाकर्मादिके तथा ॥
"सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने । नान्दीमुखं पितृगणं पूजयेत्प्रयतो गृही" ॥

इति **वैष्णवेन** च विरोधाच्च । अत्र कन्यापुत्रेत्युक्त्या स्वविवाहो न निमित्तमुद्वाहपदमप्येवं परमेकमूलकल्पनालाघवादिति केचित्तत एव वैपरीत्यमित्यन्ये । अत एव तत्र बहुवचनम् । मुखेति । तज्जन्मोपलक्षणं न स्वतन्त्रं तत एव । तदावृत्तावावृत्तिप्रसंगात् । कथंचिद्दर्शने श्रवणतः श्राद्धाकरणप्रसंगाच्च । आदिना कन्यापरिग्रहः । एतेन पुत्रस्याद्ये मुखदर्शने इत्यर्थः । न तु तेन पौत्रादेर्ग्रहणमिति **शूलो**क्तमपास्तम् । द्वितीयादिपुत्रोत्पत्तौ **श्राद्धा**प्रसंगात् । यद्यपि जातस्यैव निमित्तत्वं तथापि 'नानिष्ट्वे'त्युक्त्याऽत्र तद्भावाविनोऽपि तत्वं बोध्यम् । किमत्र तर्हि तत्वमिति चेदत्र ब्रूमः । उक्तहेतोर्मैत्रायणीयन्तावत्साधारणमेव । एवं च सर्वेषां जीवत्पितृकाणामुक्तवक्ष्यमाणनिमित्तेष्वेवाधिकारो नान्यत्र सपितुरिति **कातीयात्** । तदपि कथं देयमित्याशङ्कायामाह **विष्णुः** ।

"ब्राह्मणाभिहते ताते पतिते संगवर्जिते । येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः" ॥

इति प्रागुक्त**यमो**ऽपि ।

"वृद्धो तीर्थे च संन्यस्ते व्युत्क्रमात्साति ज्यायसि" । पूर्वं मृते व्युत्क्रमादुदरभेदादिना मृते इत्येके । तत्र तीर्थे पितृपितृमात्रादयस्तन्मातामहादयश्च देवताः स्वमाताऽपि पितृपत्नीत्वेन देवता-स्वमातामहोऽपि पितृश्वशुरत्वेनैव एकोद्दिष्टमुभयम् । मृतमातृकेण प्रसंगाद्गयागमने मातृपार्वणमेव न पितृपित्रादिश्राद्धं दर्शश्राद्धं गयाश्राद्धमिति निषेधात् । केचित्तु तस्य गयायामुभयमिच्छन्ति आचाराद्व्यवस्था । विवृतं चेदं **विष्णु**नैव "पितरि जीवति यः श्राद्धं कुर्यात्स येषां पिता कुर्यात्तेषां कुर्यात्पितरि पितामहे च जीवति येषां पितामहः० पितरि पितामहे प्रपितामहे च जीवति नैव कुर्यात् । यस्य पिता प्रेतः स्यात्स पित्रे पिण्डं निधाय पितामहात्पराभ्यां द्वाभ्यां दद्यात् । पिता पितामहश्च प्रेतौ स्यातां स ताभ्यां पिण्डौ दत्वा पितामहपितामहाय दद्यात् । यस्य पितामहः प्रेतः स्यात्स तस्मै पिण्डं निधाय प्रपितामहात्पराभ्यां द्वाभ्यां दद्यात् । यस्य पिता प्रपितामहश्च प्रेतौ स्यातां स पित्रे पिण्डं निधाय पितामहात्पराभ्यां द्वाभ्यां दद्यात् ।

"मातामहानामप्येवं श्राद्धं कुर्याद्विचक्षणः । मन्त्रोहेन यथान्यायमन्येषां मन्त्रवर्जितम्" ॥ इति ।

अत्र **गोविन्दार्णवे** आदित एव पितरि जीवतीत्यादिवन्मातामहे जीवति स येषामित्यादि आन्तं व्याख्यातम् । तत्र यत्र पित्रनुज्ञया श्राद्धं तत्र पितुरेव मातामहाः । अन्यथा तु स्वस्यैव । अत एव तदग्रे **मनुः** ।

"कामं वा तदनुज्ञातः स्वयमेव समाचरेत्" । इति जीवता पित्रादिनाऽनुज्ञातः भोजनपक्षात्पक्षान्तरामिति **शूलपाणिः** । शुन्धं ता इत्यादौ मातामहादिपदोहः । अन्येषां मातुलपितृव्यादीनां मन्त्रवर्जितं पितृव्यादिपदवन्मन्त्रहीनं सर्वथा मन्त्रहीनमित्येके । अयं प्रकारोऽन्वष्टकादिषु सर्वत्र तत्त्यागस्यान्याय्यत्वादिति । अत्र यत्तच्छब्दाभ्यां पितृसंबद्धा एव मात्रादयो मातामहादयश्च पितृमातृत्वादिना जीवत्पितृकस्य तीर्थश्राद्धादौ देवताः स्वमातुः स्वमातामहस्य च पितृपत्नीत्वेन तच्छ्वशुरत्वेन च देवतात्वं तदप्येकोद्दिष्टमेव पितुस्तस्यैव प्राप्तेर्यः श्राद्धं कुर्यादित्यनेनाकरणपक्षोऽपि सूचितः । यस्य पिता प्रेतः स्यादित्यादि मृतपितृकविषयमिति स्पष्टमेव । अत एव **मानवे** प्रपितामहग्रहणं वृद्धप्रपितामहस्याप्युपलक्षणं तद्विषये एव मातामहानामप्येवमित्यतिदेशः । यस्य पितामह इत्यस्य तु जीवत्पितृक-

विषयत्वेऽपि तद्विषयेनातिदेशः तस्य पितरि जीवतीत्यनेन पितृसंबद्धमातामहानामेव प्राप्तत्वेन स्वमातामहाप्राप्तेः । 'न जीवत्पितृकः' इति **सुमन्तुस्तु** पिण्डपितृयज्ञविधिं विना श्राद्धनिषेधपर **इति केचित्।** अन्ये तु तद्बलाच्छ्रौतस्मार्तोभयाग्निरहितस्य जीवत्पितृकस्य श्राद्धेऽनधिकार एव अग्निहीनस्य पिण्डपितृयज्ञविधानेन श्राद्धाप्राप्त्या तद्वैयर्थ्यापत्तेरित्याहुः । मतान्तरमपि प्रागुक्तम् । **वज्रमार्कण्डेययोः** प्रश्नोत्तराभ्यां श्राद्धविधिप्रसंगे **विष्णुधर्मोत्तरे**ऽपि प्रपञ्चितमिदम् । तथा हि :

**वज्र उवाच ।**

"यस्य जीवेत्पिता श्राद्धं कस्यासौ कर्तुमर्हति । त्वमेकः संशयच्छेत्ता संशयं छिन्धि मे द्विज ॥

**मार्कण्डेय उवाच ।**

"येषां श्राद्धं पिता कुर्यात्तेषामेव स कारयेत् । मन्त्रहीनं च कर्तव्यं तेन श्राद्धं यथाविधि ॥

"मातामहानां श्राद्धं च मन्त्रहीनं च कारयेत् । श्राद्धं च सुहृदां कुर्यात्स्त्रीणां चाक्षयवाचकम्" ॥

**वज्र० ।**

"पिता पितामहश्चैव तथैव प्रपितामहः । यस्य जीवन्ति कर्तव्यं तेन श्राद्धं कथं द्विज" ॥

**मार्कण्डेय उवाच ।**

"तेन श्राद्धं न कर्तव्यं विधिलोपं च यादव । पूजनीयाश्च पितरः पितामहपितुः स्वयम्" ॥

**वज्र० ।**

"जीवेत्पितामहो यस्य पितुश्चैव पितामहः । पिता प्रेतस्तथा यस्य तस्य श्राद्धविधिं वद" ॥

**मार्क० ।**

"पिण्डनिर्वपणं कृत्वा स पितुर्मनुजेश्वर । पितुः पितामहादूर्ध्वं द्वाभ्यां पिण्डं निवेदयेत्" ॥

**वज्र० ।**

"पितापितामहौ प्रेतौ यस्य स्यातां द्विजोत्तम । पितुः पितामहो जीवेत्तस्य श्राद्धविधिं वद" ॥

**मार्क० ।**

"पित्रे सपित्रे कृत्वा तु पिण्डनिर्वपणं ततः । पिण्डनिर्वपणं कुर्यात्पितामहपितामहे" ॥

**वज्र० ।**

"प्रेतः पिता भवेद्यस्य पितुश्चैव पितामहः । तेन कार्यं कथं श्राद्धं तन्ममाचक्ष्व पृच्छतः" ॥

**मार्क० ।**

"स दत्वा तु पितुः पिण्डं तत ऊर्ध्वं पितामहात् । द्वाभ्यां दद्यात्सदा पिण्डमेवमाहुर्मनीषिणः" ॥

**वज्र० ।**

"प्रेतः पितामहो यस्य पिता जीवेद्द्विजोत्तम । पितुः पितामहो जीवेत्तस्य श्राद्धविधिं वद" ॥

**मार्क०** ।

"दत्वा पितामहे पिण्डं स ऊर्ध्वं प्रपितामहात् । पिण्डनिर्वपणं कुर्याद्वाभ्यां नित्यमतन्द्रितः" ॥

इति तदत्र जनकसद्भावे पितामहादिनाम्नैव श्राद्धमिति सिद्धम् । तथा च **मनुः** (अ.३श्लो.२२०)

"भ्रियमाणे तु पितरि पूर्वेषामेव निर्वपेदिति" । भ्रियमाणे जीवति पूर्वोत्तरार्द्धं यत्तु तेनोक्तम् (अ. ९ श्लो. १८६) ।

"त्रयाणामुदकं कार्यं त्रिषु पिण्डः प्रवर्तते । चतुर्थः संप्रदात्तेषां पञ्चमो नोपपद्यते" ॥

इति **मानवात्** । येभ्य एवेति वैष्णवाच्च एतेन

"जीवमानेन देयं स्याद्यस्माद्भरतसत्तम । तस्माज्जीवत्पिता कुर्याद्वाभ्यामेव न संशयः" ॥

इति **भविष्यत्पुराणम्** । पित्रादीनां त्रयाणां मध्ये पितुः सत्वात्तत्रिकान्तर्गताभ्यां द्वाभ्यामेव देयं न पितुरपीत्येवंपरं नाधिकव्यवच्छेदकमिति सूचितम् । **छन्दोगपरिशिष्टे**ऽपि श्रुतेरित्यग्रे ।

"पितामहे भ्रियमाणे पितुः प्रेतस्य निर्वपेत् । पितुस्तस्य च वृत्तस्य जीवेच्चेत्प्रपितामहः ॥

"पितुः पितुः पितुश्चैव तस्यापि पितुरेव च । कुर्यात्पिण्डत्रयं यस्य संस्थितः प्रपितामहः" ॥ इति ।

**हारीतोऽपि** ।

"जीवेत्पितरि वै पुत्रः श्राद्धकालं विवर्जयेत् । येषां वाऽपि पिता दद्यात्तेषामेके प्रचक्षते ॥

"पितामहेऽपि जीवे वै पितर्येव समापयेत् । उदकाञ्जलिं प्रदीपं च अञ्जनं च प्रयत्नतः" इति ।

तदिह सप्त पक्षाः सिद्धाः । पित्रादित्रयान्यतरसत्वेऽनधिकार इत्येकः । जीवन्तमुल्लङ्घ्यान्येभ्यो दद्यादिति द्वितीयः । मृतमात्रस्यैव जीवदनतिक्रमेण दद्यादिति तृतीयः । जीवदनुज्ञया ततोऽन्येषामपीति तुर्यः । जीवन्तं भोजयित्वाऽन्ययोरिति पञ्चमः । त्रीन्पिण्डान्निरूप्य जीवतः पिण्डं तेनैवादयित्वेति षष्ठः । जीवति होमान्तं कृत्वाऽन्येषां कुर्यादिति सप्तमः । एषां च यथाशाखं यथाचारं च व्यवस्थेति **गोविन्दार्णवे**। यत्तु **मनुः** ( अ. ३ श्लो २२० ) "विप्रवद्वापितं श्राद्धे स्वकं पितरमाशयेदिति" 'पितुः सनाम' ( अ. ३ श्लो. २२१ ) इत्यग्रिमं पितामहो वा तच्छ्राद्धे भुञ्जीतेत्यब्रवीन्**मनु**रिति च तल्लोकविद्विष्टत्वादननुष्ठेयम् । यदपि **तेनो**क्तम् ॥

"पिता यस्य तु वृत्तः स्याज्जीवेच्चापि पितामहः । पितुः स नाम संकीर्त्य कीर्तयेत्प्रपितामहम्" ॥

इति पिण्डदानादिषु पितृसंबन्धकीकीर्तनपूर्वकमेव तन्नाम गृह्णीयादिति तस्यार्थः । पितुः पित्रादीति यावत् । अग्रे तु **विष्णवादि**नोक्तमेव । यदा तु त्रयोऽपि जीवन्ति तदा नैव कुर्यात्तदाऽक्षतमातृपूजामात्रं कार्यम् । एवं मातृमातामहमातामहीश्राद्धेष्वपि द्रष्टव्यम् । इदमपि सर्वं तीर्थश्राद्धादिविषयमेव । नान्दीश्राद्धे तु येषां मतेपित्रादय एव देवतास्तस्य मौष्ठपदीविषयत्वात्तेषां तद्विषयमपि। येषां त तन्नानाभ्यासस्तेषां न तद्विषयामिति केचित् । वस्तुतस्तु प्रकरणाद्यथा तस्य तद्विषयत्वमेवमितोऽपि

वचनजातादन्यथा वृद्धावित्यादेरानर्थक्यं स्पष्टमेवेति तदेव मतं सम्यगिति बोध्यं व्युत्क्रममृते सपिण्डीकरणमस्तीत्येतस्यापीदमेव वचनजातं मूलमिति तदभिप्रायकमिदं यथैवं सति अग्रिमविज्ञानेश्वरविरोधो न। तथा तत्रैव वक्ष्यते। न चोक्तवचनजातात्त्रिषु जीवत्स्वकरणं लभ्यते। "दद्यात्त्रिभ्यः परेभ्यस्तु जीवेच्च त्रितयं यदि" इति प्रागुक्तयमस्तत्रापि करणं लभ्यते इति मिथो विरोध इति वाच्यम्। तादृशस्थले प्रौष्ठपदीश्राद्धीयदेवतानामेवोद्देश्यत्वमिति तदाशयात्तथा च व्रीहियववद्विकल्पस्तत्र। यद्वा तेषामप्यक्षतमातृपूजावत्पूजनमात्रं कार्यमित्याशयात्। दद्यादित्यस्य पूजामिति शेषः। अत एव

"तेन श्राद्धं न कर्तव्यं विधिलोपं च यादव। पूजनीयाश्च पितरः पितामहपितुः स्वयम्"॥

इति प्रागुक्त**विष्णुधर्मोक्ति**संगतिः। तत्र मन्त्रहीनमित्यस्य तन्मन्त्रहीनमित्यर्थः। न चैवमपि "ॐ संपन्नमिति विसृजेत्" इत्यस्मादग्रे **आश्वलायनगृह्यपरिशिष्टे** उक्तं तदेतत्पुंसवनाद्यपत्यसंस्कारेषु अग्न्याधेयादिषु श्रौतेषु पूर्तेषु च क्रियते महत्सु पूर्वेद्युस्तदहरल्पेषु तदिदमेके मातॄणां पृथक् पूर्वमथ पितॄणां ततो मातामहानामिति त्रितयमिच्छन्ति तस्माज्जीवत्पिता सुतसंस्कारेषु मातृमातामहयोः कुर्यान्मातर्यां जीवन्त्यां पितृमातामहयोः कुर्यात्पित्रोर्जीवतोर्मातामहस्यैव कुर्यात्त्रिषु जीवत्सु न कुर्यादिति तद्विरुध्यतैवेति वाच्यम्। तत्र तस्मादित्यस्य पूर्वसाकाङ्क्षत्वेन त्रितयस्येष्यमाणत्वादिति तदर्थसत्वेनैकीयमताभिप्रायकत्वस्य तत्र सत्वात्। अत एव सर्वैकवाक्यतासुतसंस्कारेष्विति तथाप्युपलक्षणमन्येषामपि पूर्वानुरोधात् त्रिषु वर्गत्रयाद्येषु आदरे वीप्सा तस्मात्सर्वैरपि जीवत्पितृभिर्येभ्य एवेत्याद्युक्तरीत्यैव नान्दीश्राद्धं कार्यमिति सिद्धम्। तत्र महत्सु उपनयनादिषु अल्पेषु पुंसवनादिषु पृथक्दिनभेदेन वा त्रितयं श्राद्धत्रयं भिन्नप्रयोगमित्यर्थः। तत्राद्ये **गार्ग्या**दिरुक्तः। द्वितीये **शातातपः**।

"पूर्वाह्णे मातृकं श्राद्धं मध्याह्ने पैतृकं तथा। ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम्"॥ इति।

अत्रैके इत्युक्त्या सहप्रयोगः स्वेष्टत्वेन सूचितः। स चानुकल्पत्वेन **वृद्धमनु**नोक्तः। प्राक्पिण्डपितृयज्ञविषये तु प्रागुक्त**कात्यायन**सूत्रात्कातीयानां तथैव तैत्तिरीयाणामपि प्रागुक्त**आपस्तम्ब**सूत्रात्तथैव प्रागुक्त**यमो**ऽप्यत्रानुसंधेयः। एवमन्यस्य यस्य कल्पसूत्रे तथोक्तं तथैव तेनानुष्ठेयमिति सर्वं चतुरस्रमिति दिगिति।

## अथास्य प्रयोगः।

## अथ विस्तरेण नान्दीश्राद्धं लिख्यते॥

तच्च पार्वणवत्। पूर्वाह्णे वैश्वदेवं तन्त्रेण कुर्यात्। कर्ता प्राङ्मुख उपवीती तिलकार्यं यवैः कुर्यात्। उपचारः प्रदक्षिणः। युग्मा ब्राह्मणाः। तत्र वैश्वदेवार्थं द्वौ पित्रादिभ्यस्तु प्रत्येकं द्वौ द्वौ

१८ वर्गस्य वा द्वौ द्वौ ६ ते च स्नानद्रव्यैः कृतस्नानाः कार्या ऋजवो दर्भाः समूलाः साग्राः गन्धादीनां द्विर्द्विर्दानं त्रिर्दानं वैकल्पिकं षष्ठीप्रयोगो न कार्यः । चतुर्थीप्रयोगोऽपि क्वचित् । मधुरं भोजनं दद्यात् नाम्लम्। रक्तपुष्पाणि वर्ज्याणि । संबन्धनामरूपाणि क्वचिद्वर्ज्याणि "सम्बन्धनामरूपाणि वर्जयेदत्र कर्मणीति" **कारिकोक्तेः** । सव्यजानुनिपातनम् । पितृसूक्तमांसापसव्यानि सर्वाणि वर्ज्याणि । आचम्य प्राणानायम्य देशकालौ संकीर्त्यामुककर्माङ्गभूतं नान्दीश्राद्धं करिष्ये । 'समस्तसम्पत्' इति ब्राह्मणान्प्रार्थयेत् । सत्यवसुसंज्ञका विश्वेदेवा नान्दीमुखाः भूर्भुवः स्वःस्थाने क्षणं दत्वा भवद्भिः प्रसादः कर्तव्यः । मातृपितामहीप्रपितामह्यः नान्दीमुखाः भूर्भुवः स्वःस्थाने क्षणं दत्वा भवद्भिः प्रसादः कर्तव्यः । पितृपितामहप्रपितामहा नान्दीमुखा भूर्भुवः स्वःस्थाने क्षणं दत्वा भवद्भिः प्रसादः कर्तव्यः । मातामहमातुःपितामहमातुःप्रपितामहाः पत्नीसहिताः नान्दीमुखाः भूर्भुवः स्वःस्थाने क्षणं दत्वा भवद्भिः प्रसादः कर्तव्यः । ततश्चतुरस्रं पाद्यार्घ्यं मण्डलद्वयं कृत्वा सत्यवसुसंज्ञका विश्वेदेवाः स्वागतम् ।

"नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटियुगधारिणे नमः" ॥

गन्धादिभिरभ्यर्च्य । सत्यवसुसंज्ञका विश्वेदेवाः नान्दीमुखाः भूर्भुवः स्वः इदं वः पाद्यं स्वाहा न ममेति यवोदकं विप्रपादेषु द्विवारं क्षिपेत् । ततः पूर्ववत्स्वागतवचनादिनाऽभ्यर्चनान्तं कृत्वा मातृपितामहीप्रपितामह्यः नान्दीमुखाः भूर्भुवः स्वः इदं वः पाद्यं स्वाहा न ममेति जलं क्षिपेत् । पितृवर्ग. मातामहसपत्नीकमातामहवर्गयोः पाद्यं दत्वा । द्वौ द्वौ विप्रौ प्राङ्मुखावुपवेश्य प्रक्रान्तं नान्दीश्राद्धकर्म करिष्ये । दैवे हस्तोदकं दत्वा ऋजुदर्भैरुदगग्रैरासनं दक्षिणतो दत्वाऽपो दत्वा नान्दीश्राद्धे दैवे क्षणः क्रियतामिति कर्ता वदेत् । विप्राः ॐ तथा प्राप्नुतां भवन्तौ विप्रौ प्राप्नुवावः कर्ता यवैरर्चयेत् । अर्घ्यपात्रे प्राक्संस्थे निधाय जलमापूर्य 'यवोऽसीति' मन्त्रेण यवं निक्षिप्य गन्धपुष्पाणि क्षिप्त्वा "विश्वेदेवास आगत शृणुताम इमं हवम्। एवं बर्हिर्निषीदत । विश्वेदेवाः शृणुतेमं हवं मे ये अंतरिक्षे य उपविष्ठा ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन्बर्हिषि मादयध्वम्" इति मन्त्रद्वयेन मूर्द्धादिपादपर्यन्तं यवैरर्चयेत् ।

"आगच्छन्तु महाभागा विश्वे देवा महाबलाः। ये अत्र विहिताः श्राद्धे सावधाना भवन्तु ते" ॥

इति मन्त्रेण प्रार्थयेत् । देवपात्रे संपन्ने सुसंपन्ने स्वाहार्घ्यौ अस्तु स्वाहा इति प्रतिवचनं देयम् । सत्यवसुसंज्ञका विश्वेदेवाः इदं वो अर्घ्यं स्वाहा न ममेति । सकृदर्घ्यदानं कृत्वा ततो गन्धपुष्पधूपदीपाच्छादनादि दत्वा ततो मात्रादिभ्य ऋजुदर्भैर्दक्षिणतो प्राग्वदासनं परिकल्प्य प्राक्संस्थार्घ्यपात्रेषु अप आसिच्य 'शन्नो देवीः' इत्यनुमन्त्र्य 'यवोऽसि सोमदेवत्यो गोसवो देवनिर्मितः । प्रत्नवद्भिः प्रत्तः पुष्ट्या नान्दीमुखान् पितॄनिमां लोकान्प्रीणयाहि नः स्वाहा न ममेति" प्रतिपात्रे यवान्निक्षिप्य अन्यपार्वणवदर्घ्यदानादि कृत्वा नान्दीमुखा मातर इदं वो अर्घ्यमिति सकृदर्घ्यदानमन्येभ्योऽप्येव-

मेवार्घ्यं दद्यात् । प्रतिब्राह्मणं मन्त्रावृत्तिः । "या दिव्या आपः पयसा संबभूवुर्या अन्तरिक्ष्या उत पार्थिवीर्याः । हिरण्यवर्णा यज्ञियास्तान आपः शंस्योनासुह वा भवंतु" गन्धादीनि द्विर्द्विर्दत्वा पाणहोमान्तं समानं कार्यम् । तत्र विशेषः । अग्नये कव्यवाहनाय स्वाहा । सोमाय पितृमते स्वाहेति । अन्येषामपि पाणिषु द्वे द्वे आहुती हुत्वा । "अन्नेषु परिविष्टेषु हुतशिष्टं ददात्यथ" । ततो गायत्र्या जलमभ्युक्ष्य "पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखे जुहोमि ब्राह्मणानां त्वा प्राणापानयोर्जुहोम्यक्षितमसि मैषांक्षेष्ठा अमुत्रामुष्मिँल्लोके । इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांसुरे । विष्णो हव्यं रक्षस्व" ब्राह्मणाङ्गुष्ठमूलेन तत्पात्रं ब्राह्मणाय निवेद्य । "इदमन्नममृतरूपं परिविष्टं परिवेक्ष्यमाणं च आतृप्तेः स्वाहा न ममेति" जलं क्षिपेत् । 'ये देवासो दिव्येकादशस्थपृथिव्या मध्येकादशस्थ अप्सु क्षितो महिनैकादशस्थ ते देवासो यज्ञमिमं जुषध्वम्"इति प्रार्थ्य ततो मातृवर्गेभ्यः पितृवर्गेभ्यः यथालिङ्गं अङ्गुष्ठादिनिवेशनान्तं सर्वं कुर्यात् । "प्रजापते न त्वेदतान्यन्यो विश्वा जातानि परिता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम्" इत्यनेन मन्त्रेण नान्दीमुखदेवताः प्रीयन्तां न ममेति जलमुत्सृजेत् । ब्राह्मणस्तु बलिदानवर्ज्यं भुञ्जीत । तत्र पितृसूक्तं न जपेत् । रक्षोघ्नानैन्द्रान्जपेत् । तृप्तिप्रश्नान्तं समानम् । तत्र विशेषः । मधुवातातृचः स्थाने उपास्मै गायता नर इति पञ्चर्चम् । अक्षन्नमीमदन्तेति चोक्त्वा संपन्नं दैवे रुचिरमिति तृप्तिप्रश्नः । तथैव वर्गत्रयस्य रुचिरमिति पृष्ट्वा तेऽपि तथैव ब्रूयुः । पिण्डदानान्तं समानम् । तत्र विशेषः । आचान्तेषु विप्रेषु गोमयलिप्ते भोजनस्थले प्रागग्रान् दर्भानास्तीर्य दधिसंयुक्ताज्यमिश्रं बदरीफलमिश्रं च भुक्तशेषमन्नं गृहीत्वा उपरितनं तन्त्रं कृत्वा नान्दीमुखाभ्यो मातृभ्यः स्वाहेति एकं पिण्डं दत्वा द्वितीयं तु तूष्णीं दद्यात् । एवं प्रत्येकं द्वौ द्वौ पिण्डौ निर्वपेत् १८ पिण्डदाने कुलदेशाचारतो व्यवस्था । **भविष्यत्पुराणे**

"पिण्डनिर्वपणं कुर्यान्न वा कुर्यान्नराधिप । वृद्धिश्राद्धे महाबाहो कुलधर्मानवेक्ष्य तु ॥

पिण्डानुमन्त्रणादि वैकल्पिकं पिण्डपात्रमधोमुखं न कुर्यात् । कृतस्य नान्दीश्राद्धस्य प्रतिष्ठासिद्ध्यर्थं द्राक्षामलकनिष्क्रयभूतं द्रव्यं दातुमहमुत्सृजे । ॐ संपन्नमिति विसृजेत् ।

"दातारो नोऽभिवर्द्धन्तां वेदाः संततिरेव नः । श्रद्धा च नो मा व्यगमद्बहु देयं च नोऽस्तु ॥

"अन्नं च नो बहु भवेदतिथींश्च लभेमहि । याचितारश्च नः सन्तु मा च याचिष्म कंचन" ॥ तथैव ब्राह्मणा ब्रूयुः । ततः ।

"माता पितामही चैव तथैव प्रपितामही । पिता पितामहश्चैव तथैव प्रपितामहः ॥

"मातामहस्तत्पिता च प्रमातामहकादयः । एते भवन्तु मे प्रीताः प्रयच्छन्तु च मङ्गलम्"॥इति

"इहैवस्तं मावियौष्टं विश्वमायुर्व्यश्नुतं । क्रीडन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे" इति ब्राह्मणे-

राशिषो देयाः । यथाचारं सर्वं कुर्यात् । "इलामग्ने पुरुदंसं सनिंगोः"इत्यनेन पात्रसंघट्टनं घण्टाशब्दं वा कुर्यात् । ततो मातृका विसर्जयेत् । जीवन्मातृकस्य न मातृपार्वणम् । जीवन्मातामहस्य न मातामहपार्वणम् । द्वारलोपात् । जीवत्पितृकस्तु एभ्य एव पिता दद्यात्तेभ्यो दद्यादिति । विप्राणामुच्छिष्टानि आसायं बहिर्न उद्वासयेत् । ततः स्वस्ति नो मिमीतामश्विना भगः स्वस्ति संबाधेष्वभयन्नो अस्तु । मन्त्र- ५०।"शन्न इन्द्राग्नी भवतामवोभिः । तेनोरासंतामुरुगायमद्य यूयं पात स्वस्तिभिस्सदानः"प० "त्यमूषुवा. जिनं देवजूतं सहावानं० तस्मा वरं ते युवतिन्नशर्या" प० इति पठेत् । इति नान्दीश्राद्धप्रयोगः॥०॥

**अथानुगताग्निप्रायश्चित्तविधिः** । आचम्य प्राणानायम्य देशकालौ संकीर्त्यानुगताग्निप्रायश्चित्तं करिष्ये । उपलेपादि श्रोत्रियागारात्स्वगृहाद्वाऽग्निं प्रतिष्ठाप्याज्योत्पवनादि कृत्वा । 'अयाश्चाग्नेरि'त्यस्य मन्त्रस्य विमदऋषिः अग्निर्देवता । पङ्क्तिश्छन्दः । अनुगताग्निप्रायश्चित्ताज्यहोमे विनियोगः । "ॐ अयाश्चाग्नेस्यनभिशस्तीश्च सत्यमित्वमया असि । अयसा वयसा कृतोऽयासन्हव्यमूहिषे यानो धेहि भेषजं स्वाहाः'। अग्नये अयत्स इदं । "ॐ भूर्भुवः सुवः स्वाहा"। प्रजापतय इदम्. परिसमूहनादि सर्वं कुर्यात् । इति अनुगताग्निप्रायाश्चित्तम् ॥ २५० ॥

## याज्ञवल्कीये २५१ श्लोकः

**उद्दिष्टः** उद्देश्यः सपिण्डीकरणमाह । **शेषमिति** । तथा च स उभयोः शेष इति भावः । दैवहीनमित्यस्य तत्कर्मरहितमिति शाब्दोऽर्थस्तमाह । **वैश्वेति** । 'एकार्घ्येति' बहुव्रीह्योः कर्मधारय इत्याह । **एकेति**।एकं पात्रमेकं पवित्रमेकमर्घ्यमेकं पिण्डं नावाहनं नाग्नौ करणं न स्वधा अभिरम्यतास्वरूपस्तु विसृजेदत्रासकृत्प्रणववर्जितम् । "एकोद्दिष्टेषु सर्वेषु पितृशब्दो न विद्यते" **इत्याश्वलायनगृह्यपरिशिष्टा**दाद्ये एकत्वमुभयविशेषणमन्त्ये दर्भविशेषणं न पवित्रविशेषणमिति बोध्यम् । अत्राग्नौकरणं पाक्षिकमिति **स्मृतिरत्नावली** । अस्य दैवहीनत्वेन शेषमित्युपसंहारेणापसव्यस्यैव प्राप्तौ पुनस्तदुक्तेः फलमाह । **अनेनेति** ॥ २५१ ॥

## याज्ञवल्कीये २५२ श्लोकः

शेषमाह । **कर्तव्ये इति** । अत्र बहुवचनेनैकोद्दिष्टेऽप्येकमारभ्यैकविंशतिपर्यन्तमयुजो ब्राह्मणा यथोत्साहं भवन्तीति दर्शितम् । **कात्यायनः** "स्वदितमिति तृप्तिप्रश्नः सुस्वदितमित्यनुज्ञा" इति । अत्र विकिरस्यापि प्रतिषेधं पठन्त्य**भियुक्ताः** । तत्प्रेतश्राद्धविषयमित्येके सर्वत्रेत्यन्ये । तत एवाह । **हेति** । **हारीतोऽपि** ।

"आमश्राद्धं तु पूर्वाह्णे एकोद्दिष्टं तु मध्यतः । पार्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकम्" ॥ इति । **मनुरपि** ।

"पूर्वाह्णे दैविकं श्राद्धमपराह्णे तु पार्वणम् । एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्" ॥ इति । तत्र दैविके **विश्वामित्र** आह

"देवानुद्दिश्य क्रियते यत्तद्दैविकमुच्यते। तन्नित्यश्राद्धवत्कुर्यात् द्वादश्यादिषु यत्नतः" ॥ इति।

विशेषमाह। **भुञ्जीतेति। विशेषे** नवश्राद्धे। विशेषान्तरं तत्रैवाह। **बृहत्प्रचेताः**

"नाशिषः प्रतिगृह्णीयात्तत्पात्रमालभ्य जपति" इति। तथाऽभिरम्यतामिति न वाच्यं **शौनकोक्तेः** किं तु स्वस्तीति वदेत्। **प्रचेताः**"न पैतृको जपः कार्यः स्वदितं च नोदाहरेत्" इति। एष्वर्घ्यपात्रन्युब्जीकरणं नास्ति "उत्तानं स्थापयेत्पात्रमेकोद्दिष्टे सदा बुधः" इति **स्मृतेरित्यभियुक्ताः**। अत्रैकोद्दिष्टशब्देन नवश्राद्धमिति च। अत्र सर्वममन्त्रकं "नवश्राद्धममन्त्रकम्" इत्युक्तेः

"एकोद्दिष्टेषु सर्वेषु अनुशब्दो न विद्यते। पितृशब्दं न कुर्वीत कर्म चात्र न लोपयेत्" ॥

इति **परिशिष्टम्**। एकोद्दिष्टपिण्डेऽनुशब्दो नास्ति पितृशब्दं न कुर्वीत 'तिलोऽसि प्रेतदेवस्य' इति नाक्षय्योदकम्। **भृगुः** 'एकोद्दिष्टे कुशाः समूलाः' इति तेन सकृदाच्छिन्ननिषेधः। अवनेजनप्रत्यवनेजनेन धूपादि च न

"अनुदकमधूपं च गन्धमाल्ये विवर्जयेत्। नवश्राद्धममन्त्रं च पिण्डोदकविवर्जितम्" ॥

इत्युक्तेः शेषमन्नमिति च न। तदपि तस्मै दद्यादप्सु वा पातयेत्। नान्येन भोक्तव्यम्। एकादशाहश्राद्धे साग्निकस्यापि पश्चाद्वैश्वदेव **इत्यभियुक्ताः**। तथा च **परिशिष्टे**।

"संप्राप्ते पार्वणे श्राद्धे एकोद्दिष्टे तथैव च। अग्रतो वैश्वदेवः स्यात्पश्चादेकादशेऽहनि" ॥ इति। तथा च **पठ्यते**

"आशिषो द्विगुणा दर्भा जपाशीः स्वस्तिवाचनम्। पितृशब्दो नमः शब्दः शर्मशब्दस्तथैव च॥

"पात्रालम्भोऽवगाहश्च उल्मुकोल्लेखनादिकम्। तृप्तिप्रश्नश्च विकिरः शेषप्रश्नस्तथैव च ॥

"प्रदक्षिणा विसर्गश्च सीमान्तगमनं तथा। अष्टादशपदार्थांस्तु प्रेतश्राद्धे विवर्जयेत्" ॥ इति।

तथा शय्यादिदाने विशेषमाह **सत्यव्रतः**।

"सद्यः शौचेऽपि दातव्यं प्रेतस्यैकादशेऽहनि। स एव दिवसस्तस्य श्राद्धशय्यासनादिषु"॥इति।

तद्दानं चोक्तं **स्मृत्यन्तरे**

"वस्त्रालङ्कारशय्यादि पितुर्यद्वाहनादिकम्। गन्धमाल्यैः समभ्यर्च्य श्राद्धभोक्त्रे तदर्पयेत्"॥इति। एतच्छ्राद्धं न केवलं ब्राह्मणस्यैवैकादशेऽहनि अपि तु क्षत्रादेरपि। तस्यापि ह्ययमेव श्राद्धकालः। तथा च **पैठीनसिः**

"एकादशेऽह्नि यच्छ्राद्धं तत्सामान्यमुदाहृतम्। चतुर्णामपि वर्णानां सूतकं तु पृथक् पृथक्" ॥इति। न च तस्याशुचित्वेन तत्र श्राद्धानधिकार इति वाच्यं वाचनिकस्य तस्य सत्वात्। तथा च **शङ्खः**

"आद्यश्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि। कर्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः" ॥

आद्यं सर्वैकोद्दिष्टप्रकृतिभूतमेकादशाहाख्यम्। **व्यासोऽपि**

"सूतकान्ते नरः कुर्यादेकोद्दिष्टद्वयं बुधः । सूतके पतिते चापि स्वतन्त्रं नातिलङ्घयेत्"॥ इति । सूतकेऽपि पतिते स्वतन्त्रं चेत्यन्वयः । तेन मृतकस्य द्वितीयस्य च परिग्रहः स्वतन्त्रं महैकोद्दिष्टम् । एतच्छ्राद्धानन्तरं स्नात्वा भुञ्जीत । तथा च **बृहस्पतिः** "एकोद्दिष्टानां सर्वेषामवसानेऽवगाहनं कुर्यात्प्रेतसमुद्दिष्टं सपिण्डीकरणं विना" इति। "अवगाहनं स्नानं प्रेतसमुद्दिष्टं प्रेतसंबन्धिष्वेकोद्दिष्टम् ।" **अङ्गिरसेति वसिष्ठेनापि**

"सप्तमेऽह्नि तृतीयेऽह्नि प्रथमे नवमे तथा । एकादशे पञ्चमे स्युर्नवश्राद्धानि षट् सदा"॥ इति ।

**भविष्यत्पुराणे**ऽपि

"नवसप्तविशां राज्ञां नवश्राद्धान्यनुक्रमात् । आद्यन्तयोर्वर्णयोस्तु षडित्याह महर्षयः" ॥ इति ।

अत्र नवशब्दो नामधेयं समूहस्य तथा चाद्ये श्राद्धशब्दः समूहपरः। समुदाये दृष्टाः शब्दा अवयवेष्वपीति न्यायेन तु **वसिष्ठादयः।** तथा चैकोद्दिष्टं त्रिविधं नवं नवमिश्रं पुराणं च । तत्र प्रथमाहाद्येकादशाहान्तं विहितं नवश्राद्धं तदुक्तमेव षण्णां नवश्राद्धानामुपरि कर्तव्यं मासिकं नवमिश्रम् । तथा **चाश्वलायनः** 'नवमिश्रं षडुत्तरम्' इति । मासिकानामुपरि कर्तव्यं प्रत्याब्दिकादि पुराणम् । अत एव **हारीतेन प्रायश्चित्तकाण्डे** क्रमेण नवमासिकयोः प्रायश्चित्तमुक्त्वोत्तरकालिकं श्राद्धं पुराणशब्देन व्यवहृतम् ।

"चान्द्रायणं नवश्राद्धे प्राजापत्यं तु मासिके । एकाहस्तु पुराणेषु प्रायश्चित्तं विधीयते" ॥ इति ।

एकादशाहे एकोद्दिष्टाकरणे पुनःसंस्कारमाह **बृहस्पतिः ।**

"एकादशाहे यच्छ्राद्धमेकोद्दिष्टं समाचरेत् । यदि कार्यं न कुर्वीत पुनःसंस्कारमर्हति" ॥ इति ।

**शातातपो**ऽपि ।

"एकोद्दिष्टं ततः कुर्यान्मृतस्यैकादशेऽहनि । तत्र श्राद्धं न कुर्याच्चेत्पुनःसंस्कारमर्हति" ॥ इति ।

**वसिष्ठो**ऽपि

"यत्कृतं प्रेतमुद्दिश्य नवश्राद्धादिकं क्वचित् । अकृतं तद्विजानीयादेकोद्दिष्टं विना कृतम्" इति।

अकृतं निष्फलम् । अनेनावश्यकत्वं तस्य प्रतिपाद्यते न त्वावृत्तिः । एतेन प्रागुक्तमुभयम् । अत एव **वसिष्ठः ।** "ततश्चाकृते तदेकोद्दिष्टेऽकृतसंचयस्य दाहादिदशदिनपर्यन्तं प्रेतकार्याणि पुनरप्येकाहेन कार्याणि" "कृतसंचयस्य तु नवश्राद्धादिकमेव दाहसंचयभिन्नं पुनः कार्यम्" इति **वैजनाथोक्त**मपास्तमक्षरमर्यादयाऽलाभात् । मरणाद्विषमदिनेष्वेकैकं नवश्राद्धं कुर्यात् "आनवमाद्यतन्नवमं विच्छिद्येत एकादशेऽह्नि तत्कुर्यात्" इति **बौधायनेन** पञ्चानामेव तत्वस्योक्तत्वाच्चाङ्गभिविधौ नवमदिनस्थमन्तरितं चेदेकादशाहे कार्यम् । अत एव ।

"नवश्राद्धानि पञ्चाहुराश्वलायनशाखिनः । आपस्तम्बाः षडित्याहुर्विभाषा तैत्तिरीयिणाम्" ॥ इति ।

**शिवस्वामी ।**

अथ **वृषोत्सर्गः** । ॐ जीववत्सायाः पयस्विन्याः पुत्रं त्रिहायनं द्विहायनमेकहायनं वा नीलं बभ्रुं कपिलं पिङ्गलं कृष्णं लोहितं श्वेतं वा एकवर्णमनेकवर्णं वा अव्यङ्गाङ्गं जीवमातृकं वा यथासंभवं वा यो वा यूथं छादयति तं वृषमुत्सृजेत् । यद्वा ।

"लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः । श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते" ॥

यद्वा

"चरणास्तु मुखं पुच्छं यस्य श्वेतानि गोपतेः । लाक्षया समवर्णश्च स नीलो वृष उच्यते" ॥

कार्तिक्यां पौर्णमास्यां वैशाख्यां आश्वयुज्यां वा अन्यासु चन्द्रसूर्यग्रहे विषुवति तुलामेषयोरयनयोर्मृतैकादशाहे यथासंभवे शुभसमये वा उत्सृजेत् ।

**अथ प्रयोगः** । आद्येऽह्नि गृहे गोष्ठे तीर्थे शिवालये पुण्यक्षेत्रे वा यथाशास्त्रं पताकाध्वजशोभितं षोडशस्तंभं मण्डपं छायामात्रं वा कुर्यात् । तन्मध्ये ईशानभागे वा वेदिं अष्टहस्तां चतुर्हस्तां वा सुशोभितां कृत्वा कृताह्निकः पूर्वाह्ने कृताभ्यङ्गः कृतमङ्गलश्च देशकालादि स्मृत्वा "मम समस्तपितॄणामुद्धरणार्थममुककामनया वा संसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं वृषोत्सर्गाख्यं कर्म श्वः अद्य वा करिष्ये" इति संकल्प्य "तदङ्गगणेशपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं च करिष्ये" इति संकल्प्य स्वशाखानुसारेण सर्वं यथाक्रमं कुर्यात् । तत आचार्यब्रह्मऋत्विग्वरणं च कुर्यात् । ततस्तैः सह मण्डपदेवताः प्रतिष्ठाप्य पताकादि तत्तन्मन्त्रैः स्थापयेत । तस्मिन्नहनि नवग्रहमपि केचित् । ततः वृषस्य चतसॄणां वत्सतरीणां च द्वयोरेकस्य वा यथालाभं माङ्गलिकस्नानादि कारयित्वा ब्राह्मणान्भोजयित्वा यजमानो भुञ्जीत हविष्यम् । ततः श्वोभूते कृतनित्यकर्मक्रियः वेदेरुपरि हस्तमात्रं स्थण्डिलं विधाय देशकालौ स्मृत्वा "उपक्रान्तं वृषोत्सर्गमहं करिष्ये" इति संकल्प्य "तदर्थमग्निस्थापनादि करिष्ये" इति संकल्प्य पञ्चभूतसंस्कारपूर्वकमग्निं स्थापयेत् । स्वयं वृतो वा आचार्यः सद्योऽधिवासनं कुर्यात् । अग्निस्थापनदेशादीशान्यां पञ्च गोमातरः पीठवस्त्रोपरि अक्षतपुञ्जोपरि पूज्याः । ॐ नन्दामावाहयामि । सुमनसामावाहयामि । सुभद्रामावाहयामि । सुशीलामावाहयामि । सुरभिमावाहयामि । एता देवताः संपूज्य । तासामग्रे धान्योपरि नवं अव्रणं रुद्रकलशं वस्त्रवेष्टितं पञ्चरत्नपञ्चपल्लवहिरण्यादियुतं 'आकलशेषु' इति स्थापयित्वा 'इमं मे गङ्गे' इति शुद्धजलेनापूर्य तदुपरि ताम्रवंशादिमये भाजने यथाशक्ति सुवर्णनिर्मितां रुद्रप्रतिमां स्थापयित्वा संपूज्य च एकेन ब्राह्मणेन रुद्रजपेनानुमन्त्रणं कारयेत् । ततः वत्सतरीभिः सह वृषं शुद्धोदकेन 'आपोहिष्ठा' इति 'कयान' इति सूक्ताभ्यामभिषिञ्चेत् । 'आपोहिष्ठेति' नवर्चस्यांबरीषः सिंधुद्वीप आपो गायत्री अन्त्ये द्वेऽनुष्टुभौ पञ्चमी वर्धमाना सप्तमी प्रतिष्ठा वृषवत्सतर्यभिषेके विनियोगः । ॐ आपोहिष्ठा मयो भुवः । कयान इति तिसॄणां गौतमो वामदेव इन्द्रो गायत्री । अभीषुण इति पादनिचृत् । अभिषेके विनियोगः । 'कयानः ३' । ततो वस्त्रा-

क्षतगन्धमाल्यैरलङ्कृत्य अन्वाधानं कुर्यात् । तत्र देवतापरिग्रहार्थमित्यादि चक्षुषी आज्येनेत्यन्तमुक्त्वा अत्र प्रधानं रुद्रं चरुद्रव्येण सोमं पायसेन इन्द्रं पावकेन शेषेण स्विष्टकृतमित्यादि सद्यो यक्ष्ये इत्यन्तमुक्त्वाऽन्वाधाय परिसमूहनादि पूर्णपात्रनिधानान्तं कृत्वा'रुद्राय जुष्टं निर्वपामि'इत्यादि निर्वापप्रोक्षणादिक्रमेण चर्वादिश्रपणं कृत्वा क्रमेणावदानधर्मेण जुहुयात् चरुणा 'रुद्राय स्वाहा। रुद्रायेदं न मम' इति जुहुयात्। 'पायसेन सोमाय स्वाहा । सोमायेदम्। 'यावकेन' इन्द्राय स्वाहा। इन्द्रायेदम्. इति हुत्वा। ततः स्विष्टकृतादिपरिस्तरणान्तं कुर्यात् । ततः स्त्रीभिर्विवाहवत् कृतमङ्गलं वृषं प्रादक्षिण्येन वेदेरुत्तरतो नीत्वा प्राङ्मुखाय वृषाय स्वयमुदङ्मुखो मधुपर्केण यथागृह्यं पूजयेत् । ततोऽलङ्करणैर्वृषं भूषयित्वा वस्त्रच्छत्रोपानत्कांस्यभाजनाचमनपात्रादि यथाशक्ति समर्प्य माल्यहरिद्राकुङ्कुमादिनाऽलङ्कृत्य ततो दक्षिण उरौ तप्तेन राजतत्रिशूलेनाङ्कयित्वा वामे रौक्मेण चक्रेणाङ्कयेत् । अभावे आयसाभ्यामुत्सर्गकाले चाङ्कनम् । अस्मिन्पक्षेऽङ्कनार्थं चिह्नमात्रमस्मिन्काले कार्यम् । ततो वृषन्यासम् । 'इषेत्वेति' मूर्ध्नि । 'इमा रुद्रायेति' शूलाङ्के । 'नमस्ते रुद्रेति' चक्राङ्के। 'सहस्राणीति' ललाटे। 'विभ्राडिति' 'त्र्यम्बकं यजामहे' इति दक्षिवामनेत्रयोः । 'मानस्तोकेति' नासिकायाम् । 'अवतत्य' इति मुखे । 'नीलग्रीवेति' कण्ठे । 'मर्माणित' इति बाहुमध्ये । 'समिधाग्निमिति' बाहुभ्याम् । 'नमो वः किरिकेभ्य' इति हृदि । 'हिरण्यगर्भ' इति नाभौ । 'मीढुष्टमेति' कट्याम् । 'मानो महान्तमि'त्यूर्वोः । 'उदुत्य'मिति जङ्घयोः । 'इमां रुद्रायेति' जान्वोः । 'रक्षोहणमिति' गुह्ये । 'ये अन्नेष्विति' वृषणे । 'ऋषभं मेति' पुच्छे । 'त्रिपादूर्ध्व' इति खुरेषु । एवं न्यासं कृत्वा वेद्यां समानीय अग्नेः पश्चिमभागे स्वगृह्योक्तविधिना चतुर्भिर्वत्सतरीभिः सह सर्वं विवाहं कुर्यात् ।

**तत्र प्रयोगः** । प्राणानायम्य देशकालौ स्मृत्वा "मम सर्वेषां पूर्वजानां निरतिशयानन्दब्रह्मलोकावाप्त्यर्थममुककामनया वा श्रीरुद्रस्वरूपिणे वृषाय वत्सतरीकन्यादानमहं करिष्ये" इति संकल्प्य ततः कुशयवयुक्तजलं गृहीत्वा वृषखुरे "कन्या तारयतु पुण्यं वर्धतां शिवा आपः सन्तु सौमनस्यमस्तु अक्षतं चारिष्टं चास्तु दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिरस्तु । यच्छ्रेयस्तदस्तु । यत्पापं तत्प्रतिहतमस्तु । पुण्याहं भवन्तो ब्रुवन्तु । स्वस्ति भवन्तो ब्रुवन्तु । ऋद्धिं भवन्तो ब्रुवन्तु । श्रीरस्त्विति भवन्तो ब्रुवन्तु । अमुकशर्माहं मम सर्वेषां पूर्वजानां निरतिशयानन्दब्रह्मलोकावाप्त्यर्थममुककामनया वा रुद्ररूपाय वृषाय गौरीस्वरूपा इमा यथाशक्त्यलंकृता वत्सतरीः तुभ्यमहं संप्रददे" इति खुरे निक्षिपेत् । अनेन वत्सतरीदानेन भगवान्वृषस्वरूपी श्रीरुद्रः प्रीयतामित्युक्त्वा अस्य नीलोद्वाहस्य प्रतिष्ठासिद्ध्यर्थमिदं हिरण्यं दक्षिणात्वेन संप्रददे । एवं कन्यादानं यथागृह्यं कार्यम् । ततः वत्सतरीणां रुद्रकलशोदकेन मन्त्रैरभिषेकः कार्यः । मन्त्राः "आपोहिष्ठेति । ९ । समुद्रज्येष्ठाः । ४ । इमं मे गंगे इति । २ । कयानः । ३ । "

"सहस्राक्षं शतधारमृषिभिः पावमानं कृतम् । तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु मे ॥
"भगं ते वरुणो राजा भगं सूर्यो बृहस्पतिः । भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो[1] ददुः ॥
"यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्धनि । ललाटे कर्णयोरक्ष्णोरापस्तद्घ्नन्तु सर्वदा ॥
"सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः । वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः ॥
"प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते । आखण्डलोऽग्निर्भगवान्यमो वै निर्ऋतिस्तथा ॥
"वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः । ब्रह्मणा सहिताः सर्वे दिक्पालाः पान्तु ते सदा ॥
"कीर्तिर्लक्ष्मीर्धृतिर्मेधा बुद्धिः श्रद्धा क्षमा मतिः । पुष्टिर्जया वपुः शान्तिः तुष्टिः कान्तिश्च मातरः॥
"एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः । आदित्यश्चन्द्रमा भौमो बुधजीवसुतार्कजाः ॥
"गृहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः । ऋषयो मुनयो गावो देवमातर एव च ॥
"देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः । अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च ॥
"औषधानि च रत्नानि कालाश्चावयवाश्च ये । सरितः सागराः शैलास्तीर्थानि जलदा नदाः ॥
"एते त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये" । एवमभिषिच्य वृषकर्णे मन्त्रं जपेत् ।
"धर्मस्त्वं वृषरूपेण गवामानन्दकारक । अष्टमूर्तेरधिष्ठानमतः पाहि सनातन" ॥

ततः "तीक्ष्णशृङ्गाय विद्महे वेदपादाय धीमहि। तन्नो वृषः प्रचोदयात्" इति वृषगायत्रीं जपेत्। "ऋषभं मासमानानामिति" वृषभं प्रार्थ्य ततः गवां प्रार्थना ।

"गावो ममाग्रतः सन्तु गावो मे सन्तु पृष्ठतः । गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ॥
"पञ्चगावः समुत्पन्ना मथ्यमाने महोदधौ । तासां मध्ये तु या नन्दा तस्यै धेन्वै नमो नमः ॥
"या लक्ष्मीः सर्वदेवानां या च देवेष्वधिष्ठिता । धेनुरूपेण सा देवी मम पापं व्यपोहतु ॥
"अयं हि वो मया दत्तः सर्वासां पतिरुत्तमः । तुभ्यं चेता मया दत्ताः पत्न्यः सर्वा मनोरमाः"॥

तत आचार्यः वृषान्वारब्धः सन्विवाहहोमं कुर्यात् । ततः अग्नेः पूर्वतः उदङ्मुखं वृषं कृत्वा यजमानं प्राङ्मुखेन यवैस्तिलैश्च वत्सतरीवृषपुच्छयोः मिलित्वा तर्पणं कुर्यात् । ततः प्राणानायम्य देशकालौ स्मृत्वा "मम समस्तपितॄणां दुर्गतिगतानां तृप्त्यर्थमात्मन आकल्पसन्तानाविच्छेदार्थं वृषपुच्छे तर्पणमहं करिष्ये" इति संकल्प्य आदौ जलतर्पणं देवऋषिपितृतर्पणं कुर्यात् । ततः पित्रादिसर्वोद्दिष्ट-पितॄंस्तर्पयेत् । ततः पुराणश्लोकैस्तर्पयेत् । यथा ।

"ब्रह्माद्या देवताः सर्वा ऋषयो मुनयस्तथा । असुरा यातुधानाश्च मातरश्चण्डिकास्तथा ॥
"दिक्पाला लोकपालाश्च ग्रहदेवाधिदेवताः । ते सर्वे तृप्तिमायान्तु नीलपुच्छे सुतर्पिताः ॥
"विश्वेदेवास्तथाऽऽदित्याः साध्याश्चैव मरुद्गणाः । क्षेत्रपीठोपपीठानि नदा नद्यश्च सागराः ॥
"पाताले नागपत्न्यश्च नागाश्चैव सपर्वताः । पिशाचा गुह्यकाः प्रेता गन्धर्वा गणराक्षसाः ॥
"पृथिव्यापश्च तेजश्च वायुराकाशमेव च । दिवि भुव्यन्तरिक्षे च ये च पातालवासिनः ॥

१ अयं पाठो बह्वृचामापस्तम्बानान्तु सप्तर्षयः ।

''शिवः शिवा तथा विष्णुः सिद्धिर्लक्ष्मीः सरस्वती । तपोधनाश्च भगवानव्यक्तः परमेश्वरः ॥
''क्षेत्रौषधिलतावृक्षवनस्पत्यधिदेवताः । कपिलाः शेषनागाश्च तक्षकोऽनन्त एव च ॥
''अन्ये जलचरा जीवा असंख्यातास्त्वनेकशः । चतुर्दशयमाश्चैव ये चान्ये यमकिंकराः ॥
''सर्वेऽपि यक्षराजानः पक्षिणः पशवस्तथा । स्वेदजोद्भिज्जजा जीवा अण्डजाश्च जरायुजाः ॥
''अन्येऽपि वनजीवा ये दिवा निशि विहारिणः । अजागोमहिषीरूपा ये चान्ये पशवस्तथा ॥
''शान्तिदा शुभदास्ते स्युर्नीलपुच्छे सुतर्पिताः ।
''आब्रह्मस्तम्बपर्यन्तं ये चान्ये गोत्रिणस्तथा । ते सर्वे तृप्तिमायान्तु नीलपुच्छे सुतर्पिताः ॥
''सर्पव्याघ्रहता ये च शृङ्गदंष्ट्रानखाग्निभिः । अपुत्रा अक्रिया ये च अदारा धर्मवर्जिताः ॥
''आमगर्भा मृता ये च शस्त्रघातमृताश्च ये । संस्काररहिता ये च रौरवादिषु गामिनः ॥
''आब्रह्मस्तम्बपर्यन्तं देवर्षिपितृमानवाः । तृप्यन्तु पितरः सर्वे मातृमातामहादयः ॥
''अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् । आब्रह्मभुवनालोकादिदमस्तु तिलोदकम् ॥
''पितृवंशे मृता ये च मातृवंशे च ये मृताः । गुरुश्वशुरबन्धूनां ये चान्ये बान्धवाः स्मृताः ॥
''ये मे कुले लुप्ततोयाः पुत्रदारविवर्जिताः । क्रियालोपगताश्चैव जात्यन्धाः पङ्गवस्तथा ॥
''विरूपा आमगर्भाश्च ज्ञाताज्ञाताः कुले मम । ते पिबन्तु मया दत्तं वृषपुच्छे तिलोदकम् ॥
''ये बान्धवाबान्धवा वा येऽन्यजन्मनि बान्धवाः । ते सर्वे तृप्तिमायान्तु वृषपुच्छे तिलोदकैः ॥
''वृक्षत्वं च गताः केचित् तृणगुल्मलतास्थिताः । यातनासु च घोरासु जातीषु विविधासु च ॥
''नरकेषु च घोरेषु पतिता ये स्वकर्मणा । देवत्वं मानुषत्वं वा तिर्यक्प्रेतपिशाचताम् ॥
''कृमिकीटपतङ्गत्वं गता ये च स्वकर्मभिः । तेषामुद्धरणार्थाय जलमेतद्ददाम्यहम् ॥

''आब्रह्मस्तम्बपर्यन्तं जगत्तृप्यात्विति ब्रुवन्'' । तर्पणान्ते पुत्रकामश्चेद्यजमानस्तर्हि दम्पती उपवेश्य ''अद्येत्यादि सुपुत्रावाप्त्यर्थं गोपुच्छेन स्नानमहं करिष्ये'' इति संकल्प्य आचार्यः सप्तधान्यफलान्वितवंशपात्रेषु तान्येकीकृत्य तदुपर्युदकेन वारुणमन्त्रैश्च दंपती स्थापयेत् । वंशपात्रगलितोदकेन तदधस्ताद्दंपती उपविश्यताम् । मन्त्राः ''समुद्रज्येष्ठाः । त्रिभिष्ट्वं देवसवितः । आपोहिष्ठा । कस्य नूनम्''इत्यादि । ततस्तानि वस्त्राणि परित्यज्य वस्त्रान्तराणि परिधाय पिण्डदानं कार्यमिति शिष्टसंप्रदायः । तत एवं तर्पणं कृत्वा वेद्यां वृषस्य दक्षिणे खुरे पायसेन चरुणाऽन्येन हविष्येण वा पित्रादिसर्वेभ्यः पितृभ्यः ये ये स्मर्यन्ते तेभ्यश्च दक्षिणाभिमुखेन पिण्डदानं कार्यम् । तत्र मात्रादित्रयीं मातामह्यादित्रयीं च पृथक् दद्यात् । पिण्डान्ते होमचरुशेषं दद्यात् । श्राद्धमपि कार्यमिति केचित् । तिथ्यादि स्मृत्वा मम पितृतृप्त्यर्थं तेषामाकल्पब्रह्मलोकनिवासार्थं दुर्गतिगतानां स्मर्यमाणानामस्मर्यमाणानां च उद्धरणार्थमात्मन आकल्पसंतानाविच्छेदार्थं च धर्मरूपस्य वृषस्य दक्षिणखुरे पिण्डदानमहं करिष्ये इति संकल्प्य । एवं सर्वेभ्यः पिण्डान् दत्वा पुराणश्लोकैश्च देयाः ।

---

१ स्मृता इत्यपरः पाठः । २ क. वृषत्वं ।

"पितृवंशे मृता ये च मातृवंशे च ये मृताः। गुरुश्वशुरबन्धूनां ये चान्ये बान्धवा मृताः॥
"ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः। क्रियालोपगताश्चैव जात्यन्धाः पङ्गवः स्मृताः॥
"विरूपा आमगर्भाश्च ज्ञाताज्ञाताः कुले मम। खुरे दत्तेन पिण्डेन तृप्ता यान्तु गतिं च ते॥
"वृक्षयोनिं गता ये च तिर्यग्योनिं गताश्च ये। पङ्गुत्वं च गता ये वै ये च मूलत्वमागताः॥
"आब्रह्मणो ये मम वंशजाताऽस्तेभ्यः स्वधा पिण्डमहं ददामि।
"अजातदन्ता येकेचिये च गर्भे प्रपीडिताः। तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्॥
"बन्धुवर्गाश्च येकेचिन्नामगोत्रविवर्जिताः। स्वगोत्रे परगोत्रे वा तेभ्यः० ॥
"उद्बन्धनमृता ये च विषशस्त्रहता च ये। शृङ्गिभिर्दंष्ट्रिभिर्वाऽपि ते० ॥
"आग्निदाहे मृता ये च सिंहव्याघ्रहताश्च ये। आत्मनो घातिनो ये च तेभ्यः पिण्डं ददाम्यहम्॥
"अग्निदग्धाश्च ये केचिन्नाग्निदग्धास्तथा परे। विद्युच्चोरहता ये च ते० ॥
"रौरवे चान्धतामिस्रे कालसूत्रे च ये गताः। तेषा० ॥
"असिपत्रवने घोरे कुम्भीपाके च ये गताः। तेषा० ॥
"अनेकयातनासंस्था मृताः प्रेतेषु ये गताः। तेषा० ॥
"असंख्ययातनासंस्था ये नीता यमकिंकरैः। तेषा० ॥
"पशुत्वं च गता ये च पक्षिकीटसरीसृपाः। अथवा वृक्षयोनिस्थास्तेभ्यः० ॥
"अन्यैर्दुर्मरणैर्ये च क्षुधया तृषया मृताः। भूतप्रेतपिशाचाश्च तेभ्यः० ॥
"दिव्यन्तरिक्षभूमिष्ठाः पितरो बान्धवादयः। ते सर्वे तृप्तिमायान्तु पिण्डेनानेन सर्वदा॥
"जात्यन्तरसहस्रेषु भ्रमन्तः स्वेन कर्मणा। मानुष्यं दुर्लभं येषां तेभ्यः पिण्डं० ॥
"ये केचित्प्रेतरूपेण वर्तन्ते पितरो मम। ते सर्वे तृप्तिमायान्तु पिण्डेनानेन शाश्वतीम्"॥

ततः पिण्डान्विसृजेत्। ततः वृषवत्सतरीमग्निं प्रदक्षिणमन्वानीयाग्नेः पूर्वतस्तप्तलोहेन दक्षिण ऊरौ त्रिशूलेन वामे चक्रेणाङ्कयित्वा विसृजेत्प्राश्वं किंचित्त्रिशूलमात्रमिच्छन्ति। ततः प्राणानायम्य देशकालौ स्मृत्वा "इमं वृषं चतुर्विधमुक्तिरूपं वत्सतरीचतुष्टययुतं यथाशक्त्यलंकृतं पितॄणामुद्धारपूर्वकमाकल्पब्रह्मलोकप्राप्तये आकल्पसन्तानाविच्छेदाय च वत्सतरीसहितं वृषमुत्सृजामि" इति संकल्प्य वृषं प्राग्नमुत्सृजेत्। व्रजन्तं पृष्ठे हस्तं दत्वाऽनुमन्त्रयीत। "ॐ एतं युवानं परि वो ददामि तेन क्रीडन्तीश्चरत प्रियेण। मानः साप्तजनुषा सुभगा रायस्पोषेण समिषामदेम"इति। "शान्ता पृथिवी" इति त्रिर्वदेत्। ततो व्रजस्वेति ब्रूयात्। ततः पूर्वादिदिक्षु उपस्थानं कुर्यात्। तत्र पूर्वे 'कद्रुद्रायेति' नवर्चस्य घोरः कण्वरुद्रो गायत्री। पूर्वदिगुपस्थाने विनियोगः।'कद्रुदाय०'।९। ऋक्। सूक्तजपान्ते 'गोभिः सह जलं पिब तृणं भक्ष यथेष्टं क्रीडस्वेति' वदेत्। ततो दक्षिणामुखं कृत्वा 'इमां रुद्रायेति' सूक्तस्य कुत्सो रुद्रोजगती अन्ते द्वे अनुष्टुभौ दक्षिणदिगुपस्थाने वि० 'इमां रुद्राय०'। सूक्तजपान्ते 'गोभिः सह जलं पिब तृणं भक्ष यथेष्टं क्रीडस्वेति'। ततः पश्चिमाभिमुखं कृत्वा 'आ ते पितरिति'

सूक्तस्य गृत्समदो रुद्रस्त्रिष्टुप् । पश्चिमदिगुपस्थाने विनि० 'आ ते पितः०'। सूक्तजपान्ते 'गोभिः सह जलं पिब तृणं भक्ष यथेष्टं क्रीडस्वेति वदेत् । तत उदङ्मुखं कृत्वा 'इमां रुद्रायेति' सूक्तस्य वसिष्ठो रुद्रो जगती अन्त्या त्रिष्टुप् उत्तरादिगुपस्थाने विनियोगः । 'इमां रुद्राय स्थिरधन्वने०'। सूक्तजपान्ते 'गोभिः सह जलं पिब तृणं भक्ष यथेष्टं क्रीडस्वेति वदेत् । ततो गच्छति वृषेऽनुगच्छन्स्तुवीत ।

"वृषो हि भगवान्धर्मो मुक्तयो वत्सिका इमाः। सारूप्यं चैव सायुज्यं सान्निध्यं च सलोकता ॥
"इमाः सुरूपाः पत्नीस्तु चतस्रस्तव गोपते। कल्पिताः क्रीडनार्थं च त्वया सार्द्धं व्रजन्त्विमाः ॥
"धर्मोऽसि त्वं चतुष्पादः स्मृतो वत्सतरीस्त्विमाः। चतुर्णां पोषणार्थाय मयोत्सृष्टास्त्वया सह ॥
"देवानां च पितॄणां च मनुष्याणां च योगतः। लोकानां तृप्तिजननास्त्वया सार्धं व्रजन्त्विमाः ॥
"नमो ब्रह्मण्यदेवाय भूतर्षिपितृपोषक । त्वयि युक्ते त्वया लोका मम सन्तु निरामयाः ॥
"वृषो हि भगवान्धर्मश्चतुष्पादः प्रकीर्तितः । वृणोमि तमहं भक्त्या स मां रक्षतु सर्वतः ॥
"धर्मतस्तव संभूतिः स्वाहा त्वं च विभावसो । वृषरूपेण सा देवी सर्वकामप्रदा भव ॥
"अदितिर्देवमाता त्वं वेदमाता तथेश्वरी । धेनुरूपेण सा देवी मम पापं व्यपोहतु ॥
"गावो मे अग्रतः सन्तु गावो मे सन्तु पृष्ठतः। या लक्ष्मीः सर्वदेवानां या च देवे व्यवस्थिता ॥
"धेनुरूपेण सा देवी मम पापं व्यपोहतु ।
"पञ्च गावः समुत्पन्ना मथ्यमाने महोदधौ । गवां मध्ये तु या नन्दा तस्यै देव्यै नमो नमः ॥
"धर्मं देहि यशो देहि पुत्रान्देहि सुसंपदः । एकोत्तरशतं चैव कुलानां तारयस्व मे ॥
"रुद्रमाता मया दत्ताः पत्न्यस्तव वृषोत्तमाः । पितॄणां तारणार्थाय पर्यटस्व महीमिमाम् ॥
"खुरप्रक्षेपणैः सर्वं मम० । पितरस्तृप्तिमायान्तु खुराग्रजलसीकरैः ।
"ये त्वां हिंसन्ति पाप्मानो नरकं यान्तु तेऽक्षयम् । ये त्वां रक्षन्ति धर्मिष्ठाः स्वर्गे ते विवसंतु वै ॥
"तव दर्पकृतोच्चाटैर्नदीकूलविहारणैः । अक्षयाः सन्तु मे लोकाः पूर्वजानां तु सौरभि ॥
"धनसन्तानमारोग्यं बान्धवानां विशोकताम्०" ॥
ततः प्रदक्षिणीकृत्य वृषन्तमभिवादयेत् । तत्र मन्त्राः ।
"धारणाद्धर्म इत्याहुर्धर्मेण विधृताः प्रजाः । चर त्वं धर्मरूपेण वृषवत्सतरीयुतः ॥
"धर्मस्त्वं वृषरूपेण ब्रह्मणा निर्मितः पुरा । तवोत्सर्गप्रभावेन मामुद्धर महार्णवात्" ॥

तत एवं नमस्कृत्य चरणक्षालनाचमनादि विधाय स्थापितदेवतामुत्तरपूजां कुर्यात् 'उत्तिष्ठ' इति मन्त्रेण 'यान्तु देवगणा' इति च विसृज्य वस्त्रप्रतिमामाचार्याय दद्यात् । रुद्रकलशः सोपस्कारः रुद्रजापकाय देयः। ततः प्रायश्चित्तादिहोमशेषं समापयेत् । केचित्स्विष्टकृतमपि अत्रैव इच्छन्ति। ततः "अस्य वृषोत्सर्गस्य परिपूर्णतासिद्ध्यर्थं शतं ब्राह्मणान् यथोपपन्नेनान्नेन भोजयिष्ये" इति। एतदशक्तौ पञ्चाशत्।

तदशक्तौ पञ्चविंशतिः यथाशक्ति वा । ततो "वृषोत्सर्गप्रतिष्ठासिद्ध्यर्थमाचार्यादिपूजनं करिष्ये" इति । यथाशक्ति वस्त्रालंकरणचन्दनमाल्यादिभिरभ्यर्च्य यथाशक्ति तिलान् उदकुम्भं हिरण्यं वासो दद्यात्। सूत्रान्तरे तु सवत्सा गौर्दक्षिणा । तत आचार्यऋत्विग्भ्यश्च यथाशक्ति दक्षिणा देया । ततो भूयसीं दक्षिणां नानानामगोत्रेभ्यो ब्राह्मणेभ्यो दद्यात् । वृषवत्सतरीणां सर्वमलंकारादि आचार्यो गृह्णीयात् । ततः कांस्यपात्रे सहिरण्यमाज्यं प्रक्षिप्य मुखावलोकनं कार्यम् ।

"आज्यं तेजः समुद्दिष्टमाज्यं पापहरं स्मृतम् । आज्यं सुराणामाहारमाज्ये लोकाः प्रतिष्ठिताः॥"

'रूपं रूपं प्रतिरूपमिति' इति पठित्वा ब्राह्मणाय दद्यात् । ततो यजमानस्य रुद्रकलशोदकेन आचार्यः 'समुद्रज्येष्ठा' इत्यादि अभिषेकं कुर्यात् । ब्राह्मणाशिषो गृहीत्वा ब्राह्मणान्भोजयित्वा स्वयं बन्धुभिः सह भुञ्जीत । एवं

"यथोक्तविधिना यस्तु नीलं वृषभमुत्सृजेत् । सर्वसिद्धिमवाप्नोति यथा ते ब्रह्मचारिणः" इत्यादि फलकथनं विस्तारभयान्न कृतं **हेमाद्रादे**रवगन्तव्यम् ॥०॥ इति श्रीआश्वलायनवृषोत्सर्गः ॥

अथ **बौधायनोक्तवृषोत्सर्गः** ॥ ( गृह्यसूत्रे ३।१६ )

"कार्तिक्यां पौर्णमास्यां क्रियेतापि वाऽऽश्वयुज्यां वैशाख्यां वा गोष्ठे गवां मध्येऽथ देवयजनोल्लेखनप्रभृत्याग्निमुखान्कृत्वा पक्वान्जुहोति ' पूषा गा अन्वेतु न' इति पुरोनुवाक्यामनूच्य 'शुक्रं ते अन्यदिति' याज्यया जुहोत्यथाज्याहुती जुहोतीह "धृतिः स्वाहेह विधृतिः स्वाहेह रमतिः स्वाहेत्युपसृजं धरुणं मात्रे वत्सं धारयन्धरुणो धयन् इह पुष्टिं पुष्टिपतिर्नियच्छतु रायस्पोषमिषमूर्जमस्मासुदीधरत् स्वाहेति" "आगावो अग्मन्नुत भद्रमकन्"इत्येतेन सूक्तेन "नमस्ते रुद्रमन्यव" इत्यन्तादनुवाकस्य स्विष्टकृत्प्रभृति सिद्धमा धेनुवरप्रदानाद्रुद्रं जपित्वा गोमिथुनमध्वर्युलाजमन्त्रेण त्रिः प्रदक्षिणं परिक्रमयेदेकवर्णो द्विवर्णो वा यूथं छादयति तं यूथमुख्याश्चतस्रो वत्सतरीश्च स्नाप्याच्छायालंकृत्य गन्धमाल्याक्षतैः शिवस्त्वष्टः पिशङ्गरूप इति द्वाभ्यां तिलोदकं गृह्णात्यृचां प्राचीमित्यवधूनुयुर्जलबिन्दुं पीत्वा 'तृप्ता यान्तु पितर' इति । 'अथैनं मध्ये गोषु विसृजत्येनं युवानं परि वो ददामि'इत्यपि यं तमनुमन्त्रयते । 'त्वां गाव' इति मध्यस्थमनुमन्त्रयते 'मयोभूर्वातो अभिवानूस्रा' इति सर्वासां पयसि पायसं श्रपयित्वा ब्राह्मणान्संपूज्याशिषो वाचयेत् । यथाशक्ति दक्षिणां ददाति तिर्यग्योनिगतान् जात्यन्तरे वर्तमानान्दुष्कृतैरुपरुद्धान्दशपूर्वान्दशान्परानात्मानं चैकविंशं यत्किंच पुनाति न च पुनरावर्तते न च पुनरावर्तत इत्यथाऽप्युदाहरन्ति ।

"एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् । गौरीं वा वरयेत्कन्यां नीलं वा वृषमुत्सृजेत् ॥

"लोहितो यस्तु वर्णेन श्वेतलाङ्गूललक्षणः । खुरे च ककुदि श्वेतः स वै नीलवृषः स्मृतः" ॥

इत्याह भगवान्**बौधायनः**" । आदौ "पूषा प्रीयतामिति" पुण्याहमन्ते "प्रजापतिः प्रीयताम्" इत्याद्यंतयोः पुण्याहं पूर्वेद्युरेव नान्दीनैकाह्ना दैवं पित्र्यं च कुर्वीत यद्येकाह्ना दैवं पित्र्यं च कुर्वीत प्रमायुको यजमानः स्यात् तस्मात्पितृभ्यः पूर्वेद्युः क्रियते इति हि ब्राह्मणमिति " नान्दीप्रकरणस्थ**बौधायनसूत्रात्** ।

अथ **वृषोत्सर्गप्रयोगः** ' पुण्याहवाचनं नान्दीश्राद्धं च कृत्वा आचम्य प्राणानायम्य 'सुमुखश्चे'त्यादि पुण्यतिथावित्यन्तमुक्त्वा मम सकलपितॄणां च समस्तपापक्षयपूर्वकसकलदुःखोद्धरणपूर्वकनिरतिशयानन्दप्राप्तिसर्वोत्तमकुलप्रकाशकचिरजीविसन्तानावाप्त्यादिद्वारा श्रीपरमेश्वरप्रीत्यर्थं वृषोत्सर्गाख्यं कर्म करिष्ये । गणपतिं संपूज्य 'अस्मिन्कर्मणि आचार्यत्वेन त्वामहं वृणे' इति त वृत्वा संपूजयेत् । तत आचार्यः । गोष्ठे गवां मध्ये वा वृषचतुर्वत्सतरीसमीपे देवयजनोल्लेखनप्रभृति आग्निमुखान्कृत्वा चरुं श्रपयित्वा पक्वान् जुहोति । 'पूषा गा अन्वेतु न' इति पुरोनुवाक्यामनूच्य 'शुक्रं ते अन्यदिति' याज्यया जुहोति । पूष्ण इदम् । अथाज्याहुतीरुपजुहोति इह धृतिः स्वाहा धृत्या इदम् । इह विधृतिः स्वाहा विधृत्या इदम्।इह रन्तिः स्वाहा रन्त्या इदं। इह रमतिःस्वाहा.रमत्या इदम्।''उपसृजं धरुणं मात्रे वत्सं धारयन्धरुणो धयन्। इह पुष्टिं पुष्टिपतिर्नियच्छतु रायस्पोषमिषमूर्जमस्मासु दीधरत्स्वाहा''। पुष्टिपतय इदम्. । 'आ गावो अग्मन्' इत्यष्टर्चेन सूक्तेन प्रत्यृचं हुत्वा गोभ्य इदम्. । 'नमस्ते रुद्र' इत्याद्यनुवाकस्य पञ्चदशभिः प्रत्येकं हुत्वा रुद्रायेदम् । स्विष्टकृतं हुत्वा ततो जयादिब्रह्मवरदानान्तं कृत्वा ततो बिल्वपर्णेषु 'यो रुद्रो अग्नौ' इति मन्त्रेण हविःशेषं निदध्यात् । रुद्रं जपित्वा गोमिथुनं 'इयं तु नारी अर्यमणं नु त्वामर्यमेति' लाजमन्त्रत्रयेण त्रिः प्रदक्षिणं परिणीय दर्भेण भस्मानाङ्कयित्वा वत्सतरीयुतं वृषं संस्थाप्य आच्छाद्यालंकृत्य गन्धमाल्याक्षतादिभिः 'शिवस्त्वष्टः पिशङ्गरूप' इति द्वाभ्याम् ऋचां प्राचीमिति तिलोदकं तदग्रे गृह्णात्याचार्यः । ततस्तास्तिलोदकमवधूनुयुस्तत आचार्यः जलबिन्दुं पीत्वा 'तृप्ता यान्तु पितर' इति पठित्वा देशकालौ स्मृत्वा ''प्रागुक्तफलावाप्त्यर्थं सवत्सतरीकमिमं वृषमुत्सृजे'' इति संकल्प्य 'एतं युवानं परि वो ददामि' इति द्वाभ्यामुत्सृजति । 'त्वां गावो वृणत' इति गच्छन्तमनुमन्त्रयते । 'मयो भूर्वातो अभि वातूस्रा' इति गोमध्यस्थमनुमन्त्रयते । तत आचार्याय यथाशक्ति दक्षिणां दत्वा यथाशक्ति ब्राह्मणभोजनं भूयसीं च संकल्प्य 'यस्य स्मृत्या' इत्याद्युक्त्वा कर्मफलसिद्धिं वाचयित्वा कर्मेश्वरार्पणं कुर्यात् । ततः पायसं श्रपयित्वा यथाशक्ति ब्राह्मणान्भोजयेत् इति ॥ २५२ ॥

## याज्ञवल्कीये २५३।२५४ श्लोकौ

अर्घ्यार्थमिति पूर्वान्वयीत्याह । **अर्घ्येति** । न्यूनतां निराचष्टे । **तिलैरिति** । प्रागुक्तत्वादाह । **द्वाविति । तत्र** तेषां मध्ये । **किंचिदिति** बहुव्रीहिः । 'ये सेत्यपि पूर्वान्वयी'त्याह । **येसेति** । ''ये समानाः समनसः पितरः ये समानाः समनसो जीवा जीवेषु'' इति द्वाभ्यामित्यर्थः । तावत्साधारणमाह । **विश्वे इति** । अस्योभयात्मकत्वात् किंचिदंशेऽपि शेषादुक्तक्रमेणार्थान्तरमस्यैवाह । **प्रेतेति** । प्रेतपात्रग्रहणं प्रेतपिण्डस्याप्युपलक्षकम् । तथा च **कात्यायनः** । ''ततः संवत्सरे पूर्णे चत्वारि पात्राणि सतिलगन्धोदकैः पूरयित्वा त्रीणि पितॄणामेकं प्रेतस्य प्रेतपात्रं पितृपात्रेष्वासिञ्चति 'ये समाना' इति द्वाभ्यामेतेन व्याख्यात'' इति । अत्र दर्भा ऋजवः । तथा च **पुराणम्** ।

''सपिण्डीकरणं यावदृजुदर्भैः पितृक्रिया । सपिण्डीकरणादूर्ध्वं द्विगुणैर्विधिवद्भवेत् '' ॥ इति ।

गामश्वमितिवदाह । **एकोद्दिष्टं चेति** । अनतिप्रसंगायाह । **मातुरपीति** । अपिना पितामह्यादेः ।

न्यूनतां निराचष्टे । **एवमिति ।** पार्वणे दार्शिकादौ दूषयित परमतमाह । **अत्रेति ।** मूले इत्यर्थः । **तस्य** पितुः प्रपितामहस्य । **कालमिति** क्रियाविशेषणम् । आदिनोदकम् । उत्तरत्र सपिण्डीकरणादूर्ध्वं तेन कर्मणा । नन्वस्त्येवं युक्तत्वं तथाऽपि तस्य कथ प्रेतत्वमत आह । **प्रकर्षेणेति ।** यौगिक इति भावः । रूढिर्योगमिति न्यायानाश्रयणे बीजमाह । **प्रेतेभ्य इति ।** चो व्युत्क्रमे दर्शनाच्चेत्यर्थः ।

स्मृतिविरोधमपि तत्राह । **अपि चेति । एवो** व्युत्क्रमे आशये देवतेनामादिनिरासः । **कालमिति ।** प्राग्वत् । निर्देशस्य तत्रैव योग्यतया लक्षणया तत्तत्परमित्याह । **श्राद्धादीति ।** आदिनोदकम् । चस्त्वर्थे । स्वमते एव स्मृत्यन्तरानुकूल्यं न परमते इत्याह । **सपिण्डतेति ।** त्रिषु त्र्यादिक्रमेणाह । **पिण्डत्रयेत्यादि ।** निर्वाप्य सापिण्ड्यमिति भावः । मूलसंमतमपीदमेवेत्याह । **पित्रिति ।** मुखशब्द आद्यर्थः । उपसंहरति । **तस्मादिति ।** 'इति' इत्यस्य तदाद्यर्थमाह । **पितुरिति ।** इति इत्यर्थ इति । **हि** यतः अत्र सपिण्डीकरणे निवृत्त्या तत्पूर्वकं च तुवसतिर्वासः । उणादिः संबन्धः तद्रूपताप्राप्तिः । अतो मूलतात्पर्यमाह । **प्रागुक्तेनेति ।** तथा चेत्यादिः । अत्रोभयत्र क्रमेण माने आह । **यस्येत्यादि ।** सामान्यं पितृत्वं यमविरोधं परिहरति । **य इति ।** पृथगर्थः । **एक इति ।** सह द्वाभ्य वक्ष्यमाणाविरोधायाह । **तच्चेति ।** पार्वणविधानं चेत्यर्थः । असार्वत्रिकत्वायाह । **सांवत्सरीति ।** स्मृत्यन्तरविरोधं परिहरति । **यदपीति ।** शब्दस्यापि शक्यत्वात् 'अमेर्ढक्'(ध्या. सू. ४।२।३३ ) इत्यादाविव निर्देशसमभिव्याहारेण तत्र तत्परत्वसंभवेन लक्षणा न युक्तेत्याह । **प्रेतशब्दमिति ।** इत्येवमर्थमिति बहुव्रीहिः ।

रूढिर्योगमिति न्यायेन यौगिकत्वं निराचष्टे । **न चेति । उक्तं** स्मृतिषु. तत्र बीजमुक्तं निराचष्टे । **योऽपीति । मात्रं** कार्त्स्न्ये । उपान्त्यदोषं परिहरति । **सपिण्डतेति । च** अपि । तत्रादौ तन्मतेनाह । **प्रथमस्येति ।** इत्येवमपि । इति प्रकारेण

निर्वाप्य सापिण्ड्यपक्षेऽपि अभ्युपेत्येदम् । वस्तुतस्तदेव नेत्याह । **अपिचेति । उक्तं** प्राक् । अन्त्यदोषं परिहरति । **पित्रिति ।** देवताभावं तत्वं देवताभूयामिति पाठान्तरमिदमपि प्राक्प्रपञ्चितम् । "पितरो यत्र पूज्यन्ते" इत्यादिना । उपसंहरति । **तस्मादिति ।** नन्वेवमप्याचार्यविरोधोऽस्त्येवात आह । **आचार्य इति । विश्वरूपाचार्य** इत्यर्थः । स्वरूपव्याक्रियैव पराक्रियेति न्यायेनेति भावः । मूलानुक्तं विशेषमाह । **एतच्चेति ।** प्रप्रपितामहस्य तदा जीवनस्यैवासंभवात्त्यागः । **मनु**विरोधं परिहरति । **यत्विति । अपि**रेवार्थे व्युत्क्रमे नियमायेव । तद्व्यावर्त्यमेवाह । **नेति ।** तत्पूर्वतनमाह । **ध्रियेति ।** जीवतीत्यर्थः । **वृत्तः** मृतः । **इत्याह** इत्याशङ्कायामाह । अस्य तात्पर्यमाह । **आद्यन्तेति ।** अबाधायास्यापि तात्पर्यमाह । **अतश्चेति ।** शब्दानां पितरीत्यादीनां संबन्धीति नित्यसंबन्धिसाकाङ्क्षत्वादित्यर्थः । अस्य फलमाह । **अतश्चेति ।**

**विष्णु**विरोधं परिहरति । **यदपीति ।** पूर्वाविरोधायाह । **पितामहस्त्विति । दद्यात्** पार्वणविधिना । एवं च नेदं वचनद्वयं व्युत्क्रममृते सपिण्डीकरणसाधकमित्युक्तवचनात्तत्रैतदभावः स्थितः । तत्र गमकान्तरमपि सूचयितुमाह । **एवमिति ।** व्युत्क्रममृतवदित्यर्थः । स्मृता [1]आदिना गवादि ।

1 जनंजनकं ।

**संगवर्जिते** संन्यस्ते । **च मृते** मृते च । **असौ** तातः । अत्र ब्राह्मणादिहतः क्रममृतः । अत एव व्युत्क्रमाच्चेत्यनेन साङ्कर्येन । न चैवं तत्र सपिण्डीकरणस्य न बाध इत्यवतरणासंगतिरेवात आह । **गोब्राह्मेति** । तेन निषेधोन्नयनादिति भावः । इयं रीतिर्व्युत्क्रमाच्चेत्यत्रापि बोध्या । शिष्टास्तु संप्रति तथामृतानामपीदं कुर्वन्ति । तत्र "ते प्रमाणं महाजनः" इति **स्मृतेः** करणं युक्तं च । **मनुविष्णु**-वचनमपि यथाश्रुतार्थकं तेषामनुकूलं च अन्यथा प्रेतत्वनिवृत्तिरपि न स्यादिति **स्मृतिचन्द्रिका-कारादयः** । किं च **ब्रह्मपुराण**मपि तेषामनुकूलम् ।

"मृते पितरि यस्याथ विद्यते च पितामहः । तेन देयास्त्रयः पिण्डाः प्रपितामहपूर्वकाः ॥

"तेभ्यश्च पैतृकः पिण्डो नियोक्तव्यश्च पूर्ववत् ।

"मातर्यग्रे मृतायां च विद्यते च पितामही । पूर्वं तु कार्यस्तत्रापि विधिरेष उदाहृतः" ॥ इति ।

**सुमन्तु**रपि ।

"त्रयाणामपि पिण्डानामेकेनापि सपिण्डने । पितृत्वमश्नुते प्रेत इति धर्मो व्यवस्थितः" ॥ इति ।

त्रयाणां पित्रादिपिण्डानां मध्ये एकेन पितृपिण्डेन वा पूर्वपूर्वे जीवति सपिण्डने कृते प्रेतः पितृत्वं प्राप्नोतीत्यर्थः । 'व्युत्क्रमाच्च प्रमीतानामिति' तु मातापितृभर्तृभिन्नविषयम् । तथा च **स्कान्दे** ।

"व्युत्क्रमेण मृतानां न सपिण्डीकृतिरिष्यते । यदि माता यदि पिता भर्ता नैष विधिः स्मृतः" ॥ इति ।

एष विधिः व्युत्क्रममृतौ न सपिण्डीकृतिरिष्यते इत्ययं विधिरिति **मदनपारिजातादयः** । **हेमाद्रि**रप्येवम् । अत्रेदं तत्वम् । **कात्यायनो विज्ञानेश्वर**स्यैवानुकूलो न मतद्वययोस्तस्मात् पित्रादिविषये एव विकल्प उक्तस्मृत्यादिकदंबात् शिष्टाचारोऽपि पाक्षिकतत्पर एवात एव **स्मृत्यर्थ-सारे** तथामृतानामिदं कार्यं न वेति मतद्वयमप्युक्तम् ।

पक्षे प्रेतत्वनिवृत्तिस्तु महैकोद्दिष्टवृषोत्सर्गाभ्यामेवेति । विशेषान्तरमाह । **मातुरिति** । **जन्म-नीति** । उत्पत्ताविव मरणेऽपीत्यर्थः । आद्यन्तग्रहणान्मध्येऽपि तथेति सूचितम् । **कुलं** गोत्रम् । परमतमाह । **व्रीहीति** । वत् मवच्च सोऽपि नैच्छिक इत्याह । **तत्र चेति** तत्रापीत्यर्थः । **मार्ग-मि**त्यत्र विभक्तिव्यत्ययोः । मार्गेणेत्यर्थः । अस्यात्र नियामकत्वे बीजमाह । **एवं विधेति** । तत्रापि विशेषमाह । **यत्रेति** । **पुन**स्तु 'अब्द इती'त्यस्य केचिदितीति शेषः । वस्तुतस्तु तत्र 'स्वगोत्राद्भ्रश्यते' इत्युक्तेस्तत्र भर्तृगोत्रमेवेति बोध्यम् । **मदनपारिजातो**ऽप्येवम् ।

प्रकृते विशेषान्तरमाह । **मातुरिति** । **अपिः** पूर्वसमुच्चये । वक्ष्यमाणरीत्या वस्तुतोऽतत्वादा-हेति । **तत्र** तेषां मध्ये । **शङ्ख**माह । **पितेति** । "मातुः सपिण्डीकरणं कथं कार्यं भवेत् सुतैः" इत्य-स्यादिः । **तथा** तद्वत् । पत्या चैकेन मुख्येन तेन चेन द्वयोः समुच्चयस्तथा च त्रिभिर्न त्वेकेनैव तेने-त्यर्थः । **सुमन्तु**माह । **तथेति** । तद्वदित्यर्थः । व्यवस्थामाह । **एवंविधेष्विति** ।

"अपुत्रा ये मृताः केचित्पुरुषा वा स्त्रियोऽपि वा । तेषां सपिण्डनादूर्ध्वमेकोद्दिष्टं तथैव हि" ॥ इति **स्मृत्युपोद्दलितस्य** ।

"अपुत्रा ये मृताः केचित्पुरुषा वा स्त्रियोऽपि वा। तेषां वस्त्रादिभिः सार्धं सपिण्डीकरणं ध्रुवम्" ॥

इत्यस्यापवादोक्त**शङ्खपैठीनसि**भ्यामाह । **अपुत्रायामिति ।** स्वमात्रैव स्वमात्रादिभिरेव । एवमग्रेऽपि । उक्त**यमा**दाह । **अन्वेति । शातातपोऽपि** "मृता याऽनुगता नाथं सा तेन सह पिण्डताम्" इति । अर्हतीति शेषः । **उशनसा**दित आह । **आसुरादीति । शातातपेन तु** अत्रापि विकल्प उक्तः ।

"तन्मात्रा तत्पितामह्या तच्छ्वश्र्वा वा सपिण्डनम् । आसुरादि विवाहे विपन्नानां योषितां स्मृतम्" ॥ इति ।

तच्छ्वश्रूर्मातुःप्रपितामही ।

"आदिशेत्प्रथमे पिण्डे मातरं पुत्रिकासुतः । द्वितीये पितरं तस्यास्तृतीये च पितामहम्" ॥

इति **बौधायना**दाह ( २।२।१६ ) । **पुत्रिकेति । कात्यायनोऽपि ।**

"मातुः सपिण्डीकरणं पितामह्या सहोचितम् । यथोक्तेनैव कालेन पुत्रिकाया न चेत्सुतः" ॥ इति।

पुत्रिकासुतश्चेन्मातामहादिभिः कुर्यादित्यर्थः । उक्त**शङ्खोशनसा**दितः ।

"जीवत्पिता पितामह्या मातुः कुर्यात्सपिण्डताम् । प्रमीतापितृकः पित्रा पितामह्याऽपि वा सुतः" ॥

इति **यमा**च्चाह । **पित्रेत्यादि ।**

**अत्रापि** विकल्पेऽपि विशेषमाह । **तत्र चेति ।** एवं व्यवस्थायामपीत्यर्थः । यत्रेत्यस्यार्थो-ऽन्वग्रेति । तदाह । **अन्वग्रेति ।** अत्र गयाग्रहणं तीर्थमहालययोरप्युपलक्षणम् । अत्र 'एषु मातुः श्राद्धं पृथक्कुर्यात्' । इति पाठान्तरम् । **दिभिरवेति ।** पृथग्विधिसामर्थ्यात् । अत एव पौनरुक्त्यादि पत । तुर्यपादं सपत्नीकं व्याचष्टे । **अन्यत्रेति ।** वक्ष्यमाणतो नेदं वाचनिकं किं तु युक्तिसिद्धमिनीदमप्युप-लक्षणमित्याह । **मातेति । तेनैव** पत्यादिनैव । पार्वणश्राद्धं तत्र मानमाह । **यथाहेति ।** यत इति शेषः । **चे**नान्यसमुच्चयः । यतः पत्नी तत्र कृतैनैषामैक्यमाप्नोति तस्मादित्याद्यर्थः । एतत्फलमाह । **एवं सतीति** । उक्तरीत्या तथा पार्वणस्य व्यवस्थितत्वे सतीत्यर्थः । **न नित्यमिति ।** इदमप्या**श्वलायन**विषयं तद्वचनाग्रहणविषयं तदीयाधिकार्यन्तरभावविषयं चेति बोध्यम् । **निर्णय इति ।** वस्तुतस्तु अन्यत्रेत्यस्यायमर्थः । एतद्भिन्ने मातुः श्राद्धं येन केनापि साषिण्ड्ये पत्यैव सह नान्येन तच्छ्राद्धेनैव तस्या अपि तृप्तिरत एवांशेषु भागिनीत्येवोक्तम् । न तु तेन 'पार्वणं पतिपितॄणाम्'इत्यत्र पतिश्च पितरौ चेति द्वंद्वः । तौ चार्थात्तस्यैवात एवांशेष्विति बहुवचनं चोपपद्यत इत्यर्थं जीवद्दशायामर्ध-त्वस्य स्थितत्वादिदानीमैक्यत्वेन तत्त्वप्रतिपादकः **शातातपः ।** सोऽपि पतिसापिण्ड्यपक्षाशयक एवा-न्यत्रेति सुसाधारणं युक्तं चैतत् । अन्यथोक्तभिन्ने पितामहीसापिण्ड्ये तयापि पार्वणापत्तेः । न चेतदिष्टं व्याख्याशयेनोक्तं च मातामहसापिण्ड्ये तच्छ्राद्धस्य नित्यत्ववत्तत्पक्षे पितामहीश्राद्धस्यापि नित्यत्ववत्तत्पक्षेऽपि पितामहीश्राद्धस्यापि नित्यतापत्तेश्चात एव दर्शादौ तत्पक्षे मातुरपि तृप्तिः ।

'स्वेन भर्त्रा समं श्राद्धं माता भुङ्क्ते सुधासमम्" । इति **देवला**त्स्वेन भर्त्रा समं भर्त्रे दीयमान माता-ऽपि भुङ्क्ते इति तदर्थः । एतेन सपत्नीकानामित्युल्लेखोऽपि निरस्तः । तं विनाऽपि तदनुसारितया तासा-मपि तृप्तेरेवं चान्यत्र मातामह्यादिश्राद्धमनावश्यकमेवेति तात्पर्यमेवेति बोध्यम् ॥ २५३ ॥ २५४ ॥

## याज्ञवल्कीये २५५ श्लोकः

अथोदकुम्भश्राद्धमाह । **अर्वागिति**॥ अपिना संवत्सरान्तकृतत्सपिण्डीकरण उद्देशेनेति शेषः। अन्न मित्यनेनामनिवृत्तिः। **संवत्सरमिति** । 'कालाध्वनोः' (व्या. सू. २।३।५) इति द्वितीया । संप्रदानस्याधिकरणत्वविवक्षया **द्विजे इति** सप्तमी । तच्च योग्यतया विप्रपरं तदाह । **संवत्सरादित्यादि** । स्वतस्तस्य भवनासंभवादाह । **कृतमिति** । **प्रतिमासं वेति** । विकल्पोपपत्तये आह । **शक्तीति** । इदं च नित्यश्राद्धभिन्नं तस्यैत्येकवचनात्संवत्सरमित्यत्यन्तसंयुक्तेश्च तत्र यावज्जीवं कर्तव्यताविधेः प्राक् सपिण्डीकरणे पार्वणापवादोऽयं तत एव । अथ मूलानुक्तं विशेषं प्रतिपादयितुं तावत्सूचितमाह । **अर्वागिति** । संकलनया आह । **द्वादशाह इति** । **बौधायनेन** तु अन्योऽपि काल उक्तः । "अथ संवत्सरे पूर्णे सपिण्डीकरणं त्रिपक्षे वा तृतीये वा मासि षष्ठे वैकादशे वा द्वादशाहे वा इति" । **चतुर्विंशतिमतेऽपि** ।

"सपिण्डीकरणं चाब्दे संपूर्णेऽभ्युदये तथा। द्वादशाहे तु केषांचिन्मतं चैकादशेऽहनि" ॥ इति व्यवस्था तेषामाह । **तत्रेति** । तेषां मध्ये इत्यर्थः । **विनेति** । तथा च **प्रजापतिः** ।

"नासपिण्ड्याग्निमान्पुत्रः पितृयज्ञं समाचरेत् । स पार्वणं चाभ्युदयं कुर्वन्न लभते फलम्"॥ इति।

**प्रेतो वाऽपीति** । प्रेतोऽप्यग्निमाननग्निमान्वेत्यर्थः । अत्र द्विनीये **भविष्यत्पुराणमपि** ।

"यजमानोऽग्निमान राजन्प्रेतश्चानग्निमान्भवेत् । द्वादशेऽह्नि भवेत्कार्यं सपिण्डीकरणं सुतैः"॥ इति। इदमप्येकादशदिनस्यादर्शत्वे तन्ये तु तेन तत्रैव कार्यम् । तथा च **कार्ष्णाजिनिः** ।

"सपिण्डीकरणं कुर्यात्पूर्ववच्चाग्निमान्सुतः । परतो दशरात्राच्चेत्कुहूरन्वोपगीतेर" ॥ इति । प्रेतस्यैव साग्नित्वे तु तृतीयपक्षे । तथा च **सुमन्तुः** ।

"प्रेतश्चेदाहिताग्निः स्यात्कर्ताऽनग्निर्यदा भवेत् । सपिण्डीकरणं तस्य कुर्यात्पक्षे तृतीयकः"॥ इति।

उभयोरनग्निकत्वे तु द्वादशाहादयः सप्तकाला इच्छया विकल्प्यन्ते । तथा च **माधवीये भविष्यत्पुराणम्** ।

"सपिण्डीकरणं कुर्याद्यजमानस्त्वनग्निमान् । अनाहिताग्नेः प्रेतस्य पूर्णेऽब्दे भरतर्षभ ॥

"द्वादशेऽहनि षष्ठे वा त्रिपक्षे वा त्रिमासिके । एकादशेऽपि वा मासि मङ्गले वाऽप्युपस्थिते"॥ इति।

षष्ठे मासि एवं चाधिकरणसप्तमी बलादेते सर्वे तत्काला न तु तत्पूर्त्यनन्तरामृततिथिसमायारतस्यास्तद्ग्राह्यत्वात् । एवं षोडशश्राद्धान्तर्गतत्रैपक्षिकेऽपि बोध्यम् । तदाह **निरग्निक इति** । स्वोक्ताशयकमिदम् ।

"आनन्त्यात्कुलधर्माणां पुंसां चैवायुषः क्षयात् । अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते" ॥ इति

**व्याघ्रः** । इदं सर्वं द्विजविषयम् । शूद्रस्य तु द्वादशाह एव नियतः "मन्त्रवर्जं हि शूद्राणां

द्वादशेऽहनि कीर्तितम्'' । इति सपिण्डीकरणं प्रकृत्य **विष्णु**नोक्तत्वात् । दर्शश्राद्धकारिशूद्रविषयमेतदित्यपरार्के कल्पतरौ च वचनबलादाशौचमध्ये एव कार्यम् । अस्य गौणकालमाह **ऋष्यशृङ्गः ।**

''सपिण्डीकरणश्राद्धमुक्तकाले न चेत्कृतम् । रौद्रे हस्ते च रोहिण्यां मित्रभे वा समाचरेत्''॥ इति ।

**विशेषमाह । यदा प्रागिति ।** अत्र यदेत्यनेन सूचितम् । उभयोरनग्निकत्वेऽस्य वत्सरान्तो मुख्यकालः । **आश्वलायनकात्यायनादि**ना तस्य पूर्वमुक्तत्वात् । श्राद्धानीति वचनद्वयेनापि तस्य तत्त्वबोधनाच्च । अत एव **स्मृतिः ।**

''निरग्निश्चेद्यदा कर्ता प्रेतश्चैवाप्यनाग्निमान् । सपिण्डीकरणं तस्य पूर्णेऽब्दे नात्र संशयः'' ॥ इति ।

अत एव तदकरणमपि लब्धं षोडशश्राद्धकरणं विना । इदमेव तद्वचनद्वयतात्पर्यम् । तेषां मुख्यकालस्तु तत्तन्नामतस्तद्बोधकस्मृतितश्च स्वकालः स्पष्ट एव । एवं च त्रिपक्षे निःसंदिग्धं यथाकालं सर्वेषामनुष्ठानं भवतीति पुनस्तेषामनुष्ठानसंभावनैव नेति यस्यार्पाणि वचनवत् **शाट्यायन्यादि**वचनानामपि विषयतैव नेति बोध्यम् । द्वादशाहस्तु अनुकल्पः । तस्य नैर्ऋतीयपक्षत्वेनोक्तः **व्याघ्रे**णापि तस्य तत्त्वबोधनाच्च तत्पक्षे संदेहसंभवादाह । **प्राक् संवत्सरादिति ।** तत्राद्ये आह । **श्राद्धानीति । वृद्धवसिष्ठोऽयम् । लौगाक्षिमाह । श्राद्धानीति । आपाद्य** कृत्वा । एकादशेऽह्नीति पाठेऽहनीत्यर्थः । अत एवाद्यमेकादशेऽप्युक्तं **चे**न द्वादशाहपरिग्रहः । द्वादशाहे इति पाठे चेनैकादशाहपरिग्रहः । युक्तश्चायं पाठः । तस्य मासिकत्वेनैव संग्रहसंभवात् । षण्मासे ऊनषण्मासे मासिकशब्द ऊनमासिकेन सहैकादशद्वादशमासिकपरः । अत एव **स्मृत्यन्तरे**ऽपि ।

''मासिकानि दशैकं च आद्ये द्वेऽध्यर्द्धमासिकम् । ऊनाब्दन्यूनषण्मासं प्रेतश्राद्धानि षोडश'' ॥ इति

आद्ये द्वे एकादशाहोनमासिके अध्यर्द्धमासिकं त्रैपक्षिकम् । एकादशाहस्य षोडशान्तःपातित्वं संवत्सरसपिण्डीकरणे एव । अन्यथा तु केवलनवश्राद्धता । तथा **चाङ्गिराः ।**

''प्रथमेऽह्नि तृतीयेऽह्नि पञ्चमे सप्तमे तथा । नवमैकादशे चैव तन्नवश्राद्धमुच्यते'' ॥ इति ।

**वसिष्ठो**ऽपि ।

''सप्तमेऽह्नि तृतीयेऽह्नि प्रथमे नवमे तथा । एकादशे पञ्चमे स्युर्नवश्राद्धानि षट् सदा'' ॥ इति ।

उभयथा करणं तु पृथगेव । मासिकानां नवमिश्रसंज्ञा ''नवमिश्रं षडुत्तरम्'' **इत्याश्वलायनात् । जातूकर्ण्यो**ऽपि ।

''द्वादशप्रातिमास्यानि आद्यषाण्मासिके तथा । त्रैपक्षिकाब्दिके चेति श्राद्धान्येतानि षोडश'' ॥ इति ।

आद्यमूनमासिकमेवं षाण्मासिकाब्दिकशब्दावपि ऊनषाण्मासिकोनाब्दिकपरौ द्वादशप्रातिमास्यानां पृथगुक्तत्वान्मासिकानां कालोऽग्रे मूले एव स्पष्टः । ऊनानां कालः श्लोक**गौतमीये** ''एकद्वित्रिदिनैरूने त्रिभागेनाधिकेन वा श्राद्धान्यूनाब्दिकादीनि कुर्यादित्याह गौतमः'' इति । **क्रतु**रपि ।

''सार्धे एकादशे मासे तथा सार्धे च पञ्चमे । ऊनाब्दिकोनषण्मास्ये भवेतां श्राद्धकर्मणि'' ॥ इति ।

ऊनानां वर्ज्यकालमाह **गार्ग्यः** ।

"नन्दायां भार्गवदिने चतुर्दश्यां त्रिपुष्करे । ऊनश्राद्धं न कुर्वीत गृही पुत्रधनक्षयात्"॥ इति ।

द्वितीये **मनुमाह । तथेति** । एवमत्र पक्षे संदेहे व्यवस्थामाह । **तत्रेति** । तयोर्मध्ये इत्यर्थः । सपिण्डीत्यस्यापकृष्य षोडशश्राद्धानि कृत्वेत्यादिः उक्तवचनद्वयतस्तत्करणं विना तत्रानधिकारात् । एवो व्युत्क्रमे स्वकाले पुनरेतान्यनुष्ठेयान्येवेत्यर्थः । 'यस्यापि' इति **मनोः कल्पसूत्रो**क्तेश्च । **अप्राप्तकालत्वेन** अप्राप्तमुख्यकालत्वेन । इदं चोक्तमेव "मासिकानि स्वकाले तद्दिवसे द्वादशेऽपि वा" । इति **पैठीनसिः** । "मरणात्तद्वादशाहे स्यात्मास्यूने चोनमासिकम्" इति **गालवश्चा**प्यत्र पक्षे उक्तरीत्या सपिण्डीकरणवत् तेषामप्यनुकल्पपर एव । अत एव पुनरनुष्ठानविधानं सफलम् । अत एव सपिण्डीकरणस्य पुनरनुष्ठानं वचनाभावात् । कर्तृभेदे एव सविशेषमावृत्तेरुक्तत्वात् । यद्वा **गालव**वत् **पैठीनसि**रपि वेत्यस्येवार्थत्वेन स्वकाले इव तत्रापीत्यर्थेनोक्तसमानार्थत्वेनोभयोः समुच्चयबोधकत्वेन प्रथमकल्पबोधक एव एवं । चात्र मते **शाट्यायन्यादि** संगतिरपीत्यनुपदमेव वक्ष्यते । यदपि यत्तु उक्तवचनद्वयबलादाह **कृत्वैवेति** । अपिस्तत्समुच्चये कर्तव्यमित्यस्य पुनस्तान्यनुष्ठेयानीति शेषः । **आपत्कल्प इति** । दारिद्र्या शक्त्यादित इति भावः । तथा चानुकल्पोऽप्ययं न । अत एवापत्कल्प इति एवोक्तं न तु तथा एवं चानेन गौणपक्षेणापि तत्र शास्त्रार्थासिद्धिरत्रापि पक्षे मुख्यकल्पवत् तेषामविषयत्वेऽपि न क्षतिस्तेषां तद्विषयादिति भावः । तदेतद्ध्वनयन्सर्वसाधारण्येन व्यवस्थान्तरमाह । **यदा त्वित्यादिना** । श्राद्धानि षोडश । अनेन वत्सरान्तसपिण्डीकरणपक्षेऽप्येवमिति स्पष्टमेव बोधितं वचनस्य साधारण्यात् । मुख्यकल्पेन प्रथमकल्पेन 'स्वेति' स्वकालेऽपि करोत्येवेत्यर्थः । अत्रापि प्राक् तथैवेत्यभिप्रेत्य पश्चात्तनेष्वाह । **तदेति** । तत्राद्ये सर्वत्राह । **सपिण्डीति । पैठीनसीयमिदं** द्वयम् । एवं च तत्रैव पक्षे आवृत्तिर्नान्ययोर्मनुमूलाभ्याम् । **गोभिलोऽपि** ।

"यस्य संवत्सरादर्वाग्विहिता तु सपिण्डता । विधिवत्तानि कुर्वीत पुनः श्राद्धानि षोडश" ॥

इति विधिवद्यथाचारं पार्वणविधिना एकोद्दिष्टविधिना वा आवृत्तिश्च पूर्वभाविनां न किं तूर्ध्वभाविनामेव । तथा च **कार्ष्णाजिनिः** ।

"अर्वागब्दाद्यत्र यत्र सपिण्डीकरणं कृतम् । तदूर्ध्वमासिकानां स्यात् यथाकालमनुष्ठितिः" ॥

इति तेषामपि वृद्धिप्राप्तौ पुनरपकर्षः । तथा च **शाट्यायनः** ।

"सपिण्डीकरणादर्वागपकृष्य कृतान्यपि । पुनरप्यपकृष्यन्ते वृद्ध्युत्तरनिषेधनात्" ॥

इति निषेधश्च **कात्यायनेनो**क्तः । "निर्वर्त्य वृद्धितन्त्रं तु मासिकानि न तन्त्रयेत्" । इति अत्र समानकर्तृकत्वं विवक्षितमविवक्षायां मानाभावात् । अत्रोभयत्र वृद्धिपदस्वारस्यात् कर्माङ्गश्राद्धेषु गर्भाधानपुंसवनसीमन्ते क्रियमाणेषु न निषेधः । किं तु तदन्यत्र वृद्धिश्राद्धे इति लभ्यते यद्यपि तथापि सर्वत्र भवति वचनान्तरादित इत्यन्यत्र स्पष्टम् ।

एवं च प्रागुक्तेऽत्रत्यसिद्धान्ते **दीक्षितीयं** दूषणं समाहितमिति बोध्यम् । इदं सपिण्डीकरणं वत्सरान्तकाले इति मुख्यपक्षे संवत्सरपूरकान्त्यदिने इति **स्मृत्यर्थसारे** ।

"पितुः सपिण्डीकरणमाब्दिके मृतिवासरे । आधानाद्युपसंप्राप्तावेतत्प्रागपि वत्सरात्" ॥

**इत्युशनो**वाक्यात्संवत्सरे पूर्णे तदुत्तरमृताहे सपिण्डनं कृत्वा वार्षिकं कार्यमित्यन्ये । **स्मृतिरत्नावल्यां** तु तत्र पक्षे पृथगाब्दिकं न सपिण्डनेनैव तस्यापि सिद्धेः । तदुक्तम् ।

"पूर्णे संवत्सरः पिण्डः षोडशः परिकीर्तितः । तेनैव च सपिण्डत्वं तेनैवाब्दिकमुच्यते" ॥ **इति** ।

पिण्डशब्देन श्राद्धं लक्ष्यते । षोडशश्राद्धमित्यर्थ इत्युक्तम् । अत्राद्यमतमेव युक्तमिति मम प्रतिभाति।

विशेषान्तरमाह । **एतच्चेति** । धनेषु धनेष्वपि एकेनैव ज्येष्ठेनैवादौ तस्यैवाधिकारस्योक्तेः । नवश्राद्धं प्रागुक्तम् । अनेन सपिण्डनानन्तरभाविनामविभक्तत्वे पूर्ववत् ज्येष्ठेनैव करणं विभक्तत्वे पृथक्करणमिति सूचितम् । ज्येष्ठासन्निधाने तु कनिष्ठादय एव सपिण्डः समानोदको वा संनिहितःस्सदशाहान्तं कुर्यात् । यत्तु

"कनीयसा कृतं कर्म सपिण्डीकरणं पुनः । तज्ज्यायसाऽपि कर्तव्यं प्रेतशब्दं विहाय तु" ॥

इति तत्कनीयसः साग्निकत्वे पिण्डपितृयज्ञानुरोधेन सपिण्डीकरणस्यावश्यकर्तव्यत्वात्तद्विषयकमनग्निकस्तु कनीयान्सपिण्डीकरणं नैव कुर्यात् । अत्रेदं बोध्यम् ।

"पिण्डभाजस्त्रयस्त्वाद्या लेपभाजस्त्रयः परे । सप्तमः पिण्डदस्तेषां सापिण्ड्यं साप्तपौरुषम् ॥

इत्युक्तदिशा तत्तत्कर्तृकपार्वणश्राद्धे साक्षाल्लेपद्वारा वा पिण्डसंबद्धास्तत्तत्सपिण्डा अतथाभूतः प्रेतस्तथाभूतः संपद्यते प्रेतत्वनिवृत्तेः पितृभावापत्त्या येन तत्सपिण्डीकरणं नाम कर्म तत्र कालाः **कालादर्शे** दर्शिताः ।

"एकादशे द्वादशेऽह्नि त्रिपक्षे वा त्रिमासि वा । षष्ठे चैकादशे वाऽब्दे संपूर्णे वा शुभागमे" ॥ इति ।

अत्राद्यावाहिताग्नेःस्तृतीयोऽनाहिताग्नेः साग्नौ प्रेते उभयोरनाहिताग्नित्वेऽब्दान्ते इति नियताः कालाः । शुभागमनिमित्तस्तु तत्पूर्वः सर्वेषां तद्वत् ।

"आनन्त्यात्कुलधर्माणां पुंसां चैवायुषः क्षयात् । अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते" ॥

इति कुलव्यवस्थिततत्तद्देवकर्मायुःक्षयशरीरोचितदेशास्थितिसंभावनानिमित्तोऽपि विहितो द्वादशाहः सर्वेषामेव अधिकारी त्वत्र पुत्रादिर्यथाशास्त्रं तेषु चानेकेषु सोदरेषु फलस्वाम्यधिकारस्याविशेषेऽपि कर्तृत्वलक्षणः स साक्षाज्ज्येष्ठेऽनुमतिद्वारा कनिष्ठेषु साक्षात्कर्तरि च गुणभूते प्रतिनिधिरपेक्ष्यमाणः सति संभवे कनिष्ठ एवेति निपुणतरं निर्णीत**मभियुक्तैः**। कृते तु तस्मिन्कनिष्ठे न ज्येष्ठस्य पुनः कर्तव्यता स्मर्यते ।

"यवीयसा कृतं कर्म प्रेतशब्दं विहाय तु । तज्ज्यायसाऽपि कर्तव्यं सपिण्डीकरणं पुनः" ॥ **इति**।

अत्रानुष्ठाने विशेषः **संवर्त**नाम्नोदाहृतो नवीनैः ।

"पुनः सपिण्डीकरणश्राद्धं पार्वणवद्भवेत् । अर्घ्यसंयोजनं नैव पिण्डसंयोजनं न च" ॥

इति तदेतद्वचनद्वयं प्राचीननिबन्धेष्वदृश्यमानमपि अन्येषु बहुषु ग्रन्थेषु दृश्यमानं न्यायतः प्रमाणमेव। तथा हि संस्कार्यस्य पितुः प्रेतत्वनिवृत्त्या पितृभावापत्तिलक्षणे फले स्वाम्यलक्षणस्याधिकारस्य सर्वेष्वपि सोदरेषु समानस्य कर्तृत्वलक्षणस्य च तस्य जायापत्योरिवानुजाग्रजयोरनुमतिद्वारा साक्षाच्च स्वीकारात्प्रातिनिध्यभावन्यायस्याप्रवृत्तेर्गुणीभूतस्य कर्तुर्ज्येष्ठस्य प्रतिनिधितयाऽनुमतिर्नान्तरीयकतया कनिष्ठेनानुष्ठितात्सपिण्डीकरणस्तथाविधफलसंभवेऽपि।

“प्रमीतौ पितरौ यस्य देहस्तस्याशुचिर्भवेत्। न दैवं नापि वा पित्र्यं यावत्पूर्णो न वत्सरः”॥

इति **देवीपुराणा**दवगतस्य दैवपित्र्यकर्मानधिकारलक्षणाशुचित्वपरिहाररूपस्य फलस्य प्रतिव्यक्तिभिन्नस्य स्वाम्यरूपोऽधिकारो न सर्वसोदरसाधारण इति प्रातिनिध्यभावन्यायप्रवृत्तेः कनिष्ठानुष्ठितात्सपिण्डीकरणतो ज्येष्ठस्याशुचित्वानिवृत्तेस्तदर्थं ज्येष्ठस्य पुनरनुष्ठानमावश्यकमेव। अशुचित्वस्य कालापनोद्यतावेदकं **देवीपुराणमिति** तु वक्तुमयुक्तं प्रेतश्राद्धानां दैवपित्र्यकर्मानुरोधेनापकर्षविधायकवाक्यानामेकमूलत्वलाघवात्। अनयोश्च वाक्ययोराद्ये कर्मपदस्य प्रेतशब्दमित्यनेन प्रेतः शब्दो यस्योत्पत्तावित्यर्थकेन सामानाधिकरण्यात् प्रेतार्घ्यप्रेतपिण्डसंयोजनतदर्थपितामहपार्वणादिपर्युदासार्थत्वाच्च पुनः सपिण्डीकरणे तदनुष्ठानमन्यथा तद्वैयर्थ्यात् पितुः प्रेतत्वस्य कनिष्ठानुष्ठितादस्मान्निवृत्तेरुत्पन्नस्य फलस्योत्पादयितुमिव तस्यानुप्रातुमशक्यत्वाच्च। अत एव द्वितीये **संवर्त्तेन** कण्ठरवत एव तन्निषिद्धं प्रेतत्वनिवृत्तेः परं प्रसक्ते श्राद्धे सांवत्सरिके विनाऽनभ्यस्तप्रधानरूपैकोद्दिष्टताया निषेधादभ्यस्तप्रधानरूपपार्वणरूपताया विधानाच्चार्थतः पितृपार्वणरूपत्वं पुनरनुष्ठीयमानस्य सपिण्डीकरणस्य सिद्ध्यतीति। ‘श्राद्धं पार्वणवद्भवेत्’ इत्युक्तमिति न कस्य चिदपि वाक्यस्याप्रामाण्यमिति।

विशेषमाह। **एतच्चेति। नियमेनेति।** विपक्षे बाधकश्रवणात्।

“यस्यैतानि न दत्तानि प्रेतश्राद्धानि षोडश। पिशाचत्वं स्थितं तस्य दत्तैः श्राद्धशतैरपि”॥ इति।

**न केति** प्रेतत्वाभावात्। मनोवाक्कायदण्डात्मकं दण्डत्रयम्। विशेषमाह। **पुत्रेति। आ** दशाहाद्दशाहपर्यन्तं दशाहं तत्कृत्यम्।

“सक्तुना शालिना वाऽपि पायसेन गुडेन वा। प्रथमेऽहनि यद्द्रव्यं तद्दशाहं समापयेत्”॥

इति द्रव्यनियमोऽपि बोध्यः। विशेषमाह। **शूद्राणामिति।** अन्वारोहणे एकचित्यारोहणे एकदिनमरणे च स्त्रियाः पृथक् न सपिण्डीकरणं भर्तुः कृते तस्याः कृतं भवतीत्यन्यत्र स्पष्टम्। विशेषमाह। **सपिण्डीति।** अनेन सपिण्डीकरणसांवत्सरिकयोर्भेदः स्पष्टमेवोक्तः॥ २५५॥

## याज्ञवल्कीये २५६ श्लोकः

**वत्सरमिति।** कालाध्वनोरिति द्वितीयेत्याह। **यावदिति।** एवमित्यस्य व्याख्या। **एकोद्दिष्टमिति। भूतमिति।** एकादशाहाख्यमित्यर्थः। **हेमाद्रौ कौर्मेऽपि।**

“एकादशेऽह्नि कुर्वीत प्रेतमुद्दिश्य भावतः। द्वादशे वाऽह्नि कर्तव्यमनिन्द्येऽप्यथ वाऽहनि॥

“एकं पवित्रमेकोऽर्घः पिण्डपात्रं तथैव च। एवं मृताह्नि कर्तव्यं प्रतिमासं तु वत्सरम्”॥ इति।

एतदनन्तरं स्नात्वा भोजनं प्रागुक्तम् । विशेषमाह । **मृतेति** । **तदिति** । यस्मिन् दिने श्रूयत तत्रेत्यर्थः । तत्र मानमाह । **अपरीति** । मृतेऽहनि अपरिज्ञाते सतीत्यर्थः । संदेहं निराचष्टे । **गमनेति** । यस्मिन्मासि गृहाच्चलितस्तन्माससंबन्धिन्यामित्यर्थः । अत्र मानमाह । **प्रवासेति** । यद्दिने गृहाद्गमनं तत्रेत्यर्थः । मूलोक्तमाह । **मृतेऽहनीति** । यथाश्रुतार्थमनेनान्यथा व्युत्क्रमेण व्याचष्टे । **त्रिपक्षादिति** । **प्रेतकर्मेति** । अनेनास्थिसंचयनादेरपि संग्रहः । **मृताहे एवेति** । तथा च स्मृतिः ।

"अनग्निमत उत्क्रान्तेः साग्नेः संस्कारकर्मणः । शुद्धिः संचयनं दाहान्मृताहस्तु यथाविधि" ॥ इति ।

विद्यमानाग्नेः संचयनादूर्ध्वं दाहादारभ्य दिवसगणना कार्या । अनग्नेर्विच्छिन्नाग्नेर्नष्टाग्नेर्विधुरस्य चोत्क्रान्तिदिनत एवाधिकं तूभयोरुत्क्रान्तिदिने एवेत्यर्थः । सूचीकटाहन्यायेन तत्रैवाग्रे आह । **आद्यमिति** । सामान्यं साधारणम् । 'चतुर्णाम्' इत्यादेर्मध्यमपिण्डार्थेनान्वयः । **विष्णु**विरोधं निराचष्टे । **सामेति** । अथ मध्यमे आह । **प्रतीति** । इति अनेन भोजयेत् तद्दानपूर्वकं कुर्यात् । अत्र मातामहानामभावादुभयत्र वातिः । तदाह **प्रत्यब्दमिति** । हि यतः । क्षयाहमिति पाठः । विपर्येति पाठः । **अलं** तद्वचनं समर्थम् । वचनान्तरव्यवस्थां निराचष्टे । **यस्त्विति** । **अनेकेति** । आमुष्यायणदत्तकादीनामित्यर्थ इति तद्भावः । शेषत्वविवक्षया षष्ठीत्याह । **औरसेनेति** । बहुवचनस्वारस्यादाह । **भिन्नेति** । एवेन पार्वणनिषेधः । उभयत्र दोषान्तरमाह । **किञ्चेति** । तदाह **एको** । **द्दिष्टमिति** । **पुनः** तु । **वा** चार्थे । एवमग्रेऽपि । **तत्र** उभयत्र । अत्र वृद्धा इत्यनेन तस्यादरः सूचितः । स चानुपदमेव वक्ष्यते । **अनिश्चितेति** बहुव्रीहिरेवमग्रेऽपि । **मात्रं** कार्त्स्न्ये । ननु **शङ्ख**स्मृतावेतत्स्यादित्यत आह **सामान्येति** । नन्वेवं सामान्यस्य विशेषेणोपसंहार इत्यस्योक्तेरादोषस्तत्राह । **तत्रेति** । हि यतः । प्रकृतावन्यथा सत्त्वेन निवेशासंभवादाह । **विकृतीति** । **मात्रं** कार्त्स्न्ये । **द्वारेति** । विकृतिसंबन्धि पूर्वजनने द्वारभूतसामिधेनीभिर्विकृतिमात्रस्य संबन्धबोधनेनेत्यर्थः । **अधिकारापूर्वेति** । तस्मापूर्वेत्यर्थः । नन्वेवमस्य का गतिरत आह । **अत इति** । अत्र उभयत्र व्यवस्थान्तरं निराचष्टे । **न चैकोद्दिष्टेति** । संभवादेवमस्त्विति तद्भावः संभवेऽप्युक्तवचनमिथो विरोध इत्याह । **उभेति** । तदेव क्रमेणाह । **सपिण्डीति** । व्यवस्थान्तरं निराचष्टे । **यदपीति** । पित्रोरित्यस्योभयत्रान्वयः । साध्याभावसाधकं हेत्वन्तरं यस्य स सत्प्रतिपक्षः ।

एवं परमतानि संदूष्य सिद्धान्तमाह । **तत्रेति** । विप्रतिपत्तौ सत्यामित्यर्थः । तत्र तावत्प्राग्वचनात्र सामान्यशास्त्रवैयर्थ्यमुक्तरीत्यैव साफल्यात् तेन कृतसपिण्डनस्य पार्वणसंबन्धबोधनमनेन विपरीतस्येत्याह । **संन्येति** । अत एव द्वितीयमप्युक्तमेवाह । **अमेति** । "सपिण्डीकरणादूर्ध्वं तस्योक्तः पार्वणो विधिः" । इत्यस्यादिना ग्रहः । **वचनस्य शङ्खी**यस्य । **उक्तेति** । एतन्मूलोक्तवचनरीत्येत्यर्थः । तत एवाह **अन्यत्रेति** ॥ २५६ ॥

## याज्ञवल्कीये २५७ श्लोकः

संगतिमाह । **नित्येति** । अपिण्डकश्राद्धोपलक्षणमेतत् । पार्वणे आह । **पिण्डानामिति** । एकोद्दिष्टे आह । **पिण्डस्येति** । **प्रतीति** । प्रतिपत्तिकर्मेदमिति भावः । विशेषमाह । **तदिति** । अनिष्काशनायाह । **अगाधे इति** । अतलस्पर्शे इत्यर्थः । इतरानिरासाय विशेषमाह । **भोजनेति** ॥ २५७ ॥

## याज्ञवल्कीये २५८।२५९ श्लोकौ

संगतिमाह । **भोज्येति** । दत्तेनेत्यस्य यथायथं लिङ्गवचनविपरिणामः । पितामहग्रहणं पितृमात्रोपलक्षणमित्याह । **पितर इति** । अनागतेन वक्ष्यमाणेन अभक्ष्यव्यावृत्तये आह । **भक्ष्य इति** । एवमग्रेऽपि । **कन्स्वार्थे** । **पिशितं** मांसम् ॥ २५८ ॥ २५९ ॥

## याज्ञवल्कीये २६०।२६१ श्लोकौ

किंच अन्यदपि तदाह । **कालशाकं** कश्मीरदेशे प्रसिद्धम् । वाक्यार्थपूर्तये आह । **अन्त्यमिति** । मघास्विति 'नक्षत्रे च लुपि' (व्या.सू.२।३।४५) इति सप्तमी। अवान्तरताराभिप्रायं बहुवचनं तदाह । **मघादियुक्तेति** । विशेषमविरोधायाह । **अत्रेति** । मूले इत्यर्थः । यथाश्रुतेऽत्रापि विरोधादाह । **अस्येति**। उत्तरार्धानुरोधेनाह । **प्रधानमिति** । तत्त्वमपि नान्यादृशमित्याह । **समग्रेति** । मध्वर्थमाह । **क्षौद्रमिति**। पदवीत्यस्य व्याख्या **यदप्रेति** । चार्थमाह । **यच्चेति** ॥२६०॥ २६१ ॥

## याज्ञवल्कीये २६२।२६३।२६४ श्लोकाः

कृष्णपक्षे सामान्ये आह । **तिथीति** । यथाश्रुतस्यानिष्टत्वादाह । **रूपेत्यादि** । अन्येषां वक्ष्यमाणत्वादाह । **क्षुद्रा इति** । **वर्तिनः** पुत्राः । यथाश्रुतासंगतेराह । **घ्नंतत्यादि** । एवमग्रेऽपि । पदार्थानुक्त्वा वाक्यार्थमाह । **एतानीति**। प्रदीयते इति लेडित्याह । **दद्यादिति**। तत्र विशेषमाह । **यदीति** । तत्र सपिण्डीकरणस्यैवाभावादिति भावः । पूर्वत्र मानमाह । **समत्वमिति** । वचनार्थमाह । **सपिण्डीति** । तत्फलमाह । **अतश्चेति** । **यथेति** । पार्वणमेकोद्दिष्टं वेत्यर्थः । विधिसंभवे नियमो न युक्त इत्याह । **न चेति** । ह्यादयः पादपूरणार्थाः ॥ २६२ ॥ २६३ ॥ २६४ ॥

## याज्ञवल्कीये २६५।२६६।२६७।२६८ श्लोकाः

अन्त्यपद्यमादौ व्याचष्टे । **कृत्तिकेति** । श्रौतक्रमानुरोधेनेदम् । लिङ्गार्थाविवक्षया आह । **आप्नोतीति** । उत्तरार्द्धं हेतुगर्भविशेषणानीत्याह । **यदीति** । फलबोधकपदानां क्रमेणार्थानाह । **स्वर्ग इत्यादिना** । अग्रिमानुरोधेनाह । **अर्वीति** । अन्यथा वैयर्थ्यादाह । **फलेति** । अपौनरुक्त्यायाह । **सामेति** । **अरोगित्वमिति**। असुब्वत इतिवत्प्रयोगः ॥२६५॥२६६॥२६७॥२६८॥

## याज्ञवल्कीये २६९।२७० श्लोकौ

व्यवहितसंगतिमाह । **मासेति** । आदिना मुक्तिः । अभ्युपेत्याह । **संभवेति** । **अत्र धर्मशास्त्रे** । तानपीत्यनेनाथशङ्का समाहिता । द्वितीयां समाधत्ते । **कर्तृश्चेति** । पद्यार्थमाह । **वसव इत्यादि** । नृणामिति शेषे षष्ठीत्याह। **कारिभ्य इति**। पितेत्यस्य व्याख्या **वस्वेति** ॥२६९॥२७०॥

इति श्राद्धप्रकरणम् ।

# अथ गणपतिकल्पप्रकरणम् ११



शान्तिप्रकरणमारिप्सुरुक्तवक्ष्यमाणसंगतिमाह । **दृष्टादृष्टेति** । **अविघ्नेन** विघ्नाभावेन । **कर्म** शान्त्याख्यम् । सिद्धिं विना ज्ञानासंभवादाह । **कारकेति** ।

## याज्ञवल्कीये २७१ श्लोकः

**इत्या**दिना पद्यषट्केन । अस्योपयोगमाह । **उभयेति** । **विघ्नस्य** भाविनः । अत्यन्ताभावस्य नित्यत्वादसंभवाच्चाह । **प्रागभावेत्यादि** । योग्यत्वादाह । **विघ्नेश्वर इति** । विनिगमनाविरहादाह । **पुर्वीति** । **स्वरूपेति** च तथार्थमाह । **स्वाम्ये चेति** । तथा च स एव कारकहेतुरिति भावः ॥ २७१ ॥

## याज्ञवल्कीये २७२।२७३।२७४ श्लोकाः

तदाह । **एवमिति** । **हेत्विति** । स्वप्नदर्शनादीत्यर्थः । **तेनोपसृष्ट इति** । अनेन तस्य सर्वस्यात्राधिकारः सूचितः । मुण्डपदमर्श आद्यजन्तमित्याह । **मुण्डितेति** । कषायेण रक्तं वासो येषां तान् । चसंग्राह्यमाह । **रक्तेति** । आदिना कपिशादींश्च पुरुषानित्यस्यानुषङ्गः । विनिगमनाविरहादाह । **मृगांश्चेति** । पशूनित्यर्थः । चार्थमाह । **तथेति** । यथाश्रुतासंगतेराह । **परीति** । **अभीति च** । सर्वतो वेष्टित इत्यर्थः । **न क्वचित्** न क्वापि । तृतीयान्तादाद्यादित्वात्तसिरित्याह । **विनेति** । ॥ २७२ ॥ २७३ ॥ २७४ ॥

## याज्ञवल्कीये २७५।२७६ श्लोकौ

यत्किंचिल्लाभादाह । **ईप्सितमिति** । एवमग्रेऽपिबोध्यम् । उपलक्षणत्वादाह । **श्रवणं वेति** । यथाश्रुतासंगतेर्लक्ष्यार्थमाह । **कृषिफलमिति** ॥ २७५ ॥ २७६ ॥

## याज्ञवल्कीये २७७।२७८ श्लोकौ

न्यूनतानिरासेन सोपसंहारमुक्तहेतोरन्यथोद्देश्यविधेयभावेन तेनेत्यस्यार्थमाह । **एवमिति** । **कर्म** शान्त्याख्यं स्नपनं मित्वाद्ध्रस्वः । तस्येत्यस्योक्तरीत्याऽर्थद्वयमाह । **विनेति** । **गौरः** पीतः । **वक्ष्येति** । अनुपदमेव द्वेधाशुभत्वमाह । **श्रुतेति** । कुंभानुरोधेनाह । **चत्वार इति** । अस्येत्यस्य वचनेऽन्वयः । शेषत्वविवक्षा वा अस्य तात्पर्यमन्यानुरोधेनाह । **अस्मिन्निति** ॥ २७७ ॥ २७८ ॥

## याज्ञवल्कीये २७९।२८० श्लोकौ

**न** केवलं तदुपवेशनानन्तरं स्वस्तिवाचनम् किं तु मध्येऽन्यदपीत्याह । **किं चेति** । स्मृत्यन्तरानुरोधेनाह । **सरिदित्यादि** । पञ्चम्युपपत्तये आह । **आहृतामिति** । सत्यभामेतिवदाह **गोरोचनामिति** । बहुत्वादाह । **चन्दनेति** । यदः साकाङ्क्षत्वादाह । **तास्विति** । एकः समा-

नार्थ इत्याह । **समेति** । माङ्गल्याच्छेषमाह । **शुभैरिति** । संभवादेव लाभे पुनरुक्तेराह । **अशोष्यादित्यादि** । संगमेऽपि तत्वसत्वात्पावित्र्यविशेषाच्चेति भावः । अंत्यार्द्धार्थमाह । **तत आनेति** । **उत्तरेति** । ऊर्ध्वकेशे । **प्राचीनेति** । प्राङ्मुखेन रूढोऽयमित्याह । **भद्रमिति** । **श्रीति** । श्रीपर्णिवृक्षविशेषः **उदक**प्रसिद्धः । तस्य पीठम् । मूले व्युत्क्रमसत्वात्पूर्वेण सहास्य सर्वस्य सक्रमं तात्पर्यार्थमाह । **ततश्चोक्तोदकेति** । तेभ्य आनीतेत्यर्थः । शेषमन्यत आह । **चूतादीति** । **भूषितान्**कुम्भानिति शेषः । **शुचौ** देशे । **आसनं** तत्पीठम् । **वाच्या** वक्तव्या मङ्गलं यथा स्यात्तथा दिगिति दिक्प्रदेशेत्यर्थः । एवमग्रेऽपि ॥ २७९ ॥ २८० ॥

## याज्ञवल्कीये २८१ श्लोकः

योग्यत्वायाह । **अनेकेत्यादि** । उपसृष्टं तादृशं वा । अत एव साधारणमाह । **विनेति** । तु ता इति पाठः । तदाह । **एता इति** ॥ २८१ ॥

## याज्ञवल्कीये २८२ श्लोकः

भगं षड्विधं ते तुभ्यं ददुरित्यस्य वचनविपरिणामेन पूर्वत्राप्यन्वयः ॥ २८२ ॥

## याज्ञवल्कीये २८३ श्लोकः

मन्त्रैः सर्वान्ते एवं प्रागपि चौलसूत्रमाह । **सर्वैरिति** ॥ २८३ ॥

## याज्ञवल्कीये २८४ श्लोकः

सव्यमाचार्यस्य गृह्येत्यस्य संयोजनवतीति शेषः । मूर्द्धविशेषणमेतत्तदाह । **सव्येति** । **इति** । एतैः ॥ २८४ ॥

## याज्ञवल्कीये २८५।२८६।२८७।२८८।२८९।२९० श्लोकाः

सामान्यपरिभाषाप्राप्तमाह । **प्रणेति** । साकाङ्क्षत्वादाह । **अनन्तरमिति** । **इत्याह** । इत्याशङ्कायामाह । यथाश्रुतासंगतेरन्यथा संक्रमं व्याचष्टे । **कृतेति** । उपाहृत्य निवेद्य जननीमित्यस्याम्बिकाविशेषणत्वादाह । **संनीति** । **जनन्याश्चेति** पूर्वान्वयि । उभयोः क्रमेणाह । **शिरसेत्यादि** । दन्तिरिति पाठः । **नारायणे** तथैव पाठात् । **कामेति** इदं कुत्रत्यमित्यन्वेक्ष्य "कात्यायनाय विद्महे कन्यकुमारि धीमहि तन्नो दुर्गिः प्रचोदयात्" इति तु **नारायणे** पाठः । निधानमन्त्रादाह । **बलिमित्यादिना** । **जंभकाः** पशुविशेषः । **माया** मायाविनः । अर्श आद्यच् । साहचर्याच्च प्रसिद्धग्रहणमित्याह । **कन्देति** । एवं प्रागपि । अत एवाह । **पिष्टादीति** । तत्प्रोता इति बहुव्रीहिः । ताः प्रोता इति पाठान्तरम् । तदुक्तवर्तुलैश्चतुरस्रैश्च दीर्घैः पिष्टविकारकैः निर्मिताः स्रज उच्यन्ते । **दण्डेरकसमाख्येति** । प्रागवदाह । **विनेति** । **त्याहेति** । प्राग्वत् । **पुष्पाणामिति** शेषे षष्ठी ॥ २८५ ॥ ॥ २८६ ॥ २८७ ॥ २८८ ॥ २८९ ॥ २९० ॥

## याज्ञवल्कीये २९१।२९२ श्लोकौ

पूर्वमुभयत्र मिथो विरुद्धत्वादुभयग्रहणं निश्चितमत आवश्यकत्वात् अन्यत्रान्यमन्त्रद्वयस्योक्तत्वात् मन्त्रस्यैकत्वात् न्यूनतां निराचष्टे । **विनेति** । प्राधान्यादाह । **अभीति** । गुरोरिति । शेषे षष्ठीत्याह । **गुरवे इति** । अन्यनिरासायाह । **विनेति** । **देशेनेति** । गुरवे दद्यादिति भावः । अत एव तत्समुचितमेव । भेदेनाह । **ब्राह्मेति** । तथा चोभयसमुच्चायकोऽपिर्मूलतः स्पष्टमप्रतीतेराह । **तत्रेति** । स्नपनविषये इत्यर्थः । **चत्वरे** चतुष्पथस्थे ॥ २९१ ॥ २९२ ॥

## याज्ञवल्कीये २९३ श्लोकः

**प्रकारेण** । तद्वारा । **संयोगान्तरं** फलान्तरं संयुज्यते कारणमनेनेति व्युत्पत्त्या संयोगशब्देन फलमुच्यते । 'पूज्य' इत्यार्षमिति सूचयन्नाह । **संपूज्येति** । अनुत्तमामिति बहुव्रीहिरित्याह । **उत्कृष्टेति** । तत्तात्पर्यमाह । **श्रीति** । द्वितीयपादोपयोगमाह । **आदित्यादीति** ॥ २९३ ॥

## याज्ञवल्कीये २९४ श्लोकः

उभयोः फले तारतम्यमाह । **नित्येति** । शाश्वताशाश्वतरूपे फले इत्यर्थः । नान्य इति श्रुत्यविरोधायाह । **आत्मेति** । श्रवणादिवद्यमपि तदुपाय इति भावः । मौलक्रमेणाह । **आदित्यादीति** । **तिलकम्** । प्रतिकृतिम् । **अभीति** स्वर्गादिकामित्यर्थः । स्मृत्यन्तरानुरोधेनाह । **तथेति** । तद्वदित्यर्थः । **चक्षुषी चेति** नेत्रे चेत्यर्थः ॥ २९४ ॥

इति गणपतिकल्पः ॥

---

**बृहत्पराशरः ।**

"चतुर्थ्यां शुक्लपक्षे तु श्रवणे चोत्तरे तथा । पुण्यार्थं सर्वसिद्ध्यर्थं कुर्याच्छान्तिं विनायकीम"
नक्षत्रान्तराणि **विष्णुधर्मे** इमां शान्तिं प्रकृत्य ।

"हस्तपुष्याश्वयुक्सौम्यवैष्णवान्यतमे शुभे । नक्षत्रे च मुहूर्ते च मैत्रे वा ब्रह्मदैवते" ॥ इति ।

**भविष्ये**

"शुक्लपक्षे चतुर्थ्यां च वारेण धिषणस्य च । तिष्ये च वीरनक्षत्रे तस्यैव पुरतो नृप" ॥ इति ।

एतद्वचनमुदाहृत्या**पराकः** । तच्छ्रीकामस्य विनायकस्नपनविषयम् । उपसृष्टविषयं तु पुण्याहविधानम् । उपसृष्टस्य विलम्बायोगात् । धिषणो गुरुः । तस्यैव विनायकस्येत्यर्थ । इति उपनयनादिफलप्राप्त्यै क्रियमाणायामपि विनायकशान्तौ उपनयनकालाविरोधेन संभवत्कालोपसंग्रहः कार्यो न तु तद्विरोधेनेति बोध्यम् ।

**अथ प्रयोगः** । उक्तकाले पवित्रपाणिरधिकारी प्राणानायम्य देशकालौ संकीर्त्य "अस्य कुमारस्योपनयनकर्मणो निर्विघ्नफलसिद्ध्यर्थं विनायकशान्तिं करिष्ये" इति संकल्प्य तदङ्गत्वेन

गणेशपूजनादिनान्दीश्राद्धान्तं कृत्वाऽऽचार्यवरणं कुर्यात् "आचार्यस्तु यथा स्वर्गे०" चतुर्णामृत्विजां च "अस्य यागस्य नि." पञ्चानां वस्त्रादिभिः पूजनम्। तत आचार्योऽपि पवित्रपाणिः प्राणानायम्य देशादि संकीर्त्य। "आचार्यकर्म करिष्ये" इति संकल्प्य 'यदत्र संस्थितमिति' सर्षपान् विकीर्य 'शुचीवः' इत्यद्भिः भुवं प्रोक्ष्य 'स्वस्त्ययनं ताक्ष्यमिति' मन्त्रद्वयेन प्रार्थ्य प्रतिमाद्वयस्याग्न्युत्तारणं कृत्वा मध्यदेशे शुचौ सुलिप्ते स्थण्डिले पञ्चवर्णैः पिष्टैः स्वस्तिकं कृत्वा तस्मिन्प्राचीनग्रीवमुत्तरलोमानडुहं रक्तमरक्तं वा चर्मास्तीर्य तत्र श्रीपर्णिपीठं निधाय तच्छ्वेतवाससाऽऽच्छाद्य पूर्वादिक्रमेण चतसृषु दिक्षु स्वस्तिकानि कृत्वा तेष्विमान्पदार्थान्काण्डानुसमयेन कुर्यात्। 'महीद्यौः' भुवं स्पृष्ट्वा। 'ओषधयः' धान्यं निक्षिप्य। 'आकलशेषु' एकमव्रणं कलशं निधाय 'इमं मे गंगे' इति संङ्गमोदकेन ह्रदोदकेन वाऽऽपूर्य।

"उद्धृतासि वराहेण कृष्णेन शतबाहुना। मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम्" ॥ इति।

अश्वस्थानगजस्थानवल्मीकसंगमह्रदमृदो निक्षिप्य 'गन्धद्वारामिति' चन्दनागरुकेसरकस्तूरिकर्पूरगोरोचनाः प्रक्षिप्य तूष्णीं गुग्गुलं च प्रक्षिप्य 'या ओषधीः' इति सर्वौषधीः 'ओषधयः सं०' यवान्। 'काण्डात्काण्डादिति' दूर्वाः। 'अश्वत्थेव' इति पंचपल्लवान्। 'याः फलिनीरिति' फलम्। 'सहिरत्नानीति' पञ्चरत्नानि। 'हिरण्यरूप' इति हिरण्यं 'युवा सुवासा' इति वस्त्रेणावेष्ट्य चन्दनमालाभूषितं कृत्वा 'पूर्णादर्वीति' पूर्णपात्रं निधाय "कलशस्य मुखे विष्णुः० यजमानस्य दुरितक्षयकारकाः। सर्वे समुद्राः० काः। देवदानवसंवादे मथ्य." इति च पठेत्। दक्षिणपश्चिमोत्तरकलशेष्वित्यन्ते कर्मण्याचार्येण कृते चत्वार ऋत्विजः पवित्रपाणय आचम्य प्राङ्मुखाः'स्तत्वायामीति' वरुणमावाह्य षोडशोपचारैरभ्यर्च्य **पूर्व**कलशे श्रीसूक्तम्। दक्षिणे महित्रीणाम्। पश्चिमकलशेन हिते क्षत्रम्। उत्तरकलशे वामदेव्यम्। **आनो**भद्रा इति बह्वृचां 'नमो वाचे शन्नो वातः पवतामिति' तैत्तिरीयाः पठेयुः। तदेवाचार्यो भद्रासनप्राग्देशे होमार्थं स्थण्डिलं कृत्वा तदैशान्यां वेद्यां पीठे वा वस्त्रादौ प्रतिमाद्वये विनायकाम्बिकयोरावाहनादिभिर्नैवेद्यान्तैरुपचारैः पूजां कुर्यात्। तत्र मन्त्रौ। "तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि। तन्नो दंती प्रचोदयात्।"

"सुभगायै विद्महे काममालिन्यै धीमहि। तन्नो गौरी प्रचोदयात्"

**अपरार्कहेमाद्रिमते** प्रतिमयोरुत्तरतो नमोंतैरन्या देवता आवाह्य षोडशोपचारैः पूजयेत्। मन्त्राः। "व्योमकेशाय नमः। पार्वत्यै. भीमाय. कृष्णस्य पित्रे नमः। अर्काय. आराय. सिताय. धिषणाय. क्लेदपुत्राय. कोणाय. लक्ष्मवते. विधुन्तुदाय. केतवे. बाहुलेयाय. नन्दकस्य धारिणे" १५। ततो होमार्थं स्थण्डिले यजमानगृह्योक्तविधिनाऽग्निं प्रतिष्ठाप्यान्वादध्यात्तत्र चक्षुषी आज्येनेत्यन्तेऽत्र प्रधानं मितं संमितं शालंकटं कटं कूष्माण्डं राजपुत्रं व्योमकेशं नन्दकस्य धारिणमेकैकया चर्वा हुत्वा शेषेणेत्यादि निर्वापकाले मितायत्वेत्यादिभिरेकविंशतिमन्त्रैः प्रत्येकं चतुरावृत्तैश्चतुरशीतिवारं निरूप्य तथैव प्रोक्ष्य बर्हिष्यासादनान्तं कृत्वा गव्याज्यलोलीकृतेन सिद्धार्थपिष्टेनोद्वर्तिताङ्गस्य सर्वौषधैः सर्वगन्धैश्च विलिप्तशिरसो यजमानस्य मङ्गलवेदघोषेण वस्त्राच्छादिनोक्तपीठात्मकभद्रासनोपर्याचार्ये-

णोपवेशनं कार्यम् । उपवेशनोत्तरमुद्वर्तनम् । **मदनरत्नोक्तं** तु **मिताक्षरामहार्णवा**दिनिबन्धविरोधादुपेक्ष्यम् । सर्वौषधानि प्रियङ्गुनागकेसरादीनीति **मिताक्षरायां अपरार्के वृद्धवसिष्ठः ।**

"बाला च शङ्खपुष्पी च कुष्टं चैव वचा तथा । नागकेसरचूर्णं च सर्वौषधिगणो भृगोः"॥ इति।

**छन्दोगपरिशिष्टे तु ।**

"कुष्टं मांसी हरिद्रे द्वे मुराशैलेयचन्दने । वचाचंपकमुस्तं च सर्वौषध्यो दश स्मृताः"॥ इति।

**महार्णवे तु ।**

"मुरा मांसी वचा कुष्टं शैलेयं रजनीद्वयम् । सटी चंपकमुस्ता च सर्वौषधिगणः स्मृतः"॥ इति।

'दैत्या गन्धकुटी मुरे'त्य**मरः** । ( २।४।१२३ ) । मुरा महाराष्ट्रभाषया 'मोहरी सटी' इति प्रसिद्धा । शैलेयं शिलागतम् । सर्वगन्धा । **मदनरत्ने ।**

"कुङ्कुमागरुकर्पूरकस्तूरीचन्दनं तथा । जातीफलमिति प्रोक्ताः सर्वगन्धाः सदा बुधैः" ॥ इति ।

**हेमाद्रौ गारुडे ।**

"कर्पूरचन्दनं दर्पः कुङ्कुमं च समांशकम् । सर्वगन्धमिति प्रोक्तं समस्तमुखवल्लभम्"॥ इति ।

भद्रासनमुपविष्टो यजमान ऋत्विग्भिर्गृह्योक्तविधिना स्वस्तिवाचनं कुर्यात् । तत्र जीवत्पतिपुत्राभिः सुवेषाभिः स्त्रीभिर्नीराजितस्ताभ्यः सकञ्चुकानि वस्त्राणि दद्यात् । शिष्टाचारात् । तत आचार्यो यजमानदक्षिणत उदङ्मुखस्तिष्ठन्नृत्विग्दत्तपूर्वादिकुम्भत्रयेणैकैकमन्त्रेण स्नपयेत् ।

"सहस्राक्ष शतधारमृषिभिः पावनं कृतम् । तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते ॥
"भगं ते वरुणो राजा भगं सूर्यो बृहस्पतिः । भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः ॥
"यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्द्धनि । ललाटे कर्णयोरक्ष्णोरापस्तद्घ्नन्तु सर्वदा" ॥

उत्तरकलशे मन्त्रत्रयसमुच्चय इति **हेमाद्रिमहार्णवमिताक्षरा**कृन्मतम् । प्रतिकलशं मन्त्रत्रयावृत्तिरित्य**परार्कः** । ततश्चतुर्भिर्मिलितैः कलशैः ऋत्विग्धृतैः **बृहत्पराशरो**क्तैर्मन्त्रैराभिषेकं कारयेत् । मन्त्रान्स्वयं पठेदाचार्यः ।

"एतद्वै पावनं स्नानं सहस्राक्षमिति स्मृतम् । तेन त्वा शतधारेण पावमान्यः पुनन्त्विमाः ॥
"शक्रादि दश दिक्पाला ब्रह्मेशाः केशवादयः । आपस्ते घ्नन्तु दौर्भाग्यं शान्तिं ददतु सर्वदा॥
"सुमित्रया न आप ओषधयः संतु दुर्मित्रियास्तस्मै संतु । योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥
"समुद्रा गिरयो नद्यो मुनयश्च पतिव्रताः । दौर्भाग्यं घ्नन्तु ते सर्वे शान्तिं यच्छन्तु सर्वदा" ॥
"पादगुल्फोरुजङ्घास्यनितम्बोदरनाभिषु । स्तनोरोबाहुहस्ताग्रग्रीवाअंसाङ्गसन्धिषु ॥
"नासाललाटकर्णभ्रूकेशान्तेषु च यत्स्थितम् । तदापो घ्नन्तु दौर्भाग्यं शान्तिं यच्छन्तु सर्वदा" ॥ इति ।

तत आचार्य उपविश्य सव्यपाणिगृहीतकुशत्रयान्तर्हिते यजमानमूर्धनि औदुम्बरेण स्रुवेण सार्षपतैलैर्जुहुयात् । ॐ मिताय स्वाहा । ॐ संमिताय. । ॐ शालाय. । ॐ कण्टंकटाय. स्वा. । ॐ कूष्माण्डाय. ॐ राजपुत्राय स्वाहेति यथामन्त्रलिङ्गं त्यागं यजमानः शालकटंकटाय स्वा. कूष्माण्डराजपुत्रायेति । समासाङ्गीकारेणाहुतिचतुष्टयमपरार्कः । तत इध्माधानादि मितादिषण्मन्त्रैरग्रावदानधर्मेण होमः । व्योमकेशाय स्वाहेत्येवं पञ्चदशाहुतयश्च । ततः स्विष्टकृदादि पूर्णपात्रनिनयनसंस्थाजपान्तं कृत्वा चरुशेषेणाभिषेकशालायां लोकपालेभ्यो बलिं दद्यात् । ॐ इन्द्राय नमः । ईशानाय नमः । इत्यष्टदिक्षु । ब्रह्मणे नमः। अनंताय नमः । इति ईशानपूर्वयोर्मध्ये बलिद्वयम् । अथ यजमानः सुस्नातः शुल्कानुलेपनमाल्याम्बरधरआचार्यसहितः स्तीर्णकुशे शूर्पे निहितमुपहारं गायत्र्या विनायकाये तमुपहारं निवेदयामीत्यन्तया विनायकाय निवेदयेत् । सकृदवहतास्तण्डुलास्तिलपिष्टमिश्रौदनः पक्वमत्स्याः ॥३॥ अपक्वाः ॥३॥ माषविकारास्तदाकारा वा पक्वमपक्वं च मांसं तादृशविकारौ वा । चित्रं सुगन्धिपुष्पं चन्दनादि सुगन्धि द्रव्यम् । त्रिविधा सुरा । गुडमधुपिष्टमिश्राणि ससैन्धवानि पात्रत्रयस्थितानि क्षाराणि वा । मूलकम् ३ पूरिकाः ३ अपूपाः ३ औण्डेरकस्रजः ३ दध्योदनः पायसं गुडमिश्रं तण्डुलादिपिष्टम् । लड्डुका इत्युपहारः । ईदृशमेवोपहारमम्बिकागायत्र्याम्बिकाये एतमुपहारं निवेदयामीत्यन्तेऽम्बिकायै निवेदयेत् । तत आचमनफलताम्बूलदक्षिणानीराजनपुष्पाञ्जलिभिरभ्यर्च्य शिरसा भूमिं गत्वोक्तगायत्रीभ्यां विनायकमम्बिकां च नमस्कुर्यात् । गन्धपुष्पदूर्वासर्षपयुतेन कुसुममात्रयुतेन वोदकेनाञ्जलिमापूर्य पूर्वोक्तगायत्रीभ्यामर्घ्यौ दत्वा सर्षपपुष्पपूर्णाञ्जली ताभ्यां दत्वा विनायकमुपतिष्ठेत् ।

"रूपं देहि जयं देहि भगं भगवन्देहि मे । पुत्रान्देहि धनं देहि सर्वकामांश्च देहि मे " ॥ इति

ततो 'रूपम्. भगं भगवति देहि मे' इति यथापाठमन्त्रेणांबिकामु पतिष्ठेतेति **महार्णवः**। **बृहत्पराशरेणो**पस्थाने मन्त्रान्तरमुक्तम् ।

"सौभाग्यमम्बिके देहि रूपं भगं यशोऽपि च । स्त्रियं पुत्रांश्च कामांश्च तथा शौर्यं च देहि मे ॥

"गणेशमातरं बाले यत्किंचिन्मदभीप्सितम् । एकनाम्नैव तद्देहि देहि गौरिविरान्मम" ॥ इति ।

तत आस्तीर्णकुशे शूर्पे सर्वप्रकारमुपहारशेषं निधाय चतुष्पथभुवमुपलिप्य तत्र गुरुः शूर्पं निदध्यात् । यजमानः प्रक्षालितपाद आचान्तो मन्त्रोक्तदेवताभ्यो बलिं दद्यात् । मन्त्राः ।

"बलिं गृह्णन्त्विमं देवा आदित्या वसवस्तथा । मरुतोऽथाश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः ॥

"असुरा यातुधानाश्च पिशाचा मातरो नगाः । शाकिन्यो यक्षवेताला योगिन्यः पूतनाः शिवाः॥

"जृम्भकाः सिद्धगन्धर्वा मायाविद्याधरा नराः । दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः ॥

"जगतां शान्तिकर्तारो ब्रह्माद्याश्च महर्षयः । मा विघ्नो मा च मे पापं मा सन्तु परिपंथिनः ॥

"सौम्या भवन्तु तृप्ताश्च भूतप्रेताः सुखावहाः" । इति । ततो यजमानो गृहमागत्य क्षालितपाद आचार्यं संपूज्य सदक्षिणं वस्त्रयुग्मं तस्मै दद्यादृत्विग्भ्योऽपि यथाशक्ति हेमदक्षिणां दत्वाऽन्येभ्यश्च भूयसीं दद्यात् । स्थापितदेवतानामुत्तरपूजाविसर्जनपूर्वकमाचार्याय समर्पणं विधाय परिस्तरणविसर्जनादिविभूतिधारणान्तं कृत्वा 'गच्छ गच्छ'इत्यग्निं विसृज्य दशावरान् ब्राह्मणान्भोजयेदीश्वरार्पणं **कुर्यात्** ।

विवाहाद्यारंभे विवाहकर्मणो निर्विघ्नफलसिद्ध्यर्थमित्येवं संकल्पवाक्योहः । एवमुपसर्गनिवृत्तिकाम इति श्रीकाम इति वाऽन्यत्र तदूहो बोध्यः ।

"इति वैनायकी शान्तिः समवादि यथामति । अनन्तेन भवेदेषा गणेशाम्बिकयोर्मुदे" ॥

**अपरार्क**मते कलशेषु पूजान्ते व्योमकेशादिदेवतापूजनम् । तत उत्सादनादिसंस्कृतरयोपवेशनम् । ततः 'सहस्राक्षमिति' मन्त्रत्रयावृत्त्या चतुर्भिः कलशैरभिषेकः । ततो मिताय स्वाहेति चतुर्भिर्मन्त्रैस्तैलहोमः । तैरेव चतुर्भिर्मन्त्रैश्चतुष्पथे बलिदानम् । ततोऽर्घ्यदानमुपस्थानम् । ततः शुक्लवस्त्रादिधारणं ब्राह्मणभोजनं गुरवे वस्त्रयुग्मदानं गुरुवत्पूजनं चेति प्रयोगः । अत्रोपकल्पनश्लोका **महार्णवे** । अथोच्यन्तेऽत्र संभारा रोचना पञ्चमृत्तिकाः ।

"अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमा ह्रदात् । चन्दनागरुकस्तूरीकर्पूराद्याः सुगन्धयः ॥
"गौरसर्षपकल्कस्तु गव्याज्येन विमिश्रितः । गुग्गुलश्चापि संशुद्धः सर्वौषधिगणस्तथा ॥
मुरा. ।
"चत्वारः कलशा एकवर्णाश्चास्फुटिता व्रणाः । ह्रदोदकयुता वाऽपि निम्नगासंगमोदकाः ॥
"सग्रीवापुच्छमारक्तं चर्म चानडुहं तथा । श्रीपर्णी काष्ठपीठं च सहकारस्य पल्लवाः ॥
"अश्वत्थपल्लवा वा स्युः सुगन्धिसुमनांस्यपि । स्रजः शोभनगन्धाश्च विचित्रकुसुमानि च ॥
"कलशावेष्टनार्थं तु नववस्त्रचतुष्टयम् । पीठस्याच्छादनार्थं तु शुभ्रवस्त्रमथापरम् ॥
"गणेशाम्बिकयोरर्थे वस्त्रयुग्मं सुशोभनं । आचार्यदक्षिणार्थं तु महार्हं वसनद्वयम् ॥
"पञ्चवर्णानि पिष्टानि स्वस्तिकस्य विनिर्मितैः । तैलं च सार्षपं तद्वदुदुम्बरविनिर्मितः ॥
"स्रुवः कुशाश्चरुस्थाली पाकार्थं तण्डुलाः शुभाः । किंचिद्वदन्ति क्रियाः क्लप्तास्तण्डुलाश्चापरे तथा॥
"तिलपिष्टेन संयुक्त ओदनः शूर्पमेव च । पक्वाश्च मत्स्याश्चापक्वा मांसं पक्वमपक्वकम् ॥
"गौडी पैष्टी च माध्वी चेत्येवं वै त्रिविधाः सुराः । मत्स्यादिकसुरान्तं च निषिद्धं यस्य यच्च तत् ॥
"न ग्राह्यं च विशेषेण द्विजैस्त्याज्या सुरा सदा । यजमानस्तु शूद्रश्चेद्द्विजैस्तां विनियोजयेत् ॥
"प्रत्यक्षमूलकं वा स्यादुत भक्षस्तथा कृतिः । अपूपाः पूरिकाश्चैव तथैवैडेरकस्रजः ॥
"दध्यन्नं पायसं चैव पिष्टं च गुडमिश्रितम् । लड्डुकाश्च तथा दूर्वाः सर्षपा गौरसंज्ञिताः ॥
"गणेशप्रतिमा चैव गौर्याश्च प्रतिमा तथा । एवं संभृतसंभारः शान्तिं कुर्याच्छुभे दिने" ॥

इति विनायकशान्तिः ।

## अथ नवग्रहदानानि । जातकाभरणे सारावल्याम् ।

"माणिक्यगोधूमसवत्सधेनुः कौसुम्भवासो गुडहेमताम्रम् ।
आरक्तकं चन्दनमम्बुजं च वदन्ति दानं हि विरोचनाय ॥
"सद्वंशपात्रस्थिततण्डुलांश्च कर्पूरमुक्ताफलशुभ्रवस्त्रम् ।
युगोपयुक्तं वृषभं च रौप्यं चन्द्राय दद्याद्घृतपूर्णकुम्भम् ॥

"प्रवालगोधूममसूरिकाश्च वृषोरुणश्चाऽपि गुडः सुवर्णम् ।
आरक्तवस्त्रं करवीरपुष्पं ताम्रं च भौमाय वदन्ति दानम् ॥
"चैलं च नीलं कलधौतकांस्यं मुद्गाज्यगारुत्मतसर्वपुष्पम् ।
दासी च दत्ता द्विरदस्य नूनं वदन्ति दानं विधुनन्दनाय ॥
"शर्करा च रजनी तुरङ्गमः पीतधान्यमपि पीतमम्बरम् ।
पुष्परागलवणं सकांचनं प्रीतये सुरगुरोः प्रदीयते ॥
"चित्राम्बरं शुभ्रतरस्तुरङ्गो धेनुश्च वज्रं रजतं सुवर्णम् ।
सतण्डुलान्योत्तरमन्त्ययुक्तं वदन्ति दानं भृगुनन्दनाय ॥
"गोमेदरत्नं च तुरङ्गमश्च सुनीलनीलामलकं बलोजः ।
तिलाश्च तैलं खलु लोहमिश्रं स्वर्भानवे दानमिदं वदन्ति ॥
"वैडूर्यरत्नं सतिलं च तैलं सुकम्बलश्चापि मदो मृगस्य ।
शस्त्रं च केतोः परितोषहेतोश्छागश्च दानं कथितं मुनीन्द्रैः" ॥ २९५ ॥ २९६ ॥

इति ग्रहदानानि ।

---

## अथ ग्रहशान्तिप्रकरणम् १२

संगतिमाह । **ग्रहांश्चैवेति** । पूजया तयाऽपि पौनरुक्त्यं परिहरति । **श्रीति** । उभयोरव्यवधानेनावश्यकरणे सूचनाय इति भावः । आदिना तडागादिः धात्वर्थानुसारादाह । **पूजामिति** ।

### याज्ञवल्कीये २९७।२९८।२९९।३००।३०१ श्लोकाः

**किमिति** । कीदृशमधिष्ठानं कृत्वा पूज्या इत्याशङ्कायामाहेत्यर्थः । पद्ये स्वार्थे कन् । **उभौ** गुरुशुक्रौ समविकल्पो नेत्याह । **तदलाभे इति** । **स्ववर्णैरिति** । बहुव्रीहिरित्याह । **स्वेति** । स्वस्ववर्णकैर्द्रव्यैरित्यर्थः । अयं समविकल्प इत्याह । **मण्डलेष्विति** । यस्य यस्य यद्यन्मण्डलं तेष्वित्यर्थः । स्वेत्यस्यात्राप्यन्वय इत्याह । **यथेति** । पदार्थानतिवृत्तावव्ययीभावः[1] । न्यूनतां पूरयति । **द्विभुजत्वेति** । तदेवाह । **यथेत्यादिना** । धरः पचाद्यच् । एवमग्रेऽपि । **मेषेति** । मेषेण गच्छतीत्यर्थः । **धूम्रास्तद्वर्णाः** । एतेषां बहुत्वम् । **गृध्रेति** । गृध्रेणाऽऽसनगते येषां ते इत्यर्थः । सर्वे ग्रहाः स्वाङ्गुलेन यजमानाङ्गुलेनाङ्गुष्ठेन उन्नता ग्रहगतनवसंख्याया आदित्यगतद्वादशसंख्यया गुणने यल्लब्धं तदाह । **शतमिति** । अस्योपयोगस्तत्तदादित्यघटितसमुदायभेदे । **तत्रैव मत्स्यपुराणे** एव । दक्षिणेनेत्याद्येनैबन्तमव्ययम्[3] । **पूर्वोत्तरेण** ऐशान्यां **दक्षिणेति** । आग्नेय्यां नैर्ऋत्यां पश्चीति वायव्यां यथावर्णमित्यस्य चतुर्ष्वन्वयः । मन्त्रेत्यस्य व्याख्या **चतुर इत्यादि** । अमुष्मै त्वा सूर्याय त्वेत्यादिसाकाङ्क्षशेषमाह । **अनन्तरमिति** । इध्माधानाद्याघारान्तं कर्मेति पाठः ॥ २९७ ॥ २९८ ॥ २९९ ॥ ३०० ॥ ३०१ ॥

१ व्या. सू. २।१।१६ । २ आसनं च गतं चेति द्वंद्वः । ३ व्या. सू. ५।३।३५ ।

## याज्ञवल्कीये ३०२ श्लोकः

प्रकृतिविकृत्योरभेदेन निर्देशादाह । **अर्केति** । विशेषमाह । **ताम्रेति** ॥ ३०२ ॥

## याज्ञवल्कीये ३०३ श्लोकः

अत्र ग्रहशान्तौ अष्टशतमष्टाधिकशतं विंशतिरेवेति पाठः । संभवापेक्षो विकल्प इत्याह । **यथेति** । मध्यमणिन्यायेनान्वयोऽस्य ॥ ३०३ ॥

## याज्ञवल्कीये ३०४।३०५ श्लोकौ:

साहचर्यालक्ष्यार्थमाह । **तिलेति** । ३०४ ॥ ३०५ ॥

## याज्ञवल्कीये ३०६ श्लोकः

प्राग्दर्शितरीत्यैवाह । **एतच्चेति** ॥ ३०६ ॥

## याज्ञवल्कीये ३०७ श्लोकः

संगतिमाह । **शान्तीति** । **तत्र** तेषां मध्ये ॥ ३०७ ॥

## याज्ञवल्कीये ३०८ श्लोकः

वक्ष्यमाणोपयोगाय पूर्वसंगतिमाह । **अवीति** । **द्विजा**न्ब्राह्मणक्षत्रियवैश्यान् । **तत्र** वर्णत्रयमध्ये । अनेन तेषां पूज्यतमत्वकथनेन उभयत्र पूज्यतमत्वयोः क्रमेणेति भावः । तत्र पूज्यत्वे आह । **प्राणीति** । पूज्यतमत्वे आह । **किंचेति** । अत एव जगच्छब्दः प्रपञ्चमात्रपरो न जङ्गममात्रपर इत्याह । **स्थावरेति** । **तत्र** तथा सति । प्रकृतमाह । **जगदिति** । **यत्** यतः । **इति**र्हेतौ । अत्रार्थे मानमाह । **तथा चेति** । **सर्वस्येति** शेषे षष्ठी । **चिन्तकाः** ज्योतिर्विदः । **तद्दै**वज्ञः । **अपिना** राजा । **अवृद्धि**र्नाशः ॥

### अथातो ग्रहातिथ्यकल्पविधिं व्याख्यास्यामः ।

मासिमास्यृतावृतौ चन्द्रग्रहे सूर्यग्रहेऽयने विषुवे जन्मनक्षत्रे शुभे शुभे वा प्रयुञ्जानः सर्वान्कामान् प्राप्नोतीत्युक्तमेकाग्निविधिनेनोग्रचेष्टानां नक्षत्रपथचारिणाम् ।

"भास्कराङ्गारकौ रक्तौ श्वेतौ शुक्रनिशाकरौ । सोमपुत्रो गुरुश्चैव तावुभौ पीतकौ स्मृतौ" ॥

शनिराहुकेतवः कृष्णापिङ्गला इति । गोमयेन गोचर्ममात्रं चतुरस्रस्थण्डिलमुपलिप्य प्रोक्षणलक्षितमुल्लिख्य ग्रहदेवतानां पूर्वमावाहनम् ।

''मध्ये तु भास्करं विद्यात्पूर्वदक्षिणतः शशी । दक्षिणे लोहितं विद्याद्बुधं पूर्वोत्तरेण तु ॥

''उत्तरे तु गुरुं विद्यात्पूर्वे भार्गवमेव च । पश्चिमे तु शनिं विद्याद्राहुं दक्षिणपश्चिमे ॥

''पश्चिमोत्तरतः केतु ग्रहस्थानं विधीयते । आदित्यः कश्यपगोत्र आत्रेयश्चन्द्रमा भवेत् ॥

''भारद्वाजो भवेद्भौम आत्रेयः सोमजो भवेत् । जीवश्चाङ्गिरसो गोत्रः स्याच्छुकस्तु भार्गवः स्मृतः ॥

''शनिः सूर्येण कथितो राहुः पैठीनसिस्तथा । केतुर्जैमिनिगोत्रः स्याद्ग्रहस्थानमथोच्यते ॥

''अर्को जातः कलिङ्गेषु यमुनायां तु चन्द्रमाः । अङ्गारकस्त्ववन्त्यां वै मथुरायां बुधस्तथा ॥

''सैन्धवे च गुरुर्जातः शुक्रो भोजकटे तथा । सौराष्ट्रे तु शनिर्जातो राहुर्बर्बरके तथा ॥

''अन्तर्वेद्यां तथा केतुरित्येतद्ग्रहस्थानकम्'' । शुक्रार्कौ पूर्वमुखौ शनिशशांकौ पश्चिममुखौ कुजबुधावुत्तरामुखौ । गुरुराहुकेतवो दक्षिणामुखाः । वर्तुलमण्डलमादित्याय चतुरस्रꣳ सोमाय त्रिकोणमङ्गारकाय बाणं बुधाय दीर्घचतुरस्रं बृहस्पतये पञ्चकोणं शुक्राय धनुराकारं शनैश्चराय राहवे शूर्पाकारं केतवे ध्वजाकारमित्यग्निरापो भूमिर्विष्णुरिन्द्र इन्द्राणी प्रजापतिः सर्पा ब्रह्मेत्यधिदेवताः । भास्करस्येश्वरो देवता उमा चन्द्रस्य देवता स्कन्दोऽङ्गारकस्य देवता विष्णुर्देवता बुधस्य ब्रह्मा देवो बृहस्पतेः । शक्रः शुक्रस्य देवता यमदैवतं शनिं विद्याद्राहोः कालस्तु देवता केतोश्चित्रगुप्त इत्येताः अधिदेवतमावाहयामि प्रत्यधिदेवतमावाहयामि. 'त्रातारमिन्द्र' 'त्वं नो अग्ने वरुणस्य' 'सुगं नः पन्थाम्' 'असुन्वन्तं' 'तत्वा यामि' 'आनो नियुद्भि. शतिनी' 'वयꣳ सोमव्रते' 'तमीशानम्' इत्यष्टौ लोकपालान् क्रमेण संस्थाप्याक्षतगन्धपुष्पधूपदीपनैवेद्यैरर्चनं कृत्वा ग्रहवर्णानि वस्त्राणि पुष्पाणि ददाति । ४५ । कीदृशं ब्राह्मणस्य कुण्ड कीदृश क्षत्रियस्य भवेत् । कीदृशं वैश्यशूद्रस्यापि कीदृशमिति । चतुरङ्गुलहस्तं ब्राह्मणस्य त्र्यङ्गुलहस्तं क्षत्रियस्य द्व्यङ्गुलहस्तं वैश्यस्यैकाङ्गुलहस्तं शूद्रस्य ।

''खननं हस्तमात्रं स्यान्नाधिकं तु ततो भवेत् । प्रोक्षितं पञ्चगव्येन गायत्रीस्मरणेन च'' ॥

अग्निप्रतिष्ठाज्यभागान्ते कृतेऽर्कसमिधमादित्याय पालाशीꣳ सोमाय खदिरमङ्गारकायापामार्गं बुधायाश्वत्थं बृहस्पतय औदुम्बरं शुक्राय शमीꣳ शनये राहवे दूर्वाः केतवे कुशमिति सर्वेषामलाभे पालाशं वा । एकैकेनाष्टसहस्रमष्टशतमष्टाविंशतिर्वा समिधमाज्यं चरुं तिलं च हुत्वा 'आसत्येन' 'अग्निं दूतं' 'कद्रुद्राय' इत्यादित्याय 'आप्यायस्व' 'अप्सु मे' सोमो अब्रवीत्' 'गौरीर्मिमाय सलिलानि तक्षतीति' सोमाय 'अग्निर्मूर्धा' 'स्योना पृथिवी' 'क्षेत्रस्य पतिना वयमि'त्यङ्गारकाय 'उद्बुध्यस्वाग्ने' 'इदं विष्णुः' 'विष्णोरराटमसीति' बुधाय 'बृहस्पते अति यदर्यो अर्हात्' 'इन्द्रमरुत्वो' 'ब्रह्मजज्ञानमिति' बृहस्पतये 'शुक्रं ते अन्यत्' 'इन्द्राणिमासुनारिष्विति.' 'इंद्रं वो विश्वतस्परीति' शुक्राय 'शन्नो देवीः' 'प्रजापतये नत्वदिमे' यमप्रस्तरमाहिर्सीदेति' शनैश्चराय 'कयानश्चित्र' 'आयंगौः पृश्निरक्रमीद्यत्ते देवी निर्ऋतिरिति' राहवे 'केतुं कृण्वन्न केतव' 'ब्रह्मा देवानां श्चित्रं देवानामिति' केतवे । जयाभ्यातानꣳ राष्ट्रभृत. प्राजापत्यां व्याहृतीर्विहृताः सौविष्टकृतमित्युपजुहोति सोमराजानमिति वरप्रदानानुपहारायान् रक्तचन्दनमादित्याय चंदनꣳ

सोमाय कुंकुममङ्गारकायागरुं बुधाय बृहस्पतये श्रीखण्डं२ शुक्राय कस्तूरिका शनैश्चराय सुगंधं राहवे सारकं केतवे च सर्वेषामलाभे यथामिलितं वा रक्तकरवीरमादित्याय श्वेतकरवीरं२ सोमाय रक्तोत्पल मङ्गारकाय कुसुलीपुष्पं बुधाय शङ्खपुष्पं बृहस्पतयेऽतसीपुष्पं शुक्राय बालाञ्जनपुष्पं शनये सर्षपपुष्पं राहवे शङ्खिनीपुष्पं केतवे सर्वेषामलाभे यथामिलितं वा कद्रधूपमादित्याय मयूरशिख२सोमाय गुग्गुलमंगारकाय सर्जरसं बुधाय बिल्वगिरं बृहस्पतये श्रीबालं शुक्राय कृष्णागुरुं शनये दशाङ्गं राहवे देवदारुं केतवे सर्वेषामलाभे गुग्गुलं वा । गोघृतदीपमादित्याय तिलदीप२सोमाय तैलेनमङ्गारकायाजाघृतं बुधायाविकदीपं गुरवे गोघृतं शिरिसिकादीपं शुक्रायातसीदीपं शनये करञ्जदीपं राहवे महिषीघृतं केतवे च सर्वेषामलाभे गोघृतं वा हविष्यमन्नमादित्याय पायस२सोमाय गुडौदनमङ्गारकाय दध्योदनं बुधाय क्षीरोदनं बृहस्पतये घृतोदनं शुक्राय तिलपिष्टमिश्रमोदन२सघृत२शनिश्चराय राहवे माषोदनं केतवे चित्रोदनमिति सर्वेषामलाभे पायसं वा । आचार्याय दक्षिणां दद्यात् । धेनुमादित्याय शङ्ख२ सोमाय रक्तमनड्वाहमंगारकाय काञ्चनं बुधाय पीतवासो बृहस्पतये श्वेतहयं शुक्राय कृष्णा गौः शनये राहवे पायसं केतोश्छागमिति सर्वेषामलाभे हिरण्यं वा । यथा शस्त्रनिवारणाय कवचं भवति तथा नारायणमेवं दैवोपघातशान्तिर्भवति वारणम् । यथा समुत्थितं यन्त्रेण प्रतिहन्यते एव समुत्थितं वायशान्तिर्भवतीति वारणम् ।

"ग्रहा वाऽथ नरेन्द्राश्च ब्राह्मणाश्च विशेषतः । पूजिताः पूजयन्त्येनं निर्दहन्त्यवमानिताः" ॥
इत्याह भगवान्बौधायनः ।

**नवग्रहपद्धतिः । अथ प्रयोगः ॥** आचम्य प्राणानायम्य देशकालौ स्मृत्वा. तिथौ मम समस्तपीडापरिहारद्वारा आदित्यादिनवग्रहप्रीत्यर्थं यथाशक्ति नवग्रहशान्तिं करिष्ये इति संकल्प्य देवयजनोल्लेखनप्रभृति आ प्रणीताभ्यः कृत्वोत्थायाग्निणाग्निं प्रत्यावाहनम् । ॐ प्रणवस्य परब्रह्मऋषिः परमात्मा देवता दैवी गायत्रीच्छंदः । व्याहृतीनां क्रमेण जमदग्निभरद्वाजभृगवो ऋषयः अग्निर्वायुः सूर्यो देवता. दैवीगायत्री दैव्युष्णिक् दैव्यनुष्टुप् दैवी बृहत्यश्छंदांसि सूर्यायावाहनार्थे विनियोगः । तत्र ग्रहपीठमध्ये वर्तुले द्वादशाङ्गुले प्राङ्मुखं सूर्यं रक्तपुष्पाक्षतैः । आकृष्णेन हिरण्यस्तूपः सविता त्रिष्टुप् सूर्यावाहने विनियोगः । 'आकृष्णेन रजसा. निपश्यन्.' भूर्भुवः स्वः कलिङ्गदेशोद्भव काश्यपसगोत्र सूर्येहागच्छेह तिष्ठति स्थापयेत् । तत आग्नेयचतुरस्रे चतुर्विंशाङ्गुले प्रत्यङ्मुखं सोमं श्वेतपुष्पाक्षतैः । आप्यायस्व गौतमः सोमो गायत्री **सोमावाहने** विनियोगः 'ॐ आप्यायस्व. संगथे' । भूर्भुवः स्वः यमुनातीरोद्भवात्रेयसगोत्र सोमेहागच्छेह तिष्ठ. । ततो दक्षिणे त्रिकोणे त्र्यङ्गुले दक्षिणाभिमुखं भौमं रक्तपुष्पाक्षतैः अग्निर्मूर्द्धा विरूपोऽङ्गारकोगायत्री **अङ्गारकावाह.** 'अग्निर्मूर्द्धा. जिन्वति.' भूर्भुवः स्वः अवन्तीसमुद्भव भारद्वाजसगोत्र भौमेहागच्छेति. । तत ईशान्यां बाणाकारे चतुरङ्गुले उदङ्मुखं बुधं पीतपुष्पाक्षतैः उद्बुध्यस्व बुधः सौम्यो बुधस्त्रिष्टुप्. **बुधावाहने विनियोगः ।** 'उद्बुध्यस्वाग्ने. इयतः' । **ॐ भूर्भुवः स्व मगधदेशोद्भवात्रेयसगोत्र बुधेहागच्छ ।** तत उत्तरे दीर्घचतुरस्रे षडङ्गुले उदङ्मुखं बृहस्पतिं पीतपुष्पाक्षतैः । बृहस्पते गृत्समदो बृहस्पतिस्त्रिष्टुप् **बृहस्पत्यावाहने वि.** 'ॐ बृहस्पते अति. चित्र' ॐ भूर्भुवः स्व·

सिंधुदेशोद्भवाङ्गिरसगोत्रबृहस्पते इहागच्छ. । ततः पूर्वे पंचकोणेन वाऽङ्गुले प्राङ्मुखं शुक्रं शुक्लपुष्पाक्षतैः शुक्रः पाराशरशुक्रो वै द्विपदा विराट् **शुक्रावाहने.** 'ॐशुक्रः शुशुक्रान्मुतो न जातः पप्रा समीचीदिवो न ज्योतिः' भूर्भुवः स्वः भोजकटदेशोद्भव भार्गवसगोत्र शुक्रेहागच्छ. । ततः पश्चिमे धनुषि द्व्यङ्गुले प्रत्यङ्मुखं शनिं कृष्णपुष्पाक्षतैः शमग्निरिरिं पिठिः शनिरुष्णिक् **शन्यावाहने.** 'ॐशमग्निः स्त्रिधः' । भूर्भुवः स्वः सौराष्ट्रदेशोद्भवकाश्यपसगोत्रशनैश्चरेह । ततो नैर्ऋत्ये शूर्पाकारे द्वादशाङ्गुले दक्षिणामुखं राहुं कृष्णपुष्पाक्षतैः कयानोवामदेवोराहुर्गायत्री **राह्वावा.** 'ॐकयान. वृता'। भूर्भुवः स्वः राठिनापुरोद्भव पैठीनसगोत्र राहो इहा गच्छ. । ततो वायव्ये ध्वजाकारे षडङ्गुले दक्षिणाभिमुखं केतुंन्धूम्रपुष्पाक्षतैः केतुर्मधुश्छंदाः केतुर्गायत्री **केत्वावाहने.** 'केतुं कृ. यथाः' । भूर्भुवः स्वः अन्तर्वेदीसमुद्भव जैमिनिसगोत्रकेतव इहागच्छतेह तिष्ठत ।

**अथाधिदेवताः** । त्र्यंबकं वसिष्ठो रुद्रोऽनुष्टुप्. **ईश्वरावाहने.** । 'ॐत्र्यम्बकं० मृतात्' । ईश्वर इहागच्छ. प्राङ्मुखसूर्यदक्षिणपार्श्वे ईश्वरमावाहयामि स्थापयामि. । 'गौरीर्मिमाय दीर्घतमा उमा जगती. **उमावा.** ''गौरीर्मिमाय सलिलानि दक्षत्येकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन्.'' उमे इहागच्छ. प्रत्यङ्मुखसोमदक्षिणपार्श्वे उमामा. । स्योना मेधातिथिर्भूमिर्गायत्री **भूम्यावा.** 'स्योनापृथि. प्रथाः' । भूमे इहागच्छ. अङ्गारकदक्षिणपार्श्वे भूमिमा. । यदक्रन्दो दीर्घतमास्त्रिष्टुप् । **स्कन्दावाहने** विनियोगः । ''यदक्रन्दः प्रथमं जायमान उद्यन्समुद्रादुत वा पुरीषात्।श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं महि जातं ते अर्वन्''।स्कन्देहागच्छ दक्षिणाभिमुखं भौमदक्षिस्कन्दमा. । विष्णोर्नुकं दीर्घतमां विष्णुस्त्रिष्टुप् **विष्णवावाहने.** 'विष्णोर्नुकं वीर्याणि वचो. त्रेधोरुगायः विष्णो इहागच्छ उदङ्मुखबुधदक्षिणपार्श्वे विष्णुमा०' ब्रह्मजज्ञानं गोतमो वामदेवो ब्रह्मात्रिष्टुप्. **ब्रह्मावाह.** 'ॐ ब्रह्मजज्ञानं. श्चविव.' । ब्रह्मन्निहागच्छ उदङ्मुख बृहस्पतिदक्षिणपार्श्वे ब्रह्माणमा. इन्द्रं वो मधुच्छन्दा इन्द्रो गायत्री **इन्द्रावाहने.** 'इन्द्रं वो विश्व. केवलः' । इन्द्रेहागच्छ. प्राङ्मुखशुक्रदक्षिणपार्श्वे इन्द्र. । यमाय सोमं यमो यमोऽनुष्टुप् **यमावाहने०** 'यमाय सोमं सुनुत यमाय जुहुता हविः । यमं ह यज्ञो गच्छत्यग्निदूतो अरंकृतः' यमेहागच्छ । प्रत्यङ्मुखशनिदक्षिणपा. यममावा. । मोषुणोघोरः काण्वः कालो गायत्री **काला.** ''ॐ मोषुणपरापतानिर्ऋतिर्दुर्हणावधीत्। पदीष्टतृष्णुया सह.'' कालेहागच्छ दक्षिणपा. राहुदक्षिणपा. कालमा.। उषो वाजं प्रस्कण्वश्चित्रगुप्तो बृहती **चित्रगुप्ता.** ''उषो वाजं हि वं स्वपश्चित्रो मानुष्ये जने । तेनाह वसुकृतो अध्वरों उपयेत्वा गृणन्ति वह्नयः'' चित्रगुप्तेहागच्छ दक्षिणमुखकेतुदक्षिणपार्श्वे चित्रगुप्त. । अथ शुक्लतण्डुलैः सूर्यादेः प्रत्यधिदेवताः अग्निं काण्वो मेधातिथिरग्निर्गायत्री. **अग्न्यावा.** 'अग्निं दूतं वृणीमहे होतार० सुक्रतुं.' अग्ने इहा. प्राङ्मुखसूर्यवामप्रार्श्वेऽग्निमा. । अप्सु मेधातिथिरापोऽनुष्टुप् **अपावा.** 'अप्सु मे सोमो अब्रवीदंतर्विश्वानि भेषजा । अग्निं च विश्वशंभुवमापश्च विश्वभेषजी.' आप इहागच्छतेह तिष्ठत प्रत्यङ्मुखसोमवामपार्श्वे अप आवा. । स्योना मेधातिथिर्भूमिर्गायत्री **भूम्यावा.** 'स्योनापृथि.' भूमे इहागच्छ. दक्षिणामुख भौमवामपार्श्वे भूमि. । इदं विष्णुर्मेधातिथिर्विष्णुगायत्री **विष्णवावाहने.** 'इदं वि. सुरे' । विष्णो इहा. उदङ्मुख बुधवामपार्श्वे. विष्णुमा. । इन्द्रश्रेष्ठा गृत्समद इन्द्रस्त्रिष्टुप् **इन्द्रावाहने.** 'इन्द्रश्रेष्ठानि द्रविणानि धेहि चित्तिं दक्षस्य सुभगत्वमस्मे. पोषं रयीणामरिष्टिं तनूनां स्वाद्मानं

वाचः सुदिनत्वमह्नां.' इन्द्रेहागच्छ उदङ्मुखगुरुवामपार्श्वे. इन्द्रमा० । इन्द्राणी वृषाकपिरिन्द्राणी पंक्तिः **इन्द्राण्यावाह.** "इन्द्राणीमासु नारिषु सुभगा महमश्रवं नह्यस्या अपरं च न जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः" । इन्द्राणि इहागच्छ प्राङ्मुखशुक्रवामपार्श्वे इन्द्राणीमा० । प्रजापते हिरण्यगर्भः प्रजापतिस्त्रिष्टुप् **प्रजापत्यावा.** "प्रजापतेत. यीणां" प्रजापते इहागच्छ प्रत्यङ्मुखशनिवामपार्श्वे प्रजापतिमा. । आयंगौः सार्पराज्ञी सर्पागायत्री **सर्पावाहने ।** "आयंगौः पृश्निरक्र०" प्रयन्स्वः सर्पाः । इहागच्छतेह तिष्ठत दक्षिणाभिमुख राहुवामपार्श्वे सर्पान् आवा. । ब्रह्मजज्ञानं गौतमो वामदेवो ब्रह्मास्त्रिष्टुप् **ब्रह्मावाह.** "ब्रह्मजज्ञानं प्र०" ब्रह्मन्निहागच्छ दक्षिणामुखकेतुवामपार्श्वे ब्रह्माणमा. अथ शुक्लतण्डुलैः गणानां त्वा गृत्समदो गणपतिर्जगती **गणपत्यावाह.** "गणानां त्वा गण." विनायकेहागच्छ. राहोरुत्तरतो विनायकमा० । जातवेदसे कश्यपो दुर्गास्त्रिष्टुप् **दुर्गावा. ।** 'जातवेदसे सु." दुर्गे इहागच्छ० शनेरुत्तरतो दुर्गामा. । तव वायो व्यश्वाङ्गिरसो वायुर्गायत्री **वाय्वावा०** "तव वायो बृहस्पते त्वष्टुर्जामातरद्भुतअवांस्या वृणीमहे." वायो इहागच्छ रवेरुत्तरतो वायुमा० । आदित्प्रत्नस्य आकाशो गायत्री **आकाशावा०** "आदित्प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरं परोपदिध्यते दिवा०" आकाशेहागच्छ० राहो दक्षिणत आकाशमा० । एषो उषाऽप्रस्कण्वोऽश्विनो गायत्री **अश्वावाह०** "एषो ऽशअपूर्व्या व्युच्छति प्रिया दिवः । स्तुषे वामश्विनाबृहत् । अश्विनाविहागच्छतमिहतिष्ठतम् । केतोर्दक्षिणत अश्विनावा. ततः क्षेत्रस्य पतिना वामदेवः क्षेत्राधिपतिस्त्रिष्टुप् **क्षेत्रपालावाहने**विनियोगः 'क्षेत्रस्यपति. दृशे' । क्षेत्रपाल इहागच्छ० उत्तरे क्षेत्रपालमा० । वास्तोष्पते वसिष्ठो वास्तोष्पतिस्त्रिष्टुप् **वास्तोष्पत्यावा.** 'वास्तोष्पतेप्र० व्यदे०' वास्तोष्पते इहागच्छ० उत्तरे वास्तोष्पतिमा० ।ततो **लोकपालान.** इन्द्रं विश्वाजितामधुच्छन्दस इन्द्रोऽनुष्टुप्० **इंद्रावाहने०** "इन्द्रं विश्वा अवी. रथीत. पतिं" इन्द्रेहागच्छ. पूर्वस्यां दिशि इन्द्रमा. । अग्निं काण्वो मेधातिथि रग्निर्गायत्री **अग्न्यावाह.** "अग्निं दूतं वृ. क्रतुं." अग्ने इहागच्छ. आग्नेय्यामग्निमा. । यमाय सोमं यमोऽनुष्टुप्. **यमावा** 'यमाय सोमं सुनुत यमाय जुहुताहविः । यमंहयज्ञो गच्छत्यग्निदूतो अरं कृतः"। यमेहागच्छ० दक्षिणस्यां यममा० । मोषुणो घोरः काण्वो निर्ऋतिर्गायत्री **निर्ऋत्यावा.** "मोषुणः परापतानिर्ऋतिर्दुर्हणावधीत् । यदीष्टतृष्णया सह" निर्ऋते इहागच्छ. निर्ऋत्यां निर्ऋतिमा० । त्वन्नो अग्ने वामदेवो वरुणास्त्रिष्टुप् **वरुणावाह.** "त्वन्नो अग्ने" वरुणइहागच्छ. पश्चिमस्यां वरुणमा० । नव वायो व्यश्वाङ्गिरसो **वायुर्गायत्रीवाय्वावा.** 'तव वायो बृहस्पते त्वष्टुर्जामातरद्भुत. आतवास्यावृणीमहे." वायो इहागच्छ. वायव्यां वायुमावाह. । सोमो धेनुं गौतमः सोमस्त्रिष्टुप्**सोमावा.** "सोमो धेनुं सो. " सोमेहागच्छ. उत्तरस्यां सोममा० । तमीशानं गौतम ईशानो जगती **ईशानावाहने** "तमीशानं ज." ईशानेहागच्छ. ईशान्यामीशानमा० । "ॐ तदस्तु मित्रावरुणा तदग्ने शंयोरस्मभ्यमिदमस्तु शस्तम्. । अशीमहि गाधमुत प्रतिष्ठां नमो दिवे बृहरपते सादनाय । ग्रहा वै प्रतिष्ठासूक्तं तत्प्रतिष्ठिततमया वाचा शंस्तव्यं तस्माद्यद्यपि दूर इव पशून् लभते ग्रहानेवैनानाजिगमिषाति गृहा हि पशूनां प्रतिष्ठा प्रतिष्ठा" । ततः षोडशोपचारैः पूजां कुर्यात् । तदीशान्यां कलशस्थापनं वरुणावाहनपूजनादि । कलशप्रार्थना । ते च मन्त्राः ।

"सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयान्तु यजमानस्य दुरितक्षयकारकाः ॥

"कलशस्य मुखे विष्णुरिति श्लोकत्रयं पठेत् । देवदानवसंवादे मथ्यमाने महोदधौ ॥

"उत्पन्नोऽसि तदा कुम्भविधृतो विष्णुना स्वयम् । त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः ॥

"त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः । शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः ॥

"आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः । त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः ॥

"त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव । सांनिध्यं कुरु देवेश प्रसन्नो भव सर्वदा" ॥

ततस्तन्मन्त्रैर्गैतानासनादिनाऽभ्यर्च्य प्रणीतानन्तराग्न्याभिमुख्यान्कृत्वा घृताक्तततत्समिधः । अष्टोत्तरसहस्रमष्टोत्तरशतं वाऽष्टाविंशतिं वा हुत्वा हविष्यान्नादि हविष्यमेव वा तेभ्यो निवेद्य प्राग्वद्धुत्वा सोमꣳराजानमिति सौविष्टकृतꣳ हुत्वा जयप्रभृत्या धेनुवरप्रदानान्कृत्वा ग्रहानभ्यर्च्याग्याहीति तिसृभिर्हिरण्येति चतसृभिः पवमान इत्यनुवाकेन च मार्जयित्वा तत्तन्मन्त्रेण गन्धादिभिरभ्यर्च्य बलिमुपहृत्य नमस्कृत्य ।

"यान्तु देवगणाः सर्वे पूजामादाय मत्कृताम् । अभीष्टवरदानाय पुनरागमनाय च" ॥ इति ।

संप्रार्थ्य प्रवाह्यापरेणाग्निमुपविश्याद्भिः 'आपो हि ष्ठे'त्यादिभिर्मार्जयित्वा दक्षिणां कपिलादिकं हिरण्यं वा दत्वा कर्मेश्वरार्पणं कुत्वा यस्य स्मृत्येति पठित्वा विष्णुं स्मरेत् १० ॥ ३०८ ॥

इति ग्रहशान्तिप्रकरणम् ।

---

# अथ राजधर्मप्रकरणम् १३

पूर्वविशेषसंगतिमाह । **साधारणेति** । सकलवर्णसाधारणानित्यर्थः । द्वितीये वक्ष्यमाणसर्वोपोद्घातोऽयं बोध्यः । अत एवान्ते उक्तिः । युक्तस्य दण्डस्य चिन्त । अत एवाग्रे नराधिप इत्येवोक्तम् । अत्र राज्याभिषेकविषये किंचिदुच्यते । तत्र प्रथमं **राज्याधिकारिनिर्णयः** । सत्यपि बहुषु पुत्रेष्वौरसो ज्येष्ठो वाऽधिकारी ।

"औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च" इत्यादिना द्वादशविधपुत्राननुक्रम्याभावे पूर्वपूर्वेषां परान्समभिषेचयेदिति **कालिका**वचनात् ।

"अथोपरिचरं राजा यौवराज्येऽभ्यषेचयत् । ज्यायांसमौरसं पुत्रं सर्वराजगुणैर्युतम्" ॥

इति तत्रत्यपरकृतेश्च ।

"आदिष्टवयसि मे ज्येष्ठः प्रसूतः सदृशो गुणैः । ज्येष्ठायामपि मे पत्न्यां सदृश्यां सदृशः सुतः ॥

"उत्पन्नस्त्वं गुणज्येष्ठो रामनामात्मजः प्रियः । त्वया तात प्रजा ह्येताः स्वगुणैरनुरञ्जिताः ॥

"तस्मात्त्वं पुण्ययोगेन यौवराज्यमवाप्स्यसि" ॥

इति **रामायणे** श्रीरामं दशरथोक्तेश्च "ज्येष्ठेन जातमात्रेण पुत्रीभवति मानवः" इति (अ. ९ श्लो. १०६ ) **मनू**क्तेश्च । यदि कनिष्ठः पुत्रो जन्मना ज्येष्ठः तदा कनीयसि ज्येष्ठापुत्रे सत्यपि तस्यैवाधिकारः । "जन्मज्येष्ठं प्रियं पुत्रं यौवराज्ये यदीक्षया" इति **रामायणे** जन्मज्येष्ठत्वस्यैव हेतुत्वेन कीर्तनात् । जन्मवास्त्वोकषड्भावविकारेषु प्रथमो भावविकारः । तमनुपदं प्रदर्शयिष्यामः । राजपत्नीभ्यां युगपदुत्पन्नयोस्तु ज्येष्ठाया उत्पन्नस्यैवाधिकारः । दशरथोक्तौ ज्येष्ठायामुत्पत्तिकीर्तनस्यानर्थक्यायोगात् । ज्येष्ठायां यमयोरुत्पन्नावपि जन्मज्येष्ठस्यैवाधिकार उक्तहेतोः । जन्मपदेन गर्भाधानादितसश्चेतन्यलाभे सत्यपि ज्येष्ठेषु क्षेत्रजादिषु कनीयस औरसस्यैवाधिकारः प्रयोजको योनिपुष्पे प्रवेशोऽत्रोच्यते । यश्च यमयोर्मध्ये मातुः पश्चादुत्पन्नः तस्यैव पितुः सकाशादुक्तविधं जन्म प्रथममिति स एव ज्येष्ठः । "यदा विशोधिभूतयो न पुष्पं क्षरस्तु । तदा भवतो गर्भो सूतिवेशविपर्ययात्" ॥ इति **पैठिनसि**स्मरणेन कथ्यद्वैविध्यस्य द्विविधजन्मगतस्य स्फुटप्रतीतिः ।

"प्रजापतिर्नाम तयोरकार्षीद्यः प्राक् स्वदेहाद्यमयोरजायत । तं वै हिरण्यकशिपुं विदुः प्रजा नतं हिरण्याक्षमसूत साग्रतः" । इति **पौराण**वचसि स्वपदोक्त्या पितुः प्रथमोत्पन्नो हिरण्यकशिपुः मातुरग्रे प्रथमं यो जातः स हिरण्याक्ष इति संज्ञावधारणे सति हिरण्याक्षोऽनुजस्तस्येति हिरण्याक्षानुजत्वसंकीर्तने वाक्यशेषगते न पितुः प्रथमोत्पन्ने ज्येष्ठत्वप्रतीतिः । 'हिरण्यकशिपुर्ज्येष्ठः' इत्यन्यत्र व्यवहारातसत्स्वपि ज्येष्ठेषु दत्तकादिषु कनीयस औरसस्यैवाधिकारः ।

"न क्षेत्रजादीन्तनयान् आत्मराज्येऽभिषेचयेत्" । "पितॄणां शोधयन्नित्यमौरसे तनये सति" इति । **कालीपुराण**वचनात् पितृणामित्यपपाठः प्रतिभाति । शोधयन्नित्यनन्तरं ऋणमिति शेषः । ज्येष्ठस्याप्यन्धत्वादि दोषे कनिष्ठस्यैवाधिकारः ।

"अनंशौ क्लीबपतितौ जात्यन्धबधिरौ तथा । उत्पन्नजडमूकाश्च ये च केचिन्निरिन्द्रियाः ॥

"सर्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा । ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेत्" ॥ इति । ( अ० ९ श्लो. २०१।२०२ ) **मनु**ना ग्रासाच्छादनार्हत्वेनोक्तस्य राज्यार्हत्वासंभवात् ।

"धृतराष्ट्रस्त्वचक्षुष्ट्वात्तद्राज्यं न प्रतिपद्यते । पारशवत्वाच्च विदुरो राजा पाण्डुर्बभूव ह" ॥ इति **भारतोक्ते**श्च । केनापि हेतुनाऽजातराज्यलाभेऽपि ज्येष्ठे तत्पुत्रस्य भवत्येव राज्याधिकारः । यन्निवृत्त्यै भीष्मं प्रति दाशेनाभ्यवादि । भा. आ. १००-९१ '

"यत्त्वया सत्यवत्यर्थे सत्यधर्मपरायण । राजमध्ये प्रतिज्ञातमनुरूपं तवैव तत् ॥

"नान्यथा तन्महाबाहो संशयोऽत्र न कश्चन । तवापत्यं भवेद्यत्तु तत्र नः संशयो महान्" ॥ इति । उक्तं **भीष्मे**णापि ।

१ वा. रा. अ. ३ स्र. १

"राज्यं तावत्पूर्वमेव मया त्यक्तं नराधिप । अपत्यहेतोरपि च करिष्येऽद्य विनिश्चयम् ॥

"अद्यप्रभृति मे दाशब्रह्मचर्यं भविष्यति" इति । श्रूयते चासमअसपुत्रस्यांशुमतो राज्यलाभः। प्राप्ताभिषेके कनीयसि राज्यानधिकृतज्येष्ठस्यौरसौ जातोऽपि न राज्यं लभते किं तु कनिष्ठपुत्र एव लभते । यथा युधिष्ठिरः । अत एव सत्यपि दुर्योधने पौरोक्तिर्भारते ।

"प्रज्ञाचक्षुरचक्षुष्ट्वात् धृतराष्ट्रो जनेश्वरः । राज्यं न प्राप्तवान् पूर्वं स कथं नृपतिर्भवेत् ॥

"तथा शान्तनवो भीष्मः सत्यसन्धो महाव्रतः । प्रत्याख्याय पुरा राज्यं न स जातु ग्रहीष्यति ॥

"ते वयं पाण्डवज्येष्ठं तरुणं वृद्धशालिनम् । अभिषिञ्चाम साध्वग्र्यं सत्यकारुण्यवेदिनम्"॥ इति।

**अथाभिषेककालः । गारुडे ।**

"रोहिण्यार्द्रा तथा पुष्यो धनिष्ठा चोत्तरात्रयम् । वारुणं श्रवणं चैव एते चोर्ध्वमुखाः स्मृताः॥

"एषु राज्याभिषेकं च पट्टबन्धं च कारयेत् । इति संभृतसंभारो राज्ञः सांवत्सरस्ततः ॥

"कालेऽभिषेचनं कुर्यात् तं कालं कथयामि ते । ध्रुवाणि वैष्णवं शाक्रं हस्तपुष्यौ तथैव च ॥

"नक्षत्राणि प्रशस्यन्ते भूमिपालाभिषेचने" । इति । 'सांवत्सरो ज्योतिषिक' **इत्यमरः** (२।८।१४) । ध्रुवाणि उत्तरात्रयं रोहिणी च । वैष्णवं श्रवणं शाक्रं ज्येष्ठा । तत्रैव

"वृषोऽथ कीटसिंहौ च कुम्भे लग्ने प्रशस्यते । तारा द्वितीया षष्ठी च चतुर्थी चाष्टमी तथा ॥

"नवमी च तथा शस्ता अनुकूलश्च चन्द्रमाः । सौम्याः केन्द्रगता लग्नाच्छुभाश्चैव त्रिकोणगाः ॥

"पापाश्च पञ्चमस्थाने शस्तो लग्ने दिवाकरः" ।

"लग्ने नवांशे स्थितिरस्य वर्गे वर्गस्तथा तस्य महानुभावः ।

सूर्यस्य वर्गः सकलः प्रशस्तो राज्ञेऽभिषेके स नृपो ग्रहाणाम्" ॥

स सूर्यः । तत्रैव

"नाभिषेच्यो नृपश्चैत्रे नाधिमासे च भार्गव" । अधिमासग्रहणं गुरुशुक्रास्तथा बाल्यवार्द्धकोपलक्षणार्थं तन्निषेधस्य प्रसिद्धत्वात् ।

"न प्रसुप्ते तथा विष्णौ विशेषात् प्रावृषि द्विज ! न च भौमदिने राम चतुर्थ्यां च तथैव च ॥

"नवम्यां नाभिषेक्तव्यश्चतुर्दश्यां च भार्गव । नागं चतुष्पाद् विष्टिं च किंस्तुघ्नं शकुनिं तथा ॥

"करणानि न शस्यन्ते व्यतीपातदिनं तथा । नक्षत्रमुक्त्वाभिहतमुत्पाताभिहतं तु यत् ॥

"सोमसूर्यकुजाक्रान्तपरिदृष्टं च भार्गव" ।

तथा "कुजहारास्तथा नेष्टाः सर्वत्र कुलिकोऽस्य च" । इति ।

**वृत्तशते ।**

"जन्मेशलग्नेशदृशेशसूर्ये भौमे बलिष्ठे क्षितिपाभिषेके ।

"ज्येष्ठाश्रयः क्षिप्रमृदुध्रुवेषु सौम्यग्रहस्याह्नि तपात्वरिक्ते ।

"लग्ने स्थिरे चोपचयस्थितै च शीर्षोदये च क्षितिपाभिषेकः ।

"शस्तास्त्रिपञ्चाष्टगतैश्च पापैः सौम्यैः षडन्त्याय विवर्जितैश्च" ।

इति शीर्षोदयो मिथुनसिंहकुम्भतुलावृश्चिककन्यान्यतमलग्नमित्यादि । अग्रेऽन्यतो बोध्यम् ।

**अथातो राजाभिषेकं व्याख्यास्यामः** । पूर्वपक्षस्य पञ्चम्यां त्रयोदश्यां तिष्ये श्रोणायां वा यानि वाऽन्यानि शुभनक्षत्राणि तेषु पूर्वेद्युरेव युग्मान्ब्राह्मणान्भोजयेदाशिषो वाचयित्वा योनिगोत्रश्रुतवृत्तसंपन्नं ब्राह्मणं पुरोहितं वृणीत"आकूत्यै त्वा कामाय त्वा समृधे त्वेति पुरोहितो जपत्याकूतिमस्यावसे काममस्य समृद्ध्या । इन्द्रस्य युञ्जते धिय" इति स्वयं जपत्याकूतिं देवीं मनसः । निविष्टमित्यथास्तमित आदित्ये पद्माकृतिं मण्डपं कृत्वोपकल्पयते व्रीहियवैस्तिलमाषैः पंचगव्यैः सामुद्राश्चापो नाद्याश्चौदुम्बरं भद्रासनं व्याघ्रचर्म हेमकलशं गोशृङ्गं च संभृत्य सह सादयति यत्सह सर्वाणि मानुषाणीत्येतस्माद्ब्राह्मणादुत्तरपूर्वदेशे पाकयज्ञविधानेन व्रीहिभिर्यवैस्तिलमाषैर्व्याहृतीभिर्महाव्याहृतीभिः सावित्र्या च त्र्यम्बकेनाष्टसहस्रं जुहुयादथ दक्षिणार्द्धपूर्वार्द्धेः श्रीसूक्तविधानेन श्रीदेवीमाराध्य मुकुटं प्रक्षालयति गायत्र्यापाद्यगोमूत्रं गन्धद्वारेति गोमयम् । 'आप्यायस्वेति' च क्षीरं । 'दधिक्राव्णेति' दधि । 'शुक्रमसी'त्याज्यं 'देवस्य त्वेति' कुशोदकमिति मुकुटं प्रक्षाल्य प्रतिसरं बध्नाति 'प्र तत्ते अद्य शिपिविष्ट नामेति' राजानं राजवाहनं चाग्रमहिषीं चैतां रात्रिमुपविशेद्दर्भे संविशेद्वाऽथोदिते आदित्ये भद्रासनं निधाय तस्मिन्व्याघ्रचर्मास्तीर्य तस्मिन्प्राङ्मुख उपवेश्य हेमकलशानादाय । "आपोहिष्टामयो भुव" इति गृह्णापवते हेडमुदुत्तमम् । इति द्वाभ्याम् । "आपो भद्रा" 'आदित्पश्यामीति' चाभिषिञ्चत्यब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिरन्यैश्च पवित्रैरथ शङ्खगोशृङ्गैश्चाभिषिञ्चति अपां यो द्रवणे रसस्तमहमस्मा आमुष्याय तेजसे श्रियै यशसे ब्रह्मवर्चसा यान्नाद्यायाभिषिञ्चामीति" समुन्मृष्टे समुत्क्रोशन्तीति समानमामुखस्य विमार्जनादि तस्मिन्काले राजा वाहनं महिषीं च स्नापयित्वा ब्राह्मणेभ्यो ग्रामनिष्कसहस्रं दासीशतं ददाति स्वस्त्ययनं वाचयित्वा मुकुटं वा किरीटं वा पटं वाऽपाकरोति "अग्ने यशस्विन्नि"त्यथ दुन्दुभिशब्दं करोति शताभिषेके दुन्दुभीन्समाघ्नन्तीति ब्राह्मणं प्रदक्षिणीकृत्य स्वराष्ट्रमनुपालयतीत्याह भगवान्**बौधायनः** ।

## याज्ञवल्कीये ३०९।३१०।३११ श्लोकाः

आदिना वृत्तादि प्रसिद्धस्यानुपयोगादाह । **विनयेति** । **अवीति** । गृहस्थाविरुद्धेत्यर्थः । तमेवाह । **समिति** । प्रसिद्धस्यात्र विरुद्धत्वादाह । **संपदिति** । तेषामपि दानासंभवादाह । **तत्सेति** । अत्रोत्तरार्धोक्ते हेतुरित्याह । **यस्मादिति** । **अक्षाः** पाशाः । **मदः** पानम् । **तौर्यत्रिकं** वाद्यगीतनृत्यं । **वृथा त्यागः** वृथादानं । **तत्र च** अष्टादशानां मध्ये च । राज्याङ्गेषु वक्ष्यमाणेषु प्रवेशेत्यस्य परेत्यादिः । अमरस्य प्रमादं ध्वनयन्नाह । **आमेति** । **अर्थेति** । धनलाभं रक्षणायेत्यर्थः । विनीतेऽप्यर्थान्तर्याव इत्याह । **तदिति** । **तत्तदिति** । अर्थः । अस्य सर्वत्रान्वय इति भावः । क्वचित्तथापाठ एव. मनौ गृह्णीयादिति शेषः । नरेत्यस्य व्याख्याऽ**भिषिक्तांता** । तदुद्दिश्य महोत्सावत्यादिकमत्र विधेयमतः साकाङ्क्षत्वादाह । **स्यादितीति** ॥ ३०९ ॥ ३१० ॥ ३११ ॥

## याज्ञवल्कीये ३१२ श्लोकः

तदेव स्पष्टयन्नाह। **एवमिति** । तत एवाह । **महोत्साहत्यादीति** । स इत्यस्यार्थः **राजेति** । प्रकृतोपयुक्तमाह । **धर्मेति** । एतच्चतुर्विधोपधाशुद्धानीत्यर्थः । विशेषमाह । **ते चेति** । मन्त्रिण इत्यर्थः । लब्धलक्षान्ग्रामादिसंबन्धिलाभदर्शिनः । उत्तरार्धार्थमाह । **एवमिति** । सुपरीक्षायै आह । **व्यस्तैरित्यादि** । अर्थार्थः । **अनन्तरमिति** । योग्यतयाऽऽह । **सकलेति** । अनेन पुरोहितोऽपि कार्य इति सूचितम् ॥ ३१२ ॥

## याज्ञवल्कीये ३१३ श्लोकः

तत्राह। **कीदृशमिति** । इत्याहेति प्राग्वत् । यथाश्रुते क्रमासंगतिः स्पष्टैव । अस्य योगरूढत्वमाह । **सर्वेष्विति** । तस्य सिद्धत्वेन करणासंभवादाह । **दानेति** । **अथर्वेति** । प्रोक्तेन आर्षो वृद्ध्यभावः ॥३१३ ॥

## याज्ञवल्कीये ३१४ श्लोकः

तस्य तन्मात्रकर्तृकत्वादाह । **राजसूयेति** । तत्र तस्यैवेति वर्तिरित्याह । **यथेति** । एवो व्युत्क्रमे इत्याह । **एवेति** ॥ ३१४ ॥

## याज्ञवल्कीये ३१५ श्लोकः

अन्यदपि कार्यमित्याह। **किंचेति** । **एवमग्रेऽपि** । भोगशब्दो विषयपर इत्याह। **सुखेति**॥३१५॥

## याज्ञवल्कीये ३१६ श्लोकः

यथाश्रुते तथा श्रेष्ठत्वालाभादाह । **अग्नीति** । लक्षणेति भावः । पूर्वार्धे तु गर्भविशेषणपरमित्याह । **यत इति** ॥ ३१६ ॥

## याज्ञवल्कीये ३१७ श्लोकः

**परिपाटी** क्रमः । **इत्याहेति** । प्राग्वत् । एवमग्रेऽपि । यत्नेनेत्यर्थः । स्वयमिति । नीयेत्यस्यार्थो **वणिगिति** वाणिज्यादिनेत्यर्थः । **धर्मेति** एतत्संबन्धिप्रागुक्तपात्रेष्वित्यर्थः ॥ ३१७ ॥

## याज्ञवल्कीये ३१८ श्लोकः

कन्यादानतुल्यतानिरासाय **कृत्वेति** । तदा काङ्क्षत्वादाह । **स्वत्वेति** । निबन्धं वेत्यत्र दत्वेत्याद्यनुषङ्गः । तत्स्वरूपं द्वेधाऽऽह । **एकस्येति** ॥ ३१८ ॥

## याज्ञवल्कीये ३१९।३२० श्लोकौ

भूमेः पृथक्सत्वादाह । **निबन्ध इति** । **आघाटो** मर्यादा। द्वितीयं तदर्थमाह । **निवर्तनेति** । त्रिंशद्दण्डेत्यर्थः । आद्येनैव सिद्धे द्वितीयफलमाह । **आघाटेति** । तदर्थमाह । **नदीति** । **शिष्यन्ते**

बोध्यन्ते । तत्फलमाह । **दानादिति** । प्रयोज्य । कर्तारमाह । **सन्धीति** । एतद्व्यवच्छेद्यमाह । **न येति** । **तस्य** तस्य राज्ञः परंपरासमादेशनिरासाय । **स्वयमिति** । अस्य फलं स्वसत्वे आह । **दानेति** ॥३१९ ॥ ३२० ॥

## याज्ञवल्कीये ३२१ श्लोकः

अथ नीतिमाह । **इदानीमिति** । तद्धर्मकथनानन्तरमित्यर्थः । **अत्रेति** पूर्वानुरोधेनेति भावः । **समेति** न्यूनाधिकभिन्नेत्यर्थः । **देशमिति** उपान्विति कर्मत्वम् विशेषमाह । **दुर्गं चेति** । धन्वमरुभूमिः । **मही** अतिनिम्नोन्नता भूः । **वार्क्षं** वनदुर्गं ॥ ३२१ ॥

## याज्ञवल्कीये ३२२।२२३ श्लोकौ

**चतुरिति** । धर्मार्थकामभयरूपेत्यर्थः । आत्तस्यैव व्ययसंभवेन तद्देयर्थं सूचयन्नाह । **व्ययेति** ॥ ३२२ ॥ ३२३ ॥

## याज्ञवल्कीये ३२४ श्लोकः

**विपत्तिर्मरणं** । भूमेरुपलक्षणत्वादाह । **भूम्यादीति** । यथाश्रुतासंगतेर्हेतुगर्भतया वाक्यभेदेनाह । **यदीति** ॥ ३२४ ॥

## याज्ञवल्कीये ३२५ श्लोकः

**पदानीति** । पदे पदे अश्वमेधफलमिति भावः ॥ ३२५ ॥

## याज्ञवल्कीये ३२६।३२७ श्लोकौ

'हेति' रुपलक्षणमित्याह । **निरेति** । स्थलवृत्तयोरारूढो 'गोरहं ब्राह्मणोऽहमिति' वादी च. । सूतमित्यस्यार्थः **स्मारेति** । **मातरिति** उभयान्वयि ॥ ३२६ ॥ ३२७ ॥

## याज्ञवल्कीये ३२८ श्लोकः

उपलक्षणत्वादाह । **दिकामिति**। व्यापृतैरिति पाठः । चारदूतयोर्भेदमाह। **ये परेति** ।पूर्वान्वयी। तदन्ते च दूतान्कथं पश्येदित्यत आह । **तानिति** । दूतानित्यर्थः ॥ ३२८ ॥

## याज्ञवल्कीये ३२९ श्लोकः

तत इत्यस्यार्थः । **तदिति** । मध्याह्नस्योक्तत्वादाह । **अपेति** । तत्रैव पक्षान्तरमाह । **मन्त्रिभिरिति** । शेषमाह । **स्त्रीभिश्चेति** । अत्र मानमाह । **भुक्तेति** । रक्षणादित्यस्य विशेषणमाह । **देशेति** ॥ ३२९ ॥

## याज्ञवल्कीये ३३० श्लोकः

**प्रणिधीनां** चाराणां चेष्टितेऽर्शे आद्यच् । यदादिचेष्टितयुक्तं वचनम् । **कक्षान्तरं** स्थलान्तरम् । यथाश्रुतार्थत्यागे बीजमाह । **गत्वेति** । अन्तरशब्दो विशेषवाची ॥ ३३० ॥

## याज्ञवल्कीये ३३१।३३२।३३३ श्लोकाः

उपलक्षणत्वादाह । **शङ्खादीति** । एवमग्रेऽपि । विशेषणमाह । **एतच्चेति** । **वृत्तं** कर्तव्यम् । सादेत्यस्य व्याख्या **दानेति** । शेषमाह । **तत इति** । **मौलं** स्नानाद्यत्यन्तावश्यककृत्यानन्तरमित्यर्थः । शेषमाह । **प्रातरिति** । प्रत्यासत्तिक्रमेणाह । **पुरोहीति** । ज्ञानफलमाह । **शान्तीति** ॥ ३३१ ॥ ॥ ३३२ ॥ ३३३ ॥

## याज्ञवल्कीये ३३४ श्लोकः

पिता स्यादित्यन्यथाऽप्याह । **किं चेति** । अत एव संपूर्ण पद्यम् ॥ ३३४ ॥

## याज्ञवल्कीये ३३५।३३६।३३७।३३८ श्लोकाः

तत्र हेतुपरं यस्मादित्यस्यावृत्तिरत एव नायं विधिरित्याह । **यस्मादित्यत्यादि** ॥ ३३५ ॥ ॥ ३३६ ॥ ३३७ ॥ ३३८ ॥

## याज्ञवल्कीये ३३९ श्लोकः

**उत्कोच** उपदा । लिङ्गर्थाविवक्षेत्याह । **यतीति** ॥ ३३९ ॥

## याज्ञवल्कीये ३४०।३४१ श्लोकौ

एवेति सामान्योक्तेराह । **धर्मेति** । उक्तरीत्येति भावः ॥ ३४० ॥ ३४१ ॥

## याज्ञवल्कीये ३४२।३४३।३४४ श्लोकौ

अत्र विशेषमाह । **किंचेति** । **वशम्** । अधीनताम् । विशेषमाह । **यदीति** । **यवसं**तृणम् ॥ ३४२ ॥ ३४३ ॥ ३४४ ॥

## याज्ञवल्कीये ३४५ श्लोकः

अन्यदप्याह । **किं चेति** । **ते चेति** । प्रत्येकमितिभावः । प्रकृतिरित्यन्तं पूर्वान्वयि । आद्यभिन्नानां भेदमाह । **निर्मूलेति** । **इति** इत्यनेन । तदेवाह । **अनन्तर इति** । **तत्परः** तत्पुरुषः । शेषाः सामन्तादयः । वाक्यभेदमाह । **एतदिति** । **आदीति** । यतनीयमित्यर्थः । तत्स्वरूपमाह । **एवमिति** । **पार्श्वतः** । दक्षिणोत्तरतः । न्यूनतां निराचष्टे । **पार्ष्णीति** । आक्रन्दादय इति पाठः । **सीनेषु** चतुर्दिक्स्थेषु चतुर्षु । **तन्त्रे** औशनसे. । **महाभारते**ऽपि "पार्ष्णिग्राहस्तथा क्रन्दः पार्ष्ण्यासारश्च पृष्ठतः । आक्रन्दासार इति च ज्ञेयं मण्डलचिन्तकैः" । इति ॥ ३४५ ॥

## याज्ञवल्कीये ३४६।३४७ श्लोकौ

एवं वाक्यार्थमुक्त्वा द्वितीयमाह । **एतच्चेति** । आदिना शक्त्यादिविशेषमाह । **एतच्चेति** प्रकरणात्तथामाप्तं निराचष्टे । **एते इति** ॥ ३४६ ॥ ३४७ ॥

## याज्ञवल्कीये ३४८ श्लोकः

गुणपदादाधिक्यं परिहरति । **गुणैश्चेति । अपिना** तत्समुच्चयः ॥ ३४८ ॥

## याज्ञवल्कीये ३४९ श्लोकः

**चिकीत्यस्यान्यथेत्यादिः । तत्र** तयोर्मध्ये । **एवेन** दैवनिरासः ॥ ३४९ ॥

## याज्ञवल्कीये ३५०।३५१ श्लोकौ

**आदिना** कालोऽपि स्पष्टोऽर्थ इत्याह । **नात्रेति** ॥ ३५० ॥ ३५१ ॥

## याज्ञवल्कीये ३५२ श्लोकः

**हिरण्येति** मध्यमपदलोपिसमासः ॥ ३५२ ॥

## याज्ञवल्कीये ३५३ श्लोकः

दण्डशब्दस्यानेकार्थत्वादाह । **हस्तीति** ॥ ३५३ ॥

## याज्ञवल्कीये ३५४ श्लोकः

तदित्यत्यार्थ **एवं विधमिति । दण्डं** प्रागुक्तं । ननु धर्मस्य कथं दण्डत्वमत आह । **अस्य चेति ।** धर्मस्येत्यर्थः । **तेन** दण्डेन ॥ ३५४ ॥

## याज्ञवल्कीये ३५५ श्लोकः

**अरिषड्वर्गः ।** कामादिर्मत्सरान्तः । नयापनयौ ॥ ३५५ ॥

## याज्ञवल्कीये ३५६ श्लोकः

शिक्षाशिक्षे **प्रयुक्त इति ।** पीतागाव इति वत् इत्याह । **प्रयुज्येति** ॥ ३५६ ॥

## याज्ञवल्कीये ३५७ श्लोकः

लिङ्गर्थो न विवक्षित इत्याह । **विनेति** ॥ ३५७ ॥

## याज्ञवल्कीये ३५८ श्लोकः

**वासमुच्चये । अपि वेति** च प्रथमादिसूचितमाह । **एते भ्रात्रिति ।** अनेन राज्यस्येदानीं विभागो नास्तीति स्पष्टमुक्तम् । **वसिष्ठोऽपि** ( अ. १९ सू. २९–३६ )। "राजानि च दद्यात्मेते प्रासंगिकमनेन मातापितृवृत्तिर्व्याख्याता। राजमहिषीः पितृव्यमातुलान्राजा बिभृयात्तद्वधूश्चान्याश्च। राजपत्न्यो ग्रासाच्छादनं लभेरन्ननिच्छन्त्यो वा व्रजेयुः । क्लीबोन्मत्तान्राजा बिभृयात्तद्गामित्वाद्रिक्थस्येति" प्रासंगिकं श्राद्धप्रसंगेन ब्राह्मणपूजनं व्यवहारे व्यक्तिर्भविष्यतीदं विशेषमाह । **एतच्चेति । ह्रियतः** ॥ ३५८ ॥

## याज्ञवल्कीये ३५९ श्लोकः

प्राग्वदाह । **दण्डेति** । एवमग्रेऽपि । समाप्ते वरादक्षिणायेष्विति समाप्ता परिपूर्णा वरेत्यादि च बहुव्रीहिस्तदाह । **भूरिति** ॥ ३५९ ॥

## याज्ञवल्कीये ३६० श्लोकः

**पृथगिति** । पूर्वान्वयि । उपलक्षणत्वादाह । **स्वर्गेति** ॥ ३६० ॥

## याज्ञवल्कीये ३६१ श्लोकः

**हेलेति** । इदं द्वितीये स्पष्टम् । विनीयेत्यस्यार्थो **दण्डेति** । **दशधेति** । इदमपि द्वितीये व्यक्तम् ॥ ३६१ ॥

## याज्ञवल्कीये ३६२ श्लोकः

**तत्र** तयोर्मध्ये । अन्येषामनुक्तेराह । **कृष्णलेति** । **जालं** गवाक्षः । स्पृतार्थः । **उक्तमिति** । उन्मानस्य नियतत्वेन न्यूनत्वाद्यसंभवादाह । **मध्येति** । विपक्षे बाधकमाह । **सर्षपेति** । लिक्षायां संभवादाह । **त्रसेति** । प्रागुक्तमाह । **तत्रेति** । भेदे क्रयविक्रयादिरूपे तद्भेदमाह । **तत्रेति** । **व्यवेति** । लौकिकाष्टरक्तिकात्मकमाषद्वयस्य लोके निष्कत्वेन व्यवहारः ॥ ३६२ ॥ ३६३ ॥

## याज्ञवल्कीये ३६३ श्लोकः

सूक्ष्मतरत्वाशयेनाह । **एवमिति** । तुश्चार्थे इत्याह । **इति चेति** । रजतमानप्रकरणे सुवर्णपदोक्त्या निष्कांशे हेममानोक्तपंचकृष्णलात्मक एव माषो नायमित्याह । **पूर्वोक्ता इति** । तथा चैतैर्माषैर्मितसुवर्णचतुष्टयोन्मितं रजतं निष्क इत्यर्थः ॥ ३६४ ॥

## याज्ञवल्कीये ३६५ श्लोकः

व्यवस्थामाह । **अस्मिंश्चेति** । चतुःसुवर्णपलपक्षे इत्यर्थः । अभ्यर्हितत्वादाह । **सुवर्णेति** । न्यूनतां साभिप्रायां निराचष्टे । **एवमिति** । **रीतिका** पित्तलम् ।

**ब्रह्मपुराणे ।**

"धर्मशास्त्रेषु मानार्थे याः संज्ञा मुनिभिः स्मृताः । ताः सर्वा व्यवहारार्थे बोद्धव्याः संप्रदायतः ॥

**मनुः ।** ( अ. ८ श्लो. १३१–१३८ )

"लोकसंव्यवहारार्थं याः संज्ञाः प्रथिता भुवि । ताम्ररूप्यसुवर्णानां ताः प्रवक्ष्याम्यशेषतः ।
"जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः । परमेतत्प्रमाणानां त्रसरेणुः प्रचक्षते ॥
"त्रसरेणुत्रिकं ज्ञेया लिक्षैका परिमाणतः । ता राजसर्षपस्तिस्रस्ते त्रयो गौरसर्षपः ॥
"सर्षपाः षट् यवो मध्यास्त्रियवश्चैव कृष्णलः । पञ्च कृष्णलकोमाषस्ते सुवर्णस्तु षोडश ॥
"पलं सुवर्णाश्चत्वारः पलानि धरणं दश । द्वे कृष्णले समधृते विज्ञेयो रूप्यमाषकः ॥

"ते षोडश स्याद्धरणं पुराणश्चैव राजतः । कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः ॥

"धरणानि दश ज्ञेयं शतमानस्तु राजतः । चतुःसौवर्णिको निष्को विज्ञेयस्तु प्रमाणतः" ॥

समधृते मध्यमयवप्रमाणधृते चतुरिति। तथा च सौवर्णं निष्कं दद्यादित्यादौ हेममानोन्मितहेमद्रव्यमेव न रजतद्रव्यम् । **विष्णुः** "जालस्थानमरीचिगतं रजस्त्रसरेणुसंज्ञं तदष्टकं लिक्षास्तु तदष्टराजसर्षपस्तत्त्रयं गौरसर्षपः ते षड्यवस्तत्त्रयं कृष्णलं तत्पञ्चकं माषस्तद्द्वादशकं स चतुर्माषकं सुवर्णस्तच्चतुःसौवर्णिको निष्कः । द्वे कृष्णले रूप्यमाषस्ते षोडश धरणम् । ताम्रिकः कार्षिकः पणः" । **कात्यायनः ।**

"माषो विंशतिभागश्च ज्ञेयः कार्षापणस्य तु । काकिणी तु चतुर्भागो माषकस्य पणस्य च ॥

"पञ्चनद्याः प्रदेशे तु संज्ञेयं व्यावहारिकी । कार्षापणप्रमाणं तु तन्निबद्धमिहैव या ॥

"कार्षापणस्यैका ज्ञेया ताश्चतस्रस्तु धानकः । ते द्वादशसुवर्णस्तु दीनारस्तु त्रिकः स्मृतः" ॥

**नारदः ।**

"कार्षापणो दक्षिणस्यां दिशि रौप्यः प्रवर्तते । पणैर्निबद्धः पूर्वस्यां षोडशैव पणाः स तु" ॥

**अगस्तिप्रोक्तेऽपि ।**

"यवः स्यात्सर्षपैः षड्भिर्गुञ्जा च स्यात्त्रिभिर्यवैः । गुञ्जाभिः पञ्चभिश्चैको माषकः परिकीर्तितः ॥

"भवेत्षोडशभिर्माषैः सुवर्णस्तैः पुनः स्मृतः । चतुर्भिः पलमेतस्य दशशो धरणं विदुः ॥

"अष्टाभिर्भवति व्यस्तैस्तण्डुलो गौरसर्षपैः । स वैणवायवः प्रोक्तो गोधूमं चापरे जगुः" ॥

एतस्य पलस्य । **विष्णुगुप्तः ।**

"पञ्चगुञ्जो भवेन्माषः पणस्तैश्च चतुर्गुणैः । कलञ्जो धरणं प्राहुर्मितिमानविशारदाः" ॥

मञ्जाटिकाकलञ्जविशेषास्तौल्यं गुञ्जाद्वयं विदुः ।

"मञ्जाटिकाविंशतिस्तु धरणं तद्विदां मतम् । स्थूलमध्यानि सूक्ष्माणां सुसूक्ष्माणामपि स्मृतम् ॥

"माषकैः पद्मरागः स्यादिन्द्रनीलादिषु स्मृतम् । ऊहतस्तु प्रयोक्तव्यो न यस्मिन्मानमीरितम् ॥

"दीनारो रौप्यकैरष्टाविंशत्या परिकीर्तितः । सुवर्णस्य सप्ततितमो भागो रौप्यक इष्यते" ॥

प्रकारान्तरेणाप्याह । सुक्षेत्रे यथा तन्मध्यपाककाले निष्पन्ना धान्यमाषा दशसुवर्णमाषः । पञ्च वा गुञ्जाः सुवर्णमाषस्ते षोडशसुवर्णः । एवं प्रमाणसिद्धस्य द्वितीया संज्ञा कर्ष इति । चतुःकर्षं पलम् । पलानां शतेन तुलाविंशतितौलिको भारः । अस्यैवाग्रभारस्य उदतौलिक इति द्वितीया संज्ञा । **ब्रह्मप्रोक्ते ।**

"पलानां विंशतिर्विंशो पञ्चविंश्यस्तुला मता। उदतौलिकः स एव स्याद्भारो विंशतितौलिकः" ॥

**विष्णुगुप्ते ।**

रौप्यस्य च सुवर्णाद्भिन्नं मानमभिधीयते। अष्टादशीति गौरसर्षपो रौप्यमाषकः । ते षोडश धरणं

निष्पावविंशतिर्वा रौप्यपञ्चदशधराणिकम् । "तत्पलानां शतं तुलाविंशतिर्भारः" इति विंशत्या व्रीहितण्डुलैस्तुलाया विधृतिर्वज्राख्यस्य रत्नस्य धरणं भवति। अष्टाभिर्गौरसर्षपैस्तण्डुलं कल्पयेदिति केचित्। तथा **निघण्टौ** ।

"सुवर्णबिस्तौ हेम्नोऽक्षे कुरुविन्दस्तु तत्पले । तुलास्त्रियां पलशतं भारः स्याद्विंशतिस्तुलाः ॥
"आचितो दशभाराः स्युः शाकटो भार आचितः । मानं तुलाङ्गुलिप्रस्थैर्गुञ्जापञ्चाद्यमाषकः ॥
"ते षोडशाक्षःकर्षोऽस्त्री पलं कर्षचतुष्टयम् । सुवर्णबिस्तौ हेम्नोऽक्षे कार्षिकस्ताम्रिकः पणः" ॥

**आदित्यपुराणे** ।

"एकं दश शतं चैव सहस्रं चेति सत्तमाः । दशोत्तरं दशगुणं सहस्राणि दशायुतम् ॥
"दशाहतं सहस्रं तु प्रोच्यते नियुतं बुधैः । तथा शतसहस्राणि निखर्वमिति संज्ञितम् ॥
"शतकोटिसहस्राणां शङ्कुरित्यभिधीयते । सहस्रं कोटयश्चापि पद्ममात्रं तु तद्विदुः ॥
"सहस्रं तु सहस्राणां कोटीनां दशधा पुनः । गणितं तु समुद्रं वै प्राहुः संज्ञाविदो जनाः" ॥

## अथ धान्यपरिमाणम् । मार्कण्डेयपुराणे ।

"जज्ञिरे तानि बीजानि ग्राम्यारण्याभिधानि च। ओषधाः फलपाकान्ताः शणसप्तदश स्मृताः ॥
"व्रीहयश्च यवाश्चैव गोधूमाः कङ्गुकास्तिलाः । प्रियङ्गवः कोविदाराः कोरदूषाः सचीनकाः ॥
"माषा मुद्गा मसूराश्च निष्पावाः सकुलत्थकाः । आढक्यश्चणकाश्चैव शणसप्तदश स्मृताः ॥
"इत्येता ओषधीनां तु ग्राम्याणां जातयः स्मृताः।ओषध्यो यज्ञियाश्चैव ग्राम्यारण्याश्चतुर्दश॥
"व्रीहयश्च यवाश्चैव गोधूमाः कङ्गुसर्षपाः । माषा मुद्गाः सप्तमाश्च अष्टकाश्च कुलत्थकाः ॥
"श्यामाकाश्चैव नीवारा राजिकाः सगवन्धुकाः । कोविदारसमायुक्तास्तथा वेणुयवाश्च ये॥
"ग्राम्यारण्याः स्मृता ह्येता ओषधश्च चतुर्दश" ॥

**स्कन्दपुराणे** ।

"यवगोधूमधान्यानि तिलकङ्गुकुलत्थकाः । माषमुद्गमसूराश्च निष्पावाः श्यामसर्षपाः ॥
"गवेधुकाश्च नीवारा आढक्योऽथ सतीनकाः । चणकाश्चीनकाश्चैव धान्यान्यष्टादशैव तु" ॥

धान्यानि व्रीहयः । गवेधुका नीवाराः। आरण्या व्रीहयः । सतीनकाः वर्तुलकलाया । चीनकाः षष्टिकविशेषाः ।

**षड्विंशन्मतात्** ।

"यवगोधूमधान्यानि तिलाः कङ्गुस्तथैव च । श्यामकं चीनकं चैव सप्तधान्यमुदाहृतम्" ॥

**भविष्यत्पुराणे** ।

"पलद्वयं तु प्रसृतं द्विगुणं कुडवं मतः । चतुर्भिः कुडवैः प्रस्थः प्रस्थाश्चत्वार आढकः ॥

"आढकैस्तैश्चतुर्भिश्च द्रोणस्तु कथितो बुधैः । कुम्भो द्रोणद्वयं शूर्पः खारीद्रोणस्तुषोडश" ॥

**विष्णुधर्मोत्तरे ।**

"पलं च कुण्डवप्रस्थ आढको द्रोण एव च । धान्यमानेषु बोद्धव्याः क्रमशोऽमी चतुर्गुणाः ॥

"द्रोणैः षोडशभिः खारी विंशत्या कुम्भ उच्यते । कुम्भैस्तु दशभिर्वाहो धान्यसंख्या प्रकीर्तिता" ॥

द्रोणद्वयं कुम्भ इत्येकः पक्षः । कुम्भस्यैव शूर्प इति संज्ञान्तरं विंशत्या द्रोणैः कुम्भ इत्यपरः । पक्षः पलसहस्रं परिमाणः कुम्भ इति **दानविवेके** द्वादशपलाधिकपञ्चशतपलपरिमाणः कुम्भ इत्यपरे एते च पक्षा देशकालशक्त्याद्यपेक्षया बोध्याः । **वाराहपुराणे ।**

"पलद्वयं तु प्रसृतिर्मुष्टिरेकपलं स्मृतम् । अष्टमुष्टिर्भवेत्किंचित् किंचिदष्टौ तु पुष्कलम् ॥

"पुष्कलानि च चत्वारि आढकः परिकीर्तितः ; चतुराढको भवेद्द्रोण इत्येतन्मानलक्षणम् ॥

"चतुर्विंशकाभिस्तु प्रस्थ एकः प्रकीर्तितः" । मुष्टिर्यजमानस्येति केचित् । "मुष्टिमेकं पलं स्मृतमिति" प्रोक्तम् । क्रमेति केति कुडवपक्षेः

"चतुर्भिः कुडवैः प्रस्थः प्रस्थैश्चतुर्भिराढकः । चतुराढको भवेद्द्रोण इत्येतन्मानलक्षणम्" ॥

अथ **गोपथब्राह्मणे ।**

"पञ्चकृष्णलको माषस्तैश्चतुःषष्टिभिः पलम् । पलैर्द्वात्रिंशद्भिः प्रस्थो मागधेषु प्रकीर्तितः ॥

"आढकैस्तैश्चतुर्भिश्च द्रोणः स्याच्चतुराढकः" । **द्रवद्रव्यविषये स्कन्दपुराणे ।**

"पलद्वयेन प्रसृतं द्विगुणं कुडवं मतम् । चतुर्भिः कुडवैः प्रस्थ आढकस्तैश्चतुर्गुणः ॥

"चतुर्गुणो भवेद्द्रोण इत्येतत् द्रव्यमानकम्" ॥

**अथ भूमानम् । आदित्यपुराणे ।**

"जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः । प्रथमं तत्प्रमाणानां त्रसरेणुः प्रचक्षते ॥

"त्रसरेणुस्तु विज्ञेयोऽष्टौ ते परमाणवः । त्रिसरेणवस्तु ते ह्यष्टौ रथरेणुस्तु स स्मृतः ॥

"रथरेणुस्तु ते स्वष्टौ बालाग्रं तत्स्मृतं बुधैः । बालाग्रा त्वष्टलिक्षा तु यूकालिक्षाऽष्टकं बुधैः ॥

"अष्टौ यूका यवं प्राहुरङ्गुलं तु यवाष्टकम् । द्वादशाङ्गुलमात्रो वै वितस्तिस्तु प्रकीर्तितः ॥

"अंगुष्ठस्य प्रदेशिन्या व्याख्या प्रादेश उच्यते । तालः स्मृतो मध्यमया गोकर्णश्चाप्यनामया ॥

"कनिष्ठया वितस्तिस्तु द्वादशाङ्गुलिकः स्मृतः । रत्निस्त्वङ्गुलिपर्वाणि विज्ञेयास्त्वेकविंशतिः ।

"चत्वारि विंशतिश्चैव हस्तस्यादङ्गुलानि तु । कक्कुः स्मृतो द्विरत्निस्तु द्विचत्वारिंशदङ्गुलः ॥

"षण्णवत्यङ्गुलश्चैव धनुर्दण्डः प्रकीर्तितः । धनुर्दण्डयुगं नाली ज्ञेया त्वेते यवाङ्गुलैः ।

"धनुषां त्रिदशनल्वमाहुः संख्याविदो जनाः । धनुःसहस्रे द्वे वाऽपि गव्यूतिरुपदिश्यते ।

"अष्टौ धनुःसहस्राणि योजनं तु प्रकीर्तितम्" ॥

**मार्कण्डेयपुराणे ।**

"परमाणुः परं सूक्ष्म त्रसरेणुर्महीरजः । बालाग्रं चैव लिक्षा च यूका चाथ यवोऽङ्गुलम् ॥

"क्रमादष्टगुणान्याहुर्यवानष्ट ततोऽङ्गुलम् । षडङ्गुलं पदं प्राहुर्वितस्तिर्द्विगुणं स्मृतम् ॥

"द्वे वितस्ती ततो हस्तोब्रह्मतीर्थं विवेष्टितैः । चतुर्हस्तो धनुर्दण्डो नालिका तद्युगेन च ॥

"क्रोशो धनुःसहस्रे द्वे गव्यूतिश्च चतुर्गुणम् । द्विगुणं योजनं तस्याः प्रोक्तं संख्यानकोविदैः" ॥

**बृहस्पतिः ।**

"दशहस्तेन दण्डेन त्रिंशद्दण्डानि वर्तनम् । दश तान्येव गोचर्म ब्राह्मणेभ्यो ददाति यः" ॥

**वसिष्ठः ।**

"दशहस्तेन वंशेन दशवंशात्समन्ततः । पञ्चचाभ्यधिकान् दद्यादेतद्गोचर्म चोच्यते" ॥

**विष्णुधर्मे ।**

"यदुत्पन्नमथाश्नाति नरः सांवत्सरं द्विजाः । एकं गोचर्ममात्रं तु भुवः प्रोक्तं विचक्षणैः" ॥

**मत्स्यपुराणे ।**

"दण्डेन सप्तहस्तेन त्रिंशद्दंडान्निवर्त्तनम् । त्रिभागहीनं गोचर्म मानमाह प्रजापतिः" ॥

**वृद्धवासष्ठः ।**

"गवां शतं वृषश्चैको यत्र तिष्ठेदयंत्रितः । एतद्गोचर्ममात्रं तु प्राहुर्वेदविदो नराः" ॥

इति हेमाद्रौ दानखण्डे मानप्रकरणम् ॥ ३६५ ॥

## याज्ञवल्कीये ३६६ श्लोकः

**स्वशास्त्रेति** । तथा च द्वितीये फलमस्या बोध्यम् । **मनु**विरोधं परिहरति । **यस्त्विति** ॥ ३६६ ॥

## याज्ञवल्कीये ३६७ श्लोकः

**अवरोधः** । कारागृहपातः । समस्तत्वं यथासंभवमित्याह । **द्वित्रा इति** । अत्र बीजमाह । **अपेति** । विशेषमाह । **उक्तेति** । एतत्सूचक **एवाथ**शब्दो मूले ॥ ३६७ ॥

## याज्ञवल्कीये ३६८ श्लोकः

**निमित्तानि** अपराधातिरिक्तानि । देशादीनि । अत एव दृष्टान्तदार्ष्टान्तिकभावेनाह । **यथा-पराधमिति** । न्यूनतानिरासाय चरमं च संग्राह्यमेवाह । **तथा बुद्धीति** । न्यूनतां निराचष्टे । **यथेत्यादि** । तथा चाधिकृतस्य सर्वस्यायं धर्मो वेदितव्य इति शिवम् ॥ ३६८ ॥

इति श्रीमन्मिताक्षराव्याख्याने महादेवभट्टात्मजोमांगजवैद्यनाथार्द्धांगभूतबालकजननि
पायगुंडे इत्युपाख्यश्रीलक्ष्मीदेवीविरचिते लक्ष्म्यभिधे
आचारप्रकरणम् ॥

ग्रन्थसंख्या १७०८०

# एतत्पुस्तकोद्धृतऋषिमुनिवचनानां सूची ।

ऋषिः — पृष्ठम्

ऋषिः पृष्ठम्

ऋषिः | पृष्ठम्

ऋषिः पृष्ठम्

| ऋषिः | पृष्ठम् |
|---|---|

## एतत्पुस्तकोद्धृतामरश्लोकानां सूची. ( २ )

१ न हि निन्दा निन्द्यं निन्दितुं प्रवर्तते अपि तु विधेयं स्तोतुमिति न्यायः।

THE

# Collections of Hindu Law Texts.

( No. 6. )

# BÂLAMBHAṬṬI

( *Sasnkrit Text.* )

BEING A COMMENTARY BY

Bâlambhaṭṭa Payagunde,

ON

( The Mitâksharâ of S'ri Vijñânes'wara on the Yâjñavalkya-Smṛiti).

## BOOK II

### Vyawahârâdhyâya.

EDITED BY

**J. R. GHARPURE**, B. A. LL. B.,
Vakil, High Court,
BOMBAY.

First Edition.

( *All rights reserved* ).

1914.

Printed at ( 1 ) The Arya Bhusana Press, Poona City.
by N. A. Dravid.
" at ( 2 ) The Bombay Vaibhav Press, Bombay.
by C. S. Devle.
" at ( 3 ) The Nirnaya Sagar Press, Bombay.
by B. R. Ghanekar.
And Published by J. R. Gharpure, at the office of The Collections of Hindu Law Texts, Girgaum, Bombay.

# PREFACE.

The Vyawahâra-Adhyâya of **Bàlambhatti** (text) is the sixth Volume published in this series. It is a free and exhaustive commentary on the *Mitákshara* of *Vijnánes'vara*, which in itself is a commentary on the *Yájnyavalkya-Smriti*, published in this series as Volume No. 1.

The author of this work was Bâlambhatta or Vaidyanâtha Bhaṭṭa Pâyagunde who flourished at Benares at the close of the 18th and the beginning of the 19th century. He was a scholar of great fame in his own days, and is reputed to have written several works in Sanskrit. There is reason to believe that he was personally known to Mr. Colebrooke the well-known oriental scholar of the last century.

The present volume is a free commentary on the Mitâksharâ, quotations from which have been put in the black type. The texts of Yajnavalkya and the Mitâksharâ have not been reprinted in this volume as the same has appeared once in Volume I of this series, and the references to these works in this volume are made according to the paging of that volume.

The present edition is based on the following material.

(1) A manuscript copy of the work in the Deccan college, Poona. denoted here in as क.

(2) A manuscript from Jaipur and kindly secured by Mr. H. N. Apte of the *Anandáshrama* and denoted herein as फ.

(3) A manuscript in the High Court at Bombay and kindly lent by the Hon'ble Justice Sir N. G. Chandavarkar, denoted as ख.

(4 Bibliotheca Indica series being a portion of the edition by Babu Govind Dass of Benares. (only upto the first 32 verses).

(5) The Printed Edition by Babu Govind Dass ( received when the last portion was under preparation ).

The undersigned is obliged to all these gentlemen for their kindness in allowing him the use of the works in their possession.

A detailed account of the author and his works and of the Yajnavalkya School generally will be found in the preface to Vols. I and II of this series and in the "Introduction to the study of Hindu Law Texts" by the undersigned.

BOMBAY,
*14th January 1914.*

J. R. Gharpure,
*Editor.*

धर्मशास्त्रग्रन्थमाला ( ग्रन्थाङ्कः ६ )

॥ श्रीः ॥

श्रीमद्योगीश्वरयाज्ञवल्क्यस्मृतेः

## श्रीविज्ञानेश्वरप्रणीतमिताक्षराव्याख्यायाः

श्रीबालंभट्ट पायगुण्डे इत्येतैः प्रणीता व्याख्या

# बालंभट्टी

( व्यवहाराध्यायः २ )



सा च

जगन्नाथ रघुनाथ घारपुरे बी. ए. एल्. एल्. बी. हायकोर्ट वकील, मुंबई.

इत्यनेन संशोधिता प्रकाशिता च

---

प्रथमावृत्तिः

( अस्य सर्वेऽधिकाराः राजशासनेन स्वायत्तीकृताः )

शकाब्दाः १८३५ खिस्ताब्दाः १९१४.

# आदर्शपुस्तकोल्लेखपत्रिका.

अस्य ग्रन्थस्य संशोधनार्थं यैः परहितैकपरतया यानि पुस्तकानि प्रदत्तानि तेषां नामादीनि पुस्तकानां संज्ञाश्च प्रदर्श्यन्ते ।

क—डेक्कनकालेजसंग्रहात्प्राप्तम् ।

ख—मुंबापुरस्थहायकोर्टसंग्रहीतं न्या. मू. सर नारायण गणेश चंदावरकरैर्दत्तं च ।

फ—श्रीमत् हरी नारायण आपटे इत्येतैः जयपूरात्प्राप्तं अस्मत्सकाशं प्रेषितं च ।

ग—काशीपुरनिवासिबाबूगोविन्ददास इत्येतैः संशोधितं बिब्लिओथिका इंडिकान्तर्गतमुद्रितं च ( ३२ श्लोकपर्यन्तम् )

ड—बाबूगोविन्ददास इत्येतैः संशोधितं चोखंबासंग्रहे मुद्रितं प्रकाशितं च ।
परमुपकृतं नो यैरिमानि पुस्तकानि प्रेषितानि ।

जगन्नाथ रघुनाथ घारपुरे.

# एतत्पुस्तकान्तर्गतविषयाणां सूचीपत्रम् ।

दायविभागप्रकरणम् ८

# अथ बालंभट्टी टीका.

## ( मिताक्षराव्याख्या )

**॥ श्रीगणेशाय नमः ॥**

पूर्वत्रान्ते दुष्टदण्डस्य शिष्टरक्षणस्य च विधानादन्वयव्यतिरेकाभ्यां पालनाधिकारिणाऽहरहर्व्यवहारदर्शनं कर्तव्यमित्युक्तम्। तस्य व्यवहारस्य स्वरूपप्रकारेतिकर्तव्यताऽऽकाङ्क्षायामयमध्याय इत्याह । **अभिषेकादीति**। यद्वा 'व्यवहारान् स्वयमि'त्यादिना साङ्गोपाङ्गो व्यवहारः कर्तव्यतया विहितः पूर्वत्रान्ते। तत्राङ्गाद्याकाङ्क्षायामाह। **अभीति**। हेतुहेतुमद्भावरूपसम्बन्धोऽनयोरध्याययोः सङ्गतिर्बोध्या। उक्तौ हेतुमाह। **व्यवेति**। चस्त्वर्थे[1] वाक्यालङ्कारे वा। **कीदृश** इति स्वरूपप्रश्नः। **कतिविध** इति प्रकारप्रश्नः। **कथं** चेतीतिकर्तव्यताप्रश्नः। **इतिकर्तव्यतेति**। इत्याकाङ्क्षायामवश्यं वक्तुमुचित इत्यादिः । स्वरूपप्रकारेतिकर्तव्यताकलाप इत्यर्थः। अङ्गादिकलाप इत्यर्थो वा।

### याज्ञवल्कीये १ श्लोकः

आद्यश्लोकेन त्रयाणामप्युत्तराणि ध्वनयन् स्वरूपप्रश्नस्याद्यस्य प्रकृत्योत्तरमभिहितमिति प्रतिपादयन् तत्स्वरूपमाह। **अन्येति**। अनेन भावे घञ् तत्र सूचितः। धातूनामनेकार्थत्वात्तदर्थलाभः। अयं च रूढ्यर्थः। योगार्थस्तु नानासंदेहहरणम्, "वि नानार्थेऽव संदेहे हरणं हार उच्यते। नानासंदेहहरणाद्व्यवहार इति स्मृतः" इति **कातीयात्**। स्पष्टत्वाय तमुदाहरति। **यथेति**। द्वितीयोत्तरमाह। **तस्येति**। प्रातिपदिकोदितव्यवहारस्य प्रत्ययेन द्वितीया—बहुवचनेन भेदो दर्श्यत इत्यर्थः। पूर्वमनुवाक्येन प्रतिपादितमर्थं राजेत्येव वाच्ये स्वयमित्येव सिद्ध्याऽधिकनृपपदोक्तिस्वारस्येन[2] प्रतिपादयति। **नृप इति**। यौगिकोऽयं न रूढ इति भावः। अत एव युक्तस्येति सामान्यत एवादावुक्तम्। **इतिना** करणत्वं तत्र तस्योच्यते। **क्षत्रियेति**। अभिषिक्तस्य तस्यैवेत्यर्थः। **अपिनाऽस्यैव** समुच्चयः। 'व्यवहारान् स्वय'मित्यस्य विधित्वेन 'पश्येदिति' पुनर्विधिवैयर्थ्यं परिहरति। **पश्येदितीति**। **धर्मेति**। विद्वद्ब्राह्मणसाहित्यादिरूपधर्मविशेषेत्यर्थः। तथा च व्यवहारान्नृपः पश्येदिति यत्, तद्विद्वद्भिर्ब्राह्मणैः सह धर्मशास्त्रानुसारेण तादृशः स इति योजना बोध्या। एतेनास्य वैयर्थ्यं परिहृतं। अन्यथा तेनैव सिद्धेरस्य वैयर्थ्यं स्पष्टमेव। तमेव धर्मविशेषमाह।

---

१ ख—वस्त्वर्थे। २ एतत्खपुस्तके न लभ्यते। ३ ख—स्वारास्येन।

**विद्वद्भिरित्यादि**ना । स एव धर्म इतिकर्तव्यता । स चाङ्गानुष्ठानप्रकारः । एवं चास्य श्लोकस्यैव प्रपञ्चः सकलोऽध्यायशेष इति भावः । ब्राह्मणैरित्यस्य फलमाह । **नेति** । धर्मविशेषविधार्थत्वेनास्य प्राप्तं व्यवहारदर्शने नृपस्य ब्राह्मणानां च समप्राधान्यं निराचष्टे । **ब्राह्मणैः सहेतीति** । **तेषां** ब्राह्मणानाम् । ननु तावता कथं तत्वमत आह । **सहयुक्ते** इति । 'सहार्थेन योगेऽप्रधाने तृतीये' ति तदर्थः । यथा 'पुत्रेण सहागतः पिते'त्यादौ शाब्दक्रियाद्यनन्वयित्वरूपमप्राधान्यं पुत्रादेस्तथा प्रकृतेऽपीति तदर्थत्वेऽपि न तथेति भावः । एतत्फलमाह । **अतश्चेति** । **न ब्राह्मेति** । आद्ये तथा सत्वेऽपि द्वितीये राज्ञो दोषो य उक्तः स ब्राह्मणानां नेत्यर्थः । उक्तहेतोः । न तु सर्वथा दोषाभावोऽभिमतः । 'सभा वा न प्रवेष्टव्ये'त्यनेन विरोधापत्तेरिति बोध्यम् । तेषां तत्र कथनेनैव तल्लाभे शास्त्रान्तरस्यासम्भवेनैव निरासे तदुक्तिफलमाह । **नार्थेति** । अत एव मिथः समवायेऽस्य प्राबल्यं न तस्येति वक्ष्यति । न्यूनतां परिहरति । **देशादीति** । आदिना देवगृहादिपरिग्रहः । पारिभाषिकधर्मेण व्यवस्थानं **समय**स्तत्सिद्धदेशादिसम्बन्धि**धर्म**स्येत्यर्थः । विरुद्धस्य त्याज्यत्वस्योक्तत्वादाह । **धर्मेति** । **वक्ष्यतीति** । संविद्यतिक्रमणे **योगीश्वर** ( श्लो० १८६ ) इति भावः । **क्रोधेति** प्रतीकं । **सिद्धे** इति । तयोस्तत्र निषिद्धत्वात्सामान्येन सर्वत्रेति भावः । **आदरेति** । अत्र विशेषेण तत्त्यागार्थमित्यर्थः ।

**मनुर**पि

" व्यवहारान् दिदृक्षुस्तु ब्राह्मणः सह पार्थिवः ।
मन्त्रज्ञैर्मन्त्रिभिः सार्धं विनीतः प्रविशेत्सभाम् ॥
तत्रासीनः स्थितो वाऽपि पार्श्वमुद्यम्य दक्षिणम् ।
विनीतवेषाभरणः पश्येत्कार्याणि कार्यिणाम् ॥
प्रत्यहं देशदृष्टैश्च शास्त्रदृष्टैश्च हेतुभिः ।
अष्टादशसु मार्गेषु निबद्धानि पृथक् पृथक् ॥ (अ० ८ श्लो० १-३)
धर्मासनमधिष्ठाय संवीतांगः समाहितः ।
प्रणम्य लोकपालेभ्यः कार्यदर्शनमालभेत् ॥ (अ० ८ श्लो० २३ )

इति व्यवहारान् अर्थिप्रत्यर्थिनोर्विवादविषयोक्तीः । दिदृक्षुः निर्णिनीषुः । पार्थिवः पृथिवीपतिः, क्षत्रियादन्योऽपि । मन्त्रज्ञैः देशकालाद्युचितकार्याकार्यनिरूपणाभिज्ञैः । एतच्च ब्राह्मणैरित्यस्य विशेषणम् । अमन्त्रज्ञा हि ब्राह्मणा देशकालाद्यननुरूपं धर्ममपि सहसा ब्रुवन्तो राज्ञः कञ्चिदनर्थमापादयेयुः । मन्त्रिभिः बुद्धिसचिवैः । विनीतः सहजाहार्योभयविनियुक्तः । पाणिमुद्यम्य उत्तरीयादुद्धृत्य वस्त्रोपसंव्यानं कृत्वेति यावत् । पश्येत् निश्चिनुयात् । कार्याणि ऋणादानादीनि । देशदृष्टा हेतवः देशविशेषव्यवस्थितानि निर्णयसाधनानि । यथोदीच्यमध्यमानां, कन्यां याचमानाय भोजनं यदि दीयते तदा तुभ्यं देयेत्यनुक्तेऽपि प्रतिश्रुता भवतीति । शास्त्रदृष्टाः साक्षिप्रभृतयः ॥ १ ॥

---

१ क ग—सा । २ ख—प्राप्तव्यवहारदर्शने । ३ ग—क्रोधेति प्रति क्रोधेति । प्रतीतयोस्तत्र । ४ धर्मासन । ५ ख—निर्निनीषु । ६ ख—सहजा भार्यो । ७ ख—न ।

## याज्ञवल्कीये २ श्लोकः

प्रागुक्तब्राह्मणेभ्यः सभ्याः पृथक् कार्या इत्याह । **किंचेति** । श्रुतेत्यस्य वेदशास्त्रसंपन्ना इति शाब्दोऽर्थस्तत्फलितमाह । **श्रुतेनेति** । अत्र द्वावपि भावप्रत्ययान्तौ क्रियापरौ । अन्यथा धर्मज्ञानस्यानुपयोगात् । धर्मशब्दो लक्षणया शास्त्रपर इत्याह । **धर्मशास्त्रेति** । ' ताच्छील्ये णिनि ' रित्याह । **शीला** इति । एतानुद्दिश्य सभासत्त्वं विधीयते इत्याह । **एवंभूताः** । **सभेति** विधेयार्थमाह । **सभायामिति** । तदर्थमाह । **संसदीति** । सीदन्तीत्युक्तस्य व्याख्या । यथोपेति । धातूनामनेकार्थत्वादितिभावः । बलात्कारनिरासायाह । **दानेति** । एते सभासदोऽपि ब्राह्मणा एवेत्याह । **यद्यपीति** । तस्य त्रितयसाधारणत्वादिति भावः । **सत्त्विति** । " विनीतवेषो नृपतिः सभां गत्वा समाहितः । आसीनः प्राङ्मुखो भूत्वा पश्येत्कार्याणि कार्यिणाम् " । इति इतः पूर्वश्लोकः । स राजा **स्थिरैर्**भयतोऽचञ्चलैः । **प्राज्ञैर्**बुद्धिमद्भिः । **मौलैः** पितृपितामहादिपरंपरायातैः । द्विजोत्तमैर्ब्राह्मणैः । सप्तमीतत्पुरुषः । **धर्मशास्त्रं** मानवादि । तस्य योऽर्थः सिद्धान्तस्तत्र निष्णातैः । **अर्थशास्त्र**मौशनसादि तत्र तथा । ननु बहुत्वस्य त्रित्वादिपरार्द्धपर्यन्तसंख्याव्यापकत्वेन तत्र ते कति कार्या इत्यत आह । **ते चेति** । सभासद इत्यर्थः । *कपिञ्जलाधिकरणन्यायेनेति भावः । **त्रय** इत्यस्य त्रय एवेत्यर्थः । एवेन पूर्वापरकोट्योर्निरासः । तत्राद्ये हेतुमाह । **बहुवचनेति** । द्वितीये हेतुमाह । **यस्मिन्निति** । इतोऽपि तत्र ब्राह्मणा एवेत्यपि बोध्यम् । एवमग्रेऽपि बोध्यम् । मतान्तरमाह । **बृहस्पतिस्त्विति** । उत्तमादिभेदेनाह । **समेति** । **वेद**शब्दः शास्त्रस्याप्युपलक्षणम् । **लोक**शब्दो देशकालादिपरः ! यद्वा स तदन्यसर्वपरः । **धर्म**शब्दः शास्त्रपरः । प्राधान्यात्तस्य पुनरुक्तिः । **यत्र** सभायां । **यज्ञेति** यज्ञसभासदृशीत्यर्थः । यदि तु एतदनुरोधेन **मानवे** त्रयइत्युपलक्षणं मध्यमपक्षपरं वा तदा एकवाक्यतैव न पक्षान्तरम् । अत्र पक्षे तेच त्रय इत्यपि तथेति न भेद इति बोध्यम् । परन्तु तेच त्रय इति बृहस्पतिस्त्विति च वदतो **विज्ञानेश्वरस्य न** सम्मतमिदमिति बोध्यम् ।

ननु व्यवहारान्नृप इत्यत्रोपात्तविद्वद्ब्राह्मणोद्देशेन श्रुताध्ययनसम्पन्नत्वादिरूपो धर्मोऽनेन विधीयताम् । तथा च विद्वद्ब्राह्मणविशेषणत्वाच्छ्रुताध्ययनसंपन्नादेर्न प्रागुक्तेभ्य एते सभासदो भिन्ना इति किं चेत्यवतरणासङ्गतिरित्याशयेनाऽऽशङ्कते । **न चेति** । समानविभक्तिकनामार्थयोरभेदान्वय इति व्युत्पत्तेराह । **तृतीयेति** +वचनक्रमेणेत्थमुक्तम् । अभेदस्य संसर्गत्वाभा-

१ ख—शब्दोऽर्थं । २ ख—पुनिः । ३ ख—बहुनामनेकार्थत्वादत्र । ४ ख—एतेन । ५ ख—एतदन्य । ६ ख—ग—मधम । ७ ख—विशेषणत्वात् ।

* "कपिञ्जलानालभेत" इति श्रुतौ कपिञ्जलाः कति ग्राह्या इति शङ्कायाम् पूर्वोपस्थितत्वात् त्रित्वसङ्ख्याविशिष्टा इति तदधिकरणे स्थितम् । तद्वदत्रापि त्रयः सभासदः कार्या इति भावः ।

कपिञ्जलाधिकरणन्यायस्त्वत्र न युक्तः । तत्र तु **त्र्यधिक**व्यावृत्तिरेवेष्यते । अत्र तावत्त्रि**न्यून**व्यावृत्तिर्दर्शिता ।

+ विभक्तिक्रमे प्रथमायाः पूर्वत्वेऽपि व्यवहारान् नृपः पश्येदिति वचनस्य श्रुताध्ययनसंपन्ना इति वच

वादाह । **विशेषणेति** । नन्वध्याहारेण तत्सम्भवोऽत आह । **विद्वद्भिरिति** । ननु विद्वद्भिरित्यस्यैव विवरणपरमिदमिति न पुनरुक्तिप्रसङ्गोऽत आह । **चेति** । तेन यच्छब्दोक्तिवैयर्थ्यापत्तिसमुच्चयः । स हि विधेयत्वप्रतिबंधकस्तथा च तद्बलादत्रैव मिथ उद्देश्यविधेयभावः स्वरसतः प्रतीयते । तत्र च प्राप्ताप्राप्तविवेकन्यायेन लोकादिसिद्धश्रुताध्ययनसम्पन्नादिकमुद्दिश्य सभासत्त्वं विधीयते इति भावः । यच्छब्दस्य पूर्वपरामर्शकत्वेऽपि **कात्यायन**विरोधरूपदोषान्तरमपि सूचयन्नाह । **तथाचेति** । तथा च तदुद्देशेन तद्विधिर्न घटते इति ते एव सभासद इति वक्तुं न शक्यते इति भावः । **स इति** प्रागुक्ताग्रिमोऽयम् । प्राड्विवाकेन सहितः **प्राड्विवाको** राजप्रतिनिधिः । प्राड्विवाकाक्षदर्शकावित्य**मरः** (२-८-५) । **अमात्याः** । बुद्धिसचिवास्तत्सहितः । ब्राह्मणाश्च पुरोहितश्च तैः सहितः । **सभ्यैः** सहितः । अनेन सर्वेषामङ्गत्वमुक्तम् । **धर्मतस्**तच्छास्त्रतः । प्रेक्षक इत्यर्थः । तत्र सभ्यब्राह्मणयोर्मध्ये । **अनीति** राज्ञेति शेषः । एवमग्रेऽपि । तथा मूलानुक्तेः । **सभेति** तथा मूलोक्तेः । तथा भेदोक्तेः फलभेदमाह । **तत्रेति** प्राग्वद् । **तं** राजानम् । **तद्भागिन इति** राजसम्बन्धिदोषभागिन इत्यर्थः । एवं च प्रागुक्तदोषशब्दो विशेषपरो बोध्यः । पुनस्त्वर्थे । न्यूनतामज्ञाननिरासाय सर्वथाऽनावश्यकमूलस्थचशब्देन परिहरति । **रिपाविति** 'वित्तान्तपञ्चानां द्वन्द्वान्मतुप्' । तत्र कुलवत्त्वं कुलीनत्वम् । कुलभूतैरित्यस्य परम्परायातैरित्यर्थः ॥ २ ॥

## याज्ञवल्कीये ३ श्लोकः

ननु राज्ञः प्रतिदिनं व्यवहारदर्शनवत् कार्यान्तराण्यपि कर्तव्यत्वेन विहितानि तत्र दैवात्समवाये किं कार्यमित्याशङ्कायामाह । **व्यवहारेति** । अत एव तु । तेन तदत्यागसूचनद्वारा तस्याप्यावश्यकत्वं सूचितम् । **कार्यवशादित्यस्य** व्याख्या **कार्यान्तरेति** । शान्तिकाद्यावश्यकोक्तभिन्नकार्येत्यर्थः । **सह** सहितः । अनेन प्रागुक्तेभ्यः सर्वेभ्यो भिन्नोऽयमिति सूचितम् । सर्वपदस्वारस्यादाह । **सामेति** । देशादिसमयधर्मानित्यर्थः । विन्ते विचारयतीति सर्वपाठः । वेत्तीति पाठे वेत्तीत्यस्य तत्पूर्वकं जानातीत्यर्थः । प्रकरणात्तल्लाभे तदुक्तिफलमाह । **न क्षत्रीति** । यतोऽयं सर्वतो भिन्नोऽत एव विशेषमाह । **तं चेति** ब्राह्मणं चेत्यर्थः । **यथाहेति** । **कात्यायन** इति अर्थः । **मध्येति** । पक्षपातरहितमित्यर्थः । **परत्र** परलोकविषये । **उद्युक्तम्** अनलसम् । मुख्यपक्षोक्तिपरतया मूलस्य न न्यूनतेति सूचयन् स्मृत्यन्तरानुरोधेनानुकल्पमाह । **एवं भूतेति** । **ब्राह्मण** इति । उक्तगुणविशिष्ट इत्यर्थः । अन्यथा स्वोक्तिवैयर्थ्यमेव स्यादिति बोध्यम् । **यत्नेनेति** । तस्य धर्मशास्त्रादावनधिकारादिति भावः ।

---

नापेक्षया पूर्वत्वात् तत्र च तृतीयाया निर्देशात् वचनपर्यालोचनायां तृतीयायाः प्रथमोपस्थितत्वात् पूर्वमुक्तिः । तथा च तृतीयाप्रथमान्तनिर्दिष्टानामिति मूलवाक्ये न काचिदनुपपत्तिरिति भावः ॥

१ ख—अन्वध्याहारेण । २ ख—परमिति । ३ ख—न यच्छब्दोक्ति । ४ क—पाठः । ५ ख—तत्र च । ६ ख—शक्य । ७ क ग—मूलस्य । ८ ख—कुलवत्त्वं । ९ ख—व्यवेति । १० ख—तु । ११ ख—सर्वभ्यो । १२ ख ग—भावः । १३ ख—स्मृत्यनन्तरानुकल्पमाह ।

मतान्तरमाह । **नारदेनेति** । **अयमेवेति** । **योगीश्वरोक्त**ब्राह्मणरूपानुकल्पत्वेनोक्त इत्यर्थः । राज्ञो बहुकार्यव्याकुलत्वेनावकाशाभावादिति भावः । **पुरस्कृत्येति** । अत्र प्रस्तुतत्वाद्राजनियुक्तोक्तपुरुष एव तत्र कर्ता बोध्यः । अत एव, "*मत्प्रतिष्ठः स्मृतो धर्मो धर्ममूलो नराधिपः । सह सद्भिरतो राजा व्यवहारान्विशोधयेत्" ॥ इत्यग्रे ( नारदस्मृ० अ० ३ श्लो० ६ ) तेनैवोक्तम् । व्यवहारानन्विति युक्तः पाठः । एतदेव स्पष्टयति । **प्राड्विवाकेति** । **मते** बुद्धौ धर्मशास्त्रानुसारेणेति भावः । **स्थितः** राजा । तस्य मत्वेनैव तल्लाभे पुनस्तदुक्तिफलमाह । **न स्वेति** । नन्वेवं प्राड्विवाकेन कृतस्य श्रवणेऽपि तस्य तद्दर्शनाभावेन कथं स पश्येदित्यत आह । **राजेति** । तथा च स्वप्रतिरूपकप्रागुक्तपुरुषद्वारेण तद्दर्शनस्यौचित्येनायमत्र पक्षो ज्यायानिति बोध्यम् ।

धर्मशास्त्रानुसारेण कृतस्य तस्य यौगिकीयं संज्ञा नाश्वकर्णादिवद्रूढिरित्याह । **तस्येति** प्राड्विवाकस्येत्यर्थः । **संज्ञेति** अन्वर्थं नामेत्यर्थः । **प्राडिति** । क्विब्वचीत्यादिना निष्पन्नोऽयं क्विबन्तः । **तयो**रर्थिप्रत्यर्थिनोः । **विविनक्ति** । **विवेचयति** विचारयति । अत्र पक्षे औणादिकत्वं कल्प्यमित आह । **विवक्तीति** । विविच्य विचार्य कथयतीत्यर्थः । एतेन विशेषेण कथयतीति व्याख्यानमपास्तम् । हलश्चेतिघञ् । स चार्षत्वात्कर्तरि । यद्वा भावघञन्तादर्शआद्यच् । मूलं तु फलितार्थपरतया नेयं । यद्वा करणे बाहुलकाहयुडभावे घञ् । अत एव येनेत्यग्रे उक्तम् । मूलं तु प्राग्वदेव । **कातीयमेवाह** । **उक्तश्चेति** । एतत् । उक्तं वचनम् ॥ ३ ॥

## याज्ञवल्कीये ४ श्लोकः

अन्यदपि राज्ञा कर्तव्यमित्याह । **अपिचेति** । अपिना द्वेषसमुच्चयः । तथा च अज्ञानभ्रान्त्यादिरूपोपाधिभिर्धर्मशास्त्रविरुद्धमाचरतां तेषां न दण्डोऽयमिति भावः । **सभ्या इति** । नियुक्ता इत्यर्थः । तेषामेव तत्त्वस्य प्रागुक्तत्वात् । अत एवानियुक्तानां तदपेक्षया न्यूनदण्डपरिकल्पना । युक्तं चैतत् । नियुक्तानामभियुक्तत्वेन धर्मशास्त्रविरुद्धाचरणादधिकापराधस्तद्भिन्नानां तु तदभावादल्पापराधः । आद्येषु राजाज्ञाभङ्गं स्मृत्युलंघनं च । अन्येषु स्मृत्युलंघनमेवेति यावत् । तदेतदभिप्रेत्याह । **पूर्वोक्ताः सभ्या इति** । रागादौ हेतुं पूरयति । **रजस इति** । यत्किंचिद्रागादेः साधारणत्वादाह । **स्नेहातीत्यादिः** । वाशब्दस्य प्रत्येकं विकल्पबोधकत्वादाह । **लोभाद्वेति** । सत्रासाद्वेति च । विवादपदस्य यथाश्रुतार्थत्वे तद्वैगुण्यस्य दमेऽसम्भवात् लक्ष्यार्थमाह । **विवादेति** । ननु अन्यथाऽपि लक्ष्यार्थस्य सम्भवादेवमेव व्या-

१ ख—कल्प एव । २ ख—कश्चिदवची । ३ ख—कल्प्य । ४ विवक्ति, वेति । ५ ख—कथयती । ६ ख—याघञ् । ७ ख—हयुटभावे । ८ ख तत्तदुक्तवचनम् । ९ ग—कार्य । १० ख—आद्ये । ११ ख—भंगस्मृत्युलंघनमेवेति यावत् । १२ ख—हन्तुः । (?) १३ ख ग साद्रेति । १४ ख—विवद । १५ ख—लक्षणार्थ ।

* नारदस्मृतौ "तत्प्रतिष्ठ" इति पाठः ।

ख्याने किं बीजमत आह । **न पुनरिति । तथा हि सतीति** पाठः । हिर्हेतौ । **स्त्रीसङ्ग्रहणादिति** पाठः । स्मृत्यपेतेत्यत एवार्थलाभे रागाद्युक्तिफलमाह । **रागेति** । इदमुपलक्षणं द्वेषस्यापि । **ईष्टे** नियच्छति । कर्मणः शेषत्वविवक्षायां षष्ठी । **वर्जमिति** णमुलन्तम् । तथा चौंनियुक्तानां तेषामल्पदण्डोऽपि कथमिति भावः । **तस्य गौतमवाक्यस्य** विधित्वाभावात् तस्य वधातिरिक्तदण्डप्रतिपादकवाक्यानामानर्थक्यापत्तेश्चेति भावः । **तथा सति** तद्विरोधान्तरं परिहरति । **यत्त्विति** यदपीत्यर्थः । दोषैः प्राप्तः षड्भिः प्रकारैस्त्याज्य इत्यर्थः । ब्राह्मण इति प्रकरणप्राप्तम् । तत्प्रकारैस्त्यागमेवाह । **अवध्य इत्यादि** । चो वाक्यालङ्कारे । **अदण्ड्य** इत्यनेन धनदण्डाभावः । **अपरिवाद्य** इत्यनेन धिग्वाग्दण्डयोरभावः । **अपरिहार्य** इत्यनेन सर्वस्वहरणाभावः । अन्यत्स्पष्टम् । षड्भिरित्यस्य पूर्वतन **गौतम**माह । **स एष** इति । बहुभ्यो बहुशश्च श्रुतं येन सः । तत्साधनमाह । **लोकेति । लोकः** सदाचारः त्रयः सप्त वा लोका वा । **वेदः** त्रयी । शिक्षादीनि **षड्वेदाङ्गानि । वाकोवाक्यम्** । उक्तिप्रत्युक्तिमद्वाक्यम् । **इतिहासो** भारतादिः । **पुराणं** पंचलक्षणं वायवीयादि । तत्र **कुशलो** निपुणस्तदर्थाभिज्ञः । **तदपेक्षः** तन्मननशीलः । **तद्वृत्तिः** । तदुक्तानुष्ठाता ।

**अष्टाचत्वेति** । ते च **गौतमेनोक्ताः** । गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचूडोपनयनम् । अत्र समाहारद्वंद्वः । चत्वारि वेदव्रतानि प्रतिशाखं गृह्यसूक्तानि । स्नानं समावर्तनाख्यं । विवाहाख्यः सहधर्मचारिणीसंयोगः । पञ्चानां यज्ञानामनुष्ठानम् देवपितृमनुष्यभूतब्रह्मणामिति । एते पञ्च पृथक् संस्कारा न तु समुदायः । एतेषां च वक्ष्यमाणानामनुष्ठानम् । तानेवाह । **अष्टकेत्यादि** । आपस्तंबानामेकाष्टकायां क्रियमाणं । छंदोगाश्वलायनयोस्तिसृषु चतुर्षु च क्रियमाणानि च **अष्टका** यासु श्राद्धं पर्वणि भवः पार्वणः स्थालीपाकः । श्राद्धम् अमावास्यादि । श्रावणी तत्र कर्तव्यं श्रवणाकर्मप्रयोगः सर्पबलिश्च । आग्रहायणी तत्र कर्त्तव्यं हेमंतप्रत्यवरोहणम् । चैत्री तत्र कर्तव्यः ऐन्द्राग्न इत्याद्युक्तस्तुन्दिलः शूलगवश्च । आश्वयुजी तत्र कर्तव्यमाश्वयुजीकर्म पृषातकचरुरूपं पशुपतये स्थालीपाकरूपम्, अनाहिताग्नेराग्रयणं चेति द्वयमाश्वयुजीशब्दग्राह्यमिति **हरदत्तः** । इति **सप्त पाकयज्ञसंस्थाः** । पाकयज्ञा अल्पयज्ञाः प्रशस्तयज्ञा वा[11] । "तं पाकेन मनसा, यो मा पाकेन मनसे" त्यादौ पाकशब्दप्रयोगस्य प्रशंसायां दर्शनादिति **वृत्तिकृन्नारायणहरदत्तादयः** । आख्या चेयं गार्ह्याणां[12] कर्मणामिति **हरदत्तः** । **तथा चापस्तंबः** । लौकिकानां पाकयज्ञशब्दा इति । **संस्था** विधा । पाकयज्ञविधाः सप्तेत्यर्थ इति **हरदत्तः** । पाकेन समाप्तिं गच्छति पाकसंप्रधाना वाऽतः पाकयज्ञसंस्था—एवमग्रेऽपि इत्यन्यः । **तत्त्वापस्तंब-**

---

१ **ख**—मूल । २ **क**—विवक्षया । ३ **क**—वजं, ख, वज्र । ४ **ख**—च नियुक्तानां । ५ **ग**—त्रयीशिक्षादीनि षड्वेदांगानिपि ( ? ) राज्ञा न शिक्षणीयः किं तु सर्वथा त्याज्य इत्यर्थः । ६ **ग**—तानेवाह । ७ **ख**—वाक्यं—उक्तिमद्वावाक्यम् । ८ **ख**—चौडो । ९ **ख**—ब्राह्मणानाम् । १० **ख**—मित्यर्थः । ११ **ग**—श्च । १२ **ख**—ग्राह्याणां ।

गृह्यप्रश्नव्याख्यायां प्रतिपादितं । अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि निरूढपशुबन्धः सौत्रामणीति सप्त **हविर्यज्ञसंस्थाः** । एतेऽग्न्याधेयादयः श्रुतिप्रसिद्धाः । दर्शपूर्णमासाविति समुदाय एकः संस्कारः सप्तग्रहणात् । सोमसम्बन्धाभावादेते **हविर्यज्ञाः** । अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त **सोमसंस्थाः** । अग्निष्टोमे यत्र राजन्यस्य षोडशिग्रहो गृह्यते सोऽत्यग्निष्टोमः । ब्राह्मणस्य कथमयं संस्कार इति चिन्त्यमिति **हरदत्तः** । गच्छति गच्छतीति द्विरुक्तिरष्टमाध्यायसप्तम्यर्थं बोध्यम् । एतेचाधानादयो गृहस्थस्य नित्या इत्याद्यन्यत्र स्पष्टमिति । एते **चत्वारिंशत्संस्काराः** ।

संस्कारो द्विविधो ब्राह्मो दैवश्च । तत्र गर्भाधानादिस्नानान्तो ब्राह्मः । अग्रिमो दैवः । अष्टौ चात्मगुणा इति चात्मसंस्कारा इत्यस्यानुषङ्गः । आत्माऽत्र चित्तं तच्छुद्धावेवैते भवन्ति नान्यथेति भेदेनोक्तिः । तथा चोपनयनाद्यधिकारसम्पत्तिरिति भावः । पाकयज्ञादीनां संस्कारत्वं च **शङ्खलिखिताभ्यामुक्तम्**[3] ।

पाकयज्ञा हविर्यज्ञाः सोमसंस्थास्तथैवच ।
संस्कारास्त्वग्निहोत्रान्ता अग्निहोत्रं तु जुह्वतः ॥
संस्कारैः संस्कृतं पूर्वैरुत्तरैरनुसंस्कृतः ।
नित्यमष्टगुणैर्युक्तो ब्राह्मणो ब्रह्मलौकिकः ।
ब्राह्मम्पदमवाप्नोति तस्मान्न च्यवते पुनः । इति

ब्रह्मलौकिको ब्रह्मलोकार्हः । **अष्टगुणाश्च** सर्वभूतदया क्षान्तिरनसूया शौचमनायासो मङ्गल्यमकार्पण्यमस्पृहेति । **शौचं** बाह्यमाभ्यंतरञ्च । **अनायासः** क्लेशकरकर्मानारम्भः । दूर्वागोरोचनाहिचन्दनं **मङ्गल्यम्** । **अकार्पण्यं** संविभागशीलत्वम् । **अस्पृहा** परद्रव्यानिच्छा । **एवमष्टाचत्वारिंशत्संस्कारास्तैः** संस्कृत इत्यर्थः । **त्रिषु** अध्ययनेज्यादानेषु अदृष्टार्थेषु अभिरतस्तदर्थानुष्ठानपरः । एवमग्रेऽपि । **षट्सु** अध्यापनयाजनप्रतिग्रहरूपदृष्टार्थसहितेषु वेति पूर्वान्वयि । **सामयिकेति** । पौरुषेयी व्यवस्था **समयः** । स च त्रिविधः, विधिर्नियमः प्रतिषेधश्च । तत्तन्मूला आचाराः समयाचारास्तेषु भवा धर्माः सामयाचारिकास्तेषु कुशल इत्यर्थः । यद्वा शास्त्रविद्वत्कृता मर्यादा वर्णाश्रमिणां पाषण्डाना च समयः । शिष्टानुष्ठित आचार इत्यर्थः ॥ ४ ॥

## याज्ञवल्कीये ५ श्लोकः

**व्यवहारविषयमिति** । 'प्रत्यर्थ्यादिप्रतिकूलतया नृपादिषु कथनं व्यवहार' इत्युक्तमत. कथ्यमानं तद्विषयस्तमित्यर्थः । **व्यपेतेन** रहितेन । **राज्ञ इति** । इदं तदधिकृतादेरप्युपलक्षणम् । **स्मृत्येत्यस्यार्थमाह** । **धर्मेति** । तदोऽन्वयायाह । **यदिति** । उपलक्षणत्वादेवाह । **प्राडिति** । **चेदर्थो यदीति** । पद्ये हिर्निश्चये । व्यवहारपदमित्यस्यार्थमाह । **प्रतिज्ञोत्तरेति** ।

१ ख—पाठः । २ ख—अग्निष्टोमो । ३ ग—मप्युक्तम् । ४ ग—अस्दं पूर्वतनं न सांप्रतमित्यन्यत्र स्पष्टं । ५ ख—प्रतिग्रहि सहितेषु तेषु ।

एतत्पदात्मक इत्यर्थः । **तस्य** विषयस्य । अत एव तस्य विषयस्य द्वैविध्यमाह । **स चेति** । **शङ्केति** । शङ्कारूपोऽभियोगो यस्मिन् विषये तत्त्वरूपोऽभियोगो यस्मिन् विषये इत्यर्थः । ह्यभियोग इति सुजर्थान्तर्भावेण बहुव्रीहिः । **विषयो**ऽन्यपदार्थः । तदेव विशिष्याह । **शङ्केति** । **असतान्त्विति** । असतां चौरादीनां संसर्गाच्चौरत्वादिसम्भावना भवतीत्यर्थः । **होढालोप्त्रमिति** । लुप्यते इति लोप्त्रम् उणादिः । चौर्यधनम् । "चौरिकास्तैन्यचौर्ये च स्तेयं लोप्त्रं तु तद्धनम्" (२-१०-२५) **इत्यमरः** । **लिङ्गमिति** । अव्यभिचरितं चिन्हमित्यर्थः । इदमुपलक्षणमित्याह । **साक्षाद्वा दर्शनमिति** । **अपहरतीति चेति** । वा पाठेऽपि समुच्चये । विषयस्य भेदान्तरमाह । **पुनश्चेति** । **द्यूतमाह्वय** इति । द्यूतस्यैवोपाधिभेदेन भेद आव्हयाख्यः । इदमपि न परिगणनमिति सूचयन् पुनर्भेदमाह । **एतान्यपीति** । **साध्येति** । अवान्तरसाध्यभेदेनेत्यर्थः । **एषाम्** ऋणादानादीनाम् । तस्य पुनर्भेदान्तरमाह । **क्रियेति** । क्रिया साध्यम् । शतशब्दोऽनन्तवचनः । चेदित्यतः सूचितमाह । **चेदिति**[3] । अन्यथा तत्प्रेरणोल्लङ्घने दण्डापत्त्या चेदित्यस्यैच्छिकावेदनबोधकस्यासङ्गतिः स्पष्टैव । **अस्य** राज्ञः । **न च प्रापितमिति** । **कथञ्चन** । अन्यायेनान्येन प्रापितमर्थं न गृह्णीयादित्यर्थः । यद्वा अन्येन प्रापितं निवेदितं अर्थम् कार्यं कथञ्चन अविचार्य न ग्रसेत नोपेक्षेतेत्यर्थः । **न चाप्रापितमिति** पाठे तु, अन्येन विवदमानेन तत्सम्बन्धिना वा अप्रापितमनिवेदितं कथञ्चिदवगम्य रागादिना न ग्रसेत न ग्राहयेदित्यर्थः । मूले परैरित्यत्र "स्वरितात्संहितायामनुदात्तानाम्" इति सूत्र**भाष्योक्त**रीत्या परश्च परौ च परे चेत्येकशेष इत्याशयेनाह । **परैरितीति** । परेणेत्याद्यर्थकं परैरिति बहुवचनान्तं पदमिति दर्शयतीत्यर्थः । बहुवचनाविवक्षया योजनं तु परेणेत्यादिग्रन्थस्वरसविरुद्धम् । एकस्येत्यस्य सर्वत्रान्वयः ।

एवं सति प्राप्तविरोधं परिहरति । **यत् पुनरिति** । यस्त्वित्यर्थः । **न्यायेति** । **धर्मेति** । पाठान्तरम् । **तद्भिन्नेति** । पृथग्व्यवहारविषयमित्यर्थः । यदैकेनैकोऽभियुक्तो मह्यमसौ धारयतीति तदा तस्मिन्व्यवहारेऽनिष्पन्नेऽन्येनान्येन चान्यथा नाभियोक्तव्यः । निष्पन्ने तु क्रमेण तथेत्येवमेकस्य बहुभिर्विवादाभावो नत्वेते मह्यं धारयन्ति शतमित्येवमेकस्य बहुभिर्विवादाभाव इति भावः । इदञ्च मत्तोन्मत्तेति व्याख्यानावसरे सबीजं सकलैतत्पद्यव्याख्यानं स्फुटीभविष्यति । न्यूनतां परिहरति । **आवेदेति** । तृतीयान्तस्यार्थसिद्धमित्यत्रान्वयः । द्वितीयमाह । **आवेदितं चेति** । तृतीयमाह । **अकल्पेति** । आधिव्याधिसहितादीनामित्यर्थः । **अर्थसिद्धमिति** । अन्यथाऽविनीतस्यावेदनमेव न घटेत उद्धतत्वेन राजसमीपे गन्तुमशक्यत्वात् । आवेदनान्तरं च तस्य युक्तत्वेऽपि यदि प्रत्यर्थिनो नाव्हानं तर्ह्यावेदनमेव निष्फलमिति न कोऽप्यावेदयेत् । तथा च प्रजापरिपालनस्यैवासिद्धिरिति तेषामर्थसिद्धत्वमित्यर्थः ।

---

१ ख—पदार्थः । २ ग—नन्तरवचनः । ३ ख—चेत्येतदपि सूचितमाह । आवेदेति । ४ ख—तदेतस्मिन् । ५ ख—विवाद इति भावः । ६ ख—ससकलैतत् । ७ ख—तृतीयान्तमित्यस्यार्थं । सिद्धं । ८ ग—उक्तत्वेऽपि । ९ ग—निष्फलमिवेति । १० ख—प्रतिपालन ।

इदं प्रमाणयति । **स्मृत्यन्तरे[1]त्विति** । **नारदीये** त्वित्यर्थः । **किं कार्यं का चेति** । अर्थकृतो म[2]न्युकृतश्च प्रश्नभेदः । केन कर्ता कस्मिन्देशे कदा काले कस्मात्कारणात् । तयोर्भेदस्योक्तत्वादाह । **ससभ्यैर्ब्राह्मणैरिति** । मुद्राग्रहणं लेख्यस्याप्युपलक्षणम् ।

एवं प्रत्यर्थिन आह्वाने निषेधमाह । **अकल्पेत्यादि** । अकल्पः व्याध्याद्य[3]भिभूतः । **विषमस्थ** उत्पन्नसङ्कटः । **क्रियाऽकुलः** । नित्यनैमित्तिकादिक्रियाव्यग्रः । **कार्यातिपातीनि** । य[4]स्यागच्छतो गुरुतरकार्यहानिः सः । **व्यसनी** । इष्टवियोगादिदुःखवान् । द्वन्द्वान्ताकुलशब्दस्य प्रत्येकं सम्बन्धात् । नृपकार्यासक्तः उत्तमत्रासक्तः । **मत्तो** मादकद्रव्येण । **उन्मत्तः** उन्मादेन पञ्चविधेन वातपित्तश्लेष्मसन्निपातग्रहसम्भवेनोपसृष्टः । **प्रमत्तः** । सर्वदाऽवधा[5]नहीनः । **आर्त्तो** विपदादिना पीडितः । स्त्रीणां तन्निषेधमाह । **नहीनेति** । अना[6]थां सर्वजनशोच्यामिति यावत् । **सर्वेति** । ब्राह्मणीम् । तत्र हेतुमाह । **ता इति** । **ताः** । हीनप[7]क्षादयः ज्ञातिस्वामिका इत्यर्थः । एवं स्त्रीणामाह्वाने निषिद्धे प्रतिप्रसवमाह । **तदधीनेति** । तस्या अधीनं तादृशं यत्कुटुम्बं तद्यास्या[8]मस्तीति इनिः । एकदेशीतिवत्प्रयोगः । **स्वैरिण्यो** व्यभिचाररताः । **गणिका** वेश्याः । **निष्कुला** हीनकुलाः । एतत्प्रसङ्गादकल्पाद्याह्वाने पूर्वनिषिद्धेऽपि प्रतिप्रसवमाह । **कालमिति** । तत्र प्रकारद्वयं **शनैर्यानैरिति** । एतत्प्रसङ्गादाह । **ज्ञात्वेति** । क्षुद्रकार्येषु तथा नेत्याह । **गुर्विति** । वेषमाहात्म्यात्तत्रापि विशेषमाह । **अकोपेति** । **इत्यादीत्यादिपदग्राह्यमेवाह** । **आसेधेति** । निरोधेत्यर्थः । **आसेधयेदिति** । **विवादार्थी** वादी आह्वानदर्शनपर्यन्तं तादृशं प्रत्यर्थिनं निरोधयेदित्य[9]र्थः । तच्चातुर्विध्यमाह । **स्थानेति** । कृतः आसेधः । तद्विषयत्वात्तत्कृतत्वम् । एवमग्रेऽपि । अग्रे उभयत्र कृत इति शेषः । **आसेध** इति प्र[10]कृतं । अस्मात्प्रदेशान्न गन्तव्यमिति **स्थानासेधः** । आसन्ध्यं न गन्तव्यमिति **कालासेधः** । देशान्तरं प्रति न गन्तव्यमिति **प्रवासासेधः** । असौ व्यापारो न कर्तव्य इति **कर्मासेधः** । **आसिद्धः** निरुद्धः । **तम्** आसेधम् । **विनेयः** शिक्षणीयः । **अन्यथा कुर्वन्निति** । अनासेधकाले आसेधं कुर्वन्नासेधकर्ता दण्ड्यो भवेदित्यर्थः । यद्वा आसेद्धा आसिद्धं तं लोभादिना मु[11]ञ्चन्नित्याद्यर्थः । 'नासिद्धस्तं विलङ्घयेदि'त्यस्य प्रतिप्रसवमाह । **नदीति** । नदीसन्तारादिनिमित्तचतुष्टयम् । तदतिक्रमणे दोषाभावमन्यत्राप्याह । **निर्वेष्टुकाम इति** । आश्रमान्तरं गन्[13]तुकामः । विवाहादावुद्यत इति यावत् । **यियक्षुर्य**ष्टुमिच्छुः । **तत्कालं** शिल्पकालं । **आयुधीयाः** आयुधजीविनो योद्धारः । **विग्रहे** संग्रामे । निर्वेष्टुकामादयोऽपि तदुल्लंघनेनापराधिनो ने[12]त्यर्थः । सामान्यनिरोधस्यातत्वादाह । **राजेति** । ननु येषामकल्पादीनां शनैर्यानैरपि आगमनं दुर्घटं तत्र किं कार्यमत आह । **[14]कल्पादय इति** । ते—

१ ग—स्मृत्यंतरेस्विति । २ ग—मवकृतश्च । ३ ख—व्याधितः । ४ यस्य गच्छतो । ५ ग—अवधानहितः । ६ ग—अनाथा इत्यर्थः । ७ ख—एताः अहीनपक्षादयः । ग—एताः प्रहीनपक्षादयः षट् ज्ञातिस्वामिका । ८ ख—तदस्यास्तीति । ९ ग—निरोधयेदित्यर्थे । १० क—प्रकृते । ११ ग—मुंचन्स इत्याद्यर्थः । १२ ख—न तत्रेत्यर्थः । १३ ग—इत्यर्थः । १४ ग—अकल्पादय ।

पुत्रादयः। **नियोगकृत्** आज्ञाकारी। एतदन्यः **परार्थवादी**। स व्यवहारेषु विरुद्धं विविधं विशेषेण वा ब्रुवन् दण्ड्य इत्यर्थः॥ ५॥

## याज्ञवल्कीये ६ श्लोकः

अर्थशब्दस्याभिधेयपरत्वनिरासद्वारा प्रयोजनपरत्वमाह। **अर्थ्यत इति**। भूतनिष्ठालब्धमर्थमाह। **पूर्वमावेदनेति**[1]। **अन्येति**। अन्यथावादीत्यर्थः। **क्रिया**। कार्यं। **नोपस्थाता**। समीपे न तिष्ठन्। **प्रपलायी**। प्रपलायनं प्रपलायः, सोऽस्यास्तीति प्रपलायी। **स्मृत इतीति**। वचनादिति शेषः। इति शब्दो हेत्वर्थो वा। अतो हेतोरित्यर्थः। पूर्वावतारितैतद्वचनोत्तरार्द्धमेव शङ्कान्तरनिरासपरमित्याशयेन शङ्कते। **आवेदनेति**। समाशब्दार्थः **संवत्सरेति**। तदर्धशब्दार्थः **पक्षेति**। अहर्ग्रहणमुपलक्षणमित्याह। **तिथीति**। प्रतिपदादिरित्यर्थः। अहःपदार्थो **दिनेति**। न तु रात्रिरित्यर्थः। नाम्नः साकाङ्क्षत्वेन प्रकृतत्वादाह। **अर्थीति**। **वेलेति**। दिनमध्येऽपि प्रातरादिर्मुहूर्तरूपो वा कालविशेष इत्यर्थः।

**क्षमेति**। प्रत्यर्थिविषये आसेधाद्यकरणं **क्षमा** सहिष्णुता, तत्र यानि **लिङ्गानि** कारणानि बाल्यजडत्वादीनीत्यर्थः[2]। तत्र मानमाह। **यथोक्तमिति**[3]। तथोक्तमिति पाठान्तरं। **नारदेनेत्यर्थः**। **अर्थवत्** प्रयोजनवत्। **धर्मसंयुक्तं**। धर्मो गुणः, अल्पाक्षरत्वप्रभूतार्थत्वादिकस्तेन संयुक्तम्। **परिपूर्ण**मध्याहारानपेक्षम्। **अनाकुल**मसंदिग्धाक्षरम्। **साध्यवत्** सिषाधयिषितार्थसहितं। **वाचकपदं** बहुव्रीहिः[4]। गौणलाक्षणिकादिपदरहितम्। **प्रकृतार्थानुबंधि** पूर्वावेदितार्थानुरोधि। **प्रसिद्धं**। लोकप्रसिद्धवस्तुविषयम्। **अविरुद्धं** पुरराष्ट्राद्यविरुद्धं पूर्वापराविरुद्धं प्रत्यक्षादिप्रमाणाविरुद्धं व्यावहारिक[5]धर्माविरुद्धञ्च। **निश्चितं** अर्थान्तरसंशयरहितम्। **साधनक्षमं**। साधनार्हम्। **संक्षिप्तं** अनतिविस्तृतम्। **निखिलार्थं** अनवशेषितवक्तव्यम्। **देशकालाविरोधि**[6]। मध्यदेशीयकमुकक्षेत्रं शरत्कालीनाम्रफलसहस्रं मदीयमपहृतमित्येवमादिशून्यम्। वर्षेत्याद्येकपदम्। प्रदेशपदान्त[7]द्वन्द्वान्मतुप्। **अहः** प्रतिपदादिर्वारो दिनं च। **वेला** प्रातरादिर्मुहूर्तरूपा च। **देशो** मध्यदेशादिः। **प्रदेशः** क्षेत्रादेः स्थलविशेषः। **स्थानेत्याद्यपि** एकं पदम्। वयःशब्दान्तद्वन्द्वस्य तृतीयातत्पुरुषः। **स्थानं** वाराणस्यादि। **आवसथो** ग्रामादिः, हट्टादि[8]रूपस्थलविशेषो वा। **साध्याख्या** विवादास्पदीभूतवस्तुनाम। **जाति**र्ब्राह्मणत्वादिः। **आकारो** गवाश्वादिगतो वर्णादिविशेषः, गृहक्षेत्रादेः संस्थानविशेषश्च। **वयः** गवादेर्वयःपरिमाणं बाल्याद्यवस्थाविशेषः। **साध्यप्रमाणसंख्यावत्**[9] प्राग्वत्। साध्यस्य प्रमाणं[10] क्षेत्रादेर्निर्वर्त्तनादिकम्। **संख्या** रूपकादीनाम्। **आत्मप्रत्यर्थिनामवत्**[11] स्पष्टम्। **परेति**। प्राग्वत्। **परः** प्रतिवादी। **आत्मा** वादी। तयोर्ये पूर्वजाः पित्रादयस्ते चानेकराजाश्चा[12]नेके राजानो भुक्तिकालिकास्तेषां नामभिश्चिह्नितम्। **क्षमालिंगात्मपीडावत्** क्षमा-

---

१ ग—हेतौ हेतुमाह। २ ग—बाऽल्पजडत्वादीनि तदादीनीत्यर्थः। ३ ख-ग—तथोक्तमिति, यथोक्तमिति पाठान्तरं। ४ ख—बहुव्रीहेः। ५ ख—व्यवहारिक। ६ ग—विशेपि। ७ ख—प्रदेशान्त। ८ क—हट्टादि। ९ ख—साध्यप्रमाणं। १० ग—आत्मविशेष: साध्यप्रमाणसंख्यावत्। ११ ख—आत्म। १२ ख—राजानश्च।

लिङ्गानि व्याख्यातानि, ( पृ० १० पं० १२ ) **आत्मपीडा** स्वदुःखं, तद्वत् । **कथितेति** । प्रतिग्रहादिनाऽधिगन्ता **आहर्त्ता** । दाता **दायकः** । कथितावाहर्तृदायकौ यस्मिन्वचने तत् कथितप्रत्यर्थिसम्बन्धकमिति वा । एतादृशं यद्राज्ञे कथ्यते तदित्याद्यर्थः ।

भाषापदार्थमाह । **भाषा[1]प्रतीति** । उ[2]त्तरार्द्धतात्पर्यमाह । **आवदनेति** । मात्रपदेन वर्षादिव्यवच्छेदः । अत एवाह । **समेति** । एतद्व्यवस्थामाह । **संवत्सरेत्यादिना** । संवत्सररूपविशेषणमित्यर्थः । **आधाविति** । तत्र पूर्वत्वादिज्ञानाय तदावश्यकत्वमिति भावः । इदमग्रे स्फुटीभविष्यत्यसाधारणव्यवहारमातृकाप्रकरणे । अन्यत्रापि तस्य फलमाह । **अर्थव्यवहारेऽपीति** । उपयुज्यते इत्यत्रान्वयः । द्रव्यस्वामी आह । **वत्सरान्तरे** इति । **इति** एवमर्थम् । **एवं** संवत्सरविशेषणवत् । पुनस्त्वर्थे । **तत्रैव** वाराणस्यादावेव । **निविष्टः** निष्पादितः । **संज्ञाचेति** । अर्थिप्रत्यर्थिनोरेवेति भावः । अधिवसतीत्य**धिवासः** । बाहुलकात्कर्तरि घञ् । 'अर्शआद्यजन्तं वा' ( व्या० सू० ५-२-१२७ ) अधिः समीपे इत्याह । **समीपेति** । तन्नामान्तरमाह । **कृष्णभूम इति** । " कृष्णोदक्पाण्डुत्यच्प्रत्ययो बहुव्रीहे[3]ः " । पित्रिति लुप्तषष्ठ्यन्तमित्याह । **पितुरिति** । एवमेव तत्र पाठो वा **नामे**त्यस्य सम्बन्धः । पित्रादेः साकाङ्क्षत्वादाह । **अर्थेति** । गुणानुकीर्तनानुपयोगात्प्रकृतत्वाच्चाह । **नामेति** । इतिरर्थसमाप्तौ । अनुगतफलितमाह । **समेति** । निर्धारणे षष्ठी । **एवम्** अर्थवदित्यादिना उक्तप्रकारेण ।

**उक्तमिति** । पक्षाभासलक्षणमित्यर्थः । **निराबाधमिति** । स्वपीडारहितमित्यर्थः । तदाह । **अस्मदिति** । निष्फलत्वस्य पृथगुक्तत्वादाह । **अभिधेयेति** । तत्र मानुषप्रमाणासम्भवादा[4]ह । **अल्पेति** । अयमुभयत्र हेतुः । भुक्तेस्तु सम्भ[5]व एव नेति भावः । अत एव दिव्याभावमाह । **अल्पेति** । विनिगमनाभावादाह । **पुरेति** । तत्राद्ये स्पष्टत्वात् द्वितीये मानमाह । **राज्ञेति** । यत्पदार्थो व्यवहारः । **प्रकृतीनां** जनानां नगरस्थानाम् । उपसंहरति । **अन्ये इति** । **इतीति** । प्राग्वत् व्याख्येयम् । अप्रसिद्धादीनां पक्षाभासत्वमिवानेकपदसङ्कीर्णपूर्वपक्षस्यापि तत्त्वमेव । अनेकैः पदैः सङ्कीर्णो यः पूर्वपक्षः प्रतिज्ञा सा न सिध्यति आभासरूपा भवतीति तदर्थप्रतीते[6]स्तन्निराकरोति । **यत्त्वित्यादिना** । तत्र पदशब्दः पद्यते ज्ञायते इति व्युत्पत्त्या किं वस्तुपरः, उत ऋणादानादिरूपव्यवहारविषयपरः । तत्र न तावदाद्ये पक्षाभासत्वमित्याह । **तत्रेति** । उक्तवचने इत्यर्थः । द्वितीयेऽपि तदभावमाह । **ऋणादानादिति** । निक्षि[7]प्तं मयेति शेषः । यत इति शेषोऽन्ते बोध्यः । वचनानर्थक्यपरिहाराय तस्याभिमतार्थमाह । **किं त्विति** । **क्रियेति** । साध्येत्यर्थः । एतावत् तत्रोच्यते इति शेषः । अत्र मानमाह । **यथाहेति** । **बहुप्रतिज्ञं[8]** बहुपूर्वपक्षकम् । अन्यथैतस्य वैयर्थ्यं स्पष्टमेव । तस्मादुक्तैव वचनयोर्व्यवस्था । तदेव द्रढयन्नुपसंहारव्याजेनाह । **तस्मादिति** । **तस्यार्थ इति** । उक्तवचनस्यार्थ इत्यर्थः । यथावेदितमर्थिनेत्यत्रार्थिपदस्वारस्येन लब्धमर्थमाह । **अर्थीति** । अर्थिनः पुत्रोऽप्यर्थी । तत्पिताऽप्यर्थी । आदिशब्दादर्थिनियुक्तादयोऽप्यर्थिन इत्यर्थः । अत एव तेषामन्यथावादित्वं निरस्तं ।

---

१ ख—भावाप्रतीतिः । २ ख—उत्तरतात्पर्यमाह । ३ ग—बहुव्रीहैः । ४ ग—सम्भवमादावाह । ५ ग—सर्वमेव नेति । ६ ग—प्रतीतेरिति प्रांचस्तन्निरा । ७ ख—स मयेति ८ ग—बहुसाध्यकम् ।

प्राक् " **यो न भ्राते** " त्यनेन वचनेन । ननु तत्पुत्रादेस्तदेकार्थत्वात्तत्वं युक्तं तन्नियुक्तस्य तु तदभावात्कथं तत्त्वमत आह । **नियुक्तस्यापीति** । तत्र मानमाह । **अर्थिनेति** । **तस्येति** वाच्ये **तयोरित्यस्य** तात्पर्यार्थमाह । **नियुक्तेति** ।

मूलानुक्तं विशेषमाह । **एतच्चेति** । अर्थिवेदितमित्यर्थः । **पाण्डुलेखेति** । " **खडी** " ति भाषाप्रसिद्धः । **आवापेति** । न्यूनाधिक्यपरिहाराय प्रक्षेपनिष्कासनाभ्यामित्यर्थः । युक्तं चैतत् । अन्यथा पत्राप्रामाण्यप्रसङ्गापत्तेः । तत्र मानमाह । **पूर्वेति** । स्वभावेनोक्तं न तु छलादिना । **ततस्तदनन्तरम्** । **तथा** । विशोधितं पत्रेऽभिलेखयेदित्यर्थः । शोधने विशेषमाह । **शोधनं-मिति** । **अवेति** । उत्तरेणावष्टब्धस्य पूर्वत्रादस्य शोधनं निवृत्तं भवेदित्यर्थः । **शोधये-दिति** । विधिसूचितमर्थमाह । **पूर्वपक्षमिति** । **रागादिति** । प्रागुक्तमिदम् । इतीत्यस्य बोध्य-मिति शेषः ॥ ६ ॥

## याज्ञवल्कीये ७ श्लोकः

प्रत्यर्थिनो वचनस्य उत्तरत्वे बीजमाह । **पूर्वेति** । **उत्तरत्र** अग्रे । तदीययथाकथञ्चिद्वचनस्यानुत्तरत्वाय विशेषमाह । **उत्तरं चेति** । **तद्विदः** । व्यवहारविदः । **सार**मित्यस्यार्थो न्याय्यम् । तदर्थो **न्यायादिति** । तृतीयान्तानां त्रयाणां यद्याख्येयार्थमित्यत्रान्वयः । **दुः-श्लिष्टेति** । **अश्लिष्टेति** पाठान्तरम् । **श्लिष्टं** सम्बन्धयुक्तम् अदुष्टमिति यावत् । न श्लिष्टमश्लिष्टं असम्बद्धं दुष्टमिति यावत् । विभक्तिश्च समासश्च विभक्तिसमासौ । अश्लिष्टौ दुष्टौ च तौ विभक्तिसमासौ च तौ अध्याहारेण सह वर्त्तत इति साध्याहारं, तौ च तच्च तानि । तैरभिधानं तेनेत्यर्थः । **दुःश्लिष्टेति** पाठेऽप्येवम् । दुःश्लिष्टौ दुःखेन सम्बद्धौ यौ तौ ताभ्या-मित्यर्थत्वाद्दुष्टत्वे पर्यवसानात् । **अदेशेति** । अन्यदेशेति पाठान्तरम् । उत्तरपदार्थमाह । **तत्सदुत्तरमिति** । **प्रत्ययेति** । कारणोत्तरमित्यर्थः । **मह्यमिति** । धारेरुत्तमर्ण इति सम्प्रदा-नत्वम् । **सत्येति** । सत्यत्वोक्तिरित्यर्थः । **प्रतिपत्तिरिति** । प्रतिपत्तिः सम्प्रतिपत्तिः सत्योत्तर-मित्यनर्थान्तरम् । **नाहमिति** । वाद्युक्तिः पूर्ववत् । एवमग्रेऽपि ।

द्वितीयभेदानाह । **तच्चेति** । **मिथ्यैतत्** नाहं धारयामीत्येकं । **नाभिजानामि** नैव जानामीति द्वितीयम् । **तदेति** । तस्मिन्काले तस्मिन्देशे मम सान्निध्यमेव न स्थितमिति तृतीयम् । **अजात इति** । तत्काले ममोत्पत्तिरेव न स्थितेति चतुर्थम् । एवं प्रकारेण मिथ्योत्तरं चतुर्विधमित्यर्थः । अत्र स्पष्टत्वात्स्मृतिरेवोक्ता । पृथक् सङ्कीर्तनं न कृतमिति बोध्यम् । **नाम** त्वर्थे । विनिगमनाविरहादाह । **प्रतिग्रहेणेति** । **लेखितः** ण्यन्तस्य रूपम् । प्रत्यर्थी यदि तं पत्रारूढीकृतमर्थं **तथा प्रपद्य** तथैवाङ्गीकृत्येत्याद्यर्थः । **आचारेणेति** । व्यवहारेण पराजितोऽपीत्यर्थः । जितः पूर्वमित्येवं स वाच्य इत्यर्थः । **सः** तथोक्तिरूपः ।

स्मृत्यन्तरमाह । **यद्यस्तमिति** । **तत्र** । एकादशानां मध्ये । **पञ्चाशतमिति** । अर्धन्यून-

१ ग—शोधनं चेति । २ क—अवेति; ख—अथवेति । अत एवेति । ३ ख—तृतीयांतं ४ ख—ताभ्यां सेत्यर्थत्वात् ।

तयाऽल्पत्वम् । अत एव द्वैगुण्येनातिभूरित्वमाह । द्विशतमिति । समाहारे द्विगुः । पात्रादित्वात्स्त्रीत्वाभावः । पक्षैकेति । श्लोके तथाशब्दश्चार्थे । अन्यत् । पक्षैकदेशव्यापि चेत्यर्थः । पक्षैकदेशनिराकरणसमर्थेत्यर्थः । व्यस्तेति । असम्बद्धपदकमित्यर्थः । पक्षैकदेशव्यापिनोऽनुत्तरत्वे सकलपक्षाऽव्यापिनोऽनुत्तरत्वमर्थसिद्धमेवेत्यव्यापीत्यन्यथा व्याचष्टे । देशेति । मध्येति । विन्ध्यहिमाचलयोर्मध्ये इत्यर्थः । लिखिते इति । अन्तर्भावितण्यर्थमिदम् । गुप्तार्थमाह[3] । अत्रेति । ध्वनिना । किमादिबोध्येन । तथाकुलमिति पाठो न तु निराकुलमित्यभिप्रेत्याह । आकुलमिति । दुःश्लिष्टेति । प्राग्वत् (पृ. १२ पंक्तिः १५) । उभयोदाहरणमाह । यथेति[6] । पित्रिति । पितुर्यो ऋणाभियोगस्तत्रेत्यर्थः । उत्तरमाह । गृहीतेत्यादि । इतीत्यन्तेन । अस्य तात्पर्यार्थमाह । अत्रेति । गृहीतेति । बहुव्रीहिः । तथा च गृहीतशतवचनादित्यत्र दुःश्लिष्टः समासः सुवर्णानामित्यत्र शतं गृहीतमित्यस्याध्याहार इत्युभयोरेकमेवोदाहरणम् । इतीत्यस्य विवक्षितमिति शेषः । उभयोरुदाहरणमाह । गृहीतमिति । अत्रेति शेषः । ईदृशं यदुत्तरं तत् स्वार्थसिद्धये नेति द्वितीयश्लोकार्थः । तथा च तस्य सदुत्तरत्वमेव नेति पूर्वश्लोकवाक्यतेति बोध्यम् ।

अभिमतार्थसूचकतया न न्यूनतेत्याह । उत्तरमिति । श्रुतार्थस्योत्तरं लेख्यमित्यत्र तथा निर्देशात्संऽकीर्णोत्तरस्यानुत्तरत्वमित्यर्थः । ननु त्रिभिर्मिलित्वा पक्षस्य निराकरणेन तत्समर्थत्वात्कुतोऽनुत्तरत्वमत आह । अनुत्तरत्वेचेति । तेनैव कात्यायनेनैव । न चेति । नहीत्यर्थः । स्यादिति । संभावनायां लिङ् । वादिनोः । अर्थिप्रत्यर्थिनोः । एकत्र । अन्यतरस्मिन् संभवतीति शेषः । सङ्करस्यानेकविधत्वादादौ द्वयोः सङ्करे आद्योदाहरणमाह । मिथ्येति । वादिनोरित्यस्यार्थमाह । अर्थीति । न वादिद्वयपरत्वमिति सूचयितुं । मिथ्येति[10] । अव्ययमिदं मिथ्योत्तरे इत्यर्थः । पूर्ववादे कर्मण्यण्, वादिनीत्यर्थः । कारणे । कारणोत्तरे । विरुद्धमिति । तथा च कर्तुमशक्यत्वादुभयोर्नार्थसिद्धिरिति भावः । न चार्थेति चोक्त एवेत्यर्थे । न चैकत्रेत्यस्य तत्रैवोदाहरणमाह । कारणेति । तयोर्मिथः संकरेत्वित्यर्थः । एवेनार्थिव्यवच्छेदः । प्राङ्न्यायेति । तयोरुक्तावित्यर्थः । नेदं प्रत्येकपरम् । कारणांशे "कारणे प्रतिवादिनी" ति सिद्धत्वात् । तस्मात्तत्साङ्कर्यपरमेवेदम् । अत एव समासनिर्देशसङ्गतिरपि । इतिः प्राग्वत् । नन्वत्रैकस्यैव क्रिया न द्वयोरिति न प्राग्विरोधोऽत आह । अत्रचेति[11] । द्वितीयसङ्करेत्वित्यर्थः । स्मरणादिति शेषः । भावेति । साधयितव्यमेतैः कृत्वेत्यर्थः । आदिना दिव्यपरिग्रहः । उत्तरत्रयेति । मिथ्याकारणप्राङ्न्यायरूपेत्यर्थः । एवं चतुरिति । यथा अनेन सुवर्णं रूपकशतं वस्त्राणि धान्यं च गृहीतमित्यभियोगे, सुवर्णं धारयामि, रूपकशतं न गृहीतं, वस्त्राणि प्रतिग्रहेण लब्धानि, धान्यविषये पूर्वन्यायेन पराजित इति । एवं मिथ्याप्राङ्न्यायसङ्करेऽपि द्रष्टव्यम् ।

१ ख—पदरूपम् । २ ग—गुप्तार्थमिदम् । ३ क—गुह्यार्थं । ४ ग—कुलमितीत्यभिप्रेत्य । ५ ख—आद्योदाहरणमाह । ६ ख—तथा कुलमिति पाठे न तु । ७ ग—तत्रेति । ८ ग—इदं वा । ९ ख—अनेकत्वादादौ । १० ग—अमिथ्येति । ११ ख—वेति । १२ ख—पाठः ।

नन्वत्र सर्वत्र क्रमेण क्रियाद्वयस्य सुकरत्वात्**कात्यायनो**क्तमसम्भवरूपं तत्कारणकथनमयुक्तमतस्तदाशयमाह । **एतेषां चेति** । असिद्धेरिति च्छेदः । अत एवैतत्फलितमाह । **क्रमेणेति** । क्रमेणत्वित्यर्थः । तत्र नियामकाभावादाह । **क्रमश्चेति** । **चेन** प्राड्विवाकादेः समुच्चयः । एवं प्राप्ते क्वचिन्नियामकमाह । **यत्रेति** । यत्रत्वित्यर्थः । **उभयोरिति** । मिथ्याकारणोत्तरयोरित्यर्थः । इदमुपलक्षणं **न्यादे**रपि । **यस्य** । उत्तरस्य । **परत्वं** । रूपत्वं । **तत्क्रियोपेति** । तत्साधकक्रियाग्रहणेनेत्यर्थः । **पश्चादिति** । अल्पविषयकोत्तरसाधकक्रियाग्रहणेनेत्यर्थः । सत्योत्तरसङ्करस्य पूर्वमनुपन्यासे बीजं ध्वनयन् तत्र नियामकान्तरमाह । **यत्र चेति** । फलाभावेन पश्चादपि तदभावादत्र पूर्वमिति नोक्तम् । तदाह । **सम्प्रेति** । उक्तनियामकद्वये मानमाह । **यथेति** । उक्तमित्यत्रान्वयः । द्वितीयमाह । **सत्यंवापीति** । **यद्** उत्तरम् । द्वितीये आह । **यत्र वेति** । उत्तरे इत्यर्थः । तत्र तदुत्तरमसङ्कीर्णं ज्ञेयमित्यर्थः । **अतोऽन्यथेति** । यत्प्रभूतार्थविषयकमुत्तरं न भवति अपि तु समार्थविषयकं, यत्र चोत्तरे क्रियाफलमुभयत्र भवति तत् । **अतः** । पूर्वोक्तात् । **अन्यथा** । प्रकारान्तरमित्यर्थः । तत्त्वमेव कथयन् तदर्थमाह । **सङ्कीर्णमिति** । वाक्यपूर्तये आह । **भवतीति शेष इति** । अत्रापि संकीर्णत्वादनुत्तरत्वमेव सर्वथा नाभिमतं किं तु यौगपद्येन तत्त्वम् । अर्थ्यादीच्छाक्रमेण तु तत्त्वमेवेति प्रागुक्तमेवाह । **ऐच्छिकक्रममिति** । तदर्थमाह । **अपेक्षाक्रममिति** । अर्थ्याद्यपेक्षाक्रमकं भवतीत्यर्थः । पुंलिंगपाठे तत्पुरुषः । तत्रेति शेषः । **तत्र** । तयोर्मध्ये । द्वितीयोदाहरणमाह । **तथेति** । **तस्मिन्नेवेति** । अनेन सुवर्णं रूपकशतं वस्त्राणि च गृहीतानीति पूर्वोक्ते एवाभियोगे इत्यर्थः । तानीति शेषः । **दास्यामीत्यस्य** इत्युत्तरस्येति शेषः । **इति चोत्तरे** । इत्यन्यतमोत्तरेण साङ्कर्ये । तथा चात्र दास्यामीत्यन्तस्य सत्योत्तरस्य यथाक्रमं मिथ्योत्तरेण कारणोत्तरेण प्राङ्न्यायोत्तरेण च सङ्करो बोध्यः । सङ्कीर्णोत्तरे विषयसाम्ये ऐच्छिकः क्रमस्तद्वैषम्येऽप्यधिकविषयोपादानेन प्राग्व्यवहार इत्युक्तम् । तत्र द्वितीयस्यापवादमपि प्रसङ्गात्सूचयन् प्रकृतमाह । **सम्प्रतीति** । एतदर्थमेव तस्मिन्नेवाभियोगे इत्युक्तम् । अन्यथाऽभियोगान्तरमेव वदेत् । **मिथ्याद्युत्तरेति** । मिथ्याद्यन्यतमोत्तरेत्यर्थः ।

एवं तादृशसङ्कीर्णोत्तरस्य यौगपद्येन सर्वथाऽनुत्तरत्वे प्राप्ते क्वचित्प्रतिप्रसवमाह । **यत्रत्विति** **शृङ्गग्राहिकयेति** । तन्न्यायेनेत्यर्थः । **कश्चित्** । वादी । **अन्यः** । प्रतिवादी । **उत्तरमिदं** । आदावुत्तरत्वं साधयति । **इदमिति** । **तावत्** । आदौ । तत्वस्यैवोत्तरत्वस्य प्रागुक्तत्वादाह । **पक्षेति** । साङ्कर्यं प्रतिपादयति । **नापीति** । एवेनान्यव्यवच्छेदः । तथा चासाङ्कर्यम् । **कारणं** कारणमेव । एकदेशस्य ग्रहणस्य साङ्कर्यमुपसंहरति । **तस्मादिति** । **सकारणमिति** । अत्र कारणस्याप्राधान्यं मिथ्योत्तरस्य प्राधान्यं तस्य तदुपपादकत्वस्यापि सम्भवात् । अत एव तत्र सहयोगे तृतीया कृता । प्रागुक्तबाधकस्यात्राभावमाह । **अत्र चेति** ।

प्रतिवादिना तस्यैव उक्तमभिप्रेत्य प्रधानन्यायादरेण शङ्कते । **नन्विति** । परिहरति । **नेति**

---

१ ख—चेति । २ ग—नियमकमाह । ३ ख—न्यासबीजं । ४ ग—युक्त । ५ ख—तानीत्यस्येतिशेषः । दास्यमिति । ६* ग—हीनादीत्यस्येति शेषः । ७ ख—एकदेशादाह पक्षस्येति । ८ ख—कारणस्याप्यप्राधानं ।

तत्र हेतुमाह । **तस्येति** । वचनस्येत्यर्थः । तुल्ययुक्त्याशङ्कते । **कारणे इति** । एवं चानुत्तरत्वमेवैतस्येति भावः । ननु शुद्धकारणोत्तरं प्रागुदाहृतं प्रसिद्धमेवेति तदभावोक्तिरयुक्ताऽत आह । **प्रसिद्धेति** । सत्यं गृहीतं प्रतिदत्तं चेत्येवंरूपे प्रागुक्तेऽपीत्यर्थः । **प्रतिज्ञातार्थैकेति** । ग्रहणस्येत्यर्थः । **नैकेति** । [1]साधारणस्येत्यर्थः । उदाहरणेनेदं विशदयति । **यथेति** । **प्रकृतोदेति** । अन्यस्तु मिथ्यैतत् [2]मत्प्रदर्शितकालादित्यादि पूर्वोक्त इत्यर्थः । **देशस्येति** । तस्यापीत्यर्थः । (क्वचित्तथापाठएव) । **विशेष इति** । मिथ्या सहचरितरूपत्वं तूभयत्र समानमिति भावः । [3]एवं सिद्धेऽर्थे मानमप्याह । **एतच्चेति** । **वापीति** । अनेन त्रि[4]सांकर्येऽपि कारणमेव ग्राह्यमिति दर्शितम् । प्रतिप्रसवान्तरमाह । **यत्रेति** । यत्रचेत्यर्थः । एवमुत्तरत्वे साधिते तन्निर्वाहोपायमाह । **अत्रापीति** । **मिथ्याक्रियेत्यस्य** शुद्धमिथ्याविषयत्वादाह । **प्रतीति** । [5]एतेन वादिव्यवच्छेदः । अत एवाह । **प्राङ्न्यायेति** । नन्विदं कारणप्राङ्न्यायसङ्करविषयतया पूर्वमुक्तमिति कथमत्र प्रवृत्तिरत आह । **शुद्धेति** । [6]अन्यथेति शेषः । तथा च संकीर्णत्वात्तत्वप्रसङ्गो, न च तद्युक्तं पक्षव्यापित्वादिति भावः । यद्वा शुद्धस्य प्राङ्न्यायस्याभावाद्वचने क्रियाबोधकेऽपाठात्तत्र कस्यापि क्रियाया [7]अलाभेन सर्वस्यापि प्राङ्न्यायस्यानुत्तरत्वप्रसङ्गो, न च तद्युक्तं तत्र तस्य गणनात् । तथा च यथा तयोस्तत्र[8] तस्य प्रवृत्तिस्तथा कारणस्य मिथ्यासहचरितरूपत्वात् सांकर्ये शुद्धप्राङ्न्यायस्य प्रवृत्तिरिति भावः । शुद्धप्राङ्न्याये तु वक्ष्यति व्याख्याकृत् **प्राङ्न्यायविधिसिद्धौ त्विति** ।

ननु पक्षनिराकरणसमर्थस्यैवोत्तरत्वे संप्रतिपत्तेरनुत्तरत्वप्रसङ्गस्तदभावादत आह । **संप्रतिपत्तेरपीति** । उत्तरत्वमित्यत्रान्वयः । **नोपेति** । प्रत्यर्थिनेति भावः । एवं यत्र प्रतिवादिन एकक्रियास्थले उक्त्वा तस्यैव क्रियाद्वयप्रसंगो यत्र प्रागुक्तस्तत्र विशेषं प्रतिपादयन्प्रतिप्रसवान्तरमाह । **यदा त्विति** । यदाऽपीत्यर्थः । **तत्र** । तत्रापि । **यथारुचीति** । तस्यैव तयोर्मध्येऽन्यतरक्रियेत्यर्थः । संकीर्णोत्तरस्य युगपदनुत्तरत्वमुक्तमुपसंहरति । **इति न क्वचिदिति** । **निवेशिते** । लेखिते[9] । प्रागुक्तव्युत्पत्तेराह । **साध्यवानिति** । स्पष्टार्थमाह । **प्रतीति** । भावेऽर्थासङ्गतेरिष्टासिद्धेश्चाह । **साध्यत इति** । 'प्रमाणं लिखिता' दि वक्ष्यमाणं । पूर्वत्र न्यूनतां निराचष्टे । **अत्रेति** । *अपिना सद्यः । मिथ्याक्रियेति प्रागुक्ता[10]र्थस्य मूलारूढत्वं सूचयन्नर्थिशब्दस्यात्र यौगिकत्वं न योगरूढत्वमिति सूचनद्वारा न्यूनत्वाभावं प्रतिपादयति । **अर्थीति** । वर्त्तमानसत्तोपाधिकान्मतुबाद्युत्पत्तेराह । **अस्तीति** । **अपि**[11]शब्दः पूर्वसमुच्चये तेन साम्यम् । **तु**र्वैलक्षण्ये । **निर्दिशेत्** । लेखयेत् । ण्यर्थान्तर्भावः प्राग्वत् । अन्यदप्याह । **तथेति** । **अर्थो**[12]**वेति** । आक्षेपादेव कर्तृलाभे तदुक्तिर्नियमार्थेति भावः । **अतश्चेति** । गम्यते इत्यत्रान्वयः ।

---

१ ख—असाधारणस्य । २ ख ग—एतत्प्रदर्शित । ३ क—एव । ४ ख—त्रिभिरपि सङ्करे । ग—त्रिसांकर्येऽपि । ५ ख—एवेन । ६ ख—अत्रेति । ग-अन्यथा अत्रेति । ७ ख ग—अभावेन । ८ ख—पाठः । ९ ख—लिखिते । १० ख—प्रागुक्तस्यार्थस्य । ११ क—अपिः । १२ ग—अर्थ्येवेति ।

* कालविलम्बनमपि इति मिताक्षरास्थेन अपिशब्देन सद्य इत्यर्थो बोध्यः । उत्तराभिधाने कालविलम्बनमङ्गीकृतं न तु शीघ्रमुत्तरदानस्यानङ्गीकार इति भावः ।

**तावतैव** तादृशोत्तरदानेनैव। अत्र सर्वत्र मानमाह । **एतदेवेति** । अर्थीत्यादिनोक्तमेवेत्यर्थः । **प्राङ्न्यायेति** । अस्याशय उक्तः । वादी तु क्रियां निर्दिशेत् । **सा** । क्रिया ॥ ७ ॥

## याज्ञवल्कीये ८ श्लोकः

**ततः** । साधनलेखनोत्तरम् । **प्रकारान्तरे** इत्यस्य व्याख्या **साधनसिद्धाविति** । **एवं** व्यवहारतद्विषयादिकथनप्रकारेण । **रूपं** । स्वरूपं । व्यवहारपदार्थं स्पष्टार्थमाह । **व्यवहारेति** । **सोऽयं** । व्यवहारोऽयम् । **इत्थम्** । उक्तप्रकारेण । मुख्यपादत्वासम्भवादाह । **चतुरंशेति** । ऋणादानादिषु वक्ष्यमाणेषु विषये । तानेवांशान्विभज्य दर्शयति । **तत्रेति** । तेषां मध्ये इत्यर्थः । **विप्रतिपत्तिषु** सतीषु । अस्य न सार्वत्रिकमित्याह । **संप्रतीति** । अनिर्देशे हेतुमाह । **भाषार्थेति** । **चो** [1]लक्षण इत्यग्रे प्रयोज्यः । तेन साधनक्रियापादसमुच्चयः । यद्वा चो हेतुसमुच्चये एव । **लक्षणः** । लक्षणोऽपि । क्वचित्तथा पाठ एव । अतएवाह । **द्विपात्त्वमेवेति** । न्यूनतां निराचष्टे । **उत्तरेति** । **अर्थिप्रत्यर्थिनोः** । मध्ये इति शेषः । **प्रत्येति** । पौनःपुन्येन विचारणस्येत्यर्थः । अस्य व्यभिचरितत्वादाह । **व्यवेति** । अर्थ्यादिसम्बन्धिन एव तत्त्वमिति भावः ॥ ८ ॥

इति साधारणव्यवहारमातृका ।

---

# अथ असाधारणव्यवहारमातृकाप्रकरणम् ॥ २ ॥

## याज्ञवल्कीये ९ श्लोकः

प्रकृते योगरूढत्वमर्थान्तरनिरासायाह । **अभियुज्यते** इति । दोषविषयीक्रियते इत्यर्थः । येनेति शेषः । करणे घञः सौलभ्यात् । यथाश्रुतं वा । सम्बध्यते इति तदर्थात् । **एन**मित्यत्र कथितानु[2]कथनसत्त्वेनान्वादेशविषयत्वादेनादेशः । अपराधेनेत्यस्य विशेषपरत्वाय शङ्कते । **यद्यपीति** । सत्यं गृहीतं प्रतिदत्तश्चेति कारणोत्तरस्थाने न दत्तं स्थितं मया पुनर्दत्तमित्येवं प्रत्यभियोगरूपत्वमित्यर्थः । **विषयत्वमिति** । तथा चाभियोगनिवारकमेव प्रत्यभियोगं कुर्यादेव न तदनिवारकम् । अन्यथा सत्यं मिथ्योत्तरमित्यादिना चातुर्विध्यकथनस्यैवासङ्[3]गत्यापत्तेरेतन्निषेधवैयर्थ्यापत्तेश्च । तदाह । **अत इति** । **अनुपमर्देनेति** । करणे ल्युट् । **निषेध इति** । नैनं प्रत्यभीति निषेध इत्यर्थः । तथैव सम्भवादाह । **इदमिति** ।

भूते कर्मणि निष्ठायां तन्निस्तारे [4]जाते तस्येष्टत्वेनासङ्गतिं परिहरति । **अनिस्तीर्णेति** । भावनिष्ठान्तान्मत्वर्थीयोऽजिति भावः । [5]अन्येनेत्यस्य पूर्वाभियोगे सम्बन्धात् योग्यतया शेषमाह । **अन्योऽर्थीति** । प्रतीत्यस्य सम्बन्धायोग्यत्वात्तमपहायाह । **नाभीति** । नोक्तमित्याद्युक्तिरप्यानन्तर्यादर्थिनं प्रत्येवेत्याह । **किं चेति** । प्रकृतिशब्दः स्वभावार्थको 'दुस्त्यजा प्रकृतिरि-

---

१ **ख**—उपलक्षण इत्यग्रे योज्यः । २ **ग**—कथितानुकथनसत एव तत्वमिति भावः । ३ **क**—सङ्गत्यापत्ते । ४ **ख**—याते । ५ **ग**—अभं नेत्यस्य ।

त्यादौ ' दृष्टः । शङ्कितुमेतत्तात्पर्यार्थमाह । **एतदिति । तथैवेति** । अन्यथाऽन्यथावादित्वेन भंगप्रसङ्गादिति भावः । इदं प्रतिपादितमधस्तात् । **अपिः** तस्यैव समुच्चये । एवमग्रेऽपि । अत एवाह । **नन्विति । तदेवेति** । तथा च वस्त्वन्तरकथननिवृत्तिस्तेन क्रियते । **एकस्मिन्नपि पदे** । ऋणादानादिव्यवहारविषये इत्यर्थः । **एवव्यवच्छेद्यमेवाह । न वस्त्वन्तरमिति** । तदेवोदाहरणकथनेन विशदयति । **यथेति** । यद्यपि ऋणादाने रूपकमेव व्यवहारविषयो भवति, तथापि रूपकशतस्थाने वस्त्रशतोक्त्या वस्त्वन्तरोपादानमिति तन्निषेधस्तेन क्रियते इति भावः । एतेन शतरूपस्य विषयस्यैकत्वादयुक्तमिदमित्यपास्तम् । प्रागुक्तं दार्ढ्याय स्मारयति । **तथा सतीति । पदान्तरगमेति** । विषयान्तरं प्रत्यगमनेऽपीत्यर्थः । अत्र प्रकरणे पदशब्दो विषयवाची । **इत्यनेन** इत्यनेन तु । **यथेति** । अत्र रूपकशतरूपवस्तुन एकत्वेऽपि ऋणादानापहरणरूपयोर्व्यवहारविषययोर्भिन्नत्वेन तद्गमनमनेन नोक्तमित्यनेन निषिध्यते इत्यर्थः । उक्तमेव स्पष्टार्थमुपसंहरति । **तत्रेति** । प्रत्यर्थिन इत्यत्रेत्यर्थः । वैपरीत्याशङ्का तु न । " यथावेदितं, नोक्तं विप्रकृति " मित्येतत्स्वारस्यात् ।

तत्राद्ये मानस्योक्तत्वात् द्वितीये तदाह । **एतदेवेति** । द्वितीयमुक्तमेवेत्यर्थः । **पदसंक्रेति** । पदान्तरं प्रतिगमनाद्वस्त्वन्तरगमनाच्चेत्यर्थः । **वादेति** । पाठान्तरम् । तत्र साधारण्यमस्य बोध्यम् । **आद्ये** तु प्रकृतपरत्वमेवेति तत्त्वम् । ' हीनवादी दण्ड्यः स्यादित्युक्तं ' सविशेषं विशदयति । **हीनेति** । दण्ड्य एवेत्यर्थः । अत एवाह । **न प्रेति** । वचनस्थक्रमेणाह । **प्रत्येति । सिद्ध्यसिद्धीति** । हीनत्वादित्वे प्रकृतार्थासिद्धिरतथात्वे तत्सिद्धिरित्यर्थः । अत्र मानमाह । **अत एवेति** । मूलकृदिति शेषः । अस्यार्थोऽग्रे एव स्फुटः । इदमपि न सार्वत्रिकमित्याह । **एतच्चेति** । हीनवादी दण्ड्य एव, न प्रकृतार्थाद्धीयते इत्येतदित्यर्थः । **अर्थेति** । उक्तविषयव्यवहारे एवेत्यर्थः । **मन्युकृते त्विति** । वाक्पारुष्यदण्डपारुष्यादिव्यवहारे इत्यर्थः । **अपिना** दण्डसमुच्चयः । तथा चैवंविधे वाक्छले व्यवहारहानिर्दण्डश्चेति भावः । उक्तार्थस्य स्पष्टतयाऽभासादाह । **अस्यार्थ इति** । अर्थपदव्यावर्त्यमाह । **न मन्युकृतेष्विति** । अन्यत्र तस्य स्पष्टत्वादेवाह । **अपीति** । **नावसीदती**त्यस्य व्याख्या । **न पराजीयते इति** तद्व्याख्या । **न प्रकृतादिति** । उत्तरार्द्धस्यासम्बद्धत्वं पुनरुक्तत्वं च परिहरति । **अत्रोदेति** । सामान्योक्तौ विशेषोक्तिर्दृष्टान्त इति भावः । तत्त्वं योजयति । **प्रमेति*** । शास्यपदार्थौ । **दण्ड्योऽपीति** । उदाहरणत्वादेवाह । **यथेति** । शेषपूरणमनयोरिति भावः । अत एव **वाक्छले** इति सप्तम्यन्तच्छेदो न तृतीयान्त इति बोध्यम् । अत एव च वैपरीत्यशङ्का नेति गूढाकूतं । एवं शाब्दमाद्यार्थमुक्त्वा द्वितीयमर्थपदध्वनितमाह । **अर्थेति । श्वानेनेति** । तृतीयान्तं न प्राग्वत्सप्तम्यन्तम् । सूचितस्योदाहरणमाह । **यथाऽहमिति** ॥ ९ ॥

१ ख ग—स्मरति । २ ग—त्वेऽपि द्वितीयसाधारणं तदाह । ३ ख—विषयोक्ति । ४ ख—पदेति । ५ ख—गूढं कूतं । ६ ग—शब्दमाद्यर्थं ।

* प्रमादाभिधानेनेति ।

## याज्ञवल्कीये १० श्लोकः

सङ्गतिमाह । **अभीति** । **इत्यस्येति** । इत्यंशस्येत्यर्थः । तथा च प्रत्यर्थिविषये एवायमपीति भावः । **निमित्तेति** । बहुव्रीहिः । ननु साहसादावपि प्रत्यभियोगासम्भवेऽभियुक्तस्य कथं तत्करणविधिरत आह । **प्रत्यभीति** । तथा च तदसम्भवेनैव कुर्यादिति सम्भवाभिप्रायकमेवैतद्वचनमिति भावः । **स्वाभीति** । स्वयमभियुक्त इत्यादिः । तथा चेदं साहसादावेवेति, तदन्यविषयकं तदिति भावः ।

नन्वेवंविधस्थले प्रत्यभियोगः किमुत्तरं सत्सार्थकः, असार्थकः, उत प्रतिज्ञान्तरं सत् । नाद्यः, पूर्वपक्षनिराकरणासमर्थत्वेनानुत्तरत्वात् । नान्त्यः, अभियोग एका प्रतिज्ञा प्रत्यभियोगश्चान्या । ततश्च सङ्कीर्णोत्तरे यथा युगपद्व्यवहारासम्भवादनुत्तरत्वमेवं प्रतिज्ञान्तरेऽपि तदसम्भवस्य तुल्यत्वात् । अप्रतिज्ञात्वेन प्रत्यभियोगविधेरेव वैयर्थ्यात् । एवं च वचनार्थो दुर्वच इत्याशयेन शङ्कते । **नन्वत्रापीति** । द्वितीयपक्षमाश्रित्य समाधत्ते । **नात्रेति** । तत्राद्योदाहरणमाह । **अनेनेति** । **दण्डेति** । प्रत्यभियोक्तुरिति भावः । एवमुक्ततात्पर्ये मानमाह । **यथाहेति** । **आक्षारयेत्** । कायेन वाचा वा क्षीणं कुर्यात् । **नियतं** । निश्चयेन । **नयो** । दण्डः । द्वितीयोदाहरणमाह । **यदा पुनरिति** । यदा त्वित्यर्थः । **पारुष्ये इति** । वाग्दण्डेत्यादिः । अत एव सामान्योक्तिः । इदमेव तत्र कलहपदेनोक्तम् । एवञ्च तदेकवाक्यतया तस्यैकं एव आशयस्तदेतदभिप्रेत्य प्रागुक्तमुपसंहरति । **एवमिति** । उक्तप्रकारद्वयेनेत्यर्थः । **एवं सतीति** पाठान्तरम् । उक्तवचनस्यैवंतात्पर्यकत्वे सतीति तदर्थः ।

अव्यवहितसङ्गत्यभावादाह । **अर्थीति** । शेषं विशेषाभावादाह । **सर्वेष्विति** । कार्यस्य निर्णय इत्यर्थेऽर्थासङ्गतेराह । **निर्णयस्येति** । **तस्मिन् समर्थ इति** । द्विविधदाने समर्थ इत्यर्थः । मालजामिन इति भाषाप्रसिद्धोऽयम् । अनेनातादृशस्यातत्त्वमुक्तम् । प्रतिभूशब्दो योगरूढ इत्याह । **प्रतीति** । प्रतिः प्रतिनिध्यर्थक इत्याह । **तद्वदिति** । प्रकृतत्वादाह । **ससभ्येनेति** । शेषोऽयं ग्राह्यपदान्यथानुपपत्तेः । अनुक्तं विशेषद्वयमाह । **तस्येति** । प्रतिभुव इत्यर्थः । उभयत्र मानमाह । **यथाहेति** । **अथेति** । पक्षान्तरे । तत्र समर्थ इत्यर्थमाह । **कार्येति** । **वादिन इति** । द्वयोरेकशेषः । जातावार्षं वा एकवचनम् । तेन वादित्वेन अर्थिप्रत्यर्थिनोः समासेन ग्रहणम् । एवमग्रेऽपि । **रक्षितः** भृत्येन । इदमुपलक्षणं तस्यापि इति केचित् । वादित्वमुभयोरपीति प्रत्येकाभिप्रायमेकवचनमित्यपरे । **तुश्चार्थे** व्युत्क्रमे च । वादिनश्चेत्यर्थः । **चेन** तत्संग्रह इति परे ॥ १० ॥

## याज्ञवल्कीये ११ श्लोकः

**निर्णयकार्यमुक्तरूपं** स्वयमुक्तं समूलयति । **अर्थीति** । **किमिति** । तत्रेत्यादिः । योग्यतयोपस्थितत्वाच्चाह । **प्रकृतमर्थिन इति** । **तत्सममिति** । प्रकृतधनसममपलापनिमित्तकद-

---

१ ख—विषयके । २ प्रत्यभियोगे चान्येति युक्ततरः पाठः । ३ ख ग—तस्योक्त । ४ ख—सन्तीति । ५ 'तथाहेति' मिताक्षरापुस्तके पाठः । ६ ख—वचनमित्यपारमिति परे ।

ण्डमित्यर्थः । **जात इतीति** । **स इति** शेषः । अभियोगादित्यत्र 'कर्मणि घञ्' इत्याह । **अभियुक्तेति** वहेदित्यस्यार्थः । **दद्यादिति** योग्यतया तदनुषङ्गेणाह । **राज्ञे इति** । मिथ्योत्तरविषये उक्तन्यायमन्ययोरप्यतिदिशति । **प्राङ्न्याये** इति । तत्प्रकारमाह । **तत्रार्थ्येवेति** । [1]अस्मिन्नर्थेऽयं पूर्वं पराजित इति प्राङ्न्यायोत्तरे, गृहीतं प्रतिदत्तमिति कारणोत्तरे च दत्ते, पूर्वन्यायं प्रतिदानं च प्रतिज्ञावाधेवापलपतीति स एव अपलापवादीत्यर्थः । **भावित इति** । पराजयरूपप्राङ्न्यायस्य प्रतिदानस्य च साधनादङ्गीकारितो वादीत्यर्थः । **दण्डं** दण्डमेव । अन्यस्य देयस्याभावात् । **मिथ्याभियोगीति** । मिथ्यावादीत्यर्थः । **इतिर्हेतौ** । मिथ्यावादित्वेनेत्यर्थः । **द्विगुणमिति** । प्रकृतधनेत्यादिः । **धनं** । दण्डरूपमवशिष्टं । तुर्योत्तरे तु नैवमतिदेश इत्याह । **संप्रेति दण्डाभावेति** । निन्हवाभावात् । तदीयं तु देयत्वेनाभ्युपगतमेवेति भावः ।

विशेषमाह । **एतच्चेति** । निन्हवे भावितो दद्यादित्येतदित्यर्थः । पदान्तराणि द्विविधानि सधनानि अधनानि च । तत्र सधनेष्वाह । **पदान्तेति** । सधनेष्वित्यर्थः । **तत्र तत्रेति** । एवं च विशिष्यविधानादेतस्य सामान्यस्य तत्र बाधादप्रवृत्तिरिति भावः । अधनेष्वाह । **अधनेति** । वाग्दण्डपारुष्यादिव्यवहारेषु प्रकृतधनसमदण्डदानस्य तद्विगुणदानस्य चासम्भवाच्चेत्यर्थः । उपसंहरति । **न सर्वेति** । अत इत्यादिः । यद्वा एवव्यवच्छेद्यमाह । **न सर्वेति** । ननूक्तदण्डस्य ऋणादानमात्रविषयत्वमपि न । तत्रापि "राज्ञाऽधमर्णिक" इत्यनेन विशिष्य दण्डस्य वक्ष्यमाणत्वात् । अन्यथा तस्य वैयर्थ्यापत्तेः । वचनद्वयप्रामाण्याद्विकल्पाङ्गीकारे तु तद्वत् सर्वविषयताऽपि अस्य स्यादितीदं व्यवस्थापनमयुक्तमत आह । **राज्ञेति** । तत्प्रकरणात्प्रतिपन्नार्थसाधनविषयमिति । न कोऽपि दोष इत्यर्थः ।

ननु अन्यत्र दण्डस्याभिधानेऽपि द्वैगुण्यस्यानभिहितत्वादुत्तरार्धोक्तस्य विधानं सम्भवतीत्येतत्प्रवृत्तेरावश्यकतया पूर्वार्धस्यानुवादपरतया एकवाक्यतया योजनसम्भवादृणादानमात्रविषयतया व्यवस्थापनमयुक्तमत आह । **एतदेवेति** । शब्दमर्यादया तथा प्रतीत्यभावादाह । **कथमिति** । अत एव सामान्यशब्देन व्याचष्टे । **अभियोगस्येति** । **तत्सममिति** । व्यवहारतुल्यमित्यर्थः । यत्र यत्र व्यवहारे यो य उक्तः स तत्तुल्यो भवति अन्यस्तु विरुद्धत्वाद्विसदृश इति भावस्तदाह । **तत्र तत्र प्रतीति** । धनमित्यग्रिमेणास्यान्वयः । **एवः** कुतो लब्ध इत्यत आह । **च शब्द इति** । मूलवचनस्य इत्यर्थः । अत्र पक्षे पूर्वार्धे एकस्यैव वाक्यार्थस्य सत्वेन वाक्यार्थद्वयाभावेन समुच्चयाभावात्तदर्थकत्वासम्भवेन निपातानामनेकार्थत्वात् तदर्थकत्वमिति भावः । योग्यतया धनशब्दार्थमाह । **दण्डमिति** । **इत्यनुवाद इति** । शृङ्गग्राहिकया तत्तद्व्यवहारे दण्डस्य विशिष्य विहितत्वेन प्राप्तत्वाद्विध्यसम्भवेन पूर्वार्धेन तस्य सर्वस्य सामान्येनानुवाद इत्यर्थः । वैयर्थ्यं तु अस्य न । तत्रैवोत्तरार्धेन विशेषस्य विधीयमानत्वादिति भावः । तदेव तथैवाह । **अथेति** ।

---

१ ख—तुश्चार्थे व्युत्क्रमे च वादिनश्चेत्यर्थः । तेन तत्संग्रह । २ ख—तस्मिन् । ३ ख—सधनेत्राह । ४ ख—सम्भवाच्च । ५ ख—पौनरुक्त्यापत्तेः । ६ ख—अवस्थापनम् । ७ ख—व्यवस्थापितमुक्तन्यायमन्यत्राप्यतिदिशति । ८ क—यद्वेति । ९ ख—एवं । १० क—तद्व्यवहारे ।

तत्सममित्यस्यानुषङ्गेणानुवादमाह । **प्रतीति** । प्राग्वदाह । **दण्डमिति** । विधेयमाह । **द्विगुणमिति** । द्विगुणदण्डस्याप्राप्तत्वादिति भावः । पूर्ववदाह । **अत्रापीति** ॥ ११ ॥

## याज्ञवल्कीये १२ श्लोकः

प्रागुक्तं प्रतिज्ञासाधनं[1] च तच्चेत्यादिना वक्तुमव्यवहितसङ्गत्यभावाद्व्यवहितसङ्गतिमाह । **ततोऽर्थीति** । स्तेयपारुष्ययोर्गवादेश्च द्वन्द्वं कृत्वा पुनः साहसेन समाहारद्वन्द्वः । अत एवार्थमात्रमाह[2] । **साहसमित्यादि** । **विषेति** । बहुव्रीहिः । प्राग्वदाह । **वाग्दण्डेति** । प्रागनुक्तत्वादाह । **वक्ष्येति** । तदभावेऽन्यत्र बाधाभावादाह । **दोग्ध्रीति** । विनिगमनाविरहादाह । **प्राणेति** । प्रागुक्तनिमित्तान्यनिमित्तकोऽत्र प्राणनाशो ग्राह्यः । अत एव सामान्येनाह । **द्वंद्वेकेति** । विनिगमकाभावादाह । **कुलेति** । उभयत्र निमित्ते आह । **चारित्रेति** । विरुद्धभाषणं नार्थ इत्याह । **उत्तरमिति** । प्राग्वदाह । **अर्थीति** । पूर्वान्वयीदं । **स्मृत**[3] इत्यस्यार्थः । **उक्त इति** । अतोऽन्यथेत्यनेन **नारदीयेनोक्त इत्यर्थः** ॥ १२ ॥

## याज्ञवल्कीये १३।१४।१५ श्लोकाः

अथाग्रिमोपयुक्तमाह[4] । **दुष्टेति** । हीनवादिप्रसङ्गात्पूर्वत्रारम्भेऽवतरणे उक्तस्य तन्मात्रस्येत्यर्थः । 'स परिकीर्तित' इत्यन्तेनेति भावः । विशेषजिज्ञासायाः सामान्यज्ञानपूर्वकत्वात्पाठक्रमादार्थक्रमो बलीयानिति न्यायेन व्युत्क्रमेण व्याचष्टे । **मनोवागिति** । 'यद्धि मनसेति' श्रौतक्रमेण मनसः पूर्वनिपातः । सर्वं वाक्यमिति न्यायेनोक्तिसामर्थ्येन चाह । **स्वभावादेवेति** । दोषस्वभावादेवेत्यर्थः । तेनाजन्मस्वभावनिरासस्तद्व्यावर्त्यमाह । **न भयादीति** । आदिना क्रोधादिपरिग्रहः । "भावे क्तिन्" इत्याह । **विकारमिति** । लिङ्गर्थो न विवक्षित इत्याह । **याति गच्छतीति** । गच्छति यातीत्यर्थः । अत एव स इत्युक्तम् । तस्यार्थमाह । **असाविति** । **वा** चार्थे । तथा च श्लोकेऽथवेत्यन्वयेनाथचेत्यर्थो बोध्यः । एकदेशसंग्रहाय तत्तात्पर्यार्थमाह । **न क्वचिदिति** ।

ननु मनोवाक्कायकर्मभिरित्युपदेशादेशान्तरमित्यादिना[5] व्युत्क्रमेण कर्मादिविकारप्रदर्शनमयुक्तं । न च सान्निध्याद्व्युत्क्रमेणैवान्वयोऽभिमतः । एतदर्थमेव तथोक्तमिति वाच्यम् । **तथौष्ठावित्य**नेन कायविकारेण व्यवहितत्वात्तस्यैवान्ते उक्तेः । अत एव व्याख्यात्रा यथावस्थितमेव व्याख्यातमिति चेन्न । तदुद्देशक्रमेणोत्तरोत्तरस्य पूर्वपूर्वव्याप्यत्वेनान्त्यस्यात्यन्तस्थूलत्वेन स्थूलतमप्रक्रमेण विकारदर्शने तात्पर्यात् । एवं सति तथौष्ठावित्यस्यापि वैवर्ण्यमेति चेत्तत्रैव[6] वक्तव्यत्वेनान्ते भेदेन तदुक्तिस्तु तद्विकारस्य सार्वत्रिकत्वेन प्राधान्यसूचनार्थेति बोध्यम् ।

**पर्यन्तौ** प्रान्तौ । योग्यतया आह । **जिव्हेति** । **इतीति** । उभयमित्यर्थः । अत एव समुच्चायकश्चो मूले । एवमग्रेऽपि बोध्यम् । तृतीयश्चः परीति ( श्लो० १४ ) वाक्ये योज्यः । अविनिगमकत्वादाह । **कृष्णेति** । **एतीत्यस्य** व्याख्या गच्छतीति । वाक्यस्य वास्तवशोषणासम्भवादाह । **सगद्गदेति** । अत एव स्खलदित्यन्यथा व्याचष्टे । **व्यत्यस्तमिति** । **पूर्वपरेति** ।

---

१ ख—प्रतिज्ञानं च । २ क—अर्थमात्रमाह । ३ ख—स्मृतं इत्यर्थः । ४ ख—अर्थोपयुक्तमाह । ५ ग—रित्युदेशादेशांतरं । ६ ख—चेत् यदत्रैव ।

इदमुपलक्षणं देशादिविरुद्धस्यापि । असकृदुक्तौ तथात्वनिरासायाह । **बहिति । भाषते** भाषते च । **वाक्चक्षुरिति** समाहारद्वंद्वः । तदर्थमाह । **परोक्तामिति** । पूजाप्रकारभेदमाह । **प्रतिवचनेत्यादि** । अस्य स्वतो विकृतित्वाभावादाह । **विकृतेर्लिंगमिति** । तथा चारोपितं तत्वमिति न प्रागुक्तासङ्गतिः । उक्तहेतोरेवान्ते व्याचष्टे । **तथेति** । वैवर्ण्यादिवदित्यर्थः । अस्य वचनस्य तात्पर्यार्थं प्रतिपादयन् विशेषमाह । **एतच्चेति । स्वाभाविकेति** । जन्मस्वभावकृतेत्यर्थः । **विवेकस्य** । भेदस्य । **निमित्तमिति** । बहुव्रीहिः । एवमग्रेऽपि । अत्र हेतुं सूचयन् सदृष्टान्तमिदं विशदयति । **नहीति । लिङ्गात्** । यत्किंचिद्विकारात् । **न परेति** । तथा च तत्तत्संभावनामात्रप्रतिपादने तात्पर्यमस्य वचनस्य न प्रागुक्तवक्ष्यमाणदण्डादिप्रतिपादने । तद्रीत्या ईदृशस्थलेऽपि तथाप्रसङ्गोऽन्यथा स्यादिति तन्निवारणतात्पर्यकमिदं वचनम् । एवं च दुष्टः[1] संभावितदोष एवेत्येवं व्याख्येयमिति बोध्यम् ॥ १३ ॥ १४ ॥ १५ ॥

## याज्ञवल्कीये १६ श्लोकः

अत[2] एवाग्रे पुनः प्राग्वदेव सविशेषमुक्तमित्याह । **किं चेति** । साधकस्य सन्देहाभावाद्यथाश्रुतार्थानुपपत्तेः प्रपन्नस्थले दोषाभावस्य "प्रपन्नं साधयन्नर्थं" मित्यनेन वक्ष्यमाणत्वात्तात्पर्यार्थमाह । **अधर्मेणेति**[3] । **स्वतन्त्र** इत्यस्य व्याख्या । **साधनेति** । लेख्यादीत्यर्थः । अतएव तत्र उपायमाह । **आसेधादीति** । आद्यपादोक्तं प्रासङ्गिकं नतु प्रकृतसंगतमिति सूचयितुं भवतीति शेषेण भेदेन व्याख्यायाग्रिमं द्वयं प्रकृतसङ्गतं सह व्याचष्टे । **यश्चेत्यादि** । अप्रतिपन्नादौ दोषाभावादाह । **संप्रतीति** । अर्थमिति शेषः । उभयत्र लिङ्गार्थविवक्षया आह । **पलायते इति** । एवमग्रेऽपि । अभियोगं विना आह्वानासंभवादाह । **अभियुक्त इति** । अन्यत्र दोषाभावादाह । **सदसीति** । तुर्यपादस्य सर्वत्र सम्बन्ध इत्याह । **सो[4]ऽपीति** । द्विविधोऽपीत्यर्थः । **अपिना** आद्यः । अत एवाह । **स्मृत इति** । उभयत्रेति भावः । **सम्बध्यते इति** । एते त्रयो न केवलं दुष्टा, अपि तु प्रकृतार्थादपि हीना, दण्ड्याश्चेति समुदायार्थः ।

इदमेव आद्यानुरोधेनाग्रेऽपि उभयोक्तिस्वारस्येन विशदयति । **अभीति** । यदि[5] हीनत्वमुक्तदुष्टरूपं भवेत्तर्हि तदनुवृत्त्यैव सिद्धे हीनपदोक्तिरनर्थिकाऽतस्तद्वदर्थाद्धीनत्वपरिज्ञानेत्यर्थः । **मात्रेत्यनेन** दण्डव्यवच्छेदः । एवेन दुष्टत्वव्यवच्छेदः । तथाच संभवत्यैकरूप्ये वैरूप्यस्यान्याय्यत्वात् तदुत्तरमस्य कथनेन दुष्टस्यापि अनुषङ्गात्तस्यापि समुच्चयो बोध्यः ॥ १६ ॥

## याज्ञवल्कीये १७ श्लोकः

उत्तरसङ्गतिं व्यवहितेन कथयन् तदवतरणमाह । **अथेति** । द्वितीयः प्रत्यर्थीति भ्रमनिरा[6]सायाह । **भाषेति** । तयोर्युगपत्संभवमुपपादयति । **तथेत्यादि प्राप्तावित्यन्तेन । देशान्तर-**

---

१ ग—दुष्ट इति । २ ग—कश्चिन्न दुष्टमात्रमपि तु हीनत्वाद्यपीत्याह । ३ ग—अधनेति । ४ ख—सोऽपीत्यादि सम्बध्यते इत्यन्तेन आधेस्मृत इत्यस्यानुक्तिस्तु निष्फलत्वसूचनाय तं विनापि निर्वाहात् । ५ ग—यदिहीन इति मात्रमुच्यते तर्हि पूर्ववद्धीनत्वं संभावनामात्रं स्यात्सामाभूदित्यर्थः । **मात्रपदेन** वास्तवहीनत्वव्यवच्छेदः । ६ ग—भ्रमनि ( मि ?) त्तेन ।

VISVA-BHARATI

**मिति** । **कार्यवशात्सकुटुंब** इत्यादिः । **युगपदिति** । दैववशात् । **धर्मेति** । धर्मस्थानमित्यर्थः । **तत्र** । तयोर्मध्ये । **क्रिया** । साधनम् ।

"षष्ठ्यन्तात्सार्वविभक्तिकस्तसि"रित्याह । **उभयोरिति** । **सत्सु** इत्यस्य व्याख्या **संभवेन्विति** । सामानाधिकरण्यभ्रमनिरासाय प्रतीकपूर्वकं पूर्ववादिन इत्यस्यार्थान्तरं निराकुर्वन् व्याचष्टे । **साक्षिण** इति । **न पुनरिति** । तावताऽपि निर्णयासंभवादिति भावः । योग्यं शेषमाह । **प्रष्टव्या** इति । उत्तरार्धार्थमाह । **यदान्विति** । **अन्यः** । उक्तपूर्ववादिभिन्नः । **अनेन** । आह्मणेन । **असाध्येति** । अनेनोत्तरेणाङ्गीकृत्य निराकृतत्वादिति भावः । अनुषङ्गादिनाऽऽह । **साक्षीति** । जीर्णोक्तव्याख्यानान्तरं खण्डयितुमुत्कर्षयति । **इदमेवेति** । यत्र द्वावपि भाषात्रादिनौ तद्विषयतया स्वयं कृतमित्यर्थः । यत्तु उत्तरवशादेवार्थिप्रत्यर्थिभेदेनावेदनक्रमेण पूर्ववादिन उत्तरवादिनश्च साक्षिणः प्रष्टव्या इत्यस्यार्थ इति कश्चित् तन् खण्डयति । **मिथ्योत्तरे** इति । मिथ्याक्रिया पूर्ववादे इति प्रागुक्तत्वात् । **कारणोक्तौ न्विति** । तत्रार्थादेव पूर्वपक्षनिरासः संपन्न इत्याह । **पूर्वेति** । **प्रतिज्ञातार्थेति** । अर्थ्यत इत्यर्थः साध्यं, स यस्यास्तीत्यर्थी साध्यवान् । एवं च मिथ्योत्तरे पूर्ववादी साध्यवान्, कारणप्राङ्न्याययोस्तु उत्तरवाद्येव साध्यवानिति । यस्य साध्यवत्ता तस्यैव साधनोपन्यास इत्यभिप्रायकार्थस्य प्राक् तत्रैवोक्तत्वादिति भावः । अत्र विरोधमपि सूचयन् ऋष्यन्तरसंवादोऽपि पूर्वव्याख्याने इत्याह । **पूर्वेति** । एवेन[1] द्वितीयव्यवच्छेदः । **स्पष्टीकृतं** । स्पष्टीकृतं च । **मिथ्या** । मिथ्योत्तरे । **प्राङ्न्यायेति** । पूर्वन्यायकरणनिश्चयेत्वित्यर्थः । **जयपत्रं** । तत्प्रदर्शनम् । तथा च प्रतिवादिन्येव क्रियेति भावः । शुद्धप्राङ्न्यायविषयमिदमिति स्पष्टमेव । **अर्थे** । एकार्थविषये । **पूर्वपक्ष इति** । पूर्वत्रकाले प्रतिगृहीतमुपभुक्तं चेतीत्यर्थः । उक्तपूर्वपक्षो निरस्तो येन भवेदिति तदप्यर्थः । अत एव न न्यूनता प्रकृतैकवाक्यता च । अत्रार्थे विवदतोरित्यनेन स्पष्टमेवेदमुक्तम् । साधकान्तरमप्युक्तार्थे ध्वनयन्नत एवाह । **एतस्य चेति** । **पूर्वेति** । प्रागुक्तार्थिप्रत्यर्थिविषयकेत्यर्थः । सर्वेत्यपपाठ इति केचित् । **सर्वेति** पाठे प्रागुक्तसर्वेत्यर्थः ॥ १७ ॥

## याज्ञवल्कीये १८ श्लोकः

व्यवहारेऽपरमपि विशेषं मूलकृदाह । **अपि चेति** । चेदर्थमाह । **यदीति** । विवादो न प्रसिद्ध इत्याह । **व्ययेति** । पारिभाषिकपणग्रहणे न्यूनतापत्तेराह । **पणनमिति** । व्यवहरणमित्यर्थः । स्वोक्तिसत्यतासूचनाय यथासम्भवद्द्रव्यदानाङ्गीकरणमिति यावत् । **तत्रेत्यस्य** व्याख्या **तस्मिन्स्तेति** । वक्ष्यमाणस्य विशेषविषयत्वादाह । **पूर्वोक्तमिति** । प्रकृतार्थसममिति । निह्नवे भावित इत्यत्रोक्तमित्यर्थः । सपणमित्यपपाठसूचनाय स्वपणमित्यस्यार्थः **स्वकृतं पणमिति** । अत एव योग्यतया शेषमाह । **राज्ञे** इति । प्राड्विवाकादिरिति शेषः । न्यूनाधिकत्वनिरासा-

---

१ ख—सम्भवेपि । ग—संभेति । २ क—पाठः । ३ क—एतेन । ४ ख—व्यवहारणम् ।

याह । **विवादेति** । राजेत्युपलक्षणमन्यस्यापि । इदमुभयकृतसमपणविषयकमेवेति भ्रमो न कार्यः । तत्रैव गमकाभावात् । किन्त्वन्यतरकृतो विषमश्चोभयकृतस्तद्विषयकमपीति । अनेन स्वपदघटितेन सूचितमेव विशेषमाह । **यत्र पुनरित्यादि दाप्य इत्यन्तेन** । **पुन**स्त्वर्थे । **तत्रापीति** । निमित्तसत्वादप्रवृत्तौ मानाभावाच्चेति भावः । **दंडं** । दंडमेव । अत एवाह । **न पणमिति** । तत्र स्वपणस्यैवाभावादिति भावस्तदाह । **सपणं चेतीति** । **परेति** । अन्यतरस्येति भावः । **एवे**-नान्यकृतव्यवच्छेदः दण्डस्तु वर्ततएवेति भावः । चेत्स्यादिति सूचितं विशेषान्तरमाह । **सपण इति** ॥ १८ ॥

## याज्ञवल्कीये १९ श्लोकः

व्यवहारे विशेषान्तरमाह मूलकृत् । **किं चेति** । न प्रसिद्धमत्र तदित्याह । **प्रमादेति** । **भूतार्थो वस्त्विति** । **नयेदिति** । कार्यः । अन्तमिति शेषः । क्वचित्तथा पाठ एव । तस्यावश्यकत्वमुत्तरार्धेन हेतुपरेण सशेषपूरणेन प्रतिपादयति । **यस्मादिति** । **अनभिहितमिति** । अर्थिप्रत्यर्थ्यन्यतरेणेति शेषः । 'हीयमानपापयोगाच्चे'ति करणतृतीयान्तात्तसिरित्याह । **व्यवहारेणेति** । अस्यार्थं पूरयति । **साक्ष्यादिभिरिति** । तथा च साक्ष्यादिभिः क्रियमाणेन व्यवहारेण तद्धीयते इत्यर्थः । एतेन भूतमपि वस्तुतत्वमपि साक्ष्यादिभिरनुपन्यस्तं सद्व्यवहारतो हीयते इत्यन्वय इति व्याख्यानमपास्तम् । भ्रममूलकत्वात् । साकाङ्क्षत्वादाह । **तस्मादिति** । अस्य तात्पर्यार्थमाह । **यथेति** । तत्फलमाह । **तथेति** । **निर्णय इति** । यथार्थनिर्णय इत्यर्थः ।

अनेन सूचितं पक्षान्तरमाह । **अथेति** । पूर्वोक्तस्य मुख्यत्वादाह । **इत्यनुकल्प** इति । स्पष्टमस्येतोऽप्रतीतेरत्र मानं **नारदमाह** । **यथोक्तमिति** । **भूतेति** । भूतच्छले अनुसरति तच्छीलस्तत्वात् द्विप्रकार इत्यर्थः । "**संयुक्तं प्रोति**" । "**युक्तं यत्प्रेति**" पाठान्तरं अत्रानुक्तं प्रागुक्त्यनुरोधेनाह । **तत्रेति** । नन्वस्यापि मुख्यत्वं कुतो नात आह । **साक्षीति** । **व्यभिचारेति** । अयथार्थवादित्वस्यापीत्यर्थः ॥ १९ ॥

## याज्ञवल्कीये २० श्लोकः

तावन्माधम्योदाहरणत्वात् पादत्रयस्यैकं सशेषमर्थमाह । **नेकमिति** । नशब्देन समासः । अत एवाह **अनेकमिति** । "**लिखित**" मित्यस्य व्याख्या **अभियुक्तमिति** । प्रतिज्ञाकालेऽर्थिनाऽभियोगत्वेनाभिहितमित्यर्थः । "**निन्हुते**" इत्यत्र कर्मत्वेनान्वयोऽस्य । अग्रे सर्वपदोक्तेः सामान्येनोक्तेश्च स्वारस्यादाह । **सर्वमेवेति** । एकदेशेति सुप्सुपेति सप्तमीसमास इत्याह । **एकदेशे इति** । पूर्वोक्तार्थैकदेशहिरण्यविषये इत्यर्थः । सुवर्णस्याङ्गीकृतत्वादाह । **रजताद्यर्थमिति** । अनतिप्रसंगायाह । **पूर्वेति** । तुर्यपादार्थं सप्रतीकमाह । **न ग्राह्य इति** । निष्ठालब्धं पूर्वमित्यस्यार्थो **भाषेति** । तन्न्ह्रवणस्य दुष्परिहरत्वादाह । **न दापयितव्य इति** । एवमंशद्वयेन प्रतिज्ञाकालेऽभिहित एवार्थो व्यवहारतः प्राप्य इत्यन्वयोऽनभिहितो न प्राप्य इति

१ क—ख—राशे । २ ख—सपण । ३ ग—करण चेति । ४ ख—अत्र साधनं पूरयति । ग—अस्यार्थः । ५ ख—स्यातो । ६ ख—भूतच्छलैः । ७ ख—यस्येति । क—यदिति । ८ ग—स्यैवोदाहरण । ९ ख—नाभिहितो ।

व्यतिरेकश्च दर्शितो, यतोऽतोऽन्वयव्यतिरेकाभ्यां भूतमप्यनुपन्यस्तं हीयते इत्येतत् दृढीकृतमिति तदुदाहरणत्वमस्येत्यर्थः ।

विशेषमाह । **एतच्चेति** । किं तु युक्तिसिद्धमपीति भावः । पर्यवसितमाह । **एवमिति** । उक्तप्रकारेणेत्यर्थः । **तर्कापरेति** । प्रत्ययो ज्ञानम् । तर्कज्ञानस्य नामान्तरं संभावनेति । एवं च तर्कापरनामिका या संभावना, सैव यः प्रत्ययो ज्ञानं, तत्सहकृतान्निह्नुते इति **योगिश्वर**-वचनादित्यर्थः । एतदुक्तिफलमाह । **एवं चेति** । अस्य तदनुगृहीतत्वे चेत्यर्थः । **तर्केति** । तयोरन्वित्यर्थः ।

अत्र मानमाह । **तथा चेति** । उपसंहरतीत्यत्रान्वयः । **न्यायाधीति** । न्यायज्ञाने तर्क उपायस्तेन तर्केण न्यायमभ्युह्य निश्चित्य । ऊहते रूपम् । यस्मिन्विषये न्यायो योजनीयस्त-त्स्थानं गमयेदित्यर्थः । यद्वा यथास्थानं न्यूनातिरेकरहितं यथा तथा गमयेदित्यर्थः । एवं सति तर्केणैव सिद्धे मूलवचनवैयर्थ्ये परिहर्तुं शङ्कते । **न चैकेति** । यथा भाषासमयेऽनिवेद्य पश्चादभिधीयमानोऽर्थो नादर्तव्यस्तथा एकदेशविभावितः सन्नपि प्रत्यर्थी नादर्तव्य इति ताव-तोऽपि न दाप्य इत्येव पादत्रयार्थोऽस्तु किमिति सर्वं दाप्य इत्यर्थ इति भावः । **एकदेशेति** । यत्र वचनं नास्ति तत्र तद्दृष्टान्तमूलस्तथैव तर्कः स्यादत्र तु वचनसत्वात्तथा तर्कासंभवेनैवमेव तर्कसंभवेन तदर्थतया वचनं सफलम् इति भावः ।

एवं निश्चितेऽर्थे प्रसक्तविरोधं परिहरति । **यत्त्विति** । **योगेऽपीति** । तेषां मध्ये इति शेषः । साक्षिभिरित्यस्य मध्यमणिन्यायेनान्वयः संभवात् । उपलक्षणं चैतदन्यस्यापि । **एवेना**-धिकांशव्यवच्छेदः । **असौ** । धनी । **पित्रेति** । तत्कृतेत्यर्थः । अत्र हेतुमाह । **तत्र हीति** । **न भवतीति** । ऋणस्यान्यकृतत्वेनाज्ञानस्यापि तत्र संभवेनापलापाभावादिति भावः । **इतिः** हेतौ । **कचित्** क्वापि । अज्ञानसम्भवात् । तदेवाह । **निन्हवेति** । अत एव संशयाभावादाह । **अपेक्षितेति** । वचनं तु इदं कर्तृसामान्यविषयमुक्त**कात्यायन**वचनं तु विशेषशास्त्रस्य निह्नुते इत्यस्य विषयम् । निह्नवोत्तरं ज्ञात्वाऽपलापो **निन्हव**स्तद्रूपमुत्तरं परिहृत्य परित्य-ज्याज्ञानोत्तरे ज्ञानाभावेनोत्तरे प्रवर्तते इत्यर्थः । तथा च सामान्यविशेषशास्त्रयोरनयोरुत्सर्गाप-वादव्यवस्थेति भावः ।

विरोधांतरं परिहरति । **नन्विति** । **ऋणादिषु** । ऋणादानादिषु । **स्थिरेति** । लिंगदर्शनमात्रे-णादृढहेतुनाऽपि स्त्रीसंग्रहणादिरूपसाध्यस्य सिद्धिर्भवतीति तादृशानामस्थिरत्वम्, ऋणादाना-दिरूपस्य साध्यस्य तु दृढसाधनेनैव सिद्धेस्तेषां स्थिरत्वं, तदपि नाकाशवदिति स्थिरप्रायत्व-मित्यर्थः । **निश्चितमिति** । क्रियाविशेषणम् । योगे सतीति शेषः । **साक्षीति** । तेषां मध्ये इत्यादिः । **एकेति** । ऊने इत्यर्थः । **प्रोक्ते** इत्यस्यार्थो **भाविते इति** । **अधिके इति** । उक्त-सर्वापेक्षेत्यादिः । सामान्योक्त्यौ साध्यमित्यस्य साध्यत्वावच्छिन्नमित्यर्थस्तत्फलितमाह । **सर्वमे**-

१ ख—सद्भावनाज्ञानमिति । २ ख—नामको यः सद्भावप्रत्ययः । ३ ग—वेदित्वः । ४ क—दधीय-मानो । ५ ग—तावदपि । ६ ख—तथाचेदृशस्थिरप्रायत्वं । नाकाशवदिति भावः । ७ क—सामान्योक्तं ।

**वेति । तथा सति** । सर्वसाध्यासिद्धत्वे सति । **सिद्धिः** । मूलतात्पर्यविषयीभूता । **अभावितै-**
**कदेशेति** । एकदेशान्तरेत्यर्थः । **लिखितेति** । सुवर्णादित्रयं गृहीतमित्यभियोगे कृते न मया
गृहीतं मिथ्यैतदिति निन्हवे कृते सर्ववस्तुग्रहणसाधनतया कथितैः साक्षिभिः सुवर्णाद्यन्यत-
तमग्रहणे सुवर्णादि धान्यं च गृहीतमित्यधिकवस्तुग्रहणे वा निर्दिष्टे सर्वमपि साध्यं न सिध्य-
तीत्येतत्परं **कात्यायन**वचनम् । निन्हुते इति वचनन्तु उक्तरीत्याऽभियोगे निन्हवे च कृते ५
सुवर्णग्रहणसाक्षिणः संतीत्युक्ते तैस्तावन्मात्रेऽपि साक्षिभिः साधिते प्रत्यर्थी सर्वं दाप्यः ।
पूर्वोक्तमित्येतत्परमिति न विरोधो मिथ इति भावः । **तस्य कात्यायनवचनस्य** । नन्वेवं
तादृशे किं व्यवहारो नैवात आह । **तत्रापीति** । तदुक्तस्थलेऽपीत्यर्थः । **नियमादिति** । 'आ-
रब्धस्यान्तगमन' मिति न्यायेन प्राप्तस्य तस्य विधानेन नियामकत्वं तस्येति भावः । स्थिर-
प्रायेष्वित्यस्य प्रत्युदाहरणमाह । **साहसादौन्विति । उद्दिष्टैः** । कथितैः । उपदिष्टैरिति पाठान्तरं । १
एवं साधिते ऋष्यन्तरसंवादमप्याह । **कात्यायनेति** । तदेव वचनमाह । **साध्यार्थांशेऽपीति** ।
स्त्रीसंग्रहादिके विवादपदत्रये भाषावादिना येदर्थरूपं साध्यत्वेन कथितं तत्तत्रानेकसाध्यसा-
धनतयाऽभिहितैः साक्षिभिः साध्यार्थजातस्यैकदेशेऽपि साधिते **सकलं भवेत्** सिध्येदित्यर्थः ।
तथाचोक्तव्यवस्था निर्व्यूढेति सिद्धम् ॥ २० ॥

## याज्ञवल्कीये २१ श्लोकः　　　　　　१

वक्ष्यमाणश्लोकस्य तदाक्षेपनिवारकत्वमिति तमाक्षिपति । **नन्विति । तत्र** । तथा सति । **अप्रा-**
**माण्यं** । तदेव । एवव्यवच्छेद्यमेवाह । **विषयेति । परस्परतः** परस्परम् । **परीति** । अविरोधे
संभवति विरोधो न न्याय्य इति भावः । आदिना विकल्पपरिग्रहः । अत एव 'अग्नि-
मादिना तुल्यार्थोऽस्त्वि 'ति न्यायस्य 'सविषयनिर्विषययोर्निर्विषयं बलवदि'त्यस्य च परिग्रहः ।
**उत्सर्गेति** । 'सामान्यस्य विशेषो बाधक' इत्येवं सामान्यापवादलक्षणो न्यायस्तत्रान्तरे प्रसिद्ध २
इत्यर्थः । 'पञ्चम्यन्तात्सार्वविभक्तिकस्तसि' रित्याह (व्या.सू. ५-३-७) । **व्यवहारादिति** ।
प्रकृतव्यवहारभ्रमनिरासाय तदर्थमाह । **वृद्धेति** । तत्स्वरूपमाह । **अन्वयेति** । एतौ च साफ-
ल्यासाफल्याभ्यामुपपाद्यौ । समाधितात्पर्यार्थमाह । **अतश्चेति । एवे**नाप्रामाण्यव्यवच्छेदः । नेदं
प्रकृतमात्रविषयमपि तु सार्वत्रिकमित्याह । **एवमिति । आदिना** प्रबलप्रमाणविरोधेऽर्थवादत्व-
माश्रित्य यथोचितन्यायानुसारेण योज्यमिति परिगृह्यते । २

**एवम्** । उक्तप्रकारस्य । **धर्मशास्त्रेति** । एकविषययोर्विरुद्धार्थयोर्हि स्मृत्योर्मिथो विरोधो न
तु भिन्नविषययोरविरुद्धार्थयोर्वा । सति च विरोधे प्रबलदुर्बलभावचिन्ता । एवं च पूर्वमेव धर्म-
शास्त्रानुसारेणैव व्यवहारदर्शनस्य विहितत्वादौशनसादिनीतिशास्त्रस्य न व्यवहारविषये प्रवृत्तिरत
एकविषयत्वाभावादर्थशास्त्रधर्मशास्त्रयोः सुतरां विरोधाभावादनयोः प्रबलदुर्बलभावचिन्तनमेव
तावदयुक्तमिति शङ्काशयः । नात्रौशनसाद्यर्थशास्त्रधर्मशास्त्रयोस्तच्चिंताऽपि तु धर्मशास्त्रान्तर्गतयोरेव ३

१ ग—साधनताया । २ क—यदेकार्थरूपं । ख—यदनेकार्थं । ३ ख—सकलसाध्य । ४ ख—
साध्यार्थस्य । ५ ग—पात्र ।

तयोस्तच्चिन्तेति एकविषयतया विरोधसंभवात्तच्चिन्तनं युक्तमित्युत्तराशयः। अर्थार्थमाह। **अर्थेति**। अत एवाह। **स्मृत्योरिति** । स्थितिरित्यस्य व्याख्या **मर्यादेति** । **यद्यपीति** । ईदृशार्थशास्त्रधर्मशास्त्रयोर्मन्वादिरूपैककर्तृनिष्पन्नत्वेन वचनस्वरूपगतविशेषाभावादनयोरपि न तच्चिन्तनं युक्तमिति भावः। **प्रमेयस्येति** । न तद्विशेषात्तच्चिन्ताऽपि तु धर्मशास्त्रप्रमेयस्य षड्विधस्यापि धर्मस्य मुख्यतया प्रधानत्वादर्थशास्त्रप्रमेयस्यार्थस्य नीतिलक्षणस्यामुख्यतयोपसर्जनत्वात्प्रमेयगतविशेषसंभवात्तच्चिन्ता युक्तैवेति भावः। हेत्वसिद्धिं परिहरति। **धर्मस्य चेति**। **शास्त्रादौ**। आचाराध्यायस्यादौ। वचनार्थमुपसंहरति **तस्मादिति**।

उदाहरणाभावप्रयुक्तं तच्चिन्तनवैफल्यं परिहर्तुं शङ्कते। **किमत्रोदाहरणमिति** । अन्योक्तमुदाहरणमनूद्य खण्डयति। **न तावदित्यादि युक्तमित्यन्तेन** । अत्र इति न तावदादौ उदाहरणं युक्तमिति व्यवहितेनान्वयः। अदोषत्वे हेतुमाह। **प्रच्छन्नमिति**। यतो मन्युरेव प्रकाशमप्रकाशं वा तं मन्युं हिनस्तीत्यर्थः । तथा च मन्योरेव कर्तृत्वादिना हन्तृत्वादिति न दोष इति भावः । अत एव ' मन्युरकार्षीदि'ति श्रुतिः सङ्गच्छते। **मनु**मुक्त्वा स्मृत्यन्तरमाह। **तथेति**। वेदान्तगमपीत्यर्थः। अपि वेदान्तपारगमिति पाठान्तरम्। **तेन**। तादृशब्राह्मणवधेन। **मनु**मेवाह । **इयमिति** । अकामतो द्विजं हिंसित्वा स्थितस्येयं पूर्वतना विशुद्धिः कथितेत्यर्थः। तत्र अनुदाहरणत्वे हेतुमाह। **अनयोरिति** यत इत्यादिः । "गुरुं वा" इत्यादेरर्थवादत्वेन स्वार्थे प्रामाण्याभावादेकविषयत्वाभावेन विरोधाभावात्तच्चिन्ताया असम्भवेन नोदाहरणत्वमित्यर्थः ।

तदेवाह। **तथाहीत्यादि**। **शास्त्रमिति**। **मनू**क्तिरेवेयम्। इत्युक्तामिति पाठे इतः पूर्वमिति शेषः। इत्युक्त्वेति पाठे तु न शेषोपयोगः। **उपक्रम्येति**—"द्विजातीनां च वर्णानां विप्लवे कालकारिते" इति मध्ये उक्तम् । **इति** इत्यनेन। अस्य व्याख्यानमाह । **आत्मरक्षणे इति**। बहुवचनादाद्यर्थलाभ इत्याह। **दक्षिणादीनामिति**। अत एव सामान्येनार्थमाह । **यज्ञोपेति**। "परित्राणे" इत्यस्य मध्यमणिन्यायेन अन्वय इत्याह। **रक्षणे इति** "संगरे" इत्यस्यार्थमाह। **युद्धे चेति** तस्याग्रेऽन्वयो सूचितः। एवं प्रागपि स्त्रीविप्रेत्याद्यर्थमाह। **स्त्रीति**। **धर्मेणेत्य**स्यार्थः। **अकूटेति**। न दुष्यतीत्यस्य न पापाभावपरत्वमित्याह। **न दण्डेति**। **इतीति**। इत्यर्थकमुक्त्वेत्यर्थः। इममर्थमेवाह। **गुरुमिति**। तस्यार्थवादत्वप्रकारमेवाह। **गुर्वादीनिति**। तथा च कैमुतिकन्यायेन गुर्वादिभिन्नानामीदृशस्थले हननं प्रशस्तमिति स्तूयते। अतः स्तावकत्वेनार्थवादकत्वमिति भावः। नन्वेतद्गुर्वादिहननविधायकमेवास्तु तदसंभव एव तत्त्वाङ्गीकारात् अत एवाह। **वा शब्देति** । स्मृत्यन्तरेऽप्येवमित्याह। **अपि वेदान्तगमिति**। अयं भावः। यथा लोकेऽत्र पिशाचोऽस्तीत्युक्ते पिशाचो वा भवतु राक्षसो वा भवतु भूतमपि भवतु प्रेतोऽपि भवत्वित्युत्तरे प्रौढिप्रतिपादने तात्पर्यं, तथाऽत्रापि वाशब्दापिशब्दयोः प्रौढिप्रकर्षे तात्पर्यमिति तद्विशिष्टवाक्यजातस्य गुर्वादिहनने न तात्पर्यम्; तथा वेदेऽपि "वायुर्वै क्षेपिष्ठा देवते"ति, "प्रतितिष्ठन्ति ह वा यएताः,"

---

१ ख—ग—गतयोरेवानयो। २ ग—कृत। ३ ख—हेत्वादेरिति। ४ ग—हंत्रादेरिति। ५ ख—शास्त्रमिति। ६ ख—ग—इदमर्थ। ७ ख—विषायकमेव।

"तस्मादपि वध्यं प्रपन्नं न", इत्यादौ वैशब्दवाशब्दापिशब्दादीनां विधिशक्तिप्रतिबन्धकत्वस्य दर्शनात्प्रकृतेऽपि वाऽपिशब्दाभ्यां तद्विधिशक्तेः प्रतिबद्धकत्वान्न गुर्वादिहननविधिः । वस्तुतस्तु अपि वेदान्तगमित्यादौ संभावनाविषयतया क्रियागतमौचित्यमपि द्योत्यम् । संभावितौचित्यस्य चानुष्ठानमयुक्तमिति स्वार्थे तात्पर्याभावः । स्पष्टं चेदं **मंजूषायामिति** बोध्यम् । अतश्च गुर्वादिविषये एकत्र गुरुं वेत्यादिवचनजातेन हननविधेस्तन्निमित्तप्रायश्चित्तविधेरियं विशुद्धिरित्यनेनाप्राप्तत्वादनयोरेकविषयत्वाभावान्मिथो विरोधाभावात्कथं तदुदाहरणमिति ।

वचनसिद्धोऽप्ययमर्थ इत्याह । **नाततायीति आचार्यं चेति च** । आभ्यां हि ब्राह्मणाचार्यादिभिन्नानामेवाततायिनां वधे दोषाभावप्रतिपादनादाततायिनामपि गुर्वादीनां न वध्यत्वमिति भावः । ननु "आचार्यं च"ति **मनु**वाक्ये आचार्याद्युपादानं प्रदर्शनमात्रतात्पर्यकम् । तथा च हिंसामात्रनिषेधे तात्पर्यादस्य वचनस्य नाततायिनामाचार्यादीनां विधिनिषेधपरत्वं येन गुरुमित्यस्यैतद्वचनविरोधः स्यादत आह । **आचार्यादीनामिति** । **हिंसेति** । विशेषेण हिंसानिषेधेनेत्यर्थः । अन्यथा तेषामुपादानमफलमेव स्यादिति भावः । **इदम्** । आचार्यं चेत्येतत् । **हिंसेति** । हिंसामात्रनिषेधस्येत्यर्थः । तत्सामान्यनिषेधस्येति यावत् । **सामान्येति** । न हिंस्यादित्यादिवचनेनैवेत्यर्थः । तथा च तत्सामान्यनिषेधस्य सामान्यवचनेनैव सिद्धत्वादस्मिन्वचने आचार्याद्युक्तेः स्वार्थाविवक्षाकारणाभावाद्धिंसाविशेषनिषेधेनैवैतद्वचनं सफलम् । सामान्यनिषेधपरत्वे तु वचनान्तरेणैव तन्निषेधस्य प्राप्तत्वात्पुनरुक्तेर्निष्फलत्वं स्यात् इति भावः ।

नन्वेवमाचार्यं चेत्यनेनाततायिनामप्याचार्यादीनां[1] हिंसानिषेधप्रतिपादनान्नाततायिवधे दोष इत्यनेन तु आततायिहिंसाया दोषाभावप्रतिपादनेन तेषां वध्यत्वप्रतीतेरनयोर्वचनयोर्मिथो विरोधापत्तिरेवात आह । **नाततायीति** । तथा च भिन्नविषयत्वेनाविरोध इति भावः । तदन्यविषयत्वमेव द्रढयन् तत्र हेतुमाह । **यत इति** । सामान्येनाततायिनो दर्शिता इत्यत्रान्वयः । **मात्स्ये** तु अधिका अपि **आततायिन** उक्ताः—

*"**गुरुं** वा तापसं वाऽपि ब्राह्मणं वा बहुश्रुतम् ।
आततायिनमायान्तं हन्यादेवाविचारयन् ॥
नाततायिवधे दोषो हन्तुर्भवति कश्चन ।
प्रकाशं वाऽप्रकाशं वा मन्युस्तं मन्युमृच्छति ॥
गृहक्षेत्राभिहन्तारस्तथा पत्न्यभिगामिनः[2] ।
अग्निदो गरदश्चैव तथैवाभ्युद्यतायुधः ॥
अभिचाराणि कुर्वाणो राजगामि च पैशुनम् ।
एते हि कथिता लोके धर्मज्ञैराततायिनः ॥" इति

स्मृत्यन्तरमाह । **तथेति** । असिविषाग्नीनां द्वन्द्वं कृत्वोद्यतशब्देन बहुव्रीहिः । "शापोद्यते"त्यत्र बहुव्रीहिद्वयम् । आद्ये आहिताग्न्यादित्वात्परनिपातः । **आथर्वणेन** तद्वेदप्रतिपादिताभि-

---

१ **ख**—मथाचार्यादीनां । * एतदवतरणं । **ख** पुस्तकेऽनुपलभ्यं । २ **ग**—पत्याभिगामिनः

चारिककर्मणा । **पिशुनः** सूचकः । **दर्शिता इति** । अत्र सामान्येनैवाततायिनां प्रदर्शनात्तत्रापि नाततायीति सामान्यपदेनैवोल्लेखान्नाततायीत्यादि सामान्यशास्त्रम् आचार्यं चेत्यादिविशेषशास्त्रस्य विषयं ब्राह्मणादिकं परिहृत्यान्यत्र प्रवर्तते इति भावः ।

ननु एवं सिद्धे आततायिनां ब्राह्मणादीनामवध्यत्वे सति प्रमादाद्यदि तेषां हननं स्यात्तदा तस्य प्रामादि[1]कत्वात्किं हन्तुर्दोषाभाव एवेतिचेन्नेत्याह । **अतश्चेति** । **यदि विपद्येरन्** मृत्युं प्राप्नुयुः । **तस्मात्** तदुदाहरणासंभवात् । स्वाभिमतमुदाहरणमाह । **तदुच्यते इति** । **हिरण्येति** । अभ्यर्हितत्वात्पूर्वनिपातः । प्रागुक्तमौलमाह । **धर्मशास्त्रेति** । **चतुष्पादिति** । तस्य तत्वं च प्रागेव प्रतिपादितम् । **विषयेति** । न भवतीत्यर्थः । अत्र मानमाह । **अत एवेति** यतो धर्मशास्त्रं प्रबलमस्मादेव हेतोरित्यर्थः । दर्शितमित्यत्रान्वयः । **धर्मेति** । धर्मार्थयोः सन्निपाते एकत्र तच्छास्त्रयोः प्रसङ्गेऽर्थशास्त्रग्राहिण इत्यर्थः । अन्यथा तदसंगतिः स्पष्टैवेति भावः । गुरुत्वमेव दर्शयति । **एतदिति** । **इति** इत्यनेन पूर्वं तस्यैव प्रक्रान्तत्वादिति भावः ॥ २१ ॥

## याज्ञवल्कीये २२ श्लोकः

अव्यवहितेन सङ्गत्यभावाद्व्यवहितेन सङ्गतिमाह । **ततोऽर्थीति** । **अपेक्षितः** आकाङ्क्षितः । प्रमितिव्यवच्छेदाय साधनपरत्वाय चाह । **प्रमीयते इति** । साक्षात्प्रमाजनकत्वाभावात् । दाप्यः सर्वमिति विषये वस्तुनोऽन्यथात्वे परम्परयाऽपि तदभावादाह । **परीति** । भ्रमप्रमासाधारणनिश्चयः **परिच्छेदः** । कीर्तितमित्यत्र शेषमाह । **महर्षिभिरिति** । पूर्वोत्तरतदुक्त्यनुरोधेनात्रानुक्तमप्याह । **तत्रेति** । तेषां त्रयाणां मध्ये इत्यर्थः । **उक्तेति** । पूर्वाध्यायान्ते—" दत्वा भूमिं निबन्धं वा कृत्वा लेख्यं तु कारयेत् " (श्लो० ३१८) इत्यादिना इति भावः । **वक्ष्यमाणेति** अत्रैवाध्याये लेख्यप्रकरणे (प्र० ६ श्लो० ८४) " यःकश्चिदि " त्यादिना इति भावः । भोजनस्य साधनस्य च व्यवच्छेदायाह । **उपभोग इति** । **वक्ष्यमाणस्वरूपेति** । स्वरूपं च प्रकारश्च तौ वक्ष्यमाणौ स्वरूपप्रकारौ येषामित्यर्थः । तत्र प्रकारो भेदः दृष्टसाक्षिणः श्रुतसाक्षिणः इत्येवमादिः ।

ननु प्रत्यक्षाद्यष्टप्रमाणान्तर्गतमेव प्रमाणं नान्यदिति द्वयोः कथंचित्तत्वसंभवेऽपि भुक्तेर्न तदंतर्भावः इति कथं तत्वमित्याशयेनाह । **नन्विति** । लिप्यादिर्नशब्दः स च नित्य इत्याशयेनाह । **शब्दाभिव्यक्तीति** । लिपेः स्फोटव्यंजकवत्साक्षिणां ध्वनिद्वारा तदभि[2]व्यंजकत्वात्स्वरूपतस्तेषामतत्वेऽपि तत्वात्तत्वमिति भावः । तस्या अपि तदन्तर्भावमाह । **भुक्तिरिति** । प्रमाणमेवे[3]त्यन्वयः । **कैश्चिदिति** । आसेधरहितादिविशेषणैरित्यर्थः । **अव्यभिचारादिति** । अनेनानुमितिसामग्री उक्ता । यथासंख्यमत्रान्वयः । **कल्पयंती[4]ति** । शत्रन्तप्रकृतिकम् । क्षेत्रादिकं अस्य क्रयादिप्राप्तम् आसेधरहितत्वे सति चिरकालोपभुक्तत्वात् तदीयगृहादिवत्

१ ख—प्रामाणिकत्वात् । २ ग—तदभिव्यंजकत्वा । ३ ग—त्यत्रान्वयः । ४ ख ग—यन्तीति ।

इत्यनुमानप्रयोगः । तादृशी भुक्तिः स्वतोऽनुपपद्यमाना तादृशं तत् कल्पयतीत्यर्थापत्तिर्बोध्या । एवं क्रयादौ सिद्धे स्वामी रिक्थेत्यादिवचनोपात्तैर्नियतकारकहेतुभिः स्वस्वत्वं सिद्धं भवति ।

उत्तरार्धार्थमाह । **एषामिति** । मध्ये इति शेषः । अप्यर्थान्तर्भावेण समाम इत्याह । **अन्यतमस्याप्यभावे इति** । अपिनोभयादिसमुच्चयः । **वक्ष्येति** । प्रागवत् । तेषां तत्वं न ऐच्छिकं किंतु व्यवस्थितमित्याह । **जातीति** । प्रमाणमित्यस्यानेनैनापिसंबंध इत्याह । **प्रमाणमिति** । उक्तरीत्या महर्षिभिरिति शेषः । मानुषप्रमाणाभावमात्रे दिव्यावसर इति यथाश्रुतप्रतीयमानो न तदर्थः, किंतु तदभावनिर्णये सत्येव तदवर इतीत्याह । **मानुषेति** । अत्र गमकमिदमेवोपस्थितमाह । **अस्मादिति** । अन्यथा एषामन्यतमाभावे इत्यस्यानर्थक्यं स्पष्टमेव । ग्राह्यमिति शेषः । केन प्रामाण्यमित्यनेनावगम्यते इत्यनेन चास्यैवार्थस्याभिमतत्वात् । ननु यथाश्रुतार्थबोधकमेवेदं वचनमिति न व्यर्थमतस्तत्र हेतुमाह । **दिव्यस्येति** । दृष्टे सत्यदृष्टाश्रयणस्यान्याय्यत्वात् । दिव्यस्य तयोः शास्त्रैकगम्यत्वेनालौकिकत्वेनादृष्टत्वात्तथा सत्यानर्थक्यादिति भावः । एतत्फलमाह । **अतश्चेति** । स्पष्टोऽर्थः । क्रियामित्यस्याग्रेऽवलम्बते इत्यस्य पूर्वत्रानुषङ्गः ।

ननु यत्र सर्वसाध्यसाधकं क्रियाद्वयं तत्र भवतु मानुष्येव ग्राह्येति । यत्र त्वेकदेशसाधनभूता मानुषी, सर्वसाधनभूता दैवी तत्र का ग्राह्येत्यत आह । **यत्रापीति** । **न दैवमिति** । उक्तहेतोरेवेति भावः । उदाहरति । **यथेति** । **इत्यभियोगेति** । इति योऽभियोगस्तस्यापन्हवे परेण कृते सतीत्यर्थः । **ग्रहणे इति** । मूलभूतं द्रव्यं प्रधानं तस्यैकदेशो ग्रहणं संख्या वृद्धिश्च अभिमतवृद्धिकरूपकशतग्रहणं प्रधानं वा । **इत्युक्ते** । स्थलविशेषे । पूर्वान्वयीदम् । नन्वेवं कथं सर्वसाध्यसिद्धिरत आह । **तत्रैकेति** । तदविषयत्वादाह । **न्यायेनेति** । तद्रीत्येत्यर्थः । अपिर्दिव्यसमुच्चये । **संख्येति** । संख्यावृद्धिविशेषयोः सिद्धेरित्यर्थः । **व्याप्ता** । तन्मात्रसाधिका । सर्वसाधिका ग्राह्येति किमु वक्तव्यमित्यपेरर्थः । **सा** सैव । अत एवाह । न त्विति । वदतां वादिनां मध्ये कस्यचित् इत्यर्थः । दैवी विवदतामिति पाठान्तरम् ।

एवं स्थिते **कात्यायन**विरोधं परिहरति । **यस्त्विति** । **गूढेति** । कर्मधारयान्मत्वर्थीयः । चस्त्वर्थेत्वित्येव पाठान्तरं । **प्राप्तम्** । योग्यम् । **मानुषासम्भवे एवेति** । मानुषासम्भवकृतनियमार्थमिति पाठान्तरम् । नियमश्च परीक्षणस्यादृष्टार्थः । प्रागवदाह । **यदपीति** । **साहसे** । तदाख्ये विवादे । मानुषासम्भवात्तस्य चत्वार्यधिकरणान्युक्तानि । **अरण्ये इति** । निमित्तान्तरमाह । **न्यासेति** । उपसंहरति । **तस्मादिति** । **अस्य** । उक्तस्यौत्सर्गिकस्यार्थस्य । **प्रक्रान्ते इति** । अस्य सर्वत्रान्वयः । अत्र साक्षिदिव्ययोर्विकल्पविधानात्तुल्यार्थानामेव विकल्पात्तदपवादत्वम् । **कात्यायनोक्तिरियमपि** । एवमग्रेऽपि त्रिषु ।

प्रसङ्गात् मूलानुक्तमन्यदपि किंचित्सिद्धान्तभूतमाह । **तथेति** । आदिना भुक्तिसाक्षिणोः परिग्रहः । एवं च तत्राप्यैच्छिकत्वं नेति भावः । तत्रादौ लेख्यस्याह । **यथेति** । पूगादेरर्थः स्फुटीभविष्यति । **स्थिति**र्मर्यादा । **तस्याः** । स्थितेः ।

---

१ **ख**—वचनोपपत्तै । २ **क**–अपिना भयादि । ३ **ख**—यातीति । **ग**—ज्ञातीति । ४ **ख ग**—स्यात्रापि । ५ **ख**—सर्वसाधकं । ६ **ख**—साधक ।

भुक्तेराह । **तथेति** । क्रियाशब्दस्य द्वंद्वान्ते श्रूयमाणस्य प्रत्येकं संबंधः । **क्रिया** करणम्, । **आभोगः** परिणाहः । तेन च परिणाहवदङ्गणादिकं लक्ष्यते । अर्शआद्यच्वा । **जलवाहो** । जलनिर्गममार्गः । आदिना गेहादि[1]परिमार्जितरजःपुञ्जप्रक्षेपस्थानावकरादिग्रहणम् । अत्र द्वन्द्वोत्तरपदकद्वन्द्वघटितबहुव्रीहिः ।

साक्षिणामाह । ***तथादत्तेति** । बहुवचनान्तयोर्द्वंद्वः । दत्तादत्तं [2]विद्यते येषु । दत्ताप्रदानाख्यविवादपदेषु । दत्ते चेति, दत्तेऽथेति वा पाठान्तरं । स्वामिभृत्यनिर्णयाख्ये तत्र । **विक्रयेत्यर्धे**नैकं विक्रीयासंप्रदानाख्ये तत्र । **धनं** मूल्यं । दातुमिति शेषः । तत्र यस्तत्सम्बंधस्तत्रेत्यर्थः ।

द्यूते समाव्हयाख्ये च तत्र । **समुपस्थिते** प्राप्ते । एतानि च विवादपदान्यग्रे स्फुटीभविष्यन्ति ॥ २२ ॥

## याज्ञवल्कीये २३ श्लोकः

**उभेति** । वादिप्रतिवाद्युक्तयोः । **बलाबलेति** । प्रागुक्ते इत्यर्थः । **कार्ययोः** । साध्ययोः । करणरूपार्थनिरासायाह । **क्रियते इति** । तात्पर्यार्थमाह । **उत्तरेति** । प्रमा[3]णेनेति भावः । **सिद्धेऽपीति** । पूर्वप्रमाणेनेति भावः । अस्य लक्ष्यान्तरमाह । **तयेति** । द्वे वृद्धिर्यस्य तत् द्विकं । तदस्मिन्निति कन् । निष्कशतस्य प्रतिमासं निष्कद्वयं वृद्धिरित्येवं प्रथमं गृहीत्वा, कालान्तरे तद्दातुमसमर्थस्य स्वकार्यवशात्तस्यैव निष्कशतस्य निष्कत्रयं वृद्धिरित्यङ्गीकारे तदेवं परं बलवत् । विरोधेनोत्तरसंख्यायाः पूर्वसंख्याबाधकत्वेन पूर्वसंख्याया अप्रसरादित्यर्थः । ननु व्याकरणे सति विरोधे परस्य पूर्वबाधकत्वं विप्रतिषेधशास्त्रमूलकं दृष्टम्, “अणुदित्सूत्रे” (व्या० सू० १-१-६९-) च भाष्ये उक्तं गौणी मुख्या चोत्तरा संख्या पूर्वां संख्यां बाधते इति, तद्वदत्र किं मूलम् । अतस्तन्न्यायेनेवोभयत्र बीजमाह । **पश्चादिति** । किं तु तद्बाधेनैव परस्योत्पत्तेरित्यर्थः ।

**एकस्य** निकटे । एवमग्रेऽपि । प्रागुक्तहेतोरत्रासत्वमत्र हेतोः सत्वं च सूचयन्नाह । **नन्वित्यादिना** । पूर्व[4]स्वत्वादेराह । **तदानीमिति** । **न्यायेति** । बहुव्रीहिः षष्ठीतत्पुरुषो वा । एकत्राहितादेरन्यत्राधानकरणादौ स्वत्वमेव नास्तीत्ययमेव न्यायः । तत्सिद्धार्थ एव स्फुटत्वायानूद्यतेऽनेन । यद्वाऽनेन तथाऽर्थे बोधिते तद्बलात्तस्य पुनस्तत्र स्वत्वाभावादिति स न्यायो निष्पन्न इति उभयथाऽपि प्रकृतोक्तिर्निर्बाधैवेति भावः ॥ २३ ॥

## याज्ञवल्कीये २४ श्लोकः

**भुक्तेः** प्रागुक्तप्रमाणान्तर्गतायाः । **कैश्चिदिति** । आसेधरहितत्वचिरकालत्वादिविशेषणैर्युक्ताया इत्यर्थः । **कार्यान्तरमिति** । पूर्वत्र क्रियाशब्दस्य कार्यपरत्वस्योक्तत्वेन तदुभयान्यतरसाध्यसिद्धिरूपकार्यातिरिक्तकार्यमित्यर्थः । अनेन व्यवहिताव्यवहितसङ्गतिरुक्ता । एक-

१ ग—प्रमार्जित । २ ख—दत्तादत्तेषु । ग—दत्तादत्तेषु विद्यते येषु । ३ ख—प्रमाणान्तरेणेति ।
४ ख—पूर्वस्वत्वादे । ग—पूर्वं सत्वादे ।

* दत्तादत्तेऽथ इति मिताक्षरापाठः ।

देशिमतेन व्याचष्टे । **परेणेति** । सम्बन्धे सति दानक्रयादिरूपे परत्वस्यैवाभावादाह । **असम्बन्धेनेति** । बहुव्रीहिः । असम्बद्धेनेति पाठान्तरम् । कार्याकाङ्क्षायां प्रत्यासत्तेराह । **भुज्यमानां भुवमिति** । **पश्यत इति** । वादिन इत्यर्थः । अब्रुवत इति छेदेनाह । **अब्रुवत इति** । तत्र कर्माकाङ्क्षाशान्तये तदर्थमाह । **मदीयेयमिति** । षष्ठीयं **तस्या इति** । तत्सम्बन्धिन्याः । परेण भुज्यमानाया इत्यर्थः । स्पष्टत्वाय पुनराह । **अप्रतीति** । स्पष्टत्वायोक्तसहितं विंशतीत्यस्यार्थमाह । **अप्रतिरवमिति** । अशब्दं यथा तथेत्यर्थः । समस्तपाठो युक्त एव । विंशतिवर्षशब्दस्तदुपभोगे लाक्षणिकः । कृतलब्धेत्यर्थे कालाट्ठञ् । वर्षस्याभविष्यतीत्युत्तरपदवृद्धिरेवमग्रेऽपि । तत्फलितमाह । **भोगनिमित्तेति** ।

अनुपपत्तौ हेतुमाह । **नहीत्यादिना** । अप्रतिषेधात्स्वामिनः स्वत्वानवगममुक्त्वा तावत्पर्यन्तं तादृशोपभोगेन स्वत्वानुत्पत्तिमाह । **नापीति** । **स्वत्वमिति** । उत्पद्यते इति शेषः । अत्र हेतुमाह । **उपभोगस्य स्वत्वे प्रमाणत्वादिति** । तस्य स्वत्वविषयप्रमितिजनकत्वादित्यर्थः । क्वचित्समस्तपाठः । यथा धूमस्य पर्वतादावग्निज्ञापकत्वं न तदुत्पादकत्वं तथोपभोगस्यापि स्वप्रमेयभूतस्वत्वज्ञापकत्वं नोत्पादकत्वमतो न ततस्तदुत्पत्तिरिति भावस्तदाह । **प्रमाणेति** । ननूपभोगस्य न तत्प्रमाणत्वं मानाभावात् किं तूत्पादकत्वमेवात आह । **रिक्थेति** । तत्र तस्यापाठान्न तस्य तत्त्वमित्यर्थः । तत्र पाठमेव दर्शयति । **तथाहीति** । **गौतम**वाक्यमाह । **स्वामीति** । रिक्थादिषु पंचसु सत्सु स्वामी भवतीति । सर्वसाधारणस्वत्वकारकहेतुपरिगणनम् । अप्रतिबन्धो दायो **रिक्थम्** । सप्रतिबन्धो दायः **संविभागः** । **क्रयः** प्रसिद्धः । अरण्यादिष्वनन्यपरिगृहीततृणकाष्ठादिस्वीकरणं **परिग्रहः** । निध्यादिप्राप्तिः **अधिगमः** । असाधारणकारकहेतूनाह । **ब्राह्मेत्यादिना** । ब्राह्मणस्य प्रतिग्रहादिना यल्लब्धं तदधिकमसाधारणमित्यर्थः । वैश्यस्य भोगरूपेण भृतिरूपेण वा यल्लब्धं, शूद्रस्य द्विजशुश्रूषादिना भृतिरूपेण यल्लब्धं, तदधिकमसाधारणं स्वत्वजनकम् । निर्वेशो भृति भोगयोरित्य**मरः** । ( ३–३–२१४ )

**ननु** एवमपि पश्यत इति वचनमेव तादृशोपभोगस्य स्वत्वहेतुविधायकमस्तु इत्याशयेन शङ्कते । **न चेदमिति** । **आपत्तिः** प्राप्तिः । तत्र हेतुमाह । **स्वत्वस्येति** । एकशब्दो मात्रार्थः । विधेरत्यन्ताप्राप्तप्रापणस्वभावत्वेन लोकप्रसिद्धार्थे प्रवृत्त्यभावादिति भावः । **एतच्चेति** । तस्य तेषां च लोकसिद्धत्वमित्येतदित्यर्थः । नन्वेवमुक्त**गौतम**वाक्यस्य का गतिरत आह । **गौतमेति** । शास्त्रपरिगणितैरेव हेतुभिः स्वत्वमुत्पाद्यं नापरिगणितैरपि चौर्यादिभिरिति नियमोऽदृष्टायेति नियमार्थं न तु स्वत्वादिशास्त्रमात्रसमधिगम्यमित्येवमर्थमित्यर्थः । यद्वा तैः स्वत्वमेव नास्वत्वमिति तथा नियमः ।

**स्मृति**विरोधरूपं दोषमप्याह । **अपि चेति** । द्वौ ब्राह्मणाविति वत् बहूनीति प्रयोगः । **विरुध्यते इति** । अनागमोपभोगेन स्वत्वोत्पत्तावुपभोक्तुर्दण्डविधानमनुपपन्नम् । विहितस्तु दण्डः । अत एतद्वचनविरोधादपि न स्वत्वं तादृशोपभोगादुत्पद्यते इत्यर्थः । ननु सति विरोधे तादृशोपभोगात्स्वत्वानुत्पत्तिः स एव नेत्याशयेनाह । **न चेति** । स्वाम्यसमक्षं बहुकालोपभोगेऽपि स्वत्वानुत्पादादुपभोक्ता चोरवद्दण्ड्य इति तदर्थः । **पश्यत इति** । स्वामिनः समक्षमनासेधो-

पभोगे विंशतिवर्षादूर्ध्वं तद्धानिर्भवतीति उपभोगादुपभोक्तुः स्वत्वमुत्पद्यते इति तदर्थः । एवं च परोक्षत्वापरोक्षत्वरूपविशेषपरत्वेन न मिथो विरोधो येन तदभावः स्यादिति भावः । प्रतिज्ञामात्रेणार्थासिद्धेरत्र हेतुमाह । **अनागममिति** । उक्तविशेषं विना सामान्येन तादृशोपभोक्तुर्दण्डनिर्देशान्न तथा व्यवस्था युक्तेतिभावः ।

ननु तत्र सामान्योक्तावप्यत्र विशेषोक्त्या एतदन्यपरत्वं तस्येति युक्तैव व्यवस्थाऽत आह । **नोपेति** । उपभोगमात्रबलादेव न स्वत्वसिद्धिरित्यर्थः । तथा च कथं समक्षभोगेऽपि तन्मात्रात्स्वत्वहानिस्तदुत्पत्तिश्च ? । यदि तथा स्वीक्रियते तर्हि सामान्येनैतद्वचनविरोध इति भावः । नन्विदमपि परोक्षभोगविषयकमेवास्तामुक्तवचनैकवाक्यतया अत आह । **समक्षेति** । **चो**ऽन्ते योज्यः । अनासेधेन स्वत्वानपगम[1] उपभोगेन स्वत्वानिष्पत्तिश्चेति प्रागुक्तरीत्या हानिकारणाभाव इति भावः । तस्मादेतदनुपपत्तिस्तदवस्थेति सिद्धम् । नन्वेवं माऽस्त्वस्य प्रागुक्तोऽर्थः किं त्वन्य एवेत्याह । **न चैतन्मन्तव्यमिति** । इतीत्यन्तेन वक्ष्यमाणमित्यर्थः । **प्राबल्येति** । आध्यादिषु तदपवादत्वेन यत्पूर्वक्रियायाः प्राबल्यमुक्तं तदपवादतया भूमौ विंशतिवर्षोपभोगसहितोत्तरक्रिया प्रबला, धने तु दशवर्षोपभोगसहितेति[2], ईदृशस्थले आध्यादिष्वप्युत्तरैव क्रिया प्राबल्येवार्थ इत्यर्थः । अत्र क्रिया कारणम्[3] । भूमौ विंशतिवर्षोपभोगाभावे धने च तादृशतदभावे पूर्वकृताध्यादिकमेव प्रबलं, ततोऽन्यत्र तदपेक्षयोत्तरकालकृतमेव तत्प्रबलमिति व्यवस्थेति भावः । हेतुमाह । **यत इति** । **तेषु** आध्यादिषु । उत्तरक्रियाया एव वस्तुतोऽभावात्पूर्वक्रियापेक्षया प्राबल्यं न संभवति । सति हि धर्मिणि धर्मचिंतनमिति भावः । तत्राह । **स्वमेव हीति** । स्वत्वविशिष्टमेव हीत्यर्थः । तत्र हेतुमाह । **न चेति** । न हीत्यर्थः । **वा** चार्थे । प्रतिग्रहांशे[4] युक्त्यन्तरमप्याह । **अस्वत्वस्येति**[5] । अभ्युपेत्य एवं सति **याज्ञवल्क्यस्य** पूर्वापरविरोधादानर्थक्यापत्तिरपि दोषान्तरमित्याह । **तथेति** । अस्य श्लोकस्येत्यस्य मध्यमणिन्यायेनोभयत्रान्वयः । **अपवादः** अपवादत्वम् । आधौ पूर्वत उत्तरप्राबल्येऽनेन बोधितेऽग्रिमवचनेनाधौ एतदपवादतयोत्तरकार्याप्रावल्यबोधने तत्रैव विपरीताभिधानेन मिथो विरोधात्तदानर्थक्यमिति भावः । उपसंहरति । **तस्मादिति** । **हानिरिति** । स्वत्वहान्या स्वरूपहानिरित्यर्थः ।

ननु मा भूत्स्वरूपहानिः किं तु तदनन्तरं तद्विषयव्यवहारहानिरनेन प्रतिपाद्यते इत्यत्र आह । **नापीति** । तावत्पर्यन्तं परोपभोगे भोग्यभोजकभावसंबन्धाभावेन वस्तुनो नष्टत्वात्तदभावनिमित्तकनृपादिकृतवास्तवव्यवहारहानिरित्यर्थः । तत्र हेतुमाह । **यत इति** । उक्त इत्यत्रान्वयः[6] । **तस्य** वादिनः । उपेक्षामित्यनेन शारीरव्यापारशून्यत्वं तूष्णीमित्यनेन वाग्व्यापारशून्यत्वं तेनाब्रुवत इत्यर्थलाभः । **तिष्ठतः** विद्यमानस्य । अनेन द्विविधाविद्यमानत्वव्यवच्छेदः । तेनापश्यत इत्यस्यार्थस्य लाभः । **विपन्ने** पूर्णे समाप्ते इति यावत् । **पूर्वोक्ते** संकेतिते । व्यवहारहानौ मुख्यहेतुमाह । **उपेक्षालिङ्गेति** । अन्यथा तद्विशेषणानर्थक्यमेवेति भावः । तथा चोक्तार्थे हेतुत्वमेवास्य वचनस्यानेनोपपादितमिति बोध्यम् । उपेक्षायां यानि लिङ्गानि जडत्व-

---

१ ख—स्वत्वानपगमात् । २ ख—सहिते तादृश । ३ ग—कारणं, ख—कृतिः । ४ फ—प्रतिग्रहे । ५ क ख ग फ-अस्वस्येति । ६ फ ग—उक्तेत्यत्रान्वयः ।

बालत्वादीनि तेषां यो भावस्तत्कृता तन्निमित्तैवेत्यर्थः । एवव्यवच्छेद्यमाह । **न तु वस्त्वभावेति** । पराक्रान्तत्वात्तत्संबन्धाभावकृततदभावेत्यर्थः । उपेक्षालिङ्गेष्वसत्सु एतावत्पर्यन्तं विप्रतिपन्नवस्तुनः स्वीयत्वे किमित्यनेन व्यवहारो न कृत इति प्रत्यर्थिनोक्ते वादी निरुत्तरो भवतीत्येवं प्रकारेण व्यवहाराभावो **नारदे**नोच्यते । '**उपेक्षां कुर्वत**' इत्युक्तेः । अन्यथा तदानर्थक्यं स्पष्टमेव । अतो न तथा वस्तुनोऽभावकृतो व्यवहाराभावो वक्तुं शक्य इति तात्पर्यम् ।

साधकान्तरमाह । **तथेति । विषयश्चास्य भुज्यते इति** । 'विषये चास्येति' पाठान्तरम् । 'विषये चास्य भुञ्जत' इति तृतीयपाठः । **विषयो** देशः । **अस्य** धनिनः । **अजडश्चेत्यादि** । "यत्किंचिद्दशवर्षाणि संनिधौ प्रेक्षते धनी । भुज्यमानं परैस्तूष्णीं न स तल्लब्धुमर्हति" ॥ इति पूर्वशेष इति **मेधातिथिः** । **तत्** धनिकरूपम् । **तद्धनं** तदुत्पन्नं फलरूपम् । **इति** इत्येवं प्रकारेण । प्रथमपक्षं निराचष्टे । **न वस्तुत इति** । न तथा वस्त्वभावकृत इत्यर्थः ।

सर्वथा व्यवहारभङ्गे नानयोस्तात्पर्यम्, किन्तु वादिनिरुत्तरत्वे इति प्रतिपादयन्नाह । **व्यवहारेति** । भवतीतीत्यन्तेनान्वयः । वदतीत्यस्य उदास्ते इतीत्यत्रान्वयः । 'अजड' इत्यादि उपलक्षणमन्येषामपीत्याह । **अबाल इति । अस्येति** । अनन्तरयोगे षष्ठी । तत्सूचितमाह । **संनिधाविति** । भुज्यते इति वर्तमानसामीप्ये लडित्याह चकारसमुच्चेयमाह । **तत्रेति । भुज्यते** । भुक्तम् । **उदास्ते** उदासीनः । अस्य फलमाह । **एवमिति** ।

अथास्यान्यथा व्याख्यानमाह । **अथ मतमिति** । तादृगोपभोगान्न भूम्यादेस्तद्विषयव्यवहारस्य च हानिः; किं तु तस्य तादृशस्य व्यवहारहानिशङ्का स्यादिति तन्निवृत्यर्थमासेधो विधेय इत्यासेधस्यावश्यकर्तव्यतां विधत्ते इदं वचनमित्यर्थः । तदपि व्याख्यानं दूषयति । **तच्च नेति** । ननु तूष्णीं न स्थातव्यमित्युपदेशः किमदृष्टार्थः ? उत दृष्टार्थः ? ! न तावदन्त्यः, असंभवात्, व्यवहारहानिशङ्कायां सत्यां तन्निवृत्यर्थमुपदेशो वाच्यः । सा च कारणे सत्येव भवति नासति । तच्च कारणं विंशतिवर्षपरिमिता भुक्तिरुतान्यत् । तत्र नान्त्यः । वचनेऽनुक्तेः । नाद्य इत्याह । **स्मार्तेति** । स्मरणविषयतायोग्यकालिकभुक्त्या व्यवहारहानिशङ्कैव नोत्पद्यते साक्ष्यादिसंभवादिति भावः । नाप्यदृष्टार्थ इत्याह । **तूष्णीमिति** । दोषद्वयप्रतिपादकोऽयं ग्रन्थः । अविवक्षितं स्यादित्यस्योभयत्रान्वयः । तथा चैतावन्मात्राभिधित्सायामविवक्षितमनुपपन्नं स्यादित्याद्यर्थः । तूष्णीं नेति उपदेशस्यादृष्टं फलं विधिबलात्कल्प्यं यद्यपि तथापि कल्पनैव तावद्गरीयसी । किं चादृष्टसत्त्वमेव न । 'बालाग्रशतभागोऽपि न कल्प्यो निष्प्रमाणकः ।' इतिन्यायात् । किं च वक्ष्यमाणप्रकारेण गत्यन्तरसंभवे तदभावमूलकतत्कल्पनाऽसंगता । एवं चादृष्टकल्पनयैवास्य सार्थक्यकल्पनायां बीजाभावान्नास्यादृष्टार्थत्वमिति भावः ।

अस्योपदेशस्यादृष्टार्थत्वमभ्युपेत्याप्याह । **विंशतीति** । अत्र तदविवक्षितमनर्थकं स्यादित्यर्थः । अस्योपदेशस्यादृष्टफलकत्वे तत्फलस्य विंशतिवर्षरूपमर्यादानुक्तावपि तूष्णीं न स्थातव्यमिति निषेधमात्रेणापि सिद्धिरिति तदुपादानमनर्थकं स्यादिति भावः । यद्वा तदपि व्याख्यानं दूषयति । **तच्च नेत्यादिना** । असौ मदीयं क्षेत्रादिकं प्रतिग्रहादिकं विनोपभुङ्क्ते इति स्मरणयोग्यकालिकी या भुक्तिस्तस्या व्यवहारहानिशङ्कां प्रति कारणत्वाभावात्तन्निवृत्त्यर्थत्वस्यैतदुपदेशस्यासम्भवात्तूष्णीं

नेत्येतावन्मात्रोपदेशे वाच्ये विंशतीत्यनर्थकं स्यात्, दृष्टफलाभावेनादृष्टफलकल्पनायां विंशतिवर्षरूपमर्यादानुक्तावपि सम्भवात् इति पाठः।

विंशतीत्यस्योक्तमानर्थक्यं निराचष्टे। **अथोच्यतेत्यादिना** ऊर्ध्वं विंशतेरिति शेषः। 'पश्यत' इत्यनेन तूष्णीं नेत्येवोपदिश्यते नाधिकं यद्यपि विंशतीति सार्थकम्। तथाहि। यदि विंशतिवर्षपर्यन्तं स्वामिकृतासेधाभावेन तद्रहितं तावत्कालं वस्तुतः कपटकृतलेख्यमपि प्रत्यर्थिनोपयुक्तं तदा विंशतिवर्षोत्तरं तत्पत्रं निर्दोषमिति पत्रदोषोद्भावननिराकरणार्थत्वेन तत्सार्थकमिति भावः। अत्र प्रमाणमाह। **यथाहेति**। **शक्तस्य** निराकरणे समर्थस्य। **संनिधा**वित्यनेनासांनिध्यव्यवच्छेदः। **लेख्येन** कपटकृतेन। **विंशद्वर्षाणी**त्यार्थम् कालाध्वनोरिति द्वितीया। भुज्यते इति प्राग्वत्।

इदमपि निराकरोति। **तदपि नेति**। तथा तस्य सार्थक्येऽप्याध्यादिष्वपि उक्तन्यायस्य तुल्यत्वेनाग्रे आधिसीमोपेत्यादिमूलवचनेनापवादत्वोक्त्यसङ्गत्यापत्त्या मूलयोर्मिथो विरोधापत्तेरिति भावः। ननूक्तरीत्या पश्यत इत्यनेन सामान्यतो विंशतिवर्षोपभोगोत्तरं सर्वत्र पत्रेषु दोषोद्भावननिराकरणे प्राप्ते आधिसीमोपेत्यनेन विशेषवचनेन तद्विषये तथा न किं तु तदुत्तरमपि तदुद्भावनं कर्त्तव्यमेवेति बोध्यते इति प्रागुक्तापवादत्वसम्भवेन तस्य कुतो विरोधो मिथ इति चेन्न। वचनान्तरविरोधेनैवं व्यवस्थाया दुर्वचत्वात्। तदेतदभिप्रेत्य तद्वचनमाह। **यथाहेति**। तथा च तथाऽङ्गीकारे **कात्यायनादि**विरोधोऽन्यथा मिथो विरोधः। सेयमुभयतःपाशा रज्जुरिति भावः। **अथेति**। आधिसीमापत्रयोरपि तदुत्तरं दोषोद्भावनं न अपि तु अदृष्टमेवेत्यस्यैतदुभयप्रतिपाद्यत्वेनैतद्विपरीततया मूलवचनयोर्व्यवस्थायामेतद्विरोधः। न चैतद्युक्तं वक्ष्यमाणप्रकारेणाविरोधेनैवोपपत्तेरितिभावः **सत्योऽर्थ इति**। निर्दुष्टोऽर्थ इत्यर्थः। अन्योऽर्थ इति पाठान्तरम्।

तमेव स्वाभिमतमाह। **उच्यते इति**। **इह** पश्यत इत्यत्रवचने। **विवक्षितेति**। तात्पर्यत इति भावः। अत एवोपपादयति। **तथाहीति**। **निराक्रोशमिति**। उपभोगक्रियाविशेषणम्। **फलेति**। तावत्पर्यन्तं ततस्तेन लब्धेत्यादिः। ननु स्वल्पापराधे महदनिष्टमनुचितमत आह। **अस्मादिति**। पश्यत इति वाक्याचेत्यर्थः। अन्यथैतस्य वैयर्थ्यं स्पष्टमेव। पदकृत्यान्याह। **परोक्षेति**। **साक्रोशे इति**। फलानुसरणं लभते एवेत्यस्यानुषङ्गः। अत्र हेतुमाह। **अब्रुवत इति**। यतोऽब्रुवत एव फलहानिरतो ब्रुवत आक्रोशं कुर्वतः फलमस्तीति भावः। **निराक्रोशे चेति**। फलानुसरणमित्यनुषङ्गः।

इदमप्ययुक्तमिति शङ्कते। **नन्विति**। **फलस्येति**। फलस्यापीत्यर्थः। **तद्धानिरिति**। फलहानिरपीत्यर्थः। अस्तु स्वत्वं तथापि विषयविशेषे फलहानिरुपपन्नैवेत्यर्द्धाङ्गीकारेण परिहरति। **बाढमिति**। क्व फलहानिर्नास्ति क्वास्तीत्याकाङ्क्षायां यत्र फलं विद्यते तत्र हानिर्न, विपरीते विपरीतमित्याह। **तस्येति**। फलस्येत्यर्थः। स्वरूपपदं स्पष्टार्थं। यद्वा स्वरूपतः सर्वांशेनैवेत्यर्थः। **तादिति**। क्षेत्रेत्यर्थः। **पूगः** क्रमुकः। एवं चायं पूर्वपक्षविषय इति भावः।

प्रकृतवचनविषयमाह। **यत्पुनरिति**। यत्त्वित्यर्थः। 'यत्र पुनरिति' पाठान्तरम्। **स्वत्वनाश इति**। सम्बन्धिनः स्वरूपस्याभावात्सम्बन्धघटकस्वत्वस्य निवृत्तावपीत्यर्थः। **वचनेनेति**।

चौरेणापहृतं द्रव्यं स्वामिने दापयित्वा ततो यथा राज्ञा दण्डो गृह्यते तद्वत्तादृशोपभोक्तारं पापिष्ठं तं स्वामिने तद्दापयित्वा स्वयं राजा दण्डयेदिति तत्पूर्वदण्डविधायकेन **कात्यायन**वचनेनेत्यर्थः। **अपोद्यते** बाध्यते। उक्तवचनबलात्फलमूलादिदाने प्राप्ते केवलं फलहानिस्तत्रानेन विधीयते इति [*]तदपवादत्वमस्येति भावः। अत एवाह। **राजदण्ड इति**। तद्वचनबोधित इत्यर्थः। स्वत्वहेतुः प्रतिग्रहक्रयादिरागमः। वचने तत् क्रियाविशेषणम्। **अपेति**। तद्वदेतद्विषयेऽपवादाभावाच्चेत्यर्थः। स्वोक्तमुपसंहरति। **तस्मादिति**। अन्योपेक्षा नापराध इति सूचयन्नाह। **स्वाम्युपेति**। **नष्टमिति**। स्वरूपत इति भावः। **व्याख्यातमिति**। उक्तवत्तस्यापि फलहानिपरतया सुयोजत्वात्॥ २४॥

## याज्ञवल्कीये २५ श्लोकः

यथाश्रुतप्रकारद्वयेऽप्यनुपपत्तेराह **आधिश्चेत्यादिना**। लघ्वक्षरत्वाज्जडस्य पूर्वनिपातः। अत्र द्वन्द्वस्वरूपप्रतिपादने तात्पर्यं न तु क्रमे। तथा च जडेत्यादि संसाध्य तेन सहोपनिक्षेपादिभिस्त्रिभिर्व्युत्क्रमेण त्रिवारं द्वन्द्वः कार्यः। यथाश्रुते तु आधिशब्दस्य घ्यन्तत्वात्पूर्वनिपातसम्भवेऽपि द्वितीयद्वन्द्वे जडेत्यादेः पूर्वनिपातः स्यात्। अनित्यत्वं त्वगतिकगतिः। अत उक्तैव गतिर्न्याय्या। उपनिधिते उपनिक्षेपस्य भेदं दर्शयन्नेतदर्थमाह। **उपनिक्षेपो नामेति**। तथा च रूपसंख्ये अप्रदर्शयित्वा रक्षणार्थं यद्दीयते स **उपनिधिः**। स्वमुद्राद्यङ्कितग्रन्थिकरणमुभयत्र समानम्। अत एव तत्र भोगाभाव इति बोध्यम्। **अत्रोपे**त्यविवक्षितमिति सूचयन्नाह। **यथाहेति**। स्वमित्यस्य यदित्यादिः। **यत्र** परहस्ते। **विस्रम्भात्** विश्वासात्। अनेन रूपसंख्याऽप्रदर्शनं सूच्यते। **अविशङ्कित** इत्यनेन रक्षणार्थत्वं सूच्यते। तथोपनिधीति भिन्नं वाक्यम्। सामान्ये नपुंसकम्। विनायोगे द्वितीयैकवचनम्। तद्विना चेत्यर्थः। तद्व्युत्पत्त्यर्थस्तु उक्तः योगार्थमाह। **उपनिधानमिति**। अभ्यर्हितत्वविवक्षया राजशब्दस्य पूर्वनिपातः। धनैरपीत्यत्र विनेत्यस्यानुषङ्गो बोध्यः। इदं च पूर्ववाक्येन पश्यत इत्यनेनान्वेति। तथा च तदेकवाक्यता शाब्दी।

अथ तात्पर्यार्थमाह। **आध्यादिष्विति**। अत्रुवत इति छेदः। **अपि**नाऽन्यसमुच्चयः। **अग्रिमापिना** प्राकृत्वसमुच्चयः। **उपचयेति**। फलहानिर्न भवतीत्यर्थः। अत्र हेतुमाह। **पुरुषेति**। स्वामीत्यर्थः। स्वल्पसत्त्वेऽपि न दोष इत्याह। **तथाविधेति**। येनेदृशं फलं तादृशेत्यर्थः। अत्र हेतुमाह। **उपेक्षेति**। **तत्र तत्र** आध्यादिषु। **आधित्वोपाधिक एवेति**। आधित्वनिमित्तक एवेत्यर्थः। आधिक्योपाधिक इति पाठान्तरम्। तत्र आधिक्यं वृद्धिः। **चिरकृतेति**। पूर्वतरकृतेत्यर्थः। चिरधृतेति पाठान्तरम्। सुसाध्यत्वादिति पाठः। सुसाधनत्वादिति पाठान्तरम्। मूलक्रमबोधने तात्पर्यादाह। **उपनिक्षेपेति**। अन्यथा ऽल्पाच्तरत्वात्पूर्वनिपाते वैपरीत्यं स्यात्। प्रतिषिद्धत्वादित्यस्योपेक्षोपपत्तिरित्यत्रान्वयः। निधानकाले तत्कृतं प्रतिषेधमुल्लङ्घ्य भोगे क्रियमाणे आह। **प्रतीति**।

---

* तदपवादित्वमस्येति। १ **खफ**—आधेर्ध्येतत्वात्। २ **खफ**—तृतीयद्वन्द्वे। ३ **क**—उपनिधिना। ४ **क**—अदर्शयित्वा। ५ **फ**—भोगोभावः। ६ **ख**—हेतुमाहापेक्षेति। ७ **ख**—चिरमृतेति। ८ **कग**—सुसाधत्वादिति। ९ **ख**—अल्पाचारत्वात्। १० **फ**—निघाते। ११ **खग**—सिद्धत्वात्—**फ**—विरुद्धत्वात्।

षष्ठीतत्पुरुषपूर्वपदकतृतीयातत्पुरुषः । **चो** व्युत्क्रमे । लाभाचेत्यर्थः । **व्याकुलत्वादिति** । उपेक्षा युक्त्यैवेत्यस्यानुषङ्गः । एवमग्रेऽपि । **तदर्थेति** । विचारानुष्ठानयोर्द्वन्द्वं कृत्वा तदर्थशब्देन षष्ठीतत्पुरुषं कृत्वा पुनस्त्रयाणां द्वन्द्वं कृत्वा तृतीयातत्पुरुष इति भावः । उपसंहरति । **तस्मादिति** । **कदाचिदिति** । विंशतेः पूर्वं तत्रानन्तरं चेत्यर्थः ॥ २५ ॥

आध्यादिषु अपह्रियमाणेषु अव्यवहितग्रहणसम्भवे व्यवहितग्रहणाभावात् सङ्कोचे मानाभावाच्चाह । **श्रोत्रियेति** । अपहारे निमित्तमाह । **चिरेति** । धनमित्यस्यार्थमाह । **विवादेति** । **अनुवाद इति** । 'दाप्यः सर्वं नृपेणे' त्यनेन, 'सपणश्चेद्विवादः स्यात्तत्र हीनं तु दापयेदि' त्यनेन चास्यार्थस्य विहितत्वादिति भावः । 'निह्नवे भावितो दद्यादि'त्यनेनैवास्यार्थस्य विहितत्वात्तत्र दानस्य विहितत्वेन दानेनैव दापनस्याप्याक्षिप्तत्वादिति भावः । तृतीयपादार्थमाह । **दण्डं चेति** । तत्सममित्यस्य व्याख्या **विवादेति** । अनुषङ्गेणाह । **दापयेदिति** । **विधिरिति** । प्राड्विवाकादेरिति शेषः ।

नन्वयमपि विधिर्न[1], 'निह्नवे' इत्यत्र 'राज्ञे च तत्सममि'त्यनेनैव प्रकृतधनसमदण्डस्यापि विहितत्वादिति चेन्न । तस्य ऋणादानमात्रविषयत्वेनासर्वविषयत्वेन प्रकृतेऽप्राप्तेः । सर्वविषयत्वेऽपि तत्र तत्र विहितदण्डस्य 'राज्ञे च तत्सममि'त्यनेनानुवादात् । अतो न दोषः । प्रतिपादितमिदं तत्रैव । तदेतत्[2] ध्वनयन्नेवाह । **यद्यपीति** । गृहान्तरादिरूपदण्डदानस्यासम्भवेनाशक्यत्वात् । यद्यपि शक्तस्यास्ति सम्भवस्तथापि साम्यं दुर्घटम् । तथाचाध्यादिसर्वविषयत्वमेतस्यानुपपन्नमिति भावः ।

**आदिना** 'क्षेत्रस्य हरणे दण्डा अधमोत्तममध्यमाः' । ( या. व्य. अ. श्लो. १५५ ) इत्युत्तरार्धपरिग्रहः । **दण्ड इति** । तत्रेति शेषः । तथा च तत्सममित्यनेन तादृशे स्थले वक्ष्यमाण एव मूल्यसाम्यद्वारा दापनीयत्वेनास्य दण्डो विधीयते इति भावः । नन्वेवमत्राग्रे चैकस्यैवार्थस्य विधानादन्यतरस्याविधित्वं स्यादिति चेन्न । वक्ष्यमाणस्थले दण्डस्वरूपविधिरत्र तु प्राप्तदण्डानुवादेन दापनविधिरित्येवमुभयत्र[3] विधिसम्भवात् ।

तुर्यपादार्थमाह । **अथेति** । बह्विति पूर्वान्वयि । शक्त्यपेक्षत्वस्य मर्यादामाह । **यावतेति** । एतल्लाभोपायमाह । **दण्ड इति** । **तेन** दण्डेन । **दण्डेति**[4] । इत्यत्र **गौतमीये** दण्डग्रहणस्य दमनार्थत्वस्योक्तत्वात् इत्यर्थः । तथा च तस्य योगरूढत्वेन योगवशेन तल्लब्धमिति भावः । अनेनैवाधिकस्येव न्यूनस्यापि विनिगमकाभावात्तथोक्त्या संग्रह इत्याह । **यस्य त्विति** । एवमेवानेनैव लब्धं विशेषान्तरमाह । **यस्य पुनरिति** । यस्य त्वित्यर्थः । ननु धिग्दण्डादेर्दण्डत्वमेवादावसिद्धं, सिद्धेऽपि वा[5] दण्डत्वे तद्विधिः कुतो ऽवगम्यते इत्यत आह । **तथा चेति** । **धिग्दण्डो** 'धिक् धिगिति' कुत्सनम् । **वाग्दण्डः** परुषशापवचनात्मकः[6] । **धनदण्डो** धनापहारः । **वधदण्डः** शारीरो बन्धरोधादिजीवितवियोगान्तः[7] ।

---

१ **गफ**–नन्वयमपि विधिर्न, 'दंडं च स्वपणं चैवे'त्यनेनैवास्यापि विहितत्वादिति चेन्न । तत्र दण्डमात्रस्य दापनविधावपि न तत्समस्येति भेदात् । निन्ह्वे तु भयप्रदानविधिर्न तु दोषं न विधिरध्ययनाध्यापनविधिवदुभयोरावश्यकत्वमिति भावः । २ **फ**–तदेतत् तटे तीरे । ३ **ग**–उभयविधिसम्भवात् । ४ **फ**–'तेन दण्डेन दण्डति' इत्यत्र । ५ **ख**–वाग्दण्डत्वे । ६ **क**–पुरुषवाक्यवचनात्मकः । ७ **ग**–वध ।

एते च चतुर्विधा दण्डा व्यस्ता एकैकशः, समस्ता द्वित्रास्त्रिचतुरा वा ऽपराधानुसारेण प्रयोक्तव्याः । तदुक्तं **मनुना,** ( अ. ८ श्लो. १३० ) ।

"वधेनापि यदा त्वेतान्निग्रहीतुं न शक्नुयात् । तदैषु सर्वमप्येतत्प्रयुञ्जीत चतुष्टयम्" ॥ इति ।

**वधेनापि** ताडनेनापि । **अपिरन्यसमुच्चये** । उक्तक्रमेण पूर्वपूर्वासाध्ये उत्तरः उत्तरः प्रयोक्तव्यः । तथा चात्र प्रथमतदनन्तरतृतीयातःपरशब्दा धिग्दण्डवाग्दण्डधनदण्डवधदण्डानां मध्ये पूर्वपूर्वापेक्षयोत्तरोत्तरस्याधिक्यप्रतिपादका न तु सर्वेष्वप्यपराधेषु प्रथमादिक्रमेण कर्त्तव्यताप्रतिपादका इति बोध्यम् । अयं पाठः प्रागुक्तस्य धिग्दण्डस्त्वथेतिमूलस्य संवादी ।

**मेधातिथिना** तु आद्ययोर्व्यत्ययेन पाठं धृत्वा यो गुणवानीषत्प्रथममेवापराधं कृतवान् स चानिर्भर्त्स्यः, 'साधु गुणवानसि मा पुनरेवं कार्षीरिति' । तथोच्यमानो यदि ततो न निवर्त्तते तदा धिग्दण्डेन कुत्साविशिष्टैः परुषवचनैर्निर्भर्त्स्यः । एवमग्रेऽपीति व्याख्यातम् । ***नारदेन** तु दण्डद्वैविध्यमुक्तम् । तथाहि, "शारीरश्चार्थदण्डश्च दण्डस्तु द्विविधः स्मृतः । शारीरस्ताडनादिस्तु मरणान्तः प्रकीर्तितः ॥ काकिण्यादिस्त्वर्थदण्डः सर्वस्वान्तस्तथैव च" । इति । द्विविधोऽप्यपराधानुसारेणानेकधा भवति । आह **स स एव,** 'शारीरो दशधा प्रोक्तो ह्यर्थदण्डस्त्वनेकधा' । इति ।

इदं च दण्डकथनम् ब्राह्मणादिसर्वविषयम् । न च 'राजा सर्वस्येष्टे ब्राह्मणवर्जमिति' **गौतमा-** 'न्न ब्राह्मणा दण्ड्या इति' वाच्यम् । तस्य प्रशंसार्थत्वात् । न चैवं 'षड्भिः परिहार्यो राज्ञाऽवध्यश्चादण्ड्यश्चाबहिःकार्य्यश्चापरिवाद्यश्चापरिहार्यश्चेति' तस्य प्रागुक्तस्वोक्तिविरोध इति वाच्यम् । अस्यैतदव्यवहितपूर्वतनेन स्वेनैव, स एष बहुश्रुतो भवति लोकवेदवेदाङ्गविद्वाकोवाक्येतिहासपुराणकुशलस्तदपेक्षस्तद्वृत्तिश्चाष्टाचत्वारिंशता संस्कारैः संस्कृतस्त्रिषु कर्मस्वभिरतः षट्सु वा सामयिकाचारिकेष्वभिविनीत इत्यनेन प्रतिपादितबहुश्रुतविषयत्वेन ब्राह्मणमात्रविषयत्वाभावात् । प्रतिपादितमिदमधस्तात् व्याख्यातं च ।

तदेतत् ध्वनयन्विशेषमाह । **वधदण्डोऽपीति । ब्राह्मणव्यतिरिक्तानां** ब्राह्मणव्यतिरिक्तानां तु । क्वचित्तथैव पाठः । अत्र क्वचिद्वधदण्डोऽपि शारीरो ब्राह्मणव्यतिरिक्तानां नवधा दर्शित इति पाठः । स च वक्ष्यमाणाद्यव्याख्यानानुकूलः । आद्यपाठस्तु द्वितीयव्याख्यानानुकूलो दश स्थानानीत्युक्तिस्वरससिद्धः । 'शारीरो दशधा प्रोक्त' इति **नारद**संवादी चेति बोध्यम् । तत्र मानमाह । **यथाहेति । त्रिषु** क्षत्रियवैश्यशूद्रेषु वर्णेषु यानि दण्डस्य स्थानानि तानि दश सोऽब्रवीदित्यर्थः । इदमुपलक्षणमनुलोमादेरपि । तदेतत् ध्वनयन्नाह । **अक्षत इति ।** शारीरसकलवधदण्डरहित इत्यर्थः । **व्रजेत्** राजगृहात् पुराद्वा । **पञ्चमं** स्थानम् अव्यवहितेनान्वेति । स्थानशब्दोऽत्र विषयपरः । तत्तत्प्रदेशे पीडनीय इति तात्पर्यम् । न च धनदण्डस्य पृथग्विहित-

---

१ **कखफ**–स वाचा निर्भर्त्स्यः । २ 'न साधुकृतवानसि' इति मेधातिथिटीकांतर्गतः पाठः ।

* इमौ श्लोकौ=भट्टजॉलीभिः संशोधित–नारदस्मृतौ परिशिष्टभागे उपलभ्येते । शारीरश्चार्थदण्डश्चेत्यस्योत्तरार्धः शारीरो दशधा प्रोक्त इति अग्रे वर्तते । ५३ । ५४ श्लोकौ । शारीरस्ताडनादिरिति श्लोकेऽपि पूर्वार्धोत्तरार्धयोर्विपर्यासो दृश्यते ।

३ **गफ**–पुस्तकपाठः ।

त्वाच्छारीरभेदमध्ये तदुक्तिः **पुनरयुक्ता** ऽसम्बद्धा चेति **वाच्यम्** । **धनकृतापराधे** तद्दण्ड एव नान्य इत्येतदर्थं पुनस्तदुक्तेः । तन्मध्ये लेखस्तु तत्तुल्यत्वप्रतिपादनाय । यद्वा तत्पीडया शरीरपीडापरोऽयमन्य एव ततो धनदण्डादिति प्रकारान्तरमत्र **मेधातिथिनो**क्तं तत एव बोध्यम् ।

अव्यवस्थानिरासायोक्तेस्तात्पर्यमाह । **एतेषां चेति** । उपस्थादीनां मध्ये इत्यर्थः । उपस्थमत्र स्त्रीपुंसयोः प्रजनोत्पादकम् । यत्र च दण्डविशेषो नाम्नातस्तत्र यस्य यत्कृतापराधः स तत्रैव पीडनीयः । तत्रागम्यागमने उपस्थनिग्रहः । अभक्ष्यभक्षणे उदरनिग्रह आहारनिवृत्त्यादिना । वाग्दण्डपारुष्ये जिव्हायाः, स च छेदः । चौर्ये हस्तयोः । पादजबलवद्व्यतिक्रमात्[1] पादयोः । राजदारदिदृक्षायां चक्षुषोः । तदनुलेपनाद्याजिघ्रतो नासिकायाः । राजादिरहस्यं भित्त्याद्यन्तरे शृण्वतः कर्णयोः । महापातकिनो मारणे देहस्येति बोध्यम् ।

ननु आध्याद्यपहारे महादोषे अकिञ्चनस्य धिग्दण्डाद्युक्तमयुक्तं तस्य स्वल्पापराधविषयत्वादतः तत्रैव पक्षान्तरमप्याह । **कर्मेति** । अत्र क्रमोऽप्येवमेव बोध्यः । **मेधातिथ्युक्तेः**, अग्रे ऽशक्ताविस्युक्तेश्च । अत्र मानमाह । **यथोक्तमिति** । **धनेति** । सर्वथा धनदानाक्षमं ज्ञात्वा स्वाधीनं कर्म कारयेदित्यर्थः । **अशक्तौ** कर्मकरणाशक्तौ । ब्राह्मणादृते इत्युभयोः शेष इति ध्वनयन्नाह । **ब्राह्मेति** । **पुनः** तु । अधिकरणस्य शेषत्वविवक्षया षष्ठी, प्रयोज्यानीत्यस्य कर्त्तव्यानीत्यर्थो वा । **अवृत्ताविति** । **अवृत्तौ** दुराचारेऽन्यायिनि ब्राह्मणे स्वव्यापारनिरोधान्यायप्रख्यापनादीनि कर्त्तव्यानीत्यर्थः । ब्राह्मणे इति प्रकृतत्वाल्लब्धम् । **नारदेनापीति** । उक्त्वोक्तमित्यत्रान्वयः । **वधः** प्राणवियोगानुकूलव्यापारः । 'निर्वासने'त्यस्य नित्यसापेक्षत्वेन 'पुरादिति' विशेषणान्वितत्वेऽपि समासः । **तदङ्गेति** । यदङ्गकृतो ऽपराधस्तदङ्गेत्यर्थः । **वधादृते[2] इति** । एष दण्डविधिः स्मृत इत्यस्यानुषङ्गः । तदेव विशदयति । **न वधमिति** ।

वधानुकल्पमाह । **शिरस इति** । अत एव **मनुः**, "अब्राह्मणः सङ्ग्रहणे प्राणान्तं दण्डमर्हति । ( अ. ८ श्लो. ३५९ । ) मौण्ड्यं प्राणान्तिको दण्डो ब्राह्मणस्य विधीयते । इतरेषां तु वर्णानां दण्डः प्राणान्तिको भवेत् ॥ न जातु ब्राह्मणं हन्यात्सर्वपापेष्ववस्थितम् । राष्ट्रादेनं बहिः कुर्यात्समग्रधनमक्षतम् ॥ न ब्राह्मणवधाद्भूयानधर्मो विद्यते भुवि । तस्मादस्य वधं राजा मनसा ऽपि न चिन्तयेत् ॥" इति

( अ. ८ श्लो. ३७९–३८१ )

**यमोऽपि,**

'सर्वेषामेव वर्णानामन्योन्यस्यापराधिनाम् । शारीरं धनसंयुक्तं दण्डं धर्म्यं प्रकल्पयेत् ॥
जगत्सर्वमिदं हन्यात् ब्राह्मणस्य न तत्समम् । तस्मात्तस्य वधं राजा मनसाऽपि न चिन्तयेत् ॥
अवध्यान् ब्राह्मणान् प्राहुः सर्वपापेष्ववस्थितान् । यद्यद्विप्रेषु कुशलं तत्तद्राजा समाचरेत् ॥' इति ।

**सुमन्तुरपि**, 'नाततायिवधे दोषोऽन्यत्र गोब्राह्मणवधादिति' । **बृहस्पतिरपि**, 'महापातकयुक्तोऽपि न विप्रो वधमर्हति । निर्वासनाङ्कने मौण्ड्यं तस्य कुर्यान्नराधिपः ॥' इति ।

१ क=पादजे बलवद्व्यतिक्रमात् । २ फ=वधावृते ।

'वधाद्दते ब्राह्मणस्य दण्डो भवति कर्हिचित्। अवध्या ब्राह्मणा गावो लोकेऽस्मिन्वैदिकी स्मृतिः॥' इति **स्मृत्यन्तर**मपि। **पुरादिति**। अत एव **मनुः**, "असम्भोज्या असंयाज्या असम्पाठ्याविवाहिनः। चरेयुः पृथिवीं दीनाः सर्वधर्मबहिष्कृताः॥ ज्ञातिसम्बन्धिभिस्त्वेते त्यक्तव्याः कृतलक्षणाः। निर्दया निर्नमस्कारास्तन्मनोरनुशासनम्॥" इति। (अ. ९। श्लो. २३८।२३९)।

**ललाटे चेति**। अत एव **बृहस्पतिः**, 'हस्ताङ्घ्रिलिङ्गनयनं जिव्हा कर्णौ च नासिका। ग्रीवा पादार्द्धसन्दंशं ललाटौष्ठं गुदं कटिः॥ स्थानान्येतानि दण्डस्य निर्दिष्टानि चतुर्दश। ललाटेऽङ्को ब्राह्मणस्य नान्यो दण्डो विधीयते'॥ इति।

**प्रयाणमिति**। अत एव **यमः**, "ब्राह्मणस्यापराधेषु चतुर्ष्वेव विधीयते। शिरसो मुण्डनं दण्डः पुरान्निर्वासनं तथा॥ प्रख्यापनार्थं पापस्य प्रयाणं गर्दभेन च। ललाटे चाङ्ककरणं कुर्याद्राजा यथाविधि"॥ इति। **दर्शितेति**। **मनुने**ति शेषः। **गुर्विति**। "ब्रह्महा च सुरापश्च स्तेयी च गुरुतल्पगः। एते सर्वे पृथक् ज्ञेया महापातकिनो नराः॥ चतुर्णामपि चैतेषां प्रायश्चित्तमकुर्वताम्। शारीरं धनसंयुक्तं दण्डं धर्म्यं प्रकल्पयेत्॥ इत्यादिः।" (अ. ९।२३५)। **सुरेति**। सुरासम्बन्धी यो ध्वजः स कार्य इत्यर्थः। **श्वपदं** शुनःपदम्। **अशिराः** कबन्धः। 'ब्राह्मणस्य च ब्रह्महत्यागुरुतल्पसुवर्णस्तेयसुरापानेषु कबन्धभगश्वपादध्वजांस्तप्तेनायसेन ललाटेऽङ्कयित्वा विषयान्ते निर्वासनमिति' **बौधायनः**। "ब्राह्मणस्यापराधेषु चतुर्ष्वङ्को विधीयते। गुरुतल्पे सुरापाने स्तेये ब्राह्मणहिंसने॥ गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः। स्तेये तु श्वपदं कृत्वा शिखिग्रीवेण पूरयेत्॥ विशिराः पुरुषः कार्यो ललाटे द्विजघातिनः। असम्भाष्यस्तु कर्त्तव्यस्तन्मनोरनुशासनम्॥" इति **नारदः**। (प. ४३। ४४। ४५।)। 'शिलाञ्जनं शिखिग्रीव'**मित्यमरः**'। (२–९–१०१)। अस्यापवादोऽपि **मनुनोक्तः**। "प्रायश्चित्तं तु कुर्वाणाः सर्वे वर्णा यथोदितम्। नाङ्क्या राज्ञा ललाटे स्युर्दाप्यास्तूत्तमसाहसम्॥ आगःसु ब्राह्मणस्यैव कार्यो मध्यमसाहसः। निर्वास्यो वा भवेत् राष्ट्रात्सद्रव्यः सपरिच्छदः॥" इति (अ. ९। २४०–२४१) परिच्छदशब्देन पुत्रदारभृत्यहभ्त्यश्वादिसम्पदुच्यते। **सपरिग्रह इति** पाठान्तरेऽप्येवम्।

तदङ्गच्छेदोऽपि ब्राह्मणस्य नास्तीति प्रतिपादयन् विरोधं परिहरति। **यत्त्विति**। **आपस्तम्बेनोक्तमिति**। **आपस्तम्बवचनमिति** पाठान्तरम्। **न चक्षुरुद्धरणमिति**। न चक्षुषोरुद्धरणं तस्यार्थ इत्यर्थः। क्वचित्तथैव पाठः। **मनुं** प्रागुक्तमाह। **अक्षत इति**। **गौतम**माह। **न शारीरो ब्राह्मणे दण्ड इति**। प्रथमादिना प्रागुक्त**मनुगौतम**वचनान्तरपरिग्रहः। द्वितीयादिना, 'न त्वङ्गभेदं विप्रस्य प्रवदन्ति मनीषिणः। तपसा चेज्यया चैव ब्राह्मणः पूयते सदेति॥' **हारीतस्य**। 'सर्वत्र त्रयाणां वर्णानां धनहारको वधबन्धक्रियारूपयोगो महत्स्वपि पातकेषु विवासकरणं ब्राह्मणस्य प्रायश्चित्तानि वा शोधनमपीड्यो हि ब्राह्मण' इति **शङ्खलिखितयोः**, प्रागुक्तस्मृतीनां च परिग्रहः। सर्वस्वहरणमपि ब्राह्मणस्य नास्ति। 'सद्रव्यः सपरिच्छद' इत्यग्रे, 'इतरे कृतवन्तस्तु पापान्येतान्यकामतः। सर्वस्वहारमर्हन्ति कामतस्तु प्रवासनम्॥' इति **मनूक्तेः**। (अ. ९। २४२।) त्रयाणां वर्णानां धनापहारवधबन्धनक्रियाविवासनाङ्ककरणं न ब्राह्मणस्येति **शङ्खोक्ते**-

१ क–शिखिपित्तेन।

श्च। तत्र धनापहारः सर्वस्वापहारो विवक्षितो वधसाहचर्यात्। शारीरस्त्ववरोधादिरिति प्रागुक्त**नारदीये** वधसर्वस्वहरणयोः पाठाच्चेति। तस्मात् ब्राह्मणस्य शारीरः सर्वोऽपि दण्डो नास्ति कदाचिदपि प्रागुक्तस्मृतिकदम्बात्।

'आचार्यं च प्रवक्तारं पितरं मातरं गुरुम्। न हिंस्यात् ब्राह्मणान्गाश्च सर्वांश्चैव तपस्विनः॥' (अ. ४। श्लो. १६२।) इति **मनू**क्तेश्च धनदण्डमध्ये सर्वस्वहरणं नास्ति। तदन्यधनदण्डस्त्वस्त्येव। समग्रधनमिति तु प्रकृतसाहसविषयम्। 'ब्राह्मणे साहसः पूर्वे' इति **मनू**क्तमप्येवम्। तथा च धिग्दण्डवाग्दण्डौ मौण्ड्यं यत्किञ्चिदर्थदण्डो विवासनाङ्ककरणगर्दभप्रयाणानि च पर्यवसितानि। इदमपि प्रायश्चित्तानिच्छोः। तदिच्छोस्तु तदेव नैतत्। एवं बहुश्रुतस्यापि न किञ्चित्। किं तु स्वयमेव निष्कृतिं कुर्यात्। साऽपि स्वल्पा प्रायश्चित्तप्रकरणे स्फुटीभविष्यति। अत एवात्रापि साक्षिप्रकरणे **मूले** ( श्लो. ८१–८२ ) उक्तम्। "पृथक् पृथक् दण्डनीयाः कूटकृत्साक्षिणस्तथा। विवादात् द्विगुणं दण्डं विवास्यो ब्राह्मणः स्मृतः॥ यः साक्ष्यं श्रावितो ऽन्येभ्यो निह्नुते तत्तमोवृतः। स दाप्योऽष्टगुणं दण्डं ब्राह्मणं तु विवासयेत्॥" इति स्तेयप्रकरणेऽपि, सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेत्। ( व्य. अ. श्लो. २७० ) इत्युक्तम्। **मनुनाऽ**प्युक्तं. "कौटसाक्ष्यं तु कुर्वाणांस्त्रीन्वर्णान्धार्मिको नृपः। प्रवासयेद्दण्डयित्वा ब्राह्मणं तु विवासयेत्" ॥ इति। ( अ. ८ श्लो. १२३ )

अस्यार्थोऽग्रे स्फुटीभविष्यति। अत्र प्रवास ओष्ठच्छेदनं जिह्वाछेदनं प्राणवियोजनं चेति यथायथं बोध्यम्। विवासो निष्काशनं नग्नीकरणं वा गृहभङ्गो वेति यथायथं बोध्यम्। तत्रेयं व्यवस्था। लोभादिकारणविशेषपरिज्ञानेऽनभ्यासे च ब्राह्मणस्यापि तत्र तत्रोक्तोऽर्थदण्ड एवाभ्यासे त्वर्थदण्डो विवासनं च। तत्रापि जातिद्रव्यानुबन्धाद्यपेक्षया विवासनं नग्नीकरणं गृहभङ्गो देशान्निर्वासनं चेति व्यवस्था द्रष्टव्या। लोभादिकारणविशेषापरिज्ञानेऽभ्यासे चाल्पविषये कौटसाक्ष्ये ब्राह्मणस्यापि क्षत्रियादिवदर्थदण्ड एव। महाविषये तु देशान्निर्वासनमेव। अत्राप्यभ्यासे सर्वेषामेव मनूक्तं बोध्यम्। अकिञ्चनस्य तु तस्य निमित्ततारतम्येन मौण्ड्याङ्ककरणगर्दभप्रयाणधिग्दण्डवाग्दण्डाः क्रमेण बोध्या इति। न च समग्रधनमित्याद्युक्त्या ब्राह्मणस्यार्थदण्डो नास्तीति वाच्यम्। अर्थदण्डाभावे शारीरदण्डे च निषिद्धे स्वल्पेऽप्यपराधे सधनस्य नग्नीकरणगृहभङ्गाङ्ककरणविप्रवासनं दण्डाभावो वा प्रसज्येत, यतः 'चतुर्णामपीति' प्रागुक्तस्मृतेः। 'सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां बलाद्व्रजन्।' इति स्मृतेश्चेति दिक्। एवं कर्मकारणबन्धनागारप्रवेशावपि ब्राह्मणस्य नेति सिद्धम्। तदेतदभिप्रेत्याह। **इत्यलं प्रसङ्गेनेति**॥ २६॥

अव्यवहितेन सङ्गत्यभावाद् व्यवहितेन सङ्गतिमाह। **स्वत्वेति**। 'पश्यतोऽब्रुवत' इत्यत्रेति भावः। **भोगमात्रस्य** केवलभोगस्य। एवमग्रेऽपि। आद्यपादार्थे शाब्दं स्वत्वोपपादकहेतोरागमस्य भोगात्प्राबल्यरूपं विशिष्टभोगस्य स्वत्वे प्रामाण्यमभिप्रायतोऽभिधास्यन्नाह। **स्वत्वेति**। तत्र हेतुमाह। **स्वत्वेति**। भोगस्य स्वत्वे प्रामाण्यस्य[1] प्रतिग्रहादिसापेक्षतया, प्रतिग्रहादेस्तु स्वत्वो-

---

१ ख–प्रामाण्यप्रतिग्रहादिसापेक्षतया।

त्पत्तौ भोगानपेक्षतया सापेक्षनिरपेक्षयोर्निरपेक्षं बलीय इति न्यायेनागमस्य प्रतिग्रहाद्यात्मकस्य ततो बलीयस्त्वमिति भावः । अत्र मानमाह । **यथाहेति** । यथाकथंचिदागमस्यापि न तद्धेतुत्वमित्याह । **विशुद्धेनेति** । कापट्यरहितेनेत्यर्थः । इदमेव व्यतिरेकमुखेन द्रढयति । **अविशुद्धेति** । तदेव विशदयति । **न चेति** । न हीत्यर्थः । एवं चेदमयुक्तमेवेति शङ्काशयः । समाधत्ते । **परेति** । तथा च तस्य तद्व्यभिचारित्वेन न तत्त्वमिति तद्युक्तमेवेति भावः । अत्रापि **नारद**मेवाह । **अत एवेति** । स्मर्यते इत्यत्रान्वयः । **केवलतः** केवलं । सार्वविभक्तिकस्तसिः । अस्यैव व्यवच्छेद्यमाह । **नागममिति** । **क्वचित्** क्वचिदपि । यद्वा **क्वापि** व्यवहारविषये । **भोगेति** । भोगच्छलस्योपदेशेन कथनेनेत्यर्थः । छलापदेशेनेत्यपपाठः, पौनरुक्त्यापत्तेः । फलितमाह । **अतश्चेति** । तस्य ततो बलवत्त्वाच्चेत्यर्थः । तत्र तावत्सामान्यत आह । **सागम इति** । सागमः विशुद्धागमसहितः । **दीर्घेति** । बहुव्रीहिः । एवमग्रेऽपि । **अविच्छेदः** निरन्तरः । **अपरिवर्जितः** निराक्रोशः । **विच्छेदोपरवोज्झित** इति पाठे विच्छेदश्चापरवश्च ताभ्यामुज्झितः रहितः चाविच्छेदोऽपरवोज्झित इति पाठस्तु युक्त एव । अपरव आक्रोशः । विच्छेदरहितो निरन्तरः । अपरवरहितो निराक्रोशः । **प्रत्यर्थीति** । व्यधिकरणपदो बहुव्रीहिः । **अपिः** प्रकृतान्यसमुच्चायकः ।

उक्तपञ्चविशेषणानां व्यवस्थार्थं पूर्वावतारितवचनस्यैव द्वितीयपादमभिप्रायतो व्याख्यातुमवतरणमाह । **क्वचिच्चेति** । *कपिञ्जलाधिकरणन्यायेन वक्ष्यमाणवाक्यकदम्बानुरोधेन चाह । **त्रयाणामिति** । नित्यसापेक्षत्वाद्वृत्तिः । सम्भवत्येकवाक्यत्वे इति न्यायेनाह । **आगम इति** । तात्पर्यार्थमाह । **स पुनरिति** । **स** पूर्वक्रमागतो भोगस्त्वित्यर्थः । आगमादित्यादेस्तात्पर्यार्थमाह । **आगमेति** । शाब्दस्तु प्राग्वत् । अत्र आगमनैरपेक्ष्यं तज्ज्ञाननैरपेक्ष्यकृतं, न तु तत्सत्तानैरपेक्ष्यकृतमिति विशेषमाह । **तत्रापीति** । आगमनिरपेक्ष इत्यत्रापीत्यर्थः । **बोद्धव्य**मित्यत्रान्वयः । तत्रापि कश्चिदागमोऽस्तीत्यागमसद्भावज्ञानापेक्षा न तु अयम् आगम इति शङ्कग्राहिकतया तज्ज्ञानापेक्षेति भावः ।

नन्वेवमपेक्षितसत्तासद्भावे किं मानमत आह । **सत्ता त्विति** । **तेनैव** विशिष्टेनोपभोगेनैव । नन्वेवमन्योन्याश्रयप्रसङ्गः । तथाहि प्रमाणभूतेन तादृशभोगेनागमसत्ताऽवगतिः आगमसत्ताऽवगतौ तत्सहकृतभोगस्य प्रामाण्यावधारणमिति । अत्राहुः । चिरकालोपभोगानुपपत्तिरूपार्थापत्त्याऽऽगमसत्ताऽवगतिः । तस्यामवगतायां तत्सहकृतभोगस्य प्रामाण्यनिश्चय इति साक्षात्प्रमाणभूतेन भोगेनागमसत्ताया अनिश्चयान्नान्योन्याश्रयः । **तेनैवेत्यस्य** तु तद्द्वारकार्थापत्तिरूपप्रमाणेनैवेत्यर्थ इति नासङ्गतिः । तथा च 'आगमो ऽभ्यधिक' इत्यत्र पादभेदेन द्विविधभोगस्य प्रामाण्यमभिमतं **मुनेः** । स्मार्त्तकालिकः अस्मार्त्तकालिकश्च सः । तदुभयं विभज्य योग्यतया व्यवस्थार्थमपवादविषयनिर्णयं विना नोत्सर्गविषयनिर्णय इति व्युत्क्रमेणाह । **विनेति** । **प्रदर्श**-

१ फ-विशुद्धागमसहित । * पू. मी. अ. ११ । पा. १ अधि. ६ । २ ख फ-आगमादेः । ३ ख फ-प्रामाण्यमिति । ४ फ-चिरकालोपभोगा उपपत्तिरूपार्थापत्ताऽऽगमसत्तावगतिः । ग-चिरकालोपभोगेनागमसत्तावगतिः । आगमसत्तानुपपत्तिरूपार्थापत्त्याऽऽगमसत्तावगतिः ।

६

**नार्थमिति** । विषयेत्यादिः । तथा सति आद्यचकारस्तदर्थे । अस्य तदपवादत्वे सतीति तदर्थः । अत एव सामान्यविशेषपर्यवसानेनाह । **आगम इति** । द्वितीयचकारस्त्वर्थे । **स्मार्त्तेति** । स्मरणयोग्येत्यर्थः । अस्मार्त्तकालिको भोग आगमज्ञाननिरपेक्षः स्मार्त्तकालिकस्तु आगमज्ञानसापेक्ष इति भावः ।

नन्वेकस्यैव भोगरूपप्रमाणस्य क्वचित्तत्सापेक्षत्वं क्वचिन्नेति कुतोऽवगतमित्यतो मौलक्रमेण सान्निध्याद् व्युत्क्रमेण द्वितीयमेव सहेतुमाह । **अतश्चेति** । उभयोरुक्तरीत्या विषयभेदाच्चेत्यर्थः । वस्तुतः स्मृत्यभावेऽपि तत्त्वस्येष्टत्वादाह । **योग्ये इति** । अभावप्रत्यक्षे योग्यानुपलब्धेः कारणत्वस्य तन्त्रान्तरे प्रसिद्धत्वादाह । **योग्यानुपेति** । स्मरणयोग्ये काले प्रतिग्रहादिरूपस्यागमस्य प्रमितियोग्यत्वे सत्यपि तदभावादागमाभावनिश्चयः । सिद्धे च तस्मिन्केवलभोगस्य बलात्कारेणापि सम्भवेनाप्रामाण्यप्रसङ्गात्तत्सापेक्षत्वमावश्यकमिति भावः ।

अथाद्यं तादृशमाह । **अस्मार्त्तेत्विति** । अस्मरणयोग्ये इत्यर्थः । एतद्विशेषणाभावेऽपि विशेषणान्तरसत्ता ऽपेक्षितैवेत्याह । **सन्तत इति** । निरन्तर इत्यर्थः । इदमुपलक्षणं दीर्घकालादेरपि । योग्यत्वे सत्यनुपलब्धिर्योग्यानुपलब्धिः । अस्मृतियोग्ये काले प्रतिग्रहादिरूपस्य तस्य प्रमायोग्यत्वाभावादेव योग्यानुपलब्ध्यभावः । अतस्तेनागमो नास्तीति निश्चेतुं न शक्यते । अभावग्राहकप्र[1]मायोग्यत्त्वाभावादेव योग्यानुपलब्धेरभावात् । एवं च पू[2]र्वत्र । तत आगमाभावनिश्चयेन यद्यपि भोगो न प्रमाणं मूलशैथिल्यात्, तथा[3]पि प्रकृते आगमाभावनिश्चयाभावात् मूलशैथिल्याभावेन तन्निरपेक्षत्वमिति तादृशो भोगः प्रमाणमित्यर्थः ।

**क्रिया** प्रमाणम् । **अनुगमेति** । तन्नि[4]श्चयाभावादित्यर्थः । ये गत्यर्थास्ते ज्ञानार्था इति भावः । **क्रमात्** प्रपितामहादिक्रमेण । स्मार्त्तकालस्य परमावधिमाह । **स्मार्तश्चेति** । अनुगमस्य साकाङ्क्षत्वात्तां पूरयन् प्रागुक्तैकवाक्यतायै सप्रतीकं तत्पदं व्याचष्टे । **अनुगमेति** । **इतीत्यस्यार्थ** इति शेषः ।

विशेषं वक्तुं, विना पूर्वेत्यस्य विषयं, सविशेषमुपसंहरति । **अतश्चेति** । उक्तहेतोश्चेत्यर्थः । **वर्षेति** । अनेन दीर्घकालत्वमुक्तम् । **सन्ततो** निरन्तरः । **अप्रतिरवः** निराक्रोशः । **प्रत्येति** । प्र[5]त्यर्थिन इत्यादिः । भोगस्य विशेषणान्तरमाह । **आगमेति** । उक्तरीत्येत्यादिः । **आक्षिप्तेति** । बहुव्रीहिः । गम इति पाठः । ततश्च पञ्चविशेषणमध्ये सागमत्वं स्मार्तकालविषयम् । अन्यच्चतुष्टयं तदन्यविषयमिति व्यवस्था सिद्धा । तं विशेषमेवाह । **अस्मार्तेऽपीति** । अत्र मानं **मनु**माह । **अत एवेति** । तस्यां सत्यां तस्याप्रमाणत्वादेवेत्यर्थः । अन्यथाऽनागमोपभोगे विशेषे[6]ण दण्डविधानं **मनू**क्तमयुक्तं स्यादिति भावः ।

ननु '**बहून्यब्दे**'त्यत्र अपिः समुच्चये, तथा चोक्तम्, 'अपिः सम्भा[7]वनानिवृत्त्यपेक्षासमुच्चयगर्हाशीःसमर्थभूषणप्रश्नेष्विति,' तथा च बहून्य[8]ब्दशतान्यभिव्याप्यापि य उपभुङ्क्ते स दण्ड्य

---

१ क ख–अभावग्राहकप्रमाणस्य । २ क–पूर्वं । ३ क–तथापि प्रकृते तु; ख–प्रकृते तु । ४ क ख फ–तन्निश्चयज्ञानाभावात् । ५ ग–अर्थिनः । ६ फ–विशेषदंडविधानम् । ७ ख ग फ–संभावननिवृत्यपेक्षा... ८ ग फ–बहूनब्दशब्दशतानभिव्याप्य ।

इत्यर्थेनैककर्तृकानेकवर्षोपभोगे एव समुच्चयस्य सम्भवो नान्यथेत्यपिशब्दबलादुपभोक्तुरेकत्वं प्रतीयते। तथा य इत्याद्येकवचननिर्देशादपि। तथा च य एकश्चिरकालमनागममुपभुङ्क्ते स दण्ड्य इत्येकस्यैव दण्ड्यत्वं न बहूनां, पितृपरम्परायातभोगे तु भोक्तृणामनेकत्वादीदृशैकभोक्तुरभावेन प्रथमस्यानागमेनोपभोक्तुरेकत्वेन तस्यैव चोरसदृशदण्डो न द्वितीयादेरिति, तत्र भोगस्य प्रामाण्यापत्त्याऽनागमस्मृतिपरम्परायां भोगो न प्रमाणमिति यदुक्तं तदयुक्तमित्याशयेन शङ्कते। **न चानागमं त्विति**। यद्वाऽपिशब्दः समर्थवाची, उक्तहेतोः। तथा चानागमचिरकालोपभोगे यः समर्थः स एव दण्ड्यो नान्य इत्यर्थेन प्रथमस्यैव समर्थत्वेन द्वितीयादेः परम्परायातभोगत्वे तादृशसामर्थ्याभावात्प्रथम एव दण्ड्य इत्याशयेनाशङ्कते। **न चानागमं त्विति**। **प्रयोगात्** प्रयोगाच्च। **प्रथमस्य** तस्यैव। इदमन्त्ये परम्परायातभोगविषयम्। अपिनैकमात्रकर्तृकानेकवर्षोपभोगसमुच्चयः। आद्ये त्वस्य साधारणत्वादपिना तद्वदल्पकालोपभोगसमुच्चयः।

इष्टापत्तिं निराचष्टे। **न चैतदिति**। नहीत्यर्थः। **कारणं** क्रिया। प्रमाणमिति यावत्। **नारदेति**। मध्येऽपि सागमाया एव भुक्तेः प्रामाण्यबोधक**नारद**वचनादित्यर्थः। य इत्यत्रोद्देश्यगतत्वेनैकत्वस्याविवक्षितत्वाच्चेत्यपि बोध्यम्। तथा च सर्वत्र सागमभुक्तेः प्रामाण्यमिति। द्वितीयादावपि निरागमोपभोगे दण्डो दुर्निवार इत्यनागमस्मृतिपरम्परायां सत्यां भोगो नैव प्रमाणमिति सिद्धम्। तदेतदुपसंहरति। **तस्मादिति**। **सर्वत्र** आदौ मध्येऽन्ते चेत्यर्थः। एवं चापिः सम्भावने, न समुच्चये नापि समर्थे इति। बह्वब्दशतव्यापित्वेन यस्य भोगः सम्भाव्यते स चेन्निरागमस्तर्हि तादृशोपभोगवानपि पुरुषो दण्ड्यः किमुतानागमाल्पभोगवानिति तात्पर्यार्थः।

नन्वस्मरणयोग्यकालिकस्य पूर्वक्रमायातस्यैव भोगस्यागमज्ञाननिरपेक्षस्य प्रामाण्यमिति यत्सिद्धान्तितं तदयुक्तम्। '**अन्यायेनापीति वाक्ये** 'ऽन्यायेनापि पित्रा यद्भुक्तं तथा पूर्वतरैस्त्रिभिर्यद्भुक्तं तत्रोभयत्रापि प्रत्यपहारो न शक्य इत्युक्त्याऽनागमोपभोगस्य स्मरणयोग्यकालिकस्यापि प्रामाण्यप्रतीतेरित्याशयेनाह। **यदप्यन्यायेनापीति**। अत्रान्यायेनापीति निरागमभोगस्य प्रामाण्यप्रतिपादकं, पित्रेति स्मरणयोग्यकालिकस्येति भावः। स्मार्त्तकालिकोपभोगस्य तन्निरपेक्षस्य न प्रामाण्यमिति प्रागुक्तरीत्यैव परिहरति। **तदपि पित्रा सहेति**। अयं भावः। पित्रा यद्भुक्तमिति न पृथगन्वयो, येन पित्रुपभोगस्य स्मार्त्तकालिकत्वेन तादृशनिरागमोपभोगस्य प्रामाण्यं स्यात्, अपि तु सहार्थयोगे इयं तृतीया। तथा च पित्रा सह पूर्वतरपुरुषत्रयोपभोगे क्रमेणाविच्छिन्ने तादृशे जाते तत्क्षेत्रादिकं तस्मादपहर्तुं न शक्यमिति प्रागुक्तैकवाक्यतया सम्भवतीति न्यायेन चैकवाक्यत्वेऽनेकपुरुषोपभोगस्य चिरतरकालं विना ऽसम्भवेनास्मार्त्तकालिकोपभोगस्य प्रामाण्यमुक्तमिति न निरागमस्य स्मार्त्तकालिकोपभोगस्य प्रामाण्यमिति।

ननु त्रिपुरुषागतमित्यनेनानेकपुरुषोपभोगलाभेऽपि कथमस्मार्त्तकालोपभोगलाभोऽत आह। **तत्रापि क्रमादिति**। लक्षणेति भावः। शक्यार्थत्यागे बीजमाह। **त्रिपुरुषेति**। पात्रादित्वात् स्त्रीत्वाभावस्तत्रात्र च। एवं **पूर्वकानीये**ऽपि। प्रसङ्गादिति पाठः। प्रसङ्ग इति पाठे यत

---

१ ग—ईदृशभोक्तृत्वस्याभावेन। २ क ख—प्रथमम। ३ क—इदमंते। ख—इदं परंपरा यात...

इत्यादिः । इष्टापत्तिं निराचष्टे । **तथा सतीति** । नन्वस्तु अस्मार्तकालिको भोगः प्रमाणमिति, तथाऽपि तस्यागमसत्तासापेक्षत्वेनान्यायेनापीत्युक्तिः कथमत आह । **अन्यायेनापीति** । चस्त्वर्थे । तत्र बीजमाह । **अपीति** । अन्यथा तदानर्थक्यं स्पष्टमेव ।

नन्वस्मार्त्तकालिकी भुक्तिरागमज्ञानं नापेक्षते तत्सत्तां त्वपेक्षत एवेत्युक्तमयुक्तं, यद्विना ऽऽगममिति वाक्येऽत्यन्तमित्युक्त्या सर्वात्मना भुक्तेस्तन्नैरपेक्ष्येण प्रामाण्यप्रतीतेरित्याशयेन शङ्कते । **यच्चोक्तमिति** । यदप्युक्तमित्यर्थः । अत्यन्तभुक्तमागमं विनेत्यन्वयः । प्रागुक्तरीत्या परिहरति । **तत्रापीति** । उक्तवाक्येऽपीत्यर्थः । **इति** वाक्यम् । **अत्यन्तम्** अतिशयेन । उक्तहेतोः शेषमाह । **उपेति** । **पुन**स्त्वर्थे । आगमस्वरूपमपि विनेत्यर्थः । व्याख्येयमित्यस्यानुषङ्गः । अत्र हेतुमाह । **आगमेति** । यत इत्यादिः । अयं भावः । सर्वात्मना ऽऽगमज्ञानस्यास्मार्तकालिकोपभोगे ऽपेक्षाया अभावादत्यन्तं सर्वात्मना आगमज्ञानं विना ऽस्मार्त्तकालिकोपभोगे सति यद्भुक्तं वस्तु तदपाहर्तुं न शक्यमित्येव वाक्यार्थो न तु वस्तुत आगमसत्तां विनाऽप्युपभोगात्स्वत्वमस्तीति, येन प्रागुक्तविरोधः स्यादिति उक्तवद्विरोधमत्रापि परिहरति । **क्रमादिति** । **उक्तार्थमिति** । अस्मार्त्तकालोपलक्षकत्वेनोक्तार्थकमित्यर्थः । तत्सिद्धमस्मार्तकालिक उपभोग आगमज्ञाननिरपेक्षः प्रमाणं स्मार्त्तकालिकस्तु तत्सापेक्षस्तथेति ।

तत्रान्त्यमाक्षिपति । **नन्विति** । **प्रामाण्येति** । प्रामाण्यं यदुक्तं तदनुपपन्नमित्यर्थः । अनुपपत्तेः स्फुटतयाऽऽभासात्तामुपपादयति । **तथा हीति** । यमागममपेक्षते भोगः स किं प्रमाणान्तरेणावगतोऽथ वा नेति विकल्पं हृदि निधायाद्ये दोषमाह । **यद्यागम इति** । **प्रमाणान्तरेण** भोगान्येन प्रत्यक्षादिना । **तेनैव** मानान्तरावगतागमेनैव । मानान्तरावगतत्वेनानुपयुक्तत्वादाह । **आगमेवेति** । तथा च मानान्तरप्रमिते उभयत्र ज्ञापकत्वासम्भवेनानुत्पादकत्वेन चाप्रामाण्यात्तत्सापेक्षो भोगः प्रमाणमिति दुर्वचमिति भावः । द्वितीये दोषमाह । **अथेति** । अनवगतागमेन वैशिष्ट्यासम्भवादिति भावः । प्रथमपक्षादरेऽपि कालविशेषे तदुपयोग इत्याह । **प्रमाणान्तरेणेति** । मानान्तरेणैवागमावगमो यद्यपि तथापि तादृगागमविशिष्ट एव भोगः प्रतिग्रहाद्युत्तरभाविनि कालान्तरेऽपि स्वत्वबोधक इति भावः ।

ननु तथाऽवगतागमेनैव स्वत्वावबोधे किं भोगेनेत्युक्तमेवात आह । **अवगतोऽप्येति** । **अलं** समर्थः । उपसंहरति । **इतीति** । कुत इत्यत आह । **मध्ये इति** ।

अव्यवहितसङ्गतिमाह । **आगमेति** । प्रमाणमित्यस्य स्यादिति शेषः । **स्तोका**ऽपीत्यस्य व्याख्या **स्वल्पापीति** । **बल**मित्यस्य व्याख्या **सम्पूर्णमिति** । ननु अस्योदाहरणं किमत आह । **अयमिति** । द्वितीयचस्त्वर्थे । **तत्र** तेषां मध्ये । **सविकल्पेति** । स तु स्वीकारो मदीयमेतदित्याद्यभिवदनविषयकस्तज्जन्यो वा सविकल्पकज्ञानरूप इत्यर्थः । यद्वा स इति भिन्नं पदं, वाचिकस्तु स्वीकारो यस्तादृशस्सविकल्पात्मकज्ञानरूप इत्यर्थः। **पुनः** तु । **तत्र च** उक्तरूपकायिकस्वीकारे च । **करे** शुण्डादण्डे । **दापयेत्** दद्यात् । स्वार्थे णिच् । निवृत्तप्रेषणादिति प्रकारो वा ।

**अनुमन्त्रयेतेति** । प्रतिग्राह्यो यदा प्राणी बलवान् वक्तुं समर्थस्तदा तं प्रतिग्राह्यं प्रतिग्रहीता अनुमन्त्रयेत, अमुक त्वं मदीयोऽसीति, सोऽपि ब्रूयादहं भवदीयोऽस्मीति । यदा

प्रतिग्राह्यमप्राणि अभिवदनानभिज्ञं गवादि प्राणिष्वपि कन्या च, तदुभयं प्रतिग्रहीताऽभिमृशेत् स्पृशेदुक्तस्थले इत्यर्थः । प्रकृतमाह । **तत्रेति** । तेषां मध्ये इत्यर्थः । **पुनः** तु । **तत्सहितादिति** । कायिकस्वीकारसहितागमापेक्षयेत्यर्थः ।

ननूपभोगसहितागमापेक्षयोपभोगरहितस्यागमस्य दुर्बलत्वे यत्रैकमेव क्षेत्रमेकस्याधीकृत्य पुनरन्यस्याप्याधीकरोति तत्र यदि दैवात् पूर्वस्य भोगाभाव उत्तरस्य तु भोगोऽस्ति तत्रापि भोगरहितागमस्य दौर्बल्यं स्यात्तथा चाधौ प्रतिग्रहे इति वचनविरोधः स्यादत आह । **एतच्चेति** । सिद्धान्तितमुक्तरूपमित्यर्थः । इतीत्यस्य बोध्यमिति शेषः ।

यद्यप्यागमोऽभ्यधिक इत्यस्य पूर्वमीषद्व्यवहितसंगत्या व्याख्यानं कृतं, तथाऽपि तन्न युक्तं, व्याख्याकृदुक्तार्थसङ्गतिलाभेऽपि मूलमङ्गत्यलाभात् । किं च प्रतिपादितार्थस्य तात्पर्यविषयतया यथाकथञ्चित् योजनेऽप्यशाब्दत्वेन स्वारस्यानावहत्वात् । अतस्तत्प्रकारान्तरेण ततोऽपि व्यवहितसङ्गत्या शब्दमर्यादया व्याचष्टे । **अथवेति** । **समवाये इति** । एतेषां लिखितादीनां समवाये मेलने इत्यर्थः । सर्वेषां सम्भवे इति यावत् । इदमर्थमाह । **आगम इति** । प्राग्वत् द्वितीयपादार्थमाह । **पूर्वेति** । पूर्वक्रमायातभोगान्यभोगापेक्षयाऽऽगमो बलवानित्यर्थः । पूर्वक्रमागतभोगस्य विजातीयागमापेक्षया क्वचित् बलवत्त्वम् । तत्तात्पर्यविषयमाह । **स पुनरिति** । स त्वित्यर्थः । अत एव वचनेऽन्यथाक्रमसत्त्वेऽपि अत्रानुवादेऽन्यथा पठितम् एतद्वचनक्रमेण द्वितीयार्धे तात्पर्यतो व्याचष्टे । **मध्यमेत्विति** । अविर्बहुभोगसहितपरिग्राहकः । प्रतियोग्यन्तराभावेन स्वापेक्षया केवलमस्याः[1] प्राबल्यासम्भवेन च योग्यतया ऽभुक्तितो भुक्तेः प्राबल्यमनेन बोध्यत इति भावः । पूर्वार्धमेव समवायविषयमिति तात्पर्यम् । **इति** व्याख्यानसमाप्तौ ।

अत्र मानमाह । **एतदेवेति** । एतेन प्रागुक्तव्यवच्छेदः । चतुर्थपुरुषविषयमाह । **कारणं भुक्तिरिति** । एवेन प्रागुक्तागमव्यवच्छेदः । **सन्तता** निरन्तरा । **चिरन्तनी** दीर्घकाला । चिरन्तनेति पाठे आर्षत्वाट्टाप् ॥ २७ ॥

## याज्ञवल्कीये २८ श्लोकः

१ । तस्य तत्सङ्गतत्वादेव तेन उत्तरसङ्गतिमाह । **पश्यत इति** । **उक्तमिति** । सिद्धान्तमतेनेति भावः । **तत्र** तथा सति । अन्वये दृष्टान्तः । **दर्शयितुम्** अनेनैव तात्पर्यतः प्रतिपादयितुम् । अयं भावः । आद्येन पुरुषेण प्रतिग्रहादिकमेवोपन्यसनीयं द्वितीयेनाविच्छिन्नाप्रतिरवसमक्षत्वादिविशेषणविशिष्टो भोग एवोपन्यसनीयः तृतीयेन समक्षत्वादिविशेषणवैशिष्ट्यं विनाऽपि क्रमागतभोगमात्रमुपन्यसनीयमिति नियमस्यानेन विधेर्नियमातिक्रमे दण्डविधानमप्यर्थसिद्धमेवेति दण्डव्यवस्थाप्रतिपादकत्वमुपपन्नमेव । एतेनात्र वचने दण्डव्यवस्थाविध्यभावादिदमयुक्तमित्यपास्तमिति ।

**स्वीकार इति** । प्रतिग्रहादिनेति भावः । **अभियुक्तः** परेण । क्षेत्रादिकमिति पाठः । **तथा च प्रतिग्रहादेरिति** तस्योत्तरमुक्त्वा तथा कार्यमिति भावः । 'प्रतिग्रहादेरितीति' पाठे

१ क–केवलस्यस्य ।

इत्युक्त्वा तमागममर्थात् प्रतिग्रहादिकमित्यर्थः । यथाश्रुतार्थासम्भवादाह । **भावयेदिति** । प्रतिपादयेदित्यर्थः । अङ्गीकारयेदिति वा । अस्य तात्पर्यार्थमाह । **अनेन चेति** ।

'**न** तत्सुत' इत्यंशं शेषपूरणेन सानुषङ्गेण व्याचष्टे । **तत्सुत इति** । अत्र प्रागुक्तविशेषणचतुष्टयमध्ये दीर्घकालत्वमग्रे, तद्भिन्नमत्रेत्याह । **अविच्छिन्नेति** । **भोगमिति** । उद्धरेदित्यस्यानुषङ्गः । एवमग्रेऽपि । **विशिष्टं भोगं** स्वोक्तम् । तत्सुतो वेत्यत्र **वा** चार्थे इत्याशयेन तमंशं व्याचष्टे । **तत्सुत इति** । **वा** अप्यर्थे इति, **नापि विशिष्टमिति** । विशिष्टभोगानुद्धरणे चेति पाठः ।

तुर्यपादमव्यवहितोभयशेषत्वेन व्याचष्टे । **तत्रेति** । अस्य व्याख्या **तयोरिति** । **तत्रापीति** । तद्व्याख्या **द्वितीयेति** । सर्वं[1] वाक्यमिति न्यायेनाह । **भुक्तिरेवेति** । प्रकर्षस्य प्रतियोगिसापेक्षत्वेन तत्स्वारस्येन लब्धमाह । **तत्रापीति** । तयोर्मध्येऽपीत्यर्थः । परमतात्पर्यमाह । **त्रिष्वपीति** । अस्य पूर्वतः स्वरसतो लब्धत्वादत्र मानमाह । **उक्तं चेति** । पादत्रयस्योक्त एवार्थः । **भोग्येति** । अर्थहानिस्तदनुद्धरणे द्वितीयतृतीययोरपीत्यर्थः । अपिनाऽऽद्यस्य समुच्चयः ॥ २८ ॥

## याज्ञवल्कीये २९ श्लोकः

। सङ्गतिमाह । **अस्मार्तेति** । **पुनः** तु । यदर्थमाह । **आहर्त्रादिरिति** । आहर्त्रादिभिरभीति पाठः । अभियोगनिमित्तसूचनायाहर्त्तुरुपादानं, तदसम्भवात् आदिना तत्पुत्रादिग्रहणम् । आर्थिकमाह । **अकृतेति** । **परेत** इत्यस्य परमित इति । व्युत्पत्तिलभ्यमर्थमाह । **परलोकमिति** । तदः प्रकृतबुद्धिस्थपरामर्शित्वादाह । **आगममिति** । अत्रोत्तरार्द्धे हेतुरिति, यस्मादिति शेषेण व्याचष्टे । **यस्मादिति** । तत्रेत्यस्य व्याख्या तस्मिन्नित्यादि । आगमेन विनेत्यस्य व्याख्या **ऽऽगमेति** । कृतेत्यस्य व्याख्या **साक्ष्यादीति** । **न प्रमाणमिति** । अत इति शेषः । यस्मादित्यस्यार्थमाह । **पूर्वेति** । एवं चात्रागमज्ञानसापेक्षस्य तस्य प्रामाण्यमिति भावः ।

**नवा[2] ऽऽरूढेति** । आरूढविवादस्य प्राप्तविवादस्य व्यवहारिणः प्रेतस्य मृतस्य सम्बन्धिना पुत्रेण सोऽर्थो विवादास्पदीभूतः संशोध्यः आगमेन संसाध्यो यतस्तमर्थं भोगो न निवर्तयेत् प्रत्यावर्त्तयेत् । भोगस्तत्र प्रमाणं न भवतीति यावदित्यर्थः ॥ २९ ॥

## याज्ञवल्कीये ३० श्लोकः

। अव्यवहितेन सङ्गतिमाह । **अनिर्णीतेति** । **निवर्तते** संसाध्यत इति पाठान्तरम् तेन[3] नापगच्छति प्रवर्तत एवेत्यर्थः । **व्यवेति** । पुनरित्यादिः क्वचित्तथा पाठ एव । **अथ** चार्थे । नृपेणाधिकृता इति भिन्नमित्याशयेन वाक्यार्थज्ञानोपयोगितया आदौ पदार्थानाह । **नृपेणेति** । प्रकृतयोग्यतया ऽऽह । **व्यवेति** । ते के इत्यत आह । **राज्ञेति** । आकाङ्क्षाशान्तये ऽसाङ्कर्याय चाह । **भिन्नेति** । **नानेति** । उभयोः सङ्घाता इत्यत्रान्वयः । इदमुभयं स्वरूपकीर्त्तनमिति सूचयन् आवश्यकम् उभयशेषमाह । **एकजातीयेति** । तत्राद्योदाहरणं, **हेडेति** ।

---

१ तच्छब्दस्य । २ क—तथाऽऽरूढेति । तथाशब्दः पूर्वसमुच्चये । ३ फ='न निवर्तत' इति पाठे ।

देशाद्देशातरं गत्वा प्रस्थाप्य वा ऽश्वविक्रेतारो **हेडाबुकाः**[1] । गुर्जरदेशे प्रसिद्धोऽयम् तत्र **शब्दः** । द्वितीयोदाहरणं **ताम्बूलिकेति** । तद्विक्रेतेत्यर्थः । **कुविन्दस्**तन्तुवायः । आदिना तक्षादयः । सङ्घाता इत्यस्यानुषङ्गः । सम्बन्धी जामात्रादिः ।

मूले **अथ**शब्दश्चार्थे । अथ वाक्यार्थमाह । **एतेषामिति** । चतुर्णां मध्ये इति शेषः । पूर्वत्वं न कारणत्वादिकृतं किन्तु पाठकृतमित्याह । **यद्यत्पूर्वं पठितमिति** । कुत्रेत्याह । **नृणामिति** । प्रकृतेयोग्यत्वादाह[2] । **व्यवेति** । योग्यतया व्यवहारशब्दो दर्शनपरः । कर्मकि-प्रत्ययान्तो[3] विधिशब्द इत्याह । **व्यवहारेति** ।

अवतरणोक्तं स्पष्टयितुं तात्पर्यार्थमाह । **एतदिति** । **कुदृष्टे**त्यनेन वास्तवासन्तोषबीजनिरासः जातव्यवहारस्य यथार्थत्वं च सूचितम् । व्युत्क्रमेण व्यतिरेकमाह । **कुलेति** ।

। विशेषं स्वल्पमाह । **नारदेति** । **पुनः** तु । यद्यप्यत्र गणा इति पठितं, मूले च **पूगा-** इति, अस्ति च तयोर्भेदः तत्र पूगस्वरूपमुक्तं सर्वेषां हीनवर्णानां सङ्घातो गणः अत एव **पूग-श्रेणिगणादीनामिति** प्राक् उक्तं, तथापि तत्स्थाने मुनिद्वयप्रामाण्यादुभयोर्विकल्पेन ग्रहणम्, अत एव चतुर्णामिति व्याख्याकृदुक्तिसङ्गतिः । यद्वा गणाश्चेति **चेन** तदग्रे पूगानां समुच्चयः । मूले ऽथशब्दस्य चार्थस्य पूगा इत्यत्रान्वयेन तदग्रे तेन तेषां समुच्चय इति एकवाक्यतैव, नारदेन पुनरित्यादि वदता व्याख्याकृता प्रागुक्तचतुष्टयं नाभिमतमिति सूचितमेवेति बोध्यम् । **नृप इति** पाठः । **प्रतिष्ठा इति** । व्यवहारदर्शनानां स्थानानीत्यर्थः ।

। तथा सति विशेषमाह । **तत्र चेति** । तेषां मध्ये इत्यर्थः । **सोत्तरेति** । सभायां साधुः सभ्यः उत्तरश्चासौ सभ्यश्च तत्सहितेनेत्यर्थः । पूर्वसभ्यतो भिन्नोत्कृष्टसभ्ययुक्तेनेति यावत् । **सपण इति** । उभयकारितपणसहिते इत्यर्थः । अयमेव पूगाद्यर्थः पूर्वत्रापि ज्ञेयः॥३०॥

## याज्ञवल्कीये ३१ श्लोकः

उपसंहरन्नव्यवहितसङ्गतिमाह । **दुर्बलैरिति** । **कश्चित्** न सर्वः । बलं चोपाधिश्च ताभ्यां विनिर्वृत्तानिति व्युत्पत्तेराह । **बलेनेति** । **उपधीति** पाठान्तरम् । शत्रुशब्दान्तद्वन्द्वे कृतशब्देन शेषषष्ठ्या समासे आद्यन्तयोस्तत्र कर्तृत्वेनान्वये मध्यमानामधिकरणत्वेन फलतीत्याह । **तथा स्त्रीभिरिति** । अपौनरुक्त्यायाह । **अस्त्रीभिरपीति** । मध्ये इत्यर्थ**कान्तर**शब्देन षष्ठीसमासे राजदन्तादित्वात्परनिपात[4] इत्याह । **गृहाभ्यन्तरे इति** । **तथा**ऽर्थमाह । **चेति** । कृतांश्चेत्यर्थः । मध्यमणिन्यायेनान्वयादाह । **निवर्तेति** ॥ ३१ ॥

## याज्ञवल्कीये ३२ श्लोकः

**अपि चेति** । अन्योऽपि कश्चित्तादृशो व्यवहारो निवर्त्तत इत्याहेत्यर्थः । वाक्यार्थबोधायादौ पदार्थानाह । **मत्त इत्यादि** । आर्तादिभीतान्तद्वन्द्वं कृत्वा पुनस्तेन मत्तोन्मत्ताभ्यां कृत्वा बहु-

१ ख ग फ=हेडावुकाः । २ ख ग=प्रकृतत्वादाह । ३ "उपसर्गे घोः किः" ( व्या. सू. ३।३।९२ )
४ राजदन्तादिषु परम् ( व्या सू. २-२-३१ )

श्रीहितत्पुरुषौ कार्यौ । करणेऽनीयर्[1] । **पञ्चविधेने**त्यस्य व्याख्या **वातेति** । **सम्भवेनेति** । ग्रहान्तपञ्चकजन्येनेत्यर्थः । कारणभेदेन कार्यभेदात्तस्य पञ्चविधत्वम् । **जनितमिति** । एतदन्यतरजनितमित्यर्थः । **व्यवेति** । न तु स्तनन्धयादिरेवेति भावः । राष्ट्रादीत्यादिपदग्राह्यं वचने एव स्फुटम् । **पुरेति** । पुरविरुद्धो राष्ट्रविरुद्धश्चेत्यर्थः । यः एवं स वादस्तैरनादेय उदाहृतः कथितो भवेदित्युत्तरार्धार्थः । एवं च तस्यार्थिकी निवृत्तिर्बोध्या ।

वाक्यार्थमाह । **एतैरिति** । असम्बद्धकृत इत्यंशमनियुक्तपदाध्याहारेण व्याचष्टे । **अनियुक्तासम्बद्धेति** । अनियुक्तत्वेनाप्रेषितत्वेन प्रकृतव्यवहारासम्बद्धो यस्तत्कृत इत्यर्थः । **चार्थमाह** । **अपीति** । **इतिरर्थसमाप्तौ** ।

ननु मत्तादिकृतव्यवहारो न सिध्यतीत्यत्र मत्तादिग्रहणमुपलक्षणं न वा? आद्येऽन्यकृतव्यवहारासिद्धेरपि संग्रह इति न स्मृत्यन्तरविरोध इति फलं यद्यपि, तथाप्येवकारासङ्गतिः । द्वितीये एवकारबलेनास्य नियामकत्वलाभेनैवकारसङ्गतिरूपफलसत्त्वेऽपि वचनान्तरविरोध इति संशये श्रुतैवकारबलेनाद्यस्य दुर्वचत्वेन द्वितीयमेव वाच्यम् । यद्यप्याद्येऽप्यादिश्रुतिरस्ति तथापि सर्वथाऽनन्यगतिकसंग्रहेणैव तत्साफल्ये सगतिकसङ्ग्रहो नेति तात्पर्यार्थः । तथा सति वचनान्तरविरोधस्तेनान्यकृतव्यवहारस्यासिद्धिप्रतिपादनेन नियमस्य दुर्वचत्वादित्याशयेन शङ्कते ।

**यत्त्विति** । विरोधे इति पूर्वान्वयि । मिथ इत्युत्तरान्वयि । 'गुरोः शिष्ये विरोधेत्वि'त्यादौ सति तेषां गुरुशिष्यादीनां मिथो व्यवहारो न सिध्यतीत्यर्थः । **अपि**नैतज्जातीयस्मृत्यन्तरसमुच्चयः । त्वर्थे वा सः । आत्यन्तिकत्वं प्रतिषेधविशेषणम् । **कथंचित्** केनचित्प्रकारविशेषेण । तथा च तत्र चार्थस्तुः सिध्यतीत्यग्रे योज्यः । तेन सिद्धिसमुच्चयः । तयोर्व्यवस्था तु वक्ष्यमाणप्रकारेण । यद्वा **तु**र्मिथ इत्यग्रे योज्यः । **मिथस्तु** मिथ एव न सिध्यति किं तु व्यवहारदर्शिभिः सिध्यतीत्यर्थः । यद्वा एतद्वैलक्षण्यसूचक**स्तु**र्यथाश्रुत एव । तथा च मूलवाक्यस्यैवकारस्य न सिध्यतीत्यग्रे योजनं कृत्वा मत्तादिकृतो व्यवहारः सर्वात्मना न सिध्यत्येवेत्यर्थः । अयं तूक्तरीत्या कृतः सिध्यत्यन्यथा नेति । यद्वा यथाश्रुत एव सः । तदन्तं चावृत्त्या भिन्नं वाक्यम् । यद्यपि वक्ष्यमाणरीत्या न सिध्यति तथापि प्रबलविरोधपूर्वकदुराग्रहे तु सिध्यत्येवेत्यर्थः इति न कोऽपि दोष इति भावः ।

नन्वयोग्यत्वादेतेषां व्यवहार एव नोचितोऽसम्भवश्च तस्मातस्तमुपपादयति । **तथाहीति** । तत्र तावत् गुरुशिष्ययोर्व्यवहारस्थलमाह । **शिष्येति** । स्मृतिव्यपेतमार्गप्रदर्शनाय हेतुद्वयमिदम् । शिष्यस्य **शिष्टिः** शिक्षा **अवधेन** अताडनेन । **अशक्तौ** तथा कर्तुं शक्यते न चेत्तदा सूक्ष्मेण रज्जुखण्डेन वेणुखण्डेन च तच्छिक्षा कार्या । **अन्येन** उक्तभिन्नेन स्थूलेन वेणुखण्डेन च घ्नन् ताडयन् गुरू राज्ञा शास्यः शिक्षणीय इत्यर्थः । यदीत्यनेनान्यथा व्यवहारपदत्त्वाभावः सूचितः । एवमग्रेऽपि । पितापुत्रयोस्तदाह । **तथेति** । 'भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा । तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चैवहि' ॥ इति वक्ष्यमाणमूलवचनादित्यर्थः । साम्ये हेतुरयम् । समाने सतीति शेषः । **धर्मेति** धर्मनिर्णयस्थानमित्यर्थः ।

१ "तव्यत्तव्यानीयरः" (व्या. सू. ३-१-९६), कृत्याः प्राङ्ण्वुलः (व्या. सू. ३-१-९५), कृत्यल्युटोबहुलम् (व्या. सू. ३-३-१३)

दम्पत्योस्तदाह । **तथेति** । **सम्प्रतीति** । सर्वस्वहरणं कृत्वा दुर्गादौ परबलैर्निरोधकरणं सम्प्रतिरोधकम् । **नाकाम इति** । प्रागुक्तस्थलान्यतमे गृहीतं स्त्रीधनं पुनस्तस्यै दातुमनिच्छुश्चेन्न दद्यादित्यर्थः । व्यतिरेके हेतुरयम् । '**विद्यमाने**'त्यादिविशेषणद्वयेन तदभावे तदभावः सूचितः । **अपिर्मिथःसमुच्चये** ।

दासभेदा वक्ष्यन्ते भक्तदासगर्भदासादयः । तत्राद्ये तयोस्तदाह । **तथेति** । भक्तमन्नं 'भक्तमन्धोऽन्नमिति" **अमरः** ( २–९–४८ ) । द्वितीये तयोस्तदाह । **गर्भेति** । 'अयं द्विविध' इत्यन्यत्र स्पष्टम् । 'स्वामिना सहे'त्यग्रेतनेनान्वयः । **यश्चैषामिति** । एषां गर्भदासादीनां मध्ये यः कश्चिदित्यर्थः । **विमुच्येत** मोचनीयः । **लभेत** प्रापयेत् । अन्तर्भावितण्यर्थः । **तत्तस्माद्दासत्वात्** ।

नन्वेवं तस्य का गतिरत आह । **तस्मादिति** । प्रथममित्युक्तिस्वारस्यादाह । **अत्यन्तेति** । अश्रेयस्करत्वे क्रोधादिनेष्टापरत्यङ्गीकारे त्वित्यर्थः । एवमन्यविरोधं परिहरति । **यद्यप्येकस्येति** । 'वाद' इत्यस्य त्रिभिरन्वयः प्रागुक्तैकवाक्यतया । तत्राद्यस्यार्थमाह । **तत्रैकेति** । तेषां त्रयाणां मध्ये इत्यर्थः । **अपिना** अनेकसमुच्चयः । 'एकार्थैरि'त्यग्रिमेणान्वयः । **गणेति** । सर्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेदित्युत्तरार्धे । व्यवहारद्रष्टेति शेषः ।

स्मृत्यंतरमाह । **तथेति** । **एकमिति** । 'यथोक्ताद्द्विगुणो दम' इति वचनशेषः । गणद्रव्यहार्यादेः सर्वस्वहरणादिविधानं एकहंतॄणां बहूनां च द्विगुणदंडविधानं स्मृतावुक्तं । इदमुभयमपि व्यवहारमुखेन तादृशापराधवतामेव भवतीति व्यवहारोऽस्तीति भावः । प्रागुक्तमेव विशेषणमाह । **एकार्थैरिति** । अत एवोक्त**नारदा**भिप्रायमाह । **भिन्नार्थैरिति** । प्रागुक्तयुक्तेराह । **युगपदिति** । किं त्वीदृशस्थले क्रमात्सिध्यतीति भावः ।

द्वितीयतात्पर्यं प्रागुक्तमाह । **स्त्रीणामिति** । इति व्याख्येयमित्यत्रान्वयः । 'गोपशौण्डिके'त्यत्रवक्ष्यमाणयुक्तेराह । **गोपेति** । तत्रापि विशेषं सूचयन् हेतुमाह । **पतिष्विति** । तथा च तदभावे तत्रापि व्यवहार उपादेय इति भावः । अयं च तस्याः पत्या साकं न किं त्वन्येनेति बोध्यं । एवमग्रेऽपि । तृतीयतात्पर्यमाह । **प्रेष्येति** । इति योजनीयमित्यग्रिमेणान्वयः । **स्वार्थेति** । भृत्यार्थेत्यर्थः । **अपिना** तदर्थव्यवहारसमुच्चयः । तस्मादुक्त एव आशय इति न कोऽपि दोष इति तत्वं ॥ ३२ ॥

## याज्ञवल्कीये ३३ श्लोकः

प्रसङ्गसङ्गतिमाह । **परेति** । '**प्रनष्टेति**' कर्मधारयो न तु पञ्चमीसमास इत्याह । **प्रनष्टमिति** । धनमित्यस्यार्थमाह । **हिरण्यादीति** । 'शौल्किकेति' द्वन्द्वं कृत्वा बहुव्रीहिः कार्य्यः । असमर्पणे तेषां दण्डसत्वादाह । **राज्ञ इति** । उत्तरार्द्धसूचितमार्थिकं पूर्वशेषमाह । **यदीति** । उत्तरार्द्धार्थे कथयन् **चेदर्थ**माह । **यदीति** । लिङर्थोऽविवक्षित इत्याह । **भावयतीति** । **तत्समं** । प्रनष्टाधिगतद्रव्यसमं । **पूर्वं** 'मदीयमेतदिति' निवेद्य पश्चाद्यदि न साधयति तदा स दंड्य इत्यर्थः ।

१ मिताक्षरा पृ. २५ पं. २९. २ ख ग–गोप। ३ क ख ग–योज्येत्यग्रिमेणान्वयः। ४ ग–तत् संप्रनष्टाधिगत।

तदेव ध्वनयन्नाह । **असत्येति** । ननु प्रनष्टाधिगतस्य परकीयत्वेनादेयत्वाद्देयमित्युपदेशो व्यर्थ एवात आह । **अधिगमस्येति** । द्रव्यनाशानंतरं तदलब्ध्वा स्वामिनो देशांतरगमने विशेषमाह । **अत्र चेति** । प्रनष्टाधिगतस्य प्रतिदानविषये इत्यर्थः । अत्र 'सर्वत्र प्रनष्टेति' दंत्यपाठः । **नशेरिति**[3] तन्निषेधात् । तदेवमूलोक्तमाह । **शौल्किकैरिति** । शुल्कं गृह्णंति ते शौल्किकाः । **स्थानपालास्**तन्मात्ररक्षकाः । **नष्टेति** । नष्टं सदधिगतं राज्ञे समर्पितमित्यर्थः । यद्वा **नष्ट**मपहृतं चाधिगत्य राज्ञे समर्पितमित्यर्थः ।

अत्र विशेषमाह । **मनुना पुनरिति** ॥ **मनुना** त्वित्यर्थः । **मनु**मेवाह । **प्रनष्टेति** । स्वामिनः सकाशात्प्रनष्टं **प्रनष्टस्वामिकं** । 'राजदंतादि' स्वार्थे कः । अत एव पूर्वकवाक्यतोत्तरार्द्धसंगतिश्चेति भावः ॥ यद्वा उक्तरीत्या तदनंतरं देशांतरगतस्वामिकमिति यथाश्रुत एवार्थः । 'हृतं नष्टं च लभ्यत' इतिवत्प्रयोग इति न कोऽपि दोषः । **रिक्थं** द्रव्यमिति पाठांतरं ।

एवं सति प्रसक्तविरोधपरिहाराय व्यवस्थां कथयन्नादौ **मनु**तात्पर्यमाह । **तत्रेति** । तथा सतीत्यर्थः । **अवश्यमिति** । तन्मध्ये व्ययं न कुर्यादित्यर्थः । निधापयेदित्युक्तिस्वारस्यादितिभावः । तत्र तावत्पर्यंतं रक्षणीये तस्मिन् सति । मूलतात्पर्यमाह । **यदीति** । **पुन**स्त्वर्थे । अत्र मानमाह । **यथाहेति** । अस्य पक्षत्रयस्य व्यवस्थां कथयितुमादौ मूलोक्तमेवाह । **तत्रेति** । तेषांमध्ये इत्यर्थः । अन्यथा तदानर्थक्यं स्पष्टमेव । '**द्वादशं भाग**मि'त्यादे'**र्गृहीत्वे**'त्यादिना अन्वयः ।

अग्रे विशेषमाह । **चतुर्थादिष्विति** । षडिति भिन्नं पदं लक्षणया षष्ठपरं साहचर्यादित्याह । **षष्ठमिति** । अत एव विशेषमाह । **राजभागेति** । दातव्यः । 'द्वादशभागमि'त्यादे 'गृहीत्वे'त्यादिनाऽन्वयः । एतेनाद्यद्वितीयतृतीयवर्षाभिप्रायं पक्षत्रयमित्यपास्तं । अत एव तत्र व्युत्क्रमोक्तिरपि संगताऽर्थयुक्तिश्च । अन्यथा तदसंगतिः स्पष्टैव । अत एव च **गौतमैक**वाक्यताऽपि । प्रपंचविशेषो द्वितीयादौ नत्वाद्ये । तत्र राजभागस्यैवाभावात् ।

एतदर्थमेवैवमुक्तं ॥ अन्यथा चतुर्थांश इत्येव वदेत् । राजभागसंबंधिचतुर्थांशदानमित्यर्थे तु 'आददीताथ षड्भागमि'ति वचनविरोधः स्यात् । तथा च प्रनष्टाधिगतं द्रव्यं यः शौल्किकादी राज्ञे समर्पयति तस्मै राज्ञो यो भागः षष्ठादिरूपस्तच्चतुर्थांशस्तत्तुल्य उद्धृतषष्ठादिभागाद्धनादवशिष्टाद्दातव्यो दापनीयो नतु राज्ञोंऽशात्तद्विरोधापत्तेरित्यर्थो बोध्यः ।

अत्र विशेषमाह । **स्वाम्यनेति** । अधिगंत्रे शौल्किकप्रभृतये । अत्र सर्वत्र मानमाह । **यथाहेति** । **प्रनष्टेति** । पूर्ववत् 'ऊर्द्धमधिगंतुरिति' 'संवत्सरादिति' शेषः । तथा च संवत्सरानंतरं स्वामिन्यागतेऽनागते वाऽधिगंतुश्चतुर्थोंऽशो भवति शेषं राज्ञो भवतीत्यर्थः । तत्राधिगंत्रे चतुर्थांशदाने इयान् भेदः । स्वामिन्यागते प्रागुक्तरीत्या राज्ञः षष्ठाद्यं समुद्धृत्यावशिष्टधनाद्राज्ञोभागश्चतुर्थांशसमभागो देयः । अनागते तु तस्मिन् सर्वस्य धनस्य चतुर्थांशो देय इति ।

एवं '**राज्ञः शेषमि**'त्यत्रापि । तस्मिन्नागते पूर्वोक्तरीत्या षष्ठादिभागरूपं । अनागते तु तस्मिन् सर्वधनं दत्तचतुर्थांशकमिति भेदो बोध्यः । एवं च राज्ञ इत्यस्य मध्यमणिन्यायेनान्वयो

१ क ग–विशेष आह । २ फ–इत्थं पाठः । ३ ख–नाशरिति ।

बोध्यः । **मनु**तात्पर्यविरोधं परिहरति । **अत्रेति** । **गौतमीये** इत्यर्थः । उद्देशविशेषणत्वादिति भावः । तथा सत्यनतिप्रसंगाय तन्मूलं तदुक्तमेव हेतुमाह । **राजेति** ।

नन्वेवं सर्ववचनानां व्यवस्थायां पादत्रयार्थलाभेऽपि **मनु**मूलयोस्तुर्यपदार्थस्य निर्विषयत्वापत्तिरेव चतुर्थादिष्वपि अवशिष्टदानस्य स्वामिने प्रतिपादितत्वादित्यत आह । **हरेतेति** । **अपिना मनू**क्ततुर्यपादसमुच्चयः । यद्यप्यत्र 'संवत्सरादि'ति प्रक्रांतं तथाप्युक्तरीत्या **मन्वे**कवाक्यतयैवाह । **त्र्यब्दादिति** । तथा चात्र 'परत' इत्यत्र 'त्र्यब्दादिति' शेषो बोध्यः ।

ननु व्ययीकरणानंतरं तदागमने कथं प्रागुक्ततद्दानसंभवोऽत आह । **आगते त्विति** । **अवतार्य** पृथक्कृत्य अवशिष्टं तस्मिन् प्रक्षिप्य **तत्समं** तत्तुल्यं । तथा च राजा स्वांशं षष्ठाद्यंशं तथा कृत्वा तत्समं यावदधिगंतृहस्ताद्गृहीतं तत्संख्याकं स्वामिने दद्यादित्यर्थः ।

तत्रापि न तज्जन्यवृद्धिं दद्यादपि तु मूलमात्रमेव । 'हरेत परत' इत्यनेन व्ययवत् व्यवहारस्यानुज्ञानात् । तथा च व्ययीकरणे व्यवहारे सति वृद्धिद्रव्येण तत्समत्वं तदभावे स्वांशप्रक्षेपेण ततोऽप्यपूर्तौ तत्समत्वं स्वकोशद्रव्येण एवमपि न त्वधिगंत्रे यश्चतुर्थांशो दत्तस्तद्ग्रहणेनापि तस्मै भृतिरूपेण दत्तत्वात् भृतिरूपस्याप्यादाने कालांतरे प्रनष्टाधिगतप्रत्यर्पणादिकं न स्यात् । **'स्वांशमवतार्येति'** विशेषोक्तेश्चेति बोध्यं ।

विशेषमाह । **एतच्चेति** । अत एव प्राक् तथैव व्याख्यानं । संकोचे मानमाह । **गवादीति** । मूलकृदेवेतिभावः ॥ ३३ ॥

अव्यवहितसंगतिप्रसंगरूपमाह । **रथ्येति** । इदं नष्टपदव्याख्यानं । एतेन प्राक्तनप्रनष्टपदमपि व्याख्यातं ।

## याज्ञवल्कीये ३४।३५ श्लोकौ

एवं उक्तप्रकारेण **उक्तेति** । **भूमौ चिरनिखातं** । सुवर्णादीत्यर्थः । तुर्यपादबलात् द्विजपदं ब्राह्मणपरमित्याह । **ब्राह्मणेभ्य** इति । एवमग्रेऽपि । फलितमाह । **शेषमिति** । पुनःशब्दार्थमाह । **त्विति** । विद्वानित्यस्य व्याख्या । **श्रुतेति** । न केवलं अपितु **मन्वा**दिस्मृत्यंतरादेरिदमुपलक्षणमित्याह । **सदेति** ॥ ३४ ॥

पुनः शब्दानुषंगेण द्वितीयपद्यार्थमाह । **इतरेण त्विति** । इतरत्वमुभयापेक्षमित्याह । **राजेति** । शेषपूरणेन व्याचष्टे । **अधिगंत्रे इति** । यद्यप्यषष्ठांशमिति छेदेन वाक्यपूर्तिः सिद्धा तथाप्युपक्रमे वासिष्ठे च 'दद्यादि'त्युक्त्या दानपष्ठांशत्वस्यैवेष्टत्वेनात्रार्थिकत्वेन तद्विरोधापत्तेः । शेषपूरणापत्तेः विद्वद्विप्रविषये सर्वस्येति हेतूक्त्याऽन्यविषये राज्ञः प्रभुत्वसूचनेन तत्रापि तदाहरणस्यार्थसिद्धत्वेन विध्यनुपयोगात् । अत एव **'अनिवेदिते'**त्यनेन विप्रस्यापि वैपरीत्योक्तेः । अत एव च दानपूर्वकाहरणस्यैव विवक्षितत्वेन तदलाभापत्तेश्च ।

अत एवोपक्रमवाक्यं तथा व्याख्यातं । 'अत इति' 'अण इति' सूत्रादिभाष्यसिद्धांतमूलकेन

१ फ–यई करणानन्तरं । २ फ–तत्कृत्वा । ३ अयं पाठः लिखितपुस्तकेष्वप्राप्तोऽपि समीचीनः । ४ ख–दान शब्दात्तस्यैवेष्टत्वेनात्राप्यैकत्वे तद्विरोधपत्ते । ५ ख ग–तदीयलाभापत्तेश्च ।

'प्रविश पिंडीमि'त्यादिवद्वाक्यैकदेशन्यायेन नञा विना द्वितीयपादस्य शाब्दमर्थमाह । **राजेति** ॥ यथाश्रुतार्थत्यागेन तथा व्याख्याने बीजमाह । **यथाहेति** ॥ **अग्रेति** । चिरनिखातमित्यर्थः। अनेन वित्तस्य निधित्वं सूचितं । **तत्** ततः । **निध्यधिगम** इति । अधिगम इति कर्मणि घञ्। कर्मधारयः कडारादिः अधिगम्यमानो निधिः । राजधनं नाधिगंतुः **अभिरूपस्य** श्रुताध्ययनादिसंपन्नस्य ब्राह्मणस्य तु सं[1], न राजधनम् अपि तु तस्यैव ॥ एवं चेदं वाक्यत्रयं यथासंभवं शेषानुषंगाभ्यामिति बोध्यं । अब्राह्मणोऽपि विद्वद्ब्राह्मणभिन्नोऽप्याख्याता तत् कथयिता यदि तदा तस्य षष्ठमंशं लभेतेत्येक इत्यर्थः । अपिना विद्वद्ब्राह्मणसमुच्चयं । तथा च तस्यापि षष्ठांशमात्रप्राप्तौ । प्रागुक्तविरोधोऽत आह । **एक इति** । अनेन तदीयसर्वग्रहणेन सह षष्ठांशग्रहणस्य तस्य पुरुषभेदेन विकल्पः सूचित इति बोध्यं ।

नन्वनिवेदितविज्ञात इत्युक्तं । कर्मनिष्ठायां । निध्यधिगंत्राऽन्येन वाऽनिवेदने[2] राज्ञो ज्ञानाभावात् 'किं च दाप्य' इत्यनेनान्वयासंभवादत आह । **अनिवेदित इतीति** । 'गत्यर्थाकर्मके'त्यनेनेति भावः ।

पदार्थमुक्त्वा वाक्यार्थमाह । **यः कश्चिदिति** । विद्वद्ब्राह्मणस्तद्भिन्नो वेत्यर्थः । **तमि**त्यस्यार्थमाह । **सर्वं निधिमिति** । विशेषानुक्तेः केवलार्थ**कैव**शब्दस्वरसाच्चाह । **शक्त्यपेक्षयेति** । यद्यपि निध्यधिगंता स्वयं निवेदने साक्षात् कर्ता प्रयोजको वा न भवति तथाऽप्यन्येन निवेदिते राज्ञो विज्ञातो भवतीति स तं निधिं दंडं च यथाशक्ति दाप्य इति भावः ।

'इतरेणे'त्येतत्सूचितमेव विशेषमाह । **अथेति** । अपिःप्रागुक्तप्रनष्टसमुच्चायकः । **भावयति** साधयति । अत्र मानमाह । **यथाहेति** । **'ममायमिति'** । अनेन कर्मणा द्विकर्मकत्वं ब्रुवः सत्येन रूपकसंख्यादिकथनेन तस्येति अवधेः संबंधित्वविवक्षया षष्ठी । ग्रन्थव्यवस्थामाह । **अंशेति** । **वर्णेति** । सदसद्धर्मचिराचिरकालाद्यपेक्षयेत्यर्थः ।

## याज्ञवल्कीये ३६ श्लोकः

**चौरेति** । प्रनष्टप्रसंगादित्येवेति भावः । तत्फलं तु तद्वदत्रापि कालावधिबोधनं । अत एव 'नष्टापहृतमाहृतमिति' मूलोक्तिरिति बोध्यं । ननु स्वयमलब्धं कथं देयमत आह । **चौरेभ्य इति** । शासनपूर्वं गृहीत्वेत्यर्थः । जनपदे भवो जानपदः । अनतिप्रसंगाय तस्य संबंधिशब्दत्वादाह । **स्वदेशेति** । तथाऽप्यनतिप्रसंगायाह । **यस्येति** । अनेन वर्णसामान्यपरामर्शः । अत एव **मन्वेक**वाक्यता । **तुः** पादपूरणे । **यस्ये**त्यंतं भिन्नं वाक्यं । **तस्येति च** भिन्नं । **तदित्य**स्योभयत्रान्वयस्तदाह । **हीति** । अस्यार्थमाह । **यस्मादिति** । **तदित्य**स्य व्याख्या **अपहृतं द्रव्यमिति** । यत्तदोर्मिथः साकांक्षत्वाच्छेषं पूरयति । **तस्येति** ।

द्वितीयवाक्यार्थमाह ॥ **तस्य चौरस्य चेति** । किल्बिषमित्यादेरनुषंगः । यथाश्रुतार्थं विहायैवं व्याख्याने मानमाह । **यथाहेति** । 'तदुपभुंजान' इति पाठांतरं । अत्र **मनुमूलाभ्यां** यथाश्रुते विरुद्धमुक्तमतो मन्वेकवाक्यतयैव[3] मूलस्य संभवात् ॥ वैपरीत्यासंभवात् व्याख्यानं

१ ग-सो (निधिरिति) । २ ख-निवेदनवेदने । ३ ख-मन्वेकवाक्यतायै ।

कृतमिति । तस्याप्रतिदाने उभयोः किल्बिषमाप्नोतीत्युक्तं । तथा सति **मनु**वचने प्राप्तन्यूनतानिरासाय विषयव्यवस्थामाह । **यदीति** । अनेन **मनु**विषयः प्रदर्शितः । मूलविषयमाह । **अथेति** । एवमपि मूलोत्तरार्द्धस्य सुयोजत्वात्तस्य व्यवस्थितत्वाद्वेति भावः । **मनु**मूलपूर्वार्द्धतात्पर्यार्थमाह । **अथेति** । **तावदि**त्यनेन न्यूनाधिकभावो निरस्तः । अत्र मानमाह । **यथाहेति** । **यथास्थानमिति** । यस्य तद्धनं तं प्रापयेदित्यर्थः । **कृष्णेति** व्यामोऽप्याहित्यर्थः । अशक्तस्त्वशक्त एव राजा भवेदितिशेषः । हि तदा द्विर्वद्धमिति न्यायेन सत्यां शक्तौ तथा न कार्यमिति स्पष्टार्थमाह । **अशक्तेनेति** । **महीति** । महीं क्षयति निवासयति गमयति वा क्षिणोति हिनस्ति शास्ति दंडयति वा महीक्षित्तेनेत्यर्थः॥ ३६ ॥

**इत्यसाधारणव्यवहारमातृकेति** । 'इति साधारणासाधारणव्यवहारमातृकेति' पाठांतरं । तस्य च पूर्वं तथा पाठाभावो वक्ष्यमाणप्रकारो वाऽभिप्रायः ॥

# अथ ऋणादानप्रकरणम्. ३.

पूर्वोत्तरयोर्ग्रंथसंदर्भयोः संगतिमाह । **साधारणासाधारणेति** । प्रथमप्रकरणे साधारणमातृकाऽभिहिता । द्वितीयप्रकरणेऽसाधारणमातृका । एवं च प्रकरणद्वयस्योत्तरग्रंथोपयोगित्वेन ताभ्यामुत्तरग्रंथे संगतिरिति भावः । यद्वाऽनंतरप्रकरणमेव साधारणासाधारणात्मकं । 'देशाद्देशांतरं याती'त्यादि दुष्टलक्षणं सर्वसाधारणं । 'छलं निरस्य भूतेने'त्यादिकमपि । इतरदसाधारणं । समाप्तावुभयात्मकत्वेन प्रकरणसमापनमिति भावः । पदानां मध्ये इति शेषः ।

तत्र तावदृणस्य प्रदानं आदानं वा यस्मिन्निति व्युत्पत्तावपि योगरूढोऽयं ऋणादानशब्दः तदेतदभिप्रेत्याह । **तच्चेति** । तत्रादावधमर्णसंबंधिभेदानाह । **ईदृशमिति** । याचनापूर्वकत्वादृणस्य तस्याश्चाधमर्णनिष्ठत्वात् मल्लग्रामादिवद्वेति भावः । एतेन सूचीकटाहन्यायेन वैपरीत्यमुचितमित्यपास्तं **नारद**वचनाच्च । अस्वतंत्रैरपि स्त्र्यादिभिः कुटुंबरक्षणार्थं यदृणं गृहीतं तद्देयं उक्तवैपरीत्ये तु न देयं । पुत्रपौत्रादिरूपेणाधिकारिणा देयं । अस्मिन्काले देयं । क्वचित्सवृद्धिकं देयं । क्वचिदवृद्धिकमिति । क्वचिदेतदन्यतरत् इत्येवमधमर्णे देयं पंचप्रकारं । **उत्तमर्णे द्विविधमिति** मिलित्वा ऋणादानं सप्तविधमित्यर्थः ।

**एतच्चेति** । उक्तभेदकथनेनास्य योगरूढत्वे चेत्यर्थः । येन देयमित्यधिकारिनिर्देशः । यत्र देयमिति कालनिर्देशः । यथा चेति प्रकारनिर्देशः । देयमित्यस्य सर्वत्रान्वयः । धर्मश्चेति पाठः । द्वंद्वांते श्रूयमाणत्वात्प्रत्येकं संबंधः । तदितिपाठे यदिति शेषः । वैपरीत्ये वैपरीत्यमिति । यत्तदृणादानमित्यन्वयः ।

एवं स्मृत्यंतरानुरोधेनास्य सप्तविधत्वमग्निमोपयुक्तं प्रतिपाद्य अधुना मूलवचनमवतारयति । **तत्रेति** । तेषां मध्ये इत्यर्थः ॥

---

१ ख–यः क्षिणोति । २ ख–चाधमर्णं ।

## याज्ञवल्कीये ३७ श्लोकः

द्वयोरेवेति भ्रमनिरासाय वीप्साद्विर्वचनेनाह । **प्रतीति** । प्रयोगे दानेऽत्र विशेषोल्लेखेऽनुपयोगात् फले विशेषाचाह । **द्रव्यस्येति** । अशीतिपदं तत्संख्यापूरके लाक्षणिकं भागपदसाहचर्यादित्याह । **अशीतितम इति** । तथा च तत्र कर्मधारयो बोध्यः । शास्त्रविहितत्वादेवाह । **धर्म्येति** । लिङ्गर्थाविवक्षयाऽऽह । **भवतीति** ।

उत्तरार्धं व्याचष्टे । **अन्यथेति** । अस्य व्याख्या **बंधकेति** । सामान्येनोक्तं स्पष्टार्थं विशिष्याह । **ब्राह्मणे इति** । शतमित्यस्याग्रे सर्वत्रानुषंगः । एवं भवतीत्यस्यापि । मासि मासीत्यनुवर्तत इत्याह । **मासीति** । तथा च प्रतिमासं ब्राह्मणादिक्रमात् तथा भवतीत्यर्थः ।

ननु कथमुक्तार्थलाभस्तत इत्यत आह । **द्वौ वेति** । 'संख्ययाऽव्ययेति' (व्या. सू.२–२–२५). बहुव्रीहिरिति भावः । '**तदस्मिन्निति**' तथा च कनः सर्वत्र संबंध इति भावः ।

उक्तवृद्धेरुपाधिभेदान्मूलानुक्तं द्वैविध्यं कथयन्नाह **इयं चेति** । मूलोक्तेत्यर्थः । मूलानुक्तमाह । **इयमेवेति** । मूलोक्तैवेत्यर्थः । विशेषमाह । **दिवसेति** । मासस्येति भावः । अत्र मानमाह । **तथा चेति** । उक्तवोक्तमित्यत्रान्वयः । तस्य ऋणस्य उक्तेति शेषः ।

**कायेति** । तदविरोधिनी तदनुकूला यथा तस्य प्रतिदिनं वृद्धिः तथा दीयमानेत्यर्थः । यद्वा । यया खेदेन शरीरनाशो न भवति तादृशी स्वल्पेत्यर्थः । अधिकदाने खेदेन देहस्यारक्षणेन नाशसंभवात् । **शश्वत्** । मुहुर्मुहुः प्रतिदिनमिति यावत् । **पणेति** । पणस्य पादश्चतुर्थांश इत्यर्थः । तथा च पणपादादिरूपा तदविरोधिनी प्रतिदिनं स्रवंती कायिकेत्यर्थः । **स्रवंती** आगच्छंती । उभयत्र मत्वर्थीयष्ठन् । अधमर्णिके 'बह्वच' इत्यनुकंपादौ ठच् । 'मर्णिकेनेति' पाठांतरं । तदा मत्वर्थीयष्ठन् ॥ ३७ ॥

## याज्ञवल्कीये ३८ श्लोकः

**ग्रहीत्रिति** । अथेत्यादिः । **दशकमिति** । पूर्ववत् । **विंशकमिति** । धनं तत् प्रकरणाद्विशेषपरत्वमित्याह । **अरण्यमिति** । कर्मणोऽधिकरणत्वविवक्षया सप्तमी । **तत्रेति** । तमित्यर्थः । परिखेतिवत् डः । अत एव तथैव पदार्थमुक्त्वा वाक्यार्थमाह । **ये इति** । तत्रापि अरण्यसामान्यं न विवक्षितमिति सूचयन्नाह । **अतीति** । अभ्यर्हितत्वात्प्राणस्य पूर्वनिपातः । वस्तुतो विनाशस्थानेऽपि आह । **शंकेति** । तत्रापि प्रकर्ष इत्याह । **प्रेति** । अपकर्षेणाह । **दद्युरिति** । **ये** च ये तु सामुद्रा इत्यत्रेदमर्थणेति सूचयन्नाह । **समुद्रगा इति** । दद्युरित्यस्यानुषंगः । मासिमासीत्यनुवर्तते सामर्थ्यादित्याह । **मासीति** । ननु तथा सति यदि विनाशस्तदा तावत्तद्दानमपि कथमतः तात्पर्यार्थमाह । **एतदिति** । आदावेवेति भावः । इदं चानंतर्यादबंधकप्रयोगविषयमत एवाह । **मूलेति** ।

**कारितामिति** । अत एव मूले वाशब्दो विकल्पार्थः । तदाह **सर्वं वेति** । अस्य

---

१ व्या० सू० ५–२–४२ २ व्या० सू० ५–१–४७ ३ ग–उक्तवोक्तम् । ४ क ख ग–वृद्धिस्तथा शरीरसत्वे प्रतिदिनं वृद्धिरिति । ५ फ–अनुवर्तनसामर्थ्यात् ।

व्याख्या **ब्राह्मेति** । अत्र च ब्राह्मणादीनामधमर्णत्वं प्रदर्शनमात्रं हीनोत्तमभावमपरिगणय्य यथा कथंचिदुत्तमर्णत्वमधमर्णत्वं च भवतीत्यर्थः । संकोचे मानाभावादाह । **अवंधके इति** । प्रयोगे इति शेषः । यथाश्रुतासंगतेराह । **स्वाभ्युपेति** । उद्देश्यस्याधिकरणत्वविवक्षया आह । **सर्वास्विति** । विशेषमाह । **क्वचिदिति** । **न वृद्धिरिति** । वृद्धिं कुर्वंतमधमर्णं मुत्तमर्णः प्रयुंक्ते इति णिचि निष्ठायामपि आङा कारिता शब्दस्य समासे । ततो नञा तस्य समास इति कश्चित् । प्रकृते तु स्वारस्यात्प्रार्थयंतीतिवत् णिच् इति तु तत्त्वं । अत एव **स्वकृतामि**त्युक्तं मूले । एवं रीतिः कारितेत्यत्रापि बोध्या । अत एव स्वयंकृतेत्येव तत्रोक्तं । एवं चाकृता वृद्धिस्त्वं यथेच्छं व्यवहरेति तदानीं क्वचिदपि न स्यात् ।

अत्र '**प्रीतिदत्ते**'त्यनेन ग्रहीतुर्याचनाभावः सूचितः । अत एव तत्र विशेषं वक्ष्यति । ईदृशेऽपि स्थले । हि स्त्वर्थे । **वत्सरार्धाद्धि**वत्सरार्द्धा । **ऊर्ध्वं**षण्मासोत्तरं तु । **अनाकारितमपि** । अकृतमपि । 'अर्शआद्यजंतं' । धनं वर्धत इत्यर्थः । त्रिवर्धत इत्यर्थः । विवर्धत इति पाठांतरं । क्वचिन्मते अकृतेत्यर्थः । स्वोक्तिविरुद्ध इति बोध्यं । वर्धनप्रकारस्तु सबंधके प्रागुक्तो द्रष्टव्यः ।

विशेषांतरमाह । **यस्त्विति** । 'याच्ञाया प्राप्तं याचितकमि'त्य**मरः** (२–९–४) । वृद्धिं विना प्रार्थनया गृहीतमित्यर्थः । तादृशमर्थं विना याचनामिति शेषः । अत एव तत्र विशेषं वक्ष्यति । तृतीयं विशेषमाह । **यश्चेति** । योऽपीत्यर्थः । **याचीति** वर्तमानसामीप्ये इति भूते लट् । तेनैव **कात्यायनेनैव** । कृत्वोद्धारमिति याचितकरूपोद्धारमादायेत्यर्थः । कृतोद्धारमिति पाठे कर्मधारयः । गृहीतं याचितकमित्यर्थः । 'उधार' इति भाषाप्रसिद्धः । उद्धारः 'कर्मणि घञ्' उदित्यस्य वृद्धिमुल्लिख्येत्यर्थः । तु अपि । यद्वा य इत्यग्रे योज्यो यथाश्रुत एव याचित इत्यत्रापीति शेषः ।

चतुर्थं विशेषमाह । **यः पुनरिति** । यस्त्वित्यर्थः । **याचितः** याचितोऽपि । **याचितेति** । अधमर्णयाचितेत्यर्थः । **स्वेति** । यस्तु स्वदेशे स्थितः सन् याचितोऽपि क्वचित् कदाचित् न दद्यादित्यर्थः । **क्वचिदिति** देशविशेषणं वा । अनिच्छंतं च तमपि तमकारितामकृतामपि वृद्धिं प्रागुक्तरीत्या ततोऽधमर्णयाचनकालादारभ्य राजा दापयेदित्युत्तरार्धार्थः । **अनाकारितेति** । 'न वृद्धिः प्रीतीति' (१–१०८) **नारदेनै**व षण्मासानंतरं प्रीतिदत्ते उक्ताया इत्यर्थः । **नाविति** । नैवेत्यर्थः । **पण्यं** विक्रेयं वस्तु । **मूल्यं** धान्यादिः । **भृति**र्वेतनं । **वृथादानेति** । त्रयाणामितरेतरद्वंद्वः । **वृथादानं** बंदिचारणादिभ्यो दानं । **आक्षिकं** द्यूतजितं । **पणः** पणव्यवहारे क्रियमाणनिबंधः । **न्यासो**ऽन्यः । पण्यादिषु 'दास्यामीति' दृढप्रतिज्ञायां सत्यां तावत्तेषां पण्यादीनां परकीयत्वेनादानेऽनाकारितवृद्धेः प्राप्तावनेनापोद्यते इति भावः । 'न्यास'पदेन तु न्यासविशेषो ग्राह्यः । तथाहि यत्र विश्वस्ते पुरुषे रूपसंख्याप्रदर्शनेन द्रव्ये न्यस्ते स यदि मयैतद्व्यवह्रियते कालांतरे 'एतत्संख्याकमेतज्जातीयं च इदं दास्यामीति' स्वामिनः पुरस्तात्कथयति स च स्वामी तथैवांगीकुरुते; तादृशे न्यासे कृता वृद्धिर्नास्तीत्यर्थः । षण्मासं वृद्धभावस्य सिद्धत्वात् स्वामिनोऽकथयित्वैव व्यवहारे कृते सोदयस्य देयत्वाच्चेति बोध्यं । **अविवक्षिता** 'इत्यर्शआद्यच्' (व्या. सू. ५–२–१२७) । तदाह ॥ **अनेति** ॥ ३८ ॥

---

१ क ख–द्वयं ।

## याज्ञवल्कीये ३९ श्लोकः

**स्त्रीणां चेति** । दासीनां न कुलस्त्रीणामित्यर्थः । त्वर्थमाह । **एवेति** । एतत्प्रसंगमाह । **पशूनामिति** । **पुष्टेति** द्वंद्वोत्तरं बहुव्रीहिः । इदं दातुरुक्तं । अथ प्रतिग्रहीतुराह । **ग्रहणं चेति** । **क्षीरेति** । द्वंद्वोत्तरं तत्पुरुषः यथासंख्यमत्र बोध्यं । **प्रयुक्तेति** । वृद्धिलोभेनेति भावः । अत एवाह । **वृद्धीति** । **ग्रहणं** न तु करणं । तस्येति विषये । तेषां मध्ये इति शेषः । 'स्थितत्वे' इति पाठेऽपि तेषां मध्ये इति शेषः । अन्यथा निर्धारणे बहुवचनौचित्येन यथाश्रुतासंबद्धत्वं स्पष्टमेव ।

**परा** । उत्कृष्टा चरमेति यावत् । **तैलेति** । घृततैलादेरित्युचितं । 'शाकपार्थिवादि'र्वा । तस्य लघ्वक्षरत्वात् । आकारितवृद्ध्यभिप्रायेणाह । **स्वेति** । परेत्यस्य तात्पर्यार्थमाह । **तःपेति** । हिरण्यशब्देनात्र धनं द्रव्यापरपर्यायं सर्वं । पक्षांतरं रसे आह । **वसिष्ठेन त्विति** । परत्वं वृद्धेरितिशेषः । अतिदिशति । **धान्येनैवेति** । **निचेति** । व्याख्यातानीतिशेषः । **तुलेति** । तुलायां धृतं निहितं । **त्रितयं** हिरण्यधान्यरसात्मकमदत्तं चिरकालस्थितमित्यर्थः ।

धान्यपुष्पाद्यंशे पक्षांतरमाह । **मनुना त्विति** । प्राग्वत् ॥ आदिग्राह्यं वचने स्पष्टं । पूर्वनिपातप्रकरणानित्यत्वात् पुष्पस्य पूर्वनिपातः । बलीवर्दस्याभ्यर्हितत्वात्सः । पदार्थानुक्त्वा वाक्यार्थमाह **धान्येति** । सर्वत्र विषयसप्तमीत्याह **विपेति** । पंचतामित्यस्य लक्ष्यार्थमाह । **पंचगुणत्वमिति** । इतीत्यस्यार्थ इति शेषः । एवं सति संभवात्तस्य दुष्टत्वं विकल्प्यान्यप्रकारेण विरोधं परिहरति । **तत्रेति** । तेषु पक्षेष्वित्यर्थः । परकीययोग्यतायास्तथ्यतः स्पष्टमज्ञानादाह । **दुर्भिक्षेति** ।

विशेषमाह । **एतच्चेति** । एकस्मिन्नेव ऋणादानप्रयोगे एकदैव च सवृद्धिकमूलग्रहणे चेत्यर्थः । एकस्मिन् ऋणदानप्रयोगे दशरूपकेषु दत्तेषु प्रतिदिनं प्रतिमासं प्रतिसंवत्सरं वा वृद्धेरग्रहणे कालविलंबवशात् वृद्धेर्द्वैगुण्याद्यतिक्रमेणातिवृद्धिः प्राप्ता तत्र सवृद्धिकमूलमेकदैव गृह्णन्नुत्तमर्णो मूलद्विगुणं तेन सह विंशतिरूपकपरिमितं द्रव्यं गृह्णीयात् इत्यभिप्रायः ।

आद्यस्य प्रत्युदाहरणमाह । **पुरुषांतरेति** । अन्यस्मै पुरुषाय दानेनेत्यर्थः । प्रयोगांतरकरणं द्वेधा । तत्रैकमुक्त्वा द्वितीयमाह । **तस्मिन्नेवेति** ।

**अनेकशः** । पुनः पुनः । अनेकशः इत्यत्र रेकसेकाभ्यामिति पाठे प्रयुक्तद्रव्यैकदेशग्रहणे ऊनीकरणं रेकः । तत्रैव प्रक्षेपेणाधिकीकरणं सेकः ।

**'रिच** वियोजनसंपर्चनयोः' । **'पिच** क्षरणे' । तत्रानेन सर्वग्रहणादाह । **सुवर्णेति** । पूर्ववत् अशीतिभाग इत्याद्युक्तप्रकारेण । अयं भावः । यदि तदेव विंशतिसंख्याकं द्विगुणं द्रव्यं अन्यस्मै दीयते, पूर्वं यस्मै दत्तं तस्मा एव वा दीयते । प्रयोगांतरेण तथा वा क्रियते । तदा पूर्वप्रयोगे द्विगुणीभूतमिति कृत्वा पुनः क्रियमाणे प्रयोगांतरे न वर्धत इति न तदा दीयमानस्य तस्यैव मूलत्वेन वृद्धेरिष्टत्वात् । अत एव प्रथमप्रयोगे एव द्वैगुण्याद्यतिक्रमेण वृद्धिर्न । द्वितीयादिप्रयोगे तु द्वैगुण्याद्यतीत्येतीति ।

१ द्वैगुण्यादिक्रमेणाभिवृद्धि । २ फ—द्विगुणस्य । ३ ख—तस्मादेव । ४ फ—द्विगुणद्विगुणीभूत् । ५ ख फ—वृद्धिरिष्टत्वात् ।

'सकृदाहरण'इत्यस्य प्रत्युदाहरणमाह । **सकृदिति** । देयस्य मूलस्य । असंभवस्त्वेवं, प्रतिदिनादिक्रमेण तद्दाने यस्मिन् दिने या वृद्धिर्दीयते तद्दिनात्पूर्वमभिवृद्धस्य[1] धनस्य विच्छेदः पुनरपि नूतनत्वे वृद्धिः एवं च वस्तुतः प्रयोगांतरमिव भवतीति, यावत् द्वैगुण्यं प्राप्नोति तावदविच्छेदेन वृद्धस्य द्रव्यस्य स्थित्यभाव इति । अत्रोभयत्र मानमाह । **यथाहेति** । **हितेत्यस्ये**(ती)ति शेषः । क्वचित्तथापाठ एव । पाठभेदेन द्वयोर्लाभो नैकस्मादित्याह । **सकृदिति** ।

तत्राद्यपाठेनाद्यलाभ इत्याह । **यदीति** । एतद्विशेषणतात्पर्यमाह । **पुरुषांतरेति** । आदिना प्रागुक्तद्वितीयपरिग्रहः । द्वितीयेन द्वितीयलाभ इत्याह । **सकृदिति** । तेतितुपाठे त्वितिपाठः । यदि सकृदाहृता मूलसहिता वृद्धिरेकदैव गृहीतेत्याद्यर्थः । एतत्तात्पर्यार्थमाह । **शनैः शनैरिति** । अस्यैव व्याख्या **प्रतीति** । मानांतरमाह । **तथेति** । तद्वदित्यर्थः । अत एव अपिना पौनरुक्त्यं न । **स्थानं** स्थितिः । **प्रयोगस्य** प्रयुज्यमानऋणस्य[2]प्रतिदिनादिक्रमेण वृद्धिग्रहणं विना चिरकालस्थितौ सत्यां द्वैगुण्यं भवतीत्यर्थः ।

**उक्तमित्यस्य** ध्वनितमित्यर्थ इति सूचयन्नाह । **प्रयोगेति** । अनेनाद्यार्थलाभः उक्तः । द्वितीयस्य तमाह । **चिरेति** । **शनैः शनैरिति** । उक्तरीत्येतिभावः । **दर्शितः** । अभिप्रेतः ॥ ३९ ॥

संगतिमाह । **ऋणप्रयोगेति** । ऋणदानेत्यर्थः ।

## याज्ञवल्कीये ४० श्लोकः

**प्रपन्न**मित्यस्य व्याख्याऽ**भ्युपगतमधमर्णेनेति** । अर्थपदार्थो **धनमिति** । व्याख्यानांतरमाह । **साक्ष्यादीति** । अत एवान्यथा शेषं पूरयति । **धर्मादिभिरिति** । लिङ्गर्थाविवक्षया आह । **भवतीति** । तानेवाह । **धर्मादयश्चेति** । ते त्वित्यर्थः । प्रकृतोपयोग्यानर्थानाह । **प्रीतीत्यादिना** । पक्षांतरे एतेषां सर्वेषां उपायत्वं सूचयन्नाह । **उपायेनेति** । **बलेनेत्यस्य** व्याख्या **निगडेति** । एवं पदार्थानुक्त्वा वाक्यार्थमाह । **उपेति** । एतैः पंचभिर्व्यस्तैः समस्तैर्वा यथासंभवम् इतीत्यस्यार्थ इति शेषः ।

ध्वनितमाह । **प्रपन्नमिति** । अप्रतिपन्नमनंगीकृतादि साधयन् प्रत्याहरन्नेतैरुपायैरितिशेषः । ध्वनितत्वेनास्पष्टत्वात्[3] चिरकालऋणिके 'मत्वर्थीयष्ठन्' । **न्यायेति** । यथार्थानंगीकारादिभाषिणमित्यर्थः । **दमं** दंडं ।

उत्तरार्द्धार्थमाह । **यस्त्विति** । उपायैरित्यस्य साध्येत्यत्रान्वयः । 'कर्मणि लडि'त्याह । **याच्येति** । गमनमात्रेण नानिष्टम् । अतस्तस्य लक्ष्यार्थमाह । **राजानमिति** । लिङ्गर्थाविवक्षया आह । **अभीति** । अनेन गच्छन् इत्यपपाठ इति सूचितं । विशेषाभावादाह । **शक्त्येति** । प्रपन्नसाधने उत्तमर्णस्य प्रागुक्तप्रकारवदत्रापि शेषसूचनाय तानाह । **दापने चेति** । **मनुनैवेति**भावः ।

अधमर्णविशेषणात्र प्रकारभेद इत्याह । **विप्रमिति** । एवं प्रागपि बोध्यं । **सांत्वेन** । प्रीतियुक्तसत्यवचनेन । **एवेनेतरव्यवच्छेदः** । एवमग्रेऽपि । **देशेति** । साक्षिलेख्या-

---

१ क–अभिवृद्धेस्य धनस्य । २ फ–प्रभुज्यमानार्थऋणस्य । ३ ख–ध्वनितत्वेन स्पष्टत्वात् । ४ ग फ–चिः।

द्युपन्यासरूपव्यवहारेणाभोजनादिरूपेण च विप्रान्यानित्यर्थः । अनेन प्रागुक्तद्वयसंग्रहः । तत्रैव विशेषमाह । **दुष्टानिति** । अयं प्रागुक्तपंचमप्रकारः । तृतीयमाह । **अकिंचन-मिति** । विषयद्वये[1]ऽत्र । एवं च सामादयो नीतिशास्त्रोक्ता उपाया एवात्र शब्दांतरेण प्रोक्ता इति बोध्यं ।

नन्वत्र व्यवहाराभावेन कथं दंडादिदापनं राजकृतमत आह । **साध्येति** । अयं भावः । 'स्मृत्याचारे'त्यनेन तादृशस्य व्यवहारपदत्वमुक्तं । अत्र तु तदविरुद्धमार्गेणाधर्षितत्वाद्राज्ञे न निवेदनीयं । यदि निवेदयति तदा तन्निवेद्यमानं व्यवहारपदं न भवति । अत एव दंडा-दिमात्रं विधीयते । तत्राप्यादौ दंडस्य पश्चात्तस्येति निःशंकमविचार्य्य तथाकार्य्यमिति तद्विपरी-तोदाहरणमेतदित्यर्थ इति ॥ ४० ॥

## याज्ञवल्कीये ४१ श्लोकः

**बहुषु उत्तमर्णिकेषु चेति** । अनुकंपादौ च एवमधमर्णिकेऽपि बोध्यं । अव्यवहितसंगतिर-नेनोक्ता । **गृहीतेति** । ग्रहणानुक्रमादित्यर्थः । **धनिनामित्यु**द्देश्यस्य संबंधित्व[2]विवक्षया षष्ठी धनमितिशेषः । उत्तरार्द्धलब्धां व्यवस्थामाह । **समानेति** । सत्सु इति शेषः । **तुरुक्तवैल-क्षण्ये** तथा च **नृपते**रित्युपलक्षणं ॥ ४१ ॥

## याज्ञवल्कीये ४२ श्लोकः

अग्रिमस्यापि अवतरणं ससंगतिकमाह । **यदा पुनरिति** । यदात्वित्यर्थः । अशक्तौ हेतुं सूचयन्नाह । **दुर्बल इति** । **चस्त्वर्थे** । व्युत्क्रमेण समुच्चये वा । भृतिदानं शब्दानुशासन-माचार्यस्येतिवत् प्रयोगः । शब्दार्थमाह । **अधमर्णाति** । साधितादित्यस्य साकांक्षं प्रकृतं शेष-माह । **प्रतीति** । कर्मधारयः । **दशकमिति** । पंचदशतौ वर्गेवेति[+] । पक्षे परिमाणार्थकत्वं तं शतमित्यत्र **प्रतीति**शेषः तं प्रतिदशसंख्यासममित्यर्थः । एवं पंचकं शतमित्यपि बोध्यं ।

तत्र शतग्रहणमुपलक्षणमिति **प्रतीत्यत्र** कर्मधारयमन्यस्मै दापनाविवक्षां च सूचयन्नस्य तद्दशमांशत्वसंभवात्फलितमर्थमाह । **प्रतीति** । प्राग्वदर्थद्वयमाह । **रूपेणेति** । नोत्तमर्णादि-त्यादिः । तुर्व्युत्क्रमे इत्याह । **न्विति** । **प्राप्तेति** । अनेनातथात्वेनैवमिति सूचितं । एत-त्सूचक एव हि[3] भृतिर्वेतनं अत्र तस्य सत्त्वासंभवादेतस्यैव संभवादाह । **विंशतीति** ।

नन्विदमुभयमयुक्तं भृतिदण्डयोग्रत्वानुक्त्या राज्ञस्तु तदंशग्रहणमात्रप्रतीतेरिति चेन्न । ग्रहण-प्रतीतेर्निर्विवादत्वेन तत्र हेतुपरामर्शे दृष्टे सत्यदृष्टकल्पनाया अन्याय्यत्वेन तत्संभवे तदभावे-नाधमर्णे[4] अंगीकृतार्थादानरूपापराधरूपस्य[5] दृष्टहेतोः[6] संभवेनोत्तमर्णेऽपराधाभावेन केवला-शक्तिसत्त्वेन गुरुत्वलघुत्वतारतम्येनाधमर्णादपराधेन दंडस्य ग्रहणमुत्तमर्णादशक्त्या भृतेरिति तात्पर्य्या[7]र्थः ।

ननु प्रपन्नार्थसाधने इदं सर्वमुक्तम् । अप्रतिपन्ने तु का गतिरत आह । **अप्रतीति** । **दंडेति** । ससाधनप्रकार इत्यादिः । तत्रापि वक्ष्यत इत्युक्तं स्थितं तदत्रोक्तमेवेति बोध्यं ॥ ४२ ॥

---

१ **फ**–विषयद्वयमात्र । **ग**–विषयद्वयमत्र । २ **ख**–सम्बन्धत्व । ३ **ख ग**–हिः । ४ **ख**–तत्त्वा-संभवात् । ५ **फ**–अंगीकृताधर्षा । ६ **ख**–अदृष्टहेतो । ७ **ग फ**–तात्पर्यात् । + व्या. सू. ५।१।६०

## याज्ञवल्कीये ४३ श्लोकः

**हीनजाति**मित्यत्र शूद्रादिरेव न विवक्षित उत्तरार्धस्वारस्यादित्याह । **ब्राह्मेति** । योग्यतया आह । **उत्तेति** । **परिक्षीणमि**त्यस्य व्याख्याऽनतिप्रसंगाय योग्यतया निर्धनमिति । 'मक्षिकार्थो धूम' इतिवदृणार्थमित्याह । *ऋ**णनीति** । योग्यतयाऽनतिप्रसंगायाह । **स्वेति** । नन्वेवं तत्कुटुंबविनाशः स्याद्रक्षणाभावादत आह । **तदिति** । तदुपयोगि । संपाद्यावशिष्टकाले इदं तेन कार्यमिति भावः ।

उत्तरार्धार्थमाह । **ब्राह्मेति** । अपिना तस्यापि संग्रहः । तेन न सर्वथा न्यूनता । **जातिमपि** ब्राह्मणादिकं । चः प्राग्वत् । **कर्मेति** समोपकृष्टजातिश्चाधमर्णिको धनिकेन सार्धमात्मानं कर्मणाऽपि समं तुल्यं कुर्यात् श्रेयांस्तु तद्धनं शनैर्दद्यादित्यर्थः । **अपिनो**क्तसमुच्चयः । तत्रास्य स्पष्टांशमाह । **उत्तेति** । कर्मणा धनादिकृततुल्यत्वासंभवात्समामिति व्याचष्टे । **निवृत्तोत्तेति** । अयं उत्तमर्णादिनिरूपिताधमर्णव्यपदेशस्तत्र यथा नास्त्येवं स्वस्मिन्नपीत्यर्थः । यद्वा दृष्टांतार्थमुत्तमर्णस्य ग्रहणं तयोर्मिथः सम्बन्धिकत्वादन्यतरनिवृत्तावपरस्यापि निवृत्तिः ॥ ४३ ॥

## याज्ञवल्कीये ४४ श्लोकः

**किंचेति** । उत्तमर्णेऽन्यदप्युच्यत इत्यर्थः । उत्तरार्द्धानुरोधेनाह । **उपेति** । **स्वक**मित्यत्र 'स्वार्थे कनि'त्याह । **स्वीयमिति** । योग्यतया आह । **अधेति** । **य** इत्यस्यार्थो **उत्तेति** । अग्रहणे हेतुं पूरयति । **वृद्धीति** । तथैवाह । **यदीत्यादि** । मध्यस्थपदं लाक्षणिकमित्याह । **हस्ते इति** । **तत्** धनं । **तत** इत्यस्य व्याख्या **स्थापेति** । **परमिति** व्याचष्टे । **ऊर्ध्वमिति** । तुल्ययुक्त्येदमुक्तं विशेषमाह । **अथेति** । **याच्येति** । उत्तमर्णेनाधमर्ण इत्यर्थः । **ततः** । तस्मात् । **पूर्ववत्** । स्थापनतः प्राग्वत् ॥ ४४ ॥

एवमुत्तमर्णे प्रकारद्वयमुक्तमथाधमर्णे आह । **इदानीमिति** । **यदेति** कालनिर्देशः । **येने**त्यधिकारिनिर्देशः । तत् त्रितयं ।

## याज्ञवल्कीये ४५ श्लोकः

**अविभक्तैरित्यत्र** बहुवचनबलात् बहुत्वं विवक्षितं । तथा च समस्तैर्व्यस्तैर्वा तैरित्यर्थः । **तु**र्वैलक्षण्ये । तत्फलितमाह । **अवीति** । **कुटुंबेत्यस्य** मध्यगणिन्यायेनान्वयः । वार्थे इत्यव्ययं । तत्रेत्याह ॥ **अर्थमि**ति अस्योभयत्रान्वयः । तथा च बहुभिस्तैरेकैकेन वा कुटुंबरक्षणार्थं यदृणं कृतमित्यर्थः । अनेन देयं ऋणं कथितं । उत्तरार्धस्वारस्येन शेषं पूरयति । 'तदृणं कुटुंबी दद्यादिति' । अनेनाधिकारिकथनं । **तस्मिन्** कुटुंबिनि । **तदिति** । तस्य कुटुंबिनो ये रिक्थग्राहका इत्यर्थः । बहुवचनलभ्यमाह । **सर्वे इति** । अत्र 'प्रेते प्रोषिते वेति' कालाभिधानं 'तद्रिक्थिन' इत्यप्यधिकारिप्रदर्शकमेवेति भावः ॥ ४५ ॥

**प्रत्युदेति** । पूर्ववचनेन कुटुंब्यादिभिरधिकारिभिर्ऋणं देयमिति येनेत्यंशोऽपि **कुतस्तत्र** योषिदादीनामपि कुटुंब्यादित्वेऽधिकारित्वेन तस्य देयत्वं यद्यपि प्राप्तं तथापि **विषयविशेषे**

* (ऋणनिवृत्त्यर्थमिति)। १ ख–तद्दरं। २ ग–तदनुक्तं।

देयमिति पूर्वाभिहितमृणस्य देयत्वं व्यावर्त्यत इति प्रत्युदाहरणत्वमित्यर्थः । तथा चानेनादेयमृणमुच्यत इति भावः ।

## याज्ञवल्कीये ४६ श्लोकः

**कृतमि**त्यस्य पूर्वत्रापि संबंधः । योषित्पदं योग्यतया द्व्यर्थमिति पृथक् व्याचष्टे । **पत्येति** । पूर्वतोऽनुवृत्तेराह । **ऋणमिति** । सर्वमिति न्यायेनाह । **नैवेति** । द्वितीयपादार्थमाह । **तथेति** तुर्यपादार्थमाह । **तथेति** । योग्यतया स्त्रीपदार्थमाह ॥ **भार्येति** । 'न दद्यादि'त्यस्यानुषंगः । अव्यवहितसंबंधभ्रमनिरासायाह । **कुटुंबेति** । सर्वे शेष इति पाठः । घञजपाः पुंसीत्युक्तेः शेषमिति पाठस्तस्य प्रायो वादत्वेन । यद्वा सर्वस्य शेषः शेषत्वं यस्य तत् । अत एव तत्प्रत्युदाहरणतया पूर्वकवाक्यतेत्याह । **अतश्चेति** । **कृतं** ऋणमिति शेषः । **हरेः** यैः कैश्चित् *** नारदोऽपि**–" न स्त्री पतिकृतं दद्यादृणं पुत्रकृतं तथा । अभ्युपेतादृते यद्वा सह पत्या कृतं भवेत् । दद्यादपुत्रा विधवा नियुक्ता वा मुमूर्षुणा । यो वा तद्रिक्थमादत्ते यतो रिक्थमृणं ततः ॥ " ( अ. १ श्लो. १६–१७ ) **कात्यायनोऽपिः**—

" भर्त्रा पुत्रेण वा सार्धं केवलेनात्मना कृतम् । ऋणमेवंविधं देयं नान्यथा तत्कृतं स्त्रिया ॥ भर्तुकामेन वा भर्त्रा उक्ता देयमृणं त्वया । अप्रपन्नाऽपि सा दाप्या धनं यथाश्रितं तया"[1] इति ॥ ४६ ॥

**तस्येति** । अदेयप्रक्रमादिति शेषः । तथा चैतदर्थमेवमुक्तौ इतःपरस्यापि पाठक्रमादिति न्यायेनार्थक्रमतः पूर्वभावादपवादत्वमिति न काचिदसंगतिरिति भावः ॥

## याज्ञवल्कीये ४७ श्लोकः

द्यूतांतद्वंद्वस्य कृतशब्देन तृतीयातत्पुरुषः तस्य च प्रत्येकं संबंधः; सुरापदं च तत्पाने लाक्षणिकं साहचर्यादित्याह । **सुरापानेनेति** ॥ वा[2] भावेति णत्वविकल्पः । कामो रत्यभिलाष इत्याह । **स्त्रीति** । बहुव्रीहिः । एवमग्रेऽपि । द्यूतद्वैविध्यत्वेऽपि[3] जये तदभावादाह । **परेति** । लक्षणेतिभावः । दंडेत्यत्र द्वंद्वोत्तरं षष्ठीतत्पुरुषः । 'स्वार्थे कनि'त्याह । **दंडेति** । रक्षानिर्देशोराजभागः शुल्कमितिभावः ।

**वृथादानमि**त्यस्य वृथादीयमानमित्याद्यर्थे शाब्दे बाधात्[4] पूर्ववत्तदवशिष्टमित्यर्थासंभवात्त्वाह । **धूर्तेति** । तथा च तदनुकूलो व्यापारोऽत्र प्रतिज्ञारूप एवेति भावः । धूर्तादिभ्यो दत्तस्य वृथादानत्वं समूलयति । **धूर्ते इति** । **कितवे** द्यूतकारिणि । **चाटे** विदूषके । अत्र **'निष्फल'**-मित्युक्त्या पारलौकिकफलाभावाद्वृथादानत्वं विवक्षितं न तु दृष्टफलाभावादितिभावः ।

पदार्थानुक्त्वा[5] वाक्यार्थमाह । **एतदिति** । पैतृकमिति व्याचष्टे । **पित्रेति** । अयं फलितार्थः आगत इत्यधिकारे[6] 'पितुर्यच्चेति' ठञ् विधानात् । उत्सर्गानुरोधेन पुत्रपदमुपलक्षण-

---

* इतः परः पाठः खपुस्तकोद्धृत एव. एतत्पाठस्तु गफ पुस्तकयोर्न दृश्यते ।

१ 'धनं दद्यात्स्थितं स्त्रिया' 'धनं यथाश्रितं स्त्रिया'–इत्यपि पाठान्तरे दृश्येते ।

२ ख–वाहवेति । ३ ग=द्वैविध्यसत्वेऽपि । ४ फ=शाब्दे वादात् । ५ ख=त्त्वा ।

६ फ=अगत इत्यधिकारि ।

मित्याह । **पुत्रादिरिति** । इहेति व्याचष्टे । **शौंडीति** । तस्य तत्त्वविवक्षया तत्र सप्तमी । विशेषमाह । **अत्रेति** । वचने इत्यर्थः । **तु पुत्रेण**[1] **यच्च न व्यावेति** । न कुटुंबोपयोगीत्यर्थः । **मद्येति** । अत्र मद्यादिदंडान्तपदैस्तदर्थव्ययीकृतानि द्रव्याणि लक्ष्यंते । तानि पितृसंबद्धानि[2] पुत्रान्नाध्यौभवेयुरित्यर्थः[3] । 'अधिभवेयुरिति' पाठांतरं । पराभवेयुरित्युभयार्थः । तात्पर्यार्थमाह । **न पुत्रेति** । तथा च 'दंडशुल्कावे'त्यत्र त्रयाणां समाहारद्वंद्वः । कन् स्वार्थे एव अवशिष्टं[4] चोपस्थितत्वात्तयोरेवेत्येवं विवक्षितं न तु प्रागुक्तमित्यनेन सूचितमिति बोध्यं । उपसंहरति । **अनेनेति** । उभयेनेत्यर्थः ॥ ४७ ॥

## याज्ञवल्कीये ४८ श्लोकः

**गोपेति** अभ्यर्हितत्वात्पूर्वनिपातः । व्याधांतद्वंद्वे[5] योषिद्भिस्तत्पुरुषः । आदौ पदार्थानाह । **गोप इति** । अथ वाक्यार्थमाह । **एतेषामिति** । अनेन द्वंद्वः सूचितः । पतिरिति 'जातावेकवचनं[6]'मित्याह । **पतिभिरिति** । तत्र बीजमाह । **यस्मादिति** । **तेषां** । तत्पतीनां । अनेन तासामित्यपपाठ इति सूचितः । नेदं परिगणनं किं तूपलक्षणमित्यनेनैव सूचितमित्याह । **अन्येऽपि** । एतद्भिन्ना सर्वे ब्राह्मणादयोऽपि ॥ ४८ ॥

## याज्ञवल्कीये ४९ श्लोकः

आद्यपादार्थमुक्तक्रमेण स्मृत्यंतरानुरोधेनाह । **मुमूर्षुणेति** । परलोके गंतुमिच्छता देशांतरं गमिष्यमाणेन वा भर्त्रा ऋणदाने तद्विषये **नियुक्तया** प्रेरितया भार्यया **यत्प्रतिपन्नं** तद्दानमंगीकृतं तत्तादृशं[7] तया देयं इत्यर्थः ।

द्वितीयपादार्थमाह । **यच्चेति** । अनेन वाचार्थे इति सूचितं । एवमग्रेऽपि ॥ अत्र 'पत्या सहे'त्युक्त्या तस्याप्राधान्यं सूचितं । एवमप्युक्तरीत्योभयोरभावे तस्या दानाधिकारादाह । **भर्त्रभावे** इत्यादि ।

तृतीयपादार्थमाह । **यच्चेति** । मध्यमतो भेदाय सर्वमिति न्यायेनाह । **स्वयमेवेति** । तथा च **नारदः** 'न स्त्री पतिकृतं दद्यादृणं पुत्रकृतं तथा । अभ्युपेतादृते यद्वा सह पत्या कृतं भवेत् ॥ दद्यादपुत्रा विधवा नियुक्ता या मुमूर्षुणा । यो वा तदृक्थमादद्यायतो ऋक्थं ऋणं तत' इति ( अ. १ श्लो. १६-१७ ) ॥ **कात्यायनोऽपि** "भर्त्रा पुत्रेण वा सार्द्धं केवलेनात्मना कृतं । ऋणमेवंविधं देयं नान्यथा तत्कृतं स्त्रिया । मर्तुकामेन वा भर्त्रा उक्ता देयमृणं त्वया । अप्रपन्नाऽपि सा दाप्या धनं यद्याश्रितं स्त्रियेति" ॥

**त्रय एवेति** । एकश्चोऽप्यर्थे । एते त्रयोऽर्जितधना अपि अधना एव । अस्वामिनोधने स्मृता इत्यर्थः । **यत्ते इति** । ते भार्यादयो यत्किंचित्**समधिगच्छंति**[8] धनमर्जयंति तद्धनं यस्य ते भार्यादयस्तस्य भवतीत्यर्थः । 'यस्य ते' इति पाठः; 'यस्यैते' इति पाठांतरं ।

---

१ फ-तु पुत्रेण पौत्रेण । २ ग=पितृबद्धानि । ३ 'पुत्रान्नाध्यावहेयुरिति' गौतमीयपाठः । युक्ततरश्च । फ-नाद्याभवेयुरिति । ४ ख-अवशिष्टे । फ-अवसिष्टं । ५ ग-द्वंद्वयोषिद्भिः । ६ ख-व्या. सू. १।२।५८। ७-तदृणं; ग-तादृशं । ८ फ-समधिगमयंति ।

नन्वनेन तस्या निर्द्धनत्वे प्रतीयमाने सति 'प्रतिपन्नमित्यादि'वचनशतैर्देयत्वोक्तावपि कथं तया देयं निर्द्धनत्वादत आह । **न चेति** । न हीत्यर्थः । **अनेन मनु**वचनेन । अत एव **शंकायामिति** उक्तपारतंत्र्येऽपि तन्मात्रप्रतिपादनतात्पर्यकत्वादित्यर्थः । तथा चानुज्ञां विना नाधिकारः स्वातंत्र्येण यत्र कुत्रचित् विनियोगे । सत्यां तु तस्यां सोऽस्तीतिभावः ।

नन्वत्र किं नियामकं तथैवार्थः कुतोऽन्यो न अयमपूर्वो विधिरस्तु तथा चैतदन्यविषयत्वं तस्येति व्यवस्थासंभवाददोषोऽत आह । **एतच्चेति** । एवं सति तुर्यपादांशे एव शंकते । **नान्यदिति** । **सिद्धेरिति** । अर्थादिति शेषः प्राप्तेरेवाभावादिति भावः । यथाकथंचित्स्वयंकृतस्यावश्यदेयत्वादाह । **अनयोरिति** । **सुरेति** । सुरापानादिव्यसनेनोपात्तं कृतमित्यर्थः । **इतिरर्थ**समाप्तौ । एतेनैतच्छेषविषयता प्रागुक्तनिषेधस्येति ध्वनयितुं पुनरुक्तं नान्यदिति व्याख्यानमपास्तं तथा पुष्टेरभावात् ॥ ४९ ॥

सिंहावलोकनन्यायेन द्विर्बद्धमिति न्यायादरेणाह । **पुनरपीति** । कंचिद्विशेषं वक्तुमितिभावः ॥

## याज्ञवल्कीये ५० श्लोकः

वक्ष्यमाणक्रमायाह । **पितेति** । प्रागुक्तक्रमेणाह । **प्रेत इति** । **प्रोषिते** इत्यस्यार्थो **दूर इति** । सुरापानादिव्यसनाक्रांतऋणस्यादेयत्वस्योक्तत्वात् । **व्यसनेत्यस्य** व्याख्याऽ**चिकित्स्येति** । **आदिना** आधिः । देयमित्यस्य व्याख्याऽवश्येति, आवश्यके कृत्य इति भावः ।

द्वंद्वादुभाभ्यां युगपद्देयमिति प्रतीयमानार्थनिरासायाह । **पुत्रेणेति** । बहुवचनं [1]व्यत्ययभिप्रायमतत्वादेवाह । **पित्र्येति** । पितुरागतेत्यर्थः । 'पितृधने'ति पाठांतरं । तत्र दाने । तुर्यपादार्थमाह । **पुत्रेणेति** । वक्ष्यमाणरीत्या साक्षिपदमुपलक्षणमित्याह । **साक्ष्यादीति** । सर्वस्यानुषंग इत्याह । **ऋणमिति** । **अत्र** छंदोऽनुरोधेन यथाश्रुतोक्तिक्रमेण आर्थविशेषमाह । **अत्रेति विंशात्** । विंशतेः पूरणात् । तत्र 'पितरी'त्युपलक्षणमिति सूचयन्नाह । **पितृव्य इति** । कनिष्ठनिरासायाह । **ज्येष्ठ इति** । इदस्याविभक्तत्वे तदीयधनग्रहणे चेति बोध्यं ।

द्वितीये विशेषमाह । **प्रेतेऽपीति** । पितरीति शेषः । अग्रे पुत्रादिरिति शेषः । **तेनैव नारदेनैव** । **आऽष्टमात्** । आङभिव्याप्तौ । एवमग्रेऽपि ॥ तत्सादृश्ययुक्तस्यैव नाम शिशुरिति । **षोडशादिति** । 'उटंतपौगंड' इति बालस्यैव संज्ञान्तरं । **शब्द्यते** । कथ्यते । **परतः** । षोडशवर्षादूर्ध्वं । **पितरावृते** । **तौ विना** । तत ऊर्ध्वं तयोरभावे स्वतंत्र इत्यर्थः ।

ननु षोडशवर्षानंतरं तस्य तत्ववत्तयोरभावे स्वातंत्र्यमिति नियमो वचनबोध्योऽयुक्तः । ततः पूर्वमपि पित्रोर्मरणे स्वातंत्र्यसिद्धेस्तथा च तद्वत्तस्यापि तद्दानाधिकारित्वमित्यप्राप्तव्यवहारस्यापि ऋणं देयं स्यादित्यन्यथा प्रागुक्तमित्यत आह । **यद्यपीति** । पित्रोर्मेत्यर्थः । **अपिना** शिशुसमुच्चयः । व्युत्क्रमेणोक्तिरियं । **यथाहेति** । यतः स एव आहेत्यर्थः । **अप्राप्तेति** ।

---

१ ख–शययभिप्रायमतत्वादेवाह । फ–व्यत्ययभिप्रायं उक्तत्वादेवाह ।

अप्राप्तव्यवहारः षोडशवर्षातिक्रमरहितश्चेद्यदि हि तदा तयोरभावात्स्वतंत्रोऽपि **ऋणभाक्** न भवतीत्यर्थः । **अपिना** अस्वतंत्रसमुच्चयः ।

ननु तत्र तद्वत्स्वातंत्र्यमपिमाऽस्तु अत आह । **स्वातंत्र्यमिति** । हि यतः । स्वातंत्र्यं ज्येष्ठे स्मृतं । न तु तत्रैवेत्यर्थः । ननु तद्वत्तदा तदपि नात आह । **ज्यैष्ठ्यमिति** । तथा च तयोरभावादुभयकृतज्यैष्ठ्याभावात्तस्मिन् तत्त्वेन तत्त्वेऽपि न तत्त्वार्थे वचनमनुतत्त्वमित्युक्त-वचने तयोरभावाद्यः स्वतंत्रः स परतो व्यवहारज्ञः इत्यन्वयो न तु परत इत्यस्याग्रेऽपीति । नकोऽपि दोषः । अतएव तथैव प्रतिज्ञातं ।

तत्राप्राप्तव्यवहारत्वदृढीकरणेनोक्तार्थे युक्त्यंतरमपि सूचयन्नन्यदप्याह । **तथेति** । उक्त-निषेधवदित्यर्थः । **आसेधेति** । आसेधाह्वानयोर्निषेधोऽपीत्यर्थः । अन्यथा विरोधो दुष्परिहर इति भावः ।

**विषमेति** । संकटस्थाश्चेत्यर्थः । अत्र पञ्चानां निषेधः । एवं सति प्राप्तस्मृत्यंतरविरोधं परि-हरति । **तस्मादिति** । यतोऽप्राप्तव्यवहारो न ऋणभागुक्तवचनात् तस्मात् इतिवचनमित्येवं व्याख्येयमित्यर्थः । अन्यथा विरोधो दुष्परिहर इति भावः ।

**अतः** पुत्रत्वात् । **यत्नतः** यत्नेन । तदेवाह । **यथेति** । तथा च जातमात्रपुत्रेण स ऋणा-न्मोच्यत इति नार्थः । किं तु व्यवहारज्ञतया जातेन । तदूर्ध्ववर्षकेण[1] तेन स ततो मोच्य इत्यर्थः । नन्वेवं तस्य श्राद्धेऽप्यधिकारो न स्यात् उक्तव्यवहारानभिज्ञतया वैदिकव्यवहारानभि-ज्ञत्वस्य सुतरां सत्वादत आह । **श्राद्धे त्विति** । तु । उक्तवैलक्षण्येऽपि प्राग्वत् ।

**न ब्रह्मेति** । ब्रह्म वेदं नाभिव्याहारयेत् बालः स्वधाकारात् । निनीयते प्रणीयतेऽस्मिन् श्राद्धे **तत्स्वधानिनयनं** । ततोऽन्यत्र श्राद्धादन्यत्र नाभिभापयेदित्यर्थः । अयंभावः । श्राद्धे वेदोच्चारणं कारयेद्यदि स्वयमनुपनीतः । उपनीतस्य स्वयमेवोच्चारणेऽधिकारात् । एवं च बालस्यापि प्रयोजककर्तृत्वप्रतीतिबलाद्यजमानताप्रतीतेरधिकारोऽस्तीति ।

वस्तुतस्तु ब्रह्म वेदमन्यो ऋत्विगादिः प्रयोजककर्ता । अनुपनीतं बालं नाभिव्याहारयेत् । तं वेदोच्चारणे न प्रयोजयेत्स्वधानिनयनादन्यत्रेत्यर्थः । **मनुरपि** । 'न ह्यस्मिन् युज्यते कर्म किंचिदा-मौंजिबंधनात् । नाभिव्याहारयेत् ब्रह्म स्वधानिनयनादृते' इति ॥ एवं च कृतचूडस्यानुपनीतस्यापि श्राद्धेऽधिकारस्तस्य मुख्यत्वात् ॥ एवं च तदुपयोगितया तस्य मंत्र पाठोऽपि भवत्येवेति बोध्यं । 'कृतचूडस्तु कुर्वीत उदकं पिंडमेव च । स्वधाकारं प्रयुंजीत मंत्रोच्चारं तु कारयेत्' इति । **नाभ्र**नाम्ना लिपितं वचनं यदि समूलं तदा मंत्रविषये विकल्पो द्रष्टव्यः ।

व्यक्त्यभिप्रायेण कृतबहुवचनस्य फलमाह । **पुत्रपौत्रैरिति** । पंचम्यंतस्य गम्यत इत्यत्रा-न्वयः । **भक्ता इति** । तदेतिशेषः । क्वचित्पाठ एव । एवमग्रेऽपि । **संभूयेति** । मिलित्वा देय-मिति संकेतेनेत्यर्थः । मिलित्वा एकीकरणेन वा । अंशतो दानमत्रापि । पूर्वं तु भेदेन दानमत्र तु मिलनेनेति विशेषः । अत एव **नारदै**क्यता । दद्युरित्यस्यानुषंगः । इदमग्रे स्फुटीभविष्यति ।

---

१ फ–तदूर्ध्वं वर्णकंकणतने ।

तद्विवादप्रकरणे इदमपि समप्रधानविषयमत एवाह । **गुणेति । नाना** । नानां तु । **प्रधानेति** । मुख्येत्यर्थः । उक्तत्रये मानमाह । **यथाहेति** । अतः पुत्रत्वादूर्ध्वं पितुः तन्मरणाद्यनंतरं विभक्तावेत्यत एकत्रान्वयः । **यथांशत** इत्यस्योभयत्रान्वयः । अनेन प्रकारद्वयमुक्तं । तृतीयप्रकारमाह । **य इति** । विशेषमाह । **अत्र चेति** । **पुत्रपौत्रैरित्य**स्मिन् वचने इत्यर्थः । **समं** गृहीतसदृशं । **मूलमेवेति** । एवव्यवच्छेद्यमाह । **न वृद्धिरिति** । अत्र मानमाह । **ऋणमिति** । आत्मीयवदित्यनेन सवृद्धिकदानमुक्तं । **सममिति** । अर्थात् पौत्रेण । **तत्सुतेति** । पौत्रसुतस्य प्रपौत्रस्येत्यर्थः । पुत्रपौत्रैरिति विशेषस्यानेन गुरुवाक्येन सामान्यपरेण सहप्राप्तविरोधपरिहारः । 'सामान्यस्य विशेषे उपसंहार' इतिन्यायेन । तंत्रांतरंगसिद्धेन[1] कर्तुं यद्यप्युचितस्तथापि सामान्यस्याधिकसंग्राहकत्वेन सफलत्वेन प्रबलत्वाद्विशेषस्य न्यूनत्वेन दुर्बलत्वेन. तथा प्रकृते दुर्वचमिति वैपरीत्येन विरोधं परिहरति । **अत्रेति** । **बृहस्पति**वाक्य इत्यर्थः । **अचीति** । सामान्येनेत्यर्थः । **इत्यत्र** । मूलवाक्ये । **प्रमाणापेति** । प्रमाणमात्रोपेत्यर्थः । तथा च येन केनापि प्रमाणेन साधितमृणं पुत्रादिना देयमित्यर्थेन न वचनयोर्मिथो विरोध इतिभावः । अत एव प्राक् तथा व्याख्यातं । अस्योत्तरार्धार्थमाह । **सममित्यादि** । विशेषांतरमाह । **अगृहीतेति** । नन्वत्र किं मानमत आह । **एतच्चेति** ॥ ५० ॥

संगतिं प्रसंगरूपामाह । **ऋणापेति** । ऋणनिवारणे इत्यर्थः ।

## याज्ञवल्कीये ५१ श्लोकः

**अन्यदीयेति** । अन्यस्वामिकेत्यर्थः । अत एव च्विः । व्यतिरिक्तप्रकारमेवाह । **विभागेति** । एवमाद्यपादार्थमुक्त्वा तत्तात्पर्यार्थमाह । **एतदिति । न चौरेति** । तस्य स्तेयादिना तद्ग्राहकत्वेऽप्युक्तरीत्या ऋक्थग्राहत्वाभावादिति भावः । द्वितीयपादार्थमाह । **योषितमिति** । अस्याभिमतार्थविशेषमाह । **भार्यामिति । तथैव चे**त्यस्य व्याख्या ऋणमिति । यद्वा तद्वदेवेत्यर्थः । तस्यानुषंगः । अस्यापि तात्पर्यार्थमाह । **यदीति** ।

**ननु योषितोऽपि द्रव्यत्वेन** रिक्थरूपत्वा'द्रिक्थग्राह'इत्यनेनैवेष्टसिध्येदं **न वाच्यमत आह । योषित् द्रव्यं भवति । तथापि** ऋक्थशब्दवाच्यत्वं नास्ति तस्याः विभागार्हद्रव्ये एव लोके रिक्थशब्दप्रयोगात् योषितश्च विभागानर्हत्वादितिभावः । **अविभज्येतिपाठः** । ण्यदंतत्वात् ।

तृतीयपादार्थमाह । **पुत्रश्चेति** । न अन्यः अनन्यः इत्याद्यर्थांतरनिरासाय तत्पदार्थमाह । **अन्यमिति** । तदर्थमाह । **मात्रेति** । तुर्यपादार्थमाह । **पुत्रहीनेति । ऋक्थिन इति** । प्रथमाबहुवचनांतमित्याशयेन सवचनविपरिणामेनानुषंगेणाह । **ऋणमिति** ।

एवं कर्त्रंतरे उक्तेऽपि क्रमो नोक्त इत्येतेषां ऋक्थग्राहादीनां मेलने केन क्रमेणैते ऋणं दाप्या इत्याकांक्षाया *अशांतिरित्यवतरणासंगतिरत आह । **एतेषामिति** । तमेवाह । **ऋक्थेति** । असति बाधके उपात्तवचनपाठक्रमत्यागे मानाभावादितिभावः । तुर्ये विशेषस्य वक्ष्यमाणत्वादत्रानुक्तिः ।

---

१ ग—तत्रांतरसिद्धे ।

ननु रिक्थग्राहादीनां सति समवाये क्रमचिंता, स एव नास्तीत्याह । **नन्वेतेषामिति ।** तमेव तदभावं क्रमेणोपपादयति । **न भ्रातर इति ।** पितुः भ्रातरः पितरश्च न रिक्थहरा अपि तत्पुत्रा एव तथेति मनूक्तत्वात् पुत्रे सत्यन्यस्य तत्वासंभवात्पुत्ररिक्थग्राहयोर्मेलनं नास्तीत्यर्थः ।

ननु माऽस्तु तयोः समवायः पुत्रयोषिद्ग्राहयोस्तु संभवत्येवेति चेन्न । तदभावादेव तयोस्तस्य दुर्वचत्वादित्याह । **योषिदिति ।** अत्र हेतुमाह । **न द्वितीय इति ।** द्वितीयभर्तृनिषेधादेव योषिद्ग्राहाभाव इति भावः ।

पुत्र इत्यपि व्यर्थं पुनरुक्तं चेत्याह । **तथा ऋणमिति ।** तत्र हेतुमाह । **पुत्रेति ।** तथा चास्यार्थस्य तेनैवोक्तत्वेन पौनरुक्त्यादत्र पुनः कथनमयुक्तमिति भावः ।

एवं विशेष्यानर्थक्यमुक्त्वा विशेषणानर्थक्यं भेदेनाप्याह । **अनन्येति ।** अत्रोपपत्तिमाह । **पुत्रे सतीति ।** अन्येनाश्रयणेत्यर्थः । तथा च तस्य सत्वे तस्यान्यागामित्वात्तद्व्यर्थमिति भावः । सत्यपि तस्मिन् तत्त्वं अभ्युपेत्यापि दोषमाह । **संभवे चेति ।** तत्र सत्यपि यदि ऋक्थग्राहोऽन्यः संभवति तदा केवलं पुत्रो न ऋणं दाप्यः किं त्वनन्याश्रितद्रव्यः स्वयमेव तद्ग्राहस्तद्देत्येवं अत्र पक्षे तद्विशेषणसार्थक्यमिति भावः ।

मूले यद्यप्यण्णंन्तं तथाप्यविशेषात् णिन्यंतेनाह । **ऋक्थग्राहीति ।** वासरूपन्यायेनेति भावः । ' ऋक्थभागृणं दाप्य ' इति पाठांतरम् ।

उक्तरीत्याऽत्र पक्षे विशेषणसाफल्येऽपि अस्यार्थस्याद्यपादेनैवोक्तत्वात् विशिष्टं निष्फलं पुनरुक्तं चेति भावः । तुर्यपादानर्थक्यमप्याह । **पुत्रेति ।** तदाशयमाह । **पुत्रे इति ।** यत इत्यादिः । वचनपाठक्रमस्य प्राबल्यात् तत्र सत्यपि स दाप्यस्तदा किमु वाच्यमसति तत्र स ऋणं दाप्य इतीत्येवं कैमुतिकन्यायेनैवास्यार्थस्य सिद्धत्वादिदमपि व्यर्थमिति भावः ।

एवं सर्ववचनमाक्षिप्य क्रमेण परिहरति । **अत्रोच्यत इत्यादिना ।** पुत्रे सत्यन्यस्य ऋक्थग्रहणासंभव इति यदुक्तं तत्राह । **पुत्रे इति ।** अत्र मानमाह । **तथा चेति । वक्ष्यति मूलकृत् ।** अन्यथाऽपि संभवं प्रदर्शयन् तत्र मानांतरमाह । **तथेति । एकेषां,** मते । यद्वा एकेषां साधुवृत्तानां पितॄणाम् । यद्वा एकेषां साधुवृत्तानामन्येषां असवर्णपुत्राणां समवाये ।

उपसंहरति । **अतश्चेति ।** उक्तदोषस्य दृढत्वात् योषिद्ग्राहसद्भावस्य क्लिष्टत्वसूचनाय तत्सद्भावं शंकापूर्वकमाह । **योषिदिति ।** शास्त्रविरोधेनेति पाठः । नञ्घटितोऽपपाठःशास्त्रेण भर्त्रंतरनिषेधाद्यद्यपि स्त्रीणां द्वितीयः शास्त्रीयो नास्ति तथापि शास्त्रोल्लंघनकृतो योषिद्ग्राहत्वसंभवात्तादृशः स तत्पतिकृतऋणनिवारणेऽधिकारी भवत्येवेत्यर्थः ।

नन्वेवं प्रकारेणास्तु तत्संभवस्तथापि तस्य स्मृत्यंतरानुरोधेन तस्या अनेकविधत्वेनानेकविधत्वादनियमेन सर्वेऽपि किं ते तत्राधिकारिण इत्याशंकायां नियममाह । **यश्चतसृणामिति** ' निर्धारणे सर्वा षष्ठी ' । **प्रथमामिति** गृण्हातीत्यनुषज्जते ।

स्वैरिणीनां चातुर्विध्यं पुनर्भुवां च त्रैविध्यं तत्र च तद्ग्राहयोरवाधिकारः इत्येतत्सर्वं **नारदो**क्त्या प्रकाशयति । **यथाहेत्यादि श्रित इतीत्यंतेन ।**

**परेति ।** परः पतिः पूर्वो यासां ता इत्यर्थः । तासां सप्तानां कन्यैवेत्यस्य व्याख्या । **अक्षतेति ।** एवेन व्यभिचारकृतदोषनिरासः । तर्हि किं प्रयुक्तोऽस्या दोषोऽत आह । **पाणीति ।** तेनैव दूषिता नान्ये-

१ ख–णास्य २ ख–संभव । ३ ख समवायो । ४ ख–किमयुक्तो ।

नेत्यर्थः । तथा च तदेवास्या दूषकताबीजं नान्यत्तदपि नाद्यं किंतु द्वितीयमित्याह । **पुनः संस्कोति ।** ईदृशी या सा तेन पुनर्भूः प्रथमोक्तेत्यर्थः ।

**देशेति ।** दानसंबंधिन इत्यर्थः । **अन्यस्मै** द्वितीयस्मै । **सवर्णाया**सपिंडाय । प्रकृतेऽन्यसाहसासंभवादाह । **व्यभीति ।** अग्रेऽकारप्रश्लेषः । पत्यौ जीवत्येव सति । **कामात्स्वे**च्छया । एवमग्रेऽपि । **अन्यं** यं कंचित् । **कौमारमिति ।** अपूर्वपतिं कुमारीमुपपन्नामित्यर्थः । **प्राप्तानिति ।** नियोगविधिना प्राप्तान्देवरादीन् परित्यज्येत्यर्थः । **परम्** अन्यं । यं कंचित् । **प्राप्ता देशादिति ।** देशांतरात्प्राप्ता सती या धनक्रीता भवति सा या च क्षुत्पिपासातुरा सती तवाहमित्येवं प्राप्ता भवति सा च स्त्री चतुर्थी स्वैरिणी कथितेत्यर्थः । **अंतिमेति ।** तासां मध्ये याऽन्तिमा तासां मध्ये च या प्रथमा तेऽप्यनुपाश्रितौ तौ तयोः पतिकृतं ऋणं दद्यातामित्यर्थः ।

**तथा** तद्वत् उभयवत् । **अन्यः** उभयान्योऽपि । **तेनैव नारदेनैव वा**चार्थे । क्वचिन्न पाठ एव । अनेन विशेषणद्वयेनान्याश्रयणे आत्मादेर्धनस्य च रक्षणमात्रं निमित्तं न तु कामादिरिति सूचितम् । पत्यौ **मृते** इति शेषः । **अस्या** भर्तुरित्यन्वयः । व्यवहारानभिज्ञतया तया ऋणं न दत्तमिति भावः । **तथैव ।** यथा समागता तथैव । कथमपि सर्वथाऽस्पृष्टामिति यावत् । प्रेगतधनसहितेत्यर्थनिरासायाह । **प्रकृष्टेनेति ।**

अन्यमपि तमाह । **तथेति ।** तद्वुक्तिरेवेयमपि । **हिश्चार्थे । वोढुः** पत्युः । अत्र हेतुमाह । **सैवेति । चो** ह्यर्थे । **अस्य** पत्युः ।

तृतीयपादे दत्तदोषद्वयमुद्धर्तुमादौ विशेष्यसाफल्यमाह । **पुत्रस्येति ।** ' पुत्रोऽनन्ये ' त्यत्र पुत्रग्रहणमुक्तयोरुभयोरभावे तेन ऋणं देयमित्येवंविधक्रमबोधनार्थं न तु तत्र तस्याधिकारप्रदर्शनार्थम्, येन पौनरुक्त्यं स्यादित्यर्थः । विशेषणस्यापि सार्थक्यमाह । **अनन्येति ।** तस्य तत्त्वेन तत्राधिकारो न पुत्रत्वमात्रेणेति अंधादीनामन्याश्रितद्रव्यत्वेनांधत्वादिदोषयुक्तत्वेन पितृरिक्थांशग्रहणायोग्यत्वेन नाधिकारस्तत्र किं त्वनंधादीनामेव तत्त्वेनाधिकार इत्येतदर्थकतया विशेषणस्य सार्थक्यमिति भावः । तथा च योग्यपुत्रत्वेन तत्राधिकारो न पुत्रत्वमात्रेणेति सूचनार्थम् **एतदिति** तत्वम् । एवं च पुत्रत्वेनेत्यादि यत् पुत्रपौत्रैरित्यत्रोक्तं तदप्येवंपरतया व्याख्येयमिति न प्रागुक्तविरोऽधोपीति बोध्यम् ।

तुर्यपादे दत्तदोषमुद्धराति । **पुत्रेति ।** पुत्रग्रहणं तत्रोपलक्षणमित्याह । **पौत्रेति ।** पूर्वत्र द्वयोरेवोपात्तत्वान्नातिप्रसंगः । ' रिक्थिन इति ' प्रथमाबहुवचनांतमवेत्याह । **प्रपौत्राद्य इति । तदृणमिति ।** तदा प्रपितामहस्य ऋणमित्यर्थः । **नान्यथा ।** तदीयरिक्थग्रहणाभावे । रिक्थभाज एव प्रपौत्रादेस्तादृशप्रपितामहादेर्ऋणदानेऽधिकारो नान्यस्येत्येतत्प्रतिपादकतयेदमपि सफलमिति तात्पर्यार्थः । तद्धीनत्वनिवेशस्य फलमाह । **पुत्रपौत्रौ त्विति ।** योग्यावित्यर्थः । अत एव तत्र नातिप्रसंग इत्युक्तम् अनुपदमेव । **इत्युक्तमिति ।** पुत्रपौत्रैर्ऋणं देयमित्यत्रेत्यर्थः ।

अत्र नान्यथेत्यत्र संवादमाह । **यथाहेति । अव्याहतं** निष्कपटम् । क्रमात्प्राप्तमित्यस्यैव व्याख्या **पुत्रैरिति । तत्** ऋणम् । **चतुर्थात्** रिक्थग्राहिण इत्यर्थः । आरभ्येति शेषः ।

ननु स्वरसतो न ततस्तदर्थप्रतीतिः । किंच **नारद**वचनः सामान्येनैव निषेधप्रतीतिस्तत्संकोचे दृढतरमानांतराभावश्चातस्तं तुर्यांशमन्यथा व्याचष्टे । **यद्वेति ।** पुत्रस्तादृशः । **उक्तमिति** त्रयाणां क्रमः प्रागुक्त एवेति भावः । तत्र द्वितीयतृतीययोर्वैपरीत्यमपीत्याह । **पुत्राभावे इति ।**

---

१ ङ–इदमेव । २ २ क–यामा । ३ ङ–नैयो अनुपाश्रितौ । ४ ख–पत्नौ । ५ क–प्रगत् प्रगत– । ६ ङ–अन्यमुचितमाह । ७ ङ–विशेषणस्यापसार्थक्यम् । ८ क–द्वितीयातृतीयवैपरीत्य ।

अत्र पक्षे तेषां[1] बहुत्वासंभवात् तद्बहुवचनासंगते[2] रिक्थिन इति पंचम्यंतम्[3]। विभक्तिलिंगविपरिणामने ऋणं दाप्य इत्यस्यानुषंगात्तस्य यो रिक्थी तस्मादृणं दाप्यमित्यर्थस्तदेतत् ध्वनयन् फलितमाह। **योषिद्ग्राह इति**।

ननु 'रिक्थिन' इत्यतः कथमुक्तार्थलाभोऽत आह। **ऋक्थेति**। प्रकृते इति शेषः। अतो न पूर्वविरोधः। अन्यथाऽनुपपत्तिस्तु न। उक्तवक्ष्यमाणप्रकाराभ्यां व्याख्यानसंभवादतोऽत्र साधकांतरं प्रागुक्तनारदमेवादावाह। **सैव चेति**।

साधकांतरमाह। **य इति**। अत्र यो यस्य दारान् हरते स तस्य धनमपि हरेदिति न विधिर्बोध्यः कामात्, किंतु यतो दारा एव धनमतो यो यस्य दारान् हरते[4] तद्व्यपदेशभागिव तद्धनहारीति व्यपदेशभागपि भवतीत्यर्थः। अस्य चोपयोगः प्रायश्चित्तादौ बोध्यः।

पुत्रस्तादृशः। **ग्राह इति**। 'ऋणं दाप्य' इत्यस्यानुषंगः। **विरुद्धमिति**। द्वितीयतृतीययोर्यः क्रमः प्रागुक्तस्तद्विपरीतस्तुर्यते[5] एवं व्याख्यायां प्रतीयत इति मिथः क्रमे विरुद्ध इत्यर्थः। दोषांतरमाह **उभयेति**। द्वयोः सत्वे मिथ अभावोपलक्षितयोरेव[6] तयोस्तत्पदत्वनियमेनोपलक्षकाभावे[7] सति केनापि ऋणं न देयं स्यादित्यर्थः। इष्टापत्तिस्त्वत्र[8] न। 'यदा तु न सकुल्याः स्युर्न च संबंधिबांधवाः॥ तदा दद्याद्द्विजेभ्यस्तु तेष्वसत्स्वप्सु निक्षिपेत्'। (**नारदिये** ११।१३) इति तस्यावश्यदेयत्वप्रतिपादकस्मृतिविरोधापत्तेरिति भावः।

**नैष इति**। जातावेकवचनम्। प्रागुक्ताः प्रकृतोपयुक्ता अपि योषिद्ग्राहा अनेके यद्यपि तथापि कोटिद्वयं तेषां कार्यं, अंतिमस्वैरिणीग्राही प्रथमपुनर्भूग्राही सप्रधनस्त्रीग्राही चेत्येका कोटिः, निर्धननिरपत्यस्त्रीग्राहीति त्वन्या कोटिः। एवं सति व्यवस्थासंभवान्न दोष इत्याशयेनाद्यकोट्याशयेनाद्यपक्षमाह। **अंतिमेति**। **यत इत्यादि**। एवं चैतत्कोट्यंतर्भूतयोषिद्ग्राहाभावे पुत्र ऋणं दाप्य इति तस्यार्थ इति भावः।

द्वितीयकोट्याशयेन द्वितीयपक्षमाह। **पुत्राभावे त्विति**। तथा च तदभावे एतद्बोध्ययोषिद्ग्राहो ऋणं दाप्य इति तदर्थः। तथा च यदि सामान्येन तत्तदभावे स स दाप्य इत्युक्तं स्यात्तदोक्तदोषः स्यात्[9]। तदेव न, किंतूक्तरीत्याऽवांतरभेदपुरस्कारेणेति न क्रमविरोधो[10] नापि तद्वचनविरोधोऽवश्यदेयत्वस्यैवानेन प्रतिपादनादिति भावः।

ननु विनिगमकाभावे वैपरीत्यमेवकुतो न? अत आह। **एतदेवेति**। एवेन तद्व्यवच्छेदः। एवंच तदनुरोधेनैवमेवोक्तं नत्वन्यथा तद्विरोधापत्तेरिति भावः। अभ्यर्हितत्वाद्धनस्य पूर्वनिपातः। पुत्रयोरितीति पाठः। धनस्त्रीहारिणौ च पुत्रश्चेति द्वंद्व इत्याशयेन व्याचष्टे। **धनेति**। शेषमाह। **समेति**। लिङ्गर्थाविवक्षया आह। **हरते इति**। क्वचिदत्रापि हरेदित्येवपाठः। **स्त्रीधनिनोरिति**। अभ्यर्हितत्वाविवक्षयाऽल्पाच्तरत्वेन स्त्रीशब्दस्य पूर्वनिपातः। इन्यंतेन द्वंद्वेनेन्यंतयोरेकशेषेणैवेष्टार्थलाभादाह[11]। **स्त्री चेति**। 'सर्वं वाक्यमिति' न्यायेन सानुषंगेणाह। **पुत्र एवेति**। एवमग्रेऽपि। अत्रापि प्रसक्तं प्राग्वत् विरोधं प्रागुक्तरीत्यैव परिहरति। **स्त्रीति**।

---

१ क-ङ-तत्र। २ क-ङ-बहुवचना-। ३ क-इति पुत्रस्तादृशः यस्य दारान् हरत। ४ ख-तादृशग्राह-। ५ ङ-तुर्यस्य ६ ख--लक्षितयो-। ७ ख-स्वल्पपदत्वनियमेन। ८ क-ख-द्रष्टापेति स्वजन-। ९ क-अवांतरे। १० क-क्रमे विरोधो। ११ पृ. ३५ पं. ९।१२ ख-क-इष्टार्था-लाभादाह।

नन्विदमपि व्याख्यानमयुक्तम्; उक्तस्मृतिभ्यां स्त्रियो धनत्वलाभेऽपि ऋक्थत्वालाभात्, तत्रैव द्रव्ये तत्प्रयोगात्, लोकप्रसिद्धितः शास्त्रप्रसिद्धेः प्राबल्यादत आह। **पुत्रहीनस्येति**। प्रतिज्ञालव्याख्यानांतरमेवाभिधातुमादावाकांक्षापूर्वकमर्थसिद्धं किंचिदाह। **एते इति**। रिक्थेत्यादिद्रव्य इत्यंतेनोक्ता इत्यर्थः। ऋणं दाप्या इत्युक्तेराकांक्षोदयादिति भावः।

अत्र पक्षे रिक्थिन इति तस्य तत्त्वविवक्षया षष्ठ्यंतमिति तदनुरोधेनाह। **कस्येति**। एवमग्रेऽपि **उक्तेति**[3]। आदौ तस्यैवोपस्थितेर्योग्यत्वाच्च। आदिना पौत्रादिग्रहणम्। एवमर्थसिद्धमुक्त्वा तदाह। **पुत्राद्यभावे इति**। पुत्रपदमुपलक्षणमिति सूचयन्नर्थमाह। **पुत्राद्येति**। अन्वयो वंशपरंपरा।

ननु न सामानाधिकरण्यं बाधितार्थकत्वादत आह। **यो रिक्थीति**। तदसत्वेऽपि निर्वाहार्थमाह। **योग्यं इति**[4]। **तस्येति**। तादृशस्य सपिंडादेः एते रिक्थग्राहादयः पूर्वोक्तक्रमेण ऋणं दाप्या इत्यर्थः। वचनविपरिणामेनाह। **दाप्या इति**। अत्र सर्वत्र मानमाह। **तथा चेति**। अग्रेऽन्वयः। तस्य तु यद्देयं तत्सान्वयस्येत्यर्थः। **सः** यस्य देयं सः सान्वयः ब्राह्मणः। एवमग्रेऽपि। उभयत्र चश्चेदर्थे। तदेति शेषः। **निर्वपेत्** प्रक्षिपेत्। **कुल्येषु** तत्सकुल्येषु तदृणमिति शेषः। **अस्य** ब्राह्मणस्य उत्तमर्णस्य। एवं प्रागपि। निर्वपेदित्यस्यानुषंगोऽग्रे। सगोत्रसपिंडाः सकुल्याः। असगोत्रसपिंडा बंधवः। संबंधी उक्त एव। अनेन पुत्राद्यन्वयाभावे सपिंडाद्यभावे च कस्य ते दाप्यास्तादित्यप्याकांक्षाशांतिः कृता। अत्रैते 'धने'त्यादि 'तत्पुत्रादि'रित्यंतेनोक्तार्थेऽर्द्धश्लोकः किंचिन्न्यूनो मानं। 'पुत्राद्यभावे' इत्यादि 'दाप्या' इत्यंतेनोक्तार्थे श्लोकद्वयं तावन्मात्रन्यूनं मानम्। स चार्थोऽनेनान्वयव्यतिरेकाभ्यां दृढीकृतः। तत्र 'निर्वपेदि'त्यंतेनान्वयः। तदन्वयाभावे तत्सकुल्यादिषु निर्वपेदित्यन्वयमुखेनाभिधानात्; 'यदा तु नसोति' व्यतिरेकः। तथा च सकुल्याद्यभावे एव द्विजादौ निक्षिपेदित्युक्त्या सत्सु तेषु द्विजादावृणदाननिषेधध्वननद्वारा प्रागुक्तार्थदृढीकरणमिति भावः॥ ५१॥

संगतिमाहा**धुनेति**। तुर्यपादस्य चरमव्याख्यानेन रिक्थ्येन ऋणं गृह्णीयान्नान्य इति नियमलाभेन रिक्थग्रहणायोग्यपुरुषविशेषस्य ऋणग्रहणनिषेधस्याप्यर्थाल्लाभेनार्थिकऋणग्रहणप्रतिषेधप्रसंगेन पुरुषविशेषे वक्ष्यमाणेऽन्यदपि प्रातिभाव्यादिकमपि अवांतरप्रकरणमिदं वक्तुं प्रतिषेधतीत्यर्थः। **अपिना** ऋणग्रहस्यापि समुच्चयः। अन्यथैतत्प्रकरणे एतदसंगतिः स्पष्टैवेति भावः। इदं च ऋणग्रहणप्रतिषेधप्रसंगादिति क्वाचित्कासंबद्धपाठाभिप्रायेण व्याख्यातम्। वस्तुतस्तु ऋणग्रहणं प्रतिषेधन्प्रसंगादिति प्रचुरः पाठो युक्तश्चेति बोध्यम्। तदा अधुना अधमर्णीयपंचविधग्रहणधर्मादिकथनानंतरं वक्ष्यमाणे पुरुषविशेष ऋणग्रहणस्य प्रतिषेधं कुर्वन् तत्प्रतिषेधप्रसंगात्तदर्थे प्रातिभाव्यादिकमपि प्रतिषेधतीत्यर्थः। **अपिः** प्राग्वत्। तदसङ्गतिः स्पष्टैवेति भावः।

## याज्ञवल्कीये ५२ श्लोकः।

अथेति सर्वादौ योज्यम्। उच्यते इति शेषः। एतदर्थ एवाधुनेत्यादिनोक्तः। पदार्थमुक्त्वा वाक्यार्थमाह। **भ्रातृणामिति**। चः पितापुत्रयोर्मिथःसमुच्चायकं इत्याह। **पुत्रयोरिति**। सर्वसमुच्चायकेद्ध्यर्थमाह। **चेति**। 'अवी'त्य स्य भावप्रत्ययांतस्य न भ्रात्रादिधर्मपरत्वं तस्य स्वत एव सिद्धत्वात्। द्रव्यद्वारकविभागग्रहणे क्लिष्टत्वमिति सूचयन् कर्मप्रत्ययेनाह। द्रव्ये इति सत्सप्तमी। स्पष्टत्वायैतदर्थमाह। **द्रव्य इति**। **ऋणं** तत् ग्रहणं। नेति एवान्वयः।

---

१–पृ. ३५ प. १३॥ २–५१ श्लोकस्य चरणत्रये आद्य उक्ताः। ३ उत्तमर्णस्येति। ४ रिक्थग्रहणयोग्य इति। ५ इ–इत्यर्थे वचन ६ द्रव्यविभागात्प्रागिति।

अत्र 'तु' सूचि '**तैव**' व्यवच्छेद्यतात्पर्यार्थबोधकवाक्यांतरमाह । **अपि त्विति** । तैरेवेति भावः । तत्र हेतुमाह । **सांधेति** । कर्मधारये हेतोर्वैयधिकरण्यापत्तिः । अतः साधारणं समुदितं सर्वस्वत्वापन्नं धनं येषां भ्रात्रादीनां तेषां भावस्तत्त्वं तस्मादित्यर्थः ।

नन्वेतावताऽपि कुतस्तदभावोऽत आह । **प्रातीति** । क्रमे तात्पर्यात्पूर्वनिपातः । **पक्षे** अधमर्णकृतदानाभावपक्षे । **द्रव्येति** । द्रव्यस्य तद्दानस्यावसानं पर्यवसानं ययोस्तत्वादित्यर्थः । तत्र यद्यपि दानप्रतिभुवि निःसंदिग्धमिदं तथाऽपि वक्ष्यमाणरीत्या दर्शनप्रत्ययप्रतिभुवोरिव साक्षिणोऽपि तदस्तीति स्फुटीभविष्यति । साधारणेन धनेन तु इदमेकेन कर्तुमशक्यमिति तात्पर्यम् । अत एव विशेषमाह । **एतच्चेति । अविभक्तानामपि** । भ्रात्रादीनाम् । नन्वेवम् ' अविभक्ते ' इति वाक्यार्थविशेषणं व्यर्थमत आह । **विभागादिति** । अपिना तस्या अपि समुच्चयः । एतद्विशेषबोधकमेव तदिति भावः ।

दंपत्यंशे यत् प्रागुक्तं तत् तत्राविभक्ते इत्यास्यानुपपत्त्या आक्षिपति । **नन्विति** । अत्र हेतुमाह । **तयोरिति** । तयोर्विभागस्यैवाभावेन तदंशेऽविभक्त इति वाक्यार्थविशेषणानर्थक्यादित्यर्थः । तथा च नयोः सार्वकालिकर्तन्निषेधे वाच्ये तथा निषेधोक्तिरयुक्तेत्यर्थः ।

ननु तत्रैव किं मानमत आह । **विभागेति** । अर्धांगीकारेण परिहरति । **सत्यमिति । आपस्तंबार्थमाह । श्रौतेति । न पुनः** । न तु । विभागेत्यस्यानुषंगः ।

ननु तथैवार्थः कुतो नातो हेतुमाह । **तथाहीति । हि** यतस्**तथो**क्ताशयेनैवमुक्तवानित्यर्थः । पाणीत्यादि व्याचष्टे । **यस्मादिति** । ह्यर्थोऽयम् । क्वचिद्धि यस्मादित्येव पाठः । तस्या हेतुत्वेन पंचम्युपपत्तये आह । **आरभ्येति । सहत्वं** साहित्यम् । श्रुतिमाह । **जायेति** । आकांक्षाशांतये पूरयति । **तस्मादिति । सहेति** । तच्छ्रवणादित्यर्थः । **कार इति । सिद्ध इति** । तयोस्तत्र विभागो नास्तीति शेषः । श्रौते उक्त्वा स्मार्ते आह । **तथेति । अग्निसाध्येष्वपि कर्मस्विति** । अग्निसाध्येषु कर्मस्वपीत्यर्थः । एवेन विभागव्यवच्छेद इति तल्लाभः । एवमुभयत्र सहाधिकारविधिबलादर्थसिद्धमर्थमाह । **अतश्चेति । पूर्तेषु** तडागादिषु । ' पूर्तखातादिकर्मणी ' त्यमरः । **तथा पुण्येति** । व्याचष्टे । **तथेति** चार्थोऽयम् । तत्रत्यतथेत्यस्य तु तद्वदित्यर्थः । कर्मधारयनिरासायाह । **पुण्यानामिति । दिवीति** । दिवि द्युलोकादावजरं कारणभूतसुकृतनाशपर्यंतमविनश्वरं जरारहितं वा ज्योतिस्तेजःप्रधानं कलेवरमारभेतामित्यर्थः ।

नन्वेवं सर्वत्र तत्वे सर्वकर्मसु तत्वापत्त्या पूर्तेष्वपि प्रागुक्तपृथगधिकारो न सिद्ध्येदतो निष्कृष्टार्थमाह । **येष्विति । पुनः** तु ।

' द्रव्येषु चे ' त्यंशं द्रढयितुमाह । **ननु द्रव्येति** । यथा तद्बलादुक्तस्थले सहत्वं विभागाभावश्च तथा द्रव्यस्वाम्येपि सहत्वविधायकवचनबलात् सहत्वसिद्ध्या द्रव्यसाध्यपुत्रादिफलेष्वपि दंपत्योः सहत्वापत्तिः । सहितयोरेव द्रव्यस्वाम्यात् द्रव्यस्याविभाज्यतापत्तिरपि । तथा च द्रव्येऽपि दंपत्योर्विभागाभावात् प्रागुक्तदोष एवेति भावः । **उक्तं आपस्तंबेन** । तमेवाह । **द्रव्येति** । पाणिग्रहणाद्धि सहत्वमित्यनुवर्तते । तत आरभ्य द्रव्येषु परिग्रहेषु पुत्रादिजनेषु च सहत्वमेव दंपत्योरित्यर्थः । अत्र हेतुमाह । **न हीति** । भर्तुर्विप्रवासे विशेषेण प्रवासे सति भार्याया नैमित्तिकदानविषये हि यतो न स्तेयं चौर्यमुपदिशन्तीति । द्रव्यस्वाम्येऽपि सहत्वविधानात्तद्वद्द्रव्येऽपि विभागो नास्तीत्यर्थः ।

---

१ साधारणधनत्वादिति । २ क–ख–सर्वस्वत्वाक्रांतं । ३ ख–तद्विशेषणांशे आक्षिपति । ४ ङ–सार्वकालिकतया । ५ अ. को. २।७।२८ । ६ ख–तद्वत्तथात्र तन्मात्रविभागो नास्ति ।

अर्द्धांगीकारेण परिहरति । **सत्यं, द्रव्येति । स्वामित्वं** तन्मात्रम् । तथा च तन्मात्रमनेनोक्तं न तु तत्र सहत्वं येन विभागाभावः स्यादिति भावः । इदमेव विशदयति । **यस्मादित्यादि स्यादितीत्यंतेन ।** यस्मादित्यस्य उक्तमित्यत्रान्वयः । **द्रव्येति** । अत्र मतेऽस्यायमर्थः । द्रव्यार्जनेष्वपि सहत्वं दंपत्यो-रिति हेतुस्वरससिद्धोऽयमेवार्थो न प्रागुक्तः । एतच्च सहत्वमौपचारिकं न मुख्यम् । तथाहि यथा आधानादिषु तयोरन्यतराभावे आधानादिस्वरूपासिद्धिर्नैवं द्रव्यार्जनेऽपि तु पतिरर्जयिता, पत्नी चार्जितं रक्षतीति योगक्षेमावुभाभ्यां क्रियत इत्युभयानुसंधानसिद्धत्वेन सहत्वमिव । एवं च यत्राधानादिषु सहत्वं तत्र स्वत्वमस्तीत्यत्रापि द्रव्यपरिग्रहेषु सहत्वप्रतीतेः स्वत्वमस्तीति । तदेतत् ध्वनयन्नेवाह । **उक्त्वा तत्रेति** । वचनं स्वरूपेणोक्तमित्यर्थत आह । **भर्तुरिति** । नित्यसंग्रहायाह । **अवश्येति** । तथा च तदुपलक्षणमिति न न्यूनता प्रथमत्यागश्चेति भावः । यद्वा तत्रापि तत्वसत्वात्तदुपलक्ष्यार्थमाह । **अव-श्येति** । 'काकेभ्यो दधी'त्यादिवदिति भावः । वचनस्थहेर्व्याख्या **यस्मादिति** । क्वचिद्धि **यस्मादि**त्येव पाठः । **भार्यायामपि** । 'भार्याया अपीति' पाठांतरम् । प्राग्वदाह । **तस्मादिति** । **अन्यथा** द्रव्य-स्वामित्वाभावे । यदि भर्तुरेव द्रव्यं स्यात्तदा स्यादेव स्तेयम् । तथा च नेदं सहत्वं विधत्तेऽपि तु लोकसिद्धमेव तत्सहितयोरेव स्वाम्यात् स्यात् । न च विवाहात्प्रागर्जिते द्रव्ये पुरुषस्यैव स्वत्वं तत ऊर्ध्वमर्जिते तु पतिप-त्न्योरिति वाच्यम् । तथा सति पुत्रस्यापि स्वजन्मतः प्राक् पित्रर्जिते द्रव्ये स्वत्वाभावापत्तेरिति भावः । अत्र 'नैमित्तिके' इत्युक्त्याऽन्यत्र स्तेयमस्त्येवेति सूचितम् । एतदेव तत्साम्येऽपि वैषम्यम् । यत्पतिर्यथेष्टं विनियुंक्ते जाया त्वेतावदेवेति न पत्युर्जायानुमत्यपेक्षा 'स्वतंत्रत्वात्' यथा राजा राष्ट्रे तद्वदसौ गृहे अत एव तस्या एव स्तेयशंका न भर्तुरेवं पुत्रादावपीति बोध्यम् ।

सविशेषमुपसंहरति । **तस्मादिति** । **एवे**न तदभावव्यवच्छेदः । भर्तुरित्यस्य कृत्यमाह । **न स्वेच्छेति** । अत्र मानमाह । **यथेति** । 'कुर्यादि' त्यतस्तादिच्छाया एव प्रतीतेरिति भावः । इदं तत्रैव स्फुटीभविष्यति ॥ ५२ ॥

**अधुनेति** । तन्निषेधकथनानंतरमित्यर्थः । तत्प्रसंगादिति भावः । तथा च तदवांतरप्रकरणमिद-मिति तात्पर्यम् । निरूपणं च लक्षणविशेषाभ्यां भवति ।

## याज्ञवल्कीये ५३ श्लोकः ।

तत्रादौ मूलानुक्तलक्षणमाह । **प्रातीति** । उत्तमर्णाधमर्णान्येनेत्यर्थः । अर्थात्तयोरिति भावः । **समयः** संकेतः । स चार्थात्तत्कृत एवेति नातिप्रसंग इति बोध्यम् ।

अथ मूलोक्तभेदानाह । **तच्चेति** । **विषयेति** । अनेन त्रिषु विषयसप्तम्य इति सूचितम् । **मत्प्रेति** । ममेति । अस्मदिति वा पाठांतरं । **अस्येति** प्राग्वत् । एवमग्रेऽपि । 'उर्वरा सर्वसस्याढ्ये' **त्यमरः** । (२।१।४) उर्वरायाः प्रायो बाहुल्यं यस्यां तादृशा भूरस्येत्यर्थः । तस्या दुर्लभत्वात् स्वस्यानिश्चयाच्च **प्रायेति** । तत्कृतमप्युत्कर्षमाह । **ग्रामवर इति** । श्रेष्ठग्राम इत्यर्थः । **ददातीति** 'वर्तमानेसामीप्ये' इति लट् । दास्यतीत्यर्थः । समुदायसंबंधानंतरसंबंधयोर्निरासायाह । **प्रातीति** ।

उत्तरार्द्धार्थमाह । **आद्यौ त्विति** । तात्पर्यार्थमाह । **अन्यथेति** । क्रमेण तस्यार्थद्वयमाह । **अदर्शने इति** । शेषमाह । **राज्ञेति** । **इत्येवेति** । तत्पदमत्रानुवर्तत एवेत्यर्थः । तदर्थं तदसंभवादाह । **शाठ्येनेति** । दौर्जन्येन धनाभावेन वाऽधमर्णे उत्तमर्णाय धने अप्रतियच्छति सति दानप्रतिभूर्दाप्य इत्यर्थः ।

---

१ पृ. ३६ पं. १८ 'मत्प्रत्ययेनेति'. २ व्या. सू. ३।३।१३१॥

सूचितं विशेषद्वयमाह । **इतरेति । न पौत्रा इति ।** तत्रापि एततसमुच्चायक इति भावः ॥ ५३ ॥ पौनरुक्त्यं निराचष्टे । **एतादिति ।** 'इतरस्ये' त्यादिनोक्तमेवेत्यर्थः ।

## याज्ञवल्कीये ५४ श्लोकः ।

'यत्रेति' व्याचष्टे । **यदेति ।** अपिः समुच्चेयमाह । **प्रतीति ।** मृत इत्यस्य व्याख्या **दिवंगत इति ।** दिष्टंगत इति पाठांतरम् । तत्र कालंगत इत्यर्थः । 'कालो दिष्टोऽप्यनेहाऽपीत्यमरः' (१।४।१) । तथा चेदं न प्रोषिते बोध्यम् । तत्पुत्रा इत्यत्र द्विवचनांतेन समास इत्याह । **तयोरिति ।** तयोरधमर्णत्वेन प्राप्तस्यानिषेधायाह । **प्रातीति ।** तेन प्राप्तमित्यर्थः ।

अनुषंगेण तुर्यपादं व्याचष्टे । **यस्त्विति ।** अत्रैकवचनांतेन समास इत्याह । **तस्येति । पुत्रा**स्ते एव । अत एवाह । **न पौत्रा इति ।** विशेषमनुक्तमाह । **ते चेति ।** दानप्रतिभुवः पुत्राश्चेत्यर्थः । **व्यास**वचनं क्रमेण वाक्यत्रयेणोभयपरत्वेन क्लिष्टत्वात् व्याचष्टे । **प्रातीति ।** इदं विशेषणमर्थसिद्धार्थकथनपरं तत्र तेषामनधिकारात् । सममित्युभयशेष इत्याह । **सममिति ।** शेषमाह । **दद्युरिति ।** पौत्रा इत्युक्तेरिति भावः । क्वचित्तु मूले व्याख्याने चैकवचनांतपाठ एव । **पौत्र इति ।** तदा समं दद्यादित्युभयशेषः इति न कोऽपि दोषः । अपिः समदानांशे प्रोक्तपौत्रसमुच्चायकः । एवेन वृद्धिव्यवच्छेदः । तत्सुतावित्यत्रापि द्विवचनांतेन समास इत्याह । **तयोरिति ।** तयोः स्वरूपे आह । **प्रपौत्रेति ।**

पदार्थमुक्त्वा वाक्यार्थमाह । **आप्रातीति ।** समुच्चयवारणायाह । **यथाक्रममिति ।** पौत्रसुतः प्रपौत्रोऽप्रातिभाव्यागतं ऋणं न दद्यात्' पुत्रसुतः पौत्रः प्रातिभाव्यागतं तं न दद्यादित्यर्थः । **तु**सूचितं विशेषमाह । **अगृहीतेति ।** व्यासवाक्यस्यान्यविरोधमाह । **यदपीति ।** व्यासवाक्येन दानप्रतिभूपुत्रस्य मूलदानमुक्तमनेन तु लग्नकस्य प्रतिभुव एव मूलदानमुक्तमिति विरोधः । तं परिहरति । **तदपीति ।** व्याख्येयमित्यत्रान्वयः । अप्रसिद्धत्वात्पदार्थमाह । **लग्नक इति ।** अथवा वाक्यार्थमाह । **लग्नक इति ।** तदैक्याय शेषद्वयमाह । **मृत इति । पुत्रेणेति च ।** अनेन वृद्धिमित्यत्र तस्येत्यस्यानुषंगः । पुत्र इति । शेष इति सूचितम् । **मूल्यमिति ।** मूलेन समं मूल्यम् । 'नौवयोधर्मे' त्यादिना यत् तदेवेत्यर्थः । क्वचित् उभयत्र मूलमित्येव पाठः ।

तयोः सुता न दाप्या इत्युक्तस्यापवादं क्वाचित्कं विशेषमाह । **यत्रेति ।** यत्र त्वित्यर्थः । क्वचित्तथापाठ एव । एवेनादानव्यवच्छेदः । अत्र 'तस्मादेवे' त्यनेन बंधकस्य कालवशेन ऋणापर्याप्तत्वेऽपि यावद्बंधकं तावदेव देयं न तु ततोऽधिकं यावदृणं तावत्स्वीयमपीति सूचितम् । **तस्मात्** तत एव धनात् बंधकात् । न्यूनतया प्रतिज्ञातार्थासिद्धेराह । **दर्शनेति ।** युक्तेस्तुल्यत्वादिति भावः । **प्रत्येति ।** तस्यापीत्यर्थः । अभिप्रेतमर्थं प्रक्रांतमाह । **पितरीति ।** अनेन पूर्वं मृत इत्युपलक्षणमिति सूचितमिति केचित् । अत्रैव तथोक्तिस्वारस्यात्तथा इत्यपरे ॥ ५४ ॥

**अनेकेति ।** ते च सजातीया विजातीया वेतिभावः । **इत्याह** इत्यत आह ।

## याज्ञवल्कीये ५५ श्लोकः ।

तत्र उत्तरार्धानुरोधेन विजातीयस्थले आह । **यद्येकस्मिन्निति ।** बहुत्वमनेकत्वोपलक्षणमित्याह । **द्वाविति । स्वांशेनेति ।** स्वस्वांशेनेत्यर्थः । क्वचित्तथैव पाठः । अतएव 'स्वांशैरिति' बहुवचनोप-

---

१ न्या. सू. ४।४।९१॥

पत्तिः । सजातीयस्थले उक्तं ' एकच्छायाश्रितेष्विति ' तत्प्रतीकं धृत्वा पदार्थकथनपूर्वकं व्याचष्टे । **एकेति** । साद्दश्यं विशदयति । **अधमर्ण इति** ।

**एवमिति** । स यथा दर्शनाय विश्वासाय च स्थितः एवं तेऽपीत्यर्थः । एष्वित्यस्य व्याख्या **प्रतीति** । **काममिति** । दद्यादिति शेषः । रुचिबीजं कथयन् तात्पर्यार्थमाह । **अतश्चेति** । आदिना सत्यवाक्त्वाभिजात्यादि । **स्वार्थं** स्वधनम् । विशेषमाह **एकेति** । तेषां मध्ये इत्यर्थः । **सः** सोऽपि । **सर्वं** सवृद्धिकम् । **मृते तु कस्मिंश्चित्तदिति** । तेषां मध्ये कस्मिंश्चित्प्रतिभुवि **मृते** इत्यर्थः । वैलक्षण्यसूचकस्तुः । **अंशमिति** । अवशिष्टं त्वर्थादवशिष्टानां मध्ये यथारुचि दाप्य इति भावः । **एकेति** । तेषांमध्ये पदार्थः यस्तत्र दृश्यते यो धनिकेच्छाविषयत्वेन ज्ञायते तेषां मध्ये कस्मिंश्चिद्देशांतरं गते सति तत्सुतोऽपि तदिच्छया सर्वं दाप्यः । तेषां मध्ये कस्मिंश्चिन्मृते तु तत्सुतः स्वपित्र्यमंशमेव दाप्यो न सर्वम् । तत्रापि **समम्** अवृद्धिकमेवेत्यर्थः । पित्रशमिति पाठः । पित्र्यंशमिति पाठे ' शकंध्वादित्वं ' बोध्यम् ॥ ५५ ॥

संगतिमाह । **प्रातीति** । **दत्तस्य प्रतिक्रियाविधिमिति** । पलायनं कृत्वा पुनः परावृत्तस्याधमर्णस्येति भावः ।

## याज्ञवल्कीये ५६ श्लोकः ।

यत्विति पाठं सूचयन्नाह । **यदिति** । धनमित्यस्य व्याख्या **द्रव्यमिति** । ऋणमिति पाठांतरम् । प्रतिभूग्रहणमुक्तरीत्योपलक्षणमित्याह । **तत्पुत्र इति** । विशेषमाह **धनिकेनेति** । धनिर्ना **इति** प्राग्वत् । विशेषोक्तिव्यवच्छेद्यमाह । **न पुनरिति** । न तु इत्यर्थः । विशेषे मानमाह । **यथाहेति** । ऋणिके मत्वर्थीयष्टन् । राजेति शेषः ।

उत्तरार्धार्थमाह । **ऋणिकैरिति** । भवेदित्यस्य व्याख्या **स्यादिति** । विशेषमाह । **तच्चेति** । तच्च द्विगुणमित्यन्वयः । कालेत्यस्य व्याख्या **सद्य एवेति** । **वचनेति** । प्रतिभूरिति वचनेनेत्यर्थः । अन्यथैतदानर्थक्यं स्पष्टमेव । तथा तस्य प्रागेवोक्तत्वादिति भावः । अनुपदं वस्त्रादौ विशेषस्य वक्ष्यमाणत्वादाह **एतच्चेति** । न वस्त्रधान्यादि विषयकमित्यर्थः ।

वचनस्यान्यविषयतया 'तच्चेत्या' युक्तविशेषमाक्षिपति । **नन्विदमिति** । उक्तवचनमित्यर्थः । मात्रपदेनोक्तविशेषव्यवच्छेदः । **पूर्वोक्तेति** । **पूर्वोक्तः, काले** मासादौ कलावृद्धिस्तस्या यः क्रमस्तद्बाधेनापीत्यर्थः । स्वकृतवृद्ध्यनुसारेण यदा कालांतरे द्वैगुण्यमेति धनं तदैव दत्तद्रव्याय प्रतिभुवे द्विगुणं दातव्यमधमर्णेनेति द्वैगुण्यमात्रप्रतिपादकेनानेन वचनेन बोध्यते । अन्यथा तु यावती वृद्धिस्तत्सहितं मूलं धनं देयं न द्विगुणमिति सद्यो द्विगुणदानमयुक्तमिति भावः ।

अबाधेनोपपत्तौ दृष्टांतमाह । **यथेति** । चतुर्थे तृतीयपादे अंन्तिमाधिकरणम् । 'फलसंयोगस्त्वचोदिते न स्यात्संयोगस्याशेषभूतत्वादिति' । 'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते' इत्यादि श्रूयते । तत्र संशयः, पुत्रजन्मानंतरमेवेयमिष्टिः कार्येत जातकर्मानंतरमेवेति । निमित्तस्य पुत्रजन्मनो नियोज्यविशेषणत्वेन निमित्तानंतरमेव कार्येति जातकर्मणः प्रागेवेति पूर्वपक्षः । सिद्धांतस्तु, न केवलं जन्मविशेषणं नियोज्यस्यापितु पुत्रगतपूतत्वादिकमपि । एवं च जन्मपूतत्वरूपनिमित्तयोः संवलितयोरेव नियोज्यविशेषणत्वं । पुत्रगतपूतत्वादिकं च पुत्रे जीवत्यभिलषितं पितुर्न तद्वैपरीत्ये । जीवनं च

१ एकच्छायाश्रितेषु इति । २ ख-ङ-समदशाधिकरणे द्वितीयवर्णकं । तेषांमध्ये यथारुचि दाप्य इति भावः । ३ व्या. सू. ६।१।९२ वार्तिकम् । ४ ख-क-धनिनामिति । ५ ख-क-विषयता तच्चेत्याद्युक्त । ६ ख-क-प्रथमाधिकरण-। ७ ख--नियोज्यमाविशेषणत्वम् ।

स्तनपानादेव । स्तनपानं च जातकर्मणः प्राङ्निषिद्धं अतो जातकर्मानंतरमेवेष्टिः । एवंच जन्मानंतरभाविन्या इष्टेर्जातकर्मानंतरमुत्कर्षे आशौचानंतरमेव कार्या न जातकर्मानंतरम् । कालशौचरूपांगत्यागे मानाभावात् । शुचिना कर्म कर्तव्यमित्यस्यापवादाभावादिति । इदं च **गुरुमते**नोक्तम् । **भट्टमते** तु संशयांतं प्राग्वत् । निमित्तानंतरं नैमित्तिकस्यावश्यंभावित्वाज्जन्मन एव निमित्तत्वाज्जन्मानंतरमेवेति पूर्वपक्षः । सिद्धांतस्तु वाक्यशेषश्रुतपुत्रगतपवित्रत्वादिफलकामनावान् वैश्वानरेष्टावधिकारी । तच्च फलं जीवत्येव पुत्रेऽभीष्टम् । जीवनं च शिशोर्जातमात्रस्य स्तनपानायत्तमेव । तच्च स्तनपानं जातकर्मानंतरमेव न ततः प्राक् । अतः पुत्रगतपवित्रत्वादिफलावरोधेन जातकर्मानन्तरमेवेष्टिरिति ।

एवंस्थिते तृतीयवर्णकेऽन्यों चिंता, जातकर्मानंतरमेवेष्टिरुताशौचापगम इति । तत्र तद्गतोक्तरूपप्रयोजनवशाज्जन्मरूपनिमित्तानंतरप्राप्ताऽपीयमिष्टिर्जातकर्मानंतरमुत्कृष्टा ।

एवमुत्कृष्टायाः पुनराशौचानंतरमुत्कर्षे प्रयोजनाभावात् जातकर्मानंतरमेवेति पूर्वपक्षे उच्यते । निमित्तानंतर्यमिष्टेस्तावत् बाधितमेव । तद्गतोक्तप्रयोजनवशात् । बाधिते च निमित्तानंतर्ये शुद्धकालप्रतीक्षया आशौचापगमे पौर्णमास्यादिके काले कार्या । शुद्धकालस्याप्यंगत्वात् । शुचिना कर्मेत्यस्यापवादाभावादिति । तथा च शुद्धकालरूपमंगमबाधित्वैव जातेष्टिविधानम् ।

तथा अशीतिभाग इत्यादिना प्रागुक्तो यः कालक्रमेण वृद्धिक्रमस्तमबाधित्वैव द्वैगुण्यविधानमिति सद्यो न द्वैगुण्यमिति भावः । अत्र सद्यो द्वैगुण्यदानपक्षे अग्रे अनुपपत्तिमप्याह । **अपि च सद्येति** । द्विगुणवृद्धिसहितेत्यर्थः । सद्यो द्वैगुण्यं नाम सद्य एव वृद्ध्या सह द्वैगुण्यं न स्वरूपतः । वृद्धिस्तु पशुस्त्रीणां संततिरेव 'संततिस्तु पशुस्त्रीणां' इत्युक्तत्वात् । तथा च सद्यस्तथा द्वैगुण्यदानपक्षे पशुस्त्रीषु सद्यः संतत्यभावान्मूलमात्रमेव देयं स्यादिति, 'संततिः स्त्रीपशुष्वेवेति' वक्ष्यमाणमुपपन्नमित्यर्थः । **वस्त्रेति** । यत इत्यादिः । वस्त्रेत्यादिवचनारंभसामर्थ्यैनैव तत्क्रमेण द्वैगुण्यादेः प्राप्तौ पुनरत्र नथाताद्विधिर्व्यर्थ इति, पूर्वाप्राप्तं सद्यो द्वैगुण्यमेवागत्यावश्यं विधेयम् । दृष्टांते तु तद्विधिवाक्यस्यानर्थक्याभावाच्छुचिनेत्येतद्बाधेनाप्युपपत्तिरिति विशेष इति तद्वैषम्यमिति भावः ।

एवमाद्यदोषमुद्धृत्य द्वितीयदोषमुद्धरति । **पशुस्त्रीणां त्विति** । तथा च तत्संभवापेक्षं न तु नियतमिति भावः । अभ्युपेत्येदम् । वस्तुतस्तद्युक्तमेवेति सूचयन् तदा तत्संभवमप्याह । **यदेति** । तावता कालेनेति पाठः । **संघेति** । तेन सह संगतो भवतीत्यर्थः । सद्यः संघटनपक्षे आह । **यद्वेति । पूर्वेति** । प्रतिभूकर्तृकद्रव्यदानात्पूर्वं अधमर्णस्य पलायनदशायां विद्यमानतादशायां वा जातेत्यर्थः । अथास्य वचनस्य विषयविशेषपर्यवसानद्वारा कालक्रमेणैव द्विगुणदानविधिपरत्वाक्षेपाय तदुपयुक्तं किंचिदाह । **अथेति** । उच्येतेति शेषः । **नच** नहि । **नारद**माह । **यथाहेति । यत्किंचि**त्प्रतिभूदत्तं धनिकदत्तं वा । **पंचकमिति** । प्राग्वत् । तमेवाक्षेपमाह । **अतश्चेति । अस्य** प्रतिभूसंबंधिनः । **यावत्** द्विगुणमित्यव्ययीभावः । प्रीतिदत्तस्थलेऽयाचिते तदभावस्योक्तत्वेन प्रतिभूदत्तस्यापि तादृशस्योक्तरीत्या तथात्वेन वृद्ध्यभावे प्राप्ते तदपवादत्वेनायाचितस्यापि तस्येदं प्रतिपाद्यत इत्यर्थः । **अस्यार्थस्येति** । वाक्यार्थो हि वाच्यो लक्ष्यो व्यंग्यो वा भवेत् । तत्रायं नाद्यः, अप्रतीतेः; न द्वितीयः, मानाभावात्; अत एव नांत्य इत्यर्थः । तदाह । **द्विगुणमिति** । उपसंहरति । **तस्मादिति** ॥ ५६ ॥

---

१ ख–जन्मातनंतरम् । २ क–अन्यर्चिता । ३ ख–आशौचानंतरम् । ४ क–वर्धित च । ५ ख–पुत्ररतथा तद्विधिर्यथा इति पूर्वापार्तं सद्योद्वैगुण्यमेव मेत्यावश्यं विधेयः । क–आनवान्छुधिने ।

## याज्ञवल्कीये ५७ श्लोकः ।

**सर्वत्र** । वस्त्रादावपि । 'अल्पाच्तरत्वात्' स्त्रियाः पूर्वनिपातः । (व्या.सू.२।२।३४॥) तेषु संततिरेवेत्यर्थः । प्रागुक्तरीत्यैवाह । **कालानादेति । वृद्ध्या सह** । आधिवर्ज्यम् । सामान्यतः सर्वतात्पर्यमाह । **यस्येति** । विशेषमाह । **यदा त्विति । संप्रेति** । प्रतिज्ञाते प्राप्ते इत्यर्थः । **तत्र** पक्षत्रये । एवमग्रेऽपि । अत्र मानमाह । **नष्टस्येति । परम्** अधिकम् । **काले इति** । परस्मिन्नपि काले । यदि स न तथा कुर्यात्तदा तस्मिन् काले व्यतीते तु साति सः तं निबंधं तमर्थं दापयेदित्यर्थः ।

उक्तप्रकारमन्यत्रातिदिशति । **प्रेते चेति** । अधमर्णे इत्यर्थः । विशेषांतरमाह । **लग्नकेति** । प्रतिभूविशेषनिषेधोऽपीत्यर्थः । केषांचित् प्रतिभूत्वनिषेध इति यावत् । **तेनैव कात्यायनेनैव** । अत्र स्वामित्वादिकं स्वनिरूपितं ग्राह्यम् । **क्वचित्** क्वापि । **रिक्थी** पुत्रादिः । **दातुं** धनमिति शेषः । **जीवन्निति** । यस्य पिता जीवन् जीवति । 'व्यत्ययेन' शता । आस्ते इति शेषो वा । सोऽपि चेत्यर्थः । **तथैवेच्छेति** । अस्वेच्छाचरणशील इत्यर्थः । **स्वेति** प्रतिभूत्वकरणमभिसमीक्ष्येत्यर्थः । प्रतिभूः स्वक्रियेति पाठांतरम् । अत्र धनिकेन स्वदानक्रियामभिसमीक्ष्येत्यर्थः । **अन्यथा पौनरुक्त्यं** स्पष्टमेव । **इति प्रतिभूविधिः** ।

प्रसक्तसाक्षिनिरूपणमकृत्वा आधिरूपणे संगतिमाह । **धनेति** । तद्दाने इत्यर्थः । **विश्रंभो** विश्वासः । **अत्र** धनप्रयोगे । **तत्र** तयोर्मध्ये । **इदानीमिति** । तत्प्रसंगेऽपि । ततोऽस्यांतरंगत्वादिति भावः । तस्यादौ सामान्यलक्षणमाह । **आधिर्नामेति । द्रव्यस्योपेति** । उत्कृष्टविश्वासेत्यर्थः । यद्वा । निरूपणस्योभयरूपत्वेन मूलानुक्तमुभयं वक्तुं उपरीति लोकोक्तिः । तत्प्रतिनिधित्वेनेत्यर्थः । **अधीति** । स्थाप्यत इत्यर्थः । एवं रूढिमुक्त्वा योगमाह । **आधीति** । अर्थः स एव । अत एव **नारदवाक्ये** तथोक्तम् । तेनोभयप्रदर्शनम् । अत एव तत्र तथोक्तम् । अथ भेदमाह । **स चेति** । **द्विवीति** । द्विस्वरूप इत्यर्थः । **सः** द्विविधोऽपि संदिग्धत्वात् कृतेत्यादि पदत्रयम् तत्रत्यांशक्रमेण व्याचष्टे । **कृते** इत्यादिना **यं** इत्यन्तेन । **काले इति** । अनेन कर्मधारयोत्तरं 'कृत्यैर्ऋण' (व्या. सू. २-१-४३) इति सप्तमीसमासः सूचितः । अस्यार्थमाह **आधानेत्यादि काले** इत्यंतेन । एवेनानंतरकालव्यावृत्तिः । उपार्थमाह । **आत्मेति** । विशिष्टतात्पर्यार्थमाह । **मोचेति** ।

अयमेव कृतकालः । एतत्स्वरूपमुक्त्वाऽकृतकालाख्यद्वितीयस्वरूपं निर्वक्ति । **देयमिति** । बहुलग्रहणात् 'भावे कृत्यः' इत्याह । **दानमिति** । 'अव्ययीभावः पदार्थानतिवृत्त्यावि'त्याह । **देयमनेति** । उद्यतपदार्थमाह । **नियत इति** । उभयोरंतर्भावितण्यर्थत्वसूचनायाह । **स्थापित इति** । सुप्सुपेति समासमाह । **यावदिति** । तत्तात्पर्यार्थमाह । **गृहीतेति । प्रत्यर्पणं** दानम् । तस्यापि तमाह । **अनीति** । आच्छाद्य इत्यर्थनिरासाय तत्स्वरूपमाह । **रक्षेति** । भोग्यस्तु प्रसिद्ध इति भावः ॥ ५७॥

## याज्ञवल्कीये ५८ श्लोकः ।

एवं चाधेश्चातुर्विध्यमनेनोक्तम् । गोप्यः कृतकालोऽकृतकालश्च एवं भोग्यो द्वेधेति । तदाह **एवमिति** । उक्तप्रकारेणेत्यर्थः । **मोच्यते इति** । 'मोक्ष्यते इति' पाठांतरम् । तत्र 'मोक्ष मोक्षणे' इति धातुर्बोध्यः । मोक्षत इति त्वपपाठः ।

---

१ क–आद्यबहुलम् । २ 'व्यत्ययो बहुलम्' व्या. सू. ३–१–८५॥ ३ क–साक्षिनिरूपणा । ४ क–तत्र । ५ क–म (नु ?) क्त्वा । ६ 'रक्षणीय' पृ.३९ पं.२.७ 'कृत्यल्युटो बहुलम्' व्या. सू. ३-३-११३॥ ८ 'अव्ययं विभक्ति...' व्या. सू. २-१-६. ९ सुपा व्या. सू. २-१-४

आद्यार्धार्थमाह । **प्रयुक्ते इति** । दत्ते इत्यर्थः । **भूते सति** । **अधमर्णस्वं** तदीयस्वत्वम्[१] । क्वचिद्व्यस्तपाठः । षष्ठ्यन्तमात्रपाठे स्वमित्यग्रिमस्यात्राप्यन्वयो बोध्यः । न केवलं तावदित्याह । **धनेति** । तृतीयपादार्थं पदार्थपूर्वमाह । **कालकृत इति** । अस्य पूर्वानुक्तत्वभ्रमनिरासायाह । **कृतेति** । ननु एवं सति तदसंगतिः । अन्यथा पूर्वविरोधापत्तिरत आह । **आहितेति** । पूर्वतो वैलक्षण्यायाह । **स त्विति** । शेषमाह । **प्राप्ते इति** । गते सतीत्यर्थः । अत एव पूर्वेण अगतार्थत्वमाह । **द्वैगुण्यादिति** । तद्वत् तुर्यपादार्थमाह । **फलेति** । उक्तसूत्रेणैव[२] पूर्वनिपातस्तस्याकृतिगणत्वादित्याह । **फलमिति** । तृतीयासमासस्तु वक्तुमुचितः । **कदेति** । द्वैगुण्ये[३] काले च प्राप्ते सत्यपीत्यर्थः ।

नन्वेवं वाक्यार्थत्रये त्रिषु विशेषलाभेऽपि तुर्ये तदलाभात्प्रतिज्ञाहानिरतोऽन्यथा दुर्वचत्वाद्व्युत्क्रमेण सर्वत्र तेषु विभज्य तमाह । **कृतेत्यादि** । इदमुभयपरं संकोचे मानाभावादित्याह । **गोप्येति** । अत एवाह । **अकृतेति** । विशेषोक्तेराह । **भोग्येति** । **अवेति** । पर्यवस्यतीत्यर्थः ।

कृतकालगोप्यभोग्याध्योः कृतकालातिक्रमे नाशः । अकृतकालगोप्याधेर्द्वैगुण्यातिक्रमे स इत्युक्तम् । तत्र द्वैगुण्यतत्कालातिक्रममात्रयोरेव न सः किंतु ततोऽप्यग्रे स्वल्पोऽवकाशोऽस्तीति प्राग्वत् विशेषमाह । **द्वैगुण्येति** । तदेवाह । **हिरण्ये इति** । 'बंधकस्येति' मध्यमणिन्यायेनान्वेति । **प्रतीक्ष्य चेति**पाठः । प्रतीक्षेदित्यपपाठः । हिरण्ये द्विगुणीभूते सति कृतावधेर्बंधकस्य काले पूर्णे च सति धनी उत्तमर्णः द्विसप्ताहं प्रतीक्ष्य बंधकस्य स्वामी भवतीत्यर्थः । द्विः सप्त, द्विसप्तास्तेषामह्नां समाहारो द्विसप्ताहं चतुर्दशदिनानि । प्रतीक्षाफलमाह । **तदंतरेति** । चतुर्दशदिनमध्ये इत्यर्थः ।

कृतकाले तथाप्रतिज्ञे[४]योभयत्र नाशेऽकृतकालगोप्याधौ स न संभवतीति पूर्वार्धोक्तमाक्षिपति । **नन्विति** । हेत्वंतरमाह । **मन्विति** । तदेवाह । **न चाधेरिति** । तथा शब्दाद्प्रतीतेर्व्याचष्टे । **कालेनेति** । 'साधनं कृतेति'[६] समासः । बहुकालेनेत्यर्थः । **संरोधः** स्थितिस्तदाह **चिरेति** । **न च विक्रय इति** । अस्तीत्यस्यानुषंगः ।

नन्वेतावताऽपि नोक्तार्थलाभोऽत आह । **एवमिति** । चिरकालावस्थानेनेत्यर्थः । 'आधीत्यस्या' 'ऽन्यत्रेत्यादिः' । अन्यथैतदसंगतिः स्पष्टैवेति भावः । **सोपेति** । सोपाधिकी चासौ स्वत्वनिवृत्तिश्च तस्यास्तत्र वा हेतुरित्यर्थः । एवमग्रेऽपि । स्वत्वनिवृत्तिस्वत्वापत्त्योः स्वाभाविकत्वाभावेन सोपाधिकेत्युभयत्र विशेषणम् । प्रसिद्धत्वादेरुभयत्रान्वयः ।

नन्वस्त्वेवं लोकतस्तथाप्यात्यंतिकयोस्तयोरभावादाधिनाशः कथमत आह । **तत्रेति** । तत्र तस्यै[७] तयोस्तद्धेतुत्वे प्रसिद्धौ चेत्यर्थः । **धनेति** । अनेन **बृहस्पति**वचनेन तयोस्तस्यात्यंतनिवृत्तेस्तयोस्तदुभयं क्रमेण मूलवचनेन भवतीत्यर्थः । तदंतरेत्यादि वदता **बृहस्पति**ना तयोरनंतरमपि चतुर्दशदिनमध्ये एव पूर्वद्रव्यं देयं नाग्रे इति सूचितम् । तथा च तदनंतरमत्यंतद्रव्यदाननिवृत्तिलाभेन निवृत्ते द्रव्यदाने 'आधिः प्रणश्येदि' त्यनेनाधमर्णस्यात्यंतिकीस्वत्वनिवृत्तिरुत्तमर्णस्य चात्यंतिकी स्वत्वप्राप्तिरुपदिश्यते । अन्यथा वचनवैयर्थ्यं स्पष्ट मेवेति भावः ।

एवमाद्यदोषमुद्धृत्य द्वितीयमुद्धराति । **न चेति** । **सोपकारे** । उपकारसहिते भोग्याधाविति

---

१ क–तदीयस्वं, ख–......स्वतं । २ ख–उक्तमूलेनैव । ३ ख–द्वैत्रैगुण्ये । ४ पृ. ३९ पृ. ११ (अवतिष्ठते इति) ५ प्रतिज्ञायोगमत्र । ६ "तृतीया तत्कृतार्थेन गुणवचनेनेति" व्या. सू. २–१–३०॥ ७ ख–तत्र तस्याः ।

यावत् । तत्राप्यक्तकाले इति बोध्यम् । कुसीदेन तदर्थद्रव्यप्रयोगेण कृता ताम् । अत एव तथैव तत्तात्पर्यमाह । **भोग्येति** । **निषेधेनेति** । तयोर्निषेधेनेत्यर्थः । **उक्तमिति** । अत्रैव वचने इति भावः ।

नन्वेवं **मनो**र्न्यूनता गोप्याधिविषयानुक्तेरत आह । **गोप्येति** । अतएव 'बलादि'त्युक्तम् । **वक्ष्यते** । अव्यवहितमेव । अत एवाविरोधं स्पष्टयन् प्रकृतमाह । **आधिरिति** ।

## याज्ञवल्कीये ५९ श्लोकः ।

**किंचेति** । विशेषांतरमत्राहेत्यर्थः । 'नो' इत्यस्य व्याख्या **नेति** । न तु दोषाल्पत्वादयुक्तमेतदत आह । **अल्पेऽपीति** । **समयः** संकेतः । 'चा'र्थमाह । **तथेति** । अथेति तत्र पाठांतरम् । अर्थः स एव । उपकारसाहित्यं तत्कर्तृत्वेन नान्यथेत्याह । **उपेति** । अस्य समयवशेन द्वैविध्यादाह । **सवृद्धिके इति** । अन्यथैतदसंगतिः स्पष्टैव । स्वरूपहानेरविवक्षितत्वादाह । **व्यवेति** । उक्तहेतोरेवानुषंगमाह । **नो वृद्धिरिति** । उत्तरार्धं विवृण्वन् गोप्यभोग्याधिसाधारणं धर्ममाह । **नष्टो वीति** । एतेन प्रसिद्धार्थनिरासः । अग्रिमेण पौनरुक्त्यापत्तेः । तृतीयांतं पूर्वान्वयि । छिद्रं च भेदनं विदारणं च तदादीत्यर्थः । योग्यतया आह । **पूर्ववदिति** । उभयसाधारण्यमेव विशदयति । **तत्रेति** । तयोर्मध्ये इत्यर्थः । **चेत्** यदि । तदेति शेषः । एवमग्रेऽपि । अत एवाह । **उपेति** । अपिना नाशसमुच्चयः । 'वृद्धिरपीति' प्रथमपादोक्तत्वात् । अपिना पूर्ववत् करणसमुच्चयः । **वृद्धिः** वृद्धिरपि । द्वितीयपादोक्तत्वात् । 'द्विर्वेति' पाठे वा समुच्चये । असद्भावे तु तावन्मात्रमेवेति बोध्यम् । द्वितीयस्याप्युभयाधिविषयत्वं कथयंस्तत्साधारणधर्ममाह । **विनष्ट इति** । 'वि'पदलभ्यमाह । **आत्यंतिकेति** । चार्थमाह । **सोऽपीति** । तत्स्वरूपस्यैवाभावादाह । **मूल्यादीति** । **तद्दाने** धनिना तस्मिन् दत्ते स्वीयं तादृशं सर्वं स लभते । **मूल्यं** मूलं । एवमग्रे । सर्वत्र धनीत्यस्य मध्यमणिन्यायेनान्वयः । विशेषमाह । **यदीति** । **मूलनाश इति** । तथा सति सुतरां वृद्धिनाश इति भावः । **विनष्टे** अदत्ते । तथेति शेषः । अव्यवहितापवादत्वेन तुर्यपादं सप्रतीकं व्याचष्टे । **दैवेति** । अत एवाह । **विनाशादिति** । तत्रापि विशेषमाह । **स्वापेति** । **कृतात्** । विनाशाद्विनेत्यनुषज्यते । अनेन सूचितं तत्र विशेषमाह । **दैवेति** । ईदृशे स्थलेऽधमर्णस्यैव वस्तुनाशो नोत्तमर्णस्येति भावः । तदसंभवे आह । **आध्यंतरं वेति** । **स्रोतसा** नद्यादिसंबंधिना । **राज्ञेति** अधिकृतद्वारेति भावः । अत एव णिच् । अथशब्दोऽव्यवहिततदानंतर्ये । **धनं** सवृद्धिकम् । तत्र न्यूनतां निराचष्टे । **तत्रेति** । तयोर्मध्ये इत्यर्थः । द्वितीयस्य कंठत उक्तत्वादिति भावः । **दैवेति** । दैवकृतमात्रेत्यर्थः ॥

## याज्ञवल्कीये ६० श्लोकः ।

**अपि चेति** । अन्यदप्याधिविषये आहेत्यर्थः । संकोचे मानाभावादुभयसाधारण्येन व्याचष्टे । **आधेरिति** । अत एव गोप्यस्य स्वीकरणमात्रत्वेन निर्वाहेऽपि भोग्येऽनिर्वाहात्तदुपलक्षणमित्याह । **उपेति** । तथा च यथासंख्यमन्वयः । प्रकृतं साकांक्षत्वादाह । **आधीति** । हेतुव्यवच्छेद्यमेवाह । **न साक्षीति** । मात्रपदेन विशिष्टस्य सिद्धिजनकत्वं सूचितमत एव प्रागवधारणानुक्तिः । **उद्देशो** वस्तुसंकीर्तनम् । उपदेशेति पाठांतरम् । भोग्यस्य भोगेनैव सिद्धिरित्यत्र मानमाह । **यथाहेति** ।

यद्वा । स्वीकरणादित्यस्य व्याख्या **उपभोगादिति** । 'भुजपालनाभ्यवहारयोरि' त्युक्तेर्गोप्याधावुपभोगः परिपालनम्, भोग्यास्याभ्यवहरणं फलाद्युपभोग इति यावत् । उपशब्दस्तु सामीप्य-

१ पृ. ३९ पं. २४॥ २ ख-नष्टस्तावन्मात्रं चेत्-यदि । ३ पृ. ४० प. ४॥ ४ यदेति मिताक्षरापाठः । ५ ख-ईदृगस्यैव वस्तुनाशः नोत्तमर्णस्य । ६ क-दित्यास्या । ख-दित्यस्या-।

सामर्थ्यव्याप्त्याचार्यकरणदोषख्यापनदाक्षिण्यवीप्सारंभपूजोद्योगकार्याहत्यमरणखादनानशनेषु वर्तत इति [1]यथासंभवं योज्यः। अत्र पक्षे उभयत्र मानमाह। **यथाहेति। भोग इति।** उक्तद्व्यर्थकमिदम्। **अन्यथा** उक्तभोगाभावे, साक्ष्यादिमात्रेण नेत्यर्थः। ननु किमनेन प्रकृते साधितमत आह। **अस्य चेति।** आधेः स्वीकरणात्सिद्धिरित्यस्येत्यर्थः। **इतीति।** इत्युक्तार्थसिद्धिः फलमित्यर्थः। फलत्वमेव विशदयति। [2]**येति।** स्वीकारपदमुक्तार्थकं। 'रक्ष्यमाणोऽपी' त्यादि व्याचष्टे। **स चाधिरिति।** द्विविध इत्यर्थः। उक्तिसामर्थ्यादाह। **प्रयत्नेनेति।** अविरोधायाह। **कालेति।** चेदर्थमाह। **यदीति।** 'असारे' त्यादिव्याख्या **अविकृत एवेति।** विकृते प्रागुक्तत्वेनापौनरुक्त्यायेदमुक्तम्। **ततः** तदा। यद्वा तत इत्यस्यान्य इत्यत्रान्वयः। तदेति शेषः। तदेत्येव पाठांतरम्। तदेति सूचितार्थमाह। **रक्ष्येति।** अन्यथोक्तिवैयर्थ्यं स्पष्टमेव ॥ ६० ॥

**इत्यस्येति।** इति पूर्वोक्तस्याकृतकालगोप्याधिविषयकस्य तन्नाशस्येत्यर्थः॥

## याज्ञवल्कीये ६१ श्लोकः।

**शोभनेति।** सदाचरणमित्यर्थः। सुप्सुपा[3] साधनं कृतेति समासौ क्रमेणाह। **चरित्रेणेत्यादिना।** विनिगमकाभावादाह। **परेति।** एवं पदार्थं उक्त्वा [4]तात्पर्यार्थमाह। **एतदिति। बह्विति।** तदर्थमव्ययं भिन्नं पदं वा तत्रात्मसात्कृतमाह। **धनिन इति।** द्वितीयमाह। **यदि वेति। स** इत्यस्य व्याख्या **नृप** इति। 'सह[5]युक्ते' इति तृतीयेत्याह। **सहेति।** तदपवादत्वं स्पष्टयितुमाह। **अयमाशय इति। एवंरूपमिति।** चरित्रहेतुकमित्यर्थः।

उत्तरार्द्धं व्याचष्टे। **त[6]थेति।** तत्रादौ सत्यमिति। पदार्थांतरस्यानुपयोगिनो निरासायाह। **करणमित्यादि। सत्यंकार इति।** समयकरणमित्यर्थः। शपथकरणमिति यावत्। सूत्रे 'कार इति' घञंताणंतयोस्तंत्रेण निर्देश इति भावः। शाब्दस्य वाक्यार्थस्य स्फुटत्वादाह। **अयमिति।** आशय इत्यर्थः। **तत्।** सत्यंकारकृतं द्रव्यम्। संभवादाह। **अन्योऽर्थ इति। चरित्रेति।** पद्यस्येति भावः। विशेषणसमासमाह। **चरित्रमिति।** अत्र पक्षे चरित्रशब्देन सदाचरणं नोच्यते। किंतु तज्जन्यफलमित्याह। **चरित्रेति।** अग्रे समासः प्राग्वदेवेति सूचयन् वाक्यार्थमाह। **यत्रेति। तदेव** चरित्ररूपबंधकमेव। **तदेव।** आत्मसात्कृतं द्रव्यमेव। प्रकृतासंबद्धत्वादाह। **आधीति।** पदार्थः प्रागुक्त एवेति। वाक्यार्थमाह। **क्रयेति।** आदिना दानप्रतिग्रहादि। निमित्ताभावे तथा करणानौचित्यादाह। **व्यवस्थातीति।** विशेषमाह। **तत्रापीति।** तयोर्मध्येऽपीत्यर्थः। **व्यवेति।** तामुलंघ्य वर्तत इत्यर्थः। तदेति शेषः। **इतरः।** ग्रहीता ॥ ६१ ॥

## याज्ञवल्कीये ६२ श्लोकः।

**किंचेति।** प्राग्वत्। योग्यतया आह। **धनेति।** अधमर्णस्येति भावः। एतत्तात्पर्यार्थमाह। **न वृद्धीति।** 'अन्यथे' त्यस्य व्याख्या **अमोक्षणे** इति। तावन्मात्रे इष्टापत्तेरतिदेशपरतया लभ्यं तात्पर्यार्थमाह। **चौरेति।**

असतीति च्छेदेन। नाशाविवक्षया द्वितीयाधार्थमाह। **असत्वीति। पुनः** तु। 'प्रयोजके' इत्यस्य व्याख्या **प्रयोक्तरीति।** ऋणस्येति शेषः। धनदातर्युत्तमर्णे इत्यर्थः। यथाश्रुतार्थे

१ क-यथाचार्यकरणदोपाख्या। २ स्वीकारांतक्रियेति। ३ व्या. सू. २-१-४॥। ४ ख-वाक्यार्थमाह। ङ-एतं पदस्य शाब्दमर्थ मुक्त्वा॥ ५ क-स्यानुपइति। ६ व्या. सू. २-३-१९

बाधादितो लक्ष्यार्थमाह । **तदाप्तेति** । अर्थादाह । **सवृद्धीति** । ' न्यस्ये ' त्यस्य व्याख्या **निधायेति** । अर्थादाह । **अधमर्ण इति** । ' आधिमि ' त्यादेरर्थमाह **स्वीयमिति** ॥ ६२ ॥

उत्तरावतरणमाह । **अथेति** । शंकायां सत्यां शंकांतरमाह । **यदि वेति** । **दित्सा** । तद्दानेच्छा । षष्ठ्यंतस्य पूर्वान्वयः । **तत्र** उभयत्र ।

## याज्ञवल्कीये ६३ श्लोकः ।

वक्ष्यमाणवचने वाशब्देनार्थद्वयसूचनाच्छंकाद्वयमत्र फलतो व्याचष्टे । **तस्मिन्निति** । मोक्षणोद्यमकाले इत्यर्थः । षष्ठ्यर्थे बहुव्रीहिः । उभयत्राधिरन्यपदार्थ इति शब्दार्थः स्पष्ट एवेति सूचयन्नाह **यत्तस्येति** । ' तत्रे ' त्यस्य व्याख्या सर्वमिति न्यायेन तत्रैवेति तस्याप्यर्थमाह । **धनिनीति** । अस्यापि तात्पर्यमाह । **न तत इति** । स्थितेरवधिं सूचयन् ' अथ प्रयोक्तेत्याद्यशंकोत्तरं वाशब्दसूचितमाह । **यावद्धनीति** । वाशब्दसूचितं कथयन्नेव ' यदि वेत्यादि ' द्वितीयशंकोत्तरमाह । **यावद्वेति** । विक्रयेच्छात आह । **तन्मूल्येति** । **ऋणी नेति** । अधमर्णस्तदंतिकं न प्रापयतीत्यर्थः ।

उत्तरावतरणमाह । **यदा त्विति** । उत्तरानुरोधेनोत्तमर्णस्यैवेदमित्याह । **ग्रहीतव्यमिति** । त्वयेति शेषः । **विचारितमिति** । अधमर्णेनेति भावः । निहिते चेति पाठः । वेति पाठे सचार्थः—

## याज्ञवल्कीये ६३ श्लोकः ( उत्तरार्धः ) ।

**धारणकादिति** पाठे बाहुलकात्कर्तृल्युंडतात्स्वार्थे कः । आधिं धारयतीति धारणकस्तस्मात् । यद्वा धरणं करोति णिजंतात् ण्वुल् । धाराणिकादिति पाठे, आधेर्धारणं यस्यास्तीति मत्वर्थे ठन्निति केचित् । तदर्थमाह । **अधेति** । मरणनिरासायाह । **अधमर्णेऽसन्नीति** । अपीत्यस्य ससाक्षिकमित्यत्र अन्वयेन तत्समुचितमाह । **तदासैश्चेति** । विक्रीणीतेत्यस्य तात्पर्यार्थमाह । **विक्रीयेति** । यथाश्रुतविकल्पस्य प्राग्वदसंभवात् वाशब्दस्यार्थमाह । वा **शब्द इति** । तत्वमेवाह । **यदर्णेति** । **तदा** तस्मिन् काले एवेत्यर्थः । **धनमेव** । तावत । **ग्रहीति** । त्वयेति शेषः । **अयमिति** । ' विना धारेति ' प्रकृतवचनोक्त इत्यर्थः । तथा च सिंहावलोकनन्यायेन व्यवहितमपि तत् बुद्धिस्थीकृत्य पक्षांतरत्वेनेदमुक्तमित्यर्थः ॥ ६३ ॥

## याज्ञवल्कीये ६४ श्लोकः ।

**तु**सूचितमाह । भोग्याधाविति । **प्रयुक्तं** उत्तमर्णेन केवलं भरणत्वेन दत्तम् । **कृतया** स्वकृतया । क्वचित्तथैव पाठः । **तदा** द्विगुणीभवनकाले । **आधौ कृते** सति । तन्निर्वाहार्थमिति भावः । **कृत** इति शेषपूरणम् । 'तदुत्पन्ने' इत्यस्य व्याख्या । **आधीति** । फलभूते इत्यर्थः । **धनिन इति** । शेषोऽयम् । अधिकरणस्य शेषत्वविवक्षायां षष्ठी । **प्रविष्टे** सति । ऋणत्वेन केवलं प्रयुक्ते धने वृद्ध्या सह द्विगुणे जाते पश्चादाधिर्दत्तो भोगार्थो यदा तदा आधेः सकाशादुत्पन्ने धने द्विगुणे धनिनि प्राप्ते सत्याधिर्मोक्तव्यस्तेनेत्यर्थः ।

१ क–षष्ठ्यर्थे हुव्रीहिः । २ क–शाब्दार्थः । ३ 'सर्वं वाक्यं सावधारणमिति' न्यायेन । ४ क–भ्रंत्यणत्वेन । ख–त्राणत्वेन

संभवात् व्याख्यानांतरमाह । **यदि वेति । आदावेव** ऋणग्रहणकाले एव । भोगाभावे परिभाषारूपं हेतुमाह । **द्विगुणीति ।** भोक्तव्य इति पाठः । न इत आरभ्येति भावः । ऋणग्रहणकाले एवाधिं ददद्धमर्णः एवं ब्रवीति 'यदा द्रव्यं वृद्ध्या द्विगुणीभूतं तदा आधिर्भोक्तव्य' इति । उत्तमर्णोपि तथैवानुजानीते । इत्येवं परिभाषया बाधेन पूर्वं भोगाभावेन द्वैगुण्ये जाते ततो भोगे प्रारब्धे स्वीयद्विगुणधनलाभानंतरमाधेरुपभोगाभावः । किंतु मोचनमित्यर्थः ।

कारणांतरेण भोगाभावसंभवादाह । **कारणांतरेण वेति ।** उत्तमर्णस्य स्वच्छाशयत्वेनालुब्धत्वेन च धने द्विगुणेऽहमाधिं भोक्ष्ये नेत आरभ्येति प्रतिज्ञायामधमर्णेन तथा कुर्वित्यंगीकृते उत्तमर्णस्य सत्यवचनत्वरूपकारणांतरेण बाधेन पूर्वभोगाभावो[1] वेत्याद्यर्थः । स्वरूपतः प्रवेशस्य पूर्वमेव सत्वादाह । **भोगार्थमिति । तदपि** अधिकमुपभुक्तमपि । अपिनाऽऽधिसमुच्चयः ।

तात्पर्यार्थमाह । **सर्वथेति ।** पक्षद्वयेऽपीत्यर्थः । **आध्युपभोगेति ।** तदपाकरणार्थो य आध्युपभोगस्तद्विषयकमित्यर्थः । उपभोगेत्येव पाठो वा । **क्षयाधिमिति ।** तादृशऋणनाशकाधिमित्यर्थः । तथा च पक्षद्वयेऽपि द्वैगुण्ये सति भोगे कृते स्वीयद्विगुणलाभे एवाधिर्मोक्तव्यो न ततः प्रागिति सिद्धम् ।

विशेषमाह । **यत्र त्विति ।** पूर्वानुषंगार्थमाह । **ऋणीति ।** स्वरसतोऽर्थद्वयाप्रतीतेराह । **अस्यार्थ इति ।** वाक्यार्थबोधोपयुक्तमादावाह । **फलमिति ।** मात्रपदेन मूलव्यवच्छेदः । वाक्यार्थमाह । **तत्रेति ।** तयोर्मध्ये इत्यर्थः । अस्याप्यर्थमाह । **यदेति ।** एवंचेदं प्रागुक्तार्थकमेव **धनिन इति ।** प्राग्वत् । द्वितीयमाह । **वृद्धीति ।** चार्थमाह । **त्विति ।** सममित्यस्यार्थो **मूल्यमिति ।** स्वार्थेऽण्कावित्याह । **सममेवेति । अस्यापेति । बृहस्पति**रेव 'दत्वा द्रव्यं च सामकमिति' स्वोक्तमपवदतीत्यर्थः । प्रतीकमाह । **यदीति ।** व्याचष्टे । **तादिति ।** 'न धनभाग्धनी'त्यस्य व्याख्या **सामकं न लभते धनीति ।** तत्तात्पर्यमाह । **मूल्यमिति ।** ऋणी च न लभेद्बंधमित्यंशं व्याचष्टे । **अथ त्विति ।** अप्रकर्षितमित्यस्य व्याख्या । **वृद्धयेऽपीति ।** अपिना मूलसमुच्चयः । अनुषंगेणाह । **सामकमिति ।** चोऽप्यर्थ इत्याह । **अपीति ।** व्युत्क्रमे इति भावः । सर्वथा लाभाभावो न प्रतिपाद्य इत्याह । **वृद्धिशेषमिति ।** अपिना मूलशेषसमुच्चयः ।

**पुनरुभयत्रेति ।** 'यदिप्रे'त्याद्यर्धोक्तं 'ऋणी चे'त्यंशं च स एवापवदतीत्यर्थः। मतमित्यत्र भावे **क्त** इत्याह । **अनुमत्येति । उक्तमिति ।** इत्यादि उभयम् उक्त मित्यर्थः । **यावन्मूल्येति ।** वृद्धिऋणादावाग्रे **मात्रेति । विकृष्टम**पकृष्टं । विप्रकृष्टमिति पाठांतरम् । विगतप्रकर्षकमिति तदर्थः । विकृष्टनामीति पाठः सुगम एव ।

इति ऋणादानप्रकरणम् ।

---

१ क-भावे वेत्यावर्थः '

## अथ उपनिधिप्रकरणम् ४ ।

**उपनिधिमिति** । तत्संबंधिनमित्यर्थः ।

### याज्ञवल्कीये ६५ श्लोकः ।

उद्देशैकक्रमादिति भावः । निक्षेपोपनिध्योः स्वल्प एव भेदः इति सूचयन्नाह । **निक्षेपेति** । आदिना संपुटकादिस्थं द्रव्यमिति पाठः । यत् द्रव्यमिति पाठे तदिति शेषः । अनाख्याने कर्माकांक्षत्वादाह । **रूपेति** । तद्रूपविशेषमित्यर्थः । तस्याप्यर्थमाह । **मुद्रितमिति** । अर्पणे फलहेतुमाह । **रक्षेति** । अनेनोपनिधीयत इति निक्षिप्यते इति च व्युत्पत्तिः सूचिता । 'औपे'त्यत्र विनयादित्वात्स्वार्थे ठगिति भावः । **असंख्यातम**गणितम् । **अवीति** रूपतः । अत एवाह **समुद्रमिति** । निक्षेपपदार्थमाह । **निक्षेपमिति** । **गणितं** संख्यातम् ।

तुर्यपादं व्याचष्टे । **प्रतीति** । **अर्पितं** स्थापकेन ।

### याज्ञवल्कीये ६६ श्लोकः ।

'तं तु राजदैवकतस्करै'रिति पाठः। स्वार्थे कः। 'दैविकेति' पाठे प्राग्वत् स्वार्थे ठक् । तदाह । **तमिति** । असावित्यस्यार्थमाह । **यस्मिन्नुपहितमिति** । विशेषं कथयन् तात्पर्यार्थमाह । **धनिन एवेति** । तदेति शेषः । **जिह्मेति** । कपटप्रयोजितमपहरणमित्यर्थः । जिह्मस्य प्रयोजकत्वात् णिच् । **ग्रहीतुरिति** । ग्रहीतुरर्थेन धनेन सह य उपनिध्यादिर्नष्टः **स दायिनो** धनस्वामिन एव नष्टो नोपनिध्यादिरक्षकस्येत्यर्थः ।

एतच्च तस्करापहारविषयमित्याशयेनाह । **दैवराजकृते तद्वदिति** । दैवराजभ्यां कृते अपहारे उक्तवदेवेत्यर्थः । 'ग्रहीतुरर्थेन सहेति'नाशस्य सत्यत्वप्रतिपादनपरं न स्वार्थपरमिति सूचयन् त्रितयशेषमाह । **न चेदिति** । **तत्** अपहरणम् ।

### ( उत्तरार्धः )

अदत्ते इति छेदः । भूतत्वमविवक्षितम् । सति सप्तमीति सूचयन्नाह । **यदि न ददाति तदेति** । सतिसप्तम्या सूचितमाह । **तदुत्तरेति** । क्रियाविशेषणमेतत् । चेदर्थमाह यद्यपीति । स्वेच्छायाः साकांक्षत्वादाह । **तथापीति** । तस्याभावादाह । **मूल्येति** ।

### याज्ञवल्कीये ६७ श्लोकः ।

यद्यपि सोदयोपनिधिदानरूपविशेषोऽपि वक्ष्यमाण इति 'अथ भोक्तारं प्रत्याहे'त्येवोचितं तथापि पूर्वं तद्दानस्य मुख्यत्वं दंडस्य गौणत्वमिति पश्चादुपात्तं दंडप्रसंगेन वक्ष्यमाणेन वैपरीत्यं तत्र तथैव पाठादिति तेनैव संगतिर्न तु अनेनेति सूचयन्नाह । **भोक्तारमिति** । उक्तदंडप्रसंगादिति भावः ।

---

१ ख—उद्देश्यक्रमादिति । २ क—सत्यप्रतिपादनपरं । ३ क—वक्ष्यमाणे वैपरीत्ये ।

**दंडं** तत्सहितम् । तदनुज्ञायामपि स्वेच्छायाः सत्वात्तात्पर्यार्थमाह । **स्वाम्यननुज्ञेति ।** प्राग्वदाह**ोपेति ।** 'आजीवन्निति' 'लैक्षणहेत्वो' रिति शतेत्याह**आजीवतीति ।** तदर्थमाह**ोपेति ।** अत्तीत्यर्थः । यत्र नाद्येऽसंभवस्तत्राह । **व्यवहरति वा प्रयोगादिना लाभार्थमिति ।** एवं च व्यवस्थितविकल्पो बोध्यः । विशेषानुक्तेराद्ये आहो**पेति** । द्वितीये आह । **लाभेति ।** वेति पाठः । **चः**पादपूरणे इत्याह । **तं चेति ।** प्राग्वत् 'सोदय' मित्यस्यार्थद्वयमाह**ोपेति । दाप्यः** दाप्योऽपि । अपेरत्र संबंधः । नात्र प्रागुक्ता वृद्धिरित्याह । **वृद्धिप्रमाणं चेति । च**स्त्वर्थे । **वृद्धिशेषं ।** अवशिष्टा वृद्धिः । **क्रयं** क्रीतसंबंधिद्रव्यं । **विक्रयं** विक्रीतरूपद्रव्यं । याच्यमानमिति पाठः । अस्या वृद्धेः सर्वत्र प्राप्तौ विशेष**माहैतच्चेति ।** उक्तवृद्धिप्रमाणं चेत्यर्थः । **उपेक्षेति ।** उपेक्षा च अज्ञानं च ताभ्यां नष्टे त्वित्यर्थः **तेनैव कात्यायनेनैव । व्यासो**ऽ**प्ये**वमानुपूर्विक एव अनुक्तव्यवस्थां निराचष्टे । **किंचिदिति ।**

## ६७ श्लोकस्य उत्तरार्धः ।

तत्रादौ याचितादिपदार्थानाह । 'विवाहाद्युत्सवेष्वि' त्यादिना । 'तथैव चेती' त्यंतेन आनीतमिति छेदः । तत्र हेतुमाह । **स्वामिने इति ।** 'ने दर्शे' त्यत्राकारप्रश्लेषः । षष्ठीपक्षेऽप्येवम् । सा प्राग्वत् । **तदिति** । गृहस्वामीत्यर्थः । **प्रक्षेपो** न्यसनम् । तत्र हेतुमाह । **गृहेति इति ।** हैतौ । **समक्षमिति ।** दर्शनपूर्वकमित्यर्थः । अत एव 'निक्षेपं गणितं विदुरिति' प्रागुक्तनारदैकवाक्यतेति बोध्यम् ।

द्वितीयमाह । **प्रतीति ।** तत् स्वरूपमाह । 'परस्परे'त्यादिना 'न्यस्तस्ये'त्यंतेन । आदिशब्देनोभयग्रहणे मानमाह । **यथाहेति । एष एवेति ।** 'रहोदत्ते निधौ यत्र विसंवादः प्रजायते । विभावकं तत्र दिव्यमुभयोरपि च स्मृतमिति' प्रागुक्तरूप एवेत्यर्थः । **दृष्ट इति** 'दिष्ट' इति पाठांतरम् । आदिना निक्षेपग्रहणम् । बहुवचनं व्यक्त्यभिप्रायं । **शिल्पिषु ।** तन्न्यासेषु । एवं पदार्थानुक्त्वा वाक्यार्थमाह । **एतेष्विति ।** मूलोक्तेषु इत्यर्थः । 'अयं विधिरि' त्यस्य **व्याख्योपेति ।**

इति निक्षेपप्रकरणम् ।

---

# अथ साक्षिप्रकरणम् ५

अथ साक्षिनिरूपणस्य अव्यवहितसंगत्यभावाद्व्यवहितसंगतिकथनपूर्वकमुपयुक्तं मूलानुक्तमुपोद्घातरूपमाह । 'प्रमाण' मित्यादि 'समुदाहृता' इतीत्यंतेन । **तत्र** तेषां मध्ये । दृशेर्ज्ञानसामान्यार्थत्वेन 'साक्षाद्द्रष्टरीति' सूत्रसिद्धमेवार्थमाह । **साक्षादिति ।** 'समक्षं दर्शनात्साक्ष्यमिति' समक्षमित्यस्य श्रवणेऽपि संबंधः । 'समक्षदर्शेति' पाठे तलुप्तविभक्त्यंतं पृथक्पदं । तथा च साक्षाद्दर्शनात्साक्षात् श्रवणाच्च साक्ष्यं सिद्ध्यत्येवेत्यर्थः । 'साक्षादित्य' नेन परंपराव्यावृत्तिः । **नारदो**ऽपि ( १–१४७ ) "संदिग्धेषु तु कार्येषु द्वयोर्विवदमानयोः । दृष्टश्रुतानुभूतत्वात्साक्षिभ्यो व्यक्तदर्शनामिति" **निरूपितः**प्रतिपादितः । **ईतीति** मिलित इति शेषः । **बृहस्पतिना** तु द्वादशविध उक्तः । "लिखितो लेखितो गूढः स्मारितः कुल्यदत्तकौ । याद्दच्छिकश्चोत्तरश्च कार्यमध्यगतोऽपरः । नृपोऽध्यक्षस्तथा ग्रामः साक्षी द्वादशधा स्मृतः" इति । अर्थिना पत्रे निवेशितो **लिखितः ।** प्रत्यर्थिना अर्थिपरेण यो निवेशितो **लेखितः ।** कुड्यादिव्यवधानेन श्रावितो **गूढः ।** पुनः पुनःकार्यस्मार्यमाणः **स्मारितः ।** यदृच्छयैवागतः साक्षी क्रियमाणो **याद्दच्छिकः ।** श्रवणा-

---

१ व्या. सू. ३–२–१२६ ॥ २ क–उपेपेति । ३ क–द्वितीयो । ४ अव्ययवस्थां । ५ 'गृहस्वामिने' ६ क–रूपमाहिमाह ७ व्या. सू. ५–२–२२ ॥ ८ पृ. ४३ पं. २६ इत्येकादशविधः । ९ क–कार्यो । १० क–पत्रे निवेशितो । लेखितः । ११ क–पुनः कार्ये– ।

च्छ्रावणाद्वा साक्षिणामुपर्युपरि भाषमाणः **उत्तरः । अध्यक्षः** प्राड्विवाकादिः । अन्यत्स्पष्टम् । अत्र मूलमनुपदमेव स्फुटीभविष्यति । अत्र लोकतोऽधिकः । **चभेदः** भेदश्च । **तेनैव । नारदेनैव । यदृच्छाभिज्ञ इति ।** परेच्छया स्वेच्छया अभिज्ञः । मिश्रितप्राप्त इति यावत् । 'यदृच्छयाभिज्ञ' इति पाठान्तरं । तत्र यदृच्छया तत्पूर्वकप्राप्त्या अभिज्ञायते स्मार्यते स इत्यर्थः । 'अतश्चेति' कर्मण्यङ्। अत एव 'यदृच्छास्मारितः कुल्यास्तथा चोत्तरसाक्षिणः' इति **बृहस्पतिः ।** 'विधः कृत' इतीति पाठः । **चै स्वेति ।** स्वरूपं त्वित्यर्थः । **संनीति ।** 'वर्तमानसामीप्ये' इति भूते लट् । संनिवेशित इत्यर्थः । **पत्रकात्** पत्रसंनिवेशात् । पौनरुक्त्यं परिहरति । **स्मारित इति । तेनैव । कात्यायनेनैव ।** एवमग्रेऽपि । 'पुनः पुनः कार्यं दृष्ट्वा कार्यप्रसिद्ध्यर्थं यः स्मार्यते इत्यन्वयः । स्मारित इति पाठे'मतिबुद्धीति'वर्तमाने क्तः । **इह** व्यवहारे । आगतः सन्नितिशेषः । **अनयोः** स्मारितयदृच्छाभिज्ञयोः । **भेद इति ।** मिथ इत्यादिः । **द्वाविति ।** तथा च तदैक्येऽपि आकारणानाकारणकृतो भेद इति भावः । चतुर्थमाह । स एवेत्याह । **तथेति ।** एवमग्रेऽपि । **अर्थिनेति ।** अर्थिना साध्यवता स्वार्थसिद्ध्यर्थं प्रत्यर्थिनो वचनं स्फुटं यथा भवति तथा । **गूढस्थितः ।** कुड्यादिव्यवहितः प्रत्यर्थिनाऽविज्ञातः सन् स्थितो यः पुमान् श्राव्यते स गूढसाक्षीत्युच्यत इत्यर्थः । **तथा साक्षिणामपीति ।** साक्षिणामपि उपरि ऊर्ध्वं यः पुमान् श्रवणात् श्रावणाद्वा साक्ष्यं उपरि उत्तोनं उत्कृष्टं भाषते इत्याद्यर्थः । अत एव षष्ठीसंगतिरन्यथा द्वितीयापत्तिः स्फुटैव ।

एवमाद्यभेदं सस्वरूपमुक्त्वा द्वितीयभेदमात्रं स्वरूपस्य स्फुटत्वादाह । **षड्विधेति ।** अकृतस्यापीत्यर्थः । चतुर्थमाह । **व्यवेति ।** व्यवहारिणां कार्येष्वधिकृतो यः स्यादित्यर्थः । पंचमं दूताख्यमाह । **अर्थिनेति ।** अर्थिप्रेरणया प्रत्यर्थिना संनिवेशितः । कुल्या इत्यस्य विषयविशेषमाह । **कुलेति । तेऽपीति ।** प्रागुक्ताः सर्वेऽपीत्यर्थः । यद्यपि सभ्यस्य पूर्वनिपात उभयथोचितस्तथापि **कात्यायनो**क्तक्रमविवक्षयाऽह । **लेखकेति ।** तयोरपीत्यर्थः । अत्र हेतुं **कात्यायन**मेवाह । **लेखक इति । समुदाहृता इतीति ।** सहपाठादिति शेषः । राजनि तत् कार्यं पश्यति सति ते लेखकादयोऽनुपूर्वशः स्वार्थपरक्रमेण पूर्वाभावे परः पर पत्र साक्षिण इत्यर्थः ।

एवमुपोद्घातमुक्त्वा मूलवचनमवतारयति । **ते साक्षिण इति । कीदृशा इति** स्वरूपप्रश्नः । **कियन्त इति** संख्याप्रश्नः ॥

## याज्ञवल्कीये ६८।६९ श्लोकौ ।

**धर्मप्रेति ।** पुरुषार्थाणां त्रयाणां मध्ये इति भावः । **व्यासोऽपि**—

" धर्मज्ञाः पुत्रिणो मौलाः कुलीनाः सत्यवादिनः । श्रौतस्मार्तक्रियायुक्ता विगतद्वेषमत्सराः ॥

"श्रोत्रिया न पराधीनाः सूरयश्चाप्रवासिनः । युवानः साक्षिणः कार्या ऋणादिषु विजानतेति" ॥

अत्र नेति पूर्वोत्तरान्वयि अतो । न वक्ष्यमाणविरोध इति बोध्यम् ।

पक्षान्तरमाह । **पुत्रेति ।** अत्र **त्र्यवरा इति** संख्याप्रश्नोत्तरम् । अन्यत्सर्वं अन्यस्य । नित्ययोगे विन्नित्याह । **तपःशीला इति ।** शीलपदार्थमाह । **निरता इति ।** 'कुलौत्त्व' इति सिद्धविशिष्टतात्पर्यार्थमाह । **महेति ।** 'तार्च्छील्ये णिनि' रित्याह । **शीला** इति । मोक्षसंग्रहाय व्यतिरेकमाह । **न त्विति ।** नार्थेति पाठान्तरं । 'वर्तमानसत्तायां' मतुब्व्युत्पत्तेराह । **विद्येति ।** विशिष्टसामर्थ्यलभ्यमाह । **बह्वीति ।**

---

१ व्या. सू. ३-३-१०६ ॥ २ च-स्वरूपमिति पृ० ४३ पं० २९ ॥ ३ व्या. सू. ३-३-१३१ ॥ ४ व्या. सू. ३-२-१८८ ॥ ५ ख-भेदस्वरूपं । ६ 'अल्पाच्तरत्वात्' 'अभ्यार्हितत्वा' च । ७ क-तत्कार्या पश्यति सति । ८ कख-स्वार्थेशिसक्रमेण । ९ ख सर्वेइति । १० व्या. सू. ४-१-१३९ ॥ ११ "सुप्यजातौ णिनिस्ताच्छील्ये" व्या. सू. ३।२।७८ । १२ 'तदस्यास्त्यस्मिन्निति मतुप्' व्या. सू. ५।२।९४

कामस्याकरणे प्रत्यवायाभावात्तदभावायाह । **नित्येति** । एवं पदार्थानुक्त्वावाक्यार्थमाहैवं**भूता इति** । शाब्दमुक्त्वा तात्पर्यार्थमाह । **त्रिभ्य इति** । यथावर्णमित्यनेनापौनरुक्त्याऽऽह । **मूर्द्धेति** । तत्तात्पर्यार्थमाह । **तत्रेति** । तेषां मध्ये इत्यर्थः । एवमग्रेऽपि । इदमग्रेऽपि अतिदिशति । **एवमंबष्ठादिष्वपीति** । न्यूनतां निराचष्टे । **तथेति** । **मनुरिति** । "द्विजसत्तमाः । शूद्राश्च सन्तः शूद्राणामंत्यानामंत्ययोनयः" इति वचःशेषः । **कात्यायनो**ऽप्येवं । **नारदो**ऽपि । "श्रेणिषु श्रेणिपुरुषाः स्वेषु वर्गेषु वर्गिणः । बहिर्वासिषु बाह्याः स्युः स्त्रियः स्त्रीषु च साक्षिण इतिः" । ( अ. १ श्लो. १५५ ) । वर्गिण आह **कात्यायनः** । "लिंगिनः श्रेणिपूगाश्च वणिग्जातास्तथाऽपरे । समूहस्थाश्च ये चान्ये वर्गास्तानब्रवीत् **भृगुः** । दासचारणमल्लानां हस्त्यश्वरथवाजिनाम् । प्रत्येकैकसमूहानां नायका वर्गिणः स्मृताः " इति । सर्वे इति पक्षांतरं व्याचष्टे । **सजातीति** । सजातिसवर्णयोरसंभवे इत्यर्थः । तयोः प्रक्रांतत्वात् । सर्वेषां युगपदसंभवादाह । **यथासंभवमिति** । **मनु**रपि "यादृशा अर्थिभिः कार्या व्यवहारेषु साक्षिणः । तादृशान्संप्रवक्ष्यामि यथा वाच्यमृतं च तैः ॥ गृहिणः पुत्रिणो मौलाः क्षत्रविट्शूद्रयोनयः । अर्थ्युक्ताः साक्ष्यमर्हंति न ये केचिदनापदि ॥ आप्ताः सर्वेषु वर्णेषु कार्याः कार्येषु साक्षिणः । सर्वधर्मविदो लुब्धा विपरीतांस्तु वर्जयेदिति " ॥ ( अ. ८ श्लो. ६१–६२–६३ ). ऋतं सत्यम् । ' मौलाः प्रसिद्धकुलोद्भवाः ' । इति **कल्पतरुः** ।

अथ मूलमवतारयितुं प्राग्वत्तदुपोद्घाततयोर्द्वैधेनासाक्षिस्वरूपमाह । **उक्तलक्षणेत्यादिना** । ' **साक्षी न भवती** ' त्यंतेन । वक्तव्यत्वे हेतुमाह । **प्रतिषेधेति** । ' प्रतिषिद्धेति ' पाठे भावे क्तः । **अपिः** कृतसाक्षिसमुच्चायकः । पंचम्यंतत्रयेऽसाक्षिण इति शेषः । अग्रे उभयत्रासाक्षीति शेषः । वचनादसाक्षिणां स्वरूपं **नारदे**नैवोक्तमित्याह । **के पुनरिति** । **श्रोत्रिया इति** । अत्र विरोधः परिहृतः । यद्यपि तापसा इति तपस्विन इत्यनेन तुल्यार्थः तथापि तद्विरोधायैवाह । **वानेति** । अत्रादिशब्दग्राह्यं सूचयन्नुभयत्र मानमाह । **यथाह शंख इति** । गुरुकुलेत्यनेनोभयोरपि ग्रहणं । **निर्ग्रंथा इति** । पाषंडिन इत्यर्थः । **दर्शिता इति** । **नारदे**नैवेति शेषः । **साहेति** । अविचारितकारिण इत्यर्थः । **वंचकाः** प्रतारकाः । दोषमेवाह । **तेष्विति** । **तेनैव नारदेनैव** । एकेन चेन मिथः समुच्चयः । अन्येनान्येषाम् । **वादिनामिति** । भाषमाणानाम् । **तेषा**मनेकेषां मध्ये इत्यर्थः । ' वादिनेति ' पाठस्तु युक्त एव । तुर्योऽपि **नारदे**नैवोक्त इत्याह । **तथेति** । **अनिर्दिष्टः** साक्षित्वे इति शेषः । **सूची** सूचकः "अनिर्दिष्टस्तु साक्षित्वे स्वयमेवैत्य यो वदेत् । स्वयमुक्तः सशास्त्रेषु नच साक्षित्वमर्हतीति" पाठांतरं । अनेन स्वयमेवोक्तिर्यस्येति योगार्थोऽपि दर्शितः । **उक्तमिति** । **नारदे**नैवेति भावः । **योऽर्थ इति** । योऽर्थः श्रावयितव्यः तस्मिन्नसति । मध्यमणिन्यायेनान्वयादर्थिनि वादिनि प्रेते वाऽसति वा तदङ्गीकृतं साक्षित्वं क्व कस्मिन्विषये साक्षी वदतु इति हेतोः सः असाक्षी मृतांतर इति शब्दार्थः । तत्फलितं शेषपूरणेनाह । **येनेति** । अर्थिनीत्यस्य प्रागुक्तव्युत्पत्त्या साध्यवतीत्यर्थकत्वेनोभयपरत्वादाह । **प्रत्यर्थिना वेति** । अत एव **कात्यायनः** । 'अर्थी यत्र विपण्णः स्यात्तत्र साक्षी मृतांतरः । प्रत्यर्थी वा मृतो यत्र तत्राप्येवं प्रकल्पयेदिति' । तदाकारमाह । **यूयं इति** । **श्रावितादृते** । तत्साध्यादिविशेषपरिज्ञानस्य तेषामसंभवादिति भावः । तच्छब्देनात्र त्रयाणां परामर्श इत्याह । **अर्थिनीत्यादि** । 'असती'त्यस्य व्याख्या **मृतेति** । अस्य अग्रेऽप्यन्वयः । वासूचितं पक्षांतरमाह । **अर्थे वाऽनिवेदिते** । निवेदितेऽर्थेऽसति मृते वेत्यर्थः । असाक्षित्वे हेतुं सूचयन्नाह । **क्वेति** । अस्योक्तपक्षभेदेनार्थद्वयं मूलानुरो-

१ क–इत्युक्ताः । २ ख–व्यक्तत्वे । ३ ख–प्रतिषिध्येति । ४ क–ड–तुल्यार्थ ।

धेन व्याख्याव्युत्क्रमेणाह । **कस्मिन्निति** । साक्षिमित्यस्य तदित्यादिस्तस्य चांगीकृतमित्यर्थः । इति हेतोः । अनेन **मृत** उत्क्रान्यतमः अंतरे साक्ष्यस्य स्वीकारभाषणयोमर्ध्ये यस्य स **मृतांतर** इति व्युत्पत्तिः सूचिता ।

एवमसाक्षिस्वरूपं प्रतिपादितम् । अनेन मृतांतरस्य सर्वत्रासाक्षित्वे प्राप्ते प्रतिप्रसवमाह । **यत्र त्वित्यादिना दिष्विवती** त्यंतेन । **अस्मिन्निति** । इदं द्रव्यमियदेतया वृद्धया अस्मिन् काले देवदत्ताय दत्तमित्यत्रार्थे इत्यर्थः । अन्यथा तेषां साध्यादिविवेकासंभवादिष्टसिद्धिर्न स्यादिति भावः । तत्रादावाद्ये मानमाह । **यथाहेति** । मुमूर्षुश्रावितं विनाऽर्थिनि प्रेते सति साक्षी **मृतांतर** इति कथ्यत इत्यर्थः । मुमूर्षुणा श्रावितश्चेन्मृतांतरोऽपि साक्षी भवतीति भावः । द्वितीयेऽपि स एव मानमित्याह । **तथेति** । **अनातुरेण** स्वस्थेन । **अपि**र्मुमूर्षुसमुच्चायकः । **धर्मसंज्ञित** धर्माख्य इत्यर्थः । तत्स्वरूप इति यावत् । धर्मज्ञानविषयो वा । ' धर्मसंहित ' इति पाठांतरं । धर्मयुक्त इत्यर्थः । तदा । **तत्रेति** । तस्मिन्दैवान्मृतेऽपि । तत्रार्थे **मृतांतरो**ऽपि एतेषु षट्सु साक्षी स्यादित्यर्थः ॥ ६८ ॥ ६९ ॥

एवमुपोद्घात मुक्त्वा सांप्रतं मूलमवतारयति । **तानेतानिति** ।

## याज्ञवल्कीये ७०।७१ श्लोकौ ।

वक्तव्या**न्नारदोक्ता**नित्यर्थः । पापंड्यादिद्वंद्वं कृत्वा पुना रंगावतारिणा सह, एवमाप्तादिद्वद्वं कृत्वा पुनः पतितेन सहेतीति बोध्यं । **अप्राप्तेति** । व्याख्यातमिदम् । **अशीतिकेति** । अशीतिः परिमाणमस्य स अवरो यस्येति विग्रहः । ततोऽर्वाक् न भवति । तदारभ्य भवतीत्यर्थः । वैषम्ये बीजाभावात्तदेकवाक्यतया च न्यूनतां निराचष्टे । **वृद्धेति** । **आदिना** भक्षणग्रहणम् । **अभियुक्त इति** । तत् संबंधारोपमात्रं यस्येत्यर्थः । **आदिना** भोगादिग्रहणं । व्यवहारे श्रुतेः प्राधान्यादाह । **श्रोत्रदीति** । योगनिरासायाह । **सुहृदिति** । यत्किंचिदर्थसंबंधित्वस्य सर्वत्र सत्वादाह । **विप्रतीति** । **एकेति** । बहुव्रीहिः । पुत्रादिरित्यर्थः । **कारीति** । तेन करोति न तु विचारेण । अविचारितकारीत्यर्थः । दोषाणां बाहुल्येऽपि अत्र प्राधान्यादाह । **वितथेति** । **बंधुभिरिति** । ' ग्रामराजकुलश्रेण्यादिभिर्निस्सारित' इति **कल्पतरुः** । नारदैकवाक्यत्वायाह । **आद्येति** । एवं पदार्थानुक्त्वा वाक्यार्थमाह । **एते इति** ॥ ७० ॥ ७१ ॥

## याज्ञवल्कीये ७२ श्लोकः ।

श्रौतस्मार्तेत्येकवाक्यतया आह । **ज्ञानेति** । तथा च **विदे**र्ज्ञानपूर्वकतदनुष्ठाने लक्षणेति भावः । अत एवोक्तम् । 'पठकाः पाठकाश्चैव ये चान्ये शास्त्रचिंतकाः । सर्वे व्यसनिनो मूर्खा यः क्रियावान् स पंडितः' इति । **उभयेति** । अर्थिप्रत्यर्थीत्यर्थः । **द्वावपीति** । तादृशौ चेमौ साक्षिणौ भवतः इत्यर्थः ।

ननु एवं धर्मवित्त्वं सर्वत्र तुल्यं । तथा च तत्र त्र्यवरपदमनर्थकं व्यावर्त्याभावादपिना तेषामपि संग्रहादित्याशंकते । **यद्यपीति** । **इतीति** । इत्युक्तेत्यर्थः । धर्मवित्त्वप्रयुक्तवैलक्षण्याभावेऽप्युभयानुमतत्वप्रयुक्तं वैलक्षण्यमित्याशयेन समाधत्ते । **तथापीति** । **द्वयोर्वा** । द्वयोर्वा तु । **अर्थवत्**सफलम् ।

प्रत्यासत्तेः ' स्त्रीबाले' त्यस्यैवोपस्थितेराह । तपस्वीति । **इत्यस्येति** । इत्यस्यापीत्यर्थः । क्वचित्तथैव पाठः । अपिना स्त्रीबालेत्यादिनिषिद्धसंग्रहः । अत एव व्याख्यानविरोधो नेति बोध्यम् ।

## याज्ञवल्कीये ७२ श्लोकस्य उत्तरार्धम् ।

चौर्येत्यादिसमाहारद्वंद्वः । **संग्रहणादीनि** चत्वारि । सर्वशब्दस्य बुद्धिस्थबहुसंख्याकावयवारब्धसमुदाये शक्त्या तस्यानुद्भूतावयवभेदत्वेन यद्यपि सर्वलोक इतिवदेकवचनं तथापि स्पष्टार्थं उद्भू-

---

१ " स्वबलावष्टम्भकारी पृ–४५ पं. २८ । २ क–अपि न ।

तावयवपरतया व्याचष्टे । **सर्वे इति ।** तदर्थमेव व्युत्क्रमेणाह । **वचनेति ।** मौलस्त्रीबालेत्यादि वचनेत्यर्थः ।

नन्वेवमतिप्रसंगोऽत आह । **दोषादिति ।** एते त्रय इत्यर्थः । **अत्रापि ।** स्त्रीसंग्रहणादिष्वपि ।

ननु पूर्वं तेषामसाक्षित्वे उक्तेऽपि अस्य तदपवादत्वेन अत्रैवं तेषां साक्षित्वं स्यादेव वाऽत आह । **सत्याभावादिति ।** एवंच येन हेतुना तत्रासाक्षित्वं तस्य अत्रापि सत्वं तुल्यमिति तदनपगमेन तेषामत्रापि अतत्वमेवेति भावः । एवं च 'स्वयमुक्तिश्चेति' । चेनान्येषामपीदृशानां ग्रहणम् । तदाह **नारदः ।** "असाक्षिणो ये निर्दिष्टा दासनैकृतिकादयः । कार्यगौरवमासाद्य भवेयुस्तेऽपि साक्षिणः ॥ तेषामपि न बालः स्यान्नैको न स्त्री न कूटकृत् । न बांधवो न चारातिर्ब्रूयुस्ते साक्ष्यमन्यथेति" [ अ० १ श्लो. १८८।१९० ] **नैकृतिको** विंबकः । **व्यासो**ऽप्याह—"साक्षिदोषाः प्रवक्तव्याः संसदि प्रतिवादिना । पत्रेभिलिख्य तान् सर्वान् वाच्याः प्रत्युत्तरं तु ते ॥ प्रतिपत्तौ नसाक्षित्वमर्हंति तु कदाचन । अतोऽन्यथाभावनीयाः क्रियया प्रतिवादिना ॥ अभावयन् दमं दाप्यः प्रत्यर्थी साक्षिणां स्फुटम् । भाविताः साक्षिणो वर्ज्याः साक्षिधर्मनिराकृताः ॥ जितः सविनयं दाप्यः शास्त्रदृष्टेन कर्मणा । यदि वादी निराकांक्षः साक्षिसत्येष्ववस्थितः " । इति । पत्रे लिखितान्साक्षिदोषानभिलक्षीकृत्य प्रत्युत्तरमुत्तरं तत्तद्विषयपरिहारं ते साक्षिणः सभ्यैर्वाचनीया इत्यर्थः । 'पत्रे तान् सर्वानभिलिख्य उत्तरमुत्तरं ते दोषा वाच्या' इति **कल्पतरुः । अतो**ऽन्यथा असंप्रतिपत्तौ भावनीयाः अंगीकारयितव्याः । क्रियया प्रमाणेन स्फुटं यथास्यात्तथा भावयन्नित्यन्वयः ।

ननु संग्रहणादित्रयाणामपि साहसशब्दवाच्यत्वाभेदेनोक्तिः मूले युक्ता इत्याशंकते । **मनुष्येति । उभयं ।** वाक्पारुष्यं दण्डपारुष्यं च । पारुष्येणैक्यादाह । **चतुरिति ।** उक्तक्रमविवक्षया आह । **स्त्रीसमिति ।** समाधत्ते । **तथापीति ।** जनसमक्षं स्वबलावष्टंभेन यत्करणं तेन उपाधिना क्रोडीकृतानामेषां साहसपदवाच्यत्वम् । एकान्ते यत्करणं तद्रूपोपाधेः एकत्वेऽपि विषयभेदेन भिन्नत्वात् तद्विषयभेदघटितरहःकरणोपायभेदात्संग्रहणादिशब्दवाच्यत्वमिति भावः । **तेषां** त्रयाणां । **सात्पृ**थगिति । साहसात्पागुपेति पाठांतरं । **तत्र** ततोऽग्रे उपादाने सामान्यविशेषभावेनान्वयसंभवेन त्रयाणामेव ग्रहणं स्यादिति तथेति भावः ॥ ७२ ॥

## याज्ञवल्कीये ७३ श्लोकस्य पूर्वार्धः ।

श्रवणम् । तद्विधिसाम्ययोरत्र विवक्षितम् । न तु तद्गमनमित्याह । **संनिधाविति ।** विशेषमाह । **समवेतानिति ।** मिलितानित्यर्थः । अत्र मानमाह । **नासमेति ।** पृष्टा अपि असमवेता नेत्याद्यर्थः । कर्माकांक्षायामाह । **वक्ष्येति ।** मूलकृतेति भावः । **तत्रापि** श्रावणेऽपि । **सभांतः** सभामध्ये । **अनुयुंजीत** पृच्छेत । नियुञ्जीतेति पाठान्तरं । तत्र मेलयेदित्यर्थः । विधिमेवाह । **देवेति । समस्तान्** मिलितान् । पृथक् पृथक् विज्ञातार्थानित्यर्थः। तत्रापि विशेषमाह । **ब्राह्मेति ।** शूद्रे तु न नियम इत्याह । **शूद्रमिति ।** अत एव तु 'ब्राह्मणामि' त्यस्य 'शापये' दित्यत्रान्वयस्तस्य चाग्रे उभयत्रानुषंगः । 'अन्यथाब्रुवत' इत्यस्य संपुटीकरणेन मध्येऽप्युभयत्र संबंधो ध्वनितः । तत्रापि विशेषमाह । **अत्र चेति ।** 'सत्येन शापयेदि' त्यत्रार्थे चेत्यर्थः । संबंधिनः अधिकरणत्वविवक्षया सप्तमी । **तेनैव** मनुनैव । **कारुः शिल्पीति ।** युक्तितौल्यादाह । **विप्रेति ।** तयोरपीत्यर्थः । एतच्च साक्षिसंत्रासा-

१ क–अत्रैतेषां २ ख–तथाच । ३ ख–उपाधिं विना । ४ ख–संग्रहः ५ ड–श्रावणे तद्वीधिःसामीप्यमात्रं ।

र्थमेव । यथाह **नारदः** ( १।२०० ) “ पौराणैर्धर्मवचनैः सत्यमाहात्म्यकीर्तनैः । अनृतस्यापवादैश्च भृशमुत्रासयेदिममिति ” । ‘ सत्येन त्रासयेद्विप्रमि ’ त्यपकृष्टब्राह्मणविषयं न ब्राह्मणमात्रविषयं ‘ तस्य **गौतमेन** शपथस्य निषिद्धत्वादिति ’ **कल्पतरुः** । ननु प्रतिवादिना साक्षिदोषे उक्ते तन्निर्णये साक्ष्यंतरापेक्षायां अनवस्था स्यात् । तदुक्तं **व्यासेन**–‘अन्यैस्तु साक्षिभिः साध्ये दूषणे पूर्वसाक्षिणाम् । अनवस्था भवेद्दोषस्तेषामप्यन्यसंभवादिति’। अतो विशेषमाह । **प्रतीति । दत्ते** सति । **दिषु** सत्सु । चाल्पादिषु । चापल्यादिष्वित्यपाठः। **तथैव** प्रत्यक्षेणैव। **अयोग्येषु** । दूषणेषु सत्सु । **तद्वचनात्** । साक्षिवचनात् । तदुक्तं **व्यासेनैव**–‘ सभासदां प्रसिद्धं यल्लोकसिद्धमथाऽपि वा । साक्षिणां दूषणं ग्राह्यमसाध्यं दोषवर्जनादिति ’ । असाध्यं साधनानर्हम् । दोषवर्जनात् । अनवस्था-दिरहितत्वात् ।

विशेषांतरमाह। **यदीति** । सारो बलम्। साक्षिभिन्नः साक्षिणां दूषणं स्फुटं यथा तथा साधयन् इत्याद्यन्वयः। **भाविते** साधिते सति । **साक्षिधर्मेति** । साक्षित्वानर्हा इत्यर्थः। विशेषांतरमाह । **उद्दिष्टेष्विति** । कथितेष्वित्यर्थः । **दुष्टेषु** सत्सु । **क्रियांतरेति** । प्रमाणांतरे इत्यर्थः । **व्यासं** मानमाह । **जित इति** । यदि वादी साक्षिसभ्यविषये निराकांक्षो व्यवस्थितः संपन्नस्तदा जितः पराजितः सन् स वादी शास्त्रोक्तविधिना विनयं दमं दाप्य इत्यर्थः। ‘साक्षिसभ्येष्वि’त्यत्र ‘साक्षिसत्येष्विति’ पाठांतरं । अर्थस्तद्वत् सूचितार्थमाह । **साकांक्ष इति** ।

## याज्ञवल्कीये ७३ ( उत्तरार्धः ) । ७४।७५ श्लोकौ ।

वक्ष्यमाणमित्युक्तमेव वक्तुमाह । **कथमिति** । वाक्यमिति शेषः । **इत्याह** । इत्यत आह । क्वचित्तु तथैव पाठः। सर्वानिति स्पष्टार्थः। स तानित्येकवचनबहुवचनाभ्यामेव तदर्थलाभात् । एवं सामान्येनोक्तं । विशेष्याह । **सुकृतमिति** । मूले पातकशब्देन वक्ष्यमाणभिन्नानां ग्रहणमित्याह । **पातकोपेति** । अत्राप्यनेन वक्ष्यमाणाभिन्नसर्वग्रहणमिति बोध्यं । स इत्यस्यार्थोऽ**सावेति । इति**-र्वाक्यार्थसमाप्तौ । अत एवाह । **तथेति** । किंचेत्यर्थः । ‘ वदति तथेति ’ पाठे वदति किंच भवती-त्यर्थः । **सुकृतं** पुण्यम् । **तस्य** तदीयम् । तदर्थमाह । **यस्ते इति** । तवानृतवाक्येनेत्यर्थः। ‘तवेत्येव’ पाठांतरम् । अस्य तत्र कर्मत्वमित्याह । **इति श्रावेति** । **मन्व**विरोधायाह । **एतच्चेति** । तमेवाह । **शूद्रमिति** । तदेकवाक्यतयैवाह । **गोरक्षेति** ।

ननु स्वल्पतरानृतवदनरूपदोषात्तादृशपापोत्पत्तावपि कथमतिबहुलमीदृशं फलमत आह। **अन्यानेकेति**। स्वयं अनेकजन्मभिरर्जितं यत्सुकृतं तस्यान्यत्र संक्रमणस्येत्यर्थः । कृतशब्दोऽर्जितपरः, शत-शब्दोऽनेकपर इति भावः। **उच्यते इति**।इदमित्यादिः। तथा चार्थवादोऽयमिति भावः। अत एवाह। **यथेति । धर्मेति** । स्मृतीत्यर्थः । सत्यसंबंधिमाहात्म्यस्य कीर्तनैरित्यग्रिमार्थः । **भृशमिति** । तथा चानृतवदनाभावे तात्पर्यम् ।

## याज्ञवल्कीये ७६ श्लोकः ।

**कथंचित्** कारणेन । **सः** नरः । सर्वमित्यस्य योग्यतादिना पूर्वार्द्धेऽन्वय इत्याह । **सर्वमिति** । तदर्थमाह । **सवृद्धिमिति** । योग्यत्वादेवाह । **धनिने इति** । यद्यपि ‘ सदशेति ’ ऋणविशेषणं तथापि धन्ययोग्यमिति तद्वाक्यात्पृथक् व्याचष्टे । **सदशेति** । दशबंधकेन सहितं । तथा दशशब्दो दशमपरः , बंधशब्दोंऽशपरः । स्वार्थे क इत्याह । **दशमांशकेति** । उक्तहेतोरेवाह । **दशमांश इति** । **च**स्त्वर्थे ।

१ ख–स्त्वसाक्षिभिः । २ क–अध्यवस्थितः । ३ ख–अर्थस्तदधस्तात्सूचितार्थः । ४ ख–सर्वस्वहरणमिति । ५ ङ–त्वत्र ।

ननु अयमपि वचनाद्धनिन एवास्तां किमित्येवं व्याख्यानं वैरूप्यापादकमत आह । **राज्ञेति** । तन्न्यायेनेत्यर्थः[1] । तथा च तदेकवाक्यता तल्लाघवमूलकमेव व्याख्यानमुचितमिति भावः । अस्य कालनियममाह**तच्चेति** । मन्वनुरोधेनैवाह । **प्राप्ते चेति** । एतत्तात्पर्यमाह । **ततोऽर्वागिति** । पक्षत्रयमध्ये इत्यर्थः । अतएव **हिः** प्रयुक्तः । स हि तत्रावदनस्य तद्धेतुत्वं प्रतिपादयति । विशेषमाह । **इदं चेति** । इदमपीत्यर्थः । आदिना राजदेवग्रहणं । **त्रिपक्षादिति** । त्रयः पक्षा यस्मिन्निति बहुव्रीहिः । ल्यब्लोपे इति कर्मणि पंचमी । ऋणादिविषये सार्द्धमासमभिव्याप्य साक्ष्यमब्रुवन्नगदोऽपीडितशरीरो नरस्तहृणं सर्वं सवृद्धिकं प्राप्नुयात् दद्यात् । **दशबंधं च** । दशमं भागं च । **सर्वशः** सर्वस्मै । राज्ञे दद्यादित्यर्थः । सर्वत इति पाठांतरम् । संख्यावाचिन परो बंधशब्दो दंडविशेषांशमात्रवचनः । नरग्रहणं सर्वतोग्रहणं श्लोकपूरणार्थमिति **मेधातिथिः** । युक्तिसाम्यादाह । **अगद इति** । विरहस्यापीत्यर्थः ।

## याज्ञवल्कीये ७७ श्लोकः ।

**जानन्निति** । 'विप्रतिपद्यमानमर्थमि' त्यादिः । **करोतीति** । **एवो** व्युत्क्रमे । नांगीकरोत्येवेत्यर्थः । ह्यर्थमाह । **पुनरिति** । त्वर्थे । **नरेति** । अस्यैवार्थो दौरात्म्यादित्यनेनोक्तः । साकांक्षत्वादाह । **विप्रेति** । विवादास्पदमित्यर्थः । द्वितीयह्यर्थमाह । **विशेषत इति** । लक्ष्यार्थमाह । **नांगीति** । **तुल्य इति** । तुल्य एवेत्यर्थः । एवस्यात्रान्वयात् तत्प्रयोजकधर्मात्राह । **पापैरिति** ।

ननु को दंडस्तेषामत आह । **कूटेति च दंड** च तेन कूटसाक्षिपरिग्रहः । अत एव विशेषमाह । **कूटेति** । इदमकृतव्यवहारविषयं अत एवाह । **कृतोऽपीति** व्यवहार इत्यस्यानुषंगः । पूर्वं तेषु तत्त्वज्ञानात् । अत एवाह **कूटेति** । कोटेति पाठान्तरम् । तत्र समस्तात्त्वभावप्रत्ययः । आद्येन दंडेन समासः । एवमग्रेऽपि । अकृतविषये उक्त्वा कृतविषये आह । **कृतं चापीति** ॥ ७७ ॥

## याज्ञवल्कीये ७८ श्लोकः ।

**साक्षीति** । नन्वित्यादि योग्यतया साकांक्षत्वादाह । **साक्षिणामिति** । 'वचनं ग्राह्यमि' त्यस्य सर्वत्र संबंधादाह **वचनमिति** । उत्तरार्द्धोपात्तस्य पूर्वार्धेऽपि संबंधादाह । **ग्राह्यमिति** । समत्वं संख्याकृतमेवेत्याह । **संख्येष्वेति** । अनुषंगेणाह । **द्वैधे इति** । तन्निष्ठद्वैधे इत्यर्थः । त्वर्थमाह । **पुनरिति** । प्रकर्षमाह । **श्रुतीते** । शेषमाह । **तेषामिति** । विशेषमाह । **यत्र त्विति** । **इति** इत्यनेन **त्वात्**[2] । तत्वप्रतिपादनात् ।

ननु प्राक्भेदादसाक्षिण इत्युक्तं, इदानीं तु भेदेऽपि साक्षिण इत्युच्यते ' द्वैधे इत्यनेनेति ' मिथो विरोधोऽत आह । **यत्त्विति** । **तत्सर्वेति** । यत्र संख्यागुणादिभिः सर्वैः साम्यं तत्र विशेषाभावा[3]द्भेदादसाक्षित्वम् । यत्र तु संख्यागुणादिभिर्वैषम्यं तत्र भेदेऽप्यनेन प्रकारेण साक्षित्वं भवत्येवेति भावः ॥ ७८ ॥

## याज्ञवल्कीये ७९ श्लोकः ।

**साक्षिभिरिति** । साक्षिभिरुक्तेऽपि स कथमित्याद्यन्वयः । तद्वचनस्याताद्दशस्यापि संभवात् । अत एव वक्ष्यति । ' यत्र त्वित्यादीति ' भावः । कथमित्यस्य पुनरुक्तिः **स्पष्टार्था** । अग्रिमस्य भिन्नपदस्य पूर्वत्रापि संबंध इत्याह । यस्येत्यस्य साक्षित्वं भवत्येवेति भावः । **यस्येत्यस्य**

१ क–तन्न्यायेनेत्यर्थः । २ मुख्यत्वात् । मि० पृ. ४८ पं. १२ ॥ ३ ख–विशेषाभावादेः ।

व्याख्या **वादिन इति** । अस्य न साक्षिण इत्यत्रान्वय इत्याह । **प्रतिज्ञामिति** । सा च पत्रारूढा न केवलेत्याह । **द्रव्येति** । लिङ्गर्थो न विवक्षित इत्याह । **वदंतीति** । तदाकारमाह **सत्यमेवेति** । एवेनासत्यत्वव्यवच्छेदः । **स इति** । तदिष्टसिद्धेरिति भावः । उत्तरार्धार्थमाह । **यस्येति** । **पुन**स्त्वर्थे वैलक्षण्याय शेषपूरणमिदम् ।

साक्षिण इत्यादेरनुवृत्तिः । अन्यथावादिन इत्येकम् । यस्य तु वादिनोऽ**न्यथा** प्रतिज्ञाविरुद्धार्थं वदन्ति तादृशाः साक्षिणो भवंति । तस्येत्यादिशब्दोऽर्थः । तत्फलितमाह । **प्रतिज्ञामिति** । सर्वथा यस्येत्यस्य प्रतिज्ञादौ अन्वयः न साक्षिण इत्यत्रेति तात्पर्यम् । अत एव द्वितीयांततया पदद्वयेन चोक्तिः । विशेषमाह । **यत्र त्विति** । **प्रतिज्ञार्थेति** । तद्रूपस्यार्थस्येत्यर्थः । प्रतिज्ञातार्थस्येति-पाठांतरम् । **आदिना** मोहादिः । **तत्र** तादृशे स्थले । तस्येति पाठांतरम् । **प्रमेति** । प्रकृतसाक्षि-भिन्नेनेत्यर्थः । अत्र हेतुमाह । **न चेति** । न हीत्यर्थः । राज्ञेत्युपलक्षणमन्येषामपि । अत्र हेतुमाह । **स्वभेति** । यत इत्यादिः । **मनुकात्यायनावाह** । **यथेति** । **तेषां** साक्षिणाम् । अत्रहेतुमाह । **यद्दोषेति** । यतो दोषवर्जितमित्यर्थः । 'दोषविवर्जितमिति । पाठेऽपि हेतुगर्भं विशेषणं । अत एवाहो**क्ते त्विति** । स्वभावोक्ते तु सतीत्यर्थः । दोषसंभवादिति भावः ।

## याज्ञवल्कीये ८० श्लोकः ।

पूर्वोक्तलक्षणैरित्यनेन साक्षिपरीक्षा उक्ता । अनिषिद्धैस्तपःस्वित्वादिगुणविशिष्टैश्चेति तदर्थः । स्वाभिप्रायविषये साक्ष्ये प्रतिज्ञातार्थवैपरीत्येनाभिहितेऽपीत्यन्वयः । यद्वाऽत्र साक्षी नामार्थी अभिमता-र्थस्य सम्यग्ज्ञाता, तस्य भावः साक्ष्यं, तदेव स्वस्यार्थिनोऽभिप्रायस्तात्पर्यविषयः । एवं च साक्ष्यपद-स्यैव व्याख्या । **स्वाभिप्राय इती**ति यथाश्रुत एवान्वयः । यद्वा स्वाभिप्राय इत्यस्य व्याख्या **प्रतिज्ञातेति** । 'पूर्वेभ्य' इत्यस्य मध्यमणिन्यायेनान्वयः । अग्रेऽपि तथा अर्थिनैव निर्दिष्टा इति भावः । **गुण्येनेति**[1] । सत्यमेतदितीत्यर्थः । समासांतराभ्रमायाह । **पूर्वे इति** ।

क्रमस्य विवक्षितत्वादा**हार्थीति** । परीक्षान एवाह । **प्रमाणेति** । प्रमाणभूत इतिवत् प्रयोगः । अत एव च्विर्न । **निगदिते** साक्ष्ये उक्ते । ' निगदे दत्ते ' इति पाठे सभ्यादिजनसमक्ष-मुच्चैर्निःसंदिग्धं भाषणं **निगद**स्तस्मिन् दत्ते कृते सतीत्यर्थः । स्मृत्यंतराविरोधमप्याह । **निर्णिक्ते इति** । शोधिते इत्यर्थः । **प्रमाणं** प्रमाणांतरम् । तदेवाह । **लिखितमिति** । अपिना भुक्तिसमुच्चयः । तत्र विशेषमाह । **पूर्वमिति** । उक्तमेवार्थं दाढ्र्याय सदृष्टान्तमाह । **यथेति** । **पक्केषु** पूर्णेषु पुष्टेषु । **प्रेति** । वर्षर्तोर्वर्षणरूपगुणा इत्यर्थः । निर्णिक्तेति बहुव्रीहिः । **प्रमाणं** प्रमाणांत-रान्वेषणम् ।

**आत्मेति** स्वात्मेत्यर्थः । बहुव्रीहिरयं । विसंवादित्वे हेतुरयं । **अनेति**[2] । शास्त्रप्रकटितदोषशू-न्यानामपीत्यर्थः । प्रसिद्धदृष्टदोषरहितानामपीति यावत् । स्वोपन्यस्तानामपीति भावः । **अर्थेति** । स्वार्थ-विरुद्धत्वेनेत्यर्थः । अपिना वचनसमुच्चयः । प्रतिज्ञातार्थस्य सत्यत्वेन स्वांतःकरणेनासावर्थ एवमेवेति दृढतर-प्रतीत्युत्पत्तेस्तदन्यथानुपपत्त्या साक्षिष्वपि दोषः कल्प्यते, न दृष्टप्रसिद्धदोषस्तेषु । तथा च परिकल्पित-दोषदुष्टत्वेन प्रमाणांतरान्वेषणाद्युपपन्नमेव । अंगीकृते च प्रमाणान्तरे व्यवहारदार्शिभिरपि व्यवहारः

१ " प्रतिज्ञानार्थगुण्येनेति " पृ ४८ पं २८ । २ अनाविष्कृतदोषांति पृ ४९ पं ३,

प्रवर्तनीय एव 'छलं निरस्य भूतेनेत्युक्ते' रिति भावः। तथा[1] च तथाऽपरितुष्यतोऽर्थिनोऽयं साक्ष्यंतरान्वेषणोपदेश इति नानवस्था नापि स्मृत्यंतरविरोध इति बोध्यम्।

ननु स्वप्रमित्या साक्षिष्वदृष्टदोषकल्पनं कथमतो दृष्टांतमुखेनोपपादयति। **उक्तं चेति**। **गौतमेनेति** भावः। **यस्य च** संप्रत्ययस्य। **करणं** चक्षुरादिकं दुष्टम्। काचकामलादिदोषयुक्तम्। यत्र चेदं रजतमित्यादिज्ञानविषये नेदं रजतमित्यादिबाधकप्रत्ययः। स एव द्विविधः प्रत्ययोऽज्ञानरूपोऽसमीचीन इति दृष्टांतवाक्यार्थः। तं प्रकृते योजयति। **यथेति**। **अनध्यावसायेति**। काचकामलादिप्रसिद्धं[2] तद्दोषाणामनिश्चयेऽपि। एवं सत्यपि अर्थस्य शुक्तिरजतादौ विसंवादादन्यथात्वात्तज्जनितस्येदं रजतमिति ज्ञानस्याप्रामाण्येन[3] चक्षुरादिगतदोषकल्पना यथा तथेहापि दार्ष्टांतिकेऽपीत्यर्थः।

न केवलं युक्तितः प्रमाणांतरान्वेषणसाधनमपि तु वचनबलादपीत्याह। **साक्षिपरीक्षेति**। साक्षिपरीक्षोपदेशतो भेदेन तद्वाक्येत्याद्यर्थः। तमेवाह। **साक्षिभिरिति**। 'उपस्थितान् परीक्षेत साक्षिणो नृपतिः स्वयमि' त्यस्य **नारदस्य** पूर्वार्धं। न केवलं साक्षिवचनमात्रेण निर्णयोऽपि तु तद्वचनपरीक्षयाऽपि। तथा च तस्यां क्रियमाणायां यदि तद्वचनमबाधितं तदा तस्य प्रामाण्यमन्यथा तु तेन साक्षिष्वपि दोषकल्पना स्यादेवेति तत्परीक्षाविधिबलात् गम्यते, अन्यथा तदानर्थक्यं स्पष्टमेवेति भावः।

अन्यदप्याह। **कात्यायनेति**। स्फुटमितस्तदर्थाप्रतीतेः कात्यायनोक्तं व्याचष्टे। **क्रियेत्यादि**। क्रियेत्यस्य व्याख्या। **साक्षीति** निषेधाविषयत्वमेव **नाप्ता इति**। **तं मनूक्तमेवाह**। **नार्थेति**। इत्थंच **मनुः**।

" सर्वधर्मविदोऽलुब्धा विपरितांस्तु वर्जयेत् ॥
नार्थसंबंधिनो नाप्ता न सहाया न वैरिणः ॥
न दृष्टदोषाः कर्तव्या न व्याध्यार्ता न दूषिताः ॥
न साक्षी नृपतिः कार्यो न कारुककुशीलवौ ॥
न श्रोत्रियो न लिंगस्थो न संगेभ्यो विनिर्गतः ॥
नाध्यधीनो न वक्तव्यो न दस्युर्न विकर्मकृत् ॥
न वृद्धो न शिशुर्नैको नांत्या न विकलेंद्रियः ॥
नार्तो न मत्तो नोन्मत्तो न क्षुत्तृष्णोपपीडितः ॥
न श्रमार्तो न कामार्तो न क्रुद्धो नापि तस्करः" इति ॥

( अ. ८ श्लो. ६३–६७ )

अध्यधीनः बन्धके धृतः। **शुद्धेति**। तद्दोषरहितेत्यर्थः। **चैस्त्वर्थे**। उत्तरार्द्धार्थमाह। **एवमिति**। उक्तप्रकारेणेत्यर्थः। पूर्वार्धाविरोधाय न्यूनतानिरासाय च शुद्धाद्वाक्याच्चेत्यन्वयेन च समुच्चयमाह। **शुद्धाया इति**। **च वाक्यादिति**। वाक्याच्चेत्यर्थः। **य इति**। योऽर्थः शुद्धोऽवगतो निश्चित इत्यर्थः। **स शुद्ध इति**। शुद्धपदस्य व्याख्या **तथाभूत इति**। सत्य इत्यर्थः। एवं तदुक्तेः शाब्दार्थमुक्त्वा

१ क–तथा च तथा। २ ख–प्रसिद्धदोषाणाम्। ३ ख–अप्रमात्वेन। ४ 'शुद्धाच्चे' त्यत्र पृ. ४९ पं. ८॥

प्रकृतसंगतये तात्पर्यार्थमाह । **करणेति** । करणदोषश्च बाधकप्रत्ययश्च तौ तयोरभावे सत्यर्थोऽवितथ एव सत्य एवेत्यर्थः । **इत्यर्थ इति** । तात्पर्यार्थः । अत्र 'यदा शुद्धेति' पूर्वार्द्धेन साक्षिलक्षण-क्रियारूपकरणगतदोषाभाव उच्यते । शुद्धाचेत्युत्तरार्धेन तु बाधकप्रत्ययाभाव इति बोध्यम् ।

**स्वयं** स्वयमेव । तथा च विरोधः स्पष्ट एव । **स इति** । सभ्यैस्तयैव क्रियया तस्य जयेऽवधृते निश्चिते सति स दुर्बलक्रियावलंबी पुनस्तां बलवतीं क्रियां नामुयादित्यर्थः । **कालमिति** निषेधक्रियाविशेषणम् । **निषेधात्** तत्कथनात् । अयं दर्शने हेतुः । कात्यायनः कर्ता । **नारदेति** । प्रागुक्तं 'आवेदितं नेति' वदता **नारदे**नापीत्याद्यर्थः । तृतीयांतस्य निषिद्धमित्यत्रान्वयः । एवव्यवच्छेद्यमाह । **न प्रागपीति** । **अपि**ना उत्तरसमुच्चयः । **उक्तेऽपि** । तात्पर्यार्थः उपसंहरति । **तस्मादिति** । **अपरितुष्यता** अर्थिना । विशेषमाह **एवंस्थिते इति** । **असन्नीति** । ईदृशाः साक्षिणोऽसन्निहिताः संभवंतीत्यर्थः । **ते एवेति** । पूर्वनिर्दिष्टा एवेत्यर्थः । एवेन अभिहितवचननिरासः । ननु तेषामेव पुनः कुतो न प्रश्नः । अतः **मनु**-माह । **स्वभेति** । साक्षिणो व्यावहारिकं व्यवहारागतं यत् वचनं स्वभावेनैव ब्रूयुस्तत् ग्राह्यमित्यर्थः । अस्योत्तरार्द्धं 'अतो यदन्यद्विब्रूयुर्धर्मार्थं तदपार्थक'मिति २ । साक्षिप्रकरणस्य व्यवहारविशेषप्रकरणपा-ठादाह । **सर्वव्येति** । तथा चात्रापि व्यवहारः समापनीयस्तेन अर्थिना स्वीयप्रतिज्ञाया अन्यथाभाव-मज्ञात्वैव प्रथममेवान्येषामपि साक्षित्वेन निर्दिष्टत्वात्स्वभावेनैव प्रकृते तेषां वचनस्य सत्वादिति भावः । **नारद**मपि साधकत्वेनाह । **निर्णिक्त इति** । पूर्वावेदनाभावे व्यवहारशुद्धौ प्रमाणान्तर ( म ) फलं तदशुद्धौ प्रमाणमेव अपरम् । इदमपि गुणवत्तमादीनां पूर्वावेदनाभावे । तच्छुद्धत्वे तु ततो व्यवहार-शुद्धिप्राप्तावपि उक्तरीत्या तेषामप्रामाण्येन पूर्वमुभयावेदनेन सामान्यलाभेन विशेषाणामसंभवेन तेनैव निर्वाह इति भावः । **पूर्वनिर्दिष्टा इति** । संकलयन् विशेषांतरमाह । **पूर्वनिर्दिष्टानामिति** **तथाविधाः** ततो गुणवत्तमा द्विगुणा वा । एवव्यवच्छेद्यमाह । **न दिव्यमिति** । ततोऽपि विशेषमाह । **तेषामिति** । साक्षिणामित्यर्थः । **असंभवे** भवे तु । अन्यथानुपपत्त्येति भावः । पूर्वपक्षे उक्तमनवस्थारूपदोषमेवं सति प्राप्तं परिहरति । **अतःपरमिति** ।

स्वप्रत्ययबलादपरितुष्यता अर्थिना प्रमाणांतरमंगीकार्यमित्युक्तं, नैवं प्रत्यर्थिन इति विशेषांतर-माह । **यत्र त्विति** । **मन्येति** । प्रत्यर्थिविशेषणम् । **अवसरेति** । प्रसंगेत्यर्थः । 'मिथ्या क्रिया पूर्ववादे' इत्युक्तेरिति भावः । 'अवतारेति' पाठांतरम् । **व्यसनोद्भवेनेति** । दुःखनिष्पत्त्येत्यर्थः । **कर्तव्यमिति** पूर्ववत् प्रमाणांतरान्वेषणाभावेन अगत्या प्रत्यर्थ्यपरितोषपरिपालनायेति भावः । **तत्र च** । सप्तसु दिनेषु **तावता** तावतैव अगतेरिति भावः । **सप्ताहादिति** । ल्यब् लोपे पंचमी । सप्ताहमभिव्याप्येत्यर्थः । 'अर्वागित्यध्याहार' इति तु **मेधातिथिः** । **उक्तेति** बहुव्रीहिः । साक्षिविशेषणम् । रोगादे-र्विकल्पो बोध्यः । **सः** साक्षी । **रोगो**ऽत्यंतपीडाकरः । **अग्नि**र्गेहधनदाहः । पुत्रदारादिप्रत्यासन्नमरणं **ज्ञातिमरणम्** । इदं च तस्य कूटसाक्षित्वे लिंगम् । एवं सति प्रसक्तं **मनुयाज्ञवल्क्य**योर्विरोधं परिहरति । **एतच्चेति** । 'यस्य दृश्येतेत्ये' **तन्मनूक्तं** च 'यस्योचुरिति' मूलस्यापवाद इत्यर्थः । कस्मिन् विषय इत्याशंकाया**माहापरीति** । एवेन विषयांतरव्यवच्छेदः । साक्षिभिः वाद्यभिमते एव साक्ष्ये उक्ते यदि प्रत्यर्थी परितुष्यति तदा मूलवाक्योक्त अर्थिजयः प्रत्यर्थिपराजयः तदा सप्ताहं साक्षिपरीक्षणाभावात् । यदा तु प्रत्यर्थिनोऽपरितोषेण तत्परीक्षणावश्यकतया तन्मध्ये साक्षिदो-

---

१ क-पूर्वावेदितो व्यवहारशुद्धौ प्रकृते तेषां वचनस्य सत्वादिति भावः । नारदमपि न सामान्यलाभेन विशेषाणाम-संभवेन तेनैव निर्वाह इति भावः । २ अ ८ श्लो ७८

षावधारणेन ते दोषवंतस्तद्वा 'यस्येति' मनुवाक्येन मूलवाक्यमपोद्यत इति प्रत्यर्थिनः जयोऽर्थिनः पराजय इति भावः। इदं च ऋणं गृहीत्वा याचनावस्थायां दत्तं नैव वा गृहीतमित्युक्त्वा विपरीतं धर्मस्थानं प्रविशति तद्विषयकं बोध्यम्।

उक्तेऽपीति। मूलवाक्यस्यैकदेशिव्याख्यानं दूषयितुमनुवदति। केचिदिति। व्याचक्षत इत्यत्रान्वयः। अस्य द्विकर्मकत्वादेकं कर्माह। वचनमित्यंतेन। द्वितीयमाह अर्थिनेत्यादितीत्यंतेन। अर्थेति। अर्थ्यर्थ्येत्यर्थः। अर्थ्यनुकूलमिति पाठस्तु सुगम एव। 'अर्थ्यर्थविपरीत'। अर्थ्यर्थे विपरीतं स्वानुकूलं इत्यर्थः। अत्र पक्षे पूर्वेत्यत्र षष्ठीतत्पुरुष इत्याह। पूर्वस्येति। तदर्थमाह। वादिन इति। दूषयति। तदसदिति। क्रियेति। क्रियाया एवानुपपत्तेरित्यर्थः। सामान्योक्तां तां विविच्य दर्शयितुमादावर्थिप्रत्यर्थिस्वरूपं प्रागुक्तमपि दाढर्यायाह। तथा हीति। अर्थ्यत इत्यर्थः। साध्यं तदस्यास्तीति व्युत्पत्तेराह। साध्यस्येति। प्रत्यर्थ्यर्थमाह। तत्प्रतीति। तदभेति। साध्याभावेत्यर्थः।

ननु भवतु तदभाववादित्वं प्रत्यर्थिनस्तथापि क्रियानुपपत्तौ तस्य किमायातमत आह। तत्राभावस्येति। तयोर्मध्ये इत्यर्थः। अयं भावः। न भावो अभाव इति व्युत्पत्त्या भावाधीनत्वमभावस्वरूपस्य तथाऽभाव इत्युक्ते कस्येत्याकांक्षायां पटस्येत्यादेः प्रयोगेण तस्य प्रतियोगित्वात्प्रतियोगिभूतघटादिनिरूपणाधीननिरूपणत्वे प्रतियोग्यधिकरणाभ्यामभावो निरूप्यत इति। अत एव तत्रांतरे उक्तम्। 'प्रध्वंसाभावस्यापि भावस्वरूपसिद्ध्युत्तरकालिकत्वमिति' सर्वथा भावसिद्धिसापेक्षसिद्धित्वमभावस्य इत्येतद्वैपरित्यात्तच्छरीरे तदप्रवेशात्स्वातंत्र्येण सिद्धिर्नत्वभावापेक्षया सिद्धिरिति अभावसिद्धिनिरपेक्षसिद्धित्वं भावस्य। एवं च सापेक्षनिरपेक्षसिद्धिकयोरभावभावयोर्मध्ये निरपेक्षसिद्धिकत्वेन भावस्यैव साध्यत्वं युक्तमिति।

नन्वभावस्य सापेक्षसिद्धिकत्वेऽपि साध्यता कुतो नास्तीत्यत आह। अभावस्येति। भावस्यैव साक्षात्साक्ष्यादिरूपप्रमाणप्रमेयत्वमभावस्य तु न साक्षादपि तु भावद्वारा। तथा च साक्षात्प्रमेयस्यैव साध्यत्वं, नातिभूयस्या परंपरया प्रमेयस्येति भावः। फलितमाह अतश्चेति। एवं च प्रत्यर्थिनस्तदनुपपत्तिरुक्ता सिद्धेति भावः। वाचनिकोऽप्ययमर्थ इत्याह। अपि चेति। सर्वत्रैव न केवलमत्रैव। नन्वेवमपि व्यवहारभेदवदत्रापि उभयोरपि अत्र क्रिया आस्तामिति न दोषोऽत आह। न चैकेति। नापीत्यर्थः। कातीयमाह। न चैकेति। दूषणमुपसंहरति। तस्मादिति।

पूर्वोक्तस्याशयांतरवर्णनद्वारा तस्यार्थांतरप्रतिपादकप्रागुक्तैकदेश्युक्तिमेव दूषयितुमनुवदति। अथ मतमिति। सामान्योक्तं विशिष्याह। मदीयमिति। तत्र कालविशेषोक्तौ तत एव निर्णयस्य प्रागुक्तरीत्या संभवादाह। पूर्वापरेति। प्राप्तौ तद्राहित्यमेवानाकलितम्। ननु एवमपि साक्षिभिस्तत्र निर्णयः स्यादत आह। तत्रेति। अत एवाह। कस्येति। नारदमाह। द्वयोरिति। व्याख्यातमिदं प्राक्। प्रतिज्ञायां कालानुक्तेराह। यः पूर्वं निवेदेति। प्राप्तिपूर्वत्वाज्ञानेऽपि निवेदनपूर्वत्वज्ञानेन तत्र निर्णय इति भावः। स्थिते इति। सिद्धांते इत्यर्थः। तस्यायमपवाद इत्युक्तम्। क्वापवाद इत्याशंकामपाकुर्वन् प्रकल्प्येवेति न्यायेन परिशेषादपवादविषयं वक्तुमादावुत्सर्गविषयमाहातश्चेति। अस्य तदपवादत्वाच्चेत्यर्थः। समेत्यादिनाऽपवादविषयता सूचिता। अपवादविषयमाह। यदा तूत्तरेति। अयमेव प्रतिवादी।

---

१ क–अनुवर्तते इति। २ ख–प्राप्तिपूर्वत्वा दानेपि पूर्वत्वदाने।

तथा चास्मिन्नेव विषयेऽपवादत्वमिति भावः। एवं व्याख्याने प्रागुक्तदोषाभावमाहै**वं चेति। ईदृश**विषयकत्वांगीकारे चेत्यर्थः।

ननु एवमादि पूर्वोत्तरयोर्वादिनोः साक्षिणां समत्वे पूर्ववादिनः साक्षिणः प्रष्टव्या इत्याद्युक्त्या एकस्मिन् विवादे द्वयोः क्रियाप्रसंगलाभेन प्राङ्न्यायेति। 'न चैकस्मिन् विवादे इति' च **कात्यायन**विरोध इत्यग्रिमं दोषद्वयं तदवस्थमेवात आह। **चतुरिति**। चोऽन्ते योज्यः। सत्यमिथ्याकारणप्राङ्न्यायोत्तरेष्वेव क्रियाव्यवस्था वादिप्रतिवादिनोर्द्वयोः क्रियाभावश्च। प्रकृतोदाहरणे तु द्वयोरपि प्रतिज्ञावादित्वेन तद्विलक्षणत्वान्न क्रियाव्यवस्थेति न द्वितीयतृतीयदोषाविति भावः। तृतीयदोषं प्रतिबंधाय युक्त्यन्तरेणापि खंडयन्नाहै**कस्मिन्निति**। स्थलविशेषे प्रागुक्ते इत्यर्थः। **परमते** सिद्धांतिमते। **तथेति**। अत्र पक्षे इति शेषः। यथा सिद्धांतिमते साक्षिभिरसाक्ष्ये उक्ते सति यत्र प्रतिज्ञातार्थस्यान्यथात्वेन स्वांतःकरणप्रत्ययाभावात्प्रमाणांतरांगीकारणमेवमस्मिन् मतेऽपि वादिप्रतिवादिनोः क्रियाद्वयं। **नारद**वचने जाग्रत्यपि यथा स्वांतःकरणप्रत्ययाविसंवादित्वेनोक्तरीत्या तत्र मते प्रमाणांतरांगीकरणं तथाऽस्मन्मतेऽपि 'न चैकस्मिन्निति' **कात्यायन**वचने जाग्रत्यपि उक्तरीत्यैकत्र विवादे तयोः क्रियाद्वयमिति भावः। **इतिर्म**तसमाप्तौ।

इदमपि दूषयति। **तदपीति**। **आचार्यः** विश्वरूपाचार्यः। 'विश्वरूपविकटोक्तिविस्तृति' संहारात्मकत्वे नास्य ग्रंथस्य तदनुयायित्वात्। **इत्यतः शब्दादिति**। अस्माद्वचनादित्यर्थः। एवं शाब्दत्वं निरस्य व्यंग्यत्वं निराचष्टे। **अर्थादिति**। प्रयोजनादित्यर्थः। **प्रकरणं** वक्तृश्रोतृबुद्धिस्थता। किंच प्रकृतोदाहरणे ताभ्यां तथोक्तावपि साक्षिणां साम्येऽपि प्रागुक्तरीत्या कालादिनिश्चयद्वारा निर्णयसंभवेन न तदर्थमस्योपयोगः। किंच नैकमुदाहरणमिति न्यायेन सामान्यशास्त्राप्रणयनानर्थक्यमिति तथैवोचितमिति दिक्। तदाहे**त्यलमिति**।

## याज्ञवल्कीये ८१ श्लोकः।

**दर्शिता इति**। अनुपदमेवेतिभावः। अन्येऽपि तेऽन्यत्र स्पष्टा। यद्यपि कूटकृतश्च ते साक्षिणश्चेति कूटकृतश्च साक्षिणश्चेति वा व्याख्यानं संभवति तथापि तथेत्यस्यावैयर्थ्यायैकदेशान्वयाभावाय च भेदेन व्याचष्टे। **य इति**। **आदि**ना सामादिपरिग्रहः। कूटान् साक्षिण इति पाठः। **मिथ्या**भूतानिति तदर्थः। 'साक्षिण'इति विशेष्यस्य प्रकरणाल्लाभः। अत एवाह। **साक्षिणश्चेति**। **तथेत्यस्य** व्याख्या **कूटा इति**। ते प्रागुक्ताः सर्वे। 'विवादादि'त्यस्य सान्निध्यात् द्विगुणमित्यत्रान्वयः। तदास्पदद्रव्यादित्यर्थे तस्य नियमेन अनियतदंडापत्तिः। तस्य स्वल्पत्वेन च बहुदंडापत्तिरधनव्यवहारेऽव्याप्तिश्चातोऽन्यथा व्याचष्टे। **विवादादिति**। हेतौ पंचमी। पराजये तस्य लक्षणा पूर्वत्रापि तस्याः सत्वेनात्राविशेषात् दंडे चान्वयस्तदाह। **विवादपराजये इति**। सतीति शेषः। गर्गदंडनन्यायेन समुदाये दंडविश्रांतिवारणायाह। **पृथगिति**। इदं द्वितीये सफलम्। दंडं दंडनीया इति धनपेषं पिनष्टीतिवत् प्रयोगः। लक्षणा वा। यद्यपीदं सामान्योक्त्या सर्ववर्णसाधारणं तथापि विप्रे विशेषं तुर्यपादार्थमाह। **ब्राह्मण इति**। तुर्वैलक्षण्ये। निर्वासनं बहिष्कारः। अत एव विवासव्यतिरेकमाह। **न दंड्य इति**। उक्तार्थमाह। **ब्राह्मणेति**। दंडविषयो नेत्यर्थः। मन्वविरोधाय संकोचेन विषयविशेषपरत्वमाद्यार्थस्याह। **इति तच्चेति**। पादत्रयोक्तं चेत्यर्थः। तत्राद्ये आह। **लोभादिति**।

१ प्रागुक्ताद्यदोषाभावं। २ ख-चोक्तरीत्या। ३ 'गर्गान् शतं दंडयती' त्यत्र न गर्गे प्रत्येकं शतं दंडः। अपितु समुदाये इति॥

दंड्य इत्यस्याग्रेऽनुषंगः । **पूर्वं तु साहसम्** । सार्धपणशतद्वयं । भयात् द्वौ मध्यमौ दंड्य इति पाठः । द्वौ मध्यमौ साहसावित्यर्थः । पणसहस्रमिति यावत् । ‘ भयाद्वै मध्यमो दंड्याविति ’ त्वपपाठः । असंबद्धत्वात् । **पूर्वं** पूर्वं साहसं । **चतुर्गुणं** पणसहस्रम् । एवमग्रेऽपि । **परं** उत्तमसाहसम् । **त्रिगुणं** पणसहस्रत्रयम् । पूर्वापेक्षया परो मध्यमसाहसस्तस्मिन् त्रिगुणे पंचदशशतानि संपद्यंते इति **कल्पतरुः** । भासमानपौनरुक्त्याभावाय हेतून् व्याचष्टे । **लोभ** इत्यादि । ‘मैत्र्या ’ इति पाठः इत्याह । **मैत्रीति** । मैत्र्यादिति पाठांतरम् । मैत्रीति ष्यञंतोऽञंतश्च । अयं व्यतिकरः संबंधः । नञोऽल्पार्थत्वेनाह । **अस्फुटमिति** । एतेन ‘ व्यवहारकाले एव विपरीतं ज्ञानमिति ’ **कल्पतरूक्त**मपास्तम् । मोहेन पौनरुक्त्यापत्तेः । **बालिश्यं ज्ञानेति** । तदुत्पत्तिप्रागभाव इत्यर्थः । बालिश्यमत्राप्राप्तमात्रयौवनत्वं न बाल्यं तस्य साक्ष्यानिषेधादिति **मेधातिथिकल्पतर्वादयः** । पूर्वाध्यायांतोक्तावष्टंभेनाह । **सहस्रादिष्विति** । तथा च पणानां सहस्रमित्याद्यन्वयः ।

एवं लोभादिकारणविशेषपरिज्ञाने दंडमुक्त्वा कौटसाक्ष्याभ्यासे दंडविशेषं तदुक्तमेवाह । **तथेति** । शब्दतस्तद्विषयत्वाप्रतीतेस्तत्स्पष्टयति । **एतच्चाभ्यासेति** । यद्यपि सकृदपराधे पूर्वमुक्तत्वादर्थादेवेदमभ्यासविषयं दंडाधिक्योक्त्या परिशिष्यते तथापि शाब्दत्वमप्यस्येति सूचनायाह । **कुर्वाणानिति** । वर्तमानार्थकलट्स्थानिकःशानजंतेन निर्देशादित्यर्थः । अयं भावः । अनभ्यासे एकदैव कृतत्वेन भूतार्थकक्तवंतत्वेन कृतवत इति निर्दिष्टव्ये वर्तमानार्थकलटस्थानिकशानजंतेन कुर्वाणानित्युक्त्या क्रियायाः प्रारब्धापरिसमाप्तत्वरूपवर्तमानत्वेन पुनः पुनः कौटसाक्ष्याभिधानस्यापरिसमाप्तत्वाद्वर्तमानत्वमेव तस्येत्यभ्यासविषयत्वस्यैवास्य सूचनादिति । अत्र यतः कौटसाक्ष्यं तत एव पुनःपुनरभिधानं न तु पुनः पुनः प्रश्नपूर्वकमिति न पूर्वविरोध इति बोध्यम् । इदं व्याचष्टे विशेषं वक्तुं । **त्रीन्वर्णानिति** । ब्राह्मणस्य दंडांतरविधानादाह । **क्षत्रीति** । दंडस्यात्रानुक्तत्वादाह । **पूर्वोक्तमिति** । ‘ एतानाहुः कौटसाक्ष्ये प्रोक्तान् दंडान् मनीषिभिः ॥ धर्मस्याव्यभिचारार्थमधर्मनियमाय चेति ’ । श्लोकमात्रव्यवहितेन लोभादित्यादिनोक्तमित्यर्थः ।

ननु प्रवासयेदित्यस्य कथमयमर्थोऽत आह । **अर्थेति** । प्रवासेति उपसर्गांतरासंसृष्टस्येत्यर्थः । अतः ‘ सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेदिति ’ स्तेयप्रकरणस्थमूलविरोधो नेति बोध्यम् । नन्वस्य धर्मशास्त्रत्वेन कथं तथाऽत आह । **अस्य चेति** । कौटसाक्ष्यमिति वचनस्येत्यर्थः । एतदंतर्गतमपि तदस्तीति प्राक् प्रतिपादितम् । मारणमेव केवलं सर्वत्र नार्थः । किंतु अन्योऽपि । तस्यानेकविधत्वमाह । **तत्रापीति** । अर्थशास्त्रेऽपीत्यर्थः । **कौटसाक्ष्यविषयेति** । तद्भेदेनेत्यर्थः ।

एतेन तदेव कथमिति शंका निरस्ता । **त्वं च** त्वं तु । ‘भवती ’ त्यन्वयः । क्रमेण निमित्तानि व्याचष्टे । **अत्यन्तेति** । एतत्तुर्यपादार्थमाह । **ब्राह्मेति** । केवलविवासनस्य मूले उक्तत्वेन अभ्यासे आधिक्यस्यापेक्षितत्वेन मध्यपातिदंडयित्वेत्यस्य मध्यमणिन्यायेन अत्राप्यन्वयादाह । **दंडेति** । अर्थांतरमाह । **यद्वेति** । एवमग्रेऽपि । बहुव्रीहेर्लाघवात्तत्पुरुषमाह । **वासस इति । वासो गृहमिति** । हलश्चेत्यधिकरणे घञ् । अग्रे प्रक्रिया पूर्ववत् । इति मन्वर्थसमाप्तौ । अस्यां व्यवस्थायां **यदपरार्केण** दूषणं दत्तं तदाशयाज्ञाननिबंधनमिति **व्यवहारोदधिसेतौ** प्रतिपादितं तत एव बोध्यम् । ननु मूलेन विवासनस्य उक्तत्वेन न ब्राह्मणस्य सर्वत्र साक्षिविषये विवासनमेव नार्थदंड इति

१ ख–अस्तीति । २ ख–मूलेऽपि ।

व्याख्याते न च तस्य केवलार्थदंडः क्वापि न स्यादिति चेन्न सोऽपि हि अस्तीति प्रागुक्तं व्यवस्थापय न्नाह । **ब्राह्मणेति ।** प्रकृतमूलविषयत्वाभावादाह । **तत्र तत्रोक्त इति ।** लोभादौ निमित्ते लोभं चेतीति पाठः । लोभादित्यादि**मनूक्त** इत्यर्थः । एवेन विवासनव्यवच्छेदः । **अभ्यासे त्विति ।** 'लोभादिकारणविशेषपरिज्ञाने'इत्यादिः । अत्रापि प्रकृतमूलाविषयत्वादव्यवहितकौटसाक्ष्यं त्विति मनूक्तमा**हार्थेति ।** अत एव विशेषं प्रागुक्तमेव अव्यवस्थायां व्यवस्थितमाह । **तत्रापीति ।** विवासनांशेऽपीत्यर्थः । **अनुबंधो** गुणः । 'न वेतीति पाठः । एवं तत्परिज्ञानेऽनभ्यासे उक्त्वा तदपरिज्ञाने तत्र आह । **लोभादीति ।** अत्रोक्त**मनु**द्वयस्यापि प्रागुक्तस्याप्राप्तेर्विशिष्यान्वयस्य तस्यानुक्तत्वात्सामान्यभूतपृथगिति पादत्रयविषयत्वेनाह । **क्षत्रियादिवदिति । एवे**न मूलोक्तविवासनिरासः । विषयस्याल्पत्वात्तद्दंडस्य महत्त्वात् ।

नन्वेवं मूलतुर्यपादस्य निर्विषयतापत्तिरत आह । **महेति ।** उक्तनिमित्ते एवेति भावः । विषयभेदमात्रं अन्यत्सर्वं प्राग्वत् । **नमेवेति ।** मूलेन तस्यैवोक्तत्वात् । मनूक्ताविषयत्वात् विशिष्य दंडानुक्तत्वात् सामान्योक्तस्य तेन बाधाच्चेति भावः । **एवे**नार्थदंडनिरासस्तथा सतीति तात्पर्यम् । **अत्रापीति ।** लोभादिकारणविशेषापरिज्ञानादौ महाविषयेऽपीत्यर्थः । **सर्वेषां** ब्राह्मणादीनां । एवेन दंडांशे वैलक्षण्यनिरासः । अन्याविषयत्वादाह । **मनूक्तमिति ।** 'कौटसाक्ष्यमि' त्यनेनोक्तमित्यर्थः । यद्वा मनूक्तत्वेन साम्यादुभयांशेऽप्यवैलक्षण्यं बोध्यम् । यद्वा एवो व्युत्क्रमे । **मनू**क्तमेवेत्यर्थः । अन्याविषयकत्वसूचक एवकार इति बोध्यम् ।

**न चेति ।** समग्रधनमक्षतमित्याद्युक्तेर्विंध्यनुपलंभाच्चेति भावः । तथा च **मानवे** 'दंडयित्वेति' पूर्वान्वयो वेति बोध्यम् । तत्रादौ युक्तिमाह । **अर्थदंडेति ।** यत इत्यादिः । **निषिद्धे इति ।** 'न शारीरो ब्राह्मणस्य दंड' इति **गौतमादिनेति** भावः मनु । मूलस्य तुल्यार्थकत्वेन तत्प्राप्तमाह । **नग्नीति ।** अन्यत्रांकनस्याप्युक्तत्वादाह । **अंकेति ।** समाहारद्वंद्वः । एतदन्यतममित्यर्थः । ननु दंडस्य महत्त्वेनापराधस्याल्पत्वेन वैषम्येणायोग्यतया कथमेतत्प्रसक्तिरत आह । **दंडाभावो वेति ।** अन्यदंडस्यानुक्तत्वात् । न चेदं युक्तं दंड्यादंडनेन राज्ञो दोषस्योक्तत्वात् । अधर्मवृद्ध्यापत्तेश्चेति भावः ।

ननु धिग्दंडवाग्दंडावुक्तावेवेति । तौ यथासंभवं तत्र भविष्यतोऽत आह । **चतुर्णामिति । मनू**क्तिरियम् । अत्र शारीरामिति क्षत्रियादिपरम् । धनेति साधारणं इति भावः । धर्मादनपेतं धर्म्यम् । ननु "ब्रह्महा च सुरापश्च स्तेयी च गुरुतल्पगः ॥ एते सर्वे पृथक् ज्ञेया महापातकिनो नराः ॥ चतुर्णामपि चैतेषां प्रायश्चित्तमकुर्वतां ॥ शारीरमित्यादि" । तत्र पाठो दृश्यते । एवं च ब्राह्मणपरतयाऽप्युपपत्तिरस्य । अत एव 'शारीरं धनसंयुक्तमि' त्यस्य स्वरसतस्संगतिः । तस्य च 'दशस्थानानि' 'उपस्थमुदरमि' त्यादिनोक्तमित्यर्थ इति नेदं साधकमत एव **यमस्मृ**तिरपि "सर्वेषामेव वर्णानामन्योन्यस्यापराधिनाम् । शारीरं कारयेदिति" । तादृशानां क्षत्रियादिवर्णानां सर्वेष्वपि ब्रह्महननादिष्वित्याद्यर्थः । अधिकरणस्य संबंधित्वेन विवक्षया षष्ठी । **एवो**ऽप्यर्थे । अत आह । **सहस्रमिति ।** स्त्रीसंग्रहप्रकरणे **मनू**क्तिरियम् । **चस्मेति ।** स्मरणाच्चेत्यर्थः । आदौ तथेति पाठे अत्रापः पाठः ।

नन्वेवं **शंख**विरोधस्तत्र त्रयाणां क्षत्रादीनां धनापहरादित्रयमुक्त्वा ब्राह्मणस्य विवासनांककरणयोरेवोक्तत्वात्तथा च स्थलविशेषे तथासत्वेऽपि सामान्येनार्थदंडस्तस्य नैव युक्तोऽत आह । **यत्तु**

---

१ विवासनं वां नग्नीकरणमिति । २ ख—अत्रकस्यपि प्रागुप्तस्यांनाप्तेः ३ सामान्योक्तस्यानेन बाधाच्चेति । ४ ख—अधद्ध्यापत्तेश्च ।

**शंखेति त्रयाणां** क्षत्रियादीनाम् । **धनेति** । वधश्च बंधक्रिया च ते धनापहारश्च ते च ता इत्यर्थः । **विवेति** । समाहारे द्वंद्वः । **सर्वस्वेति** । तथा च तथोक्त्या ब्राह्मणस्य सर्वस्वहरणं तात्पर्यतो निषिध्यते नार्थदंडमात्रमिति भावः ।

ननु प्रकृते वधशब्दसांनिध्येऽपि सर्वस्वहरणस्य तत्साहचर्यस्यान्यत्राद्दष्टत्वात् प्रकृते तत्सहपाठमात्रेण कथं तस्य तत्परत्वमत आह । **शारीरस्त्विति । मानव**मेवेदम् । **जीवितांतः** तद्ग्रहणांतः । एवमग्रेऽपि । 'प्रकीर्तित' इत्यस्योभयान्वयो मध्यमणिन्यायेन । तथा च अर्थदंडस्तु तदादिस्तदंतः प्रकीर्तितः । **च** किंचार्थं । **स तथैव** तत्सदृश एवेत्यर्थः । **मनु**विरोधं परिहरति । **यदप्युक्तमिति । प्रथमकृतेति** । स्त्रीसंग्रहणाख्यप्रक्रांतसाहसविषयकमित्यर्थः । प्रकरणादेवेति भावः । नतु सहपठिततया साधनवच्छारीरस्यापि । ब्राह्मणप्राप्तिः स्यादत आह । **शारीरस्त्विति । कदाचित्** कदाचिदपि । 'राष्ट्रादि'त्यस्य प्राचीनं **मान**वमाह । **न जात्विति** । सर्वपापेषु स्थितमपि ब्राह्मणं कदाचिदपि न हन्यादित्यर्थः । **सामेति** । पातकसामान्येनेत्यर्थः । 'अक्षतमि' त्यग्रिममपि **मानवं** हेत्वंतरतया आह । **तथेति** । समुच्चयेऽयम् । **भूयान्** अधिकः । **इतीति** । सामान्येन मनुस्मरणादित्यस्यानुषंगः । प्रपंचितमिदं प्राक् तत एव बोध्यम् ।

## याज्ञवल्कीये ८२ श्लोकः ।

**अपि चेति**। साक्षिणामुक्तदोषान्यदोषे दंडांतरमाहेत्यर्थः। अत एव तुरुक्तवैलक्षण्ये। 'न ददातीति' प्रयुक्तमूलापौनरुक्त्यायाह । **अंगीकृत्येति** । ल्यबन्तस्य निह्नुते इत्यत्रान्वयः । 'अन्यै' रित्यादेरुत्तरेणान्वयः । **साक्ष्यमिति** । यदित्यादिः। **निगदनकाले** । भाषणकाले इदमर्थलब्धम् । तेषां तमःकार्यत्वादाह । **रागादीति** । हेतुगर्भविशेषणमिदम् । तादित्यस्यार्थं प्रक्रांतत्वादाह । **साक्ष्यमिति** । प्रकृतत्वात्तदर्थमाह । **साक्षिभ्य इति**। निह्नवमेवाह । **नाहमिति** । विवासमित्यस्योक्तार्थकस्यानुवृत्तेराह । **विवासेति** । ननु 'यःस इति' सामान्योक्त्या पादत्रयोक्तदंडस्य सर्ववर्णविषयत्वं सकृदपराधेनाभ्यासे तद्गमकाभावात्, 'तमोवृत इति' हेतूक्त्या तत्रापि लोभादिसारया सामान्यपरिज्ञानविषयत्वलाभेऽपि न तद्विशेषपरिज्ञानविषयत्वं गमकाभावात् एवं साक्ष्यंगीकारादिपूर्वकनिह्नवदोषस्य पूर्वत आधिक्येन द्विगुणदंडादष्टगुणदंडोक्तावपि तद्वदत्राप्यन्यविषयत्वं न ब्राह्मणविषयत्वं तत्र विवासनस्यैव व्यवस्थापितत्वात्तुर्यपादेन । एवं सति अत्र तुर्यपादेन सामान्यमात्राष्टगुणदंडापवादेन विप्रस्य कथं विवासनविधिः ? न हि पूर्वदंडोऽपि महाविषयक एवेति वक्तुं शक्यः तत्र विवासनस्यैव व्यवस्थापितत्वादत आह । **ब्राह्मणमिति । त्व**र्थमाह । **पुनरिति** । स्वल्पविषये बहुदंडस्यायोग्यत्वात् । तत्र ब्राह्मणे अर्थदंडस्यानुपदमेव व्यवस्थापितत्वादाह । **अष्टगुणेति** । अयं भावः । यद्यपि सामान्येनार्थदंड उपदिष्टो **योगिना** तथापि तद्दानसमर्थं प्रत्येवायमुपदेशो नासमर्थं प्रतीत्यवश्यं वक्तव्यमन्यथा मुनेर्भ्रांतत्वापत्तिस्तथा च ब्राह्मणस्यापि तत्सामर्थ्ये तद्विषयेऽयमेव मुख्यः, तदसंभवेऽनुकल्पो विवासनम् । एतद्वैलक्षण्यसूचक एव **तुः** । सर्वथा तस्य शारीरदंडाभावेन सेवादिनिषेधेन चानुकल्पांतरस्यासंभवात्सर्वथा दंडाकरणे राज्ञो दोषश्रवणात्प्रागुक्तविवासनमेव तस्यानुकल्प इति । यत्तेन प्रधानक्रियानिरूपितवैलक्षण्यसूचकतुशब्दविरोधाद्दष्टगुणेत्यादिचिंत्यादिचित्यामिति **वीरमित्रोदयोक्त**मपास्तं पुनः स्पष्टार्थमाह । **विवेति । एतत्** त्रितयस्वरूपमित्यर्थः । नन्वेवं क्षत्रादेरपि तदसंभवेऽनुकल्पो वाच्योऽन्यत्रात्र चानुक्तत्वादतः प्रागुक्तरीत्या न्यूनतां निराचष्टे । **इतरेषां त्विति** । क्षत्रियादीनामित्यर्थः । तथाचैकत्वमत्राविव-

क्षितमिति भावः । यदा तु लोभादिकारणविशेषपरिज्ञानं न ददातीति प्रागुक्तमूलापौनरुक्त्यायाह । **अंगीकृत्येति ।** सिंहावलोकनन्यायेन पूर्वत्रापि न्यूनतां निराचष्टे । **एतच्चेति ।** विप्रस्य दंडदानासमर्थस्य विवासनं, क्षत्रादीनां तदसमर्थानां कर्मकरणादीति यदुक्तं तदित्यर्थः । य इत्याद्युक्तेरेकस्यैवेदं इति भ्रमनिरासायाह । **यदेति । समानेति ।** प्रागुक्तरीत्या पृथक् पृथक् दंड्या इत्यर्थः । तथा च मूलमुपलक्षणम् । 'ग्रहं संमार्ष्टीतिवदुद्देश्यविशेषणमेकत्वमविवक्षितं वेति न न्यूनतेति भावः । अभ्यासो महाविषयश्च तदा प्रागुक्तरीत्या सार्थदंडविवासनम् । नत्वत्रापि यथायथं बोध्यम् । विशेषमाह । **यदा त्विति । तदाऽनुबंधेति ।** जातिद्रव्यगुणाद्यपेक्षयेत्यर्थः । **उक्त्वेति ।** उक्तेति पाठे समस्तम् । तत्र हेतुमाह । **वागिति ।** वाचश्छलमन्यथात्वं तदान्विता इत्यर्थः । विशेषांतरमाह । **न चेति ।** नापीत्यर्थः । प्रकारांतरमपि न कार्यमित्याह । **भेदयेदिति ।** स्वयं रहस्यगमनेऽपि अन्यद्वारा भेदोऽपि न कारिणीय इत्यर्थः । अत एव चोक्तिः । मूले रह इत्यव्ययम् । एतत्फलमाह । **हीयेतैवमिति ।**

उपस्थितत्वादुक्तव्युत्क्रमेणाह । **अवचनमिति ।** सर्वत्र व्यवहारे पूर्वोक्तमूलाभ्यामिति भावः । अग्रे एकस्यैवोक्तत्वादाह । **अपवादार्थमिति ।** अन्यथाऽपवादमित्येव ब्रूयात् ।

## याज्ञवल्कीये ८३ श्लोकः ।

वर्णशब्दस्य धर्मपरत्वस्यापि सत्वादाह । **वर्णिनामिति ।** अर्थांतराभ्रमायाह । **शूद्रेति ।** अत्र प्रातिलोम्येन कथनं हीनस्यापि वधो गर्हितः, किमुत्कृष्टस्येत्यन्यत्राप्येवं बोध्यं इति ज्ञापनार्थं हिसूचितमाह । **सत्येति ।** तदानीं तस्याभावादाह । **संभेति ।** अन्यसंग्रहाय तात्पर्यार्थमाह । **सत्यमिति ।** तदेवाह । **अनेन चेति । चो** वाक्यालंकारे । प्रागुक्तक्रमेणाह । **असत्येति ।** उभयाभ्यनुज्ञाने उक्तेऽपि कुत्र किमित्याशंकायां तयोर्व्यवस्थां दर्शयितुमुक्तक्रमेणैवादावसत्यवचनाभ्यनुज्ञाविषयमाह । **यत्र शंकेति ।** एतत्स्वरूपमादावुक्तम् । अवचनाभ्यनुज्ञाविषयमाह । **यत्र त्विति ।** वचने च तत्रापि[1] । तत्र विशेषमाह । **राजेति ।** यदीत्यस्य तात्पर्यमाह । **अथेति ।** कथमपि न मुंचतीत्यन्वयः । साक्षिण इति शेषः । **तस्यापि ।** भेदस्यापि । तत्र बीजमाह । **असत्येति ।** ननु तत्र दोषैक्येऽपि दुष्टत्वं तदवस्थमेवात आह । **तत्र चेति ।** तद्दोषनिरासार्थं चेत्यर्थः ।

**तर्हीति ।** उभयाभ्यनुज्ञायामित्यर्थः । किमितिशेषः । नन्वित्यादिः । तच्छब्देन तयोरुक्तक्रमेण परामर्श इत्याह । **अनृतेति ।** द्विजैरित्यनेन शूद्रनिरासस्तस्यापि साध्यत्वात् तस्य तु प्रायश्चित्तं **विष्णु**नोक्तम् । 'शूद्रश्चैकाहिकं गोदशकस्य ग्रासं दद्यादिति' । **एकेति ।** एकदिनभक्षणपर्याप्तमित्यर्थः । ब्राह्मणभोजनन्यायेनाह । **एकैकश इति ।** सरस्वद्देवताकत्वनिरासायाह । **सरस्वतीति ।** अत्र शास्त्रेऽपरिभाषणादाह । **अनवेति ।**

ननु साक्ष्यनृतवचनावचनयोः स्थलविशेषे शास्त्राभ्यनुज्ञाने यदि प्रत्ययाभावस्तर्हि प्रायश्चित्तोक्तिरफला, अथ यदि प्रत्यवायस्तर्ह्यभ्यनुज्ञानं व्यर्थमिति मिथो विरुद्धमिदमत आह । **इहायमभीति ।** अभिप्राय इत्यर्थः । अनृतवचनावचननिषेधौ द्विविधौ, साधारणावसाधारणौ च । तत्राद्यौ 'नानृतं वदेत्य'नारभ्याधीतः 'अब्रुवन् विब्रुवन्वे' त्यादिकौ, द्वितीयौ तु 'स तान् सर्वानवाप्नोति यः साक्ष्यमनृतं वदेदिति' 'अब्रुवन् हि नरः साक्ष्यमिति' च । एवं सति प्रकरणात् द्वितीययोरेव शास्त्राभ्यनुज्ञावशात्तयोर्न प्रायश्चित्तमाद्ययोर्व्यवहितत्वात्तयोरव्यवहितत्वादित्याह । **साक्षिणामिति । तदिहेति ।**

---

१ क—तत्रापि ।

अत्र मूले पूर्वार्धेनेति भावः । नन्वेवं प्रायश्चित्तविधानं व्यर्थमिति चेन्न । साधारणनिषेधापवादाभावात्तत्राभ्यनुज्ञाभावात्तदतिक्रमजन्यदोषपरिहारायास्य साफल्यात् यच्छब्देन बुद्धिस्थवाचिना तयोः परामर्शसंभवादित्याह । **यस्त्विति** । नन्वेवं वर्णिनामित्यभ्यनुज्ञापरवचनमनर्थकम् । सामान्यतो निषिद्धभूतवचनातिक्रमजन्यदोषयोस्तथाऽप्यवस्थितत्वादित्याह । **न च मतव्यमिति । निमित्तेति** । निमित्तिनिमित्तकेत्यर्थः । पूर्वं मूले तथा क्रमस्य सत्वात्तदनुरोधेनात्र सर्वत्रानृतवचनस्य पूर्वनिपातः । **प्रत्यवायस्येति** 'जातावेकवचनं' । एवमग्रेऽपि । तत्र प्रत्येकाभिप्रायं वा हेतुमाह । **यत इति** । साधारणनिषेधातिक्रमजन्यप्रत्यवाययोर्भूयस्त्वाभावप्रतिपादकतया तस्य सार्थक्यामिति भावः ।

ननु ब्रह्महत्याविचारे पापं भवति, तथोद्योगे ततोऽधिकं, तद्धनने कृते तु महत्पापमिति पूर्वपूर्वापेक्षयोत्तरोत्तरस्य पातकस्याधिक्येऽपि हत्यानिमित्तकमहाप्रायश्चित्ते कृते आनुषंगिकविचारोद्योगादिजन्यानामल्पीयसामपि पापानां यथा निवृत्तिस्तथेहापि तत्राभ्यनुज्ञावचनेन महतः प्रत्यवायस्य निवृत्तेरनुषंगासिद्धसाधारणानृतवचनावचननिषेधातिक्रमजन्यस्वल्पप्रत्यवाययोरपि निवृत्तिः स्यादिति तदर्थं प्रायश्चित्तोपदेशो व्यर्थ एवेत्याशयेन शंकते । **यद्यपीति** । यस्य कस्यापि । 'तथाऽपीह' इति । वचनद्वयकरणादिह तथा न अन्यथाऽन्यतरवैयर्थ्यं स्पष्टमेव । अभ्यनुज्ञावचनात्तथासिद्धाविव प्रायश्चित्तवचनादेतत्सिद्ध्यतीत्युभयोरुल्लेखः । साक्षिग्रहणमुपलक्षणमित्याह । **एतदेवेति** । स्वातंत्र्येणानुक्तत्वात् । **अन्यत्र** साक्षिभिन्नेषु । **अनृतेति** । सामान्यवचननिषिद्धेत्यादिः । अत एव तत्र प्रत्यवायाभावात् । एवं तौल्येऽपि कश्चन विशेषमाह । **न चेति** । मूलोक्तं तु साक्षिविषयकमिति भावः । प्रकृतवैषम्यमाह । **प्रतीति** । ननु भवदुक्तरीत्या तदभावस्तथाप्यनृतवचनादेव अयं राजदंडस्तु स्यादेवात आह । **निमित्तांतरेणेति । अन्येषां च** पांथादीनां । **अस्मादेव** । अभ्यनुज्ञावचनादेव अपराधे सति दंडः शास्त्रतस्तदभ्यनुज्ञानेऽपराधाभावेन तदभावः । यदि तु दंडः स्यात्तदा तद्धेत्वपराधकल्पना स्यादिति वचनवैयर्थ्यं तदवस्थमेवेति भावः ।

इति साक्षिप्रकरणम् ।

## अथ लेख्यप्रकरणम् ६ ।

व्यवहितसंगतिं प्रदर्शयन्स्वल्पमुपोद्घातमाह । **भुक्तीति । तत्र** निरूपणीये लेख्ये । तत्र शासनमिति पाठः । तयोर्मध्ये इत्यर्थः । **तच्च** जानपदं च । **अन्यकृतमिति** । सामान्यवचनं निषिद्धमिति भावः । अन्यकृते पूर्वपाठे अन्यकृतमिति **नारदा**नुरोधात् । **तत्र** तयोर्मध्ये । **असाक्षिकं** साक्षिनिरपेक्षम् । देशव्यवहाराविरोधाय व्यवस्थामाह । **अनयोश्चेति** । क्रमस्य विवक्षितत्वात्स्वहस्तेत्यस्य पूर्वनिपातो द्वंद्वे, मध्यमपदलोपिसमासो वा । यथेति पाठः । लेख्यं तु यथा स्वहस्तकृतमन्यकृतं चेत्येवं द्विविधं **ज्ञेयम्**, तथा यथाक्रममसाक्षिमत्साक्षिमच्चेत्येवं तदुभयं ज्ञेयमित्यर्थः । तथेति पाठे पूर्वत्र तथेतिवद्यथेत्यस्याध्याहारेणोक्त एवार्थः । **सिद्धिरिति** । तयोर्देशस्थितेस्तदाचारात्प्रामाण्यमित्यर्थः । अथ मूलमवतारयति । **तत्रेति** । तयोर्मध्ये इत्यर्थः । तस्य प्रामाण्यस्य बहूपायसाध्यत्वादादावुक्तिः ।

१ ड–निषिद्धानृतवचन । २ क–स–जनानां । ३ ड–प्रमाणम् । ४ ख–अनृतवचनादप्रयुक्तो राजदण्डः । ५ ख–पांथेति सामान्यवचनं ॥

## याज्ञवल्कीये ८४ श्लोकः ।

यः कश्चिदिति । उक्तनारदाद्वक्ष्यमाणमूलाच्चास्यान्यकृतपरत्वम् । कश्चिदर्थमाह । हिरण्येति । तामेवाह । इयतेति । रुच्यंतरमाह । इयती चेति । ' निष्णात ' इत्यस्य व्याख्या व्यवेति । ' तस्मिन्नि ' त्यस्य व्याख्या अर्थे इति । विषयसप्तमीयं, विप्रतिपत्तावन्वयः यथाश्रुतेऽनुपपत्तेः शेषमाह । कालांतरे इति । पंत्तौ संभावितायामिति शेषः । लेख्ये साक्षियुक्तत्वं तन्नामवैशिष्ट्येन । अत एवाग्रेऽपि यथाश्रुतासंभवादाह । नामेति । ' कार्यमि ' त्यस्य व्याख्या कर्तव्यमिति । ' लेख्यं वेति ' वाशब्दसूचितं लाघवाद्विशेषं पक्षांतरमाह । उक्तेति । ते एव वेत्यर्थः । नारदमेवाह । कर्त्रा त्विति । वादेषु सत्सु । पक्षांतरमाह । स्वकृतमिति । वाऽथ । अथ वा । नैतावत् ।

## याज्ञवल्कीये ८५ श्लोकः ।

प्राग्वदाह । धनीतिमात्रेण तस्यापूर्तिरित्याह । अपि चेति । अत्र समादीनां व्याप्यव्यापकभावः । अत एव क्रमस्य प्रतिपाद्यत्वात्तस्य प्रागुक्तिरेवं क्रमो नामादावपि बोध्यः । समाशब्दः स्त्रीलिंगो बहुवचनांत इत्याह । समा इति । तदर्द्धः पक्ष इति पाठः । अक्लीबत्वादेकदेशिसमासाभावात्षष्ठीतत्पुरुषः । अविनिगमकत्वादाह । कृष्णो वेति । अहःशब्दोऽत्र अहोरात्रपर इत्याह । तिथिरिति । प्राग्वदाह । धनीति । स्वार्थे क इत्याह । वासीति । अयं द्वंद्वस्तदाह । एतैरिति । अग्रे सत्वादत्रापि अध्याहरति । चिह्नितमिति । अन्यदप्याहेत्याह । तथेति । ' सब्रह्मे ' त्यस्य तत्साधारणमित्यर्थस्तदाह । बह्वृचेति । बह्वृचादेर्या शाखा तदध्ययनप्रयुक्तमित्यर्थः । अत एवाह । गुणेति । प्राग्वदाह । धनीति । एतैश्चिह्नितामिति पाठः । वाक्यपूर्तये आह । लेख्यमिति ।

## याज्ञवल्कीये ८६ श्लोकः ।

प्राग्वदाह । किंचेति । अर्थोऽत्र प्रागुक्त एवेत्याह । धनिकेति । यथाश्रुतासंगतेराह । लिखित इति । अत्रेत्यस्य व्याख्या । अस्मिन्निति । परकृतत्वादाह । लेखितमिति । अमुकपुत्रस्येत्यार्षम् । एवमग्रेऽपि । इतीति । एवंप्रकारेण नाम निवेशयेदित्यर्थः । यथाश्रुतासंगतेराह । लिखेदिति ।

## याज्ञवल्कीये ८७ श्लोकः ।

प्राग्वदाह । तथेति । साक्षिमति पत्रे प्रतिपादितमर्थमाह । तस्मिन्निति । चार्थमाह । तेऽपीति । स्वार्थे कः । लेखने नाम पूर्वत्वाभावादाह । लेखनेति । अत्रार्थमाह । अस्मिन्निति । समुदायनिरासायाह । अमुक इति । उक्तिस्वारस्यादाह । एकैकेति । वैषम्यस्यप्रागुक्तत्वादत्र विषये विशेषमाह । ते चेति । विनिगमनाविरहादाह । संख्येति । एतेनासमा इत्यकारप्रश्लेष इत्यपास्तम् । उभयत्र ' स्वहस्तेने ' त्यंशे विशेषमाह । यद्यधेति । साक्षी वेति । अलिपिज्ञ इति भावः । स्वमतमित्यादेरनुषंगः । समीपतः समीपे ।

## याज्ञवल्कीये ८८ श्लोकः ।

प्राग्वदाह । अपि चेति । ततः साक्षिलिखनानंतरम् । अन्ते सर्वाधः । न

---

१ विप्रतिपत्तौ । २ विवादेषु । ३ क-तस्य पूर्तिरित्याह । ४ ङ-क्ष-प्रकृतत्वात् । ५ क-इत्यस्यानुषंगः ।

## याज्ञवल्कीये ८९ श्लोकः ।

**विनाऽपीति ।** तुरुक्तवैलक्षण्ये । यत् लेख्यं स्वहस्तलिखितं तत्तु लेख्यं साक्षिभिर्विनाऽपि प्रमाणं स्मृतं **मन्वा**दिभिरित्यन्वयः । लेख्यमित्यस्य पुनरुक्तिः स्पष्टार्था । अग्रे 'तत्र' सर्वमिति पाठस्तु युक्त एव । तदाह । **यदिति ।** मुख्यमुपधिशब्दार्थमाह । **छलेति ।** न्यूनतानिरासायेदमुपलक्षणं इत्याह । **लोभेति ।** एतत्सूचनार्थमेव **नारद**माह । **नारदोति । मत्तेति ।** अत्र स्त्र्यादेर्द्वंद्वं कृत्वा पुनः सः । **मत्तः** पानादिना । **अभियुक्तः** आक्षिप्तः । **च**स्त्वर्थे ।

प्रागुक्तमेव 'सिद्धिर्देशस्थितेः' इत्यस्यार्थं कथयन् सविशेषमुपपादयन्नाह । **तच्चैतदिति ।** तदेतच्चेत्यर्थः । इदमेव प्रत्यासत्त्या व्युत्क्रमेणाह । **स्वहस्तेति । अबन्धकव्यवहारे च युक्तमिति ।** तत्र च यथाक्रमं नियतं संबन्ध्यं इत्यर्थः । अग्रेऽन्वयः । **इत्येतावदिति** व्याचष्टे । **न पुनरिति रेवेति ।** किं त्विति शेषः । **प्रातिस्विकेति ।** 'प्रतिनियतेति' पाठांतरम् । अपिना तेषामपि समुच्चयः । **व्यक्ताधीति** विशेषमेव व्याकर्तुं कर्मप्रत्यये अर्थासंगतेराह । **विधानमिति ।** भावे किरिति भावः । **गोप्याधीति** समाहार द्वंद्वः । आदिनाऽकालकृतादिपरिग्रहः । सबंधकव्यवहारविषयमिदं स्पष्टं । 'बंधकप्रकारलक्षणं यत्र तत्तथेति तु' **कल्पतरुः ।** क्रमस्य साकांक्षत्वादाह । **अर्थानामिति ।** 'अवीति' व्याचष्टे । **क्रमश्चेति ।** एवं पदार्थमुक्त्वा वाक्यार्थमाह । **तदेवमिति । नारद**तात्पर्यार्थि प्रागुक्तमेवाह । **राजेति ।** व्यतिरेके दृष्टांतः ॥ ८९ ॥

संगतिमाह । **लेख्येति ।**

## याज्ञवल्कीये ९० श्लोकः ।

प्रागुक्तं दृष्टांतयति । **यथेति ।** एवं च तत्सजातीय एवायमर्थो न त्वपूर्व इति भावः । अत एवाह । **आहर्त्रिति ।** एवव्यवच्छेद्यमाह । **न चेति ।** पूर्वोक्तिं सफलयति । **नियेति ।** अत एवाह । **नन्विति । अवीति ।** साक्षिलेख्यसाधारण्येनेत्यर्थः । **नियतं** नियमितम् । क्वचित्तथैव पाठः । **अस्यैव** 'पुत्रपौत्रै' रित्युक्तस्यैव सामान्यस्य । **प्रभवां** जन्यां । **इदं** 'ऋणं लेख्य कृतमिति' । तदेव स्मृत्यंतरं प्रकरणशुद्धिपूर्वकमाह । **तथाहीत्यादिना ।** तद्व्याचष्टे । **इत्थमिति ।** एवमित्यस्य व्याख्येयम् । एतदर्थमेव तदुक्तं प्राक् । 'तं कालमपीति' पाठः । कालं अतिक्रांतमपीत्यर्थः । क्वचित् समस्तपाठः । अव्यवहितान्वयनिरासायाह । **संबंधीति दाप्यते ।** राज्ञेति शेषः । दापयेदिति पाठांतरमुभयत्र ।

इतो यथा तदा शंका तामाह । **अत्रेति ।** तदुक्तावित्यर्थः । 'प्रतीयते' इत्यत्रान्वयः । पत्रारूढ ऋणविषये पुत्रपौत्रादिभिरेव देयमिति नास्यार्थः । किंतु बहुवचनादवरतो ऋणे त्रतायिसंबंधित्वे सति देयत्वप्रतीत्याऽर्थात्प्रपौत्रादिभिरेव देयमिति प्रतीयते । तथा पौत्रे **मृते** तत्पुत्रस्य तेनादातृत्वप्राप्तावप्यतिक्रांतामित्युक्तेस्तेषां दातृत्वप्राप्तिर्भवतीति भावः । **तथा** तद्वत् । 'अभिहित' मित्यस्यानुषंगः । प्राग्वदाह । **अत्रापीति ।** प्रतीयते इत्यत्रान्वयः । सामान्योक्त्यैवात्र प्राग्वन्नावधारणमित्याह । **चतुर्थादिभ्योऽपीति ।** आक्षेपसमाधियुक्तमुपसंहरति । अतश्चेति । **नन्वेवं हारीतकात्यायनयोः** का गतिरत आह । **वचनोति ।** **च**स्त्वर्थे । आद्ये पितॄणां बहुत्वमविवक्षितं उद्देश्यगतत्वात् । कालातिक्रमस्यापि तावत्पर्यंतस्यैव संभवेन ग्रहणं न त्वग्रिमस्य । द्वितीयमपि तावत्परमेवेति भावः ।

---

१ 'साधुशब्दैरेवेति' । २ 'उपसर्गे घोः किः' व्या. सू. ( ३।३।९२ ) ।

नन्वेतदभावे कथं पूर्वप्राप्तिरत आह । **सबंधेति** । अपिना द्वितीयसमुच्चयः । अस्य नियमेऽन्वयः । अयौगपद्यायाह । **क्रमेणेति** । **ऋणेति** । ' चतुर्थादेरि ' त्यादिः । नन्वेतावताऽपि स्फुटं न तत्प्रतीतिरत अपवादत्वमुपपादयति । **यावदिति** । अस्यार्थमाह । ' चतुर्थेनेति ' दिक्प्रदर्शनमिदम् । तत्पदार्थमाह । **ऋणमिति** । सर्वमिति न्यायेनाह । **तावदेवेति** । प्राग्वत् प्राप्तपौनरुक्त्यं निराचष्टे । **नन्वित्यादिना** । **स्यादिति** । अत इदमप्यावश्यकं तस्य तत्प्राप्त्यर्थमिति भावः ॥९०॥

संगतिमाह । **प्रासंगीति** ।

## याज्ञवल्कीये ९१ श्लोकः ।

'**नष्टोन्मृष्टे**' **इति** समाहारद्वंद्वः । नन्वत्र देशांतरस्थादि उद्दिश्य पत्रांतरकरणविधिः प्रतीयते तत्र किं तेषां प्रत्येकं निमित्तत्वमुत समुदायस्य ? । तत्र न तावदाद्यः । तथा शब्दासंगतेः । सकृच्छ्रुतस्य विधेयस्य सर्वैरन्वयासंभवाच्च । न चावृत्त्या तथा प्रधानानुरोधेन गुणावृत्तावपि वैपरीत्यस्य सकलतंत्रविरुद्धत्वात् वाक्यभेदापत्तेश्च । न द्वितीयः । अथ वेत्यस्यासंगतेः । स्मृत्यंतरविरोधेनापसिद्धांताच्च । अत आह । **व्यवेति** । **पत्रे** पूर्वपत्रे सति । अन्यथानुपपत्त्या सकलसाधारणानुगतधर्माक्षेपेणास्यैवोद्देश्यत्वं ' न तस्येति न कोऽपि उक्तदोष इति भावः । णिजर्थाविवक्षया आह । **कुर्यादितीति** । पादत्रयार्थस्यैवं सत्यन्वयं कथयन्व्यवहाराक्षमत्वमेव विशदयति । **व्यवेति** । एतेन तदेव कथमिति शंका निरस्ता । **अक्षमत्वं च** अक्षमत्वं तु । अस्य भवतीत्यत्रान्वयः । क्रमणे निमित्तानि व्याचष्टे । **अत्यन्तेति** । निकटे आनयनस्य सुकरत्वाल्लक्ष्यार्थोऽयम् । ' पत्रे ' इत्यस्याग्रे सर्वत्रान्वयः । ' दुष्टानी ' त्यस्यार्थद्वयम् । ' लेख्यानी ' त्यस्यापि । तयोः यथासंख्यमन्वयः । नष्टादेरौपाधिकभेदमाह । **कालेत्यादि** । **आदिना** जलपातादिना । **विदलिते** संचूर्णिते । **दग्धे** प्रज्वलिते । ' दग्धेऽग्निनेति ' पाठांतरम् । सर्वपाठोऽपि क्वचित् स्पष्टार्थः । एतेषामपि विकल्पो बोध्यः । अत एव ' अथवे ' त्यस्य संगतिः । ' तथेति ' तु सादृश्ये न तु समुच्चये ।

**नारद**विरोधं मूलस्य परिहरन् विशेषमाह । **एतच्चेति** । पत्रांतरकरणं चेत्यर्थः । तत्र तस्यावश्यकत्वादाह । **व्यवेति** । तादृशे स्थले आह । **देशांतरेति** । **दुर्गेति** । दुःखेनापि गंतुमशक्यदेशे इत्यर्थः । '**दुर्देशेति**' पाठांतरम् । अयं प्रकारोऽन्यत्रापीत्याह । **नष्टे वेति** । वा चार्थे । तेनान्येषामपि समुच्चयः । उत्तरार्धे व्याचष्टे । **सत इति** । तेषां मध्ये इत्यादिः । तत्पदार्थमाह । **आनयनायेति** । समासस्तु संबंधसामान्यषष्ठ्या कार्यस्तत्र । **पुन**रतु । अन्यनिरासायाह । **पूर्वमिति** । तत्कर्मकं दर्शनमिति नार्थ इत्याह । **तैरिति** । लक्ष्यार्थमाह । **व्यवेति** ।

विशेषांतरमाह । **यदा त्विति** । कात्यायनमाह । **अलेख्येति** । लेख्यसाक्ष्युभयरहिते व्यवहारे इत्यर्थः । **दैवीं** क्रियाम् । विशेषांतरं वक्तुमुक्तमेवाहे**तच्चेति** । **जानपदमिति** लौकिकमित्यस्यैव नामांतरम् । ' लौकिकं राजकीयं च लेख्यं कुर्याद्विलक्षणमिति ' **वसिष्ठोक्तेः** । ' राजकीयं जानपदं लिखितं द्विविधं स्मृतमिति ' **संग्रहोक्तेश्च** । अत्रोभयत्र राजकार्ये राजकीयमित्याभ्यां प्रत्येकं त्रयाणां ग्रहणमिति न न्यूनता । अत एवाह । **राजकीयमपीति** । **कात्यायन**माह । **राज्ञ इति** । **तथेति** समुच्चये । " राजकीये तथा राजा स्वहस्तेन लिखेत् स्वयम् । मतं मेऽमुकपुत्रस्य ह्यमुकस्य महीपते ' रिति **व्यासः** । **अर्थेष्विति** विषयसप्तमी । **साक्षिमदिति** साधारणोक्तिः ।

१ ख–सर्वेष्वन्वयासंभवाच । २ क–राजकार्यम् । ख–राजकार्या । ३ ख–लेखितम् ।

**यथोपेति ।** येन प्रकारेणोपन्यस्तो यः साध्यार्थः प्रतिज्ञार्थस्तेन संयुक्तम् । अनेनाद्यपादप्रदर्शनम् । उत्तरं च क्रिया च ताभ्यां सहितम् । क्रिया पत्रादिरूपा । अनेन द्वितीयपादप्रदर्शनम् । अवधारणं निर्णयस्तेन सहितम् । स्वार्थे कः । अनेन तुर्यपादप्रदर्शनम् । **हस्ताङ्क** तदक्षराङ्कम् । एवमग्रेऽपि । **वादिने इति ।** ' पूर्वोत्तरक्रियावादिनिर्णयान्ते यदा नृपः । प्रदद्याज्जयिने लेख्यं **जयपत्रं** तदुच्यते ' इति **बृहस्पत्युक्ते**रिदमुपलक्षणम् । अत्रादिग्राह्यं सूचयन्नेवाह **तथेति । कात्यायनमाह । सभेति । तत्र** व्यवहारे । **यथेति ।** क्रियमाणे राजकीयव्यवस्थापत्रे यथा तद्वज्जयपत्रेऽपीत्यर्थः । एवेन तस्यावश्यकता सूचिता । व्यवहारस्य निःशल्यत्वोपायं प्रतिपादयन्नत्र हेतुभूतं विशेषांतरमाह । **सभेति । चेन** अन्येषामपि तत्रत्यानां समुच्चयः । **यत्र** निर्णयविवादे । विशेषान्तरमाह । **एतदिति ।** जयपत्रमित्यर्थः । **कात्यायन**माह । **साधयेदिति ।** साध्यार्थसाधकं तदन्वितं च यद्व्यवहारस्वरूपं **यत्** यतोऽतस्तदेव तदंकितं तदिष्यत एवेत्यर्थः । **चेनान्यसमुच्चयः** । यद्यपीदं सभासदां चेत्यतः प्रागुचितं तथापि सभासदां प्रसंगात्तद्विषयकं तदादावुक्तम् । एवव्यवच्छेद्यमाह । **यत्र त्विति ।** तस्योपयोगमाह । **तच्चेति ।** हीनपत्रं चेत्यर्थः । **विशेषः ।** हीनपत्रतः ।

## याज्ञवल्कीये ९२ श्लोकः ।

संशयकोटिद्वयमाह । **शुद्धमिति ।** कृत्रिम कृत्रिमं चेत्यर्थः । तथा च **नारदः** ( अ. १ श्लोक १४३–१४४ ) "यस्मिन्स्यात् संशयो लेख्ये भूताभूतकृते क्वचित् । तत्स्वहस्तक्रियाचिह्नयुक्तिप्राप्तिभिरुद्धरेत् ॥ लेख्यं यच्चान्यनामाङ्कं हेत्वन्तरकृतं भवेत् । विप्रत्यये परीक्षेत संबंधागमहेतुभि"रिति । **विप्रत्यये** विप्रतिपत्तौ । 'लिखितमिति'कर्मणि भूते निष्ठा । तेनेदानींतनव्यावृत्तिस्तदाह । **स्वहस्तेनेति ।** प्रत्यासन्नत्वादाह । **लेख्यांतरमिति ।** पत्रांतरमित्यर्थः । ननु द्वयोर्भेदेन तेनास्य कथं शुद्धिरत आह । **यदीति । साक्षीति ।** साक्षिलेखकयोर्यत्स्वहस्ताभ्यां लिखितान्तरे । एतदपेक्षया भिन्ने लिखिते तत्संवादादेतल्लेखीयाक्षरस्य तदक्षरसादृश्यादेतत्पत्रस्य शुद्धिरित्यर्थः । तथा चेदमन्यकृतविषयम् । श्रौतं तु स्वकृतविषयमिति भावः । इतिः पूर्वार्धार्थसमाप्तौ ।

**देशकाले इति ।** समाहारद्वंद्वात् सप्तमी । 'कालपुरुषेति'पाठे समस्तं त्रयाणां तेन संबंध इति यावत् । तदेवाह । **अस्मिन्निति ।** युक्तिपदार्थमाह । **घटत इति ।** योग्यं भवतीत्यर्थः । संभवतीति यावत् । **कल्पतरु**रप्येवम् । **युक्ति**रर्थापत्तिः । **प्राप्ति**र्द्वयोरेकत्रावस्थानमित्यन्ये । **तत्साक्षीति ।** प्राप्तिसाक्ष्युपेत्यर्थः । अत एव वक्ष्यमाणविरोधो न, **कल्पतरु**रप्येवम् । संव्यवहारः क्रियेत्यन्ये । **आदिना** स्वस्तिकमुद्रादिपरिग्रहः । **पूर्वमिति** विवादात्प्रागित्यर्थः । **दानेति ।** धनस्येत्यादिः । श्रीकारादीति आदिना स्वस्तिकमुद्रादिपरिग्रहः । **अर्थस्य** धनस्य । आगमः पूर्वमिति विवादक्रियादिरित्यन्ये । आगमांतद्वंद्वस्य हेतुशब्देन कर्मधारय इत्याह । **एते एवेति ।** उत्तरार्धस्य क्रियांतराध्याहारेणान्वयः । भ्रमनिरासायाह । **एभिरिति ।** सोऽप्येवं हेतुरनुमानमित्यन्ये । विशेषमाह । **यदा त्विति । तदारूढांस्त्विति ।** पत्रारूढान्त्साक्षिणस्त्वित्यर्थः । पत्रके इत्यत्र स्वार्थे कन् । अस्य वक्ष्यमाणविरोधं परिहरति । **साक्षिसमिति । इदं कातीयं ।** तदेवाह । **न मेति । एतेन** अन्येन केनाचित् । अतएवाह । **कारितमिति । तत्पत्रमिति ।** तत्पत्रं प्रमाणत्वेनानाश्रित्य अथ अनंतरं दिव्येन निर्णयः कार्य इत्यर्थः । 'अथ दिव्येनेति'पाठः । 'अर्थे' इति पाठे तद्विषये इत्यर्थः ॥ ९२ ॥

अवतरणमाह । **एवमिति । दातुमिति ।** युगपदिति शेषः । एवमग्रेऽपि ।

---

१ ख–चो हेतौ । २ ख–तत्वस्यापि सत्वादाह । ३ क–ख–आदिना आध्यादिपरिग्रहः न स्वस्तिकमुद्रादि ।

## याज्ञवल्कीये ९३ श्लोकः ।

आर्थिकमाह । **शक्तीति** । उत्तरार्द्धार्थमाह । **उक्तेति** । स्वहस्तशब्दो लाक्षणिक इत्याह । **लिखितेति** । तथा च क्रियाविशेषणमिदमिति भावः । अत्र पक्षे तत्पृष्ठभागे तल्लिखने ऐच्छिकविकल्पो लब्धः । स च न युक्तः । तस्याष्टदोषर्दुष्टत्वात् । प्रकारांतरेणोक्तरार्धस्य साफल्ये । तथोक्तेरयुक्तत्वाल्लक्षणाद्यापत्तेश्चात आह । **यद्वोपगतमिति** । भावक्कांतादर्शं आद्यजित्याह । **प्रवेशपत्रमिति** । पर उत्कर्ष इतरव्यावर्तकत्वरूपो यस्यास्तीति परि लिखनं स्वहस्तस्य परि तेन चिह्नितमिति पत्रविशेषणं तादृशं लेख्यांतरं कृत्वेति भावः । तदाह । **स्वहस्तलिखितेति** । भावे क्तः । **उत्तमर्ण इति** । प्राप्तालपधन इति भावः । तथा चात्र न लक्षणा क्कापि । लेख्यासन्निधिविषयं चेदम् । तदाह **विष्णुः** । ' असमग्रदाने लेख्यासान्निधाने चोत्तमर्णः स्वहस्तलिखितं दद्यादिति ' । नाव्यवहितमात्रविषयमिदं किंतु साधारणमिति ॥

## याज्ञवल्कीये ९४ श्लोकः ।

सांनिध्याद्व्युत्क्रमेणाह । **क्रमेणेति** । द्वितीयपादं व्याचष्टे । **यद्वा त्विति** । **वा** चार्थे । तेनान्येषामपि संग्रहः । मौलस्तु विकल्पे एव । **अधेति** । स्वाधेत्यर्थः । **अन्यत्** पूर्वकृतात् भिन्नम् । णिजर्थमाह । **उत्तमर्णम् इति** । उत्तमर्णेनेति पाठांतरम् । 'ह्रक्रोरिति' वा कर्मत्वात् । तात्पर्यार्थमाह । **पूर्वोक्तेति** । प्रागुक्तरीत्यर्थः ।

एवं लेख्यस्थाने[3] उक्त्वा साक्षिमात्रप्रमाणकऋणग्रहणविषये आह । **ससाक्षिके इति** । साक्षिणां सर्वदा सान्निध्यासंभवादिदं यौगपद्यविषयकमित्याह । **कृत्स्ने इति** । चस्य व्युत्क्रमान्वयादाह । **यद्वेति** । यत्त्वित्यर्थः । क्कचित्तथैव पाठः । **पूर्वेति** । बहुव्रीहिस्तित्साक्षिसमक्षामित्यर्थः । क्कचिदेवमेव पाठः । वा एवार्थे व्युत्क्रमे चेत्याह । **एवेति** ॥ ९४ ॥

इति लेख्यप्रकरणम् ।

---

## अथ दिव्यप्रकरणम् ७ ।

संगतिमाह । **लिखितेति** । अभ्यर्हितत्वात्प्रवृत्तिक्रमस्य विवक्षितत्वाच्चास्य पूर्वनिपातः । ' अथे ' त्यस्य ' कथयती ' त्यत्रान्वयः । प्रतिबंधकशिष्य-जिज्ञासानिवृत्तौ सत्यामवश्यवक्तव्यत्वरूपावसरसंगतिप्राप्तमित्यर्थः । **दिव्यमिति** जातावेकवचनम् । तुलाधारणेत्यादिना **दिव्यमातृकां** दिव्योपोद्घातम् ।

तत्राद्यश्लोकमवतारयति । **तत्रेति** । दिव्यमातृकायां कथनीयायामित्यर्थः । **तावदादौ** । नाम्ना वस्तुसंकीर्तन**मुद्देशः** ।

## याज्ञवल्कीये ९५ श्लोकः ।

कर्मवत्स्य विवक्षितत्वात्तुलाशब्दस्य पूर्वनिपातः । त्रयाणामितरेतरद्वंद्वः । समासांतविधेरनित्यत्वान्न सः । विशुद्धिपदार्थमाह । **संदिग्धस्येत्यादि चतुर्थ्यंतेन** । नित्यसापेक्षत्वादाह । **संदेहनीति** । योग्यतयाऽऽकांक्षाशांतये आह । **दातेति** ।

---

१ क-अष्टविध दुष्टत्वात् । २ 'ह्रक्रोरन्यतरस्याम् ' व्या-सू० । ३ क-लेख्यस्थले ।

एतान्येव दिव्यानीत्याशयेनावतरणमाह । **नन्विति । घट इति ।** ' घटः स्यात्तु तुला काष्ठमिति ' **कोशः । पितामहेति । बृहस्पति**रपि । " घटोऽग्निरुदकं चैव विषं कोशश्च पंचमः ॥ षष्ठं च तंडुलाः प्रोक्ताः सप्तमं तप्तमाषकः ॥ अष्टमं फाल इत्युक्तं नवमं धर्मजं स्मृतम् । दिव्यान्येतानि सर्वाणि निर्दिष्टानि स्वयंभुवेति " । अत एव शंकायां बहुवचनसंगतिः । **एतावन्ति** पंच ।

यद्यपि त्रेधा नियमः संभवति अपराधविशेषे, दिव्यस्वरूपे, उभयत्रापि; तद्यथा, महाभियोगरूपापराधेष्वेवं दिव्यानीत्याद्यः, इयंत्येव दिव्यस्वरूपाणीति द्वितीयः, मिलितस्तृतीयः, तथाऽप्याद्य एव नियमः स्वीक्रियते न द्वितीयतृतीयौ । **पितामहोक्ति**विरोधादित्याह । **एतानीति ।** ' तुले ' त्यत्र निर्दिष्टानि दिव्यानि । महाभियोगेष्वेवेति नियम इत्यर्थः । 'नपुनरि ' त्यनेनार्थात्तृतीयस्यापि निरासः । पुनःशब्देन तन्निरास इति त्वयुक्तम् । उदक्षरत्वात् । **न पुनरिति ।** न त्वित्यर्थः । अनेन शंका समाहिता । नियम्यते इत्यस्यानुषंगः । ननु महत्त्वस्यासावधिकत्वेनानियमापात्तिरत आह । **महत्त्वेति ।** ' नासहस्रादि'त्यादिनेति भावः। तथा च नानियम इति बोध्यम् ।

स्मृत्यंतरविरोधापत्त्या प्रोक्तनियमो न घटत इत्याशंक्य परिहरति । **नन्वल्पेत्यादि । पितामह**माह । **कोशमल्पेऽपीति[1] । सत्यमिति ।** उक्तवचनाविरोधाय विधिनियमयोर्विवेज्र्यायस्त्वेन तथैव स्वीक्रियते न तु तस्य नियमशरीरे प्रवेशः तथा च तस्य तैः सह पाठो न तदर्थोऽपि तु यथा तुलादीनि सावष्टंभाभियोगेषु एवमयमपीत्येवमर्थे इति भावः । **सावष्टंभाभीति ।** अवष्टंभेन सहितः सावष्टंभः । ' स्वोपरि दंडांगीकारश्चावष्टंभानिश्चयः स ' इति **कल्पतरुः । अन्यथा** मूले कोशस्यानुपादाने कोश । इति भावः । मूलानुक्तत्वात् स्मृत्यंतरमाहा**वष्टंभेति ।** 'सावष्टंभेति' पाठांतरम् । **पितामह**होक्तिरियम् । **घटादीनि** चत्वारि **शंकास्ववेचि ।** 'शंकास्वेतानि योजये ' दिति पाठांतरम् ।

तथा च महाभियोगो महाभिशापः । स च द्विविधः । शंकितः सावष्टंभश्च । स्वोपरि दंडमङ्गीकृत्य लापितः **सावष्टंभः ।** एवमल्पाभियोगेऽपीति बोध्यम् । अत एवाह । **महाभियोगेष्विति** तद्भेदार्याह[2] । **शंकितेष्विति ।** उभयविधमहाभियोगेष्वविशेषेण प्रोक्ततृतीयादेर्विशेषानादरेणैतेषां तुलादिचतुर्णां प्राप्तावित्यर्थः ।

अनुवृत्त्याहै**तानीति ।** चत्वारीत्यर्थः । अर्थादाह । **अभियुक्तस्येति ।** शक्यार्थमाह । **शिर इति ।** प्रकृते व्यवहारपुरुषस्य तदाह । **व्यवेति ।** स्पष्टार्थं पुनस्तत्स्वरूपमाह । **जयेति ।** प्रकृते तु पराजय एव विवक्षितः । अत एव तत्संबंधाल्लक्ष्यार्थमाह । **तेन चेति ।** ' तिष्ठति ' त्त्र अहानौ । ' समये तिष्ठ सुग्रीवेति ' वत् । अंगीकृतदंडनं न जहातीत्यर्थः । अत एवाह । **तदिति ।** परांजयेत्यर्थः । **इत्यर्थ इति ।** ' तस्मिन्सती ' त्यादिः । अभिशापदातरि शीर्षकस्थे पराजयहेतुंकदंडभाजि[3] सत्येवैतानि भवंति । ' यद्यनेनेदं न कृतं स्यात्तदा मया दंडो देय ' इति वादी शीर्षकस्थः तादृशे तस्मिन् सतीत्यर्थः । तथा च सावष्टंभेष्वेव तेषु तेनं[4] नाशंकितेषु तेष्विति विशेषोक्त्या तदपवादत्वमित्यर्थः ॥ ९५ ॥

---

१ ख–एवमग्नेऽपि । २ ख–तद्भेदमाह । ३ क–हेतुकं । ४ क–तेष्वेतेन शंकितेषु । ख–तेनाशंकितेषु ।

यद्यप्यव्यवहितसंगतिः ' तत्र विकल्पमाहे ' त्येवं संभवति तथापि विशेषप्रतिपादनाय व्यवहितसंगतिमाह । **तत इति** । वस्तुतस्तदपवादत्वाभावादाह । **वादार्थमिति** । तदर्थमुक्तापेक्षया विकल्पमाहेत्यर्थः । रुचिरत्र न प्रसिद्धेत्याह । **अभीति** । ' अन्यतर ' इत्यत्र ' अल्पाच्तर'मितिवत् । स्वार्थे तरप् । उक्तादन्य इत्यर्थः । तदाह । **अभियोक्ता वा दिव्यं कुर्यादिति** । मौलं विकल्पमाह । **वा दिव्यमिति** । अत एवाह । **इतरोऽभीति** । दंडविकल्पमाह । **अर्थदंडं वेति** । एतेन तरपो यथाश्रुतत्वेन तस्याभियोक्ताऽभियुक्तो वेति व्याख्यानम्, अग्रे चैकमेवेति क्वचिदुपलभ्यमानमयुक्तं वेदितव्यम् ।

## याज्ञवल्कीये ९६ श्लोकः ( पूर्वार्धः )

ननु दिव्यतत्वे ' शीर्षकस्थे ' इत्यनेनाभियोक्तुः शिरोवर्तित्वाभिधानादभियुक्तस्य दिव्यमित्युक्तम् । रुच्येत्यनेन तु अभियुक्ते शिरोवर्तिनि तदिच्छया अभियोक्तुरपि दिव्यमुच्यत इत्युक्तमिति तथैव कुतो नोक्तमत आह । **अयमभीति** । अभिप्राय इत्यर्थः । **भावैकेति** । भावमात्रेत्यर्थः । **इति**स्तत्समाप्तौ । अयं भावः । अयं च विकल्पोऽभियोक्त्विच्छायामेव । तदनिच्छायां त्वभियोज्यस्यैव दिव्यम् । ' न कंचिदभियोक्तारं दिव्येषु विनियोजयेत् । अभियुक्ताय दातव्यं दिव्यं दिव्यविशारदै ' रिति **दिव्यतत्वे कातीयोक्ते**रिति ।

उत्तरपद्यमवतारयितुमुक्तं सर्ववचनसिद्धमर्थमनुवदति । **अल्पाभीति** । 'यथाक्रमं कोशमल्पेऽपी' त्यनेन 'महाभियोगेष्वेतानी' त्यनेन 'शंकास्वेव न संशय' इत्यनेन, 'तुलाग्न्याप' इत्यत्र तुलादि सहपाठेन च, चतुर्षु स इत्युक्तमित्यर्थः । यथासंख्यभाषया व्याससमासाभ्यामुक्तिः । एतत्सूचक एवापिः । **नियम इति** । जातावेकवचनं । **चो** व्युत्क्रमे । दर्शितश्चेत्यर्थः । तत्राद्या ' महाभियोगेष्वेतानी ' त्यनेन, ' शीर्षकस्थे ' इत्यनेन द्वितीयो दर्शित इति बोध्यम् । ' शंकास्वेवे ' त्येवकारस्तु तंडुलान्वयाशयक इत्यपि बोध्यम् । **तत्र** तयोर्मध्ये ॥

## याज्ञवल्कीये ९६ श्लोकः ( उत्तरार्द्धः )

(मूले) **अथ**शब्दः समुच्चये । **पातक**पदं महापातकपरमित्याह । **ब्रह्मेति** । 'शीर्षकादि' त्यस्य व्याख्या **शिरःस्थायिनेति** । तथा च राजद्रोहमहापातकयोः शंकायामपि तुलादीनि कार्याणीति तदपवादत्वमिति भावः । अथ समुच्चेयमेवाह । **महाचौर्याभीति** । **तन्मध्ये** । तत्र चेत्यर्थः । क्वचित्तु आद्यपाठः । **नारदपितामहावाह** । **यथाहेति** । साजात्यादेकवचनम् । **राजभिरिति** । अत्र 'राजभिरिति' शंकामुपक्रम्य 'आत्मशुद्धिपराणां च दिव्यमि' त्यनेन निरवष्टंभाभियोगे च दिव्यदानस्योपसंहारात्तन्मध्यपातिनिर्दिष्टानामित्यस्यापि शंकाविषयत्वं बोध्यम् । **दिव्यतत्त्वे कालिकापुराणे**-''परदाराभिशापे च चौर्यागम्यागमेषु च । महत्पातकशस्ते च स्याद्दिव्यं नृपसाहसे ॥ विप्रतिपत्तौ विवादे च अवर्णास्थापने कृते । तत्रैव दापयेद्दिव्यं शिरः पूर्वं महीपतिः ॥ परदाराभिमर्शे च बहवो यत्र वादिनः ॥ शिरोहीनं भवेद्दिव्यमात्मनः शुद्धिकारणादिति ' । **अगम्याः** परदारभिन्नाः साधारणवेश्याद्याः । **शस्ते**ऽभिशस्ते । **साहसं** बलादन्यायः । **विप्रतिपत्तौ** परदाराभिशापादिविषयायाम् । **विवादे**

---

१ ' तदपवादार्थमाह ' ( मि. पृ. ९७ पं. १९ ) २ क-हतिरत्र । ३ क-मोलविकल्प एवायमतएवाह । इतरोऽभीति । ४ क-न कश्चिदभियोक्तारम् । ५ स-यथासङ्ख्या भावत्य ।

ऋणादानादिविषये । **अवर्णा** निंदा । परेति विशेषणमविवक्षितम् । अभिशापस्यानुवाद्यत्वात् । एव बहव ' इत्याद्यपि । 'परदाराभिमर्शे चेति' चौर्यादीनामप्युपलक्षणम् । तेन वाद्यभावेऽपि सर्वाभिशापे दिव्यं भवति । अत एव ' शुद्धिकारणादिति ' हेतूक्तिः । 'विनाऽपीति' मौलसामान्योक्तिश्च संगच्छेते । **विष्णु**रपि " राजद्रोहे साहसेषु विनाऽपि शीर्षकार्पणामिति " । **नारदो**ऽपि, ( अ. १ श्लो. २७० ) " अशिरांसि च दिव्यानि राजकृत्येषु दापयेत् ॥ अभियोक्ताभियुक्तानामन्यषां तु यथाक्रममिति "

'शंकास्वेवेत्येवकारं ' सफलयन् विरोधपरिहाराय विशेषमाह **तंडुलाः पुनरिति ।** तंडुलास्त्वित्यर्थः । **चौर्ये त्विति ।** यद्यप्यत्र चौर्ये इत्येवोक्तं तथापि तंडुलरूपाल्पदिव्यानुरोधेन निमित्तस्याप्यल्पत्वकल्पनमिति भावः । प्राग्वदाह **तप्तेति । चौर्येति पितामहो**क्तिः । यद्यप्यत्र ' चौर्यशंकेत्य ' विशेषणोक्तं तथापि तप्तमाषस्य तीक्ष्णत्वेन महादिव्यत्वान्नैमित्तिकतप्तमाषानुसारेण निमित्तस्य चौर्यशंकाया महत्त्वं युक्तमिति भावः । इदं च तृतीये व्यक्तीभविष्यति । **अन्ये** उक्तेभ्यः । **पुनः** तु । **वाहन**मश्वादि । **बीजं** धान्यं । देवता च पिता च तयोश्चरणान् । **दत्तानि** भूम्यादीनि। **सुकृतानि** सदाचरणानि । 'स्पृशेदि' त्यस्य सर्वत्रान्वयः। **सह्येषु** सहनयोग्येषु । स्वल्पेष्विति यावत् । **कोशपानं** कोशस्य जलविशेषस्य भक्षणम् ।

ननु तुलादीनां दिव्यत्वमुक्तं मूलादौ । सत्यादीनां तु शपथत्वमुक्तं **नारदेन** । तदयुक्तम् । तेषामपि दिव्यलक्षणाक्रांतत्वादित्याशंकते । **यद्यपीति ।** दिव्यलक्षणमाह । **मानुषेति । अनिर्णेयस्य** अर्थस्य । 'लोके' त्यनेन शास्त्रोक्तत्वव्यवच्छेदः । उक्तलक्षणं दिव्यं द्विविधम्। तत्काल**निर्णायकं** कालांतरनिर्णायकं च । तत्राद्यं तुलादि ' द्वितीयं सत्यादि । तत्राद्यस्य नामांतरत्वेऽपि द्वितीयस्य नामांतरं शपथ इति । एवं सति भेदेनोक्तिर्विशेषधर्मनिमित्तकेत्याशयेन समाधत्ते **। तथापीति ।** ' निर्णयनिमित्ते'त्यादिः षष्ठीतत्पुरुषः । गोबलीवर्दन्यायस्यासत्वादाह । **ब्राह्मणेति ।** ' ब्राह्मणानामंत्रयस्व' इत्युक्त्यैव तत्वस्य तत्राविशिष्टत्वात्तदामंत्रणेऽपि प्राप्ते पुनः ' परिव्राजकमामंत्रयस्वेति ' कथनं तत्प्राधान्यप्रतिपादनार्थं यथा तथा, तुलादीनां सत्यादीनां च दिव्यत्वे तुल्येऽपि ततस्तेषां भेदेन कथनं कालांतरनिर्णयनिमित्तत्वद्योतनार्थं इत्यर्थः । यथा तस्य तत्फलांतरानुरोधेनैवमत्रापीति यावत् । यद्वा 'ब्राह्मणानामंत्रय परिव्राजकं चे'त्युक्तप्रोक्तरीत्या सिद्धे पुनस्तदुक्त्या यथा तस्य तदन्यपरत्वं तथाऽत्रापीत्यर्थः ।

ननु यदि कालांतरनिर्णयनिमित्तानि शपथास्तर्हि कोशस्य सद्यो निर्णयनिमित्तेषु तुलादिषु पाठोऽनुपपन्नस्तस्य तदंतर्गतत्वादतः प्रागुक्तमनुसृत्यैवाह। **कोशस्य त्विति । विषत्वेन चेति** साम्ये हेतुः । **निमित्तत्वेनेति ।** ' धटादिसाम्यादि ' त्यनुषज्यते । ननु एवमपि तंडुलतप्तमाषयोः सद्यो निर्णयनिमित्तत्वेन मूले तुलादिषु पाठः स्मृत्यंतरवदुचितोऽत आह । **तंडुलेति । अल्पेति ।** अल्पाभियोगेत्यर्थः । नन्वैकरूप्यमेव सर्वत्रोचितं न तु क्वचित् किंचित्कृतं वैलक्षण्यं क्वचित् किंचित्कृतं साम्यमिति वैरूप्यमत आह । **संतोष्टव्यमिति ।** सिद्धस्य गतिश्चिंतनीयेति भावः । कोशस्याल्पशंकोभय-

१ ख–सर्वभितये । २ क–अपिचौर्यशंकेति । ३ प्रायश्चित्ताध्याये । ४ देवतापित्रोः ५ क–युक्तलक्षणम् । ६ क–तत्कालक्षणामार्कं । ७ ख–रूप्यमेव सर्वमेवात्रोचितम् । न तु क्वचित्कृतं वैलक्षण्यं क्वचित्कृतं साम्यमिति वै नामांतरं शपथ इति । ८ ङ–उक्ते प्रोक्तरीत्या ।

विषयत्वेऽपि तन्मात्राविषयकत्वाद्युक्तस्तेषु पाठ इति तात्पर्यम्। विशेषं वक्तुं प्रतिजानीते। **एतानि चेति**। चो वाक्यालंकारे। **ऋणादिष्विति**। ऋणादानादिरूपाष्टादशविवादेष्वित्यर्थः।

नन्विदमयुक्तं **पितामह**विरोधादित्याशंक्य प्रागुक्तरीत्यैव परिहरति। **यस्त्वित्यादि**। **स्थावरेष्विति**। विषयसप्तमी। सामंतेत्यग्रे स्फुटीभविष्यति। **व्याख्येयमिति**। स्थावरविवादेषु। नात्यंतिकाद्दिव्यनिषेधार्थमिदम्। दृष्टप्रमाणाभावेऽनिर्णयप्रसंगात्। किंत्वर्थिनो दृष्टप्रमाणसत्त्वे[1] प्रत्यर्थिनि दंडावष्टंभेन दिव्यमवलंबत्यपि दृष्टेनादृष्टेन वा निर्णय इति प्रागुक्तरीत्या प्राप्तविकल्पनिरासेन दिव्यनिषेधार्थम्। विवादांतरे तु विकल्प एवेति भावः। इदमेव ध्वनयन् स्थावरपदानर्थक्यमुक्त्युक्तेस्तुल्यत्वादर्थप्राप्तं परिहर्तुं शंकते। **नन्विति**। **विवेति**। स्थावरविषयान्येष्वपीत्यर्थः। **प्रमेति**। दिव्यान्यमानुषप्रमाणेत्यर्थः। **ऋणादिष्विति** विषयसप्तमी। **दंडेति**। दंडाङ्गीकारनिश्चयेनेत्यर्थः। अपिना तस्यापि समुच्चयः। ननु संभवतीति न्यायविरोधोऽत आह। **साक्षिणामिति**। **आशयो**ऽतःकरणम्। हेत्वंतरमाह। **दिव्यस्य चेति**। चोंऽते योज्यः। हेत्वंतरमाह। **तल्लक्षणत्वादिति**। धर्मस्य वस्तुतत्वविषयकत्वाच्चेत्यर्थः। अत्र हेतौ मानमाह। **यथाहेति**। **तत्र** दिव्ये। **सत्ये** तद्रूपे। **साक्षिणि व्यवहारस्तु** तन्मात्रं तु। **दैवसाध्ये** तदेकसाध्ये। **पौरुषेयीं** क्रियां साक्षीरूपां। **नेत्यु**भयान्वयि। अयं च दोषसंभावनामात्रेण साक्ष्यादिनिषेधे न वास्तव इति बोध्यम्।

एवमन्यत्रोक्त्वा स्थावरेषु कथयन् स्थावरपदसार्थक्यं तत्राह। **स्थावरेष्विति**। **सामंतादिदृष्टेति**। तद्रूपदृष्टेत्यर्थः। नेत्युत्तरान्वयि। विकल्पेति। स्थावरेषु मानुषदिव्यप्रमाणयोर्न विकल्प इति विकल्पनिराकरणार्थः स्थावरशब्द इति भावः। **आत्यंतिकेति** सर्वथेत्याह। निषेधे हेतुमाह। **लिखितेति**॥

## याज्ञवल्कीये ९७ श्लोकः।

**किंचेति**। दिव्यस्य कालाद्युच्यते इत्यर्थः। **सचैलस्नानमिति** बहुव्रीहिः। 'सचैलं स्नानमिति' पाठांतरम्। भूतप्रत्ययादिसूचितमाह। **पूर्वेद्युरिति**। अर्धबिंबनिरासायाह। **उदित इति**। सूर्योदय इति। बहुव्रीहिरिति भावः। ब्राह्मणपदार्थमेवाह। **सभ्यानां चेति**। नृपस्योक्तत्वेनार्थादाह। **प्राडिति**। अत्रोपोषित इति सामान्येनोक्तावपि **पितामहोक्तं** विशेषमाह। **त्रिरात्रोपोषीति**। **शुचये** कृतस्नानाय। **आर्द्रवाससे** सचैलस्नानाय। त्रिरात्रोपोषितायाथवा एकरात्रोषिताय नित्यमवश्यं दिव्यानि देयानि स्युरित्यर्थः। नित्यमित्यनेनादाने प्रत्यवायः सूचितः। त्रिरात्रोपोषितायैव ह्येकेति पाठांतरम्। 'एकरात्रोपोषिताय त्रिरात्रोपोषिताय वेति' **मयूखादि**धृतपाठस्तु। मुनिशैलीविरुद्धत्वादुपेक्ष्यः। ननु 'बलवदिति' न युक्तं, कार्यतारतम्येऽपि तथापत्तेरत आह। **महेति**। विशेषमाहोपेति। **चे**नार्द्रवासस्त्वादिसमुच्चयः। तदाह **नारदः**।

" प्राड्विवाकस्ततो विप्रो वेदवेदांगपारगः। श्रुतवृत्तोपसंपन्नः शांतचित्तो विमत्सरः "

" सत्यसंधः शुचिर्दक्षः सर्वप्राणिहिते रतः। उपोषितश्चार्द्रवासाः कृतदंतानुधावनः "

" सर्वासां देवतानां च पूजां कृत्वा यथाविधि ' इति "

**शिष्टेति**। वस्तुतस्तु सूर्यस्य तद्वारस्योदयो यत्रेति, सूर्यस्तद्वारः उदये अर्थाद्रवेरिति वा अर्थ इति स्मार्तमपीदमिति बोध्यम्। **तत्रापि** भानुवारेऽपि। विशेष इत्यत्रान्वयः। '**दिवसस्ये**' **त्यस्य**

---

[1] ख–प्रमाणत्वे।

सर्वत्र संबंधः । स्पष्टार्थं विषान्यादिव्यमात्रे दिवसस्य प्राधान्यसूचनार्थमिदं विशेषणम् । **सुशीतले** इति हेतुगर्भं यामविशेषणं । ' तु शितले ' इति पाठांतरम् । ' सुशीतलमिति ' पाठस्त्वयुक्तः । विशेषमाह । **अनुक्तेति।** एतेन न्यूनता निरस्ता । कालस्योक्तत्वदाह । **वेलेति ।** प्रभृतिशब्देन फालादिग्रहणम् । **पूर्वाह्णे इति ।** 'अहोरात्रोषिते स्नाते त्वार्द्रवाससि मानवे' इत्यस्य पूर्वार्द्धम् । पूर्वाह्णादीनामनेकत्वादाह । **अहनीति ।**

**पितामहोक्त**मेव विशेषांतरमाह । **तथेति ।** मासादिरित्यर्थः । **मुखेन** तदुभयद्वारा । **विधीति ।** तत्रेत्यादिः । बहुव्रीहिः । एवमग्रेऽपि । ' शिशिरहेमंताावि ' त्यार्षम् । ' ऋतुनक्षत्राणामानुपूर्व्येणेत्युक्तेः । एवं शरत् ग्रीष्मे इत्यपि बोध्यम् । अत एवाग्रे तथैव प्रयोगद्वयं अंत्ये समाहारद्वंद्वः । ' वर्षाण्येवेति ' **कल्पतरु**धृतोऽपपाठः । तस्य स्त्रीत्वात् । ' प्रकीर्तित ' इति पाठे ' काल ' इत्यस्य विशेष्यत्वं बोध्यम् । ' यो यस्य विहितः कालो विधिर्यस्य च यो यथा । तं प्रवक्ष्यामि तत्वेन वादिनश्च बलाबलमिती'तः प्रागुक्तेः । अत एव ' अग्निः शिशिरहेमंतवर्षासु परिकीर्तितः ' इति **मयूख**धृतपाठोऽप्ययुक्तः । **कोशास्त्विति ।** अस्य स्थाने । ' धटः सर्वर्तुकः प्रोक्तो वाते वाति विवर्जयेदिति ' पाठः **कल्पतर्वादौ ।** इदं **नारदीय**मिति केचित् ।

एवमन्यत्रोक्तं स्थावरेषु कथयन् स्थावरपदसार्थक्यं तत्राह । **स्थावरेष्विति । द्दष्टेति ।** तद्रूपदृष्टेत्यर्थः । नेत्युत्तरान्वयि । **विकल्पेति ।**

न्यूनतां निराचष्टे । **कोशेति ।** चतुर्णां दिव्यानां प्रत्येकमुक्तत्वात्तन्मध्यपाठसत्वादिति भावः । तत्रापाठात् भेदेनाह । **तंडुलेति ।** अत एव **पुन**स्त्वर्थे । **विशेषेति ।** अग्न्यादेरिवेति भावः । शंकाविषयतया सहपाठाच्चेत्यपि बोध्यम् । तप्तमाषादेस्तु चैत्रादिरेव काल इति बोध्यम् ।

द्वितियमाह **प्रतीति । न शीते इति ।** " विचार्य धर्मनिपुणैर्धर्मशास्त्रविशारदैः । धर्मसर्वर्तुकं प्रोक्तं पंडितैर्धटधारणम् ॥ वर्षासु समये वह्निर्हेमंते शिशिरे तथा । ग्रीष्मे सलिलमित्युक्तं विषं काले तु शीतले " इति प्राक् **नारदोक्तेः । प्रवाते** प्रकृष्टे वाते सति । ' न मध्याह्ने ' इति निषेधो जलान्यपरः । अतः प्रागुक्त**पितामह**विरोधो न । विध्येकवाक्यतायै विरोधनिरासाय चाह । **न शीते इत्यादि । हेमंतेति ।** मार्गशीर्षान्येत्यादिः । **उष्णकालशब्देन च** उष्णकालशब्देनापि **ग्रीष्मशरदोः** ग्रहणमित्यनुषज्यते । एवं प्रावृट्शब्दो ग्रीष्मशरदोरप्युपलक्षणमिति बोध्यम् । " अव्यवस्थितमर्यादं विषं प्रावृषि जायते " इति **पितामहः ।**

ननु ग्रीष्मादिकालविधेरेवान्यकालनिवृत्तौ सत्यां पुनर्निषेधोऽफलोऽत आह । **विधानेति ।** निषेधविषयकालस्येत्यर्थः । यथाश्रुतेऽनुपपत्तिः स्पष्टैव । **ज्योतिःशास्त्रे** विशेष उक्तः—

" सिंहस्थे मकरस्थे च जीवे चास्तमिते तथा । मलमासे न कर्तव्या परीक्षा जयकांक्षिणा ॥
" रविशुद्धौ गुरौ चैव न शुक्रेऽस्तं गते पुनः । सिंहस्थे च रवौ नैव परीक्षा शस्यते बुधैः ॥
" नाष्टम्यां न चतुर्दश्यां प्रायश्चित्तपरीक्षणम् । न परीक्षाधिवासश्च शनिभौमदिने भवेत् ॥

---

१ व्या. वार्तिकं । २ नारदीये अ० १ श्लो० २६८ । ३ क—विचार्ये धर्मम् । ४ ' वर्षासु वह्निरित्युक्तः शिशिरे तु घट स्मृतः' । ५ अ. १ श्लो. २५४ ॥ ६ ख—न परीक्षा विवाहश्च ॥

“ नो शुक्रास्तेऽष्टमार्के गुरुसहितरवौ जन्ममासेऽष्टमेंदा—
विष्टौ मासे मलाख्ये कुजशनिदिवसे जन्मतारासु चाथ ।
नाडीनक्षत्रहीने गुरुरविरजनीनाथताराविशुद्धौ
प्रातः कार्या परीक्षा द्वितनुचरग्रहांशोदये शस्तलग्ने ” इति ।

**वक्ष्यत इति** अनुपदमेव कांलातरे त्वित्यादिना ।

## याज्ञवल्कीये ९८ श्लोकः ।

**अधीति** वर्णादीत्यर्थः । तथोक्तिस्वारस्यादाह । **स्त्रीमात्रमिति** मात्रार्थं यावत्त्वं विशदयति । **जातीति ।** एवमग्रेऽपि । ब्राह्मणीत्वादिर्जातिर्वर्षादिर्वयः तत्कृता एवावस्थाः । बाल्यादयः । **नेत्रेति ।** लोकप्रसिद्ध्यानुरोधेनेदम् । यथा तु भाष्यं तथा आह । पूर्णेत्यादिः । महाभियोगेषु सावष्टंभेषु प्रागुक्तवाक्येभ्यः सर्वेषां प्राप्तिराह । **तुलैवेतीति ।** तृतीयपादार्धं व्याचष्टे । **अग्निरिति ।** पूर्ववदनियमेन एवासंबंधात्स्मृत्यंतरानुरोधाच्चेदमुपलक्षणमित्याह । **फाल इति ।** अवशिष्टार्थमाह । **जलमिति ।** ननु ‘ जलं वे ’ त्यस्य जलमेवेति कथमर्थोऽत आह । **वाशब्द इति ।** “ वा स्याद्विकल्पो समयोरेवार्थापि समुच्चये ” इति कोशात् । एतस्याग्रेऽप्यन्वयो बोध्यः । अत एव ‘ सप्तैवे ’ त्युक्तिरग्रे ।

अवशिष्टं व्याचष्टे । **विषस्येति । उक्तेति ।** पूर्वाध्यायान्ते इति भावः । नन्वग्निजलविषाणां श्रोतानां श्रौतशूद्रे एव विकल्पोऽस्तु किमित्यश्रौतक्षत्रवैश्यविषयतास्वीकारोऽत आह । **ब्राह्मणस्येति । युक्तमिति ।** पारिशेष्यादिति । अन्यथा न्यूनतापत्तेः । एकस्य वाशब्दस्य आधिक्यात् स्मृत्यंतरानुरोधाच्चेति भावः । एतेन ‘ विषस्य चेति ’ क्वाचित्कः पाठः प्रयुक्तः । एतदेवाह । **एतदेवेति ।** दापयेत् नृप इति शेषः । **नारदोऽप्येवम् ।** गोरक्षकादिद्विजानामप्येवं बोध्यम् । तेषां तत्समत्वस्योक्तत्वात् ।

विरोधं परिहरति । **यत्त्विति । नारदमाह । सत्रेति । भृशेति ।** अतिशयिताधिग्रस्तानामित्यर्थः । ‘ कृशार्तानामिति ’ पाठस्तु **कल्पतरौ** स्थितो न युक्तः पौनरुक्त्यापत्तेः । **अपेक्षित इति ।** ‘ अपेक्ष्यत ’ इति द्वितीयः ‘ अवेक्ष्यत ’ इति त्रितीयः पाठः । **इतीति** विकल्पेति । इति पक्षप्राप्तदिव्येत्यर्थः ।

ननु कथमनेन तन्निवृत्तिरत आह । **एतदिति ।** स्त्र्यादीनामिति पूर्वान्वय्यपि । अन्यैः सहेति विक्षेषैः तत्र । वैपरीत्येऽप्याह **एतेषामिति ।** स्त्र्यादीनामित्यर्थः । ननु स्त्र्यादीनामन्यैः सह तदभियोगे पक्षद्वयेऽपि तदन्येषामेव दिव्यमित्यस्तु अन्यतरविकल्पः । तथापि तेषां मिथोऽभियोगे कथमत आह । **परस्परेति । विकल्प इति ।** ऐच्छिकविकल्प इत्यर्थः । ननु दिव्यकर्तृविकल्पत्वाद्दिव्यविकल्पोऽप्यस्त्विति चेन्न । तस्य न्यायतः प्राप्तत्वेऽपि ‘ तुला स्त्रीति ’ वाक्येन नियामकेन बाधात् । **तत्रापीति ।** दिव्यानां मध्येऽपीत्यर्थः । अनेन ‘ तुला स्त्रीति ’ मूलवचनेन । नायं नियमः सावष्टंभाभियोगे एव किं त्वन्यत्रापीत्याह । **तथेति ।** अयं समुच्चये न सादृश्ये । तत् शंकाभियोगे सर्वथा सावष्टंभाभियोगसाम्याभावात् । तुलानियमसाम्यमात्राशयको[3] वा तथाशब्दः । नियम्यते इत्यस्यानुषंगः ।

नन्वेवं तुलानियमस्य स्त्रीणां सार्वकालिकत्वापत्तिस्तस्याप्यनेन बाधादत आह । **एतच्चेति ।** स्त्रीबालेत्यादिमूलवाक्यं चेत्यर्थः । अर्थवदित्यत्रान्वयः । मासक्रमस्याविवक्षितत्वादाह । **मार्गेति ।**

१ ख–तथाऽपूर्णे त्यादिः । २ क–शेषः । ३ ङ–भावाशयको ।

अयमकारांतः शब्दः । **अर्थवत्** । सफलं संभावितम् । अन्यथासार्थक्यं निराचष्टे । **न चेति** । न त्वित्यर्थः । **तुलैवेतीति** । नियामकतयादेरनुषंगः । **नारदमाह** । **स्त्रीणां त्विति** । " क्लीबान्नरान् सत्वहीनान् परितश्चार्दितांतरान् । बालवृद्धातुरांस्त्रीश्च परीक्षेत धटे सदे ॥ " त्यस्य पूर्वपद्यम् । **अतः** यतो निषेधस्तयोरत इत्यर्थः । ' अंतस्तत्त्वमिति ' पाठे अन्तरं वस्तुतत्वमित्यर्थः । **आदि**संग्राह्यमाह । **अन्यादिभिरिति** । आदिना तंडुलादिः ।

वर्णविषये विशेषमाह । **तथेति** । उक्तं सर्वमुपसंहरति स्पष्टार्थम् । **तस्मादिति** । चैत्रादिमासत्रये इत्यर्थः । **बहुदिव्येति** । पात्रादित्वात् स्त्रीत्वेन । **इदं वचनमिति** । ' स्त्री बाले ' त्यादिमूलवाक्यमित्यर्थः । एवव्यवच्छेद्यं दर्शयन् 'प्रयोजनं तु वक्ष्यत ' इति प्रागुक्तं प्रयोजनं दर्शयति । **कालांतरे त्वित्यादि** । **सलिलमेवेति** । सर्वेषां इति भावः । अयं च कालविशेषेऽग्न्यादिनियमः कुष्ठाद्यनुपेतविषय इति विशेषांतरमाह । **येषां त्विति** । **अपिना** साधारणकालसमुच्चयः । वर्णाद्याशयेनाह । **तुलाद्येवेति** । किंच स बलिष्ठविषयक इत्याह । **तथेति** । **दुर्बलानामपीति** । अग्न्यादीत्यादेरनुषंगः । उक्तं प्रयोजनमुपसंहरति । **सर्वथाऽपीति** । ' विधिप्रतिषेधाद्दतुकालानतिक्रमेणेति ' पाठः ॥ ९८ ॥

## याज्ञवल्कीये ९९ श्लोकः ।

व्यवहितसंगतिमाह । **महेति** । **तत्र** महाभियोगेषु । प्राग्वदाह । **पणेति** । ' आङ् मर्यादायामि'त्याह । **अर्वागिति** । **फालमिति** । सादृश्यात् अग्निमित्यर्थः । तस्य मूलकृताऽनेनैवोक्तत्वात् तथैव । वाच्ये एवमुक्तिस्तु तस्यापि प्रसंगतोऽभिमतत्वं सूचनाय एकेनैवेष्टसिद्धावाधिकं स्पष्टार्थमिति । सूचयितुमाह । **नेति** । ' हरोदि ' त्यस्यांतर्भावितणयर्थतया लक्ष्यार्थमाह । **न कारयेदिति** । न्यूनतानिरासाय आह । **मध्येति** । अग्नेस्तु फालत्वेनैव ग्रहणसंभवस्थोक्तत्वादाह । **जलमिति** । ' तुलाग्न्याप ' इत्यत्र तुलाविषयोर्मध्ये स्थितत्वात्तस्यापि तत्वमित्यर्थः । नेत्यादेरनुषंगः । **यथोक्तमिति** । **पितामहे**नैवेति भावः । **अत्र** ' नासहस्रादि'त्यत्र तदेकवाक्यतापत्तेः । **अग्नेति** । न ग्रहणमित्यर्थः । **अल्पेऽपीति** । तथा चैतेषां गुरुष्वेवेत्यादिनियमात्तस्य असाधारण्याद्वैलक्षण्येनाग्रहणमिति भावः । तमेव नियमं फलितमाह । **एतानि चत्वारीति** । तुलाग्निजलविषाणीत्यर्थः । संज्ञायाः प्रागुक्तत्वादाहं । **पणेति** । **सहस्रादिति** । अभिव्याप्तौ । आङ्योगे पंचमी । तमभिव्याप्येत्यर्थः । तत्र अग्रिमनिरासाय ' अर्वागिति ' शेषव्याख्याने उक्तः । तथा च व्युत्क्रमः सूचितः । तदाह । **सहस्रादूर्ध्वमेवेति** । **नार्वागिति** । तदूर्ध्वतो नार्वागित्यर्थः । अत एव सहस्रैरपि न इत्याशयेनाह । **नन्विति** । **अर्वागपीति** । ऊर्ध्वत एव अर्वागपीत्यर्थः । **आयसं** फालम् **तत्र** विरोधे सति । **यत् द्रव्येति** । सुवर्णेत्यर्थः । तथा सति फलितम् विशेषमाह । **एतच्चेति** । ' नासहस्रादिति ' मौलं ' सहस्रे त्विति ' **पैतामहं** चेत्यर्थः । **स्तेयेति** । स्तेयसाहसोभयविषयमित्यर्थः । ननु **कल्पतरुणा**-' नासहस्रादिति वाक्यं ' पणसहस्रादूर्ध्वं नैवापह्नवे फालादिक्रियेत्वेवमपह्नवविषयतया व्याख्यातमिति तथैव कुतो नोक्तमिति चेन्न । उपस्थितपूर्वोक्तसंगातिसंभवेऽनुप-

१ क-ख-अन्यतराविकल्पः । २ पृ. ५९ पं. २२॥ ३ ख-तत्र महाभियोगेषु पंच ङ-पंचम्युपपत्तये आह । अर्वागिति । ४ ङ-नैवोक्तत्वात् । ५ पूर्णेति' पणसहस्रमारभ्यैवेत्यर्थः । तदाह नार्वागिति । विरोधमाह । नन्विति । आदिना तदादि समुच्चयः । अग्न्यादीनि । ६ ' पंचम्यपाङ परिभिः ' व्या. सू. ( २।३।१० ) । ७ उद्धामेवापन्हवे ८ ख-फालादिक्रियेत्यर्थः ।

स्थितपरतया व्याख्यानस्यामौचित्यात् । तथा च स विषयो मूले नोक्त एव तदेतत् ध्वनयन्नाह । **अपह्नवे त्विति । प्रमाणम् ।** अपन्हुतद्रव्यानुसारेण दिव्यानि । **स्तेयेति ।** अत्र ब्राह्मण-वसिष्ठन्यायेन स्तेयान्यसाहसपरं साहसपदम् । **स्वल्पेऽप्यर्थ इति ।** अपिना महतः समुच्चयः । तत्प्रकारमेवाह । **सर्वेति । युक्तं** तत्संबद्धं नासंबद्धं तत्तुल्यमिति यावत् । **ज्ञात्वा संख्यामिति ।** पूर्वान्वयि । **संख्या** प्रमाणम् । सुवर्णानामित्यस्य मध्यमणिन्यायेनान्वयः । **चत्वारिंशतीति ।** तत्संख्याकेषु सुवर्णेषु अपन्हुतेष्वित्यर्थः । **विंशेति ।** विंशतिः प्रमाणमस्येति विंशम् । तच्च दश च तेषां विनाशे इत्यर्थः । 'विंशद्दशेति ' पाठातरम् । ' विंशतिदशेति ' त्रितीय पाठः । पंचार्धिकस्येति पाठः । पंचैवार्धम्--स्वार्थे ठक्--तस्येत्यर्थः । पूर्वान्वयीदम् । वाशब्दस्वारस्यात् । 'तदर्धे'त्यत्र तच्छब्देन दश परामृश्यंते । 'तत' इत्यनेन पंच । अग्रे 'तत' इत्यनेन पूर्वतदर्धार्धम् । **लौकिक्यः** लोकभवाः । अन्ये शपथादयः । **विचारयन् ।** तत्पूर्वकं कुर्वन्नित्यर्थः । **कल्पतरौ** तु पाठांतरम् । 'प्रयोज-येत् ' इति---अग्रे

" शते विषं तु पादोने हुतभुक् तत्र दृश्यते ॥ आपस्त्रिभागहीने तु शस्तार्द्धे तु तुला स्मृता । "
" कोशपानं तदर्धे वा दशपंचकसप्तसु । तदर्धे तंडुला देयास्तदर्धे तप्तमाषकः " इति ।

**शते सुवर्णस्येति** शेषः । **वृद्धकात्यायनः**—

" ज्ञात्वा संख्यां सुवर्णस्य शतनाशे विषं स्मृतम् । अशीतेस्तु विनाशे तु दद्याच्चैव हुताशनम् ।
"षष्ठ्या नाशे जलं ज्ञेयं स्याच्चत्वारिंशतो धटम् । त्रिंशद्दशविनाशे तु कोशपानं **बृहस्पतिः ।**
"पंचार्धिकस्य वा नाशे तदर्धस्य च तंडुलाः " ॥ पंचार्धिकस्य पंचार्धं सार्धद्वयं इति ।

महत्त्वसंपत्तये आह । **ज्ञात्वेति ।** तत्पदस्वारस्यात् । नन्वत्र नाशपदोक्त्या कथमस्यापह्नव-विषयत्वमित्यत आह । **नाशेति ।** मिथोऽनयोर्विरोधं परिहरति । **नासहस्रादिति ।**

अन्योऽपि विशेषः **कात्यायनेनोक्तः ।** ' देशकालविरोधे तु यथायुक्तं प्रकल्पयेत् । अन्येन हारयेद्दिव्यं विधिरेष विपर्यय ' इति ॥ हा **हारयेत्** कारयेत् । **विपर्यये इति ।** दिव्यकारिणोऽभियुक्त-स्यासामर्थ्ये । ' कालदिव्यविरोधे तु यथायुक्तं विरोधयेत् । अन्येन हारयेद्दिव्यं विधिरेष विवर्जयेदिति ' **कल्पतरौ** पाठः । अत एव महापातक्यादीनामन्याद्वारा दिव्यमाह । स एव—

" मातापितृद्विजगुरुबालस्त्रीराजघातिनाम् । महापातकयुक्तानां नास्तिकानां विशेषतः ॥
" लिंगिनां प्रसवानां तु मात्रयोगक्रियाविदाम् । वर्णसंकरजातीनां पापाभ्यासप्रवर्तिनाम् ॥
" एतेष्वेवाभियोगेषु निंद्येष्वेवं प्रयत्नतः । दिव्यं प्रकल्पयेन्नैव राजा धर्मपरायणः ॥
" एतैरपि नियुक्तानां साधूनां दिव्यमर्हति । नेच्छंति साधवो यत्र तत्र शोध्यः स्वकैर्नरः ॥ इति ।"

तथा च दिव्यकारिणोऽशक्तौ प्रतिनिधिः ' विपर्यये ' इत्यंतेनोक्तः । **अन्येन हारयेत् ।** प्रतिनिधिना कारयेत् । मातापित्रित्यादिना पूर्वं पित्रादिघातादिमहापापं न कृतमिति निश्चये कालां-तरे चार्थांतरसंदेहेऽपि प्रतिनिधिद्वारैव द्विव्यमुक्तम् । ' वृद्धस्त्रीबालेतिपाठांतरम् । ' प्रमदानां ' चेति । तथा नेच्छंतीति अत्र न ' संतीति ' । तथा ' तत्र शोध्याः स्वकैर्नर ' इत्यत्र स्वकैर्नरैरिति । **स्वकैः** आप्तैः ।

---

१ ङ-तर्द्धम् । २ क-दत्तेष्वेवाभियोगेषु । ३ ख-नित्येष्वेव । ४ ख-एतै रेव । ५ क-आप्तैः ।

'नृपार्थेष्वि' त्यस्य नृपोऽर्थो विषयो येषां द्रोहाणां तेष्वित्यर्थः। तदाह। **नृपद्रोहेष्विति।** अभिशापे चेत्यस्य वास्तवे तत्रेत्यर्थः। तदाह। **महेति।** सदेति व्याचष्टे। **द्रव्येति।** प्रक्रांतत्वादाह। **एतानीति।** शुचित्वं तत्र निमित्तमित्याह। **उपेति।** **आदिना** स्नानादिपरिग्रहः। विशेषमाह। **तथेति।** सभा च राजगृहद्वारं च देवायतनं च चत्वरश्चेति समाहारद्वंद्वः। व्यस्तपाठे तत्र द्वंद्वद्वयम्। **कुलं** गृहम्। **चत्वर**श्चतुष्पथः। साकांक्षात्वात्प्रकृतमाह। **घट इति।** **च**स्त्वर्थे उक्तदेशानामिति भावः। **इंद्रस्थान**मिंद्रप्रतिमा यत्र तत्रेत्यर्थ इति केचित्। 'इंद्रध्वजयूथस्थानमिति' **कल्पतरुः।** 'इंद्रध्वजपूजास्थानमित्यन्ये:'। इंद्रस्य परेश्वरस्य स्थानम्। तत्रेति स्वयं। 'अभीत्यस्यैव' व्याख्या **महेति।** **च**स्त्वर्थे। तथापाठ एव वा। 'दिव्यमि' त्यस्यानुषंगः। विषयसप्तमी च। देशव्यवस्थामुक्त्वा दिव्यव्यवस्थामाह। **अस्पृश्येति।** अस्पृश्याश्चंडालादयः। अधमाः शूद्रादयः। **न तु** न हि। **तत्प्रसिद्धानि** घटसर्पादीनि। **नारदः।** (अ१-२५५।३१३-३१५)

"नार्तानां तोयशुद्धिः स्यान्न विषं पित्तरोगिणाम्। श्वित्र्यंधकुनखादीनां नाग्निकर्म विधीयते॥
"न मज्जनीयाः स्त्रीबाला धर्मशास्त्रविचक्षणैः। रोगिणो ये च वृद्धाः स्युः पुमांसो ये च दुर्बलाः॥
"निरुत्साहान्व्याधिक्लिष्टांस्तांस्तोये न निमज्जयेत्। सद्यो म्रियंते मज्जंतः स्वल्पप्राणा हि ते स्मृताः॥
"साहसेऽप्यागतानेतान्नैव तोये निमज्जयेत्। न चापि हारयेदग्निं न विषेण विशोधयेत्॥"

**विष्णुः**

"नश्लेष्मिकव्याधितानां भीरूणां श्वासकासिनाम्। न लोहशिल्पिनामग्निः सलिलं नांबुसेविनाम्॥"
"मंत्रयोगविदां चैव विषं दद्यात्तु न क्वचित्। तंडुलैनाभियुञ्जीत व्रतिनं मुखरोगिणम्॥"

**व्रती** पयोव्रतादिमान्।

**पितामहः**

"मद्यपस्त्रीव्यसनिनां कितवानां तथैव च। कोशः प्राज्ञैर्न दातव्यो ये च नास्तिकवृत्तयः॥"

**नारदः।**( १।३३२ )

"महापराधे निर्धर्मे कृतघ्ने क्लीबकुत्सिते। नास्तिके दृष्टदोषे च कोशदानं विवर्जयेत्॥"

**नारदबृहस्पतिकात्यायनाः—**

"यथोक्तविधिना नेयं[1] दिव्यं दिव्यविशारदैः। अयथोक्तं प्रदत्तं च न दत्तं साध्यसाधने॥
"अदेशकालदत्तानि बहिर्वादिकृतानि च। व्यभिचारं सदार्थेषु कुर्वंतीह न संशयः॥"

वादिनमभियोक्ता बहिर्वादी॥ **मातृकेति।** परिभाषेत्यर्थः॥ ९९॥ ॥ इति दिव्योपोद्धातः॥

संगतिमाह। **एवमिति।** **मातृकां** तत्परिभाषाम्। **प्रयोगमिति।** तावत्सर्वसाधारणमित्यर्थः। यद्वा 'जातावेकवचनं'। प्रयोगानित्यर्थः।

## याज्ञवल्कीये १००।१०१।१०२ श्लोकाः।

'क्रमेणे'त्यादिः। ईदृशोऽवतारितः प्राड्विवाककृत्योत्तरम्। **इति** अनेन मंत्रेण। तुलामभिमंत्रयेदित्यन्वय इत्याह। **तुलाया इत्यादिना।** तृतीयांतस्य व्यवहितान्वय

---

१ ख-देयम्।

इत्याह । **तैः प्रतीति** । अंतर्भावितण्यर्थत्वेनाह । **समीकृत इति** । इदमुक्तरीत्योपल[illegible]मित्याह । **अभियोक्ता वेति** । तात्पर्यार्थमाह । **दिव्येति** । **रेखामिति** । 'लेखामिति' पाठांतरम् । किंचिच्चिह्नाविशेषामित्यर्थः । तमेवाह । **येनेति** । **पांडुिति** । अपक्कलेखेनेत्यर्थः । 'खडीति' भाषाप्रसिद्धः । 'अभी'त्यस्य व्याख्या **प्रार्थेति** । इतीत्यस्यार्थमाह । **अनेन मंत्रेणेति** । स्वामित्यादि मामित्यंतेनेत्यर्थः । तदर्थमाह । **हे इत्यादि** । धामार्थः । **स्थानमिति** । तदित्यस्य व्याख्या **तस्मादिति** । सत्यमित्यस्यार्थः **संदिग्धेति** । भाषणासंभवादाह । **दर्शयेति** । प्रकृतत्वादाह । **अस्मादिति** । अस्मीत्युक्तेरध्याहारेण तस्य तदर्थान्वयत्वेन वाऽऽह । **अहमिति** । प्राग्वदाह । **असत्येति** । एवमग्रेऽपि । निपातानामनेकार्थत्वात् चेदर्थमाह । **अथेति** । 'मामस्मी' त्युक्तिस्वारस्यादस्याप्रवृत्तेराह । **प्राडिति** । धर्माधिकारिण इत्यर्थः । इदमनुपदमेव स्फुटीभविष्यति । न्यूनतां निराचष्टे । **जयेति** । तयोः स्वरूपे इत्यर्थः । जातावेकवचनं । **लिंग**मूर्ध्वगमनादिकम् । एतदर्थमेवाह । **धटेत्यादिना** । **पुन**स्त्वर्थे । आरोहणादीति **आदिना**ऽवतारणम् । **नारदा**दीति **आदिना व्यासादि**परिग्रहः ।

तत्रादौ **पितामहमाह** । **छित्वा त्वित्यादिना** । **यज्ञियं** खदिरादिकम् । **मंत्रेति** । 'ओषधे त्रायस्वैनमि' त्यादि मंत्रपूर्वकं इत्यर्थः । छेदनक्रियाविशेषणमिदं । 'यूपवदि'त्यस्य'तुला कार्ये' त्यत्रान्वयः । 'यूपवदि' त्यतिदेशसिद्धम् 'मंत्रव'दित्युक्तमेवानुवदति । **मंत्र इति** । **वानस्पत्यच्छेदने इति** समस्तम् । तच्छेदनकाले सोमदेवताकः । " सोमो धेनुं सोमो अर्वतमि " त्यादिमंत्रो जप्य एवेत्यर्थः । व्यस्तः पाठे वाचस्पत्यो मंत्रो " वनस्पते शतवल्शो विरोहेति " । अनयोर्जपमंत्रत्वेनादृष्टार्थत्वात्समुच्चयः । **चो** भिन्नक्रमः । **छेदने** तुलाकाष्ठच्छेदने । स स च जप्य एवेत्यर्थ इत्यन्ये । तुलास्वरूपमाह । **चतुरस्रेति** । **त्रिषु** पार्श्वद्वये मध्ये **च** । तत्फलमाह । **अर्थवदिति** । क्रियाविशेषणमेतंत्[1] । यथा तुलायाः सामर्थ्यं भवेत्तथा देयानीत्यर्थः । 'यत्नत' इति पाठांतरम् । तत्प्रमाणमाह । **चतुर्हस्तेति** । **भूमेरुपरि** ऊर्ध्वं । **तत्समौ** तुलासमौ । चतुर्हस्तौ पादौ कार्यावित्यर्थः । 'पादौ कार्यौ तथा विधाविति' पाठांतरम् । तयोः पादयोरन्तरं व्यवधानं तु **हस्तौ** हस्तद्वयपरिमितं भवेदित्यर्थः । च्वेरन्यत्रानियमान्नानुपपत्तिः । पक्षांतरमाह । **अध्यर्द्धमेव** वेति । सार्द्धहस्तं वेत्यर्थः । 'उपरी'त्येतत्सूचितमेवाह । **हस्तद्वयमिति** । उभयोरपि पादयोर्हस्तद्वयं हस्तचतुष्टयाद्वशिष्टं भूम्यंतः प्रवेशनीयमित्यर्थः । **तोरणे चेति** । तथेत्यनेन हस्तद्वयांतरालतोक्ता । भूमेरुपरि समता समागतैव । तदन्तनिखातस्तु यथासंभवः । अत एव विशेषमाह । **धटादिति** । तथ च तुलायाः पार्श्वद्वये हस्तद्वयांतरालं दाक्षिणोत्तरयोः स्तंभस्य द्वयं निखाय तयोरुपरि उत्तराग्रं काष्ठं देयम् । तदेतत्तोरणमिति बोध्यम् । तस्य फलं कथयन् तच्चावश्यं धटादृशांगुलोच्चमित्याह । **अवलंबाविति** । तोरणाभ्यां संबद्धौ । तदधः प्रदेशे लंबमानौ अधोमुखौ मृन्मयौ तद्गोलकरूपौ सूत्रसंबद्धौ धटमस्तकचुंबिनौ तुलाप्रांतद्वयोपरिभागस्पृशौ अवलंबौ तत्संज्ञकौ कार्यावित्यर्थः । 'धटमस्तकचुंबिताविति' पाठांतरे बहुव्रीहिः । सम्यग्ज्ञानार्थमेवावलंबद्वयकरणम् । एतत्फलमनुपदमेवाग्रे स्फुटीभविष्यति । 'स विज्ञेयः समो धटः' इति । तस्याग्रं तदाधारदेशं चाह । **प्रागिति** । **कल्पयेत्** स्थापयेत् । आस्तरणमिदम् । **पश्चिमे** शिक्ये । **अन्य-**

---

१ ख-क्रियाविशेषणं वैतद् ।

**स्मिन्** पूर्वे । **शुभामिति** । इष्टकाभस्मपाषाणकपालास्थिदुर्गंधादिविवर्जितामित्यर्थः । **पिटकं** शिक्यम् । **तस्मिन्** उपविष्टे सति । चयनीयत्वेनाभ्यर्हितत्वात्पूर्वनिपातः। समुच्चयफलाभावात् तुल्यार्थत्वाच्चाह । **अत्र चेति** । " मृत्तिकेत्येव सत्य " मिति श्रुतेः । उक्तक्रमादाह । **मृत्तीति** ।

परीक्षाप्रकारमाह । **परीति । पश्चादिति** । ' तस्मादिति ' पाठांतरम् । **पताकेति** । पताकासहितध्वजशोभितमित्यर्थः । अल्पत्वमहत्त्वकृतोऽनयोर्भेदः । एवमग्रेऽपि । '.परित ' इति भावः । **मंत्रवित्** । ' धर्मविदिति ' पाठांतरम् । तृतीयाद्वयमुपलक्षणे । **अनुलेपनं** स्नानचूर्णम् । 'अनेन विधिने ' त्युक्तविधिमेवाह । **एह्येहीति** । अनेन प्रधानदेवतास्वरूपमपि कथितम् । **अस्मिन्** तुलाख्ये । वसवश्चादित्याश्च मरुतश्च गणाश्चेति द्वंद्वः । **अंगानि** लोकपालादीनि । तत्प्रकारमेवाह । **इंद्रमित्यादिना** । एतेषां ध्ययरूपाण्याहेंद्र **इत्यादि । भागे इति** । पार्श्वे 'वसूनावाहयेदिति ' पाठांतरम् । तेषां संख्यामाह । **धर इति । देवेश** इंद्रः । **तथा**ऽर्चनं 'तथाऽयनमिति' पाठांतरम् । प्रागवदाह । **धातेति** । ' वरुणोंश ' इति पाठः । अन्योऽपपाठः । **अजघेत्यादि** । क्रमादुभयविशेषणम् । गणपदार्थानाह । **अग्नेरित्यादिः । अयनं** स्थानम् । तानाह । **वीरेति** । अत्र'महायशा इति । गिरिशविशेषणम् । ' विशांपतिरिति ' कपालिविशेषणम् । 'द्वौ विशौ वैश्यमनुजाविति ' कोशः । **भगवानिति** भवविशेषणम् । ' भग ' इति पाठांतरम् । क्रमस्य विवक्षितत्वात्प्रेतेशस्य पूर्वनिपातः । **मातृस्थानमिति** समस्तपाठः । ता आह । **ब्राह्मीत्यादि । गणसंयुतेति** विशेषणं चामुंडायाः । तथा च सप्त बोध्याः । गणेश एक एव । **मरुतां** वायूनां । तानाह **गगन** इति । ' प्राणेशजीवावि ' त्यार्षम् । च समुच्चेयमाह । **धटस्योत्तरेति** । पूजाक्रममाह । **भूषेति** - अर्घप्रभृत्यलंकारांतं क्रमेण धर्माय प्रधानदेवतायै दत्त्वा पश्चादिंद्रादीनां तथैव कुर्यादित्यर्थः । निवेद्यो नैवेद्यः । सर्वथोक्तक्रमेणेति भावः ।

अस्यार्थमाह । **अत्र चेति** । तुलाख्यदिव्यविषये इत्यर्थः । ' पूजाक्रम ' इत्यत्रान्वयः । कांडानुसमयस्याभावादाह । **पदार्थेति** । तद्रीत्येत्यर्थः । गंधादौ विशेषमाह । **गंधेति । शिष्टान्** । शेषभूतानंगानिति यावत् । **अन्यैर्वा** । गंधपुष्पैः । **यथोक्तमिति । नारदेनेति** भावः । **ततः** तस्याः पताकाद्यलंकारविधानानंतरम् । **श्रुतं** वेदशास्त्रे । **वृत्तमा**चरणम् । **सत्यसंधः** सत्यसंकल्पः । **शुद्धवासाः** । आर्द्रवासा इति पाठांतरम् । अन्यदप्याह । **तथेति । यथाहेति । पितामह** इति शेषः । प्रतीति । ' चतुर्दिक्षु ' इति पाठांतरम् । **तथेति**'समुच्चये । कथं कार्याकांक्षायाम् तत्र द्रव्याण्याह । **आज्येनेति** । उभयत्र इतरनिरासाय सामान्यनपुंसकत्वेन समिद्विशेषणं तथैव सार्थक्यं ध्वनयन्नाह । **होमेति** । एतत्रितयरूपहोमसाधनैरित्यर्थः फलितः । उत्तरार्धेऽन्वयः । अस्य मंत्रमाह । **सावित्र्येति** । अथशब्द आनन्तर्ये । **एवेन** तदभावव्यवच्छेदः । ' प्रणवेन ' इत्यस्य मध्यमणिन्यायेनान्वयः । आदियुक्तत्वं तृतीयार्थः । तदाह । **प्रणवादीति** । अथार्थः **पुनरिति** । पश्चादित्यर्थः । **स्वाहेति** । ' वर्षट्कार ' इत्यनेन सामान्यापेक्षज्ञापकेनायं साधुः प्रयोगः । प्रसिद्धत्वाद्धविःशब्दार्थमाह । **चरूनिति** । 'चर्वाज्यसमिध' इत्युचितम् । अत्राज्यहविःसमिधां संप्रतिपन्नदेवताकत्वात् मिलितानामेव होमे सान्नाय्ययोरिवेति कश्चित्तन्न । आज्ये स्रुवेणावद्यतीति स्रुवस्य चरौ सकृदुपस्तृणाति मध्यात् पूर्वार्धाच्च द्विर्हविषोऽवद्यति अभिघारयति हविरवत्तं

१ पृ. ६२ पं. ११ " तत आवाहयेद्देवान् ॥ २ उच्चैस्तरां वा वषट्कारः । व्या. सू. ( १।२।३५ )

चैषोऽवदानधर्म **इति आश्वलायना**दिसूत्रात् स्रुवः। समित्सु असामर्थ्याद्धस्तस्यैव तत्वात्। भिन्नसाधनकत्वात्तंत्रतानुपपत्तेः। सान्नाय्यहोमयोस्तु एव साधनत्वात्तंत्रता युक्ता। तदेतद्ध्वनयन्नाह। **प्रत्येकमिति।**

अन्यदाह। **एवमिति। शोध्येति।** दिव्यकारिणः शिरसि बध्नीयादित्यर्थः। **यथाहेति। पितामह** इति शेषः। **यं चार्थमिति।** यदर्थकर्मकाभियोगविषयीकृतो दिव्यकारी स्यात् इत्यर्थः। **पितामहो**क्तमेव मंत्रमाह। **मंत्रश्चेति। आदित्येति।** अभ्यर्हितत्वात् पूर्वनिपातः। **यथोक्तमिति। पितामहेनेति** भावः। 'आदित्ये' त्यग्रिममिदं पद्यम्। **चे**नाग्निमसर्वसमुच्चयः। **पितामह**मेवाह। **घटमिति। दर्शिताः** तेनैव। **धृतः** शुचौ देशेऽवस्थापितस्त्वं यस्मात् कुटिलं नरं भावयसे प्रतिपादयसि तेनेत्याद्यन्वयः। तमेवाह। **पुनरिति।** विशेषमाह। **आरोपितं चेति। तत्कालेति।** विनाडीपंचकेत्यर्थः। तमेवाह। **ज्योतिरिति।** ज्योतिःशास्त्रविदो ये ब्राह्मणास्तेषु श्रेष्ठ इत्यर्थः। पदत्रयमित्यन्ये। **परीक्षाकालेति।** कालस्य परीक्षा परीक्षाकालः। राजदंतादिः[१]। तत्र कोविदैरित्यर्थः। 'परीक्ष्या कालेति' पाठांतरम्। तैः परीक्ष्याः सत्य एव। विज्ञेया नान्यथेत्यर्थः। पंच **दशेति।** तथा च विनाडीशब्देन पलमुच्यते। **अहः स्वाग्निभिर्दीति।** 'अहोरात्रं त्रिंशतादिति' पाठांतरम्।

**तस्मिन्निति।** पलपंचकरूपे इत्यर्थः। **अलुब्धा** इति छेदः। **नृपे इति।** विषयसप्तमी। नृपं इति पाठांतरम्। **चोक्तमिति। नारदेने**ति शेषः। **स शुद्ध इति।** विशुद्धि इति पाठांतरम्। अत्र वृद्धिरूर्ध्वं गतिः। हानिरधोगतिः। अतो न पूर्वविरोधः। अत एवान्यविरोधं परिहरति। **यस्त्विति। न दिव्येनेति।** तथानियमाभावात्। **महत्त्वमिति।** इदं च शिरःस्थापितपत्रेणैवावगतमिति भावः। एवं चैतत्परं तत् न तत्परामिति न विरोध इति भावः। विशेषमाह। **यदा चेति। च**स्त्वर्थे। **अनुपेति** बहुव्रीहिः। छेदादिविशेषणम्। तमेवाह। **कक्ष्येति।** अस्पष्टत्वाद्विना भेदानाह। **कक्ष्यमिति।** धटस्य कर्कटाविति समासः। अन्यथा दोषापत्तेरित्याह। **कर्कटाविति। तुलांतयोः** संबद्धौ। तत्पदवाच्यत्वे बीजमाह **कर्कटेति।**

वैलक्षण्यादाह। **यदा त्विति।** तमेवाह। **शिक्यादीति।** अत एव 'शक्यमिति' व्याख्यातम्। व्यत्ययभिप्रायं बहुवचनम्। अन्यथाऽनयोर्मिथो विरोधः स्पष्ट एवेति भावः। **व्यासोऽपि** "कक्ष्यच्छेदे तुलाभंगे धटकर्कटयोस्तथा। रज्जुच्छेदेऽक्षभंगे च दद्याच्छुद्धिं पुनर्नृप" इति। **कात्यायनोऽपि**—"शिक्यच्छेदे तुलाभंगे तथा वाऽपि गुणस्य वा। शुद्धेश्च संशयेनैव परीक्षेत पुनर्नरम्।" अनेन कारणांतरमप्युक्तम्। आवृत्तिस्तोलनमात्रस्य न सांगप्रयोगस्येति प्राच्याः। 'एवं तु वैगुण्यपापपरिहारात्सांगः प्रयोग आवर्तनीय' इति **मदनः।** अत्राद्यमेव मूलसंमतम्। शेषं **पितामहो**क्त्यैव पूरयितुं चूर्णिकामाह। **ततश्चेति।** दिव्यकारीत्यर्थः। उपसंहरति सः। **एवमिति। ब्रह्मभूयाय** ब्रह्मत्वाय। **इच्छति** राजा। **पितामह**माह। **विशालामिति।** विस्तृतामित्यर्थः। **उच्छ्रितां** उन्नताम्। **यत्रस्थः** धटः। **तत्रैव** शालायामेव। एतान्[३] लोकपालादीन्। **कपाटबीजेति**[४]। शाकपार्थिवादिः। कपाटेत्यत्र अर्शआद्यच्। ततः कर्मधारयो वा। परमतात्पर्यमाह। **अशून्यामिति। व्रीह्यादीनाम्** व्रीह्यादीनीति पाठांतरम्॥ **इति धटविधिः**॥१००॥१०१॥ १०२॥

---

१ 'राजदन्तादिषु परम्' [व्या. सू. २।२।३१] ३ क-एनान्। ४ कपाटयुक्तबीजम्। यथा शाकप्रियः पार्थिवः शाकपार्थिवः।

## याज्ञवल्कीये १०३ श्लोकः ।

संगतिमाह । **इदानीं क्रमेति** । उद्देशक्रमेत्यर्थः। अत्र प्रागुक्तं सर्वं सामान्यमपेक्षितमित्याह । **विध्येति** । पत्रारोपणांते च विधौ सतीति पाठः । **विधिः** प्रकारः । पत्रारोपणांतविध्यंते सत्ययमिति पाठांतरम् । 'लक्षे'त्यस्य व्याख्या **तिलकेति** । 'लक्षदर्शनांकयो' रिति धात्वर्थानुसारादाह । **अंकेति** । ' अंकयित्वेति ' तत्र पाठातरम् । ' हंसपदानीति ' पाठः । तदाकाराणि चिह्नानीत्यर्थः। तत इत्यस्य व्याख्याऽ**नंतरमिति** । पूर्वं द्विवचनस्यैव सत्वादाह । **हस्तयोरिति** । तत्र विशेषमाह । **अंजलीति** । **नारद**मेवाह । **पत्रैरिति** । तावदिति क्रियाविशेषणमित्याह । **तावदिति** । तात्पर्यार्थमाह । **सप्तेति** । तावतां सूत्राणां समाहारः तावत्सूत्रं, पात्रादिः । तेन तावत्सूत्रेण सप्तसूत्र्या सकृद्वेष्टयेदित्यर्थः इति **मदनः** । वेष्टनसंख्यामुक्त्वा तथैव च स्पष्टार्थं सूत्रस्य संख्यां वर्णं चाह । **सूत्राणि चेति** । अनेन वेष्टननिष्ठसंख्यारोपेण सप्त सूत्राणि चेत्यर्थः । विशेषमाह । **तथेति** । **नारद**मेवाह । **सप्तेति** । **अथ** समुच्चये । ' सप्ते' त्यस्योभयत्रान्वयः । अक्षतानां स्पष्टं द्वैविध्यमुक्तं अनेन । अत एव **दधि** दध्यक्षतान् । तथा च सर्वैकवाक्यता । 'आवेष्टित'मित्यत्र भावे क्तः । 'आवेष्टनमिति' पाठांतरम् । **सुमन इति** ' जातौ एकवचनमि ' त्याह । **पुष्पाणीति** । **पितामह**विरोधं मूलस्य निराचष्टे । **यद्यपीति** । अतुल्यार्थत्वेन विकल्पो नेति सूचयन्नाह । **अश्वत्थेति** । **पितामह**प्रेति । **पितामह**कर्तृके । तत्प्रशंसावचनेनेत्यर्थः । तदेवाह । **पिप्पलादिति** ।

## याज्ञवल्कीये १०४ श्लोकः ।

**कर्तुरिति** । प्राड्विवाकस्य तु अग्रे वक्तव्यमिति भावः । ममेत्युक्तिरत्र बीजम् । सर्वपदोक्तेराह । **जरेत्यादि** । ' चरसी ' त्यस्य लक्ष्यार्थमाह । **उपयुक्तेति** । भुक्तादीत्यर्थः । साभिप्रायं विशेषणद्वयमित्याह । **पावकेत्यादि** । **साक्षिवत्** साक्षिणो यथा कथयंति । अनेनास्याग्रे एवान्वयो न पूर्वत्रापीति सूचितम् । यथाश्रुते पंचम्याद्यनुपपत्तेराह । **पुण्येति** । साक्ष्यनुरोधेन तथोक्तावपि प्रकृते तदर्थासंभवादाह । **दर्शयेत्यर्थ इति** । **ममेति** तु शेषत्वविवक्षायां षष्ठी । विशेषमाह । **अयःपिंडेति** । **तापैः** क्रियारूपैः । **अनेन** प्रागुक्तेन । तापत्रयफलमाह । **लोहेति** । **तृतीय इति** करणस्याधिकरणत्वविवक्षया सप्तमी । सत्यपुरस्कृतत्वमविवक्षितम्, किंतु तद्घटितत्वमात्रं विवक्षितमित्याह । **सत्यशब्दयुक्तमिति** । मंत्रो विशेष्य इत्याह । **त्वमिति** । अत्र सुरंजितत्वं अतिशयिततापकृतमेव । अत एव तस्य सस्फुलिंगत्वम् । ' सुरक्षितमिति ' पाठातरम् । " जात्यैव लोहकारो यः कुशलश्चाग्निकर्मणि । दृष्टप्रयोगश्चान्यत्र तेनायोऽग्नौ प्रतापयेदिति " । ' अग्निवर्णमि ' त्यतःपूर्वपद्यम् । विशेषांतरमाह । **प्राड्विति** । **मंडलेति** । यावति भूप्रदेशे मंडलेऽग्निः तत इत्यर्थः । **नारद**मेवाह । **शांत्यर्थमिति** । तापत्रयमप्यत्रैवाग्नावित्याह । **हुत्वा चेति** । **विधिमिति** । पूर्वोक्तप्रकारं कृत्वेत्यर्थः । सति सप्तमी उभयत्र । विशेषणेन मुख्याग्निनिरासः । प्राड्विवाक एवात्र कर्ता अयःपिण्डस्थमिति त्वाबलात्[१] **नारद**मेवाह । **त्वमग्ने वेदा इत्यादि** । **त्वं मुखं ब्रह्मेति** । त्वयि होमेन देववत्तेषामपि तृप्तेरिति भावः । **पापेषु** पुरुषेषु **चरसि** वर्तसे । **साक्षिवत्** अंतर्यामिवत् । **देवेति**[२] । तानीति शेषः । तत्स्थाने तैत्पाठो[३] वा ।

---

१ पृ. ६५ पं. १६ हुत्वापदे त्वाप्रत्ययबलादित्यर्थः २ देवस्थाने । ३ ' तानि ' अतः " त्वमेव तानि जानीषे " इति पाठः । इति सूचितम् ।

## याज्ञवल्कीये १०५ श्लोकः ।

मूलकृदन्यदप्याहेत्याह । **अपि चेति** । समामित्यस्य व्याख्या **अस्त्ररहितमिति** । कोणरहितमित्यर्थः । अर्थांतरमाह । **सर्वतश्च सममिति** । तदर्थद्वयमाह । **वृत्तं श्लक्ष्णं चेति** । विशेषमाह । **तथेति** । **पैतामहे** 'सममि'त्यस्य द्विरुक्तिरस्त्रहीनमित्यस्याचोक्तिरिति प्रागुक्तार्थलाभः । अत्र 'अग्निहीनमिति' पाठं धृत्वाऽग्निकोपराहितामिति व्याख्यातवान् **कल्पतरुः** । अग्निवर्णवत्त्वस्य प्रकारांतरेणापि संभवादाह । **अग्निसदृशामिति** । दाहकतया तत्तुल्यमित्यर्थः । न्यासस्यासंभवादाह । **निक्षिपेदिति** । प्राड्विवाक एवात्र कर्तेत्याह । **प्राडिति** ।

## याज्ञवल्कीये १०६ श्लोकः ।

**तत इति** । तत्र तन्निक्षेपणानंतरमित्यर्थः । कर्तेति शेषः । एवाधिक्यं परिहरति । **एवेति** । संगतिमाह । **सप्तैवेति** । **किम्** । कियत् । तस्योभयप्रतियोगिकत्वादाह । **मंडलयोरिति** । प्रमाणार्थकांगुलशब्दोऽदंतो नित्यक्लीबः । सर्वमिति न्यायेनाह । **तावदेवेति** । न्यूनतां विरोधं च परिहरति । **सप्तेति उक्तं** उक्तप्रायम् । फलितमाह । **अतश्चेति** । **मंडलांतेति** । मंडलानामंतराणीत्यर्थः । **तुरुक्त**-वैलक्षण्ये । तदेवाह । **सप्तेति** । तेषामेव सत्वादिति भावः । **परीति** । उभयं संख्यामेकीकृत्येत्यर्थः । **मंडलांतरं** अन्यत् मंडलम् । उक्तरीत्या मंडलस्य द्वात्रिंशदंगुलत्वस्य बाधितत्वादाह । **अयमर्थ इति** । उक्तहेतोरेवाह । **सांतरालमिति** । पर्यवसितमाह । **तदेवमिति** । अष्टाभिरित्याद्यर्थमाह । **एवमिति** । उक्तप्रकारेणेत्यर्थः । **चत्वेति** बहुव्रीहिः । विभक्त्यंतरायोग्यत्वादाह । **मानमिति** । **इति**रर्थसमाप्तौ । तदुपपत्तिमाह । **सार्वेति** । आद्यादित्वात् । अस्मिंस्तु पक्षे इति । द्वितीयादिमंडलानां द्वात्रिंशदंगुलत्वमिति **नारदो**क्तपक्षे त्वित्यर्थः । **कार्याणीति** । अन्यथा प्रागपि ततः पादप्रक्षेपसंभवान्मूलोक्तपक्षतो भेदापत्त्या तद्विरोधापत्तिरिति भावः । **तेनैव नारदेनैव** । **संमितं** तुल्यम् । यदि शोध्यपदं षोडशांगुलाधिकं तदांऽतरालं षोडशांगुलन्यूनमेव भवति । यदि शोध्यपदं षोडशांगुलादल्पं तदा विपरीतं कार्यं इति भावः । एवं मूलोक्तपक्षेऽपि पदप्रमाणमेव आंतरमंडलं तन्मध्ये कार्यमिति बोध्यम् ।

अन्यविरोधं परिहरति । **यत्त्विति** । **कारयेदिति** । 'अग्नेर्विधिं प्रवक्ष्यामि यथावच्छास्त्रचोदितमि' त्यादिः । **मदनरत्ने** तु "अष्टमं सर्वदैवतम् । पुरस्तान्नवमं यत्तु तन्महत्पार्थिवं विदुः । गोमयेन कृतान्येतान्यद्भिः पर्युक्षितानि चेति" पाठः । मंडलानां परिमाणमाह । **द्वात्रिंशदिति** । इदं प्रागुक्तरीत्या बोध्यम् । **प्रचोदिता इति** । 'विन्यसेच्च पदं तेषु कर्ता नित्यमिति स्थिति'रिति शेषः ।

ननु नवानां मंडलानां स्वयमुक्तत्वादष्टाभिरित्ययुक्तम् । किंच प्रागुक्तरीत्या योजने चत्वारिंशदधिकमित्युचितं अन्यथा ततोऽप्याधिक्यापत्तिरत आह । **तत्र नवममिति** । तत्संख्योक्तेः पाठांतरानुरोधाच्चाह । **अपरीति** । मूलादिरोधं समाधत्ते । **तत्रापीति** । नवस्वपीत्यर्थः । एवं च 'चत्वारिंशदि'ति **नारदीयं** अष्टमनवममंडलांतरालभूभागं विहाय बोध्यं तस्य गमनानर्हत्वात् । एवं 'चतुर्विंशतिराख्याता भूमेस्तु परिकल्पनेति' **कल्पतरूक्त**पाठेऽपि आद्यमवस्थानमंडलं विहायांगुलपरिमाणं योज्यम् । **अङ्गुलप्रमाणं चेति** । बोद्धव्यमित्यत्रान्वयः ॥

१ क-अग्निवर्णत्वस्य ।

## याज्ञवल्कीये १०७ श्लोकः ।

**सप्तेति** । 'नन्वि'त्यादिः । भिन्ने पदे मूलादिविरोधभावादाह । **तप्तमय इति** । तात्पर्यार्थमाह । **व्रीहीनिति** । शाब्दैस्तु[1] प्रागुक्त एव । प्रकृतत्वादाह । **अदग्धहस्तश्चेति** । विनाऽपि प्रत्ययामीति मूले तस्य साधुत्वम् ।

विशेषमाह **यस्त्विति** । **प्रस्खलन्नभिशस्तः** संत्रासात् प्रस्खलन्सन्यादि हस्ताभ्यामन्यत्रेत्याद्यन्वयः । मूले 'हस्तादिति' जातावेकवचनम् । **तस्येति** शेषत्वविवक्षया षष्ठी । 'अयःपिंडामिति' शेषः । राजेति भावः ।

मूलेक्तदन्यदप्याहेत्याह[2] । **किंचेति** । **गच्छत इति** । हस्ताभ्यामिति शेषः । नायमपूर्वो विधिरित्याह । **अर्थप्राप्तमिति** ।

स्पष्टार्थमाह । **अत्र चेति** । अग्निविधिविषये इत्यर्थः । **अधिदेवताः** अग्न्यादयः । **विधाय** कारयित्वा । **गृहीत्वेति** । तत्पुरतः समानीतमिति शेषः । **सोऽपि** कर्ताऽपि । एवं प्रागपि ॥१०७॥

इत्यग्निविधिः ।

## याज्ञवल्कीये १०८ श्लोकः ।

संगतिमाह । **संप्रतीति** । **मामित्यस्य मे**त्यादेश इत्याह । **मामिति** । अत एव कर्तुरयं मंत्रः । 'इती'त्यस्य व्याख्याऽ**नेन मंत्रेणेति** । कमित्यस्य च **उदकमिति** धातूनामनेकार्थत्वादाह । **अभिमंत्र्येति** । **पुरुषेति** । यस्य कस्याचित् बलीयस इत्यर्थः । अत एव 'ब्राह्मणः क्षत्रियो वैश्यो रागद्वेषविवर्जितः ॥ नाभिमात्रे जले स्थाप्यः पुरुषः स्थाणुवत् बलीति' **नारदः** । (अ. १-३०८) तद्ग्रहणोत्तरं प्रवेशस्यासंभावादाह । **निमज्जेदिति** । क्रममाह प्राग्वत् । **एतच्चेति** । कार्यमिति शेषः । एवमग्रेऽपि । **प्रकुर्वीतेति** । दद्यादित्यर्थः । अत एव 'वरुणायेति' चतुर्थी । उक्तहेतोरेवोक्त**मादाविति** । **समेति** । प्राड्विवाक इत्यर्थः । प्राग्वदेवाह । **तथेति** । अत एव 'स्थापयेत्प्रथमं तोये स्तंभवत् पुरुषं नृपः । आगतं प्राङ्मुखं कृत्वा तोयमध्ये तु कारिणम् ॥ ततस्त्वावाहयेद्देवान्सलिलं चानुमंत्रयेदिति'। **पितामहः** । **देवान्** धर्मादीन् । धर्मावाहनादिशिरःपत्रारोपणांतं कुर्यादित्यर्थः । अन्यदप्याह । **तथेति** । **इति** अनेन मंत्रेण । **चस्त्वर्थे** । **वहेषु** 'प्रस्रवणेषु चेति' पाठः । 'वे'ति पाठेऽग्रिमचोऽपि तत्रैव । **तथा** तद्वत् पितामहे**नापि** उक्तानीत्यस्यानुषंगः । **ग्राहो** मकरः । '**अल्पक इति** । 'कुत्सायां[3] कन्' । **जलौकेति** मध्यमपदलोपी समासः । **नित्यं** सर्वथा । **आहृतमानीतम्** । विशेषमाह । **नाभीति** । **धर्मस्थूणाम्**, धर्मायःप्रतिमाम् 'सूर्मीस्थूणाऽयःप्रतिमे' **त्यमरः** (२।१०।३५)। अवष्टंभश्च धारणात्मकः संयोगविशेषः । **नारदमाह** । उदके इति । नाभिदघ्ने इत्यर्थः । तथा च सापि कृत्वा तत्रादौ स्थाप्येति भावः ।

## याज्ञवल्कीये १०९ श्लोकः ।

समकालमिति गमनक्रियाविशेषणम् । तच्च साकांक्षमिति प्रकृतत्वादाह । **निमज्जनेति** । **गतेति** । मध्यमशरपातस्थानं प्रतीतिभावः । 'तस्मिन्नि'त्यस्य व्याख्या **जविन्येकस्मिन्पुरुषे इति** । **नर इति** । लब्धामिदम् । अत एवाह । **अन्य इति** । तदर्थमाह । **शरेति** । भूतनिष्ठालब्धमाह ।

---

१ ख- शब्दैस्तु । २ मूलोक्तमन्यदप्याह । ३ कुत्सिते ।

**पूर्वमिति । आनीयेति ।** यतः स गतस्तत्रानीयेत्यर्थः । **जलनिमग्नांगमिति** सप्तम्यर्थे बहुव्रीहिः। 'जले निमग्नामिति' पाठेऽपि 'अर्शआद्यचा' तत्र तथा तद्विशिष्टं जलं पश्यतीत्येवार्थः । यद्वा निमज्जनं कर्णाद्यभिप्रायम् । दर्शनं मस्तकाभिप्रायमित्यनुपदं स्फुटीभविष्यति । स्पष्टतया सर्वो[1]प्रतीतेरा**हैतादिति । त्रिष्विति ।** अत एव 'अप्सु प्रवेश्य पुरुषं प्रक्षिपेत्सायकत्रय'मिति **बृहस्पतिः । एकः** पुरुषः पंचम्यर्थबहुव्रीहिणा लब्धं स्थानं विशिनष्टि । **तोरणेति ।** 'तोरणोऽस्त्री बहिर्द्वार' **मित्यमरः** (२।२।१६)। **स्थितयोरिति ।** तयोः सतोरिति भावः। **तृतीयेति ।** तोरणमूलास्थितप्राड्विवाकसंबंधितृतीयकरतालिकासमकालमित्यर्थः । **सत्समेति । कात्यायनोऽपि**– "क्षिप्तेषु मज्जनं कार्यं गमनं समकालिकमिति"। क्षिप्तेषु शरेषु सत्सु मज्जनं गमनं च तृतीयकरतालिकासमकालिकं कार्यमित्यर्थः। **प्राप्ते** सति। **प्राप्य** लब्धा । प्रागुक्तहेतोरेवाह । **स्पष्टीति । समं** समकालम् । **गमनेति** समाहारद्वंद्वः । **गते ।** तत्स्थानं प्राप्ते सति । अदर्शनं दर्शयितुमाह । **अन्तरिति । सम्यगन्तर्जलमिति ।** मस्तकस्यापि निमज्जनादिति भावः । एतदाशयेनैव 'यदि न पश्यतीति' उक्तम् । अत एव मूलविरोधो नेति भावः । **नारदो**ऽपि ( अ१-३०९–३१० ) " शरप्रक्षेपणस्थानाद्युवा जवसमन्वितः। गच्छेत्परमया शक्त्या यत्रासौ मध्यमः शरः॥ मध्यमं शरमादाय पुरुषो यस्तथाविधः। प्रत्यागच्छेत्तु वेगेन यतः स पुरुषो गतः"॥ आगत इत्यादि प्राग्वत् इति । विशेषानेवाह । **जविनोश्चेत्यादिना ।** चस्त्वर्थे । एवमग्रेऽपि । तत्र हेतुमाह । **शरेति ।** फलमपीह हेतुः । तद्रूपहेतोः । तावेव नियोक्तव्यावित्यर्थः । **संशोध्येति ।** तस्य यौ कर्णावित्यर्थः । 'शोध्यकर्णेति' पाठांतरम् । **तज्जलेति ।** दिव्यजलसमीपभूप्रदेशमित्यर्थः। अत एवाह। **तटे इति ।** शोध्यकर्णप्रमाणमुच्छ्रितमित्यर्थः।

विशेषमाह । **शरेति ।** वैणवं धनुश्चेत्यर्थः । मंगलेत्यस्यैव व्याख्या **श्वेतेति ।** एवमग्रेऽपि। **तत इति।** अतएव प्रथममिति पूर्वमुक्तम्।विशेषमाह। **धनुरित्यादिना। प्रयोगविध्यंतेन। विधिः** प्रकारः। त्रैविध्यफलमाह । **मध्यमेन चेति ।** एवमग्रेऽपि। एवार्थो वा। द्वितीयः पादपूरणे। किं कृत्वेत्यत आह । **हस्तानामिति । तथा** किंच । न्यूनाधिके तस्मिन् सति सायकान् क्षिपतो दोषः स्यादित्यर्थः । 'सप्तशतमि' त्यादेर्भिन्नपदत्वे बहुवचनापत्तिः । समाहारद्विगौ ङीबापत्तिरसंभवापत्तिश्चातः सप्ताधिकशतांगुलप्रमाणकमित्यादिःवाच्योऽर्थः । तत्फलितमाहां**गुलानामिति। शतमिति।** यस्य तदिति शेषः तात्पर्यार्थमाह । **एवं चेति। अनायासेति।** अयोविकाररूपाग्रभागरहिताइत्यर्थः। **कात्यायनमाह। शरांश्चेति । सुदृढमिति** सूचितं विशेषमाह । **क्षेप्तेति । पितामह**माह । **यथाहेति । ततः क्षिपेदिति ।** 'तथाशुचिरिति' पाठांतरं च । विशेषमुक्तमेवाह । **त्रिष्विति ।** एवमग्रेऽपि । अग्रे सर्वा **पितामहोक्तिरेव । प्रेषितानां** प्रक्षिप्तानाम् । **तेषामुक्तलक्षणानाम् । तत्रापि** मध्यमशरविषयेऽपि। **सर्पन्निति** शत्रन्तम् । वीप्सायां द्वित्वम् । **अतिवायतीत्यार्षम् ।** 'अतिवातीति' पाठो वा। **स्थाणुर्वृक्षविशेषः।** 'स्थाणुर्वा ना ध्रुवः शंकुरि' **त्यमरः ।** ( २।४।८ )

उत्तरसंगतये आह । **निमग्नांगमिति । वक्ता** मूलकृता। **चो**ऽप्यर्थे । **अन्यथेति ।** 'आगतस्तु शरग्राही न पश्यति तथा जले । अंतर्जलगतं सम्यक् तदाशुद्धं विनिर्दिशेदि'त्यादिः । 'अन्यथे' त्यस्यैवार्थमा**हैकांगेति ।** स्थानपदार्थमाह । **यस्मिन्निति ।** मिथोऽविरोधायाह । **एकांगेति । चस्त्वर्थे । अपिरुक्तसमुच्चये । विशेषेति ।** तेनैवेति भावः । **सन्निधौ** पश्चिमतीरदेशे । **तत्तीरे**

१ क–सर्वानप्रतीतेः

अक्षतपुंजादौ । **अथ** तदभिमंत्रणानंतरम् । **गृहीतस्थूणस्येति** । प्राङ्मुखेति शेषः । **प्राङिति** । तोरणमूलस्थितेनेत्यादिः । **दत्त इति** । तृतीयतालिकासमकालमिति भावः ॥

इत्युदकविधिः ॥

## याज्ञवल्कीये ११०।१११ श्लोकौ ।

संगतिमाह **इदानीमिति** । व्यवस्थितमिति पाठः । विषशब्दस्य क्लीबत्वात् । एवमग्रेऽपि । 'विषमि' त्यस्य मध्यमणिन्यायेनान्वयेन 'एवमुक्त्वे' त्यस्यार्थमाह । **विषमभीति** । प्रकृतत्वादाह । **विषं वेगैरिति** । लिङ्गर्थाविवक्षया आह । **जीर्यतीत्यादि** । 'वेगैरि'ति बहुवचनसूचितमाह । **विषेति । पितामह**माह । **धातोरिति । चं लेति** । लक्षणानि त्वित्यर्थः। तदेवाह । **वेग इति । तस्योर्ध्व इति** पूर्वान्वयि । **तस्येति** शेषत्वविवक्षया षष्ठी । **तत्पराविति** । यथाक्रममिति भावः । **नयेति** । तनोर्विंशतामतिचंचलताम्, कंठभंगं हिक्कां चेत्यर्थः । **च**स्त्वर्थे व्युत्क्रमे च ।

विशेषमाह । **अत्र चेति** । तदानंतर्याभावायथाश्रुतासङ्गते**र्नारदार्थं** सप्रयोगक्रममाह । **प्राङि-त्यादि** । तद्दिने **उपवासाश्रमाय** सोपेत्यस्य व्याख्या **कृतोपेति** । शेषमाह । **तस्येत्यादि । निधाय** बध्वा । पूर्वमंत्रः कर्तुरित्यतः **पैतामहमेव** तन्मंत्रमाह । **त्वं विषेति** । विशेषोक्तौ हेतुमाह । **नारदेति** । तदेवाह । **द्विजानामिति । स्थित इति** । उद्देश्यस्याधिकरणत्वाविवक्षया सप्तमी । **प्राङ्मुखो वा** प्राड्विवाकः । 'विषस्ये' त्यस्य प्रत्येकं संबंधः । विकल्पे वा । 'यवाः सप्त मदातव्याः शुद्धिहेतोरसंशयः' इति अस्य पूर्वार्धम् । भेदस्तु **कात्यायने**नोक्तः ।

"अजाशृंगानिभं श्यामं सुपीतं शृंगसंभवम् । भंगे चं शृंगवेराभं ख्यातं तच्छृगिणां विषम् ॥
रक्तस्थमसितं कुर्यात्काठिनं चैव तत्क्षणात् । अनेन विधिना ज्ञेयं विषं दिव्यविशारदैः ॥
वत्सनाभनिभं पीतं वर्णज्ञानेन निश्चयः । शुक्तिशृंगाकृतिर्भंगे विद्यात्तद्वत्सनाभकम् ॥
मधुक्षीरसमायुक्तं स्वच्छं कुर्वीत तत्क्षणात् । बाह्यमेवं समाख्यातं लक्षण्यं धर्मसाधकैः"—इति॥

तेनैव **पितामहेनैव** । एवं प्रागुक्त्या स्फुटप्रत्यासत्तौ । **चारितानि** संचारितानि । कस्मैचिद्दत्तानि । **च जीर्णानि** । 'अतिजीर्णानीति' पाठांतरम् । उक्तहेतोरेवाह । **नारदेति** । उक्तानीत्यस्यानुषंगः । तथा च '**नारदे**नापीति' पाठे तद्वत्तेनाप्युक्तानीत्यर्थः ।

**ईप्सितम्** । सप्तयवात्मकम् । **हिमेति** । हेमंतशिशिरयोरित्यर्थः । **नारद**मेवाह । **वर्षे इति** । **इदमार्षम्** । "वर्षासु षड्यवा मात्रा ग्रीष्मे पंचयवाः स्मृताः । हेमंते सा सप्तयवा शरद्यात्ततोऽपि ही" ति **कल्पतरौ** पाठः । मात्राशब्दः परिच्छिन्नपरिमाणके वर्तते । सा मात्रा अल्पा त्रियवेति कश्चित् । न्यूनतां निराचष्टे । **हेमंतेत्यादि** ।

**नारदमे**वाह । **विषस्येति । शोध्ये इति** । तस्य तत्वविवक्षया । तदर्थमाह । **पलं चेत्या-दिना** । पक्षांतरनिरासायाह । **अत्रेति** । षडादिशब्दाः षष्ठादिपरा इत्याह । **षष्ठ इत्यादि** । चेरन्यत्रानियमान्न दोषः । अत एवात्रं विरोधो न । **तस्मादिति** संबंधिनस्तत्वविवक्षया पंचमी । तत्रेति भावः । शोध्यें इति प्राग्वत् । तमित्यस्य व्याख्या **विंशतीति** । विशेषं तत्राह । **घृतं चेति** ।

**देहिनामित्यपि** तस्य तत्वविवक्षया । **श्लक्ष्णं पिष्टमिति** । तद्यथा स्यात्तथा पिष्टमित्यर्थः ।

---

१ च लक्षणानीति [ मि. पृ. ६९ पं. १२+१३ ] २ भंगेव । ३ क-ख-वत्सनालनिभम् । ४ क-स्वक्ष । ख-स्वक्षे । 'तथैवेति' मिताक्षरापाठः । ५-क तमेवाह । ६ क- अतएव कल्पतरौ पाठः ।

'सम्यक् पिष्टमिति' पाठांतरम्। घृतपरिमाणमाह। **त्रिंशादिति**। यथाश्रुतासंगतेः तदर्थमाह **त्रिंशादिति**। 'त्रिंशद्गुणेन त्विति' **कल्पतरौ** पाठः सुगमः।

विशेषांतरमाह। **शोध्यश्चेत्यादिना**। **कुहकेति**। मंत्रादिभ्य[1] इत्यर्थः। **कुहकादी**-त्युक्तमेव विशदयति। **ओषधीरिति**। **गूढोत्पन्नानिति**। गुप्ततया संजातानित्यर्थः। 'विष-मिति' पाठे **तथाशब्दः समुच्चये**। 'अपीति' पाठे तद्वदित्यर्थे। विशेषमाह। **तथेति**॥ पंचतालशतानि यस्मिन्निति बहुव्रीहिः। कालविशेषणम्। 'कालाध्वनोरिति'[2] द्वितीया। **चिकित्सित-मिति**। चिकित्सनमिति पाठांतरम्। अनर्थांतरम्। विरोधं परिहरति। **पितामहेनेति**। तमेवाह। **भक्षिते त्विति**। विषे इति भावः। स्वस्थ इत्यस्यैव व्याख्या। **मूर्च्छेति**। सर्वसंग्रहायाह। **निर्विकार इति**। कंचन विशेषं कथयन्प्रागुक्तमपि किंचित्स्पष्टत्वायाह। **अत्र चेति**। क्रमोऽन्वयः। **निधाय** आबध्य।

इति विषविधिः॥

## याज्ञवल्कीये ११२ श्लोकः।

**कोशेति**। 'कोशोऽस्त्रीकुड्मले खड्गपिधानेऽर्थौघदिव्ययो' रित्यनेकार्थः [अ. को. ३।३।११७]। "कोशः कोष इवांडजे। कुड्मले चषके दिव्येऽर्थचये योनिशिम्बयोः। जातिकोशेऽसिपिधाने" इति **हैमश्च**। तत्रापि प्रकृतेऽपां वाचकत्वात्तत्र रूढिः। **संश्राव्य** अभिमंत्र्य। **तस्मादाहृ**ताज्जलात् जलमिति पाठेऽग्रिमविशेष्यम्। वक्ष्यमाणलब्धमाह। **संस्नाप्येति**। **इत्यादिना** मंत्रेण। संश्राव्येत्यस्य पाययेदित्यत्रान्वयः। प्राग्वदाह। **एतच्चेति**। **पितामहादिभिरिति**। **आदिना नारदा**दयः। ते चान्यत्र स्पष्टाः।

विशेषमाह। **अत्र चेत्यादिना**। **समभावे तु देवानाम्** देवताविषयकभक्तिसाम्ये। **ये चेति**। ताश्चेत्यर्थः। **तच्चेति**। ब्राह्मण्यादेस्तन्मूलकत्वात्। **विस्रंभे** विश्वासे। **आस्तिक इति**। सत्येन दिव्यकरणे निष्ठाशंकावानित्यर्थः। **मद्यपेति**। द्वंद्वगर्भोऽत्र द्वंद्वः। **ये चेति**। तेषां चेत्यर्थः। क्लीबेति समाहारद्वंद्वः। **नास्तिकेति** पूर्वं तद्वृत्तिरुक्त इति न पौनरुक्त्यम्। विशे-षमाह। **तथेति**। **यथाहेति**। स एवेति शेषः॥ ११२॥

## याज्ञवल्कीये ११३ श्लोकः।

मूलमवतारयति। **नन्विति**। अर्वागित्यस्यार्थः। **पूर्वमिति**। राजदेविकमित्यत्र द्वंद्वात् 'तस्य निमित्तमिति'[2] ठञित्याह। राजिकमित्यादि। महदित्यस्य फलमाह। **अल्पस्येति**[3]। आर्थिकमाह। **ऊर्ध्वमिति**। अनेन **नारदीये**ऽपि ऊर्ध्वमित्यत्रावधेरिति शेषो द्विसप्ताहादित्यत्र प्रभृतीति सूचितमतो न विरोध इति बोध्यम्। **वैकृतम्**। विकृतमेव वैकृतं विकारः इत्यर्थः। **कृतेति** कृतावधीत्यर्थः। **इतिर्नारद**समाप्तौ। ननु नेदमवश्यवाच्यमत आह **अर्थेति**। मौलावध्यु-पादानसिद्धमेव **नारदे**नोक्तमित्यर्थः। विरोधं परिहरति। **अर्वागिति**। **प्रस्तुत्य** प्रक्रम्य। **अवध्यन्तराणि**। तानि तु **पितामह**मेवाह। **त्रिरात्रादिति**। क्वचित्तानि चेत्यस्यादिः।

नन्वेवमनयोर्व्यवस्थायामपि तदुक्तपक्षाणामवांतरव्यवस्था कथमत आह। **महेति**। **अर्वाचीनम्**। व्युत्क्रमेण सहस्रान्न्यूनम्।

इति कोशविधिः।

---

१ ङ–मंत्रादिभ्यः २ व्या. सू. (५।१।३८) ३ ख–अन्यस्येति।

न्यूनतां निराचष्टे । **तुलादीनीति । यथोद्देशामिति** । उद्देशानतिक्रमेणेत्यर्थः । नाम्ना वस्तुसंकीर्तनमुद्देशः । **भक्षणचोदिति** । भक्षणे चोदितं शास्त्रविहितं विधिं प्रकारमित्यर्थः । ' लक्षणबोधितामिति ' पाठांतरम् । भक्षणवर्जने इति च । चौर्ये त्विति पाठे नान्यत्रेतीति पाठः । चौरो त्विति पाठे नान्यस्येतीति पाठः । कृत्वेत्यस्य संमिश्रानित्यत्रान्वयः । स्नानोदकं चादित्यस्यैव प्रत्यासत्तेः । **ततः** भक्षणकारणानंतरम् । **शीर्यति** । विशीर्णं भवति । 'हनुंजालं च सीदतीति' **कल्पतरौ** पाठः । हनुजालं उत्तराधरप्रदक्षिणम् । हनुजालसमूह इति तदर्थः । कर्त्रनुपादानादर्थमाह । **शिरोरोपितेति । तं शोध्यम्** । असंबद्धत्वनिरासायाह । **भक्षेति** । तस्य चौरादिकत्वादिति भावः ।

**इति तंडुलविधिः ।**

तथा हि तदेवोच्यते । विस्तारमाह । **षोडेति** । निम्नतामाह । **चतुरिति** । बहुव्रीहिः । अथेत्यस्याग्रेऽन्वयः । अनेन कारयित्वेति तत्र शेषः सूचितः । मंडलमित्यस्यार्थमाह । **वर्तुलमिति** । घृततैलयोरेकार्थत्वाद्विकल्पः । **धुनुयात्** कम्पयेत् । सर्वसंग्रहाय तत् उपसंहराति । **निर्विकारेति** बहुव्रीहिः । 'यावद्वचनं वाचनिकमिति'न्यायेनाह । **उद्धरेदिति** । तत् सत्वेऽप्याह । **आदरेति** । स्थलविशेषे इति भावः ।

तदुक्तमेव प्रकारान्तरमन्यग्रन्थानुक्तमाह । **अपरेति । उपादायेति** । स्थापयित्वेत्यर्थः । **सुशोधितामिति** । भग्नादिनिरासायेति भावः । 'सुशोभितामिति' पाठान्तरम् । **धौतां** प्रक्षालिताम् । **भ्रमद्वीचीति** । भ्रमन्ती वाक् शब्दो यस्मिन्नित्यर्थः । **तरङ्गै**र्वीचिभिः पूर्णे । न नखस्पर्शस्यापि विषये । **चुरुकारमिति** । तैलादिपक्वतापरीक्षा चुर इति शब्देन भवतीत्यनुकरणमिदं ध्वनेः । तत्रापि सुघोषकं महाशब्दयुक्तम् । क्रियाविशेषणमिदं द्वयम् । **अनेन** वक्ष्यमाणेन । प्राड्विवाक इति शेषः । सुतप्तत्वात् पवित्रत्वाच्चाह । **पावकेति । प्रदेशिनी** तर्जनी । **यस्य** कर्त्तुः । तस्यामिति शेषः । **घृतानुमन्त्रणमिति** । परमित्याद्युक्तमित्यर्थः । अत एवाह । **त्वमग्ने इति** । प्राग्वदाह । **अग्न्यभीति** । प्राग्वदाह । **प्रदेशिनीमिति** ।

इति तप्तमाषकविधिः ।

चोऽप्यर्थे । **तथा चोति** । स आहेति शेषः । वचने न्यूनतां परिहराति । **हन्तॄणामित्यादि** । इतिर्वचनसमाप्तौ । इतराभ्रमायाह । **प्रतिमेति** । एकार्थत्वादाह । **सीसकं वेति** । अर्श आद्यजन्तामिति भावः । कनन्तं वा । आहेति शेष एवेति भावः ।

**अभ्युक्ष्य** प्रोक्ष्य । सितपुष्प इति बहुव्रीहिः । **पुष्पधृत इति** धृञः क्विबन्तस्य रूपम् । धृगिति पाठे धृष्णोतेस्तदन्तस्य रूपम् । भृदिति पाठे भृञस्तदन्तस्य । एवं विधायेत्यस्य व्याख्या **उपलिख्येति** । एवंविधावुपलिख्येति पाठान्तरं सुगमम् । एवंविधायोपलिख्येति पाठे तु एवं संलिख्य चन्दनेनोपलिप्येत्यर्थः । समं यथा स्यात् तथा कार्यौ इत्यर्थः । **तत** इत्यग्रिमान्वयि । **अनुपहते** अभग्नादौ । अनुपलक्षितावित्यनेन पिधानं तस्य सूचितम् । मध्ये चूर्णिकामाह । **तत इति । तयोश्चैकमिति** । ततश्चैकमिति द्वितीयः पाठः । **अविलम्बित इति । अविशंकित इति** । 'अविलम्बितमिति' । पाठे क्रियाविशेषणम् । **समासतः** संक्षेपतः ।

**बृहस्पतिरपि**

" पत्रद्वये लेखनीयौ धर्माधर्मौ सितासितौ । जीवदानादिकैर्मन्त्रैर्गायत्र्याद्यैश्च सामभिः ॥

" आमन्त्र्य पूजयेद्गन्धैः कुसुमैश्च सितासितैः । अभ्युक्ष्य पञ्चगव्येन मृत्पिण्डान्तरितौ ततः ॥

" समौ कृत्वा नवे कुम्भे स्थाप्यौ चानुपलक्षितौ । ततः कुम्भात्पिण्डमेकं प्रगृह्णीताविलम्बितः ॥
" धर्मे गृहीते शुद्धः स्यात्संपूज्यश्च परीक्षकैः " । इति ॥

जीवदानादिकैः ताः प्रजामिथुनीत्यादिभिरिति **कल्पतरुः** । प्राणप्रतिष्ठापूर्वमित्यन्ये ।

**इति धर्माधर्मविधिः ॥**

फालविधि**र्बृहस्पतिनोक्तः**—

" आयसं द्वादशपलं घटितं फालमुच्यते । अष्टाङ्गुलं भवेद्दीर्घं चतुरङ्गुलविस्तृतम् ॥
" अग्निवर्णं तु तच्चौरो जिह्वया संलिहेत्सकृत् । न दग्धश्चेच्छुद्धिमियादन्यथा तु स हीयते" इति ।

**'मन्वादिभिरिति'** आदिना **नारदादि**परिग्रहः । तथा च **नारदः** । (अ० १ श्लो० २४३।२४४)

"शपथा अपि देवानामृषीणां च महात्मनाम् । वसिष्ठः शपथं शेपे यातुधानेन शङ्कितः ॥
"महर्षयस्त्वथेन्द्रेण पुष्करार्थेन शङ्किताः । शेपुः शपथमव्यग्राः परस्परविशुद्धये " ॥ इति ।
"महर्षिभिश्च देवैश्च कार्यार्थं शपथाः कृताः । वसिष्ठश्चापि शपथं शेपे वै यवने नृपे "॥

इति **मनु**रपि । ( अ० ८ श्लो० ११० )

**सत्यवचनं,** सत्यमिति कथनम् । **पुष्पमिति** । पुण्यमिति पाठान्तरम् । आद्यविषयमुक्त्वा द्वितीयमाह । **सत्यनेति । अत्र च,** शपथविषये । **आर्तिः** पीडा सा च नान्येत्याह । **आर्तिरपीति** । पूर्वोक्तैवेति भावः । एवं कालनियमोऽपि प्रगुक्त एवेत्याह । **कालेति** ।

**कात्यायनः**—

"आचतुर्दशकादह्नो यस्य नो राजदैविकम् । व्यसनं जायते घोरं स ज्ञेयः शपथे शुचिः ॥ "

अत्राङ् मर्यादायाम् ।

**मनुः**— ( अ० ८। श्लो० १११।११२ )

" न वृथाशपथं कुर्यात्स्वल्पेऽप्यर्थे नरो बुधः । वृथा हि शपथं कुर्वन्प्रेत्य चेह च नश्यति ॥
" कामिनीषु विवाहेषु गवां भक्ष्ये तथेन्धने । ब्राह्मणाभ्युपपत्तौ च शपथे नास्ति पातकम् ॥ " इति ।

**यमः**—

" कृत्वा मृषा तु शपथं कीटस्य वधसंयुतम् । अनृतेन तु युज्येत वधेन च तथा नरः ॥
" तस्मान्न मिथ्याशपथं नरः कुर्याद्वधेप्सितम् । " इति ॥

"सर्वदिव्यशेषमाह । **एवमिति । शुद्धं** पुरुषम् ! **तं** अशुद्धसम्बन्धिनम् । **आहेति । कात्यायन** एवेति भावः । तुलेति समाहारद्वन्द्वः । कल्पनामेवाह । **सहस्रमिति । षट्शतमिति** बहुव्रीहिः । दण्डो विशेष्यः । **चतुरिति** समाहारद्वन्द्वः । क्रमविवक्षया न दोषः । अग्रेऽपि आतिदिशन्नाह । **एवं च हीनमिति** । उक्तप्रकारेण कल्पनाया चाग्रेऽपि उत्तरोत्तरन्यूनमित्यर्थः ।

विरोधं परिहरति । **निह्नवे इति** । मूलमिदं सर्वसाधारणम् । अत एव न विकल्पः । अत एवाह । **अयं दिव्येति । कात्यायनोक्तो** । दिव्यमात्रविषय इत्यर्थः । एवञ्च तुलाग्निसलिलविषकोषतण्डुलतप्तमाषधर्माधर्मशपथदण्डरूपैरवान्तरप्रकरणैर्विशिष्टमिदं महादिव्यप्रकरणं संपन्नमिति बोध्यम् । तदाह । **इति दिव्येति** ।

इति दिव्यप्रकरणं संपूर्णम् ।

## अथ दायविभागप्रकरणम् ८.

निबन्धकारः पद्यबन्धेन सङ्गतिमाह । **प्रमाणमिति । इति भेदेनेति ।** इति एवंप्रकारेण द्विविधं प्रमाणमवान्तरभेदेन वर्णितमित्यर्थः । **योगेति । योगीश्व**रेण **याज्ञवल्क्ये**नेत्यर्थः । निरूपणीयव्यवहारपदानां मध्ये केषांचिन्निरूपणानन्तरं मध्ये प्रसक्तप्रमाणनिरूपणं कृत्वाऽवसरसङ्गत्या प्राप्तावशिष्टव्यवहारपदनिरूपणप्रसङ्गे तावत् सर्वोपयोगित्वेन दायविभागो निरूप्यते इत्यर्थ. ।

दायशब्दार्थं तावदाह । **तत्रेति ।** निरूपणीये दायविभागे इत्यर्थः । एवेन लोकप्रसिद्धक्रयादिरूपनिमित्तान्तरमात्रव्यवच्छेदः । सम्बन्धश्च जन्यजनकभावादिर्धनस्वामिना सहान्यस्य पुत्रादेर्बोध्यः । एतेन पूर्वद्रव्यस्वामिसम्बन्धाधीनं तत्स्वाम्युपरमे यत्र द्रव्ये स्वत्वं तत्र निरूढो दायशब्द इति प्राच्योक्तमपास्तम् । 'विभागं चेदि'त्यादिवक्ष्यमाणमूलादिविरोधापत्तेः । तत्र जन्मना स्वत्वाङ्गीकारात् । **स च** दायश्च । 'अप्रतिबन्ध' इत्यादिर्बहुव्रीहिः । तत्राद्यस्वरूपमाह । **तत्रेति ।** तयोर्मध्ये इत्यर्थः । 'भूर्या पिते'त्यादिना वक्ष्यमाणसिद्धान्तमभिप्रेत्याह । **पौत्राणां चेति ।** यथाक्रममन्वयः । तेषां स्वामिसत्वेऽपि जननमात्रेणान्योपायं विनाऽपि स्वाम्यस्य सत्त्वात् दायस्य अप्रतिबन्धत्वमिति भावः ।[1]

द्वितीयस्वरूपमाह । **पितृव्यभ्रात्रादीनामिति ।** पितृव्यश्च भ्राता च तत्प्रभृतीनामित्यर्थः । अभ्यर्हितत्वात्तस्य पूर्वनिपातः । पितृव्यत्वादिकं च धनस्वामिनिरूपितमेव । अत्र वस्तुकथने तात्पर्यं न तु क्रमे । पितृभ्रात्रादीनामिति पाठान्तरम् । तत्र क्रम एव । पितरौ च भ्रातरश्च आदिर्येषां तेषामिति तदर्थः । विशेषान्तरमाह । **स्वाम्यभावे चेति । तदभावे** उभयोस्तत्तद्रूपेणाभावे । **तत्पुत्रादिष्वपीति ।** पितृव्यादिपुत्रादिष्वपीत्यर्थः । तत्रापि विद्यमानेषु धनस्वामिसम्बन्धिषु यस्य तेनाव्यवहितः सम्बन्धस्तस्याद्यो यस्य व्यवहितस्तस्य द्वितीय इति भावः ।

एवं दायशब्दार्थमुक्त्वा विभागशब्दार्थमाह । **विभागो नामेति ।** अविभक्तद्रव्यसमुदायनिरूपितानामनेकेषां पुत्रादिनिष्ठस्वाम्यानां तदेकदेशेषु समुदितद्रव्यैकदेशेषु तद्विषयतया तन्निरूपिततया व्यवस्थापनं विशेषेण प्रत्येकमवस्थापनं यत्[2] तत् विभागशब्दवाच्यमित्यर्थः ।

उक्तार्थं समूलयति । **एतदेवेति । पैत्रस्येति ।** 'तस्येदमि'त्यण् (व्या. सू. ४।३।१२०)। 'पित्र्यस्येति' **कल्पतरु**धृतपाठस्तु न युक्तः । यतो देवताधिकारपठितत्वात् । **यत्र** व्यवहारे । तद्विवादपदं बुधैरिति पाठान्तरम् । तत्र तदिति विधेयविशेषणम् ।

तत्र न्यूनतां परिहरन् तस्य स्वोक्तार्थपरत्वमाह । **पैत्रस्येतीति ।** स्वत्वे निमित्तभूतो यः संबन्धः स्वामिसम्बन्धः प्रागुक्तस्तदुपलक्षणार्थमित्यर्थः । तेन पैतामहादेरपि ग्रहणम् । अत एवाह । **तनयैरिति । प्रत्यासन्नेति ।** अव्यवहितसम्बन्धीत्यर्थः । एतेनैकदेशगतस्यैव भूहिरण्यादावुत्पन्नस्यैव स्वत्वस्य विनिगमनाप्रमाणाभावेन वैशेषिकव्यवहारानर्हतया अवस्थितस्य गुटिकापातादिना स्वत्वव्यञ्जनं विभागः[3] इति प्राच्योक्तमपास्तम् । निमित्तभूतसम्बन्धस्य साधारणत्वेन नियतैकदेशग्रहणे विनिगमकाभावेन च तथा दुर्वचत्वात् । अन्यथा तदाऽपि यथेच्छव्यवहारापत्तेर्मिथो विरोधाच्च ।

एवं सङ्गतिमुक्त्वा विचारं कर्तुमादौ विभागप्रकरणार्थं निष्कृष्याह । **इदमिति । इह,** विभागप्रकरणे । अत्र 'कस्येति' द्रव्यनिर्देशः 'कथमिति' इतिकर्तव्यतायाः । 'कैश्चेति' कर्तॄणाम् ।

---

१ ख—स्वातिरिक्तान्य जनप्राप्ते विनाऽपि स्वाम्यस्य सत्वात् तस्य तत्वमिति भावः।२ ख—तस्य । ३ ङ—क—विनिगमना इदममुकस्य नान्यस्येत्यवधारणरूपा तत्प्रमाणाभावेन वैशेषिकव्यवहारः परस्परनैरपेक्ष्येण दानविक्रयादिलक्षणः तदनर्हतया अवस्थितस्य सतोऽप्यसत्कल्पस्य गुटिकापातादिना व्यञ्जनम् इदममुकस्येत्यवधारणं विभाग इत्यर्थः ।

**तत्र** चतुर्णां मध्ये। **इह** आदौ। तस्य मूलानारूढत्वात्सकलदायप्रकरणोपयोगित्वाच्चेति भावः। तत्रापि द्विविधो विचारः। तत्राद्यविचारस्य विभज्यमानं द्रव्यं विषयः। तत्र सन्देहः किम् अस्वस्य विभागः स्वत्वहेतुः, तथा च विभागेन स्वत्वं न ततः प्राक् स्वत्वहेतुभूतविभागाभावात्; उत विभागो न स्वत्वे हेतुः किं तु जन्मैव, तथा च तत एव स्वत्वात् स्वस्य विभाग इति। अयमेको विचारः। तदाह। **किं विभागादिति। स्वं** स्वीयम्। **स्वस्येति**। स्वीयस्य सत इत्यर्थः। एतदुपयोगिद्वितीयविचारं तावदाह। **तत्रेति। उक्ते** विचारविषये इत्यर्थः। एवेन एतद्विचारं विना तस्य दुष्करत्वं सूचितम्। यथा चैतत् तथाऽनुपदमेव स्फुटीभविष्यति। अत्र विचारे स्वत्वं विषयः।

तत्र संशयमाह। **किमिति। शास्त्रैकेति**। तन्मात्रेत्यर्थः। **प्रमाणान्तरेति**। लौकिकेत्यर्थः। तत्र पूर्वपक्षमाह। **तत्रेति**। तयोर्मध्ये इत्यर्थः। तदेवाह। **स्वामीति**। व्याख्यातमिदं प्राक्। स्फुटीभविष्यति चानुपदं मूले एव। यथेतस्तल्लाभस्तमाह **प्रमाणान्तरेति**। लौकिकत्वे इत्यर्थः। **इदं गौतम**वाक्यम्। अनुवादे फलाभावात्। वचनान्तरविरोधमाह। **तथेति**। स्वत्वस्य लौकिकत्वे इत्यग्रिममत्र योज्यम्। अदत्तादायिन इति षष्ठ्यन्तं हस्तान्वयि। अन्येनादत्तं परकीयमाददाति तस्य चोरस्य हस्तादित्यर्थः। अग्रे तु फलितार्थ उक्तः। **याजनेति** समाहारद्वन्द्वः। अपिना प्रतिग्रहसमुच्चयः। स्तैनत्वातिदेशस्तद्दण्डप्राप्त्यर्थ[1] इत्याह। **दण्डेति**।

स्वत्वस्यालौकिकत्वे युक्तिमप्याह। **आपि चेति। स्वत्वमिति**। तदेति शेषः। तत्र हेतुमाह। **अपहर्तुरेवेति**। तत्सम्बन्धस्यैव प्रत्यक्षविषयत्वात्। उक्तदोषं परिहरन् विशेषमाशङ्कते। **अथेति**। परिहरति। **एवं तर्हीति**। स्वत्वस्य लौकिकत्वेऽन्यस्य स्वेऽन्येनापहृते स यदि ब्रूयान्मम स्वमनेनापहृतमिति तदा श्रोतॄणां सभासदामुक्तसंशयो न स्यात्। यथा लौकिके सुवर्णरजतादिस्वरूपे दृष्टे सुवर्णादिकं भवति न वेति न संशयः तद्वत्स्वत्वेऽपि तदभावः स्यात्। लोकतः तत्कोटिनिश्चयसत्त्वात् जायते च संशयः। तस्मादपहर्तुः स्वं न भवतीति वक्तुमशक्यमिति भावः।

यद्वा। अथेति पूर्वपक्षवादी प्रष्टव्योऽपहर्तुः स्वं न भवतीति प्रमितिरुत्पद्यते न वेति। तत्राद्ये आह। **एवन्तर्हीति**। यथेदं सुवर्णमिदं रजतमित्युत्पन्नायां प्रमितौ सुवर्णादिस्वरूपे संशयो न भवति तथा प्रकृतेऽपीति भावः। नापि द्वितीयः। प्रमित्यनुदयादेवापहर्तुः स्वं न भवतीति वक्तुमशक्यत्वा[2]दिति। पूर्वपक्षमुपसंहरति। **तस्मादिति**।

सिद्धान्तमाह। **अत्रोच्यत इति**। स्वत्वस्य लौकिकत्वमनुमानेन तावत्साधयति। **लौकिकमेवेति**। स्वत्वं पक्षः, लौकिकत्वं साध्यं, लौकिकार्थेति हेतुः। तत्रान्वयव्याप्तौ दृष्टान्तमाह। **व्रीह्यादिवदिति**। तथा च स्वत्वं लौकिकं, लौकिकार्थक्रियासाधनत्वात्। यद्यल्लौकिकार्थक्रियासाधनं तत्तल्लौकिकं, यथा व्रीह्यादिस्वरूपं, तथा चेदं, तस्माल्लौकिकमिति बोध्यम्। यद्यल्लौकिकं न भवति तत्तल्लौकिकार्थक्रियासाधनमपि न भवति यथाऽऽहवनीयादिरिति। व्यतिरेकव्याप्ति[3]दृष्टान्तमप्याह। **आहवनीयादीनामिति। हि** यतः।

संभवे व्यतिरेकापरिशुद्धमनुमानं तादृशं न प्रमाणमित्याक्षेपं सूचयन् व्याप्तौ व्यभिचारमाह। **नन्वाहवनीयादीनामपीति**। अलौकिकस्यापि तस्य लौकिकपाकादिसाधनत्वादुक्तव्यतिरेक[4]-

१ ख-तेन त्वातिदेशः। २ ख-ङ-वक्तुं शक्यत्वात्। ३ ख-ङ-क व्यतिरेकव्याप्तिमप्याह। ४ क-उक्तव्याप्त्योर्व्यभिचारात्।

व्याप्तौ व्यभिचारादनुमानं दुष्टमिति भावः । **अपिना** व्रीह्यादि । समाधत्ते **नैतदिति ।** आहवनीयादौ स्वरूपद्वयसत्त्वेऽपि पाकसाधनत्वं न शास्त्रसमधिगम्यम् । अलौकिकाहवनीयादिस्वरूपहीनलौकिकाग्नेरेव तत्स्वरूपेण पाकसाधनत्वाङ्गीकारात् । न चालौकिकाहवनीयादिस्वरूपेणैव तदस्तु । तथाहि सति अलौकिकाहवनीयादिस्वरूपहीनलौकिकाग्नेः पाकसाधनत्वं न स्यात् । न च सामान्यस्वरूपेण सार्वत्रिकं तदस्तु । तथा सति तस्यापि लौकिकत्वापत्त्या शास्त्रानर्थक्यापत्तेः । अत एव साधनत्वं फलोपहितत्वं निविष्टम् । तस्मान्न व्याप्तौ व्यभिचार इति भावः । नन्वेवं प्रकृतेऽपि सुवर्णादेः सुवर्णादिस्वरूपेणैव लौकिकक्रयविक्रयाद्यर्थक्रियासाधनत्वमास्तां न स्वत्वरूपेणेति कथं तस्य लौकिकत्वसिद्धिरत आह । **इह त्विति । स्वत्वेनैव** तद्वत्तैव । तदेवं[2] ध्वनयन् उक्तमुपपादयति । **न हीति ।**

लोकविशेषव्यवहारोऽपि स्वत्वस्यालौकिकत्वेऽनुपपद्यमानस्तस्य तत्त्वे प्रमाणमित्याह । **अपि चेति ।** 'प्रत्यन्तो[3] म्लेच्छदेशः स्यात्' । सर्वथा शास्त्रज्ञानाभावसूचकमिदम् । तदाह । **अदृष्टेति ।** अज्ञातेत्यर्थः । म्लेच्छादीनामिति यावत् । ननु तद्व्यवहारस्य तस्य तत्कल्पकत्वमुक्तम्, तत्र कल्पकसत्त्वे एव न मानमिति कथमर्थापत्त्या तत्सिद्धिः, अत आह । **क्रयेति ।**

स्वत्वस्य तत्त्वं न्यायवित्संमतमपीत्याह । **किंचेति । नियतोपायकमिति ।** प्रतिग्रहार्जनादीत्यर्थः । **न्यायविदः** तेऽपि । कथमित्याशङ्कायामुक्तमुपपादयति । **तथा हीत्यादिना । लिप्सेति ।** तत्पदघटितसूत्रे इत्यर्थः । चतुर्थाध्याये प्रथमपादे द्वितीयाधिकरणसूत्रम्, 'यस्मिन्प्रीतिः पुरुषस्य तस्य लिप्साऽर्थलक्षणा विभक्तत्वात्' इति ।

तत्र प्रथमवर्णके क्रत्वर्थपुरुषार्थयोर्लक्षणविचारः, द्वितीये वर्णके गोदोहनादिकं क्रत्वर्थमुत पुरुषार्थमित्यादिविचारः । तृतीये वर्णके त्वयं विचारः—अनारभ्य पठ्यंते द्रव्यार्जननियमाः—ब्राह्मणः प्रतिग्रहादिना धनमर्जयेत्, राजन्यो जयादिना, वैश्यः कृष्यादिनेति । तत्र संदेहः, किमेते क्रत्वर्था उत पुरुषार्था इति ।

तत्र पूर्वपक्षः । तेषां तत्त्वेऽपि क्रत्वर्थत्वानङ्गीकारेऽधिकारिणः अभावाद्विध्यानर्थक्यापत्तेः कर्तृप्रयुक्तद्रव्यद्वारा क्रत्वर्थत्वमेव युक्तमिति । अयं भावः । यथा क्रतुविधिना आक्षिप्ते द्रव्यार्जने 'सोमं क्रीणाती' त्यादिर्द्रव्यार्जननियमः क्रत्वर्थस्तथैव प्रतिग्रहादिनियमोऽपि । अन्यथा तन्नियमस्य द्रव्यप्राप्तिस्वरूपे तत्कार्ये क्षुत्प्रतीघातादौ चानुपयोगाद्वैयर्थ्यं स्यात् । न च तत्र प्रकरणं क्रत्वर्थताबोधकमस्ति नात्रेति वैषम्यमिति वाच्यम् । अदृष्टोपायापेक्षक्रतुसामर्थ्येनादृष्टप्रयोजनापेक्षनियमसामर्थ्येन वाऽङ्गत्वसिद्धेः । न[4] चैवं सर्वस्य द्रव्यस्य क्रत्वर्थत्वाज्जीवनं न स्यादिति वाच्यम् । आनियमोपार्जितेन तत्सिद्धेः। यद्वा जीवनं विना क्रत्वसिद्धेः क्रतुविधिभिरेव स्वार्थसिद्ध्यर्थं नियमोपार्जितस्य जीवनार्थत्वमभ्युपगतमिति । द्रव्यप्राप्तिरूपद्रव्यार्जनमत्रोदाहरणमिति **तन्त्ररत्नकृदुक्तं** तु वार्तिकविरुद्धं युक्तिविरुद्धं च । विधेयस्यैव मीमांसायां विचारादिति बोध्यम् ।

एवमाक्षिपति **द्रव्येत्यादिना आशंक्येत्यन्तेन ।** द्रव्यार्जननियमानां क्रत्वर्थत्वे स्वत्वस्यालौकिकत्वेन लौकिकहेत्वजन्यत्वेन वैदिकहेत्वन्तराभावेन नियतप्रतिग्रहादिहेतूनां च क्रत्वर्थत्वेना-

१ क—लौकिकत्वात्सिद्धिः । क—लौकिकत्वासिद्धिः । २ क—अलौकिकत्वं ध्वनयन् । ३ अमरकोशे ( २।१।७ ) । ४ ख—क—नच ।

न्यार्थत्वेनाकारणककार्योत्पत्त्यभावेन च स्वत्वानुत्पत्त्या स्वस्याभावात् अस्वेन च क्रत्वसिद्धेः क्रत्वर्था नियमा इति पूर्वपक्षासम्भव इत्यर्थः।

तमुज्जीवयति। **द्रव्यार्जनस्येति।** वैपरीत्येनान्वयः। अत एव याजनादिद्वारेण द्रव्यमर्जयतामिति शङ्कावसरे उक्तम्। तत्र प्रतिग्रहो नाम स्वीकारविशेषः। अर्जनं च द्रव्यप्राप्तिरूपम्। अत एव याजनादिना लिप्सेतेति प्राक् स्मृत्युक्तम्।

'ईश्वरं चाप्युपासीत योगक्षेमार्थसिद्धये' [ १।१०० ]

इति **मौलं** अर्जनोपायबोधकम्,

"षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका। याजनाऽध्यापने चैव विशुद्धाच्च प्रतिग्रहः॥"

इति **मानवं** च ( १०।७६ ) संगच्छते। प्रतिग्रहादिनियमाः स्वत्वं साधयन्त एव क्रतूपयुक्तधनद्वारा क्रत्वर्था भविष्यन्ति, यथाऽवघातो वितुषीभावं कुर्वन्नेव क्रतूपयुक्तव्रीहिद्वारा क्रत्वर्थस्तद्वत्। तच्च स्वत्वं जन्मना पुत्रत्वादिकवत् अर्जनेनार्जकार्ज्ययोः तादृशस्वत्ववत् स्वस्वाभिभावसंबन्धरूपं लौकिमेव मन्यंते वृद्धाः।

यतः—

"संबन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः। श्रुतायामश्रुतायां वा क्रियायामभिधीयते॥"

इति **हर्युक्तेः** क्रियामूलकः कर्तृकर्मणोः सम्बन्धो लोकसिद्धो न मानान्तरापेक्षः। न चैवमर्जनाक्रियापाये तज्जन्यस्य तस्याप्यपायः। संबन्धिनोराश्रययोः सत्वात्। न हि पितुः क्रियापाये पितृत्वमपैति। तथा च लौकिकत्वात्स्वत्वस्य स्वेन च क्रतुसिद्धेर्न तदभाव इति सिद्धं तेषां तत्वमिति भावः।

ननु तथाऽर्जनस्य स्वत्वसाधनत्वेऽपि तन्नियमानां क्रत्वर्थत्वादर्जनस्यापि क्रत्वर्थत्वेनान्यार्थत्वात् स्वमेव नेति क्रत्वभावस्तदवस्थ एवेति पूर्वपक्षासिद्धिरेवेत्याह। **ननु चेत्यादि वर्त्ततेत्यन्तेन।** उपहसन् परिहरति। **प्रलपितमिति।** अर्जनं स्वत्वं नापादयतीति वदता केनापि प्रलपितमिदं, यतो मिथो विप्रतिषिद्धमित्यर्थः। यद्वा केनापि प्रलपितमिदम्। तत्र हेतुमाह। **अर्जनमिति।** यत इत्यादिः। 'इति वदते' त्यस्य 'गुरुणे'त्यत्रान्वयः। अर्जनं नामार्जकधर्मः प्रागुक्तरूपस्तत्प्रयुक्तः स्वस्वामिभावः संबन्धः। स च द्विनिष्ठः पितापुत्रत्ववत्। तथा चार्ज्यं विनाऽर्जनस्यानिष्पत्तेर्मे माता वन्ध्येतिवत् अर्जनं स्वत्वं नापादयतीति वचनं मिथो विरुद्धमित्यर्थः।

ननु पूर्वपक्ष्युक्तत्वादेव नायं तत्सिद्धान्तोऽत आह। **सिद्धान्तेऽपीति।** इत्थं हि सः। धनार्जनप्रवृत्ते ह्यधिकारिणि अर्थलभ्ये सति तन्नियमानां क्रतुनिवेशकल्पना न युक्ता। धनकामाधिकारे च रागात्प्रवृत्तो न नियतं प्रवर्त्तते। अनियमप्रवृत्तेर्न तद्विद्ध्यानर्थक्यम्। किंचार्जनमात्रस्य क्रत्वर्थत्वे कृत्स्नमेवार्जितं क्रत्वर्थमिति जीवनोपायाभावात्सर्वक्रतुलोपः स्यात्। किञ्च लिङ्गस्य क्रत्वर्थत्वपुरुषार्थबोधकत्वे साधारण्यान्न तेन क्रतुमात्रार्थत्वम्। अतो न क्रतोः क्रतुत्वेन द्रव्यार्जनाक्षेपकता किंतु पुरुषार्थत्वेन। अन्यथा "त्रयाणां द्रव्यसंपन्नः कर्मणो द्रव्यसिद्धित्वात्" इति **षाष्ठाधिकरणोक्तेन** क्रतूनां द्रव्यार्जनाक्षेपकत्वेन विरोधः स्यात्। 'द्वादशरात्रीर्दीक्षितो भृतिं चिन्वीतेति' भृतिचयनादिकं

१ क—अकारणकभावार्थोत्पत्त्यभावेव। २ क—प्रतिग्रहातयोर्मध्ये। ३ क—ङ—अर्जकार्ज्ययोः स्वस्वामिभावसम्बन्धरूपस्य। लौकिकस्य स्वत्वस्य अर्जनक्रियाजन्यत्वाङ्गीकारे। ४ क—ङ—स्प्रत्यत्यागात्मकक्रत्वभावः। ५ क—तेषां नियमानू तस्वक्रत्वर्थत्वम्। ६ ख—अर्जनस्य। ७ क—स्वसस्वसाधनेऽपि। ८—ख—क—पितापुत्रवत्।

तु पुरुषार्थार्जितद्रव्यबाधेन क्रत्वर्थतया विधीयते इति वैषम्यम् । तथा चोपायान्तरेण[1] द्रव्यार्जने प्रत्यवायः कल्प्यते । न च 'हिरण्यं धार्यम्' इतिवत् द्रव्यार्जनमेव फलार्थमस्त्विति[2] वाच्यम् । दृष्टार्थत्वे सम्भवति अदृष्टार्थत्वस्यान्याय्यत्वात् । तस्मात्पुरुषार्था नियमा इति । यद्यप्येवं न्यायेन तत्र स्थापितं तथापि यज्ञोपवीतादिवदुभयार्थता बोध्या । अत एव–'न्यायोपार्जितवित्तेन कर्तव्यं तु सदा द्विजैः ।' इति **चतुर्विंशतिमत**मुपपद्यते । एवं अर्जनमपि । अत एव 'जीविकेति'प्रागुक्त**मानव**सङ्गतिरीरीति बोध्यम् । अत एव द्रव्यस्य सर्वकार्यार्थित्वेन पुरुषार्थत्वात्तदाश्रितनियमस्यापि तदर्थत्वमिति सिद्धान्तसूत्रं सङ्गच्छते इति तत्त्वम् ।

**विचारेति ।** अधिकरणविचारप्रयोजनमित्यर्थः । सिद्धान्तप्रयोजनस्वरूपमेवाह । **अतो नियमातिक्रम इति ।** तत्प्रयुक्तदोष इत्यर्थः । अत एव विशदयति । **अस्य चेति ।** प्रयोजनपरग्रन्थस्य मूलोक्तस्येत्यर्थः । **विवृतः** गुरुणेति शेषः । 'यदेत्यादिना नियमातिक्रमदोष' इतीत्यन्तेन ग्रन्थेनेति भावः । पूर्वपक्षे पुरुषस्य न ततो दोषः । किंतु ततो न क्रतुसिद्धिः क्रतुवैगुण्यात्[3] । सिद्धान्ते तु तेषां पुरुषार्थत्वात् व्यतिक्रमे पुरुषस्य दोषो न[4] क्रतुवैगुण्यमिति तात्पर्यम् । एवव्यवच्छेद्यमेवाह । **नियमातिक्रमार्जितेनेति ।** पूर्वपक्षे इति पूर्वान्वयि । भवतीति पाठः ।

वस्तुतस्तु पूर्वपक्षे द्रव्यार्जनस्य कर्माङ्गत्वात्तत्तत्कर्मकाले एवादौ तदुपयुक्तद्रव्यार्जनम् । स्वतन्त्रकालत्वे मानाभावात् । तत्काले द्रव्यालाभेन कर्मलोपेऽपि न प्रत्यवायः । अर्थिन एवाधिकारात् । सिद्धान्ते तु पूर्वार्जितेन यष्टव्यमिति । एतेन पूर्वपक्षे प्रतिग्रहाद्यर्जितमेव क्रतौ ग्राह्यम्, सिद्धान्ते यथाकथंचित्सिद्धमिति **राणको**क्तमपास्तम् । तत्तन्नियमवाक्यतस्तदकरणे पुरुषस्यानिष्टभवनलाभेन प्रत्यवायवत् क्रतुफलाभावस्यापि कृतकष्टं प्रति कष्टजन्येष्टाभावस्याप्यनिष्टत्वेन दोषात् । अत एवापशूद्राधिकरणे शूद्रेण नाध्येयमिति निषेधातिक्रमे शूद्रस्य क्रतुफलासिद्धिः प्रत्यवायश्चेत्युक्तं भाष्यकृतेति बोध्यम् ।

प्रकृतोपसंहारं सूचयन् फलितमाह । **नियमातिक्रमार्जितस्यापीति ।** तथा चेत्यादिः । सिद्धान्तिनेति भावः । अपिः कैमुतिकन्यायसूचकः । **अन्यथा ।** नियमातिक्रमार्जितस्यापि स्वत्वानङ्गीकारे । नियमानां क्रत्वर्थत्वेन तदर्जितस्यापि तत्त्वेन स्वत्वस्यालौकिकत्वे स्वत्वाभावेन जीवनदौर्लभ्यात्तदभावात्तदभाव इत्यर्थः ।

ननु तदतिक्रमार्जितेऽपि स्वत्वाङ्गीकारे चौर्यादिप्राप्तस्यापि स्वत्वप्रसङ्गोऽतः प्रसंगान्मध्यमदोषपरिहारं सूचयन्नाह । **न चैतावतेति ।** न हीत्यर्थः । हेत्वसिद्धिं परिहराति । **व्यवहारविसंवादादिति ।** प्रसिद्धक्रयाद्यदर्शनादित्यर्थः ।

एवं स्वत्वस्य लौकिकत्वे साधिते असाधारणविध्यानर्थक्यं परिहरति । **एवं प्रतीत्यादिना ।** विजितेत्यत्र भावे क्तः । विजयादयः । उपाया इत्यस्याग्रे सर्वत्रानुषंगः । **अदृष्टेति ।** द्रव्याद्यदृष्टेत्यर्थः । इति नियमा अदृष्टार्था इत्वन्ययः ।

---

१ क–उपायान्तरतः २ क–स्वर्गफलार्थत्वमिति । फ–तृतीयायाध्यायस्य चतुर्थपादस्थद्वादशाधिकरणम् । तस्मात्सुवर्णं हिरण्यं भार्यं सुवर्ण एव भवति दुर्वर्णोऽस्य भ्रातृव्यो भवतीत्यत्र विहितं शोभनवर्णोपेताहिरण्यधारणं वैदिकक्रियारूपत्वेन क्रतूपस्थापकवत्क्रत्वंगमारादुपकारकम् । कर्मविहितण्यत्प्रत्ययानुसारात् क्रतुगतहिरण्यसंस्कारो वा । हिरण्यं हस्ते भवतीति हिरण्यधारणप्राप्तेर्धार्यहिरण्यानुवादेन शोभनवर्णता विधिर्वा । इति त्रेधाऽपि क्रत्वर्थो विधिः न पुमर्थ इति प्राप्ते ब्रूमः । न क्रत्वर्थः, अनारभ्याधीतत्वात् । क्रतुव्यभिचारित्वेन क्रत्वनुपस्थापकत्वाच्च । तस्मात्केवलं पुंधर्मस्तस्य फलं स्वर्गः स्वसुवताभ्रातृव्यदुर्वर्णते वा इति । ३ ङ–क्रतुवैगुण्य ततः ४ख–न च ।

अथ साधारणविध्यभावेऽपि तत्परिगणक**गौतम**वाक्यानर्थक्यरूपालौकिकत्वसाधकप्रागुक्ताद्ययुक्तिं खण्डयति । **रिक्थादयस्त्वित्यादिना वेदितव्यमित्यन्तेन । सर्वेति ।** वर्णसङ्करेत्यर्थः । तदर्थं वक्तुं तानेवाह । **स्वामीति । तत्र** तेषां मध्ये ।

**अनन्येति ।** अनन्यस्वामिकस्येत्यर्थः । एवं पदार्थानुक्त्वा वाक्यार्थमाह । **एतेष्विति । यथा-**श्रुते साकाङ्क्षत्वादाह । **भवतीति ।** सर्वतदर्थमाह । **ज्ञातेषु ज्ञायते स्वामीति ।** एतेषु निमित्तेषु ज्ञातेषु स्वामीति ज्ञायते इत्यर्थः । अनेन पूर्वपक्ष्यभिमतार्थनिरासः । एतदर्थतया साफल्यात् ।

अग्रिमार्थमाह । **ब्राह्मणस्येत्यादि** सप्रतीकम् । लब्धमित्येतत्स्वारस्याद्वचनांतरैकवाक्यत्वादत एव साहचर्याच्च शेषपूरणेनाह । **प्रतिग्रहेति ।** अधिकमित्यस्योत्कृष्टमित्यर्थस्तदाह । **असाधारणमिति ।** विजितमित्यत्र विजय उपलक्षणम् इत्याह । **विजयदण्डेति ।** अधिकमित्यनुवर्तते इति पाठः । भोगरूपनिर्वेशाशयेनाह । **कृषीति ।** आदिना वाणिज्यादिपरिग्रहः ।

न्यूनतानिरासायोक्तन्यायमन्यत्राप्यतिदिशति । **एवमिति ।** षष्ठ्यन्तयोस्तत्तदसाधारणमित्यत्राप्यन्वयः । **स्वत्वहेतुषु** तेषां मध्ये । **तत्तत्सर्वमिति ।** तेषामित्यादिः ।

ननु स्वत्वस्य लौकिकत्वे 'पत्नी दुहितर' इत्यादिवचनजातं विरुद्धं, तेन स्वामिनोऽभावे पत्न्यादेः स्वामित्वप्रतिपादनात् इति **गौतमो**क्त्योक्तप्रायं प्रागनुक्तमपि दोषं तत्प्रसङ्गेनोद्धर्तुमाह । **यदपीति । तत्रापि** वचनेऽपि । तदभावे इति शेषः । क्रमस्मरणामिति पाठः । अन्यथा तत्रापीत्यसंगतेः । एवमन्यस्मृतिविरोधाभासोऽपि निरसनीय इति न कोऽपि वचनविरोधः ।

अत्रेदं बोध्यम् । ननु किं तावत्स्वत्वं यस्य लौकिकत्वं सिद्धान्तिनोच्यते । न च शास्त्रनिषिद्धं यथेष्टविनियोगोपायभूतक्रयप्रतिग्रहादिविषयत्वं तत्, तच्च न बहिरिन्द्रियवेद्यं प्रतिग्रहादेर्मानसज्ञानविशेषस्य तदयोग्यत्वाभिप्रायोक्तमेवेति वाच्यम् । प्रतिग्रहादिनाशोत्तरमपि स्वत्वव्यवहारात्, दानादितः स्वत्वं नश्यति प्रतिग्रहादितश्चोत्पद्यते इति व्यवहाराच्च । इति चेन्न । दानादिनाश्यस्य प्रतिग्रहादिजन्यस्य पदार्थविशेषस्यैव स्वीकारात् । तदपि बहिरिन्द्रियवेद्यं 'स्वं पश्यामी' त्यादिव्यवहारात् । अतिप्रसङ्गस्तु न । तत्साक्षात्कारे तदीयस्वत्वव्याप्यतदीययथेष्टविनियोज्यत्ववदिदमिति ज्ञानस्य हेतुत्वात् । अतस्तद्ग्रहे तदीययथेष्टविनियोज्यत्वे तदीयस्वत्वव्यभिचारित्वग्रहे च न तद्ग्रहः । एतेनानुमेयमेव स्वत्वं, स्वं पश्यामीति तु सुरभिचन्दनं पश्यामीतिवन्न लौकिकविषयतावगाहीति परोक्तमपास्तम् । तस्या अन्यत्र खण्डितत्वात् ।

तत्र दानं द्विविधम्, दृष्टार्थमदृष्टार्थं च । द्विविधमपि द्विविधं प्रतिग्रहसहितं तद्रहितं च । यद्यपि प्रतिग्रहः स्वीकारमात्रं तथापि ब्राह्मणः प्रतिग्रहादिना धनमर्जयेदित्यत्र तिलतुरगादिप्रतिग्रहे दोषबोधकस्मृतिवाक्येषु च प्रतिग्रहशब्देनादृष्टार्थदत्तस्वीकार एवेति परितोषदत्ततिलतुलरगादिस्वीकारे न कस्यापि दोषो नापि क्षत्रियाद्यर्जनानियमानर्थक्यम् । पारितोषिकमेव दृष्टार्थमित्युच्यते । दाधात्वर्थश्च स्वस्वत्वनिवृत्तिपूर्वकपरमात्रस्वत्वापत्त्यनुकूलत्यागः ।

न च त्यागस्य स्वत्वनिवृत्तिहेतुत्वेऽपि न परस्वत्वोत्पत्तिहेतुत्वं, प्रतिग्रहादेरेव तत्त्वादिति वाच्यम् । विप्रोद्देशेन त्यक्तमात्रायां गवि 'गौरियं विप्रस्य न ममे'त्यादिसर्वजनप्रतीत्या त्यागस्यैव तस्या अपि हेतुत्वाङ्गीकारात् । अत एव 'पितृभ्यः श्राद्धं दद्यादि'त्यादौ स्वत्वे पितृमिलषितत्वस्य प्रतिग्रहाभावात्

बाधेऽपि उक्तरूपदाधात्वर्थे पितॄणामुद्देश्यत्वसत्त्वाच्चतुर्थ्युपपत्तिः । विदेशस्थपात्रमुद्दिश्य त्यक्तधनस्वीकारमन्तरेणैव पात्रस्य मरणेऽपि उद्देश्यपुत्रादिभिरेव पितृदायत्वेन तद्धनं विभज्य गृह्यते नान्यैरिति व्यवहारसङ्गतिश्च । अन्यथा तैरिवोदासीनैरपि तद्धनस्यारण्यककुशादेरिवोपादाने प्रत्यवायो न स्यात् ।

नचैवं प्रतिग्रहो व्यर्थ इति वाच्यम् । 'लब्धावष्टगुणं पुण्यमि'त्युक्तेस्तस्य तादृशप्रतिगृहीतधनदाने फलातिशयजनकत्वात् । मात्रपदं तु वक्ष्यमाणसंसृष्टिस्थलेऽसाधारणस्वत्वनाशोत्तरं साधारणस्वत्वोत्पादेऽपि ददातीति प्रयोगाभावसंक्षरणार्थम् ।

न च तत्र न स्वत्वनाश इति स्वत्वनिवृत्तिपूर्वकेत्यनेनैवातिप्रसङ्गवारणे मात्रपदं व्यर्थमिति वाच्यम् । तत्रापि स्वत्ववति स्वत्वानुत्पत्त्या पूर्वस्वत्वनाशाङ्गीकारात् । इच्छाया उत्तेजकत्वाङ्गीकारे तु गौरवम् । एतेन न तत्र स्वत्वनाशः, किन्तु परस्वत्वोत्पत्तिमात्रं स्वत्ववति स्वत्वोत्पत्तिस्तु तत्रत्येच्छायाः उत्तेजकत्वादित्यपास्तम् । न चैवमप्युपेक्षायां दोष एवेति वाच्यम् । तस्या नियमतः परस्वत्वानुपादकत्वेन ददातीति तत्र प्रयोगाप्राप्तेः । अत एव विक्रयस्थलेऽपि न तथा प्रयोगः । तस्य नियमतः परस्वत्वानापादकत्वात् । तादृशस्थले ऽनतिप्रसङ्गाय मूल्यदानपूर्वकस्वीकाररूपक्रयस्यैव स्वत्वजनकत्वात् । एवं च दानादीत्यादिपदेन तादृशक्रय इति तयोरेव तन्नाशकत्वं तज्जनकत्वं च । न चैवं प्रतिग्रहादिजन्यमिति व्यर्थमयुक्तं चेति वाच्यम् । लौकिककारकजन्यत्वेऽपि तत्प्रमाणगम्यत्वेऽपि शास्त्रगम्यत्वस्य तदीयहेतुजन्यत्वस्य च प्रतिपादनार्थं तदुक्तेः ।

तथाहि 'ब्राह्मणः प्रतिग्रहादिने'त्यादिना 'स्वामी रिक्थे'त्यादिना च प्रतिग्रहादेस्तत्वं स्पष्टमुक्तम् । न चान्येन तथोक्तत्वेऽपि आद्येनार्जने तस्य तत्त्वमुक्तं न स्वत्वे, अर्जनं च लाभापरपर्यायं द्रव्यप्राप्तिरूपं प्रागुक्तमेवेति वाच्यम् । प्रतिग्रहादिमताऽर्जनेन धनं स्वं कुर्यादिति वाक्यार्थेन तद्वत् तस्यापि तद्द्वारा एतज्जनकत्वलाभात् । अत एव याजनादिद्वारेण द्रव्यमर्जयतामितिप्रतिग्रहादिना द्रव्यार्जनस्य स्वत्वसाधनत्वमिति च व्याख्याकृतोक्तम् । तस्मात्प्रतिग्रहादिकमर्जनं च तद्वत् तत्साधकम् ।

तत्रायं क्रमः । संभवे आदौ त्यागः, ततः प्रतिग्रहः, ततोऽर्जनं, ततः स्वत्वम् । मध्ययोरसंभवे तु आद्यादेव । एवमन्यत्राऽपि । एवं च प्रतिग्रहादिजन्यमित्यत्र जन्यत्वं साक्षात्परम्परासाधारणम् । आदिना याजनाध्यापनविजयादिकृष्यादिसेवादिवत्तादृशत्यागस्य साधारणस्य रिक्थादेश्च तादृशक्रयघटितस्य ग्रहणम् । तत्र प्रतिग्रहादेस्त्यागक्रययोश्च तत्त्वमुक्तम् । प्रतिग्रहाधिगमयोरपि तद्वत्तत्वं स्पष्टम् । रिक्थशब्देन दायशब्दार्थघटकस्वामिसंबन्धमात्रं, संविभागशब्देन तादृशः प्रतिबन्धकाभावविशिष्टः स इति तयोरपि तत्त्वमविरुद्धं प्रागुक्तं चेति न कोऽपि दोषः । प्रागुक्तविभागस्तु न स्वत्वजनकः । तस्य शरीरे तन्निवेशात् । अत एव **गौतमा**दिना कारकहेतुषु न पठितः । विभागात्स्वत्वमित्यादिविचारोऽपि परमतस्य **गौतमी**ये संविभागशब्देन विभागः स च न प्रागुक्तरूपः किंतु प्रसिद्ध इति भ्रमस्य च निराकरणद्वारोक्तसिद्धान्तार्थप्रतिपादक एवेति न विरोधः । एवं च विभागाजन्यं दानक्रयमाश्यवद्विभागनाश्यं साधारणासाधारणोक्तनिमित्तप्रयोज्यं लोक-

प्रमाणप्रत्यक्षगम्यं भोगाद्यनुमेयं च स्वत्वमिति निष्कृष्टार्थ इति सर्वमनवद्यम्। स्पष्टं चेदं **मञ्जूषादा**विति तदाह। **सर्वमिति**।

एवं सर्ववचनदोषपरिहारे कृतेऽवशिष्टं युक्तिविरोधरूपमपि प्रागुक्तं तृतीयदोषमुद्धरति। **यदपीति**। **न ब्रूयादिति**। अपहर्तुरेव स्वत्वात् यदि ब्रूयात्तर्हि मध्यस्थानां संशयो न स्यात् सुवर्णादिस्वरूपे इवेति शेषः। **सत्वहेत्विति**। तादृशस्थले आवेदकवचनादन्यदीयमनेनापहृतमिति ज्ञानमात्रोत्पत्तावपि तस्याप्रमात्वेन विप्रतिपत्तिकारणात् वादिना तथाऽभिहिते प्रतिवादिना चान्यथाऽभिहिते मध्यस्थानाम् "अनेन अपहारलब्धमथवा क्रयादिलब्धम्" इति स्वत्वकारणभूतक्रयादिषु संदेहात्तत्कार्यभूतस्वत्वेऽपि संदेहसंभवादित्यर्थः।

ननु स्वत्वस्य तत्त्वनिरूपणमत्र प्रकरणे नोपयुक्तं तद्गतलौकिकत्वालौकिकत्वयोर्विभागाद्यप्रयोजकत्वात् अत आह। **विचारप्रयोजनं त्विति**। **उत्सर्गेण** त्यागेन। न केवलं तावन्मात्रमित्याह। **जप्येनेति**। **इतीति**। अनेन **मानवेन** त्यागविधानादित्यर्थः। पूर्वपक्षे आह **शास्त्रैकेति**। गर्हितत्वं द्वेधा निषिद्धत्वमविहितत्वं चेत्याह। **असत्प्रतिग्रहेत्यादि**। सिद्धान्ते तद्वचनविरोधं परिहरति। **तस्योत्सर्गेणेति**। एवब्यवच्छेद्यमेव सूचयन्नाह। **तत्पुत्रेति**। ननु दायत्वेन तत्त्वेऽपि परम्परया दोषसंबन्धोऽस्त्येव अत आह। **सतेति**। वित्तलाभोपाया इत्यर्थः। अत्र दायपदेन रिक्थसंविभागयोर्ग्रहणं, लाभपदेन परिग्रहाधिगमयोः, जयेन दण्डस्यापि, प्रयोग इत्यनेन कृष्यादेः, कर्मयोग इत्यनेन सेवादेः प्रतिग्रह इत्यनेन तयोरपीति बोध्यम्।

ननु प्रतिज्ञानुरोधेन प्रतिज्ञातविषयविचारो युक्तो नान्यथेति कथमत्र वैपरीत्यम्। न च कारणान्तरेणात्र तथा। तस्यादर्शनात्। न च हेतुहेतुमद्भावः। वक्ष्यमाणविचारस्य स्वत्वगतलौकिकत्वामपेक्षत्वात्। न च सूचीकटाहन्यायः। लौकिकत्वस्य बहुयुक्तिसाध्यत्वात्। अन्यस्य कस्यचिददर्शनाच्च। अतः कृतकरिष्यमाणविचारावसरदुःस्थाविति चेन्न। स्वत्ववद्विभागस्यापि लौकिकत्वेन तद्गतनियमानामेवालौकिकत्वेन जन्मादेरपि लौकिकत्वेनोक्तरीत्या स्वत्वस्य लौकिकत्वे सिद्धे एव लौकिकविभागादिजन्यत्वस्य तत्र घटमानत्वं नान्यथेति कृतविचारो हेतुः करिष्यमाणविचारो हेतुमानिति तस्यैतदानन्तर्यमुचितमित्याशयात्।

तदेतत् ध्वनयन्नाह। **इदानीमिति**। तदनन्तरमित्यर्थः। तथा च उक्ताशयेनैवेदानीमित्यस्यात्रोक्तिरिति बोध्यम्। **इदं संदिह्यत इति**। पूर्वं विचारप्रतिज्ञायामुक्तसंदेहानुवादपूर्वकं प्रतिज्ञातं प्रतिपाद्यते इत्यर्थः। यद्यप्युक्तप्रतिज्ञायां स्वस्यास्वस्य वेत्येव शाब्दः सन्देहस्तथाप्यार्थिकमुक्तमेवाह। **किं विभागादिति**। **तत्र** तयोर्मध्ये। **जातेति**। जातपुत्रः कृष्णकेशोऽग्नीनादधीतेत्यनेनेति भावः। तत्र पुत्रशब्दोऽपत्यमात्रोपलक्षणम्। कृतैकशेषद्विवचनान्तेन बहुव्रीहिर्वा। कृष्णाः केशा यस्येत्यनेन पूर्ववयस्कत्वं, समर्थत्वमिति यावत्। एवंविधोऽधिकारी आधानं कुर्यादिति तदर्थः। नन्वस्य तद्विधायकत्वेऽपि विभागात्स्वत्वस्य कथमितो लाभोऽत आह। **यदि जन्मनेति**। एवेन तद्व्यवच्छेदः। **उत्पन्नेति**। तन्मात्रस्येत्यर्थः। तस्यापि द्रव्यस्वाम्येन द्रव्यस्य साधारणत्वादिति भावः। तदाह। [illegible]। **आधानादिष्विति**। पतिपत्नीमात्रसाध्येष्वित्यर्थः। आदिना अवश्यकर्तव्यश्राद्धजातकर्मादिपरिग्रहः।

ननु वचनात्तत्राधिकारो वक्ष्यमाण इति चेत्तर्हि निषेधस्य प्राप्तिपूर्वकत्वात्तत्र पक्षे प्रीतिदत्तस्य विभागप्राप्तिरेव नेति तन्निषेधस्यासङ्गतिरित्याह । **तथेति** । विप्रतिपत्तिरूपकारणान्तरनिरासायाह । **सर्वेति** । तत्र पक्षे ततः स्थिते एव स्वत्वे द्वयोर्दानप्रतिग्रहयोरधिकारात्तेनैव तत्सिद्ध्या विभागकारणाभावात्तदप्राप्तिरेवेति तदनुपपत्तिरित्यर्थः । ननु तद्वचनमेव खपुष्पायमाणम् । अतो **नारद**माह । **यथाहेति** । शौर्यभार्यासबन्धिधने इत्यर्थः । एवमग्रेऽपि । अत एव शौर्यादिना वाऽऽप्तमिति **बृहस्पति**र्विद्याप्राप्तं शौर्यधनमिति **व्यास**श्च सङ्गच्छते । **यस्येति** । यच्चेति पाठांतरं युक्तम् । **पैतृक इति** । पितुरागत इत्यर्थे पितुर्यच्चेति ठञ् ।

ननु सर्वानुमतिरेव यत्र न, तद्विषयकमिति नायं दोष इति चेत्, दोषान्तरमाह । **तथेति** । **वैष्णव**माह । **भर्त्रेति** । अत्र दानद्वैविध्यादाह । **प्रीतीति** । सामान्येनेत्यादिः । तत्र पक्षे जातमात्रस्यापि स्वत्वसत्त्वात्तस्यानुज्ञायामप्यसामर्थ्यात् तद्द्रव्यस्य सर्वसाधारणत्वेन एकेन दातुमशक्यत्वात् प्रीतिदानस्याप्यसंभवात् तत्प्रतिपादकमिदं वचनं विरुद्धमेवेत्यर्थः । ननु स्थावरादित्यस्योत्तरार्द्धोपात्तान्वय एव एवं स्यात्, स एव नेति न तद्वचनविरोधः, किंतु अनुकूलमेव तदिति शङ्कते । **न चेति** । तथा चाशनादावसंबंधेन तदनिषेधेन प्रीतिदाने संबंधेन स्थावरांशे तन्निषेधेन तत्रैव वचनतात्पर्यं नान्यत्र तत्रेति तेन जन्मनैव स्वत्वं प्रतिपादितं भवतीति भावः । **व्यवहितेति** । एवमन्वये तथा स्यात्, स एव न, व्यवधानस्य प्रतिबन्धकत्वेन तदन्वयालाभात् । नन्वेवमपि वचनान्तरयोरव्यवहितान्वयेनैव स्थावरस्य प्रीतिदानप्रतिषेधाज्जन्मैव स्वत्वहेतुः, न विभाग इति आशयेनाशङ्कते । **यदपीति** । **इदं** द्वयम् । **नारदीयम्** । **प्रवालानामिति** निर्धारणे षष्ठी । यद्वा सामानाधिकरण्येनान्वयः । तत्र समानविभक्तिकत्वस्य तन्त्रत्वेऽपि समानवचनत्वस्यातन्त्रत्वात् । 'वेदाः प्रमाणमि'त्यादावन्यथाऽगतेः । व्युत्क्रमेण एवव्यवच्छेद्यं, न स्थावरान्यदपि, किन्तु स्थावरमेव । अत एव सर्वपदसार्थक्यमिति तत् उपलक्षणमिति सूचयन्नाह । **स्थावरेति** । एकत्वमविवक्षितमिति सूचनायाह । **सर्वस्येति** । एवमग्रेऽपि । **पितृप्रसादात्** लब्धानि । **सति** सत्यपि । **प्रसाददाने इति** विषयसप्तमी । **प्रतिषेधवचनमिति** । जातावेकवचनम् । एवमग्रेऽपि । ननु पैतामहे स्थावरे सर्वसाधारण्यं, तादृशेषु मणिमुक्तादिषु तु नेत्यर्धजरतीयमयुक्तम् । अत आह । **अतीते पितामहे** इति।तथा च वचननियम्यमेतदिति न दोषः ।

पूर्वपक्षमुपसंहरति । **तस्मादिति** । अयं भावः । अर्जनादर्जकस्य स्वं, तत्र तत्संबधिनां पुत्रादीनामपि विभागात्स्वामिनाशाद्वा स्वम् । तत्र स्वामिनि जीवति विभागः स्वत्वहेतुः । विनष्टे तु स्वामिनि तन्नाश एव स्वत्वहेतुः । तत्रान्योऽपि विशेषः, स्वामिसंबन्धिनः पुत्रस्य पौत्रस्य वा एकत्वे स्वामिनश्च विभक्तत्वे एकत्वे वा स्वामिनाश एवासाधारणः स्वत्वहेतुः । तेषामेव बहुत्वे तु स्वामिनाशात्साधारणं स्वं भवति विभागाच्च प्रातिस्विकमिति । एवं सति स्वामिनि तादृशे पितामहे नष्टे विभागात्प्राक् पितामहधने पितुः प्रातिस्विकस्वत्वाभावादेव पैतामहं स्थावरं न प्रीत्या दद्यादिति तत्स्थावरप्रीतिदाननिषेधो, न स्वोपार्जितस्य, येन जन्मनैव स्वत्वं स्यादिति । यतः स्वामिनाशो ऽपि स्वत्वहेतुरतः पितरि मृते विभागात्प्रागन्यदीयद्रव्यमिवौदासीन्यविषयभूतं तत् द्रव्यं न भवतीत्याह । **अत एवेति** । तन्नाशस्यापि तत्त्वाङ्गीकारादेवेत्यर्थः । **पितुः** मरणात् । **प्रहीणेति** । निरूपकस्य स्वामिनोऽभावादिति भावः ।

---

१ फ–तत्र पक्षे इत्याशयेनाह । २ फ–भवतीत्याह ।

एवमनेकपुत्रस्थले तदावश्यकत्वमुक्त्वैकपुत्रस्थले तदावश्यकत्वमाह। **तथैकेति**। तद्वदित्यर्थः। **प्रयाणात्** मरणात्। तादृशस्यैकपुत्रस्य स्वं[2] पितृमरणादेव पुत्रस्यापि स्वमिति न तद्विभागमपेक्षते इति वाक्यार्थः। एवव्यवच्छेद्यमेव नेत्यादिनोक्तम्। इतिः पूर्वपक्षसमाप्तौ।

एवं पूर्वपक्षे स्थिते सिद्धान्तमाह। **अत्रोच्यते इत्यादि**। पूर्वसिद्धान्तस्यात्र हेतुत्वसूचनाय तमनुवदति। **लोकेति**। प्रकृते साधकं तदेवाह। **लोके चेति**। तस्य तत्स्वीकारे सोत्कर्षस्य तत्वमत्यावश्यकमित्याह। **नापह्नवमिति**। युक्त्यन्तरमाह। **विभागेति**। प्रोक्तमिदं प्राक्। **न प्रहीणेति**। नापि स्वत्वरहितेत्यर्थः। प्रसिद्धमित्यस्यानुषङ्गः। अत्र **गौतम**वचनमपि मानमाह। **तथोत्पत्त्यैवेति**। तथाशब्दः समुच्चये। उत्पत्त्यैव जन्मनैवांशे स्वामित्वात्तमर्थं लभेतेत्याचार्या मन्यन्ते इत्यर्थः। अस्वामित्वादिति पाठांतरम्। अर्थस्वामित्वामिति पाठान्तरं तु प्रचुरं युक्ततरं च। वचनाच्चेत्यपपाठः।

मणिमुक्तेत्याद्यपि सिद्धान्तपक्षे एवोपपद्यते इत्याह। **मणीति**। **आदिना** वचनजातपरिग्रहः। एवं सफलयन् अस्य पूर्वपक्ष्युक्तमन्यार्थपरत्वं निराचष्टे। **न च पितामहेति**। अनुपपत्तौ[3] हेतुमाह। **न पितेति**। अयं भावः। स्वामिनाशस्यापि स्वत्वहेतुत्वेनातीते पितामहे तद्धने पितापुत्रयोः स्वाम्यस्य साधारण्येऽपि मण्यादिकं वचनात्पितुरेव स्थावरं तु साधारणमेवेति प्रागुक्तार्थो यदि तद्वचनात्प्रतीयेत तदा पूर्वोक्तव्यवस्था स्यात्। न च तथा। यदि पितामहोपार्जितमेव स्यात्स्थावरादिकं तदा तस्मिन् जीवति स्वोपार्जिते तस्य प्रभुत्वाभावबोधकतुरीयपादस्यानुपपत्तेः। तस्मादेवं वाच्यं, पितामहे जीवत्यपि स्थावरेषु सर्वसाधारण्यमिति अस्य तद्विषयत्वं तदुक्तमनुपपन्नमेवेति।

नन्वेवं किंविषयं तद्वचनद्वयं येन प्रकृतार्थलाभोऽत आह। **पितामहस्य हीति**। **हि** यतः। **वचनं** वचनद्वयम्। तथा च जन्मना स्वत्वपरमेवं तद्वचनद्वयमिति भावः।

ननु जन्मनैव स्वत्वे सर्वसाधारणत्वात्स्वस्य मणिमुक्तादेरपि कथं प्रीतिदानमित्याशङ्कायां प्रतिबन्द्या वचनादित्याह। **यथेति**। **परः** पूर्वपक्षी। उक्ताशयेनैवाह। **वस्त्रेति**। **अस्मन्मतेऽपि** सिद्धान्तमतेऽपि। **पित्राऽर्जितेति**। स्वार्जितेति पाठान्तरम्। तथा च स्थावरभिन्नं स्वोपार्जितं वस्तु अनुज्ञानार्हानुमतिं विनाऽपि पित्रा दातुं शक्यमिति भावः।

नन्वेवमपि स्थावरस्य प्रीतिदानबोधक**विष्णु**वचनविरोध एवेत्यत आह। **यत्तु भर्त्रेति**। भर्तृकर्तृकपत्नीसंप्रदानकतद्दानेत्यर्थः। **ज्ञापनम्**। करणे ल्युट्। ज्ञापकम्। क्वचित्तथैव पाठः। **तत्स्वोपार्जितस्यापीति**। स्वोपार्जितेष्वपि स्थावरेषु अनुज्ञासमर्थानुमतिं विना दानानधिकारोऽन्यत्र तु नानुमत्यपेक्षेति भावः। एवं च भर्तृदत्ते स्थावरे यावज्जीवं निवासो, न दानविक्रयौ आवश्यककार्यं विना। अत्र भर्तृग्रहणात् श्वशुरदत्ते स्वातन्त्र्यमपि। अत एव—

**बृहस्पतिः**—

" स्थावरादिधनं स्त्रीभ्यो यद्दत्तं श्वशुरेण तु। न तच्छक्यमपाहर्तुं पुत्रैरपि हि कर्हिचित् "॥

इति **विष्णु**वचनस्यैवमर्थपरत्वे हेतुमाह। **पूर्वोक्तैरिति**। बहुवचनेनानुक्तवचनसंग्रहो बोध्यः। तच्चाग्रे स्फुटीभविष्यति। वचनैरिति करणे तृतीया। अतो योग्यत्वनिश्चयादित्यत्र न समासानुपपत्तिः।

---

१–ड–फ–क–प्रायणात्। २ फ–स्वपितृमरणात्। ३ फ–अनुक्तत्वे। क–अयुक्तत्वे।

आद्ययुक्तिं खण्डयति । **यदप्यर्थेति** । वचनात्तत्राधिकार इत्यर्थः । सविशेषमुपसंहरति । **तस्मादिति** । स्थितमित्यत्रान्वयः । यद्यपीति शेषः । पितुरित्यस्य स्वातन्त्र्यमित्यत्रान्वयः । उक्तवक्ष्यमाणस्मृत्युक्तमाह । **आवश्यकेत्यादि** । आवश्यकत्वे हेतुमाह । **वाचनिकेष्विति** । श्राद्धादिष्वित्यर्थः । इदमुत्तरस्यैवाङ्गं वा । **स्थावरेति** । तदन्यद्रव्यस्य विनियोगे स्वातन्त्र्यमित्यर्थः ।

एवं स्थावरान्यत्रोक्त्वा स्थावरे सिद्धान्तमाह । **स्थावरेति** । वैलक्षण्ये **तुः** । **पारतन्त्र्यमेवेति** । पित्रादेरिति भावः । अस्यार्थस्य पर्यवसानतो न्यायतो लाभेऽपि वचनमपि अपवादकमस्तीति आह । **स्थावरमिति** । **द्विपदं** दासादि । **स्वयं** स्वयमपि । **अर्जितं**, तथापि तस्येति[1] शेषः । **असंभूय** असंपृच्छ्य । सुतेत्युपलक्षणम् । **अत एव सर्वानिति** । एकशेषस्तत्र प्राग्वत् । न केवलमेतावदेव किंत्वन्यदपीत्याह । **ये जाता इति** । **अजाताः** जनिष्यमाणाः । **कांक्षन्ति** यतोऽत इति शेषः ।

**अस्येति** । उक्तसामान्यवचनस्य विशेषवचनेनापवाद इत्यर्थः । ‘ स्थावरे ’ इति विषयसप्तमी । **आधमन**माधिः । समाहारद्वंद्वः । निमित्तविशेषमाह । **आपदिति** । वक्ष्यमाणार्थसिद्ध्यर्थमेवाह । **अस्यार्थ इति** । **अनुज्ञानादाविति** । तत्समर्थत्वे तु वक्ष्यमाणप्रकार इति न विरोध इति भावः । तथेत्यनेनोभयपरामर्शः । अपिना विभक्तसमुच्चयः । विशेषत इत्यस्य सर्वशेषत्वात् । ततोऽपि विशेषमाह **सकलेत्यादि** । **तदिति** । सकलकुटुम्बेत्यर्थः । विषयसप्तम्या फलितमाह । **स्थावरस्येति** । कुर्यादित्यत[2] एवैकत्वलाभे पुनः एकार्थमाह । **समर्थ इति** ।

यथाश्रुते प्राप्तं **मनु**वचनविरोधं उक्ताशयेनैव परिहरति । **यत्तु मनुवचनमित्यादि** । **सपिण्डा इति** । प्रत्यासन्नोपलक्षणम् । **हि** यतः सर्वत्रेति दानादिविशेषणम् । तदपीत्यस्य व्याख्येयमित्यत्रान्वयः । **अपिः** पूर्व**विष्णु**समुच्चये । अत एव व्युत्क्रमेण व्याचष्टे । **अविभक्तेष्विति** । **मध्यकत्वात्,** साधारणत्वात् । **अनीशकत्वात्** । उभयत्र स्वार्थे कः । मध्यस्थत्वात्‘ अनीश्वरत्वात्’ इति पाठान्तरम् । **सर्वेति** । अविभक्ताभ्यनुज्ञां विना दानाद्यसिद्धेरिति भावः । **व्यवहारसौकर्यायेति** । प्रतिग्रहीत्रादीनामिति भावः । **न पुनः** न तु । फलितमाह । **अत इति** । तथा चाभ्यनुज्ञानादावसमर्थविषयकं तत्, इदं तु तत्समर्थविषयकम् । किञ्च तत्समर्थेष्वप्यविभक्तेषु तद्विना दानादिकमेव नेति अवश्यं तदपेक्षेत्येतस्यार्थः । तत्समर्थेषु विभक्तेषु तु तदनुमतिं विना दानादिकोपपत्तावपि प्रतिग्रहीत्रादेर्व्यवहारसौकर्यार्थं तदपेक्षेत्येतस्य विषय इति नेदं सर्वात्मना दानाद्यधिकारनिरोधकम् । एकोऽपीत्यस्याप्यपवादकं, येन विरोधो भवेदिति भावः । “ द्रव्यांशे विभक्तानामप्यविभक्तक्षेत्राद्युत्पन्नसस्यादिदानादावनुमतिं विनाऽधिकारप्रतिषेधार्थमिदमिति तु ” **मदनः** ।

**मनु**वचनान्तरविरोधं निराचष्टे । **यदपीति** । स्वेति सर्वविशेषणं स्पष्टार्थं प्रत्यासत्तेरेव लाभात् । द्वन्द्वान्ते श्रूयमाणत्वादनुमतेः सर्वत्र संबन्धः । तत्र च भावे क्तः । चोऽग्रे योज्य इति षड्भिरित्यर्थः । तदेतत् प्रतिपादयन् यथाक्रमेणोपयोगं प्रदर्शयन्नादौ ग्रामजनानुमतेः फलमाह । **तत्रापि ग्रामानुमतिरिति** । **मनु**माह । **प्रतिग्रह इति** । **न पुनः** । न तु । ‘दायादानुमतेरिति’ जातावेकवचनम् । **उक्तमेवेति** । व्यवहारसौकर्यमित्यर्थः । हिरण्योदकेत्यादेर्विलक्षणोपयोगं वक्तुं सप्रतीकमाह ।

---

१ क–तथाप्येतस्येति । २ क–कुर्यादित्यतेन प्रत्येकत्वलाभे ।

**हिरण्येति**। ननु दानस्थले तयोर्दानसत्त्वेऽपि विक्रये तदभावाद्गमनस्य तत्रापि सत्त्वादिदमयुक्तम्, अत आह। **स्थावरे इति**। इदं द्वयं **मनु**वत् सप्रतीकम् प्राग्वत्। अपिना दानम्।

एवं स्थावरे सामान्येनोक्त्वा विशेषमुभयत्राह। **पैतृके इति**। एतेन पितुर्निधनमेव स्वत्वकारणम्।

"पितर्यूर्ध्वं गते पुत्रा विभजेयुर्धनं पितुः" (अ० १३ श्लो० २)

इति **नारदात्**। न जन्म। 'ऊर्ध्वं पितुश्च मातुश्चेति' **मनु**ना,

"पितर्युपरते पुत्रा विभजेयुर्धनं पितुः। अस्वाम्यं हि भवेदेषां निर्दोषे पितरि स्थिते॥"

इति **देवलेन** च विरोधात्। न च 'भार्या पुत्रश्चे' त्यादिवदस्वातन्त्र्याशयमिदम्। तदानीं स्वामित्वे मानाभावात्। भार्यादिषु 'यत्ते समधिगच्छन्तीति' स्वत्वे सिद्धेऽयुक्तमस्वातन्त्र्यवर्णनम्। किंच स्वोपात्तेऽपि तेषामस्वामित्वे स्वधनसाध्यवैदिककर्मोच्छेदात् श्रुतिविरोधात्। तथा सति पितुरनिच्छयाऽपि विभागापत्तेश्च। जन्मनैव स्वत्वे मानाभावाच्च। अर्जनरूपतया जन्मनः स्मृतावनुक्तेः। तस्माज्जीवति पितरि विभागनिषेधार्थं न **मन्वा**दिवचनम्, अस्वार्थपरत्वापत्तेः। किंतु पित्रोः सतोः स्वामित्वमेव न। निधनपातित्यादौ तु स्वामित्वमिति प्राच्योक्तमपास्तम्। उक्तहेतुगणात्।

इत्युपोद्घातः।

पूर्वं कस्मिन्नित्यादिना प्रकरणार्थं संगृह्य तत्र कस्येत्यंशो महता प्रपञ्चेन प्रतिपादितः। इदानीमितरानंशान्प्रतिपादयितुं मूलमवतारयाति। **इदानीमिति**। मूले आवश्यकोपयोगीमूलानुक्तपूरणानन्तरमित्यर्थः। **तदिति**। त्रितयमित्यर्थः।

## याज्ञवल्कीये ११४ श्लोकः।

पौनरुक्त्यादिदोषगणानुपपत्तिं परिहरन् व्याचष्टे। **यदेति**। चेदर्थोऽयम्। कुर्यादित्यत्र लिङर्थो न विवक्षितः। स च करणेच्छायां लाक्षणिक इत्याह। **चिकीर्षतीति**। आक्षेपादाह। **तदेति**। **इच्छया** स्वेच्छयैव। **विभजेत्** दायभागदानेन पृथक्कुर्यात्। तत्रावध्याकांक्षायामाह। **आत्मन इति**। तदनन्तरं तेषां मिथ ऐक्यं भेदो वेत्यत्र नाग्रहोऽस्येति भावः। सुतानित्युक्तेर्बहुभिन्ने न विभाग इतिशङ्कानिरासाय तदर्थमाह। **पुत्रमिति**। कृतैकशेषयोस्तेन पुनरेकशेष इत्यर्थः। अनुदात्तानामितिवत्। **निरंकुशेति**। अनियतत्वादित्यर्थः। **नियमार्थमिति**। शास्त्रीयत्वादिना। **मन्वा**द्येकवाक्यतयेदमुपलक्षणमित्याह। **मध्यममित्यादि**। साकांक्षत्वादाह। **विभजेदिति**। उपलक्षणत्वे मानं सूचयन्नाह। **श्रेष्ठादीति**। **च**स्त्वर्थे। अस्य व्याख्या त्वनुपदमेवाग्रे स्फुटा ग्रन्थे एव।

ननु उत्तरार्धस्य पूर्वव्यवस्थापकतया योजने सर्वे वेति वासाङ्गत्येऽपि ज्येष्ठं वेति वाशब्दासङ्गतिः। पूर्वतो विकल्पबोधने एव तत्स्वारस्यात्। न च तथैवास्तां, पूर्वेणैच्छिकविषमविभागस्यैव प्रतिपादनादिति वाच्यम्। न्यूनाधिकविभक्तानामित्यनुपदवक्ष्यमाणमूलविरोधापत्तेः। अत आह। **वाशब्द इति**। **मानव**वक्ष्यमाणोद्धाररहितविषमविभागपक्षापेक्ष इत्यर्थः। तथा **च** तस्य तत्त्वे न तदसङ्गतिरिति भावः।

तुर्यपादं व्याचष्टे। **सर्वे वेति**। समांशिन इत्यत्र प्रशंसायामिनिः। अत एव बहुव्रीहिणा न गतार्थत्वमित्याह। **समांशभाज इति**। प्राग्वदाह। **कर्तव्या इति**। पित्रेति भावः। अत्र

‘विभागं चेत्कुर्यादि’त्यादिना यस्मिन्काले विभाग इत्यस्य संग्रहः, ‘पिते’त्यनेन येन विभाग इत्यस्य, उत्तरार्धेन यथा विभाग इत्यस्येति बोध्यम् ।

विशेषमाह । **अयं चेति** । पितृकर्तृकविभागः । **पितृक्रमायाते तु**, द्रव्ये । **समस्वाम्येति** । तस्य च समविभागे एव तात्पर्यम् । अन्यथोक्तरीत्या तदानर्थक्यमेवेति भावः । **इच्छया,** पितुः । यद्यप्ययं समोऽपि स्वार्जितविषय एव तथाप्यग्रे तस्यैव प्रतिपाद्यत्वेन तदंशे विशेषाभावात्तदनुक्तिरिति बोध्यम् । अत एव ‘विभजेदिति’साकांक्षमाद्यमुक्तं, द्वितीयं तु तत्रैव तदन्यपक्षद्वयसाधारणम् । अत एव तथोक्तं सर्वे वेति । तच्च तत्र पक्षद्वये समविभागे एव । चत्वारो विभागस्य कालास्तत्राद्यो मूलकृतोक्त इति प्रतीकपूर्वकमाह । **विभागं चेदिति** । **यदेति** । जीवत्येव तस्मिन्निति भावः । द्वितीयं तदनुक्तं स्वयमाह । **अपरोऽपीति** । कालोऽस्तीति शेषः । तमेवाह । **जीवत्येवेति** । **निवृत्तेति** । स्त्रीसुखानाभिलाषिणीत्यर्थः । **पितुरिति** । विभागे इति शेषः । **अनिच्छायामपीति** । यदा पुत्रेच्छा तदेति शेषः । मूलानुक्तत्वादत्र मानमाह । **यथा नारदेनेति** । दर्शित इत्यत्रान्वयः । **अत इति** । अत्र पितुरित्यस्य धनमित्यत्रान्वयः । अत ऊर्ध्वमित्यस्य मातापितृमरणोत्तरमित्यर्थः ।

“ऊर्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम् । भजेरन्पैतृकं रिक्थमनीशास्ते हि जीवतोः ॥”

इति **मनूक्तेः** (अ० ९ श्लो० १०४) । तदाह **पित्रोरिति** । **प्रत्तासु** विवाहितासु । वाऽपीति पाठः । रमणं स्त्रीसम्भोगः । तदिच्छानिवृत्तौ सत्याम् । स्पृहा द्रव्यविषया बोध्या । अत्र तदुक्तेः फलमाह । **अत्रेति** ‘मातुर्निवृत्ते’ इत्यत्रेत्यर्थः । अनेन साकांक्षत्वं निरस्तम् । मूलोक्त**नारदी**यस्वयमुक्तनारदप्रथमोक्तपक्षान्प्रथमद्वितीयतृतीयान् व्युत्क्रमेण मुन्यन्तरसंवादेनाह । **गौतमेनापीति** । ‘तृतीय’ इत्यनेन ‘दर्शित’ इत्यस्यानुषङ्गसहितेनास्यान्वयः । **ऊर्ध्वमिति** । पित्रोरिति शेषः । पितुरिति प्राग्वत् । **वापीति** पक्षान्तरे । एवं **नारद**वाक्येऽपि बोध्यम् । वेच्छतीत्यत्राप्येवम् । **तृतीय इति** । **गौतमेन** कालो दर्शित इत्यर्थः । प्रकृतक्रमे तु अस्याद्यत्वं बोध्यम् । एवं स्वयं पक्षद्वयमुक्तम् ।

अथ तृतीयं कालमाह । **तथेति** । निरितिपाठे तु दर्शित इत्यन्तेन **गौतम**समाप्तिः । एवं कालद्वयं स्वयमुक्त्वा तृतीयमाह । **जीवति वेच्छति तृतीयस्तथेति** । पितरि जीवत्येवेच्छति च विषयाभिलाषुके च सति तृतीयस्तथा तृतीयोऽपि विभागकाल इत्यर्थः । तमेवाह । **सरजस्कायामिति** । वस्तुत आद्यपाठ एव तथा व्याख्यातो व्याख्यात्रभिमत इति बोध्यम् । **अनिच्छत्यपीति** । विभागमित्यादिः । **दीर्घेति** । अचिकित्स्येत्यर्थः । **चेन** वृद्धत्वसमुच्चयः । यदि पुत्रेच्छा तदेति शेषः । अस्यापि मूलानुक्तत्वादाह । **यथाह शंख इति** । **अकामे** विभागमनिच्छति । **विपरीतचेतसीति** । अधर्मवर्तिनीत्यर्थः । ‘रोगिणी’त्यत्र भूम्नि इनिः । वेतीत्यनेन विकल्प उक्तः । एवं प्रागपि बोध्यम् । एतेन “कालद्वयमेव पितुरिच्छा तन्निधनं च, न तृतीयोऽपीति मातुर्निवृत्ते रजसीति पितामहादिधनविषयम्” इति प्राच्योक्तमपास्तम् । शंखादिविरोधात् । तस्य तन्मात्रविषयत्वे मानाभावात् । तत्त्वेऽपि तत्त्वसंभवादुपक्रमविरोधाच्च । एवं चैवं कालत्रयं पितामहधनेऽपि बोध्यम् । **एतेन** तत्रान्यथाव्याख्यानं तदुक्तमपास्तम् ॥ ११४ ॥

**विभाग** आद्यः । **दर्शितः** मूलकृता । समस्यैव सिद्धान्तयिष्यमाणस्य मूलेष्टत्वमपि सूचयन् व्युत्क्रमेणाह । **सम इति** । **तत्र** तयोर्मध्ये ।

१ क–तथैवोक्तम् ।

## याज्ञवल्कीये ११५ श्लोकः।

यदर्थमाह। **यदेति**। फलितमाह। **सर्वानेवेति**। लिङ्गार्थाविवक्षयाऽऽह। **करोतीति**। **पत्न्यश्च,** ता अपि। अत्र बहुवचनेन पत्नीपदस्वारस्येन च सुतसापत्नमातुरपि विभागः सूचितः। इदमग्रे स्फुटीभविष्यति। समांशका इत्यत्र अलौकिकप्रक्रियावाक्ये समासान्तप्रवृत्त्या तदा तत्र टाबभावान्नेत्वमिति ध्वनयन्नाह। **समांशभाज इति**। 'समांशिका' इति पाठे तु वैकल्पिकत्वात्कबभावे टापि स्वार्थिके कनि कथंचिदिष्टसिद्धिः। **विष्णु**रपि, 'मातरः पुत्रभागानुसारिभागहारिण्य' इति।

यासामिति शेषे षष्ठी तत्रेत्याह। **यासां पत्नीनामिति**। एवमग्रेऽपि वक्ष्यति **योगीश्वर** एव आधिवेदनिकस्थले। तथा च स न्यायः सर्वत्रान्यत्र बोध्यः। अत एव अर्धशब्दो न समांशविभागपरः किन्तु यावता समत्वं तत्पर इति बोध्यम्। अस्य वचनस्य विषमविभागे पत्न्यंशाभावे दंपत्योः पुत्रवद्विभागे च न तात्पर्यं गमकाभावादनियामकत्वाच्च, किंतु समांशे एव। एको वाशब्दो मिथो विकल्पे द्वितीयो वाशब्दो वक्ष्यमाणपित्रादिविकल्पे तत्रेत्यभिप्रेत्याह। **भर्त्रेति**। **स्त्रीधनं**, तत्त्वेन **मनु**मूलकृदादिना प्रतिपादितं वक्ष्यमाणं रिक्थादिभिन्नम्। नन्वेवं तद्दानेऽभावः स्यादत आह। **दत्ते त्विति**। तात्पर्यमयमेव विशेषः।

तदेतदभिप्रेत्याह। **यदा श्रेष्ठेति**। उद्धृतोद्धारादिति बहुव्रीहिः। सुतानामिति भावः। समं स्यादश्रुतत्वादिति न्यायेनाह। समानेवेति। स्वं पत्नी। अत एव अत्र द्वितीये मानमाह। **यथाऽऽहेति**। 'गृहे यत्परीभाण्डं पीठमृन्मयदृषदादि उपकरणं, अलङ्कारश्च आभूषणं धृतं, तत् भार्याया, अंशं[3] इत्यर्थः। 'रथः पितुः परीभाण्डं च गृहे उभयं पितुः अलङ्कारो भार्याया ज्ञातिधनं चेत्येके इदं भार्याया' इति तु **हरदत्तः**।

अत्र यदि कुर्यादित्यनेन पितुरिच्छया विभाग उक्तो न पत्नीच्छया। सोऽपि पुत्रांशपृथक्करणपर्यन्तो न स्वतः। 'जायापत्योर्न विभागो विद्यते' इत्यादिप्रागुक्ता**पस्तम्बा**दिना तत्र सहत्वोक्त्या तस्यासम्भवात्। "अर्द्धो वा एष आत्मनो यः पत्नीति" श्रुतेश्च। अयमेवाशयः 'अनीशास्ते हि जीवतोरिति' **मानव**स्य। पुत्रतस्तस्या अन्तरङ्गत्वात्। किन्तु बहुवचनादनेकत्वे पत्नीनां प्रतिपत्निपुत्रांशतुल्यांशान्संगृह्य स्वांशेन सह स्थाप्याः। एवं च ताभ्यः पृथक्कृत्यांशो देय इति न[4]। अत एव समांशका इत्येवात्रोक्तं, न तु तद्वत् पत्नीश्च विभजेत् सममिति। अत एव धनविभागाभावे **नाप-स्तम्बा**दितात्पर्यं, किन्तूक्ते इति प्राक्प्रतिपादितं प्रतिभूप्रकरणे व्याख्यात्रा। **मदनरत्ने**ऽप्येवम्। एवं च यथा जीवत्पितृकविभागे आद्यपक्षे एवमन्यपक्षद्वये दत्ते त्विति न्यायेन निर्वाहवत् पुत्रेच्छयैव पितृवन्निर्वाहो बोध्यः॥ ११५॥

## याज्ञवल्कीये ११६ श्लोकः।

शक्तस्येत्यस्य व्याख्या **स्वयमेवेति**। शेषमाह। **पित्रिति**। अस्यैव व्याख्या **अनिच्छत इति**। तत्पदस्वारस्यादाह। **असारमपीति**। अपिना सारस्यापि समुच्चयः। तत्र हेतुमाह। **तत्पुत्रेति**। **इति** हेतोरित्यर्थः।

---

१ फ-क-वचनस्यान्यत्र विषमविभागे। २ ख-तदधीने। ३ फ-उद्धारः। ४ क-फ-अंशो देय इति। ५ विशेषमाह।

उत्तरसङ्गतिमाह । **ज्येष्ठं वेति । तत्र** तस्मिन्सति । उद्धारादीति तृतीयासमासः । अन्यथेत्यस्य प्राप्तेत्यादिः । शास्त्रोक्तेत्यनेन वक्ष्यमाणस्यापि संग्रहः । निषेधस्यास्पष्टत्वादाह । **निषेधार्थमिति ।** तत्तात्पर्यकमित्यर्थः । अन्यथा " विभागं चेत्पिता कुर्यादिच्छया विभजेत्सुतान् " इत्यर्थेनैव तृतीयकोटिसिद्धेरेतस्य **मनू**क्तोद्धाररहितविषमविभागपक्षस्य चानर्थक्यं स्पष्टमेव । एवञ्च ' पिता चेत्पुत्रान्विभजेत्तस्य स्वेच्छा स्वयमुपार्जितेऽर्थे ' इति **वैष्णवम् ।** ' प्रदानं स्वेच्छया कुर्याद्भागं चैव ततो धनात् ' इति **बार्हस्पत्यम् ।** " पिता चैव स्वयं पुत्रान्विभजेद्वयसि स्थितः । ज्येष्ठं श्रेष्ठविभागेन यथा वा स्वमतेन तु " ॥ इति **नारदीयं** ( अ० १३ श्लो० ४ ) च व्याख्यातृवर्णितमूलाशयकमेव । एतेन " इदं पृथगैच्छिकविभागपरं नोद्धारादिविभागपरमिति " इच्छया विभजेत् सुतानित्येतत्परमिति **विष्णुनारदा**दिविरोधात्तथा **विज्ञानेश्वर**व्याख्यानं चिन्त्यमिति **मन्दो**क्तमपास्तम् । यत्तु तेन यदपि **मनुः** पुत्रेभ्यो दायं व्यभजदित्यविशेषेण श्रूयते इति समविभागसाधकं विषमविभागनिषेधकं चोक्तं तदपि "नित्यानुवादमविधिमाहुर्न्यायविदः" इत्यनेन निराकृतमित्युक्तं तत् तत्सूत्रादर्शनमूलकमान्ध्यसूचकम् । तस्यान्यनिराकरणपरत्वं तत्र हि स्पष्टं प्रागुक्तं च । एतेन स्वार्जिते पितुरैच्छिकवैषम्यमपि शास्त्रीयत्वेन धर्म्यमित्यपि तदुक्तमपास्तम् ।

" जीवद्विभागे तु पिता नैकं पुत्रं विशेषयेत् । निर्भाजयेन्न चैवैकमकस्मात्कारणं विना " ॥ इति ।

**कातीयं** तु निर्दोषपुत्रपरमिति तदपि न विरुद्धम् । भवदभिमतासाधकं च । न्यूनाधिकशब्दो विभागपर इत्याह । **न्यूनेति** । अत एव—

" समन्यूनाधिका भागाः पित्रा येषां प्रकल्पिताः । तथैव तैः पालनीया विनेयास्ते स्युरन्यथा " ॥

इति **बृहस्पतिः ।**

" पित्रैव तु विभक्ता ये समन्यूनाधिकेन च । तेषां स एव धर्म्यः स्यात्सर्वस्य हि पिता प्रभुः " ॥

इति **नारदश्च** ( अ० श्लो० १३ । १५ ) सङ्गच्छते । धर्म्य इत्यस्य व्याख्या **शास्त्रोक्त इति ।** अत्रासम्बद्धत्वाद्बहुशेषपूरणेन व्याख्यातम् । नन्वेवं तन्निषेधानुक्त्या प्रतिज्ञाभङ्गः, अत एवव्यवच्छेद्यमाह । **अन्यथा त्विति ।** तस्याशास्त्रोक्तत्वे[1] त्वित्यर्थः । ' अयथाशास्त्रेति ' पाठः । अन्यथेति पाठेऽपि स एवार्थः ॥ ११६ ॥

एवं पितरि जीवति विभागस्य कालत्रयमुक्तम् । अस्य पितरि जीवतीत्येतत्तात्पर्येणोक्तवचनेनैव संग्रहः । अधुना तन्मरणानन्तरमपि चतुर्थो विभागकालः तत्र सम्मतिमाह । यथाहेति इति प्रतिपादकं मूलमवतारयति । **इदानीमिति ।** तत्कथनानन्तरमित्यर्थः । एवं च **मुनिना** तेषां द्विधैव संग्रहः कृतः, पितृजीवनोपलक्षितः तन्मरणोपलक्षितश्च । तत्र पितरि जीवतीत्यत्र त्रयः पक्षाः पितृच्छा तदनिच्छा च अन्त्याऽप्युक्तरीत्या द्विधेति बोध्यम् । ' सर्वे वा स्युः समांशिन ' इत्यनेनापि सूचितमिदम् । अतस्तत्र पक्षद्वयं समविभागे एवेति बोध्यम् । तृतीयेऽपि पूर्वतो विशेषमाह । **नियमं चाहेति ।**

---

१ फ–तस्य शास्त्रोक्तत्वे ।

## याज्ञवल्कीये ११७ श्लोकः [ पूर्वार्द्धः ] ।

पिता च पिता चेत्यर्थनिरासायाह । **मातेति** । ऊर्ध्वमित्यस्य साकांक्षत्वादाह । **प्रायणादिति** । मरणादित्यर्थः । **सुता इति** । अत्रापि प्रागवत् सुतश्च सुतौ च सुताश्चेत्येकशेषो बोध्यः । पितृव्यादितो विभागे आद्योपयोगो बोध्यः । कन्यासु विशेषस्य वक्ष्यमाणत्वादत्र पूर्वत्र च न कन्याया ग्रहणमिति बोध्यम् । ननु एवकाराभावेन तावन्मात्रोक्त्या कथं नियमलाभः । अतो नियमस्वरूपमेव निष्कृष्याह । **सममेवेतीति** । 'सर्वं वाक्यमिति' न्यायेनेति भावः । अभेदभ्रमनिरासाय वक्ष्यमाणार्थसिद्धये च व्याचष्टे । **रिक्थमिति** ।

ननु जीवद्विभागे आद्यपक्षे मूलेन विषमविभाग उक्तः, पित्रोरूर्ध्वं विभागे **मन्वादिभिः** स उक्त इति तयोरुभयप्रामण्याद्विकल्पे समविषमविभागयोर्न्याय्ये सममित्यस्य सममपीत्येव व्याख्यानमुचितं, न तु सममेवेतीति । तथा च प्रकारनियमपरतया व्याख्यानमयुक्तमिति शङ्कते । **ननूर्ध्वमित्यादिना नियम्यते इत्यन्तेन** । **ऊर्ध्वमिति** । प्रागुक्तमिदं तस्य तदूर्ध्वत्वप्रतिपादकमिदं लिखितम् । एवमग्रेऽपि । **पित्र्यं** पितुरागतम् । **अशेषतः** सार्वविभक्तिकः प्रथमान्तात्तसिः । **शेषाः** ज्येष्ठभिन्नाः । **उपजीवेयुः** पितृवत्तस्यानुसरणं कुर्युः । इदं ज्येष्ठेन जातमात्रेणेति च **मानवम्** ।

"बिभृयादेच्छतः सर्वान् ज्येष्ठो भ्राता यथा पिता । भ्राता शक्तः कनिष्ठो वा शक्त्यपेक्षा कुलस्थितिः ॥ "सर्वेच्छया कनिष्ठोऽपि शक्तः सन् बिभृयात् परान् ।" इति **नारदात्** (अ० १३ श्लो० ५) इच्छाविषयकम् ।

एवं च **मानवे** ज्येष्ठत्वमुपलक्षणम् । इदं व्याचष्टे । **सर्वस्मात् द्रव्यसमुदायादिति** । विभजनीयादित्यर्थः । उद्धार इति शेषः । कर्मणि घञ् । उद्ध्रियमाण इति तदर्थः । योगरूढोऽयम् । तस्य मध्यमणिन्यायेनाग्रेऽप्यन्वय इति । चादिस्वारस्यादाह । **सर्वेति** । यद्यपि स्यादित्यपकर्षेणान्वयस्तत्र तथापि फलितमाह । **ज्येष्ठायेति** । तत्कर्तृभिरुदासीनैरित्यर्थः । मिथो वा । **इतीति** । तथोक्त्वा इत्यर्थकेन तेन मानवेन ततस्तथा कुर्वतां स दर्शित इत्यर्थः । एवमग्रेऽपि । ततोऽवशिष्टं द्रव्यं सर्वे समं विभज्य गृह्णीयुरिति भावः । प्रकारान्तरेण **मनूक्तमेर** विषमविभागमाह । **तथेत्यादिविभजतामित्यन्तेन** । तथेत्यस्य दर्शित इत्यत्रान्वयः । **एषां** ज्येष्ठादीनाम् । **इयं** वक्ष्यमाणा । अस्य व्याख्या । **ज्येष्ठस्येति** । इदमपि प्रकरणाज्ज्येष्ठादेः कर्तृत्वाच्च तदनन्तरपरमेवेत्याह । **पित्रोरिति** । नन्वेवमपि मूलानुक्तत्वान्नास्ति तत्र विषमविभाग इत्याशङ्कायां दृष्टान्ततयाऽऽह । **जीवदिति** । एतेनास्यात्रानुपयोग इत्यपास्तम् । **स्वयमेव** मूलकृतैव । एवं च मूलकृतः स नैवेष्टः क्वापीति दुर्वचमित्येतत्तात्पर्यकमिदमिति स्मार्तत्वाविशेषाद्विनिगमनाविरहात्तत्र तदभावो दुर्वचः । तदाह । **अत इति** ।

सत्यमित्यादिना तत्सत्ताऽङ्गीकृतेत्यसत्त्वलक्षणमप्रामाण्यं निरस्तं यद्यपि तथाऽप्यननुष्ठानलक्षणमप्रामाण्यमेवेत्याह । **लोकेति** । ननु तस्य लोकविद्विष्टत्वेऽपि लोकतः शास्त्रस्य प्राबल्यात्कथमननुष्ठेयत्वम्, अत आह । **अस्वर्ग्यमिति** । धर्म्यमपि लोकविद्विष्टं नाचरेत्, यतोऽस्वर्ग्यं तदित्यर्थः । अस्वर्ग्यत्वं तदभावे हेतुः । एवं च शास्त्रेणैव तथोक्तत्वान्नानुष्ठानं तस्येति भावः । अत्र स्मार्ते दृष्टा-

१ ज-इह । २ फ-अनुरञ्जनम् । ३ धनसमुदायादिति मिताक्षरापाठः ।

न्तमाह । **यथेति** । मौलमेवेदम् । श्रौतं तमाह । **यथा वेति** । मित्रावरुणदेवताकां वशां वन्ध्याम् अनूबन्ध्यां गामालभेतेत्यर्थः । इयमनूबन्ध्येष्टि**रापस्तम्बेन** सोमे उदवसानीयोत्तरमाम्नाता । सांप्रतं तेनैव तत्स्थाने आमिक्षाया उक्तत्वात्तदननुष्ठानं याज्ञिकानामिति बोध्यम् ।

एवं सामान्येनोक्तविषमविभागाभावः कलावेव न तु पूर्वत्र, दृष्टान्तबलेन तथैव लाभादिति सूचयन्सोद्धारविषमविभागः कलिनिषिद्धोऽपीति प्रतिपादयन् उक्तश्रौतस्मार्त्तदृष्टान्तयुतं विषम-विभागप्रतिषेधकं स्मार्त्त**भाट्ट**वचनमप्याह । **उक्तं चेति** । **नियोगो** विधिः । यथाऽ**न्यः** श्रौतान्यो विधिवाक्यविहितधर्मो महोक्षाद्यालम्भनरूपो नेत्यर्थः । नेत्यस्योभयत्रान्वयः । 'धर्मो नो' इति पाठांतरे नियोगधर्मो'ऽपुत्रां गुर्वनुज्ञात' इत्यादिविहितो देवरादितः सुतोत्पत्तिरूपो बोध्यः । **नो इति** निषधे । **अनुबन्ध्येति** । वशालम्भनरूप इत्यर्थः । अपि वेति समुच्चये । **तथोद्धारेति** । सोद्धारेत्यर्थः । **अपि**ना द्वितीयसंग्रहः । **सम्प्रति** कलौ । अत **एव माधवीये ब्रह्मपुराणम्**—

"ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा । कलौ पंच न कुर्वीत भ्रातृजायां कमंडलुम्॥" इति।

**आपस्तं**बोऽपीत्यस्य निराकृतवानित्यत्रान्वयः । यदपि जीवन्नित्यतः प्राक् एकधनेन ज्येष्ठं पुत्रं तोषयित्वेत्युक्तं तथापि न तद्विषमांशपरं किन्तु तत्परितोषपरम् । अत एवैकेन प्रधानेन केन-चिद्धनेन गवादिना ज्येष्ठं पुत्रं तोषयित्वा तृप्तं कृत्वेति व्याख्यातम् । तदेतदभिप्रेत्याह।**स्वमतमिति**। "क्षीबमुन्मत्तं" च परिहाप्य पुत्राभावे यः प्रत्यासन्नः सपिण्डः तदभावे आचार्य आचार्याभावेऽन्ते-वासी हृत्वा तदर्थं धर्मकृत्येषु चोपयोजयेत्, दुहिता वा सर्वाभावे राजा दायं हरेतेत्युक्त्वा चेति शेषः। **कृत्स्नेति** । अत्र संवादि ज्येष्ठ एवेति **मनुः** । प्रागुक्त एव । **गौतमो**ऽपि " सर्वं वा पूर्वस्य स चेतरान् बिभृयादिति " । **देशेत्यादि** । कस्मिंश्चिद्देशविशेषे । " सुवर्णं कृष्णा गावः । **कृष्णं भौमम्** । कृष्णं भूमौ जातं भौमं धान्यमाषादि । कृष्णायसमित्यन्ये । इदं सर्वं ज्येष्ठस्य पुत्रस्यांशः । रथः यत् गृहे परीभाण्डमुपकरणं पीठादिकं तदपि पितुरंशः । धृतोऽलंकारो भार्याया अंशः । ज्ञातिभ्यः पित्रादिभ्यश्च यद्धनं लब्धं तच्च भार्याया अंश इत्येके मन्यन्ते" इति **हरदत्तः** । **विप्रतिषिद्धं** विरुद्धम् । **स्वयमेव आपस्तम्ब** एव । **मनुरिति** । **तैत्तिरीयश्रुति**वाक्यमिदम् । तत्र पुत्रेभ्य इति बहुवचननिर्देशाद्दायमित्येकवचननिर्देशाच्चाविशेषेण श्रवणमित्यर्थः। किञ्च तदग्रे, अथापि तस्माज्ज्येष्ठं पुत्रं धनेन निरवसाययतीत्येकवच्छ्रूयते, अथापि नित्यानुवादमविधिमाहुर्न्यायविद इत्युक्तम् ।

सिद्धान्तमुपसंहरति । **तस्मादिति** । **श्रुतीति** । **मुनि**रिति श्रुतीत्यर्थः । **सममेवेति** । अत एव जीवद्विभागे स एवोत्तरपक्षत्वेनोक्तः स एवाग्रेऽवलम्बितश्च । ज्येष्ठं वेति तु तद्वद्युगान्तर-विषयकम् ।

" जीवद्विभागे तु पिता नैकं पुत्रं विशेषयेत् । निर्भाजयेन्न चैवैकमकस्मात् कारणं विना ॥ "

इति **कातीय**मप्यत्रानुकूलम् । अत एव न्यूनाधिकेति प्रागुक्तस्य **नारदादेश्च** तथा कर्तव्यत्वे न तात्पर्यं किन्तु यदि विशेषादर्शी शास्त्रोक्तिमात्रेण दैवात्पिता शास्त्रोक्तप्रकारेण विषमविभागं करोति तदा न निवर्त्तते इत्यत्र तात्पर्यम् । परमतात्पर्यं तु प्रागुक्तमेव व्याख्यात्रेति न तद्विरोध इति बोध्यम् ।

यद्यप्यत्र पित्रोरूर्ध्वमित्युक्तं, मानवेऽपि 'ऊर्ध्वं पितुश्च मातुश्चे'त्युक्तम्, इत्युभयमरणानन्तरकाल एव लभ्यते, प्रत्येकमरणानन्तरमित्यर्थे तु पितरि जीवति मातृमरणोत्तरमपि विभागापत्तिः, तथा च पितरि मृते मातरि सत्यां इष्टविभागानापत्तिः, तथापि प्रागुक्तयथाश्रुत**गौतमात्** 'पितुरूर्ध्वमिति' वक्ष्यमाणमूलाच्च पितृमरणमेव मुख्यं निमित्तम् । अन्वाचयशिष्टं मातृमरणम् । एवं च पितृमरणं मातृसत्वासत्वात् द्विविधमपि प्रमीतपितृकत्वेन गृह्यते इति तत्परमिदमिति न वक्ष्यमाणविरोधः । यथा चाद्येन तत्तात्पर्येण त्रयाणां संग्रहः तथाऽनेन द्वयोः अत एव जीवत्पृतृकविभागः प्रमीतापितृकविभागश्चेति द्वैधैवाभियुक्तव्यवहारो न तु प्रमीतमातृक इति तृतीयोऽपि । न 'चानीशास्ते हि जीवतोरिति' **मानवे** उक्तत्वादुभयमरणयोरेव निमित्तत्वलाभ इति तदेकवाक्यतया यथाश्रुतमूलसौष्ठवे कथं तत्परत्वमिति वाच्यम् । सर्वथाऽन्यथादुष्परिहरवक्ष्यमाणविरोधपरिहाराय जायापत्योरित्याद्या**पस्तम्बस्य** धनविभागसत्त्वेऽपि पुत्रवत्पृथक्करणाभावे अर्धाङ्गत्वेन सर्वत्र सहत्वेन तात्पर्यस्य प्रागुक्तत्वेन तद्रीत्या पुत्रतः पत्न्या अन्तरङ्गत्वेन तस्या अपि तद्वत्साधारणस्वत्वेन मातृसत्त्वे विभागाभावे यथेष्टविनियोगे स्वामित्वाभावस्तेषामिति **मनु**तात्पर्यात् । अयमेवाशयः 'पित्रोरूर्ध्वमिति' वदतो मूलस्यापि । 'अस्वतन्त्राः पितृमन्तो मातर्यप्येवमेवेति' **शंख**स्यापि ।

"पितर्युपरते पुत्रा विभजेरन् पितुर्धनम् । अस्वाम्यं हि भवेदेषां निर्दोषे पितरि स्थिते ॥"

इति **देवलात्** । यद्वा पितरि जीवति आस्तां तत् तदर्जितविषयम् । एवं मातरि सत्यां तद्धनविषयम् । किञ्च पित्रोरित्यस्याग्रे फलमनुपदं वक्ष्यते । एतेन 'दंपत्योर्धनविभागो नास्ति प्रागापस्तम्बेनानुक्तत्वादिति' **हरदत्तो**क्तमपास्तम् । एवं च पितरि मृते मातरि सत्यामपि विभागोऽस्त्येव । परं तु न स मात्रिच्छयेति न तस्यास्तत्र कदाऽपि कर्त्रीत्वमिति बोध्यम् ।

तदयमर्थः । जीवद्विभागे त्रयः कालाः । पितुरिच्छा द्विविधा यदेति द्वौ । आद्ये पिता कर्ता, तदन्ययोः पुत्रः सः । अंशसाम्यं सर्वत्र । आद्ये मातुः पितुश्च समांशौ, एवं तदन्ययोरपि । तत्र मातुः स्त्रीधनादाने । दत्ते त्वर्द्धम् । मृतविभागे द्वौ कालौ मातृसत्त्वासत्त्वाभ्याम् । तत्र कर्ता पुत्रः । अंशसाम्यमेव । आद्ये मातुरपि समांशः । सर्वथा मातुरिच्छा न नियामिका, नापि तस्याः कर्तृत्वम् । इदमपि अस्थावरविषयं, शुद्धस्वार्जितविषयं, पैतामहमिश्रस्वार्जितविषयं च । शुद्धपैतामहे तु विशेषो वक्ष्यमाण इति न तत्र मातुरंश इति ।

तथा च प्रमीतपितृकविभागः क्रमागतस्य पित्रर्जितरहितस्य, तन्मिश्रस्य, शुद्धपित्रर्जितस्य वा धनस्येति त्रेधा । पित्रर्जितस्यापि पाणिग्रहणतः पूर्वमूर्ध्वं वेति द्विधा । तत्राद्ये तद्विभागव्यवस्थावाक्येषु— "पैतृके न विभागार्हाः सुताः पितुरनिच्छतः ।
क्रमागते गृहे क्षेत्रे पितापुत्राः समांशिनः ॥ न तत्पुत्रैर्भजेत्सार्द्धमकामः स्वयमर्जितम् ।"

—इति **गौतमीये** ।

"द्रव्ये पितामहोपात्ते स्थावरे जंगमेऽपि वा । सममीशत्वमाख्यातं पितुः पुत्रस्य चैव हि ।

“ पैतामहं हृतं पित्रा स्वशक्त्या यदुपार्जितम् । विद्याशौर्यांद्यवाप्तं च तत्र स्वाम्यं पितुः स्मृतम् ॥
“ प्रदानं स्वेच्छया कुर्याद्भोगं चैव ततो धनात् । तदभावे तु तनयाः समांशाः परिकीर्तिताः ॥ ”

इति बार्हस्पत्येषु च पुत्राणामेव पित्रा सह भोगितया निर्देशात् तदन्यविभागपरयोरेव “ यदि कुर्यात् ” “ पितुरूर्ध्वम् ” इत्यनयोर्वाक्ययोर्मातुर्विभागश्रवणाच्च माता न विभागहरणार्हा । युक्तं चैतत् । विभागशब्दो हि भावव्युत्पत्त्या रूढ्या चान्यस्वाम्यसहभावेन विभजनीयार्थसामान्यस्थितस्य स्वस्वाम्यस्य तदसहभावेन तदेकदेशे व्यवस्थापनमभिधत्ते । श्वशुरादिधने च स्नुषादीनां न जन्मतः स्वाम्यम् । मिथः संबन्धस्य प्रागभावात् । भाविन एव तस्य जन्मान्तरसाधारण्येनातिप्रसञ्जकत्वात् । नापि पाणिग्रहणतः । उत्तरपरिग्रहे एव ततः साहित्यसिद्धेः[1] । नापि भर्तुर्मरणतः । तस्य तदजनकत्वात् । तत्वे वा पुत्रस्वाम्येन प्रतिबन्धात् । अन्यथाऽपुत्रस्वपितृव्यपत्नीनां पौत्राणां च मिथो विभागप्रसक्तेरनेकपितृकाणामिति मूलं विरुध्येत । अत एव पाणिग्रहणतः प्राक् पित्रर्जिते द्रव्येऽपि न मातुर्विभागः । “ सममंशं हरेदिति ” सिद्धस्वाम्यस्यैव हरणप्रतीतेः । असिद्धस्वाम्ये हि दद्यादाप्नुयादित्यादिकमेव युक्तमिति बोध्यम् । स्थावरे उभयविधेऽपि सत्सु पुत्रेषु तत्स्वाम्यस्य वक्ष्यमाणदिशाऽपायसंभवाच्चेति केचित् ।

ऊर्ध्वं तु पित्रर्जितं स्थावरमस्थावरं चेति द्विधा । तत्र केचित् । तत्र ‘यद्यपि माताऽप्यंशं समं हरेदिति’ उभयसाधारणं तथापि ‘न दत्तं स्त्रीधनमि’ त्यस्यात्राप्यन्वयादस्थावरे एव पर्यवस्यति। तथा हि । कारकविभक्तिस्तावन्नैरपेक्ष्यं गमयत्युत्सर्गत इति सर्वसंमतम् । एवं भर्त्रा श्वशुरेण वा निरपेक्षेण यस्यै न दत्तोंऽशः सा अंशं हरेदित्युक्तौ यस्यै निरपेक्षेणामुनाऽमुना वा यद्दत्तं तस्याः स एव तादृशो भागो नान्य इत्युक्तं भवति । सोऽयं यदि पुत्रांशेन समस्तदा पूर्वं दत्तोऽप्यसाविदानीं वैभागिको भवति । यद्यधिकस्ततस्तदा तत्सम एव वैभागिकोऽधिकस्तु दत्त एव । अत एवाऽननुमतदत्ते तस्मिन् अकिञ्चित्करतया स्थितस्य पुत्रस्वामित्वस्य पुत्रांशसमानादेवांशादिदानीं निवृत्तिर्न त्वधिकारात् । यदि न्यूनस्तदा मात्रन्तरेण अवैषम्याय तादृशेन विभाज्यद्रव्येण समः कार्यः । अत्र च ‘दत्ते त्वर्धं प्रकल्पयेदि’त्यस्य दत्तं यथा समम् अंशान्तरेण भवति तथा अंशतामापन्नं कुर्यादित्यर्थः।एवं च ‘माता सममंशं हरेदि’त्यस्य पुत्रस्वाम्यासंसृष्टस्वाम्यकं कुर्यादित्यर्थः। तत्र स्थावरस्यायोग्यत्वादकर्मत्वम् । “ भर्त्रा प्रीतेन ” “ मणिमुक्ता ” “ पितुः प्रसादात् ” “ स्थावरं द्विपदम् ” इति व्याख्यातानुक्तवाक्येभ्यः ॥

“ सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्तितम् । विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि ॥
“ भर्तृदायं मृते पत्यौ विन्यसेत्स्त्री यथेष्टतः । विद्यमाने तु संरक्षेत् क्षपयेत्तु कुलेऽन्यथा ॥
“ अपुत्रा शयनं भर्तुः पालयन्ती गुरौ स्थिता । भुञ्जीतामरणं दान्तां दायादा ऊर्ध्वमाप्नुयुः”॥

इति कात्यायनाच्च जीवत्सु पुत्रेषु क्रमागते इव पित्रर्जितेऽपि स्थावरे तत्स्वाम्यस्य सर्वथा निवृत्तेरवगमात् कालान्तरे स्वाम्यान्तरोत्पत्तौ गौरवात् । एवं सति च दानविक्रययोरनुत्पत्तिमीदृग्विधे विषये न दानं न च विक्रय इत्यादीन्यनुवदन्तीत्यपि लाघवम् । अन्यथा निषेधं कुर्वन्त्यतिक्रमे दुरितकल्पकानि स्युः ।

---

१ क साहित्यासिद्धेः । २ क–पुत्रता ( ? ) शेम ।

**गौतमो**ऽपि—' मातरः पुत्रभागानुसारभागहारिण्यः। अनूढाश्च दुहितर ' इत्यत्र सुसदृशपर्यायं समशब्दमपहाय मन्दसदृशपर्यायमनुसारशब्दं प्रयुञ्जन् ऊढां दुहितरं च समुच्चिन्वन्नमुमर्थं द्योतयति स्म। मन्दसादृश्यस्यानूढासंस्कारस्य चास्थावरेणैव निर्वाहात्। मन्दसादृश्यमपि भागिभेदाद्भिद्यते इत्याह—

**अङ्गिरा व्यासश्च—**

" तदभावे तु जननी तनयांशसमांशिनी। समांशा मातरस्त्वेषां तुरीयांशा च कन्यका॥

" असुतास्तु पितुः पत्न्यः समानांशाः प्रकीर्तिताः। पितामह्यश्च ताः सर्वा मातृतुल्याःप्रकीर्तिताः "॥ इति।

जननी सवित्री। मातरोऽनपत्याः। कन्यकाऽनूढा भ्रातृभागचतुर्थांशं संस्काराय लभते इत्यर्थः। पितुरूर्ध्वमित्यत्र मालाऽनपत्येति **हलायुधः। आपस्तम्बश्च** ' स्त्रियो भर्तुर्मातुः पुत्रेभ्यश्च भागं नेच्छन्ति ' इत्यादिकं तु साम्प्रतव्यवहारविरुद्धम्।

इत्थं च पत्न्यः कार्या इत्यादावपि स्थावरे भर्तृधने पत्न्याः पुत्रैः सह विभागासंभवादंशशब्दः स्थावरान्यपर एवेति न स्थावरांशः पत्न्याः। भर्तृदायो भर्तृस्वत्वेन स्त्रीस्वत्वाश्रयो द्रव्यम्। तच्च द्विधा। मृते भर्तर्यधिकार्यन्तराभावात्स्त्रीस्वत्वाश्रयो, जीवत्येव भर्तरि तत्संबन्धाश्रयेण वा स्त्रीस्वत्वाश्रयः। तत्र प्रथमे स्थावराद्वृत्त्यादियुञ्जीत गुरुसमीपे स्थिता भर्तुः शय्यां पालयन्ती समयं क्षिपेत्। स्थावरमधिकृत्याह भुञ्जीतामरणादथ दायादा आप्नुयुः। द्वितीये त्वाह विद्यमाने तु संरक्षेत् व्यये भर्तुरनुज्ञां पालयन्ती तद्धनरक्षां कुर्यादिति **कातीयं** व्याकुर्वन्प्रकाशकारोऽप्यमुमेवार्थमनुमन्यतेस्मेत्याहुः। वस्तुतस्तु मूलाशुद्ध्या सर्वमशुद्धमित्युभयत्र तुल्यतैवेत्युक्तम्। स्फुटीभविष्यति चाग्रे इति दिक्॥

## याज्ञवल्कीये ११७ श्लोकः। ( तृतीयः पादः )

सङ्गतिमाह। **मातेति।** अनुवृत्त्या व्याचष्टे। **मातुरिति।** प्रकृतत्वादाह। **मातृकृतेति।** एतेन।

" पुत्रः कनिष्ठो ज्येष्ठायां कनिष्ठायां च पूर्वजः। कथं तत्र विभागः स्यादिति चेत्संशयो भवेत्॥

" एकं वृषभमुद्धारं संहरेत स पूर्वजः॥ ततोऽपरे ज्येष्ठवृषास्तदूनानां स्वमातृतः॥

" ज्येष्ठस्तु जातो ज्येष्ठायां हरेद्वृषभषोडशाः। ततः स्वमातृतः शेषा भजेरन्निति धारणा॥

" सदृशस्त्रीषु जातानां पुत्राणामविशेषतः। न मातृतो ज्यैष्ठ्यमस्ति जन्मतो ज्यैष्ठ्यमुच्यते॥

" जन्मज्येष्ठेन चाह्वानं सुब्रह्मण्यास्वपि स्मृतम्। यमयोश्चैव गर्भेषु जन्मतो ज्येष्ठता स्मृता॥ "

इति **मानवम्**, ( अ० ९ श्लो० १२२।१२३।१२४।१२५।१२६ )।

" समानजातिसंख्या ये जातास्त्वेकेन सूनवः। विभिन्नमातृकास्तेषां मातृतो भागकल्पना॥ "

—इति **व्यासीयम्।**

"यद्येकजाता बहवः समाना जातिसंख्यया। सापत्नास्तैर्विभक्तव्यं मातृभागेन धर्मतः" ॥ इति **बार्हस्पत्यम्** " सवर्णा भिन्नसंख्या ये स्वभागस्तेषु शस्यते "।

इत्यौभयं च युगान्तरविषयमिति सूचितम्। एतेनोद्धारं विना समांशबाधकत्वेन विषमांशपर-। स्मृत्यर्थाज्ञानात्।

नन्वस्य तदपवादत्वे शेषमृणादीति व्यर्थम् । न च मात्रंशे तत्साफल्याय तदुपादानमिति वाच्यम् । ताभ्य ऋते इत्येकवाक्यतया तस्य दुहित्रभावविषयतया साफल्यात् । अत आह । **अतश्चेति** । तद्विशेषेणोक्तेश्चेत्यर्थः । ऋणापाकरणावशिष्टमातृधनेऽपवादवशात् दुहितृसत्त्वे तत्संबन्धित्वलाभेन पुत्रकर्तृकविभागानर्हत्वेऽपि समत्वे न्यूनत्वे चावशेषाभावेनापवादाप्रवृत्त्या दुहितॄणां विद्यमानत्वेऽप्यनाधिकारात्तत्र सामान्यवचनस्यैव प्रवृत्तिरिति भावः । ननु यथा दुहितृषु सतीषु ऋणावशिष्टं तत् पुत्रविभागानर्हं, तथा सति समं न्यूनं च सुतरां पुत्रविभागानर्हं, तस्यावश्यदेयत्वात्, अत आह । **एतादिति** । एवं च तैरेव गृहीत्वा ऋणं देयमिति भावः । एवं वाचनिकं वैषम्यं स्मृत्यन्तरलब्धयुक्त्या समर्थयते । **युक्तमिति** । शुक्रे इत्यस्योभयत्रान्वयः । एतेन वैपरीत्यादिशङ्का निरस्ता । एवं चास्य तन्मरणोत्तरं पुत्रादिकर्तृकविषयत्वे पितरि जीवति पुत्रकर्तृकविभागवन्मातरि जीवति तद्धने जन्मतः स्वत्वेऽपि दुहितृकर्तृको न विभागो नापि मातृकर्तृको वचनाभावात् किंतु तया स्वेच्छया यद्दत्तं तत्तदीयमेव । अत एव वक्ष्यति 'पितृभ्यां यस्येति' । भार्याधनमविभाज्यमिति प्रागुक्तं तत्तु तत्पदस्वारस्यात् पतिकर्तृकविभागविषयकमिति न विरोधः । तमभिप्रेत्य विशेषमाह । **तत्र चेति** । दुहितृविषयेऽपीत्यर्थः । ननु दुहितॄणामित्यस्योक्ततुल्यार्थत्वेन सामान्येन तेनैव सिद्धेः अप्रत्तानामित्यादि व्यर्थमिति कथमस्य विशेषबोधकत्वमत आह। **अस्यार्थः प्रत्तेति** । प्रत्ता विवाहिता । अप्रत्ताऽनूढा । प्रतिष्ठिता सधना । अप्रतिष्ठिता निर्धना । तथा च तत्रापि विशेषबोधकत्वान्न वैयर्थ्यमिति भावः । एवार्थचशब्दस्योभयत्रान्वय इत्याह **एवेति** ।

शङ्कते । **दुहित्रिति** । **क इति** । सामान्यवचनं त्वन्यविषयकमिति नात्र प्रवृत्तिरिति मन्यते । पदार्थमुक्त्वा वाक्यार्थमाह । **दुहितॄणामिति** । सूचितमेवाह । **एतच्चेति** । **सिद्धमिति** । अर्थात्सिद्धमित्यर्थः । तद्द्वयमपि तस्यैव विषय इति भावः ॥ ११७ ॥

## याज्ञवल्कीये ११८।११९ श्लोकौ ।

**अविभाज्यमिति** । विभागदार्ढ्यायैव । अत एव प्रकरणसङ्गतिरिति भावः । अत्र वाऽपिशब्दौ विकल्पे । **चैवेति** चेति च पाठान्तरम् । पित्रित्यत्रैकशेषः उक्तयुक्तेरित्याह । **मातेति** । अत्र विरोधो नाश एवेत्याह । **द्रव्याविनाशेनेति** । **यदिति** । किंचिदिति शेषः । मूले तथैव पाठात् । अन्यदिति मूले पाठे अत्रापि अन्यदिति शेषः । पितृद्रव्यभिन्नमिति तदर्थः । तद्भेदानाह । **मैत्रमित्यादिना** । लिङ्ग्यर्थाविवक्षयाऽऽह । **भवतीति** । एवमग्रेऽपि ।

'क्रमादिति' द्वितीयपद्यप्रतीकम् । अथ व्याचष्टे । **पित्रिति** । नन्वेवं पूर्वैरेवोद्धारः कुतो न कृतो ऽत आह । **असामर्थ्येति** । अभ्यनुज्ञाया अभावे देयमेवेत्याह । **इतरेति** । तात्पर्यार्थमाह । **उद्धर्तेति** । एवमग्रेऽपि । तत्र विशेषमाह । **क्षेत्रे चेति** । चस्त्वर्थे । तत्र च क्षेत्रे इति पाठान्तरं युक्तम् । तेषां मध्ये तद्विषये इत्यर्थः । **सर्वेषाम्** उद्धर्त्रादीनाम् । **यथाभागमिति** । **सर्वस्या** भूमेस्तुर्यांशमुद्धर्त्रे दत्त्वा शेषं तेन सह सर्वे यथांशं गृह्णीयुरित्यर्थः । क्रमादित्यस्योद्धरणान्वये फलाभावेन मूलैकवाक्यतया च क्रमादिति वचनस्थप्रतीकं गृहीत्वा शेषं पूरयति । **अभ्यागतमिति** ।

१ अग्रे [ १२३ ] श्लोकः ।

तुर्यपादं व्याचष्टे । **तथेति** । एवेत्यस्यात्रान्वयेनाह । **विद्ययैवेति** । विनिगमनाविरहात्स्मृत्यन्तरैकवाक्यतया चास्यार्थत्रयमाह । **वेदाध्ययनेनेति** । अस्य मुख्यत्वादिति भावः । चार्थमाह । **तदपीति** । एवं च तथा पाठ एव तत्संमतः ।

इदं चान्यत्, पितृस्वयंदायादिपदस्वारस्यात् भ्रातॄणां मध्ये एकेनार्जितविषयं सर्वविभागेषु एवं **नारदीय**शौर्यविषयेऽपि बोध्यम् । एवं प्रकारेण पित्रर्जिते तु अग्रे वक्ष्यते ।

तत् स्वतन्त्रम् अव्यवहितविशेषणं सर्वविशेषणं वेत्येवम् उक्तं व्याख्यानं साधारणमपि प्रकरणसंगत्यर्थं स्वाभिमतपरमिति दर्शयति । **अत्र चेत्यादिना । अत्र च** मूलवाक्ये च । अन्यदर्थमाह । **किंचिदिति** । एवंपाठ एव वा । तत्र मन्वाद्येकवाक्यत्वार्थं च तृतीयम् । **सर्वशेष इति** । विभागानर्हत्वेन विशिष्य वचनोपात्तानां मैत्रादीनां सर्वेषां शेषोऽयमंश इत्यर्थः । **अतश्च,** तस्य सर्वशेषत्वे च फलितमाह । **तथा चेति** । विरोधेनेत्यस्य व्याख्या **प्रत्युपकारेणेति** । यद्वा प्रत्युपकारे विरोधो नाशो हेतुः अत एव तस्य प्रत्युपकारत्वम् । त्राह्मे वाचनिकपितृद्रव्यविरोधाभावादाह । **आसुरादिति । पित्रा चेति** । अत एव सर्वविभागेष्वित्युक्तम् । **विभजनीयमिति** । अत एव विभागप्रकरणसङ्गतिः । स्पष्टार्थं वाच्यार्थमाह । **न तथेति** । पितृद्रव्याविरोधेनोपार्जितं मैत्रादि न विभजनीयमित्यर्थः ।

न केवलमिदं स्ववचनोपात्तसर्वशेषो ऽपि तु अन्यदपि स्मृत्यन्तरेषु यद्यदविभाज्यमुक्तं तस्याप्ययं सर्वस्य शेषो मैत्रादीनामुपलक्षणत्वात् । एवं च तादृशमैत्रादेर्यथा विभाज्यत्वं तथाऽन्यस्यापीत्याह । **पितृद्रव्येति** । केचित् तन्न । तथा सति मैत्राद्यन्येषां स्मृत्यन्तरोक्तानामेव तत्वलाभेऽपि प्रतिग्रहार्जितस्यातत्त्वेन तत्र तत्त्वस्य दुर्वचत्वात् । तस्मादस्य तदन्यसर्वोपलक्षणत्वं वाच्यम् । यद्वा मैत्रादेस्तत्त्वे तुल्ययुक्त्यैतत्सिद्धिरित्याह । **पितृद्रव्येति** । क्वचिन्नरहितः पाठः । अयमेव युक्तो व्याख्यातृशैलीस्वरससिद्धश्च । पुनर्वाच्यार्थकथने फलाभावश्च । तदा तथेत्युत्तरशेष एव न स्वतन्त्रम् । किञ्चेति तदर्थः । आशयस्तूक्त एवेति युक्तोऽयम् ।

केचित्तु न तथेत्येव पाठः । तथाऽप्युत्तरशेषत्वमेव । न स्वातन्त्र्यमित्यर्थः । पितृद्रव्याविरोधेनेत्यस्य सर्वशेषत्वादेव वचनोपात्तमैत्रादिमात्रशेषत्वादेव यथा तद्विरोधेनोपार्जितानां मैत्रादीनां विभाज्यत्वं तथा मैत्राद्यन्यत्वात्पितृद्रव्यविरोधेन प्रतिग्रहोपार्जितस्यापि न विभाज्यत्वमित्यर्थः । तस्य तदशेषत्वेन स्वातन्त्र्ये तु तत्रापि विरोधेनोपार्जिते विभाज्यत्वापत्तिरिति भाव इत्याहुः । तन्न । अनुपदं वक्ष्यमाणतथेत्यादिग्रन्थविरोधापत्तेः । ग्रन्थशैल्यस्वरसाच्च ।

ननु तथैवास्त्विति तत्रेष्टापत्तिरिति माऽस्तु तस्य तच्छेषत्वामीति स्वातन्त्र्यमेवास्तु ब्राह्मणवसिष्ठन्यायेन तस्य मैत्रादिभिन्नपरत्वसम्भवान्नात उक्तं द्रढयन् आह । **अस्य चेति** । तस्य तदशेषत्वे किञ्चित्पदादिस्वारस्याद्यद्यत्तदविरोधेनार्जितं तत्सर्वमविभाज्यमित्यर्थस्य वचनव्यक्त्या लाभेन साधारणेनानेनैव तादृशप्रतिग्रहलब्धवत् तादृशमैत्रादेरविभाज्यत्वे सिद्धे पुनस्तदभिधानानर्थक्यमित्यर्थः । ब्राह्मणवसिष्ठन्यायस्य तु न अयं विषयः । सति गमकेऽन्यथानुपपत्तौ च तत्प्रवृत्तेः । नैवं प्रकृते भिन्नविषयतया । अन्यथा तत्साफल्यं शङ्कते । **अथेति** । अपिः पूर्वसमुच्चये ।

१ क—नेत्येवमुपद्यायत्वपकारविरोधो नाशो हेतुरुक्तम् । २ क—तथाकामेति ।

अविभाज्यत्वादिति फलरूपहेतौ पञ्चमी। तत्प्रतिपादनार्थतयेत्यर्थः। अविभाज्यत्वायेति पाठस्तु सुगम एव। **समाचारेति**। शिष्टाचाररूपप्रमाणविरोध इत्यर्थः।

ननु श्रुत्यादीनां पूर्वपूर्वप्राबल्यस्योक्तत्वेन वचनादाचारस्य दुर्बलत्वेनेदमयुक्तम्, आचारेण स्मृतिकल्पनेऽपि क्लृप्तस्मृतेर्झटित्युपस्थितेः प्राबल्यमेवेति चेन्न। आशयानवबोधात्। तथाहि। बाधोऽगतिका गतिः। अबाधेनैवेति न्यायात्। सोऽपि न हि दुर्बलं दुर्बलमित्येव बाधते। किंतु विरोधे निरवकाशत्वे च। विरोधश्चैकत्र मिथो भिन्नोक्त्या नैवमत्र। 'अबाधेनैवोपपत्तौ बाधो न न्याय्य' इति न्यायेन मैत्रादिवचनस्यास्मदुक्तरीत्योपपत्तेः। अत एव न निरवकाशत्वमपि। एवं चानर्थक्यप्रतिहतानामिति न्यायेन विपरीतो बाध इति मदुक्तरीत्या[1] तस्य तथार्थकत्वे शिष्टाचारविरोधः सम्यगेवेति दिक्।

न केवलमाचारविरोधोऽपि तु मैत्राद्यन्तर्गतविद्यालब्धविषये स्मृतिविरोधोऽपीत्याह। **विद्यालब्धे इति**। तदंशे इत्यर्थः। तदेवाह। **कुटुम्बमिति**। विद्याध्ययनं कुर्वतो भ्रातुर्योऽन्यो भ्राता तस्य कुटुम्बं पोषयति सोऽश्रुतोऽपि सन् वेदशास्त्राध्ययनरहितो मूर्खोऽपि सन् तस्माद्विद्याधनात्तदर्जितविद्यया लब्धाद्धनाद्भागमंशं लभेतेत्यर्थः। असुतोऽपीऽति पाठान्तरम्। अत्र कुटुम्बभरणस्य धनग्रहणे हेतुत्वोक्त्या औपाधिकी विद्याधनांशप्राप्तिर्न भ्रातृत्वेन स्वाभाविकीत्युक्तम्। यदि कथमप्यर्जितस्य विद्याधनस्य तत्त्वेनाविभाज्यत्वं मूलाभिमतं स्यात्तदा तद्धेतुकविभागकथनं नारदीयं विरुध्येत। तस्मात्तस्य स्वतो न तादृशस्य विभाज्यत्वाविभाज्यत्वे किं तु अविरोधेऽविभाज्यत्वं विरोधे विभाज्यत्वमिति विरोधस्वरूपमेव **नारदेन** हेतुत्वेनोक्तमिति सिद्धान्ते एकवाक्यता सिद्धा। मूले **पित्रि**त्युपलक्षणम्। किन्तु यदि स्वाभाविकी विद्याधनांशप्राप्ति**र्नारदा**भिमता भवेत्तर्हि तस्य हेतुत्वोक्तिर्निरर्थिका स्यात्। एवं च विद्याधनस्य यथाकथञ्चिदर्जितस्य न स्वतो विभागार्हता। अन्यथा पितृद्रव्यविरोधेनाप्यर्जितस्याविभाज्यत्वे अत्राप्यविभाज्यत्वमेवोचितमिति विभागकथनस्यैवासङ्गतिरिति भावः।

अत्राश्रुतोऽपीत्यनेन सूचितम्, अश्रुते पित्रादिद्रव्यविरोध एव भागहेतुः। सश्रुते तु तद्वत्त्वं विद्यावत्त्वमपि भागहेतुः। अत एव—

**कात्यायनः**—

"नाविद्यानां तु वैद्येन देयं विद्याधनात्क्वचित्। समविद्याधिकानां तु देयं वैद्येन तद्धनम्" इति॥

वैद्यो विद्यावान्। अयं च सिद्धान्तेऽविभाज्यत्वेन प्राप्तस्यापवादः। इदमनुपदमेव स्फुटीभविष्यति। एतेन **नारदीयं कातीयापवाद** इति **मंदो**क्तमपास्तम्। कातीयेन अविभाज्यस्यैव तस्य लक्षणकरणात्। प्रकरणात्। तथैव च व्याख्यात्रोक्तम्। अन्यथा तद्विशेषणासङ्गतिरेव स्यात्। एवं च विद्याधनमन्यदपीति नारदादिविरोधो व्याख्यातुरिति बोध्यम्।

ननु विभक्तभ्रातृस्थलेऽपूर्वार्थबोधकं तत्। किञ्च मैत्रादिवचनप्राप्तस्य सर्वथाऽविभाज्यत्वस्यापवादकं सिद्धान्ते तद्वत्तद्विशेषे तदिति न विरोधोऽतोऽत्र दोषान्तरमाह। **तथाविद्येति**। **परेति**। पित्रादिभिन्नौदनाद्यभ्यवहरणेनेत्यर्थः। **अन्यतः** पित्रादिभिन्नात्। तथा च पित्रादिद्रव्याविरोधेन या विद्या तद्भिन्नाल्लब्धा तया यत्प्राप्तं धनं तद्विद्याप्राप्तं धनं नान्यत् ईदृशमेवाविभाज्यम्। अतोऽन्यथा तु तद्विद्याधनमेव नेति तद्विभाज्यमेवेति **कात्यायन**तात्पर्येण तथाऽर्थस्यैतद्विरुद्धत्वं स्पष्टमेवेति भावः।

---

१ क-तदुक्तरीत्या। ख-अस्मदुक्तरीत्या।

तस्मा**न्नारद**विरोधाभावेऽपि **कातीय**विरोधेन तथाऽर्थस्य दुर्वचत्वेन तथा सार्थक्याभावेन तस्य तदशेषत्वे तदानर्थक्यदोषः सुस्थ एव ।

तत्र दोषान्तरमाह । **तथेति । प्रतिग्रहेति ।** पितृद्रव्याविरोधेनेत्यादेः तदा प्रागुक्तरीत्या यद्यत्पितृद्रव्येत्याद्यर्थेन अदृष्टार्थदानक्रियासम्प्रदानभूतस्यैव प्रतिग्रहीतृत्वेन प्रतिग्रहलब्धस्य पितृद्रव्याविरोधेनोपार्जितत्वस्यापि सम्भवेन तस्याप्यविभाज्यत्वापत्तौ वृद्धव्यवहारविरोध इति भावः । तस्मान्मैत्रादिसर्वस्मृत्युक्तविषये विरोधाविरोधकृतद्वैविध्येऽपि प्रतिग्रहविषये सर्वथा विभाज्यत्वमेवाचारसिद्धम् । तद्विषये स्मार्तनिषेधस्तु याजनाध्यापनलब्धवन्न क्वाप्युपलभ्यते इति तत्त्वम् ।

**एतदेवेति ।** पितृद्रव्याविरोधेनोपार्जितस्य मैत्रादिशेषत्वमेवेत्यर्थः । **अनुपघ्नन्निति ।** अनुपयुञ्जन्नित्यर्थः । अत्र पूर्वार्धार्थः स्पष्टः । अनुपघ्नन्नित्यत्र विभक्तिविपरिणामेन तदनुपघ्नता यत् विद्यया लब्धं तत् पूर्वं चोभयमपि दायादेभ्यो न देयमित्यर्थेन पितृद्रव्याविनाशरूपविरोधाभावेन यद्विद्यालब्धं श्रमलब्धं च तदविभाज्यमिति सिद्ध्या मैत्रादिगणान्तर्गतविद्याधनस्य तथात्वात्तस्योपलक्षणत्वेन मैत्रादीनामपि तथात्वमाविष्कृतमिति भावः ।

**मानवे**—"स्वयमीहितलब्धं च नाकामो दातुमर्हति ।"

इत्युत्तरार्द्धपाठो, यच्च स्वयमीहितं वाञ्छितं सत् मित्रादिभ्यो लब्धं तदकामोऽनिच्छन् भ्रात्रादिभ्यो न दातुमर्हतीत्यर्थको **मेधातिथिकल्पतर्वादि**धृतो न युक्तः । अनेकस्मृतिव्याकोपापत्तेः । 'लब्धं तन्ने'[1] त्यर्वाचीनपाठस्त्वयुक्ततर एव । यद्वा । तदा तत् पैतामहविषयकमस्तु । एवं च भ्रातृभागशेषमाहानुपघ्नन्नितीत्यपि[2] तदुक्तं तथेति ज्ञेयम् । आदिना कृष्यादि । तस्मात्पितृद्रव्याविरोधेनेत्यादिना **वचनद्वयेन** एकभ्रात्रार्जितं मैत्रादिकमन्यस्य नांश इति प्रतिपादितम् । पितृपददायादादिपदस्वारस्यात् । तथा च न पित्राद्यर्जितपरमिति सिद्धम् । एतेनायमाचारो भ्रातृस्नेहेन पौरुषबुद्ध्या[3] वा अन्यत्र तथा दर्शनेन तन्मूलको वा ।

यत्किंचित्पितरीति **मानवस्यै**[4] एवं तात्पर्यम् । 'पितेव पालयेत् पुत्रा' निति मानवात्पितापुत्रवद्भावेन तद्वज्ज्येष्ठधने कनिष्ठाधिकारः । पित्रर्जिते ऽविदुषामपि ज्येष्ठार्जिते तु विदुषामेवेति विशेषः । इदं च "पितरि प्रेते" इति "ज्येष्ठ" इति "यवीयसाम्" इति "विद्यानुपालिन" इति चोक्त्या लभ्यते । तस्मादविभक्तार्जिततन्मात्रेणाविभक्तभ्रात्रन्तरस्य भवतीत्युक्तमेवेति प्राच्योक्तमपास्तम् । यत्किंचिदित्यस्य वैयर्थ्यापत्तेः ।

ननु नैतद्युक्तं, पैतामहे पैतृके च धने पुत्रादेर्जन्मनैव स्वत्वेऽपि भ्रातुर्भ्रात्रर्जिते तदभावेन भ्रातृप्राप्तमैत्रादिधने यद्येन प्राप्तं तत्तस्यैवेति प्रसिद्ध्या विभागप्राप्तेरेवाभावेन तदविभाज्यमिति निषेधकवचनस्यैवोक्तस्यासङ्गतेरित्याशयेनाह । **ननु पितृद्रव्येति** । प्राप्त्यभावे हेतुमाह । **यदिति ।** यत इत्यादिः । एवं चान्यदीये स्वत्वमेव नेति भावः । अवक्तव्यत्वे हेत्वन्तरमाह । **प्राप्नोति । चो** ह्यर्थे ।

**एकदेशिमतं** दूषयितुं मैत्रादीनां विभागप्राप्तिं तन्मतेनाह । **अत्र कश्चिदिति ।** विभागप्रापकं **मनुवचनमाह । यत्किंचिदिति । अधिगच्छति,** प्राप्नोति । **तत्र** धने । **यवीति ।**

१ क-न कोऽपि । २ क-इतीत्यस्य । ३ क-पुरुषबुद्ध्या । ४ क-फ-मानवस्य तु एवम् ।

यदि यवीयांसो **विद्यानुपालिनः** विद्यासंरक्षकाः विद्वांस इति यावदित्यर्थः । '**विद्यानुयायिन**' इति पाठान्तरम् । तुर्यपादेनेदं सूचितम्, यदि तेऽविद्वांसस्तदा नेति ।

तथा च **गौतमः** (अ. २८ सू. २८)। "स्वयमर्जितमवैद्येभ्यो वैद्यः कामं न दद्यादिति"। **नारदो**ऽपि (अ० १३ श्लो० ११)
"वैद्योऽवैद्याय नाकामो दद्यादंशं ततो धनात् । पित्र्यं द्रव्यं समाश्रित्य न चेत्तेन तदाहृतम्" ॥ इति ।

**कात्यायनो**ऽपि प्रागुक्तः । अस्य वचनस्यार्थकथनेन मैत्रादिविभागप्राप्तिपरत्वमाह । **ज्येष्ठो वेति** । ज्येष्ठशब्दस्त्रयाणामुपलक्षणम् । **यवीयः**शब्दो ज्यायसामपि । **प्रेते** इति । अप्रेते इत्यस्यापि । तथा च कालद्वयमपि लब्धम् । तथा च ज्येष्ठाद्यन्यतमो यत्किञ्चिद्धनं यथाकथंचित् प्राप्नोति तस्माद्धनादन्येषामपि भ्रातॄणां पितरि स्थिते मृते च भागोऽस्ति यदि ते विद्वांस इत्यर्थपरेण तेन मैत्रादीनामपि विभाज्यत्वे प्राप्ते पितृद्रव्येत्यनेन निषिध्यते इत्यर्थः ।

मैत्रादिधनस्य वृद्धव्यवहारसिद्धस्यैवाविभाज्यत्वस्यानुवादकं मूलं, न निषेधकं, येन प्राप्त्यपेक्षा स्यादित्याशयेनाशङ्कां निराकुर्वन् तन्मतं खण्डयति । **तदसदिति** । **अत्र** मैत्रादिविषये । न केवलमेवमत्रैव अपि तु अन्यत्रापीत्याह । **लोकेति** । आद्येन एवेन शास्त्रसिद्धत्वव्यवच्छेदः । द्वितीयेन एवेन निषेधकत्वव्यवच्छेदः । क्वचिदन्यथाऽपि वक्ष्यमाणत्वादाह । **प्रायेणेति** ।

भवतु निषेधकम्, तथापि वचनान्तरेण प्राप्तिः न तदुक्तरीत्येति 'तुष्यतु दुर्जन' न्यायेनाह । **अथवेति** । **बार्हस्पत्य**माह । **समवेतैरिति** । सर्वाभिप्रायं बहुवचनम् । अत एवाह । **सर्वे इति** । **तत्र** धने । नन्वेवमपि विनिगमनाविरहोऽत आह । **अतश्चेति** । तव दुराग्रहस्य तथोपपत्तेश्चेत्यर्थः । **ज्येष्ठादीति** । अविवक्षायां कारणाभावात् । तथा च विनिगमकं स्पष्टमेवेति भावः । तदाह **व्यामोहेति** । नन्वेवं का तस्य सिद्धान्ते गतिः अत आह । **अत इति** । त्वदुक्तार्थासम्भवादित्यर्थः । **पितुरिति** । मरणादिति शेषः । आविभाज्यत्वेनेति छेदः । **उक्तस्य** मैत्रादिधनस्य । **इति** इत्यनेन । पितरि मृते ज्येष्ठेनार्जितान्मैत्रादिकात् भागं कनीयांसो लभन्ते यदि ते विद्वांस इत्यर्थस्तस्येति भावः । अत एव पितृद्रव्याविरोधेनापि ज्येष्ठो विद्यादिना धनमर्जयति तत्र कनिष्ठानामपि भागो यदि ते विद्याभ्यासरता इति **कल्पतरुमेधातिथि**प्रभृतयः । एवं प्रागुक्त**कातीयादे**रपि सिद्धान्ते तदपवादत्वं बोध्यम् ।

न्यूनतां निराचष्टे । **तथाऽन्यदिति** । अथान्यदित्यपपाठः । अपिना—
"विद्याधनं तु यद्यस्य तत्तस्यैव धनं भवेत् । मैत्रमौद्वाहिकं चैवं माधुपर्किकमेव च ॥"

इत्यस्य संग्रहः । मधुपर्कदानेन पूज्यतया यल्लब्धम् । **प्रचक्षते** इति । 'पुस्तकमिति' **मन्द**धृतपाठस्तु व्याख्यातृ**कल्पतरुमेधातिथ्या**द्यसंमतत्वादुपेक्ष्यः । वस्त्रमित्यादि क्रमेण व्याचष्टे **धृतानामित्यादिना** । मूले जातावेकवचनमिति भावः । एतेन वस्त्रपत्रालंकारोदकानामेकत्वं विवक्षितम् । 'वस्त्रं च सममूल्यम्, न तु महार्घमिति' **मेधातिथिकल्पतर्वा**द्युक्तमपास्तम् । उद्देश्यविशेषणत्वात् । "धृतं वस्त्रमलंकार" इति **कातीये** धृतत्वस्यैव तदुभयसाधारणस्योक्तेश्च । तदेतदभिप्रेत्याह । **धृतानामेवेति** । एवेन अधृतव्यवच्छेदः । तत्र पुत्रादिस्थले आह । **यदिति** । लोकप्रसिद्धमपीदम् । अथ पितृस्थले आह । **पित्रिति** । **पितुः** मरणात् । **ऊर्ध्वमिति** । **अनेन**

१ क-फ-तदविवक्षायाम् ।

जीवद्विभागे स्वांशवत्तान्यपि पित्रैव ग्राह्याणीति सूचितम्। विभजतामिति 'कृत्यानामिति' (व्या. सू. २-३-७१) कर्तरि षष्ठी। पितुस्तदादिकं च यत्तदित्यन्वयः। आदिभ्यामन्यदुपकरणम्। अर्चने श्राद्धभोक्तैव कर्म। श्राद्धभोक्त्रे इति जातावेकवचनम्। तत्स्थानस्थितविप्रमात्राशयकं वा। तथाव्याख्याफलमाह। **अभिनवानी**ति। "सर्वं स्याद्वाहनं यानं युग्यं पत्रं च धोरणम्" (**अमरः** २-८-५८) इति 'पत्रं वाहनपक्षयोरिति' (**अमरः** ३-३-१७९) च कोशादाह। **वाहनमिति। आदिना** गन्त्र्यादि। **वस्त्रवदेव** श्राद्धभोक्त्रे देयम्।

विशेषमाह। **अश्वादीनामिति**। जीविनामिति प्राग्वत् कर्तरि षष्ठी। बहुत्वे सति तैस्ते विभजनीया इत्यर्थः। **ज्येष्ठस्येति**। तस्यैव स भाग इत्यर्थः। अत्र वैषम्यमंशं प्रत्यपर्याप्तत्वरूपं न विषमसंख्यत्वम्। एवं हि एकं तस्मै दत्त्वा समसंख्यस्थलेंऽशविभागस्य पर्याप्तत्वात्तैस्ते विभाज्याः। विषमसंख्यस्थलविशेषे स्वरूपेण सर्वविभागस्य दुष्करत्वात् द्रव्यद्वारा विभागस्य च विक्रयनिषेधेन निषिद्धत्वादंशपर्याप्तान् विभज्य वैषम्येणावशिष्टमश्वादि ज्येष्ठायैव दद्यात्। तदसम्भवे तु सर्वं ज्येष्ठायैव देयम्। यथा चत्वारोऽश्वाः पुत्राः त्रयः पञ्च वेति। अस्मिन्प्रकरणे वैषम्यमेवमेव। तादृशाङ्गीकारे तु बहुव्याकोपः स्यादिति भावः। एवं रीतिरन्यत्रापि बोध्या। अव्यवहिते मानमाह। **अजाविकमिति**। पशुद्वंद्वैकवद्भावः। **भजेत्** विभजेत्। अत्र हेतुमाह। **अजेति**। यत इत्यादिः। पत्रशब्देन लेख्यनिविष्टं धनम्।

"धनं पत्रनिविष्टं तु धर्मार्थं यन्निरूपितम्। उदकं चैव दाराश्च निबन्धो यः क्रमागतः॥"

इति **कातीयात्**।

"विक्रीयवस्त्राभरणं ऋणमुद्ग्राह्य लेखितम्। कृतान्नं चाकृतान्नेन परिवर्त्य विवर्तयेत्।"

इति **बार्हस्पत्याच्चेति कल्पतरुः**।

मूले सामान्ये नपुंसकमित्याशयेनाह। **अलंकार इति। धृत इति**। अत्र सर्वत्र भृत-इत्यादि पाठान्तरम्। अर्थस्तुल्यः। अधृत इत्यस्य व्याख्या। **साधारण इति। विभाज्य एवेति**। विभज्य एवेत्यपपाठः। यद्यपि "द्विवचनविभज्योपपदे" (व्या. सू. ५-३-५७) इति निपातनेन सोऽपि साधुस्तथाप्यपादाने एव नान्यत्र। न चैवं 'कृत्यल्युट' (व्या. सू. ३-३-११३) इति प्राप्तस्य ण्यतो बाधेन कथं विभाज्यशब्दसिद्धिरिति वाच्यम्। णिजन्तात् "अचो यता" (व्या. सू. ३-१-९७) सुसाधत्वात्। न चार्थभेदः। "निवृत्तप्रेषणात् धातोः प्राकृतेऽर्थे णिजिष्यते।" इति 'णेरणाविति' (व्या. सू. १-३-६७) सूत्रे हर्यादिभिर्व्युत्पादनात्। निपातनान्यबाधकानीति तु न युक्तम्। ण्यति कुत्वस्य दुर्वारत्वात्। तत्पक्षस्यैवाभावाच्च। एतेन 'स्मृतिप्रयुक्तविभाज्यशब्दस्य साधुत्वं चिन्त्यमिति' **हरदत्तो**क्तमपास्तम्।

मनुमेवाह। **पत्याविति**। अत्र पत्याविति स्त्रीभिरिति चोपलक्षणम्। अत एव यो येनेति पूर्वग्रन्थाविरोध इति बोध्यम्। **इति** इत्यत्र। उक्तविशेषे मानमाह। **अलमिति**। एतेन धृतस्तथैव स्थापितो विभागकाले पुत्रादिविभागमध्ये न देयः' किंतु पतिभागत्वेन यथा सैव परिदध्यात्। न तु पत्यौ जीवति यो धृतः स मृतेऽप्यविभाज्य इति अदृष्टार्थतापत्तेः। एतेन सर्वथा ऽविभाज्यत्वमपि निरस्तम्। तत्सौन्दर्यलोभेन भजने तु पातित्यम्। जीवतीत्युक्त्या मृतेऽन्येनापि ग्रहणे न दोष इति **मन्वो**क्तमपास्तम्।

---

फ—व्युत्पादिकत्वात्।

'कृतान्न ' मित्यत्र न कर्मधारयः । कृतशब्दवैयर्थ्यापत्तेः । किं तु अन्नेन कृतमिति राजदन्तादिः । अन्नशब्दो यौगिकस्तद्योग्यपर इत्याह । **तण्डुलमोदकेति** । तत्संबन्धिमोदकेत्यर्थः । **आदिना** अपूपादि । **यथेति** । किन्त्वित्यादिः । एवमग्रेऽपि ।

**विषममिति** । अनेन समत्वे विभागः सूचितः । एवमग्रेऽपि । उक्तहेतोः प्राप्तिमात्रमाह । **मूल्येति** । एवमग्रेऽपि । योग्यतया दास्य इत्युक्तेः फलं सूचयन्विशेषमाह । **अवरुद्धास्त्विति** । पित्राऽवरुद्धास्तास्त्वित्यर्थः । तत्स्वरूपमाह । **स्वैरीति** । अपिना विषमाणां समुच्चयः । समानामपि तासां तत्त्वे मानमाह । **स्त्रीषु च संयुक्तास्विति** । **संयुक्तासु** उपभुक्तासु अवरुद्धास्विति यावत् । तथैव पाठांतरं वा । किंतु मातृवत्पर्यायेण परिपाल्या इति भावः । संयुक्तानां विभागनिषेधाद्विवाहितानामर्थसिद्ध एवासौ । एतेन दासीतुल्यतया तासां व्याख्यानं **मन्दादि**कृतम्, अन्यतरपरतया तदन्यकृतं चापास्तम् । विनिगमनाविरहेणोभयोरपि ग्रहणात् । अत एव सामान्योक्तिः ।

**क्षेमश्चेति** । ' क्षेममस्त्रियाम् ' **इत्यमरः** ( १।४।२६ ) । समाहारद्वन्द्वः । **इष्टं** तदाख्यं, **पूर्त्तं** तदाख्यम् । अस्य साधारणत्वादाह । **पैतृकमिति** । अपिना पैतामहसमुच्चयः । तस्य तच्छेषत्वेऽप्येतदशेषत्वेन साधारण्यादेवाह । **पितृद्रव्येति** । अपिना ऽविरोधेनार्जितसंग्रहः । साधारण्ये मानमाह । **यथाहेति** । एतेन मैत्रायन्वयवदस्यापि तद्विशेषणं स्यात्, तुल्ययुक्त्या वा लभ्येतेत्यपास्तम् । सामान्येनानेन तस्य बाधात् । **मेधातिथिकल्पतरु**मतमाह । योगेति । तदन्यमतमाह । **छत्रेति** । सर्वपक्षे तदुत्पन्नो लाभो विषमश्चेद्विभाज्य एव ।

' योगक्षेमवतो लाभः समत्वेन विभज्यते । ' इति **बार्हस्पत्यात्** । योगक्षेमवतः तद्धेतोः ।

प्रचारशब्दे करणे 'हलश्चेति' घञित्याह(व्या.सू.३।३।१२१)। **गृहे**ति । ननु गृहारामादिप्रवेशनिर्गममार्गस्याविभाज्यत्वोक्त्या गृहारामादेर्विभाज्यत्वं लब्धं, तच्च स्मृत्यन्तरविरुद्धमित्याक्षिपति । **यत्त्विति** । **व्यासो**ऽप्येवमानुपूर्वीक एव । ' न वास्तुनि विभागो विद्यते ' इति **प्रजापतिरपि** । उक्तचतुष्टये संवादोऽप्यनेन दर्शितः । परिहरति । **तदिति** । अत्रादिशब्दग्राह्यो वैश्य एव न शूद्र इत्यग्रे वक्ष्यते । **बृहस्पति**माह । **न प्रतीति** । एतद्विशेषणफलमप्यग्रे वक्ष्यते । इदं च शब्दशक्तिस्वारस्यादिच्छया पितृकर्तृकविभागविषयम् । अत एव पुत्रकर्तृकविभागमात्रे तदभावोऽर्थसिद्धः पित्र्यद्रव्यविषये । पैतामहविषये तु वक्ष्यति । अत एव भूरत्र स्वयमर्जितं भूमिमात्रप्रधानं प्राकाराङ्कं क्षेत्रम् । भूरित्येतन्मात्रोक्तेः । गृहदानादितो भूमिदानस्य भेदेन कथनाच्च । एवं च क्रमागतस्य गृहादेर्वा नात्र ग्रहणम् । अत एव **बृहस्पतिः**—

" ब्रह्मदायं गतां भूमिं हरेयो ब्राह्मणीसुतः । गृहं द्विजातयः सर्वे तथा क्षेत्रं क्रमागतम् ॥ "इति ।

ब्रह्मदायः प्रतिग्रहः । एवं चैतन्मूलकप्राग्लिखित**मदनो**ऽयुक्त एवेति ज्ञेयम्[1] । न चैवं रीत्या व्यासविरोधपरिहारेऽपि प्रजापतिविरोधस्तदवस्थ एवेति वाच्यम् । तस्य बृहस्पतिवाक्यानुरोधेन प्रतिग्रहार्जितभिन्नगृहविषये स्वार्जिते विशिष्य निषेधकत्वात् । अत एवोक्तप्रजापत्यनुरोधेन **मानवे** योग-

१ फ-निषेधकत्वात् ।

क्षेमशब्देन चाऽस्त्विति यत् **मेधातिथि**ना व्याख्यातं, तदपि पितुरनिच्छायाम् । तदिच्छायां तु तत्रापि तद्भवत्येव । अत एव—

“ क्रमागते गृहे क्षेत्रे पितृपौत्राः समांशिनः । पैतृके न विभागार्हाः सुताः पितुरनिच्छतः ॥ ”

इति **व्यासः** । ‘सर्वथा क्षेत्रं वास्तुक्षेत्रमिति’ **कल्पतरू**क्तमयुक्तमेव । अत एव **कात्यायनेन**—“ दृश्यमानं विभज्येत गृहं क्षेत्रं चतुष्पदम् ” । इति तयोर्भेदेनोपादानं कृतम् । एवं **व्यासवाक्ये**ऽप्युक्ते कृतमिति बोध्यम् । आविभाज्यमस्तीति च दर्शयन्ननुक्तत्वाद्याज्यशब्दस्योपयुक्तं लक्ष्यार्थमाह । **याजनेति** ।

पितृद्रव्येत्यादिनाऽविभाज्यं वक्तुमारब्धं मूलकृता न सर्वमुक्तमिति न्यूनतापरिहाराय विभाज्यप्रकरणे एव वक्ष्यमाणमपि स्मरति । **पितृप्रसादेति** । तस्यापीत्यर्थः । ‘पितृभ्यामित्यादिना’ मूलकृत् । पूर्वं तु **नारदीय**त्वेनोक्तम् । इदं च पुत्रकर्तृकविभागविषयकमेवेति बोध्यम् । अत्राविभाज्यत्वं व्याख्यात्रा विधिनिषेधमुखाभ्यामुक्तम् । तत्राविभाज्यस्वरूपकथनं विधिः, विभाज्यत्वनिरासो निषेधः । तथा सत्यत्रैवोक्तमपि वक्ष्यमाणोपयोगि स्मरति । **नियमेति** । ब्राह्मणः प्रतिग्रहादिनेत्यादीत्यर्थः । **अनन्तरमेवेति** । कस्य विभाग इत्येतद्विचारावसरे शङ्कातः प्राप्तं सिद्धान्तिनेति भावः । **निरासि**न्यषेधि । तथा सत्युत्तरसङ्गत्यर्थमव्यवहितफलितं प्रागुक्तमुपसंहरति । **पितृद्रव्येति** । तथा चेत्यादिः । अत एव महाप्रकरणसङ्गतिः । **तत्र** तथाऽर्जितमैत्रादिविषये । तमेवाह । **येनेति** । **एषां** भ्रातॄणां मध्ये ॥ ११८ ॥ ११९ ॥

## याज्ञवल्कीये १२० श्लोकः ।

**अस्य** वसिष्ठोक्तभागद्वयस्य । सामान्यार्थेत्यस्य व्याख्या **अविभक्तानामिति** । समुत्थाने इत्यस्य व्याख्या **सम्यगिति** । तत्र हेतुरुक्तः । **कृषीति** । एतदर्थमेव नियमातीत्युक्तम् । शेषमाह । **केनचिदिति** । भ्रातॄणां मध्ये इत्यादिः ।

उत्तरसंगतिमाह । **पित्र्ये द्रव्ये इति** । यथाकथंचित्तदीयमात्रद्रव्ये इत्यर्थः । **पुत्राणां** तेषामेव । एवमग्रेऽपि । **पैतामहे** तन्मात्रे । **विभागे इति** । जन्मनैव स्वत्वेन तस्य प्राप्तत्वादिति भावः । **अनेकपितृकाणामिति** । अनेके पितरो येषामित्यर्थः । भिन्नपितृकाणामिति यावत् । एकपितामहानेकपुत्ररूपभ्रात्रनेकपुत्राणामिति परमार्थः । प्रमीतपितृकाणामिति पाठान्तरम् । अनेकपित्र्यकाणामिति त्वपपाठ एव । शङ्कापूर्वं व्याचष्टे । **यद्यपीति** । तृतीयान्तात्सार्वविभक्तिकस्तसिरित्याह । **पितृद्वारेणैवेति** । त्वर्थे **एवः** । नियामकमिदं वचनमिति भावः । तद्व्यवच्छेद्यमेवाह । **न स्वेति** । स्वस्वरूपेत्यर्थः । फलितमाह । **एतदिति** । अविभक्ता इति छेदः । **तत्र** । भ्रातॄणां मध्ये ।

न्यूनतानिरासाय उक्तन्यायमन्यत्रातिदिशति । **तथेति** । **ध्रियमाणेषु** अवस्थितेषु । जीवत्स्विति यावत् । धृङ् अवस्थाने । तदुक्तं **कात्यायनेन** ।

“ अविभक्ते सुते प्रेते तत्सुतं रिक्थभागिनम् । कुर्वीत जीवनं येन लब्धं नैव पितामहात् ॥

“ लभेतांशं स्वपित्र्यं तु पितृव्यात्तस्य वा सुतात् । स एवांशस्तु सर्वेषां भ्रातॄणां न्यायतो भवेत् ॥

“ लभेत तत्सुताद्वाऽपि निवृत्तिः परतो भवेत् । ” इति ।

तदाह । **वाचनिकीति** । अन्यथैतदानर्थक्यापत्तिरिति नियामकमिदमिति भावः ।

एकस्यां योषिति बहुभिः सङ्गतायां तेभ्यो जातानामित्यर्थः इति **कल्पतरुः**—

" अनेकपितृकाणां तु पितृतोंऽशविकल्पना। यस्य यत्पैतृकं रिक्थं तत् स गृह्णीत नेतरः ॥ "

इति **विष्णु**व्याख्यावसरे । अत एव **बृहस्पतिः**—

" यद्येकरिक्थिनौ स्यातामौरसक्षेत्रजौ सुतौ। यस्य यत्पैतृकं रिक्थं स तद् गृह्णीत नेतरः॥ " इति।

नायं पारिभाषिकः क्षेत्रजः। तस्यान्यविभागस्य वक्ष्यमाणत्वात्। किन्तु क्षेत्रमात्रोत्पन्नः।

" द्वौ तु यौ विवदेयातां द्वाभ्यां जातौ स्त्रियां धने। तयोर्यद्यस्य पित्र्यं स्यात्स तद् गृह्णीत नेतरः॥ "

इति **मनुरपि** ( अ० ९।१९१ ) ॥ १२० ॥

नन्वनेकपितृकाणामित्यनेन अन्यथाऽनुपपन्नेन एतावत्सम्पन्नं, पौत्रस्य पैतामहद्रव्यप्राप्तिः पितृद्वारा, न स्वतः। तत्रापि पितरि अविभक्ते दिष्टं गते एव, विभागस्य स्वत्वाजनकत्वेऽपि तन्नाशकत्वात्। तत्सत्त्वस्य प्रतिबन्धकत्वाच्च। एवं च पौत्रस्यापि भ्रात्रादिवत् सप्रतिबन्ध एव दाय इति तथा प्रागुक्तमयुक्तम्। किंच तथा सति यदा पिता जीवति विभक्तश्च स्वपितुः यद्वा तस्य एकपुत्रत्वेन तस्य भ्रात्रन्तराभावात् स पितुः सकाशादविभक्त एव जीवन्नास्ते, तदाऽऽद्यपक्षे विभक्तत्वादेव पैतामहद्रव्यप्राप्त्यभावः स्वपितुरिति विभक्तत्वात् तस्य सत्त्वाच्च द्वारानिरोधेन पौत्रस्य पैतामहद्रव्यप्राप्त्यभावः। द्वितीयपक्षेऽपि यद्यपि स्वपितुर्धनप्राप्तिरस्ति अविभक्तत्वात्तथापि सत्त्वादेव तस्य तदभाव इति सर्वथा पैतामहे धने पौत्रस्य जीवत्पितृकस्य विभागाभाव एव स्यादित्युत्तरवाक्यमवतारयन्नाह। **अधुनेति**। इत्याशङ्किते इत्यत्रान्वयः। विभक्ते इति छेदः। पौत्रस्येत्युपलक्षणं, पौत्रयोः पौत्राणामपि। उभयत्र हेतुमाह। **अध्रियमाणे इति**। दिष्टं गते इत्यर्थः। ध्रियमाणे इति पाठे तस्य पूर्वान्वयः। अपितरीति छेदः। तदभावे। अत्र तूभयत्रापि पितुः सत्त्वमिति भावः।

ननु नैतद्युक्तं, जन्मनैव स्वत्वस्य प्रागुक्तत्वेन द्वारानपेक्षत्वेन तत्रापि विभागस्य युक्तत्वादिति चेत्, तथापि पितरि दिष्टं गते पितृद्वारेवांशविधानाज्जीवति तस्मिन् तद्द्वारकत्वं सुतरामिति अत्र पितुः प्राधान्यप्रतीत्या पितुरिच्छयैव विभागः स्यात्। तत्रापि स्वार्जितवत् द्वावंशाविति **नारद**वाक्येन पितुरंशद्वयं स्यात्तदाह। **भवतु वेति**। विभागस्तत्र तस्येत्यस्यानुषङ्गः। परं तु इति शेषः। **इच्छयैव** इच्छयैव च। स्यादिति शेषः। दृष्टान्तसूचितं तत्रापीत्यादिनोक्तम्। भवन्वेति पाठे तु एकवाक्यतैव॥

## याज्ञवल्कीये १२१ श्लोकः।

शब्दशक्तिमाहात्म्येन लब्धमर्थमाह। **शालीति**। **आदिना** यवक्षेत्रादि। तेन वास्त्वादिनिरासः। इदं वास्त्वादिविषयतत्त्वं चानुपदमेव विशदीकृतम्। निबध्यते यः पर्णादिगणनया स **निबन्धो** वृत्तिः। आकरादौ राजादिदत्तं नियतलभ्यम्। तत्स्वरूपमाह। **एकस्येत्यादि**। पर्णानां भरो बाहुल्यं यस्मिन्निति विग्रहः। समासान्तः। एवमग्रेऽपि। तथा चैकस्याः पर्णवाटिकाया क्रमुकवाटिकायाश्चेयन्ति पर्णानि क्रमुकफलानि चेति तद्व्यापारकोविदा एव जानन्ति, नान्ये इति

तदीयपर्णभरकादिपर्णगणनया निबध्यमान इत्यर्थः । यत्पितामहेनेत्यनयोरग्रेऽपि संबन्धसूचनाय आह । **यत्पितेति** । नियमानतिक्रममाह । **प्रतिग्रहेति** । आदिना वाणिज्यद्विजशुश्रूषादिपरिग्रहः ।

एवं पूर्वार्धवाक्यार्थत्रये प्रतिपादिते उत्तरार्द्धं वाक्यभेदेन सशेषपूरणेन व्याचष्टे । **तत्रेति** । त्रिष्वित्यर्थः । प्राग्वत् अस्यार्थमाह । **अस्तीति** । पूर्वम्[1] एवान्वयादस्त्येवेत्यर्थः । चोभयोरिति कल्पतर्वादिधृतपाठासांगत्यं ध्वनयन्नाह । **हि यस्मादिति** । **सदृशं** सदृशमेव । अग्रिमेणैवान्वयात् । शेषं प्राग्वदाह । **तस्मादिति** । इच्छयैव न विभाग इति पाठो युक्ततरः । एतेन समांशत्वं सूचितम् । **बृहस्पतिरपि**—

“द्रव्ये पितामहोपात्ते जंगमे स्थावरेऽपि वा । सममंशित्वमाख्यातं पितुः पुत्रस्य चैव हि ॥” इति ।

एवं सति पूर्ववचनानर्थक्यं प्रथमांशेन प्राप्तं तद्विरोधं च परिहरन् वाचनिकत्वमुक्तं द्रढयति । **अतश्चेति** । यत एवं स्वाम्यं पितापुत्रयोस्तत्र समानमेव लोकप्रसिद्धम् । अत इत्यर्थः । **वाचनिकमिति** । पितरि प्रेते वचनात्तथा नियम्यते, न तु जीवति । अत एव प्रमीतपितृकाणामिति पाठो युक्ततर इति भावः । इदं प्रागपि उक्तम् ।

द्वितीयांशेन प्राप्तं वचनान्तरविरोधं परिहरति । **विभागं चेदिति** । प्रागपीदमुक्तम् ।

तृतीयांशेन प्राप्तं प्रागनुक्तान्यवचनविरोधं परिहरति । **तथेति** । **नारदमाह** । **द्वावंशाविति** । प्रतिपत्तिर्नियमेन ग्रहणम् । आत्मन इति षष्ठ्यन्तं पञ्चम्यन्तं वा । अत्र विषमविभागे लोकविशेषाद्यभावादयं भवत्येवेति भावः । एवं प्रागुक्त**वसिष्ठो**क्ते विषमविभागेऽपि बोध्यम् । एवं च स्वार्जिते सर्वविभागेषु अर्जकस्यांशद्वयमिति सिद्धम् ।

सदृशमित्यनेन प्राप्तमन्यविरोधमेवं रीत्यैव परिहरन् मतद्वयमाह । **जीवतोरित्यादि** । **जीवतोरित्येतद**पि, मातेत्याद्यनुषङ्गः । पैतामहे धने पित्रर्जितधनान्मूलानुक्तं तत्फलितं तदभिमतम् । विशेषांतरमाह । **तथा चेति** । तयोः स्वत्वस्य तुल्यत्वे चेत्यर्थः । जीवद्विभागे उक्तकालत्रयाभावकृतविशेषमाह । **सरजस्कायामिति** । अपिना तन्निमित्तत्रयसमुच्चयः । **पुत्रेच्छया** तथैव । एवं चैतदिच्छाया मुख्यत्वम् ।

अत एव विशेषान्तरमाह । **तथेति** । तद्वदित्यर्थः । अविभक्तेनेति छेदः । विभागे स्वत्वनाशेन तदनधिकारादिति भावः । एतेन ‘ स्वयं विद्याशौर्यादिना स्वयमर्जितमिति ’ व्याख्यानं **मेधातिथ्यादे**रपास्तम् ।

**बृहस्पतिरपि**—

“पैतामहं हृतं पित्रा स्वशक्त्या यदुपार्जितम् । विद्याशौर्यादिना प्राप्तं तत्र स्वाम्यं पितुः स्मृतम्” ॥ इति ।

अपिना विभागकरणसमुच्चयः ।

**कर्तव्येति** । पुत्रेणेति भावः । अव्यवहितोक्तमेव हेतूक्तिपूर्वकं विशदयति । **तथा हीत्यादिना** । **जन्मनैव** समानमिति शेषः । **पित्रेति** । पुत्रस्येत्यादिः । तत्रान्यतरस्यानर्जकत्वादाह । **द्वयोरिति** । अत एव पैतामहे न मातुरंशः स्वत्वाभावाद्वचनाभावाच्च । एवं च पौत्राणामप्रतिबन्धो दाय इति प्रागुक्तं युक्तमिति बोध्यम् ।

---

१ क-ख-पूर्वेवान्वयादस्त्येवेत्यर्थः । क-पूर्वेणान्वयादस्त्येवेत्यर्थः ।

अत्रान्यसंवादमाह । **मनुरपीति** । इति वदन्निति दर्शयतीत्यन्वयः । पैतृकमित्यस्य पितेत्युक्तिबलात् व्याख्या । **पितामहेति** । अनवाप्तमित्यस्य व्याख्या **पितेति** । यदेत्यस्य **यदीति** । **आप्नुयादि**त्यस्य प्राग्वत् । **उद्धरतीति** । स्वयमर्जितमित्यस्यान्वयासंभवात्, यथाश्रुते चशब्दाभावेन वाक्यभेदासंभवाच्च दृष्टान्ततेत्याह । **स्वार्जितमिवेति** । **अकामः** विभागानिच्छुः । एतेन "चेत्स्वयं विद्याशौर्यादिना स्वयमर्जितम्" इति व्याख्यानं **मेधातिथ्या**देरपास्तम् ।

**बृहस्पतिरपि—**

"पैतामहं हृतं पित्रा स्वशक्त्या यदुपार्जितम् । विद्याशौर्यादिना प्राप्तं तत्र स्वाम्यं पितुः स्मृतम्" इति ।

**कात्यायनोपि—**

"स्वशक्त्या ह्युद्धृतं नष्टं स्वयमाप्तं च यद्भवेत् । एतत् सर्वं पिता पुत्रैर्विभागे नैव दाप्यते॥" इति ।

इदं भूभिन्नविषयमिति प्रागुक्तमेवेति बोध्यम् । **पितामहार्जितमिति** । उक्तभिन्नमित्यर्थः । अत्र भूः पितामहेत्युभयमुपलक्षणम् । अत एव **व्यासः—**

"क्रमागते गृहे क्षेत्रे पितापुत्राः समांशिनः । पैतृके न विभागार्हाः सुताः पितुरनिच्छया ॥" इति ।

एवं चात्र सर्वत्र स्थावरे जङ्गमे च समांशित्वं, पैतृके तु पितुरिच्छया गृहादौ समांशित्वं नान्यथेति विशेषः ॥ १२१ ॥

**विभागोत्तरेति** । प्रथमतृतीयकालयोरित्यर्थः । **पुत्रस्येत्यु**पलक्षणं पुत्रयोरित्यादेरपि । एवमग्रेऽपि ।

## याज्ञवल्कीये १२२ श्लोकः ।

**पुत्रेषु** सत्सु । अत एवाह । **पश्चादिति** । भाववत्त्रि विभागभागिन्यनुपपन्नमसम्बद्धं च । अत आह । **विभज्यते इति** । कर्मणि घञिति भावः । साकांक्षत्वात्प्रत्यासत्तेराह । **पित्रोरिति** । **विभागो** धनम् । तात्पर्यार्थमाह । **पित्रोरूर्ध्वमिति** । प्रायणादिति शेषः । **अंशं** तत्त्वेन स्थितं सर्वम् । पित्रोरित्युक्तं सफलयति । **मातृभागमिति** । **च**स्त्वर्थे । तत्सद्भावे तु तं न लभते इति भावः । सवर्णायामित्युक्तेः फलमाह । **असवर्णायामिति** । **स्वांशमेवेति** । मुख्यांशमेवेति पाठान्तरम् । ब्राह्मणात् क्षत्रियायामुत्पन्नस्य पादोनं, वैश्यायामर्द्धं, शूद्रायां पादः क्षत्रियाद्वैश्याया-मुत्पन्नस्य पादद्वयं, शूद्रायां पादः, वैश्याच्छूद्रायामुत्पन्नस्य एकः पाद इत्यर्थः । तद्वक्ष्यति 'चतुस्त्रि-द्व्येकभागाः स्युरिति' । **पित्र्यादिति** । धनादित्यर्थः । पित्र्यामिति पाठान्तरम् ।

विशेषमाह । **मातुरिति** । मातृकं त्विति पाठान्तरम् । अयमपि दुहितृसत्त्वे इति बोध्यम् । 'मातुर्दुहितर' इत्यस्य मातृधनमात्रशेषत्वात् । उक्तमूलस्य तदूर्ध्वं तस्य धनभाक्त्वमितिपरत्वं कुतः, जीवत्येव तस्मिन् तद्भाक्त्वपरत्वं कुतो नेत्याशङ्कां परिहरन्मौलार्थे मानमाह । **एतदेवेति** । पित्रो-रूर्ध्वमित्युक्तमेवेत्यर्थः । **हरेत् गृह्णीयात्** । अनेन तदुत्तरकालिकत्वं स्पष्टमेवोक्तम् ।

नन्वेवमपि पित्रोरिति प्रागुक्तमयुक्तं, पितुरिति वाच्यम् । अत्र पित्र्यमित्यस्यैवोक्तत्वात् । तस्य च पितुरागतमिति शब्दार्थात् । अत आह । **पित्रोरिति** । एकशेषं कृत्वा तद्धित इति भावः ।

---

१ अग्रे (१२५) श्लोके मि. पृ. ८९ पं. १।२

इदं फलितार्थकथनम् । ननूभयथाऽपि पित्र्यमित्यस्य तुल्यत्वादत्र तथा व्याख्याने एव न मानम्, अत आह । **अनीश इति । बार्हस्पत्ये** अत्र पित्रोरिति द्विवचननिर्देशात्तथेति भावः । अस्फुटत्वादस्योक्तार्थपरत्वायेदं वाक्यभेदेन व्याचष्टे । **विभक्तयोरिति ।** पूर्वपुत्रेभ्य इति भावः । अन्यथाऽनुपपत्तेः प्रकरणाच्चेदमुक्तम् । भागे इति पाठः । विभागे इत्यपपाठः । स्मृतावसत्त्वात् । पूर्वज इत्यस्यार्थमाह । **विभागादिति** । द्वितीयवाक्यमाह । **विभक्तजश्चेति ।** विभक्ताभ्यां पितृभ्यां जात इत्यर्थः । **भ्रातुः** पूर्वोत्पन्नस्य । तथा च विभक्तपुत्रांशान्यूनत्वेऽधिकत्वे वा विभक्तजस्तावदेव लभते; न तत्पूर्वजा अधिकं गृह्णीयुर्न्यूनं वा पूरयेयुः । अयमेवार्थो **मनु**वाक्ये एवेन सूचितः ।

साधारणोक्त्या तन्त्रेण मूलस्यैवार्थान्तररूपविशेषमाह । **तथेति । बृहस्पतिमाह पुत्रैरिति ।** अस्य विभक्तेनेत्यत्रैवान्वयः । यद्वा । पूर्वपुत्राणां विद्यमानत्वेऽपीत्यर्थः । सहैव दशभिः पुत्रैरितिवत् । स्वयमिति स्पष्टार्थम् । अत्रार्जितमिति सामान्योक्त्या धनं ऋणं च ग्राह्यम् । अत एव **बृहस्पतिरेव**—

"यथा धने तथर्णेऽपि दानाधानक्रयेषु च । परस्परमनीशास्ते त्यक्त्वाऽऽशौचोदकक्रियाम् ॥" इति ।

विपदस्वारस्यात्तथैव विशेषान्तरमाह । **ये चेति ।** पित्रा सहेत्यस्य मध्यमणिन्यायेनान्वयः । **पुनः** संसृष्टाश्चेत्यर्थः । **पितुरिति** । प्रायणादिति शेषः । **संसृष्टा इति ।** प्रागुक्तोत्तरार्द्धमिदम् । अत एव पूर्वसमुच्चये वाशब्दः । **तेन वेति ।** पित्रेत्यर्थः । **स तैरिति ।** विभक्तजः पूर्वजैरित्यर्थः ।

यद्यप्यन्यनिबन्धकारैरत्र दृश्याद्वेति पूर्वत्रैव विकल्पपरतया व्याख्यातं, कैश्चिदन्यैश्चैकवाक्यतयैव व्याख्यातं, तथापि तन्न युक्तम् । उक्तस्मृतिविरोधेन विकल्पासम्भवात् । आनर्थक्यस्यान्यतरस्य स्पष्टत्वेनासम्बन्धेन वापदानर्थक्येन चैकवाक्यत्वासम्भवात् । न्यूनतापत्तेश्च । तदेतदभिप्रेत्योत्तरार्धस्यान्यदवतरणमाह । **पितुरिति ।** प्रायणादिति शेषः । **पुत्रेष्विति ।** पितृमरणादव्यवहितपूर्वमेव गर्भे सति विभागसमयेऽपि मातुरस्पष्टगर्भात्वेन तदानीमज्ञानेन तदव्यवहितमिति भावः ।

**वाशब्दः** समुच्चये । अवधारणे वा । आयव्ययविशोधितात् दृश्यादेव तद्विभाग इत्यर्थः ।

ननु तद्विभाग इत्यस्य कथमुक्तार्थोऽतस्तस्येत्यस्यार्थमाह । **पितरीति** । भ्रातृभिरित्यस्य विभागे एवान्वयः । तत्कर्तृकविभागेत्यर्थः । भ्रातृविभागेति पाठः प्रचुरः । मातरि सत्यां पितुरसत्त्वान्मातुर्विभागासम्भवादवधिं पृच्छति । **कुत इति ।** दृश्यादित्यस्य तात्पर्यार्थमाह । **भ्रातृभिरिति ।** पदार्थावाह । **आय इति ।** वृद्धिभेदस्य प्रागुक्त्या विनिगमनाविरहादाह । **प्रतिदिवसमिति ।** वाक्यार्थमाह । **ताभ्यामिति । शोधितं** परिष्कृतम् । तथा च प्रकृते विभागोत्तरं प्रातिस्विकांशैः कृष्यादिषु क्रियमाणेषु यो लाभः स **आयः ।** पितृकृतं ऋणं स्वकुटुम्बपोषणादिसाधकं तदपाकरणं **व्यय** इति भावः ।

आयव्ययरहितादित्यर्थनिरासायाह । **एतदिति । भागेषु** सत्सु । **तदुत्थं** ततः कृष्यादितो **लब्धम् ।** स्वस्वांशमध्ये इति शेषः । **प्रवेश्य** प्रक्षिप्य । **अपनीय** अपनीय च । **स्वेभ्यः** स्वीयेभ्यः सर्वेभ्य इत्यर्थः । **किञ्चिदिति ।** यस्माद्यस्मादंशाद्यावद्यावदुचितं तावत्तावद् गृहीत्वेत्यर्थः । **अत एवाह । स्वभागसम इति ।** अयं भावः । विभक्तमपि तत्पितृधनमविभक्तमिव । यतो गर्भस्थितमप्यपत्यमपत्यत्वादेव **पितृधनांशार्हम् ।** मातुः पितृमरणसमये एव गर्भे सति **विभागसमये**

त्वाव्यक्ते गर्भे तस्मादेव गर्भादुत्पन्नमपत्यं तस्मात्पितृधनात्तदुत्थलाभाच्च भागार्हमिति । तत्रापि पुत्रसत्त्वे समांशभागित्वं पुत्रीसत्त्वे तु स्वस्वजातिनिबन्धनादंशाच्चतुर्थांशभागित्वं वक्ष्यमाणं बोध्यम् ।

उक्तन्यायं युक्तितौल्यादन्यत्रातिदिशति । **एतच्चेति** । भ्रातुर्यस्य कस्यचित्प्रमीतस्य उक्त एव प्रकारः । 'अप्रजसीति' भार्याविशेषणम् । अप्रजस्येति पाठे यथासंख्यमुभयोरुभयं विशेषणम् । न्यूनतानिरासाय विशेषं सूचितम् । उभयत्राप्याह । **स्पष्टेति । अनपत्या इति** । बहिरविद्यमानपुत्रा इत्यर्थः । स्त्रियोऽत्र भ्रातृभार्याः अत एवाह । **आ पुत्रेति** । आङ् मर्यादायाम् । अत एव तदर्थमाह । **गृहीतेति** । पुत्रेत्युपलक्षणमित्याह । **आ प्रसवादिति** । वाक्यार्थपूर्तये शेषमाह । **प्रतीक्षणीयमिति ॥ १२२ ॥**

व्यवहितसङ्गतिं सूचयन्नुत्तरावतरणमाह । **विभक्तज इति** । विभागानन्तरं मातापित्रोः सतोरेव य उत्पन्नः स विभक्तजो मातापितृमरणानन्तरं तयोर्धनं गृह्णातीत्युक्तं । विभक्तेषु सुतो जात इत्यनेनेत्यर्थः । मातृकांशः प्राग्वत् । **तत्र** तस्मिन्सति । **माता वेति** विकल्पो दाने, न तु विभागे । पितुः पुत्रेभ्यो विभागे मातुस्तस्यार्थसिद्धत्वात् । पृथक् तस्या अविभागाच्च । अत एव पुनस्तत्र विभक्तेति विशेषणानुक्तिः । ताभ्योऽपि पुत्रवत् पृथगंशं दत्त्वा तासां पृथक्कार इति तु न । 'जायापत्योर्न विभागो विधीयते' इति **हारीताद्युक्तेः** । एवं च 'पत्न्यः कार्याः समांशका' इत्यस्य बहुवचनात् पत्नीत्युक्तेश्च प्रतिपत्नि पुत्रांशसमानमंशं गृह्णीयादित्यर्थो न तु तथेति प्रागुक्तं न विस्मर्तव्यमिति बोध्यम् । **तत्र** विषये ।

"पितामहेन यद्दत्तं पित्रा वा प्रीतिपूर्वकम् । तस्य तत्रापहर्त्तव्यं मात्रा दत्तं च यद्भवेत् ॥" इति ।

यस्येति षष्ठी शेषत्वाय ।

## याज्ञवल्कीये १२३ श्लोकः ।

युक्तिसाम्यादन्यत्रातिदेशमाह । **न्यायेति** । अस्याग्रेऽप्यन्वयः । **अपिः** ऊर्ध्वसमुच्चये । **एवेन** विभाज्यत्वव्यवच्छेदः ।

अतिदेशान्तरं तत एवाह । **तथेति** । तद्वदित्यर्थः । विभक्तजे ऽसतीत्यन्वयः । **तदूर्ध्वं** तन्मरणानन्तरम् । 'विभजतामिति' निर्धारणे षष्ठी । न केवलं विभक्तजे पुत्रे सति विभागादूर्ध्वं प्राग्वा 'यस्य यद्दत्तं तत्तस्यैवेति' नियमः, किं तु विभक्तजपुत्राभावेऽपि विभक्ताभ्यां ताभ्यां स्वपुत्रादिभ्यो यत्प्रीत्या दत्तं तत्तयोर्मरणोत्तरं तद्धनं विभजतां मध्ये यस्मै दत्तं तस्यैव न विभागार्हमित्यर्थः ।

व्यवहितसङ्गतिमाह । जीवदिति । **स्वपदं** स्पष्टार्थम् । **पितुरिति** प्राग्वत् । **पत्नीनां** सर्वासाम् । **दर्शयितुमिति** । दर्शयन्नित्यर्थः । **प्रायणादिति** । तदित्यादिः । **विभजतामिति** । 'षष्ठी चानादरे' (व्या० सू० २-३-३८) इति षष्ठी । ताननादृत्येत्यर्थः । तद्गतस्वत्वस्य सत्त्वात् । अत एव हरोदित्युक्तिः । **अपेस्तत्रै**वान्वयः । स च जीवद्विभागे समांशित्वसमुच्चायकः । अत एव तत्तुल्यतया एकत्वमत्र अविवक्षितम् । किं च अत्र मातुरुद्देश्यत्वात्तदुद्देशेन हरणस्य अप्राप्तत्वेन विधेयत्वादेकत्वमविवक्षितं, ग्रहं संमार्ष्टीतिवत् । यदि कुर्यादित्यत्र तु तेनैवाद्यपादेनांशभागित्वस्य प्राप्तत्वात्तदुद्देशेन पत्न्या विधानात्तद्गतं बहुत्वं विवक्षितं, पशुना यजेतेतिवत् । एतेन विपरीतशङ्का निरस्ता । अत एव तदनुरोधेनावतरणे पत्नीनामित्युक्तम् । यद्वा । यथाश्रुतेऽपिना जननीभिन्नसमुच्चयः । **विष्णुरपि**—'मातरः पुत्रभागानुसारिभागहारिण्य' इति ।

प्राग्वच्छेषमाह । **यदीति** । प्रकृतानुरोधेनाह । **अर्धांशहारिणीति** । **वक्ष्यते इति** । सौदायिके 'दत्ते त्वर्द्धं प्रकल्पयेत्' इत्यनेनेति भावः । प्राग्वच्छेषः ।

अत एव **स्मृत्यन्तरम्**—" जनन्यस्वधना पुत्रैर्विभागेऽशं समं हरेत् ।" इति । अस्वधना प्रातिस्विकस्त्रीधनशून्या । तत्र जननीग्रहणमपुत्राणां मातृसपत्नीनां पितामहीनां चोपलक्षणम् ।

अत एव **व्यासः**—

"असुताः स्वपितुः पत्न्यः समानांशाः प्रकीर्तिताः । पितामह्यश्च ताः सर्वा मातृतुल्याः प्रकीर्तिताः ॥" **इति** ।

एवं सति प्रकृते मातृशब्दः पत्नीमात्रपर इत्यपि सुवचम् ।

" तिस्रः पूज्याः पितुः पक्षे तिस्रो मातामहे तथा । इत्येता मातरः प्रोक्ताः पितुर्मातुः स्वसाऽष्टमी ॥ "

इति **चतुर्विंशतिमत**वचनं 'पितृपत्न्यः सर्वा मातर' इति **सुमन्तु**वचनमप्यत्र साधकम् । एवं च सापत्नमातुरपि अंशभागित्वमिति सिद्धम् । एतेनात्र मातृपदोक्त्या सापत्नमातुरंशभागित्वं नेति निर्वचनः प्राच्यसिद्धान्तः परास्त इति दिक् ॥ १२३ ॥

पितुरूर्ध्वमित्यनेन प्रसङ्गसङ्गतिमाह । **पितरीति** । **सन्तीति** । तदेति शेषः ।

## याज्ञवल्कीये १२४ श्लोकः ( पूर्वार्धः ) ।

असंस्कृतानामनधिकारादाह । **पूर्वसंस्कृतैरिति** । तत एवाह । **पितुरिति** । प्रायणादिति शेषः । **असंस्कृताः**, विवाहान्तसंस्कारैः । न च विभागप्रकरणे इदमयुक्तमिति वाच्यम् । पूर्वसंस्कृतैरिति विशेषणेन यथा स्वसंस्कारः पित्रा समुदायद्रव्येण कृतस्तथा तेषामपि कार्य इति **स्ववत्** तत्कृत्यस्यावश्यकत्वबोधनद्वारा आदौ, तथैव समुद्रायद्रव्येण तत् कृत्वा ततो विभागः कार्यः न तु ततः प्रागिति बोधितत्वेनात्र सङ्गतेः । अन्यथा तद्विशेषणोपादानानर्थक्यं स्पष्टमेव । तदाह **समुदायेति** । विवाहान्तसंस्कारैरिति शेषः । एवमग्रेऽपि । तुल्ययुक्त्या पातित्यादिदोषदुष्टे पितरि जीवत्यपि यदि पुत्रा एव विभागकर्त्तारस्तदा तत्राप्येवमेव बोध्यम् । एवमग्रेऽपि ।

## ( उत्तरार्धः ) ।

**विशेषमिति** । विवाहान्तसंस्कारतौल्येऽपि विजातीयांशदानरूपम्, असंस्कृतासु पूर्वमंशदानं ततस्तासां संस्कार इति पूर्वक्रमान्यक्रमरूपं च विशेषमित्यर्थः । एतदर्थमेव मूले तुः ।

ननु नेदं संस्कारमात्रबोधकं तावत्, निजादित्यादिवैयर्थ्यापत्तेः । किं च पूर्वेणैव सामान्येन सिद्धे सम्पूर्णस्य वैयर्थ्यापत्तेः । नापि तुरीयांशदानमात्रं भगिनीमात्रोद्देशेन विधीयते । 'भगिन्य' इति प्रथमायाः चशब्दस्य त्वाप्रत्ययस्य चासम्बद्धत्वापत्तेः । नापि पूर्वानुवृत्त्या पूर्वगृहीताद्दंशात्तुरीयमंशं दत्त्वा ताभ्यः, असंस्कृतास्तास्तैः संस्कार्या इति अर्थः । एवमपि चशब्दानर्थक्यस्य तदवस्थत्वात् एतेन दत्त्वा तेनैव संस्कार्या न तु समुदायद्रव्येण नापि स्वांशेनेत्यर्थः इत्यपि निरस्तम् । तदा तदुपयोगिद्रव्यव्ययस्यैव प्राप्त्या अंशं तुरीयकमित्यस्यासङ्गतेश्च । दत्त्वेत्यस्य व्ययीकृत्येत्यर्थेऽप्ययमेव दोषः । निजमंशं परिभाव्य ततो वा तुरीयमंशं व्ययीकृत्यैव तथा ताः संस्कार्या इति नियामकमिदं पूर्वेण सिद्धत्वादिति पक्षेऽपि चशब्दासङ्गतिस्तदवस्थैव । वराय तं दत्त्वेत्यर्थस्तु प्रत्यासत्तिन्यायविरुद्धः ।

अथ वाक्यभेदेन भगिनीभ्यः सर्वाभ्यो निजादंशाच्चं परिभाव्यादौ तमुपेक्ष्य तं विचार्य तत्रोद्यम्य वा तुरीयमंशं दत्त्वा स्वांशास्तैर्ग्राह्या असंकृतास्ताः संस्कार्याश्चेत्यर्थेन न कस्याप्यसङ्गतिरित्युच्येत, एवमपि पूर्वेणैव सिद्ध्या द्वितीयवाक्यानर्थक्यं तदवस्थमेव । भगिनीभ्यो निजादित्योच

ब्रूयात् । न चैवं विशेषेण अनेन पूर्वोक्तसंस्कारबाधापत्तिरिति वाच्यम् । तस्यासंस्कृतभ्रातृभगिनीसाधारणत्वेनास्य संस्कृतासंस्कृतभ्रातृभगिनीसाधारणत्वेन सामान्यविशेषभावाभावात् । परस्पराविषये द्वयोश्चारितार्थ्येनासंस्कृतभगिनीविषये विरोधाभावेन समावेशसंभवात् ।

अथ तदनुवृत्त्यैव निजादंशात्तं दत्त्वा असंस्कृतास्ताः संस्कार्याः, संस्कारैः संस्कृतास्ताः संस्कार्या भूषणीयाश्चेत्यर्थस्याप्राप्तस्य विधानेन भगिनीमात्रदाने प्रत्यवायस्य मनूक्तत्वेन तदावश्यकत्वप्रतिपादनतात्पर्यकत्वेन स्फुटतया तदर्थबोधार्थकानुवादे च न कस्यापि वैयर्थ्यमित्युच्येत । एवमपि निजादित्यादि अयुक्तम् । अर्थस्य दुर्वचत्वात् ।

तथा हि किं यावन्तो भ्रातरस्तावतः अंशान्विधाय स्वस्वांशात्तुर्यस्तुर्यो भागो देयस्तैः प्रत्येकामित्यर्थ उत भ्रातृभिः सर्वैः स्वस्वांशात्तुर्यं तुर्यं भागमुद्धृत्य देय इति । तत्राद्ये पक्षे भगिनीद्वित्वादावप्येकैकस्यैव प्रत्येकं चतुर्थो भागो देय इति सिद्धम् । द्वितीये पक्षे भगिनीद्वित्वादावपि सर्वैस्तैरुद्धृतं सकृद्भागमेव दत्तं सर्वा गृह्णीयुर्न तु प्रत्येकं पृथगुद्धार इति सिद्धम् ।

तत्र न तावदाद्यं युक्तम् । यत एको भ्राता यत्र भगिन्यश्च बह्व्यस्तत्र पृथक् ताभ्यश्चतुर्थांशदाने भ्रातुरकिञ्चनता स्यात् । किं चैका भगिनी बहवश्च यत्र भ्रातरस्तत्र तैस्तथा दीयमाने तदपेक्षया तस्या अधिकांशलाभेन पुत्रापेक्षया कन्याया न्यूनांशप्रापकवचनविरोधः ।

नापि द्वितीयः । भगिन्या एकत्वे भ्रातॄणां च बहुत्वे पूर्वोक्तदोषस्यैव सत्त्वात् । किं च भ्रातुरेकत्वे भगिनीनां च बहुत्वे भ्रातृभागस्यैकनिष्ठत्वेन तच्चतुर्थभागस्य स्वल्पत्वेन तत्राप्यंशकल्पनाया-मतितुच्छता स्यादंशस्येति 'दत्त्वांऽशं तु तुरीयक'मित्यस्याविषयः । भवतु वा तथा, तथापि तद्वचनविरोधः[1]।

प्रथमपक्षे प्रत्येकमपि भगिनीनां तुरीयांशदानात्तुरीयांशमित्यादि विरुद्धम्, अत्र तु तदभावात्तद्विरुध्येतेतीति कोऽयमेतस्यार्थ इति चेत्तत्राह । अस्यार्थ इति । एकवाक्यतया पूर्वानुषङ्गेणाह । भगिन्यश्चेति । चो भ्रातृसमुच्चये । दत्त्वेति । नेदं संस्कारोपयोगिद्रव्यदानपरं भ्रातृद्रव्यसंभवात् । तस्य भ्रातृकर्तृकत्वेन दानानपेक्षणाच्च । किं तु भ्रातुरंशवत्तासामपि ततः पृथगंशदानपरमित्यवश्यं वाच्यम् । तच्चायुक्तम् । तासां तद्वत्स्वत्वाभावात् । विशेषवचनाभावाच्च । तस्मादेतदनुवादान्यथानुपपत्त्यैव तत्स्वत्वाभावेऽपि तदनन्तरं तासामप्यंशोऽस्तीत्यनुमीयते । स च विनिगमनाविरहात् उभयोः ।

तदेव सामान्येनाह । अनेन दुहितरोऽपीति । अन्यथैतदनुपपत्तिरुक्तैवेति भावः । अथ प्रागुक्तचरममते पक्षद्वये दत्तदोषद्वयस्य वक्ष्यमाणनिराकरणोपपत्त्यर्थमुक्तं चरमैकदेश्युक्तमतद्वयनिराकरणपूर्वकं सोपपत्तिकमदोषं स्वमतमेतत्तात्पर्यभूतमाह । 'अत्र निजादंशादि'त्यादिना 'ब्राह्मणीपुत्रौ विभज्य गृह्णीत' इत्यन्तेन । अत्र मूलवाक्ये । तत्रेति पाठे उक्तबौद्धार्थानां मध्ये इत्यर्थः । इति इत्यस्य । उभयं कोडीकृत्याह । प्रत्येकमिति । अयं च निजादित्यस्यार्थः । अनेन शास्त्रीयव्यवच्छेदः । अयमर्थ इति । प्रागुक्तद्विविध इत्यर्थः । न भवतीति । प्रागुक्तदोषादित्यर्थः । पुत्रभागादित्यनेन पञ्चम्यन्तार्थः शास्त्रीय उक्तोऽग्रिमोऽग्रिमस्य ।

---

[1] क-ख-तस्य समुदायतद्वचनविरोधः ।

नन्वेवमपि कथनमात्रान्न ततोऽत्र पक्षे भेदः स्फुटतया भासते ऽत आह । **एतादिति** । **भव-तीति** । चतुस्त्रीति वक्ष्यमाणवाक्येन प्रतिपादितो भवतीत्यर्थः । तथा च स एवात्र निजोंऽश इति तत्प्रतिपादितांशाच्चतुर्थांशं तस्यै दत्त्वाऽवशिष्टं स्वयं यथासम्भवं गृह्णीयादिति निजांशस्य व्यवस्थि-तत्वे तत्तुरीयांशदानमात्रं तस्यै न तु प्राग्वद्व्यवस्थितमिति नात्र पक्षे प्रागुक्तदोषापत्तिरिति भावः ।

इदमेवोदाहरणबाहुल्यप्रदर्शनेन विशदयति । **तद्यथेत्यादिना** । **यद्गीति** यत्रेत्यर्थकम् । **तत्रेति** तदेत्यर्थकं वा । एवमग्रेऽपि । एतदभावे वक्ष्यमाणवाक्येन तत्राष्टावंशाः प्राप्ताः सन्तानभेदेनेति तुल्यांशलाभेन चत्वारश्चत्वारोंऽशा इति लाभेन फलितमाह । **सर्वमेव द्रव्यं द्विधा विभज्येति** । एवमग्रेऽपि बोध्यम् । एतद्वचनविषयमाह । **तत्रेति** । तयोर्मध्ये इत्यर्थः। **शेषं** सर्वम् । दानसाम्येऽपि ग्रहणवैलक्षण्यसूचक**स्तुः** । अत एव 'तदा पितृधनमिति' पाठः । एवमग्रेऽपि । यद्यपि भगिन्यश्चेति भ्रातृभिरिति च बहुवचनद्वयेनांशामित्येकवचनेन चानेकभ्रातृकर्तृकानेकभगिन्युद्देश्यकैकतुरीयांशकर्मक-दानलाभेन प्रत्येकं भगिनीनां भागसम्बन्धलाभो न, तथापि वक्ष्यमाण**मानवे** वीप्सापृथगाद्युक्तेस्तथे-त्याशयेनाह । **द्वौ भागौ द्वाभ्यां कन्याभ्यामिति** । एतेनैक एवांशो भगिनीभ्यां देय इति **मदन-पारिजातो**क्तमपास्तम् । कन्याबहुत्वे प्रागुक्तदोषापत्तेः । एवं चात्र 'अंशमिति' जातावेकवचनम् । **इति**स्तु समाप्तौ । एवं पुत्रबहुत्वे कन्याबहुत्वेऽपीत्याह **एवमिति** ।

विजातीयेष्वाह । **यदा त्विति** । अत्र साम्याभावेन प्रागवत् द्वेधा विभागासंभवादुक्तयुक्त्यैवाह । **सतधेति** । वस्तुतस्तु पुत्रस्यैवेत्याह । **क्षत्रियापुत्रभागानिति** । **शेषं**, सर्वम् ।

एवमुक्तवैपरीत्ये बहुत्वे च बोध्यमित्याह । **एवं जातीति** । तत्र जातिवैषम्ये भ्रातॄणां भगि-नीनां च संख्यासाम्ये इत्थं बोध्यम् । तद्यथा—ब्राह्मण्याः पुत्रः कन्यका च, क्षत्रियायाः पुत्रः कन्यका च, एवं वैश्याशूद्रयोरपि । एवं चाष्टावपत्यानि, चत्वारः पुमांसश्चतस्रः स्त्रियः । तत्र 'चतु-स्त्रीति' वक्ष्यमाणवाक्येन ब्राह्मणापत्ययोरष्टावंशाः, क्षत्रियापत्ययोः षट्, वैश्यापत्ययोश्चत्वारः, शूद्रापत्ययोर्द्वौ, एवं विंशतिभागान्कृत्वा ब्राह्मणीकन्यायै स्वजातिपुत्रविहितादंशचतुष्टयरूपान्निजाद्भागा-च्चतुर्थमंशं दद्यात्, क्षत्रियाकन्यायै स्वजातिपुत्रविहितादंशत्रयरूपान्निजाद्भागाच्चतुर्थमंशं दद्यात्, वैश्याकन्यायै स्वजातिपुत्रविहितादंशद्वयरूपान्निजाद्भागाच्चतुर्थमंशं दद्यात्, शूद्राकन्यायै स्वजाति-पुत्रविहितादेकांशरूपादेव निजाद्भागाच्चतुर्थमंशं दद्यात् । ततोऽवशिष्टं द्रव्यमेकीकृत्य ब्राह्मण्यादि-पुत्राः क्रमाच्चतुस्त्रिद्व्येकभागान् गृह्णीयुः । वैषम्ये तु भ्रातॄणां भगिनीनां च यावत्यो व्यक्तयः तावतीनां भ्रात्रादिव्यक्तीनां तावतः अंशान् चतुस्त्रीति क्रमेण कल्पयित्वा भगिनीभ्यः स्वस्वजातिपुत्र-विहितादंशाच्चतुर्थश्चतुर्थमंशं दत्त्वाऽवशिष्टं तत्सर्वद्रव्यं भ्रातरस्ते पुनश्चतुस्त्रीत्यादिक्रमेण गृह्णीयुरिति ।

केचिदुक्तरीत्यैव तुरीयमंशं कन्यायै दत्त्वा तेनैव विवाहः कार्यो न तु समुदितद्रव्येण विवाहो ऽशदानं च पृथगित्याहुः । तन्मतं खण्डयति । **न चेति** । **इति** इत्यस्य । **संस्कारेति** । विवा-हान्तेत्यादिः । **वृत्त्वेतीति** । व्ययीकृत्येत्यर्थः । यद्यप्येवं व्याख्याने दोषद्वयं प्रागुक्तमत्रैव, तथापि स्वमतं परसंमतमपीति सूचयन् दोषान्तरं च तत्र प्रतिपादयन्नाह । **मन्त्विति** । एतेन देशाचारात्

---

१ अग्रे १२५ श्लोके ।

व्यवस्थेति **मदनपारिजा**ताद्युक्तमपास्तम् । तदेवाह । **स्वेभ्योंऽशेभ्य इति** । तं प्रतिपादयन्नस्फुटत्वादिना स्वोक्तार्थपरतया व्याचष्टे । **अस्यार्थ इति** । तत्र कन्यात्वं स्वपितृनिरूपितं न तु स्वनिरूपितमित्याह । **भगिनीभ्य इति** । स्वेभ्य इत्यस्य व्याख्या । **स्वजातीति** । तथा च आत्मीयपरः स्वशब्दः । स्वात्स्वादंशादित्येव सिद्धे बहुवचनान्ततदुक्तिसामर्थ्यलभ्यं तत्स्वरूपमाह । **चतुर इति** । वक्ष्यमाणस्यार्थतो निर्देशः । ल्यब्लोपे पञ्चमी । तानभिलक्ष्येत्यर्थः । हेतुपञ्चमी वा । दानग्रहणयोः प्रत्येकसंबन्धलाभार्थं वीप्सादीत्याह । **स्वात्स्वादिति** । स्वशब्द आत्मीयपर इत्याह । **आत्मीयादिति** । चतुःशब्दश्चतुर्थपरो लक्षणयेत्याह । **चतुर्थं चतुर्थमिति** । इयं वीप्सा पृथक्पदलभ्या[1]। एवं चैतदुक्तिविरोधस्तद्व्याख्याने इति भावः ।

अत्रापि प्रागुक्तैकदेशिव्याख्यानं नेत्याह । **न चात्रेति** । **मनु**वाक्ये इत्यर्थः । उक्तहेतोः स्वेभ्योंऽशेभ्य इत्यस्यानर्थक्यापत्तेश्चेति भावः । प्रागुक्तसिद्धान्तमाह । **किं त्विति** । अत्रापि जातिवैषम्ये संख्यावैषम्ये च पूर्वोक्तैव व्यवस्थेत्याह । **जातीति** । ननु भगिनीनां प्रीतिदानमेव न त्वावश्यकमिति कथं विधिः प्रकर्षश्च अत आह । **पतिता इति** । **अदित्स**वो दातुमनिच्छवः । भ्रातृणामिति भावः ।

एवमुक्त्वा केचिन्मतेन प्रागवदत्रापि शङ्कते । **अत्रापीति** । **अपिः** पूर्वसमुच्चये । एवं सति एतद्विरोधस्तत्र व्याख्याने नेति भावः । अत एवाह । **स्मृतिद्वयेऽपीति** । **मनुस्मृ**तौ **याज्ञवल्क्यस्मृ**तावपीत्यर्थः । पूर्वानुक्तदोषान्तरमाह । **अदाने प्रत्यवायेति** । **मनुस्मृ**ताविति शेषः । तथा सति तदर्थत्वेनैवोपयुक्तावश्यकत्वे लब्धे ऽदाने प्रत्यवायश्रवणासङ्गतिः स्पष्टैवेति भावः ।

एवं दानावश्यकत्वे चरमप्रागुक्तैकदेशिमतव्याख्यानद्वयदोषापत्तिस्तद्वस्थेति कस्यचिदुक्तिं खण्डयति । **यदपीति** । **अंशेति** । स्मृतिद्वये चतुर्थांशेत्यर्थः । **तत्** तदपि । **उक्तेति** । स्वजातिपुत्राविहितादंशादित्यर्थेनेत्यर्थः । तदेव परोक्तव्यतिरेकमुखेनाह । **न ह्यत्रेति** । उपसंहरति । **अत इति** । **असहायेति** । स्वतन्त्रेत्यर्थः । प्रागुक्तहेतोः । **उचितामिति** । चतुरस्रामिति प्रचुरः पाठः । एवव्यवच्छेद्यं प्रागुक्तमेवाह । **न भारुचेरिति** । फलितं परमतात्पर्यमाह । **तस्मादिति** । **पितुः** प्रायणात् । **कन्याऽपि** सर्वा । **पूर्वं** मरणात् । अत्रोपसंहारे विभागे इत्यनुक्त्या उपक्रमेऽपि अनेन दुहितर इत्यत्रानुक्त्या तस्य पूर्वतोऽलाभेन च विभागे सत्यसति च दुहिता तच्चतुर्थांशभागिनी तदनन्तरमिति सिद्धम् । अत एवैकपुत्रस्थलेऽप्युपपादनं कृतमिति बोध्यम् ॥ १२४ ॥

सङ्गतिमाह । **एवमिति** । वचनबाहुल्यादाह । **प्रबन्धेनेति** । अस्य सम्भवमाह ।

## याज्ञवल्कीये १२५ श्लोकः ।

**तिस्रो वर्णेति** । **इति** इत्यनेन । एका स्वीया वर्तते एवेत्याह । **चतस्र इति** । दर्शिता इतीत्यादिः । आचाराध्याये इति भावः । **तत्र** तासु सतीषु । ननु पितुर्ब्राह्मणस्यैकत्वेन न वर्णभेदो ऽत आह । **वर्णशब्देनेति** । तत्र वर्णशब्दस्य नियतपुंस्त्वेनात्र स्त्रीषु लक्षणायामपि पदस्यैव तदङ्गीकाराद्गङ्गायां घोष इतिवन्न दोष इति भावः । 'बह्वर्थाल्पात्' (व्या० सू० ५–४–४२) इत्यस्याप्राप्तेराह । 'संख्यैकेति' अस्य पाणिनीयसूत्रस्य ( व्या० सू० ५–४–४३ ) संख्यावाचकादेकवचनान्ताच्च

१ क–पृथक्पदालभ्या ।

वीप्सायां शस् प्रत्ययः स्यादित्यर्थः । द्वौ द्वौ ददाति द्विशो ददातीति संख्योदाहरणं, माषश इत्येकवचनोदाहरणम् । यद्यपि ‘ एकवचनशब्देन परिमाणशब्दा एव गृह्यन्ते ’ इति **जयादित्ये**नोक्तं तथापि तदन्यस्यापि ग्रहणमिति **वामन**मतमेव युक्तम् । अत एव पदशः स्वरशो ऽक्षरश इत्यादि सङ्गच्छते । अनित्यप्रसङ्गस्त्वनभिधानाद्वारणीय इति भावः ।

तदेतदभिप्रेत्य द्वितीयविषयतामत्राह । **अधिकरणेति** । अधिकरणसप्तम्येकवचनान्तावित्यर्थः । एवं पदार्थमुक्त्वा वाक्यार्थमाह । **अतश्चेति** । तादृशात् ततः तत्र शसि चेत्यर्थः । स्युरित्यस्यैव स्पष्टार्था व्याख्या । **भवेयुरिति** ।

उक्तं विशदयति । **एतदिति** । **एकैकश इति** । चिन्त्योऽयं प्रयोगः, एकश इति तु पाठ इति केचित् । वस्तुतस्तु सोऽपि साधुरित्यन्यत्र स्पष्टमिति बोध्यम् । **तेनैव** ब्राह्मणेनैव । लभन्ते इत्यस्याग्रे सम्बन्धोऽग्रे यथायोग्यं तदध्याहारः । तेनैवोत्पन्ना इत्यस्याग्रे उभयत्राप्यनुषङ्गः ।

उत्तरार्धार्थमाह । **क्षत्रजा इति** । योग्यतयाऽऽह । त्रिद्व्येकेति । अस्य वैशद्यमाह । **क्षत्रियेणेति** । **विड्जा इति** । “ द्वौ विशौ वैश्यमनुजौ ” **इत्यमरः** ( ३-३-२१४ ) । प्राग्वदाह । **वैश्येनेति** । **तत्पुत्राणामिति** । तस्य शूद्रस्य शूद्रायामुत्पन्नानां पूर्वोक्तः—

‘ विभागं चेत्पिता ’इत्यादिना ‘ विभजेरन् सुता ’ इत्यादिना चोक्त एव विभाग इत्यर्थः ।

विशेषमाह । **यद्यपीति** । भूः शालिक्षेत्रादिका । यथा चैतत् तथाऽनुपदमेवोक्तम् । **बार्हस्पत्यमाह** । **न प्रेति** ।

तत्रापि विशेषमाह । **प्रतिग्रहेति** । तद्ग्रहणसामर्थ्यादित्यर्थः । तत्र सुताय इति जात्यभिप्रायं प्रत्येकाभिप्रायं वैकवचनमित्याह । **सुतानामपीति** । एवं च तत्रापि तेषां विभागोऽस्तीति भावः । अत्र हेत्वन्तरमप्याह । **शूद्रेति** । तस्य तद्भागस्य विशेषेण प्रतिषेधाच्चेत्यर्थः । तथा च आदिशब्देन वैश्य एवात्र न शूद्र इति भावः । तद्वचनं तदीयमेवेत्याह । **शूद्र्यामिति** । अत्र शूद्री न शूद्रभार्या । तथा सति तस्यां जातस्य कुण्डगोलकयोरन्यतरत्वेन भागानर्हत्वेनासङ्गत्यापत्तेः । अपि तु द्विजातिस्त्री शूद्रकन्या । केकयीतिवत्प्रयोगः । एतेन छान्दसः प्रयोग इत्यपास्तम् । द्विजातीत्युक्त्या शूद्रजातस्तु भागं स्वं लभते एवेति सिद्धम् । ननु भवतु तस्य तथा, तावताऽपि तेषां तत्र सा कुतः अत आह । **यदीति** । शूद्रापुत्रस्यैव शृङ्गग्राहिकया निषेधात् तेषां भागोऽस्तीति गम्यते इत्यर्थः ।

शूद्रापुत्रस्यांशदानपरमूलस्य तदीयवचनान्तरविरोधं तदीयन्यूनतां च परिहरति । **यत्पुनरिति** । यत्त्वित्यर्थः । **अस्येति** शेषे षष्ठी । **अपि**रेतज्जातीयस्मृत्यन्तरसमुच्चायकः । **किमपि** किञ्चिदपि । **प्रदत्तं** प्रसाददत्तम् । क्वचिदेवमेव पाठः । अत एवाग्रे तथैव वक्ष्यते । एवं सर्वथा तथैवांशभाक् न भवतीति भावः ।

एतेनानूढशूद्रापुत्रविषयं तदिति **मन्वोक्त**मपास्तम् । तस्यापि प्रकरणादूढापुत्रविषयकत्वसम्भवादन्यत्र प्रागुक्तरीत्या भागानर्हत्वाच्च । दासस्थले तदभावस्य वक्ष्यमाणत्वाच्च । **तदैकांशेति** । अत एव तत्र विशिष्य भूभागनिषेधोक्तिसाफल्यमिति भावः ॥ १२५ ॥

## याज्ञवल्कीये १२६ श्लोकः ।

सङ्गतिमाह । **सर्वैति** । चत्रजपः पुंसीत्यस्य प्रायिकत्वाच्छेषमित्युक्तिः । **यत्किञ्चित्,** पद्यात्मकम् । **परस्परेति** । सैर्वैरेवेत्यर्थः । स्वीये स्वीये बाधकाभावात् सामान्योक्तिलभ्यमाह । **समुदितेति । विभक्ते इति** सतिसप्तमी । तत्स्वारस्यादाह । **विभागेति** । यत्रेत्यस्य सर्वविभागे इत्यर्थः । अत एव साकांक्षत्वाच्छेषमाह । **यदिति । पुनःशब्दः** अप्यर्थे पश्चादर्थे वा । दृश्यते इति पद्योक्तं बोध्यम् । स्थित्यर्थमाह । **शास्त्रेति ।**

**अत्र चेति ।** अत्रापीत्यर्थः । **अपि**ना पूर्वसमुच्चयः । अत्रेत्येव पाठे पूर्वं यथातथा वाऽस्तु अत्र तु सर्वथा निषिद्ध इत्यर्थः । **वदता योगीश्वरेण ।** एवमग्रेऽपि । **उद्धारेति ।** 'ज्येष्ठं वा श्रेष्ठे' त्युक्त इत्यर्थः ।

केचित्तु विभागार्हैः समुदायद्रव्यापहारे कृतेऽपि तेषां न दोष इत्येतद्वचनतात्पर्यमित्याहुः । तत् खण्डयति । **एवमिति ।** उक्तरीत्येत्यर्थः । उक्तरीत्या श्रुतसमांशविभागविधानादिमात्रेणैव वाक्यस्य साफल्येनाश्रुतदोषाभावपरत्वकल्पनस्यानौचित्येन समुदायद्रव्यापहारेऽपि तेषां दोषोऽस्त्येवेति भावः ।

नन्वस्तु दोषः तथापि स ज्येष्ठस्यैव नान्येषां, **मनु**ना तथोक्तत्वादित्याह । **ननु मनुनेति । एवे**नान्यव्यवच्छेदः । तदेव स्पष्टार्थमाह । **न कनीयसामिति ।** तद्भिन्नानामित्यर्थः । **विनिकुर्वीत** तिरस्कुर्यात् । वञ्चयेत् इति यावत् । न तावदेवेत्याह । **अभागश्चेति** । एवमग्रेऽपि । नियमनं दण्डः । राजभिरिति बहुवचनेन देशान्तरगमनेऽपि तत्रत्यराजदण्डः सूचितः । वदतेत्यस्य **मनु**नेत्यत्रान्वयः । वस्तुतस्तदभावादाह । **संभावितेति ।** बहुव्रीहिः । ज्येष्ठत्वमेव तद्बीजम् । अत एवाह । **पित्रिति** । तदुक्तं **मनु**नैव– ( अ० ९ श्लो० १०८।११० )

" पितेव पालयेत्पुत्रान् ज्येष्ठो भ्रातॄन्यवीयसः । पुत्रवच्चापि वर्त्तेरन् ज्येष्ठे भ्रातरि धर्मतः ॥

"यो ज्येष्ठो ज्येष्ठवृत्तिः स्यान्मातेव स पितेव सः । अज्येष्ठवृत्तिर्यस्तु स्यात् स सम्पूज्यस्तु बन्धुवत् "॥ इति ।

**ज्येष्ठस्यापीति अपि**र्विरोधे । **वदता मनुना ।** ज्येष्ठपरतन्त्राणामिति षष्ठीतत्पुरुषः । **दण्डेति** । दण्डापूपिकसंबन्धिन्यायेनेत्यर्थः । रीत्येति पाठान्तरम् । अपूपानां समूह आपूपिकम् । 'अचित्तेति' ठक् (व्या. सू. ४।२।४७) । दण्डस्यापूपिकं दण्डापूपिकम् । तथा च यस्मिन्दण्डे आपूपिकं प्रोतं बद्धं वा स दण्डो यदि चोरादिभिरपहृतस्तदाऽऽपूपिकमपि सुतरामपहृतं यथा, तद्वदत्रापि ज्येष्ठस्य दोषे तेषां सुतरां स इत्यर्थः । तथा च ज्येष्ठादिपदमुपलक्षणमिति भावः ।

अत्रार्थे श्रुतिमपि मानत्वेनाह । **तथा चेति** । **श्रुतौ वै**शब्दो निश्चये । श्रुत्यर्थं प्रतिपादयन्नुक्तार्थं सविशदमाह । **यो भागिनमिति** । गृहीतसर्वभागे तदसंभवात् अस्तीत्येतत्स्वारस्याच्चाह ।

---

१ 'तदस्यास्त्यस्मिन्निति मतुप्' इति ( व्या. सू. ५।२।९४ ) सूत्रे अस्तीतिपदस्वारस्यादित्यर्थः ।
अयं भावः । 'अत इनिठनौ' ( व्या. सू. ५।२।११५ ) इति सूत्रेण मत्वर्थे इनिप्रत्ययविधानात् मतुब्विधायके तदस्यास्त्यस्मिन्निति सूत्रे च वर्तमानत्वार्थकस्य अस्तीतिपदस्य श्रवणात् इनिप्रत्ययस्य वर्तमानत्वार्थकतया गृहीतसर्वभागे भागवत्वस्यासंभवात् तदर्थकस्य इनिप्रत्ययस्य भागिनमित्यत्रासंगतिः इत्याशङ्क्य भागशब्दस्य भागार्हत्वे लक्षणया तद्वत्त्वस्य गृहीतसर्वभागेऽपि विद्यमानत्वान्नासंगतिरिति ।

**भागार्हमिति**। भागान्नुदते इत्यस्य व्याख्या। **भागादिति**। तस्य व्याख्या। **भागमिति**। भागिनमित्यस्य यमित्यादिरित्याशयेनाह। **स चेति**। **चो** व्युत्क्रमे वाक्यालङ्कारे इति भावः। स इत्युक्तं लक्ष्यार्थमाह। **नाशेत्यादि**। तृतीयवाक्यमाह। **यदीति**। स इत्यस्य चेनानुषङ्गः। आद्याथशब्दार्थमाह। **तदेति**। साकांक्षत्वादाह। **तस्येति**। द्वितीयाथशब्दार्थमाह। **चेति**।

तत्र तस्य तदभावं शङ्कते। **अथेति**। **आवहतीति**। जनयतीत्यर्थः। समुदायद्रव्ये स्वस्यापि स्वत्वसत्वात् अपहारदशायामपि स्वद्रव्यमित्येवं ग्रहणेनापहर्तुर्दोषो नेति भावः। **अवर्जनीयतयेति**। परस्वत्वस्येत्यादिः। यथा तत्र स्वस्वत्वं तथाऽन्येषामपि तदस्त्येवेति तस्य वर्जनासम्भवात्तद्दशायामन्यद्रव्यमपि सर्वथाऽपहृतमेवेति 'निषेधाश्च बलीयांस' इति न्यायेन परस्वं न गृह्णीयादिति निषेधशास्त्रानुप्रवेशादस्त्येव दोष इत्यर्थः।

अत्र दार्ढ्याय दृष्टान्तत्वेन षाष्ठन्यायमुपन्यस्यति। **यथेति**। षाष्ठतृतीयपादषष्ठाधिकरणसूत्रं "विप्रतिषिद्धं चाविशेषेण हि तच्छ्रुतिः" इति। तत्र अयज्ञिया वै माषाश्चणकाः कोद्रवा इति श्रूयते। तत्र संशयः। मौद्गं चरुं निर्वपेदिति विहितमुद्गाभावे प्रतिनिधित्वेन माषा ग्राह्या न वेति। तत्र पूर्वपक्षः। व्रीह्यभावे नीवाराः कोद्रवाः, मुद्गाभावे माषा ग्राह्याः, तत्त्वेन जातिसादृश्याभावेऽप्यवयवसादृश्यात्। यत उक्तनिषेधो माषादिरूपेण ग्रहणे प्रवर्तते, न तु मुद्गावयवोपादानेनावर्जनीयतया प्राप्तमाषाद्यवयवरूपेण, अतः प्रतिनिधित्वमेवेति। सिद्धान्तस्तु—माषादिजातीयस्य सर्वात्मना यज्ञसाधनत्वं तेन निरस्तम्। अयज्ञिया माषा इति सामान्यश्रवणात्। अतो नान्तरीयका अपि माषावयवा वर्ज्या एव। तस्मात्प्रतिनिधित्वेन ते न ग्राह्या इति।

तदेतदभिप्रेत्य तत्र तावदधिकरणपूर्वपक्षं संगृह्याह। **मौद्गे इति**। विकारे 'मुद्गादण्' इत्यण् ( व्या. सू. ४।४।२५ )। **विपन्ने** नष्टे। पुनस्तद्दौर्लभ्ये मुद्गेति शेषः। मुद्गेति माषावयवानां तदवयवसादृश्येन तदवयवबुद्ध्यैव ग्रहणान्न स्वरूपेणेत्यर्थः। अथ सिद्धांतं तथाऽऽह। **मुद्गेति**। अयज्ञिया इति सामान्येन माषजातिनिषेधात्तद्बुद्ध्या गृह्यमाणेष्वपि तेषु अवर्जनीयतया निषिद्धमाषजातीयावयवा अपि गृह्यन्ते एवेति निषेधप्रसर एवेत्यर्थः।

उक्तन्यायोऽत्रापीति दर्शयन् तन्मतखण्डनमुपसंहरति। **तस्मादिति**। 'वचनं यो वै' इत्यादि **न्यायः** षाष्ठः।

एतेन—परस्वत्वज्ञानपूर्वकं स्वस्वत्वहेतुं विना स्वस्वत्वारोपकः स्तेन इति लोकप्रसिद्धोऽर्थः। न चात्र[1] इदं मम इदं परकीयमिति विवेकः। द्रव्यस्याविभक्तत्वात्। तथा चात्र साधारणधने तदसम्भवादिदमयुक्तमिति **प्राच्यो**क्तमपास्तम्। **मन्व**र्थाद्यज्ञानात्। प्रच्छन्नं वेति **कातीय**स्तेयलक्षणे द्रव्ये परसम्बन्धमात्रं विवक्षितमिति न तद्विरोधः। अन्योन्येति वचनबलात्तथेति तु न। तस्यार्थवत्त्वस्योक्तत्वात्। एतेन **कातीये** परशब्दादात्मीयत्वव्यवच्छेदेनैव तत्स्वत्वापगम इत्यपि तदुक्तमपास्तम् ॥१२६॥

## याज्ञवल्कीये १२७ श्लोकः।

यथाश्रुते पूर्वसङ्गत्यभावादाह। **द्व्यामुष्यायणस्येति**। तथा च तस्य पूर्वभागापवादभूतभागविशेषोपयोगित्वमेव पूर्वसङ्गतिरिति भावः। **धर्मतः** शास्त्रतः। अस्य शाब्दार्थं तावदाह **अपुत्रामिति**। ( याज्ञ॰ १। ६८। ६९ )

---

१ ख-क-फ-न च नेदं ममेदम्।

" अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया । सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात् ॥
" आ गर्भसम्भवात् गच्छेत्पतितस्त्वन्यथा भवेत् । अनेन विधिना जातः क्षेत्रजोऽस्य भवेत्सुतः ॥ "

इति आचाराध्याये विवाहप्रकरणे मूलोक्तविधिनेत्यर्थः । स्वमन्वाद्यनुरोधेनात्र शेषोऽयम्[1] । **भार्यायां** पाणिग्रहणयोग्यायाम् । तत एव साकांक्षत्वादाह । **गुर्विति** । अपेर्नैष्फल्यं सूचयन्नाह । **उभयोरिति । इत्यस्यार्थः** इत्यस्य शाब्दोऽर्थः ।

नन्वेतावताऽपि द्व्यामुष्यायणपदानुक्तेः कथमस्य तत्त्वमित्याशङ्कायां अपुत्रेणेत्यादिसूचितं तत्त्वमेव रिक्थग्रहणादौ निमित्तं नान्यदिति तत् सूचितं द्व्यामुष्यायणत्वमिति प्रतिपादयन् अपुत्रेणेत्यादेः प्रत्युदाहरणं च दर्शयिष्यंस्तात्पर्यार्थमाह । **यदाऽसाविति ।** तथा च इत्यस्यार्थ इत्यस्य मध्यमणिन्यायेनात्राप्यन्वयः । **इति** एवं वक्ष्यमाणोऽस्याभिप्रायार्थ इत्यर्थः । **अपिः** स्पष्टार्थः । एवमग्रेऽपि । **पुत्रार्थं** पुत्रोत्पत्त्यर्थम् । **स इति ।** यत इति शेषः । तस्यैव व्याख्या । **द्व्यामुष्यायण इति ।** अत इति शेषः । प्रत्युदाहरणमेवाह । **यदा त्विति ।** तत्रापि विशेषमाह । **स चेति ।** अद्व्यामुष्यायणश्चेत्यर्थः । तदानीं पुत्रसत्त्वे तदभावेन तदभावेऽपि अनन्तरं तन्नाशादन्यस्याधिकारिणोऽभावात्तथाऽयमेवाधिकारीति सूचयितुमाह । **नियमेनेति ।** पिण्डदो वेति **वाशब्दः** चार्थे ।

मूलानुक्तं विशेषं कथयितुं उदाहरणप्रत्युदाहरणयो**र्मनु**संमतिमाह । **यथोक्तमिति ।** तत्राद्ये तामाह । **क्रियेति ।** यद्विशेषकथनार्थं मनूक्तिः तस्य प्राधान्यं सूचयन्सप्रतीकधारणमिदं व्याचष्टे । **क्रियेति ।** एवमग्रेऽपि । अत्र क्रियापदं विवक्षितम् । संवित्स्वरूपमाह । **अत्रोत्पन्नमिति । अत्र** क्षेत्रे । **उत्पन्नम्** उत्पत्स्यमानम् । **संवित्** प्रतिज्ञा एकवाक्यता । पंचम्यन्तार्थोऽयमित्याह । **अङ्गीकरणादिति । क्षेत्रस्वामिनेति ।** विद्यमानेऽपि तस्मिन् षण्ढत्वाभिप्रायमिदम् । इदमपि स्वरीत्यैव । अन्यथा त्विदमुपलक्षणमपि बोध्यम् । बीजार्थमित्यस्य व्याख्या **बीजावपनार्थमिति ।** अर्थादाह । **बीजिने इति ।** यदः तदाकांक्षत्वाच्छेषेणाह । **तस्मिन्क्षेत्रे इति ।** तस्येत्यस्यार्थमाह । **उत्पन्नस्यापत्यस्येति ।** तत्र इहेत्यस्य शास्त्रे इत्यर्थः । तत्र प्रयोगस्यार्षत्वात्तदनुरोधेन स्वयमपि तथैवाह । **बीजीति ।** भागिनावित्यस्य यथाश्रुतार्थासम्भवादाह । **स्वामिनाविति ।**

द्वितीये तामाह **तथेति । तुः** उक्तवैलक्षण्ये व्युत्क्रमे च । निर्धारणे षष्ठीद्वयम् । अत एव बहुवचनम् , उदाहरणान्तरविवक्षया च । तथेत्यनेन तदर्थं दीयते यत्र परक्षेत्रे यदपत्यमुत्पाद्यते इत्यस्याध्याहारः । तथा च क्षेत्रिणां बीजिनां च मध्ये ऽन्यतमेनापि फलमनभिसन्धाय तु यत्क्षेत्रं तेन तदर्थं दीयते तत्र तेन यदपत्यमुत्पाद्यते सोऽपत्यरूपोऽर्थः क्षेत्रिणामेव । तत्र हेतुर्बीजाद्योनिर्बलीयसीति । तत्र हेतुः **प्रत्यक्षमिति ।** तथा लोके दृश्यते इत्यर्थः । फलमत्र संविद्रूपमित्याह **अत्रोत्पन्नमिति ।** तत्र तस्य हेतुत्वार्थमाह **यत इति ।** तत्र प्रत्यक्षमिति हेतुरिति सूचयन्नाह । **गवेति ।**

तदप्युक्तं **मनु**नैव— ( अ० ९। श्लो० ५४।५५ )

" ओघवाताहृतं बीजं यस्य क्षेत्रे प्ररोहति । क्षेत्रिकस्यैव तद् बीजं न वप्ता लभते फलम् ॥
" एष धर्मो गवाश्वस्य दास्युष्ट्राजाविकस्य च । विहङ्गमहिषाणां च विज्ञेयः प्रसवं प्रति " ॥ इति ।

---

१ ख–फ–विशेषोऽयम ।

**मेधातिथिस्तु—** ( अ० ९।५१ )

" तथैवाक्षेत्रिणो बीजं परक्षेत्रप्रवापिणः । कुर्वन्ति क्षेत्रिणामर्थं न बीजी लभते फलम् ॥ "

इति अविशेषेणोक्तस्य क्षेत्रिणां फलं न बीजिन इत्यस्य विशिष्टविषयत्वमाह । " **फलं त्विति ।** तयोर्मिथो यत्र फलानभिसन्धानं तत्र क्षेत्रिणां प्रत्यक्षमर्थो निश्चितं फलम् । प्रत्यक्षशब्देन निःसन्दिग्धतामाह । यतो बीजाद्योनिर्बलीयसी । क्षेत्रमधिकं इत्यर्थः । अनभिसन्धाने क्षेत्रिणः फलमुक्तम् । अभिसन्धाने किं बीजिन उतोभयोरिति संशये उभयोरित्याह । **क्रियेति ।** एवमेवैतादिति यो निश्चयः सन्धिलक्षणः सा क्रिया तदङ्गीकरणात् बीजार्थं बीजकार्यफलनिष्पत्त्यर्थं यद्दीयते सामर्थ्याद् बीजमिति गम्यते तस्येदं द्वावपीत्याद्यर्थं " इति व्याचख्यौ ।

स्वमतमुक्त्वा प्राग्वदत्रापि आचार्यमतमाह । **अत्रापीति ।** अपिना विवाहप्रकरणोक्तसमुच्चयः । **इतरस्येति ।** विवाहिताविषयस्येत्यर्थः । तमेवाह । **देवराद्वेत्यादिना साधव इतीत्यन्तेन ।** तत्रादौ तस्या नियोगमाह । **देवरादिति ।** तत्सकाशादित्यर्थः । **सम्यक्** यथाशास्त्रम् । **ईप्सिता** पुत्ररूपा । **अधिगन्तव्या** प्राप्तव्या । **परिक्षये** सति । अनेन आपदुक्ता । तस्य नियोगमाह । **विधवायामिति । वाग्यतो** मौनी । **निशि** गच्छन्सन्नैकमित्याद्यर्थः ।

अत्र **मेधातिथिः ।** सन्तानशब्देन पुत्रः, कार्यक्षमत्वात् । अनेनापदुक्ता । अए एव—( **मनु०** अ० ९।५८ )

" ज्येष्ठो यवीयसो भार्यां यवीयान्वाऽग्रजस्त्रियम् । पतितौ भवतो गत्वा नियुक्तावप्यनापदि ॥ "

इत्यनेन मिथो भार्यागमने ज्येष्ठानुजयोः पातित्यमनापदि सत्यपि नियोगे पूर्वमुक्तम् । **नियुक्तया** अपत्योत्पादने ऽनुज्ञातया गुरुभिः । तथा स्मृत्यन्तरोक्तेः । सम्यगित्यनेन वक्ष्यमाणघृताभ्यङ्गादिनियमानुवादः । ' गन्तव्येति ' विधौ कृत्यः । ईप्सिताशब्देन कार्यक्षमतामाह । तथा च दुहितरि अन्धबधिरादौ च जाते पुनर्नियोगो ऽनुष्ठेयः । विधवाग्रहणमतन्त्रम् । क्लीबादिरूपे पत्यौ जीवत्यपि एष एव विधिः । यतो वक्ष्यति— ( **मनु०** अ० ९।६३ )

" नियुक्तौ यौ विधिं हित्वा वर्तेयातां तु कामतः । तावुभौ पतितौ स्यातां स्नुषागगुरुतल्पगौ ॥" इति ।

**निशीति** प्रीत्याद्यालोकननिवृत्त्यर्थम् । वचनान्तरेणैव दिवोपगमप्रतिषेधात् " इति ।

पूर्वविहितनियोगप्रतिषेधमाह । **नान्यस्मिन्निति ।** पतिभिन्ने इत्यर्थः । **नोद्वाहिकेष्विति ।** पूर्वशेषोऽयमर्थवादः । विवाहकर्मणि तत्र तत्र एवमेव मन्त्रप्रयोगः ।

" अर्यमणं नु देवं कन्या अग्निमयक्षत । मया पत्या जरदष्टिः मया पत्या प्रजावतीति "

नैवं श्रूयते, मयाऽत्र नियुज्यसे ततो जनयेति । तादृशमन्त्रग्रहणेन मन्त्रार्थवादा अपि नैवंविधाः सन्तीति दर्शितम् । तदेवाह । **न विवाहविधाविति । अयमिति ।** अयमप्यर्थवाद एव नियोगप्रतिषेधशेषः । अविद्वद्भिः सम्यक्शास्त्रमन्त्रालिङ्गाद्यनभिज्ञैरयं पशुधर्मः सन्नत्यन्तगर्हितो मनुष्याणामपि प्रोक्तः प्रवर्तितः, सोऽपि इदानींतनो नानादिरित्याह । **वेने राज्यं प्रशासतीति ।** राष्ट्रं पालयति सतीत्यर्थः । द्विजैर्हि विद्वद्भिरिति पाठे विगर्हितोऽपि विद्वद्भिर्मनुष्याणां प्रोक्तः, पशूनामेष धर्मो भ्रातृस्त्रीगममं नाम, स च प्रवृत्तो वेनस्य राज्ये इत्यर्थः । तदेवाह । **स महीमिति । भुञ्जन्** पालयन् । ननु राजर्षिप्रवरस्याखिलमहीपालकस्य कथं तत्करणमत आह । **कामोपहतेति ।** कामेनोपहता चेतना यस्येत्यर्थः । स्पष्टार्थम् । अर्थवादमाह । **तत इति ।**

**मेधातिथि**मतं खण्डयति । **न चेति** । अयं हि तदाशयः। नान्यस्मिन्निति निषेधो **मृतभर्तृ**-काया एव न क्लीबादिजीवत्पतिकायाः तेन भिन्नविषयत्वमिति न । सन्तानविच्छेदस्य निमित्तस्य तत्र श्रवणेन तस्योभयत्र तुल्यत्वात् । घृताभ्यङ्गादिनियमस्यापि तत्राभावापत्तेश्च । तथा च विधिवत् निषेधेऽपि विधवाग्रहणस्यातन्त्रत्वेन निषेधस्याविशिष्टत्वेन देवराद्वेत्यादिविधेः नान्यस्मिन्निति निषेधस्य चैकविषयत्वलाभेन षोडशिग्रहणाग्रहणवद्विकल्पः । अयमपि अपत्योत्पादनविधेर्नित्यत्वे बोध्य इति ।

**नियोक्तॄणामिति** । अयमाशयः । तुल्यार्थास्तु विकल्पेरन्नित्युक्तेः समयोर्विकल्पः । अत्र तु " अन्यस्मिन् हि नियुञ्जानाः " इति तेषां निन्दाश्रवणान्निषेधे च तदभावान्न समता विधिनिषधयोः । किंच पुत्रेण लोकान् जयतीत्येवमादिफलोऽपत्योत्पादनविधिः । तथा चासत्यपत्ये तत्कार्यस्यौर्ध्व-देहिकादेरुपकारस्याभावात् सत्यपत्ये भावाद्भिन्नफलत्वम् । अतो न विकल्पः । षोडशिग्रहणादौ तूभ-यत्र निन्दाया अश्रवणादङ्गभूयस्त्वेन फलभूयस्त्वेऽपि प्रधानकार्यसिद्धावविशेषाच्च समत्वेन तयो-र्विकल्प इति ।

तत्र निन्दायाः प्रागुक्तत्वेन व्यभिचारदोषांशे संयमप्राशस्त्ये च **मनु**संमतिमाह । **यथा मनु-रेवेति** । प्रतिषिध्य ०िभ्यतीत्यत्रान्वयः । अत एवाहेत्यपपाठः । द्विविधमन्याश्रयणं, जीवनार्थं स्वर्गफलकपुत्रार्थं च । तत्राद्ये आह । **काममिति** । यथेच्छमित्यर्थः । **क्षपयेत्**, कृशीकुर्यात् । **पुष्पेति** । अबहुप्रकृतित्वादेकवत् न[1] । शुभैरित्यनेन निषिद्धनिरासः । **नामापीति** । आश्रयणा-दिकं तु दूरापास्तमेवेति भावः ।

द्वितीये आह । **आसीतेति** । आङ् मर्यादायाम् । अनेन नैष्ठिकव्रतमुक्तम् । **क्षान्ता** क्षमावती । **नियता** संयता । **एकपत्नीनाम्** । एकपतिकानां **अरुन्धत्यादीनाम्** । **अनुत्तमं** सर्वोत्कृष्टं नैष्ठिकत्वादेव । दृष्टान्तं वक्तुं वृत्तमाह । **अनेकेति** । **कौमारेति** । बाल्यादारभ्य तद्व्रत-चारिणामित्यर्थः । अत एव तत् दृष्टान्तेन द्रढयति । **मृते इति** । व्यवस्थितेति विना मध्ये विच्छे-दाभावः सूचितः । **स्वर्गमिति** । सूर्यमिति पाठान्तरम्, आर्चिरादिमार्गप्रदर्शकम् ।

एवं संयमप्राशस्त्यमुक्त्वा तद्दोषमाह । **अपत्येति** । **भर्तारं** मृतं जीवन्तं च । **इह** भूलोके । तत्खण्डनं उपसंहरति । **तस्मादिति** ।

**एवं** उक्तप्रकारेण । **धर्म्ये इति** । धर्मादनपेत इत्यर्थः । अन्यथा तत्कथनस्य निर्विषय-त्वापत्तेरिति भावः । **आहेति** । **मनु**रेवेति भावः । अत्र सर्वत्र वर्तमानत्वं स्वव्यवस्थाकालापेक्षया बोध्यम् । **वाचा सत्ये कृते** वाग्दाने निर्वृत्ते । एकेन वाचा दत्ताऽन्येन तथैव प्रतिगृहीतेति यावत् । ननु एवमपि पाणिग्रहणाभावात्कथं पतित्वमाह । **यस्मै इति** । यमुद्दिश्येत्यर्थः । तत्पित्रादये इति भावः । **प्रतिग्रहमिति** । पाणिग्रहणामित्यर्थः । क्वचित्तथैव पाठः । **वचनात्** प्रतिपदपाठित**मनु**-वाक्यात् । अस्मादेव गम्यते इति पाठान्तरम् ।

" श्यालाः स्युर्भ्रातरः पत्न्याः स्वामिनो देवृदेवरौ । " ( २।६।३२ )

**इत्यमरादाह** । **ज्येष्ठः कनिष्ठो वेति** । निज इत्यस्य व्याख्या **सोदर इति** । एव-मग्रेऽपि । पूर्वश्लोकोक्तम् " अनेन विधानेन " इति यद्यपि **मेधातिथि**ना वक्ष्यमाणेन विधानेनेत्येवं

---

१ फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानां बहुप्रकृतिरेव द्वन्द्व एकवदिति वार्त्तिकेन **बहुप्रकृतिके एव एकवद्भावस्य** नियमात् पुष्पमूलफलैरित्यत्र पुष्पं च मूलञ्च फलं चेति विग्रहकरणात् **बहुप्रकृतिकत्वाभावेन नैकवद्भावः** ।

तत्रैव योजितं तथापि तथा तत्रानुपयोगादाह । **अनेनेति ।** गच्छेदित्यत्रान्वयोऽस्य । तस्या अपि विशेषान्तरमाह । **शुक्लेति । व्रतं** सङ्कल्पः । स च त्रिविध इत्याह । **मनोवागिति ।** शुचित्वमाह । **संयतामिति । मिथो** इत्योदन्तमव्ययम् । तदर्थमाह । **रहसीति ।** आप्रसवादित्यस्य निषेधेन यथाश्रुतानुपपत्तेरर्थमाह । **आगर्भेति । ऋतावृताविति ।** पृथक् पृथगित्यपपाठः । सकृत्सकृदित्यस्य व्याख्या । **एकैकवारमिति ।** भजेतेत्यस्यार्थो **गच्छेदिति ।**

ननु तामनेनेत्यनेन विवाहस्य विहितत्वात्सा तद्भार्या, स च तत्पतिरिति दाम्पत्यसम्पत्त्या तदुत्पन्नस्तयोरौरस एव स्यान्न पूर्वोक्तोऽत आह । **अयं चेति ।** केवलं परार्थः स्वपरार्थो वा वाचनिको यथापूर्वं तन्नियमभिन्नो विवाहसंस्कार इत्यर्थः । अत एवाह । **घृतेति ।** नियुक्ताभिगमने यथा घृताभ्यङ्गादिकमङ्गत्वेन विधीयते तथाऽयं विवाहोऽपि नियुक्ताभिगमनेऽङ्गं न स्वातन्त्र्येण प्रधानकर्म । येन दाम्पत्यप्रसंगः । पुनर्भूत्वादूढाया भार्यात्वासम्भवात् । अत एव तदग्रे **मनुः**—( अ० ९।७१ )
" न दत्त्वा कस्यचित्कन्यां पुनर्दद्याद्विचक्षणः । दत्त्वा पुनः प्रयच्छन् हि प्राप्नोति पुरुषानृतम् ॥"इति ।

'पुरुषेति । मनुष्यहरणे यत्पापं तत्तस्य भवतीत्यर्थः । तथा च दानाभावे कथं भार्यात्वम् [1] अतो न स औरसः पुत्रोऽपि तु क्षेत्रज एव क्षेत्रस्वामिनः संविद्भावे । तत्सत्त्वे तूभयोरपि । तत्रापि बीजिन औरससमो नौरस इत्यग्रे स्फुटीभविष्यतीति भावः । तदाह । **अत इति ।** आगर्भग्रहणादित्युक्तेः सकृद्गमनोपदेशाच्च ' यस्मै वाग्दत्ता तदपत्यं भवतीति ' **कुल्लूकभट्टः ।**

**इत्थमाचार्यमतं** प्रतिपादितम्, ' अत्रापीत्यादिनोभयोरपि इत्यन्तेन ' । यद्यप्यत्र तत्त्वेन नोक्तं किन्तु सामान्येन तथाप्याचाराध्याये स्वयं स्पष्टं तथैवोक्तमिति तथैव बोध्यम् । वस्तुतस्तु नेदं युक्तम् ।

" अद्भिश्च वाचा दत्तायां म्रियेतादौ वरो यदि । न च तौ दम्पती स्यातां कुमारी पितुरेव सा ॥ "

इति **वसिष्ठ**विरोधापत्तेः । " न च मन्त्रोपनीता स्यात् " इति तृतीयपादे पाठान्तरं, " कुमारी पुनरेव सा " इति चतुर्थपादे । किं च वाग्दानोत्तरं वरे देशान्तरं गतेऽपि हि विशेषो **नारदे**नोक्तः स विरुध्येत । ( अ. १२ श्लो. २४।२-३ )

" प्रतिगृह्य तु यः कन्यां वरो देशान्तरं व्रजेत् । त्रीन् ऋतून् समतिक्रम्य कन्याऽन्यं वरयेद्वरम् ॥
" स्त्रीपुंसयोस्तु सम्बन्धाद्वरणं प्राग्विधीयते । वरणाद्ग्रहणं पाणेः संस्कारोऽपि विचक्षणैः ॥
" तयोरनियतं प्रोक्तं वरणं दोषदर्शनात् " । इति ।

**प्रतिगृह्य** वाचा दत्तां स्वीकृत्य । संवत्सरमतीति पाठान्तरम् । स्त्रीपुंसयोः संसर्गात् प्राक् त्रितयं क्रियते, वरणं पाणिग्रहणं सप्तपदीप्रक्रमश्चेति । तत्र वरणं नाम वरस्य सम्प्रदानत्वाय कन्यादात्रा प्रार्थनम् । तदेव च वाग्दानम् । एवं स्थिते तयोः पाणिग्रहणसप्तपदीप्रक्रमयोः पूर्वभावि यद्वरणं तदनियतमनियामकमित्यर्थः । तयोरेव भार्यात्वोत्पादकत्वादिति भावः । अत्र **मनु**रनुपदमेव स्फुटीभविष्यति । दोषेति । अस्यार्थः वरणस्यानियामकत्वमपि पूर्ववरस्य दोषे सत्येवेतीति । **इदं** च **माधवीये** स्पष्टम् । एतदेकवाक्यतयैव **माधवेन**—

---

१ अ. १७।७२

" वरयित्वा तु यः कश्चित्प्रणश्येत्पुरुषो यदा । रक्तागमांस्त्रीनतीत्य कन्याऽन्यं वरयेत् पतिम् ॥"

इति **कात्यायनो**क्तं । प्रणश्येद्देशान्तरं गच्छेत् अन्यथा प्रतीक्षावैयर्थ्यापत्तेरित्येवं व्याख्यातम् । वरामिति पाठान्तरम् । मन्त्रोपनीता पाणिग्रहणमन्त्रजन्यसंस्कारवती । इत्थं एतदेकवाक्यतयोक्त**नारदीये** ऋतुपदेन रजोदर्शनमेव न तु कालः । एवं च संवत्सरमतीति पाठान्तरमयुक्तमेवेति बोध्यम् । तथा च पाणिग्रहणादिकं विना वाचा दानमिवाद्भिरपि दानं न भार्यात्वोत्पादकमित्यर्थः । कुमारी पितुः अन्यस्मै यादृशसम्बन्धेन पित्रा विवाह्यते तादृक्पितृसम्बन्धवती । तथा च न तस्या वैधव्यम् । एतत्परमेव **यम**वाक्यं पूर्वाध्याये उक्तं तादृशम् । तथा च **पराशरोऽपि**—

" नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ । पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥ " इति ।

वाग्दानान्तरं पाणिग्रहणात्प्राक् पतौ सम्भावितोत्पत्तिकपैतित्वे पूर्वस्मिन्वरे नष्टे सति लक्षणया दूरदेशगमनेनापरिज्ञातवृत्तान्ते सतीत्यर्थः । एवं दुष्टे पूर्ववरे वाग्दत्ताऽपि वरान्तराय देयेत्यपि सिद्धम् । एवं च "वाग्दत्ता, मनोदत्ता, अग्निं परिगता, सप्तमं पदं नीता, भुक्ता, गृहीतगर्भा, प्रसूता चेति सप्तविधा पुनर्भूः तां गृहीत्वा न प्रजां न धर्मं विन्देदिति" **बोधायनोक्तो** वाग्दत्तामनोदत्तयोर्निषेधः पूर्ववरस्य निर्दोषत्वे सति बोध्यः । अत एव **नारदः**— ( अ० १२।३२ )

"दत्तां न्यायेन यः कन्यां वराय न ददाति ताम् । अदुष्टश्चेद्वरो राज्ञा स दण्ड्यस्तत्र चोरवत् ॥"

इति तत्रैव दण्डं विधत्ते । प्रदानं स्वामित्वहेतुर्न तु वाग्दानम् । तथा च **मनुः** ।

" मङ्गलार्थं स्वस्त्ययनं यज्ञश्चासां प्रजापतेः । प्रयुज्यते विवाहेषु प्रदानं स्वाम्यकारकम् ॥ " ( अ० ५।१५२ )

" पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् । तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे ॥ " इति । ( अ० ८।२२७ )

स्वस्त्ययनं कुशलेन कालातिवाहनहेतुः करणसाधनत्वात् कनकधारणादि स्वस्ति भवन्तो ब्रुवन्त्वित्यादि च यत्, यश्च प्रजापतिदेवताको वैवाहिको होमस्तत्सर्वं मङ्गलार्थम् । अभिमतार्थसिद्धिर्मङ्गलं तदर्थम् । निष्ठा भार्यात्वसमाप्तिरूपा । प्रतिगृह्य वाग्दानेन गते वरे ऋतुत्रयप्रतीक्षणादिकं मुख्यप्रागुक्तकालादूर्ध्वमपि दात्रा अदीयमानत्वविषयमेव । " गम्यं त्वभावे दातॄणा " ' मित्याद्येकवाक्यत्वात् । तस्माद्वाग्दानस्थले उक्त एव प्रकारभेदः । ' अपुत्रां गुर्वनुज्ञात ' इति ' अपुत्रेण परक्षेत्रे ' इति च मूलं विवाहिताविषयमेव । तथैव च व्याख्यातं व्याख्यात्रा । **मनू**क्तनियोगोऽप्येतद्विषय एव । अत एव तत्र विधवापदोक्तिस्वारस्यम् । " नान्यस्मिन्निति " निषेधस्तु देवरसपिण्डसगोत्रान्यविषयकः । क्रमोक्त्या स्वरसतस्तथैव प्रतीतेः । एतस्यैव पोषकं " नोद्वाहिकेष्विति " प्रागुक्तनियोगान्यसामान्यनियोगाद्यभावबोधकम् । एकं पुत्रमित्याद्युक्तपोषकमेव । **अयमिति** । अत एव पशुधर्म इत्युक्तम् । स च वारं वारं नियोजनादिरूपः । तदेव द्रढयति । **तत इति** । सामान्येनोक्तनियमानादरेण पुनः पुनस्तदर्थं नियोजयतीत्यर्थः । अत एव व्यभिचारदोषश्रवणस्य संयमप्राशस्त्यस्य चोपपत्तिरिति न तद्विरोधः । " यस्या म्रियेतेति " तु देवरसत्वेऽन्यस्मै न देया किंतु तस्मा एव

---

१ फ-परत्वे ।

देयेत्येवंपरम् । अत एव " यथाविधीति " पदं सर्वं सफलम् । पुनरुपनयने विशेषवदत्र पुनर्विवाहे न विशेष इति यथाविधीत्युक्तम् । अधिगम्येत्यनेन दांपत्यमुक्तम् । शुक्लेत्यादिना तस्यामदुष्टात्वं, भजेतेत्यनेन यावज्जीवं रमणाद्युक्तम् । अत एव आप्रसवादित्युक्तिर्वीप्साद्वयं च। अन्यथा तस्य सामान्यसिद्धत्वादेव वीप्सानर्थक्यं स्पष्टमेव । एवं च प्रधान एवायं विवाहो नाङ्गम् । अत एवानेन विधानेन विन्देतेत्युक्तम् । देवर इति पतिरिति च सूत्रशाटकवत् भाविसंज्ञया । प्रागुक्त**कात्यायनीये** पतिमितिवत् । एवं च **कुल्लूक**भटोक्तमेव युक्तम् । एवं शुल्कदमरणे **मनुः**—( अ० ९।९७ )

" कन्यायां दत्तशुल्कायां म्रियेत यदि शुल्कदः । देवराय प्रदातव्या यदि कन्याऽनुमन्यते ॥ "

इति । अनेन च तस्मै दानं स्पष्टमेवोक्तम् । यदि कन्येत्यनेन तथा तदनुमतौ देवराय देया, तदन्यानुमतौ तदन्यस्मै देया, विवाहमात्राननुमतौ तु कस्मा अपि न देयेति, तया नैष्ठिकव्रतमेव कर्तव्यमिति सूचितम् ।

शुल्कदातुर्देशान्तरगतौ तु **कात्यायनः**—

"प्रदाय शुल्कं गच्छेद्यः कन्यायाः स्त्रीधनं तथा। धार्या सा वर्षमेकं तु देयाऽन्यस्मै विधानतः ॥ "

" अथ प्रवृत्तिरागच्छेत् प्रतीक्षेत समात्रयम् । अत ऊर्ध्वं प्रदातव्या कन्या ऽन्यस्मै यथेच्छतः ॥ "

इति । अत्र धार्येत्यनेन धार्यत्वेन ततः पूर्वमपि देयेति सूचितम् । बहुभिर्निर्दोषैर्वरणे कृते विशेषमाह **स** एव—

"अनेकेभ्योऽपि दत्तायामनूढायां तु यत्र वै । पुराऽऽगतश्च सर्वेषां लभेताद्यो वरस्तु ताम् ॥ "

" पश्चाद्वरेण यद्दत्तं तस्याः प्रतिलभेत सः । अथागच्छेत्समूढायां दत्तं पूर्ववरो हरेत् ॥ "

इति । वरो विवाहार्थोपस्थितस्तेन यच्छुल्कं दत्तं तदेव लभेतेत्यर्थः । तत्र वै पुरागतश्च सर्वेषां लभते तदिमां सुतामिति पाठान्तरम् । अन्यस्मै दत्तायां कन्यायां पूर्ववरोऽप्यायाति तदाऽनूढां तां लभते, ऊढायां तु स्वदत्तं द्रव्यमेव लभते, न तु कन्यामित्यपि सिद्धम् । अत एव तस्माद्वि**ज्ञानेश्वरीय**मूलार्थप्रतिपादनमेव युक्तम् । अत एव न स्वपूर्वविरोधः । अत्रापि प्राग्वत्तथावाच्ये तदनुक्तिः प्राक् तथोक्तत्वात् । उक्तनिष्कर्षाकथनबीजं त्वस्य 'देवराच्च सुतोत्पत्तिरिति' कलिवर्ज्येषु गणनात् अनास्थारूपमेव ।

"उद्वाहिताऽपि सा कन्या न चेत्संप्राप्तमैथुना । पुनः संस्कारमर्हन्ती यथा कन्या तथैव सा ॥."

इति **नारदीय**मपि ऊढायाः पुनरुद्वाहमिति कलिनिषिद्धमेव । न च कलिनिषिद्धस्यापि युगान्तरीयधर्मस्यैव 'नष्टे मृते' इत्यादि **पाराशरं** प्रतिपादकमस्त्विति वाच्यम् । 'कलावनुष्ठेयान् धर्मानेव वक्ष्यामीति' प्रतिज्ञाय तद्ग्रन्थप्रणयनात् । अत एव भगवता **योगीश्वरेण** अत्र आचाराध्याये च संक्षेपेणैवोक्तं न तु **मनु**वदिस्तृततयेति दिक् इति बोध्यम् ॥ १२७ ॥

प्रसङ्गसंगतिमाह । **समानेति । तेषां** । तेषां चेत्यर्थः । **क्लृप्तिः** कल्पना । मुख्याश्च गौणश्चेत्यादिकसमासः । **व्यवस्थां,** नियमम्, बहूनां समवधाने एवमेवेत्येवंरूपम् । **स्वरूपमिति** जातावेकवचनम् । स्वरूपाणीत्यर्थः । क्रमेणेति शेषः । अत एव वक्ष्यति इति **अनुक्रम्येति** ।

## याज्ञवल्कीये १२८ श्लोकः ।

इदमुपलक्षणं लक्षणानामपि । अत्रौरस इति लक्ष्यं, धर्मेति लक्षणम् । आद्यमपि **योगरूढम्** । तत्र यद्यपि उरसि जातस्ततः प्रभवति वेत्येव शास्त्रीयशब्दः, तथापि— "अङ्गादङ्गात्संभवसि हृदयादधि जायसे ।" इति श्रुत्यनुरोधेन फलितार्थमाह । **उरसो जात इति** । यद्यपि यो धर्मपत्नीजः स औरस इत्याद्युद्देश्यविधेयभावस्तथापि योगार्थेन तस्य ज्ञातत्वात्तेन रूपेणोद्दिश्य रूढ्यर्थविधानमित्याह । **स च धर्मपत्नीज इति** । यद्यपि मूले नोक्तं तथापि 'सवर्णायां संस्कृतायामिति' ( २।२।१४ ) **बौधायनमात्रोक्तमाह । सवर्णेति** । ननु नासौ मूलाक्षरार्थः । किं च स्वक्षेत्रे संस्कृतायामित्येवं **मनुविष्णुवसिष्ठदेवला**दिभिर्बहुभिरुक्तमिति सवर्णेत्युपलक्षणमेवैकत्रेत्याशयेन सर्वाभिमतमूलार्थमाह । **धर्मेति** । धर्मेत्यनेन यस्य यो न धर्मविवाहस्तदूढानिरासः । तथा च धर्मपत्नी द्विजानां द्विजैव, शूद्रस्य तु मुख्यपत्न्यभावेऽपि तत्तुल्या परिणीता । **तस्यां जात इति** । स्वस्मादिति शेषः । अत एव **विष्णुना** "स्वक्षेत्रे संस्कृतायां स्वयमुत्पादितः प्रथमः" इत्युक्तम् । **मनुनाऽपि,** ( अ. ९ श्लो. १६६ )

"स्वक्षेत्रे संस्कृतायां हि स्वयमुत्पादयेत्तु यम् । तमौरसं विजानीयात्पुत्रं प्रथमकल्पितम् ।"

इत्युक्तम् । एतदर्थमेव धर्मपदम् । तेन प्रतिलोमजानां न तत्त्वम् । तथा च पत्नीत्वं मुख्यमविवक्षितमिति शूद्राऽपि तादृशी द्विजानाम् । अत एव तज्जस्यौरसत्वं वक्ष्यते "शूद्रापुत्रस्त्वौरसोऽपि" इति भावः । अवतरणोक्तमुख्यत्वं प्रतिपादयति । **औरसः पुत्रो मुख्य इति** । तथा च तद्वत् आसुरादिविवाहोढसवर्णापुत्रः, अनुलोमेन विवाहितक्षत्रादिस्त्रीषु विप्रादुत्पन्नो मूर्धावसिक्तः, अम्बष्ठो, निषादापरपर्यायः पारशवश्च, वैश्यादिस्त्रियो राज्ञ उत्पन्नौ माहिष्योग्रौ च, शूद्रायां वैश्यादुत्पन्नः करणश्चेत्येतेऽप्यौरसा एव । अत एव वक्ष्यति, मूर्धावसिक्तादीनामौरसेष्वेवान्तर्भावादितीति बोध्यम् ।

अग्रिमांशं सप्रतीकधारणं व्याचष्टे । **तत्सम इति** । इदं लक्ष्यम्, अवशिष्टं लक्षणम् । एवमग्रे सर्वत्रोभयं बोध्यम् । एतद्व्याख्याने बीजमाह । **अत एवेति** । यत औरस्याः पुत्रिकायाः सुतोऽत एवौरससमत्वं, न साक्षादौरसत्वं, व्यवहितत्वादित्यर्थः । इदं च दायग्रहणे न पिण्डदाने । इदमपि संवित्सत्त्वे एव नान्यथेति ध्वनयन्नाह । **यथाहेति** । संवित्करणे बीजमाह । **अभ्रातृकामिति** । "अकृता वा कृता वेति" ( अ० ९ श्लो० १३६) **मनु**रप्यत्र बोध्यः । एतेन द्वितीये साधकत्वेन तदुक्तिः केषांचिदपास्ता । अयं मातामहस्यैव । तथा संविदा तु बीजिनोऽपि । अत एव **यमः,**

"कुर्यान्मातामहश्राद्धं नियमात्पुत्रिकासुतः । उभयोरर्थसम्बद्धः स कुर्यादुभयोरपि ॥" **इति** ।

तथा चायमपि द्व्यामुष्यायणः । संविदंशे तत्त्वं तु अरोगिणीं भ्रातृमतीमित्यत्रोक्तम् ।

**वसिष्ठानुरोधेन,** कर्मधारयस्य ततो लघुत्वाच्चाह । **अथवेति** । नन्वत्र मते तत्सम इति विरुद्धमव्यवहितत्वात्, अत आह । **सोऽप्यौरसेति** । पित्रवयवानां तस्यामल्पत्वात् अवयवबाहुल्याभावेन व्यवहितत्वात्तत्त्वमिति भावः । अत्र सम इत्युक्त्याऽस्यापि कलिवर्ज्यत्वं नेति स्फुटमग्रे । तमेवाह । **यथाहेति** । तत् व्याचष्टे । **तृतीयः पुत्र इति** । **वसिष्ठेन** तृतीयत्वेन पुत्रिका परिगणिता न मूलकृतेति ज्ञेयम् ।

ननु द्व्यामुष्यायणः प्रागुक्तो बीजिनः किमौरस उत तत्समाधन्यतमोऽत आह । **द्व्यामुष्यायणस्त्विति । औरसावपकृष्ट इति ।** औरससम इत्यर्थः । औरसापेति पाठान्तरम् । औरसविशिष्ट इति पाठोऽप्येवम् । तत्र हेतुमाह । **अन्येति ।** एतेन व्यवहितत्वाभावात्कथं तत्त्वमित्यपास्तम् ।

प्रागवदाह । **क्षेत्रज इति । सगोत्रेणेति ।** सवर्णेनेत्यादिः सर्वत्र । इतरेणेति द्विधा व्याचष्टे । **सपिण्डेनेति ।** सगोत्रान्यसपिण्डेनेत्यर्थः । मूलस्थ एव वाशब्द इत्याह । **वोत्पन्न इति ।** विधवायाम् 'अपुत्रां गुर्वनुज्ञात' इति मूलोक्तविधिना नियोगधर्मेणेति शेषः । 'यस्या म्रियेते'त्युक्तेरिति भावः । पुत्रजननासमर्थस्य जीवतोऽपि पत्युर्नियोगेन तत्क्षेत्रे सवर्णात्तादृशाज्जातश्चेत्यपि बोध्यम् । अत एवात्र साधारणमुक्तम् । तथा च **मनुः**, ( अ० ९ श्लो० १६७ )

" यस्तल्पजः प्रमीतस्य क्लीबस्य व्याधितस्य च । स्वधर्मेण नियुक्तायां स ज्ञेयः क्षेत्रजः सुतः ॥ "

इति । अयं च क्षेत्रिण एव अनेन विधिना जात इत्युक्तेः । बीजिनोऽपि पुत्रेच्छायां तस्यापि । 'अपुत्रेण परक्षेत्रे' इति मूलोक्तेः ॥ १२८ ॥

## याज्ञवल्कीये १२९ श्लोकः ।

**उत्पन्न इति ।** निश्चितपुरुषविशेषात्सवर्णादिति भावः । तदेवाह । **हीनेत्यादि ।** सर्वमेकं वाक्यम् । अत्र तन्निश्चयाभावे न तस्याः किं त्वन्येषाम् । एवं तन्निश्चयस्तद्द्वारा । तया तत्स्वरूपस्य ज्ञातत्वात् । यत्र तु बलाद्रहसि निशि तमोवृतायां पुरुषान्तरसम्भोगात्साऽपि वर्णविशेषं न जानाति तत्र स गूढजनाममात्रधारी न प्रोक्तगूढजवत्प्रशस्त इति **मदनपारिजातकृत् ।** स त्याज्य एवेत्यन्ये । अयमपि क्षेत्रिण एव । तथा च **मनुः**, ( अ. ९ श्लो० १७० )

" उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः । स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पजः ॥" इति ।

**पूर्ववदिति ।** पूर्वो यथा सवर्णजस्तद्वदयमपि सवर्णज इत्यर्थः । **कन्यकाया**मित्यस्याविवाहितायामिति मात्रं नार्थः । तत्रापि पुरुषासम्बन्धे तत्प्रयोगदर्शनात् । किं तु अमन्त्रवत्संस्कारपूर्वकक्षतयोन्यामित्यर्थः । तत्त्वमेव हि तत्प्रवृत्तिनिमित्तमित्यन्यत्र स्पष्टम् । अग्रे वक्ष्यते च । **तदे**तत् ध्वनयन् विकल्पमाह । **यद्यनूढेति ।** मध्यमणिन्यायेनाग्रेऽपि अन्वयसूचनार्थम् उभयसाधारणं निमित्तान्तरं भेदेनाह । **तथेति ।** चार्थेऽयम् । तत्रैव संस्थिता चेत्यर्थः । **अथोढेति ।** तत्रैव स्थिता चेत्यर्थः । तथा च विवाहात्प्रागुत्पन्नस्तत्र मातामहस्य, तदुत्तरमुत्पन्नस्तत्र वोढुरिति सिद्धम् । अत्रोभयत्र **मनु**संमतिमाह । **यथाह मनुरिति ।** पितृगृहे स्थिता कन्या क्षतयोनिः सुता रहो व्यभिचारेण यं पुत्रं जनयेत् कन्यासमुद्भवं तं तु नाम्ना कानीनं वदेत् स वोढुर्भवतीत्यर्थः । अत्र वोढुरित्युपादानाद्विवाहिता चेत्तदा वोढुर्नो चेन्मातामहस्येत्येतद्गम्यते । अत एव **वसिष्ठः** ( अ. १७ सू. २१।२२ ) " कानीनः पञ्चमो यं पितृगृहेऽसंस्कृता कामादुत्पादयेत्स कानीनो मातामहस्य पुत्रो भवतीति " ।

" अप्रत्ता दुहिता यस्य पुत्रं विन्देत तल्पजा । पुत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम् ॥" इति च ।

अत्रापि एकस्यैवापुत्रत्वे तस्यैव, उभयोरपि तत्त्वे उभयोरपीति बोध्यम् ॥ १२९ ॥

## याज्ञवल्कीये १३० श्लोकः ।

स्वरीत्यैवाह । **पुत्रोऽक्षतायामिति** । पत्या अभुक्तायां, भुक्तायां वा जीवता पत्या त्यक्तायां, विधवायां वेत्यर्थः । तथा च **विष्णुः**,

"या तु पत्या परित्यक्ता विधवा स्वेच्छयाऽथवा । उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते ॥ " इति ।

अयं बीजिन एव । परित्यागेन मरणेन च भर्तुः क्षेत्रस्वत्वाभावात् । नियोगस्याभावात् स्वेच्छाग्रहणाच्च ।

मौलक्रमेणैवाह । **मात्रेति** । अस्याः पत्यसांनिध्ये दानेऽधिकारः । तच्च द्विविधम् । तत्राद्ये आह । **भर्त्रनुज्ञया प्रोषिते इति** । तयैवेत्यर्थः । सन्निहितेऽनधिकारिणि वेत्यपि बोध्यम् । द्वितीये आह । प्रेते वा भर्तरीति । तथा चात्र स्वातन्त्र्यम् । तथा च **वसिष्ठः**, ( अ.१५सू.१-२ ) " शुक्रशोणितसम्भवः पुत्रो मातापितृनिमित्तकस्तस्य प्रदानविक्रयत्यागेषु मातापितरौ प्रभवतः" इति ।

मौलं पक्षान्तरमाह । **पित्रा वेति** । अनयोश्चायं विशेषः । उभयोर्जीवने अस्यापि पत्यनुमत्यैव दातृत्वम् । अत्यन्तापदि तु कथंचिदपि तदनुमत्यलाभे स्वातन्त्र्यमपि । यद्यपि मूले एतावदेवोक्तं तथापि दद्यातामिति **मन्व**नुरोधेन कैमुतिकन्यायेन च लब्धमर्थमाह । **उभाभ्यां वेति** । पुत्रस्य सवर्णत्वे प्रतिग्रहीतुरपि तत्त्वमर्थसिद्धमेवेत्याह । **सवर्णायेति** । सवर्णो य इति पाठान्तरम् । **यस्मा इति** । योऽत्यन्तदुर्गत्या भरणासामर्थ्येन । विधिपूर्वक इति शेषः । **सः**, प्रतिगृहीतसवर्णः । **तस्येति** । प्रतिग्रहीतुरेवेत्यर्थः । अयमद्व्यामुष्यायणः । व्यामुष्यायणोऽप्ययमस्तीत्यन्यत्र स्पष्टम् । तत्र मानं **मनुमाह । यथाहेति** । अत्र वाशब्दद्विवचनयोः स्वारस्याद्ध्याहारेणार्थत्रयलाभः । तथा च भर्तरि प्रोषितादौ तदनुमत्यैव मृते वाऽऽपदि केवलमातुरधिकारो दाने, तथा मातरि मृतायामुन्मादादिदोषयुक्तायां वा तदननुमत्या, पितृगृहस्थितायां वा तदनुमत्यैवापदि केवलं पितुरधिकारस्तत्र । अन्यथोभयोरपि सहैवेति बोध्यम् ।

तथा च **वसिष्ठः**, ( अ. १५ सू. ५ ) "न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वा ऽन्यत्र भर्तुरनुज्ञानादिति "। स्त्रीग्रहणात्पत्युः पूर्वोक्ते एव विषये स्वातन्त्र्यं द्योत्यते, न तु सर्वदा । उपक्रमविरोधात् । विशेषणे निषेधसंक्रमाद्दाने इव प्रतिग्रहेऽपि स्त्रिया अधिकारः । होमस्तु न भवति ।

**शौनकोपि,** " वन्ध्या वा मृतपुत्रा वा पुत्रार्थं समुपोष्य च । " इति ।

इदं च सधवाविधवोभयसाधारणम् इति स्पष्टमेव । एतेनात्र चशब्दः पठितुं युक्तो न वाशब्द इत्यादि **मेधातिथ्यु**क्तमपास्तम् । 'अद्भिरिति' **वसिष्ठो**क्तविध्युपलक्षणम् । **सदृशं**,प्रतिगृहीतृसवर्णम् । एतेन तत्त्वं न जातितः, किं तु कुलानुरूपैर्गुणैः । तथा च ' क्षत्रियादिरपि ब्राह्मणस्य दत्तको ' युज्यते इति **मेधातिथ्यु**क्तमपास्तम् । सवर्णसदृशपठितस्यापि तत्त्वस्यैवौचित्यात् । ' सजातीयेष्विति ' **मूलोक्तेश्च । प्रीतीति** लोभभयद्वेषादिनिरासार्थम् । इदं च देयपुत्रविशेषणम् ।

" विक्रयं चैव दानं च न नेयाः स्युरनिच्छवः । " इत्युक्तेः ।

**दत्त्रिम इति** । ' त्रेर्मब् ' ( व्या. सू. ४।४।२० ) इत्यमिति साधुः । **आपदीत्यस्य** दुर्भिक्षादावित्यर्थः । यत्तु तस्य प्रतिग्रहीतुरपुत्रत्वे इत्यर्थः । तथा च सपुत्रत्वे तस्यैव दोषः ।

" अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदा । पिण्डोदकक्रियाहेतोर्यस्मात्तस्मात्प्रयत्नतः ॥ "

**इत्यत्र्यादि**स्मरणादिति । तन्न । तथा सत्त्वेऽपि तदापत्तेर्ग्रहणस्यात्रोपस्थापकाभावात् । तदेतत् ध्वनयन् तल्लब्धमर्थमाह । **आपदीति । न देय इति** । इति गम्यते इति शेषः । तत एवाह । **दातुरिति** । अनापदीत्यादिः । न प्रतिग्रहीतुरित्यर्थः । तथा च तत्र दाने तस्यैव दोषो न त्वस्येति भावः । इत एव सङ्गतेर्विशेषमाह । **तथेति । न देय इति** । नापि प्रतिग्राह्य इति शेषः । तथा च तथाकरणे उभयोर्दोष इति भावः । **वाशब्दः** चार्थे । स हि सन्तानाय पूर्वेषामिति तच्छेषः । **शौनको**ऽपि,

" नैकपुत्रेण कर्तव्यं पुत्रदानं कदाचन । बहुपुत्रेण कर्तव्यं पुत्रदानं प्रयत्नतः" ॥ इति ।

अत्र नैकेति निषेधविधिः । ततोऽर्थलब्दार्थानुवादकमुत्तरार्द्धं, न तु सोऽपि विधिः । तथा सति आपद्यपि यथाकथञ्चित्स्ववार्निर्वाहेण तददाने दोषापत्तेः । प्रयत्नत इत्युक्त्याऽस्यावश्यकत्वलाभेन नित्यविधित्वे निमित्तफलयोरनपेक्षयाऽऽपदाद्यनपेक्षत्वेन तत्रापि पदकरणे दोषापत्तेश्च ।

एतेन नैकेत्येव सिद्धे बहुपुत्रेणेत्याद्युक्त्या द्विपुत्रस्य तद्दाने नाधिकार इति लब्धमित्यपास्तम् । उक्तयुक्तेः । एकपुत्रस्य तददाने **वसिष्ठो**क्तस्य हेतोः स हीत्यादेस्तत्राभावाच्च । तस्मात्तदेकवाक्यतयाऽपि तथैव । अत एव बहुशब्दोऽनेकपर एव । प्रयत्नत इत्यपि **वसिष्ठो**क्तविधिपरमेवेति बोध्यम् । तदेतत् ध्वनयन् विशेषान्तरमाह । **तथाऽनेकपुत्रेति** । अन्यथा बहुपुत्रेत्युक्तं स्यात् । तथा च **वासिष्ठे** एकं पुत्रमित्युपलक्षणम् ।

**मनुमाह । ज्येष्ठेनेति** । अस्य यथाश्रुतार्थो न विवक्षितोऽन्यविरोधापत्तेः, अत आह । **इति तस्यैवेति** । अनेनेत्यर्थः । **मुख्यत्वात्**, मुख्यत्वप्रतिपादनात् । तथा च परलोकहानिरेवेति भावः । अत एव स्मृत्यन्तरमपि, ' न ज्येष्ठं पुत्रं दद्यादिति ' ।

अद्भिरित्यनेन सूचितमाह । **पुत्रप्रतीति । निवेशनस्य**, गृहस्य । " सन्देहे चोत्पन्ने दूर शूद्रमिव स्थापयेत् । विज्ञायते ह्येकेन बहून् ततस्त्रायते" इति तच्छेषः । (अ.१५सू.७-८) । सति सम्भवे **बन्धुसन्निकृष्टं**, भ्रातृपुत्रादिकम् । तदभावे **अदूरबान्धवं**, सन्निहितदेशवृत्तिपित्रादिकं ज्ञातकुलशीलम् अन्यमपि । परीक्षितस्यापि कथञ्चित् ब्राह्मण्यादिसन्देहे उत्पन्ने यावत्तन्निवृत्तिं दूरे स्थापयेत् तेन न व्यवहरेत् । अपुत्रस्य पुत्रीकरणावश्यकत्वद्योतनाय श्रुत्याकर्षः । **विज्ञायते इति** । श्रूयते इत्यर्थः । **हि** यत **एकेना**नौरसेनापि पुत्रेण **बहून्** पित्रादीन् ततः नरकात् **त्रायते** इति अर्थः । किञ्चिद्दूरस्थसङ्ग्रहायाह । **अदूरमिति** । अनेनेत्यर्थः ।

दत्तके उक्तपुत्रीकरणविधिं क्रीतादिष्वप्यतिदिशति । **एवं क्रीतेति** । प्रागुक्तं होमभिन्नं सर्वमपि ग्रहणापादानग्रहीतृविषयकं नियमनमित्यर्थः । यथायोग्यं दृष्टार्थत्वात् **वसिष्ठेन** विक्रयत्यागोपादानाच्च । स्वयंदत्ते तु होमोऽपि । तत्रापि प्रतिग्रहसत्त्वात् । एवमपविद्धेऽपि यथासम्भवं बोध्यामिति भावः । अतिदेशवचनाभावेऽपि युक्तिरेव नियामिकेत्याह । **समानेति** ॥ १३० ॥

## याज्ञवल्कीये १३१ श्लोकः ।

ताभ्यामिति मूलस्थस्य व्याख्या **मातेति** । ननु एवं मात्रा पित्रा वेत्यधिकमत आह । **पूर्ववदिति** । तथा च तुल्यन्यायत्वात्तथोक्तावपि तल्लाभ इति भावः । तत एव चाह । **तथैकमित्यादि** ।

सवर्ण इत्यंशे **मनु**विरोधं परिहरति। **यत्त्विति । मातापित्रोरन्तिकात्** सकाशादित्यर्थः । **तस्य,** क्रेतुरेव । सदृशोऽसदृशोऽथवेति पाठः । सदृशोऽसदृशोऽपि वेति पाठान्तरम् । **न जात्येति ।** ब्राह्मणत्वादिनेत्यर्थः । निषेधे हेतुमाह । **सजातीयेष्विति ।** मूलकृतेति शेषः । तथा च तद्विरोधान्न तथा व्याख्यानं किं त्वगत्या तथैवेति भावः ।

पुनःसिंहावलोकनन्यायेन सप्रतीकं व्याचष्टे। **कृत्रिम इति** । तथा च **मनुः**—(अ. ९।१६९)

" सदृशं यं प्रकुर्वीत गुणदोषविचक्षणम् । पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयस्तु कृत्रिमः ॥ " इति ।

अयमपि तस्यैव प्रलोभनैरिति । तथा च प्रौढत्वमपि तत्र बोध्यम् ।

अत्र दत्तात्मेति लक्ष्यनिर्देशः स्वयं दत्त इति लक्षणम् इत्याशयेनाह । **दत्तात्मा त्विति । त्यक्त इति** । अकारणे इति शेषः । **इति,** इत्येवम् । स्वयंदत्त इत्यस्यार्थः । **उपनत इति ।** प्राप्त इत्यर्थः ।

अन्ये तु विपरीतो लक्ष्यलक्षणभावः । तथा च तादृशः तवाहं पुत्रो भवामीत्येवमात्मानं दत्तवान्पूर्ववत् गृहीतो यः स स्वयंदत्त इत्यर्थः ' इत्याहुः । तथा च **मनुः**, ( अ. ९।१७७ )

" मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात् । आत्मानं स्पर्शयेद्यस्मै स्वयं दत्तस्तु स स्मृतः ॥ " इति ।

सहोढज इत्यस्य तया सह य ऊढो विवाहितो गर्भस्तस्माज्जात इत्यर्थः । गर्भस्योढत्वात्तस्याप्यूढत्वमिति । सहोढ इत्यपि नामान्तरं मानवादौ, तत् ध्वनयन् " गर्भे विन्न " इति लक्षणं शेषपूरणेन व्याचष्टे । **गर्भे स्थित इति** । विन्न इत्यस्य व्याख्या **परिणीतायामिति** । अन्ये तु गर्भे स्थितः गर्भिण्यां परिणीतायां स्वीकृतः गर्भेण सह योढा पश्चात्तस्यां जात इत्यर्थः । ' ङ्यापोरिति ' ( व्या. सू. ६।३।६३ ) ह्रस्व इत्याहुः । सवर्णात्सम्भूतत्वं तु उभयथाऽपि बोध्यम् ।

तथा च **मनुः**, ( अ. ९ । १७३ )

" या गर्भिणी संस्क्रियते ज्ञाताऽज्ञाताऽपि वा सती । वोढुः स गर्भो भवति सहोढ इति चोच्यते ॥ " इति ।

पुरुषसम्बन्धमात्रान्न कन्यात्वहानिः किं तु मन्त्रवत्संस्कारपूर्वकक्षतयोनित्वे एव, तदभाव एव हि कन्याशब्दप्रवृत्तिनिमित्तमिति स्पष्टं ' कन्यायाः कनीनचेति ' **सूत्रे** ( ४।१।११६ ) **महाभाष्ये । एवं च** तस्या अपि विवाहसम्भव इति न दोषः । अत एव प्रागुक्तद्विविधकानीनसङ्गतिरिति बोध्यम् ॥ १३१ ॥

## याज्ञवल्कीये १३२ श्लोकः ।

प्रक्रान्तत्वादाह । **मातेति** । परित्यक्त इत्यर्थः । दोषाभावेऽपि भरणासामर्थ्येन मूलजातत्वादिना वेत्यादिः । **य इति** । ज्ञातपित्रादिरित्यर्थः । **गृह्यते,** पुत्रत्वेनेत्यादिः ।

तथा च **मनुः**, ( अ. ९ । १७१ )।

" मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा । यं पुत्रं प्रतिगृह्णीयादपविद्धस्तु स स्मृतः ॥ " इति ।

कृत्रिमादिषु विशेषमाह । **सर्वत्रेति** । कृत्रिमस्वयंदत्तसहोढजापविद्धेष्वित्यर्थः ।

एतेषां क्रमोऽपि विवक्षितो न स्वरूपमात्रमित्याशयेन सङ्गतिमाह । **एवमिति** । यद्यपि पिण्डद इत्यप्यस्ति तथापि प्रकरणादाह । **दायेति** । रिक्थेत्यर्थः । तत्कथनं त्वानुषङ्गिकमिति भावः । एषामित्यस्य व्याख्या **पूर्वोक्तानामित्यादि** । संख्याया अनुक्तत्वेऽपि विभागेनैव लाभा-

वाह । **द्वादशानामिति** । निर्धारणे षष्ठी । पूर्वाभावे इति वीप्सागर्भे 'सप्तपर्ण' इतिवदग्रिमानुरोधेनेत्याह । **पूर्वस्येति** । परशब्दो नोत्कृष्टार्थ इत्याह । **उत्तर इति** । मौलक्रमेणाह । **पिण्डद इति** । तत्त्वमात्रमविवक्षितमित्याह । **श्राद्धद इति** । एकसंग्रहायाह । **धनेति** । चोऽन्वान्वये न तु समुच्चये इति सूचनाय व्याख्याने तत्त्यागः ।

यद्यप्यत्र प्रकरणादंशहर इत्येवोचितमिति पिण्डद इत्यसंबद्धम्, अथ श्राद्धप्रकरणेऽनुक्त्वा प्रकरणान्तरे सङ्गत्यभावादत्रैव पुत्रप्रसङ्गेन तदप्युक्तं लाघवादिति चेत्, एवमपि अन्ते वाच्यमागन्तूनामिति न्यायात् नादाविति तथोक्ता सङ्गतिरेव, तथापि पुत्राणां पिण्डदत्वमावश्यकमदाने प्रत्यवायश्रवणात् धनहरत्वं तु आनुषङ्गिकमन्वाचयशिष्टं न तु मुख्यमिति, नापि तेषामंशहरत्वप्रयुक्तं पिण्डदत्वमिति अंशहरत्वप्रयुक्तपिण्डदत्वस्यान्यत्र क्वचित्समानियतस्य शास्त्रीयत्वेऽपि पिण्डदत्वप्रयुक्तांशहरत्वस्य तथा न शास्त्रीयत्वमिति अनयोर्मिथो न व्याप्यव्यापकभावो नापि सार्वत्रिकं समनैयत्यम् इति च सूचनार्थं भगवता **योगीश्वरेण** 'पिण्डदोंऽशहरश्चे' त्युक्तम् । अनेनैवाशयेनावतरणे प्रकरणसङ्गतये तथोक्तमप्यत्र व्याख्याने मौलक्रमेणैव व्याख्यातं व्याख्यात्रेति बोध्यम् । एवं सति **मन्वादिभिः** प्राप्तविरोधपरिहारद्वारा मूलं समर्थयन् तेषां व्यवस्थां दर्शयति । **औरसेत्यादिना अंशभागितीत्यन्तेन** ।

**औरसेति** । अस्य एवं सतीत्यादिः । औरसपौत्रिकेययोर्मिथः समवाये इत्यर्थः । आद्यार्थाशयेनेदम् । इदं च पुत्रिकाकरणानन्तरमौरसोत्पत्तावेव सम्भवतीति बोध्यम् । तदेवाह । **पुत्रिकायामिति** । पुत्रिकैव पुत्र इति द्वितीयार्थाशयेनाह । **ज्येष्ठतेति** । हि यतः स्त्रियाः पुत्रिकायाः ज्येष्ठता नास्ति ज्येष्ठस्येत्याद्युक्तोद्धारादिकं नास्ति अतस्तथा यदि भवेत्तदा तत्र सम एव विभाग इत्यर्थः । अत्र सम एवेत्युक्त्या औरसस्यैव सर्वधनग्रहणाभावेन मूलोक्तापवादत्वं **मनो**रिति भावः ।

अपवादान्तरमाह । **तथेति** । यथौरसे सति पुत्रिकाया अंशभाक्त्वं तथाऽन्येषामपि क्षेत्रजादीनामित्यर्थः । अन्येषामित्यस्योत्तरेषामित्यत्रान्वयः । अन्यत्वं च पुत्रिकातः । उत्तरेषामिति **स्पष्टार्थम्** । अपिः पुत्रिकासमुच्चये । पूर्वस्मिन्सत्यपीति पाठः । औरसे सत्यपीति तदर्थः । **अयमपि**र्विरोधे । पूर्वस्मिन्पूर्वस्मिन्सत्यपीत्यपपाठः । वक्ष्यमाणात् तदलाभात् । **तस्मिन्**, दत्तकत्वेनाभिमते । सत्सप्तमी । **चेत्**, यदि । **उत्पद्येत**, तदेति शेषः ।

नन्विदं दत्तकमात्रविषयमिति कथमन्येषामित्याद्युक्तिरत आह । **दत्तकेति** । आदिना स्वयंदत्तपरिग्रहः । ननु तद्विशेषेऽपि तत्र यथाश्रुत एवार्थोऽस्तु अतः क्षेत्रजायंशेऽपि मानं सूचयन्नाह । **तथा चेति** । अत्र सुता इति सामान्यबहुवचनान्तेनोक्तेस्तथा लाभ इति भावः । सवर्णा इति पूर्वान्वयीत्याह । **सवर्णा इति** । **आदिना** क्रीतकृत्रिमस्वयंदत्तापविद्धाः । **सत्यौरसे इति** । तस्मिन्नुत्पन्ने सतीत्यर्थः । एवमग्रेऽपि । क्षेत्रजादीनां सवर्णादुत्पन्नत्वं स्वतः सवर्णत्वं चास्ति, कानीनादीनां तु तत उत्पन्नत्वेऽपि स्वतस्तत्त्वाभावस्य वक्ष्यमाणत्वादाह । **असवर्णा इति** । अप्रशस्ता इत्यर्थः । सहोढसहोढजौ पर्यायौ, तथा **मनुमूलोक्ते**रिति । उक्ते तु सूचितमाह । **न चतुर्थांशेति** । अनेनेदं सूचितं, यत्र शाब्द आर्थो वा अंशनिषेधस्तत्रैव ग्रासादि नान्यत्रेति । स्फुटीभविष्यति चेदमग्रे । **किं त्विति** । तयोः पात्रभूता इत्यर्थः । भागिन इत्युभयत्र पाठान्तरम्

अत एव **मनुः**, (अ. ९।२०२)

" सर्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा । ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेत् ॥ " इति।

**न्याय्यं**, यस्य यावदुपयुक्तं धनानुरूपं च । **अत्यन्तं**, यावज्जीवम् ।

नन्वेतावता औरसे सति क्षेत्रजादीनां तुर्यांशभागित्वं कानीनादीनां ग्रासादिभागित्वमिति लब्धं, तथा सति क्षेत्रजाद्यंशे कानीनाद्यंशे च मूलापवादत्वं सिद्धं यद्यपि, तथापि **कातीयस्य विष्णु**विरोधः । कानीनाद्यंशे तेन तेषां सामान्येनांशभागित्वाभावस्योक्तत्वात्कातीयेन विशेषस्योक्तत्वादित्याशङ्कां हृदि निधाय विरोधं परिहरति। **यद्पीति । परमेवेति । कातीयै**कवाक्यतयैवेति भावः । अत एव मूलस्यापि न **विष्णुना** विरोध इत्याह। **औरसाद्यभावे इति** । आदिना आद्यकोटिग्रहणम् ।

नन्वेवमपि **वासिष्ठादेर्मनु**विरोधः, तेन दत्तकादीनामपि तदभागित्वस्योक्तत्वात् । अतस्तं परिहरति । **यद्पीति । एक एव**, मुख्य एव । हेतुगर्भविशेषणमिदम् । **वसुनः**, धनस्य । अत **एवाह । शेषाणामिति** । दत्तकादीनामित्यर्थः । शेषे षष्ठी । एवमग्रेऽपि । न नृशंसो घातुको ऽनृशंसस्तद्भावः आनृशंस्यमघातुकत्वं पापाजनकत्वम्, अददत्पापमाप्नोति, तदर्थमित्यर्थः । पुत्रिकायास्तेनैव विशेषस्योक्तत्वात्क्षेत्रजस्य वक्ष्यमाणत्वाच्चाह । **दत्तकेति** । तथा च कानीनादिवत्तेषामपि तत्त्वे सति ग्रासादिभागित्वमेव न तुर्यांशभागित्वमिति **वासिष्ठा**देरपवादो **मनु**स्तत्रेति भावः ।

वक्ष्यमाणमेवाह । **तत्रेति** । शेषाणां मध्ये इत्यर्थः । **विशेष इति । कातीयतो** विशेषः, **शेषाणामिति मनु**तो विशेषो, निर्गुणत्वप्रतिकूलत्वयोरवान्तरविशेषश्चेत्यर्थः । एवं च क्षेत्रजस्यौरसप्रतिकूलत्वे निर्गुणत्वे चाविशेषः पूर्ववन्नास्तीति भावः । **तेनैव, मनुनैव । दायं**, धनम् । पञ्चममित्यादि पक्षान्तरम् । दत्तकादिवदुक्तपूर्ववाक्येन जीवनमात्रे प्राप्ते भागविकल्पोऽयम् । स चान्यथाऽनुपपन्न इत्यवश्यं कल्प्यमाह । **प्रतिकूलत्वेति** । इदमपीत्यादिः । **समुच्चये**, तयोः सद्भावे । एवं **चै**कवाक्यीयविकल्पोपपत्तये आवश्यकयुक्त्यैव पूर्व**मनु**वाक्यस्याप्युपपत्तिरिति न तस्य तद्विरोध इति भावः । एवं च क्षेत्रजस्योभयसत्त्वे षष्ठांश एकसरतत्वे पञ्चमांशस्तस्याप्यभावे **कातीय**चतुर्थांशभागित्वम् । कानीनादीनां तु तत्र सति ग्रासादिभागित्वमेव न चतुर्थांशभागित्वम् । पुत्रिकायास्तु तत्र सति समभागः ।

**यत्तु गौतमीयं**,(अ.२८ सू.३०-३२)"पुत्रा औरसक्षेत्रजदत्तकृत्रिमगूढोत्पन्नापविद्धा रिक्थभाजः। कानीनसहोढपौनर्भवपुत्रिकापुत्रस्वयंदत्तक्रीता गोत्रभाजश्चतुर्थांशभागिन " इति, तत्र गुणवद्गुणवदित्युक्तरीत्याऽऽद्यवर्गोक्ताः क्रमेण तद्वराः, द्वितीयवर्गमध्ये आद्यत्रयाणां तुर्यांशभागित्वोक्तिरौरसाभावे पुत्रिकादिसत्त्वे च ज्ञेया । अन्यथोक्तस्मृतिविरोधो दुष्परिहर एव । पुत्रिकापुत्रस्य विषयो व्याख्यात्रैव वक्ष्यते । स्वयंदत्तक्रीतयोस्तत्वं तु औरसे सति उक्तरीत्या **वासिष्ठा**द्येकवाक्यतयैव । एवं गूढोत्पन्नस्य रिक्थभाक्त्वोक्तिरपि औरसाद्यभावे ज्ञेयेति न कश्चिद्विरोधः। एवं **मानवे मेधातिथि**संमतरिक्तांशोऽपि औरसे सति कानीनादिवद्दत्तकादावपि दोषद्वयसत्त्वे तदन्यतरसत्त्वे च ज्ञेयः । रिक्थांशेति पाठे तु न कश्चिद्दोष एवेति तत्त्वम् इति एतद्विषयविषयकं मूलवाक्यमिति सिद्धमिति बोध्यम् ।

**मूलस्य वासिष्ठादेश्च मनु**वचनान्तरविरोधं परिहरति । **यद्पीति । पुत्राणामिति ।**

(**मनु**. अ. ९ । १५८)

"पुत्रान् द्वादश यानाह नृणां स्वायम्भुवो मनुः । तेषां षड् बन्धुदायादाः षडदायादबान्धवाः ॥ "

इत्युपक्रम्येत्यादिः । श्लोकद्वयेनेति भावः । **दायादेति** । दायहरत्वं गोत्रहरत्वं चेत्यर्थः । तदेवाह । **औरस इति** । **शौद्रश्चेति** ( **मनु**. अ. ९।१७८ )

" यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत्सुतम् । स पारयन्नेव शवस्तस्मात्पारशवः स्मृतः ॥"

इति अग्रे तेनैवौरसादिपुत्रान् प्रतिपाद्य अन्ते लक्षितोऽयम् । पारयन् पिण्डदानादिना प्रीणयन्नपि शवस्तत्तुल्यः अनुपकारकः असंपूर्णोपकारकत्वात् । कामादिति त्वनुवादः कामतस्तु प्रवृत्तानामित्यस्य । मूर्धावसिक्तादीनां तु सम्पूर्णोपकारकत्वेनौरसत्वमित्यत एव शौद्रमात्रस्य द्वादशमध्ये **मनु**ना पृथग्गणनं कृतम् । तस्य फलमनुपदमेव स्फुटीभविष्यति । पुत्रिका तु एतत्प्रकरणात्पूर्वं पृथगेवोक्ता **मनु**नेति स त्रयोदशः पुत्रः । अत एव ।

" पुत्रान् द्वादश यानाह नृणां स्वायम्भुवो **मनुः**—"

इत्यत्र तस्य न ग्रहणम् । अत एवौरसः क्षेत्रजश्चैवेत्यादिना तानुक्त्वा " यद्येकरिक्थिनौ " " एक एवौरसः " " षष्ठं तु क्षेत्रजस्य " इत्युक्त्वा—( **मनु**. अ. ९।१६५ )

" औरसक्षेत्रजौ पुत्रौ पितृरिक्थस्य भागिनौ । दशापरे तु क्रमशो गोत्ररिक्तांशभागिनः ॥ "

इत्युक्त्वा " स्वक्षेत्रे संस्कृतायामित्यादिना" " पारशवः स्मृत " इत्यन्तेन द्वादशस्वरूपमुक्तम् तदग्रे—( **मनु**. अ. ९।१८० )

" क्षेत्रजादीन् सुतानेतानेकादश यथोदितान् । पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥"

इत्यत्रैते एव शौद्रान्ता **मन्व**भिमता इति स्पष्टमेव । औरसक्षेत्रजाविति षष्ठं त्विति पूर्वस्यानुवादो न विध्यन्तरम् । क्षेत्रजस्यौरससाम्याभावात् । गोत्रभागिनो रिक्तांशभागिनश्च । रिक्तांशः प्रजीवनमात्रम् । मुख्याभावे हि प्रतिनिधिः । अत औरसे सति एते न कार्याः । क्रियालोपाद्धेतोः क्रियायाः अपत्यमुत्पादयितव्यमित्यस्य विधेर्लोपो मा भूदिति । नित्यो ह्ययं विधिः स यथाकथंचित् गृहस्थेन सम्पाद्यः । तत्र मुख्यकल्प औरसः तदसम्पत्तावेते ऽनुकल्पा इति **मेधातिथिः** । अदायादेति द्वंद्वोत्तरं नञ्समास इति **शङ्का**शयः । तदपीत्यस्य व्याख्येयमित्यत्रान्वयः । **स्वेति** । पूर्वोक्तपुत्रेत्यर्थः । सपिण्डाश्च समानोदकाश्चेति द्वन्द्वः । **तदिति** । स्वपितुः सपिण्डसमानोदकान्यतरेत्यर्थः । **तत्**, तद्रिक्थहरत्वम् । एवं दायादादिशब्दस्यार्थमुक्त्वा बान्धवशब्दस्य तमाह । **बान्धवत्वमिति** । **पुन**स्त्वर्थे । अस्यातिप्रसक्तत्वादाह । **सपिण्डत्वेन चेति** । बान्धवत्वस्वरूपमाह । **उदकेति** । एवं च अदायादबान्धवा इत्यत्र नञ्समासं कृत्वा द्वन्द्वः कार्यो न तु प्रागुक्त इति भावः । एतेन प्रागुक्त**मेधातिथि**व्याख्यानमपास्तम् ।

एवं वचनद्वयव्याख्यानहेतुं तदुक्तिरूपमेवाह । **गोत्रेति** । **दत्रिमः** दत्तकः **सुतः** पुत्रः **जनयितु**र्निषेक्तुर्जनकस्य **गोत्ररिक्थे** गोत्रधनेन **न भजेत्** न प्राप्नुयात् । जनयितुरिति पञ्चमीति **मेधातिथिः** । तथा च तन्मरणनिमित्ताशौचादिकमपि न प्राप्नोति विवाहं विना । तत्र तद्गोत्रस्यापि परिहार्यत्वात् । अनेनान्यगोत्रस्यापि पुत्रीकरणमनुज्ञातं भवति । अपि तु यस्मै दत्तस्तस्य गोत्रं धनमाशौचादिकं च दत्तकः प्राप्नोति । तथा यतो गोत्ररिक्थानुगः "सगोत्रेण" इति "यो रिक्थहर " इति च स्मृतेः पिण्डः तद्दानं श्राद्धमिति यावत् गोत्ररिक्थेऽनुगच्छति सः, यदीयगोत्ररिक्थे गृह्णीते तस्मै एव पिण्डोदकदानाद्यौर्ध्वदेहिकक्रिया, अतो ददतस्तद्दातुर्जनकस्य दत्तपुत्रकर्तृकस्वधा श्राद्धं

१ ख-ग-गोत्ररिक्थं गृह्णीते ।

व्यपैति । अर्थात्ततो निवर्तते । दत्तकस्य जनकश्राद्धे नाधिकारः । तस्य तत् तेन न कर्तव्यमिति यावत् । ददत इति पञ्चमी व्यपैतीत्यत्रान्वय इति वा । वस्तुतः पिण्डशब्दः सापिण्ड्यपरः । श्राद्धपरत्वे ददतः स्वधेत्यनेन पौनरुक्त्यापत्तेः । अत एव शिष्टाः प्रतिग्रहीतृगोत्रेणैव तस्य सर्वक्रियानुष्ठानं कुर्वन्ति । प्रतिग्रहीतृसपिण्डा एव च तन्मरणादौ दशाहाशौचमनुतिष्ठन्ति । प्रतिग्रहीतृकुले एव तत्सपिण्डीकरणाद्याचरन्ति । अत एवास्मादेव वचनाद्दत्तकस्य जनकसापिण्ड्यनिवृत्तिरित्यभियुक्तैर्व्याख्यातमिति बोध्यम् । एतच्च दातुः पुत्रान्तरादिसद्भावे । तदभावे तु तस्याप्यसावेव रिक्थश्राद्धाद्यधिकारी । ( **याज्ञ**. २ । १२७ )

" अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः । उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥ "

इति न्यायसाम्यात्,

" दत्तः पुत्रः पितुः कुर्याज्जनकस्य मृतेऽहनि । गयायां च ततोऽन्यत्र न पुत्रान्तरसंनिधौ ॥ "

इति **शातात**पस्मरणाच्च । इदमपि दानानन्तरं जनकस्यापुत्रत्वे । दानकाले त्वेकस्य दाननिषेधात् । एवमेव द्व्यामुष्यायणदत्तकस्यापि उभयोपकारकत्वं बोध्यम् । अत एव दत्त्रिमः क्वचिदिति पाठेन सहैकवाक्यताऽपि । अस्य सापिण्ड्यं परिवेदनदोषाभावश्चान्यत्र स्पष्टः । एष एव न्यायः प्राग्वत् पुत्रीकरणाविशेषात् कृत्रिमादीनामपि बोध्यः । तदाह । **इत्यत्र दत्त्रिमेति ।** औरसपुत्रप्रतिनिधिदत्तककृत्रिमादेरप्युपलक्षणार्थत्वादित्यर्थः । तथा च दत्तकादीनां ततः पित्रादिरिक्थहरत्वप्रतीतेः पूर्वपक्षोक्तरीत्या च तदभावप्रतीतेर्मिथोविरोधादप्रामाण्यपत्तिरिति वचनानर्थक्याभियोक्त्यैव व्यवस्था ज्यायसी । अत एवोक्तद्वादशपुत्रानुक्त्वा **देवले**नोक्तम्,

" एते द्वादश पुत्रास्तु संतत्यर्थमुदाहृताः । आत्मजाः परजाश्चैव लब्धा यादृच्छिकास्तथा ॥ "

" एषां षट् बन्धुदायादाः पूर्वेऽन्ये पितुरेव षट् । विशेषश्चापि पुत्राणामानुपूर्व्याद्विशिष्यते ॥ "

" सर्वे ह्यनौरसस्यैते पुत्रा दायहराः स्मृताः । औरसे पुनरुत्पन्ने तेषु ज्यैष्ठ्यं न तिष्ठति ॥ "

" तेषां सवर्णा ये पुत्रास्ते तृतीयांशभागिनः । हीनास्तमुपजीवेयुर्ग्रासाच्छादनसम्भृताः ॥ "

इतीति भावः ।

ननु तदविशेषेऽपि दत्त्रिमग्रहणं नोपलक्षणमिति पूर्वोक्त**मनु**वाक्यद्वयं पितृधनविषयकमेवास्तां, तावताऽपि **मनो**र्मिथो विरोधाभावात् । **मूल**कृता पितृधनस्थले उक्तत्वेऽपि **मनु**नाऽन्यत्र तत्रानुक्तत्वात् । एवं च पूर्वपक्षोक्तमेव दृढं सम्पन्नम् । अतो **मनु**वचनादेव तथा प्रतिपादयितुमाह । **पितृधनेति । सर्वेषाम्,** अग्रिमाणाम् । तदुक्तमेवात्र हेतुमाह । **न भ्रातर इति ।**

" श्रेयसः श्रेयसो ऽलाभे पापीयान् रिक्थमर्हति । बहवश्चेत्तु सदृशाः सर्वे रिक्थस्य भागिनः ॥"

( **मनु**. ९।१८४ ) इति अस्य पूर्वश्लोकः । **इति**, इत्यस्य । पुत्रा इति सामान्यबहुवचनाभ्यामाह । **सर्वेषामिति ।**

नन्वौरसबहुत्वापेक्षमेव बहुत्वा मिति औरसा एव पुत्रा न ते प्रतिनिधिभूताः । किं च न भ्रातर इत्यत्रत्यस्य पुत्रा इत्यस्य पित्रादिसाहचर्यान्मुख्यौरसपुत्रपरत्वमेवेति तद्विषयकमेव पुत्रपदोक्त्या पितृधनविषयकं तदस्तु । अत आह । **औरसस्येति ।** वचनद्वयस्याप्येकार्थत्वे पौनरुक्त्यापत्तिरिति

भावः । ननु ' द्विर्बद्धमिति ' न्यायेन दार्ढ्याय पुनस्तदनुवादकमेव तदास्तामत आह । **दायादेति ।** तथा च दायादशब्दस्वरूपपर्यालोचनयाऽपि पितृधनपरत्वं तस्य नास्तीति भावः ।

किं च साहचर्यस्यासार्वत्रिकत्वेन पुत्रत्ववत्पितृत्वादेरपि गौणमुख्यसाधारणत्वेन च साहचर्यस्य दुर्वचत्वात्, अपि च श्रेयस इत्यग्रे पाठेन गौणपुत्रविषयत्वात्, श्रेयस इत्यनेनापि तत्प्रतिपादनाच्च, " ब्राह्मणस्यानुपूर्व्येणेत्यादिना पुत्रशतं भवेदित्यन्तेन " ततः प्राक्तनवचनकदम्बेन पितृधनविषयेंऽश-विभागकथनपूर्वं तद्भागित्वस्यौरसस्य प्रतिपादितत्वाच्च । तस्मादौरस इत्यादि तत्परमेवेति व्यवस्थापनं **मनु**सम्मतं युक्तमेवेति न **मूला**दिवचनानां प्रागुक्तानां मिथो विरोध इति दिक् ।

नन्वेवमपि मूलोक्तः ससंख्यः क्रमोऽयुक्त एव । स्मृत्यन्तरेष्वन्यथाक्रमस्य ससंख्यस्य प्रतिपादित-त्वेन तद्विरोधात् । एवमुक्तवर्गद्वयप्रतिपादक**मनु**रपि स्मृत्यन्तरविरुद्धः । तथा हि । तत्र ताव-**दापस्तम्बधर्म**सूत्रविवृतौ **स्मृत्यन्तर**संग्रहः ।

" औरसः पुत्रिकाबीजक्षेत्रजौ पुत्रिकासुतः । पौनर्भवश्च कानीनः सहोढो गूढसम्भवः ॥
"दत्तः क्रीतः स्वयंदत्तः कृत्रिमश्चापविद्धकः। यत्र क्व चोत्पादितश्च स्वपुत्रा दश पञ्च च ॥ " इति ।

अत्र संख्याव्यत्ययः क्रमव्यत्ययश्च । तत्राद्यः सुपरिहरो यद्यपि, पुत्रिकापुत्रिकासुतौ द्वाव-प्येका कोटिः तथा बीजक्षेत्रजौ यत्रक्वचनोत्पादितोऽप्येषामेवान्यतम इति त्रयाणामन्तर्भावे द्वादशत्व-स्यैव सम्पत्तेः, तथापि क्रमव्यत्ययस्तदवस्थ एव । **मानवे** तु, ( अ. ९ । १६५ )

" औरसक्षेत्रजौ पुत्रौ पितृरिक्थस्य भागिनौ । दशापरे तु क्रमशो गोत्ररिक्थांशभागिनः ॥ "

इत्यत्र पुत्रिकामप्यौरससमत्वेनौरसे एवान्तर्भावयित्वा, तस्याः पूर्वं स्वातन्त्र्येणोक्तत्वात्तद्भिन्ना एवात्र विवक्षिता वेत्याशयेन एतावुक्त्वा इतरे दशेत्युक्त्वा तथैव क्रमेणोक्तानि तल्लक्षणानि । तथा हि ।

( अ. ९ श्लो. १६६-१७८ )

" स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादितश्च यः । तमौरसं विजानीयात्पुत्रं प्राथमकल्पिकम् ॥
" यस्तल्पजः प्रमीतस्य क्लीबस्य व्याधितस्य वा । स्वधर्मेण नियुक्तायां स पुत्रः क्षेत्रजः स्मृतः ॥
" माता पिता वा दद्यातां यमद्भिः पुत्रमापदि । सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः ॥
" सदृशं तु प्रकुर्याद्यं गुणदोषविचक्षणम् । पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयश्च कृत्रिमः ॥
" उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः । स गृहे गूढ उत्पन्नः तस्य स्याद्यस्य तल्पजः ॥
" मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा । यं पुत्रं परिगृह्णीयादपविद्धः स उच्यते ॥
" पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः । तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवम् ॥
" या गर्भिणी संस्क्रियते ज्ञाताऽज्ञातापि वा सती। वोढुः स गर्भो भवति सहोढ इति चोच्यते ॥
" क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात् । स क्रीतकः सुतस्तस्य सदृशो ऽसदृशोऽथवा ॥
" या तु पत्या परित्यक्ता विधवा वा यथेच्छया । उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते ॥
" मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात् । आत्मानं स्पर्शयेद्यस्मै स्वयंदत्तस्तु स स्मृतः ॥
" यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत्सुतम् । स पारयन्नेव शवस्तस्मात्पारशवः स्मृतः ॥" इति ।

तल्पं दाराः । यथा गुरुतल्पग इति । " तल्पं शय्याट्टदारेषु " **त्यमरः**( ३।३।१३० )। **व्याधितस्य,** अप्रतीकारराजयक्ष्मादिरोगाक्रान्तस्य । **स्वधर्मेण** प्रागुक्तेन । **सदृशं,** सवर्णम् । **गुण-**

**दोषविचक्षणं,** प्रौढम् । अत एव पुत्रगुणैर्युक्तम् । **न च ज्ञायेतेति ।** हीनाधिकपुरुषजत्वमन्तरेण सवर्णजत्वनिश्चये अस्य पुरुषस्यायमित्येवं न ज्ञायेत चेत्यर्थः । मातुर्बहुगामिनीत्वे इदम् । **यस्येति ।** यस्य तल्पजः स्यात्तस्य स इत्यर्थः । **मातापितृभ्यामिति ।** बहुपुत्रतया भरणासामर्थ्येन केन चिद्दोषेण वेत्यर्थः । **पुत्रं,** तद्बुद्ध्या परिग्रहो न तज्जीवितेच्छया । **येति ।** या ज्ञाताऽज्ञाताऽपि वा गर्भिणी सती संस्क्रियते इत्यर्थः । **सहोढ इति ।** तया सहोढ इत्यर्थः । **पुनर्भूत्वा,** पुनर्गृहिणी भूत्वा । **अकारणात्,** पातित्यादिकारणाभावात् । अकारणे इति पाठान्तरम् । **स्पर्शयेत्,** दद्यात् । " विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् " **इत्यमरः** ( २।७।२९)। **स पारयन्निति ।** स पुत्रः पितॄन् श्राद्धादिभिः पारयन् प्रीणयन्नपि अन्यपुत्रवदप्रशस्तत्वाच्छवतुल्य इति पारशव इत्यर्थः । यद्यप्यस्य शूद्रापुत्रस्य विवाहिताजन्यत्वेनानुलोमजत्वेन च मूर्द्धावसिक्तादिवदौरसत्वमविशिष्टं तथाप्युक्तरीत्या अप्रशस्तत्वेन ततो भेदेन तत्रागणनम् एतेषु सत्सु तस्य सकलधनहरत्वाभावादत्र प्रकरणेऽन्ते परिगणनम् इति बोध्यम् ।

**वासिष्ठे** तु औरसानन्तरं ' तदलाभे नियुक्तायां क्षेत्रजो द्वितीयः, तृतीयः पुत्रिका विज्ञायते, पौनर्भवश्चतुर्थः, कानीनः पञ्चमो, दत्तकः षष्ठः, क्रीतः सप्तमः, स्वयमुपगतोऽष्टमो, अपविद्धो नवमो, गूढोत्पन्नो दशमः, कृत एकादशः, शूद्रापुत्र एव द्वादशो भवती 'त्युक्तम् । ( अध्याय १७)।

**वैष्णवे** तु " औरसक्षेत्रजपुत्रिकापुत्रपौनर्भवकानीनगूढोत्पन्नसहोढदत्तक्रीतस्वयमुपगतापविद्धयत्रक्वचनोत्पादिता द्वादशे " त्युक्तम् ।

**देवलीये** तु " औरसपुत्रिकापुत्रक्षेत्रजकानीनगूढोत्पन्नापविद्धसहोढपौनर्भवदत्तकस्वयमुपगतकृतिमक्रीता द्वादशे " त्युक्तम् ।

**नारदीये** तु—( अ. १३ । श्लो. ४५।४६ )

"औरसः क्षेत्रजश्चैव पुत्रिकापुत्र एव च । कानीनश्च सहोढश्च गूढोत्पन्नस्तथैव च ॥ "
" पौनर्भवोऽपविद्धश्च दत्तः क्रीतः कृतस्तथा । स्वयं चोपगतः पुत्रा द्वादशैते प्रकीर्तिताः ॥"

इत्युक्तम् । तस्मात्क्रमव्यत्ययकृतविरोधो दुष्परिहरोऽत आह—

**वासिष्ठादिष्विति । अगुणवदिति ।** ' असुब्वत ' इति भाष्यप्रयोगवदयं साधुः । अयं भावः । **मनुना** औरस इत्यादिना वर्गद्वयेनाद्यस्य तत्त्वं द्वितीयस्य तदभावं च प्रतिपाद्य तत्प्रसङ्गादेवाग्रे स्वल्पव्यवधानेनौरसादिपुत्रस्वरूपप्रतिपादनेनोपक्रमानुसारेण तथोक्तिर्न तु तत्त्वत एष क्रम इति ज्ञायते । अत एव तत्र क्रमश इत्युक्तिरपि तत्परैवेति न सर्वथा तात्विकैतत्क्रमबोधिकाऽपि तु कस्मिंश्चिद्विशेषे असत्येवासौ, विशेषे तु गुणवदगुणवद्रूप एवेति । एवं स्मृत्यन्तरपाठस्यापि गतिः । युक्तियुक्तश्च मूलोक्तक्रमः । तथा हि । औरसपुत्रिकयोरौरसत्वात्तत्समत्वाच्च प्रागुक्तिः । क्षेत्रजगूढजद्वितीयकानीनपौनर्भवानां•स्वबीजक्षेत्रोत्पन्नत्वादेव दत्ताद्यपेक्षया प्राबल्यम् । आद्यकानीनस्यापि स्वीयकन्योत्पात्तिकत्वादेव ततः प्राबल्यम् । अवान्तरमपि तारतम्यं स्पष्टमेव सर्वेषाम् । एवमग्रेऽपि सहोढजस्य स्वबीजाश्रयत्वेन परिगृहीतक्षेत्रोत्पन्नत्वेऽप्युत्तरषट्कयोगो गर्भोत्पत्तिकाले स्वक्षेत्रत्वाभावकृत एवेति सर्वमनवद्यमिति ।

इदमपि सर्वं युगान्तरविषयकम् । कलौ त्वौरसदत्तकावेव औरससमत्वात्पुत्रिका च ।
' दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः । ' इति **माधवादिस्मरणात्** ।

“ एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः । ”
निवर्त्तितानि कर्माणीति चरमेणास्यान्वयः । शिष्टाचारोऽपि तथैव दृश्यते ।

केचित्तु औरसेन पुत्रिकासंग्रहवत् दत्तपदेन तत्समकक्षक्रीतस्वयंदत्तकृत्रिमाणामपि ग्रहणम् । अत एव श्रेयसः श्रेयस इति **मनूक्तिः**,

“स्वगोत्रेण कृता ये स्युर्दत्तक्रीतादयः सुताः। विधिना गोत्रतां यान्ति न साषिण्ड्यं विधीयते।”
इति **वृद्धगौतमोक्तिः** ।

“दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता । सप्तमीं पञ्चमीं चैव गोत्रं तत्पालकस्य च ॥ ”
इति **बृहन्मनुः** ।

“ औरसः क्षेत्रजश्चैव दत्तः कृत्रिमकः सुतः ” । इति **कलिधर्मप्रस्तावे पराशरश्च** सङ्गच्छते । “ औरसादीनां सर्वेषां पुत्राणां प्रकृतत्वादौरसादीनुपक्रम्य तेषां पूर्वः पूर्वः श्रेयान्स एवं दायहरः सः चान्यान्बिभृयादिति ” **वैष्णवम्** । औरसादीनां पुत्राणां पूर्वपूर्वाभावे परः परो रिक्थमर्हति पूर्वसद्भावे परसंवर्द्धनं स एव कुर्यादिति, तदप्यपवादेतरविषयम् । यदि तु समानरूपा बहवः पुत्रास्तदा सर्वे एव विभज्य धनं गृह्णीयुरिति **मनु**व्याख्यातारः । यद्यपि मन्वादिकं युगान्तरपरतयाऽपि सुयोजं तथापि अन्त्यमन्यथा दुर्योजमेवेत्याहुः । वस्तुतो नियोगनिषेधेनैव क्षेत्रजनिषेधे तत्र क्षेत्रज इत्यौरसविशेषणमावश्यकं यथा तथा कृत्रिमक इत्यपि दत्तस्यैव विशेषणमिति बोध्यम् ।

नन्वेवमपि मूलस्य **गौतम**विरोध एव । तेन हि औरससमस्य पौत्रिकेयस्य दशमत्वेन परिगणन कृतम् । तथा हि पुत्रा औरसक्षेत्रजदत्तकृत्रिमगूढोत्पन्नापविद्धा रिक्थभाजः कानीनसहोढपौनर्भवपुत्रिकास्वयंदत्तक्रीता गोत्रभाजः चतुर्थांशभागिन इति । कानीनादीनां तुर्यांशभागित्वमत्रोक्तं चौरसाभावे पुत्रिकादिसत्त्वे च ज्ञेयम् । एवं क्षेत्रजादीनामपि तत् क्रमतो ज्ञेयम् । अन्यथा पूर्वविरोधो दुष्परिहर एव । स्वयंदत्तक्रीतयोस्तत्त्वं वासिष्ठाद्येकवाक्यतया प्रागुक्तरीत्या । गूढोत्पन्नस्य तत्त्वमौरसाद्यभावविषयकमिति बोध्यमित्यत आह । **गौतमीये त्विति** । **विजातीयेति** । ब्राह्मणादेः शूद्रान्यक्षत्रियादिस्त्रियामुत्पन्नपुत्रिकापुत्रविषय इत्यर्थः ।

तत्र परिगणनमात्रोक्त्या क्रमानुक्त्या तन्मात्रपरमेव तत्सर्वं न तु क्रमपरम् । अतः क्रमो मूलोक्त एव । पूर्वाभावे परः पर इत्युक्तेरिति केचित् ।

यद्यपि **वैष्णव**वादौ औरसादीनां प्रागुक्तानां प्रथमद्वितीयादित्वेन कथनात्, “ एतेषां पूर्वः पूर्वः श्रेयान् स एव दायहर ” इत्युक्तेश्च क्रमो विहित एव तथापि मूलोक्त एव युक्तियुक्त इति प्रागुक्तम् इति बोध्यम् । तदेतदभिप्रेत्यैव उपसंहरति । **तस्मादिति** ।

नन्वेवमपि **मूलादेर्मनु**विरोध एव । भ्रातॄणामिति **मनु**ना एकेन भ्रातुष्पुत्रेणैवान्येषामप्यपुत्रभ्रातॄणां पुत्रवत्त्वप्रतिपादनेन स पुत्र इति लाभेन मूलकृता च “ औरसो धर्मपत्नीज ” इत्यादिना “ पूर्वाभावे परः” इत्यन्तेन विभागकथनद्वारादिना द्वादशत्वस्य पुत्राणां प्रतिपादनेन द्वादशभ्यो ऽधिकोऽन्यस्तत्र कथमयमन्तर्भूतः तथा द्वादशत्वासङ्गतेरित्याशयेनाह । **यत्तु भ्रातॄणामिति** । **यत्तु**, यदपि । परिहराति । **तदपीति** । परमतमाह। **भ्रातुष्पुत्रस्येति** । सम्भवे इत्यनेनान्यथा अन्येषामपि अवकाशः सूचित इति न तत्प्रतिपादकस्मृतिविरोध इति सूचितम् **निषेधार्थमिति** । तथा च तस्य दत्तकत्वमिति न विरोध इति भावः ।

ननु निषेधार्थमित्यस्य निषेधाभिधेयकमित्यर्थः उत निषेधतात्पर्यकमित्यर्थः । नाद्यः । शब्दात्तदप्रतीतेः । नान्त्यः । तथा तात्पर्यस्य लक्षणां विना दुर्वचत्वेन वक्ष्यमाणरीत्या वचनोपपत्त्या मुख्यार्थबाधाभावेन तथार्थे साधकस्मृत्यन्तराभावेन तात्पर्यानुपपत्त्याद्यभावेन च निष्प्रयोजनलक्षणाया अनौचित्येन तदर्थासम्भवात् । तथा चेदमयुक्तम् । अतो वक्ष्यमाणं स्वाभिमतमर्थं हृदि निधाय स्वमतेन प्रकृतं विरोधं परिहरति । **न पुनरिति** । न चेत्यर्थः । **पुत्रत्वेति** । अपुत्रभ्रातृनिष्ठापितृतानिरूपितपुत्रत्वेत्यर्थः । कन्यादिसत्त्वे इत्यादिः । अत्रैव तात्पर्यं न तूक्तार्थे इति अत एवेदम् उपपादयितुमत्र हेतुमाह । **तत्सुता गोत्रजा इति** । पत्नीदुहितरश्चेत्यादिनाऽत्र वक्ष्यमाणेन भ्रात्रभावे भ्रातृसुतस्य धनभाक्त्वं प्रतिपादितम् । यदि तु **मनो**स्तथाऽर्थः स्यात्तदा तस्याप्यौरसादितुल्यतया पुत्रत्वेन सर्वेभ्यः पत्न्यादिभ्यः पूर्वमेव धनभाक्त्वस्य लाभेन तद्विरोधः स्पष्ट एव । किं च तथा सति अस्य क्रमपठितद्वादशमध्येऽन्तःपातस्य दुष्करत्वेन तदग्रे एव निवेशो वाच्यः । तथा च सर्वतोऽत्रापकृष्टत्वलाभेन वक्ष्यमाणस्मृतिकदम्बविरोधापत्तेः । प्रकृतसंख्याविरोधस्तु न दत्तः । शङ्काविषयत्वात् । न चैवमपि तथा सति त्रयोदशपुत्रत्वापत्त्या ' पुत्रान्द्वादशधानाहेति ' **मनु**विरोध एव कुतो न दत्त इति वाच्यम् । तदाशयस्य वक्ष्यमाणत्वादिति भावः । एतत्तत्त्वमनुपदमेव स्फुटीभविष्यतीत्यलम् ॥ १३२ ॥

## याज्ञवल्कीये १३३ श्लोकः ( पूर्वार्धः ) ।

सङ्गतिमाह । **इदानीमिति** । उपसंहारमात्रपरत्वे पौनरुक्त्यपरिहारेऽपि तथा चमत्काराभावेनाह । **व्याजेनेत्यादि । तत्रैव**, क्षेत्रजादिष्वेव । नियमस्वरूपं " सर्वं वाक्यम् " इति न्यायेनाह । **समानेति** । तद्व्यवच्छेद्यमाह । **न भिन्नेति** । तथा चैते सवर्णा एव युक्ताः पुत्रा भवन्ति । अत एव ' सवर्णायामिति ' **बौधायनेनो**क्तम् । एवं चैते क्षेत्रजादयो यद्यधिकवर्णादुत्पन्नाः तदाऽपि तन्नामधेयभाजो भवन्त्येव अपि तु सवर्णादुत्पन्ना इव प्रशस्ततरा न भवन्ति । सजातीयोष्विति सजातीयनियमात् । यदि हीनवर्णादुत्पन्नास्तदा प्रतिलोमजत्वेन निन्द्या एवेति बोध्यम् ।

तथा सति प्रसक्तपूर्वविरोधाभावाय कानीनादीषु सजातीयत्वमाह । **तत्र चेति** । तेषां पुत्राणां मध्ये इत्यर्थः । तथा नियमे सति चेत्यर्थो वा । ननु स्वतस्तत्कुतो नेत्यत आह । **स्वरूपेणेति** । स्वरूपतस्तेषां कुण्डगोलकयोरन्यतरत्वेन आद्यकानीनस्य व्यभिचारजन्यत्वेन वर्णजात्यन्तर्भावाभावस्याचाराध्यायेऽभिहितत्वादित्यर्थः । अन्यथाऽनुपपत्त्या चेदम् । अन्यथा विरोधो दुष्परिहर एव स्यादिति भावः ।

नन्वेवमपि मूर्द्धावसिक्तादीनां दायहरत्वानुक्त्या न्यूनता मूलादौ, तेषां तत्रानन्तर्भावात् । उपलक्षणतया तत्र तेषां ग्रहणे प्रागुक्तरीत्या मध्ये दुर्ग्रहत्वेन अन्ते ग्रहणे द्वादशाभावे तेषां दायहरत्वापत्तिः, उपसंहारविरोधापत्तिश्च, अतो ऽनुक्तं विशेषान्तरमाह तथेति । प्रतिलोमजव्यावृत्तये आह **अनुलोमेति** । प्रागुक्ताशयेनाह **औरसेष्विति** । तथा च परांशे एवायं नियमो न सर्वतः पूर्वांशे इति तत्रासवर्णत्वेऽपि न बाधकमिति न **शङ्को**क्तदोष इति भावः । अपिर्मुख्यपुत्रिकोभयसमुच्चायकः ।

एवं सति प्राप्तातिप्रसङ्गनिरासाय वक्ष्यमाणमूलसङ्गतये च आदिना पारशवान्यस्यैव ग्रहणमिति सूचयन् विशेषान्तरमाह **शूद्रेति । अन्याभावेऽपीति ।** मुख्यौरसादिपुत्राभावेऽपीत्यर्थः । उभयत्र मानमाह । **यथाहेति** । मन्वर्थमाह । **यदीति ।** यद्यपीत्यर्थः । क्वचित्तथैव पाठो वचनानुरोधी । पितेति शेषः । इदं च **मृतपितृकधनविभागविषयकम्** । अक्षरमर्यादया तथैव प्रतीतेः । जीवद्विभागे तु प्रसादादाने एकांशः, प्रसादे तु तावदेवेत्युक्तं यत्पुनर्ब्राह्मणेत्यादिना । अत एव तद्विरोधो न । तदेतदभिप्रेत्याह । **तस्मिन्निति** । पितरीत्यर्थः । दैद्यादिति[1] स्वारस्यादाह **क्षेत्रजादिरित्यादि । दशमांशादधिकमिति ।** न चेदं मनूक्तं दशमांशहारित्वं ' चतुस्त्रिद्व्येकभागाः स्युर्वर्णश ' इति मूलोक्तेन शूद्रापुत्रस्यैकांशहारित्वेन विरुद्धमिति वाच्यम् । ब्राह्मणीपुत्रस्य चत्वारोंऽशाः, क्षत्रियापुत्रस्य त्रयः, वैश्यापुत्रस्य द्वौ, शूद्रापुत्रस्यैक इति मिलित्वा दशेति तत्रापि दशांशहारित्वस्यैवोक्तत्वात् । तत्र शूद्रापुत्रांशापेक्षया चत्वारो भागा बोध्याः । **इतिः** शाब्दार्थसमाप्तौ ।

तात्पर्यार्थमाह । **अस्मादेवेति** । उक्तमनुवचनादेवेत्यर्थः । तदेव तथेत्यादिना प्रतिपादितमिति न तस्य निर्मूलता नापि कश्चित्तत्र विशेष इति भावः ।

## याज्ञवल्कीये १३३ ( उत्तरार्द्ध )–१३४ श्लोकौः ।

अत एव वक्ष्यमाणसङ्गतिमेवाह **अधुनेति ।** पूर्वोक्तोपसंहारस्य सविशेषस्य कथनानन्तरमित्यर्थः । **तत्प्रसङ्गेन,** तत्प्रकरणेन । तद्वक्तव्यत्वस्याप्यावश्यकत्वात् । **उत्पन्नः,** सोऽपि । कामत इत्यस्य व्याख्या **पितुरिति** । एवं पूर्वार्द्धेन जीवत्पितृकविभाग उक्तः ।

**मनुरपि,** ( अ. ९ । १७९ )

" दास्यां वा दासदास्यां वा यः शूद्रस्य सुतो भवेत् । सो ऽनुज्ञातो हरेदंशमिति धर्मो व्यवस्थितः ॥ " इति ।

उत्तरार्द्धे द्वितीयविभागपरं स्पष्टमेवेत्याह । **पितुरूर्ध्वमिति ।** मरणादिति शेषः । **परिणीतापुत्राः,** विवाहितापुत्राः । तदा ते भ्रातर इति पाठः । **अर्द्धभागिकं,** कर्मधारयान्मत्वर्थीयष्ठन् । अर्द्धभागिनमिति पाठे इनिर्बोध्यः । अर्द्धत्वस्य सापेक्षत्वादाह । **स्वभागादिति ।** तेषां प्रत्येकं यो भागोंऽशस्तत्रैकांशापेक्षयाऽर्द्धं समुदितद्रव्यात् दद्युरित्यर्थः ।

तृतीयार्द्धार्थमाह । **अथेति ।** हरेदित्यनेन जन्मना पुत्रवत्तस्यापि स्वत्वं सूचितम् । दुहितृणामित्याद्यर्थमाह । **यदीति ।** दुहितृसुतापेक्षया दुहितुः प्राथम्यस्य मूले वक्ष्यमाणत्वेन तत्सुतसत्त्वेऽपि कृत्स्नग्रहणे किमु वक्तव्यं साक्षाद्दुहितृसत्त्वे इति कैमुतिकन्यायासिद्धमर्थमाह । **परिणीतादुहितर इति ।** एवमेवाह । **तत्पुत्रा** इति ।

केचित्तु—दुहितृणामित्यत्राभावे इति शेषः । सुतादित्यत्रापि प्रत्यासत्त्या तत्सबन्धः । ' गामश्व ' इतिवत्समुच्चय इत्याशयोऽस्येत्याहुः । प्रत्यासत्तेरेवैतत्तात्पर्यार्थमाकांक्षितमाह । **तत्सद्भावे इति ।** अन्यतरसद्भावे इत्यर्थः । युक्त्यन्तरस्य वक्ष्यमाणत्वेनैतद्युक्तमिति **तत्त्वम्** । अन्यस्याश्रुतत्वात्तस्य च प्रकृतत्वेन बुद्धिस्थत्वमित्यत्रापि तथैवेति भावः ।

अत्र गृहजातप्रसङ्गात् दासविषये किञ्चिदनुक्तमुच्यते । तत्र तावद्दासाः पञ्चदश ।

---

[1] दद्यादिति दानक्रियायाः कर्त्राकांक्षत्वात् योग्यतया क्षेत्रजादेरेव कर्तृत्वमिति भावः ।

" गृहजातस्तथा क्रीतो लब्धो दायादुपागतः । अनाकालभृतस्तद्वदाहितः स्वामिना च यः ॥

" मोक्षितो महतश्चर्णाद्युद्धप्राप्तः पणे जितः । तवाहमित्युपगतः प्रव्रज्यावसितः कृतः ॥

" भक्तदासश्च विज्ञेयस्तथैव वडवाहृतः । विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः" ॥ इति । **नारदः** । ( अ. ५ श्लो. २६।२७।२८ ) तत्र गृहजादादौ विशेषमाहतुः—( **मनु**. अ. ९। १७९) **मनुयाज्ञवल्क्यौ**, ( **याज्ञ**. २ । श्लो. १३३ । १३४ ) " दास्यां वा दासदास्यां वा यः शूद्रस्य सुतो भवेत् । सोऽनुज्ञातो हरेदंशमिति धर्मो व्यवस्थितः" ॥ इति । " जातोऽपि दास्यां शूद्रेण कामतोंऽशहगे भवेत् । मृते पितरि कुर्युस्ते भ्रातरस्त्वर्द्धभागिकम् । अभ्रातृको हरेत्सर्वं दुहितॄणां सुतादृते ॥ " इति च ।

तत्र दास्यां कस्यां चित् ध्वजाहृताद्युक्तलक्षणायां तादृशस्य दासस्य कस्यचित्सम्बन्धिन्यां वा यः शूद्रस्य सुतो भवेत् स पित्रा " परिणीतापुत्रैः समांशभागो भवान्भवतु " इत्यनुज्ञातः सममंशमौरसेन हरेदिति शास्त्रव्यवस्था नियतेत्याद्यर्थ इति **कुल्लूकभट्टः** । शूद्रस्यानूढायामनियुक्तायामपि जातः सुत एव । एवं यद्यपि दासस्य दासी तथापि वचनात्तस्यां जातो न दासस्य दासः सुतो वाऽपि तु स्वामिन एव सुतोऽनुज्ञातस्तेन समसंशमौरसेन हरेदिति **मेधातिथिः** । जीवत्पितृकविभागेऽयं द्वितीयार्थो **मिताक्षरायां** स्पष्टः । तत्र द्वितीयेऽपिना क्रीतादयोऽपि समुच्चीयन्ते । यथा **पाणिनीये** ( ३।३।२ ) ' भूतेऽपी'त्यपिनाऽन्यकालसमुच्चयः । यथा वा,

" बलाद्दासीकृतश्चौरैर्विक्रीतश्चापि मुच्यते । "

इत्यत्रापिना ऽऽहितदत्तयोरन्यपठितयोः समुच्चयो **विज्ञानेश्वर**कृतः । न च अपिः पूर्वसमुच्चायक एवेति वाच्यम् । तं विनाऽपि **मनु**वत्तत्समुच्चयसम्भवात् । औरसान्यसमुच्चयस्यौरसेन सममिति वदतो **मेधातिथ्यादेः** परिणीतापुत्राः सन्तीत्यादि वदतो **विज्ञानेश्वरस्य** चानभिमतत्वात् । दत्तान्येषां कलिवर्ज्यत्वेन शूद्राणामविद्यत्वेन होमादिकरणासंभवान्न पुत्रस्य दाने प्रतिग्रहे वाऽधिकार इति तदसंभव इति तत्तात्पर्यात् । अत एव—

" तस्माच्छूद्रं समासाद्य सदा धर्मपथे स्थितम् । प्रायश्चित्तं प्रदातव्यं जपहोमविवर्जितम् ॥ "

इत्या**ङ्गिरसं**,

" तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः " । इति **मूलं** च सफलम् अन्यथा तयोस्तत्रानाधिकाराद्भवदुक्तरीत्यैव वचनान्तरविहितकर्मणां तयोरपि तद्वर्जनेन सिद्धौ तदानर्थक्यं स्पष्टमेव । तस्माद्यत्र तद्रहितं कार्यमिति वचनमस्ति तदेव तद्रहितं तत्र भवति नान्यत् । न चेह तथा वचनमस्ति । न च—

" ब्राह्मणानां सपिण्डेषु शूद्राणां शूद्रजातिषु । सर्वेषां चैव वर्णानां ज्ञातिष्वेव न चान्यतः

" दौहित्रं भागिनेयं वा शूद्राणां चापि दीयते । शूद्रः सर्वस्वमेवापि अशक्तश्चेद्यथाबलम् ॥ "

इति **शौनकीय**मस्त्येवेति वाच्यम् । तस्य **कालिकापुराणै**कवाक्यतया दत्ताख्यदासप्रतिपादने एव तात्पर्यात् । अत एव—

" ध्वजाहृतो भक्तदासो गृहजः क्रीतकृत्रिमौ । पैतृको दण्डदासश्च सप्तैते दासयोनयः ॥ "
( अ. ८।४१५ )

इति **मन्वा**द्युक्तदत्रिमस्य सावकाशत्वम् । अन्यथा दत्रिमयोः पुत्रदासयोर्विविक्तित्वं न स्यात् ।

मन्वादिरहितविधिना पुत्रत्वमन्यथा दासत्वमिति तु न । पूर्वोक्तहेतोः । अत एव **कालिकापुराणे** अदासतेति च्छेद इति केषाञ्चित्कल्पनाऽपि निरस्ता । अत एव तेषां दासत्वप्रतिपादनार्थं न तु परिसंख्यार्थमित्येवं **मानवं** व्याख्यातं व्याख्यात्रा । स्पष्टं चेदं **वाचस्पतिगोविन्दार्णवादि**निबन्धेषु । ब्राह्मणादित्रये नास्तीत्यादि तु दत्ताख्यदासत्वस्यैव बोधकम् । न च तत्र सुतपदाभ तथेति वाच्यम् । **मानवे**ऽप्यत्र सुतपदसत्त्वात् । किं च **मनू**क्तद्वितीयसमुच्चयानापत्तेः । एतेनोक्तसमुच्चायकत्वं तस्य नानुक्तसमुच्चायकत्वमित्यप्यपास्तम् । प्रागुक्तसमुच्चायकत्वे **मनू**क्तद्वितीयसमुच्चयानापत्तेः । बलाद्दासीत्यत्रापि तेन तयोः समुच्चयानापत्तेश्च । स्मृत्यन्तरीयेषु मानवस्यैव समुच्चयो न नारदीयस्येत्यत्रात एव मानाभावाच्च । एतेन जात इत्यनेनैव **मनू**क्तोभयसंग्रह इति स व्यर्थ एवेत्यप्यपास्तम् । फले संभवति तत्त्वकल्पनाया अन्याय्यत्वात् । एतदर्थमपि **नारदीयं** परिगणनम् । अन्यथा अपिवैयर्थ्यं स्पष्टमेव । पादपूरकत्वकल्पनापेक्षयोक्तमेवोचितम् । अत एव **मनुना** दासदास्यां वेत्यप्युक्तम् । **विज्ञानेश्वर**स्त्वत्राप्यंशे उदासीनः । एवं चान्येषामपि दासानां शूद्रस्वामिकधनांशहरणमुक्तरीत्या सिद्धम् । एवं सति "शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः ।"

( अ. १०।४१ ) इति **मनो**रन्यत्राप्यवर्णेषु तादृशेषु तथा बोध्यम् । न च **मनुविष्णवा**दिभिः "अनन्तरः सापिण्डाद्यस्तस्य तस्य धनं हरेत्" ( **मनु**. ९।१८७ ) इत्यादिना प्रत्यासत्तेरेवांशहरत्वे नियामकत्वस्योक्तत्वेन गृहजातस्य तत्सत्त्वेऽपि क्रीतादिदासेषु तदभावात्कथं तेषां तद्धरत्वमिति वाच्यम् । दत्तक्रीतादिपुत्रवदत्रापि उपाधिना तत्संभवात् । 'भ्रातरस्त्वर्द्धंभागिनमिति' 'अभ्रातृको हरेदिति' च तस्य भ्रातृत्वातिदेशाच्च । **मानवेन** सुतत्वातिदेशाच्च । अन्यथा 'मृते स्वामिन्यात्मीयमिति' **विष्णूक्तं** दासानां स्वामिमरणे सजातीयाशौचमपि न स्यात् । अत एव दासीगमने ऽन्यस्य दण्डोऽप्युक्तः,

"अवरुद्धासु दासीषु भुजिष्यासु तथैव च । गम्यास्वपि पुमान्दाप्यः पंचाशत्पणिकं दमम् ॥
"प्रसह्य दास्यभिगमे दण्डो दशपणः स्मृतः" ( **याज्ञ**. २।२९०।२९१ ) इत्यादि ।

अत एव च भक्तदासस्य स्वामिना सह विवाद उक्तः । अत एव च तेषां प्रव्रज्यावसितभिन्नानां दासत्वान्मुक्तौ कारणानि मोक्षक्रमश्चोक्तः—

"बलाद्दासीकृतश्चौरैर्विक्रीतश्चापि मुच्यते । स्वामिप्राणप्रदो भक्तत्यागात्तन्निष्क्रयादपि ॥"

इति **मूले** ( अ. २ श्लो. १८२ )

"यो वैषां स्वामिनं कश्चिन्मोक्षयेत्प्राणसंशयात् । दासत्वात्स विमुच्येत पुत्रभागं लभेत च ॥"
"अनाकालभृतो दास्यान्मुच्यते गोयुगं ददत् । संभक्षितं यद्दुर्भिक्षे न तच्छुध्येत कर्मणा ॥"
"भक्तस्योत्क्षेपणात्सद्यो भक्तदासः प्रमुच्यते । आहितोऽपि धनं दत्वा स्वामी यद्येनमुद्धरेत् ॥"
"ऋणं तु सोदयं दत्त्वा ऋणी दास्यात्प्रमुच्यते । कृतकालव्ययगमात्कृतकोऽपि विमुच्यते ॥"
"तवाहमित्युपगतो युद्धप्राप्तः पणे जितः । प्रतिशीर्षप्रदानेन मुच्येरंस्तुल्यकर्मणा ॥"
"निग्रहाद्वडवायास्तु मुच्यते वडवाहृतः"॥ इति **नारद**श्च । ( अ. ५ श्लो. ३०—३६ )

विनतायाः कद्रूदास्यान्मुक्तिरपि वैनतेयकृता **महाभारते** स्पष्टा ।

( ना. अ. ५ श्लो. ४२।४३ )

" स्वं दासमिच्छेद्यः कर्तुमदासं प्रीतमानसः । स्कन्धादादाय तस्यासौ भिन्द्यात्कुम्भं सहाम्भसा ॥ "
" साक्षताभिः सपुष्पाभिर्मूर्द्धन्यद्भिरवाकिरेत् । अदास इति चोक्त्वा त्रिः प्राङ्मुखं तमथोत्सृजेत् ॥ "

इत्यन्ते ऽन्यः । तस्मात्प्रत्यासत्तेः सत्त्वात् युक्तं तस्यापि तद्धरत्वम् । किं च पुत्रत्वादिप्रत्यासत्त्यपेक्षया दासत्वप्रत्त्यासत्तिरुत्तमोत्तमा । अत एवोक्तं 'तेषां दासस्य दासोऽहमिति' ।

अत एव च दास्यं नवविधभक्तिमध्ये गणितं, " श्रवणं कीर्तनम् " इत्यादि । तत्र तत्र मुख्याधिकारिणश्चोक्ताः, श्रीविष्णोः स्मरणे परीक्षिदित्यादि । दासविषये आशौचमपि ऋषिभिः प्रतिपादितम् । अत एव—

" छाया स्वो दासवर्गस्तु दुहिता कृपणं परम् " । इति **मनूक्तिः** ( अ. ४ । १८५ ) । सा चाचारे पप्रञ्चिता । अत एव श्राद्धे दासानां तृप्त्यर्थं भूमावुच्छिष्टान्नदानमुक्तम् । अत **एव** दासीनां वंशपत्रमित्यादिना **मनु**ना विभाज्यत्वनिषेधः कृतः । न चैवं—

" भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः । यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम् ॥ "
( अ. ८।४१६ )

इति **मनु**विरोध इति वाच्यम् । एते त्रयोऽर्जितधना अपि अधना धनास्वामिनः, भर्त्रादेरेव हि तत्र स्वामित्वं, ते यद्धनं अधिगच्छन्ति अर्जयन्ति तत्र स्वस्वामिस्वामिकत्वात् इत्यर्थेनांशग्रहणे भार्यादिवदविरोधात् । पारतन्त्र्यप्रतिपादनपरतया **मेधातिथिविज्ञानेश्वरा**दिभिर्व्याख्यातत्वेन स्वस्वकर्मणस्तदनुज्ञया तत्सत्त्वे करणेऽपि तद्दत्तस्यापि तदनन्तरं स्वातन्त्र्यस्य निर्विघ्नत्वाच्च । नञोऽल्पार्थत्वेनास्योपपत्तिर्बोध्या । अत्र भार्यादिसाहचर्यमपि तेषां तत्त्वे लिङ्गम् ।

" पुत्रः शिष्यस्तथा भार्या दासी दासस्तु पञ्चमः । प्राप्तापराधास्ताड्याः स्यू रज्ज्वा वेणुदलेन वा ॥
" अधस्तात्तु प्रहर्तव्यं नोत्तमाङ्गे कदाचन । अतोऽन्यथा तु प्रहरन् चौरस्याप्नोति किल्बिषम् ॥ "

इति **मानवो**क्तसाहचर्यमप्येवम् । ( अ. ८ श्लो. २९९ । ३०० )

यथा शिष्यस्य सर्वाभावे तद्धारित्वमेवं वर्णत्रये दासस्यापीत्यपि **मनु**तो लब्धम् । अत एव

" शुश्रूषकः पञ्चविधः शास्त्रे दृष्टो मनीषिभिः । चतुर्विधः कर्मकरस्तेषां दासास्त्रिपञ्चकाः ॥
" शिष्यान्तेवासिभृतकाश्चतुर्थस्त्वधिकर्मकृत् । एते कर्मकरा ज्ञेया दासास्तु गृहजादयः ॥
" सामान्यमस्वतन्त्रत्वमेषामाहुर्मनीषिणः । " इति **नारदः** सङ्गच्छते । ( अ. ५ श्लो. २-४ )

अत एव तुल्यदण्डोक्तिरपि सङ्गता ।

" दासत्वात्स विमुच्येत पुत्रभागं लभेत च । ( अ. ५।३० )

इति प्रागुक्त**नारदी**यमप्यत्र लिङ्गम् । दायादुपागत इति पैतृक इति च तत्र गणनमपि गृहजाताभिन्नानां तत्त्वे साधकम् । संबन्धसत्त्वे एव हि तथा । अन्यथा ऽसम्बद्धत्वं स्पष्टमेव । **मनुना**ऽपि गृहजस्य मध्यपाठेन सर्वेषां समत्वं बोधितम् । अत एव **नारदी**ये पञ्चदशत्वमपि तथैव बोध्यम् । किं चौरससत्त्वे दासस्य तत्र सति समांशभागित्वं तदिच्छया तदभावेऽपि चार्द्धभागित्वं, दत्तकस्य तु औरससत्त्वे चतुर्थांशभागित्वमिति ततस्तस्य दुर्बलत्वमेव । किं च पत्न्यादिभ्योऽप्ययं प्रबलः। पत्नीत्यादितः प्राक् पुत्रानन्तरं तद्विषये जातोऽपीति **योगिनो**क्तत्वात् । पुत्रप्रकरणे एव 'औरसः क्षेत्रजश्चैवे'त्यादिना 'पारशवः स्मृत' इत्यन्तेन प्रागुक्तक्रमेणोक्त्वा 'दास्यां वे'त्युक्त्वा 'क्षेत्रजादी'निति 'य एतेऽभिहिता'

ख-स्वामिनः । फ-अस्वामिनः । २ व्यय. ५।३०

इति च ' भ्रातॄणामि ' त्यतः प्राक् **मनू**क्तेश्च । अत एवाधुना शूद्रधनविभागे विशेषमाहेति व्याख्यात्रा ऽवतारितम् । विशेषपदेन पूर्वस्य त्रैवर्णिकमात्रविषयत्वमिति अत्र तन्निरासः सूचितः । न चैवं दुहितृदौहित्रयोरत्र ग्रहणं कथमिति वाच्यम्, प्रागुक्तपुत्रिकासुत इत्यस्य व्याख्याद्वयाभिप्रायेण तथोक्ति-रित्याशयात् । तेन प्रागुक्तप्रतिनिधिमध्येऽत्र युगेऽयमेव पुत्रिकापुत्रः शूद्रादौ प्रतिनिधिर्न दत्तक इति सूचितम् । दत्तौरसेतरेषां त्विति तु त्रैवर्णिकपरम् । परिग्रहपदस्वारस्यात् । अत एव 'तत्समः पुत्रिकासुत' । इत्युक्तम् । ' पत्नी दुहितर ' इति वक्ष्यमाणाशयेन तु नात्र तद्ग्रहणम् । प्रथमोपात्तपत्नीत्यागस्य निर्मूलत्वापत्तेः । दौहित्रस्य साक्षात्तत्रानुपादानाच्च । अत एवात्र दौहित्र्या न ग्रहणम् । तथा च यथौरसो मुख्योऽन्ये प्रतिनिधयः एवमत्र गृहजातो मुख्योऽन्ये प्रतिनिधय इति सिद्धम् । एतदर्थमेव तदनन्तरमेतदुक्तिः । तथा चात्र दत्तको नैवेति साम्प्रतम् । तथा सन्नपि दास एव । अत एव व्याख्यात्रादिना 'परिणीतापुत्राः सन्तीत्याद्युक्तमि'त्युक्तम् । अत एव—

" दत्ताद्या अपि तनया निजगोत्रेण संस्कृताः ॥ आयान्ति पुत्रतां सम्यगन्यबीजसमुद्भवाः ॥

" पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते ॥ आचूडान्तं न पुत्रः स पुत्रतां याति चान्यतः ॥

" चूडाद्या यदि संस्कारा निजगोत्रेण वै कृताः । दत्ताद्यास्तनयास्ते स्युरन्यथा दासतोच्यते ॥ "

इति **कालिकापुराणं** सङ्गच्छते ।

ब्राह्मणादित्रयेऽप्यङ्गवैकल्ये दासत्वं प्रतिपादयता तेन कैमुतिकन्यायेनान्यत्र तथा सति सुतरां तथेति सूचितमिति दिक् ।

एवं च ब्राह्मणादिस्थलेऽपि शिष्याद्यभावे दासः सर्वापहारी । तदभावे श्रोत्रियादिः । अत एव ' सर्वाभावे ' इति तत्रोक्तम् । **मानवं नारदीयं** च साहचर्यमप्यत्र गमकमिति बोध्यम् । न चैवमपि यथा— ( **मनु**. ९ । श्लो. ४८ । ५५ )

" गोश्वोष्ट्रदासदासीषु महिष्याजाविकासु च । नोत्पादकः प्रजाभागी तथैवान्याङ्गनासु च ॥ " इति ।

" एष धर्मो गवाश्वस्य दास्युष्ट्राजाविकस्य च । विहङ्गमहिषाणां च विज्ञेयः प्रसवं प्रति ॥

इति च **मनु**विरोध इति वाच्यम्, तत्रोत्पादकस्य स्वाम्यादभिन्नस्यैव स्पष्टत्वात् । अत एव दासदास्यामित्यत्र वचनात्तथेति **मेधातिथि**नोक्तम् । किंच द्विजात्युत्पन्नस्यैव निरंशस्य भरणमुक्तं व्याख्यात्रा । **याज्ञवल्क्यादि**नाऽपि ' भर्तव्याः स्युर्निरंशका ' इत्यादिना तेषां भरणमुक्तम् । स्त्रीस्थलेऽपि प्रतिबन्धकवशान्निरंशत्वे भरणमुक्तं ' भरणं चास्येति ' **नारदेन** ' अपुत्रा योषित ' इति **मूले**न च । तद्दृष्टान्तेनैव ' अनुकूलश्चेदिति ' वक्ष्यति **व्याख्या-कृत्** । तथा च यत्र कथमपि निरंशत्वप्राप्तिः तत्रैव भरणम्, अन्यत्रांशहरत्वमेव यथासम्भवम् । अत एव— ( अ. ९ । २०२ )

" सर्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा । ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेत् ॥"

इति **मनुना** 'अनंशौ क्लीबपतितौ' 'इत्यग्रिमेणाभरणे पातित्यमुक्तम् । 'अत्यन्त'मित्यस्य याव-ज्जीवमित्यर्थः । तथा च शूद्रादिस्थले परिणीतापुत्रपुत्रीदौहित्रसत्त्वे मृतपितृकविभागेऽर्धभागित्वं दासस्य, असत्त्वे तु सर्वहारित्वम् । अत एव ' दुहितॄणां सुताद्दते ' इति दौहित्रमात्रपरतया **मेधा-तिथिना** व्याख्यातमपि व्याख्यात्रोपेक्ष्य भेदेन व्याख्यातम् । दुहितृसत्त्वेऽपि सर्वहारित्वम् । ' याव-द्वचनं वाचनिकमिति ' सिद्धान्तात् ।

तदयं निर्गलितोऽर्थः । आद्यदासस्यौरसकल्पत्वं परिणयनाभावात् । अन्येषां दत्तककल्पत्वं, तत्र मन्त्रहोमयोरभावात् । तथा च तेषामन्यतमसत्त्वे मुख्यपुत्रादिसत्त्वे जीवत्पितृकविभागे तदिच्छया तत्समांशभागित्वम् । मृतपितृकविभागे तूक्तमेव । एवं दुहितृदौहित्रसत्त्वेपि । एवं पत्नीसत्त्वेऽपि पुत्रपौत्रदुहितृदौहित्राणामभावे सर्वग्राहित्वं, तदभावे तु पत्नीसत्त्वेऽपि संसृष्टिनोऽविभक्तस्य भ्रातुः सर्वहारित्वं, तदभावे तु पत्न्याः सर्वांशभागित्वमित्यादीति दिगिति । तदेतत्सर्वं हृदि निधायोक्तं ध्वनयन्नेव व्यङ्ग्यार्थमाह—

**अत्र चेति** । मूले इत्यर्थः । **लभते** इत्यस्य इति गम्यते इति शेषः । 'ब्राह्मणादीनां तु दासीसुताः प्रजीवनभाजो न रिक्थहरा' इति **मेधातिथि**रपि ॥ १३३ ॥ १३४ ॥

उक्तवक्ष्यमाणप्रमेययोः कठिनतरत्वात्तयोस्तात्पर्यार्थं सौकर्याय दर्शयंस्तत्र श्रोतृसमवधानाय पद्येन सङ्गतिमाह । **मुख्यगौणेति** । गौणेत्यनेन दासानामपि संग्रहः । उक्तक्रमेणेति भावः । **तेषामभावे इति** । तेषां सर्वेषां ब्राह्मणादिवर्णानां मूर्द्धावसिक्ताद्यनुलोमजानां दासानां चेत्यर्थः । दायादाः धनग्राहिणः ।

## याज्ञवल्कीये १३५।१३६ श्लोकौ ।

पत्नीत्यत्र एवकारस्य सर्वत्र प्रत्येकं सम्बन्धः । तेनाद्यादिसत्त्वे द्वितीयादिव्यावृत्तिः । **चेन** दौहित्रसमुच्चयः । 'भ्रातर' इत्यत्रैकशेषेण भगिनीनामपि ग्रहणं बोध्यम् । तथेति भ्रातृविशेषणं विभक्ता असंसृष्टिनश्चेत्यर्थकम् । अत एव सफलम् । न तु समुच्चयाद्यर्थकम् । तं विनाऽप्यन्यत्रैवात्रापि तत्प्रतीत्या तथा साफल्याभावात् । 'तत्सुता' इत्यत्र तयोः सुता इत्यर्थः । 'सुता' इत्यत्र तथैकशेषेण तयोः कन्यानामपि ग्रहणम् । बन्धुशब्देन बान्धववदाचार्यस्य गुरोरपि ग्रहणम् । तस्यानेकार्थत्वात् । हिः त्वर्थे पूर्वतो वैलक्षण्यसूचकः ।

'अपुत्रस्य' इत्यत्र मुख्यपुत्रशून्यत्वमात्रं न विवक्षितं प्रकरणविरोधात्, किंतु मुख्यगौणपुत्राणामभाव एवेत्याशयेन तृतीयपादस्य अग्रेऽन्वयासंभवात् पूर्वैकवाक्यतामाह । **पूर्वोक्ता इति** । एषामित्यत्रापि तथैकशेष इत्याह । **पत्न्यादीनामिति** । इदमो न बुद्धिस्थप्रत्येकपरामर्शित्वमित्याह । **अनुक्रान्तानामिति** निर्धारणे षष्ठीत्याह । **मध्ये इति** । अग्रिमानुरोधेन पूर्वस्येति वीप्सागर्भमित्याह । **पूर्वस्य पूर्वस्येति** । उत्तरोत्तर इति संबन्ध इति पाठः । उत्तरोत्तरो धनभागिति संबन्ध इत्यपाठः । पौनरुक्त्यादनन्वयाच्च । तथा पाठे तु तदीयधनभाक्त्वमुद्दिश्य तेषां तथोत्तरोत्तरत्वस्य विधानान्न दोषः ।

अत्र पुत्रग्रहणं पौत्रप्रपौत्रयोरप्युपलक्षणम् । जीवति मृते च पुत्रे पौत्राणां भागस्य 'भूर्या पितामहेति' 'अनेकपितृकाणामिति' चोक्तत्वात् ।

"अविभक्तविभक्तानां कुल्यानां वसतां सह । भूयो दायविभागः स्यात् आचतुर्थादिति स्थितिः" इति **देवलात्** । "अपुत्रपौत्रसंताने दौहित्रा धनमाप्नुयुः" । इति **विष्णुः** । पितो[1] 'सवर्णायाः पुत्रः पौत्रः पुत्रपौत्र' इत्युपक्रम्य "सत्स्वन्येषु तद्गामीति" **बौधायनोक्तेश्च** । (१।५।९५।९७) एवं पादत्रयैकवाक्यार्थमुक्त्वा तुर्यपादार्थमाह । **सर्वेष्विति** । सर्वशब्दो न वर्णविशेषणम्,

---

१ क-पित्रा ।

अपि तु स्वतन्त्र इति सर्वे च वर्णाश्चेतीतरेतरद्वंद्व इति भावः । **क्रम इति** । इदं क्रमपरमेव हीति स्पष्टमिति भावः ।

उक्तक्रमं विभज्य विविच्य दर्शयति । **तत्रेत्यादिना । तत्र** पत्न्यादीनां मध्ये । **प्रथमं** तथोपादानात् । तदर्थमाह । **विवाहसंस्कृतेति** । धर्मविवाहपूर्वकश्रौतस्मार्तकर्मसहाधिकारवतीत्यर्थः । तदेतत् ध्वनयन्नाह । **पत्युर्नो यज्ञेति । स्मरणात्, पाणिनिस्मृतेः** । (४।१।१३३) पतिशब्दस्य नकारादेशो भवति यज्ञसंयोगे गम्ये । दंपत्योः सहाधिकारेण यज्ञसाधनत्वात्तत्कर्तृकयज्ञफलभोक्त्रीत्वाच्च तस्या यज्ञसंयोगः । 'यज्ञसंयोगे' इत्यस्य यज्ञेन संबन्धे इत्यर्थः । स्त्रिया इति शेषः । संयोगपदं संबन्धोपलक्षणम् । संबन्धश्च यज्ञफलप्रतियोगिकैश्वर्यवत्त्वम् । तथा च विलक्षणविवाहसंस्कृतैव यज्ञसाधनं नान्येति सैव पत्नीत्युच्यत इति भावः । 'सवर्णासु विधौ धर्म्ये' इत्युक्त्या ज्येष्ठां विनाऽन्यासामनधिकारेऽपि तया सहाधिकारात् तदभावेऽप्यधिकारात्तासामपि तत्संबन्धो बोध्यः ।

एतेन "यद्यपि ज्येष्ठायामनिषिद्धायां सत्यामन्यासां नाधिकारस्तथापि तदभावे दीर्घरोगग्रस्तायां तस्यां पतितायां वाऽन्यासां क्रमेणाधिकारोऽस्तीति यज्ञसाधनत्वयोग्यताऽस्तीति 'यज्ञसंयोगे' इत्यत्र यज्ञसाधनत्वयोग्यता विवक्षिता । यद्वा यज्ञसंयोगशब्देन विवाह एव । तत्रापि देवतोद्देशेन द्रव्यस्य दीयमानत्वात्तद्रूपत्वाच्च यागस्य । एवमपि विवाहितैव पत्नी नान्येति तदा स्त्रियं विना विवाहस्यैवाभावाद्यज्ञसाधनत्वं बोध्यम्" इति **मदनोक्त**मपास्तम् । अन्यार्थे योग्यत्वविवक्षायामपि प्रकृते प्रोक्तरीत्या निर्वाहे तद्विवक्षाया अनुपयोगात्, द्वितीयार्थस्य भाष्याद्यसंमतत्वात्, उक्तरीत्या पूर्वपक्षस्यैवासंगतेश्च ।

एतेन "पत्नी विवाहिता, पत्युर्नो यज्ञेति अत्र वदतोऽग्रेऽप्युपसंहारे उभयत्र तथैव वदतो **विज्ञानेश्वरस्य** द्वितीयमतमेवेष्टमिति शूद्राया अपि तस्यास्तत्त्वम्, अत एव **कातीयादि**कमवरुद्धस्त्रीविषयमिति तेन वक्ष्यते, अन्यथा तां विहाय तत्पर्यन्तधावनासंगतिः स्पष्टैव" इति परास्तम् । तथेष्टत्वे पत्नी धर्मविवाहोढेति प्राग्वद्विवाहितेत्येव सिद्धे पत्युर्नो यज्ञेत्युल्लेखस्य निर्बीजत्वापत्तेः, अर्थान्तरस्य महाभाष्यविरुद्धत्वाच्चेति दिक् ।

न्यूनत्वादिनिरासायाह । **एकवचनमिति** । अत एव 'पत्न्यः कार्या' इत्यत्र बहुवचनं उक्तम् । **यथांशमिति** । सन्ति तदित्यादिः । 'चतुस्त्रिद्व्येकभागाः स्यु' रित्युक्तिक्रमेण ब्राह्मणी क्षत्रिया वैश्या गृह्णीयुरित्यर्थः । तथा च तस्य तादृशस्य समग्रधनग्रहणं पत्न्या कार्यमिति सिद्धम् ।

अत एव **व्यासः**—

"मृते भर्तरि साध्वी स्त्री ब्रह्मचर्ये व्यवस्थिता । स्नाता प्रतिदिनं दद्यात्स्वभर्त्रे सलिलाञ्जलिम्[1] ॥

"कुर्यादनुदिनं भक्त्या देवतानां च पूजनम् । विष्णोराराधनं चैव कुर्यान्नित्यमुपोषिता ॥

"दानानि विप्रमुख्येभ्यो दद्यात्पुण्यविवृद्धये । उपवासांश्च विविधान्कुर्याच्छास्त्रोदितान् शुभान् ॥

"लोकान्तरस्थभर्तारमात्मानं च वरानने । तारयत्युभयं नारी नित्यं धर्मपरायणा" ॥ इति ।

अनेन च पुत्रादिवत्सर्वोपकारकतया नरकादिनिस्तारकत्वेन च तदभावेऽन्यतः पूर्वं पत्न्या एव तत्त्वम्, अन्यथा दानाद्यसम्भव इति बोधितम् । सवर्णाया अभावेऽसवर्णाऽपि पत्नी । तेन शूद्राव्यवच्छेदः । तस्याः परिणीतात्वेऽप्यपत्नीत्वात् ।

---

१ क–सतिलाञ्जलिम् ।

अत एव **विष्णुः**—" सवर्णाऽभावे त्वनन्तरया चापदि, न त्वेव द्विजः शूद्रयेति " धर्मकार्यं कुर्यादित्यनुवर्तते । **आचाराध्याये मूले** चोक्तमिदम् । अतस्तस्या जीवनोपयुक्तांशभागित्वं, न कृत्स्नांशभागित्वमिति बोध्यम् ।

तत्र मानान्तरमप्याह । **वृद्धेत्यादिना । शयनं इति** । तच्छयनसाधनयोनिरक्षणं सम्यक्कुर्वतीत्यर्थः[1] । अत एवाह । **व्रते इति** । ब्रह्मचर्ये इत्यर्थः । एवेनेतरव्यवच्छेदः । तथा चेदमपि तदंशे क्रमबोधकमेवेति भावः । **तत्**, तस्मै भर्त्रे । **अंशं** धनम् । अपुत्रेत्युक्तेरिदमग्रिमं चापुत्रादिविषयमिति स्पष्टमेव । **बृहद्विष्णुरपीति** । पत्न्यादीनां क्रमेण सामान्येन सर्वधनग्रहणं वक्तीति शेषः । स हि क्रमपर एव स्पष्टः **मूलवत्** । **विष्णुरप्येवम्** । **मातृगामीतीति** । " तदभावे भ्रातृगामि, तदभावे भ्रातृपुत्रगामि, तदभावे बन्धुगामि, तदभावे सकुल्यगामि, तदभावे सहाध्यायिगामि, तदभावे ब्राह्मणधनवर्जं राजा स्वामीति " वाक्यशेषः । **कात्यायनेनापीति** । तथोक्तं किंचिदंशे इति भावः । **पत्नीति** । सेत्यादिः । **भर्तुरिति** । अपुत्रस्येत्यादिः । **मन्वादिस्मृत्यनुरोधात्** । धनहरीत्यत्र विशिष्टस्य पचादिषु पाठादच् । स नदडित्यादिवद्विदिति[2] ङीप् । **अव्यभिचारिणीति** । इदमप्रतिकूलाया अप्युपलक्षणम् । **दुहितेति** । तत्सामान्यमित्यर्थः । यद्यनूढेत्यादेरर्थस्तु वक्ष्यमाण एव । उक्तवाक्यमपुत्रपरमिति सूचयन् तदीयमेव वाक्यान्तरमाह । **तथेति** । अथशब्दः प्रारम्भादाविति यावत् । कुलजात्वं च नात्र सवर्णात् जातात्वमात्रम्, अपि तु सवर्णादानुलोम्येन च जातात्वे सति सत्कुलप्रसूतात्वम् । तेनाव्यभिचारिणी साध्वी गृह्यते । अत एव पूर्वस्यैकवाक्यता । अत एव तदभावे इत्यस्य अर्द्धद्वयमध्यपठितस्य पूर्वत्राप्यन्वयः। मूलाद्येकवाक्यतया चाग्रेऽपि प्रतिवाक्यं संबन्धः । अपिना दौहित्रसमुच्चयः । वाशब्द एवार्थः सर्वत्रान्वेति । पुत्राश्च प्रत्यासत्त्या भ्रातुरेव । चेन कन्यानामपि प्राग्वत् ग्रहणं बोध्यम् । भ्रातृपदं भगिनीनामप्युपलक्षणम् । पितामातेत्यंशेऽनेन प्रागुक्त**विष्णु**ना च तत्रान्यत्र च विरोधो यथा **मूलस्य** न, तथाऽग्रे स्फुटीभविष्यति । **बृहस्पतिरपीति** । सर्वत आदौ पत्न्या धनग्रहणं वक्तीति शेषः । कुल्येष्विति पित्रादिविशेषणमिति कश्चित् । वस्तुतो भिन्नं पितृभ्रातृसपिण्डान्यस्वकुलोत्पन्नदुहितृदौहितृभ्रातृसुतादिपरम् । पितृपदेनैकशेषेण मातुरपि ग्रहणम् । एवं भ्रातृपदेन भगिनीनामपि ग्रहणं बोध्यम् । " सपिण्डाः स्युः सनाभयः " इति कोशः **(अमरः** २।६।३३**)** । तेषु तेषु च विद्यमानेष्वपि अपुत्रस्य **मृ**तस्य पत्न्येव तस्य भर्तुः, भज्यते इति भागो धनं सर्वं, तद्धारिणीत्यर्थः ।

एवं स्वल्पस्मृत्यन्तरानुरोधेन **मूलार्थं** प्रतिपाद्य दृश्यमानान्यस्मृतिविरोधं परिहर्तुमादौ विरोधमाह । **एतदिति** । उक्तसर्वविरुद्धानीत्यर्थः । **चस्त्वर्थे** । **लक्ष्यन्ते** दृश्यन्ते । तान्येवाह । **तद्यथेति** । तान्येव क्रमेण प्रदर्शयामीत्यर्थः । तत्रादौ **नारद**माह । **भ्रातृणामिति** । निर्धारणे षष्ठी । अप्रजा इत्यत्र 'नित्यमसिच्' (व्या. सू. ५।४।१२२)इत्यसिच् । प्रजाशब्दः पुत्रादिमात्रपरः। **प्रेयात्** परलोकं गच्छेत् । **शेषास्ते** भ्रातर एव, प्रत्यासत्तेः । **चो** भिन्नक्रमः । **चेद्यदि** स्त्रियः भर्तुः शय्यां प्राग्वत् स्वयोनिं रक्षन्ति तदा जीवनक्षयपर्यन्तमस्य स्त्रीणां भरणं पोषणं कुर्वीरंश्चेत्यर्थः। **आच्छिन्द्युरिति** । इतरासु व्यभिचारीणीषु स्त्रीषु विषये भरणमप्याच्छिन्द्युरपाकुर्युर्न दद्युरिति यावदित्यर्थः । एतच्चापोषणमत्यन्तपरिदुष्टासु बोध्यम् । **च भरणमात्रमिति** । भरणमात्रं चेत्यर्थः । **मानवे** एवकारस्य पूर्वत्राप्यन्वयः । वाशब्दः समविकल्पे इत्याह । **पितुर्वा भ्रातुर्वेति** । **मन्व**न्तरमेवाह । **तथेति** ।

१ फ–कुर्वन्ती । २ फ–ख–इत्यादिवत् ङीप् ।

**वृत्तायां** समाप्तायाम् । मृतायामिति यावत् । **चः** त्वर्थे व्युत्क्रमे च । **शंखीये हिः** त्वर्थे । व्युत्क्रमेणान्वयः । एवार्थो वाशब्दः सर्वत्रान्वयी । 'ज्येष्ठायाश्चेति' **चो** व्युत्क्रमे । तेन सगोत्रशिष्यसब्रह्मचारिणि इति वाक्यशेषसमुच्चयः । **पैठीनसिर**प्येवम् । तदभावे इत्यस्याग्रेऽपि संबन्ध इत्याशयेनाह । **क्रमेण धनेति । कात्यायनेनापीति** । पितुर्भ्रातुर्मातुः पितामह्याश्च क्रमेण धनसंबन्धो दर्शित इति शेषः । क्रमादित्याद्युक्त्या तथा स्पष्टत्वादत्रेदं नोक्तम् । तच्चेत्थं, **वाशब्द** एवार्थः । **अथशब्द** आनन्तर्यार्थः उत्तरार्द्धे सर्वत्रान्वेति । तेन तत्तदभावो लभ्यते । तदेव स्फुटीकृतं । **क्रमादिति** । तत्पितुर्माता वेत्यन्वयः । विभागं विना तदीयद्रव्यस्यैव प्रायोऽसंभवेन पितुस्तद्धनहारित्वासंभवादुक्तम् । **विभक्ते इति** । भावे क्तः । विभागे जाते सतीत्यर्थः । यद्वा विभक्ते पितरि संस्थिते **मृते** सति इति । **इतिः** समाप्तौ ।

एवं विरोधमुक्त्वा तमुपसंहरन्नन्यकृतं तत्परिहारं दूषयितुं तावदनुवदति । **एवमादीनामित्यादिना** । एवमादीनां **कातीयादी**नाम् । आदिनाऽनुपदं वक्ष्यमाण**गौतमादेः** ।

" ततो दायमपुत्रस्य विभजेरन्सहोदराः । तुल्या दुहितरो वाऽपि ध्रियमाणः पिताऽपि वा ॥
" सवर्णा भ्रातरो माता भार्या चेति यथाक्रमम् । तेषामभावे गृह्णीयुः कुल्यानां सह वासिनः ॥"

इति **देवलस्य** च परिग्रहः । तुल्याः सवर्णदुहितरः । सवर्णा भ्रातरः सापत्नाः ।

**व्यवस्थेति** । भ्रात्रंशे इति भावः ।

**एतदिति** । **मूलवृद्धमनुविष्णुबृहस्पतिकात्यायनादि**प्रोक्तवचनसमूह इत्यर्थः । **विभक्तेति** । विभागस्योक्तत्वात्, विरुद्धकातीये विभक्ते इत्यस्योपादानाच्च ।

तत्रापि विशेषान्तरमाह । **सा चेति** । सा तु इत्यर्थः । तदा तत् तद्विषयमिति भावः । तदेव शङ्कानिरासेन द्रढयति । **कुत इत्यादिना** । नियोगार्थिन्या एव पत्न्याः धनग्रहणं, न स्वतन्त्रायास्तदनपेक्षिण्यास्तस्या इत्येतत् कुतः कस्माद्धेतोरित्यर्थः । तं हेतुमाह । **पितेत्यादिना कारणमस्तीतीत्यन्तेन** । आदिना **नारदी**यस्यापि परिग्रहः । **वचनात्** वचनजातविरोधात् । **तत्र** उभयेषामप्रामाण्यप्रसङ्गे तन्निरासायेति शेषः । व्यवस्थाकारणामिति समाहारद्वन्द्वः । कारणं च प्रत्यासत्तेस्तस्या एव । ननु तत् अन्यदेवास्तु किमिति नियोगापेक्षित्वमेवेति नियमोऽत आह । **नान्यदिति** । तथा च विभक्तभ्रातृस्त्रीविषयमित्यनेन व्यवस्थोक्ता । सा चेत्यनेन नियोगार्थित्वं तत्कारणमुक्तमिति भावः । **इति**र्हेतौ ।

न केवलं तथोक्तिमात्रेण तदर्थसाधनमपि तु वाचनिकोऽपि सोऽर्थ इत्याह । **गौतमेति** । तमेवाह । **पिण्डेति** । तथाऽस्फुटत्वात् व्याचष्टे । **अस्यार्थ इति** । **ऋषिः** प्रवरः । सगोत्रत्वे सप्रवरत्वे च सति सपिण्डा इत्यर्थः । अनेन पित्रादेर्धनसंबन्धस्तावदुक्तः । पक्षान्तरमाह । **स्त्रीवेति** । बीजं वेति वाशब्दार्थमाह । **यदीति** । निपातानामनेकार्थत्वात् ।

**मनुरपीति** । सोऽपि इत्यनेनैतद्दर्शयतीत्यन्वयः । **बिभृयात्,** रक्षेत् । स्त्रियमेव चेति पाठः । तद्धनं तस्य **भ्रातुर्ध**नं तस्यैव पुत्राय दद्यादित्युक्त्येदं विभक्तभ्रातृविषयम् । अन्यथा विभागाभावे तस्य पृथग्धनाभावात्तद्धनमित्यस्यासङ्गतिः स्पष्टैवेत्याशयेन एतत्पदार्थमाह । **विभक्तेति** । बहुव्रीहिः । पूर्वार्द्धोक्त एव उत्पाद्येत्यत्रान्वेतीत्याशयेनाह । **द्वारेणैवेति** ।

एवं विभक्तविषये उक्त्वाऽविभक्तविषयेऽपि तथेति **मनु**मेवाह । **तथा ऽविभक्तधनेऽपीति ।** अनेनेत्यादिभ्रातरीत्यादि च पूर्वानुषङ्गेण वाक्यार्थः । **अपि**द्वयं मिथःसमुच्चये । समो विभागः स्यादित्युक्त्येदमविभक्तविषयम् । विभक्ते विभागाभावात् । 'प्रतिषेधन्निति' हेतुगर्भं **वसिष्ठ**स्य विशेषणम् । 'लोभादिति' हेतौ पञ्चमी । नियोगे चान्वयः । 'नास्तीत्यस्य' न कार्य इत्यर्थः ।

एवं तद्विषयमुक्त्वा तद्दार्ढ्याय विरुद्धप्रागुक्त**नारद**विषयमाह । **नियोगाभावे त्विति ।** एवेन कृत्स्नधनसंबन्धव्यवच्छेदः । तदेवाह । **भरणमिति । जीवनेति ।** 'जीवितेति' पाठे भावे क्तः । एवं च प्रागुक्त**मन्वा**दिकमप्येतद्विषयमेवेति बोध्यम् । मूलसंमतिमप्यत्राह । **योगीति ।** तदेवाह । **अपुत्रा इति ।** वस्तुतोऽरुचौ किलशब्दोऽत्र । यथा 'त्वं किल योत्स्यसे' इति । अपुत्रा इति मूलस्यार्थान्तरस्य वक्ष्यमाणत्वादिति बोध्यम् ।

**अनधिकारात्** स्वातन्त्र्येण विध्यविषयत्वात् गुणाद्यभावादेश्च । **यज्ञार्थं** तत्सिद्ध्यर्थम् । **तत्र** यज्ञे । शास्त्रनिषिद्धत्वादपि तदनधिकृतत्वं बोध्यम् । **हि** यतः । तस्मात्तत् तथा स्थानेषु अनिषिद्धसगुणविधिविषयद्विजातिषु **नियोजयेत्** राजा । शास्त्रनिषिद्धाः शूद्रादयश्च विधर्मिणः । वस्तुतः केनापीत्युक्त्याऽत्र अनादरो द्योतितः । अत एवात्र वचने मूलं न प्रदर्शितमिति बोध्यम् ।

तदुक्तव्यवस्थां दूषयति । **तदनुपपन्नमिति ।** ननु तत्र तद्बोधकशब्दाभावेऽपि प्राकरणिकः सोऽर्थोऽत आह । **अप्रस्तुतत्वाच्चेति ।** अप्रकृतत्वादित्यर्थः ।

नन्वेवमप्यन्यथाऽनुपपत्त्या कल्पितः स इत्युक्तमेव । किं च । 'अपुत्रेण परक्षेत्रे' इत्यत्र स उपात्त इति तत्त्वमेव । अत आह । **अपि चेदमिति ।** नियोगः बीजधारणमूलभूतः ।

आद्यं खण्डयति । **तत्रेति ।** तयोर्मध्ये इत्यर्थः । एवेन द्वितीयव्यवच्छेदः । अत एवाह । **अनुत्पादितपुत्राया अपीति ।** अपिनेष्टसमुच्चयः । ननु नियोगस्यैव धनग्रहणे निमित्तत्वेऽनुत्पादितपुत्राया अपि धनग्रहणमस्तु को विरोधोऽत आह । **उत्पन्नस्य च पुत्रस्येति ।** नियोगोत्पन्नपुत्रस्य धनग्रहणे निमित्तत्वाभावेन तस्य धनसम्बन्धाभावे "पित्रोरूर्ध्वं विभजतां" "पिण्डदोंऽशहरश्चैषाम्" इति "स्वर्यातस्य ह्यपुत्रस्य" इति च यथाक्रमं द्वादशविधपुत्राणां विभागप्रकारकथनं पुत्राभावे एवेतरेषां धनग्रहणकथनं च विरुध्येतेति भावः ।

द्वितीयपक्षं दूषयति । **अथेति ।** 'सर्वं वाक्यमिति' न्यायेनाह । **तदपत्यस्यैवेति ।** एवं प्रागपि । **एवे**नाद्यव्यवच्छेदः । धनग्रहणे इति शेषः । **तथेति ।** तस्यैव तद्ग्रहणनिमित्तत्वे पुत्रस्यैव धनसम्बन्धनिमित्तत्वलाभात्, "पत्नी दुहितर" इत्यत्र पत्नीत्यंशो न पाठ्यः । तस्या धनसम्बन्धनिमित्तत्वाभावात्, अस्य वचनस्य तत्प्रदर्शनार्थत्वाच्चेति भावः ।

यद्यपि पत्न्या धनग्रहणे नियोगो वा निमित्तं, तदुत्पन्नमपत्यं वा, उभयं वा, विशिष्टं वा । अन्त्येऽपि नियोगः प्रधानमपत्यं वा । वैशिष्ट्यं च जन्यजनकभावसम्बन्धेनेति पञ्चपक्षीसंभव इति पक्षद्वयमात्रोपन्यासो न्यूनस्तथापि पक्षद्वयोक्तदूषणैरेवान्येषामपि सुपरिहरत्वेन पृथगनुक्तिः । तथा हि । यदा वैशिष्ट्ये नियोगः प्रधानं तदाऽपत्यं गौणमिति निमित्तमप्यनिमित्तमिव परतन्त्रत्वात् । तथा चानुत्पादितेत्याद्यपक्षोक्ताद्यदूषणं तदवस्थमेव । अथापत्यं प्रधानं तदोक्तरीत्या द्वितीयपक्षोक्तदोषस्तदवस्थ एव । उभयोः समप्राधान्ये नियोगवत्याः पत्न्याः पुत्रस्य च

धनसम्बन्धात् केवलं ‘ पत्नी दुहितर ’ इत्यनेन पत्न्या धनसम्बन्धोक्तिरयुक्ता। अथ तत्रापि नियोगोत्पन्नः पुत्रः प्रधानमित्युच्यते तथापि द्वितीयपक्षोक्तदोष एव। पुत्रस्यैव धनसम्बधादिति सर्वथोक्तदोषतो न मुक्तिरिति।

तत्र द्वितीयपक्षोक्तदोषोद्धारेण तं समर्थयन् शङ्कते। **अथ स्त्रीणामिति**। अयं भावः। स्त्रीणां सामान्येन भर्तृद्वारा पुत्रद्वारा वा धनसम्बन्धो न साक्षात्। ‘ न स्त्री स्वातन्त्र्यमर्हतीति ’ वचनात्। तथा च भर्तृपुत्ररहितायास्तदभावप्राप्तौ भर्त्रभावे नियोगेनैव पुत्रसिद्धेस्तस्यास्तद्द्वारा धनसम्बन्धबोधकं पत्नीति अस्मदुक्तव्यवस्थायामवश्याश्रयणीयायामेतदारम्भः सार्थक इति नोक्तदोष इति।

**मनु**माह। **अध्यग्नीति**। अध्यग्नि विवाहेऽग्निसमीपे लब्धम्। अध्यावहनिकं, द्विरागमने शिबिकाद्यावहनकाले यल्लब्धम्। तथा च **कात्यायनः**—

“ यत्पुनर्लभते नारी नीयमाना पितुर्गृहात्। अध्यावहनिकं नाम स्त्रीधनं तदुदाहृतम् ” ॥ इति।

इदं सर्वमग्रे स्फुटीभविष्यति। भ्रातृमातृपितृत्रितयत्र मध्यमपदलोपिसमासद्वयम्। आदिपदग्राह्यमपि अग्रे एव व्यक्तम्। **विरोधादिति**। तदुभयद्वारं विनाऽपि उत्तरार्द्धेन अन्यथा तत्सम्बन्धस्य तेन प्रतिपादनादित्यर्थः।

उक्तदोषोऽपि तदवस्थ एवेत्याह। **किं चेति**। **सर्वेति**। मुख्यगौणेत्यर्थः। **तत्र** आरब्धे पत्नीति वाक्ये। **नियुक्ताया इति**। पुत्रद्वारेति भावः। स च पुत्रः क्षेत्रज एवेत्याह। **क्षेत्रजस्यैवेति**। **स च,** आरब्धपत्नीतिप्रतिपाद्यार्थः। **प्रागेव**। ‘औरसो धर्मपत्नीज’ इत्यत्रैव। **अपुत्रेति**। अपुत्रसम्बन्धिधनग्राहिप्रकरणे इत्यर्थः। पौनरुक्त्यापत्तेरिति भावः।

द्वितीयहेतुनिरासायोक्तार्थस्योक्तं वाचनिकत्वं दोषसुकरतायै तद्वचनगत्यन्तराय च अनुवदति। **अथ पिण्डेति**। ‘न ही ’ त्यस्य प्रतीयते इत्यत्रान्वयः। **हि** यतः। ‘स्त्रीधन’ मित्यत्र स्त्रीति पदं भिन्नं कर्त्री च सा। अनपत्यस्य धनं स्त्री गृह्णीयादित्यर्थः।

एतेन स्त्री चेति पाठं धृत्वा “ द्विजातीनां केवलशूद्राभार्याविषयमिदं, तस्य धनं सपिण्डाद्याः प्रत्यासत्तिक्रमेण भजेरन् स्त्री च, सपिण्डादितस्तस्याः प्रथगुक्तेरर्द्धं तेऽर्धं स्त्रीति तदर्थः। स्त्रीग्रहणादिदं शूद्रापरमेवान्यासां पत्नीत्वात् ” इति **भ्रान्तो**क्तमपास्तम्। **मूलाशुद्धेः**, उपक्रमविरोधात्, तस्याधिकारिप्रदर्शनमात्रपरत्वाच्च।

**धर्मान्तरोपदेश इति**। प्रतीयते इत्यस्यानुषङ्गः। हेतौ। हेतुमाह। **वाशब्देति**। निपातानामनेकार्थत्वमपि लिङ्गानुशासनानुरोध्येवेति भावः। अयं भावः। ते धनभाजः स्त्री वा तथेत्युक्त्वा तस्या गतभर्तृकाया अन्यधर्मद्वयोपदेशं चिकीर्षुरेकं धर्ममुक्तवान्, ‘ सा स्त्री बीजं वा लिप्सेतेति ’। नियोगधर्मेण पुत्रमपेक्षेतेत्यर्थः। अत्र **वाशब्दो** न यथार्थः। मानाभावात्। किंतु विकल्पार्थः। स च पक्षान्तरापेक्षया। तदेव द्वितीयो धर्मः। स च वचनेन साक्षादश्रुतोऽपि वाशब्दबलात्स्मृत्यन्तरानुरोधाच्च नियोगेन पुत्राभिलाषरूपोपात्तपक्षप्रतियोगी संयतत्वरूपो धर्म इति ज्ञायते। तथा च नियोगात् पुत्रमपेक्षेत वा, संयता वा भवेदिति धनभजनम्, अर्थतोऽन्यधर्मद्वयोपदेश इति।

एवं तदीयहेतुद्वयं संखण्ड्य दोषान्तरमाह। **अपि चेति**। तदयोग्यतासूचकं विशेषणं **स्मृतीति**। तत्र हेतुमाह। **अपुत्रेति**। यत इति शेषः। तत्पिण्डमित्यतो ऽनुषज्यमानेन तच्छब्देन

भर्तृपरामर्शात् भर्तुः कृत्स्नमंशं पत्नी लभते न तु स्वांशं कृत्स्नमित्यर्थः । **कृत्स्नं** स्थावरं जङ्गमं च ।

अत एव **बृहस्पतिः**—

"जङ्गमं स्थावरं हेम कुप्यं धान्यं रसाम्बरम् । आदाय दापयेच्छ्राद्धं मासषाण्मासिकादिकम् ॥
"पितृव्यगुरुदौहित्रान् भर्तुः स्वस्त्रीयमातुलान् । पूजयेत्कव्यपूर्ताभ्यां वृद्धांश्चाप्यतिथीन् स्त्रियः ॥
"सपिण्डा बान्धवा ये तु तस्याः स्युः परिपन्थिनः। हिंस्युर्धनानि तान् राजा चौरदण्डेन घातयेत्"॥ इति।

क्वचित् स्थावरेऽपवादमाह स एव—

"यद्विभक्ते धनं किंचिदाध्यादिविविधिसम्भवम् । तज्जाया स्थावरं मुक्त्वा लभते गतभर्तृका "॥ इति ।

एवं च तत्स्थावरं विभक्तस्यापि भ्रातुरेव न पत्न्याः । इदमपि वचनं वक्ष्यमाणसिद्धान्ताद्यंशसाधकं बोध्यम् । एतेन "इदमविभक्तस्थावरविषयं, वृत्तहीनपत्नीविषयं वा, दुहितृरहितपत्नीविषयं वा, दायादानुमतिं विना स्थावरदानविक्रयादिनिषेधपरं वा" इति **परास्तम्** । आद्यान्त्ययोर्वचनविरोधात् । मानाभावस्यान्ययोः सत्त्वात् ।

"**मृते** भर्तरि भर्त्रंशं लभते कुलपालिका । यावज्जीवं न हि स्वाम्यं दानाधमनविक्रये ॥"

इति **कातीयं** तु नियुक्तान्यविषयकमिति[1] बोध्यम् ।

"धनं य" इति "कनीयान्" इति च पूर्वोक्त**मनु**द्वयस्य तात्पर्यान्तरं स्फुटमेव, न भवदुक्तं, मन्वन्तरविरोधादिति ध्वनयन्, तस्याः स्मृतिनिन्दितत्वं प्रतिपादयन्, तत्र दोषान्तरं तदुक्तमेवाह। **तथेति** । नियोगो निन्दितश्चेत्यर्थः । आदिपदग्राह्यव्याख्यानं च पूर्वं स्फुटम् । तयोस्तात्पर्यं[2] त्वित्थम् । तत्र विभक्तधनस्य भ्रातुरभावे विधिरुक्तो "धनं य" इति । तत्र पूर्वतो विशेष उक्तः "सोऽपत्यम्" इति । नियोगधर्मेणेति भावः । तस्यैवेति सम्बन्धसामान्ये षष्ठी । तदीयमाता एवकारव्यवच्छेद्या । अनेन च पुत्रसत्त्वे स्त्रीणां भरणार्हता, न तु पतिधनसम्बन्ध इति सूचितम् । एवं कनीयानित्यपि अविभक्तस्य श्रेष्ठस्य नियोगधर्मेण पितृवत्सोद्धारेंऽशे प्राप्ते तन्निवृत्त्यर्थं, समो विभागः स्यान्नोद्धारं न वाऽधिकं हरेज्ज्येष्ठः, नापि यत्किंचिदेव देयम्, अपि तु उत्पादकेन पितृव्येण कनीयसा समः स्यादिति ।

इत्थं हि गूढाकूतम् । **मनुनै**व नियोगस्य निन्दितत्वात्तत्परिहारः **सुकर** इति व्याख्यातृबुद्धिपरीक्षार्थं स्वाभिमतार्थं तस्यार्थं क्रमप्राप्तमदर्शयित्वैव वचनान्तराणि स्वेष्टार्थपरत्वेन दर्शितानि । परिहारस्त्वेवम्—

"अन्यस्मिन् हि नियुञ्जाना धर्मं हन्युः सनातनम् ।"

इत्यादिना विधवायां नियोगस्य निन्दितत्वादवश्यं नियोगेन विभक्तधनभ्रातृजायायां पुत्रमुत्पाद्य तद्धनं तस्यैव देयमिति न नियम्यते तेन वाक्येन, अपि तु "न स्त्री स्वातन्त्र्यमर्हतीति" **मनुना** स्त्रीणामेकाकितयाऽवस्थानं निषिद्धमिति देवरगृहे स्थितौ कृतायां स्त्रीणामप्रगल्भत्वेन तद्धनरक्षणे च देवरेण क्रियमाणे सन्ततिलोभात् सा स्त्री शास्त्रसिद्धत्वाद्गर्हितमपि नियोगं यद्यनुमन्यते

१ ख—मूलोक्तान्यविषयकमिति । फ—क—प्रोक्तान्यविषयकमिति। २ 'धनं य' इत्यस्य 'कनीयानि'त्यस्य चेत्यर्थः।

तदा ऽपत्ये उत्पन्ने देवरेण धनलोभो न कार्यस्तस्यैव तद्धनं दद्यात्, नापि तन्मात्रे अत एव बिभृयादिति धारणपोषणवाचिनो भृञ उक्तिरिति ।

तेन तदग्रे तद्वत् साधकत्वेनोक्त**वसिष्ठ**तात्पर्यमाह । **यत्त्विति । तत्** अविभक्ते इति । पक्षद्वयमिदम् । **तस्याः** तत्पत्न्याः । **नास्ति,** उक्तयुक्तेः । **इति**र्हेतौ । स च सम्बन्धेऽन्वेति । स्वस्य तदभावेऽपि स्वापत्यस्य स भवत्विति लोभान्नियोगो नापेक्षणीय इति भावः ।

अग्रिमयुक्तिं खण्डयति । **तदपीति । प्रस्तुतत्वात्,** तानुपक्रम्य भ्रातॄणामित्यादेरुक्तत्वात् । तथा चोपक्रमानुरोधेन तादृशस्य भ्रातुर्धनमितरे संसृष्टिनो भ्रातर एव गृह्णीयुरिति भावः । अत एवाह । **तत्स्त्रीणामिति ।** मात्रपदेन कृत्स्नधनसम्बन्धव्यवच्छेदः ।

उक्ताशयेनैव शङ्कते । **न चेति । पौनरुक्त्यमिति ।** उभयोरेकार्थबोधकत्वात् । **यत इति ।** पूर्वं संग्रहेण कथितमग्रे विवृण्वता तेन वाक्यद्वयेन स्त्रीधनमविभाज्यमिति तासां भरणमात्रं कार्यमिति चार्थद्वयं विधीयते, न केवलं पूर्वोक्तमेव कथ्यते । येन पौनरुक्त्यं स्यात् । तत्र भ्रातॄणामित्यादिना विवरणं, स्त्रीधनं विनेति तस्याविभाज्यत्वविधिः, उत्तरेणेतरविधिरिति भावः । एतेन " सवर्णाभावे त्वनन्तरया चापदि न त्वेव द्विजः शूद्रया " इति **विष्णू**क्तेः परिणीतात्वेऽप्यपत्नीत्वात्तद्विषयं **नारद**वचनम्, अत एव तत्र पत्नीशब्दस्तत्र स्त्रीशब्द इति " **प्राच्यो**क्तमपास्तम् । **उक्तरीत्योपपत्तेः ।** ' किलेति ' सूचितं **योगीश्वरो**क्तेर्वक्ष्यमाणं स्वेष्टार्थमाह । **यदपीति ।**

चरमदोषं खण्डयति । **यत्त्विति । जातस्य** तत्समूहस्य । ननु यज्ञशब्दो धर्ममात्रोपलक्षको न यज्ञवाचक इति दानहोमादिसिद्धया हेत्वसिद्धिरिति शङ्कते । **अथेति ।** देवतोद्देशेन द्रव्यत्यागो वैधे आधारे सवषट्कारो यागः । स एवावषट्कारो होमः । स्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनं दानमिति यागहोमदानानां भेदः । **एवं तर्हि,** धर्ममात्रे एव धनस्योपयोगे सति । धनसाधनकः कृषिवाणिज्यादिलभ्योऽर्थः । तादृशः स्रक्चन्दनादिविषयः कामः । इष्टापत्तावाह । **तथा सतीति ।** मूलोक्तिमाह । **धर्ममिति । गौतमो**क्तिमाह । **तथा न पूर्वाह्णेति ।** धर्मार्थकामेभ्यो यथाशक्ति पूर्वाह्णमध्यन्दिनापराह्णानफलान्न कुर्यादित्यर्थः । **मनू**क्तिमाह । **न तथैतानीति ।**

" इन्द्रियाणां विचरतां विषयेष्वपहारिषु । संयमे यत्नमातिष्ठेत् । " ( **मनु**. अ. २ । श्लो. ८८ )
इतीन्द्रियसंयमं प्रक्रम्य—

" प्रापणात्सर्वकामानां परित्यागो विशिष्यते । " ( अ. २।९५ )
" न तथैतानि शक्यन्ते सन्नियन्तुमसेवया । " ( अ. २।९६ )

इत्युक्तं **मनु**ना । अस्यार्थः । तेषां तद्विषयके संयमे सर्वभोगाणां प्रापणादुपभोगात् तद्धेतुकपरित्यागो विशिष्यते । समीचीन उत्तम इति यावत् । यतः एतानि विषयासक्त्या दोषजनकानीन्द्रियाणि असेवया स्रगादिविषयानुपभोगेन तथा संनियन्तुं सम्यक् नियन्तुं न शक्यन्ते यथा विषयोपभोगेन । विषयोपभोगेन यथा तद्गतदोषविज्ञानं तथा विषयानुपभोगेन नेति अनिषिद्धविषयोपभोगस्य वैराग्योत्पादकत्वेन कर्तव्यत्वादर्थकामाववश्यं साधनीयावित्येतत्प्रतिपादकवचनजातविरोध इति भावः ।

---

१ फ-यदपीति । २ फ-धनसाधनसाधकः ।

दोषान्तरमाह । **अपि चेति । भार्यमितीति** । विहितस्येति शेषः । **क्रत्वर्थता,** पूर्वपक्ष्युक्तेत्यादिः । **उक्तं** सिद्धान्तिना । **तत्प्रत्युद्धृतं** विघटितं विपरीतोक्तमिति यावत् ।

अयं भावः—तृतीयाध्यायचतुर्थपादैकादशाधिकरणम् । "अप्रकरणे तु तद्धर्मस्ततो विशेषात् ।" ( **जैमिनीये** ३। ४। ११ ) अनारभ्य श्रूयते, तस्मात् सुवर्णं हिरण्यं भार्यं दुर्वर्णोऽस्य भ्रातृव्यो भवतीति । तत्र संशयः—किमिदं हिरण्यधारणं क्रत्वङ्गतया विधीयते, उत क्रतुगतहिरण्यानुवादेन धारणसंस्कारो विधीयते, उत हिरण्यं हस्ते भवतीति विहितं यद्धारणं तदनुवादेन सुवर्णता शोभनवर्णतारूपो गुणो विधीयते यद्धिरण्यं भार्यं तत्सुवर्णमिति, उत हिरण्यधारणं पुरुषार्थतया विधीयते इति ।

**पूर्वपक्ष**स्तु—हिरण्यविशिष्टं धारणं यद्यपि विधीयते तथापि तस्य फलापेक्षायामस्य धारणस्य वेदवाक्यविहितत्वेन वैदिकत्वात्क्रियारूपत्वाच्च वैदिकदर्शपूर्णमासादिसाम्यात् फलवद्वैदिकं कर्म बुद्धिस्थं भवति । ततश्च तत्रैव वैदिके कर्मणि प्रयाजादिवदारादुपकारं कुर्वत् क्रत्वङ्गं धारणं भविष्यति । एतावतैव फलाकांक्षानिवृत्तेः स्वर्गादिफलकल्पना न युक्ते**त्येकः** ।

'हिरण्यं भार्य'मित्यत्र कृत्यप्रत्ययेन धारणविधानात् तत्कर्मणो हिरण्यस्य कृत्यश्रुत्या प्राधान्यप्रतीतेर्धारणं संस्कारो व्रीहीन् प्रोक्षतीत्यत्र प्रोक्षणमिव । ' भूतभाव्युपयोगं हि द्रव्यं संस्कारमर्हतीति ' न्यायेनोपयुक्तस्योपयोक्ष्यमाणस्य वा संस्कारः कार्यः । उपयोगश्च प्रयोजनवत एव, निष्फलस्य लौकिकसुवर्णस्य धारणसंस्कारायोगात् क्रतुगतहिरण्यानुवादेन धारणसंस्कारविधानमिति प्रयाजादिवदारादुपकारकमंगम्, अपि तु प्रोक्षणादिवत्संस्कारकर्मे**त्यपरः** ।

क्रतुगतं हिरण्यं तद्धारणं चानूद्य लाघवात्सुवर्णमिति शोभनवर्णता विधीयते **इत्यन्यः ।**

एवं त्रेधाऽपि तावत् क्रत्वर्थमिति प्राप्ते उच्यते । यदुक्तं वैदिकत्वक्रियात्वसाम्यात्क्रतुरुपतिष्ठते फलाकांक्षायामिति । नैष नियमो घटते । यतः स्वर्गाद्युत्पत्तेरपि क्रियात्वात् ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्यादिषु स्वर्गादेः कर्तृसम्बन्धितयोक्तेर्वैदिकत्वाच्च स्वर्गाद्युत्पत्तिं क्रतुं चोभयमुपस्थापयति वैदिकत्वं क्रियात्वं चेति हेतुद्वयं, न नियमतः क्रतुमेव, येन विशिष्टविधिपक्षेऽपि क्रत्वर्थता स्यात् । लोकेऽपि हिरण्यसत्त्वान्न क्रतुगतहिरण्यप्रतीतिः । न हि धारणं धार्यमाणसंस्कारः । अदृष्टार्थत्वेनापि धारणोपपत्तेः । कृत्यप्रत्ययश्च कर्मत्वं साध्यतामात्रं वाऽऽह न प्राधान्यम् । अनीप्सितकर्मणोऽपि विद्यमानत्वात् । अत एव धारणानुवादेन न सुवर्णतारूपगुणविधिः । क्रतुधारणाप्रतीतेः लोकेऽपि धारणसंभवात् । अतो न सर्वथा क्रत्वर्थं सुवर्णधारणम् । विधिवशाच्चावश्यं फलेन भवितव्यम् । तच्च फलमर्थवादाभावे विश्वजिन्न्यायेन स्वर्गः, तत्सत्त्वे तु रात्रिसत्रन्यायेन तद्गतमेव । अत्र तु ' दुर्वर्णोऽस्य भ्रातृव्यो भवतीति' श्रवणात् भ्रातृव्यस्य दुर्वर्णत्वमात्मनश्च शोभनरूपतैव फलमिति पुरुषार्थमेव हिरण्यधारणमिति **सिद्धान्त** इति ।

दोषान्तरमाह । **किं च यज्ञेति । पूर्वं** तडागारामादि ।

पूर्वोक्त**मनु**तात्पर्यशरीरघटकत्वेनोपस्थितमन्वतरविरोधमपि परिहरति । **यत्तु पारतन्त्र्येति ।** ( **मनु.** अ. ९।३ )

" पिता रक्षति कौमारे भर्ता रक्षति यौवने । रक्षन्ति स्थविरे पुत्राः " इति वाक्यादिः ।

आदिना 'कालेऽदाता पिता वाच्य' इत्यादितदग्रिममनुग्रहणम् । **तदस्त्विति** । पारतन्त्र्यमेकाकीभूत्वाऽनवस्थितिरिति तया स्वस्य पत्युर्धनग्रहेऽपि न विरोध इति भावः ।

एवं चरमसाधकखण्डने तत्साधकत्वेनोक्तवचनानामन्याशयत्वं शङ्कापूर्वकमाह । **कथं तर्हि इत्यादिना ।** सर्वं वाक्यमिति न्यायेनाह । **यज्ञार्थमेवेति ।** यज्ञार्थमिति वचने द्रव्यं यज्ञार्थं उत्पन्नमिति न विधिः, किं तु यागभिक्षयाऽवानिपतिगमनेन यज्ञार्थमेव तदुद्देशेनैव यत् द्रव्यमुत्पन्नं तत् द्रव्यं तेन यज्ञे एव नियोक्तव्यं, लोभादिना तेन तत्र विनियोगेऽकृतेऽपि तत्पुत्रादिभिरपि धर्मकार्येष्वेव नियोक्तव्यमिति सर्वथा 'धर्मार्थमर्जितं द्रव्यं धर्मे एव नियोक्तव्यमिति' विधीयते । अत एव धर्मेऽनधिकृतैस्तत् द्रव्यं न ग्राह्यम् । धर्मकरणेऽधिकाराभावात् । अत एव च ते ग्रासाच्छादनमात्रभाजना इति तदर्थ इति भावः । अपिनाऽर्जकपरिग्रहः ।

अत्र मानं **मनु**मेवाह । **यज्ञार्थमिति ।** 'यज्ञार्थं लब्धमिति' **मानवे** अर्जकनामग्रहणं विना सामान्यत उक्त्या 'अनारभ्याधीयीत नानृतं वदेत्' इतिवत्पुरुषमात्रोद्देशेन तस्य प्रवृत्त्याऽर्जकस्य तत्पुत्रादीनां च धर्मार्थद्रव्यस्य धर्मकृत्येष्वविनियोगे दोष इति भावः ।

पूर्वप्रसङ्गोपस्थितकात्यायनविरोधमपि परिहरति । **यदपीति ।** विरोधप्रकटतायै व्यत्यस्तपदोक्त्या असम्बद्धत्वनिरासाय च तदर्थमाह । **अदायिकमिति** । दायिके मत्वर्थीयष्ठन् । ततो बहुव्रीहिः । दायग्राहकशून्यमित्यर्थः । तदाह । **दायादेति** । तत्पदोक्तेराह । **यदिति** । अनेन श्रोत्रियेभ्यस्तदर्पयेदिति पाठः सूचितः । वक्ष्यमाणात्तु श्रोत्रियायोपपादयेदिति पाठो लभ्यते । तत्र उपेत्यादेः प्रापयेदित्यर्थः । तदाऽत्रोभयमध्याहारलभ्यम् । तत्र च जातावेकवचनमिति बोध्यम् । वृत्तिपदार्थमाह । **अशनेति** । योषितोऽत्रैव सम्बन्धो नाग्रेऽपीति भावः । द्वितीयार्धशेषार्थमस्यैवाह । **अस्यापवादमिति ।** तदनुवृत्तेराह । **योषिदिति** । तथा च स्त्रीणामशनादिपर्याप्तधनसम्बन्ध एव न सकलधनसम्बन्ध इति तदभिमतमिति तद्विरोधोऽसम्बद्धतानिरासश्च स्पष्ट एवेति भावः । एवं तदर्थं व्याख्याय अथ तं परिहरति । **एतदपीति** । प्रक्रान्तमपीत्यर्थः । तत्र बीजमाह । **योषिदिति ।**

**नारदा**न्तरविरोधमपि तथैव परिहरति । **नारदेति ।** इति **नारद**वचनमप्यवरुद्धस्त्रीविषयमेवेत्यर्थः । तदेवाह । **अन्यत्रेति** । अन्यत्र ब्राह्मणादिति पूर्वान्वयि ।

तथा च पूर्वपद्यम् ( अ. १३ श्लो. ५१ )

" अभावे दुहितॄणां वै सकुल्या बान्धवास्तथा । ततः सजात्याः सर्वेषामभावे राजगामि तत् "॥ इति ।

तथा च सर्वेषामभावे ब्राह्मणात्तदीयधनादन्यत्र तत् धनं राजगामि, किं तु धर्मपरायणो राजा तत्रापि तत्स्त्रीणां जीवनं दद्यादित्याद्यर्थः । **बृहस्पतिरप्येवम्** । जीवनपदार्थश्च—

**बृहस्पति**नैव तदग्रे उक्तः,

" अन्नार्थं तन्दुलप्रस्थमपराह्णे तु सेन्धनम् । वसनं त्रिपणक्रीतं देयमेकं त्रिमासतः ॥

" एतावदेव साध्वीनां चोदितं विधवाधनम् । वसनस्याशनस्यैव तथैव रजकस्य च ॥

" धनं व्यपोह्य तच्छिष्टं दायादानां प्रकल्पयेत् । " इति ।

साध्वीनामित्युक्त्याऽसाध्वीनां तदपि नेति सूचितम् । एतेनान्यत्र ब्राह्मणादिति **बृहस्पतिः।** क्षत्रियादिपरिणीतशूद्राविषय इति **भ्रान्तो**क्तमपास्तम् । एवं च सामान्यतः परिणीतशूद्राविषयकमपीदं द्वेयम् । तस्या अप्यपत्नीत्वात् । तथा चावरुद्धग्रहणं पत्नीत्वाभाववदुपलक्षणम् । तथा च यत्र पत्नीत्वा भावः पुनर्भ्वादावपि तत्र सर्वत्र इदमेव । एतदभिप्रायक एव **प्रजापति**रपि—

"आढकं भर्तृहीनाया दद्यादाभरणं स्त्रियाः"। इति ।

**ऊढाया इति।** श्रौतकर्मसु पाणिग्रहणपूर्वकसहाधिकारवत्या एवेत्यर्थः । **नारदा**द्येकवाक्यतयाऽह । **संयताया इति। देवल**वाक्ये यथाक्रममित्यस्य न स्वपाठक्रमेणेत्यर्थोऽपि तु मूल**विष्णवा**द्युक्तक्रमेणेत्यर्थ इति न तद्विरोधोऽपि । सोदरासोदरत्वकृताविशेषस्तु प्रागुक्तबृहस्पतिपराहत एव ।

एवं तदीयपक्षं संदूष्य स्वाभिमतमर्थमुपसंहरन्नेवाह। **तस्मादिति । पत्नीति ।** संयतेत्यादिः । कृत्स्नमित्यग्रे शेषः । ननूक्तस्यैवोपसंहारो युक्त इति अस्यार्थस्य 'पत्नी दुहितर' इत्यत्रानुक्तत्वात्कथमयमुपसंहार इति चेन्न, सकलवाक्यानां सर्वत्र स्वेतरवाक्याविरोधेनैव प्रवृत्तेर्न्याय्यत्वात्तदुक्तवक्ष्यमाणानुसन्धानेनास्यार्थस्य लाभादुक्तोपसंहारात् । तदेतत् ध्वनयन् उक्तं स्मारयन् वक्ष्यमाणमाह । **विभागस्येत्यादि ।** एतेन तस्याश्रुतत्वेऽपि प्रस्तुतत्वेनाप्रस्तुतत्वदोषनिरासः सूचितः । साक्षादपवादविषयपरिहारेणैवोत्सर्गप्रवृत्तेर्न्याय्यत्वात् । अन्यथाऽप्रामाण्याद्यापत्तेः ।

**एतेन,** वक्ष्यमाणदोषेण । **अल्पेति ।** यद्यल्पं धनं तदा तस्य तत् प्रथमं पत्नी गृह्णीयादिति पत्नीतिमूलतात्पर्यमित्यर्थः । निरसनप्रकारमेवाह । **तथाहीत्यादि । जीवदिति ।** पत्यौ जीवति मृते चेत्यर्थः । **उक्तं** मूलकृता । तदेव क्रमेणाह । **यदीत्यादि । व्यामोहेति ।** यदा पुत्रे सति तत्र जीवति मृते च तत्समांशभाक्त्वं न भरणमात्रपर्याप्तभाक्त्वं तस्याः, तदा किमु वक्तव्यमपुत्रस्य तस्य धनं सा सर्वं प्राप्नोतीति, कैमुतिकन्यायेनैव तस्याः सकलधनभाक्त्वसिद्धे ग्रासाच्छादनातिरिक्तं न प्राप्नोतीत्युक्तिर्भ्रान्तिवेत्यर्थः ।

किं चान्यपुत्रसत्त्वेंऽशग्रहणाधिकारिणा पुत्रान्तराभावे सकलरिक्थग्रहणाधिकारिणा पुत्रेण सह समांशभाक्त्वस्योक्तत्वात्पुत्राद्यभावे विभक्तादेस्तस्य सा सर्वं गृह्णातीति युक्तियुक्तमपि इदमिति तत् उपेक्ष्यमेवेति बोध्यम् ।

समांशकादिशब्दोऽपि जीवनोपयुक्तधनोपलक्षक इति न विरोध इत्याशयेनाह । **अथेति।** अंशशब्दस्य कथंचित्सार्थक्येऽप्याह । **समेति ।** भागतुल्यतयोरंशसमशब्दौ लोकप्रसिद्धौ । तयोर्निष्फलं स्वार्थत्यागोऽनुचित इति आनर्थक्यमिति भावः ।

ननु तयोः शब्दयोः पक्षे स्वार्थपरत्वान्न सर्वात्मनाऽऽनर्थक्यमिति विशेषमाशङ्कते । **स्यान्मतमिति । बहु** विपुलम् । कर्मधारयः । खण्डयति **तच्च नेति ।** विधिवैषम्यमेवाह । **तथाहीति ।** पत्यौ जीवति मृते वा पुत्रैः सह विभागकाले इति शेषः । **वाक्यान्तरमिति ।** 'भरणं चास्य कुर्वीरन्नि'त्यादीत्यर्थः । **प्रतिपादयतीति ।** विधत्ते इत्यर्थः । पत्न्यामिति भावः । **प्रतिपादयतीति इति ।** तथा च सकृदुच्चरितमेकमेव वचनं पक्षे सापेक्षं पक्षे निरपेक्षमित्येकरूपत्वाभावाद्विधिवैषम्यमिति भावः ।

---

१ अदायिकमिति कात्यायनबृहस्पतिभ्यामुक्तम् । अन्यत्रब्राह्मणादिति नारदोक्तं चेत्यर्थः ।

अत्रार्थे दृष्टान्ततया मानं दर्शयन् अस्य न्यायस्योपपादकमधिकरणं संगृह्य दर्शयति । **यथा चातुर्मास्येष्वित्यादिना** । सप्तमतृतीयपादाष्टमाधिकरणम् । 'सौमिकं तु प्रणयनमवाच्यं हीतरत् ।' सोमे सधर्मकमग्निप्रणयनं, दर्शपूर्णमासयोश्चाधर्मकं तत् । अग्निप्रणयनं नाम गार्हपत्यादाहवनीयादिष्वग्निनयनम् । उत्तरवेदिश्च सोमे एव न दर्शपूर्णमासयोः एवं प्रयोगस्थितिः । एवं स्थिते चातुर्मास्यस्थचतुष्कर्मसु वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाख्येषु श्रूयते " द्वयोः प्रणयन्ति तस्मात् द्वाभ्यां यन्ति उरू वा एते यज्ञस्य यद्वरुणप्रघासश्च साकमेधश्च " इति । तत्राद्यं द्वयोश्चातुर्मास्यपर्वणोः अग्निप्रणयनविधायकं, तस्मादित्यादिकं तदर्थवादवाक्यम् । तत्र संशयः । किं सौमिकप्रणयनवत्प्रणयनविधिरुत प्रणयनमात्रविधिरिति ।

तत्र पूर्वपक्षः । आद्यपक्ष एव युक्तः । द्वितीये प्रकृतिवदित्यतिदेशत एव प्रकृतिभूतदर्शपूर्णमासतः प्रणयनमात्रस्य प्राप्त्या तद्विध्यानर्थक्यापत्तेः । न च चोदकप्राप्तप्रणयनस्यानुवादकमेव तदस्तु किमर्थं विधानमिति वाच्यम् । प्रणयन्तीतिविधिप्रत्ययबलाद्विधेयत्वप्रतीतेः । किं च " न वैश्वदेवे उत्तरवेदिमुपकिरन्ति न शुनासीरिये " इति वाक्यद्वयेन तयोः पर्वणोरुत्तरवेदिप्रतिषेधः प्राप्तिसापेक्षो यतः स्वमते उपपद्यते । आद्यपक्षे हि सौमिकवदित्यतिदेशप्रतीत्या तत्रत्यसकलधर्मप्राप्तौ उत्तरवेदेरपि प्राप्तत्वात् । द्वितीये तु प्रकृतावेवोत्तरवेदेरभावात्तत्प्रणयनप्राप्तावपि उत्तरवेदिप्राप्त्यभावेन "न वैश्वदेवे" इत्यादिप्रतिषेधासङ्गतिः स्पष्टैव । तस्मात्स प्रतिषेधोऽपि सौमिकवत्प्रणयनविधाने हेतुरिति पूर्वपक्ष्याशयः । तदाह । **द्वयोः प्रणयन्तीत्यादिना दर्शिते इत्यन्तेन** । उपकिरतीति पाठान्तरम् ।

नन्विदमयुक्तं, प्रकारान्तरेण निषेधसाफल्ये तथैव स्वीकारे दुराग्रहमात्रत्वात् । तथाहि । प्रतिशेषस्य प्राप्तिसापेक्षत्वेऽपि न त्वदुक्तरीत्या प्राप्तिः । तत्प्रकारं विनाऽपि चातुर्मास्यप्रकरणपठितेनैव उपात्र वपन्तीत्यनेनोत्तरवेदेर्विधानात्तल्लब्धोत्तरवेदेराद्यन्तपर्वणोर्निषेधकमुक्तवाक्यद्वयमिति तदुपपत्त्या सौमिकप्रणयनातिदेशः पूर्वपक्ष्युक्तो न घटते इति चेत्, तदेवाह । **राद्धान्तैकेत्याद्यभिहित इत्यन्तेन** । पूर्वपक्षमततिरस्कारकत्वात्सिद्धान्तित्वात्सिद्धत्वं, स्वोक्तेरप्ययुक्तत्वस्य तेनैव वक्ष्यमाणत्वादेकदेशित्वम् । **उपात्रेति** । अत्र चातुर्मास्येषु उपवपन्ति वेदिम् उपकिरन्तीत्यर्थः । **प्राकरणिकेनेति** । चातुर्मास्यप्रकरणपठितेनेत्यर्थः ।

नन्विदमप्ययुक्तं, विधिवैषम्यापत्तेः । तथाहि । उपात्रेति वाक्यं चातुर्मास्यपरमा पूर्वशेषतयोत्तरवेदिं विदधत् पर्वचतुष्टयेऽप्यविशेषेण तां विधत्ते । 'न वैश्वे'त्यादिवाक्यद्वयं तु पर्वद्वयं निषेधकम् । तथा च तद्विधिनिषेधयोर्द्वयोरपि वाक्यप्रमितत्वेन वाचनिकत्वाविशेषात् तुल्यत्वेन विकल्पः प्राप्नोति । स चेत्थम्, उपात्रेति वाक्यं आद्यन्त्यपर्वणोर्यदा न वैश्वेत्यादिवाक्यद्वयमपेक्ष्य तेन प्राप्तस्य निषेधद्वयार्थस्यानुष्ठानाभावस्तदैव पक्षे तदपक्ष्योत्तरवेदिं विधत्ते ऽन्यथा न, मध्यमपर्वणोस्तु निषेधवाक्यानपेक्षयैव नित्यवत् तां विधत्ते । तथा च द्वयोर्वाक्यान्तरानपेक्षतयोत्तरवेदिविधिर्द्वयोर्वाक्यान्तरसापेक्षतया पक्षे विधिरिति सकृच्छ्रुतवाक्यमेकत्र पक्षे प्राप्तमेकत्र नित्यवदिति एकरूपप्रवृत्त्यभावाद्विधिवैषम्यापत्तिः । तस्मादगत्या पूर्वपक्ष्युक्तमेव युक्तमिति चेत्, तदेव स आह । **पुनःपूर्वेत्यादिना दर्शितमित्यन्तेन** । सिद्धान्त्येकदेशिमतानन्तरं मुख्यसिद्धान्त्युक्तिरुचितेति तद्भ्रान्तिनिरासाय पुनः पूर्वपक्षिणेत्युक्तम् । इतीति कर्तृ । **प्रतिषेधमिति** । 'न वैश्वे'त्यादिवाक्यद्वयप्राप्तम् । **निरपेक्षमिति** । प्रतिषेधेत्यादिः । नित्यताबोधकपदाभावादाह । **नित्यवदिति** ।

सिद्धान्तस्त्वित्थम् । विधिप्रत्ययश्रुतेः प्रणयनं तावद्विधेयमेव । तत्त्वादेव दार्शपौर्णमासिकप्रणयनादन्यदेतदिति गम्यते । न चैवं प्रणयनमात्रमेव, आतिदेशिकं न, किं त्वौपदेशिकमिति प्रवृत्तौ न कोऽपि विशेष इति वाच्यम् । तस्मादित्याद्यर्थवादस्य प्रणयनवाक्यैकवाक्यतया प्रामाण्योपपत्तिरित्यर्थवादबलेन मध्यमपर्वद्वये उत्तरवेदेरुपसंहारेणानुष्ठाने विशेषसत्त्वात् । तथा च द्वयोः प्रणयन्ति तस्मादित्यादेर्मध्यमपर्वद्वयघटितत्वेन तत्रैव प्रणयनविधिर्यत्र प्रणयनं तत्रैवोत्तरवेदिविधिरिति । उपात्रेत्युत्तरवेदिविधानमप्यर्थवादानुसारेण मध्यमपर्वणोरेव नाद्यन्तयोरिति तयोरुत्तरवेदिप्राप्त्यभावात् न वैश्वेत्यादिवाक्यद्वयमाद्यन्तयोः पर्वणोर्नित्यानुवादकम् । "नान्तरिक्षे न दिव्यग्निश्चेतव्य" इतिवत् । तथा च पर्वचतुष्टये उत्तरवेदिप्राप्तेरेवाभावाद्विधिवैषम्यमपि नास्त्येवेति प्रणयनान्तरविधिरेवेति । एतेनेदं प्रणयनविधानमाद्यन्तयोः पर्वणोरुत मध्यमयोरेवेति संशये न वैश्वेत्यादिना तत्प्रतिषेधादसत्यां प्राप्तौ प्रतिषेधानुपपत्त्याऽद्यन्तयोः प्रणयनं पूर्वपक्षे इत्यपि निरस्तम् इति । तदाह । **राद्धान्तेऽपीति** । अस्य दर्शितमित्यत्रान्वयः । **विधिवैषम्यभयादिति** । सिद्धान्त्येकदेशिमते इत्यादिः । **इत्याद्यर्थवादेति** । इति विधिरादिर्यस्य तस्मादित्याद्यर्थवादस्य तस्य पर्यालोचनयेत्यर्थः । तस्य मध्यमपर्वद्वयघटितत्वादिति भावः । तथा च यथा तत्र तन्मते विधिवैषम्यं दोषः तथा "पत्न्यः कार्याः" "माताऽप्यंशम्" इत्यत्र सकृच्छ्रुतावंशसमशब्दावपि भर्तुर्बहुधनपक्षे 'भरणश्चास्येत्यादि' वाक्यपर्यालोचनया जीवनोपयुक्तधनपरौ स्वल्पधने तु वाक्यान्तरनैरपेक्ष्येण नित्यवत्पुत्रांशसमांशपराविति **श्रीकरा**द्युक्तव्यवस्थायां विधिवैषम्यदोषो दुर्वार इति तात्पर्यम् ।

पत्नीत्यस्य अन्यैरन्यथा कृतां व्यवस्थां खण्डयितुमाह । **यदपीत्यादिना पत्नीदुहितर इत्यारब्धमित्यन्तेन । तथा** तद्वत् । अत एव चशब्दासङ्गतिर्न । **मनुशंखयो**स्तात्पर्यार्थमाह । **अपुत्रस्य धनमिति** । यद्यपि मानवे पिता आदिस्तथापि तस्य क्रमाबोधकत्वेन तद्बोधकशंखेनान्यथा नयनम्, अत एव तस्यापि कथनमित्याशयेनाह । **भ्रात्रिति** । वचनाच्चेति **च**स्त्वर्थे । **नारद**तात्पर्यार्थमाह **भरणोपयुक्तमिति । एवं स्थिते,** उभयप्रामाण्याद्पुत्रप्रमीतभ्रातृधनभाज इतरे भ्रातरः, स्त्र्यपि जीवनोपयुक्तं धनं लभते इत्येवं व्यवस्थिते । **भ्रातर इति** । इति द्वयमपि घटते इति शेषः । **मात्र**मवधारणे । **ततो न्यूनं वेति** । तज्जीवनायापि नालमित्यर्थः । अनयोः संग्रहस्तु बहुधनभिन्नत्वेनेति बोध्यम् । **पत्न्येवेति । नारदो**क्तेः । **भ्रातरोऽपीति । मनुशंखोक्तेः** । अपिना ततस्तस्याः समुच्चयः । **विरोधे** प्राप्ते सति तद्विषये एव तन्निवृत्त्यर्थमिति शेषः । **पूर्वेति** । **पूर्व**त्वं च मौलम् । तत्र विषये एवादौ पत्न्येव गृह्णातीति वक्तुं क्रमप्रतिपादकं **योगीश्वरेण** वचनं पत्नीत्यारब्धमित्यर्थः । सर्वथा पत्न्येवापुत्रभर्तृधनभागिनीति[1] भावः ।

खण्डयति । **तदप्यत्रेति । अत्र भगवान्** पूज्यः । **आचार्यो, विश्वरूपाचार्यः** । **मनो**रन्यार्थत्वस्य तेन दर्शितत्वादित्यर्थः । तदेवाह । **यत इत्यादिना व्याचचक्षे इत्यन्तेन** । यत इत्यस्य व्याचचक्षे इत्यत्रान्वयः । यतस्तथाऽत इत्यर्थः । स एवेति भावः । **इति** इत्यत्र । विकल्पे एवेति विषयसप्तमी संबन्धिनस्तत्त्वविवक्षया । विकल्पस्यैवेति पाठान्तरम् । विकल्पस्मरणादित्यपि तथा । मात्रपदेन क्रमव्यवच्छेदः । **तच्च** अधिकारप्रदर्शनं च । आदिना दुहितृदौहित्रस्य मातुश्च परिग्रहः । **अत एवाह । गणे इति** । अयं भावः । दायग्रहणे पित्रादिक्रमप्रतिपादकं तच्च, येनोक्तव्यवस्था स्यात्,

१ ङ-ख भागिनीनेति भावः ।

अपि तु पित्रादयोऽपि धनग्रहणेऽधिकारिण इत्यधिकारप्रदर्शनपरम् । वाशब्देन विकल्पप्रतीतेः । समयोर्हि विकल्पः । पितुरभावेऽन्येऽधिकारिण इति क्रमविवक्षायां तु पितुः प्राधान्यप्रतीत्या तस्यान्येषां च साम्याभावाद्विकल्पासङ्गतिरेव । तस्याधिकारप्रदर्शनमात्रपरत्वे तु पत्नीं दुहितरं दौहित्रं मातरं च गणयित्वा पिता हरेदिति पित्रादिगणने कृते तस्याधिकारो घटत एवेति । तस्मा॰ स्य तथोक्तिरयुक्तैवेति तात्पर्यार्थं **मूलशंख**वाक्यमपि तेनान्यथा व्याख्यातमित्याह । **शंखेति । संसृष्टेति ।** विभागानन्तरं पुनरपि स्नेहादिना एकीभूयस्थितभ्रातृविषयमित्यर्थः । 'इती'त्यस्य 'व्याचचक्षे' इत्यस्यानुषङ्गेणान्वयः । एवमप्यन्यथा प्रसक्तविरोधपरिहारस्त्वग्रे स्फुटीभविष्यति ।

स्वयं दोषान्तरमाह । **अपि चेति ।** यत इति शेषः । एवमग्रेऽपि । **अस्मात्** पत्नीदुहितर इत्यस्मात् । न केवलं तदननुमतत्वादि किन्तु दोषोऽपि प्रागुक्तस्तथा व्याख्याने इत्याह । **धनेति ।** अत एव **चः** किं चेत्यर्थे । व्युत्क्रमेण सर्वान्त्ये स बोध्यः । पत्न्यंशे तथाऽर्थे वाचनिकेऽपि तत्र स्त्रीत्वस्यैव त्वन्मते हेतुत्वस्याभिमतत्वेन तस्याविशेषेण युक्तितौल्येनाह । **दुहितर इति । विषयद्वये इति ।** इदमुपलक्षणं, मातृविषये इत्यपि बोध्यम् । **वाक्यान्तरम्,** भरणं चास्येत्यादि । तत्र **मात्रं** कार्त्स्न्ये । उक्तहेतोः पत्नीत्यस्य तादृशधनविषयत्वे तुल्यन्यायेन दुहित्रादावपि तथाप्राप्त्या धनभागिति वाक्यशेषोऽपि भरणं चास्येत्यादिपर्यालोचनया यदि चाल्पं धनं तदेव पत्नी गृह्णात्यादौ तदभावे दुहिता न बहुधने इति पाक्षिकं धनग्रहणं पत्न्यादेः प्रापयति, पित्रादिषु तु वाक्यान्तरनैरपेक्ष्येणैव नित्यवत् तत् बोधयतीति स दोषस्तदवस्थ एवेति भावः ।

पूर्वं संयताया एव तस्या धनग्रहणमुक्तं द्रढयितुमन्यविरोधं परिहरति । **यत्त्विति ।** यौवनस्था चेदिति यथास्थितमेव । **कर्कशा** क्रूरा । अनेन कृत्स्नधनासम्बन्धः स्पष्ट एवोक्त इति विरोधः स्फुट एव । परिहरति । **तदपीति ।** विधवा यौवनस्था नारी कर्कशा चेद्भवतीत्वन्वयः । कर्कशात्वं च नान्यादृशं किं तु दुरूहदुरभिप्रायकत्वं, प्रागुक्तस्मृत्यन्तरानुरोधात् । तदाह । **शङ्कितेति ।** एवं च संयतायाः सकलधनग्रहमेतत्संमतवेति न विरोध इति भावः । एवं च इतोऽपि प्रागुक्तार्थलाभ एवेत्याह । **अस्मादेवेति । एवो**ऽप्यर्थे । **हरीत**वचनादपीत्यर्थः । अपिना प्रागुक्तसमुच्चयः ।

अत्र प्रागुक्तमेव मानान्तरमप्याह । **एतदेवेति ।** अनाशङ्कितव्यभिचारायाः सकलधनग्रहणमित्येवेत्यर्थः । वयःकृतज्येष्ठत्वे उक्तार्थालाभादाह । **ज्येष्ठा गुणेति ।** अन्यगुणकृतज्येष्ठत्वमपि नाभिमतमिति तदर्थमाह । **अनाशङ्कितेति । अन्यामिति ।** कर्कशामपीत्यर्थः । अपिना स्वीयसमुच्चयः । **मातृवत्,** माता यथा पालयति स्वीयं तद्वत् ।

उपसंहरति । **तस्मादिति ।** संसृष्टीत्यत्र भावे क्तः[1] । पत्नीपदार्थमाह । **परिणीतेति । धर्म**परिणयनपूर्वकश्रौतस्मार्तकर्मसहाधिकृतेत्यर्थः । एवं पूर्वोपसंहारे ऊढाया इत्यस्याप्यर्थो बोध्यः । एवेन भरणोपयुक्तमात्रव्यवच्छेदः । यत्तु **प्राच्याः**—एवंव्यवस्थायां **बृहस्पति**विरोधः ।

" विभक्ता भ्रातरो ये च सम्प्रीत्यैकत्र संस्थिताः । पुनर्विभागकरणे तेषां ज्यैष्ठ्यं न विद्यते ॥
" यदा कश्चित्प्रमीयेत प्रव्रजेद्वा कथंचन । न लुप्यते तस्य भागः सोदरस्य विधीयते ॥
" या तस्य भगिनी मातुस्ततोंऽशं लब्धुमर्हति । अनपत्यस्य धर्मोऽयमभार्यापितृकस्य च ॥
" संसृष्टानां तु यः कश्चिद्विद्याशौर्यादिनाऽधिकम् । आप्नोति तस्य दातव्यो द्व्यंशः शेषाः समांशिनः॥ "

---

१ स्वाद्वितेत्यर्थः ।

इति हि सः । तत्र चोपक्रमोपसंहारयोः संसृष्टविषयत्वान्मध्यस्थस्य यदा कश्चिदित्यादेरपि तद्विषयत्वेन तत्र चानपत्यस्येत्यनेनार्धेन पुत्रकन्यापत्नीपितॄणामभावे संसृष्टसोदरभ्रातुरधिकारबोधनेन कथं तस्य पत्नीबाधकत्वम् । किं चाविभक्तत्वे संसृष्टत्वे च भ्रात्रन्तरीयद्रव्यस्य मिश्रीकृतादेः पृथगप्रतीतौ लोपशङ्कायां न लुप्यते इत्युपपद्यते । विभक्तासंसृष्टस्य तु धने विभागप्रतीत्या न लोपशङ्का । तस्मात्संसृष्टविषयत्वमेवैषाम् ।

किं च पत्न्यादेः पूर्वं अधिकारज्ञापक**शंखादी**नां संसृष्टविषयत्वं वचनान्न्यायाद्वा । नाद्यः । तदभावात् । संसृष्टिनस्त्वित्यादेस्तु भ्रात्रधिकारावसरे विशेषज्ञापनत्वेनं भ्रात्रधिकारमात्रपरत्वानुपपत्तेः । किं च समीपोक्त**बृहस्पति**वचसः संसृष्टिविषये पुत्रादिपित्रन्ताभावे सोदरभ्रात्रधिकारज्ञापकत्वात्तद्विरुद्धत्वादसंसृष्टविषयत्वमेव तावत् युक्तं तेषां, न तु तथा ।

संसृष्टत्वे यदेकस्य भ्रातुर्धनं तदन्यस्यापि तत्रैकनाशे तत्स्वत्वनाशेऽपि जीवतस्तत्सत्त्वात्तस्यैव तत्, न तु पत्न्याः । भर्तृमरणेन पत्नीस्वत्वस्यापि नाशात् । यथा सत्सु पुत्रादिषु न तद्धनं पत्न्या इत्येवं द्वितीयपक्षोऽपि न । न हि संसृष्टत्वेऽपि यदेकस्य तदेवान्यस्यापि । किंतु अविज्ञातैकदेशविशेषं तत् द्वयोः, न तु समग्रमेव । तत्स्वामित्वकल्पनायां मानाभावात् । परिणयोत्पन्नभर्तृधने पत्न्याः स्वामित्वं तस्मिन् मृते नश्यतीत्यत्र च मानाभावात् । सति पुत्रे तदधिकारशास्त्रादेव स्वत्वनाशोऽवगम्यते । नन्वत्रापि संसृष्टिभ्रात्रधिकारशास्त्रात्तथेति चेन्न । संसृष्टभ्रातृगोचरत्वस्याद्याप्यसिद्धेः । सिद्धे हि भ्रातृसंसृष्टभर्तृमृत्या पत्नीस्वामित्वनाशे भ्रात्रधिकारशास्त्रस्य संसृष्टविषयत्वं, सति तु तस्य तद्विषयत्वे पत्नीस्वामित्वनाश इत्यन्योन्याश्रयश्च ।

किं च **शंखा**देस्तत्त्वे भ्रात्रंशे तथा सत्त्वेऽपि तदभावे पितरावित्यत्र प्राग्वद्विकल्पसम्भवेन पत्नीदुहितरश्चेत्यादिना विभक्तासंसृष्टयोः पित्रोः पत्नीबाध्यत्वादाद्यपक्षस्य, अविभक्तसंसृष्टभ्रातृसद्भावेऽप्यविभक्तसंसृष्टपितृग्राह्यत्वस्य सर्वेषां मते विवादाभावेन द्वितीयपक्षस्य चासम्भवः ।

किंच यथा पित्रा भ्रात्रा च विभक्तासंसृष्टधनं शरीरदातृतया "आत्मा वै जायते पुत्रः" इत्येकत्व**स्मृते**र्धनशरीरयोश्च प्रभुत्वात्तत्पितृदेयपितामहादिपिण्डत्रये च सपिण्डनेन मृतस्य भोक्तृत्वाज्जीवति च पितरि पुत्राणां पार्वणदानाभावात् भ्रातृतः पूर्वं पितुरधिकारस्तथाऽन्यत्रापीति युक्तम् । अविभागसंसर्गयोर्वाऽविशेषात् पिताभ्रात्रोस्तुल्यवदधिकारो युक्तो न तु तदभावे पितुरिति युक्तम् ।

किं चाविभक्तसंसृष्टौ पितराविति द्वित्वानुपपत्तिर्मात्रा सह विभागाविभागयोरभावात् । अत एव संसर्गाभावोऽपि ।

यदाह **बृहस्पतिः**,–'विभक्तो यः पुनरिति' । अतः संसर्गित्वाविभक्तत्वयोर्द्वयोर्मात्रा सहासम्भवात्कथं मातृगतो भ्रातृसद्भावाधिकारविरोधः समाधेयः । तस्मात् **विष्णवा**दितः पुत्राद्यभावमात्रेण पत्न्यधिकारः स्पष्टोऽवगम्यते । तत्र पुत्रादीनां त्रयाणामादौ तत्त्वं, 'पुन्नाम्नो नरकादि'त्यादि**मनुविष्णवा**द्युक्तेः । प्रपौत्रपर्यन्ताभावे वैधव्यात्प्रभृति व्रतादिना भर्तुः परलोकहिताचरणेन पुत्रादितो जघन्या भार्येति तषामभावे सैव धनाधिकारिणीति तत्त्वमिति ।

१ समानसम्बन्धिनां मध्ये संसर्गिणः संसर्गनिबन्धनाधिकारबोधकत्वेनेत्यर्थः । अन्यथा पुत्रसत्त्वेऽपि संसृष्टभ्रात्रधिकारप्रसङ्गादिति भावः । २ क–पौत्रपर्यन्ताभावे ।

तत्र। उक्त**बृहस्पति**वाक्यस्य 'संसृष्टिनस्त्विति' **मूल**स्य 'विभक्ताः सहजीवन्त' इत्यादि**मनो**रुक्त**नारदस्य च** समानार्थकत्वेन प्रकृताविषयत्वात्। अपत्यसत्त्वे नैवमित्युक्तम्। तत्र अनपत्येत्यपवादप्रसङ्गादसंसृष्टविभक्तस्थलेऽप्यपवाद उक्तः, अभार्यापितृकेति। लोपशङ्काऽपि **मनु**वद्बोध्या। पत्नीति मूलस्य पूर्वोत्तरवचनैस्तत्त्वे सति परिशेषन्यायेन शङ्कादेस्तद्विषयत्वं सिद्धमिति न दोषश्च।

किं च भ्रात्रंशे एवेदं न पित्राद्यंशे। तत्र त्वनुपदमेव प्रकारो वक्ष्यमाण इति न कोऽपि दोष इति दिक्।

नन्वेतावता प्रपञ्चेन पत्नीत्यस्य भ्रात्रंशे विरोधे परिहृते **नारदसङ्ग**तावपि पित्राद्यंशे विरोधस्यापरिहृतत्वेन तदवस्थत्वेन **मनुशंखकात्यायनादेः** का गतिरिति चेत्, न। नेदं क्रमपरमित्याद्याचार्योक्त्यनुवादकेन भगवता **विज्ञानेश्वरेण** सर्वविरोधपरिहारस्य सूचितत्वात्।

तथा हि। तत्र तावत् 'पिता हरेदिति' **मनु**विरोधस्तु कण्ठतः परिहृत एव। तथा च तत्र वाशब्दो व्यवस्थितविकल्पे न त्वैच्छिकविकल्पे। व्यवस्था च **मूलो**क्तैवेति बोध्यम्। एवमनपत्यस्य पुत्रस्य मातेति **मनु**रपि न विरुद्धः। तस्यापि क्रमाबोधकत्वात्। मानाभावात् अधिकारप्रदर्शनमात्रपरत्वात्। तथा च मूलानुरोधेन तत्र चकारेण च वृत्तायामित्यस्य पूर्वत्रापि संबन्धेन पत्न्यां दुहितरि च वृत्तायां दौहित्रे च वृत्ते माता तस्य दायमाप्नुयादित्यर्थः। अग्रेऽपि अपिशब्दात्पित्रादिसमुच्चयेन पितरि भ्रातृषु सत्सु तेषु च वृत्तेषु पितामही हरेदित्यर्थः। इदमग्रेऽपि व्यक्तम्। तत्रैव 'मातर्यपी'त्यत्र कण्ठतो **विज्ञानेश्वरेण** तथोक्तत्वान्मात्रंशेऽपि तथैव तस्याभिमतम्। एवं **शंख**वचनमपि न विरुद्धम्। तस्याविभक्तसंसृष्टभ्रातृविषयत्वस्य भ्रात्रंशे कण्ठतस्तेनोक्तत्वात्।

किं च तत्र वाशब्दस्य समुच्चयार्थत्वेन तदभावे इत्यस्योभयत्रान्वयेन क्रमवैपरीत्येन च तदभावे अविभक्तसंसृष्टभ्रात्रभावे ज्येष्ठा संयता पत्नी हरेत् तदभावे पत्न्यभावे चेन दुहितृदौहित्रयोरभावे पितरौ हरेयातामित्यर्थात् यथाश्रुतक्रमाबोधकत्वात् **कात्यायन**वचनमपि न विरुद्धम्। तत्र पुत्राभावे इत्यत्र पुत्रपदस्य पौत्रोपलक्षकत्वावश्यकत्वात् "अपुत्रा पुत्रवत्पत्नी" "यथैवात्मा तथा पुत्रः" "पुत्रेण दुहिता समा" "पौत्रदौहित्रयोर्लोके विशेषो नोपपद्यते।" इत्याद्युक्त्या पुत्राभावे इत्यस्य पुत्रस्य पौत्रस्य पत्न्या दुहितुर्दौहित्रस्य चाभावे इत्यर्थेनाग्रे क्रमवैपरीत्येन वाशब्दानां तदभावरूपपक्षान्तरबोधकत्वेनादौ जननी हरेत्, वा तदभावे पिता हरेत्, वा तदभावे भ्राता हरेत्, पुनरन्वयेनाथशब्दस्य समुच्चयार्थत्वेन वा तदभावेऽथ तत्सुता हरेयुः, वा तदभावे तत्पितुर्माता पितामही हरेदित्यर्थात्। एतादृशक्रमबोधनार्थमेव क्रमादिति सफलम्। अन्यथोक्तक्रमस्य पाठत एव लाभे तदुक्तिरफलेति स्पष्टमेव। **गौतम**वचनमपि न विरुद्धम्। तत्र वाशब्दस्य चार्थत्वेनाधिकारमात्रप्रदर्शनपरत्वेनोक्तरीत्यैव क्रमस्य विवक्षितत्वात्। तत्र पिण्डशब्दः सापिण्ड्यपरः। गोत्रशब्दसमभिव्याहारात्। न केवलं **मूल**स्यैव **नारदा**दिविरोधः, किं तु तेषामपि मिथो भूयानिति तत्रैकस्य सिद्धान्तत्वे सर्वनिर्वाहाभावात् व्यापकत्वान्**मूला**द्यनुरोधेनोक्तव्यवस्थयैव सर्वैकवाक्यतासंपादनमुचितामिति गूढाकूतम्।

अत्रेदं तत्त्वम्। यद्यपि पूर्वविरोधदानावसरे **नारदमनुशंखकात्यायन**विरोधः क्रमेण व्याख्यात्रा सम्भवात्सामान्यतो बहुविषये दत्तस्तथापि उपक्रमोक्त**नारद**वाक्याद्विशिष्यभ्रातृपत्न्योः क्रमबोधक**शंखाच्च** मुख्यतया भ्रात्रंशे एवाभिमतः। **मनुकात्यायनो**ल्लेखस्तु मूलवत्तेषामपि मिथो विरोधो यथाश्रुत इति न तयोरपि क्रमव्यवस्थापकत्वमिति सूचयितुमानुषङ्गिकः। तत्र **मनुद्वयांशे**

विरोधपरिहारोऽग्रे व्याख्यात्रा ऽन्यप्रसङ्गेन कण्ठतः कृत एवेति नात्र पुनर्विशिष्योक्तिः । तेनैव पित्रादौ **शंखकात्यायन**विरोधोऽपि परिहृतप्राय इति न तथा । भ्रात्रंशे तदुभयविरोधोऽपि अन्यप्रसङ्गेन तयोः संसृष्टविषयत्वमुक्तवता परिहृत एव । तत्र संसृष्टेत्युपलक्षणविभक्तस्यापि । इदमप्यन्यत्र विभक्ते संसृष्टिनि वेति उक्तवता तेन सूचितमेव । एवं च मुख्यतातात्पर्यविषयतया भ्रात्रंशे एव फलितार्थकथनपरं न तु शाब्दार्थकथनपरम् । तल्लाभो यद्यपि प्रागुक्तरीत्या सिद्धः तथापि अत्रापि गमकमस्तीत्याशयेनाद्योपसंहारार्थेहेतुद्वयमुक्तं विभागेत्यादि । स च मुख्यतया भ्रातृणामेव प्रतिपादितः । शब्दस्तथैव लाभात् । अत एवाग्रे " एवं विभागं चेदित्यादिना प्रबन्धेन समानजातीयानां भ्रातृणां परस्परं पित्रा च सह विभागक्लृप्तिरुक्ता " इत्युक्तं तेन ।

किंच भ्रातृणां तयोरूर्ध्वमनन्तरं विभाग उक्त इति तस्यैव विभागस्यात्र ग्रहणम् । अत एवैकवचनम् । एवं च भ्रात्रंशे तादृशप्रकरणात्तथेति तद्भावः । ननु शाब्दमुख्यविभक्तत्वस्य तत्रोक्तत्वेऽपि अर्थानुषङ्गिकविभक्तत्वस्य पितरि मातरि च सत्त्वेन तादृशविषये तयोरधिकारापत्तिः । पत्नीत्यस्य सर्वविषयत्वेनाप्रवृत्त्या वचनान्तरादित्यत उक्तं संसृष्टिनामिति । संसृष्टिनस्त्वित्यस्य पत्नीत्यादिसर्वापवादत्वं न पत्नीमात्रांशपरम् । अत एव " पत्न्यादयो धनभाज इत्युक्तम् । अस्यापवादमाह " इति वक्ष्यते तेन । एवं च तादृशपितृभ्रातृपितृव्यान्यतमस्थलेऽस्य वचनस्य संपूर्णस्याप्रवृत्तावप्यन्यत्र विभागेऽविभागे च सर्वत्र प्रवृत्तिः । अत एव वैरूप्यमपि नेदानीम् । अत एव संसृष्टविषयत्वमेव **नारदशंख**योः कण्ठत उक्तं न त्वविभक्तविषयत्वमपि । इयमरुचिरुपसंहारद्वमयध्ये विभक्ते संसृष्टिनि वेत्यत्रापि बोध्या । अत एवाद्ये उपसंहारे ऽयमर्थः सिद्धो भवतीत्युक्तम्, न तु पत्नीत्यादेरेतद्विषयतया व्यवस्थितिरित्युक्तम् । द्वितीयोपसंहारस्तु साकल्यांशे इति न पौनरुक्त्यम् ।

किं च विभक्तभ्रातृस्त्रीविषयत्वं पत्नीत्यस्य **धारेश्वर**संमतत्वेन प्रागुक्तं न स्वसंमतत्वेन । यद्यपि तत्र नियोगो दूषितः कण्ठतो ' नान्यस्मिन्नित्यादिना ' तथापि तदितरांशस्य सम्भवदुक्तिकत्वेऽपि उक्तवक्ष्यमाणयुक्तिभ्यां स्वानभिमतत्वमेव । एतेन " पत्नीत्यादिमूलस्य ' अपुत्रा शयनामति ' **मनोश्च** व्याख्यायां विभक्तासंसृष्टधनविषयतया व्यवस्थापितत्वेन तद्भिन्नस्थले तयोरप्रवृत्त्योक्त**नारदमन्वा**दिना तत्र निर्वाह इति **मिताक्षरा**सम्मतसिद्धान्त " इति **भ्रान्तो**क्तमपास्तम् । तदभिमतार्थाज्ञानात् । विभागोक्त्या **मूल**स्य तद्विषयत्वलाभेऽपि उक्त**मनो**स्तद्विषयत्वासम्भवात् । तथा तेनानुक्तत्वात् । मूलैकवाक्यतया तस्य तत्त्वेऽपि विरुद्धवाक्यजातान्तर्गते विभक्ते संस्थिते इत्यत्र विभक्ते इत्युक्त्या तदेकवाक्यतया **नारदमन्वादे**रपि तद्विषयत्वापत्त्या त्वदुक्तार्थस्य बाधितत्वात् । अन्यथा तेषां मिथो विरोधस्य स्पष्टत्वेनाव्यवस्था तदवस्थैव ।

किं च । तावताऽपि तैः सर्वत्रानिर्वाहः । तत्र स्वल्पोपादानात् पत्नीत्यादेस्तु त्वदुक्तरीत्योत्तरोत्तरस्य पूर्वपूर्वसापेक्षत्वेन तद्विषयत्वस्यैव युक्तत्वेन च सम्पूर्णस्यैव तद्विषयत्वापत्त्या तत्राप्रवृत्तेः । **मूल**समानार्थ**विष्णु**ना निर्वाहे तु अस्मत्पक्षस्यैव सिद्ध्या द्रविडप्राणायामस्यासांगत्यापत्तेः ।

किं च । अन्यत्र तेन निर्वाह इति न **विज्ञानेश्वर**सम्मतम् । यदपि **नारदवचनमि**त्यादि तदुक्तिविरोधापत्तेः । तदप्यत्रभवानाचार्यो न मृष्यतीत्यादि विरोधापत्तेः । तत्र पितामही

१ न पुनर्विशिष्योक्तः । २ चतुस्त्रिद्व्येकभागाः स्युः १२५ इति श्लोकावतरणे इति शेषः । ३ संसृष्टिनस्तु संसृष्टी १३८ पृ. ९८ इति श्लोकावतरणं । ४ फ इत्यम् ।

प्रथमं धनभाक् मातर्यपि च वृत्तायाम् इत्यादितदुक्तिविरोधापत्तेश्च । वचनस्यैकत्वेनोत्तरार्द्धस्यापि तन्मात्रविषयतया सांकर्यस्यैवाभावात् । एतेन अविभक्तैकपुत्रस्य स्वार्जितधनकस्य मृतपितृकस्य मातृपत्नीभगिनीसमवाये उक्तरीत्या पत्नीत्यादेरप्रवृत्त्या 'अनपत्यस्य पुत्रस्य मातेति' **मनोर्मातैव** धनभाक्, न पत्नी इत्यपास्तम् । तद्विरोधात् । त्वन्मते मातृभावे तत्सत्त्वे तत्प्रवृत्तेः ।

किं च । तथा सति तत्रैव पत्न्यां जीवन्त्यामपि त्वदुक्तरीत्या धनभाक्त्वेन मातृधनस्य दुहितृगामित्वेन तत्कन्यासत्त्वे तद्गामित्वेन पत्न्या निरंशत्वापत्त्या जीवनाभावापत्तेः ।

किंच । पितुः स्वत्वमित्यव्यवस्था दुर्वारैव । निर्वाहकवचनान्तराभावात् । **विष्णोर्मूल**-समानार्थत्वात् । "अनन्तरः सपिण्डाद्यः" इति **मनूक्त**प्रत्यासत्तेस्तत्त्वाङ्गीकारेऽपि तस्यास्तत्र तुल्यत्वेन तत्तादवस्थ्यमेव । अस्मन्मतप्रवेशापत्तिश्च । तदुक्तप्रत्यासत्त्यङ्गीकारेऽपि तद्वत्पितुरपि असमर्थस्य उक्तरीत्या निरंशत्वापत्तिः । "अर्द्धो वा एष आत्मनो यः पत्नी" इत्यादि**श्रुत्या**दि-बोधितप्रत्यासत्त्यतिशयस्य पत्न्यामेव सत्त्वं च ।

किं च । पुत्रपौत्ररहितस्य दुहित्रादिगणाभावे पत्नीसत्त्वे विभागस्याभावे त्वदुक्तरीत्या पत्नी-त्यादेरप्रवृत्त्या "श्रोत्रिया ब्राह्मणस्यानपत्यस्य रिक्थं भजेरन्" इति **गौतमात्** ( अ. २८ सू ३९ ) तस्य तत्त्वापत्त्योक्तदोषापत्तेः ।

किंच । तादृशस्य तस्य पत्नीसत्त्वे सपिण्डान्तर्गतदूरतरयत्किञ्चित्सत्त्वे विभागाभावे मूलाप्रवृत्त्या "पुत्राभावे प्रत्यासन्नः सपिण्ड" इत्या**पस्तम्बात्** ( २।१४।२ ) तस्य तत्त्वापत्त्योक्तदोषापत्तिरेव । वचनान्तरं तु न साधकमस्ति । उक्तश्रुत्या पत्न्याः प्रत्यासन्नत्वादिना तत्त्वे तु तत्रापि तन्नेदं वारि-तमित्यलं तदनभिज्ञोक्तिखण्डनेनेति । क्वचिदवशिष्टविरोधपरिहारस्त्वग्रेऽनुपदमेव स्फुटीभविष्य-तीति दिक् ।

एवं पत्नीति व्याख्यायाग्रिमं व्याचष्टे ।**तदभावे दुहितर इत्यादिनाऽभिधानादित्यन्तेन।**

ननु पत्नीतिवज्जातावेकवचनेनैव सजातीयानेकग्रहणलाभे बहुवचनं निर्बीजमत आह । **बहु-दुहिता वचनमिति ।** प्रकृतिबोध्यस्त्र्यपत्यत्वस्य प्रत्ययबोध्यबहुत्वस्य च विजातीयास्वपि अवि-शिष्टत्वमविरुद्धत्वं चेति ताभ्यामुभयप्रतीत्या तासां चतुर्स्रात्युक्तक्रमेण समविषमांशभाग-प्राप्तिरितिभावः । यद्यपीदमपि तद्वदेव सिद्धं तथापि तस्य स्फुटबोधकमिदमिति गूढाकूतम् । एतेनादौ सवर्णा तदभावेऽसवर्णेति व्याख्यानमपास्तम् ।

दुहितॄणां धनसम्बन्धं पोषयति । **तथा चेत्यादिना ।** तत्राद्यं व्याख्यातम् । **तां विना** तदभावे । **स्मृता** धनहरीत्यस्यादावनुषङ्गः । **अङ्गादङ्गात्,** सर्वेभ्यः अङ्गेभ्य उत्पद्यते । "यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा । तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत्" ॥ इति,

'यदपत्यं भवेदस्यां तन्मम स्यादि'त्युक्तमपत्यं धनभाक् । अतः पितरि मृतेऽनुत्पन्नपुत्राया धनहरत्वाप्राप्तावयं विधिकल्पकोऽर्थवादः । तत्र तस्यामात्मनि पुत्रनिमित्तं तिष्ठन्त्यामेव धनलाभो, न पुत्रोत्पत्तिस्तदीयाऽपेक्षिता । यद्वा । तस्यामात्मभूतायां पितृरूपेण तिष्ठन्त्यामित्यर्थः । एतदर्थको **मनु**स्तु न लिखितः । तत्र सामान्यवचनदुहितृशब्दस्यापि प्रकरणात्पुत्रिकापरत्वेन **मेधातिथिना** व्याख्यातत्वात् । **एतदर्थमेवार्थकथनम्** ।

एतेन "पुत्रिकाया एव तस्यास्तद्धनाधिकारो न दुहितृसामान्यस्य । 'तुल्यसन्तानदर्शनादिति' **नारदी**ये हेतुनिर्देशेन प्रत्यासत्तिसाम्येऽपि उपकारातिशयेन तदाधिकारबोधनात् । यथा पुत्रत्वसाम्येऽप्यक्लीबादेः । तथा च पुत्रदुहित्रोस्तद्वत्त्वमेव तदधिकारापादकं, न स्वरूपमात्रम् । अन्यथा क्लीबादिपर्युदासस्यादृष्टार्थतापत्तेः" इति **भ्रान्तो**क्तमपास्तम् । **मन्वा**दिविरोधात्, **नारदा**र्थस्य वक्ष्यमाणत्वात्, क्लीबादेर्यथाकथञ्चित्पुत्रसत्त्वे कर्मानधिकारप्रयुक्तस्य वाचनिकस्य वाऽनधिकारस्य सत्त्वात्, अन्यथाऽपुत्रपुत्रादेस्तत्त्वानापत्तेः, योग्यतायाः पतितादावपि सत्त्वाच्चेति दिक् ।

'यद्यनूढेति' व्याचष्टे । **तत्र चेति** । दुहितृषु चेत्यर्थः । अनेन यदि तयोः समवायो भवेत्तदाऽनूढैवेति तत्र योजना सूचिता । तदेवाह । **तदेति** । धनं विनाऽविवाहे तस्या ऋतुदर्शने पित्रादीनां नरकपातश्रुत्या युक्तमेवेदं, ततो निस्तारात् ।

तथा च **पैठीनसिः**—

"यावन्नोद्भिद्येते स्तनौ तावदेव देया अथर्तुमती भवति दाता प्रतिग्रहीता नरकमाप्नोति पिता पितामहः प्रपितामहश्च विष्ठायां जायन्ते तस्मान्नग्निका दातव्येति" ।

**पराशरो**ऽपि—"अपुत्रमृतस्य कुमारी ह्यर्थं गृह्णीयात्तदभावे चोढेति ।"

**देवलो**ऽपि—

"कन्याभ्यश्च पितृद्रव्याद्देयं वैवाहिकं वसु । अपुत्रस्य तु कन्या स्वा धर्मजा पुत्रवद्भवेत्" । इति ।

स्वा सवर्णा । धर्मजा धर्मपत्नीजा ।

**नारदो**ऽपि- (अ. १३ श्लो. २७)

"स्यात्तु चेद्दुहिता तस्याः पित्र्यांशो भरणे मतः । आ संस्काराद्धरेद्भागं परतो बिभृयात्पतिः" ॥

इति । अत्र हरेद्भागमिति ऊढानूढासाधारणं, भरणांशे विशेषः । एतेन "ऊढानूढासमवाये इति चिन्त्यं, तादृशक्रमकल्पने मानाभावात् । यद्यनूढा भवेदित्यस्योक्त**नारदा**दनूढा पितृभागं न लभते किं तु आ विवाहं भरणं विवाहप्रयुक्तं द्रव्यं च । तद्भागं तु विवाहानन्तरमेवेत्यर्थपरत्वात्" इति **भ्रान्तो**क्तमपास्तम् ।

विशेषान्तरमाह । **तथेति । प्रतिष्ठिता** सधना । **अप्रतिष्ठिता** निर्धना । **स्त्रीधनमिति । तत्** कन्यानां, तासां मध्ये अपरिणीतानामेव, परिणीतानां मध्ये निर्धनानामेवेत्यर्थः । नन्वेतच्छ्रुत्या मातृधनविषयकमिति प्रकृते कथं प्रवर्तेत[1] अत आह । **पितृधनेऽपीति ।** स्त्रीधनोद्देशेन दुहितृसम्बन्धविधानेनोद्देश्यविशेषणत्वेन स्त्रीत्वस्याविवक्षितत्वात्तुल्यत्वमिति भावः । एतेन "यद्यप्यादौ सपुत्राया एव धनं तथापि सर्वथाऽविशेषादुभयोरपि विभज्य धनग्रहणम् । एतेन तथेत्यादि चिन्त्यं तस्य स्त्रीधनविषयत्वान्न्यायस्य पितृधनविषये दुष्टत्वात्" इति तदुक्तमपास्तम् ।

ननु दुहितर इति वाक्यं पत्न्यभावे पुत्रिकारूपकन्याया धनसंबन्धमाह, तदुक्त**मन्वनुरोधात्,** न तु तत्सामान्यस्य, येनानूढादिक्रमः प्रागुक्तो भवेदित्याशयेनाह । **न चैतदिति** । दुहितर इत्येतदित्यर्थः । व्याख्याभेदेनाह । **तत्सुतस्येति ।** एवं च तत्रैवोक्त्याऽत्रोक्तिः पुनरुक्तेत्यनुपपन्नैव स्यादित्यर्थः । **मनुना** तु द्वादशपुत्रमध्ये शूद्रापुत्रो गणितो न पुत्रिकापुत्र इति तस्य तदुक्तिस्तथेति भावः । "अपुत्रधनं पत्न्यभिगामि तदभावे दुहितृगामीति" प्रागुक्त**विष्णुर**पि ।

---

१ ङ-प्रवर्तते ।

" दुहितॄणामभावे तु रिक्थं पुत्रेषु तद्धनम् "—इति **कात्यायनो**ऽपि ।

" मातुर्दुहितरोऽभावे दुहितॄणां तदन्वयः ।" इति वक्ष्यमाण**नारदो**ऽपि। (अ. १३ । २ श्लो.)

यत्तु " पत्न्यभावे स्नुषैव न दुहिता । तदधिकारस्य पुत्रपत्न्यभावायत्ततया पत्न्यभावेऽपि पुत्रार्धशरीरसत्त्वेन पुत्राभावविरहात् ।

तथा च **बृहस्पतिः**—

" यस्य नोपरता भार्या देहार्धं तस्य जीवति । जीवत्यर्द्धे शरीरे तु कथमन्यः समाप्नुयात् "॥ इति ।

न च दुहितुः साक्षात्पित्रवयवारब्धत्वेन पित्रवयवारब्धपुत्रसहकारिस्नुषापेक्षया संनिकृष्टत्वमिति वाच्यम् । दुहित्रपेक्षया सगोत्रसपिण्डायाः स्नुषायाः प्रत्यासत्त्यतिशयात् । पित्रादिष्वतिप्रसङ्गस्तु न । तेषां वचनेनैव व्यवस्थानविशेषस्य नियमितत्वात् । यत्रापि पतिमरणानन्तरं पत्न्येव लभते तत्रापि मातृधनत्वेन तद्धनं दुहितृगामीति न भ्रमितव्यम् । जन्मना पुत्रस्येव विवाहात् स्नुषाया अपि भर्तृद्वारा श्वशुरधने स्वत्वोत्पत्त्या श्वशुरमरणे श्वश्रूस्नुषयोः स्वत्वसाम्येन श्वशुरमरणे स्नुषायाश्च साधारणस्वाम्यात् " इति **भ्रान्तः** ।

तन्न । वस्तुतस्तथा सत्त्वेऽपि तदभावायत्तत्वस्य तस्याशाब्दत्वात् । पत्नीतः प्रागपि तदधिकारापत्त्या सकलव्याकुलीभावापत्तेः । " अर्धो वा एष आत्मनः " इति **श्रुति**मूलकस्योक्त**बृहस्पतेः** प्रत्यासत्त्या तादृशपतिधनविषये पत्न्या अधिकारबोधकत्वेन प्रकृतेऽप्राप्तेः । तत्प्रत्यासत्त्यपेक्षया स्नुषायां तादृशप्रत्यासत्त्यतिशयाङ्गीकारे दुहितुरपि प्राक् पित्रादेरधिकारापत्त्या **स्मृति**विरोधबाहुल्यापत्तेः । स्थानविशेषनियमितत्वस्य स्नुषायामपि तुल्यत्वात् । तस्या अपि गोत्रजत्वात् । एतेन यत्रापीत्याद्यग्रिममपि निरस्तमिति दिक् ।

अनुपपन्नमभिप्रायतो व्याचष्टे । **चशब्दादित्यादिना हरेद्धनमितीत्यन्तेन** । एतेन दुहितर इति बहुवचनेन दौहित्रग्रहणमिति **प्राच्यो**क्तं पत्नीत्यादिक्रमसंबन्धात्सर्वान्ते **दौहित्राः** दौहित्राधिकार इत्यन्योक्तं चापास्तम् । बहुवचनफलोक्तत्वात्तस्य । राज्ञोऽभावाभावेनानधिकारापत्तेश्च ।

**विष्णवा**द्यनुरोधेनाह । **दौहित्र इति** । तदेवाह । **यथाहेति** । अन्यथा तेषां निर्विषयता स्यादिति भावः । **अपुत्रेति** । सन्तन्यते यस्यामिति व्युत्पत्त्या सन्तानशब्देन 'पत्नी दुहिता' चोच्यते।

अत एव **नारदः**–(अ. १३ । श्लो. ५०)

" पुत्राभावे तु दुहिता तुल्यसन्तानकारणात् । पुत्रश्च दुहिता चोभौ पितुः सन्तानकारकौ॥ " इति।

" सन्तानोऽपत्यगोत्रयोः सन्ततौ देववृक्षे चेति " **विश्वो**ऽपि ।

त्रयाणां द्वन्द्वोत्तरं बहुव्रीहिः । तस्मिन्पुरुषे मृते सतीत्यर्थः । अव्ययीभावेन व्याख्यानं तु अयुक्तम् । नञा तदभावस्य भाष्यसंमतत्वात् । सन्तानपदवैयर्थ्यापत्त्या कर्मधारयोऽप्युक्तः । तथा च पुत्रपौत्रपत्नीदुहित्रभावे सति तद्धनं दौहित्रा आप्नुयुरित्यर्थः ।

'यश्चार्थहरः स पिण्डदोऽपीति' **बृहस्पतेः** " यो धनमाददीत स तस्मै श्राद्धं कुर्या-

१ ङ–व्यक्तं स्थानविशेषस्य । २ ख फ–स्वत्वसाम्ये तु पण्यमाधारणस्वाम्यात । ३ राज्ञः सर्वदा विद्यमानत्वेन तदभावस्य कदाप्यभावेन सब्रह्मचार्यादिपर्यन्ताभाव तस्याप्यधिकारित्वेन अधिकारिसामान्याभावरूपस्य सर्वान्तत्वस्यासम्भवेन दौहित्रस्य अनधिकारापत्तेश्चेत्यर्थः ।

त्पिण्डं च त्रिपुरुषं दद्यादिति " **वृद्धशातातपोक्ते**श्चाह । **पूर्वेषां त्विति** । पूर्वेषां मातामहादीनां स्वधाकारे श्राद्धादौ दौहित्रकाः । स्वार्थे कन् । पौत्रा एव मता इत्यर्थः ।

अत एव **मनुः**–( अ. ९ श्लो. १३१ । १३२ । १३३ । १३९ )

" मातुस्तु यौतकं यत्स्यात्कुमारीभाग एव सः । दौहित्र एव च हरेदपुत्रस्याखिलं धनम् ॥
" दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरेत् । स एव दद्यात् द्वौ पिण्डौ पित्रे मातामहाय च ॥
" पौत्रदौहित्रयोर्लोके विशेषो नास्ति धर्मतः । तयोर्हि मातापितरौ संभूतौ तस्य देहतः ॥ " इति ।
" पौत्रदौहित्रयोर्लोके विशेषो नोपपद्यते । दौहित्रोऽपि ह्यमुत्रैनं सन्तारयति पौत्रवत् ॥ " इति च ।

यद्यपीदं सर्वं पुत्रिकापुत्रविषयं प्रकरणात्, व्याख्यातं च **मेधातिथिना** तथैव, तथापि न्यायसाम्यादत्र सम्मतित्वेन लिखितम् । अत एव **विज्ञानेश्वर** एतत् सर्वं विहायैतत्प्रकरणस्थमपि अकृता वेत्युक्त्या साधारणं **मनु**वाक्यमात्रं संमतित्वेनाह । **मनुरपीति** । पुत्रिकात्वेनाकृता वा कृता दुहिता सदृशात्सवर्णाद् यं सुतं पुत्रं विन्देत लभेत तेन तत्सुतेन मातामहः पौत्री पौत्रवानेव । अत एव स सुतः उक्तहेतोः पाठक्रमादार्थक्रमस्य बलीयस्त्वात्तस्य धनं हरेत् गृह्णीयात्पिण्डं दद्याच्चेत्यर्थः । **मेधातिथिना** त्वयमपि श्लोकः कैमुतिकन्यायेन पौत्रिकेयपरतयैव सिद्धान्तितः ।

**बृहस्पतिरपि**–

" यथा पितृधने स्वाम्यं तस्याः सत्स्वपि बन्धुषु । तथैव तत्सुतानां च तदभावे तु धर्मतः ॥" इति ।

अत्रेदं बोध्यम् । यद्यपि **मानवे** पुंस्त्वैकवचनाभ्यां दौहित्रस्यैव धनभाक्त्वमायातीति तावदेव **विज्ञानेश्वरेण** चशब्दसमुच्चेयमुक्तं तथापि दौहित्राभावे दौहित्र्यास्तत्त्वमपि चसमुच्चेयम् । 'अप्रजःस्त्रीधनं भर्तुरिति ' वक्ष्यमाणेनाप्रजःस्त्रीधनोद्देशेन भर्तृदुहितृदौहित्र्यादेश्च संबन्धविधानेनोद्देश्यविशेषणत्वेन स्त्रीत्वादेरविवक्षितत्वेन ' दुहितॄणां प्रसूता चेदि ' त्यस्य पितृधनेऽपि तुल्यत्वात् । एवं रीत्या ' मातुर्दुहितर ' इति **नारद**स्याप्यत्रानुकूलत्वात् । युक्तं चैतत् । यथा मातृधनग्रहणे दुहितृ-

**दौहित्री**

दौहित्रपुत्रपौत्रादिक्रमस्तथा पितृधने पुत्रपौत्रप्रपौत्रपत्नीदुहितृदौहित्रदौहित्र्यादिक्रमस्य प्रत्यासत्तितारतम्येन न्यायप्राप्तत्वात् । "स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां चेति " **गौतमव**चनस्य ( अ. २८ सू. २२ ) । पितृधनेऽपि समानत्वादित्यनुपदमेवोक्तवता **विज्ञानेश्वरेण** सूचितत्वात्तत्संमतमपीदम् । अन्यथा दौहित्र्याः पूर्वत्र वक्ष्यमाणेषु च स्वतो नोक्तत्वादनन्तर्भावाच्च पितृधनविषये तस्या अनधिकारस्यैवापत्तिरिति महान् दोषः । अग्रे यथाकथंचिदन्तर्भावे तु प्रथमं धनग्रहणे प्रत्यासत्तेर्नियामकत्वबोधक**मन्वा**दिविरोधः स्पष्ट एव । अत एवाग्रे भ्रात्रनन्तरमेव तत्सुतोक्तिरितीति । अत्र प्रागुक्त**विष्णुकात्यायन**विरोधपरिहारस्तु अनुपदमेव स्फुटीभविष्यति ।

अथाग्रिमं व्याचष्टे । **तदभावे इति** । पितरावित्यत्र न सरूपैकशेषः, " पिता मात्रा " इतिस्मृत्यन्तरानुरोधादित्याह । **मातापितराविति** । नन्वेवमपि एकशेषत्वादेव एकेनैवोभयप्रतीत्या मिलितयोरेव तयोर्धनसम्बन्धः प्राप्नोति, नैच्छिकेन प्रतिनियतेन वा क्रमेणेति **स्मृत्यन्तर**विरोधस्तदवस्थ एवेत्याशयेन शङ्कते । **यद्यपीति**। तत्र तावत् एकदेशिमतेनाह ।

**पितरौ**

**युगपदिति** । युगपत् अधिकरणानां द्रव्याणां वचनं यैः पदैः तेषां भावस्तत्ता तस्यामित्यर्थः । द्विवचनाद्यन्तेनैकशेषसाधनार्थमयं पक्षो भाष्ये सरूपसूत्रे एकदेशिनोक्तः ।

अग्रे तु **भगवता** " सेयं युगपदधिकरणवचनता दुःखा दुरुपपादा च " इत्यनेन दूषितः । उत्सर्गापवादयोः साम्यादुत्सर्गेऽपि तथेत्याशयेनात्र द्वन्द्वस्मरणादित्युक्तं, तदेवाह । **तदपवादत्वादिति ।**

वस्तुतस्तु इतरेतरद्वन्द्वेऽपि समूहस्यैव प्राधान्यात्समाहारे तस्यानुद्भूतावयवभेदत्वं तत्र तूद्भूतावयवभेदत्वमिति भेदाङ्गीकारादितरेतरविषये एवैकशेषाङ्गीकारात्समूहस्यैव प्राधान्येन प्रतीत्या तस्यैव तत्र निमित्तत्वप्राप्तिः । किं च एकशेषे एकपदलोपेन ' यः शिष्यत " इति न्यायेनावशिष्टस्यैव तत्समूहबोधकत्वेन तत्त्वम् । यत्र हि पृथगुपस्थितिः कारणान्तरं वा तत्रैव क्रमबोधः, तत्र पृथगुपस्थित्यादेस्तन्त्रत्वात् इति बोध्यम् ॥ एतेन पूर्वपक्षोऽयुक्तस्तन्मतस्यासिद्धान्तत्वादित्यपास्तम् ।

**क्रम इति ।** यथाकथञ्चित् क्रम इत्यर्थः । तथा च स्मृत्यन्तरविरोधस्तदवस्थ एवेति भावः । एतनेतरेतरयोगसमाहारयोर्विधीयमानद्वन्द्वस्योभयपदार्थप्रधानत्वात्तदपवादैकशेषस्यापि युगपदधिकरणवचनत्वेन क्रमाप्रतीतिरिति व्याख्यानमपास्तम् । असिद्धान्तत्वादिति दिक् ।

समाधत्ते । **तथ पीति । विग्रहेति ।** माता च पिता चेति एकशेषविग्रहवाक्ये इत्यर्थः । ननु वाक्ये ऐच्छिकप्रयोग इति न तथा नियमः, पूर्वनिपातप्रकरणं हि समासे एव तथा प्रयोगनियामकम्, अतो युक्त्यन्तरमाह । **एकशेषाभावपक्षे चेति ।** अत एव **चो** व्युत्क्रमे श्रवणादित्यस्याग्रे बोध्यः । **पूर्वमिति ।** अभ्यर्हितमित्यनेनेति भावः । **पाठेति ।** तत्र प्रयोगे तच्छब्दस्यैव पूर्वमुच्चारणेन तत्क्रमेणैवार्थक्रमप्रतीत्या मातापितृसमूहस्यैव बोधेऽप्युद्भूतावयवभेदत्वात्पूर्वोक्तरत्र प्रत्येकमेव तत्संबन्धस्य विजातीयानां बोधनात् स्मृत्यन्तरानुरोधाच्च अत्रापि प्रत्येकमेव धनसंबन्धः । तत्रापि धनग्रहणे क्रमापेक्षायामुपस्थितमिति न्यायेनोपस्थितक्रमेणैवादौ मातुस्तदभावे पितुर्धनसंबन्धस्य पर्यवसानमित्यर्थः ।

नन्वयुक्तमेतत् । पितरावित्यत्रान्यशब्दस्थक्रममादाय तथा प्रतिपादने स्वारस्याभावात् । " पिता, मात्रा " इत्यत्र तु तृतीयानिर्देशेन तस्या अप्राधान्यप्रतीतेः । पितृशब्दस्यैवोच्चारणेन द्विवचनस्य सजातीयासजातीयानेकबोधकत्वेनेष्टार्थबोधस्य तात्पर्यग्राहकसापेक्षत्वन च पूर्वं पितुरेवोपस्थितेश्च । अत आह । **किं चेति ।** पितृत्वस्य यावत् सवर्णाऽसवर्णाजातपुत्रत्वनिरूपितत्वेन साधारणत्वान्मातृत्वस्य स्वजातपुत्रत्वमात्रनिरूपितत्वेन मिथोपेक्षया मिथो व्यवहितोऽत्यन्तसंनिहितश्च संनिकर्ष **इति** मातुस्ततोऽधिकप्रत्यासत्तिरिति भावः ।

ननु धनग्रहणे प्रत्यासत्त्यतिशयस्य नियामकत्वे एव किं मानम्, अत आह । **अनन्तर इति । मनूक्तिरियम्** । सपिण्डादिति " दूरान्तिकार्थैः " ( व्या. सू. २।३।३४ ) इति षष्ठ्यर्थे पञ्चमी । तथा च सपिण्डस्य योऽनन्तरः संनिहितः तस्य सपिण्डसंनिहितस्य धनं तस्य सपिण्डस्य भवेदित्यर्थः । एवं च प्रत्यासत्तेर्नियामकत्वं **मनुना** स्पष्टमेवोक्तम् ।

नन्वनुगतं कारणं हि लोके दृश्यते, प्रकृते तु न तथा । अनन्तर इति **मनु**ना सपिण्डपदोक्त्या सपिण्डेष्वेव प्रत्यासत्तेर्नियामकत्वं न सोदकादिष्विति प्रतिपादनात् । तथा च तत्र कारणान्तरेऽवश्यं वक्तव्ये सपिण्डेष्वपि तदेवास्तां किमनया प्रत्यासत्त्येत्याशयेनाह । **न चेति ।** न हीत्यर्थः ।

" बहवो ज्ञातयो यत्र सकुल्या बान्धवास्तथा । यस्त्वासन्नतरस्तेषां सोऽनपत्यधनं हरेत् ॥ "

इति **बृहस्पते**स्तत्र सपिण्डपदं सोदकादीनामप्युपलक्षकमित्युभयत्र सैव तत्र नियामिकेत्याह । **अपि त्विति** । ' अस्मादेवेति ' **एवोऽप्यर्थे** । ' मातापित्रोरिति ' **निर्धारणे षष्ठी ।** अनेन

'पत्नी दुहितर' इत्यत्र सर्वत्र मृतनिरूपितप्रत्यासत्त्यतिशयस्यैव क्रमेण धनग्रहणाधिकारितावच्छेदकत्वं विवक्षितं मूलकृत इति सूचितम् । **तदभावे पितेति** । अत एव च **मनु**ना पितुरनन्तरमेव भ्रातुर्ग्रहणं कृतम् । यदि तु पूर्वं पितुस्ततो मातुरिति क्रमोऽत्र स्यात्तदा तदनन्तरं तदुक्तिरसङ्गतैव स्यात् । इदमेव ध्वनयितुमग्रिमव्याख्यानेऽव्यवहितं **मनु**मेव वक्ष्यति । इदं सर्वं प्रागुक्त**शंख**वाक्यस्थे पितरावित्यत्रापि बोध्यम् ।

वस्तुतस्तु आदौ पिता तदभावे मातेति क्रमो युक्तः । किं चेत्यस्यावतरणोक्तयुक्तेः । **किं** चेत्याद्युक्ततारतम्यसत्त्वेऽपि पुत्रे पित्रवयवबाहुल्यान्मात्रपेक्षया तत्र प्रत्यासत्त्यतिशयात् तदपेक्षया तस्य अभ्यर्हितत्वात् । क्षेत्रजविशेषविषये उक्तवैपरीत्यस्य सत्त्वेन तथा तस्यापि दुर्वचत्वाच्च । किं च । तदेव हि प्रत्यासत्तेर्मूलकारणं, 'मातुर्दुहितर' इत्यात्रपि तथैव **विज्ञानेश्वरेण** प्रतिपादितं च । अग्रे बन्धुपदव्याख्यावसरे "आत्मबान्धवाः पितृबान्धवा मातृबान्धवाः" **वृद्धशातातपा**द्युक्तक्रमेणैव प्रतिपादिताः । स्त्रीधनविभागवैपरीत्येनात्रैवमेवोचितं च । अत एव च **विष्णुकात्यायनौ** प्रागुक्तौ, "अपुत्रधनं पत्न्यभिगामि, तदभावे दुहितृगामि, तदभावे दौहित्रगामि, तदभावे पितृगामि, तदभावे मातृगामीति"

"अपुत्रस्याथ कुलजा पत्नी दुहितरोऽपि वा । तदभावे पिता माता भ्राता पुत्राश्च कीर्तिताः" ॥ इति च ।

अन्यथा तयोरपि क्रमबोधकत्वेन तद्विरोधो दुष्परिहर एव । एतदनुरोधेन तयोरन्यथा नयनस्य कर्तुमशक्यत्वात् । इदं तु तदनुरोधेनोक्तरीत्या सुयोजमेव ।

**देवलो**ऽपि,—

"तुल्या दुहितरो वाऽपि ध्रियमाणः पिताऽपि च" ॥ इति ।

अत एव च न समुदितयोरधिकारः । अनपत्यस्येति प्रागुक्तं **मानवम्,**

"भार्यासुतविहीनस्य तनयस्य मृतस्य तु । माता रिक्थहरी ज्ञेया भ्राता वा तदनुज्ञया" ॥

इति **बार्हस्पत्यं** च पितृपर्यन्ताभावपरं तत एवेति न विरोधः । तत्र तदनुज्ञयेत्युक्त्या तदभावे नाधिकार इति सूचितम् । **शंख**वाक्येऽप्येवमेवेति बोध्यम् । दौहित्र्यंशे **विष्णु**विरोधोऽपि न । दौहित्रगामीत्यत्रैकशेषघटितसमासेन तस्या अपि परिग्रहात् । दौहित्रांशे **कात्यायन**विरोधोऽपि न । तत्र अपिशब्देनोभयोः समुच्चयात् । तत्र 'पुत्रा' इत्यस्य प्रत्यासत्त्या भ्रातुष्पुत्रा इत्यर्थः । **अत्र** माता जननी, अभावे सापत्नमाताऽपि । मातृपदोक्तेः ।

अग्रिमं व्याचष्टे । **पित्रभावे इति** । 'भ्रातृपुत्रौ' इत्येकशेषेण प्रागुक्तसिद्धान्तरीत्या **पूर्वं** भ्राता, तदभावे स्वसा । अत एव—

**भ्रातरः** "भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभयः"।

इति संसृष्टिधनविषये वक्ष्यमाणं सङ्गच्छते इति बोध्यम् । **भ्रातर एव वेति** । अत्र वाशब्दः व्यवस्थितविकल्पे इति प्राक् प्रतिपादितम् । 'तदभावे भ्रातृगामीति' **विष्णुवाक्ये**ऽप्येवमेव बोध्यम् । **कातीये** भ्रातेति स्वसुरप्युपलक्षणं बोध्यम् ।

मातुरभावे पिता धनभागित्युक्तम् । तस्य सिद्धिर्**मन्व**धीना उक्तरीत्येति पित्रभावे इत्यादि एव वेतीत्यन्तं मध्ये उक्त्वाऽन्यैरन्यथा सिद्धान्तितं निराकर्तुं सिंहावलोकनन्यायेनानुवदति । **यत्तु**-

१ न्या. सू. (१।५।६८)

**नरिति** । यस्त्वित्यर्थः । **वृत्तायां,** मृतायाम् । **विजातीयेष्वपीति** । मूर्द्धावसिक्तादिष्वपीत्यर्थः । पित्रा गृहीते तद्धनस्य तदीयत्वात् इति भावः । **सजातीयेष्वेवेति** । तया गृहीते तद्धनस्य मातृसम्बन्धित्वेनादौ तद्दुहितॄणां तदभावे दौहित्रादीनां क्रमाद्भवतीति सजातीयानामेव भवतीति भावः । उपसंहरति । **इतीति** । इत्येवं **मनो**राशयादित्यर्थः । **पितामह्येवेति** । मातुरभावे इत्यादिः । निराकरोति । **एतदपीति** । प्रागनूदितमित्यर्थः । **आचार्यः न्यायविद्भिस्स्वरूपाचार्यः** । केनेत्याकांक्षायामाह । **चतुस्त्रीति** । एवं च तेषामपि वचनेनैव धनभागित्वस्योक्तत्वेनोक्तरीत्या परम्परया विजातीयपुत्राणां धनग्रहणेऽपि न दोष इति न तन्मतसम्भव इति भावः । उक्त**मनु**वाक्यं तु न क्रमपरं, किं तु अधिकारमात्रप्रदर्शकम् ।

यद्वा । मात्रनन्तरं पितृभ्रातृतत्सुताः क्रमेण धनभाजस्तेषामप्यभावे पितामही हरेदित्येवमध्याहृत्य व्याख्येयम् ।

यद्वा । नाध्याहारोऽपि, किं तु 'पितुर्माते' त्यत्र पितृशब्दे तन्त्रम् । तत्रैकः पितरं तदपत्यं पुत्रं पौत्रं च लक्षयति । अनन्तरमिति शेषः । पितुर्मातेत्येतत्पदद्वयं तु तदनन्तरं पितामह्या[1] धनसम्बन्धं बोधयतीति गम्यते । यतः सूत्रप्राया मुनीनामुक्तिः । अत एव पितामहीत्येव नोक्तामिति केचित् ।

वस्तुतस्तद्वचनस्य स्वरसार्थ उक्तप्रकारत्रयं विनाऽपि प्राक् व्याख्यात इति बोध्यम् ।

अव्यवहितार्थे प्रसक्त**मनु**विरोधं परिहरति । **यत्पुनरिति** । प्राग्वत् । **नित्यं** सर्वथा **स्थितिः** शास्त्रमर्यादा । **तन्नृपेति** । राजपदोक्तेः, 'सर्वेषामप्यभावे त्विति' वक्ष्यमाण**मान**वात् अग्रे तदुक्तेश्चेति भावः ।

एवं परमतं निराकृत्य पित्रभावे भ्रातर इति प्रागुक्तं बहुवचनान्तं भगिनीनामपि विभागं सूचयितुं विशदयति । **भ्रातृष्वपि सोदरा इत्यादिना । मात्रा** कृतात् ।

अथाग्रिमं व्याचष्टे । **भ्रातॄणामपीति** । 'तदभावे भ्रातृपुत्रगामीति' **भिन्नोदरा भ्रातरः विष्णु**रप्युक्त एव । **तत्पुत्रा इति** । भ्रातुः पुत्राः कन्याश्च, स्वसुः पुत्राः कन्याश्चेत्यर्थः । उक्तन्यायेनाह । **पितृक्रमेणेति** । सोदरासोदरपितृक्रमेणेत्यर्थः ।

यत्तु 'अनेकपितृकाणामिति' पूर्वोक्तन्यायेन तत्सुतानामेकत्वे अवैलक्षण्येऽपि द्वित्वे बहुत्वे च स्वस्वपित्रादिद्वारा भागकल्पना न स्वस्वरूपत इत्यर्थ इति । तन्न । भ्रातॄणां पूर्वमृतत्वेन भ्रातृधने स्वत्वानुत्पत्त्या भ्रातुष्पुत्राणामेव स्वामिनाशेन स्वत्वोत्पत्त्या पितृक्रमेण विभागानर्हत्वेन तदविषयत्वात् । तस्य पितृस्वत्वास्पदद्रव्यविषयत्वात् । स्फुटीभविष्याति चेदमनुपदमेव ।

सर्वत्रान्वितैवशब्दार्थं सिंहावलोकनन्यायेनात्रैवाशोकवनिकान्यायेन विशदयति । **भ्रातुभ्रातुष्पुत्रेति** । **मृतस्य** भ्रातॄणां प्रमीतपितृकाणां केषांचित् भ्रातुष्पुत्राणां च सद्भावे इत्यर्थः । **अधिकारवचनादिति** । "भ्रातरस्तथा तत्सुताः" इत्यनेन तदभावे एव तेषामधिकारप्रतिपादनात्, एवशब्देन तत्सत्त्वे तेषां तत्त्वनिरासप्रतिपादनाच्चेत्यर्थः । अयं न्यायः सर्वत्र बोध्यः ।

यत्र मृतस्यैको भ्राता विद्यमानोऽनेके वा, प्रत्येकं तत्पुत्रश्चैकोऽनेके वा, तद्विषयमिदं भ्रातुभ्रातुष्पुत्रेति नातिप्रसङ्ग इति सूचयन् अनेकभ्रात्रादौ स्थलविशेषे विशेषमाह । **यदा त्विति** । विभक्तादीनां बहूनां भ्रातॄणां मध्ये एकस्मिन्नित्यादिः । **अपुत्रे,** अपत्न्यादिके च । **धनविभागा-**

---

१ क-फ-ख-मातामह्या ।

**दिति** । मृतभ्रातृसम्बन्धिधनविभागात्पूर्वमेवेत्यर्थः । **कश्चित्** अन्यः । तत्पुत्रास्तु सन्तीत्याह । **तदा तत्पुत्राणामिति** । अनुपदोक्तस्योभयसत्त्वे तेषामनधिकारात् भ्रातर एव विभज्य गृह्णीयुर्न तत्पुत्रा इत्यस्य च विषयता यद्यपि प्राप्ता तथापि पितृधनविभागप्रकरणोक्तन्यायविषयत्वसत्त्वात्तेन न्यायेनाह । **पितृत इति** । युक्तत्वे हेतुः प्राप्तिः । तथा च तेषां स्वांशलाभस्तत्पुत्राणां च स्वपित्रंशलाभ इति भावः ।

अथाग्रिमं व्याचष्टे । **भ्रातुष्पुत्राणामपीति**। गोत्रजपदार्थं स्वरीत्याऽऽह । **पितामहीति**। भिन्नं पदम् । एतदग्रे स्नुषा बोध्या । एवमग्रेऽपि । तथा च चत्वार इत्यर्थः। तत्र क्रममाह। **तत्रेति**।

**गोत्रजाः। पितामही**

तेषां मध्ये इत्यर्थः । यद्यपि **धारेश्वर**मतनिराकरणावसरे एवापेक्षितत्वाद्वक्तुमुचितमिदं तथापि तत्र हृदयारूढमेव कृत्वाऽत्र, **मनु**ना मात्रनन्तरं पितामह्या धनग्रहणस्योक्तत्वाद्भ्रातृसुतानंन्तरं कथं तस्या धनग्रहणोक्तिरित्याशंकानिरासायाह । **मातर्यपि चेति** । **इति** इत्यनेन तत्क्रमबोधकेन **मनु**ना । **अनुप्रवेशाभावादिति** । यद्यपीदं तदग्रेऽपि तुल्यं तथापि बन्ध्वाद्युत्तरं तस्याः प्रवेश स्योक्तरीत्याऽन्तरङ्गत्वेन चासम्भवेन बन्धुशब्देन वक्ष्यमाणरीत्या ग्रहणासम्भवेन गोत्रजानन्तरं प्रवेशस्य तथैवासम्भवेन गोत्रजात्वस्य तत्र सत्त्वेनान्तर्भावसम्भवात् तत्रैव ग्रहणं युक्तमिति भावः ।

ननु बद्धक्रमाणामपि पञ्चचितीनां मध्ये यां वेकां चिदिति विहितोपधानं मध्यमचितौ यथा, तथाऽत्रापि स्यात्, अतो हार्दमेवाह । **पितुर्मातेति** । मानवस्येति भावः । **अधिकारमात्रेति** । तद्बोधनमात्रेत्यर्थः । इदमुपलक्षणं प्रागुक्तान्यपक्षाणामपि । **कातीयै**कवाक्यतया तस्य क्रमपरत्वमपि न तद्वत् श्रौतं, विनिगमनाविरहग्रस्तं, सिद्धान्तरीत्या सर्वं सुयोजं च । एतेन पित्रादीनामित्यादि चिन्त्यं, चित्युपधानविरोधात्, कातीयैकवाक्यतया तस्य क्रमपरत्वाच्चेति **भ्रान्तोक्त**मपास्तम्। उत्कर्षे तत्सुतानन्तरमिति पाठः । उत्कर्षे इत्यस्यावश्यके इत्यादिः । उपरितन**मृ**तानन्तरमिति पाठान्तरम् । उपरितनाः पित्रादयो भ्रातृसुतपर्यन्तास्तन्मरणानन्तरमिति तदर्थः ।

**अविरोधादिति** । गोत्रजत्वस्य तत्र सत्त्वेन केनापि सह विरोधाभावादित्यर्थः । उक्त**मनो**नोरुक्ताशयकत्वेन वस्तुतः क्रमे तात्पर्याभावेन मूलकृता पुत्राद्यभावे पत्न्यादीनां केषांचित्तदधिकारमुक्त्वा पितरावित्येकशेषेण तयोरत्यन्ताव्यवधानोक्त्या मध्ये परोक्त**मनू**क्तक्रमेण तत्प्रवेशासम्भवात्तदनन्तरमप्येकगोत्रत्वे सति स्वपितृकुलत्वेनात्यन्तान्तरङ्गत्वादानन्तर्यपाठात्पूर्वाभावे इति वाक्यशेषाच्च तत्सुतान्तानामुक्त्या दृष्टक्रमत्वेनैव तेषां मध्ये तस्याः प्रवेशस्य दुष्करत्वात्तत्पर्यन्तमपकृष्य पृथगनुक्ताऽपि सती सा आपाततः परोक्तमनुप्रतीतक्रमस्यातः परं बाधे मानाभावात्तत्परं गोत्रजा इति पाठात् **मनु**प्रतीततादृशक्रमानुसारेण पितामहाद्यपेक्षया पितामह्या एव सन्निहितत्वाद्गोत्रजात्वाच्च तदनन्तरमेव धनभागिति भावः । प्रागुक्तसिद्धान्ते तु न कापि शङ्केति बोध्यम् । एतेन **मृतस्य पितृ**सन्तानात्पूर्वं पित्रनन्तरं मातुरधिकारोक्त्या पितामहसंतानात्पूर्वं पितामहादनन्तरं पितामह्या अधिकारः सूचितः । अन्यथा पितरौ भ्रातर इति क्रमविरोधापत्तिः । अत एव च " मातर्यपीति, **मनु**रपि सङ्कुच्छते " इति **प्राच्यो**क्तमपास्तम् । उक्तरीत्या निर्वाहात् तदर्थाज्ञानाच्च ।

अत्र केचित् । दौहित्रानन्तरं मातापितरौ धनग्रहणे युगपदधिकारिणौ । उभयोरपि संनिहितत्वात् । अत एव तौ विभज्य गृह्णीयातां न तु माता पूर्वं तदभावे पितेत्येवमुक्तक्रमः । इदमेवाभिप्रेत्य **मूले** पितरावित्येकशेषः कृतः ।

तत्र क्रमाप्रतीतौ पाञ्चमिकन्यायोऽपि । तथा हि । पञ्चमाद्यपादसप्तमाधिकरणम् । " मुख्यक्रमेण चाङ्गानां तदर्थत्वात् " । सारस्वतौ भवत इत्यनेन पुरोडाशहविष्कं यागद्वयं विहितम् । सरस्वती देवताऽस्य सारस्वतः पुरोडाशः । सरस्वान् देवताऽस्य सारस्वतः । स च स च तौ सारस्वतावित्येकशेषः । एवं सति स्त्रीदेवत्ययाज्यानुवाक्यायुगलमाम्नाये आदौ पठित्वा पुन्देवत्ययाज्यानुवाक्यायुगलं पठितमिति मन्त्रपाठानुसारेण यागानुष्ठानक्रम इत्येतावानधिकरणविषयमूलविभागः ।

इतः परमधिकरणचिन्ता । पुरोडाशयज्ञस्येष्टिविकृतित्वात्प्रकृतिवदित्यतिदेशेन चतुरो मुष्टीन्निर्वपतीति विहितो निर्वापस्तत्र प्राप्तः । तत्र सन्देहः । किमनियमेन निर्वापः कर्त्तव्य उत स्त्रीदेवत्यनिर्वापं कृत्वा पुन्देवत्यनिर्वाप इति । तत्रातिदेशप्राप्तनिर्वापे क्रमाप्रतीतेरनियमेन निर्वाप इति **पूर्वपक्षे**—

**राद्धान्तः** । मुख्ययागक्रमेणैव निर्वापः कार्यः । तयोस्तु याज्यानुवाक्यायुगलपाठक्रमेणानुष्ठानक्रमः । अतः प्रमितक्रमाविरोधाय मुख्यक्रमानुसारेणैव निर्वापानुष्ठानक्रम इति ।

एवं च तत्राधिकरणे सारस्वतावित्युत्पत्तिवाक्ये एकशेषसत्त्वेन क्रमाप्रतीत्या यथा तद्युगलपाठक्रमेण यागयोरनुष्ठानक्रमोऽङ्गीकृतस्तथाऽत्रापि पितरावित्यत्र तत्त्वेन तदप्रतीत्या सामान्यतो दौहित्रानन्तरं मातापित्रोर्युगपद्विभज्य धनप्राप्तिस्तदभावे भ्रातॄणामित्यादीति ।

प्रागुक्तन्यायमूलमिदं मूलवाक्यं **कात्यायन**वचनेनापोद्यते । सामान्यन्यायापेक्षया वचनस्य प्राबल्यात् । वचनं च विभक्ते संस्थिते द्रव्यमिति प्रागुक्तमेव । तस्य चायमर्थः । पुत्रग्रहणमासन्नतरोपलक्षणार्थम् । तेन पुत्रपौत्रप्रपौत्रपत्नीदुहितृदौहित्रदौहित्र्यभावे प्रथमं पिता धनभाक् ततो माता ततो भ्रातेत्यादीति । व्याख्याकृदुक्तव्याख्याने दोषा अपि । तथा हि । यत्तु साधारणत्वासाधारणत्वाभ्यां ततस्तस्याः प्रत्यासत्त्यतिशय उक्तः, तन्न । जननीजनकयोर्जन्यं प्रति सन्निकर्षतारतम्याभावात् । यदपि गोत्रजपदार्थान्वयः तत्र तदादितदन्तानां बद्धक्रमत्वेन मध्ये तस्या अप्रवेशेन **मनू**क्त्या मात्रनन्तरं सा धनं न प्राप्नोति अपितूत्कृष्टा सती भ्रातृसुतानन्तरं प्राप्नोतीति । तदपि न । गोत्रजा इति सरूपैकशेषत्वेन पुंसामेव ग्रहणात् । तथा च पूर्वोक्तभ्रातृसुतैः सह गोत्रजानां पुरुषत्वेन बद्धक्रमत्वाविशेषेण तत्रापि तस्याः प्रवेशासम्भव एवेति दिगित्याहुः ।

इदमयुक्तम् । न हि तावदेकशेषे क्रमाप्रतीतिः । विग्रहवाक्येऽनेकशेषपक्षे च मातुः पूर्वपाठादेव तत्प्रतीतिसम्भवात् । अधिकरणविरोधोऽपि न । विषयभेदात् । तत्र हि सारस्वतश्च सारस्वतश्चेति सरूपैकशेषसत्त्वाद्विग्रहवाक्येऽपि न क्रमप्रतीतिरतः को वा क्रम इत्याकाङ्क्षायां श्रौतो मन्त्रक्रमो युक्त इति तत्क्रमेण यागानुष्ठानक्रमो निरूपितो न तु सर्वत्रैकशेषे क्रमप्रतीत्यभावस्तदभिप्रेतः । अत्र तु पितामात्रेति विजातीयैकशेषसत्त्वाद्विग्रहवाक्यादावश्यं क्रमप्रतीतेः स क्रमो युक्त एव ।

यच्चोक्तं जननीजनकयोरिति । तदपि न । यतो गर्भधारणपोषणादिभिरत्यावश्यकत्वेन जन्येऽतिशयोत्कर्षमुत्पादयति माता, पिता तु निषेककृदेव । अदृष्टात् दृष्टस्यैव प्राबल्येन दृष्टोपकाराधिक्यान्मातुः सन्निकर्षातिशयोऽस्ति ।

यदपि गोत्रजा इतीत्यादिनोक्तम्, तदपि न । विजातीयानामपि स्त्रीणां पुंसां च एकविभक्त्यन्तत्वाविरोधात् । गोत्रजा इति जातिद्रव्यगुणा इतिवदत्रापि तथा बद्धक्रमता । यतः पित्रादितत्सुतान्तानां स्वसन्निहितत्वात्स्वपितृकुलत्वाच्चान्तरङ्गत्वेन बद्धक्रमत्वं न पुंस्त्वेन नापि पाठमात्रेण,

अतस्तत्सुतानां गोत्रजानां च न बद्धक्रमता । अतः पत्न्यभावे दुहिता, तद्भावे दौहित्रः, तद्भावे माता, तद्भावे पिता, तद्भावे भ्राता, तद्भावे तत्सुताः, तद्भावे पितामहीत्येव क्रमः ।

तथा च **बृहस्पतिः**—

"भार्यासुतविहीनस्य तनयाऽस्य मृतस्य तु । माता रिक्थहरी ज्ञेया भ्राता वा तदनुज्ञया"॥ इति ।

अस्यार्थः । सुतविहीनस्य मृतस्यास्य धनहरी भार्या, तद्भावे तनया, तद्भावे तत्पुत्रः, तद्भावे माता, मात्रनुज्ञया मृतस्य भ्राता वा । भ्रात्रा गृहीतेऽपि मात्रनुज्ञया गृहीतत्वादेव मात्रा गृहीतमेवेति मातुरेव पितुः पूर्वं धनभाक्त्वमिति ।

यत्तु **बृहस्पति**वाक्येऽपि तनयाशब्दो दुहितृदौहित्रपितॄणामुपलक्षक इति । तन्न । अनुपपत्त्या हि लक्षकत्वं शब्दानाम् । एवं च सर्वत्राविवादेन दुहितुरभावे दौहित्रस्य धनभाक्त्वं वचनेष्वविशिष्टमिति दुहित्रनन्तरं स्मृत्यन्तरविरोधरूपानुपपत्त्या दुहितृदौहित्रयोरेवोपलक्षको न पितुः । तावतैवानुपपत्तेः परिक्षायत् । तत्परिक्षयश्च **मानवा**दिवाक्यान्तरेषु पितुर्दौहित्रानन्तर्यस्यानियतत्वेन । अतो यावत्यर्थे लक्षितेऽनुपपत्तिशान्तिस्तावानेव तनयाशब्देन लक्ष्यत इति न सर्वथा पितुर्दौहित्रानन्तरं प्रतीतिः ।

यच्च **कातीयं** 'विभक्ते संस्थिते' इति तदपि वाबलान्न क्रमपरम् । अपि तु वचनोक्ता अधिकारिण इत्येवमधिकारमात्रप्रदर्शनपरमेव । विकल्पाभावेऽप्यपिशब्दार्था वाशब्दाः, न तु परोक्तरीत्या पूर्वपूर्वाभावपरास्ते । अभावे वाशब्दस्य शिष्टैरप्रयुज्यमानत्वात् । अप्यर्थे कोशात् प्रयोगाच्च । अथशब्दोऽप्यानन्तर्यपरो न मात्रनन्तरमेव पितामह्या धनसम्बन्धम् आह । तस्योक्तरीत्याऽक्रमपरत्वात् । अतस्तत्सुतानन्तरमेवाविरोधाद्धनसंबन्धं बोधयतु तथापि स्वार्थाहानात् । क्रमादिति च मूलपर्यालोचनया मूलोक्तमविरुद्धमेव क्रमं बोधयति, न स्ववाक्यस्थम् । क्रमादीति सामान्योक्तेर्मूलोक्तविशेषेण बाधनात्, तत्रोपसंहाराच्चेति दिक् । तस्माद्व्याख्यानोक्तमेव युक्ततरमिति विज्ञानेश्वरानुयायिनोऽप्ये[1] आहुः ।

वस्तुतस्तु प्रागुक्तरीत्या स क्रमो न युक्तः किं तु स एवेति प्रागुक्तमेव । एकशेषे क्रमाप्रतीत्या द्वयोर्युगपत्तत्वप्रतीतावपि प्रागुक्तविष्णुकात्यायनाभ्यां तथा क्रमस्य स्फुटतया प्रतीतेः । विभक्ते संस्थिते इति कात्यायनवचनमप्युक्तार्थेऽनुकूलतरम् । तस्य चार्थः प्रागुक्त एव न भवदुक्तः । मूले एकशेषस्तु लाघवेन छन्दोनुरोधेन च कृतो नोक्ताशयकः । पाश्चभिकन्यायस्य तूक्तरीत्यैव विषय इति न न्यायमूलकत्वमपि मूलस्य ।

किं च । प्रागुक्तरीत्या जननीजनकयोर्जन्यं प्रति संनिकर्षतारतम्यमस्त्येवेति तदुक्तमयुक्तमेव । यत्तु गर्भधारणेत्यादि तन्न । गर्भधारणस्य पोषणस्य चातिप्रसक्तत्वेनाकिञ्चित्करत्वात् । अत एव बीजस्यैव प्राधान्यं सिद्धान्तितं **मनुना** । अत एव च माता न स्त्रीत्यादि सङ्गच्छते ।

यत्तु गोत्रजा इति सरूपैकशेषत्वेन पुंसामेव ग्रहणमिति तन्न । तथा सति पितरावित्यत्रापि तदापत्तेः । अथ अत्र 'पिता मात्रा'[2] त्येकशेषो विशेषविहित इति चेत्, इहापि 'पुमान् स्त्रिया'[3] इति विशेषविहित इति पश्य ।

यदपि विजातीयानामपीत्यादि । तदपि न । सरूपैकशेषाभावेनैकविभक्त्यन्तत्वानुपयोगात् । तत्रापि तस्यानिमित्तत्वाच्च । दृष्टान्ते[4] द्वंद्वसत्वेन लिङ्गभेदेऽपि प्रथमान्तत्वस्यावश्यकस्य सत्त्वेन ततो

१ सुबोधनी ( पृ. ७४ पं. १८।१९ ) २ व्या. सू. ( १।२। ७० ) ३ व्यासू. ( १।२।६७ ) ४ ङ–दृष्टान्तेन लिङ्गभेदेऽपि ।

वैषम्याच्च । गोत्रजानां तत्सुतैः[1] सह बद्धक्रमत्वाभावस्तूक्तरीत्यैव । **बृहस्पति**वचनमप्यस्माकमेवानुकूलं न भवताम् । यतो मात्रनन्तरं तत्र भ्रातैवोक्तो न पितेति । तत्र तुशब्दस्य चार्थकत्वेन तनया चेत्यन्वयेन चेन दुहितृदौहित्रदौहित्रीपितॄणां समुच्चयेन विरोधलेशोऽपि न ।

एतेन तनयाशब्दस्योपलक्षकत्वोक्तिः तद्दूषणोक्तिश्चापास्ता । उक्तरीत्यैव निर्वाहात् । तस्मात्तत्र तथैव क्रमो युक्तो न व्याख्याकारोक्त इति बोध्यम् ।

यद्यपि **कल्पतरौ दायविभागे** च **विष्णु**वाक्ये ' भ्रातृपुत्रगामीत्यग्रे तदभावे बन्धुगामि तदभावे सकुल्यगामीति ' पाठेन तद्विरोधस्तथापि ' तदभावे सकुल्यगामि तदभावे बन्धुगामीति ' **मदनरत्न**धृतपाठे न विरोधः । युक्तश्चायं मूलसंवादात् । सम्भवतीति न्यायात् । एवं च स पाठश्चिन्त्य एवेति न कश्चिद्दोषः । गोत्रजपदार्थसकुल्यपदार्थयोस्तुल्यत्वात् । एतेन तथा पाठं धृत्वाऽन्यथा व्याख्यातं यद् **भ्रान्तेन,** तदपास्तम् इति दिक् ।

' पितामह्याश्चेति ' **चेन** स्नुषायाः समुच्चयः । सपिण्डत्वस्यातिप्रसङ्गत्वेन मौलपदानुरोधेनाह । **समानेति ।** तत्र हेत्वन्तरमप्याह । **भिन्नेति । सपिण्डानां** तेषामपि । अस्य फलमग्रे स्फुटीभविष्यति । तत्सुतानन्तरं तस्या धनग्राहित्वे निष्प्रत्यूहे तदारभ्य क्रमं **पितामहादयः** विविच्याह । **तत्र चेति ।** तदुत्तरम् उक्तरीत्या तस्या धनग्राहित्वे चेत्यर्थः । ततोऽन्तरङ्गाभावमाह । **पितृसन्तानाभावे इति ।** स च तत्सुतान्तः । सम्भवादाह । **पितृव्या इति ।** सापिण्ड्यस्य तावत्पर्यन्तमेव सत्त्वादाह । **आ सप्तमादिति ।** सप्तममभिव्याप्येत्यर्थः । अयमेव न्यायः सोदकेष्वपि बोध्यः ।

**ते च** समानोदकास्तु । ननु एवमपि न्यूनतैव, अत आह । **जन्मनामेति ।** सपिण्डानामुपरीत्यनुवर्तते । तथा च सप्तपुरुषान्तरं यावज्जन्म नाम च स्वकुले ज्ञायते तावद्वा समानोदकसंज्ञका इत्यर्थः । उभयत्र मानमाह । **यथाहेति ।** सप्तमे पुरुषे इति मासिकमितिवत्सामीपिकमधिकरणं, तदग्रिमे निवर्तते इत्यर्थः । **चस्त्व**र्थे । चतुर्दशानां पूरणं तदग्रिमश्चतुर्दशस्तस्मात् आ उर्ध्वं निवर्ततेत्यर्थः । अधिकसंग्रहाय पक्षान्तरमाह । **जन्मनाम्नोरिति ।** आ इत्यनुवर्तते । जन्मनाम्नोः स्मृतेर्ज्ञानात् आ ऊर्ध्वं स निवर्ततेत्येके आहुरित्यर्थः । तथा च स्मृत्यन्तरानुसन्धानद्वारा विकल्पः फलितः । स चाधिकसंग्रहाय न तु न्यूनसंग्रहाय । तदग्रे उक्तेः । अन्यतरस्यातिप्रसङ्गत्वादुभयोः समुच्चयो बोध्यः । तच्छब्देन पक्षभेदेनान्यतरपरामर्शः । **गोत्रं** सगोत्रत्वम् । ' अर्श आद्यच्, ' (व्या. सू. ५।२।१२७) सामान्ये एकत्वं क्लीबत्वं च ।

अथाग्रिमं व्याचष्टे । **गोत्रजाभावे इति ।** बहुवचनान्तेन द्वन्द्व इत्याह । **बन्धव इति । चस्त्व**र्थे । **वृद्धशातातपा**द्युक्तक्रमेणाह । **आत्मबन्धव इति ।** बान्धवाश्चेति पाठान्तरम् । तमेवाह । **यथोक्तमिति ।** अत्र पुत्रादिग्रहणेन कन्यानामपि ग्रहणं प्रागुक्तरीत्येति बोध्यम् । अत एव गार्गीबन्धुः कारीषगन्धीबन्धुरित्यादिसङ्गतिः । तत्र क्रमे बीजमाह । **तत्र चेति ।** तेषां मध्ये चेत्यर्थः । प्रत्यासत्त्यतिशयात् अन्तरङ्गत्वम् । प्रागुक्तसिद्धान्तरीत्या आह । **तदभावे पितृबन्धव इति ।** अत एव वृद्धशातातपाद्युक्तिरपि सङ्गतेति भावः । एतेनादौ बन्धुगामीति धृत्वा तेनात्मभगिनीभागिनेयादीनामपि सगोत्रसपिण्डादिक्रमेण ग्रहणं व्याख्यायेदं चिन्त्यं तेषु सत्सु तेषां विप्रकर्षेण तथाक्रमानौचित्यादिति **भ्रान्तो**क्तमपास्तम् । आत्मभगिन्यादेः पूर्वमेवोक्तत्वात् ।

---

१ ख-फ-सुतैः सह ।

यद्यपि 'भ्रातृबान्धवयोर्बन्धुरिति' **विश्वादि**कोशाद्बन्धुशब्दो बान्धवपरतयैव व्याख्यातो व्याख्यात्रा, भ्रातॄणां पूर्वमुक्तत्वात्, तथापि तस्य तावन्मात्रार्थत्वे बान्धवशब्द एव वाच्ये बन्धुशब्दोक्त्या भगवतो ऽन्योऽप्यर्थो ऽत्राभिप्रेतः। न च तत्त्वमप्रसिद्धं, ब्रह्मबन्धुरित्यादिप्रयोगात्। 'आत्मैवात्मनो बन्धुरि'त्यादिप्रयोगाच्च। तथा च प्रियकारिण्यपि तत्प्रयोगात्प्रकृते तत्त्वेन **स्मृत्य**न्तरानुरोधेनाचार्योऽपि। कृतैकशेषेण द्वन्द्वकरणात् तदर्थोऽभिमत इति गूढाशयेनाह। **बन्धूनामिति**। उक्तविधबान्धवानामित्यर्थः।

अथाग्रिमं व्याचष्टे। **तदभावे शिष्या इति**। अत्रापि कृतैकशेषेण तथा द्वन्द्व इति भावः। तेनानेकसजातीयसत्त्वे विभज्य तैर्ग्राह्यम्। तदेव स्मृत्यन्तरमाह। **पुत्राभावे इति**। **यः प्रत्यासन्नः सपिण्ड इति**। अनेन पत्न्यादिबान्धवान्तानां संग्रहः। तस्य ततो मुख्यत्वायाह। **आचार्याभावे इति**। 'अनन्तरः सपिण्डाद्य' इत्यग्रिमो **मनु**रपि— (अ. ९। १८७)

"अत ऊर्ध्वं सकुल्यः स्यादाचार्यः शिष्य एव वा"। इति।

अथाग्रिमं व्याचष्टे। **शिष्याभावे इति**। सब्रह्मचारीत्येकवचनमन्तेवास्यभिप्रायम्। सन्दिग्धत्वात्तदर्थमाह। **येनेति**। साहित्यं प्राप्तो। **तदर्थेति**। वेदार्थेत्यर्थः। **ब्रह्म** वेदः। तदध्ययनार्थं व्रतमपि ब्रह्म। तच्चरतीति ब्रह्मचारी। समानश्चासौ ब्रह्मचारी च सब्रह्मचारी। 'व्रते' इति। (व्या. सू. ३।२८०) 'सुप्यजाताविति' (व्या. सू. ३।२।७८) वा णिनिः। 'चरणे ब्रह्मचारिणीति' (व्या. सू. ६।३।८६) सादेशः। तस्य समानत्वं वेदस्य व्रतस्य वा समानत्वात्। तस्य तत्त्वं चाध्येतृभेदाद्वेदभेदं व्रतभेदं वा परिकल्प्य बोध्यम्। तेन समानवेदाध्ययननिमित्तब्रह्मचर्यवानित्यर्थः। समानं ब्रह्म वेदाध्ययनार्थं व्रतं चरतीत्यर्थो भाष्याल्लभ्यते।

अत्र कृतैकशेषबहुवचनान्तसब्रह्मचारिशब्देन द्वन्द्वः। अन्यथा तद्बोधकं शब्दान्तरमेवोक्तं स्यात्। तत्रैकस्यार्थ उक्तः। द्वितीयस्य तु समानं ब्रह्म श्रौतं कर्म चरतीति ऋत्विग् इति। अत एवा "अन्तेवासी ऋत्विग्वाहरेदिति" **शङ्खः** सङ्गच्छते। तृतीयस्य तु ब्रह्म वेदस्तेन सहितं विशिष्टं सब्रह्म वेदतदङ्गानि तच्चरति जानातीति सः श्रोत्रिय इति। तुरीयस्य तु ब्रह्मचारिणा सह **सदृशः** सब्रह्मचारीति। तदेतत्सर्वं शिष्यबुद्धिवैशद्यार्थं द्वितीयविशेषं च हृदि निधाय गूढाशयेन न्यूनतां परिहरन् तदग्रिमविशेषद्वयं सविशेषमाह क्रमेण। **तदभावे ब्राह्मणद्रव्यमिति**। **यःकश्चित्**, स्वपरजातिसाधारणो ब्राह्मणः। **श्रोत्रियाः** वेदतदर्थज्ञः। तद्बहुत्वेऽसति गमके विभज्य गृह्णीयुरित्याह। **श्रोत्रिया इति**। ब्राह्मणा इत्यर्थः।

**ब्राह्मणमात्रमिति**। मात्रमवधारणे। तेन श्रोत्रियत्वव्यवच्छेदः। शिष्य एव वेत्यग्रिमं **मनु**माह। **यथाहेति**। **सर्वेषां** पत्न्यादिश्रोत्रियान्तानाम्। तस्येति भावः। **अपि**रेवार्थे व्युत्क्रमे। ब्राह्मणा एव। बहुवचनं प्राग्वत्। वेदाध्ययनधर्मानुष्ठितिमात्रमत्राप्यपेक्षितमित्याह। **त्रैविद्या इति**। वेदत्रयाध्ययनकर्तारः। **शुचयः** धर्मानुष्ठातारः। अन्तरिन्द्रियनिग्रहोऽप्यावश्यक इत्याह। **दान्ता इति**। **तथा** तथा सति। राज्ञेति शेषः। तस्मादिति पाठे राज्ञ इत्यर्थः। अन्यथा तु हानिरेवेति भावः।

१ भगवद्गीतायां अ. ६ श्लो. ५

तदेव ध्वनयन्नाह । **न कदाचिदिति** । **राजा** अभिषिक्तः । श्रोत्रियोऽपीत्यर्थः । न हीयते इत्यग्रिममेवाह । **अहार्यमिति** । अग्राह्यमित्यर्थः । **नित्यं**, सर्वथा । **स्थितिः** मर्यादा । उक्तमेव विशदयन् त्रैविद्यत्वादिगुणाभावेऽपि जातिब्राह्मणोऽप्यधिकारीति सूचयन् उक्तार्थे मानान्तरमप्याह । **नारदेनाप्युक्तमिति । ब्राह्मणार्थस्येति ।** तस्य स्वामिनो ब्राह्मणस्य नाशे सति । **चेत्**, यदि ब्राह्मणार्थस्य तद्धनस्य कश्चन दायादो नास्ति, तदा तद्धनं ब्राह्मणायैव दातव्यमित्यर्थः । यद्वा । तदिति भिन्नं पदम् । नाशे इत्यत्र स्वामिन इति शेषः । **तत्** ब्राह्मणधनम् । सामान्येन नपुंसकत्वनिर्देशः । विधेयलिङ्गं वा । **अन्यथा**, स्वयं हरणे ।

ब्राह्मणद्रव्यमित्युक्त्याऽऽकांक्षितविशेषमाह । **क्षत्रियादीति ।** पत्न्यादीनामित्यादिः सब्रह्मचारिपर्यन्तानामित्यस्य । स्थितिरित्यग्रिममेवाह । **यथाहेति । इतरेषां** प्रागुक्तब्राह्मणभिन्नानाम् । धनमिति शेषः । **सर्वाभावे** पत्न्यादिसब्रह्मचारिपर्यन्तानामभावे । अत्र **मन्व**नुरोधेन **गौतमस्य** ब्राह्मणपरत्वं, मनोरपि श्रोत्रियपरत्वं त्रैविद्या इत्यादिना स्पष्टमेव । एवं च तदुभयं तत्रैव साधकम् । शुद्धब्राह्मणपरस्तु **नारद** एवेति परे । एवं मूलोक्तक्रमे न कोऽपि दोष इति स्थितम् ।

अत्र पुत्राद्येतावत्पर्यन्तं यदुक्तं तच्छेषतया किञ्चित्सिद्धान्ततत्त्वं गूढतममभिमतं स्पष्टार्थमुक्तार्थानुवादसहितमुच्यते ।

पुत्रपौत्रप्रपौत्राणां विविधफलानि—दायहरणं, जीवतो वाक्यादिकरणं, वंशविच्छित्तिपरिहरणं, पिण्डादिकरणं, नामसङ्कीर्तिकरणम्, ऋणादिदोषनिवृत्तिकरणं, परलोककरणं चेत्यादीनि स्मृत्यादौ प्रतिपादितानि । तत्र **मनुः**, — ( अ० ९ श्लो० १६३।१८५ )

"एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः । शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम्" ॥ इति ।
" न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुः " ॥ इति च ।

अत्र द्वितीयेन दायहरणं सर्वेषामविशेषेण प्रतिपादितं प्रतिनिधीनां क्रमेण तत्तदभावे । औरसस्य तु पूर्वेणैव ।

**मूल**मपि प्रागुक्तमेव— ( याज्ञ. अ. २ श्लो. १२८।१३३ )
" औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः । क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ॥
" गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः । कानीनः कन्यकाजातो मातामहसुतो मतः ॥
" अक्षतायां क्षतायां वा जातः पौनर्भवः सुतः । दद्यान्माता पिता यं वा स पुत्रो दत्तको भवेत् ॥
" क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात्स्वयंकृतः । दत्तात्मा तु स्वयंदत्तो गर्भे विन्नः सहोढजः ॥
" उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत्सुतः । पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः ॥
" सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः । " इति ।

अत्र[1] तत्सम इत्युक्त्या औरसपुत्रिकापुत्रसमवाये समविभागः सूचितः ।

अत एव **मनुः**, ( अ. ९ । १३४ )
"पुत्रिकायां कृतायां तु यदि पुत्रो ऽनुजायते । समस्तत्र विभागः स्यात् ज्येष्ठता नास्ति हि स्त्रियाः " इति ।

द्विवधः क्षेत्रजः तत्समवाये षष्ठपञ्चमान्यतरांशहरः । अन्ये चतुर्थांशहराः । तदभावे तु प्रागुक्तरीतिरेव । यद्यपि । ' विभागं चेदित्यादिना'— ( याज्ञ. २ । ११४ )

१ ख-फ-एतत्सम इत्युक्त्या ।

" विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतकैः । " ( याज्ञ. २ । १४९ )

इत्यन्तेन प्रोक्तविभागप्रकरणमध्यस्थत्वेनास्य पिण्डद इत्यस्यात्रानुपयोगः, पूर्वाध्याये प्रोक्तश्राद्धप्रकरणेऽपेक्षिताधिकार्यनुक्तेः प्रासङ्गिकत्वे तु चरमोक्तिरुचिता, तथास्वारस्याभावश्च, अत एव **विज्ञानेश्वरेण** औरस इत्यादि " अधुना मुख्यगौणपुत्राणां दायग्रहणव्यवस्थां दर्शयिष्यंस्तेषां स्वरूपं तावदाह " इत्येवमवतार्य व्याख्याय च " एवं मुख्यामुख्यपुत्राननुक्रम्यैतेषां दायग्रहणे क्रममाह"इत्येवमवतारितं"पिण्डद इतीति" तथापि यस्यांशहरत्वं तस्यैव पिण्डदत्वमित्यस्य मुख्यामुख्यातिदेशिकपुत्रान्यविषयत्वं, तादृशपुत्रस्थले तस्य सधनत्वे तथा संभवेऽपि अतथात्वे तस्य पिण्डदत्वावश्यकत्वात् तादृशस्य तस्य तद्धर्मत्वान्न तद्विषयत्वम्, अत एव च—

" अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम् । यदपत्यं भवेदस्यां तन्मम स्यात् स्वधाकरम् ॥ "

इति **मनूक्तिः** ( अ. ९ । १२७ ) " यश्चार्थहरः स पिण्डदायी पुत्रः पितृवित्ताभावे पिण्डं दद्यादिति " **विष्णू**क्तिश्च सङ्गच्छते—इत्येतदर्थं तथोक्तिः । अत एव—

" क्षेत्रजादीन् सुतानेतानेकादश यथोदितान् । पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥ "

इति **मनुः** । ( अ. ९ । १८० )

अत्र पारशवाख्यं शौद्रं गृहीत्वा एकादशत्वम् । इतोऽव्यवहितं प्राक् पठितानां तेषामेव तेनोक्तत्वात् । पुत्रिकासुतस्य तु बहुव्यवधानेन पार्थक्येन तेनोक्तत्वात् ।

अत एव— ( **मनु**. अ. ९ । १६५ )

" औरसक्षेत्रजौ पुत्रौ पितृरिक्थस्य भागिनौ । दशापरे तु क्रमशो गोत्ररिक्थांशभागिनः ॥ "

इति प्रागुक्ताः । तेषां ततः प्रागुक्तयौरस इत्यादिना द्वादशपुत्रक्रमानुरोधेनैतावत्पर्यन्तं लक्षणान्युक्तानि । क्रिया पिण्डादिकरणं तल्लोपो व्यतिरेके हेतुः । तल्लोपं वीक्ष्येत्यर्थो वा । अकारप्रश्लेषो वा । प्रतिनिधित्वं चावयवान्वयेन न्यायसिद्धं वाचनिकं यथायथं बोध्यम् । अत एव तेन यथाक्रममेव पिण्डदः श्राद्धदः अंशहरः धनहरो वेदितव्य इति व्याख्यातम् ।

" अप्रशस्तास्तु कानीनगूढोत्पन्नसहोढजाः । पौनर्भवश्च नैवैते पिण्डरिक्थांशभागिनः ॥ "

इति **विष्णु**वाक्येऽप्येवमेव बोध्यम् । **मूल**वाक्ये चकारेणान्यफलानामपि असाधारणानां समुच्चयः । एवमेव द्व्यामुष्यायणस्य क्षेत्रजस्य भागविशेषप्रतिपादके विभागप्रकरणान्तर्गते—

"अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः । उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥"

इति **मूलो**क्ते ( **याज्ञ**. अ. २।१२७ ) ततः पूर्वपद्ये तदुक्तिफलादि बोध्यम् । तत्र तथोक्तिस्तु प्रकरणानुरोधात्, नियोगेनोत्पादनान्न तद्धनहारित्वमिति भ्रमनिरासार्थत्वात्, तदर्थमेव तत्प्रवृत्तेश्चेति बोध्यम् । अत एव तदपि तेन " द्व्यामुष्यायणस्य भागविशेषं दर्शयंस्तस्य स्वरूपमाह " इत्येवमवतार्य्य यथाक्रमं व्याख्यायोभयोरपुत्रत्वे तस्य द्व्यामुष्यायणत्वेन प्रागुक्तं बोध्यम् । देवरादेः सपुत्रत्वे तु अद्व्यामुष्यायणः । स क्षेत्रिण एव पुत्रो भवतीति तस्यैव रिक्थी पिण्डदश्च न बीजिन इति तद्रिक्थी पिण्डदश्च न बीजिन इति तद्रिक्थी पिण्डदश्च नियमेन न ।

तदुक्तं **मनुना**— ( अ. ९ । ५३ । ५२ )

" क्रियाभ्युपगमात् क्षेत्रं बीजार्थं यत्प्रदीयते । तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च ॥

" फलं त्वनभिसंधाय क्षेत्रिणां बीजिनां तथा । प्रत्यक्षं क्षेत्रिणामर्थो बीजाद्योनिर्बलीयसी ॥ " इति ।

किञ्च । मुख्यामुख्यमात्रपुत्रातिरिक्तस्थलेंऽशहरत्वेन पिण्डदत्वं नियतम्, अत्र तु वैपरीत्यमिति सूचनार्थमपि तथोक्तिः । ततश्च पुत्रादीनां, यद्धनं स्वामिसम्बन्धादेव निमित्तादन्यस्वत्वाक्रान्तं तद्रूपदायहरणं, पुत्रत्वादिना अप्रतिबद्धं भवतीत्ययमप्रतिबन्धो दायः । पितृपितामहादिधने तेषां तत्त्वेन लोकप्रसिद्धजन्मतः सिद्धस्वत्वस्याविशिष्टत्वात् । पत्न्यादीनां तु पुत्राद्यभावे स्वाम्यभावे विषमविभागाभावे दानाभावे च स्वं भवति तत्तद्रूपेणेति तत्तत्सद्भावः प्रतिबन्धक इति सप्रतिबन्धो दायः । एवं च तद्द्वैविध्यं सिद्धम् ।

ननु भवतु उक्तरीत्या पुत्रस्य तत्, पौत्रादेस्तत्सत्त्वे किं मानमिति चेत्, शृणु । ( याज्ञ. २ । श्लो. १२० । १२१ )

" अनेकपितृकाणां तु पितृतो भागकल्पना । भूर्य्या पितामहोपात्ता निबन्धो द्रव्यमेव वा ।
" तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चैव हि ॥ "

इति तत्रैव मूलम्,

" पैतृकं तु पिता द्रव्यमनवाप्तं यदाप्नुयात् । न तत्पुत्रैर्भजेत्सार्द्धमकामः स्वयमर्जितम् ॥ "

इति **मनुश्चेति** । ( अ. ९ । २०९ )

नन्वेवमपि द्वितीये किं मानमिति चेत्, शृणु ।

" जीवतो वाक्यकरणात्प्रत्यब्दं भूरिभोजनात् । गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता ॥ "

इति **देवलः**—

" पिता माता च सम्प्रीतौ स्यातां पुत्रगुणैर्यदि । स पुत्रः सकलं धर्ममाप्नुयात्तेन कर्मणा ॥ "

इति **सत्यव्रतश्च** ।

" स पुत्रः पितरं यस्तु जीवन्तमनुवर्तयेत् । संस्थितं तर्पयेद्भक्त्या श्राद्धेन विविधेन च ॥ " इति ।

एवमग्रेऽपि क्रमेणोच्यते ।

" अपत्यं तु ममैवैकं कुले महति भारत । अपुत्रमेकपुत्रत्वमित्याहुर्धर्मवादिनः ॥
" चक्षुरेकं च पुत्रश्च अस्ति नास्ति च भारत । चक्षुर्नाशे तनोर्नाशः पुत्रनाशे कुलक्षयः ॥
" अनित्यतां च मर्त्यानां मत्वा शोचामि पुत्रक । सन्तानस्याविनाशं तु कामये भद्रमस्तु ते ॥ "

इति **भारतम्**,

" अनेन तु विधानेन पुरा चक्रे स्वपुत्रिकाम् । विवृद्ध्यर्थं स्ववंशस्य स्वयं दक्षप्रजापतिः ॥
" ददौ स दश धर्माय कश्यपाय त्रयोदश । सोमाय राज्ञे सत्कृत्य प्रीतात्मा सप्तविंशतिम् ॥ "

इति **मनुश्च** । ( अ. ९ । १२८ । १२९ )

पिण्डादिविषये **मूलन्तूक्तमेव** ।

"न ह्यस्मिन् युज्यते कर्म किञ्चिदामौञ्जिबन्धनात् ।" " नाभिव्याहारयेत् ब्रह्म स्वधानिनयनादृते ॥ "

इति । **मनुः**— ( अ. २ श्लो. १७१ । १७२ )

" कृतचूडस्तु कुर्वीत उदकं पिण्डमेव च । स्वधाकारं प्रयुञ्जीत मन्त्रोच्चारं न कारयेत् ॥ "

इति **व्याघ्रश्च** ।

" अपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिः सदा । पिण्डोदकक्रियाहेतोर्यस्मात्तस्मात्प्रयत्नतः ॥ "

इत्यत्रिश्च ।

एतेन पुत्रवतोऽनधिकारः सूचितः ।

" अपुत्रेण सुतः कार्यो यादृक् तादृक् प्रयत्नतः । पिण्डोदकक्रियाहेतोर्नामसङ्कीर्तनाय च " ॥इति—

**मनुयमव्यासा**श्च ।

" धर्मसङ्कीर्तनस्य चेति " **बृहस्पतौ** पाठान्तरं तुर्यचरणे ।

" त्रयाणामुदकं कार्यं त्रिषु पिण्डः प्रवर्तते । चतुर्थः सम्प्रदातैषां पञ्चमो नोपपद्यते ॥ "

इति **मनु**श्च । ( अ. ९ । १८६ )

" पुत्रः पौत्रः प्रपौत्रश्च भ्राता वा भ्रातृसन्ततिः । इत्यन्यत्र च । " भ्राता वेत्यत्र तद्वद्वेति " पाठान्तरम् । इति **स्मृतिसंग्रहे** च ।

" पुत्रेषु वर्तमानेषु नान्यो वै कारयेत्स्वधाम् " । पुत्रास्ते हिंसितास्तेन यस्त्वेवं कुरुते नरः ॥ "

" आनुकूल्याद्वा पुत्रस्य श्राद्धं कुर्यात्सनाभिकः । "

इति **ऋष्यशृङ्ग**श्च ।

" उत्तमर्णाधमर्णेभ्यः पितरं त्रायते सुतः । अतस्तु विपरीतेन नास्ति तेन प्रयोजनम् ॥

" काङ्क्षन्ति पितरः पुत्रान् नरकापातभीरवः । गयां यास्यति यः कश्चित्सोऽस्मान्सन्तारयिष्यति ॥

" करिष्यति वृषोत्सर्गमिष्टापूर्तं तथैव च । पालयिष्यति वार्द्धक्ये श्राद्धं दास्यति चान्वहम् ॥ "

इति **बृहस्पति**श्च ।

" पुत्रश्चोत्पत्तिमात्रेण संस्कुर्यादृणमोचनात् । पितरं नाब्दिकाच्चौलात्पैतृमेधेन कर्मणा ॥ "

इति **सुमन्तु**श्च ।

" नापुत्रस्य लोकोऽस्तीति, जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी वाऽस्तीति, "

" ऋणमस्मिन्सन्नयत्यमृतत्वं च गच्छति । पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् " ॥ इति च—

**श्रुति**श्च । **विष्णुवसिष्ठा**वप्येवम् । विन्दतीति पाठान्तरं गच्छतीत्यत्र ।

तत्रापि विशेषः ( अ. ९ । १०६ । १०७ । १०८ । १०९ ।

" ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः । पितॄणामनृणश्चैव स तस्मात्सर्वमर्हति ॥

" यस्मिनृणं सन्नयति तेन चानन्त्यमश्नुते । स एव धर्मजः पुत्रः कामजानितरान्विदुः ॥

" पितेव पालयेत्पुत्रान्ज्येष्ठो भ्रातॄन्यवीयसः । पुत्रवच्चापि वर्तेरन् ज्येष्ठे भ्रातरि धर्मतः ॥

" ज्येष्ठः कुलं वर्धयति विनाशयति वा पुनः । ज्येष्ठः पूज्यतमो लोके ज्येष्ठः सद्भिरगर्हितः ॥ " इति,

" पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते । अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम् ॥ "

इति च **मनुः** ।

" जातमात्रेण पुत्रेण पितॄणामनृणी पिता । **इत्यत्रि**श्च ।

" अपुत्रस्य गतिर्नास्ति स्वर्गे नैव च नैव च। येन केनाप्युपायेन पुत्रं संपादयेत्खग" इति **गारुडं** च।

**शंखलिखितपैठीसनयश्च**—

" यत्र क्वचन जातेन पिता पुत्रेण नन्दति। तेन चानृणतां याति पितॄणां पिण्डदेन वै॥" इति।

" अग्निहोत्रं त्रयो वेदा यज्ञाश्च सहदक्षिणाः। श्रेष्ठपुत्रस्य[1] पौत्रस्य कलां नार्हन्ति षोडशीम्॥"

" पुत्रपौत्रप्रतिष्ठस्य बहुपुत्रस्य जीवतः। अस्कन्नवेदयज्ञस्य हस्तमात्रं त्रिविष्टपम्॥" इति।

**वसिष्ठः**—(अ. १७ सू. २–४)" अनन्ताः पुत्रिणो लोका नापुत्रस्य लोकोऽस्तीति श्रूयते। अप्रजाः सन्तु पुत्रिण इत्यभिप्रायः। प्रजाभिरग्ने अमृतत्वं पश्यामी त्यपि **निगमो** भवतीति।"

ननु पुत्रजननमात्रेण पितुर्नानृण्यं किं तु सम्यगनुशिष्टेन पुत्रेण शास्त्रीयेषु कर्मस्वनुष्ठितेषु पश्चादानृण्यम्। अत एव **वाजसनेयेऽपि ब्राह्मणे** पुत्रानुशासनविधिः समाम्नातः, " तस्मात्पुत्रमनुशिष्टं लोक्यमाहुस्तस्मादेनमनुशासति यद्यनेन किञ्चिदक्ष्णया कृतं भवति तस्मादेनं सर्वस्मात्पुत्रो मुञ्चति तस्मात्पुत्रो नाम पुत्रेणैवास्मिन् लोके प्रतितिष्ठति" इति।

अयमर्थः। अस्ति किञ्चित्सम्प्रतिपत्तिनामकं कर्म। यदा पितुर्मरणावसरो भवति तदा पुत्रमाहूय वेदाध्ययने यज्ञे लौकिकव्यापारे च यद्यत्कर्तव्यजातं तस्य सर्वस्य पुत्रे सम्प्रदानं कर्त्तव्यम्। सेयं सम्प्रतिपत्तिः, तस्यां च सम्प्रतिपत्तौ यस्मादनुशिष्टः पुत्रोऽधिकारी तस्मादनुशिष्टं पुत्रं परलोकहितमाहुः। अत एव पुत्रानुशासनं कुर्युः पितरः। स चानुशिष्टः पुत्रः स्वपित्रा शास्त्रीयं कर्म अक्ष्णया वक्रत्वेन शास्त्रवैपरीत्येन कृतं भवति एतस्मात्सर्वस्मात्पापात् इमं पितरं स्वयं कर्म सम्यगनुतिष्ठन्मोचयति तस्मात्पुन्नाम्नो नरकात् त्रायत इति व्युत्पत्त्या पुत्रो नाम।

अत एव **मनुविष्णू**—( मनु. ९। १३८ )

" पुन्नाम्नो नरकाद्यस्मात् त्रायते पितरं सुतः। तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा" इति।

**हारीतः**—

" पुन्नामा निरयः प्रोक्तच्छिन्नतन्तोश्च तत्र वै। पितरं त्रायते यस्मात्तस्मात्पुत्र इति स्मृतः॥

" यस्य पुत्रः शुचिर्दक्षः पूर्वे वयसि धार्मिकः। नियन्ता चात्मदोषाणां सन्तारयति पूर्वजान्" इति।

**बृहस्पतिश्च**—

" पुन्नाम्नो नरकात्पुत्रः पितरं त्रायते यतः। मुखसन्दर्शनेनापि तदुत्पत्तौ यतेत सः॥

" पौत्रोऽथ पुत्रिकापुत्रः स्वर्गप्राप्तिकरावुभौ। रिक्थे पिण्डाम्बुदाने च सुतौ सुपरिकल्पितौ" इति।

स च पिता स्वयं मृतः पुत्रशरीरेणैवास्मिन् लोके यथाशास्त्रं कर्म कुर्वन्प्रतितिष्ठतीति। एवं सति बहूनां मध्ये यथावदनुशासनं प्रज्ञामान्द्यादिप्रतिबन्धबाहुल्यात्कस्यचिदेव सम्पद्यते। अनुशिष्टेष्वपि बहुषु यथावदनुष्ठानं कस्यचिदेव। अतो ज्येष्ठः कनिष्ठो वा यस्तादृशः स एवानृण्यहेतुरिति कथं तथा प्रागुक्तमिति चेत्, न।

अनुशासनस्य संप्रतिपत्तिद्वारा विलक्षणपितृकृतपापनिवारणद्वाराऽप्रतिबद्धविलक्षणपरलोकप्राप्तिफलकत्वस्योक्तरीत्या प्रतीयमानत्वेनानृण्याहेतुत्वात्। अत एव लोक्यमित्याद्यक्षरस्वारस्यम्। अत एव च प्रागुक्तश्रुतिस्मृत्यादिसङ्गतिः। अन्यथा तद्विरोधो दुष्परिहर एव। अत एव च ज्येष्ठो न देयस्तस्यैव पुत्रकार्यकरणे मुख्यत्वादिति सफलं **विज्ञानेश्वरा**दिभिरुक्तम्। एवं च पुत्रादेस्तत्त्वं सिद्धम्।

---

१ फ–श्रेष्ठपुत्रप्रसूतस्य।

तत्रापि विशेषः, सन्निहितत्वेऽपि पुत्रादीनां पतितत्वादि दोषे क्वापि नाधिकारः ।

" पतितो नाग्निसंस्कारं न क्रियां न च तर्पणम् । कुर्यादुन्मत्त एवापि नान्यथेत्यब्रवीद्यमः ॥ "

इति स्मृतेः । तथा च अस्वस्थोन्मत्तनास्तिकादिपुत्रसत्त्वे पौत्रादीनां पुत्रप्रतिनिधित्वेनाधिकारः । एवं—

" पितृद्विट् पतितः षण्ढो यश्च स्यादौपपातिकः । औरसा अपि नैतेंऽशं लभेरन् क्षेत्रजाः कुतः ॥ "

इति नारदोक्तेः— ( अ. १३ । २१ श्लो. )

दायग्रहणेऽपि तथा बोध्यम् । वक्ष्यते चेदमनुपदमेव मूलकृता । तदभावे विभक्ते ऽसंसृष्टिनि पत्यौ स्वर्याते तादृशपरिणीता संयता पत्नी सकलमेव धनं प्रथमं गृह्णाति, तदभावे तादृशी दुहितेत्यादि दायहरणमात्रे इमं क्रमं मूलकृदुक्तवान्—

" पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा । तत्सुता गोत्रजा बन्धुशिष्यसब्रह्मचारिणः ॥

" एषामभावे पूर्वस्य धनभागुत्तरोत्तरः । स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः ॥ " इति ।

अत्र पत्नीत्यनेन तादृशपरिणीतालाभः । 'पत्युर्न' इत्यनुशासनात् ।

" अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता । पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं लभेत च ॥ "

इति वृद्धमनोः,

" पत्नी भर्तुर्धनहरी या स्यादव्यभिचारिणी । तदभावे तु दुहिता यद्यनूढा भवेत्तदा " इति—

" अपुत्रस्याथ कुलजा पत्नी दुहितरोऽपि च । "

इति च कात्यायनाच्च संयतत्वस्य साकल्यस्य च लाभः । आद्ये चशब्दद्वयं मिथः समुच्चये । तेनांशहरत्वे तदावश्यकत्वं सूचितम् । एवं तदभावेऽप्यन्याभावेऽपि तस्यास्तदावश्यकत्वम्, अन्येन तद्धरणे तस्यैव तदावश्यकत्वं न तस्या इति सूचितम् । धनहरीति तु पचाद्यच्प्रत्ययेन बोध्यम् । विभागकथनानन्तरमस्योक्तत्वाद्विभक्तत्वस्य लाभः । पत्नीत्याद्यपवादस्य संसृष्टिनस्तु संसृष्टीत्यस्य वक्ष्यमाणत्वादसंसृष्टित्वलाभः । यद्यपि—

" विभक्ते संस्थिते द्रव्यं पुत्राभावे पिता हरेत् । भ्राता वा जननी वाऽथ माता वा तत्पितुः क्रमात् ॥ "

इति कात्यायनस्मृतौ क्रमादित्युक्तं, तथा—

" स्वर्यातस्य ह्यपुत्रस्य भ्रातृगामि द्रव्यं तदभावे पितरौ हरेयातां ज्येष्ठा वा पत्नी "

इति शङ्खस्मृतौ तदभावे इत्युक्तम्, एवमन्यत्रापि, तच्च प्रागुक्तमेव, तथापि न तानि क्रमबोधकानि । विकल्पस्य स्मरणात्, मिथो विरोधात् ।

" पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वा । " इति—

" अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात् । मातर्यपि च वृत्तायां पितुर्माता हरेद्धनम् ॥ "

इति च मनुविरोधात् । ( अ. ९।१८५।२१७ )

" भ्रातॄणामप्रजाः प्रेयात्कश्चिच्चेत्प्रव्रजेत वा । विभजेरन् धनं तस्य शेषास्तु स्त्रीधनं विना ॥

" भरणं चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयात् । रक्षन्ति शय्यां भर्तुश्चेदाच्छिन्द्युरितासु च ॥ "

इति नारदविरोधाच्च । ( अ. १३। श्लो. २५।२६ ) एतेन—

" पुत्रः पौत्रः प्रपौत्रो वा भ्राता वा भ्रातृसन्ततिः । "

---

१ याज्ञ. अ. २ श्लो. १४० पृ. ९९

इति दायग्रहणक्रमबोधकमित्यप्यपास्तम् । तस्य श्राद्धप्रकरणस्थत्वाच्च । एवं च विकल्पघटितवाक्यानां न क्रमबोधकत्वमिति सिद्धम् । स्पष्टश्चायमर्थः **पूर्वमीमांसायां**, "तुल्यार्थास्तु विकल्पेरन्" इत्यधिकरणे ( जै. सू. ) । एवं च तेषामधिकारप्रदर्शनमात्रपरत्वम् । तथा सति **शङ्ख**वाक्यं **नारद**वाक्यं च संसृष्टिविषयकम् । "संसृष्टानां तु यो भागस्तेषामेव स इष्यते ।" इति संसृष्टिनां प्रस्तुतत्वात् । तथा च तत्स्त्रीणामनपत्यानां भरणमात्रप्रतिपादनपरं तदिति तत्त्वम् ।

न च भ्रातॄणामप्रजाः प्रेयादित्यस्य संसृष्टिविषयत्वे संसृष्टानां तु यो भाग इत्यनेन पौनरुक्त्यमिति वाच्यम् । पूर्वोक्तविवरणेन स्त्रीधनस्याविभाज्यत्वस्य तत्स्त्रीणां भरणमात्रस्य च विधाने तत्तात्पर्यात् । **मनु**वाक्यं **कात्यायन**वाक्यं च पत्न्यादिगणासत्त्वविषयतयाऽपि सुयोजमिति न कश्चिद्दोषलेशः । तत्र **शङ्ख**विषये तदभावे इत्यस्य मध्यमणिन्यायेनान्वयः । तत्राद्ये तस्य पौत्राद्यभावे इत्यर्थः । द्वितीये संसृष्टिनो भ्रातुरभावे इत्यर्थः । तस्य तत्त्वाभावे इति यावत् । पत्न्याद्यसत्त्वे इति शेषः । यद्वोक्तरीत्योत्तरान्वय्येव तत् । 'एवं पिता हरेदपुत्रस्येति' **मनु**वाक्यं 'विभक्ते संस्थिते' इति **कात्यायन**वाक्यांशभूतं च संसृष्टिविषयमेव । तदेकवाक्यतानुरोधात् । संसृष्टत्वं च यतो न येन केन चित्सह, अपि तु पित्रा भ्राता पितृव्येण वा ।

"विभक्तो यः पुनः पित्रा भ्रात्रा वैकत्र संस्थितः । पितृव्येणाथवा प्रीत्या स तत्संसृष्ट उच्यते ॥"

इति **बृहस्पतेः** ।

अनपत्यस्य पुत्रस्येति **मनु**वाक्यांशस्तु पत्नीदुहितृदौहित्राद्यभावपरः । उक्तहेतोः । अत एव मातर्यपि च वृत्तायामिति अपिचेत्येतद्बलात्पित्रादिभ्रातृसुतान्तानामप्यभावपरम् । अत एव **कातीये** तत्पितुरिति पूर्वान्वयि । तत्पितुर्माता वा, पितामहीत्यर्थः । अन्यथा पौनरुक्त्यादिति स्पष्टमेव । तत्र क्रमादित्यस्य तु पौत्रादिक्रममवीक्ष्येत्यर्थः । ल्यब्लोपे पञ्चमी । यद्वा । क्रमं वंशपरम्पराम् । अत्ति भक्षयतीति क्रमात् सा । यद्वा । क्रमं धनसम्बन्धक्रमम् अतति गच्छतीति क्रमात् । सर्वविशेषणमिदम् । एवमन्यत्रापि यथासंभवं योजना प्राक् प्रतिपादितैव । विकल्पादिरहितबहुविषयसंग्राहकैषामभाव इत्यर्द्धघटितैकमूलानुरोधेनान्येषामतादृशानामेव वाक्यानाम्, अन्यथा योजनमुचितं, लाघवात् । अन्यथा गौरवं स्पष्टमेव । अत्र सर्वत्र मृतनिरूपितप्रत्यासत्तिरेव तद्ग्रहणे हेतुत्वेन विवक्षिता । अत एव—

"अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत् ।" इति **मनुः**,

"बहवो ज्ञातयो यत्र सकुल्या बान्धवास्तथा । यस्त्वासन्नतरस्तेषां सोऽनपत्यधनं हरेत् ॥"

इति **बृहस्पतिः** ।

"पुत्राभावे प्रत्यासन्नः सपिण्ड" इति **आपस्तम्बश्च** सङ्गच्छते । सा च प्रत्यासत्तिः शास्त्रतो लोकतश्च यथायथमवयवान्वयादिद्वारेण बोध्या । तथैव च पत्नीत्यादिना प्रदर्शितं तेन । अत एव पुत्रिकासुत इत्यत्र—

"अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम् । अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति ॥"

इति **वसिष्ठोक्त्या**, ( अ. १७ सू. १७ )

"अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम् । यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरम् ॥"

इति **मनू**क्त्या च ( अ. ९।१२७ ) संविदा दत्ता कन्या पुत्रिका, तत्पुत्रत्वादेवौरससमत्वमित्येकां व्याख्यां कृत्वा, पुत्रिकैव तादृशी सुतः स औरससम एव, पित्रवयवानामल्पत्वान्मात्रवयवानां बाहुल्याच्च, अत एव **वसिष्ठः** "तृतीयः पुत्रिकैवेति" इति व्याख्यान्तरं कृतं तेन । पत्नीत्यादिवाक्ये एवकारस्य सर्वत्र संन्बधः । तेन अन्यव्यवच्छेदः । समवाये तत्फलितार्थ एव व्याख्यायां प्रथममिति । प्रत्यामत्त्यतिशयादिति तद्भावः । तदभावे दुहिता ।

"यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा । तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत्" ॥

इति **मनुः**। ( अ. ९ । १३० )

"भर्तुर्धनहरी पत्नी तां विना दुहिता स्मृता । अङ्गादङ्गात्संभवति पुत्रवद् दुहिता नृणाम् ॥

"तस्मात्पितृधनं त्वन्यः कथं गृह्णाति मानवः ।"

इति **बृहस्पतिः** ।

"पुत्राभावे तु दुहिता तुल्यसंतानदर्शनात् । पुत्रश्च दुहिता चोभौ पितुः सन्तानकारकौ ॥"

इति **नारदश्च** । ( अ. १३ । ५० )

तत्र चोढानूढासमवायेऽनूढैव । प्रागुक्त**कात्यायन**ोक्तेः । एवमूढासु प्रतिष्ठिताऽप्रतिष्ठितासमवायेऽप्रतिष्ठितैव । तदभावे प्रतिष्ठिता । "स्त्रीधनं दुहितॄणामप्रत्तानाम् अप्रतिष्ठितानां चेति" **गौतमव**चनस्य (अ. १८सू. २२) पितृधनेऽपि तुल्यत्वात् । नेदं पुत्रिकाविषयम् । तत्समः पुत्रिकासुत इत्यस्य पुत्रप्रकरणे उक्तत्वात् ।

चेन दौहित्रसमुच्चयः । अत **एव**—

"अपुत्रपौत्रसन्ताने दौहित्रा धनमाप्नुयुः । पूर्वेषां तु स्वधाकारे पौत्रा दौहित्रका मताः ॥"

इति **विष्णुः**

"अकृता वा कृता वाऽपि यं विन्देत्सदृशात्सुतम् । पौत्री मातामहस्तेन दद्यात्पिंडं हरेद्धनम्"॥१३६॥ इति-

"दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरेत् । स एव दद्यात् द्वौ पिण्डौ पित्रे मातामहाय च "॥१३२॥

"पौत्रदौहित्रयोर्लोके न विशेषोऽस्ति धर्मतः । तयोर्हि मातापितरौ संभूतौ तस्य देहतः ॥ १३३॥"

"पौत्रदौहित्रयोर्लोके विशेषो नोपपद्यते । दौहित्रोऽपि ह्यमुत्रैनं सन्तारयाति पौत्रवत् ॥ १३९॥"

इति च **मनुश्च** ( अ. ९ ) सङ्गच्छते ।

अत्र चेन दौहित्रवत्तदभावे दौहित्र्या अपि समुच्चय इति प्राक् प्रतिपादितमत्रापि बोध्यम् ।

तदभावे पितरौ । तत्र प्रथमं माता ततः पितेति व्याख्याकृत् । आदौ पिता ततो मातेति तत्त्वं तु प्रागुक्तमेव ।

ततो भ्रातरः । तथेत्यस्यार्थः उक्त एव । आवृत्त्या द्वितीयस्य तथेत्यस्य प्रत्यासत्तिक्रमेणेत्यर्थः । तेन सोदरासोदरसमवाये प्रथमं सोदरास्तभावेऽसोदरा इति सूचितम् । अत्र भ्रातर इत्यनेन तथैकशेषेण भगिनीनामपि ग्रहणम् । तत्रापि क्रमो भ्रातृवदिति प्रागुक्तमेवेति बोध्यम् ।

तथेत्यस्य पितृक्रमेणेत्यर्थकस्य तत्सुता इत्यत्रापि मध्यमणिन्यायेनान्वयः । तत्सुता इत्यस्य तयोर्भ्रातृभगिन्योः सुता इत्यत्र प्राग्वत् कन्यानामपि ग्रहणं बोध्यम् । तच्चोक्तं प्राक् ।

**गोत्रज**पदेन पितामही, समानगोत्रजाः पितामहस्नुषादयः सप्त सपिण्डाः, सामानोदकाश्च सप्त तदुपरितनाः, जन्मनामज्ञानावधिका वा ।

बन्धुशब्देन भिन्नगोत्रं बन्धुत्रयम् आचार्यश्च। चार्थकतथाशब्दस्य चरमे उत्कर्षात्सब्रह्मचारिणश्चेत्यर्थः। तेन बन्धुशिष्यमध्यवर्त्याचार्यस्य सब्रह्मचार्यनन्तरस्य ऋत्विक्श्रोत्रियादेश्च समुच्चय इति केचित्। तत्वं तु प्रागुक्तम्। "प्रागुक्तसपिण्डाभावे आचार्यस्तदभावे अन्तेवासी" **त्यापस्तम्बः**। (२।१४।३) "अन्तेवासी ऋत्विग्वेति" **शङ्खः**। "श्रोत्रिया ब्राह्मणस्यानपत्यस्य रिक्थं भजेरन्" इति **गौतमः**। (अ. २८ सू. ३९)

"सर्वेषामप्यभावे तु ब्राह्मणा रिक्थभागिनः।" इति **मनुः**। (अ. ९ श्लो. १८८)

"ब्राह्मणार्थस्य तन्नाशे" इति **नारदश्चे**ति।

पत्नीत्यादि न पिण्डदानक्रमबोधकं, तस्यात्रानुक्तत्वात्। अत एव पिण्डदोऽशहरश्चेषामित्यस्यानुवृत्तिसंभवेऽप्येषामभावे इत्याद्युक्तं तेन **भगवता**। अत एव च—

"मुख्यगौणसुताभावे दायादक्रम उच्यते।" इत्येवमवतारितमिदं तेन। दायादशब्देन च रिक्थभागिनः व्युत्पत्तेः।

"विश्वामित्रं तु दायादं गाधिः कुशिकनन्दनः। जनयामास पुत्रं तु तपोविद्याशमात्मकम्॥"

इति **हरिवंशो**क्तेः पुत्रे इव दायादानपि दापयेदित्यादौ पुत्रभिन्नेऽपि तत्र तस्य प्रसिद्धत्वात्। अत एव—

"पुत्रान् द्वादशधानाह नृणां स्वायंभुवो मनुः। तेषां षट् बन्धुदायादाः षडदायादबान्धवाः॥
"औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च। गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट्॥
"कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा। स्वयंदत्तश्च शौद्रश्च षडदायादबान्धवाः॥"

इति **मनु**वाक्ये—(अ. ९ श्लो. १५८–१६०)

स्वपितृसपिण्डसमानोदकानां संनिहितरिक्थहरान्तराभावे पूर्वषट्कस्य तद्रिक्थहरत्वं नोत्तरस्य, बान्धवत्वं तु समानगोत्रत्वेन सपिण्डत्वेन चोदकप्रदानादिकार्यकर्तृत्वं वर्गद्वयस्यापि सममेव, गोत्ररिक्थे इति मनुवाक्ये दत्रिमग्रहणस्य "पुत्रप्रतिनिधिप्रदर्शनार्थत्वात्" इत्येवमुक्तमूलाविरोधाय तेन व्याख्यातम्। पित्रादिधने तु सर्वेषामविशेषश्चरमभिन्नानां पुत्रिकासुतघटितानां तेषाम्, अस्मात् प्रागुक्त**मनो**श्च। अत एव तयोर्मिथो विरोधोऽपि न। अग्रे साधकानि तु पूर्वमुक्तान्येव। तस्मात् स्थितमेतत् तदभावे यथाक्रमं पत्न्यादयो धनभाज इति।

नन्वस्तु दायहरणे प्रागुक्तम्। तथापि अन्येषां पुत्रासाधारणकार्याणां केषांचिद्यथायथं पत्न्यादिष्वसम्भवेन तत्र विचारप्रसक्त्यभावेऽपि तदभावे पिण्डदानादौ कथं क्रम इति चेत्, शृणु। प्रागुक्तरीत्या दायहरणे सिद्धेन क्रमेणैव "यश्चार्थहरः स पिण्डदायी" इति **विष्णू**क्तेः पिण्डदानादौ क्रम इत्युत्सर्गः। तत्र पत्नीविषये वाक्यमपि प्रागेव **वृद्धमनू**क्तमुक्तम्। तत्र कृत्स्नमंशमित्यादिना दायहरत्वे एव तस्या अधिकारः सूचितस्तस्य सधनत्वे। एतदर्थमेव तत्र तदुपादानम्। अन्यथाऽपि सैवाधिकारिणी। अत एव—

"भार्यापिण्डं पतिर्दद्याद्भर्त्रे भार्या तथैव च। श्वश्र्वादेस्तु स्नुषा चैव तदभावे तु सोदरः"॥ इति—
"पितुः पुत्रेण कर्तव्याः पिण्डदानोदकक्रियाः। पुत्राभावे तु पत्नी स्यात्पत्न्यभावे तु सोदरः॥"

इति च **शङ्खः**।

"पत्नी कुर्यात्सुताभावे तदभावे सहोदरः।" इति **कौर्मम्**,

"भ्रातुर्भ्राता स्वयं कुर्यात् तद्भार्या चेन्न विद्यते। तस्य भ्रातृसुतश्चक्रे यस्य नास्ति सहोदरः॥"

इति **ब्राह्मं** च सङ्गच्छते । दुहितुस्तु तद्धनहर्तृत्वादेव पिण्डादिदत्वम् । एवं च तदभावे न तस्यास्तत्प्रदत्वम् । दौहित्रविषये वाक्यमपि **मन्वा**द्युक्तं प्रागेवोक्तम् । तत्र 'हरेद्धनमि' त्यादिना तस्यापि दायहरत्वे एवाधिकारः सूचितः । अत एव—

"श्राद्धं मातामहानां च ह्यवश्यं धनहारिणा । दौहित्रेण विधिज्ञेन कर्तव्यं विधिवत्सदा ॥"

इति **लौगाक्षिः** सङ्गच्छते । अत एव "मातामहश्राद्धं मासिश्राद्धे सूत्रभाष्यकारौ न ब्रूत" इति **सुदर्शनेनो**क्तम् । अत एव च **आश्वलायने**नापि सूत्रे मातामहश्राद्धं नोक्तम् । एवं च—

"यथा व्रतस्थोऽपि सुतः पितुः कुर्यात् क्रियां नृप । उदकाद्यां महाबाहो दौहित्रोऽपि तथाऽर्हति ॥"

इति **मात्स्यं भविष्यत्पुराणं** च,

"मातामहानामप्येवं श्राद्धं कुर्याद्विचक्षणः । मन्त्रोहेन यथान्यायं शेषमूहविवर्जितम् ॥"

इति **विष्णु**स्मरणम्,

"मातुः पितरमारभ्य त्रयो मातामहाः स्मृताः । तेषां तु पितृवत् श्राद्धं कुर्युर्दुहितृसूनवः ॥"

इति **पुलस्त्य**स्मरणं च एकवाक्यतानुरोधेन तत्परतया योज्यम् । पितृवच्छ्राद्धं पार्वणम् । येषां सूत्रे तदुक्तं तेषां तु सर्वथा तदावश्यकम् । यद्वा तानि पुत्रिकासुतविषयाणि । इदमग्रे स्फुटीभविष्यति । दौहित्र्या अप्येवम् । "न पुत्रस्य पिता चैव नानुजस्य तथाऽग्रजः ।"

इति **बौधायना**द्युक्तेरेतदभावे दायहरत्वेऽपि पित्रोर्न पिण्डदानादावधिकारः । भ्रातृतत्पुत्रयोस्तु यथाक्रमं वचनमप्यनुपदमेवोक्तम् । अत एव सर्वथाऽपि तयोरनुक्रममधिकारः । 'तस्य भ्रातृसुतश्चक्रे' इत्यादि प्रागुक्तमप्येवंपरमेव । मूलानुरोधात् । तत्र भ्राता कनिष्ठ एव न ज्येष्ठः । अंशहरत्वेऽपि उक्तनिषेधादिति बोध्यम् ।

ननु पिण्डदानादावप्येवं क्रमे स्वीक्रियमाणे—

"भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान् भवेत् । सर्वांस्तांस्तेन पुत्रेण पुत्रिणो **मनु**रब्रवीत् ॥

"बह्वनामेकपत्नीनामेका चेत्पुत्रिणी भवेत् । सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुः ॥"

इति **मनोः**, (अ. ९ । १८२ । १८३)

"यद्येकजाता बहवो भ्रातरस्तु सहोदराः । एकस्यापि सुते जाते सर्वे ते पुत्रिणः स्मृताः"

"बह्वीनामेकपत्नीनामेष एव विधिः स्मृतः । एका चेत्पुत्रिणी तासां सर्वासां पिण्डदस्तु सः ॥"

इति **बृहस्पतेश्च** का गतिः । अयं **मनुस्मृत्यादौ** पाठः । **भट्टवार्तिके कौस्तुभे** च 'सर्वे तेनैवेति' पाठः । अन्यत्र 'सर्वे ते तेनेति' पाठः । **मेधातिथि**संमतस्त्वाद्यपाठः । 'यद्येक' इति **कौस्तुभे** पाठः । 'सर्वासामिति' **मनुस्मृत्यादौ** पाठः । 'पुत्रिण्यो मनुरब्रवीदिति' **कौस्तुभादौ** पाठः । एतेषां यथाश्रुतार्थत्वे त्रयोदशपुत्रत्वापत्त्या पुत्रान् द्वादश यानाहेति **मन्वा**द्युक्तद्वादशसंख्याविरोधापत्तिः।अपुत्रदायाधिकारिक्रमबोधकोक्त**मूल**वाक्ये भ्रातृसुतानां नवमस्थानस्थितिविरोधापत्तिः । पिण्डाद्यधिकारक्रमबोधकवाक्येऽपि पत्नी भ्राता च तज्जश्चेत्यादौ तृतीयस्थानस्थितिविरोधापत्तिश्च । तेषां तद्वत्पुत्रत्वे पत्न्याः पूर्वमेव निवेशौचित्यादिति चेन्न । तेषां किञ्चित्कार्यवत्त्वातिदेशपरत्वेन तेन तेषां वंशाविच्छित्तेः परलोकस्य पितृऋणदोषापाकरणस्य च करणेन तदर्थं

सर्वपुत्राभावे पत्न्यादिसत्त्वे दत्तकपरिग्रहो नेति तात्पर्यात् । अत एवैकजातानामिति हेतुगर्भं विशेषणमप्यर्थवत् । तत्र च पुमान् स्त्रियेत्येकशेषः । सहोदरा इति **बृहस्पत्ये**कवाक्यत्वात् । अत ‘ एवैकमातापितृकाणामिति ’ व्याख्यातं **मेधातिथिना** । अनेन तेषामेव तथा नियमो न भिन्नपितृकाणां भिन्नमातृकाणां चेति सूचितम् । अत एवाभियुक्ताः “ अत्रैकजातग्रहणं भिन्नोदराणामेकपितृकाणामपि सपिण्डान्तरलाभदशायां भ्रातृसुतनियमो नेति ज्ञापनार्थं न तु भ्रातृसुतस्याग्राह्यत्वज्ञापनार्थम् ।

“ ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचित् । ”

इति **वृद्धगौतम**वदत्र निषेधस्मृतेरनुपलम्भात् । पुत्रवानिति मतुपा न त्वेवैकमिति निषेधस्याप्यत्रानवकाश ” इति । अत एव च सपत्नीविषये वचनान्तरारम्भः । भ्रातॄणामिति निर्धारणे षष्ठी । अत एव मध्ये इति तेन व्याख्यातम् । तेन ह्येकीयावयवान्वयेनैकमातापितृकत्वेनैकत्वं यथा तेषां तथैकावयवान्वयेन सर्वावयवान्वयसत्त्वेनैकपुत्रत्वं सर्वेषामिति सूचितं द्रौपदीवत् द्व्यामुष्यायणवच्च । अत एव तेनैकपुत्रेण सर्वान्भ्रातॄन् सपुत्रान्मनुराहेति तेन व्याख्यातम् । एतेन प्रागुक्तं पाठान्तरं निरस्तम् । अत एव च सर्वे ते इत्युक्तिसङ्गतिः । अन्यथाऽन्ये ते इत्यादि ब्रूयात् । भ्रातृपदं स्फुटतया भगिनीनिराससूचनद्वारा विषयप्रदर्शनार्थम् । यद्यपि भ्रातृपुत्रावित्येकशेषस्यापि संभवस्तथापि— “ ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचित् । ”

इति **वृद्धगौतमोक्ते**र्नेति पुमपत्यानामेव ग्रहणम् । एकः एकोऽपि । एकस्यापि सुते जाते इति तदेकवाक्यत्वात् । अनेन द्व्यादेस्तत्त्वे सुतरां तथेति सूचितम् । पुत्रवानित्यत्र पुत्रपदमौरसपरम् । तत्रैव तस्य मुख्यत्वात् । जाते इति तदेकवाक्यत्वाच्च । अनेनान्यत्रायं नियमो नेति सूचिचितम् । अत्र पुत्रत्वेनैकानेकपुत्रप्रतीत्या सर्वविषयमिदम् । अग्रे तेनेत्याद्युक्तिस्तु एकत्र तथात्वेऽनेकत्र तथात्वं निर्विवादमित्येवंपरा । चेदित्यनेन जनकस्यैवातत्त्वे सर्वेषां तत्त्वं दूरापास्तमिति सूचितम् । अत एव भवेदिति संभावने लिङ् । अत्र सर्वं वाक्यमिति न्यायेनैकस्यैव द्वयोरेव त्रयाणामेव वेत्यादिक्रमेण बोध्यम् । अत एवान्ये च पुत्ररहिता इति तेन व्याख्यातम् ।

किं च भ्रातॄणामित्येन न तत्र पुत्रत्वातिदेशः । तथा हि सति पुत्रिण इति पुत्रवतीरिति च पदद्वयमधिकं स्यात् । तेन पुत्रेणेत्येकेनैव पुत्रत्वातिदेशसिद्धेः । पत्नित्वातिदेशस्तेनेति चेत्, लाघवात्तदेवास्तु, कृतं पुत्रत्वातिदेशेन । सोऽपि परिशेषात्कार्यातिदेशः । ‘ पुत्रिणः पुत्रवतीरिति ’ श्रवणात् तत्र तद्धर्मातिदेशः । तत्फलं तूक्तं वक्ष्यमाणं चेति दिक् ।

उक्तं चैतत्स्मृतिपादे शिष्टाचारप्रामाण्यप्रतिपादके “ अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ” ( जै. मी. १।३।७ ) इति सूत्रे **भट्टाचार्यैः**, “ रामभीष्मयोस्तु स्नेहपितृभक्तिवशाद्विद्यमानधर्ममात्रार्थदारयोरेव साक्षाद्व्यवहितापत्यकृतपित्रानृण्ययोर्योगसिद्धिः । हिरण्मयीसीताकरणं च लोकापवादभीत्या त्यक्तसीतागतानृशंस्याभावाशङ्कानिवृत्त्यर्थम् । भीष्मश्च—

“ भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान्भवेत् । सर्वे तेनैव पुत्रेण पुत्रिणो मनुरब्रवीत् ॥ ”

इत्येवं विचित्रवीर्यक्षेत्रजपुत्रलब्धपित्रनृणत्वः । केवलं यज्ञार्थपत्नीसंबन्ध आसीदित्यर्थापत्त्याऽनुक्तमपि गम्यते ।

"यो वा पिण्डं पितृपाणौ विज्ञातेऽपि न दत्तवान्। शास्त्रार्थातिक्रमाद्भीतो यजेतैकाक्यसौ कथम् ॥" इति।

व्याख्यातं च **न्यायसुधायां भट्टसोमेश्वरशर्मभिः,**—"रामभीष्मयोर्यथा न विरुद्धाचरणकर्तृत्वं तथा विवृणोति रामेति । रतिपुत्रार्थत्वनिरासाय मात्रशब्दः । नन्वेवं सति—

"ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति। तस्या रजसि तं मासं पितरस्तस्य शेरते ॥"

इति विहितातिक्रमात्प्रत्यवायः स्यादित्याशङ्क्य स्नेहपितृभक्तिवशादित्युक्तम् । रामेण सीतास्नेहाद्भार्यान्तरागमनव्रतग्रहणात्, भीष्मेण च शन्तनवे सत्यवती तत्पितरं याचिता त्वयि महाबले राज्याभिलाषुके तिष्ठति एतस्याः पुत्राणां राज्यालाभान्नेमां ददामीति तत्पित्रा प्रत्याख्याते तेन राज्यं नाहं करिष्यामीति प्रतिज्ञाते त्वय्यनिच्छत्यपि त्वत्सन्ततिभयान्नैतस्याः संतती राज्यभागिनी स्यादिति तत्पित्रा पुनः प्रत्याख्याते—

"नापत्यहेतोरपि च करिष्ये तद्विनिश्चयम् । अद्यप्रभृति मे दाश ब्रह्मचर्यं भविष्यति ॥"

इति पितृभक्त्या ब्रह्मचर्यव्रतग्रहणात्, नैमित्तिकेन च व्रतेन नित्यस्य ऋतुकालगमनस्य बाधात् धर्ममात्रार्थमहं भार्यां परिणेष्यामीति उक्त्या परिणीताया अगमनेऽप्यदोष इत्याशयः । एवमप्यनपत्यत्वेन पित्रर्णानपाकरणात्प्रत्यवायः स्यादित्याशङ्क्य साक्षादित्युक्तम् । साक्षादपत्याभ्यां कुशलवाभ्यां कृतपित्रानृण्यो रामः, व्यवहितैर्विचित्रवीर्यस्यापत्यैर्धृतराष्ट्रादिभिः कृतपित्रानृण्यो भीष्मः । ननु रामस्य धर्मार्थं दारान्तरसद्भावे—"यज्ञे यज्ञे प्रकुरुते सीतां पत्नीं हिरण्मयीम् ।" इति हिरण्मयीसीताकरणमपार्थकं स्यादित्याशङ्क्याह हिरण्मयीति । अपवादभीत्या त्यक्ता या सीता तद्गतं तद्विषयं यदानृशंस्यमनैष्ठुर्यं तदभावाशङ्कानिवृत्त्यर्थम् । रावणापहारदूषितां सीतां रामो भजते इति लोकापवादभयमात्रेणासौ त्यक्ता, न सीताया दुष्टत्वात्, नापि रामस्य सीतायां नैष्ठुर्यमिति द्योतयितुम् । लोकापवादभीतिं प्रति त्यागस्य नित्यसापेक्षत्वात्तत्प्रदर्शनाय त्यक्ताशब्दस्य सीतापदेन सह सापेक्षसमासः कृतः । कथं व्यवहितापत्यकृतपित्रानृण्यता भीष्मस्येत्यपेक्षायामाह। भीष्मश्चेति । ननु तयोर्धर्ममात्रार्थं दारसद्भावः क्वचिदपि पुराणेतिहासयोरनुक्तः केन प्रमाणेनावगम्यत इत्याशङ्क्याह । केवलमिति । अपिशब्देनापत्यहेतोः अद्यप्रभृतीति च विशेषणसामर्थ्यादेवमवगम्यते इति सूचितम् । ननु मोहादप्यनुष्ठानोपपत्तेर्नैकान्ततोऽर्थापत्तिः संभवतीत्याशङ्क्य—

"श्राद्धकाले मम पितुर्मया पिण्डः समुद्यतः । तं पिता मम हस्तेन भित्त्वा भूमिमयाचत ॥"

"नैष कल्पे विधिर्दृष्ट इति निश्चित्य चाप्यहम् । कुशेष्वेव तदा पिण्डं दत्तवानविचारयन् ॥"

"इति भीष्मस्यात्यन्तनैपुण्यान्मोहासंभवं दर्शयितुमाह । यो वेति" इति । अत्र नैमित्तिकेन नित्यस्य बाध इत्यंशो धर्मार्थं दारान्तरसद्भाव इत्यंशश्च न युक्त इति प्रातिपादितं गुरुचरणैर्मञ्जूषायां तत एव बोध्यम् ।

न चैवं द्वादशविधपुत्रप्रतिपादनानन्तरं "यत्तु भ्रातॄणामेकजातानामित्यादि, तदपि भ्रातुष्पुत्रस्य पुत्रीकरणसंभवे अन्येषां पुत्रीकरणनिषेधार्थं, न पुनः पुत्रत्वप्रतिपादनाय, तत्सुता गोत्रजा बन्धुरित्यनेन विरोधात्" इति व्याख्याकृदुक्तं विरुध्येतेति वाच्यम् । आशयानवबोधात् । तथा हि । किं तन्निषेधः शाब्दोऽर्थ उत तात्पर्यार्थः । नाद्यः । अक्षरमर्यादया तदप्रतीतेः । नान्त्यः । संभावितशाब्दत्यागेन तदङ्गीकारे निर्बीजत्वात् । तस्मान्नेदं युक्तम् । नन्वस्तु

यथाश्रुतसंभवोऽत आह। न पुनरिति। पश्चादित्यर्थः। द्वादशविधपुत्राभावे पत्न्यादिसत्त्वे इत्यर्थः। अत एवाह। तत्सुता इति। तथा सति इतरपुत्रवत्पत्न्याः पूर्वमेव निवेशौचित्येन तथोक्तिविरोधः स्पष्ट एव। तथा सति त्रयोदशपुत्रत्वापत्त्या 'पुत्रान् द्वादश यानाहेति' द्वादशसंख्याविरोधापत्तिश्चेत्यपि बोध्यम्। तथा च न तस्य तदर्थप्रतिपादने तात्पर्यं किं त्वेतदर्थखण्डने इति बोध्यम्। अत एव वा तत्रैव हेतूपन्यासो न तु तत्रेति भावः।

नन्वेवं कस्तर्हि वचनार्थ इति चेत्, प्रागुक्त एव वार्तिकसम्मत इति बोध्यम्। तदनुक्तिस्तु अन्यत्र तस्योक्तत्वेन स्पष्टत्वात्। एतदुक्तिस्तु एकदेश्युक्तार्थान्तरनिराससूचनपूर्वकविरोधखण्डनमात्रतात्पर्येणेति। तथा च तत्र नाग्रहोऽपि त्वत्रेति बोध्यम्।

एतेन आशौचनिर्णयस्था गुरुचरणोक्तिरपि व्याख्याता। तथा च वार्तिकैकवाक्यता सिद्धा। तथा च द्वादशपुत्रभिन्नेन भ्रातृसुतेन तादृशपितृव्यस्य प्रागुक्तकार्यसिद्ध्या तदर्थं पत्न्यादिसत्त्वे पुत्रान्तरपरिग्रहो न कर्तव्य इति तत्त्वम्।

एतेन "भ्रातॄणामिति सोदरभ्रात्रभावविषयमविभक्तविषयं चेति न पुत्रत्वातिदेशोऽयम्। अतस्तत्र सति एकादशपुत्राः प्रतिनिधयो न कार्याः स एव भ्रातॄणां पिण्डदोंऽशहरश्च" इति **वाचस्पतिमेधातिथिकल्पतरुरत्नाकराद्युक्तं** परास्तम्। उक्तयुक्तेः द्वादशपुत्राभावे पत्नीत्यादिमूलोक्तेश्च।

अत एव "तस्माद्दत्तकपुत्रप्रशंसेयमिति विज्ञानेश्वर इति" इति **निर्णयसिन्धूक्तं, दिनकरोद्द्योतोक्तं,** "भ्रातॄणामित्यादि पुत्रित्वातिदेशपरं तत्फलं तु पुन्नामनरकाप्राप्तिः पुंस स्त्रियासपिण्डनार्हत्वमुभयोः कृत्रिमाद्यकरणं च" इति **मिश्रादि**भिरुक्तं चापास्तम्।

नन्वेवमपि **मन्वादि**वाक्यस्योक्तार्थकत्वे न भीष्मविषये प्रवृत्तिः, भीष्मविचित्रवीर्यौ भिन्नमातृकावेकपितृकौ, व्यासविचित्रवीर्यावेकमातृकौ भिन्नपितृकौ यथा। किं च। तस्य धृतराष्ट्रादिः क्षेत्रजो नौरसः। एवं च कथं वार्तिकादिसङ्गतिरिति चेन्न। तत्र तदविषयत्वेन तदंशेऽपि तस्यायुक्तत्वेऽपि **मनु**वाक्यस्य तदर्थकत्वे दोषाभावेन प्रकृतेष्टार्थसिद्धेरप्रत्यूहत्वात्। अत एव पितृभक्त्यैव तस्य पित्रृणापाकरणम्। अग्निहोत्रादिना देवर्णमुक्तिः। किं च "त्रिभिर्ऋणवान्" इत्यादिश्रुतिर्न नैष्ठिकब्रह्मचारिविषया, तदृणापाकरणस्य ब्रह्मचर्येणाग्निकार्यादिना च सिद्धेः स्मृतिप्रूक्तत्वात्, इति **गुरुचरणै**रुक्तं तत्र।

यदि तु वार्तिकोक्तिरपि तदंशे योजनीयेत्याग्रहस्तर्हि इत्थं योज्या। एकजातानामित्यत्रैकशब्दः प्रधानपरः।

"माता भस्त्रा पितुः पुत्रो येन जातः स एव सः। तस्माद्भरस्व दुष्यन्तं माऽवमंस्थाः शकुन्तलाम्॥"

इति **भारतोक्तेः**।

"बीजस्यैव च योन्याश्च बीजमुत्कृष्टमुच्यते। सर्वभूतप्रसूतिर्हि बीजलक्षणलक्षिता॥"

इति **मनूक्तेश्च** (अ. ९।३५)। क्षेत्रजे तु वैपरीत्यं वाचनिकम्। तथा चैकपितृकत्वमात्रं विवक्षितम्। बृहस्पतिवाक्ये सहोदरत्वमपि पित्रुदरमादायैव। अत एव सोदरा इत्यनुक्तिः। बहव इति तु तत्र स्पष्टार्थम्। बहवोऽपीति तदर्थः। यद्वा भूयांसोऽपीत्यर्थः। 'कपिञ्जलाधिकरण'न्यायेन बहुत्वस्य बहुवचनबोधितस्य त्रित्वे पर्यवसानमिति व्यवच्छेदाय हि बहव इत्युक्तम्। अथ वा तुशब्दस्य

चार्थत्वेन व्युत्क्रमेण च सहोदराश्चेति वाक्यान्तरम् । तथा चोभयोरपि तत्प्रतिपादनम् । तदेकवाक्यतया **मनु**वाक्यस्यापि प्रागुक्तरीत्याऽर्थद्वयं बोध्यम् । अत एवैकयोनिप्रसूतानामिति **स्मृतिसारसमुच्चयो**क्तपाठः सङ्गच्छते । अत एव पुत्रवानित्यत्र पुत्रपदं मातापित्रन्यतरजन्यपरम् । तत्र जाते इत्युक्तिस्वारस्याच्च । एवं च तद्विषयता तत्र स्पष्टैवेति ।

नन्वेवमपि—

"अपुत्रस्य पितृव्यस्य तत्पुत्रो भ्रातृजो भवेत् । स एव तस्य कुर्वीत श्राद्धं पिण्डोदकक्रियाम् ॥
"बह्वीनामेकपत्नीनामेष एव विधिः स्मृतः । एका चेत्पुत्रिणी तासां सर्वासां पिण्डदस्तु सः ॥"

इति **बृहत्पराशरो**क्तिविरोध एवेति चेन्न । आशयानवबोधात् ।

तथा हि । तत्र पूर्वार्धस्योक्त एवार्थस्तत्तुल्यत्वात् । अपुत्रस्य पितृव्यस्य भ्रातृजस्तत्पुत्रो भवेदित्यन्वयः । अपुत्रपितृव्यत्वावच्छिन्नस्य भ्रातुः सुतः तस्यापि पितृव्यत्वावच्छिनस्यापि पुत्रो भवेदित्यर्थः । तदेकवाक्यत्वात् । सर्वं वाक्यमिति न्यायेन व्याख्याने तूक्तविरोधः शास्त्रान्तरविरोधश्च स्पष्ट एव । भ्रातृज एकोऽपि । अत एव तदेकवाक्यता । अपुत्रस्येत्यनेन पुत्रसत्त्वे न तथेति सूचितम् । अत एव पूर्वं तथा व्याख्यातम् । तद्व्याख्यानानुरोधेन पितृपत्न्यः सर्वा मातरः स्मृता इतिवत् प्रागुक्तरूपं पुत्रकार्यकारित्वं विधीयते । तेन तदेकवाक्यता इष्टसिद्धिर्दोषाभावश्चेति सिद्धम् ।

नन्वेवमप्युत्तरार्धस्य का गतिरिति चेत्, अत्रोच्यते । पूर्वार्द्धेन केषाञ्चित् पुत्रकार्याणां सिद्ध्या तदर्थं तत्परिग्रहं प्रतिपाद्य प्रसङ्गाद्विषयविशेषे पिण्डादिरूपकार्यसिद्धिरपि अत एवेत्याह । स एवेति । बुद्धिस्थो विलक्षणभ्रातृपुत्र एवेत्यर्थः । तस्य, तस्यापि पितृव्यत्वावच्छिन्नस्यापि । कुर्वीतेत्यनेन स्वफलार्थं तस्यावश्यकत्वेन तस्य स्वधर्मत्वं सूचितम् । श्राद्धमेकोद्दिष्टादि । पिण्डपदेन दशसु दिनेषु दीयमानाः । उदकमञ्जलिदानादि । क्रियापदेनाग्निसंस्कारादि ।

यद्वा क्रियापदेन कर्मधारयः । अत एव "क्रियालोपादित्येव" **मनुनो**क्तम् । तथा चोत्तरार्द्धं प्रागुक्तक्रमेणौरसादिभ्रात्रन्ताभावविषयम् । एवेन गोत्रजादिव्यवच्छेदः । यद्वा । भ्रातुः सुतानां बहूनां सत्त्वेऽपुत्रपितृव्येण कनिष्ठस्य तस्यैव दत्तकत्वेन पुत्रीकरणे तद्विषयम् । एवेन पत्न्यादिव्यवच्छेदः ।

यद्वा अविभक्तभ्रातृसुताविषयम् । यद्वा विभक्तसंसृष्टभ्रातृसुतविषयम् । अत्र पक्षद्वये यथा पत्नीसत्त्वेऽपि दायहरत्वं भ्रातुस्तथा पत्न्यादिसत्त्वे भ्रात्रभावे तस्य धनहारित्वम् । भ्रातृसत्त्वे तस्य धनहारित्वेऽपि पिण्डदानादौ तस्यैवाधिकारो नांशहरणप्रयुक्तोऽन्यस्य । तत्र भ्रातृसत्त्वे जीवत्पितृकनिषेधबाधकमिदं, विशेषविहितत्वात् । अत्र पक्षे यथा तस्य भ्रातृसुतश्चक्रे इत्यादिना न विरोधस्तथोक्तं प्राक् । यद्वा । इदं तादृशगतपितृकविषयकमेवास्तु । सर्वथा पत्न्यादिः एवव्यवच्छेद्यः ।

वस्तुतस्तु द्वादशविधपुत्राभावे पत्न्यादिसत्त्वे तेषां यथाक्रममुक्तरीत्या दायहरत्वेऽपि श्राद्धादिकमपि वंशाविच्छित्त्यादिवत् भ्रातृसुतेनैव कार्यमिति तदर्थमपि दत्तकपरिग्रहो नेत्यनेन प्रतिपाद्यते इति न पूर्वतो वैरूप्यम् । न च "यश्चार्थहरः स पिण्डदायी" इति **विष्णुस्मृ**तिविरोधः । तद्बाधनार्थमेवास्य प्रवृत्तेः । तथा च "तत्र पुत्रः पितृवित्ताभावेऽपि" इत्यत्र पुत्रपदेनैकादशप्रतिनिधिवदेतस्यापि ग्रहणेनोक्तनियमस्य तदन्यविषयत्ववदेतदन्यविषयत्वमपीति न तद्विरोधः । तत्र पितृवित्ताभावेऽपीत्यस्य तस्य निर्धनत्वेन तदसत्त्वेऽपीतिवदुक्तक्रमेण स्वस्याधिकारेऽपि तत्सत्त्वेऽनधिकारेण तदप्राप्तावपीत्यर्थः ।

न चैवमपि कथं तस्य पितृत्वं, तस्य साक्षाज्जनके एव प्रसिद्धेरिति वाच्यम् । " पितरो यत्र पूज्यन्ते " " पञ्चैते पितरः स्मृताः " इत्यादौ साक्षाज्जनकभिन्नेऽपि पितृशब्दस्य प्रयोगात् । तथा च यन्निरूपितं पुत्रत्वं तत्कार्यकरत्वे च तस्य तत्र ग्रहणमिति न दोषः । तथा च तस्य निर्धनत्वे तथा सत्त्वेऽपि सधनत्वे तदीयौर्ध्वदेहिकाद्युपयोगि तावत्पर्यन्तं तद्वृत्त्युपयोगि च तस्मै दत्त्वा ऽवशिष्टमधिकारिणा ग्राह्यम् । अत एव वित्ताभावेऽपीत्युक्तं, न त्वंशाभावेऽपीति । अत एव—

" अदायिकं राजगामि योषिद्वृत्त्यौर्ध्वदेहिकम् । अपास्य श्रोत्रियद्रव्यं श्रोत्रियेभ्यस्तदर्पयेत् ॥ "

इति **कात्यायनेनो**क्तम् । न चैवमपि पत्न्ये दद्याच्च सा पिण्डम् इति **वृद्धमनु**विरोधः, तस्या अंशहरत्वे तद्दातृत्वपरत्वस्य तस्योक्तत्वेन तद्वैपरीत्यपरतया अत्र पक्षद्वये उक्तत्वादिति वाच्यम् ।

तस्य सङ्कल्पाग्निदानमात्रपरत्वात् । अत एव—

" पूर्वं मृता त्वग्निहोत्रं मृते भर्तरि तद्धनम् । लभेत्पतिव्रता नारी धर्म एष सनातनः ॥

" जंगमं स्थावरं सर्वं कुप्यं हेम रसाम्बरम् । आदाय दापयेच्छ्राद्धं मासषाण्मासिकाब्दिकम् ॥

" पितृव्यगुरुदौहित्रान् भर्तुः स्वस्रीयमातुलान् । पूजयेत् कव्यपूर्ताभ्यां वृद्धांश्चाप्यतिथीन् स्त्रियः ॥"

इति **प्रजापतिः** सङ्गच्छते ।

किं च । तथात्वेऽमन्त्रकक्रियापत्तिः । सा चोक्तरीत्या तथा सम्भवति न युक्ता । अत एव—

" सर्वाभावे स्त्रियः कुर्युः स्वभर्तॄणाममन्त्रकम् । " इति **भविष्यपुराणं मार्कण्डेयपुराणं** च,

" कुलद्वयेऽपि चोत्सन्ने स्त्रीभिः कार्या क्रिया नृप । " इति **विष्णुपुराणम्**,

" कुलद्वये समुच्छिन्ने स्त्रीभिः कार्या क्रिया नृप । " इति **भारतम्**,

" सर्वेषां पुत्रहीनानां स्वभर्तॄणाममन्त्रकम् । सर्वबन्धुविहीनस्य पत्नी कुर्यात्सपिण्डनम् ॥ "

इति **स्मृत्यन्तरं** च सङ्गच्छते । अत एव तत्कर्तृकमग्निदानमात्रं समन्त्रकमित्युक्तं **स्मृतिषु** ।

तथा च **कात्यायनः**—

" असंस्कृतेन पत्न्या च ह्यग्निदानं समन्त्रकम् । कर्तव्यमितरत्सर्वं कारयेदन्यमेव हि " ॥ इति ।

अत एव च—

" अपुत्रस्य स्त्रिया कार्यं पिण्डश्राद्धं तथोदकम् । क्रियालोपो न कर्तव्यः प्रेतस्य गतिकांक्षिभिः ॥ "

इति **बौधायने** क्रियालोप इत्याद्युक्तम् । अत एव च—

" पितृमातृसपिण्डैस्तु समानसलिलैस्तथा । तत्संघातगतैश्चैव राज्ञा वा धनहारिणा ॥

" पूर्वाः क्रिया मध्यमाश्च पुत्राद्यैरेव चोत्तराः । दौहित्रैर्वा नरश्रेष्ठ कार्यास्तु तनयैस्तथा ॥ "

इति **विष्णुपुराणे पराशरेण** पुत्राद्यैरेवेत्युक्तम् । तस्य च भ्रातृसन्तत्यन्तैरित्यर्थः ।

" पुत्रः पौत्रः प्रपौत्रो वा तद्वद्वा भ्रातृसंततिः । " इति **तेनैवो**क्तत्वात् इति केचित् ।

वस्तुतस्तु द्वितीयपक्षे शङ्काया एवाभावेऽपि प्रथमपक्षोक्तरीत्याऽत्र सर्वाभावे इत्युक्त्या तस्य च द्वादशपुत्राद्यभावे तादृशभ्रातृसुतयोरभावे चेत्यर्थेन कुलद्वयोच्छेदापरपर्यायेण तस्य सधनत्वे च पत्न्यैव

कार्यम् इतिपरत्वं **वृद्धमनोः**। तदप्युक्तरीत्या कुलद्वयोच्छेदे तावन्मात्रं समन्त्रकम्, अन्यदमन्त्रकम्। एतदर्थमेव अपुत्रा पुत्रवत्पत्नीत्यतिदेशः। तथा च तदर्थं धर्मपुत्रो न विधेयः। कुलद्वयान्तर्गतस्य कस्यचित्कनिष्ठस्य तदन्यस्य सत्त्वे तु तावन्मात्रं समन्त्रकं तया कार्यम्, अन्यदन्यद्वारा समन्त्रकमेव कारणीयामीति न कश्चिद्विरोध इति बोध्यम्।

एतेन दुहिताऽपि तादृशतत्सद्भावे निरस्ता। एवं दौहित्रोऽपि। सगोत्रसद्भावे भिन्नगोत्रस्य तदनधिकारात्। अत एव "पुत्राभावे सपिण्डा मातृसपिण्डाः शिष्याश्च दद्युस्तदभावे ऋत्विगाचार्याविति" **गौतमः** सङ्गच्छते। अत एव च "दद्युरिति बहुवचनेनोदकदानवत्सर्वैः पिण्डदानं कार्यमिति नाशङ्कनीयं, किं तु पुत्रेणैव कार्यं, तदभावे प्रत्यासन्नेन सपिण्डानामन्यतमेन, तदभावे मातृसपिण्डादिना कार्यम्" इति **विज्ञानेश्वरेण** व्याख्यातमाशौचप्रकरणे। न चैवम्—

"असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान्। प्रथमे ऽहनि यो दद्यात्स दशाहं समापयेत्॥"

इति **गृह्यपरिशिष्टस्य**,

"असगोत्रः सगोत्रो वा योऽग्निं दद्यात्सखे नरः। सोऽपि कुर्यान्नवश्राद्धं शुद्ध्येत्तु दशमेऽहनि॥"

इति **दिवोदासीयस्य** च का गतिरिति चेत्, पुत्राद्यसंनिधानविषयं तदिति गृहाण। न चैवं प्रागुक्त**मनुविष्णु**विरोध इति वाच्यम्। तस्यैतदभावविषयत्वात्। न च विनिगमनाविरहः। पिण्डाधिकारिक्रमबोधकवाक्येषु प्रागुक्तेषु पुत्रः पौत्रः प्रपौत्रः पत्नी भ्रातेत्यादिषु तदनन्तरं तदनुक्तेरेव विनिगमिकायाः सत्त्वात्। न च "यश्च" इति**विष्णू**पोद्बलितपत्नीतिमूलोक्तक्रमस्य प्राबल्यम्। तदपेक्षया पुत्रस्येत्याद्युपोद्बलितप्रागुक्तवाक्यीयपिण्डदानादिक्रमस्यैवान्तरङ्गत्वेन प्राबल्यात्। न च पौत्रदौहित्रयोरित्यादिप्रागुक्तमनोस्तस्येतोऽप्यन्तरङ्गत्वम्। भ्रातॄणामित्याद्युक्त्याऽस्य पुत्रस्थानीयत्वेन ततोऽप्यन्तरङ्गत्वात्। अत एवोक्तवाक्याद्दौहित्रसत्त्वेऽपि सापत्नपुत्रस्यैव क्रियाकरणाचारः सङ्गच्छते इति दिक्।

पित्रोस्तु प्रागुक्तरीत्यैव निरासः।

नन्वेवमपि भ्रातृतत्पुत्रसमवाये उक्तरीत्या द्विविधया क्रमेण तयोः प्राप्तिः, इतस्तु तत्पुत्रस्यैवोक्तरीत्या प्राप्तिरिति चेत्, शृणु। 'नानुजस्य तथाऽग्रज' इति **बौधायना**द्युक्तनिषेधेन पिण्डाधिकारिक्रमबोधकवाक्येषु भ्रातृपदस्य कनिष्ठभ्रातृपरत्वस्यावश्यं वक्तव्यत्वेन तयोरुक्तरीतिद्वयेन क्रमसत्त्वेऽपि भ्रातॄणामित्यादावेकशब्दस्य प्रथमार्थकतया ज्येष्ठपरत्वेन तस्यानाधिकारेण तद्विषयमिदमित्यविरोधः।

यदि तु पत्नी भ्रातेति पुत्रः पौत्र इति च न तत्र क्रमबोधकं किं तु तत्स्वरूपबोधकम्, एवं च न दोषलेशः, क्रमस्तु दायहरणीय एव, उक्त**विष्णु**वाक्यादित्युच्यते तदैकशब्दस्य तत्र संख्यार्थकत्वेनासङ्कोचेन तत्सत्त्वेऽपि तत्सुत एवाधिकारीत्यनेन बोध्यते। एवं च भ्रातॄणामित्यापि तत्र बहुवचनं "तावतो वारुणान्" इतिवद्यथासम्भवप्राप्तानेकत्वानुवादः।

वस्तुतस्तु "हलोऽनन्तरा" इतिवदेकशेषस्तत्र बोध्य इति न दोष इति तत्त्वं बोध्यम्। एवं च "नापुत्रस्य लोकोऽस्ति" "जायमान" इत्यादिशास्त्रबोधितस्यापुत्रत्वप्रयुक्तदोषस्य निवृत्त्यादि प्रागुक्तत्रयं द्वादशविधपुत्रभिन्नेनापि भ्रातृसुतेनापुत्रस्य पितृव्यस्य भवतीति **मन्वे**कवाक्यतया यथा पूर्वार्धेन प्रतिपाद्यते, अत एव "सुते जाते" "पुत्रवान्भवेत्" इति जनिसत्तामात्राभ्यां तेषां

पुत्रवत्त्वसङ्कीर्तनं, तथोत्तरार्द्धेन पिण्डादिरूपकार्यमपि तत एव तस्य भवतीति अपूर्वं प्रतिपाद्यते। अत एव—

"सपितुः पितृकृत्येषु ह्यधिकारो न विद्यते। न जीवन्तमतिक्रम्य किञ्चिद्दद्यादिति श्रुतिः॥"

इति **कात्यायन**स्य नात्र प्रवृत्तिः। तथा च तदुपयोग्यंशहरत्वमपि तत्सत्त्वे तदभावे सिद्धम्। युक्तं चैतत्। स्वपुत्रेणेव भ्रातृसुतेनापि पिण्डादिनिर्वाहस्य समस्तपितॄणां वंशविच्छेदपरिहारस्य ऋणापाकरणस्य परलोकस्य च सम्भवात्। एवं च तदर्थं केवलं भ्रातुष्पुत्रवतोऽपुत्रस्य दत्तकादिस्वीकारप्रवृत्तिनिरासः। एवं सति **मन्वादि**वाक्यस्य तत्परत्ववत्पिण्डदानादिपरत्वमपि बोध्यम्। अत एव तदेकवाक्यता सर्वतः सिद्धा। एवं सति न कस्यापि विरोधोऽनेन, नापि मिताक्षराविरोधः, नापि द्वादशसंख्याविरोधः, नापि मन्वादिवाक्ये क्रियाद्यध्याहारजक्लेशः, नापि तत्स्थानविनेशानुपपत्तिः, पुत्रत्वेनाकृतानां भ्रातृसुतानां पत्न्यादिसत्त्वे। तदभावे पुत्रकार्यम्। ऋणापाकरणादिकारिणामपि वचनाद्रिक्थग्रहणाधिकारसंभवात्। तथा कृतानां तु तेषां भवत्येव ततः प्राक् तदधिकारः। पत्न्यादितः पूर्वं मदीयपिण्डदानरिक्थाधिकारी कश्चिद्भवेदिति कामनायां भ्रातृसुतस्यैव दत्तकविधिना स्वीकार उचित इत्यप्यनेन सूचितं भवति। उक्तफलजनकतया पुत्रसदृशस्यैव तस्य पुत्रप्रतिनिधित्वेन स्वीकरणमुचितमिति षाष्ठप्रतिनिधिन्यायसिद्धमेवानेन व्यञ्जितं च भवतीत्यलम्।

एतेन "**मनु**वाक्यं प्राशस्त्यपरं **पराशर**वाक्यं तु भ्रातृव्येण पितृवत्पितृव्यपार्वणश्राद्धमवश्यं कर्त्तव्यमित्येवं परम्।

**पराशरेणैव** तदग्रे—

"पार्वणं तेन कार्यं स्यात्पुत्रवत् भ्रातृजेन तु। पितृस्थाने तु तं कृत्वा शेषौ पूर्ववदुच्चरेत्॥"

इत्यभिधानात्। न तु पुत्रत्वप्रतिपादकमुभयम्। त्रयोदशपुत्रत्वापत्तेः" इत्यपास्तम्। विधित्वादिसम्भवरहितस्य यथाकथंचिद्विधिसंसृष्टस्यान्यथानुपपत्त्या द्विविधया शक्यार्थस्य प्रकृतानुपयोगेन वाक्यस्य लक्षणया प्राशस्त्यपरत्वस्य **पूर्वमीमांसायां** प्रथमाध्यायस्य द्वितीये पादे "वायुर्वै क्षेपिष्ठा देवता" इत्यादौ प्रतिपादितत्वेनात्रातथात्वेन तदसम्भवात् अतिदेशविधित्वसम्भवात्। अत एव तद्कल्पनात्। अत एव तदसंसृष्टत्वाच्च।

न चापुत्रेणैवेत्यादि विधायकं, तस्य पुत्रप्रतिनिधिविधायकत्वेऽपि अस्यातथात्वेन तदसम्भवात्। वाचनिकप्रतिनिधित्वस्यैकादशस्वेव सत्त्वात्। तथा च—

"क्षेत्रजादीन्सुतानेतानेकादश यथोदितान्। पुत्रप्रतिनिधीन् प्राहुः क्रियालोपान्मनीषिणः॥"

इति **मनुः**। ( अ. ९। १८० )

पुत्रप्रतिनिधीन् औरसपुत्रिकाप्रतिनिधीन्। तेन तयोरभावे तदुपादानम्। मुख्यभावे प्रतिनिध्युपादानस्य शास्त्रार्थत्वात्।

अत एव **बृहस्पतिः**,

"आज्यं विना यथा तैलं सद्भिः प्रतिनिधिः स्मृतः। तथैकादश पुत्राः स्युः पुत्रिकौरसयोर्विना॥" इति। तेन तयोरसत्त्वे एव ते भवन्ति। अत एवोक्तम्— "सन्तानकारणं तेषाम् औरसः पुत्रिका तथा"। इति।

एतेन 'सर्वाभावे धर्मपुत्रपरं तद् **व्यासयम**वाक्यम् "अपुत्रेण सुत" इति। यादृक् सपिण्डोऽसपिण्डो वा सजातीयोऽन्यजातीयो वा शूद्रान्य इति तदर्थः" इति **मिश्ररत्नाकरा**द्युक्तमपास्तम्। तस्य द्वादशपुत्रविधिनोपसंहारात्।

अत्र " पुमांस एव पुत्रा मे जायेरन्निति " सूत्रे मीमांसायां " पुमांसं पुत्रमाधेही"त्यादिश्रुतौ च पुत्रपदस्य कन्यावाचित्वदर्शनात्कन्याया अपि दानप्रतिग्रहौ स्त इति **कृष्णयज्वादयः** ।

वस्तुतस्तु चिन्त्यमिदं लोकशास्त्रविरुद्धत्वात् । तत्र विशेषणं त्वतिशयितपुंस्त्वबोधनाय । तत्त्वं चानुशिष्टत्वादि । स्पष्टं चेदं **शब्दरत्नभावप्रकाशादौ** । एवं च सीतायाः कुन्त्याश्च **महाभारतादौ** दत्तकत्वोपाख्यानात् तथैव शिष्टाचाराच्च तथेति युक्तमिति बोध्यम् । एतेन पुंस्त्वविवक्षा तत्रेति मतमपास्तमित्यग्रे स्फुटीभविष्यति ।

एतेन **मनु**वाक्यस्यापि तत्त्वं निरस्तम् । **मिताक्षरा** तु न विरुद्धा यथा तथोक्तं प्राक् । एव मन्येषां सुयोजत्वे तथाऽस्तु । अन्यथाऽस्य प्रामादिकत्वमेवास्तु । एवं **पराशर**स्यापि तत्परत्वं नयुक्तम् । सम्भवति प्रोक्तरीत्या शक्यार्थपरत्वे लक्षणानौचित्यात् । पूर्वार्धस्यैवकारस्योदकक्रियाम् इत्यस्य च **भ्रान्त**प्रलपितत्वापत्तेः । वक्ष्यमाणार्थमात्रप्रतिपादकत्वे च पौनरुक्त्यापातात् । उत्तरार्धस्याविवरणपरतया योजनेऽपि पूर्वार्द्धेन दोषतादवस्थ्यात् । पूर्वमध्यमयोः क्रिययोरनधिकारापत्तेः । **एकोद्दिष्टे** तदापत्तेश्च ।

न च—

" सपिण्डीकरणादूर्ध्वं पित्रोरेव हि पार्वणम् । पितृव्यभ्रातृमातॄणामेकोद्दिष्टं सदैव हि ॥ "

इति **कात्यायनोक्तेः**—

" सपिण्डीकरणादूर्ध्वं यत्र यत्र प्रदीयते । भ्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च ॥

" मित्राय गुरवे श्राद्धमेकोद्दिष्टं न पार्वणम् । "

इति **वृद्धवसिष्ठाच्च**—

" अपुत्रा वा मृताः केचित्पुरुषा वा स्त्रियोऽपि वा । तेषामपि च देयं स्यात् एकोद्दिष्टं न पार्वणम् ॥"

**इत्यापस्तम्ब**प्राप्तैकोद्दिष्टबाधनार्थमेवेदमिति वाच्यम् ।

" पितृव्यभ्रातृमातॄणां ज्येष्ठानां पार्वणं भवेत् । एकोद्दिष्टं कनिष्ठानां दंपत्योः पार्वणं मिथः ॥"

इति **चतुर्विंशति**मतविरोधापत्तेः ।

न च इत एव तत् यथा कर्त्रपेक्षया कनीयः पितृव्यादिविषयम्, एवं तदपि ज्येष्ठपितृव्यविषयमिति वाच्यम् । सामान्यस्मृतेः सङ्कोचेन व्याख्याने मानाभावात् । पूर्वं तेषां मध्ये कनिष्ठपरत्वस्योक्तत्वेऽपि कर्त्रपेक्षया तत्परत्वस्यानुक्तत्वेन तदविरोधात् । अत्र गुरुर्मन्त्रोपदेष्टा विद्याप्रदाता च । मातृपदं मातृसपत्नीपरम् । जनन्याः पार्वणविधानादेकोद्दिष्टविधानानुपपत्तेः । मम तु पूर्ववाक्येन द्वयोरपि तयोः सकलक्रियाप्राप्तावुत्तरक्रिया कथं कार्या ज्येष्ठस्येत्याकांक्षायां तदेकवाक्यतया तेन तस्यैव पार्वणं विधीयते इति न दोषः । अत एव—

" अपुत्रस्य पितृव्यस्य श्राद्धादि पितृवद्भवेत् । "

इति **स्मृत्यन्तर**मप्युपपन्नम् । यद्वेदमुभयपरमस्तु, पितृवदाचाराद्व्यवस्था ।

किं च । पार्वणश्राद्धमवश्यं कर्तव्यमित्यत्रावश्यंशब्दस्याङ्गीकारार्थत्वस्य निश्चयार्थत्वस्य चासम्भवेनावधारणार्थत्वस्य वाच्यत्वेन तदेव कर्तव्यमित्यर्थोऽथवा तत्कर्तव्यमेवेत्यर्थो वा । नाद्यः । प्रागुक्तस्य स्मृत्या पितृवदाचारप्राप्तैकोद्दिष्टबाधापत्तेः । नान्त्यः । उक्तरीत्यैव तदकरणे दोषापत्तेरिति दिक् ।

यदपि न त्वित्यादि, तदपि न । 'अपुत्रा पुत्रवत्पत्नी' त्युशनःस्मृतेः पत्न्यां तत्त्वातिदेशेऽपि यथा न तदाधिक्यं तथाऽत्र तदतिदेशेन तदप्रतिपादकत्वेन तदनाधिक्येन तदविरोधात् । अन्यत्र अन्यशब्दः प्रयुज्यमानो विनाऽपि 'वतिं वत्यर्थं गमयतीति' न्यायात् अस्याप्रातिनिधित्वेन दायग्रहण-क्रमबोधकवाक्ये तत्र पाठोपपत्त्या तदविरोधात् । पिण्डादौ त्वयमेव ततः प्रबल इत्युक्तम् ।

किं चास्तु तदाधिक्यं, न च तत्संख्याविरोधः । तदाशयानवबोधात् । तथा हि । **याज्ञवल्क्ये**नौरसादयो द्वादशपुत्रा गणितास्ते च प्रागुक्ता एव ।

**हारीतो**ऽपि—

षड् बन्धुदायादाः षडबन्धुदायादाः । साध्व्यां स्वयमुत्पादित औरसः, क्षेत्रजः, पौनर्भवः, कानीनः, पुत्रिकापुत्रो, गृहे गूढोत्पन्न इति बन्धुदायादाः दत्तः, क्रीतको, ऽपविद्धः, सहोढः, स्वयमुपागतः, सहसादृष्टश्चेत्यबन्धुदायादा " इति ।

**यमो**ऽपि,

" पुत्रास्तु द्वादश प्रोक्ता मुनिभिस्तत्त्वदर्शिभिः । तेषां षड् बन्धुदायादाः षडदायादबान्धवाः ॥
" स्वयमुत्पादितस्त्वेको द्वितीयः क्षेत्रजः स्मृतः । तृतीयः पुत्रिकापुत्र इति धर्मविदो विदुः ॥
" पौनर्भवश्चतुर्थस्तु कानीनश्चैव पञ्चमः । गृहे तु गूढ उत्पन्नः षडेते पिण्डदाः स्मृताः ॥
" अपविद्धः सहोढश्च दत्तः कृत्रिम एव च । पञ्चमः क्रीतकः पुत्रो यश्चोपानयते स्वयम् ॥
" इत्येते मुनिभिः प्रोक्ताः षडदायादबान्धवाः । " इति । औरसादीनभिधाय—
" एते द्वादशपुत्रास्तु सन्तत्यर्थमुदाहृताः । आत्मजाः परजाश्चैव लब्धा यादृच्छिकास्तथा ॥
" तेषां षड् बन्धुदायादाः पूर्वेऽन्ये पितुरेव षट् । " इति **देवलोऽपि** ।

" औरसादीन् कृत्रिमरहितान् यत्रक्वचनोत्पादितसहितानभिधायतेषां यः पूर्वः स श्रेयान्स एव दायहरः स चान्यान् बिभृयादिति " **विष्णुर**पि ।

" औरसः क्षेत्रजश्चैव पुत्रिकापुत्र एव च । कानीनश्च सहोढश्च गूढोत्पन्नस्तथैव च ॥
" पौनर्भवोऽपविद्धश्च दत्तः क्रीतः कृतस्तथा । स्वयं चोपगतः पुत्रा द्वादशैते प्रकीर्तिताः ॥
" एषां षड् बन्धुदायादाः षडदायादबान्धवाः । पूर्वः पूर्वः स्मृतः श्रेष्ठो जघन्यो यो य उत्तरः ॥
" क्रमादेते प्रवर्तन्ते मृते पितरि तद्धने । श्रेयसः श्रेयसोऽभावे जघन्यस्तदवाप्नुयात् ॥ "

इति **नारदो**ऽपि । ( अ. १३ श्लो. ४५।४९ )

**वसिष्ठो**ऽपि—( अ. १७ सू. १३।१४।१५।१८।२१ )

" द्वादशैव पुत्राः पुराणदृष्टाः । स्वयमुत्पादितः स्वक्षेत्रे संस्कृतायामौरसः प्रथमः । तदलाभे नियुक्तायां क्षेत्रजो द्वितीयः । तृतीयः पुत्रिका विज्ञायते । पौनर्भवश्चतुर्थः । कानीनः पञ्चमः " इत्यादि ।

**मनुर**पि—( अ. ९ श्लो. १५८।१५९।१६० )

" पुत्रान् द्वादश यानाह नृणां स्वायंभुवो मनुः । तेषां षड् बन्धुदायादाः षडदायादबान्धवाः ॥
" औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च । गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट् ॥
" कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा । स्वयंदत्तश्च शौद्रश्च षडदायादबान्धवाः ॥ " इति ॥

---

१ ख–यश्चोपनयेत्त्वित्यादि । क–नन्वित्यादिना अपुत्रा... । २ क–पूर्वेभ्यो ।

अत्र कैश्चित्पुत्रिकापुत्रं विहाय शौद्रमूरीकृत्य द्वादशत्वमुक्तं, कैश्चिद्विपरीतमुक्तं, कैश्चित् कृत्रिमं विहाय तमङ्गीकृत्य तदुक्तम् । न च शौद्रस्यौरसत्वेनैव संग्रहात्पृथगुक्तिर्व्यर्था । अत एव कैश्चित्तस्य गणनं न कृतम् ।

अत एव— ( **याज्ञ.** २।१२५ )

'चतुस्त्रिद्व्येकभागाः स्युर्वर्णशो ब्राह्मणात्मजाः । क्षत्रजास्त्रिद्व्येकभागा विड्जास्तु द्व्येकभागिनः ॥'

इति भिन्नजातीयानां विभाग उक्तः । अत एव च सजातीयेष्वयमित्यत्र कानीनाद्यनुरोधेन सजातीयत्वमूरीकृत्य मूर्धावसिक्तादीनामौरसेऽन्तर्भावं स्वीकृत्य "शूद्रापुत्रस्त्वौरसोऽपि कृत्स्नभागमन्याभावेऽपि न लभते" इति **विज्ञानेश्वरे**ण व्याख्यातमिति वाच्यम् । तस्य तल्लक्षणानाक्रान्तत्वात् ।

तथाहि । द्विविधस्तावत् शूद्रापुत्रः ।

तत्र—( **याज्ञ.** १ । श्लो. ९१।९२ )

"विप्रान्मूर्द्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम् । अम्बष्ठः शूद्र्यां निषादो जातः पारशवोऽपि वा॥
"वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ । वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः ॥"

इति **मूलेन** प्रतिपादित एकः ।

**विष्णुना**ऽपि, "यत्र क्वचनोत्पादितश्च द्वादश" इति ।

**वासिष्ठे**नापि, ( अ. १७ सू. ३८ ) "शूद्रापुत्र एव षष्ठो भवतीत्याहुरीति ।"

**बौधायनेना**पि, (२।२।२९-३०) "द्विजातिप्रवरात् शूद्रायां जातः कामात्पारशव" इति ।

**मनुना**ऽपि, ( अ. ९ । १७८ )

"यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत्सुतम् । स पारयन्नेव शवस्तस्मात्पारशवः स्मृतः ॥" इति ।

द्वितीयस्तु द्विजातेर्दास्यामुत्पन्नः । तत्राद्यस्य न तदभावे कृत्स्नधनहारित्वम् ।

"यद्यपि स्यात्तु सत्पुत्रो यद्यपुत्रोऽथवा भवेत् । नाधिकं दशमाद्दद्याच्छूद्रापुत्राय धर्मतः ॥"

इति **मनूक्तेः** ( अ. ९ । १५४ ) । इत एव क्षत्रियावैश्यापुत्रयोः सवर्णापुत्राभावे सर्वधनग्रहणं सिद्धम् ।

द्वितीयस्तु "जातोऽपि दास्यां शूद्रेणे"त्यत्र शूद्रग्रहणात्पितुरिच्छयाऽपि नांशं भजते नाप्यर्द्धं दूरत एव कृत्स्नम् । किं तु 'अनुकूलश्चेज्जीवनमात्रं लभते' इति ।

औरसलक्षणं तु मूले 'औरसो धर्मपत्नीज' इति ।

**वसिष्ठो**ऽप्युक्तः ।

**विष्णुरपि**, "अथ द्वादश पुत्रा भवन्ति स्वक्षेत्रे संस्कृतायामुत्पादितः स्वयमौरसः प्रथम" इति।

**देवलोऽपि**, "संस्कृतायां च भार्यायां स्वयमुत्पादितो हि यः । औरसो नाम पुत्रः सः" इति।

**आपस्तम्बोऽपि**, ( २।१३।१ ) "सवर्णां पूर्वशास्त्रविहितां यथर्तु गच्छतः पुत्रास्तेषां कर्मभिः संबन्धः । दायेनाव्यतिक्रमश्चोभयोरिति ।"

**बौधायनो**ऽपि, ( २।२।१४ ) "सवर्णायां संस्कृतायां स्वयमुत्पादितमौरसं पुत्रं विद्यादिति" ।

**श्रुतिश्च**, "अङ्गादङ्गादिति"—

"आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् । यथेह पुरुषस्यात्मा तस्मात्त्वमिह जायसे ॥

"आत्मा पुत्र इति प्रोक्तः पितुर्मातुरनुग्रहात् । सर्वान् नस्त्रायसे यस्मात्पुत्रस्तेनासि संज्ञितः॥" इति च । "सवर्णा धर्मविवाहोढा धर्मपत्नी तस्यां जात औरसः पुत्रो मुख्यः" इत्यत एव **विज्ञानेश्वरेण** व्याख्यातम् । ( मि. पृ. ८८ पं. ७।८ )

**मनुना**ऽपि—( अ. ९ । १६६ )

"स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादयेद्धि यम् । तमौरसं विजानीयात्पुत्रं प्राथमकल्पिकम् ॥" इति ।

एवं च शूद्रापुत्रस्य द्विविधस्यापि तल्लक्षणानाक्रान्तत्वात्पृथगुक्तिः । अत एव मूर्धावसिक्तादीनामौरसेष्वन्तर्भाव इति **विज्ञानेश्वरेणो**क्तम् । शूद्रापुत्रस्त्वौरसोऽपीत्यत्र तु स यौगिको न तु रूढः-केषांचित् गणनाकरणे बीजं तु कृत्स्नधनहारित्वाभावादेव । **मूलेन** तु चतुरित्यादिना क्षत्रियापुत्रादिवत्तस्य कथनं प्राक् कृतमेव । **मनुना**ऽपि पूर्वं पुत्रिकापुत्रस्य दौहित्र एव च हरेदित्यादिना कथनात्तत्रानुक्तिरिति न न्यूनता । सर्वथा ततः पुत्राधिक्यलाभान्न द्वादशत्वं नियतम् ।

अत एव "ननु क्षेत्रजाद्यपेक्षया पुत्रिकापुत्रस्य पुत्रत्वेनाधिक्ये द्वादशसंख्यातिरेक आप्नोति । भवतु को दोषः त्रयोदशोऽयं पुत्रोऽस्तु" इति **मेधातिथिना** व्याख्यातम् । अत एव **विज्ञानेश्वरे**ण 'भ्रातॄणामि'त्यस्य तथा व्याख्याने संख्याविरोधरूपदोषोद्भावनं न कृतम् । अत एव च **बृहस्पतिः**, "पुत्रास्त्रयोदश प्रोक्ता मनुना येऽनुपूर्वशः । सन्तानकारणात्तेषामौरसः पुत्रिका तथा ॥ "आज्यं विना यथा तैलं सद्भिः प्रतिनिधिः स्मृतम् । तथैकादश पुत्रास्तु पुत्रिकौरसयोर्विना"॥ इति ।

एवं च तत्र तत्र द्वादशत्वोक्तिस्तत्र तत्र परिगणितानां स्फुटतया संख्याबोधनद्वारा न्यूनत्वव्यवच्छेदनार्था, नाधिक्यव्यवच्छेदार्था । तत्रान्येषां यथासंभवमन्तर्भावमभिप्रेत्य वेति न दोषः । अन्यथा तेन तत्र तस्य गणनात्तस्यान्यत्रागणनान्मिथो विरोधः स्पष्ट एव । एवमेवकारोऽपि **वासिष्ठो** योज्यः । तस्मात्तदाधिक्ये न दोषः ।

एतेन **कौस्तुभो**क्तं तद्दूषणं निरस्तम् । द्वितीयदूषणमपि प्रागेव निरस्तप्रायम् । एवं च यथा सपत्नीपुत्रस्यागृहीतस्यापि पिण्डदानाद्यधिकारित्वात्पितृपत्न्य इत्यादिशास्त्राल्लोकव्यवहाराच्च पुत्रत्वं निर्विवादं तथा तत्र तत्सहपाठात् भ्रातृसुतस्याप्यगृहीतस्यैव पुत्रत्वं विधीयते इत्युचितम् । **मनु**ग्रन्थेऽपि तस्य तथाबोधकं वाक्यान्तरमस्ति । एवं च तदतिदिष्टस्य वित्तालाभेऽपि तत्राधिकारो यथा तथा तदतिदेशविषयाणां पत्न्यादीनामन्याभावे तस्य निर्धनत्वे धनलाभं विनाऽपि श्राद्धाधिकारः ।

एवं च **विष्णु**वाक्ये पुत्रशब्देन सर्वविधपुत्रो गृह्यते । तत्र अतिदेशवाक्यानि तु—"अपुत्रा पुत्रवत् पत्नी" **इत्युशना ।**

"यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा ।" इति **मनुः** । ( अ. ९ । १३० ।

"बह्वीनामेकपत्नीनामिति," ( श्लो. १८३ )

"पितेव पालयेत्पुत्रान् ज्येष्ठो भ्रातॄन्यवीयसः । पुत्रवच्चापि वर्तेरन् ज्येष्ठे भ्रातरि धर्मतः॥" (श्लो. १०८)

"यो ज्येष्ठो ज्येष्ठवृत्तिः स्यान्मातेव स पितेव सः ।" ( ११० ) इति च । इत्यादीनि बोध्यानि ।

तदयं **निर्गलितोऽर्थः** । तत्रादौ दायग्रहणक्रमः । औरसपुत्रस्तत्पुत्रस्तत्पुत्रः । तत **एका**दश पुत्रिकापुत्रादयः पूर्वपूर्वाभावे क्रमेण । एवं तत्पुत्रादयोऽपि । अत एव—

**मनुशंखलिखिताः**, ( मनु. ९ । १८४ )

"श्रेयसः श्रेयसोऽलाभे पापीयान् रिक्थमर्हति । बहवश्चेत्तु सदृशाः सर्वे रिक्थस्य भागिनः ॥" इति ।

तदभावे पत्नी । ततो दुहिता । ततो दौहित्रः । ततो दौहित्री । ततः पिता । ततो माता ततो भ्राता । ततो भगिनी । ततस्तयोः क्रमेण सुतः सुता च । ततो गोत्रजादय इति ।

**पिण्डदानादौ** त्वेवं क्रमः । औरसपुत्रः । तदभावे पुत्रिकापुत्रादय एकादशक्रमेण । ततः पौत्रः । प्रपौत्रश्च तथा । ततः पत्न्यादिसत्त्वेऽपि भ्रातृसुतः । ततो भ्राता । ततः पिता । ततो दौहित्रः । ततः पत्नी । ततो दुहिता । ततो गोत्रजादय इति ।

, इदमपि पुंविषये । स्त्रीविषये तु अनूढायाः पिता । तदभावे भ्रात्रादिः । उढायास्तु मुख्यपुत्राभावे पुत्रिकापुत्रः । तदभावे सपत्नीपुत्रः । तदभावे क्षेत्रजाद्याः प्रपौत्रान्ताः । तदभावे पतिः । तदभावे दुहितृदौहित्रो क्रमेण । तदभावे पत्युर्भ्राता । तदभावे तत्पुत्रः । तदभावे स्नुषा । तदभावे पितृभ्रातृतत्पुत्रादयः पूर्वोक्ता इति बोध्यम् ।

एतेन " पुत्रपौत्रप्रपौत्राभावे भार्या । तदभावे भ्राता । तदभावे तत्पुत्रः । भ्रातुर्भ्रातेति वचनात् " इति **मिश्राद्युक्तमपास्तम्** ।

एवं सति भ्रातृसुतेनोक्तफलसिद्धावपि पत्न्यादितः प्राक् मदीयपिण्डदानरिक्थग्रहणोभयाधिकारी कश्चित् भवेदिति कामनायां तदर्थं जीवतो वाक्यादिकरणार्थं नामसङ्कीर्तनार्थं च दत्तकस्वीकारः । अपुत्रेणैवेत्यत्र तु पुत्रपदं मुख्यौरसपरम् तत्त्यागे मानाभावात् । प्रतिनिधिपदसमभिव्याहारेण तथैव लाभात् । आतिदेशिकपुत्रत्वस्य पत्न्यामपि सत्त्वेन तदापि तद्ग्रहणानापत्तेश्च । तच्च पौत्रादेरुपलक्षणमित्यन्यत् । तत्रापुत्रत्वं मृतपुत्रत्वमजातपुत्रत्वं वा ।

" वन्ध्या वा मृतपुत्रा वा पुत्रार्थं समुपोष्य च " इति **शौनकोक्तेः** ।

एवेन तादृशपुत्रवतोऽनधिकारः सूचितः । अत एव 'नामसङ्कीर्तनाय चेति' **मन्वादिभिरुक्तम्** । तत्स्वरूपं तु मन्वादिभिरुक्तम्, ( अ. ९ । १६८ )

" माता पिता वा दद्यातां यमद्भिः पुत्रमापदि । सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः ॥" इति ।

अत्र वाशब्दः समुच्चये । 'वा स्यादिति' **कोशात्** । यद्वा तयोरन्यतरग्रहणानेकत्वार्थः सः । चं विनापि गामश्वमितिवत् पूर्वत्र समुच्चयो बोध्यः । अभ्यर्हितत्वात्पूर्वं तदुक्तिः । अद्भिरित्यनेन अन्यत्रोक्तविधिनोदकपूर्वमित्यर्थकेन अन्यथादत्तस्य अतत्त्वं सूचितम् । अत एव—

" अविधाय विधानं यः परिगृह्णाति पुत्रकम् । विवाहविधिभागं तं न कुर्याद्धनभाजनम् ॥ "

इति **वृद्धमनुः** ।

परिग्रहविधिं विना परिगृहीतस्य विवाहमात्रं कार्यं न धनदानं, किन्तु तत्र पत्न्यादय एव धनभाजः पिण्डदाश्च । विधिं विना तस्य पुत्रत्वानुत्पादात् ।

अत एव **वृद्धगौतमः**,

" स्वगोत्रेण कृता ये स्युर्दत्तक्रीतादयः सुताः । विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयते ॥ " इति ।

" सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी । "

इति **मनूक्तं** साप्तपौरुषं सापिण्ड्यं न विधीयते किन्तु प्रवराध्यायप्रसिद्धं त्रिपुरुषमित्यर्थः । इदं च द्व्यामुष्यायणदत्तकादिविषयमेव ।

वस्तुत इदं निर्मूलमेवेति स्पष्टं **सापिण्ड्यप्रदीपे** । अत एव " मात्रा भर्त्रनुज्ञया प्रोषिते प्रेते वा भर्तरि पित्रा वोभाभ्यां वा प्रतिग्रहीतृसवर्णो विधिना सवर्णाय यस्मै दीयते स तस्य दत्तकः पुत्र " इति **विज्ञानेश्वरेण** व्याख्यातम् ( मि. पृ. ८८ पं. २१–२३ ) । अत एव—

" वंध्या वा मृतपुत्रा वा पुत्रार्थं समुपोष्य च । "

इति **शौनकीये**ऽविशेषश्रुतिसङ्गतिः । " आपदि प्रतिग्रहीतुरपुत्रत्वे " **इत्यपरार्कः**। दुर्भिक्षादौ वा । " आपद्ग्रहणादनापदि न देयः । दातुरयं प्रतिषेधः " इति **विज्ञानेश्वरः** ( मि. पृ. ८८ पं. २४–२५ ) ।

अत एव **कात्यायनः**—

" आपत्काले तु कर्तव्यं दानं विक्रय एव वा । अन्यथा न प्रकर्तव्यमिति शास्त्रविनिश्चयः " ॥ इति ।

सादृश्यं न जातितः, किन्तु कुलानुरूपैर्गुणैः । एवं च क्षत्रियादिरपि ब्राह्मणस्य दत्तको युज्यते इति **मेधातिथिः** । जातित एव सादृश्यम् । अत एव ' सजातीयेष्वयं प्रोक्त ' इति **मूलं** सङ्गच्छते । क्रीतलक्षणभूत**मनु**वाक्ये तु तदुक्तमेव व्याख्यानम् । अत एव तत्र हि सदृशोऽसदृशोऽपि वेत्युक्तमित्यपरे । प्रीतिग्रहणं लोभभयादिप्रतिषेधार्थम् । तथा च तत् क्रियाविशेषणम् ।

किं च । एकः पुत्रो न देयः ।

तथा च **वसिष्ठः** (अ. १५ सू. १३५ ) "शुक्रशोणितसम्भवो हि पुरुषो मातापितृनिमित्तकः । तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतः । न त्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा । स हि सन्तानाय पूर्वेषां । न तु स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्तुरिति " ।

एवं च पत्न्याः पतिसत्त्वे तदनुमत्यैव दातृत्वादि । मृते तु स्वातन्त्र्यम् ।

न च रक्षेत्कन्यामिति पूर्वाध्याये स्त्रीणां विहिते कर्मणि स्वतन्त्राधिकारनिषेधकमुक्तमिति कथमेनदिति वाच्यम् । पूर्तादौ तासां स्वतन्त्राधिकारस्मरणात् । तस्य तद्रक्षणमात्रतात्पर्यकत्वात् । धनस्वामित्वप्रतिषेधकमपि न तत् । ' पत्नी दुहितर ' इत्यादिना तासामपि रिक्थग्राहित्वस्मरणात् । तन्निषेधे सहाधिकारस्याप्यसम्भवात् । न च स्थावरे तस्या अनधिकारः,

" यद्विभक्ते धनं किञ्चिदाध्यादि विविधं स्मृतम् । तज्जाया स्थावरं मुक्त्वा लभते मृतभर्तृका ॥
" वृत्तस्थाऽपि कृतेऽप्यंशे न स्त्री स्थावरमर्हति । "

इति **बृहस्पतेरिति** वाच्यम् । अस्य वचनस्य जायापदोपेतस्य पत्नीभिन्नासुरादिविवाहोढाविषयत्वेन निबन्धेषु व्यवस्थापनात् । दुहितृरहितपत्नीपरमिदम् " दुहितृमती तु स्थावरमपि लभते " इति **स्मृतिचन्द्रिकायाम्** । "दायादानुमतिं विना स्थावरविक्रयादिनिषेधपरमिति " **माधवः** ।

यत्तु **कात्यायनः**—

"मृते भर्तरि भर्त्रंशं लभेत कुलपालिका । यावज्जीवं न हि स्वाम्यं दानाधमनविक्रये ॥"

इति, तत् बन्दिचारणाद्यर्थदानादिनिरततप्रतिषेधपरम् । अदृष्टार्थदानतदुपयोग्याधमनादि तु भवत्येव ।

"जङ्गमं स्थावरं सर्वं हेमरूप्यं रसाम्बरम् । आदाय दापयेच्छ्राद्धं मासषाण्मासिकाब्दिकम् ॥
"पितृव्यगुरुदौहित्रान् भर्तुः स्वस्रीयमातुलान् । पूजयेत्कव्यपूर्ताभ्यां वृद्धांश्चाप्यतिथीन् स्त्रियः ॥"
इति **प्रजापतेः** ।

"सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्तितम् । विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि "

इति **नारदोक्तेश्च** । एवं च पत्नीति मूलवाक्यं पत्नीपदोक्त्या स्थावरसहितसकलरिक्थग्रहणपरमिति प्रागुक्तं युक्तमेव ।

"क्रयक्रीता तु या नारी न सा पत्नी विधीयते। न सा दैवे न सा पित्र्ये दासीं तां कवयो विदुः॥"

इति **स्मरणात्**। भर्तृदत्ते तु स्थावरे न स्वातन्त्र्यम्। "भर्त्रा प्रीतेन यद्दत्तमिति" **नारदोक्तेः**। ( अ. १ । ३८ । ) एतेन पुत्रप्रतिग्रहे विधवाया नाधिकार इत्यपास्तम्।

एवं तस्यापि तदनुमत्यैव तत्। अत्यन्तापदि तु तदनुमत्यलाभे स्वातन्त्र्यमपि। प्रागुक्तरीत्या तस्य प्राधान्यात्। तथा, अनेकपुत्रसद्भावे ज्येष्ठो न देयः। 'ज्येष्ठेन जातमात्रेणेति' तस्यैव पुत्रकार्यकरणे मुख्यत्वात्। स च भ्रातृसुतसम्भवेऽन्यो न ग्राह्यः। प्रागुक्तषाष्ठन्यायात्। तस्य प्रतिकूलत्वे तु सपिण्डादिक्रमेणान्योऽपि ग्राह्यः। तत्रापि द्विजे भागिनेयदौहित्रवर्ज्जम्। विरुद्धसंबन्धापत्त्या पुत्रत्वं बुद्ध्यनर्हम्। भ्रातृपितृव्यमातुलवर्जं च। शूद्रे तु भागिनेयदौहित्रावपि।

"ब्राह्मणानां सपिण्डेषु कर्तव्यः पुत्रसंग्रहः। तदभावेऽसपिण्डेषु अन्यत्र तु न कारयेत्॥

"ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचित्। दौहित्रो भागिनेयश्च शूद्राणां वाऽपि दाप्यते॥"

इति—

"नैकपुत्रेण कर्तव्यं पुत्रदानं कदाचन। बहुपुत्रेण कर्तव्यं पुत्रदानं प्रयत्नतः॥"

इति च **शौकनः**। अत्र नैकपुत्रेणेत्येव सिद्धे बहुपुत्रेणेत्युक्त्या द्विपुत्रेणापि न कार्यमिति सूचितमिति कश्चित्। तन्न। तस्य सर्वथा निषेधोऽस्य तु तदावश्यकत्वमित्येतदर्थं तदुक्तेः। अत एव तत्र कदाचनेति अत्र प्रयत्नत इति चोक्तं स्वरसतः सङ्गच्छते। एवं च तस्य तद्विधिनिषेधोभयाविषयत्वेऽपि वचनान्तरादापदि दाने न दोष इति बोध्यम्। न च प्रतिकूलत्वादेस्तत्त्वं क्वापि न दृष्टमिति वाच्यम्। **ऋष्यशृङ्गो**क्तावानुकूल्याद्वा पुत्रस्येत्युक्तत्वात्।

"अपुत्रा योषितश्चैषां भर्तव्याः साधुवृत्तयः। निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च॥"

इति **योगीश्वरोक्तेः**। ( अ. २ । १४२ )

"पितृद्विट् पतितः षण्ढो यश्च स्यादौपपातिकः। औरसा अपि नैतेंऽशं लभेरन् क्षेत्रजाः कुतः॥"

इति **नारदाच्च**। अ. १३ । २१ )

अत एव "एक एवौरस" इति "षष्ठं तु क्षेत्रजस्यांशम्" इति च **मनु**वाक्यं वृत्तकादेरौरसप्रतिकूलत्वान्निर्गुणत्वाभिप्रायेण व्याख्यातं **विज्ञानेश्वरेण** ( मि. पृ. ८९ पं ३१ )।

किं च। जीवतो वाक्यादिकरणरूपफलासम्भवस्ततः। एवं चैकस्मिन्नौरसेऽन्यस्मिन्वाऽतादृशे सति अन्येऽपि ग्राह्या यावतोक्तफलसंपत्तिर्भवति। अत एव विश्वामित्रादीनां पुत्रवतामपि देवरातादिपुत्रपरिग्रहः श्रौतादिः सङ्गच्छते। किं च। तस्य स्वयंदत्तत्वेनादत्तकत्वम्। अत एव परेच्छया तदङ्गीकारो न तु स्वस्य तदर्थं प्रवृत्तिः। एवं च तत्र तथैव। अत एव **बह्वृचब्राह्मणे**—

"यथैवाङ्गिरसः समुपेयां तव पुत्रताम्।" इत्यादिना—

"अधीयत देवरातो रिक्थयोरुभयोर्ऋषिः" इत्यन्तेनोक्तम्।

एतेन "पुत्रवतोऽपि पुत्रानुज्ञया पुत्रान्तरपरिग्रहः।

"यन्नः पिता संजानीते तस्मिंस्तिष्ठामहे वयम्। पुरस्तात्सर्वे कुर्महे त्वामन्वञ्चो वयं स्मसि"॥

इति **श्रौतलिङ्गात्**" इत्यपास्तम्।

उक्तयुक्तेः। तस्य ज्येष्ठीकरणे लिङ्गत्वाच्च। अत एव—

" वत्सावते त्वपुत्राय वसुदेवः प्रतापवान् । अद्भिर्ददौ सुतं वीरं शौरिः कौशिकमौरसम् ॥

" कण्डूषाय त्वपुत्राय विष्वक्सेनो ददौ सुताम् " । इति **हरिवंशे** ।

**रामायणे**ऽयोध्याकाण्डे सीतां प्रति श्रीरामानुशासने षड्विंशे च—

" औरसानपि पुत्रान् हि त्यजन्त्यहितकारिणः । समर्थान्संप्रगृह्णन्ति परानपि नराधिपाः " ॥ इति ।

तत्रैव कैकेयीवाक्यं दशरथं प्रति—

" तवैव वंशे सगरो ज्येष्ठपुत्रमुपारुधत् । असमञ्ज इति ख्यातं तथाऽयं गन्तुमर्हति " ॥ इति ।

तत्रैव सप्तोत्तरशततमे भरतं प्रति श्रीरामवाक्यम्,

" एष्टव्या बहवः पुत्रा गुणवन्तो बहुश्रुताः । तेषां वै समवेतानामपि कश्चित् गयां व्रजेत् " ॥ इति ।

" एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् । यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत् "॥ **इत्यत्रिः** ।

एवं च विधेयविशेषणमप्येकत्वं पुत्रप्रतिनिधिरित्यत्राविवक्षितम् । श्रेयांसं न प्रबोधयेदित्यादौ तन्मर्यादाया उल्लंघितत्वाच्च । एतेन "पुरोहितं वृणीतेऽध्वर्युं वृणीत " इत्यादाविव पुत्रप्रतिग्रहविधावपि प्रतिगृहीतस्य पुत्रकार्ये उपादेयतया तद्गतपुंस्त्वैकत्वयोर्विवक्षा तेनैक एव पुमानेव च ग्राह्यः " इति मतमपास्तम् ।

" श्रेयसः श्रेयसोऽलाभे पापीयान् रिक्थमर्हति । बहवश्चेत्तु सदृशाः सर्वे रिक्थस्य भागिनः ॥ "

इति **मनुः** । ( अ. ९ । १८४ )

औरसादीनां सर्वेषां पुत्राणां प्रकृतत्वात् औरसादीनुपक्रम्य तेषां पूर्वः पूर्वः श्रेयान्स एव दायहरः स चान्यान्बिभृयादिति **विष्णु**वचनादौरसादीनां पुत्राणां पूर्वपूर्वाभावे परः परो रिक्थमर्हति, पूर्वसद्भावे तु परसंवर्द्धनं स एव कुर्यात्, तदप्यपवादेतरविषयम् ।

यदि तु समानरूपा बहवः पुत्रास्तदा सर्वे एव विभज्य धनं गृह्णीयुरिति तद्व्याख्यातारः । इदं च नौरसपरम् । " एक एवौरसः पुत्रः " " उर्ध्वं पितुश्च मातुश्च " इत्यादिनैव तद्विभागोक्तेः । किं तु गौणानेकपरम् । अनेन च दत्तकवत् कृत्रिमस्यापि सिद्धिरर्थभेदेन । न च— " दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः" । इति **शौनकेन** पुत्रान्तरस्य कलौ निषेधात् कथं कृत्रिमसिद्धिरिति वाच्यम् । दत्तपदेन तस्याप्युपलक्ष्यत्वात् ।

" औरसः क्षेत्रजश्चैव दत्तः कृत्रिमकः सुतः । " इति **कलिधर्मप्रस्तावे पराशर**स्मरणात् । न चैवं क्षेत्रजस्यापि तदापत्तिः । नियोगनिषेधेनैव तन्निषेधात् । तत्र क्षेत्रज इति तु औरसविशेषणम् । यदि तु तत्र क्षेत्रजवत् कृत्रिमक इति दत्तस्य विशेषणममुख्यत्वसूचनद्वारा प्रतिनिधित्वसूचकं तदा माऽस्तु सः, दत्तकांशे तु न विवाद इति दिक् ।

स चायं दत्तको द्विविधः । अद्व्यामुष्यायणो द्व्यामुष्यायणश्च । तत्राद्यो "माता पिता वेति " "गोत्ररिक्थे" इति च **मनू**क्तः । यः कृतोपनयनो दत्तः प्रतिग्रहीत्रा च तदुत्तरविवाहादिसंस्कारैः संस्कृतः स द्व्यामुष्यायणः । तत्त्वं च तच्छाखाद्वयगोत्रद्वयभागित्वमेव । एवं यः सोपाधिकदानेन दत्तः प्रतिग्रहीत्रा जातकर्मादिभिः संस्कृतः सोऽपि तथा । तत्र प्रतिग्रहकाले या विद्यमानैकाऽनेका वा सा मुख्यमाता । तदीय एवैकोऽनेके वा मातामहाः । एकासत्त्वे तत्प्रतिग्रहे ततोऽन्यापरिणये सा सापत्नमाता । न तु तदीयमातामहाः । एवं तदा कस्या अप्यभावे ततः परिणयेऽपि बोध्यम् ।

एवं क्षेत्रजोऽपि द्विविध इति प्रागुक्तम् । एवं च पूर्वोक्तं युक्तमेव । अत एवैकौरससत्त्वेऽपि क्रतौ पुनर्गमनम् । अन्यथा तदपि न स्यात् । अत एव—

" देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया । प्रजेप्सिताऽधिगन्तव्या संतानस्य परिक्षये ॥
" विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि । एकमुत्पादयेत्पुत्रं न द्वितीयं कथंचन ॥
" द्वितीयमेके प्रजनं मन्यन्ते स्त्रीषु तद्विदः । अनिर्वृत्तं नियोगार्थं पश्यन्तो धर्मतस्तयोः ॥ "

इति क्षेत्रजप्रकरणे **मनुः** । ( अ. ९।५९।६०।६१ )

" अत्रेप्सितेत्युक्तिरकार्यक्षमपुत्रोत्पत्तौ पुनर्गमनार्था । अत एव " अर्थद्रव्यविरोधेऽर्थो द्रव्याभावे तदुत्पत्तेर्द्रव्याणामर्थशेषत्वात् " ( **जै.** मी. ६।३।१९ ) इत्यधिकरणे यदा पुनरतितनुत्वान्नियोजनस्याप्ययोग्या खदिरता भवति तदापि किं मुख्यत्वात्सैवोपादेया, न हि तयोपात्तयाऽपि कश्चिदर्थः कार्याक्षमत्वात्, अतस्तादृशे लब्धेऽपि तदनादरेण प्रतिनिधिरेव कदरः कार्यक्षम उपादेय इत्युक्तम् ।

अन्ये पुनराचार्यनियोगात्पुत्रोत्पादनविधिज्ञा अपुत्र एकपुत्र इति शिष्टप्रवादादनिष्पन्नं नियोगप्रयोजनं मन्यमानाः स्त्रीषु पुत्रोत्पादनं द्वितीयं धर्मतो मन्यन्ते " इति तद्व्याख्यातारः । तस्मात्तत्रैकत्वं यदि विवक्षितं स्यात्तर्हि तदसङ्गतिर्निषेधासङ्गतिश्च स्पष्टैवेति बोध्यम् । अत एव बहुपुत्रत्वविधिः ।

एतमुपपरमगामध्यासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच रश्मींस्त्वं पर्यावर्तय बहवो वै ते भविष्यन्तीति छन्दोगाः । अस्य चायमर्थः कौषीतकिर्नाम मुनिः स्वयमादित्यमण्डलमेक एवोपासीन उद्गानं कृत्वा तत्फलत्वेन पुत्रमेकं प्रतिलभ्य तमुवाच " अहमेतमेकमेवादित्यमध्यासिषं ध्यानमकार्षं तस्माद्दोषान्मम त्वमेक एव पुत्रोऽसि एकपुत्रत्वं च न प्रशस्तम्, अतस्त्वं बहुपुत्रताये रश्मीन्बहूनुपास्तिवेलायामावर्तय " इति । **महाभारतमपि** प्रागुक्तम् ।

" **इ**मां त्वमिन्द्र मीढ्वः सुपुत्रां सुभगां कृणु "

" **द**शास्यां पुत्रानाधेही " त्यादि**मन्त्रा**श्चैवं सति बहुपुत्रत्वविधिमुपोद्बलयन्ति । एवं च—

" ऋतुकालाभिगामी स्यात् यावत्पुत्रोऽभिजायते । "

इति **कौर्मे** तादृशपुत्रपरतया योज्यमिति न विरोधः । अत एव—

" यादृशं फलमाप्नोति कुप्लवैः सन्तरन् जलम् । तादृशं फलमाप्नोति कुपुत्रैः सन्तरंस्तमः ॥"

**इति मनुः** । ( अ. ९ । १६१ )

" ज्येष्ठेन जातमात्रेणेति " **मनो**रनुशिष्टत्वरूपज्येष्ठत्ववत्तया जातमात्रेणेत्यर्थादपि न तद्विरोधः । एवमन्यत्रापि यथासम्भवं बोध्यम् ।

**मेधातिथिना** तु " उत्पन्नमात्रेण ज्येष्ठेन संस्काररहितेनापि मनुष्यः पुत्रवान्भवति । ततश्च नापुत्रस्य लोकोऽस्तीत्यलोकता परिहृता । तथा ' प्रजया पितृभ्यः ' इति **श्रुतेः** ' पुत्रेण जातमात्रेण पितॄणामनृणश्च ' इत्युक्तम् । यस्मिन्नृणामिति तु साधारणम् । अत एव तत्र " यस्मिन् जाते ऋणं शोधयति येन जातेनामृतत्वं च प्राप्नोति । तथा च **श्रुतिः** " ऋणमस्मिन्निति " । स एव पितुर्धर्मेण हेतुना जातः पुत्रो भवति । तेनैकेनैव ऋणापनयनाद्युपकारस्य कृतत्वात् । इतरांस्तु ऐच्छिकान्मुनयो जानन्ति " इति **तेनो**क्तम् । सुब्रह्मण्याह्वानं तु न प्रतिनिधिना किन्तु मुख्येनैव । " न स्वामित्यस्य भार्यायाः पुत्रस्य देशस्य कालस्याग्नेर्देवतायाः कर्मणः शब्दस्य च प्रतिनिधिरिति " **सत्याषाढोक्तेः** ।

" जन्मज्येष्ठेन चाह्वानं सुब्रह्मण्यास्वपि स्मृतम् । यमयोश्चैव गर्भेषु जन्मतो ज्येष्ठता स्मृता ॥ "

इत्यौरसप्रकरणे **मनूक्तेश्च** ( अ. ९।१२६ )। **मेधातिथिना**ऽपि तथैव व्याख्यातम् । **सत्याषाढोक्तेः** तन्तवे ज्योतिष्मतीं तामाशिष इत्याशीराशासनमपि तमादाय न। अत एव **श्रुतिः,** " यस्य पुत्रो जातः स्यात्तन्तवे ज्योतिष्मतीमिति ब्रूयादिति " दिक् ।

तस्मात्पुत्रातिदेशा अपि ये सोदरभ्रातृसुतसपत्नीपुत्रादयस्तेऽपि वित्तलाभाभावे पितृव्यस्य सापत्नमातुश्च श्राद्धादिपुत्रकार्यकरणार्हाः । एवं कनीयानप्यग्रजस्याकिञ्चनस्यापि ।

"अपुत्रस्य पितृव्यस्य श्राद्धादि पितृवद्भवेत्।" इति **स्मृतेः** । "ज्येष्ठो भ्राता पितुः समः " **इति च** । " पितृपत्न्यः सर्वा मातरः " इति **सुमन्तूक्तेश्च** । मनुस्तूभयत्रोक्त एव ।

एवं पत्नीस्नुषाशिष्यादीनामपि बोध्यम् । " अपुत्रा पुत्रवत्पत्नी " **त्यौशनसात्** । ' भार्यापिण्डमि ' त्यादिप्रागुक्तेश्च । न चापुत्रपितृव्यादेः पत्न्यां भ्रातृसुते च सति कथं कार्यमिति वाच्यम् । उभयत्र पुत्रत्वातिदेशसाम्येऽपि समन्त्रकक्रियाकृतभेदस्य पूर्वम् उक्तत्वात्तेन तत्पुत्रकर्तृकक्रियाप्राप्तावपि 'अतिदिष्टादुपदिष्टं बलीय' इति न्यायेन भार्यापिण्डमित्यस्य साक्षाद्विधायकत्वेनान्येषां दुर्बलत्वेन तत्र पत्न्यैव कार्या क्रियेति सिद्धान्तात् । न चामन्त्रकत्वापत्तिः । न्यायसिद्धेऽर्थे प्रागुक्तरीत्या संकल्प्यादौ समन्त्रकत्वेनाग्रे तथात्वापत्ताविष्टापत्तेः । अत एव ' भ्रातुर्भातेति ' प्रागुक्त**ब्राह्मसङ्गतिरिति** केचित् ।

परे तु 'भार्यापिण्डमिति ' तदभावविषयमित्यादि प्रागुक्तमेवेत्याहुः । स्त्रियास्तु पत्या । भार्यापिण्डमिति साक्षाद्विधेः । तदभावे सपत्नीपुत्रेण । ' सर्वासामिति वचनादिति ' **मिश्रा**दयः । अत्रापि तत्त्वं परे त्वित्युक्तमेवेति बोध्यम् ।

न च—

"यज्ञेषु मन्त्रवत्कर्म पत्नी कुर्याद्यथा नृप। तथौर्ध्वदेहिकं कर्म कुर्यात्सा धर्मसंस्कृता ॥ "

इति **स्कान्दा**त्तस्या अपि समन्त्रकक्रियैवेति वाच्यम् । निबन्धाधृतत्वेन तत्रानाश्वासात् । तत्सत्त्वे वा प्रागुक्त**कात्यायनै**कवाक्यतयाऽग्निदानमात्रपरत्वात् ।

एतेन "स्कान्दात्सर्वा समन्त्रकक्रियैव । भविष्यपुराणादिकं त्वासुरादिविवाहोढाविषयम् " इत्यपास्तम् ।

स्त्रीशूद्रस्थलेऽन्यत्रेष्टापूर्तादावित्थं प्रसिद्धतरम् । उक्त**सुमन्तु**वाक्यात्सपत्नीपुत्रे सति भर्तुरन्येषां च नाधिकारः । तथा च दौहित्रादितस्तस्य सापिण्ड्यविशेषादेव बलवत्त्वम् ।

एवं दौहित्रभ्रातृसुतसमवाये मृतस्य विभक्तत्वे दौहित्रस्य बलवत्त्वस्यांशहरणे सत्त्वेऽपि पिण्डादौ स एव बलवान् । अविभक्तत्वे तु भ्रातृसुतानामेवांशहरत्वादपि ।

एवं भ्रातृतत्पुत्रसमवाये तस्य तत्त्वे भ्रातुर्बलवत्त्वात्स्वांशहरत्वेऽपि तत्र तथैव । पत्नीस्नुषादिविषये वाक्यान्युक्तान्येव ।

किंच दंपत्योर्मिथः शरीरार्धत्वात्स्नुषादेः शरीरार्धोपचाराच्छिष्याचार्ययोस्तु पितापुत्रवदुपचारात् । न हि दक्षिणः पाणिरितरस्य पाणेरुपचाराद्विना ऽभ्यङ्गादि करोति । तस्माद्धनलाभं विनाऽप्येतेषां श्राद्धाधिकारः । अर्थहरत्वे तु सुतरां सर्वेषाम् । यस्त्वर्थमादायापि तन्न करोति स शास्त्रातिक्रमकारित्वाद्दण्ड्यो निंद्यः परलोकच्युतश्च । कुर्वतां तु सर्वमिष्टमेव ।

ये तु धनलाभेच्छां विनैव कारुण्यात्स्नेहाद्वा कुर्वन्ति तेषामतिपुण्यम् । अकरणे च न प्रत्यवायः । शास्त्रनियमाविषयत्वात् । तस्मात्पुत्राभावे एव सर्वेषां यथाक्रममधिकारः ।

तथा च **व्याघ्रपात्**—

" पितुः पुत्रेण कर्तव्याः पिण्डदानोदकक्रियाः । पुत्राभावे तु पत्नी स्यादिति । "

**स्मृत्यन्तर**मपि—

" औरसे सति नान्यस्य श्राद्धादेरधिकारिता । तदभावे तु शिष्यादेः शास्त्राणामेष निश्चयः ॥ " इति ।

यदि पुत्रे सत्यप्यन्येषामधिकारस्तदा पत्न्या किं पापमकारि, येनासौ न करोतीति शङ्का स्यात् । इयमेव हिंसा तेषां **ऋष्यशृङ्गेणो**क्ता । तस्मात्तदभावे एव पत्न्यादीनामधिकार इति सिद्धम् ।

तत्र पत्न्यंशेऽपवादः क्वचित्—

" अपुत्रा स्त्री यथा पुत्रः पुत्रवत्यपि भर्तरि । श्राद्धं पिण्डोदकं कुर्याज्जलमकं तु पुत्रिणी ॥ " इति केचित् ।

वस्तुत इदं निर्मूलमिति बोध्यम् । अत्र सर्वत्र वाक्यान्यन्यान्यपि सन्ति । तत्र तावत्—

**बृहस्पतिः**—

" प्रमीतस्य पितुः पुत्रैः श्राद्धं देयं प्रयत्नतः । ज्ञातिबन्धुसुहृच्छिष्यैर्ऋत्विग्भृत्यपुरोहितैः " ॥ इति ।

**प्रचेताः**—

" स्वामिभृत्यकलत्रेषु मातापित्रोर्गुरौ तथा । ऋत्विङ्मित्रे तथा शिष्ये श्राद्धं कार्यं प्रयत्नतः" ॥ इति ।

**वृद्धशातातपः**—

" मातुलो भागिनेयस्य स्वस्रीयो मातुलस्य च । शिष्यश्चैव गुरोः सख्युः सखा मातामहस्य च ॥

" एतेषां चैव भार्याभ्यः स्वसुर्मातुः पितुस्तथा । श्राद्धदानं तु कर्तव्यमिति वेदविदां स्थितिः ॥"

" प्रीत्या श्राद्धं तु कर्तव्यं सर्वेषां वर्णिलिङ्गिनाम् । एवं कुर्वन्नरः सम्यक् महतीं श्रियमाप्नुयात् ॥ "इति ।

" पितुः पुत्रेण कर्तव्यं न कुर्वीत पिता सुते । अतिस्नेहान्न कर्तव्यं सपिण्डीकरणं स्त्रियः ॥ "

" भ्राता वा भ्रातृपुत्रो वा बन्धुर्वा शिष्य एव वा । सपिण्डीकरणं कुर्यात्पुत्रहीने नरे खग ॥ "

इति **गारुडं** च ।

" पुत्रः पौत्रश्च तत्पुत्रः पुत्रिकापुत्र एव च । पत्नी भ्राता च तज्जश्च पिता माता स्नुषा तथा ॥ "

" भगिनी भागिनेयश्च सपिण्डः सोदकस्तथा । असंनिधाने पूर्वेषामपरे पिण्डदाः स्मृताः ॥ "

इत्यन्यत्र चेत्यलमधिकविस्तृतेन । प्रकृतमनुसरामः ॥ १३५ ॥ १३६ ॥

## याज्ञवल्कीये १३७ श्लोकः ।

व्यवहितसंगतिमव्यवहितेनासंभवादाह । **पुत्रा इति । चे**न प्रपौत्रसमुच्चयः । यद्यपि पौत्रप्रपौत्रयोस्तत्त्वं पूर्वं नोक्तं तथापि तत्रैव क्रमो बोध्य इति अत्रैव प्रसङ्गोक्त्या सूचितम् ।

तथा च **मनुविष्णू**—( मनु. अ. ९ । १३८ )

" पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः । तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा " ॥ इति ।

**हारीतोऽपि,**

" पुन्नामा निरयः प्रोक्तश्छिन्नतन्तुश्च नैरयः । तत्रैव त्रायते यस्मात्तस्मात्पुत्र इति स्मृतः " ॥ इति ।

**शङ्खादिरपि,**

" पितॄणामनृणो जायेत् दृष्ट्वा पुत्रमुखं पिता । स्वर्गी स तेन जातेन तस्मिन्संन्यस्यते ऋणम् "॥ इति।

**मनुशङ्खलिखितवसिष्ठहारीता** अपि ( मनु. अ. ९ । १३७ )

" पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते । अथ पौत्रस्य पुत्रेण बध्नस्याप्नोति विष्टपम् "॥ इति ।

" लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः । " इति मूलं च । ( **याज्ञ.** अ. १ । ७८ )

अन्यान्यपि वचांसि प्रागुक्तानि । यद्यपि पौत्रांशे साक्षात्तत्त्वसाधकं **मूलं मानवं** च प्रागप्युक्तमेव तथापि प्रपौत्रांशे उक्तवचांस्येव साधकानि नान्यानि । उपकारकत्वाविशेषादपि[1] तस्य तत्त्वमिति बोध्यम् । क्रमेणेत्युभयत्र बोध्यम् ।

'वानप्रस्थेति' द्वन्द्वोत्तरपदको द्वन्द्वः । उत्तरार्धानुरोधेनैवमुक्तम् । तत्र तथोक्तिफलं तु व्याख्याने एवाग्रे स्फुटम् । 'क्रमेणे'त्यस्य श्रुतक्रमेणेति नार्थः । तथा सति तदुक्तिं विनाऽपि शत्रुमित्यादिवल्लौकिकस्थानाख्यप्रमाणेनैव तस्य सिद्धत्वात् । अत आह । **प्रतिलोमेति** । यद्यपि वानप्रस्थस्याचार्यः सम्भवति 'दीक्षितो गुरुणाऽऽज्ञातो दिशमुपनिष्क्रम्य' इति **वृद्धहारीय**लिङ्गात् ।

"तत्रैवं विधिवद्राजा प्रत्यगृह्णात्कुरूद्वह । स दीक्षां तत्र संप्राप्य राजा कौरवनन्दनः ॥ "

"शतरूपाश्रमे तस्मिन्निवासमकरोत्तदा । तस्मै सर्वविधिं राज्ञे राजा प्राह महामतिः ॥ "

इति **धृतराष्ट्रस्य** तत्त्वे **भारताच्च** । एवं च तत्र दीक्षयिता यः स तदाचार्यः । यतेरपि महावाक्योपदेष्टा सः । "संन्यस्याचार्यमुपतिष्ठेत ब्रह्मजिज्ञासायामिति" **शङ्खात्** । एवं चाचार्यादिचतुर्णां द्वन्द्वे क्रमेणेत्यस्याचार्यक्रमेणेत्यर्थसम्भवः, आदावाचार्यादिस्ततः शिष्यस्ततो धर्मभ्राता तत एकतीर्थीति । अत एव शिष्यसब्रह्मेत्येकवाक्यता । 'वानप्रस्थधनमाचार्यो गृह्णीयाच्छिष्यो वेति' **विष्णु**सङ्गतिश्च, तथापि वानप्रस्थस्य ब्रह्मचारिणश्च शिष्याभावात्तथा व्याख्यानस्यात्रासम्भवः । **वैष्णवे** तु वानप्रस्थेति तयोरप्युपलक्षणम् । चार्थवाशब्देन द्वयोर्ग्रहणम् । क्रमोऽयमेवेति **गूढाशयः** । एतेन तथा व्याख्यानं[2] शङ्खाद्यदर्शनमूलकमित्युपेक्ष्यामिति **भ्रान्ती**यमपास्तम् । अत एव तदुक्तिसङ्गतिरपीति दिक् ।

विशेषमाह । **ब्रह्मेति** । इदमेव विशदयति । **उपकुर्वाणस्येति** । स्वरीत्या आह । **मात्रादय एवेति** । अन्यथा तस्य निर्विषयतापत्तेः अत एवास्योभयापवादत्वम् । अन्यथा ब्रह्मचार्यंशे प्रथमापवादत्वासम्भवः स्पष्ट एवेति भावः । **तदपवादत्वेनेति** । मात्रादिग्रहणापवादत्वेनेत्यर्थः । अन्यथाऽस्य निर्विषयतापत्तेः । वैपरीत्यं तु न । प्रत्यासत्तितारतम्यात् ।

शिष्ये सत्त्वं न विद्यामानत्वं, विपरीतस्य ग्रहणस्यैवासंभवात् इत्यत आह । **सच्छिष्यः पुनरिति** । स त्वित्यर्थः । तत एव योग्यतयाऽऽह । **अध्यात्मेति** । शिष्ये सम्यक्त्वमुपलक्षणतयाऽन्यत्रापि बोध्यम् । अतः अन्यावपि सुवृत्तावेव धनभाजौ । अत एव मूलकृता उभयत्रापि तत्सम्बन्धद्योतनार्थं 'सच्छिष्येति' मध्ये पठितम् इत्याशयेनाह । **दुर्वृत्तस्येति** । **आदिना**ऽग्रिमपरिग्रहः । **अपिना** तस्यैव समुच्चयः ।

यद्वा शिष्यसत्त्वं[3] नादुर्वृत्तत्वमात्रं, तथा सति आचार्यादेरपि दुर्वृत्तस्य भागानर्हत्वस्याविशिष्टत्वेन तस्यैव तत्त्वकथनासङ्गतेः । किं तु योग्यतयाऽध्यात्मश्रवणादिसमर्थत्वमित्याह । **सच्छिष्यः पुनरित्यादिना भागानर्हत्वादित्यन्तेन ।**

---

१ फ–उपकारकत्वात्, अविशेषादपि । २ ख–निर्दा च फ–क–निर्धं च । ३ ख–सत्वेन ।

धर्मभ्रात्रेकतीर्थीत्येकम् । अन्यथा यथासंख्यानापत्तेरित्याह । **धर्मेति** । तत्राद्यार्थमाह । **प्रतिपन्न इति** । भ्रातृत्वेनाङ्गीकृत इत्यर्थः । द्वितीयार्थमाह । **एकाश्रमीति** । वानप्रस्थ एव स्वाश्रमनिकटवासीत्यर्थः ।

" तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु । जलावतारे योनौ चेति " **विश्वाद्युक्तेः** ।

नन्वेवं धर्मभ्रातेत्येवालं, कृतमग्रिमेणेति चेन्न । आचार्यादीनामभावे तेषां सर्वेषां धनं को गृह्णीयादित्याशङ्कानिरासार्थं तदुपादानात् । तथा च तत् पृथक् निमित्तं, न तु तेन समस्तमिति धर्मभ्रात्रन्तेन द्वन्द्वसमासं कृत्वा पुनर्द्वन्द्व इति तत्सर्वान्वयीत्याशयेनाह । **एतेषामिति** ।

मूलायुक्तत्वं शङ्कते । **नन्वनंशा इति** । भागशून्या इत्यर्थः । **आश्रमान्तरेति** । गृहस्थान्येत्यर्थः । ' प्रतिग्रहादीति ' **आदिना** याजनादि । **अनिचय इति** । असंग्रह इत्यर्थः ।

पूर्वपक्षिणा तृतीये विशिष्य असंभवात्तदसम्भवो नोक्त इत्याशयेन तावत्तत्राह । **वानप्रस्थस्येति** । **अह्नः** तन्मात्रभोजनपर्याप्तस्य । एवं सर्वत्र । **षण्णां** मासानाम् । **तथा** तद्वत् । **निचयं** संग्रहम् । यतेरपीत्यस्याग्रेऽन्वयः । एवं श्रौतवचनमुक्त्वा स्मार्त्तवचनमाह । **तथेति** । **योगेति** । योगस्य सामग्रीविशेषानित्यर्थः । तत्प्रतिपादकग्रन्थादीनिति यावत् । ' **आदिना** ' पादुकाकमण्डल्वादि ।

" कौपीनाच्छादनार्थं हि वासो वै बिभृयाच्च सः । "इति पूर्वार्धपाठे क्वचित्के एकमेव वचनम् । **यात्रा** संरक्षणम् ॥ १३७ ॥

## याज्ञवल्कीये १३८ श्लोकः ।

प्राग्वत् पूर्वतो विशेषेणाह **इदानीमिति** । **उक्तस्य** तन्मात्रस्य । अत एवानयोः पौर्वापर्ये । **आहेति** । द्वितीयपादरहितेनेत्यर्थः । संसृष्टिशब्दं निर्वक्तुं संसृष्टशब्दार्थमाह । **विभक्तमिति** । **पुनः** विभागोत्तरम् । कर्मणि तत्र क्तः । **मिश्रीकृतमिति** । 'संसृष्टं धनमुभयं समाकृतमिति ' **श्रुतेः** । यदेकं सदुभौ याति तदुभयम् । विभक्तमिति यावत् । तत्समाकृतं साधारणीकृतं संसृष्टमिति तदर्थः । एवं च प्रत्यासत्त्या ययोर्विभागस्तयोरेव मिश्रणे तत्त्वमिति नान्यविभागेऽन्येन मिश्रणे तत्त्वमिति भावः ।

प्रसङ्गात् विशेषमाह । **संसृष्टत्वं चेति** । तद्धनसंसर्गे तेषामपि संसर्गः सम्पन्न एवेति भावः । सहयोगे तृतीया । यो विभक्तः सन् पुनः पश्चादित्याद्यर्थः । **एकत्र** गृहे । तत्र हेतुमाह । **प्रीत्येति** । **तत्संसृष्ट इति** । तेन संसृष्ट इत्यर्थः ।

अयं भावः । येषामेव हि पितृभ्रातृपितृव्याणां पितृपितामहार्जितद्रव्येणाविभक्तत्वमुत्पत्तितः सम्भवति त एव विभक्ताः सन्तो मिथः प्रीत्या यदि पूर्वविभागनाशेन " यत्तव धनं तन्ममापि यन्मम धनं तत्तवापि " इत्येवम् एकत्र गृहे एकगृहिरूपतया संस्थितास्ते एव तथोच्यन्ते, न पुनरप्येवंरूपाणां तथाकारिणामपि संसर्गित्वम् । नापि विभक्तानां तथा तेषाम् ।

एवं च तत्सम्बन्धित्वमात्रादिनिरासेन पूर्ववत्साधारणोपभोग्यतापादनमेवैकत्र स्थितिः । तच्चोक्तानुमतिरूपमेव । सा च क्वचिद्वाचनिकी, क्वचिदनन्यथासिद्धव्यवहारगम्या ।

"अनुक्त्वाऽपि वचः किञ्चित्कृतं भवति कर्मणा । " इति **विष्णुपुराणात्** ।

एवं च[1] त्रयनियम एव । **मानवम**प्युक्तरीत्या त्रितयपरमेव । अन्यथा भ्रातृमात्रविषयतैव च तस्य स्यात् इति ।

---

१ ख—एवं चायं नियम एव ।

" विभक्ता भ्रातरो ये च संप्रीत्यैकत्र संस्थिताः । पुनर्विभागकरणे ज्यैष्ठ्यं तत्र न विद्यते ॥

" यदा कश्चित् प्रमीयेत प्रव्रजेद्वा कथश्चन । न लुप्यते तस्य भागः सोदरस्य विधीयते ॥

" या तस्य भगिनी सा तु ततोऽशं लब्धुमर्हति । अनपत्यस्य धर्मोऽयमभार्यापितृकस्य च ॥"

इति **बृहस्पतेरा**शयस्तूक्त एव ।

" एतेन पित्रादिगणनं प्रपञ्चार्थं, नान्यपरिसंख्यार्थं, दोषत्रयापत्तेः । सामान्यतो **मनूक्तेर्बृहस्पतेर**नुपपत्तेश्चेति " **भ्रान्तोक्त**मपास्तमिति ।

एवं पदार्थमुक्त्या मूलाद्यपादं ससाधारणोत्तरार्धं व्याचष्टे । **तस्य संसृष्टिन इति ।** तत्र **च**स्त्वर्थे, **मृ**तस्य तु । अंशमित्यस्य व्याख्या **भागमिति** ।

वचनान्तरविरोधपरिहाराय तत्संभवं प्रतिपादयन् तदर्थेन वाक्यार्थं पूरयति । **विभागेति ।** समस्तो व्यस्तो वा पाठः । सति सप्तमी । जातस्येत्यस्यार्थमाह । **उत्पन्नस्येति ।** शेषे षष्ठी । चोऽत्र एवार्थे । उत्पन्नाय पुत्रायैव नान्यस्मै । तत्र **वा**शब्द एवार्थे । दद्यादेव न स्वयं गृह्णीयात् । द्वितीयोऽपि **वा**शब्द एवार्थे व्युत्क्रमे चेत्याह । **संसृष्ट्येवेति ।** अपहरेदित्यस्य व्याख्या **गृह्णीयादिति ।** जातस्येत्याद्युक्त्या नेदमपि प्राग्वदुभयापवादभूतं, किं तु पत्नीत्यादिमात्रापवादभूतम्, अन्यथा तदसंगतिः स्पष्टैवेत्याशयेनाह । **न पत्न्यादीति ।** अत्र मूले एकत्वमविवक्षितम् । अतस्तदनेकत्वे विभज्य ग्रहणं, तत्पत्न्याः पोषणं चेति भावः । अत एव **तु**स्तद्वैलक्षण्ये ।

एतेन **प्राचां** व्याख्यानाभिप्रायो निरस्तः । अयं भावः । यदा संसृष्टिनस्त्रिप्रभृतयः, तदा तेष्वेकस्मिन्भ्रातरि स्वभार्यायां गर्भमाधाय दिवं गतेऽवशिष्टानां जीवतामनेकत्वादग्र ऐक्यासंभवाच्च विभागः प्राप्तः । एकत्वे ऐक्ये च विभागाभावात् । तत्र तत्र विभागकालेऽस्पष्टगर्भत्वेन गर्भाज्ञानेन विभागनिष्पत्तौ कालान्तरे पुत्रे उत्पन्ने तस्मै तत्पित्र्यंशो देयस्तदभावे संसृष्टिव्यक्तिपर्यालोचनेनांशकल्पनया संसृष्टिन एव ।

## १३८ श्लोकस्य ( उत्तरार्धः ) ।

**संसृष्टीत्यस्येति ।** पूर्वपादोक्तस्य द्वितीयपादेनेत्यर्थः । उत्तरार्धं तु साधारणमस्त्येव । अत एवाह । **संसृष्टिनस्त्विति ।** तथा सति संपन्नं वाक्यार्थमाह । **अतश्चेति ।** तदनुवृत्तेरित्यर्थः । संसृष्टिनो मृतस्यांशं धनमिति पाठः । **सोदरः** स एव । **अनु** पश्चात् । अनेन विभागकालेऽस्पष्टगर्भायां विभागोत्तरमिति सूचितम् । **जातस्य** सुतस्य । **पूर्ववदेवेति ।** संसृष्ट्येव गृह्णीयान्न पत्न्यादीत्येवमित्यर्थः । एवं सति अस्य तदपवादत्वमुक्तं नाप्राप्तिं विना न संभवतीति तदर्थं विशेषविषयतया विशदयति । **एवं चेति ।** उक्तसंबन्धेनेत्यर्थः । **सोदरेति ।** उभयसंसर्गे इत्यर्थः ।

अत एव **यमः**—

" अविभक्तं स्थावरं यत्सर्वेषामेव तद्भवेत् । विभक्तं स्थावरं ग्राह्यं नान्योदर्यैः कथंचन ॥ " इति ।

**बृहन्मनुः**—

" एकोदरे जीवति तु सापत्नो न लभेद्धनम् । स्थावरेऽप्येवमेव स्यात्तदभावे लभेत वै ॥ " इति ।

**प्रजापतिरपि**—

" अन्तर्धनं तु यद्द्रव्यं संसृष्टानां च तद्भवेत् । भूमिं गृहं च संसृष्टाः प्रगृह्णीयुर्यथांशतः ॥ " इति ।

'संसृष्टी गृह्णाति स्थावरवर्जं स्थावराणां सपिण्डसमतेति' **वृद्धहारीत**स्तु तथा योज्यः ॥ १३८॥

## याज्ञवल्कीये १३९ श्लोकः ।

उत्तरसङ्गतिमव्यवहितेनाह । **इदानीमिति** । संसृष्टिनीति । भिन्नोदरेण सहेति भावः । **वीक्षायामिति** । विचारे समुत्पन्ने सतीत्यर्थः । जिज्ञासायां सत्यामिति यावत् । उभाभ्यां नियमाभ्याम् । उभयोरपि प्राप्तेरिति भावः । अत एवाह । **विभज्येति । कारणं** पूर्वनियमद्वयसूचितमेव ।

अन्योदर्य इत्यत्र वाक्यचतुष्टयं—विधिः, निषेधः, विधिः, निषेधश्चेति । प्रथमपादेन विधिमाह । **अन्योदर्य इति** । धनं हरेदित्यस्यापकर्षस्तदाह । **धनमिति** । पूर्वतः संसृष्टिन इत्यस्यानुवृत्त्या संसृष्टिनो धनमित्यर्थः ।

अथ द्वितीयपादेन तृतीयपादाद्यार्धसहितेन निषेधमाह । **न पुनरिति** । न त्वित्यर्थः । अतो यन्निष्पन्नं तदाह । **अनेनेति** । पूर्वार्धेनेत्यर्थः । **अन्वयेति** । संसृष्टिनो भिन्नोदरस्य धनहारित्वविधिरूपेणान्वयेन, असंसृष्टिनो भिन्नोदरस्य धनहारित्वनिषेधरूपेण च व्यतिरेकेणेत्यर्थः ।

असंसृष्टीत्येतत् मध्यमणिन्यायेनाग्रेऽपि सम्बध्यते इति तृतीयपादेन पुनर्विधिमाह । **असंसृष्टीत्येतदिति । अतश्च** तत्सम्बन्धाच्च । तदनुवृत्तिः प्राग्वदेवेत्याह । **संसृष्टिन इति** । मूले **वा**शब्दः चार्थे इति भावः । न केवलमेतावदेवैकं वाक्यम् । अपि तु उत्तरपादाद्यपदघटितं प्राग्वदेवेत्याह । **कोऽसाविति** । तत्र संसृष्टार्थं पूर्वोक्तभिन्नमाह । **संसृष्टः एकोदरेति** । एकस्मिन्मातुरुदरे जात इत्यर्थः ।

यत्तु—एतत् पितर्यपि बोध्यम्," पतिर्जायां प्रविशति गर्भो भूत्वेह मातरम् । " इति जायाया अपि मातृत्वस्य **श्रौत**त्वात् ।

एवं च पितुः पुत्रत्वेन सोदरत्वं तद्भ्रातुरपि तत्सोदरत्वात्तत्वं बोध्यमिति असंसृष्ट्यपि पिता पुत्र एवेति तादृशः सोऽसंसृष्ट्यपि पितुस्तद्भ्रातुः परेतस्यान्येन संसृष्टिनो भागं हरेदिति तात्पर्यं संसृष्टपदप्रयोगस्येति केचित् । तन्न । अनिष्टापत्तेः । तदेतत् ध्वनयन्नेवाह । **सोदर इति । यावदिति** । अस्य तात्पर्यार्थमाह । **अनेनेति** । पादेनेत्यर्थः । **असंसृष्टस्यापि**, असंसृष्टिनोऽपि ।

प्राग्वदेवाह । **संसृष्ट इत्युत्तरेणापीति** । तत्र च नाव्यवहितोक्तोऽर्थः अपि तु प्रागुक्त एवेत्याह । **तत्र चेति** । उत्तरवाक्यशेषभूते संसृष्ट इत्यत्रेत्यर्थः । "अर्श आद्यजिति" ( व्या. सू. ५।२।१२७ ) भावः ।

तुर्यपादं व्याख्यातुं प्रतीकं धत्ते । **नान्येति** । मन्वनुरोधेन सर्वं वाक्यमिति न्यायेनाह । **अत्रैवशब्देति** । तथा तस्य तदेवाह । **संसृष्ट्यपीति** । इदं सर्वमनुवृत्तिलभ्यम् ।

उत्तरार्धस्य संपूर्णस्य तात्पर्यार्थं पूर्वप्रतिज्ञातमाह । **एवं चेति** । उत्तरार्धस्योक्तार्थकत्वे चेत्यर्थः । **अवधारणेति** । तन्निषेधादित्यर्थः । असंसृष्टेत्यादि प्राग्वत् । 'कृत्यानामिति' ( व्या. सू. २।३।७१) कर्त्तरि षष्ठी । तत्र हेतुमाह । **द्वयोरपीति । एकैकस्येति** । प्रागुक्तस्यैवेत्यर्थः । भिन्नोदरस्य संसृष्टित्वं धनग्रहणे हेतुः, सोदरस्य तत्त्वमेव हेतुर्न संसृष्टित्वमिति भावः ।

उक्तं द्रढयति । **एतदेवेति । मनु**नेत्यस्य विभक्ता इत्यादि वदतेत्यन्तं विशेषणम् । **इति** इत्यनेन । **प्रक्रम्येति** । सहजीवन्त इत्युक्त्या तत्प्रक्रम इति भावः ।

"**समस्तत्र** विभागः स्याज्ज्यैष्ठ्यं तत्र न विद्यते ।" इति अस्योत्तरार्द्धम् ।

पूर्वं कथमपि विभागेऽपीदानीं सम एव विभागः। 'ज्येष्ठस्य विंश उद्धार' इत्याद्युक्तोद्धारो नास्तीति तदर्थः।

येषामित्यादि **मानवं** व्याचष्टे। **येषामित्यादि**। प्रक्रमादेवाह। **संसृष्टिनामिति**। मिथ इत्यादिः। आद्यन्तयोरुक्तेः न्यायसाम्याच्च मध्यमोऽप्युपलक्षणत्वेन वा विवक्षित इत्याशयेनाह। **मध्यमो वेति**। प्रदानपदोक्तेराधिक्यादाह। **अंशप्रदाने इति**। अत एव च तदुपपत्तिमाह। **सार्वेति**। आद्यादित्वादिति भावः। तथा चांशस्य प्रदानं यस्मिन्निति भावल्युडन्तेन व्यधिकरणबहुव्रीहिणा कालो विवक्षित इति नाधिक्यं तस्येति भावस्तदाह। **विभागेति**। अर्थादाह। **स्वांशादिति**। ततो भ्रंशे हेतुमाह। **आश्रमान्तरेति**। वानप्रस्थादीत्यर्थः। **मौल**मेव हानितो विकल्पमाह। **म्रियेत वेति**। अन्यतरोऽपीति शेषः। अन्यतम इत्यर्थः। उपात्तापेक्षया तथोक्तिः। अपिर्द्यादिसमुच्चये। अस्यैव तात्पर्यमाह। **अत इति**। अलोपादित्यर्थः। तस्यापि तात्पर्यमाह। **न संसृष्टीति**।

सोदर्या इति **मानवं** व्याख्यातुमवतारयति। **तस्योद्धृतस्येति**। **विनियोगमाहेति**। द्वितीयश्लोकेन स एवेति भावः। भ्रातरो ये च संसृष्टा' इत्युत्तरार्धे संसृष्टपदोक्त्याऽत्र तन्मात्रोक्त्या सोदरा असंसृष्टा' अपीत्यर्थलभ्यासंसृष्टा अपीतिपदान्वयेन पूर्वार्धं व्याचष्टे। **तमित्यादिना**। अपिना तेषां संग्रहः। तथा च साधारणमिदम्। आगमनस्यावधिसाकांक्षत्वादाह। **ये देशान्तरगतास्तेऽपि इति**। 'देशान्तरगता अपीति' पाठान्तरम्। सहिता इत्यस्य व्याख्या **सम्भूयेति**। मिलित्वेत्यर्थः। सममित्यस्य व्याख्या **न न्यूनेति**। उत्तरार्द्धार्थमाह। **ये चेति**। **अत्र** चोक्तेर्भ्रातर इत्युक्तेः पूर्वत्र सोदरा इत्युक्तेश्चाह। **भिन्नोदरा इति**। अन्यथा तद्वैयर्थ्यं स्पष्टमेव। **सनाभयः** सहोदर्यः। विभजेयुरित्यस्य व्याख्या **विभज्येति**। सममिति अत्रापि बोध्यम्। क्वचित्त्वत्रापि ततः प्राक् तत्पाठ एव। **तस्य** 'सोदर्या' इत्यस्य।

अत्र भिन्नोदरा भ्रातरः समानजातीया बोध्याः। असमानजातीयभिन्नोदरसंसृष्टिभ्रातॄणां तु चतुस्त्रीत्याद्युक्तक्रमेण विभागः। समशब्दस्य भिन्नजातीयभ्रातृभिन्नसमानजातीयभिन्नोदरभ्रातृविषयत्वेनैव साफल्ये चतुस्त्रीत्येतद्बाधकत्वे मानाभावात्।

**बृहस्पतिरपि**—

"संसृष्टानां तु यः कश्चिद्विद्याशौर्यादिनाऽधिकम्। प्राप्नोति तस्य दातव्यो द्व्यंशः शेषाः समांशिनः॥" इति।

द्व्यंशदानं तदधिकधनप्राप्तौ ज्ञेयम्।

**शंखो**ऽपि प्रागुक्त एव, 'भ्रातॄणामिति।'

**नारदोऽपि**— (अ. १३। २४)

"संसृष्टानां तु यो भागस्तेषामेव स इष्यते। अतोऽन्यथाऽनंशभाजो निर्बीजेष्वितरानियात्॥" इति।

**कात्यायनो**ऽपि—

"संसृष्टानां तु संसृष्टाः पृथक्स्थानां पृथक्स्थिताः। अभावेंऽशहरा ज्ञेया निर्बीजान्योन्यभागिनः॥" इति।

अतोऽन्यथा संसृष्टिनामभावे। निर्बीजेषु संतानरहितेषु संसृष्टिषु तेषां भाग इतरानंशहरानियात्। **अभावे** पुत्रादेरंशहरस्याभावे।

अत्रायं निष्कर्षः। भिन्नोदरसंसृष्टिभ्रात्रभावे सोदराणां मध्ये यः संसृष्टिसोदरः स एव संसृष्टिनः सोदरस्य मृतस्य धनमादद्यात् इत्यादि। भिन्नोदरेषु तु सजातीयासजातीयत्वकृतभेद उक्त एव। यदा

सोदरा असोदराश्च संसृष्टिनस्तदा सोदरा एव गृह्णीयुः। यदा त्वसंसृष्टिनः सोदराः संसृष्टाश्च भिन्नोदरास्तदोक्तरीत्या उभाभ्यां ग्राह्यम् । एतद्वैपरीत्ये तु सोदरैरेव। सोदराणां मध्येऽपि केचित्संसृष्टा नान्ये तदा सोदरत्वसंसृष्टत्वाभ्यां संसृष्टिभिरेवेति ।

यत्तु एकमातृजत्वभिन्नमातृजत्वरूपविशेषेण भ्रातृषु या व्यवस्था दर्शिता सा साक्षात्पितृव्यसापत्नपितृव्येऽपि योज्या, न्यायस्य तुल्यत्वादिति । तन्न। 'सोदरस्य त्विति' विधिवाक्ये सोदरत्वस्याविवक्षायां बीजाभावात्सोदरपदस्य पितृव्योपलक्षकत्वाभावात् । लोकेऽत्यन्तविरुद्धवचनविरोधाच्च न्यायस्य तत्राप्रवृत्तेरिति दिक् ।

एतेन "अपुत्रधनं भ्रातॄणामि"त्युक्तं तत्र विशेषमाह। **संसृष्टिन इति** । सर्वमेकं वाक्यम्। तस्मिन्मृते जातस्य पुत्रस्य दद्यादिति तु प्रासङ्गिकम्। सोदर्यत्वाभावे तु नांशभाक्त्वमिति स्पष्टयति। **अन्योदर्य इति**। यदा त्वन्योदर्य एव संसृष्टी न सोदरस्तदाऽऽह। असंसृष्टचपि इति " **इत्यपरार्कोक्त**मपास्तम् ।

अस्य भ्रातृमात्रविषयत्वे पित्रादिसंसर्गविध्यानर्थक्यापत्तेः । तन्निर्णायकवचनान्तराभावात्। प्रकरणविच्छेदकतुशब्दद्वयवैयर्थ्यात्। 'वानप्रस्थे'त्यादिना तद्विच्छेदात्। सोदर्यनियमादेवान्यव्यावृत्तौ तदुक्तिवैयर्थ्यात्। संसृष्टिसत्त्वेऽप्यसंसृष्टिनोंऽशभाक्त्वे **नारदा**दिविरोधाच्च ।

एतेन "इदानीमि" त्याद्यवतरणं अन्योदर्य इत्यस्य चिन्त्यम्। अतोऽन्यथेत्यादि**नारदादि**विरोधात्। पूर्वान्वितयोरग्रेऽनुषङ्गे संसृष्टपदस्यार्थद्वयकल्पने एवाकाराध्याहारे च प्रमाणाभावाच्च। अनेन अन्वयव्यतिरेकाभ्यामित्याद्यपि चिन्त्यम्। संसृष्टिवाक्यस्य पत्न्याद्यपवादत्वोक्त्यैव तदर्थसिद्धेः वाक्यानर्थक्यात्। पित्रादेरपि संसृष्टित्वे पृथक् अन्योदर्ये तदुक्तिवैयर्थ्याच्च । विभक्ता इति **मनोः** तथा व्याख्यानमपि चिन्त्यम्। तयोर्विशेष्यविशेषणभावेनैव **बृहस्पत्ये**कवाक्यतयाऽर्थान्तरकल्पनाया अन्याय्यत्वात्। चकारात् तथा कल्पने **नारदा**दिविरोधात्। चद्वयस्य द्वन्द्वविग्रहवदुपपत्तेः। विशेषणानर्थक्यं तु न, भगिनीविशेषणवद्भिन्नोदरवारणार्थत्वात् । तस्मात्सापत्नो धनं हरेत्, अन्योदर्यः सोदरः संसृष्टी न चेत्, असंसृष्ट्यपि आदद्यात्, संसृष्टो नान्यमातृजश्चेदिति व्याख्यानमुचितम्" इति **भ्रान्तो**क्तमपास्तम्। आशयानवबोधात् । अत्रांशमिति सामान्योक्त्या स्थावरेऽप्येवम् । अत एव प्रागुक्त**यमा**दिसङ्गतिः। एतेन "अंशमिति सामान्योक्तावपि स्थावरे विशेषो **वृद्धहारीता**द्युक्त" इति **भ्रान्तो**क्तमपास्तम् ॥ १३९ ॥

सङ्गतिमाह। **पुत्रेति**। पुत्रश्च पत्नी च पुत्रपत्न्यौ ते आदी येषां ते पुत्रपत्न्यादयस्ते च संसृष्टी च तेषां त्रयाणामित्यर्थः। आदिभ्यां पौत्रादेर्दुहित्रादेश्च ग्रहणमिति न न्यूनता। एतेन आद्ये उपलक्षणतया व्याख्यानमपास्तम्।

## याज्ञवल्कीये १४० श्लोकः ।

**तस्य** त्रितयस्य। मूले अथशब्दः समुच्चये। **तृतीयेति**। स्त्रीपुंसभिन्नेत्यर्थः। **प्रकृतिः** स्वभावः प्रकार इति यावत्। तथा च स्वाभाविकतत्त्ववतस्तेन ग्रहणम्। तेन कादाचित्ककृत्रिमतत्त्ववतो निरासः।

अत एव **कात्यायनः**—

" न मूत्रं फेनिलं यस्य विष्ठा चाप्सु निमज्जति । मेढ्रं चोन्मादशुक्राभ्यां हीनं क्लीबः स उच्यते इति" ।

**नारदो**ऽपि. ( अ. १३ श्लो. १०।११।१२।१३ )

" यस्याप्सु प्लवते वीर्यं ह्लादि मूत्रं च फेनिलम् । पुमान्स्याल्लक्षणैरेतैर्विपरीतैस्तु षण्ढकः ॥

" चतुर्दशविधः शास्त्रे षण्ढो दृष्टो मनीषिभिः । चिकित्स्यश्चाचिकित्स्यश्च तेषामुक्तो विधिः क्रमात् ॥

" निसर्गषण्ढो बध्रश्च पक्षषण्ढस्तथैव च । अभिशापाद्गुरो रोगाद्देवक्रोधात्तथैव च ॥

" ईर्ष्याषण्ढश्च सेव्यश्च वातरेता मुखेभगः । आक्षिप्तो मोघबीजी च शालीनोऽन्यापतिस्तथा ॥"इति ।

निसर्गषण्ढः स्वभावतो लिङ्गवृषणहीनः । बध्रश्छिन्नमुष्कः । पञ्चदश दिनानि स्त्रियमासेव्य सकृद्भोगक्षमः पक्षषण्ढः ॥ ३ ॥ गुरुशापषण्ढादयस्त्रयः स्पष्टाः ॥ ६ ॥ ईर्ष्यया पुंस्त्वमुत्पाद्यते यस्य स ईर्ष्याषण्ढः ॥ ७ ॥ स्त्र्युपचारविशेषेण पुंस्त्वशक्तिर्यस्य स सेव्यषण्ढः ॥ ८ ॥ वातोपहतरेतस्को वातरेताः ॥ ९ ॥ यस्य मुखे एव पुंस्त्वशक्तिर्न योनौ स मुखेभगः ॥ १० ॥ रेतो निरोधात् षण्ढीभूत आक्षिप्तषण्ढः ॥ ११ ॥ गर्भाधानासमर्थबीजी ॥ १२ ॥ अप्रगल्भतया क्षोभाद्वा नष्टपुंस्त्वः शालीनः ॥ १३ ॥ यस्य भार्याव्यतिरेकेणान्यासु पुरुषभावः सोऽन्यापतिरिति ॥ १४ ॥

क्लीबस्य जनकत्वासंभवादाह । **पतितोत्पन्न इति** । अकृतप्रायश्चित्तोत्पन्न इत्यर्थः । **ग्रहेति** । तादृशा ये ग्रहास्तदावेशस्वरूपैरित्यर्थः । सर्वथा चैतन्यशून्यत्वस्यासंभवादाह । **विकलान्तारिति** । तस्यापि तात्पर्यमाह । **हिताहितेति । नेत्रेन्द्रियेति** । नेत्ररूपेन्द्रियेत्यर्थः । अनेनापि स्वाभाविकमेव तत्त्वं विवक्षितमिति सूचितम् । अत एवाग्रे निरिन्द्रियग्रहणं **मानवे** जात्यन्धग्रहणं च । तादृशरोगस्वरूपमाह । **क्षयादीति** । आद्यशब्देनेति पाठः ।

तेषां निरंशकत्वांशे मानमाह । **यथाहेत्यादिना** । आश्रमान्तराणि नैष्ठिकवानप्रस्थोत्तमाश्रमाः । **क्षेत्रजाः** तदादयः । अत एवैतदन्येषां सामान्येनोक्तिः । **जात्यन्धेति** । जात्या स्वभावेनान्धबधिरावित्यर्थः । **मानवे** तथाशब्दः चार्थे । 'उन्मत्तेति' द्वन्द्वोत्तरपदको द्वन्द्वः । वर्णानुच्चारको मूकः । ननु निरिन्द्रियग्रहणेनैव जात्यन्धपरिग्रहे सिद्धे तदुक्तिर्व्यर्था । न च ब्राह्मणवसिष्ठन्यायेन निर्वाहः । सति गमके एव तन्न्यायविषयत्वात् । अत आह । **व्याध्यादिनेति** ।

पदार्थानुक्त्वा मूलवाक्यार्थमाह । **एते इति** । ननु **मानवादौ** तावन्मात्रोक्त्या मूलस्यापि तत्रैव तात्पर्यमस्तु न भरणे अत आह । **अभरणे त्विति** । 'सर्वेषामिति' शेषे षष्ठी । क्लीबादीनामित्यर्थः । अनंशावित्यग्रिमोऽयम् । **तुरेवार्थे** व्युत्क्रमे च । दातुमेवेत्यर्थः । **न्याय्यं** न्यायप्राप्तम् । शक्त्येत्यनेन न्यूनाधिकभावो निरस्तः । ग्रसाच्छादनमिति समाहारद्वन्द्वः । एवार्थं स्फुटयति । **पतित इति । हि** यतः । अत्यन्तमित्यस्य पूर्ववाक्यान्वयिनोऽर्थमाह । **यावदिति** । एतेन 'शक्त्ये' त्यनेन 'अत्यन्तमिति' विरुद्धमित्यपास्तम् ।

यद्यपि **देवलेन** पतितवर्जं भरणमुक्तं—

" मृते पितरि न क्लीबकुष्ठ्युन्मत्तजडान्धकाः । पतितः पतितापत्यं लिङ्गिदायांशभागिनः ॥

" तेषां पतितवर्जेभ्यो भक्तं वस्त्रं प्रदीयते । तत्सुताः पितृदायांशं लभेरन् दोषवर्जिताः ॥ " इति,

लिङ्गी प्रव्रजितादिः । अत्र निषेधे पतितपदेन तत्सुतोऽपि । पतितोत्पन्नत्वेन पतितत्वात् ।

अत एव **बौधायनः** ( २-२-३८-४१ ) " अतीतव्यवहारान् ग्रासाच्छादनैर्बिभृयुरन्धजडक्लीबव्यसनिव्याधितादींश्चाकर्मिणः पतिततज्जातवर्जमिति, "

तथापि तत् प्रायश्चित्तयोग्यतदिच्छुपरम् । अत एव **मानवे** सर्वेषामिति अत्यन्तमिति चोक्तम् । अत एव तद्विरोधो नेति दिक् । क्वचिद्विशेषमाह । **एतेषामिति** । पतितादीनां स्वाभाविकदोषदुष्टभिन्नानामित्यर्थः । अत एवाग्रे वक्ष्यति । **पतितादिष्विति । दोषप्राप्तौ** अप्रत्याख्येयेत्यादिः । **न पुनः** न तु । अग्रे दोषेत्याद्यनुषङ्गः । तत्रानंशत्वमित्यस्य तत्पर्यावर्तनमित्यर्थः । तदानीं तत्त्वाभावात् । तच्च विशेषणं न तूपलक्षणमिति भावः ।

तत्रापि विशेषमादिपूरणेन सूचितमाह । **विभागोत्तरेति** । 'कालाध्वनोरिति' द्वितीया । विभागात्प्रागेव दोषप्राप्तौ विभागकाले दोषदुष्टस्यापीति शेषः । तथा च स्वाभाविकवत् कृत्रिमदोषेऽपि विभागात्पूर्वं जाते यत्राचिकित्स्यत्वं तत्रैवानंशत्वं नान्यत्रेति निर्गलितमिति तात्पर्यम् । 'औषधादीति' **आदिना** प्रायश्चित्तस्यापि ग्रहणम् । नन्विदं केवलमयुक्तम् । अनन्तरं तेन तन्निरासेऽपि तदानीं तस्य सत्त्वात् । तस्य विशेषणत्वाङ्गीकारात् । अत आह । **विभक्तेष्विति** । मूलोक्तिरेवेयम् । यथा विभागादूर्ध्वमुत्पन्ने पूर्वं तदीयविभागाभावेऽपि स्वरूपोत्पत्त्या धर्मोत्पत्तिः, एवं तदानीं तत्सत्त्वेन तदभावेऽपि विभागोत्तरं तद्दोषविनाशे तत्त्वस्याभावेन योग्यतया तदुत्पत्तिरिति तस्मिन् पुरुषे समानन्यायत्वमित्यर्थः ।

क्लीबेऽसम्भवात्पतितादौ विशेषान्तरमाह । **पतितादिष्विति** । उद्देश्यगतत्वेन तदविवक्षा बोध्या । ऋदन्तानामेव द्वंद्वाभावात् दुहितृशब्दे आनङ् न । **उक्तदोषेति** । पतितत्वादिदोषैर्दुष्टानामित्यर्थः । तत्रापि प्रागुक्तरीतिः सर्वा बोध्या ॥ १४० ॥

सङ्गतिमव्यवहितेनाह । क्लीबादीनामिति । इदं वक्ष्यमाणं प्रतिप्रसवरूपम् ।

## याज्ञवल्कीये १४१ श्लोकः ( पूर्वार्धः ) ।

इदमः प्रक्रान्तार्थकत्वादाह । **क्लीबादीनामिति** । मूले **तुः** वार्थे इत्याह । **वेति** । अन्यादृशदोषशून्यत्वस्य प्रकृतेऽनुपयोगादाह । **अंशेति** । उभयग्रहणफलमाह । **तत्रेति** । तयोर्मध्ये इत्यर्थः । अपिना तस्य समुच्चयः । मूले बहुवचनं क्लीबादिसर्वाभिप्रायम् । अत एव बहुवचनादन्येषां ग्रहणशङ्का नेत्याह । **औरसेति** । अन्यथौरसादय इत्येव ब्रूयात् । **व्युदासार्थमिति** । तथा च तेषामंशाभाव एव । औरससमत्वात्पुत्रिकाऽपि प्राप्नोति । साऽप्यौरसपदे**नैवोपात्ता** ।

## ( उत्तरार्धः )

मूले **वैशब्दः** निश्चये । भर्तृसात्कृता इत्यस्यार्थमाह । **विवाहसंस्कृता भवन्तीति** । तथा च तत्र भूतत्वमविवक्षितमिति भावः । **चशब्दादिति** । व्युत्क्रमणीयादित्यर्थः ॥ १४१ ॥

## याज्ञवल्कीये १४२ श्लोकः ।

साधुवृत्तय इति हेतुगर्भं विशेषणमित्याह । **चेदिति** । तत्फलमेवाह । **व्यभिचारण्य इति** ।

तुर्यपादं सप्रतीकं पूर्वतो विशेषसत्त्वात्पृथक् व्याचष्टे । **प्रतीति** । यद्यपि अव्यवहितत्वान्निर्वास्या इत्येव प्राप्तं तथापि चशब्दबलात् भर्तव्या इत्यस्यापि सम्बन्ध इत्याह । **भरणीयाश्चेति** । नन्वेवं व्यभिचारिणीषु प्रतिकूलासु अनेनोभयं प्राप्तं, तृतीयपादेन तु निर्वासनमेव प्राप्तम् । तत्र हि निर्वास्या इत्यस्य सर्वं वाक्यमिति न्यायेन निर्वास्या एवेत्यर्थः इति मिथो विरोधोऽतआह । **अव्यभिचारिण्यश्चेदिति** । तथा च भिन्नविषयत्वान्न विरोधः । अत एव विभिन्ननिमित्तोक्तिसङ्गतिः । **न पुनः** न तु । अकरणे दोषश्रवणादिति भावः ॥ १४२ ॥

अथ व्यवहितसंगतिमाह। **विभजेरन्निति।** तत्र तदपवादत्वेन 'मातुर्दुहितर' इत्युक्तावपि प्रकारान्तरानुक्त्या न विस्तर इति भावः। **अभिहित इति।** 'औरसो धर्मपत्नीज' इत्यादिना 'अपुत्रा योषित' इत्यन्तेनेति भावः। **अभिधास्यन्** 'अतीतायामि' त्यादिना। **तत्स्वरूपं** स्त्रीधनस्वरूपम्।

## याज्ञवल्कीये १४३ श्लोकः।

**पित्रिति।** अत्र द्वंद्वोत्तरपदकद्वंद्वगर्भो द्वंद्वः। द्वितीयपादस्याग्निसमीपप्राप्तमिति शाब्दोऽर्थः। तत्फलितं वक्ष्यमाण**कातीयानु**रोधेनाह। **यच्च विवाहेति।** नित्यसमासत्वेनास्वद्विग्रहत्वादाह। **अग्नावधिकृत्येति।** अग्निसन्निधावित्यर्थः। एतेन विवाहकाले कन्यादानकालेऽग्निसन्निधौ होमकाले चेति **कातीय**व्याख्यानं कस्यचिदपास्तम्। उपागमनबीजमाह। **मातुले**ति। आदिना पितृव्यभातृष्वस्रादिग्रहणम्।

**अधीति।** अधिवेदनं निमित्तं यस्येत्यर्थः। अधिवेदनं च सत्यां धर्मपत्न्यां रागत एव विवाहान्तरकरणम्। 'तस्य निमित्तम्' इत्यधिकारीयष्ठक् (व्या.सू.५।१।३८)। अत्र मानमाह। **अधीति।** मूलक्कतेति भावः। अत्र आधिवेदनिकं चैवेति **प्राच्य**धृतपाठो न युक्तः। एवशब्दस्य वैयर्थ्यात्। न्यूनतापत्तेः। वचनान्तरविरोधापत्तेश्च। तत् ध्वनयन्नाह। **आद्यशब्देनेति।**

तत्र रिक्थस्य स्त्रीधनत्वे मानं तु 'पत्नी दुहितरश्चैवेति' प्रागुक्तं **मूलं** स्पष्टमेव।

**नारदो**ऽपि (अ. १३। ८)

"अध्यग्न्यध्यावहनिकं भर्तृदायस्तथैव च। भ्रातृदत्तं पितृभ्यां च षड्विधं स्त्रीधनं स्मृतम्"॥ इति।

**कात्यायनो**ऽपि—

'भर्तृदायं मृते पत्यौ विन्यसेत् स्त्री यथेष्टतः। विद्यमानेषु संरक्षेत् क्षपयेत्तत्कुले ऽन्यथा॥" इति।

मृते इति। तदा तदनुमत्यनपेक्षा सूचिता। स्वातन्त्र्यापवादमाह। विद्यमानेष्विति। दुहित्रादिदायादेषु तत्संरक्षेन्न स्वेच्छया व्ययीकुर्यात्। अन्यथा दुहित्राद्यभावे। अत्र मृते स्वातन्त्र्योक्त्या जीवति तन्नेति गम्यते। यथेष्टविनियोगाभावे तत्कुले भर्तृकुले क्षपयेत् विनियोजयेदित्यर्थः।

"**व्यासो**ऽपि,

"द्विसहस्रपणो दायः स्त्रियै देयो धनस्य तु। यच्च भर्त्रा धनं दत्तं सा यथावद्वाप्नुयात्"॥ इति।

इयं संख्या प्रत्यब्दे देये। सकृदेवानेकाब्दपर्याप्तधनदाने तु नेयं संख्या। नापि स्थावरनिषेधः।

"दद्याद्धनं वा पर्याप्तं क्षेत्रांशं वा यदीच्छति।" इति **बृहस्पतेः।**

एतेन—

"पितृमातृपतिभ्रातृजातिभिः स्त्रीधनं स्त्रियै। यथाशक्त्या द्विसाहस्राद्दातव्यं स्थावराद्दते॥"

इति **कातीयम**पि व्याख्यातम्।

एतेन "भर्त्रा प्रीतेनेति" **मन्वा**द्येकवाक्यतया भर्तृदायम् इत्यस्य भर्तृदायम्" इति **प्राच्यानाम्,** "इदं भर्तृदत्तद्विविधजङ्गमसौदायिकविषयं, भर्तृदायोपक्रमात्। एतदग्रिमम् अपुत्रा शयनमिति तु स्थावरविषयम्। एतदग्रिमम् अपुत्रा शयनमिति तु स्थावरविषयम्" इति **भ्रान्तादेश्च** व्याख्यानमपास्तम्। भर्तृदत्तमित्यपि पाठे दोषलेशाभावेन तथा पाठस्य निर्बीजत्वापत्तेः। तावताऽपि **याज्ञवल्क्या**दिविरोधस्य दुष्परिहरत्वात्। अत्रापि वचनान्तरैकवाक्यतायाः सत्त्वस्योक्तप्रायत्वाच्च। तदाशयस्योक्तत्वाच्च।

संविभागलब्धस्यापि तत्त्वे मानं तु— '

"यदि कुर्यात्समानंशान्पत्न्यः कार्याः समांशकाः । न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा"॥ इति—

"पितुरूर्ध्वं विभजतां माताऽप्यंशं समं हरेत् ।" इति "दत्ते त्वर्धांशहारिणीति" च **मूलं** प्रागुक्तमेव । क्रयादिलब्धस्य तत्त्वं तु सामान्यतो लोकप्रसिद्धमेव ।

**देवलो**ऽपि—

"वृत्तिराभरणं शुल्कं लाभश्च स्त्रीधनं भवेत् । भोक्त्री तत्स्वयमेवेदं पतिर्नार्हत्यनापदि"॥ इति ।

सर्वत्र मानं तु स्वत्वकारकहेतूनामष्टानां परिगणनपरो **गौतम** एव ( अ. १० सूत्र ३९–४२ )

"स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु । ब्राह्मणस्याधिकं लब्धम् । क्षत्रियस्य विजितम् । निर्विष्टं वैश्यशूद्रयोरिति ।"

इदं च प्राग्व्याख्यातम् । स्वत्वस्य स्वत्वहेतूनां च लोकप्रसिद्धत्वेन शास्त्रैकसमधिगम्यत्वाभावेऽपि गौतमवचनं नियमार्थमित्यपि प्रागुक्तमेव ।

एवं पदार्थानुक्त्वा वाक्यार्थमाह । **एतदिति** । एकादशधोक्तं सर्वमित्यर्थः । अप्रामाण्यशङ्कानिरासाय साकांक्षमेवाह । **मन्वादिभिरिति** । यत्तु षड्विधं स्त्रीधनमिति **मनो**स्तत्परिगणितेषु षट्स्वश्वकर्णादिवत्त्रूढ एव स्त्रीधनशब्द इति त्वदाद्यशब्देन कथं तेषां परिग्रह इति केश्चिदुक्तम् । तन्न । वचनान्तरविरोधाच्छिष्टाचारविरोधाच्च । तस्माद्यौगिक एवायं दृष्टान्तवैषम्यादित्याह । **स्त्रीधनेति । च**स्त्वर्थे । एवमग्रेऽपि । **योगेति** । अक्लृप्तेति न्यायात् । न च रूढिर्योगमिति न्यायेन वैपरीत्यं शङ्क्यम् । लब्धात्मिकाया एव रूढेस्ततः प्राबल्यस्य न्यायविषयत्वात् । एवं चालब्धात्मकरूढितो योगस्यैव प्राबल्यमिति भावः ।

किञ्चास्य तथात्वे पुरुषधनशब्दे स्त्रीपुरुषधनशब्दे मातृधनशब्दे पितृधनशब्देऽपि तथा वक्तव्यत्वापत्तेः । तद्वदत्रापि निर्वाहाच्च । सौदायिकं धनं प्राप्येत्यनेन योगस्यैव बोधनाच्च । न चैवं पुरुषधनादिवदेतस्याप्यकथनमेवोचितामिति वाच्यम् । तस्या अस्वान्तन्त्र्येणार्जनाद्यनधिकाराद्धनाभावेन मातृधनं दुहितृगामीत्यस्यासङ्गतिनिरासाय **मनू**क्तस्त्रीधनषट्त्वस्य न्यूनतानिरासे तात्पर्यमिति सूचयितुं मूलकृदादिभिर्बहुभिर्मुनिभिर्बहूनि तान्युक्तानीति दिक् ।

नन्वेवं **मनु**विरोधोऽत आह । **यत्पुनरिति** । यत्त्वित्यर्थः । एवमग्रेऽपि । 'भ्रातृमातृ' इत्यत्रोभयत्र शाकपार्थिवादिसमासः । अत एवानङ् न ।

मूलवचनान्तरानुरोधेनाह । **तत्र्यूनेति** । युक्तं चैतत् । अन्यथा हि षड्विधमध्येऽपि मूलतो **मानवे नारदीये** च प्रागुक्ते विशेषस्य सत्त्वेन तत्रातिविरोधदार्ढ्यमेव ।

किं च तेनापि तदग्रे एवान्वाधेयं च यद्दत्तमित्यादिना तदधिकमुक्तमिति तस्यापि मिथोऽन्यथा विरोध एवेति ।

**अभिहितमिति । मानवो**क्तक्रमेणेति भावः । **स्त्रीभ्यः** कन्याभ्यः । प्रकृतत्वात् । **हि**शब्दः निश्चये । तत् दानेन तदीयत्वात् स्त्रीधनं अध्यग्निकृतमित्येवं सद्भिः परिकीर्तितमित्यन्वयः । एवमग्रेऽपि । **पुनस्त्वर्थे** उक्तवैलक्षण्ये । अध्यावहनं ततो नयनं तदस्ति हेतुत्वेन **यस्येति 'अत इनिठनौ'** ( व्या. सू. ५।२।११५ ) इति ठन् । **नाम**शब्दः निश्चये ।

प्रीतिदत्तं द्विविधं, प्रथमदर्शने प्रीत्या पादवन्दननिमित्तकं, तदुत्तरं सेवया प्रीत्या दत्तं च। तत्रादौ द्वितीयमाह। **प्रीत्येति**। आद्यमाह। **पादेति**। तत्प्रीतिदत्तमेवोच्यते इत्यन्वयः। अनेन **मानवे** ‘प्रीतिकर्मणीति’ समाहारद्वन्द्वात्सप्तमी। कर्म च पादवन्दनमेव। संख्याविरोधस्तूक्तरीत्या नेति बोध्यमिनि सूचितम्। भ्रातृप्राप्तमाह। **ऊढयेति**। यद्यपि कन्याशब्द ऊढायामप्यक्षतयोन्यां तथापि तत्साहचर्यादनूढापर एवात्र। ऊढया पत्युः सकाशाल्लब्धं भ्रातुः सकाशात्पित्रोर्वा सकाशाल्लब्धं वा। अथवा कन्ययाऽपि पितृगृहे स्थितयाऽपि वाऽन्यत्रस्थितया वा भ्रातुः पित्रोर्मातापित्रोः सकाशाद्यल्लब्धं तत्सर्वं सौदायिकं स्मृतमित्यर्थः। सुदाय एव सौदायिकं, स्वार्थिकष्ठन्। स्वदायतो लब्धमिति वा। स्वदायसम्बन्धिभ्यो लब्धमिति तु प्राञ्चः। पूर्वं रिक्थपदार्थस्तु एतदन्यो ग्राह्यः॥१४३॥

## याज्ञवल्कीये १४४ श्लोकः।

**किं चेति**। अन्यदपि स्त्रीधनं मूलकृदाहेत्यर्थः। अत एव मूले **तथेति** उक्तवदित्यर्थः। प्रकृतत्वादनूढावस्थायां दत्तस्यैव तत्त्वाच्चाह। **कन्याया इति**। ‘भ्रातृबान्धवयोर्बन्धुरिति’ **कोशे**ऽपि भ्रातुः प्रागुपादानादाह। **मात्रिति**। स्वसमानत्वादात्मबन्धूनामग्रहणम्। **यदिति**। तथाचार्षासुरादिविवाहविषयमिदम्। अत एव **गौतमीयं** ( अ. २८ सू. १३।२४ ) “भगिनीशुल्कं सोदर्याणामूर्ध्वं मातुः। पूर्वं चेके” इति वक्ष्यमाणं भगिनीशुल्कं आसुरादिविवाहोढाया भगिन्या धनमिति **कल्पतरुणा** व्याख्यातम्। वृत्त्यपेक्षो विकल्पः।

**कात्यायनेन** त्वन्यथैतदुक्तं—

“गृहोपस्करवाह्यानां दोह्याभरणकर्मणाम्। मूल्यं लब्धं तु यत्किंचिच्छुल्कं तत्परिकीर्तितम्”॥ इति।

गृहादिकर्तॄणां शिल्पिनां तत्तत्कर्मकरणाय भर्त्रादिप्रेरणार्थं तस्यै यद्दानं तच्छुल्कम्। तदेव मूल्यं प्रवृत्त्यर्थत्वात् इत्यर्थः। गृहं प्रसिद्धम्। उपस्कर उलूखलादिः। वाह्यो वृषादिः। दोह्यो गवादिः। आभरणं प्रसिद्धम्। कर्मिणामिति पाठे ते दासाद्याः, तदा एतेषां मूल्यं यल्लब्धं तच्छुल्कमित्यर्थः।

**व्यासेन** त्वन्यथैतदुक्तम्—“यदानीतं भर्तृगृहे शुल्कं तत्परिकीर्तितम्” इति।

भर्तृगृहगमनार्थमुत्कोचादि यद्दत्तं तदित्यर्थः। इदं चोभयं ब्राह्मादिष्वप्यविशिष्टम्। अन्वाधेयके स्वार्थे कन् इत्याशयेन योगार्थमाह। **परिणयनादिति**। आधेये भूतत्वं विवक्षितमित्याह। **आहितमिति**। तदर्थमाह। **दत्तमिति**। मूले एवशब्द एतदन्यव्यवच्छेदे।

तृतीये मानमाह। **उक्तं चेति**। स्पष्टोऽर्थः। **भर्तृकुलात्**, श्वशुरादेः। **पितृकुलात्**, मातापितृकुलात्। अन्यदपि तत्तेनैवोक्तम्।

“ऊर्ध्वं लब्धं तु यत्किंचित्संस्कारात्प्रीतितः स्त्रिया। भर्तुः पित्रोः सकाशाद्वा अन्वाधेयं तु तद्भवेत्”॥ इति।

ततः प्रीतिप्रयुक्तोऽत्र विशेषः।

मूलस्य साकांक्षात्वात्तथेत्यनेन सूचितमेवाह। **स्त्रीधनमिति**।

अत एव **विष्णुः**,

“पितृमातृसुतभ्रातृदत्तमध्यग्न्युपागतम्। आधिवेदनिकं बन्धुदत्तं शुल्कान्वाधेयकम्”॥ इति।

“प्राप्तं शिल्पैस्तु यद्वित्तं प्रीत्या चैव तदन्यतः। भर्तुः स्वाम्यं तदा तत्र शेषं तु स्त्रीधनं स्मृतम्”॥

इति **कातीयं** तु महानिबन्धेषु **मिताक्षरा**दिष्वदर्शनान्निर्मूलम् । सत्वेऽपि वा तदेत्युक्तिसाफल्याय च भर्तरि जीवति उभयविषयमात्रे तस्य स्वाम्यस्य विद्यमानत्वान्न तस्याः स्वाम्यम् । अन्यत्सर्वं तस्या एव । उभयमपि भर्तुरभावे तस्या एवेत्यर्थे पूर्वैकवाक्यतैव ।

यद्वा । भर्तरि जीवत्यपि वक्ष्यमाणदुर्भिक्षाद्याशयकम् । तदा दुर्भिक्षादौ शेषं दुर्भिक्षाद्यभाववदित्वर्थात् । अत एव सौदायिके सदा स्त्रीणामित्यत्र सदेत्युक्तम् । तत्रापि सदेति पाठे तु भर्तुरित्यस्य मध्यमणिन्यायेनान्वयात् भर्तुः शिल्पैः तन्तुवायादिस्त्रीभिर्यद्वस्त्रवयनादिना प्राप्तं भर्तुः प्रीत्या च यदन्यैर्दत्तं तत्र भर्त्तुः स्वामित्वमित्यर्थः । युक्तः चैतत् । अन्यथा स्वार्जनस्य स्वत्वानापादकत्वापत्तेरिति ।

एवमन्योऽपि स्त्रीधनत्वापवादः ।

तथा च **कातीयम्**,

"तत्र सोपाधि यद्दत्तं यच्च योगवशेन वा । पित्रा भ्रात्राऽथवा पत्या न तत्स्त्रीधनमिष्यते" ॥ इति । उत्सवादौ शोभा उपाधिः । संभोगाद्यर्थं छलं योगः ।

स्त्रीणां सर्वथाऽस्वातन्त्र्यस्य पूर्वमुक्तत्वात्स्वधनव्ययेऽपि भर्त्राद्यनुमतिरपेक्षिता सति संभवेऽनापदि । अत एव तदस्तु पारतन्त्र्यं धनस्वीकारे को विरोध इति पूर्वं **मिताक्षरा** । सौदायिके तु न तथा ।

तथा च **कात्यायनः**,

"ऊढया कन्यया वाऽपि पत्युः पतिगृहेऽपि वा । भ्रातुः सकाशात्पित्रोर्वा लब्धं सौदायिकं भवेत् ॥

"सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते । यस्मात्तदानृशंस्यार्थं तैर्दत्तं तत्प्रजीवनम् ।

"सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्तितम् । विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि" इति ।

एतदग्रे भर्त्तुर्दायमिति, ततोऽग्रे अपुत्रा शयनमिति च पूर्वोक्तपाठः । 'सदे'त्यस्य भर्त्तरि जीवत्यजीवति वेत्यर्थः । आनृशंस्यमनुकम्पा तन्निमित्तम् । प्रजीवनं जीवनप्रकर्षाधायकम् ।

एतेन सौदायिकमिति स्त्रीधनमात्रोपलक्षणं, यस्मात्तदिति हेतोः सर्वत्र सत्त्वादिति **भ्रान्तो**क्तमपास्तम् । आपद्यनापदि वेत्यर्थः । अत एवाग्रेऽन्यथोक्तिर्दायांशे ।

स्थावरे तु भर्तृदत्तमात्रे न स्त्रिया दानाद्यधिकारः । 'भर्त्रा प्रीतेन यद्दत्तमिति' प्रागुक्त**नारदात्** । एतेन 'मृते भर्त्तरीति' प्रागुक्त**कातीयमपि** व्याख्यातम् । तद्दत्तस्थावरान्यस्थावरं श्वशुरादिदत्तं तु देयमेव । उक्त**कातीयात्** ।

"स्थावरादिधनं स्त्रीभ्यो यद्दत्तं श्वशुरेण तु । न तच्छक्यमपाहर्तुं पुत्रैरपि हि कर्हिचित् ॥"

इति **बृहस्पतेश्च** । अन्यथा मिथो विरोधः ।

न च स्त्रिया दाने नाधिकार इति वाच्यम् । श्रुतिस्मृतिपुराणादौ बहुशो व्रतेष्टापूर्त्तादौ तत्प्रतिपादनात् ।

"पितृभ्यां यस्य यद्दत्तं तत्तस्यैव धनं भवेत् ।" इति पूर्वं **मूलोक्तेः** स्वत्वाभावे परस्मै दानेऽनधिकारेण तदसङ्गतेश्च । कथं चित् कृतेऽपि चौर्यदण्डापत्तेश्च । अनुमत्या कृते फलाभावापत्तेश्च । भर्तृदानस्यापि पुराणे प्रसिद्धत्वाच्च । दुर्भिक्षाद्यन्यत्र तु न कस्यापि तद्धनग्रहणेऽधिकारः ।

तथा च **कात्यायनः**,

" न भर्ता नैव व सुतो न पिता भ्रातरो न च। आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः॥
" यदि ह्येतकरो ह्येषां स्त्रीधनं भक्षयेत् बलात्। स वृद्धिं प्रतिदाप्यः स्याद्दण्डं चैव समाप्नुयात्॥
" तदेव यद्यनुज्ञाप्य भक्षयेत्प्रीतिपूर्वकम्। मूलमेव तदा दाप्यो यदा स धनवान्भवेत्॥
" अथ चेत् स द्विभार्यः स्यान्न च तां भजते पुनः। प्रीत्या विसृष्टमपि चेत्प्रतिदाप्यः स तद् बलात्॥
" ग्रासाच्छादनवासानामुच्छेदो यत्र योषितः। तत्र स्वमाददीत स्त्री विभागं रिक्थिनां तथा॥ "इति।

एतेन " अनियतसंख्यस्त्रीधनमङ्गीकृत्य षट्त्वसंख्याया अविवक्षामुक्त्वा वचनानाम् स्त्रीधनकीर्तनमात्रपरत्वमङ्गीकृत्य यत्प्रजल्पितं प्राच्यैः तदेव च स्त्रिया धनं यत् भर्तृतः स्वातन्त्र्येण ददाति विक्रीणीते भुङ्क्ते च तदिदं किञ्चित्संक्षिप्य **कात्यायनेनोक्तं** 'प्राप्तं शिल्पैस्त्विति' तेन न तत् स्त्रीधनं सौदायिकं तु तथा " इति तदपास्तम्। अनेकवचनविरोधापत्तेः। **कातीया**शयस्योक्तत्वाच्चेति दिक्।

तदित्यस्य व्याख्या पूर्वोक्तमिति। सर्वमित्यर्थः। अप्रजसीत्यसिजन्तम्। तदर्थः। **अनपत्यायामिति।** कन्यादौ मात्रवयवान्वयबाहुल्यात्तस्यापि स्पष्टमर्थं प्रागुक्तस्य 'मातुर्दुहितर' इत्यस्यानुरोधेनाह। **दुहित्रिति।** एतत्पञ्चकराहितायामित्यर्थः। अन्यत्र बान्धवशब्दस्य बन्धुत्रयपरत्वेऽपि प्रकृते वक्ष्यमाणानुरोधेनान्यार्थपरत्वमित्याह। **भर्त्रादयो वक्ष्यमाणा इति।** अनुपदमेवेति शेषः। विधिर्न विवक्षित इत्याह। **गृह्णन्तीति**॥ १४४॥

सङ्गतिमाह। **सामान्येनेति।** भर्त्रादित्वसामान्येनेत्यर्थः। **अधिकारिभेदमिति।** तथा च पूर्वव्यवस्थापकमेवाग्रिममिति भावः। एतेनातीतायामित्यर्धं बन्धुदत्तमित्यनेन पूर्वत्रानन्वितेन सम्बद्धमित्यपास्तम्। मध्ये पाठासाङ्गत्याद्यापत्तेः।

## याज्ञवल्कीये १४५ श्लोकः।

**पूर्वोक्तायाः।** दुहित्रादिपञ्चकरहितायाः। तस्याः ब्राह्मादिना धनसम्बन्ध इत्याह। **ब्राह्मेति।** सप्तम्युपपत्तये आह। **भार्यात्वमिति।** प्रकृतत्वादाह। **अतीताया इति।** तत्रार्षः समासो लुप्तविभक्त्यन्तं तत् पृथक् वा पदमिति भावः। तत एव धनमपि न यत्किञ्चिदित्याह। **पूर्वोक्तम् इति।** सर्वमित्यर्थः। भर्तुरेकस्योपादानादाह। **प्रथममिति।** मात्रा स्वस्रा वा तदग्राह्यमिति। **पैठीनसिर**प्येवम्। एतेन ' स्त्रीधनं भर्ता इति पाठाभिप्रायेणेयं मे पुत्र इत्येतत्पुत्रशेषपरमिदं, **मानवं** तु 'अस्यां यो जायते पुत्र' इत्येतत् पुत्रिकापरम् " इति **भ्रान्तोक्त**मपास्तम्। **कल्पतर्वादिविरोधात्।**

व्युत्क्रमेणापिना समुच्चयमाह। **तदभावे इति।** तदधिकारितावच्छेदकं प्रागुक्त**मन्वादे**राह। **तत्प्रत्यासन्नानामिति।** पाठक्रमादार्थक्रमो बलीयानिति न्यायेनाकांक्षत्वात्तस्योभयशेषत्वाच्चाह। **शेषेष्विति।** उक्तान्यत्वादाह। **आसुरेति।**

अत एव **मनुरपि,** (अ. ९। १३५)

" अपुत्रायां मृतायां तु पुत्रिकायां कथं चन। धनं तत्पुत्रिकाभर्ता हरेतैवाविचारयन्॥ " इति।

यद्यपि,

" ब्राह्मदैवार्षगान्धर्वप्राजापत्येषु यद्वसु। अप्रजायामतीतायां भर्तुरेव तदिष्यते॥ "

---

१ केश्चित् बन्धुदत्तनिमित्यादिकम् अतीतायामित्यादौ योजयित्वा परिणयनानन्तरं बन्धुदत्तादिकं बान्धवा भ्रातरो गृह्णन्तीति व्याख्याते, तद्दूषयति। अन्वयेति.

इति **मानवै**कवाक्यता मूलस्थयथाश्रुतापिना गान्धर्वसमुच्चयात्सम्भवति तथाऽपि ब्राह्मादिषु चतुर्षु विवाहेषु अप्रजायामतीतायां तद्भर्तुः शेषेषु च 'पिता हरे'दिति **विष्णुविरोधात्** तथा नापेर्थं इति । **मानवे** गान्धर्वग्रहणं विकल्पार्थमेवेति प्राञ्चः । तदित्यस्यार्थः **अप्रजःस्त्रीति** । पितृशब्दे प्राग्वदेकशेषोऽभिमत इत्याह । **माता चेति** । तत्र क्रमोऽपि प्रागुक्त एवेत्याह । **एकेति** ।

अत एव **कात्यायनः—**

"आसुरादिषु यल्लब्धं स्त्रीधनं पैतृकं स्त्रिया । अभावे तदपत्यानां मातापित्रोस्तदिष्यते ॥" इति ।

इदमुपलक्षणमित्याह । **तदभावे इति** । उभयाभावे यथाक्रमं उभयप्रत्यासन्नानामित्यर्थः ।

सर्वशेषं तृतीयपादं व्याचष्टे । **सर्वेष्वपीति** । सर्वेष्वेवेति पाठान्तरम् । एवोऽन्यतरकोटिव्यवच्छेदे तदा ।

अत एव विवाहेष्वित्यनुवृत्तौ **विष्णुः—** "सर्वेष्वेव प्रसूतायां यद्धनं तद्दुहितृगामीति ।" मध्यपठितस्य दुहितॄणामित्यस्य काकाक्षिगोलकन्यायेनोभयत्रान्वयं मुन्याभिमतमभिसन्धाय तथैवाह । **प्रसूतेति** । प्रसूतं प्रसवस्तदस्यास्तीति प्रसूतेत्यर्शआद्यचाऽर्थ इति भावः । तथा च दुहितॄणां प्रसूतवती चेत् दुहितॄणां तद्धनं भवतीत्यर्थः । अन्यथा तु भर्त्रादेरिति भावः ।

विशेषमपौनरुक्त्यायाह । **अत्रेति** । श्लोके इत्यर्थः । **दुहित्रिति** । कन्यायाः कन्या इत्यर्थः । अत्र बीजं तदेवाह । **साक्षादिति । इत्यत्र** तत्रैव । तथा सति प्रागुक्तानुरोधादिनैवात्रादितः क्रममाह । **अतश्चेति** । तासामपि तत्त्वे चेत्यर्थः । **वृत्तायां** मृतायाम् । **दुहितरः** साक्षात् । अत्रापि तथैवेति सूचयन्प्रागुक्तमेवाह । **तत्र चेति** । तासां मध्ये चेत्यर्थः । **अनूढा** सैव । एवमग्रेऽपि । **तत्रापि** परिणीतामध्येऽपि ।

द्वितीयपक्षोक्तोढानां प्राप्तमेवेत्याशयेनाह । **तत्र चशब्दात्प्रतिष्ठितानामिति । गौतमीये** इत्यर्थः । स्वोक्तशुल्के विशेषमाह । **एतच्चेति** । 'मातृधनं दुहितृगामी' त्युक्तं चेत्यर्थः । **शुल्कं तु** तद्रूपं स्त्रीधनं तु । तद्दाने तद्ग्रहणस्य निमित्तत्वात्तस्य स्त्रीधनत्वम् । **भगिनीशुल्कमिति** । व्याख्यातम् । **ऊर्ध्वमिति** । मातुर्मरणादनन्तरमित्यर्थः । **कल्पतरु**रप्येवम् । अस्य वाक्यशेषोऽपि प्रागुक्तः । माता चात्र भगिन्येव । तथा च तद्रूपमातुरभावे दुहित्रादिषु पौत्रपर्यन्तेषु सत्स्वपि स्वभगिनीशुल्कं सोदरा एव गृह्णीयुरित्यर्थः ।

**एवेन** दुहित्रादिव्यवच्छेदः । तथा च तदभावे तेषाम् । एतेन ऊर्ध्वमित्यस्य सोदर्याणामभावे इत्यर्थमभिप्रेत्यादौ तेषां ततो मातुस्तदुभयाभावे पितुर्वक्ष्यमाण**बौधायनात्** तत्र हि रिक्थं शुल्कम् इति **भ्रान्तोक्त**मपास्तम् ।

ननु यदा अनेककन्यानां मृतानां वैषम्येण कन्यास्तदा तासां मातामहीधने कथं विभागकल्पनेत्याशङ्कायामनेकपितृकाणामित्यनेन पौत्राणां पैतामहधनविषये उक्तमेव न्याय्यं स्मरन्नाह । **तासामिति** । कन्याकन्यानामित्यर्थः । अत्र वचनप्याह । **प्रतीति** । **वाशब्द** एवार्थे । **स्ववर्गे** दौहित्रीवर्गे । **प्रतिमातृ** मातरि मातरि । स्वस्वमातृविषये । भागविशेषस्तत्कल्पना कर्तव्या न स्वस्वरूपापेक्षयेति । इदमुक्तरीत्याऽन्यत्रापि स्थलविशेषे बोध्यम् ।

नन्वेवं भ्रातृतत्पुत्रसमवाये उक्तप्रकारस्यात्राप्यापत्तिरत आह । **दुहितृदौहित्रीणामिति ।** दुहितरश्च दुहितृकन्याश्च तासामित्यर्थः । किञ्चिदेवेत्यनेन मातृद्वारकभागकल्पनस्य सर्वथा तदभावस्य च निरासः । **तासां** प्रागुक्तकन्यानाम् । जनन्यामित्यग्रिममिदम् । अग्रे शेषे षष्ठी । **यथार्हतः** यथायोग्यम् । द्रव्याल्पत्वबहुत्वादियोग्यतानुसारेण । सार्वविभक्तिकस्तसिः ।

**मातुरिति ।** अत्राभावे इति दुहितॄणामिति च यथेष्टमन्वेति । तदन्वय इति च तन्त्रेण सप्तम्यन्तं प्रथमान्तं च । भजेरन्नित्यस्य चानुवृत्तिः । तथा च मातुरभावे तद्धनं साक्षात् दुहितरो गृह्णीयुः, दुहितॄणामभावे तदन्वये दुहितृसन्तानमध्ये आदौ दुहितॄणां दुहितरस्तदभावे तदन्वयो दुहितॄणामन्वयो दौहित्र इत्यर्थः । तथा च तदन्वय इत्युक्त्या पुत्रीसन्तानरूपाणां दौहित्राणां ग्रहणम्, अन्यथा तदुक्तिर्व्यर्थैव स्यात् ।

यद्वा तदन्वये इति सप्तम्यन्तपाठ एव । मातुर्धनं दुहितर आप्नुयुः, अभावे तदभावे दुहितॄणां तद्दुहितॄणां, तदभावे तदन्वये ये जाता दौहित्रास्तेषामित्यर्थः । प्रथमान्तमात्रपाठेऽप्येवम् । अग्रे यथायोग्यक्रियाध्याहारः पक्षद्वयेऽपि । तदन्वया इति प्रथमाबहुवचनान्तपाठस्तु युक्ततरः । तदाऽऽद्यैव व्याख्या च ।

ननु तच्छब्देन, मातृपरामर्शः कन्याकन्यापरामर्शो वा कुतो नेति चेन्न । आशयानवबोधात्[1] । तथाहि । मातुरभावे दुहितरस्तासां दुहितॄणामभावे तदन्वय इत्येतावन्मात्रं हि मूलोक्तसमं अभिमतं स्यात्तदाऽऽद्यपक्षो भवेत्, न तु तथा । दुहितॄणां दुहितर इत्यन्यतरस्यानतिप्रयोजनकत्वापत्तेः । मूलवत्तद्विनैव निर्वाहे तत्पदाधिक्यापत्तेश्च । द्वितीये पक्षद्वयविधेयत्वेन प्राधान्यस्य द्वितीये पाठसंनिधेश्च सत्त्वेऽपि आद्ये पाठसंनिधेः पक्षद्वयेऽपि आर्थसन्निधेरवयवसंनिधेश्चासत्त्वाद्दौहित्रापेक्षया दौहित्रीसन्ततेर्विप्रकृष्टत्वात् । तदाह—

**तच्छब्देन संनिहितेति ।** यदीयं धनं तत्संनिहितेत्यर्थः । अत एव तत्पदसार्थक्यम् । अत एवोक्त**नारदं** विहायाह । **ताभ्य इति । मूले** एवेति भावः ।

“ दुहितॄणामभावे तु रिक्थं पुत्रस्य तद्भवेत् । ” इति **कातीयम**प्येवंपरम् इत्याशयिकैव **मनू**क्तिरिति । अत्र तत्संमतिमप्याह । **मनुरपीति । सम्बन्धं** तन्मात्रं न तु क्रमं नापि समुच्चयमिति भावः । **संस्थितायां** मृतायाम् । शब्दतः समुच्चयप्रतीतेरभिमतं **मन्वर्थ**माह । **मातृकमिति ।** तत आगतमित्यर्थः । **सनाभयः** सोदर्याः ।

ननु शब्दतः प्रतीयमानः परोक्त एकान्वय एवास्तु किं भिन्नान्वयेन अत आह । **न पुनरिति ।** न त्वित्यर्थः । **सम्भूय** मिलित्वा । समं भजेरन्निति पाठः । सम्बन्ध इत्यस्याग्रेऽनुषङ्गः । तत्र हेतुमाह । **इतरेतरेति ।** द्वन्द्वैकशेषयोरभावादित्यर्थः । इतरेतरयोगे मिलितस्यैकधर्मावच्छिन्नेतरान्वयः । मेलनं च समूहरूपता । समूह एव चेतरेतरयोगपदवाच्यः । अत एव तद्विग्रहवाक्ये चद्वयादिप्रयोगः । तेन ह्यन्योन्यस्मिन्नन्योन्यसाहित्यं गम्यते । तेन समूहरूपतासिद्धिः । अत एव । चैत्रश्च मैत्रश्च पचत इत्यादौ नित्यद्विवचनाद्यन्ताख्यातप्रयोग एव । एकैकत्वेन द्वित्वादेर्विरोधेऽपि समूहबुद्धिविषयगतनानैकत्वैरविरोधात् । तस्य प्रतीतिर्हि द्वन्द्वे एकशेषे च भवति । यथा द्वन्द्वे धवखदिरपलाशा इति, सजातीयैकशेषे वृक्षा इति, विजातीयैकशेषे भ्रातराविति भ्रातृपुत्रावित्यनेन[2], न तु तथा प्रकृतेऽस्ति भ्रातृभगिन्य इति अपत्यानीति भ्रातराविति वा । तस्मान्नेतरेतरयोगप्रतीतिरिति भावः ।

---

१ ख-आशयानुरोधात् । २ ख-क-फ-भ्रातराविति पुत्राविति वा ।

ननु द्वन्द्वादेरभावेऽपि तस्य चार्थत्वाद्वयं च एकस्य चात्र सत्त्वात्साकाङ्क्षयकानां पाटलिपुत्रकाणां च पाटलिपुत्रका अभिरूपतमा इत्यादाविव तत्प्रतीतिः स्यादेव, अत आह । **विभागेति ।** कर्तृत्वान्वयेनापीति पाठः । विभागे कर्तृत्वेनान्वयेनापीत्यर्थः । क्वचित्तथा पाठ एव । तथा च दृष्टान्ते प्रकारान्तरावगततात्पर्यवशान्मिथः साहित्यावगतावप्यत्रेश्वरं गुरुं च भजस्वेत्यादाविवैकस्यान्यसहितस्यान्वयेऽप्येकस्य केवलस्यैवैकधर्मावच्छिन्नेऽन्वयाच्च समभिव्याहृतस्य किञ्चिद्प्राधान्यप्रतीत्यैकरूपावच्छिन्ने एकरूपेणान्वयसत्त्वात् तत्कर्तृत्वांशे समुच्चयेऽपि न तथेति भावः ।

यद्यपि क्वचिच्चद्वयसत्त्वेऽपि न तत्प्रतीतिः क्वचित्तदभावेऽपि तत्प्रतीतिर्गमकवशात् तथापि प्रकृते न तथा । अपिरुक्तरीतिसमुच्चायकः एवार्थो वा । विभागकर्तृत्वेनान्वाचयेनापीत्यपपाठः । असम्बद्धत्वात् । यत्र हि चस्य क्रियान्वयस्तत्र प्रायेणान्वाचयः । तत्र चसमभिव्याहृते आनुषङ्गिकत्वमितरसाहित्यं च[2] मिथः फलति । तथा च क्रिययोर्मध्ये सर्वे आद्यं च अन्यनिष्पादकयत्ननिष्पाद्यत्वम् । एवं च तद्व्याप्यम् यत्रैका मुख्याऽपरा गौणी तत्रान्वाचयविषयत्वमिति । एवं च तस्यान्यथाऽप्युपपत्तेर्न तयोः संभूयैव विभागप्रतीतिरिति भावः ।

तत्र दृष्टान्तमाह । **देवेति ।** यत्तु एवं सति ' समं स्यादश्रुतत्वाद्विशेषत ' इति न्यायत एव समत्वप्राप्तेस्तदानर्थक्यमिति तदेव तयोः सम्भूयग्रहणार्थत्वे गमकमिति भ्रातृभगिन्योस्तुल्यवज्जननीधनाधिकारित्वे समताविधानं युक्तमिति । तन्न । तत्रापि पक्षे तन्न्यायत एव तत्प्राप्त्या तदानर्थक्यस्य तदवस्थत्वात् । अत्रापि पक्षे पितृधने इव मातृधनेऽपि विंशोद्धारादिप्रसक्तिनिवर्त्तकतया तस्य सार्थक्याच्च । तदेतदभिप्रेत्याह । **समेति ।**

**कल्पतरौ** तु ' सर्वे पुत्रा ' इति पाठः । तथा च सोदर्या भगिन्यः साक्षात् स्वमातृदुहितरस्तु याः, तदभावे तद्दौहित्रपर्यन्ताः, तदभावे सोदरा मृतायाः साक्षात् पुत्रा न सपत्नीपुत्राः, तदभावे पौत्रा इति **मनु**तात्पर्यार्थः । एतेन—
" स्त्रीधनं स्यादपत्यानां दुहिता च तदंशिनी । अपुत्रा चेत्समूढा तु लभते मानमात्रकम् "॥ इति—**बृहस्पतिः**—" समं सर्वे सोदर्या मातृकं रिक्थमर्हन्ति कुमार्यश्चेति ' **शंखलिखितौ** चेत्यादि सर्वं व्याख्यातप्रायम् । आद्ये—" अप्रत्ता चेत् समूढा तु न लभेन्मातृकं धनम् । " इत्युत्तरार्धे पाठान्तरम् ।

" अप्रत्ता चेत् समूढा तु लभते मानमात्रकम् । " इति वा ।

विशेषं प्रागुक्तं सूचितमेवाह । **सोदरेति ।** सहोदरेत्यर्थः । तथा च स्वपुत्राद्यभावे एव सपत्नीपुत्रादयः । विशेषान्तरमाह । **अनपत्येति । दुहितेति ।** सैवेत्यर्थः । ननु हीनजातीयः सापत्नपुत्रो, नापि ब्राह्मदैवेत्यादिप्रागव्यवहितपद्यद्वयोक्ता यथायथं भर्तृमातापितर इति भावः । **अपत्यं** तदपत्यम् । तादृग्विधो दौहित्रः ।

अत्र मानमाह । **यथाहेति ।** तथा चेति पाठान्तरम् । अत्र स्त्रिया इति पित्रेति ब्राह्मणीति कन्येति चोपादानादुक्तार्थप्रतीतिः । तथा हि पित्रा दत्तं कथमपि स्त्रिया धनं कन्या हरेदित्युक्ते स्वापेक्षयैव स्त्री स्वापेक्षयैव कन्येति स्त्रीकन्याशब्दयोर्मिथःसापेक्षशब्दत्वाभावात्सापत्नमाता सापत्न-

१ क–तदादाराभावेऽपि । क–फ–तदादेरभावेऽपि । २ ख–फ–भाक्तं फलति । क–भात्वं– । ३ ख–क–फ–तावत्स्मात्तदभावे तद्दुहितृपर्यंता ।

नेति च गम्यते इति । **तदपत्यस्येति** । ब्राह्मण्यपत्यस्येत्यर्थः । वाशब्दः व्यवस्थितविकल्पे । तेन तदभावे इति लभ्यते पूर्ववत् । **संग्रहेऽ**प्युक्तम्—

“ ब्राह्मणी तु भवेत्कन्या हरेत् रिक्थं तु मातृकम् । पितुः सापत्नमातुश्च भ्रातुश्चापि हरेद्धनम् ॥”इति ।

“ अत एव पितृपत्न्य ” इति **सुमन्तुर**पि । न च सापिण्ड्याशौचमात्रविषयः सः । संकोचे मानाभावात् । विनिगमनाविरहाच्च ।

अत्र न्यूनतां निराचष्टे **ब्राह्मणीति । क्षत्रियाकन्या,** सापि । तेन ब्राह्मणीसमुच्चयः । एवं शूद्रास्त्रीधनं ब्राह्मणी क्षत्रिया वैश्या च कन्या गृह्णाति इत्यपि बोध्यम् ।

अत्रोत्तमजातीयाया एव सापत्नकन्यकाया धनग्रहणाभिधानाद्धीनजातीयपत्नीदुहितॄणामप्युत्तमजातीयसपत्नीपुत्रसद्भावे धनग्रहणं नास्तीति गम्यते।तथा च स्वतः प्रजाशून्यत्वात् ब्राह्मेत्याद्यव्यवहितश्लोकद्वयेन भर्त्रादेरधिकारप्राप्तौ तदपवादोऽनेन क्रियते इति तयोरयं न विषय इति भावः । अत्र कथञ्चनेत्यनेन कथमपि प्रकारान्तरेण लब्धमपीत्यर्थकेन पितृदत्तातिरिक्तसर्वसंग्रहः । तेन सर्वविषयत्वमस्य ।

एतेन पित्रा दत्तमिति विशेषणाद्विवाहसमयादन्यत्रापि पितृमातृदत्तं कन्याया एव इत्येतदर्थकमिदमिति **मिश्राद्यु**क्तमपास्तम् ।

**रिक्थभाज इति** । ये ऋणप्रतिकर्त्तारस्ते रिक्थभाज इत्यर्थेन पौत्रस्यापि तादृशत्वे पुत्राभावे स पितामहीधनभागित्यर्थः । ननु ऋणनिवारकत्वमेव तस्यासिद्धमत आह । **पुत्रपौत्रैरिति ।** मूलेक्तिरियं प्राक् । **अपाकरणं** दूरीकरणम् । तथा च वचनद्वयपर्यालोचनयोक्तार्थलाभः । अथ अतीतायामित्यादिसार्धश्लोकस्य तृतीयपादरहितस्य विषयमाह । **पौत्राणामपीति ।** पूर्वपूर्वोक्ता इत्यनेन क्रमः सूचितः ।

यत्तु प्राच्याः—‘ जनन्यां संस्थितायामिति ’ **मनोः**, ‘ स्त्रीधनं स्यादपत्यानामिति ’ **बृहस्पतेः** ‘ समं सर्वे सौदर्या ’ इति **शंखलिखिता**भ्याम्—

“ सामान्यं पुत्रकन्यानां मृतायां स्त्रीधनं स्त्रियाम् । अप्रजायां हरेद्भर्ता माता भ्राता पिताऽपि वा ॥ ”

इति **देवलाच्च** आद्यत्रये द्वन्द्वाश्रवणेपि तत्तुल्यार्थसमुच्चयवाचकानुगतचश्रवणात् । तत्र सर्वत्र प्रथमं पुत्रोपादानात् मातृधने पुत्रस्याप्यधिकारादितरेतरयुक्तयोर्भ्रातृभगिन्योर्विभज्य तावद्धनग्रहणम् । अयमेव सर्ववचनतात्पर्यभूतोऽर्थः । **देवल**वाक्ये तु द्वन्द्वश्रवणात् तथा व्यक्तमेव ।

किञ्च । कुमार्या एव सर्वमातृधनाधिकारित्वे यौतकधने **मन्वादे**र्विशेषवचनं व्यर्थं स्यात् । तथा च पुत्रकुमार्योः तुल्यवदधिकारः । तयोरन्यतराभावेऽन्यतरस्य तद्धनम् । द्वयोरपि तयोरभावे ऊढायाः पुत्रवत्याः सम्भावितपुत्रवत्याश्च तुल्याधिकारः । स्वपुत्रद्वारेण पार्वणपिण्डदानसम्भवात् । अत एव प्रागुक्तदुहित्रभावे दौहित्रस्यैव धनाधिकारः, दौहित्रोऽपीति **मनोः** । न तु वन्ध्यातादृशविधवादुहित्रोः । स्वसुतादिना पार्वणपिण्डदानाभावात् । अत एव **नारदः** ( अ. १३।५० ) “ पुत्राभावे च दुहिता तुल्यसन्तानदर्शनात् । ” इति ।

पौत्रदौहित्रयोस्तु समवाये पौत्रस्यैव सः । पुत्रेण परिणीतदुहितुर्बाधात् बाधकपुत्रेण बाध्यपुत्रबाधस्य न्याय्यत्वात् । उक्तानां सर्वेषां दौहित्रपर्यन्तानामभावे वन्ध्यातादृशविधवयोरपि सः । द्वयोरपि तत्प्रजात्वात् । प्रजाया अभावे एव चान्येषामधिकारात् प्रागुक्तानि **गौतमनारदकात्यायन**-

**याज्ञवल्क्य**वचांसि तु उक्त**देवलादि**विरोधात् यौतकद्रव्यमात्रविषयाणि । अत एव **मनुः**—( अ. ९।१३१ ) "मातुस्तु यौतकं यत्स्यात् कुमारीभाग एव सः ।" इति ।

यौतकं परिणयनलब्धम् । यु मिश्रण इति धातोर्युतपदम् । मिश्रता चैकशरीरता तयोर्विवाहाद्भवति । "अस्थिभिरस्थीनि मांसैर्मांसानि त्वचा त्वचमिति" **श्रुतेः** । अतो विवाहकाललब्धं यौतकम् । **कल्पतरु**रप्येवम् ।

अत एव **वसिष्ठः**—( अ. १७ सू. ४६ ) "मातुः पारिणाय्यं स्त्रियो भजेरन्निति ।"

पारिणाय्यं परिणयनधनम् इति । तन्न ।

मुनीनां आशयानभिज्ञानात् । तथाहि चार्थसमुच्चयस्य सहाधिकारं विनाऽप्याख्यातोपपत्तिः तत्र तावत्कृतैव । युक्ता च सैवेत्युक्तश्च । किञ्च । उपादानमात्रेण तस्य तत्राधिकारलाभे प्रथमोपादानस्य न तत्र हेतुत्वं प्रत्युत ततः तस्य तस्याः प्रथममेवाधिकारापत्तिरिति न भवदिष्टसिद्धिः । किञ्च तदपि न, **गौतमा**दिवाक्ये तासामेवोपादानात् प्रथममेव, प्रत्युत **नारदा**दिभिस्त्रिभिः क्रमस्य स्पष्टतया सामान्येन प्रतिपादनात् 'मातुर्दुहितर' इत्यत्र युक्तश्चैतदिनोक्तप्रकारेण प्रत्यासत्त्यतिशयस्य तस्यामेव सत्त्वेन तस्यैव धनग्रहणाधिकारितावच्छेदकत्वस्य **मन्वा**द्युक्तत्वेन च तथैवोचित्याच्च ।

किञ्च । सहाधिकारित्वे उभयसत्त्वे एवाधिकारो नान्यतरसत्त्वे इति तत्रानधिकारापत्तेः । तथा सति तयोरित्याद्यग्रिमग्रन्थासङ्गतेः । न हि दम्पत्योः सह विहितमाधानादिकमन्यतराधिकारिकं कस्यापि संमतम् । लोकेऽपि सहाधिकारिकं कर्मान्यतरेण न क्रियते ।

किञ्च । अनूढेत्यस्य कुतो लाभः । न हि तेषु सर्वेषु तदुपादानमस्ति । **गौतमीयं** तु अन्यविषयतया योजितं भवद्भिरेव । अत एव च तद्विरोधोऽपि दुष्परिहरः । कन्याशब्दस्य चाक्षतयोन्यां शक्तिः, कुमारीशब्दस्य च प्रथमवयोविशिष्टायां शक्तिः । अन्यैकवाक्यतया तु दुहितृसामान्यपरत्वमेव । अन्यथा न्यूनतापत्तेः । **बृहस्पतिवाक्यं गौतमी**यसमानार्थम् ।

किञ्च । तत्र 'अप्रत्ता चेत्' इत्युत्तरान्वयि न पूर्वान्वयि । अन्यथा समूढायाः कदाऽपि तदभावे **गौतमी**यस्य चासङ्गतिः, स्मृत्यन्तरविरोधापत्तिश्च भवति । **लिखित**वचनातिरिक्तं नापि तथाबोधकं वचनमत्रास्ति ।

किञ्च । तत्र **मनो**र्गतेरुक्तत्वेन **शंखलिखित**वाक्यस्य स्पष्टमेव तत्समानार्थत्वेन चादोषः । **बृहस्पति**वाक्यस्यापि तत्समानार्थतया, विविभक्तितया स्यात्पदघटितनिर्देशेन भवदभिमतार्थस्याक्षरमर्यादयाऽलाभेन चशब्दस्य एवार्थकत्वेन च आदौ दुहितैव तदंशिनी तदभावेऽपत्यानां पुत्राणां स्त्रीधनं स्यात् सम्भावनलिङा तत्सत्ता सम्भवेत् इत्यर्थस्यैवानया लाभाच्च अदोषः । **देवल**वाक्यं तु मातृधनं पुत्रमात्रसत्त्वे तेनैव ग्राह्यं, कन्यामात्रस्य सत्त्वे तयैव ग्राह्यम् इत्येवं समानत्वमात्रबोधकं न क्रमबोधकम्, नापि सहाधिकारबोधकमिति न दोषः ।

किञ्च । **नारदादि**त्रयानुरोधेन **मन्वादि**चतुष्टयस्य तथा तत्परत्वमेव युक्तं, न तु मातुस्त्वित्येवं **मन्व**नुरोधेन तत्परत्वम् । तदनुरोधे तु तेषां सामान्यानां विशेषपरत्वं कृत्वा तेषां तत्परत्वे युक्तो 'बहूनामनुरोधः' इति न्यायविरुद्धत्वात् ।

किञ्च । चतुर्णां वचनानां सहाधिकारिताबोधकत्वेन तदन्यचतुर्णां **मन्वे**कवाक्यतया यौतकविषयकत्वस्योक्तत्वेन तयोरन्यतरस्याभावे इत्याद्यर्थस्य भवदुक्तस्य निर्मूलत्वापत्तिः । तेषामपि तत्त्वे त्वविरोधोऽस्मन्मते प्रवेशश्च । किञ्च । तस्य न भवदुक्तोऽर्थः किं त्वन्य एवेत्यनुपदमेव स्फुटीभविष्यति ।

किञ्च । स्वपुत्रेत्यादिहेतुरप्ययुक्तः । 'यश्चार्थहरः स पिण्डदायी' त्यौत्सर्गिकनियमसत्त्वेऽपि यस्य पिण्डदत्वं तस्यैव तद्धरत्वमिति नियमे मानाभावस्य प्रागेव प्रपञ्चितत्वात् । अत एव—"पौत्रदौहित्रयोर्लोके न विशेषोऽस्ति धर्मतः ।" इति पूर्वार्धोक्ते—"तयोर्हि मातापितरौ संभूतौ तस्य देहतः ।" इत्युत्तरार्धेन हेतुरुक्तो **मनुना** (अ. ९।१३९) । दुहित्रभावे दौहित्रस्यैवेत्यपि न युक्तम् । प्रत्यासत्त्यतिशयस्य तु दौहित्र्यामेव सत्त्वाद्दौहित्रोऽपीति **मनोः** प्रकरणात्पुत्रिकापुत्रविषयत्वाच्च । व्याख्यातं तथैव च **मेधातिथि**प्रभृतिभिः ।

उक्तहेतोरेव न तु वन्ध्येत्याद्यग्रिममपि न युक्तम् । भवदुक्त**नारद**स्य पितृधनविषयत्वस्य स्पष्टत्वाच्च । अत एव च पौत्रेत्यादि अधिकारादित्यन्तमपि प्रत्युक्तम् । **वासिष्ठे** 'मातुः परिणाह्यं स्त्रियो विभजेरन्निति' पाठस्य सत्त्वेन भवदुक्तपाठस्यैव खपुष्पायमाणत्वेन तथाऽर्थस्य दूरोत्सारितत्वेन "अत एव **वसिष्ठः**" इत्याद्यपि चिन्त्यम् । परिणाय्यमिति प्रयोगस्यासाधुत्वाच्च । अत एव "आनाय्योऽनित्ये" (३ । १ । १२७) "पाय्यसांनाय्य" (३ । १ । १२९) "प्रणाय्योऽसंमतौ" (३ । १ । १२८) इति निपातनं **पाणिनीयं** सङ्गच्छते । अत एव **कल्पतर्वादि**भिरपि तथा पाठं धृत्वा 'परिणाह्यं परिच्छद आदर्शकङ्कणादिरिति' व्याख्यातम् । अत एव स्त्रीपुरुषधर्मप्रकरणे— "शौचे धर्मेऽन्नपक्त्यां च परिणाह्यस्य वीक्षणम् ।" इति **मन्वे**कवाक्यताऽपि सिद्धा । तत्रापि **कल्पतरुणा** तथैव व्याख्यातम् । णिजन्तादचो (व्या. सू. ३।१।९७) यति तु अर्थासङ्गतिः । निवृत्तप्रेषणादिति तु तस्य सत्त्वेऽगतिकगतिः ।

यदपि प्रत्यासन्नदुहितृपदेनैवान्वयपदस्यान्वयाद्दुहित्रभावे दौहित्रीणामेव स इति **नारदार्थो** न युक्तः । दुहितृपदस्य जन्यविशेषवचनत्वेन जनकाकांक्षित्वेन तस्या जात्यन्तरेणान्वयपदोपनेयपुत्रेणान्वयस्यासमत्वेनासम्भवात् । न चाधिष्ठानलक्षणयाऽन्वयः । मात्रन्वयमात्रेणैव सर्वेषां मुख्यत्वसम्भवात् । मातृपदान्वये च दुहितृपदमुख्यत्वस्य स्वीकारात् । न च तदन्वय इति तच्छब्दोपात्तदुहितुरन्वययोग्यता । तच्छब्दस्यापि प्रकृतवाचितया दुहितृत्वरूपेणैवोपपादकत्वात् । किञ्च । मूलवाक्ये दुहितर इति प्रथमान्तं ताभ्य इति पञ्चम्यन्तं च षष्ठ्यन्तान्वययोग्यान्वयपदेन नान्वेति, किं तु व्यवहितमपि मातुरित्येव । तत्र तथा निश्चये **नारदी**यादावपि तथैवाविरोधात् इति । तदपि न । प्रागुक्तस्य नारदार्थस्याज्ञानात् । मातृप्रत्यासत्तेः प्रागुक्तत्वेन त्वदिष्टप्रत्यासत्तेरभावेन दोषस्याज्ञानविलसितत्वात् । मूलसमानार्थत्वे तदन्यतरस्य तत्पदस्य चानर्थक्यापत्तेः । अत एव दुहितृपदेनास्माकं नान्वयपदान्वय एवेति सर्वथा दुहितृपदस्य इत्याद्युक्तेरयुक्तत्वात् तच्छब्दस्य प्रकृतपरामर्शकत्वेऽपि बुद्धिस्थत्वेनैव तद्बोधकतया दुहितृत्वरूपेण तदभावेनान्वययोग्यतायाः षष्ठ्यन्ततया सत्त्वेनात्र जनकाकांक्षाया अभावेन प्रत्युत सम्बन्ध्याकांक्षाया एव सत्त्वेन लक्षणायाश्चाभावेन प्रागुक्तं 'न चे' त्याद्युक्तेश्चासङ्गतत्वात् । तस्मा**द्विज्ञानेश्वरो**क्तमेव युक्तमिति दिक् ।

'रिक्थं दिवं गतेषु सुतगामीति' **बौधायनीयं** तु पितृद्रव्यविषयकमिति ततो "न व्यवहितदौहित्राधिकार" इत्यपि तदुक्तं चिन्त्यमेव ।

एतेन "विवाहलब्धं स्त्रीधनं दुहितुरेव न पुत्राणाम् । तत्रैव **क्रमार्थं गौतमीयम् ।** "तत्र पूर्वमनूढानां तदभावे सपुत्राणां तदभावे समूढानां दुहितॄणामिति" । सामान्यप्राप्तेऽप्रत्तानामित्यादेस्तु क्रमार्थत्वेनोपसंहारसमर्थत्वात्" इति परास्तम् । विशेषाभावात् ।

यदपि अप्रजःस्त्रीति **मूलमपि** विवाहलब्धविषयमेव । ब्राह्मादिविवाहेषु यल्लब्धं अध्यग्निधनं तत् अभावे आदौ दुहितॄणां तत्रापि प्रथमं कन्यायास्तदभावे सपुत्रायास्तदभावे ऊढायाः । सर्वदुहित्रभावे च पुत्रस्याधिकारः । अप्रजःस्त्रीधने च भर्त्तुरधिकारः । **बृहस्पतिना**ऽप्यप्रजः पदेनापत्यान्तराभावे समूढाया अप्याधिकारः सूचित इति । तदपि न । तस्य सर्वपरतयैवाचार्येण व्याख्याततत्वात् । किञ्च । भवदुक्तव्याख्यानेऽप्यपिना तदन्यस्य सर्वस्य समुच्चयात् । न च अपिसमुच्चेयं प्रागन्यदुक्तमिति वाच्यम् । शेषेष्वितिवत्तत्राप्युपलक्षणत्वेनैव तदर्थलाभेन तत्र तस्यात्यन्तमनुपयोगात् । किंच साक्षात् दुहितृपरतया व्याख्याने मातुर्दुहितर इत्यनेन पौनरुक्त्यापत्तेः ।

यदपि "न च न यौतकमात्रधनाभिप्रायमिदं किं तु ब्राह्मादिना विवाहिताया यद्यावद्धनं यौतकमयौतकं वा तदभिप्रायकमिति वाच्यम् । तथा सति बन्धुदत्तमित्यव्यवहितप्रागुक्तसंपूर्णश्लोकस्य निर्विषयतापत्तेः" इति । तदपि न । बन्धुदत्तमित्यर्धेन तथादिशब्दस्वारस्येन स्त्रीधनस्यैवोक्तान्यस्य प्रतिपाद्यत्वेन तस्य पूर्वशेषत्वेनादोषात् । सम्पूर्णस्य तस्यैकवाक्यत्वे च तेन तस्य पूर्वशेषत्वेनोत्तरार्द्धेन-सामान्येन तद्विभागस्य प्रतिपाद्यत्वेन अप्रजःस्त्रीत्यस्य तद्व्यवस्थापकत्वे तत्पदानर्थक्यापत्तेः ।

किं च **मनुना** 'अध्यग्नीत्यादिना' षड्विधं स्त्रीधनमुक्त्वा सप्रजास्थले—( अ. ९।१९५ )

"अन्वाधेयं च यद्दत्तं पत्या प्रीतेन चैव यत् । पत्यौ जीवति वृत्तायाः प्रजायास्तद्धनं भवेत् ॥"

इत्यनेन "आद्यचेनोक्तषड्विधसंग्रहो द्वितीयचेन तदन्यसर्वसंग्रहोऽन्यथा न्यूनतापत्तेः" इत्यर्थकेन तथोक्त्वा तच्छून्यस्थले ब्राह्मेत्यादिश्लोकत्रयेण व्यवस्थया तथोक्तत्वेन तद्विरोधापत्तेश्च । एतेन "यत्तु विवाहोत्तरं पितुर्मातुर्भर्तुश्च कुलात्तया लब्धं तत् भ्रातॄणामेव । तदुक्तं मूले बन्धुदत्तमित्यादिना तदवाप्नुयुरित्यन्तेन । बन्धुदत्तं मातापितृदत्तम् । तत्पुत्राश्च भ्रातर एव बान्धवाः । तदाह **वृद्धकात्यायनः**—

"पितृभ्यां चैव यद्दत्तं दुहितुः स्थावरं धनम् । अप्रजायामतीतायां भ्रातृगामि तु सर्वदा ॥"

इति । अप्रजस्त्वमात्रनिमित्तत्वेन भ्रात्राधिकारावगतेः । सर्वदा सर्वविवाहेषु । स्थावरपदाद्दण्डापूपन्यायादेवान्यस्य धनस्य सिद्धिः । बन्धुदत्तपदेन कन्यादशायां यत् पितृभ्यां दत्तं तदुच्यते । विवाहात्परतो लब्धस्यान्वाधेयपदोपात्तत्वात् । विवाहकालीने च भर्तुः पित्रोर्वाऽधिकारात्" इत्यपि तदुक्तमपास्तम् । बन्ध्वादिपदस्य तत्राशक्तेश्च **वृद्धकातीयगति**स्तु वक्ष्यते इति दिक् ।

न चैवमपि मूलस्य व्याख्यानस्य च **मनु**विरोधः । **मूले** चतुर्णां विवाहानां ग्रहणम् ।

"ब्राह्मदैवार्षगान्धर्वप्राजापत्येषु यद्वसु । अप्रजायामतीतायां भर्तुरेव तदिष्यते"

"यत्त्वस्याः स्याद्धनं दत्तं विवाहेष्वासुरादिषु । अप्रजायामतीतायां मातापित्रोस्तदिष्यते ॥"

इति **मानवे** ( अ. ९ श्लो. १९६।१९७ ) आद्यौ पञ्चानामग्रे त्रयाणामिति तयोर्विरोधः । व्याख्यात्रा पुनर्ब्राह्मादिषु चतुर्षु विवाहेषु । भार्यात्वं प्राप्ताया अतीताया इत्यादि व्याख्यातम् । **मानवे** तु ब्राह्मादीनां आसुरादीनां च शब्दानाम् ।

"अष्टाविमान्समासेन स्त्रीविवाहान्निबोधत ।" ( अ. ३।२० ) इत्युपक्रम्य— "ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः ।" ( ३।२१ ) इत्यादिमनोः ।

"अष्टौ विवाहा वर्णानां संस्कारार्थं प्रकीर्तिताः। ब्राह्मस्तु प्रथमस्तेषाम्" इत्यादि**नारदात्** (अ.१२।३८)

"अष्टौ विवाहा भवन्ति ब्राह्मो दैव" इत्यादि**विष्णोश्च** तत्तल्लक्षणविवाहपरत्वेऽपि वर्तमानसम्बन्धेन विवाहकाललक्षणया तेषां कालार्थतया निर्देशेन अस्याः स्यादृत्तमित्यग्रिमस्य पूर्वत्रानुषङ्गौचित्येन तत्र तत्र काले यद्धनं दत्तमिति संम्बधेन विवाहिकधनमात्रप्रतीतेर्न तदीययावद्धनविषयत्वमिति तयोर्विरोधः।

अत एव **यमः**—"आसुरादिषु यद्द्रव्यं विवाहेषु प्रदीयते।" इत्यादि। विवाहक्रियायां पूर्वापरीभूतायां यत् द्रव्यं प्रदीयते इत्यादिः तदर्थः। तथा च यौतकधनमात्रविषयत्वमेव तस्य। न चैवं विवाहात्पूर्वमनन्तरं वा लब्धस्य धनस्य का गतिस्तेनानुक्तत्वादतो ब्राह्मादिपदं स्त्रीपरमिति वाच्यम्। तत्रान्यथा गतेर्वचनान्तरैः प्रतिपादितत्वात्। तेषां स्त्रीपरत्वे च एकत्वेन षष्ठ्या च निर्देष्टुमुचितत्वात्। यत्त्वस्याः स्यादितिवत् लक्षणायास्तुल्यत्वेऽपि अतिक्रान्तविवाहसंबन्धेनेदानीं सेति जघन्यायास्तस्या अनौचित्यात्। ब्राह्मादिपदस्य ऊढस्त्रीवाचकत्वं तु प्रागुक्त**मन्वा**दिविरुद्धमेवेति प्राच्योक्तं युक्तमिति वाच्यम्।

आर्षत्वाविशेषेणैकवाक्यताया असम्भवेन विरोधाद्गान्धर्वांशे विकल्पस्वीकारेण तयोरविरोधस्य प्रागुक्तत्वात्। **मानवे** एव च गान्धर्वांशे विकल्पसंभवात्। एकवाक्यतायां दुराग्रहे तु अपिशब्दे तन्त्राङ्गीकारादावृत्त्या द्वितीयेन तेन शेषेष्वितिवदुपलक्षणत्वेन निर्वाहेण यथाश्रुतेन तेन वा तदनुरोधेन गान्धर्वस्य समुच्चयात्। ब्राह्मादिंष्वित्यत्र ब्राह्मेति भिन्नं लुप्तविभक्तिकं पदम्। आदिष्विति भिन्नम्। आदिशब्दे च आकारप्रश्लेषः। स च आजशब्दैकदेशो विनाऽपि प्रत्ययमिति न्यायादिति आः आजः ब्राह्मः आदिर्येषां दैवादिचतुर्णां तदन्येषामित्यतद्गुणसंविज्ञानबहुव्रीहिणा तदन्येषां चतुर्णां लाभाच्च तत्संभवेनादोषात्। एवं प्रकारद्वये व्याख्यानविरोधस्याप्यभावात्। परं तु द्वितीये पक्षे प्राजापत्येष्वित्यत्र व्याख्याने मूलोक्तस्य अपेः शेषः तथा पाठ एव वा। तेन गान्धर्वसमुच्चयः। अग्रे च शेषेष्वासुरराक्षसपैशाचेष्विति पाठः, गान्धर्वघटितोऽपपाठ इति बोध्यम्।

न चैवमप्यन्यथा प्रागुक्तव्याख्यानविरोध एवेति वाच्यम्। **मनुना**—(अ. ९। १९०)

"संस्थितस्यानपत्यस्य सगोत्रात्सुतमाहरेत्। तत्र यद्रिक्थजातं स्यात्तत्तस्मिन्प्रतिपादयेत्॥"

इति तन्मरणोत्तरमपि वाग्दत्तादिविषये नियोगविधिना सगोत्रात् सुतस्य उत्पादितस्य धनाधिकारित्वमनेन विधीयते इत्येवं पितृधने उक्त्वा—(९। १९१)

"द्वौ तु यौ विवदेयातां द्वाभ्यां जातौ स्त्रिया धने। तयोर्यद्यस्य पित्र्यं स्यात्तत्स गृह्णीत नेतरः॥"

इत्यनेन—"यद्येकरिक्थिनौ स्यातामि" त्यौरसक्षेत्रजयोरुक्तम्, इदं त्वौरसपौनर्भवविषयम्। यदोत्पन्नौरसा मृतभर्तृकत्वाद्बालापत्यतया स्वामिधनं स्वीकृत्य पौनर्भवभर्तुः सकाशात्पुत्रान्तरं[1] जनयेत्, तस्यापि मृतत्वाद्रिक्थहराभावाद्धनं गृहीतवती, पश्चात् द्वाभ्यां जातयोः प्रौढयोस्तयोस्तादृशे स्त्रीधनविषये विवादेऽपि स्वस्वपित्र्यमेव तेन ग्राह्यं स्त्रीधनं नान्यदीयमन्यजेन" इत्यर्थकेनोक्त्वा, स्त्रीधनं तर्हि केन ग्राह्यमितिशङ्कानिरासाय 'जनन्यां संस्थितायां त्वि' त्यनेन तद्विषये प्रागुक्तरीत्योक्त्वा, प्रागुक्तरीत्या पितृधनवच्छङ्कानिरासाय 'यास्तासां स्युर्दुहितर' इत्यनेन प्रागुक्तरीत्यैवोक्त्वा, स्त्रीधनं कीदृशमितिशङ्कानिरासाय 'अध्यग्नी' त्यादिना षड्विधं स्त्रीधनमुक्त्वा, षट्त्वं न्यूनसंख्याया व्यवच्छेदकं नाधिकसंख्याया इति ध्वनयन्, प्रजा स्यात्सन्ततौ जने इति कोशात्

---

१ क–पुनः भर्तुः सकाशात्।

तस्य सन्ततिपरत्वेन जनन्यामिति प्रागुक्तपक्षे पूर्वं पुत्रस्तदभावे कन्या द्वयोः संभूय वा ग्रहणमित्यसिद्धान्तसम्भावितपक्षद्वयनिरासाय कृतेन प्रजाया इति स्त्रीलिंगनिर्देशेन पूर्वं कन्यादेस्ततः पुत्रादेरिति सूचनाद्वारा न्यूनतानिरासाय जननामित्येकवाक्यतार्थं च यद्वयदत्तयत्पदद्वयसहितेन एवशब्दस्याग्रेऽन्वयेन " यत् अन्वाधेयं, प्रीतेन यत् पत्या दत्तं च यच्चान्यत्, तत् प्रजाया एव सर्वं स्त्रीधनं न भर्त्रादेः " इत्यर्थकेन—

" अन्वाधेयं च यद्दत्तं पत्या प्रीतेन चैव यत् । पत्यौ जीवति वृत्तायाः प्रजायास्तद्धनं भवेत् ॥ "

**मनुः**—( अ. ९।१९५ )

इत्यनेनोक्त्वा, तच्छून्यस्थलेऽपि न्यूनतानिरासाय सर्वतद्धनगतिं विवाहभेदेन प्रतिपादयता यत्त्वस्याः स्याद्धनं दत्तमित्यस्य तथोपात्तस्य यथासम्भवमुभयत्रान्वेन तोश्चार्थकत्वेन क्वचित्तथैव पाठेन विवाहेष्वियुक्त्या ब्राह्मादीनां विवाहमात्रवाचकत्वेन काललक्षणाया अप्यभावेन सतिसप्तम्या " तेषु आद्येषु सत्सु अस्या इति शेषषष्ठ्या अस्यै दत्तं च धनं स्यात् विवाहात् प्रागुत्तरं तत्र वा चेनान्यसर्वसमुच्चयस्तत्सर्वं तस्यां तादृश्यामतीतायां भर्तुरेवेष्यते, आसुरादिषु तेषु त्सु पूर्ववत् तद्धनं मातापित्रोरिष्यते न तु भर्तुः तत्रादौ मातुस्तदभावे पितुरुच्चारणक्रमात् यौगपद्ये हि पित्रोरित्येव ब्रूयात् " इत्यर्थकेन ब्राह्मदैवेत्यादिश्लोकद्वयेनोक्त्वा, तत्रैवोभयापवादत्वेनोक्तरीत्या "स्त्रियास्तु यद्भवेद्वित्तमि " त्यनेन सर्वधनविषयं उक्तत्वेनान्यथा **मनु**नाऽन्यस्यानुक्तत्वेनाध्यग्न्यादिवैयर्थ्यापत्त्या स्वोक्तमध्ये एव सर्वथा **मनु**न्यूनतायाः दुष्परिहरत्वेन तद्रीत्यैव व्याख्यात्राऽपि ब्राह्मादीनां विवाहमात्रवाचकत्वं न तु क्वापि लक्षणा सतिसप्तमी च भार्यात्वं प्राप्ताया इति तु फलकथनमिति आद्येषु सत्सु तस्यास्तादृश्यास्तत्सर्वं धनं भर्तुर्द्वितीयेषु सत्सु आदौ तद्वत् तद्धनं सर्वं पितृगामि आदौ मातृगामि तदभावे पितृगामि **मन्व**नुरोधादेवेत्युक्तमिति तच्छङ्काया एवाभावात् ।

अत एव **कुल्लूकभट्टेन** सर्वधनपरतयैव ब्राह्मेत्यादिद्वयादिपूर्वं च व्याख्यातम् । एतेन **मनु**विरोधात् प्रजःस्त्रीत्यस्य प्रागुक्ततदन्यतराभिप्रायकत्वं न युक्तमित्यपि **मिश्राद्यु**क्तमपास्तम् । द्वितीये ब्राह्मेत्यादेर्वैयर्थ्यापत्तेश्चेति दिक् ।

अत्र केचित् । **मनुना** मातापित्रोरित्यनेनैकदेशानुमतिद्वारा शुल्कधनविषयोऽपि **गौतमबौधायनोक्तः** सूचित इति न न्यूनता नापि विरोधः । तथा च **बौधायनः**

" रिक्थं मृतायाः कन्याया गृह्णीयुः सोदराः स्वयम् । तदभावे भवेन्मातुस्तदभावे भवेत्पितुः ॥ इति ।

समामिति पाठान्तरम् । इतोऽपि मातापित्रोरित्यादौ तथैव क्रमो विवक्षितः । गौतमस्तु प्रागुक्त एव ।

"पितृभ्यां चैव यद्दत्तं दुहितुः स्थावरं धनम् । अप्रजायामतीतायां भ्रातृगामि तु सर्वदा ॥ "

इति **वृद्धकात्यायन**नोक्तं तु निर्मूलम् । समूलत्वेऽपि यथासम्भवं प्रागुक्तशुल्कविषयम् । अत एव सर्वदेत्युक्तम् । तच्च सर्वविवाहेष्वित्यर्थकम् । अतो व्याख्यात्रोक्तशुल्कविषयता नेति न तद्विरोधोऽपि । **मनुना** तस्यैवानुक्तत्वात् ।

"बन्धुदत्तं तु बन्धूनामभावे भर्तृगामि तत् । "

---

१ ख ग-प्रागुत्तरत्र वा । २ फ-भ्रातृगामि ।

इति **कार्तीयम**पि शुल्कविषयमेव। बन्धूनामित्यस्य भ्रातॄणामित्यर्थात्। प्रागुक्त**देवल**वाक्ये तु पूर्वार्धवदुत्तरार्धमपि सर्वसाधारणमेहेत्याहुः।

एतेन अतो विवाहकाललब्धस्त्रीधनविषयं ब्राह्मादिवचनम्। आसुरादिविवाहलब्धस्त्रीधनं तु जीवत्यपि भर्तरि मातुरादौ तदभावे पितुः। **मान**वेऽप्येवम्। अन्यथा पित्रोरित्येव ब्रूयात्। कन्याधने मातुरभावे पितुरधिकारश्रवणादत्रापि तथैवौचित्यात्। तथा च रिक्थमिति **बौधायनो**क्तं कन्याधनविषयकम्। न च कन्याधने इवात्रापि पूर्वं भ्रातुरधिकारापत्तिः। तद्वदत्र वचनाभावात्। पित्रोरेव तच्छ्रुतेः। तदेवमादिकमप्रजःस्त्रीधनमादौ भ्रातरो गृह्णीयुः। न त्वासुरादिविवाहेषु यत्कन्याभ्यः शुल्कदानं तदभिप्रायम्, आसुरमात्रगोचरत्वात्तच्छुल्कस्य। 'आसुरो द्रविणादानादि'त्युक्तेः। अतो राक्षसादौ शुल्काभावात्तत्साहचर्येणासुरादिष्वेव यद्धनं तन्मात्रस्य भ्रातृगामित्वाभिधानं हेयमेव। तथा तस्य स्त्रीधनत्वाभावाच्च। पित्रादिगृहीतधनस्यैव शुल्कत्वात्। तथा च **मनुः**—( अ. ३। ५१ ) "न कन्यायाः पिता विद्वान्गृह्णीयाच्छुल्कमण्वपि। गृह्णन् हि शुल्कं लोभेन स्यान्नरोऽपत्यविक्रयी"॥इति। पितेत्युपलक्षणम्। तेन भ्रात्रादिरपि तत् गृह्णन् शुल्कग्राही। तेन पित्रादिगृहीतमेव परं शुल्कं भवतीत्युक्तं भवति। अतो यदुक्तम् "आसुरादिष्वेव शुल्करूपस्त्रीधनसंभवात् तदेकवाक्यतापन्नयोर्बन्धुदत्तान्वाधेययोरपि आसुरादिविवाहगोचरयोरेव भ्रातुरधिकार" इति तन्निरस्तम्। किं तूक्तशुल्करूपस्त्रीधनस्य सर्वविवाहेष्वेव संभवात् सर्वत्रैव भ्रातुरधिकारो वाक्याद्विशेषानवगमात्।

प्रागुक्त**गौतमीय**मपि **कार्तीय**तुल्यार्थम्। अयं हि तस्यार्थः। आदौ सोदर्याणां, तदभावे मातुः। पूर्वं वेके इति परमतम्। अत आदौ सोदराणां तदभावे मातुस्तदभावे पितुस्तेषामभावे भर्तुरिति। तथा च **कार्तीयं**, बन्धुदत्तं त्विति। बन्धूनामभावे इत्यनेन भ्रातुरभावे इत्यपि सूचितम्। भ्रातुरभवे पित्रोर्धनाधिकारस्य दण्डापूपन्यायात्सिद्धिः इत्यपि तदुक्तमपास्तम्।

तस्य सर्वविषयत्वात्। बौधायनाद्युक्तस्य शुल्कविषयत्वात्। अत एव न चेत्यादेरयुक्तत्वात्। त्वद्रीत्या **देवल**वाक्यस्य सत्त्वात्। अत एव तदेवमित्याद्युपसंहारस्यायुक्तत्वात् यथासंभवमुक्तवचनानां शुल्कविषयत्वेन न त्वासुरादीत्यादेरयुक्तत्वात्। त्वयाऽप्यग्रे किं त्वित्यादिना तथैवोक्तत्वेन अस्य "बौधायनोक्तं कन्याधनविषयकम्" इत्यस्य च तेन विरुद्धत्वात्। तस्य स्त्रीधनत्वस्य प्रागुक्तत्वात्। पित्रादिगृहीतस्यैव तत्त्वस्य **मन्वा**दितोऽलाभात्। तस्य तन्निषेधकथनद्वारा ब्राह्मादिविवाहप्राशस्त्यपरत्वात्। तत्राप्युपलक्षणत्वेन भ्रात्रादीत्यनेन मातुरपि ग्रहणसंभवेन मिथो विरोधात्। अत एवोपसंहारस्यायुक्तत्वात्। अत एवास्माकं तन्मतस्यैवाभावेन तन्निरासस्यादोषावहत्वेन अत इत्यादेरसंबद्धत्वात्। **गौतमीयकार्तीय**योर्भिन्नार्थत्वस्य प्रागुक्तत्वेन तुल्यार्थत्वाभावात्। उभयत्र मध्येऽध्याहारेण व्याख्यानस्य निर्बीजत्वात्। अन्यथाऽनुपपत्त्या हि सः। न तु सा तत्रास्ति। प्रागुक्तरीत्या निर्वाहात्। अत एव **कल्पतरुणा**ऽपि **गौतमीयं** तथैव व्याख्यातम्। ऊर्ध्वपदसमभिव्याहारे तथैव कपिशैलीसत्त्वात्। बन्धूनामभावे इत्यस्यैव तथार्थकत्वेन सूचितमित्यस्यासंबद्धत्वात्। अत एवाग्रिमोक्तेरपि क्लिष्टत्वाच्चेति दिक्।

'मातुस्तु यौतकमिति' पुत्रिकाप्रकरणस्थ**मानव**मपि सर्वैकवाक्यतानुरोधेन सर्वधनविषयकम्। अत एव मातुर्यद्धनं स्यात्तत् तस्यां मृतायां कुमारीभाग एवेति सामान्यत एव तत् व्याख्या-

१ फ-वाक्याविशेषानवगमान्।

तम् । **मेधातिथिना**ऽपि यौतकं पृथग्भूतमित्येवं व्याख्यातं, यु मिश्रणामिश्रणयोरितिधात्वनुसारात् ।

युक्तं चैतत् । "विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतकैः।" इत्यग्रिम**मूल**वाक्ये (१५१ श्लो.) तथैव सर्वसंमतत्वात् । त्वद्रीत्याऽपि तोश्चार्थकत्वेन समुच्चायकतया सर्वधनग्रहणसंभवात् । एवं सति अन्वाधेयं चेति अध्यग्न्यध्येत्यग्रिमम् ऊढाविषयं क्रमेण दौहित्र्याद्यर्थं पुत्राद्यर्थं चेति न वैयर्थ्यं तस्य । अत एवानुरोधेनापि समअसवचनानामाकुलीकरणमसंगतमेव तेषामिति दिक् ।

वस्तुतस्तु **कातीय**द्वयस्योढामात्रविषयत्वेन प्रागुक्तान्यार्थासम्भवेऽपि **बौधायनीयम्** अनूढा या वाग्दत्ता जीवन्ती अवाग्दत्ता वा तद्विषयकम् । कन्याशब्दस्याक्षतयोनिमात्रवाचकस्य साधारणतया तत्रापि प्रवृत्तेः । तदीयधनमविषयं पितामहादिदत्तमेव । वक्ष्यते चेदं व्याख्यात्राऽनुपदमेव । न तु शुल्कपरं तत् मानाभावात् । अत एव रिक्थपदोक्तिस्तत्र । तस्य दायवाचकत्ववत्सामान्यधनवाचकत्वस्यापि कोशतः सत्त्वेन तत्रापि प्रवृत्तिसम्भवात् । अत एव 'मातापित्रोरिति' **मनुना** तस्यैकवाक्यता न । तस्या विवाहाविशेषविषयत्वाद्यावत्स्त्रीधनविषयत्वाच्च । **गौतम**स्यापि ऋषिसिद्धार्थस्योक्तत्वेन तदेकवाक्यताऽपि तयोर्न । तस्य शुल्कमात्रविषयत्वस्य स्पष्टत्वाच्च ।

यद्यपि **पाणिनीये** "तदस्मिन्वृद्ध्यायेति" (५ । १ । ४७) सूत्रे आयादिसाहचर्यात्संज्ञावृद्धेरग्रहणम्, उपदेति टाबन्तम्, उत्तमर्णेन मूलातिरिक्तं ग्राह्यं वृद्धिः, ग्रामादिषु स्वामिग्राह्यो भाग आयः, विक्रेत्रा मूल्यादधिकं ग्राह्यं लाभः, रक्षानिमित्तभृतिरूपो राजभागः शुल्कः, उत्कोच उपदा उपहार इत्यन्ये, शुल्कग्रहणं प्रपञ्चार्थं तस्याप्यायविशेषत्वात्, तथा च शौल्कशालिक इति 'ठगायस्थानेभ्यः' (व्या. सू. ४ । ३ । ७५) इति ठग् भवति" इत्यभियुक्तैर्व्याख्यातम् । तथापि अत्रत्यपरिभाषा भिन्नेति तात्पर्यम् । तथा च व्याख्यात्रुक्तशुल्कधनं न प्रजामात्रस्य भर्त्रादेश्च, किं तु सोदर्याणां, तदभावे मातुस्तदभावे पितुस्तदभावे तत्प्रत्यासन्नानामिति । एवं तदुक्तबन्धुदत्तमपि न प्रजामात्रस्य मात्रादेश्च, किं तु बन्धूनां भ्रातॄणां, तदभावे भर्त्रादेः । "बन्धुदत्तं तु बन्धूनामभावे भर्तृगामि तत ।" इति **कातीयादि**ति बोध्यम् ।

एवं **वृद्धकातीयस्य** समूलत्वेन तदपि जङ्गमस्थावरान्यसौदायिकधनविशेषे । अप्रजःस्त्रीधनमित्यादि सर्वविवाहेष्वाद्यापवादकं, तदभावे तथैव । तत्र चैन भ्रातृपितृव्यादि । एवेन भर्तृकुलव्यवच्छेदः । धनं धनं च । अप्रजायामित्यार्षम् । अत एवान्यगृहीतो 'अप्रजायामतीतायां बान्धवा' इति मूलपाठो व्याख्यात्रा त्यक्तः । **मानव**द्वयेऽपि तथैव बोध्यमिति तदाशयः । तुश्चार्थे तेन तदभावे तथेत्यस्य समुच्चयः । सर्वदा सर्वविवाहेषु । प्रजासत्त्वे तु तस्या एवोक्तरीत्येति बोध्यम् ।

"अपुत्रायां मृतायां तु पुत्रिकायां कथञ्चन । धनं तत् पुत्रिकाभर्ता हरेतैवाविचारयन् ॥"

इति **मनु**स्तु (अ. ९।१३५) भर्तुः अपूर्वधनसम्बन्धबोधकः । स च पुत्रिकाप्रकरणस्थः । संवित्कृता पुत्रिका । तदन्वितेन कथंचनेत्यनेन तथा न कृता किं त्वभिमता तस्या अपि ग्रहणम् । अत एव 'भ्रातृमतीमिति' विशेषणं तत्र सफलमित्युक्तं प्राक् ।

अत एव "अपुत्रायां कथंचन पुत्रिकायां मृतायां प्रकरणात्पैतृकरिक्थरूपतदीयधनं पितृसत्त्वेऽपि तद्भर्तैवाविचारयन् गृह्णीयात् पुत्रिकायाः पुत्रसमत्वेनानपत्यस्य पत्नीरहितस्य मृतस्य पुत्रस्येव ब्राह्मादिष्वपि पित्रादेर्धनग्रहणप्रसङ्गे तन्निवारणार्थमिदं वचनम्" इति तद्व्याख्यातारः ।

"प्रेतायां पुत्रिकायां न भर्ता द्रव्यमर्हत्यपुत्रायां कुमार्यां मात्रा स्वस्रा वा तत् ग्राह्यमिति" **पैठीनसि**स्तु निर्मूलः। समूलत्वे वा आर्षत्वाविशेषाद्विकल्पोऽस्तु। परंतु तत्रापि **मनोः** प्रामाण्यातिशयात्तदेवानुष्ठेयं न तदित्यननुष्ठानलक्षणमप्रामाण्यमेव तस्येति दिगिति बोध्यम्।

एतेन 'अस्यां यो जायते पुत्रः' इति पुत्रिकाविषयं **मानव**म्, 'इयं मे पुत्र' इति पुत्रिकाविषयं **पैठीनस**मिति। एवं 'भगिनीशुल्कमिति' **गौतमीये** "ऊर्ध्वं मातुः सोदर्याणामभावे मातुरिति" व्याख्याय तदुभयाभावे पितुरित्युक्त्वा तत्र **बौधायनी**यं मानत्वेन संलिख्य रिक्थं शुल्कमिति व्याख्याय पित्राद्यभावे तु भर्तृगाम्येवेत्युक्ते बन्धुदत्तं त्विति **कातीयं** मानत्वेन संलिख्य बन्धवः पित्रादय इति उक्तम्। तथा स्त्रीधनविषये इत्थं व्यवस्था—तत्राध्यग्निकृतं तास्वपि कुमार्य एव लभन्ते नोढाः, मातुस्त्विति **मनोः**। तत्र यौतकं प्राच्योक्तमेव उक्त**वसिष्ठात्**। पारिणाय्यमित्यस्य स एवार्थः। स्त्रियः कुमार्यः। कुमारीवदप्रतिष्ठिताऽपि। स्त्रीधनमिति **गौतमात्**। स्त्रीधनं पैतृकं कुमारी अभावे ऊढाऽपि कन्यैव लभते न पुत्रः। गुणलोपे तु मुख्यस्येति न्यायात्, दुहितृपदसामर्थ्याच्च। एवमप्रतिष्ठिताया अभावे प्रतिष्ठिताऽपीति। अन्वाधेयं तु स्त्रीपुंनपुंसकसाधारणप्रजायाः। "अन्वाधेयं तु यद्दत्तं पत्या प्रीतेन वा पुनः।" (अ. ९।१९५) इति **मनो**रिति।

यत्तु पत्युः रिक्थत्वेन मात्रा लब्धं तत् पुत्रैर्दुहितृभिश्च समं विभाज्यम्। जनन्यामिति **मनोः**, भगिन्यः कुमार्यः सममिति **शंखलिखिता**भ्यां, समानमिति **देवला**च्च। ऊढास्तु तुर्यांशमात्र लभन्ते, न समम्। स्त्रीधनमिति **बृहस्पतेः**। अनूढानां पितृधने इवोढानां मातृधने तथैवेत्युक्तं प्राक्।

यत्तु—

"अप्रत्तायास्तु दुहितुः स्त्रीधनं परिकीर्त्तितम्। पुत्रस्तु नैव लभते प्रत्तायां तु समांशभाक्॥"

इति, तत् अप्रत्तासद्भावेऽपि प्रत्तायाश्चतुर्थांशस्मरणात्तदभावे समांशस्य न्यायप्राप्तत्वमित्येवंपरम्।

"भगिन्यो बान्धवैः सार्धं विभजेरन्समं ततः। स्त्रीधनस्येति धर्मोऽयं विभागस्तु समः स्मृतः॥"

इति **कातीयात्**।

एतेन "भ्रातृभगिन्योः सम्भूयांशहरत्वं नास्ति इतरेतरयोगस्य द्वन्द्वैकशेषाभावादप्रतीतेः" इति परास्तम्। "चार्थे द्वन्द्वः" (व्या. सू. २।२।२९) इत्यनेन तस्य चार्थत्वात्। **देवलीये** द्वन्द्वश्रवणाच्च। यौतकभिन्ने सर्वत्र दुहितृदौहित्रीसमवाये तस्या अपि किञ्चिद्देयम्। यास्तासामिति **मनोः**। मृतमातृकाणां तु तासां "पितृतो भागकल्पना" इति न्यायात् पुत्रदुहित्रादिभिः समवाये समांशभाक्त्वमेव। दुहित्रभावे तु पुत्र एवेति। उभयत्र तदभावे तत्प्रत्यासन्नानां ग्रहणं तु "अनन्तरः सपिण्डाद्य" इत्यादि**मन्वा**द्यनुरोधेन पत्न्यादौ पूर्वं क्लृप्तेन न्यायेनोक्तम्। अनन्तर इत्यस्य सामान्यस्य उक्तोरसाद्यनन्तरमुक्त्या तन्मात्रपरत्वे तस्य सामान्यस्य वैयर्थ्यापत्त्याऽनुक्तपत्न्यादिदायपरत्वमिवैतत्परत्वमपि। तत्रानन्तर्यमपि प्रागुक्तताद्दशप्रत्यासत्त्यतिशयकृतमेवेति तत्क्रमेणैव तदधिकार इति न कोऽप्यग्रे दोष इति **विज्ञानेश्वरा**शयः।

विशेषवचनानि तु प्रकृतविषयेऽग्रे नोपलभ्यन्ते। पत्न्यादिविषये विद्यमानान्यपि वचनानि तदनुरोधेनैव योजितानि। तस्यैव मुख्यबीजत्वात्। एवं च—

---

१ क-ख-फ-सामान्यामिति।

" मातृष्वसा मातुलानी पितृव्यस्त्री पितृष्वसा । श्वश्रूः पूर्वजपत्नी च मातृतुल्याः प्रकीर्तिताः ॥
" यदाऽऽसामौरसो न स्यात्सुतो दौहित्र एव वा । तत्सुतो बान्धवस्तासां स्वस्रीयाद्याः समाप्नुयुः ॥"

इति **बृहस्पति**रप्यधिकारिमात्रबोधको न क्रमबोधक इति तदनुरोधेनैव योज्यः प्रागुक्तरीत्या ।

तथा हि । औरसपदेन कन्यापुत्रयोर्ग्रहणम् । तयोः सर्वापवादकत्वात् । सुत इत्यनेन [1]सपत्नीकन्यापुत्रयोर्ग्रहणम् । इदं च दायग्रहणांशे । स्वस्रीयो भगिनीसुतः । आद्यपदेन स्वभर्तृभागिनेयदेवरपुत्रस्वभ्रातृपुत्रजामातृदेवराणां ग्रहणम् । यथासंख्यमन्वयः । दौहित्र इत्यनेन दौहित्रीदौहित्रयोर्ग्रहणम् । औरसयोः सपत्नीपुत्रयोश्चाभावे अनयोरधिकारात् । तत्सुत इत्यनेनौरससुतोभयजन्यपौत्रग्रहणं, न तु दौहित्रसुतस्य । पिण्डदानांशे अनधिकारात् सर्वासामिति **मनोः** । औरसविशेषणत्वं तु न । वैयर्थ्यात् । अन्यथा सपत्नीपुत्रसद्भावेऽपि स्वस्रीयाद्यधिकारापत्तेः । बान्धवशब्देन भ्रातुर्भर्तुर्मातुः पितुरित्यादेर्ग्रहणम् । तदभावे स्वस्रीयादयस्तत्क्रमेणैवेत्यर्थः । एवं—

" मातुलो भागिनेयस्य स्वस्रीयो मातुलस्य च । श्वशुरस्य गुरोश्चैव सख्युर्मातामहस्य च ॥
एतेषां चैव भार्याभ्यः स्वसुर्मातुः पितुस्तथा । श्राद्धदानं तु कर्तव्यमिति वेदविदां स्थितिः ॥ "

इति **वृद्धशातातपीये** पिण्डदानांशेऽपि बोध्यम् । पिण्डदत्वं न रिक्थहारित्वव्याप्यमपि तु विपरीतम् । तदप्यौत्सर्गिकमित्यादि हि प्रागेव प्रपञ्चितमिति न विस्मर्तव्यम् ।

एतेन " पुत्राभावे दौहित्रस्तदभावे दौहित्रपुत्रस्तस्याप्यभावे स्वस्रीयाद्या अविशेषेण सर्वधनभाजः । मातृष्वसेति **बृहस्पतेः** । आद्यशब्देन यस्य मातुलानी स इत्यादि । पूर्वजोऽग्रजः । यद्यप्यत्र पुत्राभावे दौहित्रः श्रूयते तथापि पुत्रदुहितृसद्भावेऽपि दौहित्रीणां किञ्चिद्धनसंबन्धश्रवणात्तदभावे सर्वधनसंबन्धस्याप्रतिबन्धान्मातामह्यवयवाधिक्येन च दौहित्रापेक्षया प्रत्यासन्नत्वाच्च दौहित्र्यभावे दौहित्रो धनभाक् । अत्राप्ययं विशेषः । यत् पितृकुलादागतं तत्स्वस्रीयाद्याः, यत् भर्तृकुलादागतं तद्देवराद्याः, जामाता तूभयमप्यविशेषात् " इति **भ्रान्ता**युक्तम्, एतद्वचनबला**न्मनू**क्तत्यागेनान्यथा क्लेशेन यदधिकारप्रतिपादनं **प्राच्यानाम्**–तथा हि " तदेतेषां पुत्रादीनां भ्रात्रादिभर्तृपर्यन्तानां चाभावे सत्स्वपि श्वशुरभ्रातृश्वशुरादिषु सपिण्डेषु भगिनीपुत्रादीनां धनाधिकारिता अनन्यगतेर्वचनात् स्त्रीणां मातृतुल्यताप्रतिपादनेनामीषां पुत्रत्वज्ञापनेन पिण्डदत्वसूचनस्य दायप्रकरणे धनाधिकारज्ञापनैकप्रयोज्यत्वात् । तत्र स्वस्रीयाद्या इति वचनात्पूर्वपूर्वाभावे सर्वशेषे देवरस्यैवाधिकारापत्तेर्महाजनविरोध इति वस्तुबलमालम्ब्योच्यते । तत्र त्रयाणामिति अनन्तर इति पूर्वदायभागप्रकरणस्थ**मनोः**, पिण्डदोंऽशेति **मूलेन** च पिण्डदानेनाधिकारदर्शनात्पुत्रस्यापि सातिशयपिण्डदाने नरकत्राणकारणतया मुख्यत्वेनाधिकारावगतेर्मातुल इत्यादि**वृद्धशातात**पवचनेनामीषां पिण्डदानप्रतिपादनादयं पिण्डदानविशेषादधिकारक्रमः । आदौ देवरः तद्भर्तृदेयपूर्वपुरुषत्रयपिण्डदातृत्वात्सापिण्डत्वाच्च तद्धनाधिकारी । तदभावे भ्रातृश्वशुरदेवराणां सुतः तद्भर्तृदेयपूर्वपुरुषद्वयपिण्डदातृत्वात्सपिण्डत्वाच्च पितृव्यस्त्रीधनेऽधिकारी । तदभावे त्वसपिण्डोऽपि भगिनीपुत्रः तत्पुत्रदेयपित्रादित्रयपिण्डदानात् मातृष्वसृधने अधिकारी । तदभावे स्वभर्तृभागिनेयः पुत्राद्भर्तुर्दुर्बलवत्त्वात्तत्स्थानपातिनोऽपि तथैव बलाबलस्यापि न्याय्यत्वात् । तद्भर्तृदेयपूर्वपुरुषत्रयपिंडदानात्तत्पिण्डदानाच्च

१ सपत्न्याः कन्यापुत्रयोरित्यर्थः ।

मातुलानीधनेऽधिकारी । तदभावे भ्रातृसुतः तत्पितृपितामहयोस्तस्याश्च पिण्डदानात्पितृष्वसृधनेऽधिकारी तस्याप्यभावे श्वशुरयोः पिण्डदानाज्जामाता श्वश्रूधनेऽधिकारीत्ययं क्रमो ग्राह्यः स्वस्त्रीयाद्या इति न क्रमार्थं किं त्वधिकारितामात्रपरम् । षण्णां पुनरेतेषामभावे श्वशुरादेः सपिण्डने तु कृतो धनाधिकारो बोद्धव्यः । न च सपिण्डाभावे सतीदं वचनमिति वाच्यम् । अस्यामधिकारशृङ्खलायां देवरदेवरसुतयोर्भ्रातृश्वशुरस्य तस्यचाधिकारज्ञापनात् । आसन्नतरश्वशुरभ्रातृश्वशुरादेः परित्यागात्, इति । तच्चापास्तम् । अज्ञानप्रलपितत्वात्, दोषगणस्योक्तत्वात्, अन्यस्मृतितो **मनोः** प्रामाण्यातिशयेन प्राबल्यस्यान्यत्र प्रतिपादितत्वाच्चेति मात्सर्यमुत्सार्य विचारणीयमिति दिक् ॥ १४५ ॥

## याज्ञवल्कीये १४६ श्लोकः ( पूर्वार्धः ) ।

प्रकृतासंबद्धत्वा*?*ह । **प्रसङ्गेनेति** । **किंचित्**, अर्धश्लोकोक्तम् । मुख्यदानेऽपहारस्यैवासंभवादाह । **वाचेति** । **द्रव्येति** । अनुबन्धो दोषोत्पादः । दोष इति यावत् । " दोषोत्पादेऽनुबन्धः स्यात् " **इत्यमरात्** ( ३ । ३ । ९८ ) । द्वंद्वसमासः । आदिना जातिगुणयोर्ग्रहणम् । अत्रैव विशेषमाहाविरोधाय । **एतच्चेति** । दण्डनं चेत्यर्थः । चार्थमाह । **यच्चेति** । **वरेणेति** । तत्पित्रादिना वेत्यपि बोध्यम् । एवमग्रेऽपि । स्वं वरः । उपचारो व्यवहारः । व्ययमित्यस्य कर्मप्रत्ययान्तस्यार्थमाह । व्ययीकृतमिति । अत्रैव ।

### ( उत्तरार्धः ) ।

**अथेति** प्रश्ने । तमेवाह । **कथंचिदिति** । **संस्कारात्**, पाणिग्रहणादितः । 'स्वं च शुल्कं वोढाऽर्हतीति' **गौतमोक्ते**राह । **वर इति** । किं कृत्वेति शङ्कायामाह । **परीति** । **उभयोरिति** । कन्यादातृप्रतिग्रहीतृतत्पित्रादिभिर्विवाहोद्यतैर्वर्गद्वयस्थैर्विवाहनिमित्तं वाग्दाननिमित्तं वा यद्धनं व्ययीकृतं तत् तस्मात्कन्याधनात् गृहीत्वाऽवशिष्टं तस्मै दद्यादित्यर्थः । **विगमय्य** परिहृत्य । विगणय्येत्यपपाठः । अविरोधाय विशेषमाह । **यस्त्विति** । आदिना पितृव्यादिग्रहणम् । **दत्तं** वाग्दानसमये । ततः पूर्वं वा प्रीत्या तस्या एव स्वत्वं कृत्वा समर्पितम् । शिर इत्युभयान्वयि । पक्षान्तमाह । **वा क्रमागतमिति** । क्रमायातं वेत्यर्थः । **तदभाव इति** । सोदराभावे तन्मातुर्भवति तदभावे पितुर्भवतीत्यर्थः ॥ १४६ ॥

प्रकृतसङ्गतिमाह । **मृतेति** । **इदानीमिति** । प्रगक्तानुप्रसक्त्येति शेषः । अपिना तदन्यसमुच्चयः । **क्वचित्** । न तु सर्वत्र । मौलश्चो व्युत्क्रमे इत्याह ।

## याज्ञवल्कीये १४७ श्लोकः ।

**संप्रतिरोधके चेति** । अन्त्यार्थमाह । **बन्दीति** । तत्पुरुषगर्भद्वंद्वगर्भो बहुव्रीहिः । **निग्रह**स्ताडनम् । सर्वशेषमाह **द्रव्यान्तरेति** । **पुनः** पश्चात् । द्रव्यलाभोत्तरम् । **अर्हतीति** । अवश्यदेयमिति नियमो नास्तीत्यर्थः । अन्यथा न देयमित्येव ब्रूयात् । निमित्तविशेषोल्लेखफलमाह । **प्रकारान्तरेति** । भर्तेत्युक्तेः फलमाह । **भर्तृव्यतिरेकेणेति** । तस्यैवोक्तनिमित्तेऽप्यभ्यनुज्ञा नान्येषामिति भावः । **जीवन्त्या इति** । **मृतायास्तूक्त** एव प्रकार इति भावः । **तत्** धनम् । **स्वबान्धवाः** दायादाः । **शिष्यात्** शिक्षयेत् । **नारदो**ऽपिकिरियम् । **मानव**मप्याह । **तथेति** । तद्वदित्यर्थः । **दायादाः** पुत्रादयः । तस्मिन्मृतेऽपीति भाव. । **पतन्ति** पतिता भवन्ति । **विष्णु**रप्येवम् ।

एतेन 'विभागकाले पुत्राद्यस्तं जीवति'पत्यौ न भजेरन् किं तु यस्याः सोऽलंकारस्तत्पतिभागत्वेनैव देयो यथा सैव तं परिदध्यान्न तु जीवति पत्यौ यो धृतः स मृतेऽप्यविभाज्य इति । अदृष्टार्थतापत्तेः । एतेन "सर्वथाऽसावविभाज्य" इत्यपि निरस्तम् । जीवतीति विशेषणान्मृते तस्मिन्नन्येनापि ग्रहणे न दोषः" इति भ्रान्तोक्तमपास्तम् ॥ १४७ ॥

## याज्ञवल्कीये १४८ श्लोकः।

**प्रकृतसंगतिमाह** । आधिवेदनिकमिति । **तत्** सविधिप्रकारं तत्स्वरूपम् । अधीत्यादि चतुर्थ्यन्तमेकं पदम् । विन्नमित्यत्र भावे क्तः । अधि उपरि विन्नं वेदनमिति सुप्सुपेति समासः । तदस्ति यस्या इति 'अर्श आद्यच्' ( व्या. सू. ५ । २ । १२७ ) । तत्फलितमाह । **यस्या इति । उपरि** योग्यतया सत्त्वे । **विवाह** ऐच्छिकः । अधिवेदनप्राप्तधनं आधिवेदनिकम् । 'तस्य निमित्तमिति' ( व्या. सू. ५ । १ । ३८ ) ठगार्हीय इत्याह । **अधीति ।** बहुव्रीहिः । तादृशविवाहान्तरमेव पूर्वस्या धर्मपत्न्या धनदाने निमित्तमिति भावः । तत्कियदित्याशङ्कायामाह । **सममिति** । तस्य सापेक्षत्वेन प्रकृतत्वादाह । **यावदिति । व्यर्थीकृतम्** । अलंकरणादिरूपेण । अत्र विशेषबोधकमुत्तरार्द्धमित्याह । **यस्या इति ।** त्वर्थमाह । **पुनरिति ।** साकांक्षत्वेन प्रकृतत्वादेवाह । **आधीति ।** प्रकल्पयेदित्यस्यार्थमाह । **दद्यादिति** । एतेन प्रकीर्तितमित्यपपाठः सूचितः । नन्वेवं नियतसमत्वासिद्धिः, कदाचिन्न्यूनाधिकभावस्यापि संभवात् । अत आह । **अर्धेति ।** किं त्वंशमात्रपर इति भावः । मौलमर्द्धपदं तु न नपुंसकलिङ्गम् । येन समप्रविभागवाचकं भवेत्, 'अर्धं समेंऽशके' **इत्यमरात्** ( १।३।१६ )। अपि तु पुंलिङ्गम् । अत एवांशमात्रवाचकं तत् । समत्वस्यैव हि अभिमतत्वमिति केचित् ।

वस्तुतस्तु अर्ध एकार इत्यादि**महाभाष्य**प्रयोगात् **अमर** वा पुंसीतिपूर्वान्वयात्, अर्धः अर्धश्च समेंऽशके इत्यर्थादित्युक्तलिङ्गस्यापि समांशवाचित्वेन न तत्साधकम् । अपि तु तत्समत्वस्यैव विवक्षितत्वेन तदनुरोधेनात्र तस्यांशमात्रवाचित्वं ग्रामार्ध इत्यादाविव न तु तद्वाचित्वमिति बोध्यम् । तदाह । **अतश्च यावतेति** । एतावताऽपि स्त्रीधनस्य पित्रादिधनविभागकालेऽविभाज्यत्वमेवेति न तद्बोधकवचनविरोध इति बोध्यम् ॥ १४८ ॥

## याज्ञवल्कीये १४९ श्लोकः ।

महाप्रकरणशेषतया तेन सङ्गतिमाह । **एवमिति ।** विभागसन्देह सतीत्यर्थः । **अपलापे** विभागानन्तरं कालान्तरे विभागो न जात इत्येवंरूपे अन्यतरेण कृते सति । मूले प्रायो बहुवचनान्तेन द्वन्द्व इत्याह । **ज्ञातिभिरित्यादि** । तेषां बहूनामेकसाधकत्वात् पितृबन्धुभिरिति । इदमुपलक्षणमन्यद्वयस्यापि ।

वस्तुतस्तु ज्ञातिभिरित्यस्योदासीनैः सजातीयैरित्यर्थः । बन्धुभिरित्यस्य बन्धुत्रयभ्रात्रादिभिश्चेत्यर्थ उचित इति बोध्यम् । अभिलेखितेत्यस्यार्थमाह । **लेख्येन चेति ।** अत्र बहुत्वानुपयोगोऽनिष्टावहं च सतस्त्वं प्रत्युत इति भावः । सर्वसमक्षं लिखापितमिति तदर्थः । **तथा,** तद्वत् । यु मिश्रणामिश्रणयोरित्यनुशासनानुरोधेन तदर्थमाह । **पृथगिति । गृहेति ।** बहुवचनान्तद्वन्द्वः । चः समुच्चये । न्यूनतानिरासायाह । **पृथगिति ।** पृथक्कृतगृहक्षेत्रादिसत्वेऽपीति भावः । **विभागधर्मेति ।** दायादानां विभागरूपधर्मसन्देहे सतीत्यर्थः । अग्रे ज्ञेय इति शेषः । **भागलेख्येन,**

विभागपत्रेण । भोगलेख्येनेति पाठे समाहारद्वन्द्वः । **कार्येति** । कृष्यादिरूपेत्यर्थः । द्वितीयमाह । **भ्रातृणामिति । तथा** तद्वत् । **तेनैव नारदेनैव** । **प्रातीति** । प्रतिभूत्वमित्यर्थः । **नाविभक्ता इति** । अन्यथा करणे दण्डाद्याम्नानात्तत्समर्थानामेव तदुचितं नान्येषामितीदमपि क्रियमाणं तल्लिङ्गमिति भावः । **कथंचनेति** ।

अत एव विभक्तकल्पमपि[1] **तेनैवोक्तम्** ( अ. १३ श्लो. ४२।४३ )

" यद्येकजाता बहवः पृथग्धर्माः पृथक्क्रियाः । पृथक्कर्मगुणोपेता न ते कार्येषु सङ्गताः ॥ "

" स्वभागानपि दद्युस्ते विक्रीणीयुरथापि वा । कुर्युर्यथेष्टं तत्सर्वमीशास्ते स्वधनस्य वै ॥ " इति ।

'विभक्ता ह्यविभक्ता वेति' **बृहस्पते**राशयस्तूक्त एव । उक्तरीत्याऽर्थनिर्णये पुनर्विभागमाह—

**मनुः,**—

" विभागे यत्र सन्देहो दायादानां परस्परम् । पुनर्विभागः कर्तव्यः पृथक्स्थानस्थितैरपि " इति ।

" सकृदंशो निपततीति " **मानवं** तूक्तरीत्या शक्यनिर्णयाभिगामीति केचित् । वस्तुतस्त्वाद्यं विभागे न्यूनाधिकभावांशे मिथः सन्देहाभिप्रायं, द्वितीयं निर्णयाभिप्रायं, मौलं यथास्थितं जातस्य तस्यैवान्यतरकृतापलापाभिप्रायम् । अत एव तत्र **बृहस्पतिः**—

"स्वेच्छाकृतविभागो यः पुनरेव विसंवदेत् । स राज्ञांऽशे स्वके स्थाप्यः शासनीयोऽनुबन्धकृत् ॥"

इतीति बोध्यम् ॥ १४९ ॥

इति दायविभागः ।

---

## याज्ञवल्कीये १५० १५१ श्लोकौ ।

दायान्तर्गतस्थावरान्तर्गतगृहक्षेत्रप्रसङ्गेनाह । **अधुनेति । मनू**क्तक्रमस्तु नैवाभिमतोऽस्येति भावः । एवमग्रेऽपि बोध्यम् । **विवादे** सतीति शेषः सीमशब्दो नान्तः डाबन्तश्च । स्त्रीलिङ्गौ द्वौ । ग्रामद्वयसंबन्धिक्षेत्रसीम्नि इति पाठः । संबधित्वं क्षेत्रविशेषणम् । व्यस्तपाठेऽग्रेपि व्यस्त एव पाठः । युक्तं चैतत् । मूले तथैव पाठात् । विनिगमकाभावादाह । **तथैकेति** । तद्वदित्यर्थः । एतेषामर्थान् वक्तुमादौ सर्वविधसीमानिर्णायकत्वमेतेषामिति सिद्धान्तायाकांक्षितं विशेषं मूलानुक्तमाह । **सीमा क्षेत्रादीति । सा चेति** । विषयभेदादिति भावः । **जनपदो** ग्रामसमूहो देशः । **सा च,** चतुर्विधाऽपि । **यथासंभवमिति** । संभवमनतिक्रम्येत्यर्थः । न नियमेन वक्ष्यमाणपञ्चलक्षणैरुपेतैव सर्वा सीमा, अपि तु क्वचिदेकेन क्वचित् द्वाभ्यां क्वचिद्बहुभिरिति । यत्र यथा प्राप्तिस्तत्र तथैवेति भावः । **वृक्षादिलक्षिता,** वृक्षादिकृता । गौण्या योगार्थमप्याह । **वृक्षादीनामिति** । 'अत इनि ठनाविति' ( व्या. सू. ५ । २ । ११५ ) इनिः सर्वत्र । अत्र शुद्धतया तमप्याह । **मत्स्येति** । तद्विना तदस्थितेः । स्वाधारेत्यनेन तन्मूलसंबन्धो दर्शितः । निधीयते इति निधानं तदेव नैधानं स्वार्थे ऽण् । तदर्थमाह । **निखातेति** । अत्रापि गौणी वृत्तिरित्याह । **तेषामिति** । तुषाङ्गारादीनामित्यर्थः । **निखातत्वेन,** खनित्वाऽन्तर्गुप्ततया स्थापितत्वेन । उक्तहेतोरेवाह । **निधानेति** । भयवर्जितेत्यस्यार्थमाह । **अर्थीति** । वादिप्रतिवादिनोः सत्यसंधत्वेन मिथो-

---

१ क-विभक्तकृत्यमपि ।

ऽत्यन्तं विश्वस्तत्वेन इयं मदीया भूः इयं मदीयेति स्वस्वचित्तानुसंधानपुरःसरं मिथः संमत्या वाङ्मात्रादिनिर्मितेत्यर्थः । अत्रार्थित्वं प्रत्यर्थित्वं च प्रातिवेश्यत्वेन तद्योग्यत्वाशयेन च मत्सरग्रस्तत्वेनेति ज्ञेयम् । **ज्ञातृचिह्नेति** । ज्ञातारश्च चिह्नानि च तेषामभावे इत्यर्थः । ज्ञातारः साक्षिसामन्तादयः । चिह्नानि वृक्षादीनि ।

**व्यासेन** तु अन्यथा भेदानुक्त्वा विवृताः । तद्यथा—

" निम्नोन्नता च ध्वजिनी नैधानी राजकारिता । स्थिरा पञ्चविधा सीमा मत्स्यिनी तु चला स्मृता ॥
" ग्रामयोरुभयोर्यत्र गर्त्तः सीमाप्रवर्तकः । निम्नोपलक्षिता सा तु शास्त्रविद्भिरुदाहृता ॥
" शरकुञ्जकवल्मीकान्यत्र देवगृहाणि च । अश्मकूटाश्च दृश्यन्ते ज्ञेया सा तु समुन्नता ॥ "
" ग्रामयोरुभयोः सीम्नि वृक्षा यत्र समुन्नताः । समुच्छ्रिता ध्वजाकारा ध्वजिनी सा प्रकीर्तिता ॥ "
" इष्टकाङ्गारसिकताः शर्करास्थिकपालिकाः । निहिता यत्र दृश्यन्ते नैधानी सा प्रकीर्तिता ॥ "
" तुषाङ्गारकपालैस्तु कुम्भैरायतनैस्तथा । सीमा प्रतिचिता कार्या नैधानी सा निगद्यते ॥ "
" साक्ष्यभावे द्वयोर्यत्र प्रभुणा परिकीर्तिता । सामन्तानुमता सीमा सा ज्ञेया राजकारिता ॥ "
" स्वच्छन्दगा बहुजला झषकूर्मसमन्विता । नित्यप्रवाहिणी यत्र सा सीमा मत्स्यिनी मता ॥" इति ।

**एवमिति** । उक्तप्रकारेण यथासंभवं पञ्चलक्षणलक्षितायां भूम्यामित्यर्थः । न्यूनता चांशे इति पाठः । उक्तभूविवादे षट्प्रकारत्वं **कातीय**व्याख्यानेन प्रदर्शयन्नत्रादौ प्रथमप्रकारमाह । **ममाग्रेति** । प्रदेशे इत्यर्थः । निवर्तनं भूपरिमाणमादावुक्तम्[1] । द्वितीयमाह । **पञ्चनिवर्तनेति** । नेत्यग्रे किं त्विति शेषः । एवमग्रेऽपि । विवाद इत्यस्यानुषङ्गः । अंश इत्युत्तरान्वयीति तृतीयं तुर्यं चाह । **पञ्चनिवर्तन इति** । अत्र तथोक्ते अंशोऽस्ति पञ्चनिवर्तन इत्येतन्नास्तीति तृतीयपक्षं व्याख्यातृबुद्धिपरीक्षार्थं स्फुटमनुक्त्वाऽग्रिमं पक्षमेव व्यक्तीकरोति । **अंश एव नास्तीति** । अत एव संभूयोपसंहरति । **अस्तिनास्तित्वेति** । पञ्चममाह । **मदीयेति** । संततेत्यस्यैव व्याख्या **चिरन्तन्येवेति** । तथा त्वाभोगभुक्तिरित्यस्य प्रागविद्यमानभोगकस्य क्षेत्रादेर्भुक्तिरित्यर्थः । षष्ठमाह । **इयं मर्यादेयं वेतीति** ।

यद्वा पञ्चनिवर्त्तनो ममांश इत्यत्रैक एव प्रकारः । मदीया भूरिति तुर्यः । सीमाशब्देनोभयम् । तत्र पञ्चम इयं मर्यादेयं वेति । इयं सीमेयं वेति षष्ठः । अनेनैवाशयेन तथा सीमाविवाद इत्युक्तं **मानवे** । मर्यादायाः सीम्नश्च भेदं दर्शयिष्यति " मर्यादायाः प्रभेदे तु " इत्यत्र । तथा चात्र भेदे पूर्वत्रैक्यं तत्र भेदे सीमामर्यादयोरेकत्वेन व्यवहार इति बोध्यम् ।

यद्वा आधिक्यं, न्यूनत्वम्, अस्तित्वं, नास्तित्वम्, अभोगभुक्तिः, सीमा चेत्यमी षट् हेतवः । क्वचिद्व्यस्ताः क्वचिन्मिलिता इति । एवमुक्ताशयगर्भितमुपसंहरति । **इति षट्प्रकार एवेति** ।

मन्वेवं प्रकरणासंगतिरत आह । **षडिति** । **श्रुत्यर्थाभ्यामिति** । यत्र साक्षात्सीमाविवादस्तत्र श्रुत्या, अन्यत्रार्थेनेति विवेकः । **अपि**ना भूसमुच्चयः । **तस्य** षड्विधभूवादस्य ।

अथ मौले सामन्ता इत्यादि व्याचष्टे । **समन्तादित्यादिना** । सामन्तशब्दः पृषोदरादिः । ननु तत्रापि अन्यपार्श्ववर्तिनोऽन्यसीमानिर्णायकत्वं कथमत आह । **ते चेति** । आदिसंग्राह्यं प्रकटयन् अत्र मानमाह । **ग्रामस्येति** । ग्रामजातो ग्रामजनस्य सामन्त इत्यर्थः । एवं क्षेत्रादावपि । सामन्त

[1] क—भूपरिमाणादावुक्तम् ।

इत्यास्याग्रे उभयत्रानुषङ्गः । तत्र हेतुमाह । **समन्तादिति । हि** यतः । समंतात्परिरभ्य संबध्य व्यवस्थिता इत्यर्थः। यथाश्रुतेऽनुपपत्तेराह । **ग्रामादीति ।** आदिना क्षेत्रादिपरिग्रहः। **तत्स्था** इति। ते च तत्स्वामिनोऽन्ये वा । न्यूनतां निराचष्टे । **सामन्तेति ।** तस्यापीत्यर्थः । अत्रादिसंगृहीतान् दर्शयन्नुक्तार्थे संमतिमाह । **उक्तं चेति ।** निकटवर्तिनः संसक्तकाः सामन्ता इति । **तथा** तद्वत् । तत्संसक्तास्तदनन्तरस्थिता उत्तरा इति, संसक्तसक्तसंसक्ताः तदनन्तरस्थिताः पद्माकारा इति च प्रकीर्तिता इत्यर्थः । सामन्तादयस्त्रयोऽपि संज्ञाद्वयभाज इति यावत् । अत एव न सर्वनामसंज्ञाः ।

**आदीति ।** स्थविरादय इत्यादीत्यर्थः । वृद्धत्वं पारिभाषिकमित्याह । **वृद्धादीति । तेनैव, कात्यायनेनैव । तत्कार्यमिति ।** सीमानिर्णयादिरूपं कार्यं सीमानिर्णयादिविषयकनिपुणमतित्वरूपगुणयुक्तैर्निष्पाद्यमानं यैर्दृष्टं ते इत्याद्यर्थः । यदि वाऽवृद्धा इत्यत्राकारप्रश्लेषः । **तत्र** विषये । **तन्मूलत्वात्,** सामन्तत्वस्य पूर्वस्थितत्वात् । **उपेति ।** अत्रेयं स्थितिरिति सभ्येभ्यः श्रवणमुपश्रवणम् । उपश्रवणं च संभोगकार्यं च तयोराख्यानं तेनोपलक्षिता इत्यर्थः । सीम्नि कर्षणासंभवादाह । **सीमासंनिहितेति ।**

**व्याधानिति ।** "इमानप्यनुयुञ्जीत पुरुषान्वनगोचरान् ।" इत्यस्य पूर्वशेषः । **व्याधा** लुब्धकाः । **शाकुनिकाः** पक्षिवधजीविनः । **कैवर्ता**स्तटादिखननवृत्तयः । **मूलखानकाः** वृक्षादिमूलोत्पाटनजीविनः । **व्यालग्राहाः** सर्पग्राहिण आहितुण्डिकाः । उञ्छवृत्तयः । "उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम्" इति **यादवः ।** अन्ये च वनचारिण फलपुष्पाद्यर्थमरण्यचारिणः ।

अथ स्थलाङ्गारादि व्याचष्टे । **स्थलमित्यादि ।** निम्नभूप्रदेशस्य निम्नपदेन वक्ष्यमाणत्वादाह । **उन्नत इति । अग्नेरुच्छिष्टं** 'कोलसा' इति महाराष्ट्रभाषया प्रसिद्धम् । द्रुमाणामुक्तत्वादाह । **पाषाणादीति ।** चत्वर इत्यर्थः । "चैत्यमायतनं तुल्ये" **इत्यमरः ।** ( २ । २ । ७ ) विशेषमाह । **एतानि चेति ।** उक्तलक्षणानीत्यर्थः । **सीमावृक्षानि**ति । तत्प्रकाशकवृक्षानेतान् तथा कुर्वीत यथा सीमेत्यर्थः । अत्रोभयत्र द्वन्द्वोत्तरपदको द्वन्द्वः ।

"पिच्छिला पूरणी मोचा स्थिरायुः शाल्मलिर्द्वयोः ।" ( १ । ४ । ४६ )

"अनोकहः कुटः शालः" **इत्यमरः ।** ( २ । ४ । ५ )

**भागवते** पञ्चमे तु भेदा उक्ताः—

"वनस्पत्योषधिलतात्वक्सारा वीरुधो द्रुमाः ।" इति ।

पुष्पं विना फलतीति **वनस्पति**र्वटोदुम्बरादिः । फलपाकान्ता **ओषधयो** गोधूमादिधान्यानि । आश्रयेणारोहति सा **लता ।** ताम्बूलादिवल्ली तु **व्रततिः ।** लतेति तु सामान्यम् । त्वक्सारो **वंशादिः ।** विनाऽऽश्रयेणारोहन्तीति **वीरुधो** लताविशेषाः । समयेन फलन्तीति **द्रुमा** आम्रादय इति तदर्थः। गुल्मा अप्रकाण्डस्तम्बाः । "अप्रकाण्डे स्तम्बगुल्मौ" **इत्यमरः ।** ( २।९।४ ) तृणजंघा वा । स्थलं कृत्रिमोन्नतभूभागः । कुब्जकगुल्मांश्चेतिपाठे गुल्मांशे पौनरुक्त्यमिति न स पाठः । किन्तु कुप्यकगुल्मांश्चेति । तत्र कुप्यसम्बन्धिनो गुल्माः कुप्यकगुल्माः । कुप्यमेव कुप्यकं स्वार्थे कन् । सुवर्णरजतभिन्नं ताम्रादि कुप्यम् ।

"हेमरूप्ये कृताकृते । ताभ्यां यदन्यत्तत्कुप्यम्" **इत्यमरात् ।** ( २ । ९ । ९१ )

कुप्यकस्य मलापकर्षणवर्णोत्कर्षमिथःसंश्लेषादिषूपयोगित्वात्तत्सम्बन्धित्वम् । अत एवाधिकोपयोगित्वेन गुल्मेत्यस्य पृथक् ग्रहणमिति भेदः । एवं तु सोऽपि पाठः कथञ्चित्सुयोजः । तत्रैव पाठे प्रचुरोपयोगित्वेनादरार्थं पृथक् निर्दिष्टा इति तद्व्याख्यातारः ।

तथेति व्याख्यातम् । यद्वा तथा कृते सति सीमा न नश्यतीत्यर्थः । तडागशब्दोऽर्धर्चादिः । उदपानानि कूपाः । 'कूप उदपानं तु पुंसि वा' **इत्यमरः** ( १।१।२६ ) । वाप्यः पाषाणादिबद्धा दीर्घिकाः । 'वापी तु दीर्घिके'**त्यमरः** ( १।१।२८ ) । प्रस्रवणानि निर्झरादयः । **उपच्छन्नानि** गुप्तसदृशानि । सीमाया ज्ञाने । **नित्यं** सर्वदा । **विपर्ययं** वैपरीत्यम् । वीक्ष्येति पूर्वान्वयि । अन्यस्य पुनः करणे हेतुरनेन सूचितः । तान्येवाह । **अश्मन इत्यादि** । आनन्त्यादिरमन्यान्यपि सूचयन्नुपसंहरति । **यानीति** । उक्तसदृशान्यन्यानीत्यर्थः । सीमाया बोधनीयायां सन्धिषु तत्सन्धिषु **नयेत्** निश्चयेन प्रतिपादयेत् एतैरिति ।

**मनु**मात्रार्थमाह । **एतैरिति** । उभयोपसंहारोऽयमित्याह । **प्रकाशाप्रकाशेति** । सीमामित्यस्योभयत्रान्वय इत्याह । **सीमां प्रतीति** । द्वितीयस्य फलितमाह । **सीमानिर्णयमिति** । पूर्वभुक्त्या तु सततमुदकस्यागमनेन चेत्यस्य शेषो बोध्यः । अविच्छिन्नया भुक्त्या न तु त्रिपुरुषादिकया । तस्या "आधिः सीमा" इति पर्युदस्तत्वात् । ग्रामद्वयसन्धिस्थनद्यादिप्रवाहेण चेति तदर्थः ॥ ॥ १५० ॥ १५१ ॥

## याज्ञवल्कीये १५२ श्लोकः ।

अथाग्रिमसङ्गतिमाह । **यदा पुनरिति** । यदा त्वित्यर्थः । सर्वथाऽसत्ताया विरुद्धत्वादाह । **विद्यमानानीति** । सन्देहे बीजं कोटिद्वयमाह । **लिङ्गालिङ्गेति** । समग्रामा इति सामन्तविशेषणं न पृथगित्याह । **प्रत्यासन्नेति** । सक्ता इत्यर्थः । चत्वार इत्यादि दिक्प्रदर्शनं न परिगणनम् । अत एव **अपिः** । तेन तादृशबहूपादानात्तादृशा एव समुच्चीयन्ते वाशब्दो विकल्पे इत्याह । **इत्येवमिति** । उक्तप्रकारेण । **समसंख्याः**, न तु विषमसंख्या नाप्येते एवेत्यर्थः । रक्तत्वमुभयविशेषणमित्याह । **रक्तस्रगिति** । नीलरूपवदितिवत्प्रयोगद्वयम् । मूलं तु सम्यगेव । क्षितिधारिणि इत्यस्यार्थमाह । **मूर्द्धेति** । क्षितिशब्दो विशेषपरः । धारणमपि स्थलविशेषे एव वक्ष्यमाण**मनो**रिति भावः । सीमामित्यस्य व्याख्या । **सीमानमिति** । एवं सति वाशब्दासङ्गतिं निराचष्टे । **सामन्ता वेतीति** । **साक्षिप्रत्यय इति** । "यदि संशय एव स्याल्लिङ्गानामपि दर्शने" ( **मनुः** ८। २५३ ) । इति अस्य पूर्वशेषः । **एवो**ऽप्यर्थे । तत्र क्रममाह । **तत्रेति** । तयोर्मध्ये इत्यर्थः । **तदुक्तमिति** । **मनु**नैवेति शेषः । **चत्वार इति** । एतदादिसमसंख्योपलक्षणम् । प्रयता इत्यनेनाव्यवस्थितानां दुष्टानां तत्त्वं निरस्तम् । अत एव प्रदुष्टेषु न प्रदुष्टा इति **कातीये** उक्तम् । **स्वार्थेति** । तद्विषयेऽर्थगौरवात्तल्लोभात् दोषयुक्तेषु सामन्तेषु सत्स्वित्यर्थः । तात्पर्यार्थमुपसंहरति । **कर्तव्या इति** । **सामन्ताद्यभावे इति** । आदिना तत्संसक्तादिग्रहणम् । अनेन "सामन्तानामभावे तु मौलानां सीमसाक्षिणाम्" ( अ. ८ । २५९ ) । इति **मानवे** सामन्तशब्दस्त्रितयपर इति सूचितम् । अत एवाविरोधः । एवमग्रिम**कातीये**ऽपि । **तेषां** साक्षिणाम् । **सामन्ताः** संसक्तादयस्त्रयः । **मौलेति** । पूर्वपूर्वाभावे परः परः । एवं च मूलं न क्रमपरमिति भावः ।

---

१ क-फ-ख-भोगत्वेन । २ फ-समग्रामा इति ।

विशेषान्तरमाह । **एते चेति** । संसक्तादयस्त्रय इत्यर्थः । संख्या च गुणाश्च ताभ्यामाधिक्येन भवन्तीत्यर्थः । अत्र मानं **कातीयमेवाह** । **सामन्ता इति** । पूर्वं साधनं सामन्ता निर्दोषाः स्युः । उत्तरास्तु गुणान्विता द्विगुणाश्च । तृतीया अपि गुणान्वितास्त्रिगुणाश्चेत्यर्थः । **द्वैगुण्यादि** च प्रागुक्तचतुष्टयादितो बोध्यम् ।

विशेषान्तरमाह । **ते चेति** । स्मृत्यन्तरोक्ताश्चेत्यर्थः । **स्वैः स्वैरिति** । यज्जातीयो यस्तदीय सुकृतैरित्यर्थः । **उर्वी**, तत्खण्डम् । **तां** सीमाम् । समञ्जसमिति क्रियाविशेषणम् । नयेयुरिति बहुवचनादेकस्य द्वयोश्च तन्निर्णेतृत्वं न स्यादत आह । **नयेयुरितीति** । अत एव मूलादौ चत्वार इत्यादौ चोक्तम् । एवं च तत्रापि तदेकवाक्यतया समा एव ग्राह्या न विषमा इत्यर्थः । **भूमिं** तत् खण्डम् ।

अव्यवहितैतत्प्राग्वर्ति**नारद**विरोधमेव तस्य परिहरति । **योऽयमिति** । **प्रत्ययो** विश्वासः **अस्य** सीमानिर्णयरूपस्य । **उभयेति** । अर्थिप्रत्यर्थीत्यर्थः । अत एव **बृहस्पति**रपि—
" ज्ञातृचिह्नविनाशे तु एकोऽप्युभयसम्मतः । रक्तमाल्याम्बरधरो मृदमादाय मूर्द्धनि ॥
" सत्यव्रतः सोपवासः सीमां सन्दर्शयेन्नरः । " इति ।

विशेषान्तरमाह । **स्थलादीति** । **साक्षिसामन्तादीनां** तेषामेव न तु अन्येषाम् । **नारदीयं** व्याचिख्यासुरादौ सन्दिग्धतया समासपूर्वकं पदार्थमाह । **निम्नगयेति** । भावे क्त इत्याह । **अपहरणेनेति** । निम्नगयेत्यस्योत्सृष्टादौ कर्तृत्वेनान्वयः । अत एव ' न लोकेति ' ( व्या. सू. २ । ३ । ६९ ) निषेधात्तत्र षष्ठी न कृता । अपहरणस्य तत्र करणत्वेनान्वयः । उत्सृष्टानीति पाठः । अत एव यथार्थमाह । **स्वेति** । **कल्पतरौ** तु उत्सृष्टेति पाठो धृतः । अर्थः स एव । यौगपद्यासम्भवादाह । **नष्टानि वेति** । फलितार्थोऽयम् । समासस्तु द्वन्द्वगर्भो बोध्यः । भूमिपदं प्रकरणाद्विशेषपरमित्याह । **मर्यादेति** । अत्र वाक्ये उपायत्रयम् उक्तम् । तत्राद्यस्वरूपं विविच्याह । **तत्रेति** । तेषां त्रयाणां मध्ये इत्यर्थः । तत्पदेनोत्सृष्टादिचिह्नपरामर्शस्तदाह । **उत्सृष्टेति** । प्रार्थमाह । **प्राचीनेति** । द्वितीयस्वरूपमाह । **ग्रामादिति** । दण्डः परिमाणविशेष; प्रागुक्तः । प्रदेशानुमानाच्चेति **चो** वार्थे उभयत्रान्वयीत्याह । **प्रमाणाच्चेति** । तृतीयस्वरूपमाह । **प्रत्यर्थीति** । एतत्समक्षं कदाऽपि विप्रतिपत्तिमप्राप्ताया इत्यर्थः । "समुन्नयेयुः सीमानम्" इत्यनुवृत्तिमभिप्रेत्याह । **निश्चिनुयुरिति** । **मनु**रप्येतद्विषयकः प्रागुक्त एव, **पूर्वभुक्त्या त्विति** । **बृहस्पतिना चेति** चस्त्वर्थे । एवमग्रेऽपि । **अत्र** परमप्रकृतसाक्षिसामन्तादिविषये सीमानिर्णये वा । आगमादिस्वरूपं प्रागुक्तम् । तेऽत्रेति पाठः । साक्षिपदं सामन्तादीनामप्युपलक्षणम् ।

विशेषान्तरमाह । **एते चेति** । **ग्रामेयकेति** । ग्रामेयका ग्राम्यजनाः । कुलानि पूगश्रेणीकुलानीत्युक्तानि । एतेषां समक्षमित्यर्थः । यद्वा ग्रामेयका ग्राम्यजनास्तेषां कुलानि समूहाः तेषामित्यर्थः । **सीम्नि** विषये । एवमग्रेऽपि । ये साक्षिणस्ते तानि प्रष्टव्या एव । द्विकर्मकोऽयम् । गौणे कर्मणि तव्यः । विवादिनोस्तयोश्च, समक्षमित्यस्यानुषङ्गः । सीमसाक्षिण इति पाठान्तरम् । **निबध्नीयात्** पत्रे लेखयेत् । **तान्सर्वान्** साक्ष्यादीन् । **चेन** सकललिङ्गसमुच्चयः ।

मूलं सङ्गत्याऽवतारयितुं विशेषान्तरमाह । **एतेषां चेति** । **राजेति** । राजिकं दैविकं च दुःखमित्यर्थः । अत्र मानमाह । **अयं चेति** । चस्त्वर्थे । **कोशः** प्रागुक्तः । ' त्रिपक्षेति ' बहुव्रीहिः । यथासंख्यमन्वयः । आर्षत्वात्साधुत्वमस्य । पूर्वनिपातानियमो धर्मादित्वात् ॥ १५२ ॥

## याज्ञवल्कीये १५३ श्लोकः । ( पूर्वार्धः )

एवं सति सङ्गत्या मूलमवतारयति । **यदा त्विति** । **अमीषां** साक्ष्यादीनाम् । साक्ष्यं च वचांसि च तान्युक्तानि यैरित्यर्थः । त्रिपक्षशब्दः पात्रादिः । अभ्यधिकौ संख्यागुणौ यत्र तानि, साक्ष्यन्तरेति पाठः । **विरुद्धवचनतेति** । वादिनिर्दिष्टसाक्ष्यादीनाममीषामिति भावः । **ते** वादिनिर्दिष्टसाक्ष्यादयः । राहूपरागे इतिवत्सप्तमीत्याह । **निमित्तेति** । **सर्वे** पार्श्वस्थाः । पृथगर्थमाह । **प्रत्येकमिति** । पञ्चशतशब्दे बहुव्रीहिः । तत्परिच्छिन्नपणेनेत्यर्थः । एवमग्रेऽपि । ननु ‘ अनृते तु ’ इति सामान्योक्तस्य सामन्तमात्रविषयतैव कथं अत आह । **सामन्तेति** । तन्मात्रेत्यर्थः । **यथोक्तेन** यथाशास्त्रोक्तप्रकारेण । सर्वार्थमुक्तस्य **नारदो**ऽपीत्यस्य ल्यबन्तस्पर्शपूर्वकमुक्तवानित्यत्रान्वयः । सर्वे इत्यस्य मध्यमणिन्यायेनोभयत्रान्वयः । मध्यमेति कर्म । **दण्ड्या** ग्राह्याः । ग्रहणार्थोऽत्र दण्डिर्न तु निग्रहार्थः । व्यापारद्वयार्थत्वेन द्विकर्मकताऽस्य । एवं मूलेऽपि । अग्रेऽपि च । **शेषाः** सामन्तभिन्नाः साक्ष्यादयः भूसीमानिर्णये प्रेरिताः । **जघन्याः** दुष्टाः । **विनेयाः** दण्ड्याः । **तमेव** प्रथमसाहसाख्यमेव । **दण्डगत्या** दण्डशास्त्रोक्तरीत्या दण्डज्ञानेन । **नारद** एवायम् । **नारदो**क्तादिसंग्राह्यमाह । **आदिशब्देनेति** । **साक्षादिति** । अधार्मिकत्वात् । तथा च तत्र दण्डस्य नोपयोग इति कथं तेषामादिना ग्रहणमिति भावः ।

विशेषान्तरमाह । **अनृते त्विति** । **इत्येतदिति** । इत्यारभ्य यत् **मूलमनुनारदादि** प्रदर्शितमित्यर्थः । अत्र हेतुमाह । **बहूनां त्विति** । निर्णेतृत्वेन समाश्रितानां बहूनां साक्ष्यादीनां मध्ये यदि सर्वेऽपि साक्ष्यादयः प्रत्येकमुक्तहेतुतो निर्णयं न कुर्युरित्याद्यर्थः । अत्र भयाद्वा लोभाद्वेति हेतूक्त्याऽस्य ज्ञानविषयत्वं स्पष्टमेव । तदाह । **ज्ञानेति** ।

विशेषान्तरमाह । **तथेति** । किं चेत्यर्थः । तद्वदित्यर्थो वा । **अयमेव** उत्तमसाहसाख्य एव । **तेनैव कात्यायनेनैव** । एवमग्रेऽपि ।

विशेषान्तरमाह । **एवमिति** । उक्तप्रकारेणेत्यर्थः । आदिना ज्ञानग्रहः । अत्र मानमाह । **अज्ञानोक्ताविति** । “ ज्ञानेन हि विमुच्यन्ते सामन्ता निर्णयं प्रति ” । इत्यस्यादिः । यत इत्यादिः । **संमिश्र्य** संमिश्रीकृत्य ।

### ( उत्तरार्धः )

मूलमवतरति **यदेति** । ज्ञातृचिह्नानामिति द्वंद्व इत्याह । **ज्ञातॄणामिति** । चिह्नानामित्यस्यार्थो **लिङ्गानां चेति** । उक्तहेतोरेवाह । **राजैवेति** । यथाश्रुते बाधादाह । **प्रवर्तयितेति** । तदुपपादयति । **अन्तरिति** । व्यासारद्वयार्थत्वं तस्येति भावः । तत्प्रकारमाह । **ग्रामेति** । ‘समं स्यादिति ’ न्यायेनाह । **सममिति** । तत्र विशेषमाह । **यदेति** । विवादास्पदीभूतायां भुव्यन्यतरस्य ग्रामस्याधिकोपकारसंभवे यावत्युपयुक्ता तावती सर्वाऽपि तस्य देयेत्यर्थः । **सीमायामिति** । लिङ्गाद्यभावेन परिच्छेत्तुमशक्यायां सीमायां धर्भज्ञान्यासंभवाद्राजैव स्वयं पक्षपातरहितः सन् येषामुपकारातिशयस्तेषामेव ततः प्रदिशेन्निर्दिशेदित्यर्थः ॥ १५३ ॥

## याज्ञवल्कीये १५४ श्लोकाः ।

उत्तरसंगतिमाह । **असत्यामिति** । तत् तादृक् स्वरूपमस्यास्तीति **तद्वत्** । तद्वतो भावस्तद्वत्त्वं तद्भावस्ततो नञ्समासस्तस्य याऽऽशंका तस्यामसत्यामपीत्यर्थः । **अस्याः** वक्ष्यमाणायाः । **अयं**

भावः । 'अतिदेशो ह्यधिकमाकांक्षते' इति **जैमिनीय**न्यायेन यत्राधिका शङ्का तत्र पूर्वोक्तविषयसादृश्याप्रतीतेस्तद्धर्मावाभावेनातद्धर्मावाशङ्कायां पूर्वोक्तवदेतदपीत्यतिदेशो वाच्यः । यथाऽऽहिताग्नेः पिण्डपितृयज्ञं विधाय एवमनाहिताग्नेरिति तस्यातिदेशः । प्रकृते तु 'सीम्नो विवाद' इत्यादिना यो न्याय उक्तः क्षेत्रादिसीमायां तस्य आरामादेस्तस्यामत्यन्ततुल्यत्वेन संभवेन तेष्वतिदेशानपेक्षत्वेनारामेति वक्ष्यमाणवचनं निष्फलं यद्यपि तथापि न्यायप्रभवाण्यपि वचांसि सन्तीति शिष्यबोधार्थमुक्तन्यायसिद्धार्थमपि विषयान्तरेषु वचनेनातिदिशतीति ।

तदर्थभूतनिवेशनमेव विशदयति । **पलालेति । कूटं** समूहः । **आदिना** तृणान्तरकाष्ठादिपरिग्रहः । न्यूनतां निराचष्टे । **ग्रामेति । चो** व्युत्क्रमे, तदुपलक्षणार्थमपि । यद्यपि "आहावस्तु निपानं स्यादुपकूपजलाशये।" **इत्यमरेणो**क्तम् (१।१०।२६)। तथाप्युपलक्षणत्वेनाह। **पानीयेति।** प्रभृतिना तस्यापि ग्रहणम् ।

एवं पदार्थानुक्त्वा वाक्यार्थमाह । **एतेष्विति**। अग्रिमं स्वतन्त्रमित्याह । **तथेति**। प्रवहशब्दो भयादित्वात्साधुः । 'केदारो वप्रमस्त्रियाम्' (२।२।३)। गृहं सामान्यम्। यद्यपि 'प्रासादो देवभूभुजाम्' **इत्यमरः** (२।२।९), तथाप्यत्र तयोः पृथगुक्तेः प्रासादो महागृहम् । प्रसादोऽपि । उभयत्राधिकरणे घञ् । आङधिक आये । **आवसथं** अग्निमत् गृहम् ॥ १५४ ॥

## याज्ञवल्कीये १५५ श्लोकः ।

**तथाशब्दः** समुच्चये । सीमातिक्रमणं तामुल्लंघ्य गमनं न विवक्षितं दण्डविशेषोक्तेरित्याह । **कर्षणे इति** । तथार्थमाह । **चेति** । वक्ष्यमाण**मनो**राह । **भयादीति** । यथासंख्यमन्वय इत्याह । **यथेति** । अत्राप्यार्षत्वात्साधुत्वम् । एवमन्यत्रापि बोध्यम् । न्यूनतानिरासायाह । **क्षेत्रेति** । वचनात्तस्यापि ग्रहणम् । सामान्योक्तेर्विशेषपरतया योजनफलमाह । **यदा पुनरिति । भीषयेति** भीषां भयमन्यस्मादुत्पाद्य तया हरन्नित्यर्थः । इदमुपलक्षणं लोभस्यापि। अत एव भयादीत्यादावुक्तम् ।

विशेषान्तरमाह । **अपह्नियमाणेति** । तस्यां दशायामेव तत्सत्त्वादाह । **कदाचिदिति** । अपिना तस्यापि समुच्चयः। **आह मनुः । उत्तमसाहसे** विषये । **इतीति** । वधादिरूपो दण्ड उक्तः इत्यर्थः । तथा च साहसं तदेवोत्तमं यत्रैतदन्यतम इति भावः । अन्यत्प्राग्व्याख्यातम् ॥ १५५ ॥

## याज्ञवल्कीये १५६ श्लोकः ।

परभूमिमिति पूर्वान्वयीत्याह । **परकीयामिति** । जलप्रवाहेति पाठः । नेदं सार्वत्रिकमित्याह । **स इति** । त्वर्थमाह । **चेदिति** । अल्पेत्यस्यार्थ **ईषदिति** । कल्याणेत्यस्यार्थो **बह्विति** । प्राग्वदेवाह । **कूपेति । चः** प्राग्वत् । द्वितीये विशेषणसूचितं विशेषमाह । **यदा पुनरिति । असौ** कूपादिः । **तोयेति** । यत्राधो जलप्रवाहः स **खेयः** । तत्रोपर्येव खनित्वा काष्ठाद्यारोपणात् । यत्र सर्वात्मना जलनिरोध एव स बन्धनीयत्वात् **बन्ध्य** इत्यर्थः । अत एव तेनैवोक्तम्, (अ. ११ श्लो. १९)

"नान्तरेणोदकं सस्यं नाशश्चात्युदके भवेत् । य एवानुदके दोषः स एवात्युदके भवेत् ॥"

इति । **पूर्वेति** । पूर्वस्थितमित्यर्थः । स्वामिनीत्यग्रेऽध्याहारापकर्षाभ्यां तद्वंश्यमामन्त्र्येत्यादेः सम्बन्धः । तद्वंश्ये **मानवे**ऽपि । **पुनः** तु मृते राजानमित्याद्यन्वयः । अन्यथा द्वितीयपादानर्थक्यं स्पष्टमेव ॥ १५६ ॥

## याज्ञवल्कीये १५७ श्लोकः ।

सङ्गतिमाह । **क्षेत्रेति** । अनिवेद्येत्यस्य लाक्षणिकमभिमतमर्थमाह । **अनभ्युपगमय्येति** । यथाश्रुते तु विरोधः स्पष्ट एव । न्यूनतां **नारदतः** प्राप्तां निराचष्टे । **तदभावे इति** । आर्षत्वात्कर्मणि चतुर्थी । अर्थादाह । **परक्षेत्रेति** । लिङर्थोऽविवक्षित इत्याह । **प्रवर्तयतीति** । फलितार्थमाह । **तस्मादिति** ॥ १५७ ॥

## याज्ञवल्कीये १५८ श्लोकः ।

व्यवहितसङ्गतिमाह । **क्षेत्रस्वामिनेति** । **तस्यैव** क्षेत्रस्वामिन एव । **प्रसक्तेति** । प्रस्तुतसीमानिर्णयप्रसक्तमर्यादाप्रभेदनादिदण्डानुप्रसक्तिः तन्निषेधकक्षेत्रस्वामिदण्डे तयेत्यर्थः । स्वामिसम्बन्धि क्षेत्रं, तत्सम्बन्धात्क्षेत्रगतविचार इति भावः । **क्वचित्**, न तु सर्वत्र । **विध्यन्तरम्** अन्यविधिम् ।

अङ्गीकारं विना तदसम्भवादाह । **क्षेत्रस्वामिपार्श्वे इति** । योग्यतया आदौ द्वितीयपादार्थमाह । **पश्चादिति** । आद्यपादार्थमाह । **तच्च क्षेत्रमिति** । अपिसूचितमाह । **यद्यपीति** । आङः फालादेश्चार्थानाह । **ईषदिति** । तत्फलितमाह । **नेति** । स प्रदाप्यः कृष्टफलमिति पाठेनाह । **तस्येति** । ईषत्कर्षणात्कृष्टार्थमाह । **अकृष्टस्येति** । स इत्यस्यार्थमाह । **असाविति** । प्रदाप्य इत्यस्यार्थमाह । **ज्ञापनीय इति** । कृष्टशदमिति पाठेऽपि शदशब्देन फलमेव ।

एतेन " तं प्रदाप्याकृष्टशदमिति तमकृष्टशदं प्रदाप्येत्यन्वयः । अकृष्टशदमिति व्याचष्टे तस्याकृष्टस्य फलमिति " इति**प्राचो**क्तमपास्तम् । असंबद्धत्वात् व्याख्यानविरोधाच्च ॥ १५८ ॥

॥ इति सीमाविवादः ॥

---

# अथ स्वामिपालविवादप्रकरणम् ॥ १० ॥

## याज्ञवल्कीये १५९ श्लोकः ।

व्यवहिताव्यवहितसङ्गत्यभावेऽपि महाप्रकरणसङ्गतिमाह । **व्यवहारपदानामिति** । **क्रमः मनूक्तः** । अर्थादाह । **परेति** । इदं सर्वविशेषणं यथासम्भवम् । **तदर्धमिति** । समांशवाचित्वेऽपि पाक्षिकषष्ठीतत्पुरुषः । अजाविकमिति समाहारद्वन्द्वः पाक्षिक इत्याह । **अजा इति** । असङ्गतिं परिहरति । **महिष्यादीनामिति** ।

अग्रिमोपयोगिनं विशेषमाह । **माषश्चेति** । एवमग्रे सर्वत्र बोध्यम् । **ताम्रिकेति** । ' ताम्रिकः कार्षिकः पणः ' इति **मूल्या**ध्याये **कात्यायनेन** द्विरुक्तेः । **मूले**ऽपि उक्तत्वाच्च । इदं सर्वं मूल्याध्यायविवरणे मत्कृते स्पष्टं तत एव बोध्यम् । **विंशतिम** इत्यार्षम् । **कातीयमाह** । **पणस्येति** । गां प्रति द्वौ पादौ पणस्यार्धभागो दण्डः महिषीं प्रति तद्द्विगुणं सम्पूर्णः पणो दण्डः । अजादीनां तु पणस्य चतुर्थो भागो दण्ड इत्यर्थः । अत्र दण्डाधिक्यादेव ज्ञानविषयतेति गम्यते । अन्यथा विरोधापत्तेः । अन्यविरोधं परिहरति । **यत्पुनरिति** । तथाशब्दः उभयत्र समुच्चये सादृश्ये वा । **तत्पुनरिति** । दण्डस्य न्यूनत्वात् ॥ १५९ ॥

## याज्ञवल्कीये १६० श्लोकः ।

उक्तहेतोरेवाह । **अपराधेति** । उक्ते सर्वत्र । स्वयमित्यादिः । **क्वचित् नारदा**द्युक्तभिन्नविषये । **यथोक्तादिति** । अज्ञाने 'माषानष्टाविति' **मूलोक्तात्** । **द्विगुणो दण्डः** ज्ञानपूर्वके परसस्येति **कातीयात्** द्विगुणो दण्डः, अज्ञानपूर्वके तादृशे **नारदोक्तात्** द्विगुण इति विवेको बोध्यः । अत्र मानं **कातीयमेवाह** । **वसतामिति** । सवत्सानामिति भावः ।

**आहेति** । यथाक्रमं पादाभ्यामिति भावः । विवीत इति व्याप्त्यर्थस्य वीधातो रूपम् । विशेषेण वीतं व्यापनं तृणादेर्यस्मिन्निति व्युत्पत्तेः । तदाह **प्रचुरेति** । अत एव **रक्ष्यमाण इति** । अत एव **परिगृहीत इति** । तस्य स्वरूपतो निमित्तत्वादाह । **तदुपघात इति** । **इतरेति** सस्येत्यर्थः । 'वृक्षादीनां फलं सस्यम्' **इत्यमरः** ( २ । ४ । १५ ) । योग्यतयाऽऽह । **विद्यादिति** । महिषीसाम्यं वैवक्षिकमाह । **महिषीति** । यत्र क्षेत्रे पादशो यत्परिमाणो दण्डस्तस्या विहितस्तत्र तादृशेनैव तत्समेनैव दण्डेन खर उष्ट्रश्च तथैव स्वापराधे दण्ड्यो न तु विशिष्टमुभयमपीत्यर्थः । ननु समाहारद्वन्द्वात्तथैवोचितं अतोऽत्र हेतुमाह । **सस्योपेति** । तयोस्तन्नाशकत्वे प्रत्येकं तयोस्तुल्यत्वादित्यर्थः । आहाराद्यंशेऽत्यन्तभेदाभावादिति भावः । ननु वचनात् तथैव कुतो न अत आह । **दण्डस्य चेति** । नन्वेवं कथं समाहारोऽत आह । **खरोष्ट्रमिति** । अत एव पूर्वं स्वयमितरेतरयोगः कृतः ॥ १६० ॥

## याज्ञवल्कीये १६१ श्लोकः ।

**गोस्वामिनः** गवादिस्वामिनः । क्वचित् स्वामिन इत्येव पाठः । **दण्डः**, राजग्राह्यः । न्यूनतानिरासायाह । **सस्यग्रहणमिति** । अत एव विवीतस्यापि ग्रहणम् । तदेवाह । **यस्मिन्निति** । व्यवस्थार्थमाह । **एतावतीति** । फलितार्थमाह । **तत्क्षेत्रेति** । **न फलमिति** । एतद्वैलक्षण्यबोधक एव **तुः** । नन्वेवं धनदण्डोऽपि तस्य वचनान्न स्यात्, अतोऽपवादं क्वचिदाह । **गोपस्य चेति** । अत एव न फलमित्येव प्रागुक्तम् । क्वाचित्कत्वमेवाह । **पालेति** । गोपालेत्यर्थः । स्वदोषेणेति यावत् । पालनं पालः तद्दोषेणेति वाऽर्थः । अत्र मानं **कातीयमाह** । **येति** । **नष्टा** अदर्शनं गता स्वामिनः ।

तुर्यपादं व्याचष्टे । **गोमी पुनरिति** । 'गोमी गोमान्' **इत्यमरः** ( २ । ९ । ६८ ) । 'ज्योत्स्नातमिस्रेति' ( ५ । २ । ११४ ) सूत्रेण निपातितोऽयम् । अत्रापि **तुशब्दसूचितमाह** । **दण्डमेवार्हति न ताडनमिति** । फलांशे तु तुल्यतैवेत्याह । **फलेति** ।

विशेषमाह । **गवादीति** । **मध्यस्थेति** । सामन्तादीत्यर्थः । तस्य पृथक् तदभावादाह । **क्षीतग्राह्येति** । **गोभिरिति** । गोभिस्तदादिभिर्भक्षितं सस्यं यः क्षेत्रस्वामी प्रतियाचते परावृत्य याचते तस्मै, सामन्तादिपरिकल्पितं यत् तत्र क्षेत्रे वापितं तावद्धान्यं तदुत्पाद्यं तदादि तन्मूल्यं वा देयं, भक्षितावशिष्टं पलालं तदादि तृणबुसादिकं शेषे षष्ठी गोस्वामिने देयम् । 'यो नर' इति सामान्योक्तं विशेषाकांक्षायामर्थप्रकरणसिद्धमपि विशेषं स्पष्टीकुर्वन्नन्यग्राह्यत्वभ्रमाभावाय विशदयति । **धान्यमिति** । यद्वा खलस्थलेऽप्येवमित्याह । **धान्यमिति** । **वैशब्दः** निश्चये । तस्मात्क्षेत्रस्वामिना सर्वथा तन्नाहर्तव्यमिति तात्पर्यार्थः ॥ १६१ ॥

## याज्ञवल्कीये १६२ श्लोकः ।

**अपवादमिति**। उभयोरपि प्रागुक्तसर्वापवादमित्यर्थः। अन्तशब्दः समीपवाची त्रयाणां द्वन्द्वोत्तरं षष्ठीसमासः। अथवा षष्ठीतत्पुरुषोत्तरपदकद्वन्द्वगर्भः सः। सर्वव्याख्यात्रभिमतोऽत्र द्वितीय एव । तदाह। **मार्गेति** । पथि मार्गेत्यपपाठः । आद्ये ग्रामविवीतेत्यत्र ग्रामसमीपवर्तिनि विवीतसमीपवर्तिनि च क्षेत्रे चेत्यर्थः । द्वितीये ग्रामसम्बन्धि यद्विवीतं तत्समीपेत्याद्यर्थः । ग्रामाद्बहिर्यो गवादिस्थित्यर्थो भूप्रदेशः स विवीतपदेन लक्ष्यते, तत्समीपवर्तिनीत्याद्यर्थो वा । अकामत इति पूर्वान्वयीत्याह । **अकामेति**। **गोभिः** तदादिभिः । ननु प्रत्यक्षदोषस्य पापस्य च सत्त्वात्कथमदोषत्वं अत आह। **दोषाभावेति**। शिष्टं व्याचष्टे । **कामेति** ।

**अनावृतेति** । आवरणरहितेत्यर्थः । ‘ वृञ् वरणे ’ इत्यस्य रूपम् । एवमग्रे सर्वत्र । **तत्र** परीहारस्थाने । **मार्गादिक्षेत्रे**, आदिना ग्रामादि । नन्वावरणमेव नोक्तमत आह । **वृतीति** । **तेनैव मनुनैव**। **वृतिं** आवृतिम्, कण्टकादिमयीम् । **तत्र** क्षेत्रसमन्ततः । तादृशीमुन्नतामिति शेषः । कीदृशीमित्याह । **यामिति**। अभिलक्ष्य परपार्श्वे इति शेषः । **उष्ट्रोऽपि** उन्नतोऽपि धान्यादि न पश्येदित्यर्थः। ‘छिद्रं वा वारयेदि’त्यत्र **वा**शब्दः चार्थे। क्वचित् ‘ च वारयेदि’त्येव पाठः । निवारयेदिति पाठान्तरम् । यथाश्रुतो वा वाशब्दः। तयोः मुखमनु तत्समीपे गच्छति येन तादृशमित्यर्थः। मुखोन्मितमिति पाठान्तरम् । अयं भावः । तत्र क्षेत्रे समन्ततः उष्ट्रकर्तृकधान्यादिकर्मकावलोकनायोग्यां प्राकारसदृशीं अत्युन्नताम् आवृतिं कुर्यात् । तत्र यानि छिद्राणि श्वादिमुखप्रवेशयोग्यानि तान्यपि निबध्यात् । तस्य यथाश्रुतत्वे श्वादिमुखप्रवेशयोग्यसर्वच्छिद्ररहितं यथा तथाऽत्युन्नतां तां कुर्यादिति तत्करणे प्रकारान्तरकथनमिति ॥ १६२ ॥

## याज्ञवल्कीये १६३ श्लोकः ।

**अपिः** पूर्वसमुच्चये । पूर्वार्धे पदद्वयम् । यथासम्भवं द्वन्द्व उभयत्रेत्याह । **महानिति** । ‘ अचतुर ’ ( व्या. सू. ५।४।७७ ) इत्यादिना निपातितोऽयम् । सेक्ता वृष इत्यन्वयः। ‘साण्ड’ इति प्रसिद्धः । वक्ष्यमाणभिन्नः । कर्मधारयोऽग्रेऽपि । तेन तेषां तद्भिन्नानां न ग्रहणम् ।

“ अनिर्दशाहां गां सूतां वृषान् देवपशूंस्तथा । सपालान्वा विपालान्वा अदण्ड्यान्मनुरब्रवीत् ॥” ( अ. ८ श्लो. २४२ ) इति **मनो**राह। **अनिर्दशाहेति** । अनिर्गतदशाहा गौरित्यर्थः । **मानवे** “ चक्रशूलाङ्कितोत्सृष्टा वृषाः, हरिहरादिप्रतिमासंबन्धिपशवो देवपशवः । ” इति **कुल्लूकभट्टः** । **च**शब्दबलान्निमित्तान्तरपरतयोत्तरार्धं व्याचष्टे। **येषां चेति** । विभिन्नविभक्तिकत्वेन यथाश्रुतान्वयासम्भवादाह। **विद्यते इति** । अध्याहारः । **सस्येति** । परेत्यादिः । मोच्या इत्यस्यैवार्थं प्रागवदाह। **न दण्ड्या इति** । ते **चोशनसोक्ता** इति पाठः । तथा च **मनु**रित्यपपाठः । तथा तत्रापाठात् । तत्र हेतुमाह। **प्रजेति** । **हि** यतः । राजसम्बन्धित्वात् । एकाक्षिविकलः काणः । पादरहितः कुण्ठः । पंगुरिति यावत् । शश्वत् वारंवारं सस्यनाशकत्वेन कृतं लक्षणम् अङ्कनं धनग्रहणादि वा येषाम् । ते च पुनः पुनः सस्यनाशकत्वेन दण्डिता इति यावत् । आगन्तुकी सूतिका अभिसारिणी या गर्भाधानार्थमभिसरति सा चेति त्रिविधा गौश्चादण्ड्या । राजगृहे उत्सवे श्राद्धसमये चेत्याद्यर्थः । असङ्गतिमंशे परिहरति । **अत्रोत्सृष्टेति** । उत्सृष्टवृषाणामपि गर्भार्थं गोकुले पालैर्धारणात्सपालत्वसम्भव इति इति तु **मनु**व्याख्यातारः ॥ १६३ ॥

## याज्ञवल्कीये १६४ श्लोकः ।

यथेति भिन्नं पदं, तदर्थो **गणयित्वेति** । तथेत्यस्य **तथैवेति** । तस्य च विगणय्येत्येवार्थः । **मृतेति** निमित्तद्वयं नैकम्, अन्यतरवैयर्थ्यापत्तेरित्याह । **मृतानिति** । कृतेत्यनेन तदभावे । भृतिर्वेतनम् । प्रतीति पूर्वान्वयि । गोपे इत्युभयान्वयि । भृतिरित्यस्याग्रेऽप्यनुषङ्गः । **नाशश्च** नाशादि च । **नष्टमिति** । तृतीयपादस्य सर्वत्र पूर्वत्रान्वयः । गोपालसम्बन्धिरक्षणाख्यपुरुषव्यापारेण हीनं रहितं क्षतं नष्टं दृष्टिगोचरातीतं कृमिभिर्जग्धं भक्षितं श्वभिः उपलक्षणत्वेन श्वापदादिभिर्हतं विषमे श्वभ्रादिप्रदेशे पतनेन मृतं च गोपाल एव स्वामिने दद्यादित्यर्थः । **प्रसह्येति** । चोरैर्बलादपहृतानेतान् गवादीन् स्वामिने गोपालो न दाप्य इत्यर्थः । एतेन चोरैर्बलादपहृतस्वात् पालात् स्वामिने पशुर्न दाप्य इति व्याख्यानमपास्तम् । **विघुष्येति** । चोरैः पटहाद्युद्घोषेण प्रसिद्धमपहृतं पालो दातुं नार्हति, यदि तस्मिन्नेव देशे संनिहितोद्देशे हरणे तस्मिन्नैव काले हरणोत्तरमेव स्वस्य स्वामिने कथयतीत्यर्थः । शेषत्वविवक्षायां षष्ठी । अन्यथा तु दाप्य एव । अत एव न दातुमर्हतीत्युक्तं, नं तु न दाप्य इति । **तु पुनः** मरणोत्तरम् । पुनरित्येव पाठे त्वर्थे सः । **चर्म** त्वक् । **वालान्** लोमानि चिह्नभूतानि । बस्तिर्मूत्राधारोऽङ्गविशेषः । "बस्तिर्नाभेर्द्वयोरधः" **इत्यमरः** ( २।६।७३ ) । **स्नायुर्**वस्नसा । 'अथ वस्नसा स्नायुः स्त्रियामि'**त्यमरः** ( २।६।६६ ) । पायुमिति पाठान्तरम् । **रोचना** गोरोचना । एतानि **पशुस्वामिषु** वैवक्षिकसप्तमी दद्यात् । तुश्चार्थे । **मृतेष्वित्युभया**न्वयि । तथा च तेषु मृतेषु अन्यान्यप्यङ्गानि ज्ञातिज्ञापकानि शृङ्गखुरादीनि दर्शयेत् इत्यर्थः । अङ्कांश्चेति पाठे पशुदेहस्थितांन्मुद्रादिचिह्नानपि दर्शयेदित्यर्थः । 'अङ्कांश्च दर्शयान्निति' पाठे तेषु मृतेषु अङ्कान् चिह्नानि दर्शयन्सः कर्णादिकं तेभ्यो दद्यादित्यर्थः । 'अङ्कानीति' पाठेऽप्येवम् । **इति मनु**वचनादिति पाठः । इति स्मरणादिति पाठेऽपि तथा ॥ १६४ ॥

## याज्ञवल्कीये १६५ श्लोकः ।

**किं चेति** । अन्यदपि गोपं प्रत्युच्यते इत्यर्थः । तस्यानुषङ्गेण तुर्यपादे तस्य द्रव्यं देयत्वेन विधीयते चेति शाब्दोऽर्थः । तदनुरोधेनोभयत्र फलितमेवाह । **अर्धाधिकत्रयोदशपणमिति** । अधिकेन समासस्य विहितत्वादेवमुक्तम् । 'द्रव्यमिति' **मौलस्य** व्याख्या **विनष्टेति** । पालो दाप्य इत्यस्यानुषङ्गः । षष्ठी प्राग्वत् । पौनरुक्त्यं परिहरति । **दण्डेति** । प्रागुक्तवचनेनैव दण्डस्य प्राप्तत्वात्तमनूद्यार्धत्रयोदशपणत्वरूपतत्परिमाणांश एव अत्र विधेय इत्यर्थः ॥ १६५ ॥

## याज्ञवल्कीये १६६ श्लोकः ।

विरोधात् ग्रामशब्दस्तत्स्थजनपरः प्राग्वदित्याह । **ग्राम्येति** । द्वितीयपादार्थद्वयमाह । **भूम्यल्पत्वेति** । तात्पर्यार्थमाह । **गवादीनामिति** । **चरक्षार्थमिति** । चरणार्थमिति पाठान्तरम् । **तृणेति** अस्वामिकतृणाद्यन्तराभावे इत्यर्थः । गवाग्नीत्यनेनान्यार्थे तदभावः सूचितः । **सर्वतः** आवृतादनावृताच्च । **स्ववत्** स्वतुल्यम् । वतिप्रत्ययसूचितमाह **अनिवारित इति** । अनेन निवारितः सन् गृह्णीयादिति सूचितम् । इदमेव ततो न्यूनत्वम् । सर्वत इति पुष्पाणीति च सूचितमाह । **फलानि त्वपरिवृतादेवेति** । आवरणरहितादेवाहरेन्न तु सर्वत इत्यर्थः । तत्र हेतुमाह । **गोऽन्यर्थमिति** । वैकल्पिकत्वादवद्न् न । इदं देवताया अप्युपलक्षणम् । **एधांसि** काष्ठानि । **वीरुदित्युभयान्वयि** ।

**च पुष्पाणि** पुष्पाणि च । चोऽग्रे त्वर्थे । **एतच्चेति** । द्विजस्तृणैध इति मूलोक्तं चेत्यर्थः । **द्विजेति** । वर्णत्रयान्यशूद्रादेरपीत्यर्थः । **तेनैव** गौतमेनैव ।

**नारद**विरोधं परिहरति । **यत्पुनरिति** । मूले द्विजस्योक्तत्वादाह । **द्विजव्यतिरिक्तविषयमिति** । अनापृच्छन्नित्यनेन तस्य परिगृहीतविषयताया एव लाभादिति भावः । तृणान्तराभावे इत्युक्तेस्तत्सत्त्वे द्विजस्यापि तत्र प्रश्नपूर्वकमेव ग्रहणं नान्यथा । अन्यलाभेऽनन्यगतेरभावादित्याशयेनाह । **अनापद्विषयमिति** । गवादीत्यनेनान्यार्थमग्रहणं सूचितम् । तदाह । **गवादीति** ॥ १६६ ॥

## याज्ञवल्कीये १६७ श्लोकः ।

**इदं** वक्ष्यमाणम् । **स्थानं** स्थितिर्गतिनिवृत्तिः । आसनमुपवेशनम् । **अन्तरं** व्यवधानम् । चतुर्हस्तं धनुः, धनुषां शतं, तस्य परिच्छेद्यत्वेनान्वयादाह । **धनुःशतपरिमितमिति** । यद्यपि 'परिणाहो विशालता' **इत्यमरः** ( २।६।११४ ), तथापि सामानाधिकरण्याय धर्मिपरमत्र । तदाह । **सर्वत इति** । सस्यमित्यादेर्भूस्थानमिति विशेष्यं बोध्यम् । अत एव मनुः— ( अ. ८ । २३७ )

" धनुःशतं परीहारो ग्रामस्य स्यात्समन्ततः । शम्यापातास्त्रयो वाऽपि त्रिगुणो नगरस्य तु "

इति । शम्या दण्डयष्टिः । सा बाहुवेगेन प्रेरिता यत्र भूस्थाने पतति तादृशास्त्रय इत्यर्थः । त्रैगुण्यमुक्तान्यतरापेक्षया । प्रचुरेति खर्वटशब्दार्थः । कण्टकानां सन्तानो विस्तारो यत्र ते, प्रचुरास्ते यत्र तस्येत्यर्थः । बहुकण्टकिवृक्षाक्रान्तस्येति यावत् । **ग्रामस्य** क्षेत्रस्य चान्तरं धनुषामिति शेषः ॥ १६७ ॥

इति स्वामिपालविवादः ॥

---

# अथ अस्वामिविक्रयप्रकरणम् ॥ ११ ॥

## याज्ञवल्कीये १६८ श्लोकः ।

**उपक्रमते** वक्तुं प्रारभते । आद्येन मूलकृदिति शेषः । **निक्षिप्तमिति** । निक्षिप्तं परद्रव्यं नष्टं वा परद्रव्यं लब्धं वा परद्रव्यमपहृत्य वा यत्स्वामिनोऽसमक्षं विक्रीयते इत्याद्यर्थः । तत्र स्वामिनोऽसमक्षमित्यस्य परोक्षमित्यर्थः । तदनुज्ञामन्तरेणेति यावत् ।

अथ मूलमवतारयति । **तत्रेति । तत्र** एवंविधेऽस्वामिविक्रयस्थलेऽस्वामिविक्रेतृविषये किं शास्त्रविधानं कीदृशं भवतीत्याशङ्कायामाहेत्यर्थः । स्वशब्द आत्मीयपर इत्याह । **आत्मेति** । ततश्चार्थात् धनमेवेत्याह । **द्रव्यमिति** । शेषं पूरयति अगत्या । **यदीति** । प्राग्वदाह । **विक्रीतग्रहणमिति** । **दत्ताहितयोः** दत्ताहितयोरपि । **उक्तं कात्यायनेन** ।

द्वितीयपादार्थमाह । **क्रेतुरिति** ।

उत्तरार्धार्थमाह । **तथेति** । हीनादित्यादीनां तस्करत्वेऽन्वयः । क्रयः सर्वत्र विशेष्यभूतो बोध्यः । **तद्द्रव्येति** । अपहृताद्यनीप्सितमूल्यभूतद्रव्येत्याद्यर्थः । मूले रह इत्यव्ययम् । तदर्थमाह । **रहसि चेति** । उक्तेनापौनरुक्त्यायाह । **संभाव्येति** । यद्वस्तु यावन्मूल्यद्रव्यमर्हति तस्मादपि न्यूनेन मूल्येनेत्यर्थः । प्रकारान्तरमाह । **अल्पेति** । तस्करत्वातिदेशफलमाह । **तस्करवदिति** । तदीयदण्डादीत्यर्थः । **आदिना** शासनादिः । **यथोक्तमिति** । **नारदे**नेति भावः ( अ. ७ श्लो. २ ) । समापु-

यादिति पाठः । प्रकाशं यथा स्यात्तथा यः क्रयस्तस्मात् । सार्वविभक्तिकस्तसिः अपादाने इति वा **क्रेतुः**, तत्कर्तुरित्यर्थः । क्रेतुरित्यग्रेऽप्यन्वेति ॥ १६८ ॥ ।

## याज्ञवल्कीये १६९ श्लोकः ।

दूषयितुमेकदेशीयमतमनुवदति । **नष्टमित्यादिना** । मूले समाहारद्वंद्व इति भावः । तत्फलमाह । **आत्मेत्यादि** । उत्तरार्धार्थमाह । **अथेति** । मूले देशकालयोरतिपत्तिरिति सुप्सुपेति सप्तमीसमासः । तत्राद्येऽतिपत्तिर्गमनम्, देशशब्दश्च विशेषपरः कालशब्दोऽपि, द्वितीयेऽतिपत्तिर्मरणम् इत्याह । **अविदितेति** । **मूलेति** । विक्रेत्रित्यर्थः । यद्वा मूल्येत्यर्थः । क्वचित्तथैव पाठः । **तद्धनं** गृहीत्वेति शेषः । **शुद्धः** । राज्ञाऽदण्ड्यश्च ।

अयं भावः । नष्टं वाऽपहृतं वाऽन्यदीयद्रव्यं क्रयप्रतिग्रहादिभिरस्वामिनः सकाशाद्यः कश्चन प्राप्य स्वयमप्यन्यस्मै विक्रीणीते तस्मात्क्रेता पुरुषस्तं विक्रेतारं रजनीचरादिभी राजपुरुषैर्ग्राहयेत्, स्वचौर्यनिवृत्त्यर्थं राजदण्डाप्राप्त्यर्थं च । अथ केनापि प्रकारेण तं ग्राहयितुं प्रदर्शयितुं वा न समर्थस्तदा तस्माद्गृहीतं द्रव्यं मूलस्वामिने समर्प्य स्वयं शुद्धो भवतीति ।

दूषयति । **तदिदमिति** । तत्र हेतुमाह । **विक्रेतुरिति** । वक्ष्यमाणेन मूलेनेत्यर्थः । स्वेष्टार्थमाह । **अत इति** । **नाष्टिकं प्रति** । न तु द्वितीयक्रेतारं प्रति । अत एव तद्विरुद्धमाह । **आत्मीयमिति** । आसाद्येत्यस्यार्थमाह । **क्रेत्रिति** । **तं** नरम् । देशकालातिपत्ताविति षष्ठीतत्पुरुष इत्याह । **देशकालातिक्रमे इति** । तयोरतिक्रमणे इत्यर्थः । **तद्विज्ञापनकालादिति** । स्थानपालादिभ्यः कथनकालादित्यर्थः । **गृहीत्वा** । तमिति शेषः ॥ १६९ ॥

**हर्तरि** क्रेतरि । **किमिति** तेनैवेति भावः ।

## याज्ञवल्कीये १७० श्लोकः ।

**गृहीतः** ग्राहितः । **अपहृतमिति** । किं त्विति शेषः । मात्रपदलब्धमेवाह । **न पुनरिति** । पश्चादपीत्यर्थः । **मूले** विक्रेतरि । यस्मात्क्रीतं तेन तस्मिन्निति यावत् । एवमग्रेऽपि । सतिसप्तमी । **नाष्टिकस्य** नष्टधनस्वामिनः ।

अथाग्रिमार्थमाह । **तस्मिन्नित्यादिना** । आदौ तर्युपादार्थमाह । **तस्येति** । तस्मादित्यस्यार्थमाह । **तस्य सकाशादिति** । दण्डाभ्रमायाह । **स्वीयमिति** । विशेषानुक्तेराह । **अवाप्नोतीति** । विशेषमाह । **अथासाविति** । विक्रेतेत्यर्थः । **कातीयमाह** । **प्रकाशमिति** । **तत्र** विवादे । **क्रयं शोधयित्वेति** । स्वक्रये साक्ष्यादिप्रदर्शनेनेत्यर्थः । **शुद्धः** अतस्करः । तमेवाह । **असमाहार्येति** । **स एव** क्रेतैव । तमेवाह । **अनुपस्थापयन्निति** । अप्रदर्शयन्नित्यर्थः । **यथेति** । अभियुज्यमानमनतिक्रम्येत्यर्थः । **दमं च**, राज्ञेति शेषः । **सः** क्रेतेति विशेष्यम् ॥ १७० ॥

## याज्ञवल्कीये १७१ श्लोकः ।

व्यवहितसंगतिमाह । **स्वमिति** । **तदिति** । तल्लाभेच्छुना स्वामिनेत्यर्थः । उपभोगेन वेति पाठः । **एवं** प्रकारेण । नष्टमित्युपलक्षणमित्याह । **अपहृतं वेति** । मूलेऽतोऽन्यथेत्यस्यैव विवरणं **तेनाविभाविते इति** । तदर्थमाह । **तेन स्वामिनेति** । नाष्टिकेनेत्यर्थः । **अविभाविते** असाधिते । तस्येत्यस्यार्थमाह । **नष्टद्रव्यस्येति** । तत्रेति तत्र पाठान्तरम् । **अर्थः स एव** । यद्यपि 'बन्ध आदौ च॰ बन्धने ' इति **कोशस्तथाप्युभयत्र** लक्ष्यार्थमाह । **पञ्चमांश इति** । तच्छोधनेनैव

शुद्धेः दानाभावसंदेहाभावाय प्रागुक्तक्रमं स्पष्टयति । **अन्न चेति । आत्मदोषेति ।** चौर्येत्यर्थः । **साधयित्वेति ।** साक्ष्यादिभिरिति भावः । **द्रव्यं** तदीयम् ॥ १७१ ॥

## याज्ञवल्कीये १७२ श्लोकः ।

• **प्रच्छादकमिति ।** स्वेनैव द्रव्यस्य ततो ग्रहात्फलाभावेन कारुण्येन च राजादावप्रकाशकमित्यर्थज्ञानाय मूले परहस्तादित्युक्तम् । यद्वा । परहस्तं अतति गच्छतीति व्युत्पत्त्या प्रथमान्तं द्रव्यविशेषणम् । तदाह । **चौरादिहस्तस्थमिति । आदि**नोदासीनादिग्रहणम् । तथा चादौ अग्रे च तस्करग्रहणमप्युपलक्षणमिति भावः । 'नृपस्येति' शेषे षष्ठी । दर्पादीति आदिना भयप्रार्थनादि । लिङर्थोऽविवक्षित इत्याह । **गृह्णातीति ।** प्राग्वदाह । **षडिति ।** तत्परिमितान्पणान् । तत्र दोषान्तराभावाद्धेतुमाह । **तस्करेति** ॥ १७२ ॥

## याज्ञवल्कीये १७३ श्लोकः ।

**शुल्कं** राजग्राह्यः करः । आहृतमित्यस्यार्थमाह । **राजेति ।** परत इत्यस्यार्थमाह । **ऊर्ध्वमिति ।** विशेषमाह । **स्वेति । प्रब्रूयुः** तत्पुरुषाः । **विख्याप्य** जनसमूहेषूद्घोष्य ।

विरोधं परिहरति । **यत्पुनरिति ।** प्रनष्टस्वामिकमिति पाठः । पाठान्तरेऽदृष्टस्वामिकमित्यर्थः । एवं गतिद्वयं प्रागपि । तत्र व्यस्तपाठोऽपि । **श्रुतेति ।** वेदशास्त्रसदाचरणपूर्णेत्यर्थः । उत्तरसङ्गतये प्राग्वदाह । **रक्षणेति ।** बहुव्रीहिः । एवमग्रेऽपि । आद्यर्थो वचने एव स्फुटः । **तेनैव मनु**नैव । **अथ** रक्षणानन्तरम् । **षड्भागम्** षट्त्वसंख्यापूरकभागम् । **प्रनष्टाधिगमादिति ।** अधिगमे कर्मणि घञ् । प्रनष्टादधिगम्यमानात् द्रव्यादित्यर्थः । यद्वा प्रनष्टस्याधिगमात्प्राप्तिपूर्वकरक्षणाद्धेतोरित्यर्थः ।

व्यवस्थामाह । **तृतीयेति ।** भागानुसारेण व्युत्क्रम इति भावः । **बृहस्पतिः**—

"राजाऽऽददीत षड्भागं नवमं द्वादशं तथा । शूद्रविट्क्षत्रजातीनां विप्रात् गृह्णीत विंशकम् ॥

"त्र्यब्दादूर्ध्वं तु नागच्छेत्तत्र स्वामी कथंचन । तदा गृह्णीत तद्राजा ब्रह्मस्वं ब्राह्मणान् श्रयेत् ॥" इति ॥

**बौधायनाथः** ( १ । १० । १६ ) "अब्राह्मणस्य प्रनष्टस्वामिकरिक्थं संवत्सरं परिपाल्य राजा हरेदिति ।"

**नारदः**– ( अ. ३ । श्लो. १८ )

"अस्वामिकमदायादं दशवर्षस्थितं ततः । राजा तदात्मसात्कुर्यादेवं धर्मो न हीयते" ॥ इति ।

एतेषामपि व्यवस्था प्रागेवोक्ता । तदाह । **प्रपञ्चितमिति ।** अत्र च प्रनष्टस्वामिकद्रव्ये एकवर्षत्रिवर्षदशवर्षधारणविकल्पानां व्यवस्था दूरतमदेशवर्तितदीयपुत्रादिदायादवार्तायां सत्यां नानाविधानेकगमनप्रतिबन्धसम्भवे वाऽवगन्तव्येति तु **कल्पतरुः । पुरस्तादिति ।** अत्रैवाध्याये इति भावः ॥ १७३ ॥

## याज्ञवल्कीये १७४ श्लोकः ।

महिषोष्ट्रगवामित्यार्षत्वात्साधुः । **प्रनष्टाधिगते** सति । एवमग्रेऽपि । धनदाने निमित्तमाह । **रक्षणेति ।** द्वंद्वात्समुदाये प्राप्तावाह । **प्रत्येकमिति ।** उभयत्र । अजाविके इति प्राग्वत् । तत्र द्वितीये उपपत्तिमाह । **अजेति । वीप्सेति ।** एवं प्रागपि बोध्यम् ॥ १७४ ॥

इत्यस्वामिविक्रयप्रकरणम् ।

## अथ दत्ताप्रदानिकप्रकरणम् ॥ १२ ॥

**अधुनेति** । दानप्रसङ्गादिति भावः । तत्र तावदेतत्प्रकरणाभिधेयं प्रमेयं निष्कृष्टमाह । **विहितेति** । यथासंख्यमन्वयः । विहितमार्गाश्रयं दत्तानपाकर्माख्यम्, अविहितमार्गाश्रयं दत्ताप्रदानिकाख्यमित्यवान्तरभेदः । तदाह । **इति चेति** । किंचेतीत्यर्थः । उभयसामान्यमाह । **दानाख्यमिति** । **चस्त्वर्थे** । तत्रैकोक्तेर्न्यूनतानिरासाय **नारदीयं** व्याचष्टे । **असम्यगिति** । अस्यैवार्थमाह । **अविहितेति** । तत्र **य** इत्यस्य कश्चिदित्यर्थः । अत एवासंभवान्न तस्य तच्छब्देन परामर्श इत्याकांक्षानिरासाय शेषं पूरयति । **यस्मिन्निति** । तस्य योगार्थमप्याह । **दत्तस्येति** । अप्रदानमिति च्छेदः । अत एवाह । **पुनरिति** । षष्ठीसमासगर्भो मत्वर्थीयष्ठन् । अविहितेत्यादिना तत्स्वरूपनिरुक्त्यैव तद्विपरीतरूपस्य दत्तानपाकर्मणः स्वरूपमर्थसिद्धमेवेति **हि**ना सूचितमेवेति न पृथक्कथितमित्याह । **विहितेति** । **तदेव** दानाख्यमेव । तद्योगार्थमाह । **दत्तस्येति** । अनपाकर्मेत्यस्यार्थः । **अपुनरिति** । शास्त्रविहितमार्गेणैव दत्तत्वात्पुनरादानस्य निषिद्धत्वेनापुनर्ग्रहणमित्यर्थः ।

**तच्च** द्विविधं दानाख्यं व्यवहारपदं च । एकैकस्य द्वैविध्याच्चतुर्विधत्वं, तदाह । **अथ देयमिति** । देयं दत्तं चेति द्वयं दत्तानपाकर्मभेदः । अदेयमदत्तं चेति द्वयं दत्ताप्रदानिकभेदः । एवं तत्र दानमार्गश्चतुर्विधो विज्ञेय इत्यर्थः । **तत्र** तेषां मध्ये । **अनिषिद्धेति** । अनिषिद्धा या दानक्रिया तद्योग्यमित्यर्थः । कुटुम्बाविरोधि स्वीयद्रव्यं हि तादृशम् । **अस्वतयेति** । अन्वाहितादिकमस्वतया दानानर्हं, कुटुम्बोपोषणेऽपर्याप्तं तन्मात्रपर्याप्तं वा स्वं द्रव्यं निषिद्धतया दानानर्हमिति विवेकः । **अव्यावर्तनीयमिति** । अपुनर्ग्राह्यमित्यर्थः । **यत्प्रत्याहरणीयमिति** । यथाकथंचिद्दत्तं पुनर्ग्राह्यमित्यर्थः ।

नारदोक्तार्थपरतया मूलमवतारयति । **तदेतदिति** । पूर्वोक्तं सर्वमित्यर्थः ।

### याज्ञवल्कीये १७५ श्लोकः । ( प्रथमपादः )

प्राग्वदाह । **आत्मीयमिति** । स्वतस्तस्य तदविरोधादाह । **अनुपरोधेनेति** । तदविघातेनेत्यर्थः । तस्यापि तात्पर्यार्थमाह । **कुटुम्बभरणेति** । देयमित्यस्यार्थमाह । **दद्यादिति** । विशेषणफलमाह । **तदिति** । कुटुम्बेत्यर्थः । **वृद्धौ** अशीत्युत्तरसंख्याकौ । **शिशुः** षोडशन्यूनः । **आकार्यशतमपि** अकार्यदुष्प्रतिग्रहाद्यानन्त्यमपि । **मनुरिति** । इतीत्यादिः । एवमग्रेऽपि ।

पूर्वं **नारदोक्त्या** अस्वतयेत्यादिना अदेयं द्विविधमुक्तम् । अतः संक्षेपप्रकारमेवाह । **स्वमिति** । आद्यादेयं व्यतिरेकेण **मूलकृता** दर्शितमित्याह । **स्वं दद्यादिति** । **अन्वाहितेति** । अत्र क्रमस्य वक्ष्यमाण**नारदीय**स्य विवक्षितत्वान्न दोषः । द्वन्द्वोत्तरपदकद्वन्द्वो वा । एवं कुटुम्बेत्यनेन तदपर्याप्तं निषिद्धतया न देयमिति द्वितीयमप्यदेयं व्यतिरेकेणैव दर्शितमित्यपि बोध्यम् । तथा च अस्वं अदेयं, स्वमपि तदपर्याप्तमदेयमिति द्विविधमदेयमिति सिद्धमिति तात्पर्यम् ।

व्याख्यात्राऽन्वाहितादिपञ्चानामदेयत्वमुक्तं, **नारदेन** त्वष्टानामिति तद्विरोधमाह । **यत्पुनरिति** । कष्टास्वित्यापद्विशेषणम् । **कष्टासु** अत्यन्तदुःखदापत्स्वपि वर्तमानेनेत्याद्यर्थः । काष्ठास्विति पाठे सर्वासु दिक्षु आपत्स्वपीत्याद्यर्थः । तं परिहरति । **तदिति** । मात्रं कार्त्स्न्ये । **न पुनः** न तु । अन्वाहिताद्यष्टानामेकगणपाठोऽदेयत्वमात्रसाम्येन, न तु अस्वत्वेनेति भावः । अत्र हेतुमाह । **पुत्रेति** । **प्रतिश्रुतेषु** त्रिषु । **चस्त्वर्थे** ।

एवमाद्यपादं व्याख्याय **द्वितीयपादांशं** व्याख्यातुमवतारयति । **स्वमिति** । दारसुतग्रहणमुपलक्षणमित्याह । **दारसुतादेरिति** । समाहारद्वन्द्वस्तत्र । तदाह । **दारसुतमिति** ।

**तृतीयपादं** व्याचष्टे । **तथेति** । **मनुमाह** । **पुत्रानिति** । **वृत्तिं** जीविकाम् ।

**तुर्यपादं** व्याचष्टे । **तथेति** । यत्पदार्थमाह । **हिरण्यादिकमिति** ॥ १७५ ॥

उत्तरसङ्गतिमाह । **एवमिति** । उक्तप्रकारेणेत्यर्थः । **चो** वाक्यालङ्कारे । **आहेति** । अर्धेनेति भावः । अत एव तदवतरणपूर्वकं वक्ष्यति—

## याज्ञवल्कीये १७६ श्लोकः ।

प्रतिग्रहे भावे घञित्याह । **प्रतिग्रहणमिति** । उक्तप्रकारेणेत्यर्थः । स्यादिति विधिरित्याह । **कर्तव्य इति** । तत्फलमाह । **विवादेति** । इदमुभयान्वयि । तस्य विशेषेण तथा प्रतिग्रहे हेतुमाह । **तस्येति** । स्थावरस्येत्यर्थः ।

द्वितीयार्धं प्रकरणसम्बन्धमवतारयति । **एवमिति** । यदि तु प्रतिग्रहशब्देन करणघञोत्सर्गौ दानाख्य एवोच्यते तदपि प्रकृतसम्बद्धमेवेति बोध्यम् । पादभेदेन वाक्यद्वयं न तु देयादिभेदेनेत्याह । **यदिति** । विशेषमाह । **धर्मार्थमिति** । अनेनान्यस्यातथात्वं सूचितम् । प्राग्वदेवोक्तहेतोराह । **यद्यसाविति** । यस्मै दातुं प्रतिश्रुतं स इत्यर्थः ।

एवं देयादेयविषयं वक्तव्यमभिधाय दत्तादत्तविषयं वक्तव्यं वक्तुं तस्य द्वितीयपादं सप्रतीकं व्याचष्टे । **दत्त्वेत्यादि** । **पुनः**, पश्चात् । दत्तानपहरणकथनेनैव तत्प्रतिपक्षभूतस्यादत्तप्रत्याहरणस्यापि कथनमर्थसिद्धमेव **नारद**वदित्याह । **यत्पुनरिति** । **चो**ऽप्यर्थे । **दत्तं** तत्सप्तविधमिति ।

" तत्र त्वष्टावदेयानि देयमेकविधं स्मृतम् । " ( अ. ४ । ३ ) इति अस्यादिः ।

**नारदीयं** सर्वं क्रमेण व्याचष्टे । **अयमर्थ इति** । क्रीतद्रव्यस्येति बहुव्रीहिः । **तुष्ट्या**, सन्तोषेण । **दुहित्रिति** । दुहितुः पुत्रादिभ्य इत्यर्थः । दृष्टस्योक्तत्वात् अनुग्रहपदेन तदित्याह । **अदृष्टेति** । 'सर्वं वाक्यमिति' **न्यायेनाह** । **दत्तमेवेति** । एवव्यावर्त्यमाह । **न प्रत्याहरणीयमिति** । **नारदीये** दत्तपदं पण्यमूल्यादिशेषतया स्वतन्त्रतया च तन्त्रेणोपात्तमिति भावः । यच्चादृष्टार्थमित्येव पाठेऽनुग्रहार्थमित्यस्यैव व्याख्यानं तद् बोध्यम् ।

अदत्तं त्विति व्याचष्टे । **भयेनेत्यादि** । तत्र भयं च क्रोधश्च शोकश्च तेषां वेगस्तेन रुजा पीडा तया अन्वितैरिति शाब्दोऽर्थः । तत्फलितमाह । **भयेनेत्यादि** । **बन्दीति** कारागृहाधिकृतादिभ्य इत्यर्थः । **निर्यातनं** दूरीकरणम् । **अन्यस्मै**, येन साकं पित्रादीनां वैरं तस्मै । पुत्रादीति पाठान्तरम् । छलसंबद्धमेव योगपदं नान्येन । योगत इति तृतीयान्तात्सार्वविभक्तिकस्तसिरित्याह । **उत्कोचेनेति** । **तस्मा इति** । तस्मा एव । तद् अन्यद्वा ददातीत्यर्थः । **शतदानमिति** । शतं दीयमानामिति मनसि निधाय कारणोच्छ्वासादिवशात्सहस्रं दीयते इत्युक्तौ सत्यां मनसोऽनभिप्रेतमप्युक्त्यनुसारेण यत् दीयते तदित्यर्थः । उन्मत्तान्तेन द्वंद्वोत्तरपदकद्वंद्वेनापवर्जितमित्यस्य दत्तमित्यर्थकस्य साधनं कृतेति समास इत्याह । **बालेनेत्यादि** । **मदनीयेति** । तत्साधनद्रव्येण यो मत्तस्तेनेत्यर्थः ।

कर्तीति व्याचष्टे **तथेति** । **ममेदमित्यस्यार्थो** । **मदीयमिति** । **कर्तेति** लुडर्थानद्यतनत्वमात्रं न विवक्षितमित्याह । **करिष्यतीतीति** । अपात्रे इति तस्य तत्त्वविवक्षायां सप्तमी । **अपात्रायेत्यर्थः** ।

तदाह । **अचतुर्वेदायेति** । उक्ते इत्यत्र "अर्शआयच्" (व्या. सू. ५।२।१२७)। सप्तमी तथैवेत्याह । **चतुरिति** । अकार्ये इति छेदः । सप्तम्युभयत्र प्राग्वत् । **धर्मः संहितो येनेति** । आहिताग्न्यादिः । कर्तव्यत्वेन धर्मं ब्रुवते, अकार्ये अकार्यं यस्य तस्मै अकार्यकर्त्रेऽविज्ञानायद्दत्तं स्यादित्यर्थस्तदाह । **यज्ञमिति** ।

विशेषमाह । **आर्तेति** । वेत्यस्योभयत्रान्वयः । **दत्तमि**त्यस्य संकल्पितमित्यर्थः । अत एव साधारणमाह । **अदत्त्वेति** । **मृते**, तस्मिन् सति । पूर्वं पूर्णे दाने तु न परावृत्तिरिति तुना सूचितम् ।

**कात्यायने**नैव सर्वविवादसाधारणमन्यदप्युक्तमित्याह । **तथेदमिति** । वक्ष्यमाणम् । **अपरम्**, उक्तभिन्नम् । तदर्थमाह । **योग इति** । उभयत्रेति भावः । कृतसमाहारद्वंद्वाभ्यां योगयोस्तृतीयासमास इत्याह । **योगेनेत्यादि** । आधमनादीनाह । **आधीति** । विशेषेण क्रीतमित्याह । **क्रयेति** । भावे क्त इति भावः । **विगमे**, तज्ज्ञाने । **अस्य** अपरस्य ।

विशेषान्तरमाह । **यः पुनरिति** । यस्तु । अदत्तं गृह्णातीति । पाठः तद्ग्रहणे मूलमाह । **लोभादिति** । अत एवाज्ञः स इति भावः । यद्यपि तावुभावपि दण्ड्यावित्येव सिद्धं तथापि स्फुटार्थं व्युत्क्रमेण सांनिध्यादाह । **अदेयदायक इति** । **तथा**, च । **अदत्तेति** । अदत्तं प्रतीच्छक इति तथा । सचवर्गः प्रतीच्छधातुर्ग्रहणार्थः । धातुगणे बाहुलकोक्तेरिति भावः ॥ २७६ ॥

इति दत्ताप्रदानिकप्रकरणम् ।

## अथ क्रीतानुशयप्रकरणम् ॥ १३ ॥

प्राग्वदाह । **क्रीतेति** । तत्र संगतिं सूचयन्नाह । **तदित्यादि** । **बहु**, विपुलम् । सम्यगिति यावत् । **तत्र च** तदनुशये च । **तेनैव**, **नारदे**नैव, एवमग्रेऽपि । षष्ठी प्राग्वत् । 'तस्मिन्नेवाह्नच-विवक्षतमिति' पाठः । नाशरहितामिति तदर्थः । अविक्षितामीति पाठेऽप्येवम् । **आवहेत्**, त्यजेत् । तस्मै दद्यात् । तावता न्यूनं मूल्यं ग्राह्यमिति यावत् । **द्विगुणं** पूर्वोक्तत्रिंशांशात् द्विगुणं, पञ्चदशांशमिति यावत् । तुर्यपादस्य तात्पर्यार्थमाह । **परत इति** । **अनुशयो**, विचारपूर्वकपश्चात्तापः ।

संगतये विशेषमाह । **एतच्चेति** । **नारदोक्तं** चेत्यर्थः । **बीजादीति** । बीजादिव्यतिरिक्तं च तत् उपभोगादिविनश्वरं च तत् वस्तु च तद्विषयकमित्यर्थः । भोगवस्त्वेिति पाठे स्पष्टार्थम् । **भोगेति** भोग्येत्यर्थः ।

### याज्ञवल्कीये १७७ श्लोकः ।

एवं स्मृत्यन्तरोक्तं मनसि निधायोक्तान्यविषये मूलकृत् प्रत्यर्पणप्रकारं दर्शयतीत्याह । **बीजादीति** । **दशैकेति** । पूर्वार्धे समाहारद्वंद्वोऽग्रे पूर्वमितरेतरद्वंद्वपूर्वकसमाहारद्विगुः । अत एव वक्ष्यति 'दशाहादिक'इत्यादि । उत्तरार्धे इतरेतरद्वंद्वः । क्रमस्य विवक्षितत्वान्न दोषः । तदाह **बीजमित्यादि** । अय इत्युपलक्षणामित्याह । **लोहादीति** । परीक्षणपदार्थमाह । **परीक्षाकाल इति** । करणल्युटा कालसामान्यवाचकं तदिति भावः । एतत्कथनफलमाह । **परीक्ष्यमाणे चेति** ।

**मनु**विरोधं तेनैकस्यैव कालस्य सामान्येनोक्तत्वात्प्राप्तं **मूलनारद**योः परिहरति । **यस्त्विति** । **इह**, व्यवहारे । द्वितीये आह । **आवदीत चेति** । विचारस्य तुल्यत्वात् तदेकतयैव **मनु**नोक्तत्वान्मूलकृताऽप्येकतयैवोक्तं न तु भेदेन । **कल्पतर्वा**दीनां भेदेनोक्तिस्तु स्पष्टार्थेति बोध्यम् । मूलाविरोधायाह । **उक्तलोहादीति** । **नारदा**विरोधायाह । **उपभोगानश्वरेति** ।

---

१ ड-येनेत्यादि ।

**सर्वं मनुमूलनारदोक्तम्** । परीक्षापूर्वकक्रये विशेषमाह । **यत्पुनरिति** । परीक्षितं सदिति शेषः । परीक्ष्येति पाठान्तरम् । **पुनः** पश्चात् । **तदुक्तमिति** । **नारदेने**ति शेषः । **प्राक्**क्रयात् । **गुणेति** । गुणदोषाभ्याम् । सार्वविभक्तिकस्तसिः । **परीक्षाभिमतमिति** । परीक्षया अभिमतमित्यर्थः । परीक्ष्याभिमतमिति पाठान्तरम् । **पुनः** पश्चात् ॥ १७७ ॥

## याज्ञवल्कीये १७८ श्लोकः ।

यद्यपि बीजाय इति बीजादिक्रमेण मूले परिगणितं तथापि दोह्ये महिष्यादौ प्रतिसवनदोहनेन तत्परीक्षायाः पयोनिष्ठाल्पत्वमहत्त्वाभ्यां सुज्ञानत्वात्तत्प्राधान्येनाह । **दोह्यादीति** । **परीक्षेति** । तत्कालेत्यर्थः । **इतरथा** तन्न्यूनत्वे । अयं तात्पर्यार्थः । शतशब्दः प्रत्यासत्तेः पलपर इत्याह । **शतपले इति** । द्विपलमिति बहुव्रीहिस्तदाह । **पलद्वयमिति** । प्राग्वदाह । **शतपले इति** । अनुवृत्तिरग्रेऽपि । पञ्च दशेति पदद्वयम् । तदाह । **पञ्च पलानीति** । **इत्येव** तच्च पलपरमेव । प्रताप्यमाने इत्यप्युभयत्र बोध्यम् ।

न्यूनतां परिहरति । **कांस्यस्येति** । 'कांस्ये त्विति' पाठान्तरम् । त्रपुताम्रयोनित्वादिति बहुव्रीहिः । **तदनुसारेण** तद्भागानुसारेण । क्वचित् तथैव पाठः । एवं पित्तलेऽपि बोध्यम् । तात्पर्यार्थमत्राह । **अतोऽधिकमिति** ॥ १७८ ॥

## याज्ञवल्कीये १७९ श्लोकः ।

क्वचित् कम्बलादावपि, न सर्वत्र, किं तु क्वचित्, वृद्धिमाहेति पाठः । सूक्ष्मे वक्ष्यमाणत्वादाह । **स्थूलेनेति** । और्णे शतपले कम्बलादाविति तु मूलार्थः । **निर्मिते इति** । 'रोपधेतोः प्राचाम्' (व्या.सू. ४।२।१२३) इति बुत्र् तत्रानेन सूचितः । स हि शैषिकः । शतपले दशपला वृद्धिरित्यर्थः । दशपलेति बहुव्रीहिरेव । मध्ये इति तृतीयपादप्रतीकम्, अत एवाह । **अनतिसूक्ष्मेति** । **पटादाविति** । यद्यप्यौर्णे इत्यादिना कम्बलादितया ग्रहणं कृतं तथापि पटादावित्युक्तिः प्रातिलोमाभिप्रायेति नानुपपत्तिरिति भावः । शते इति बोध्यम् । **सुसूक्ष्मेति** । अतिसूक्ष्मेत्यर्थः । **अप्रक्षालितेति** । तथा च प्रक्षालिते नेयमेव वृद्धिरिति भावः ॥ १७९ ॥

## याज्ञवल्कीये १८० श्लोकः ।

**विशेषमिति** । क्षयमुभयाभावं च स्थलविशेषेणेत्यर्थः । कार्मिकमित्यस्य व्याख्या **कर्मणेति** । चित्रं सूत्रम् । अत एव तस्यापि व्याख्या **यत्रेति** । **मेचकं** मयूरपिच्छनेत्रम् । तत्र आधिकरणे घत्रित्याह । **यत्रेति** । **प्रावार** उत्तरासङ्गः । "द्वौ प्रावारोत्तरासङ्गौ समौ" **इत्यमरः** । (२।६।११७) **तत्र** उभयत्रापि । त्रिंशच्छब्दो भागपर इत्याह । **त्रिंशत्तम इति** । तात्पर्यार्थमाह । **किंत्विति** ॥ १८० ॥

## याज्ञवल्कीये १८१ श्लोकः ।

उत्तरसंगतिमाह । **द्रव्यानन्त्यादिति** । **क्षयवृद्धीति** । धर्मादित्वात्साधुत्वम् । एवमग्रेऽपि । अत एव वृद्धिक्षयेत्याग्रिमविरोधो नेति बोध्यम् । उक्तभिन्नविषयमेवास्य साफल्यायाह । **शाणेत्यादि** । शाणसूत्रनिर्मितम् । क्षुमा अतसी तत्सूत्रनिर्मितम् । 'नष्टे' इति मूलार्थमाह । **ह्रासमिति** । सर्वथा नाशोऽत्र नाभिमतः प्रकरणादिति भावः । **तथा** किं च तद्वत् वा प्रत्यासत्तेराह । **नष्टद्रव्यस्येति** ।

तत्र तत्त्वविवक्षया सप्तमीति भावः। एकश्चो व्युत्क्रमे इत्याह। **सारासारतां चेति**। ज्ञात्वेत्यस्य व्याख्या **परीक्ष्येति**। तुर्यपादार्थमाह। **यदिति**। दाप्यमित्यस्य शिल्पिकदम्बकमिति विशेष्यम्। तदाह। **शिल्पिन इति**॥ १८१॥

इति क्रीतानुशयप्रकरणम्।

---

## अभ्युपेत्याशुश्रूषाप्रकरणम्॥ १४॥

**साम्प्रतमिति**। गृहीतादानदण्डप्रसङ्गेनेति भावः। **अपरमिति**। तेषामाद्यमित्यादौ **मनुना**ऽपरिगणितत्वात्ततो भिन्नमेवेत्यर्थः। **नारदीयं** व्याचष्टे। **आज्ञाकरणमिति**। प्रतिपद्यते इत्यस्यार्थमाह। **सम्पादयतीति**। **मूले** व्युत्क्रमेणान्वय इत्याह। **अभ्युपेत्येति**। शिष्यादिचतुर्णां सामान्यसंज्ञामाह। **तेषामिति**। मध्ये इत्यर्थः। **कर्मकरा इति**। 'कर्मणि भृताविति' (व्या. सू. ३।२।२२) टः। यद्यपि भृतके तत्त्वं सूत्रसिद्धं भृतावित्युक्तेस्तथापि साहचर्यादन्येषामपि तत्त्वं बोध्यम्। वक्ष्यमाणानुरोधेन तेषां तत्त्वं योगरूढचेत्याह। **ते चेति**। चत्वार इत्यर्थः।

**तदिदं** सर्वम्। **शास्त्रे** प्रोक्त इत्यर्थः। **चतुर्विधः** आदितः। **तेषां** मध्ये। **त्रिपञ्चका इति**। त्रिः पञ्चेति त्रिपञ्च ते परिमाणं येषां ते। सुजर्थे समासः। तद्धितः कन्। तदेव विशदयति। **शिष्यान्तेवासीति**। **सामान्यमिति**। **एषां** शिष्यादीनां पञ्चानां मध्ये। अस्वतन्त्रत्वं नाम सामान्यं साधारणधर्म इत्येवं मनीषिणो महर्षय आहुरित्यर्थः। **जातीति**। तेषां पञ्चानां मध्ये शिष्यादिरूपचतुर्विधसमुदायस्य जात्या स्वस्वजात्यनुरूपं शुभमिति यावत् तादृशं कर्म कुर्वतस्तु कर्मकर इत्येवंरूपोऽवान्तरविशेषो मनीषिभिरुक्त इत्यर्थः। कर्मकरत्वं चतुर्णामप्यवान्तरजातिरित्यर्थः। **वृत्तिरेव चेति**। विशेष इत्यनुवर्तते। तथा वृत्तिर्वर्तनमपि शुभकर्मकरत्वेन विशेषो विशिष्टं, शुभकर्मकरत्वं विशिष्टा वृत्तिरित्यर्थः। अत एव चसंगतिः।

उक्तमेव विविच्याह। **कर्मापीति**। **कर्मकृतां** चतुर्णाम्। तत्राशुभमाह। **गृहद्वारेत्यादि**। अत्र द्वंद्वोत्तरपदकसमाहारद्वंद्वस्य शोधनेन षष्ठीसमासः। उत्तरार्द्धे प्रत्येकमितरेतरद्वंद्वद्वयगर्भेतरेतरद्वन्द्वोत्तरपदकषष्ठीसमासोत्तरपदकसमाहारद्वन्द्वः। अग्रे यथासंख्यमन्वयः। **इच्छत इति**। इच्छतः स्वामिनः स्वाङ्गैरन्ततः पर्यन्ते उपस्थानं सेवनं चेत्यर्थः। **शुभमिति**। अतोऽन्यत् यत् तत् परं केवलं उत्कृष्टं वा शुभमित्यर्थः।

शिष्यान्तेवासीत्यादि**नारदव**चनांशं विशिष्य व्याचष्टे। **तत्रेति**। तेषां मध्ये इत्यर्थः। वेदग्रहणं शास्त्रस्याप्युपलक्षणम्। शिल्पं कौशलम्। **अधिष्ठाता** नियन्ता।

अशुचीत्यादि तथैव व्याचष्टे। **अशुचीति**। शिष्याद्युद्दिष्टानां मध्ये भृतकत्रैविध्यमाह। **भृतक इति**। **अत्र** एषां मध्ये। **तदुक्तमिति**। **नारदेने**ति शेषः। अत्रेति प्राग्वत्। आयुधजीवी **आयुधीयः**। **भारवाहीति**। तद्वहनशीलः। भारवाह इति पाठान्तरम्।

दासास्त्रिपञ्चकाः दासास्तु गृहजादयः इत्युक्तं, तत्प्रपञ्चयति—

**दासाः पुनरिति**। दासास्त्वित्यर्थः। उच्यन्ते इति शेषः। तानेव **नारदो**क्त्या आह। **गृहजात इत्यादि**। क्रमेण व्याचष्टे। **गृहे इत्यादि**। तत्र पत्नीपरगृहशब्दस्य लक्ष्यार्थमाह। **दास्यामिति**। तद्वदित्यनेन किंचिन्न्यूनता सूचिता। अनाकाले इत्यस्यार्थो **दुर्भिक्षे इति**।

भृत इत्यस्य **रक्षित इति । आधितामिति ।** अन्यत्रेति भावः । **अहं** स्याम् । **परिभाष्येति ।** परिभाषयित्वेत्यर्थः । **स्वयमिति ।** स्वयमेवागत इत्यर्थः । **प्रव्रज्या** संन्यासः । त्वं दास इति पाठे अग्रे इत्यभ्युपगमित इति पाठः । त्वद्दास इति पाठे अहं तव दास इत्यर्थेनाग्रे इत्यभ्युपगत इति पाठः । एतावन्तं कालमहं तव दास इत्यङ्गीकारित इति **मदनरत्ने**ऽप्येवमुक्तम् । **भक्तमन्नम् । एवे**नान्यव्यवच्छेदः ।

**मनु**विरोधमनुवदति । **यत्त्विति । मानवे** भक्तदासः गृहजः क्रीतश्च प्रागुक्त एव । **पैतृकः** पितुरागतः । सोऽपि दायादुपगत एव । **दत्त्रिमो**ऽपि कृत एव । **ध्वजाहृतः** ध्वजेन तद्वता युद्धेनाहृत इति सोऽपि युद्धप्राप्त एव । प्रव्रज्यातश्च्युतस्य प्रायश्चित्तमकुर्वतः पुंसो दण्डार्थमेवामरणाद्दास्यं राज्ञो भवतीति दण्डदासः प्रव्रज्यावसित एवेति बोध्यम् । **दासेति ।** अयं धर्मपरः । दासत्वाश्रया दासा इति यावत् ।

परिहरति । **तदिति ।** तथा च सप्तग्रहणं न्यूनसंख्याव्यवच्छेदार्थं, न तु परिगणितभिन्ननिषेधार्थम् । तदाह । **न तु परीति ।**

एवं प्रकरणोपोद्घातत्वेन स्मृत्यन्तरोक्तमुक्त्वा मूलविषयं विवेचयितुं तदवतारयितुं चाह । **तत्रैषामित्यादि ।** तत्र तथा सति । **अधिकर्मकृद्भृतकानामिति ।** अभ्यर्हितत्वात्पूर्वनिपातः । भृतकत्रैविध्यात् बहुवचनम् । वृत्तिरित्यनुषज्यते ।

मूलमवतारयति । **दासान्तेवासीति ।**

## याज्ञवल्कीये १८२ श्लोकः ।

**अपिशब्दादिति ।** चौरैरित्यनुवर्तते । चौरैरपहृत्याहितो दत्तश्चेत्यर्थः । **चः** सर्वसमुच्चये इत्याह । **दत्तश्चेति । सः** सर्वविधः । अत एव स्वाम्याहितादिविषये पृथगाह । **यदीति ।** बलादिनेति भावः । 'उक्तं चेति' **चो** ह्यर्थे । चौरेणापहृताः सन्तो विक्रीता इत्यर्थः । **हि** यतः **दास्यं,** तदेव ।

उत्तरार्धैकदेशं व्याचष्टे । **चौरेति ।** उत्तरसंगतये आह । **तदिदमिति । मूलो**क्तं स्वामिप्राणरक्षकत्वमित्यर्थः । **यो वैषामिति ।** एषां दासानां पञ्चदशानां मध्ये य एव कश्चिदित्यर्थः । न केवलं तावन्मात्रं किं त्वन्यदपीत्याह । **पुत्रभागमिति ।** तद्भागसदृशभागमित्यर्थः ।

नन्वेवं भक्तत्यागादित्यादि निष्फलम् । अत आह । **भक्तेति ।** आदिशब्दः प्रकारे । तेषां केषांचिदित्यर्थः । अत एवोक्तक्रमेणाह । **अनाकालेति ।** भक्तत्यागो भुक्तिदिनादारभ्य न विवक्षितस्तस्य तत्राहेतुत्वादत आह । **दासभावादिति । तस्य** धनस्य । निःशब्दार्थमाह । **सवृद्धिकस्येति ।** सामान्यार्थस्य प्रकरणात्क्रीधातोर्विशेषपरत्वमित्याह । **प्रत्यर्पणादिति । विशेषोऽपीति ।** अनाकालभृतांशमात्रे इति भावः । **संभक्षितमिति ।** दुर्भिक्षे यत् संभक्षितं तत् कर्मणा न शुध्येतेत्यर्थः । यदीयमुपभुक्तं तदीयव्यापारकरणमात्रेण शुद्धिर्न, दास्याच्च निर्मुक्तिः, किं तु तत्कर्मकरणेन गोद्वयदानेन च शुद्धिरिति यावत् । अयमेव मूलतो विशेष इति बोध्यम् ।

**भक्तस्येति ।** प्रागुक्त एवार्थः । **सद्यः** तत्कालमेव, न तु पूर्ववदन्यदानापेक्षेति भावः । **धनं** सोदयमित्यस्यापकर्षः । प्रमुच्यते इत्यस्यानुषङ्गः । स्वामी यद्येव नोद्धरेदिति पाठः । यदि स्वामी नैवोद्धरेत्तदाऽऽहितोऽपि सोदयं धनं दत्त्वा दास्यात्प्रमुच्यते इत्यर्थः । यद्येनमुद्धरेदिति पाठे तत्र तत्संमतिं विना नैव मुक्तिरिति बोध्यम् । ऋणदासे आह । **ऋणं त्विति ।**

**तथा** किं च । क्रमेणाह **तवाहमित्यादि । हृतानां च,** तेषामपि । **तेनैव नारदेनैव ।** प्रतिनिधिः प्रतिशीर्षपदार्थः । तुल्यं कर्म यस्य देयसाम्येन, तुल्यव्यापारेण पुरुषान्तरदानेनेत्यर्थः । कर्मणा स्वतुल्यपुरुषान्तरं दत्त्वा मुच्येरन्निति यावत् । निग्रहादित्यस्यार्थमाह । **दासेन सहेति ।** वडवाया इति शेषः । दासीस्वामिकृतादिति भावः । प्रागुक्तफलितं प्रागुक्तमेवोपसंहरन्नाह । **तदेवमिति ।** तस्मादुक्तप्रकारेणेत्यर्थः । क्रमेणाह । **गृहेति** । स्वामिप्राणप्रदत्वमुपलक्षणमित्याह । **तत्प्रसादेति** । स्वामिप्रसादेत्यर्थः । स च तथा वाऽन्यथा वेति भावः । यद्वा स्वामिप्राणप्रदत्वस्य साक्षान्मोचने कारणत्वाभावादाह । **तदिति ।** तेन यस्तत्प्रसाद इत्यर्थः ।

तन्मोचने विधिमाह । **दासेति । अनेन** वक्ष्यमाणेन । **स्वं** स्वीयम् । **तस्य** दासस्य । स्कन्धात् सजलं कुम्भमादायासौ स्वामी भिन्द्याद्भूमावित्यर्थः । त्रिरिति पूर्वान्वयि । **तेनैव नारदेनैव ।** यत इति शेषः ॥ १८२ ॥

## याज्ञवल्कीये १८३ श्लोकः ।

अवशिष्टगतिमाह । **प्रव्रज्येति । तु**र्वैलक्षण्ये । एवं सति प्रायश्चित्तविध्यानर्थक्यापत्तेराह । **अनभ्युपगतेति** । तथा सति तु पुनस्तस्य प्रव्रज्यैवेति भावः । एवेनान्यव्यवच्छेदः । अवतरणार्थमेव प्रतिपादयन् आमरणेत्यस्यार्थमाह । **मरणमेवेति** । **अन्तो** मोक्षः । **अन्तरा** मध्ये जीवनदशायाम् । **प्रतिमोक्षः** तत्प्रतिपक्षभूतो मोक्षः । एतेन आ समन्तात् मरणमेवान्तो यस्य स एव तथेति [1]विनयादित्वात्स्वार्थे ठगिति सूचितम् ।

( उत्तरार्धः )

**दासभावः** दासत्वम् । प्रतिलोमशब्दो धर्मपरस्तृतीयान्तात्तसिरित्याह । **न प्रातिलोम्येनेति ।** नन्वेवं अस्योक्तमूलविरोधोऽत आह । **स्वधर्मेति । पुनः** तु । निषेधशेषमाह । **स्वधर्मेति ।** एवं निषेधमुक्त्वा विधिमाह । **दारवदिति** । यथाऽऽनुलोम्येनैव विवाहो न प्रातिलोम्ये न तथा दासत्वमपीत्यर्थः ॥ १८४ ॥

## याज्ञवल्कीये १८४ श्लोकः ।

**अन्तेवासिधर्मानाहेति** । एवं दासे धर्मानुक्त्वेत्यादिः । **कृतकालमिति ।** तद्विशेषणार्थं पूर्वशेषमाह । **यद्यपीति ।** सर्वशिल्पग्रहे कालाद्यभावादाह । **अपेक्षितेति** । तत्र प्रकारजिज्ञासामाह । **कथमिति । फलं** भृतिम् । **स्वशिल्पमिति ।** बान्धवानां भ्रात्रादीनाम् **अनुज्ञया** आज्ञया **स्वं** स्वजातिविहितं शिल्पं ग्रहीतुमित्याद्यर्थः । **अन्ते** अन्तिके ।

एवं तद्धर्ममुक्त्वाऽऽचार्यधर्ममाह । **आचार्य इति** । पुनस्तद्धर्ममाह । **शिक्षयन्तमिति ।** **बलादिति** । तद्बान्धवै राज्ञा वेति भावः । अत एवाह । **वधेति । शिक्षितोऽपीति ।** कृतकालात्प्रागिति भावः । **समाप्नुयादिति ।** तन्निकटे समापयेदित्यर्थः । **तत्र** तद्गृहे । **समये** अतीते सति । **प्रदक्षिणं** सप्रदक्षिणम् । अर्श आद्यजन्तम् । यथाश्रुतं वा । आचार्यप्रदक्षिणामिति पाठान्तरम् । 'शक्तितश्चानुमान्यैनमिति' पाठः । **एनं** आचार्यम् यथाशक्ति **अनुमान्य** तोषयित्वा स्वगृहं प्रति परावर्त्यागच्छतीत्यर्थः । **ताडनेति ।** दण्डादिकृतेत्यर्थः । १८४ ॥

इत्यभ्युपेत्याशुश्रूषाख्यं विवादपदम् ।

---

१ व्या. सू. ( ५।४।३४ ) ।

## संविद्व्यतिक्रमप्रकरणम् ॥ १५ ॥

### याज्ञवल्कीये १८५ श्लोकः ।

**संप्रतीति** । अङ्गीकारत्यागस्य पूर्वत्र सत्त्वेन तत्प्रसङ्गादिति भावः । 'नैगमादीति' **आदिना** श्रेण्यादित्रैविद्ययोर्ग्रहणम् । अस्यार्थमाह । **पारिभाषिकधर्मेणेति** । धर्मशास्त्रपरिभाषां कृत्वेत्यर्थः । एतेन तत्रत्यस्थितिशब्दो विशेषपर इति सूचितम् । तस्याप्यर्थमाह । **परिपालनमिति** । यद्यपि तच्छब्दस्य प्रक्रान्तपरामर्शित्वात्परिपालनस्यैव विवादपदत्वं प्राप्नोति तथापि बाधात्तदसंभवः । कर्मेत्यन्तेनान्वयमुखेन संविद्व्यतिक्रमाख्यविवादपदस्य प्रतिपक्षभूतमुक्त्वा तद्विवादपदं स्मृतमित्युक्तं तदाह । **तद्व्यतिक्रम्यमाणमिति** । मूलमवतारयति । **तदुपक्रमार्थमिति** । प्रत्यासत्तेराह । **स्वेति** । नपुंसकत्वोपपत्तये बहुवचनलब्धं तत्पदार्थमाह । **ब्राह्मणव्रातमिति** । त्रैविद्यत्वादेरन्यतः सिद्धौ राजनियोज्यत्वासंभवादाह । **कृत्वेति** । शेषोऽयं कृत्वा चेत्यर्थः । अत एव **बृहस्पतिः**

"वेदविद्याविदो विप्रान् श्रोत्रियानग्निहोत्रिणः । आहूय स्थापयेत्तत्र तेषां वृत्तिं प्रकल्पयेत् ॥

"अनाच्छेद्यकरास्तेभ्यः प्रदेया गृहभूमयः । " इति ।

स्वशब्दार्थमाह । **वर्णेति** । बहुव्रीहिः । धर्मशब्दार्थमाह । **श्रुतीति** ॥ १८५ ॥

### याज्ञवल्कीये १८६ श्लोकः ।

**तैः** ब्राह्मणैः । निजेत्यस्यार्थः । **श्रौतेति** । वर्णाश्रमनिमित्तकेत्यादिः । **समयात्** पारिभाषिकधर्मेण व्यवस्थानात् । सोऽपीति अपिना निजधर्मसमुच्चयः । एवमग्रेऽपि । **तथा** तद्वत् । **धर्म इति** । कृत इति शेषः । यावत्पथिकामिति वीप्सायामव्ययीभावः ॥ १८६ ॥

### याज्ञवल्कीये १८७ श्लोकः ।

**समयधर्मः** सोऽपि । 'तदतिक्रमादाविति' **आदिना** गणद्रव्यहरणग्रहणम् । **पुनः** तु । आदिना देशः । अत एवाह । **साधारणमिति** । दण्डबाहुल्यादाह । **अयं चेति** । **अनुबन्धो** दोषः । अपराध इति यावत् । आदिना जात्यादिपरिग्रहः । एवमग्रेऽपि । **ग्रामदेशशब्दौ** तत्स्थजनबोधकौ जघन्यवृत्त्या । **संघो** वणिगादिसमूहः । इदमस्माभिः कार्यं परिहार्यं वेत्येवंरूपं संकेतं सत्यादिशपथेन कृत्वा तन्मध्ये यो नरो लोभादिनाऽतिक्रामेदित्याद्यर्थः ।

पक्षान्तराण्याह । **निगृह्येति** । निबध्येत्यर्थः । **समयव्यभिचारिणं** संविद्व्यतिक्रमकारिणम् । 'चतुःसुवर्णमि'त्यादि समाहारद्विगुः । 'चतुःसुवर्णानिति' पाठान्तरम् । राजतं शतमानं च विंशत्यधिकरक्तिकाशतत्रयपरिमितं रजतम् । **निर्वासनेति** । सर्वस्वहरणाद्यभावात् केवलनिर्वासनेत्यर्थः । **निष्कं** सुवर्णाश्चत्वारः । सुवर्णं कर्षमितम् । **शतमानेति** । राजतेत्यादिः । इदं त्रयं विषयलाघवगौरवापेक्षया व्यस्तं समस्तं वेति तु तद्व्याख्यातारः ॥ १८७ ॥

### याज्ञवल्कीये १८८ श्लोकः ।

**इदं च** इदमपि । **तैः** ब्राह्मणैः । **गणिनां** समूहिनाम् । एवमग्रेऽपि । सर्वैरित्यस्य प्रकृतार्थमाह । **इतरैरिति** । अनतिप्रसंगायाह । **गणान्तर्गतैरिति** । अन्यवचनस्य अन्यकर्तृककरणासंभवादाह । **अनुसरणीयमिति** ।

( उत्तरार्धः )

**अन्यथा** तदननुसरणे। तत्रेत्यस्यार्थो **गणिनामिति**। विपरीत इत्यस्यार्थः **समूहेति**। **प्रतिबन्धेति**। प्रतिषेधेति पाठान्तरम्। **राज्ञेति**। स इति मौल एवादिः। यच्छब्दोपादानेन तस्यार्थसिद्धत्वात्तु तदनुक्तिरिति भावः। दममित्यस्यार्थः **साहसमिति**॥ १८८॥

## याज्ञवल्कीये १८९ श्लोकः।

मूले समूहकार्ये इति सतिसप्तमी। तया च निमित्तत्वं फलति। कार्यशब्दश्च तन्निष्पत्तिपरः। तदाह। **समूहकार्यनिर्वृत्त्यर्थमिति**। तेनोभयथाऽर्थान्तरनिरासः। प्रकृतत्वादाह। **स्वेति**। कृतेत्यस्यार्थो **निर्वर्तितेति**। मानोऽभ्युत्थानादिकृतः। सत्कारोऽर्घ्यपाद्यादिकृतः। स महीपतिरित्यन्वय इत्याह। **स राजेति**। पूजयित्वेत्यस्य तात्पर्यार्थे मुख्याभावादाह। **परितोष्येति**॥ १८९॥

## याज्ञवल्कीये १९० श्लोकः।

**समूहेति**। समूहाय दत्तस्यापहारिणं मध्यस्थमित्यर्थः। समूहकार्याय प्रहित इति सुप्सुपेति समास इत्याह। **समूहकार्यार्थमिति**। तन्निष्पत्त्यर्थमित्यर्थः। प्रत्यासत्तेराह। **महाजनैरिति**। एवमग्रेऽपि। लिङर्थो न विवक्षित इत्याह। **लभते इति**। विधिफलमाह। **अप्रार्थित एवेति**। अत एवाग्रे स्वयमित्युक्तम्।

तुर्यपादार्थमाह। **अन्यथेति**। साकांक्षत्वादाह। **लब्धादिति**। **एकादशगुणम्** एकादशभागम्। अपराधस्याल्पत्वात्॥ १९०॥

## याज्ञवल्कीये १९१ श्लोकः।

**एवमिति**। वक्ष्यमाणेत्यर्थः। चस्त्वर्थे व्युत्क्रमे च। विनिगमनाविरहादाह। **श्रौतेति**। एवमग्रेऽपि। धर्मलुब्धत्वस्य गुणत्वादाह। **अर्थेष्विति**। चिन्तनमात्रस्यानुपयोगादाह। **विचारका इति**। भवेयुरित्यत्र ण्यर्थान्तर्भाव इत्याह। **कर्तव्या इति**। अत एवावतरणमपि सङ्गच्छते। **तेषामिति** समूहेत्याद्यादिः। प्रत्यासत्तेराह। **इतरैरिति**। उक्तार्थे पौनरुक्त्यं परिहरति। **आदरेति**॥१९१॥

## याज्ञवल्कीये १९२ श्लोकः।

**इदानीं** तदनन्तरम्। एकाभ्यां पण्याशिल्पाभ्यामित्यर्थः। **पाशुपतादय इति**। तन्त्राध्ययनपूर्वकानुष्ठातार इत्यर्थः। 'आदिना' पाञ्चरात्राद्यध्येतारः नैयायिकादयश्च। **नग्नाटः** दिगम्बरः। **आयुधीयादीति**। आयुधजीव्याधीनामित्यर्थः। साधारणमाह। **एकेति**। "समानकर्मकराः कारवः श्रेणयः, नानापौरसमूहा नैगमाः, प्रव्रज्यावसिताः पाषण्डिनः, गणो ब्राह्मणसमूह" इति **कल्पतरुः**।

एवं पदार्थानुक्त्वा वाक्यार्थमाह। **एषामिति**। उत्तरार्धार्थमाह। **एषां चेति**। प्रसिद्धार्थासंभवात्प्रकृतार्थमाह। **धर्मेति**। **पूर्वोपात्तां** पूर्वदत्ताम्। अत एव **नारदः** ( अ. १० श्लो. २।३ )

"पाषण्डिनैगमश्रेणिपूगव्रातगणादिषु। संरक्षेत्समयं राजा दुर्गे जनपदे तथा॥

"यो धर्मः कर्म यच्चैषामुपस्थानविधिश्च यः। यच्चैषां वृत्त्युपादानमनुमन्येत तत्तथा" इति॥१९२॥

इति संविद्व्यतिक्रमप्रकरणम्।

---

## वेतनादानप्रकरणम् ॥ १६ ॥

**संप्रतीति** । तत्प्रसङ्गादेवेति भावः । **भृतानां** भृत्यानाम् । क्वचित्तथैव पाठः । दानादानयोर्विधी तयोः क्रम इत्यर्थः । पूर्वं नोक्तोऽस्यैवारम्भे उक्तत्वात् अत आह । **वक्ष्यमाणेति** । अत्रैवेति भावः । तदुक्तेः शेषमाह । **यत्रेति** ।

## याज्ञवल्कीये १९३ श्लोकः ।

एवं स्मृत्यन्तरोक्तलक्षणके तत्र विवादे निर्णयप्रदर्शको मूलकृदिति मूलमवतारयति । **तत्रेति** । उक्ताख्यविवादपदे इत्यर्थः । आवहेदित्यस्यार्थो **दद्यादिति** । तृतीयपादार्थमाह । **यदेति** । ‘ सर्वं वाक्यमिति ’ न्यायेनाह । **अगृहीते एवेति** । तत्फलमाह । **न द्विगुणमिति** । अत्रैव विषये पक्षान्तरमाह । **यद्वाऽङ्गीति** । असममिति छेदः, तस्य बलादित्यर्थो, दाप्य इत्यस्य दत्त्वा कारणीय इत्यर्थ इति भावः । प्रतिश्रुत्याङ्गीकृत्येतिपूर्वान्वयि । **कार्यः** कारणीयः । **तेनैव, नारदेनैव** । तुर्यपादेनेति भावः । **भृतायेति** । भृताय भृत्यायादिमध्यावसानेषु यथाक्रममैच्छिकक्रममनतिक्रम्य उक्तसमयमैच्छिकमनतिक्रम्येति यावत् । तेन क्रमेण वेतनं दत्त्वा कर्म कारयेदिति शेषः । वेतनस्वरूपमाह । **कर्मण इति** । कर्मणोऽनुसारेण यत् मध्यस्थैर्विनिश्चितं कल्पितं द्रव्यं तद्वेतनमित्यर्थः । तथा चानेन भृतिस्वरूपमप्युक्तम् । तुर्यपादार्थमाह । **तैश्चेति** । उपकरणं तत्तत्कर्मयोग्यसामग्री । तत्र तां कृपयाह । **लाङ्गलादीनामिति** । **प्रग्रहो** रज्जुः । **योक्त्रं** केशादिनिर्मितम् । विधिसार्थक्यायाह । **इतरथेति** । तदरक्षणे इत्यर्थः ॥ १९३ ॥

## याज्ञवल्कीये १९४ श्लोकः ।

**अपरिच्छिद्य** अनिश्चित्य । **यः** स्वामी । सः वाणिज्यादिभेदात्त्रिविध इत्याह । **वणिगित्यादि** । लिङ्गर्थोऽविवक्षित इत्याह । **कारयतीति** । **सः** त्रिविधः स्वामी । तस्य साकांक्षत्वादाह । **तस्मादिति** । वाणिज्यं च पशुश्च सस्यं चेति समाहारद्वंद्वात्पञ्चम्यन्तात्सार्वविभक्तिकस्तसिरित्याह । **वाणिज्येति** । पशुसस्यशब्दौ तत्कर्मोपलक्षकावित्याह । **कर्मण इति** । यल्लब्धं तस्य इत्यनेनासंबद्धत्वं मूले निरस्तम् ॥ १९४ ॥

## याज्ञवल्कीये १९५ श्लोकः ।

**अनाज्ञप्तकारिणं** आज्ञामुल्लंघ्यकारिणं भृत्यम् । कालं चेत्यस्य दर्पादिनोल्लंघयेदित्यत्रान्वयः । किंभूतोऽत आह । **पण्येति** । तत्रैवेत्यादिः । आदिना क्रयः । उत्तरत्रादिनाऽऽलस्यादिः । अतीयादित्यस्यार्थ **उल्लंघयेदिति** । द्वितीयपादार्थमाह । **तस्मिन्नेवेति** । कुर्याच्चेति चो वार्थ इत्याह । **वेति** । प्राग्वदाह । **करोतीति** । तत्रेत्याद्यर्थमाह । **तस्मिन्नित्यादि** । तत्फलमाह । **न पुनरिति** । न त्वित्यर्थः । तुर्यपादार्थमाह । **यदेति** । स्वामितोऽपीति भावः ॥ १९५ ॥

## याज्ञवल्कीये १९६ श्लोकः ।

**अनेकभृत्येति** । द्विप्रभृतिभिर्मिलित्वैतत्कर्मैतावत्या भृत्या क्रियते इति परिभाष्य क्रियमाणे कर्मणीत्यर्थः । पादत्रयस्यैकोऽर्थ इत्याह । **यदा पुनरिति** । आदावनेकभृत्यसाध्यकर्मस्वरूपमाह ।

---

१ ख–स्वामिनः ।

**एकमेवेति**। उभयोरप्यसाध्यं चेदित्यस्यार्थमाह। **व्याध्याद्यभिभवादिति**। अन्यथाऽङ्गीकारस्यैवासंभवापत्तेरिति भावः। तस्येति शेषे षष्ठीत्याह। **तस्मा इति**। वेतनस्वरूपस्य पूर्वमुक्तत्वात्तदनुरोधेन तावत्पदार्थमाह। **तत्कृतेति**। तत्फलमाह। **न पुनरिति**। एकस्मिन्कर्मणि पञ्चभिः कर्मकरैर्दशभिः पणैर्भृत्या क्रियमाणे व्याध्यादिना चाशक्तैः सर्वैरपि तत्कर्म न निष्पादितं किं तु कियदेव, तत्र प्रतिपुरुषं पणद्वयं विभज्य साम्येन न देयम् अपि तु तत्तत्कर्मानुसारेण न्यूनाधिकं देयमित्यर्थः। एतेन तत्कर्मणि निष्पन्ने पूर्णे परिभाषितवेतनमपरिभाषितं स्वामिदत्तं कर्मकरा अपि स्वकृतव्यापारानुरोधेनैव विभज्य गृह्णीयुरिति सूचितम्।

ननु न पुनः सममित्युक्त्या तत्कृतकर्मानुसारेण वेतनदानप्राप्त्याऽवयवशो विभज्य देयमिति लब्धं, तन्नानुपपन्नम्। कर्मणि समुदितनियतवेतनस्यैव परिभाषितत्वेन पृथक् पृथक् तदनुक्त्या परिभाषानुसारेण तत्र वेतनादानस्यैवौचित्यात्। अत आह। **न चेति**। नापीत्यर्थः। यद्यपि विभज्य दानमपरिभाषितं तथापि व्याध्यादिना तदसमाप्तेस्तत्र दोषाभावेन कर्मानुसारेण दातुमुचितमेवेति भावः।

तुर्यपादार्थमाह। **साध्ये त्विति**। अस्यार्थमाह। **उभाभ्यामिति**। उभाभ्यामित्युपलक्षणं, बहुभिरित्यपि बोध्यम्। यथाश्रुतमित्यस्य व्याख्या **यावदिति**। प्राग्वदाह। **न पुनरिति** ॥१९६॥

## याज्ञवल्कीये १९७ श्लोकः।

अभ्युपेत्याशुश्रूषाख्ये विवादपदे 'शुश्रूषकः पञ्चविधः' इत्युपक्रम्य 'चतुर्विधः कर्मकरः' इत्यादिना तस्य तत्त्वमुक्त्वा भृतकत्रैविध्यं दर्शितम् 'उत्तमस्त्वायुधीयोऽत्रे'त्यनेन। तत्र 'गृहीतवेतनः कर्म' त्यनेनात्र कृषीवलभृतकवेतनविषये उक्तम्। अत एव तुर्यपादस्तत्र तथैव व्याख्यातः। सांप्रतमायुधीयभारवाहकभृतकौ प्रति विशेषं दर्शयतीत्याह। **आयुधीयेति**। यद्यप्यग्रे वचने व्युत्क्रमस्तथापि पूर्वक्रमेण पूर्वनिपातनियमेन वक्ष्यमाणाशयेन चैवमुक्तम्। **भाण्डं** पात्रादिकम्।

"सर्वमावपनं भाण्डं पात्रामत्रं च भाजनम्"। **इत्यमरः**। (२। ९। ३३)

'स्याद्भाण्डमश्वाभरणेऽमत्रे मूले वणिग्धने' इति **स** एव (३।३।४३) नानार्थप्रकरणे।

**तत्**। तादृशं भाण्डम्। वाहकेनेत्युपलक्षणमायुधीयस्यापि। मूले नष्टमित्यत्रान्तर्भावितो ण्यर्थ इत्याह। **नाशितमिति**। नाशानुसारेणेत्यत्र मानमाह। **तदाहेति**। **व्यसनं**। नाशम्। **दोषतः** दोषेण बुद्धिहीनत्वरूपेण। **तत्र** भाण्डे। अनेनोक्तार्थलाभः।

उत्तरार्द्धार्थमाह। **यः पुनरिति**। **वासरं इति**। **तदानीं** प्रस्थानलग्नवेलायाम्। द्वैगुण्ये हेतुमाह। **अत्यन्तोत्कर्षेति**। विवाहादिहेतुभूतप्रस्थाननिरोधादित्यर्थः। एवं च स्वतो दोषाल्पत्वेऽपि परतो दोषबाहुल्यमिति भावः॥ १९७॥

## याज्ञवल्कीये १९८ श्लोकः।

**किं चेति**। अत्रैवान्यदप्याहेत्यर्थः। 'प्रकान्ते' इत्यस्य प्रकृतत्वात्प्रस्थानमेव विशेष्यम्। मध्ये वेति तदर्थः। तदाह। **प्रक्रान्ते इति**। प्रत्यासत्तेराह। **श्रुतेरिति**।

स्वविरोधमेव स्वस्याह। **नन्विति**। **अत्रैव,** प्रस्थानविघ्नकरणरूपे एव। तस्य सप्तमो भाग इत्यस्योच्यत इति शेषः। तदवसरस्ततः पूर्वमेव। अत एवाध्यवसिते इति व्याख्यातं न तु कृते इति। **प्रस्थानलग्नेति**। अत एव तत्र तथैव व्याख्यातम्।

द्वितीयपादार्थमाह । **यः पुनरिति** । प्रक्रान्ते इत्यनुवर्तते । मार्गे समाक्रान्ते इत्यर्थः । तत्फलितमाह । **गमने इति** । यद्वा पथि मार्गे प्रक्रान्ते इत्यत्र वर्तमाने क्त इति तदर्थमाह । **गमने इति** ।

'त्याजकोऽपि चेति' व्याचष्टे । **यस्त्विति** । प्रत्यासत्तेरेवाह । **पूर्वोक्तेति** । त्रिष्वित्यर्थः । **एतच्चेति** । प्रस्थानविघ्नकृदित्यारभ्य यदुक्तं तत्सर्वमित्यर्थः । ननु एवं विषयविभागे किं मानम् अत आह । **भृत इति** । यो भृतः भृतिपरिक्रीतः भृत्यः ।तथा पाठ एव वा । **अनार्त्तः** व्याध्यादिरहितः दर्पादहंकाराद्यथापरिभाषितं कर्म न कुर्यात्स कृष्णलानि अष्टौ दण्ड्यः । गुञ्जापरिमितं सुवर्णं **कृष्णलम्** । कृष्णलानित्यपपाठः । यावत्कर्म कृतं तस्य वेतनं च न देयमित्यर्थः । इतीत्यग्रे "अनार्ते मनुना सदण्डतददानविधानात्" इति शेषः । **आदितः** आदौ यथोक्तं तथा कुर्यात् । 'सुदीर्घस्येति' हेतौ शेषे षष्ठी । चिरकालादपीत्यर्थः । **अपगतेति** । व्याध्युपसृष्टः पश्चान्निवृत्तव्याधिरार्तः । व्याध्यसंसृष्ट एव द्वितीयः । आदिना दर्पग्रहणम् । **वेतनमिति** । किंचिच्छेषकस्य कृतस्य कर्मण इत्यादिः । **स्वस्थो वा** । सुस्थो वेति पाठान्तरम् । तत् स्वारब्धेत्युपलक्षणं, न कुर्यादित्यपि बोध्यम् । **अल्पेन** कर्मणा न्यूनस्य कृतस्यापि कर्मणः वेतनं तस्य तस्मै न देयमित्यर्थः ॥ १९८ ॥

॥ इति वेतनादानप्रकरणम् ॥

---

## अथ द्यूतसमाह्वयप्रकरणम् ॥ १७ ॥

**अधुनेति** । महाप्रकरणसङ्गत्येति भावः । द्यूतं च समाह्वयश्च तावाख्ये यस्य विवादपदस्य तदित्यर्थः । करणभेदेऽपि तत्स्वरूपस्यैक्यादेकत्वेन निर्देशः । अप्राणिभिरक्षादिभिः साध्यं देवनं **द्यूतं**, प्राणिभिः कुक्कुटादिभिः साध्यं देवनं **समाह्वय** इति विवेकः । तदेतदुभयं **नारदी**यव्याख्यानेन दर्शयति । **अक्षा इत्यादिना** । पाशक इत्यत्राल्पार्थे कन् । अत एवाग्रे । **दीर्घेति** । त्र्यध्नशब्दो दन्त्योष्ठ्यादिः । **दन्तेति** । गजदन्तादिविकारभूता इत्यर्थः । 'रथादिकमिति' **आदिनो**ष्ट्रादिपरिग्रहः । **मूले** 'देवनमि'त्यस्यैव व्याख्या । **पणक्रीडेति** । अत्र शाकपार्थिवादिसमास इत्याह । **पणपूर्विकेति** । **तदुभयमिति** । जिह्मेन सभिकेन कारितमिति बोध्यम् । तत्र द्यूतेति नामनामिनोरभेदः । तदाह । **द्यूतेति** । पदमित्यस्यार्थो **विवादेति** । एकवचनोपपत्तये आह । **द्यूतं चेति** । समाहारद्वन्द्व इति भावः । **क्रियमाणः** क्रीडाविशेषः ।

## याज्ञवल्कीये १९९ श्लोकः ।

एवं स्मृत्यन्तरोक्तलक्षणके तत्र विवादपदे सभिकवृत्तिप्रदर्शकं मूलमिति तदवतारयति । **तत्रेति** । उक्तपदे इत्यर्थः । **संप्रतिपत्तिः** संवादः । **पण इति** । न तु वराटकानामित्यादिलक्षित इति भावः । **तदाश्रया** ग्लहाश्रया । शतशब्दो न्यूनसंख्याया व्यवच्छेदको नाधिकसंख्याया इति तस्या अप्युपलक्षणमित्याह । **तदधिकेति** । वक्ष्यमाणस्यात्रापि संबन्ध इत्याह । **तस्मात् धूर्तेति** । यत्र द्यूते शतेन तदधिकैर्वा काकिण्यादिभिः परिकल्पितं पणं जयति यः स जेता शतिकादिवृद्धिः । तस्मात् द्यूतकारात्तज्जेतुः सभाधिकारी पञ्च काकिण्यादीन् गृह्णीयादिति भावः । तदाह । **जितग्लहस्येति** । प्रागुक्तसभापतिरत्र नेति सूचयन् तद्व्युत्पत्तिमाह । **सभेति** । न राजादिसभेति भावः ।

व्रीह्यादीति ठन्। फलितमाह। **कल्पितेति** । अक्षादिरूपाणि निखिलक्रीडाया उपकरणानि सामग्रीरूपाणि कल्पितानि सम्पादितानि येनेत्यर्थः। तत्र हेतुं सूचयन्नाह। **तदुपचितेति**। उत्तरार्धार्थमाह। **इतरस्मादिति**। अस्यैव व्याख्या **अपरिपूर्णेति**। अत एवायं कितव एव न तु धूर्त इति केचित्। वस्तुतोऽत्रापि तथैव पाठः॥ १९९॥

## याज्ञवल्कीये २०० श्लोकः।

इत्यत आहेति पाठः। इत्याहेति पाठे इत्याशङ्कायामाहेत्यर्थः। कुत इत्याकाङ्क्षायामाह। **राज्ञेति**। **जितं** यदिति। शब्दत इति भावः। द्यूतकारिणामिति शेषे षष्ठी। दद्यादित्यस्यानुषङ्गः।

तृतीयपादार्थे संमतिमाह। **तदुक्तमिति**। **तत्कृतं** कितवेन पणीकृतं देयं तत उद्धृत्य सभिको जेत्रे दद्याच्चेत्यर्थः॥ २००॥

## याज्ञवल्कीये २०१ श्लोकः।

ससभिके इत्यस्यार्थः **सभिकेति**। धूर्तेत्यस्यार्थः **कितवेति**। प्राप्ते इत्यादिव्याख्या **सभिकेन चेति**। मूले स्थाने इति अव्ययं युक्तमित्यर्थकं, तदर्थमाह। **अविप्रतिपन्नमिति**। अर्थादाह। **पणमिति**। अन्यथेत्यनेनोक्तत्रितयव्यतिरेक उच्यते इत्याहोक्तक्रमेण। **प्रच्छन्ने इत्यादि**। **जेत्रे इति**। राजेति भावः॥ २०१॥

## याज्ञवल्कीये २०२ श्लोकः।

प्रकृतत्वादाह। **द्यूतेति**। एतदर्थमाह। **सभ्या इति**। एवफलमाह। **न तत्रेति**। तद्विषये इत्यर्थः। वाक्यान्तरमाह। **साक्षिणश्चेति**। त एवेत्यस्य संबन्धादाह। **द्यूतकारा एवेति**। प्रागवदाह। **न तत्रेति**। तद्विषये इत्यर्थः।

### ( उत्तरार्धः )

**क्वचित्**, न तु सर्वत्र। कूटाक्षादिभिर्दीव्यतो दण्डविधानात्ताद्दृशैरक्षादिभिर्देवनं निषिद्धम्। एवं सभिकराजाध्यक्षरहितस्थलेऽपि देवनं निषिद्धमिति बोध्यम्। **कूटैः** सकपटैः। अक्षपदमुपलक्षणमित्याह। **अक्षादीति**। **अक्षमालां** प्रकृताक्षादिमालाम्। सर्वज्ञानायेति भावः। **हि** यतः। **सः** कण्ठेऽक्षमालाबन्धपूर्वकविवासः। **एषां** कूटाक्षदेविनाम्। **विनयः** शिक्षेत्यर्थः।

विरोधं परिहरति। **यानि चेति**। 'कूटे' त्युपलक्षणं 'उपधेः' अपि। **राजेति**। अत एव पूर्वं तथा प्रतिपादितम्॥ २०२॥

## याज्ञवल्कीये २०३ श्लोकः।

**किं चेति**। अन्यत्रापि तन्निषेद्धुं अन्यदपि द्यूतविषये आहेत्यर्थः। मुखपदार्थः। **प्रधानमिति**। विशिष्टतात्पर्यार्थमेवाह। **राजाध्यक्षेति**। कार्यतेऽनेनेति व्युत्पत्त्या कारणशब्दः फलपरः, कर्मधारयः, ल्यब्लोपे पञ्चमीत्याह। **तस्करेति**। अन्यथा कारणादित्यस्य वैयर्थ्यं स्पष्टमेव। तात्पर्यार्थमाह। **प्रायश इति**।

अत एव **मनुः**, ( अ. ९ श्लो. २२१। २२२। २२५–२३० )

" द्यूतं समाह्वयं चैव राजा राष्ट्रान्निवारयेत् । राज्यान्तकरणावेतौ द्वौ दोषौ पृथिवीक्षिताम् ॥
" प्रकाशमेतत्तास्कर्यं यद्देवनसमाह्वयौ । तयोर्नित्यं प्रतीघाते नृपतिर्यत्नवान् भवेत् ॥
" कितवान्कुशीलान् चौरान् पाखण्डस्थांश्च मानवान् । विकर्मस्थान् शौण्डिकांश्च क्षिप्रं निर्वासयेत्पुरात् ॥
" एते राष्ट्रे वर्तमाना राज्ञः प्रच्छन्नतस्कराः । विकर्मक्रियया नित्यं बाधन्ते भद्रिकाः प्रजाः ॥
" द्यूतमेतत्पुरा कल्पे दृष्टं वैरकरं महत् । तस्माद् द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान् ॥
" प्रच्छन्नं वा प्रकाशं वा तन्निषेवेत यो नरः । तस्य दण्डविकल्पः स्याद्यथेष्टं नृपतेस्तथा ॥
" क्षत्रविट्शूद्रयोनिस्तु दण्डं दातुमशक्नुवन् । आनृण्यं कर्मणा गच्छेद्विप्रो दद्याच्छनैः शनैः ॥
" स्त्रीबालोन्मत्तवृद्धानां दरिद्राणामरोगिणाम् । शिफाविदलरज्ज्वाद्यैर्विदध्यान्नृपतिर्दमम् ॥ " इति ।

अस्य द्यूतत्वाभावाल्लक्ष्यार्थं तस्याह । **निर्वर्त्त्यै इति** ॥ २०३ ॥

इति द्यूतसमाह्वयाख्यं प्रकरणम् ।

---

## अथ वाक्पारुष्यप्रकरणम् ॥ १८ ॥

प्राग्वदाह । **इदानीमिति । जाति**र्ब्राह्मणत्वादिः । **कुलं** वंशपरम्परा । **नारदी**यं व्याचष्टे । **देशादीनामिति । अवद्यं** गर्ह्यम् । प्रत्येकयुक्तत्वं न विवक्षितमित्याह । **तदुभयेति । अर्थशब्दः** प्रयोजनवाचीत्याह । **उद्वेगेति** । देशाद्याक्रोशानुदाहरणत आह । **तत्रेति** । तेषां मध्ये इत्यर्थः । **देशाक्रोशः** देशनिन्दा । **लोलुपः** सतृष्णः । **चरित**माचरणम् । वैश्वामित्रास्तत्पुत्रास्तत्पुत्रादयः । **स्वविद्येति** । साक्षात्पुरुषनिन्दामकुर्वता तन्निन्दाशयेनैव स्वयं विद्वानपि अविद्वानिव स्वीयविद्या-शिल्पादिनिन्दया यत्र तद्विद्याविषयनैपुण्यमस्ति यत्र वा शिल्पविद्यायां परः कुशलस्तद्विद्वज्जनाद्य-धिक्षेप इत्यर्थः ।

**तस्य चेति** । वाक्पारुष्यस्येत्यर्थः । त्रैविध्येऽन्वयः । तत्र चेति पाठान्तरम् । तदाऽव्यवहिता-न्वयः । **दण्डेति** । दण्डवैषम्याभिधानार्थमित्यर्थः । **निष्ठुरेति** । तद्रूपसंज्ञाभेदेनेत्यर्थः । **तल्लक्षणं** निष्ठु-रादिलक्षणमपि । **तेनैव नारदे**नैव । **तदपि** वाक्पारुष्यमपि । **तस्य** त्रिविधस्य । निष्ठुराक्षेपाद-श्लीलाक्षेपो गुरुः ततस्तीव्राक्षेपो गुरुरित्यर्थः । साक्षेपमित्यादि व्याचष्टे । **तत्रेति** । तेषां मध्ये इत्यर्थः । त्वामित्यस्य विशेषणद्वयम् । धिग्योगे द्वितीया । ' जाल्मोऽसमीक्ष्यकारी स्यात् ' **( अमरः ३ । १ । १७ )** ।

ननु पूर्वं न्यङ्गमवद्यमित्युक्तम् । तच्चावद्यत्वं निष्ठुरादिषु त्रिषु वाक्पारुष्यभेदेषु साधारणमिति अत्राश्लीलरूपवाक्पारुष्यस्य न्यङ्गसंयुतमिति विशेषलक्षणकथनमयुक्तम् अत आह । **अत्रेति** । तथा चासभ्यरूपोऽवद्यविशेषो न्यङ्गशब्दार्थ इति भावः । तत्स्वरूपमाह । **भगिनीति** । पतनीयैरित्यत्र साकांक्षत्वाच्छेषमाह । **युक्तमिति** ।

### याज्ञवल्कीये २०४ श्लोकः ।

अथ मूलमवतारयति । **तत्रेति** । तेषां मध्ये इत्यर्थः । असवर्णविषये वक्ष्यमाणत्वादाह । **सवर्णेति** । न्यूनाङ्गेत्यत्र द्वंद्वोत्तरपदकबहुव्रीहिपूर्वपदकद्वंद्व इत्याशयेनाह । **न्यूनाङ्गा इति** । तस्य व्याख्या । **करचरणादीति** । न्यूनेन्द्रिया इत्यस्य व्याख्या । **नेत्रेति** । यथासंख्येन नान्वय इत्याह । **तेषामिति** । अन्यथेत्यादेर्व्याख्या । **निन्दार्थेति** । सत्यादिस्वरूपमुदाहरणेन

वाक्यार्थमध्ये एवाकांक्षानिवृत्तये आह । **यत्रेति** । क्षेपार्थो । **भर्त्सनमिति** । अर्धोऽधमेष्विति वक्ष्यमाणैकमूलकल्पनालाघवानुरोधेनार्धन्यूनास्त्रयोदशेति मूले समास इत्याशयेनाह । **अर्धाधिकद्वादशेति** ।

नन्वेवं **मनुना** कार्षापणादन्यूनदण्डाभिधानात्तस्य च षोडशपणात्मकत्वात्तेन विरोध इत्याह । **काणं वेति** । **खञ्जं** पादविकलम् । अन्याङ्गविकलमपि वा । **तथ्येन** सत्येनापि काणादिशब्देन । 'अपिना'ऽसत्यादिसमुच्चयः । कार्षापणः अवरो यस्मिन्दण्डे स तादृशः अत्यन्ताल्पः कार्षापणो न तु ततो न्यून इत्यर्थः । तं परिहरति । **तदतिदुर्वृत्तेति** । आचारादिभिरत्यन्तनिकृष्टसवर्णेत्यर्थः । तथा च तादृशसवर्णेन यदि सवर्ण एवाक्षिप्यते तथा, तदा तद्विषय एव दण्डो न सर्वविषय इति विषयभेदान्न विरोध इति भावः ।

विशेषमाह । **यदा पुनरिति** । **शतं** पणाः । **तेनैव मनु**नैव । **आक्षारयन्** । अभिशपन्[1] । **अददत्** अत्यजन् ।

ननु जायायाः शापे मात्राद्यभिशापसाम्येन दण्डविधानं न युक्तमत आह । **एतच्चेति** । **गुरुषु** पूज्येषु । गुरुभिर्भिन्नं निमित्तम् । एतेन भार्यादीनां तत्साम्येन दण्डविधानं समाधेयमिति **कुल्लूक**भट्टोक्तं समाहितम् । **मेधातिथि**स्त्वाक्षारणं भेदनमुक्त्वा तनयं गुरुमिति पाठमङ्गीकृत्य मात्रादीनां मिथो भेदनकर्तुरयं दण्डविधिरिति व्याख्यातवान् ॥ २०४ ॥

## याज्ञवल्कीये २०५ श्लोकः ।

**मूले** हशब्दश्चार्थे, तत्समुच्चेयमाह । **अन्यं वेति** । तदर्थमेवाह । **त्वज्जायामिति** । पञ्चविंशतिकमित्यस्य व्याख्या । **पणानामिति** ॥ २०५ ॥

## याज्ञवल्कीये २०६ श्लोकः ।

अश्लीलाक्षेपे एव स्थलविशेषे दण्डविशेषप्रतिपादकं मूलमित्याह । **एवमिति** । **गुणो** वृत्तादिः । **वर्णिषु** सवर्णेषु । **विषमगुणेषु** तेष्वेव । पूर्ववाक्यस्य संख्यापेक्षयाऽत्रार्द्धद्वैगुण्यादिप्रतिपादनादश्लीलाक्षेपविषयकमेवेदम् । तत् ध्वनयन्वक्ष्यति व्याख्याने **पूर्वेत्यादि** । साकाङ्क्षत्वादाह । **आक्षेप्त्रपेक्षयेति** । अधमत्वं न जातिकृतं,तत्र तस्य वक्ष्यमाणत्वात् । अत आह । **न्यूनवृत्तेति** । आकाङ्क्षानिरासायाह । **पूर्वेति** । **अविशेषेणेति** । आक्षेप्त्रपेक्षया न्यूनवृत्तस्याधिकवृत्तस्य समवृत्तस्य वा भार्येति यथाकथंचित्परभार्यात्वमत्र विवक्षितम् । अत एवाविशेषेणेत्युक्तम् । अन्यूनवृत्तसंबन्धित्वे भेदेनोक्त्यसङ्गतिर्द्विगुणदण्डासङ्गतिश्च । अधिकवृत्तादिसंबन्धित्वेऽप्याद्यदोष एव । समवृत्तादिसंबन्धित्वेऽपि तथा । पूर्वत एव प्राप्तत्वात् । तस्मात्त्रितयभिन्नविषयकं तदिति भावः ।

न च पूर्वपद्यव्याख्यावसरे "अन्यं वा त्वज्जायाम्" इत्याद्युक्त्वा पञ्चविंशतिको दम उक्तः, इह तु पञ्चाशत्पणात्मक इति मिथो विरोध इति वाच्यम् । पूर्वत्र भार्याद्वारा पुरुषस्याक्षेपे दण्डविशेष उक्तः, अत्र तु परभार्याया एवाक्षेपे विशेष उच्यत इति भेदात् ।

( उत्तरार्धः )

**वर्णानां** ब्राह्मणादीनाम् । **कल्पनां** न तु दण्डम् । चतुर्णां युगपत् द्वंद्वभ्रमाभावायाह । **वर्णाश्चेत्यादि** । क्रमविवक्षया न दोषः । यथासंख्यमप्यत एव सिद्धम् । प्रत्यासत्तेरन्यस्याभावाच्चाह । **परस्परमिति** । कल्पनामेवाह । **प्रकर्षेणेति** ।

---

१ फ-अभिशापयन् ।

विशेषं तत्राह । **तच्चेति** । विशेषो विशेषणम् । शेषो इति पाठेऽप्येवम् । **उत्तराधरभावेति** । वर्णकर्तृको जातिविषयकः जातिकर्तृको वर्णविषयको वा य आक्षेपस्तदनुरोधेनेत्यर्थः । तत्र ब्राह्मणकर्तृकमूर्द्धावसिक्तविषयकाक्षेपे आह । **यथेति** । प्रातिलोम्येतिवक्ष्यमाणवचनेन क्षत्रियकर्तृकब्राह्मणविषयाक्षेपे ब्राह्मणकर्तृकक्षत्रियविषयाक्षेपे च क्रमेण प्रतिपादितं शतपणं पञ्चाशत्पणात्मकं च बुद्धिस्थीकृत्याह । **क्षत्रियाक्षेपेति** । ब्राह्मणकर्तृकक्षत्रियविषयाक्षेपेत्यर्थः । किंचित् अधिकं यस्मिन्निति बहुव्रीहिः । पदद्वयं वा । किंचिदिति पादाशयकम् । स चात्र शतापेक्षया चतुर्थांशः । तथा च तत् पादाधिकं तत्स्वरूपमाह । **पञ्चसप्तत्यात्मकमिति** ।

क्षत्रियकर्तृकमूर्द्धावसिक्तविषयाक्षेपे दण्डमाह । **क्षत्रियोऽपीति** । **तं** मूर्द्धावसिक्तम् । **ब्राह्मणाक्षेपेति** । क्षत्रियकर्तृकब्राह्मणविषयकाक्षेपेत्यर्थः । **ऊनं** पादोनम् । तदेवाह । **पञ्चेति** । अर्हतीत्यस्यानुषङ्गः । मूर्द्धावसिक्तस्य ब्राह्मणापेक्षया न्यूनत्वात् क्षत्रियापेक्षया अधिकत्वात् क्षत्रियकर्तृकब्राह्मणाक्षेपनिमित्ताच्छतदण्डान्न्यूनः , ब्राह्मणकर्तृकक्षत्रियाक्षेपनिमित्तात्पञ्चाशत्पणादधिकः पञ्चसप्तत्यात्मक एव दण्ड इत्यर्थः ।

द्वितीये आह । **मूर्द्धावसिक्तोऽपीति । तावाक्रुश्येति** । ब्राह्मणक्षत्रियावाक्रुश्येत्यर्थः । यद्यपि तद्भेदेनापि दण्डव्यक्तिर्भिन्ना तथापि जात्यैक्यादाह । **तमेव दण्डमिति** । मूर्द्धावसिक्तस्य क्षत्रापेक्षयाऽधिकत्वेन क्षत्रकर्तृकब्राह्मणविषयाक्षेपनिमित्तकशतदण्डापेक्षया पादोनं शतं पञ्चसप्तत्यात्मक एव दण्डो मूर्द्धावसिक्तेन ब्राह्मणाक्षेपे कृते, तथा मूर्द्धावसिक्तस्य ब्राह्मणापेक्षया न्यूनत्वेन ब्राह्मणकर्तृकक्षत्रियाक्षेपनिमित्तदण्डात्पञ्चाशत्पणात्मकात्पादाधिकः पञ्चसप्तत्यात्मक एव दण्डो मूर्द्धावसिक्तेन क्षत्रियाक्षेपे कृते, इत्युभयथाऽपि तावानेव दण्ड इत्यर्थः ।

एवं वर्णजात्योर्मिथ आक्षेपे दण्डमुक्त्वा जातिष्वेव ब्राह्मणात् क्षत्रियायां वैश्यायां च जातयोर्मूर्द्धावसिक्ताम्बष्ठयोर्मिथ आक्षेपे दण्डमाह । **मूर्द्धेति** । अत्र ब्राह्मणस्थानीय आद्यः । क्षत्रियस्थानीयोऽन्त्यः । तथा चाम्बष्ठेन मूर्द्धावसिक्ताक्षेपे शतं, विपरीते तु पञ्चाशदिति व्यवस्था विज्ञेया ।

वर्णानुलोमप्रतिलोमापवादे तु पूर्वोक्तन्यायेन पादोनः पादाधिको वा दण्डः । अत्र पञ्चाशदपेक्षया पादक्लृप्तिर्न शतापेक्षया । तथा च क्षत्रियापेक्षयाऽम्बष्ठस्य न्यूनत्वाद्वैश्यापेक्षया दण्डः पञ्चविंशत्यात्मकस्तस्मात्पादाधिकः सार्द्धसप्तत्रिंशदात्मको दण्डो भवति । ब्राह्मणेन निषादाक्षेपे पादोनैकोनविंशतिपणानां दण्डः । अत्र पञ्चविंशत्यपेक्षया पादव्यवस्था । ततश्च वैश्यापेक्षया न्यूनत्वान्निषादस्य शूद्रापेक्षयाऽधिकत्वाच्च ब्राह्मणेन वैश्याक्षेपे यो दण्डः पञ्चविंशत्यात्मकस्तदपेक्षया पादन्यूनो ब्राह्मणेनैव शूद्राक्षेपे यः सार्द्धद्वादशपणात्मको दण्डस्तदपेक्षया पादाधिकः पादोनैकोनविंशत्यात्मको दण्डः ।

निषादेन ब्राह्मणाक्षेपे पञ्चसप्तत्यधिकं शतं दण्डः । अत्रापि पुनः शतापेक्षयैव पादव्यवस्था। तथा च शूद्रापेक्षया निषादस्याधिकत्वेन वैश्यापेक्षया च न्यूनत्वेन शूद्रेण ब्राह्मणाक्षेपे यो दण्डो वधात्मकः शारीरस्तस्मादर्थदण्डस्य न्यूनत्वेन शूद्रकृतब्राह्मणाक्षेपनिमित्तकदण्डात्किंचिन्न्यूनो वैश्येन ब्राह्मणाक्षेपे यो दण्डः सार्धशतं तस्मात्किंचिदधिकः पञ्चसप्तत्यधिकं शतं दण्डो भवति ।

अम्बष्ठेन ब्राह्मणाक्षेपे पञ्चविंशत्यधिकं शतं दण्डः । वैश्यतोऽम्बष्ठस्याधिकत्वेन क्षत्रियतो न्यूनत्वेन च वैश्येन ब्राह्मणाक्षेपे सार्धशतं यो दण्डस्तस्मान्न्यूनः क्षत्रियकर्तृकब्राह्मणाक्षेपे यो दण्डः शतात्मकस्तस्मादधिकः पञ्चविंशत्यधिकं शतं दण्डो भवति ।

मूर्द्धावसिक्तकर्तृकब्राह्मणविषयाक्षेपे यः पूर्वं दर्शितः स एव वर्णजात्यानुलोम्यप्रातिलोम्यापवादे कल्पनाक्रमः । जातिष्वेवानुलोम्यप्रातिलोम्यापवादे तु ब्राह्मणक्षत्रियविशामिव मूर्द्धावसिक्ताम्बष्ठनिषादानामपि यथाक्रमं पञ्चाशत्पञ्चविंशतिसार्द्धद्वादशसार्धशतपञ्चाशदात्मकदण्डस्योहनं ज्ञेयम् । यथा संनिहिताधिकापेक्षयाऽधिको दण्डो व्यवहिताधिकाक्षेपे तथैव संनिहितन्यूनापेक्षया न्यूनो दण्डो व्यवहितन्यूनाक्षेपे इति । तदाह । **एवमिति** ॥ २०६ ॥

**एवं सर्ववर्णेति** । सर्वे च वर्णाश्चेति समासः । **सर्वे** मूर्द्धावसिक्तादयः । **वर्णाः** ब्राह्मणादयः । **एवेन** जातिव्यवच्छेदः । मिथ इति शेषः । प्रातिलोम्यानुलोम्याभ्यामाक्षेपे इत्यर्थः ।

## याज्ञवल्कीये २०७ श्लोकः ।

अपवादो बाधो नात्र विवक्षित इत्याह । **अधिक्षेपा इति** । "अपवादस्तु निन्दायामाज्ञाविश्रम्भयोरपि." इति **विश्वः** । **ब्राह्मणेति** । तद्विषयकेत्यर्थः । **पूर्ववाक्यीयद्विगुणेति** । अर्धोऽधमेषु द्विगुण इत्यत्रोपात्तद्विगुणेत्याद्यर्थः । वाक्यादीतिपाठे तत्संबन्धिद्विगुणपदेत्याद्यर्थः । द्वैगुण्यं त्रैगुण्यं चोदाहरणेनाह । **शतेत्यादि** । अविरोधायोभयोक्तेः फलं कथयन् न्यूनतां निराचष्टे । **शूद्रस्येति** । ब्राह्मणविषयकाक्रोशे इत्यर्थः । **अध्यर्द्धशतमिति** । सार्धशतमित्यर्थः । तत्रैव पक्षान्तरमाह । **द्वे वेति** । लाघवगौरवापेक्षया विकल्पः । **वधं** ताडनादिरूपम् ।

अत्र 'दमा' इति बहुवचनं निमित्तभूतवर्णापराधबाहुल्याभिप्रायेण । तथा हि क्षत्रियवैश्याभ्यां ब्राह्मणे वैश्यशूद्राभ्यां क्षत्रिये शूद्रेण वैश्ये एवमानुलोम्येनापीति तद्बाहुल्यम् । तदेतदभिप्रेत्यैव ब्राह्मणविषयकक्षत्रियवैश्यकर्तृकापराधे यो न्याय उक्तस्तं क्षत्रियविषयकवैश्यशूद्रकर्तृकापराधेऽप्यातिदिशति । **विट्शूद्रयोरपीति** । **अनन्तरः** संनिहितः । **एकान्तरः** एकेन व्यवहितः । यथा ब्राह्मणादनन्तरैकान्तरयोः क्षत्रियवैश्ययोर्ब्राह्मणविषयापराधे दण्डस्तथैव क्षत्रियादनन्तरैकान्तरयोर्वैश्यशूद्रयोरपीत्यर्थः । ब्राह्मणानन्तरेण क्षत्रियेण ब्राह्मणाक्रोशे शतमिव वैश्यानन्तरेण शूद्रेण वैश्याक्रोशेऽपि शतमित्याह । **शूद्रस्य चेति** ।

वर्णानामित्युत्तरार्धं व्याचष्टे । **आनुलोम्येन त्विति** । शेषमाकाङ्क्षितं प्रकृतमाह । **आक्रोशे इति** । '**तस्मादिति**' **मौलस्य** व्याख्या **ब्राह्मणाक्रोशेति** । क्षत्रियकर्तृकब्राह्मणविषयाक्षेपनिमित्तात् क्षत्रसंबन्धिशतपरिमितदण्डादित्यर्थः । प्रत्यासत्तेराह । **प्रतिवर्णमिति** । ब्राह्मणेन क्षत्राक्षेपे कृते शतादर्धं पञ्चाशत् दण्डः, तेनैव वैश्याक्षेपे कृते पञ्चाशतोऽर्धं पञ्चविंशतिः, तेनैव च शूद्राक्षेपे कृते पञ्चविंशतेरर्धं सार्द्धद्वादशपणा इति विवेकः । वीप्सेयम् । हानित इत्यपादानपञ्चम्यन्तात्तसिरित्याह । **हानिं कृत्वेति** । अत एव शेषं साकाङ्क्षमाह । **अवशिष्टमिति** । **अर्धे**ति । अर्धन्यूनत्रयोदशेत्यर्थः । **पञ्चाशत्** पणान् । **क्षत्रियस्येति** । क्षत्रियविषयकेत्यर्थः । **वैश्ये** अभिशस्ते सति । एवमग्रेऽपि । ब्राह्मणो दण्ड्यः स्यादित्यर्थः । **द्वादशक इति** । सार्द्धः । परिमाणे कन् ।

उक्तरीत्यैवोक्तन्यायमन्यत्राप्याह । **क्षत्रियेणेति** । अत्राद्ये **गौतम**संमतिमाह । **ब्राह्मणराजन्यवदिति** । तयोस्तादृशयोर्यथा न्यायस्तथाऽनयोरपि तादृशयोरित्यर्थः । द्वितीये **मनु**संमतिमप्याह । **विडिति** । वैश्यशूद्रयोः स्वजातिं प्रति अन्योन्यजातिं प्रति आक्रोशे एवमेव ब्राह्मणक्षत्रियवत् । वैश्ये शूद्राक्रोशिनि प्रथमसाहसः, शूद्रे वैश्याक्रोशिनि मध्यमसाहस इत्येवं रूपं दण्डप्रणयनं जिह्वाच्छेदरहितं तत्त्वतो यथावत्कर्तव्यमिति शास्त्रनिश्चय इत्यर्थः । अस्य हि—

"छेदवर्जं प्रणयनं दण्डस्येति विनिश्चयः ।" इत्युत्तरार्द्धम् । ( **मनुः** ८ । २७६ )

"ब्राह्मणक्षत्रियाभ्यां तु दण्डः कार्यो विजानता । ब्राह्मणे साहसः पूर्वः क्षत्रिये त्वेव मध्यमः॥"

इति पूर्वपद्यं च । ब्राह्मणक्षत्रियाभ्यां मिथः पतनीयाक्रोशे कृते दण्डशास्त्रज्ञेन राज्ञा दण्डः कार्यः । दण्डमेव विशेषेणाह । **ब्राह्मणेति** । ब्राह्मणे क्षत्रियाक्रोशिनि प्रथमसाहसः कार्यो ब्राह्मणाक्रोशिनि पुनः क्षत्रिये मध्यमसाहस इति तदर्थः । एवं च तदपि पतनीयाक्रोशविषयमेव यद्यपि तथापि तुल्यन्यायतयाऽत्रोपन्यस्तं व्याख्यात्रा । अनेन च **मनुना**—

"एकजातिर्द्विजातींस्तु वाचा दारुणया क्षिपन् । जिह्वायाःप्राप्नुयाच्छेदं जघन्यप्रभवो हि सः॥"

( ना. अ. १५।२२ )

इति स्वयमेव प्रागुप्तो जिह्वाछेदो वैश्ये निवारितो ब्राह्मणक्षत्रियाक्रोशविषय एवावतिष्ठते । शूद्रो द्विजातीन् पातकादिना वाचाऽऽक्रुश्य जिह्वाछेदं लभते, यस्मादसौ पादाख्यान्निकृष्टाङ्गाज्जात इति तदर्थः ॥ २०७ ॥

## याज्ञवल्कीये २०८ श्लोकः ।

सत्यासत्यान्यथास्तोत्रैरित्यनेनोक्तत्वादाह । **पुनरिति** । सिंहावलोकनन्यायेनेति भावः । **अधिकृत्येति** । बुद्धिस्थीकृत्येत्यर्थः । द्वंद्वतोऽर्थान्तरानिरासायाह । **प्रत्येकमिति** । युगपत्तदसंभवादिति भावः । वाचिके इत्यस्य व्याख्या । **वाचेति** । तदेवोदाहरणेनाह । **तवेति** । करादिष्विति विषयसप्तमीत्याह । **वाचिके इति** । अत्र वाचिके इत्युक्त्याऽस्य निष्ठुराक्षेपविषयत्वं स्पष्टम् । एवमग्रेऽपि ॥ २०८ ॥

## याज्ञवल्कीये २०९ श्लोकः ।

**किं चेति** । अन्यदपि तद्विषये उच्यते इत्यर्थः । त्वर्थमाह । **यः पुनरिति** । एवं वदन्नित्यस्यार्थमाह । **त्वदिति** । शक्त इत्यस्यार्थः **समर्थ इति** । अर्थादाह । **क्षीणशक्तिरिति** । तथेत्यस्यार्थः **पूर्ववदिति** । अत्र विषये दण्डस्योक्तत्वादत्रानुक्तिरित्याह । **पूर्वोक्तेति** ॥ २०९ ॥

## याज्ञवल्कीये २१० श्लोकः ।

पतनीये करणे अनीयर् इत्याह । **पातित्यहेतुभिरिति** । **वर्णिनामिति** । मिथ इति शेषः । इदमपि क्षत्रियकर्तृकब्राह्मणाक्षेपविषयं, प्रागुक्त**मनोः** अन्यत्र तथैव कल्पना बोध्या इति **केचित्** । वर्णिपदं मूर्द्धावसिक्तादिजातीनामप्युपलक्षणम् । तथा च जातिष्वपि मिथः पतनीयैराक्षेपे मध्यमसाहसः, उपपातकैराक्षेपे प्रथमसाहस इत्येव निर्णयः । वर्णजात्योर्मिथ आक्षेपेऽपि पूर्वोक्त एव दण्डः । **वर्णिष्वपि**

---

१ ख-क-सत्यासत्यान्य... ।

न्यूनाधिकभावं विना मध्यमसाहसादिदण्डविधानादितरत्रापि तथा कल्पनस्य प्रामाणिकत्वात् इति बोध्यम्। 'युक्ते तु'इत्यर्थमाह। **संबद्धे पुनरिति** ॥ २१० ॥

## याज्ञवल्कीये २११ श्लोकः।

**किं चेति**। प्राग्वत्। अत्र जातिपदमुभयपरमित्याह। **ये पुनर्ब्राह्मणेति**। अन्यथा न्यूनतापत्तेरिति भावः। जातिपूगानामित्येकं निमित्तं न तु द्वंद्व इत्याह। **जातीनां पूगा इति**। अयं चात्र सामान्यतः समुदायवाचीत्याह। **संघा इति**। अत्र बहुवचनबलात् तेषां प्रत्येकं संघा यथाकथञ्चित् मिलितानां वा संघा इति विवक्षितम्। सर्वथाऽपि स एव दण्ड इति बोध्यम्। प्राग्वदाह। **प्रत्येकमिति** ॥ २११ ॥

इति वाक्पारुष्यप्रकरणम्।

---

## अथ दण्डपारुष्यप्रकरणम् ॥ १९ ॥

अथ द्वितीयं पारुष्यमाह। **दण्डेति**। **च**स्त्वर्थे। गात्रशब्द उपलक्षणमन्यस्यापि। तत्र विनिगमकाभावात् सर्वमित्याह। **स्थीवरेति**। तात्पर्यार्थिद्वयं **हिंसनमित्यादि**। अत्र दुःखं कायिकं बोध्यम्। करीषेति पाठः। उपघातपदस्य तस्यासम्भवात्। तदन्वयासम्भवेन पृथगुक्तेराह। **संस्पर्शनेति**। अत एवाह। **मन इति**। अस्यान्वर्थमाह। **दण्ड्यते इति**। पर इति शेषः। दुःखमुक्तः क्रियते इत्यर्थः।

एवं **नारदो**क्त्या दण्डपारुष्यस्वरूपमुक्त्वा तयैव तद्भेदानप्याह। **तस्य चेति**। दण्डपारुष्यस्य चेत्यर्थः। **अवगोरणादिकरणभेदेनेति**। तद्रूपसाधनभूतकारकभेदेनेत्यर्थः। **द्रव्यरूपकर्मेति**। तद्रूपकर्मकारकत्रैविध्यादित्यर्थः। **पुनः** अपि। **त्रैविध्यं** तदेव। **तेनैव नारदे**नैव। दण्डपारुष्यं शरीरस्य विरूक्षीकरणं तत्र विरूक्षीकरणाख्ये व्यापारेऽवगोरणादीनि त्रीणि करणानि तद्भेदात्त्रैविध्यं, यत्र शरीरे विरूक्षीकरणं भवति तत्कर्मकारकं तस्य हीनत्वादिनाऽपि त्रैविध्यमेवेत्यर्थः। **तस्यापीति**। दण्डपारुष्यस्य। **हीनमध्योत्तमक्रमात्** तत्क्रममादाय। ल्यब्लोपे पञ्चमी। प्रवृत्तैरवगोरणादिभिस्त्रिभिः करणैर्हीनमध्योत्तमानां द्रव्याणां समतिक्रमात् त्रैविध्यमपि दृष्टमित्यर्थः। **चः** पादपूरणे। तथा चावगोरणादिषु करणेषु पाठक्रमादेव हीनत्वादिकं बोध्यम्।

ननु करणकारककर्मकारकभेदात्षड्विधत्वं, त्रैविध्यमनुपपन्नम्, अत आह। **त्रिण्येवेति**। तत्र कण्टकशोधने इति पाठः। तत्र एवंविधे दण्डपारुष्ये कण्टकशोधने दुष्टशिक्षायां क्रियमाणायाम् अपराधानुसारेण शिक्षार्थं दण्डपारुष्यरूपाणि साहसानि हीनदण्डपारुष्यमध्यमदण्डपारुष्योत्तमदण्डपारुष्यरूपप्रकारत्रययुक्तानि त्रीण्येवेत्यर्थः। कर्मकरणभेदेऽपि हीनत्वादिनाऽनुगमेन 'तद्व्यपदेशयुक्तत्वात्त्रिप्रकारकमेवेति भावः। ननु साहसतोऽस्य भेदस्य वक्ष्यमाणत्वात्कथं साहसानीत्यत आह। **त्रीण्येवेति**। साहससामान्यलक्षणाक्रान्तत्वस्यात्रापि वक्ष्यमाणत्वादिति भावः।

एवं **नारदो**क्त्या सभेदं दण्डपारुष्यस्वरूपमुक्त्वा वाक्पारुष्यसाधारणधर्मान् तयैव प्रतिपादयितुं तेषां स्वरूपं क्रमेणाह। **तथेति**। 'उभयोरपीति' विषयसप्तमी। प्रवृत्तकलहयोर्द्वयोर्मध्ये इत्यन्वयः। **पूज्य एवेति** एवोऽप्यर्थे। तृतीयप्रकारमाह। **कलहे चेति**। बद्धमनुबद्धं यत्पूर्ववैरं तस्मात्तुरित्यर्थः।

**एवे**नान्यव्यवच्छेदः। **सज्जना एव** आर्या एव। **दापने** भृत्यादिद्वारा। **तेषां** आर्याणाम्। **स्फुटार्थम्** एवव्यवच्छेद्यमाह। **नार्थमिति**। न धनमित्यर्थः।

**तेनैव नारदे**नैव। **एतयोरुभयोरपि** वाग्दण्डपारुष्ययोः। पञ्च विधाः प्रकारा यस्य तादृशो विधिर्विधानमुक्तमित्यर्थः। तान्येवाह उक्तक्रमेण। **पारुष्ये सतीत्यादिना**। संरम्भात्पौर्वापर्याभावः। तदेव ध्वनयन्नाह। **दण्डेति**। योऽतिक्रम्य गच्छति स दण्डभागित्यर्थः। एवं प्रथममुक्त्वा द्वितीयमाह। **पूर्वमिति**। **आक्षारयेत्** पारुष्यं कुर्यात्। **नियतं** अवश्यम्। **पश्चाद्यः** आक्षारयेत्। **असत्कारी** दोषभाक्। विशेषमाह। **पूर्वे त्विति**। **विनयो** दण्डः।

कलहे चेत्युक्तं तृतीयप्रकारमाह। **द्वयोरिति**। तुल्यं अन्यूनाधिकं कलहमापन्नयोः प्राप्तयोः द्वयोर्मध्ये यः पुनः यस्तु वैरमनुबध्नाति दृढतरं स्मरति तयोर्मध्ये स एव दण्डभाक् भवति पूर्वो वा पूर्वं प्रवृत्तो वा यदि वा अथ वा इतरः पश्चात्प्रवृत्त इत्यर्थः।

चतुर्थमाह। **पारुष्येति**। स्पष्टम्। पञ्चममाह। **श्वपाकेति**। वधवृत्तिष्विति श्वपाकादेरेव विशेषणम्। वधजीविष्विति तदर्थः। अत एवैते तदवान्तरभेदा एवात्र। 'नृपेष्विति' विषयसप्तमी। **चो** भिन्नक्रमः। तथा च वधवृत्तिषु श्वपाकादिषु चतुर्षु हस्तिपव्रात्यदासेषु च सद्यस्तत्कालं घात एवानुशासनम्। कस्मिन्सति, गुर्वाचार्यनृपविषये मर्यादातिक्रमे सतीत्यर्थः। गुर्वाचार्यान्तगेषु **चेति** पाठान्तरम्। तत्रान्तं चरममाश्रमं गच्छतीत्यन्तगो यतिः। यद्वा अन्तं नाशं गच्छन्ति गमयन्तीत्यन्तगाः गुर्वाचार्ययोरन्तगास्तेषु गुर्वाचार्यद्रोहिषु। अत्र चो यथाश्रुत एव। **तथा च** वधवृत्तिषु श्वपाकादिषु हस्तिपादिषु गुर्वाचार्यान्तगेषु च सद्यो घात एवानुशासनं शिक्षा। **उत्तर**श्लोकपर्यालोचनया सत्सु इत्यर्थलभ्यम्। कस्मिन्सति, सत्सु विषये मर्यादातिक्रमे सतीत्यर्थः। गुर्वाचार्यानुगेष्विति पाठेऽप्येवम्। "श्वपाकपशुचाण्डालवेश्यासूकरवृत्तिषु"। इति 'गुर्वाचार्यातिगेष्विति चे'ति **कल्पतरौ** पाठः।

आद्यपक्षे नृपेत्याद्युपलक्षणमिति सूचयन् घातमेव द्वेधा पद्याभ्यामाह। **यमेवेति**। **नृषु** नृणां मध्ये। एते श्वपाकादयो यमेव हि सन्तं जनमित्याद्यर्थः। **विनयं,** दण्डम्। एवव्यवच्छेद्यमेवाह। **न तदिति**। **एते,** पूर्वोक्ताः।

## याज्ञवल्कीये २१२ श्लोकः।

एवं स्मृत्यन्तरोक्तमुक्त्वा तत्सङ्गत्या मूलमवतारयति। **एवंभूतेति**। उक्तप्रकारं प्राप्तेत्यर्थः। एतेन पारिशेष्यात् पूर्वोक्तचतुर्गुण**प्रणयनस्य,** वक्ष्यमाणमूलोक्तस्य। **तदिति**। दण्डपारुष्यस्वरूपेत्यर्थः। **हेतुमिति** जातावेकवचनम्। असाक्षिकं हतं हननं यत्र निवेदने इति बहुव्रीहिः। तदाह। **यदेत्यादिना निवेदयतीत्यन्तेन**। व्रणादिस्वरूपं प्राप्तिः। 'युक्त्येति' जातावेकवचनं व्याख्याने। तत्स्वरूपमाह। **कारणेति**। द्वन्द्वगर्भः षष्ठीतत्पुरुषादिरयम्। कारणपर्यालोचनात्मिकया प्रयोजनपर्यालोचनात्मिकया चेत्यर्थः। आगमोऽत्रान्य एवेत्याह। **जनप्रवादेनेति**। मौलमेकं च व्याचष्टे। **चशब्दादिति**। सर्वसमुच्चायकं द्वितीयं तमाह। **दिव्येन चेति**। मूले कृतो भयादित्यत्र कृदिति सम्पदादित्वाद्भावे क्विप्। तस्य करणस्य भयादित्यर्थः। तस्यानिश्चयादाह। **कृतसम्भावनाया इति**। करणसम्भावनाया इत्यर्थः। तृतीयपादार्थमाह। **परीक्षेति** ॥ २१२ ॥

## याज्ञवल्कीये २१३।२१४ श्लोकौ ।

**एवम्,** अव्यवहितोक्तप्रकारेण।[1] अस्य भयादित्यर्थः । **निश्चिते** दण्डपारुष्ये । न समुदाय-स्पर्शो विवक्षित इत्याह । **रेणुना वेति** । तेषां स्पर्शे हेतुभूते सतीति वाच्योऽर्थः । तत्फलितमाह । **य इति** । **इति** अनेन । **कर्णाविट्** कर्णमलम् । **दूषिका** नेत्रमलम् । त्रयाणां द्वंद्व इत्याह । **तैरिति** । द्विगुणस्तत इति मूले व्युत्क्रम इत्याशयेन तदर्थमाह । **ततः पूर्वादिति** । पूर्वोक्तात् । पूर्वादीति विकल्पात् न स्मादादेशः । **पुरीषादीति** । तैः स्पर्शने कृते त्वित्यर्थः । **छर्दिमूत्रेति** । छर्दिर्वमनं छर्द्यादिभिः परगात्राभिद्रोहे आपात् पादमारभ्य नाभिपर्यन्तं यो दण्डः स चतुर्गुणः दशपणापेक्षया तत्त्वं चत्वारिंशत्पणः स्यात् । कायमध्ये नाभेरूर्ध्वं मुखादर्वाक् तैस्तथा सति षड्गुणः षष्टिपणः स्यात् । मूर्ध्नि तु तैस्तथा सति अष्टगुणः अशीतिपणः स्मृत इत्यर्थः ।

एतेन पारिशेष्यात्पूर्वोक्तश्चतुर्गुणो दण्डो नाभेरधस्तात् द्रोहे विज्ञेय इति व्याख्यानमपास्तम् । आपादित्यस्यार्थाज्ञानात् । समासान्तस्तत्र लोप आर्षः ।

**कातीयं** व्याचष्टे । **आद्येति** । समेष्वेवमिति व्याचष्टे । **एवमिति** । तत्र एवमित्यस्यैवंभूत इत्यादि व्याख्या । समेष्वित्यस्य च सवर्णेति ।

परस्त्रीषु द्विगुण इत्यादि व्याचष्टे । **परेति** । **अविशेषेणेति** । सवर्णत्वोत्तमवर्णत्वहीनवर्णत्व-विशेषमन्तरेणेत्यर्थः । तथा च परस्त्रीमात्रे भस्मादिभिः स्पर्शने दशपणात् द्विगुणो विंशतिपणः, अमे-ध्यादिभिः स्पर्शने विंशतिपणात् द्विगुणश्चत्वारिंशत्पण इत्यर्थः ।

एवमुत्तमेषु चेत्यत्रापीत्याह । **तथोत्तमेष्विति** । अत्रोत्तमत्वं न जातिः । तत्रानुपदमेव वक्ष्य-माणत्वात् । अत आह । **स्वेति** । एवमग्रेऽपि । **हीनेष्विति** । आदिना वृत्तादि । **दशपणश्चेति** । भस्मादिभिः स्पर्शने इत्यर्थः । तुर्यपादं व्याचष्टे । **मोह इति** । उपलक्षणे तृतीयेत्याह । **युक्तेनेति** ॥ २१३ ॥ २१४ ॥

## याज्ञवल्कीये २१५ श्लोकः ।

**प्रातिलोम्येति** । तेनापराधे इत्यर्थः । बहुवचनान्तेन समास इत्याह । **ब्राह्मणाना-मिति** । अत्र वर्णत्वेन सादृश्यादाह । **क्षत्रियादेरिति** । विशेषमाह । **क्षत्रियेति** । **श्रेयां-सम्,** उत्तमजातिम् । द्विजातिम् इति यावत् । अत एवाह । **अन्त्यज इति** । अङ्गमध्येऽन्त्यात् निकृष्टात्पादाज्जात इत्यर्थः । अन्ते भवोऽन्त्यः शूद्रवर्णस्तस्माज्जात इति वा । अन्त्यः सन् जात इति इति वा । **अस्य** शूद्रस्य । **मात्रं** कात्स्न्र्ये । तन्मात्रविषयकापराधे इत्यर्थः । अत्र तेन तत् साक्षात्परम्परासाधारणं बोध्यम् । तदित्यस्येदमित्यर्थः । **मनु**ग्रहणमादरार्थम् । मानवमेवेदम् ।

उक्तन्यायमन्यत्रातिदिशति । **वैश्यस्यापीति** । वैश्यस्य क्षत्रियानन्तरभावित्वेन न्यूनत्वे-नान्त्यजत्वात्क्षत्रियस्य तदपेक्षया ज्यायस्त्वेनोत्कृष्टत्वाच्छूद्रतुल्यत्वेनायमेवाङ्गच्छेदनरूपो दण्ड इत्यर्थः । **शस्त्रादीति** । शस्त्रादेः स्पर्शे इत्यर्थः । तदर्द्धिक इति प्राग्वत् । तत्फलितमाह । **प्रथमेति** ।

ननु भस्मादिभिर्निष्ठयूतान्तैः प्रागुक्तैः प्रातिलोम्यापराधे को दण्ड इत्यत आह । **भस्मा-दीति** । उक्तमूलमाह । **प्रातिलोम्येति** । भस्मादिभिः स्पर्शने सवर्णविषये यो दशपणो दण्ड उक्तस्तस्यैव प्रातिलोम्येत्यनेन तथोक्तत्वात्स एवात्रापि । तत्र क्षत्रियेण ब्राह्मणं प्रति भस्मादिभिरभि-द्रोहे कृते प्रातिलोम्यापवादत्वेन द्विगुणो विंशतिपणो दण्डः । तैरेव वैश्यकर्तृके क्षत्रियापराधे

[1] ख-व्यवहितोक्तप्रकारेण ।

तत्रोक्ताद्विंशतिपणात् द्विगुणश्चत्वारिंशत्पणो दण्डः । तैरेव वैश्यकर्तृकब्राह्मणापराधे विंशतिपणादेव त्रिगुणः षष्टिपणो दण्ड इति बोध्यम् ।

**तत्रापि** भस्मादिकरणकब्राह्मणापराधेऽपि । दर्पादिति निष्ठीवनादौ हेतुः । अवेत्येतेऽवमानसूचकाः ॥ २१५ ॥

## याज्ञवल्कीये २१६ श्लोकः ।

व्यवहितसङ्गतिमाह । **एवमिति** । **पुनः** पुनरपि । **सजातिं** सवर्णम् । सिंहावलोकनन्यायेनेति भावः । हस्तेति समाहारद्वन्द्व इत्याह । **हस्ते इति** । **उद्गूर्णे** उद्यते । दशविंशतिकावित्यत्र द्वन्द्वोत्तरं परिमाणे कनित्याह । **यथेति** । परस्परमित्यस्य लक्ष्यार्थमाह । **परस्परेति** । सवर्णमित्यस्य मध्यमणिन्यायेनान्वयः । वर्णानामिति तदर्थः । उद्गूर्णे इत्यस्यानुवृत्तिः तदाह । **उद्गूर्णे इत्यादि** ॥ २१६ ॥

## याज्ञवल्कीये २१७ श्लोकः ।

**किं चेति** । सवर्णविषयेऽन्यदप्याहेत्यर्थः । एवमग्रेऽपि । **पादेति** । अत्र करशब्दस्यापूर्वनिपातः । तत्प्रकरणस्यानित्यत्वात् । अत एवाग्रे करपादेत्युक्तिसङ्गतिर्**मूले** । वस्त्रग्रहणाच्च समाहार इत्याह । **कराणामिति** । अत एवाह । **अन्यतममिति** । मुख्यार्थोऽत्र न विवक्षित इत्याह । **झटितीति** । समाहारद्वन्द्वाद्दण्डबाहुल्यादविरोधाच्चाह । **समुच्चिते इति** । असम्भवनिरासायाह । **पतदिति** । मूले भावे प्रत्यया इत्याह । **अंशुकेनावेष्ट्येत्यादि** । अध्यासपदार्थमाह । **घट्टयतीति** । ताडयति ॥ २१७ ॥

## याज्ञवल्कीये २१८ श्लोकः ।

आद्यर्थमाह । लोष्टेति । त्वग्भेदक इत्यादौ शेषषष्ठ्या समासः । निमित्तान्तरे मूलोक्तमेवाह । **लोहितस्येति** । चस्तु दण्डसमुच्चायको न तु समुच्चयनिमित्तत्वसूचकः । सर्वत्र तथैव सत्त्वात् । तद्व्याख्यातृभिरपि तथैव व्याख्यातत्वाच्च । एतेन 'समुच्चिते शतदण्डो न त्वङ्गात्रभेदके, चस्य समुच्चयबोधकत्वादिति ' व्याख्यानमपास्तम् ।

नन्वेवं चतुःषष्टिपणो दण्डो मूले रक्तदर्शने उक्तः, **मनुना** तु शतमिति मिथो विरोध इति चेन्न । मर्मस्थले तद्दर्शकस्य **मनूक्तम्**, अन्यत्र **मूलोक्त**मिति विवेकात् । अग्रे चस्त्वर्थे ॥ २१८ ॥

## याज्ञवल्कीये २१९ श्लोकः ।

करेति समाहारद्वन्द्वे 'पाददन्तेति' ( व्या. सू. ६।१।६३ ) ददादेश इत्याह । **करेति** । अग्रिमानुरोधेन दण्डस्य तुल्यत्वाच्चाह । **प्रत्येकमिति** । मूले कर्णनासयोरित्यार्षम् । तत्सूचक इतरेतरद्वन्द्व एवेत्याह । **कर्णनासस्य च प्रत्येकमिति** । अपूर्वव्रणोत्पत्तेरत्रानुद्देश्यत्वं किं तु जातव्रणभङ्गस्येत्याह । **रूढेति** । जातेत्यर्थः । ननु करादिभङ्गस्याल्पत्वेनैकरूपेण सर्वत्र मध्यमसाहसदण्डविधानमयुक्तम्, अत आह । **अनुबन्धादिनेति** । अनुबन्धो दोषोत्पादः । 'दोषोत्पादेऽनुबन्धः स्यात्' **इत्यमरः** । ( ३।३।९८ ) 'आदिना' व्यवहारासौकर्यम् । कर्णनासाच्छेदनादौ दोषाधिक्यं प्रत्यक्षसिद्धं, करपादादेस्तु साक्षाच्छरीरावयवत्वेन तद्भङ्गे व्यवहारसौकर्याभावेन शरीरयात्राया दुर्लभत्वाद्दोषाधिक्यम् । एवं दन्तभङ्गेऽभ्यवहरणसौकर्याभावेन परम्परया जीवनसङ्कोचाद्दोषाधिक्यम् । इत्थमनुबन्धादिना करादिभङ्गादिरूपविषयस्य साम्यमूह्यमित्यर्थः ॥ २१९ ॥

---

१ २१९ श्लो.

## याज्ञवल्कीये २२० श्लोकः ।

**चेष्टेति ।** अत्र वाचोऽपूर्वनिपातः प्राग्वत् । एवं कन्धरेत्यत्रापि । तत्रेतरेतरयोगोऽप्येवम् । अत एवेह चेष्टार्थो । **गमनेति ।** प्रत्येकमिति वक्ष्यति । **मूले चो** व्युत्क्रमे सर्वसमुच्चये । अग्रे **मूले च**स्त्वर्थे ॥ २२० ॥

## याज्ञवल्कीये २२१ श्लोकः ।

यथोक्तादित्यस्यार्थमाह । **यस्मिन्निति ।** अपराधबहुत्वादाह । **प्रत्येकमिति ।** तदेवाह । **अतीति ।** एवं सवर्णविषयापराधे मूलोक्तं दण्डं वाक्पारुष्योक्तन्यायेनात्र तदनुक्तत्वात्प्रातिलोम्यानुलोम्यापराधयोर्योजयति । **प्रातिलोम्ये**ति । **एतस्यै**व **मूलीय**स्येव । **दण्डजातस्य,** तत्समूहस्य । प्रातिलोम्यापराधे दण्डस्य वृद्धिः, आनुलोम्यापराधे दण्डस्य हानिरित्यर्थः ।

न च विप्रपीडाकरमिति **मूल**व्याख्यावसरे भस्मादिसंस्पर्शे पुनरित्यादिनाऽयमर्थ उक्तः स एवात्रोच्यते इति पौनरुक्त्यमिति वाच्यम् । भस्मादिभिः करणविशेषैः प्रातिलोम्यापराधे सति तत्रैवापराधे प्रागुक्तः प्रातिलोम्यापराधदण्डप्रसङ्गेन अत्र तु प्रातिलोम्यानुलोम्यापराधयोरुभयोरपि वाक्पारुष्योक्तस्य सकलस्यापि दण्डस्य, कल्पनाप्रकारो बालावबोधार्थमुच्यते इति भेदात् । **मानवे** ' प्रातिलोम्यानुलोमत ' इति धर्मपरम् । पञ्चमीद्विवचनान्तात्तसिः । **कार्याः** कर्तव्याः दण्डाः । दाप्या इति पाठान्तरम् ।

( उत्तरार्धः )

'कलहेति ' सप्तमीसमासः । तदाह । **कलहे इति । वर्तमाने** न तु समाप्ते । तत इत्यस्यार्थमाह । **अपहृतेति ।** तत्र हेतुं सूचयन्नाह । **अपहारेति ।** बहुव्रीहिः ॥ २२१ ॥

## याज्ञवल्कीये २२२ श्लोकः ।

**ताडनात्** 'ताडितादिति ' पाठेऽपि भावे क्तः । समुत्थानजमित्यादेरर्थमाह । **तस्य व्रणेति ।** क्रियते अनेन सम्यगुत्थानमिति व्युत्पत्त्याऽऽह । **व्रणरोपणमिति ।** व्युत्पत्त्या तस्य सम्यक् स्वरूपतः करणमित्यर्थः । "दण्डं चे"त्याद्यर्थमाह । **यस्मिन्निति ।** अस्य तात्पर्यार्थमाह । **नेति । मात्रम**वधारणे । **मनुरपि**—( अ. ८ । श्लो. २८७ )

"अङ्गानां पीडनायां च प्राणशोणितयोस्तथा । समुत्थानव्ययं दाप्यः सर्वदण्डमथापि वा ॥ " इति ।

अङ्गानां करादीनां प्राणशोणितयोश्च पीडनायां सत्यां समुत्थानव्ययं यावता कालेन पूर्वावस्थाप्राप्तिरूपसमुत्थानसम्बन्धो भवति तावता कालेन पथ्यौषधादिना यावान् व्ययो भवति तमसौ दापनीयः । यदि तं व्ययं पीडोपपादको न दातुमिच्छति तदा यः समुत्थानव्ययो यश्च दण्डस्तमेव सर्वं राज्ञा दण्डत्वेन दाप्य इत्यर्थ इति तद्व्याख्यातारः ॥ २२२ ॥

## याज्ञवल्कीये २२३ श्लोकः ।

उत्तरवचनस्य प्रसङ्गसङ्गतिरित्याह । **परगात्रेति ।** गृहादितो हस्तादीनामन्तरङ्गत्वात्तदपराधे तावत्तत एव दण्डमुक्त्वाऽन्तरङ्गप्रसङ्गात् बहिरङ्गगृहकुड्याभिघातादौ दण्डकथनमित्यर्थः । एतेन वैपरीत्येन कथनशङ्काऽपि निरस्ता । अर्थो गृहादिरूपः । भेदे छेदे इति पाठः । पञ्चेत्यादि पदत्रयम् । योग्यतयाऽऽह । **मुद्गरेति ।** प्रत्यासत्तेराह । **कुड्यस्येति । अभिघात** आघातमात्रम् । 'भेदे ' इत्यस्यार्थो **विदारण इति ।** 'छेदे ' इत्यस्यार्थो **द्वैधीति ।** चतुर्थदण्डाभावादपराधबाहुल्याच्चाह । **एते त्रय इति ।** तत्त्रयमित्यस्यार्थमाह । **पुनरिति** ॥ २२३ ॥

## याज्ञवल्कीये २२४ श्लोकः ।

अर्थादाह । **परेति** । दुःखोत्पादीति द्रव्यविशेषणमित्याह । **दुःखेति** । 'जनिवध्यो'रिति ( व्या. सू. ७ । ३ । ३५ ) वृद्धिनिषेधः । जननमिति पाठान्तरम् । करणे ल्युट् । द्रव्यस्वरूपमाह । **कण्टकादीति** । अत्र आद्यः द्वितीय इति च यथासंख्यान्वयसिद्धार्थकथनपरं, नास्ति सफलं, वाक्यभेदाभावादित्याशयेन तद्विज्ञायैवाह । **प्रक्षिपन् षोडशेति** । **प्राणेति** । 'हरतेरनुद्यमनेऽच्' इ. त्यच् ( व्या. सू. ३।२।९ )॥ २२४ ॥

## याज्ञवल्कीये २२५ श्लोकः ।

पशुपदोक्तेराह । **अजावीति** । अजश्चाविश्चेत्यादिः द्वन्द्वः । अत एव तस्य पूर्वनिपातः । औचित्यादाह । **ताडन इति** । लक्ष्यार्थमाह । **दुःखोत्पादने इति** । मुख्यार्थबाधादाह । **शाखाशब्देनेति** । **अत्र,** अत्रैव । आदिना खुरपरिग्रहः । करचरणेति समाहारद्वन्द्वः प्राण्यङ्गत्वात् । दण्डशब्द उभयत्र तत्समूहपर इत्याह । **दण्डगणस्येति** । क्रमादिति तु व्युत्क्रमभ्रमनिरासाय ।

तुर्यपादोक्तमेवाभिप्रायतो विवेचयति । **स चेति** । **न पुनः**, न तु । दाढर्च्यायोक्तमाक्षिपति । **कथमिति** । समाधातुं सिद्धार्थमनुवदति । **अपराधेति** । **तावत्,** आदौ । अवगमनेऽन्वयः । ततः किम्, अत आह । **तत्र चेति** । उपरितनदण्डत्रये चेत्यर्थः । द्विपण इत्यत्र द्वित्वं तावच्छ्रुतम् । तत्र च श्रुतद्वित्वसंख्यात आधिक्यम् अश्रुतत्रित्वादिरूपधर्मिकल्पनया वा श्रुतद्वित्वगताभ्यासात्मकचतुष्ट्वादिरूपधर्मकल्पनया वा भवति । तत्राद्येऽश्रुतकल्पना धर्मिकल्पना चेति गौरवं, द्वितीये तु श्रुतद्वित्वगताभ्यासरूपधर्मकल्पनैवेति लाघवम् । तथा च न्यायविदः धर्मिकल्पनातो वरं धर्मकल्पनेति । अतः श्रुतद्वित्वाभ्यासाश्रयणमेवोचितमिति भावः ॥ २२५ ॥

## ज्ञाज्ञवल्कीये २२६ श्लोकः ।

पूर्वार्द्धे पूर्वशेष इत्याह । **तेषामिति** । पूर्वोक्तानामित्यर्थः । **मृत्युशब्दस्य** लक्ष्यार्थमाह । **मारणे चेति** । अत एव तयोः सामानाधिकरण्यम् ।

**उत्तरार्धार्थ**माह । **महापशूनामिति** । स्थानशब्दो निमित्तपर इत्याह । **ताडनेति** । तत्कृतदुःखोत्पादेत्यर्थः । 'आदिना' शाखाङ्गच्छेदनादिसंग्रहः । दुःखे चेत्याद्युक्तनिमित्तेष्वित्यर्थः । **द्विगुणः**, चतुष्पणादिः ॥ २२६ ॥

## याज्ञवल्कीये २२७ श्लोकः ।

पुनः स्पष्टार्थं तदर्थमाह । **या इति** । **उप्ताः**, क्षेत्रनिक्षिप्ताः । **प्रतिकाण्डं,** काण्डं काण्डं प्रति । ताः शाखा येषामिति 'शाखादिभ्यः' ( व्या. सू. ५ । ३ । १०३ ) इतीनिस्तदन्तादपि बोध्यः । **मूलेति** । मूलसंबद्धशाखा इत्यर्थः ।

'अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधिस्तरोः' **इत्यमरः** । ( २ । ४ । १० )

सर्वेत्यस्यार्थमाह । **समूलेति** । मूलेति पाठेऽर्शआद्यच् बोध्यः । विदारणे इत्यस्य सर्वत्र सम्बन्धः । क्रमादित्यनुवृत्तेः स्थानाख्यलोकप्रमाणाद्वाऽऽह । **यथेति** । विंशतेरिति पञ्चमी न तु षष्ठीत्याह । **विंशतीति** । तदुपपत्तये आह । **आरभ्येति** । फलितमाह । **एतदिति** ।

वैयर्थ्यं परिहरन्नु**त्तरार्धार्थ**माह । **प्ररोहीति** । **उपजीव्येति** । पुत्रपुष्पफलादिनेति भावः । **पूर्वोक्तेष्विति** । प्रागुक्तेषु निमित्तेष्वित्यर्थः । **पूर्वोक्ता एव** विंशतिपणादयः । दमशब्दस्तत्समूहपर इत्याह । **दण्डा इति** । न्यूनतां निराचष्टे । **अनुपजीव्येति** ॥ २२७ ॥

१ ख—फ—परमद्विगुणः ।

## याज्ञवल्कीये २२८ श्लोकः ।

**द्विगुण इति** । शाखाच्छेदनादिषु त्रिषु यथाक्रमं चत्वारिंशत्पणोऽशीतिपणः षष्ट्यधिकशतपणश्चेत्यर्थः । अन्यत्राप्येवमेवेत्याह । **विश्रुते इति** । अथशब्दार्थमाह । **पिप्पलेति** । अत्र विश्रुतत्वं प्रसिद्धत्वं तच्च शास्त्रीयं बोध्यमिति नातिप्रसङ्गः ॥ २२८ ॥

## याज्ञवल्कीये २२९ श्लोकः ।

**प्रत्याहेति** । तदभिद्रोहमभिलक्ष्य दण्डमाहेत्यर्थः । एवं प्रागपि । **अनतिदीर्घेति** । त्रयाणां कर्मधारयः, बहुव्रीह्युत्तरपदको द्वयोः कर्मधारयो वा । यद्यपि लतात्वं सामान्यं तथापि समभिव्याहारादाह । **दीर्घेति** ।

'अप्रकाण्डे स्तम्बगुल्मौ वल्ली तु व्रततिर्लता । लता प्रतानिनी वीरुत् गुल्मिन्युलप इत्यपि' **इत्यमरः** ( २ । ४ । ९ )

**अवसानं** समाप्तिर्नाश इति यावत् । पूर्वोक्तेषु इत्यादि प्राग्वत् । पूर्वस्मृतादित्यस्यार्थः । **पूर्वोक्तादिति**।प्रकृतिभूतविंशतिचत्वारिंशदशीतिपणरूपात्पूर्वोक्ताद्दण्डादर्धदण्डो दशविंशतिचत्वारिंशत्पणात्मक इत्यर्थः । अत्र **मनुः**, ( अ. ८ श्लो. २९५–३०० )

" प्रमापयेत्प्राणभृतः तत्र दण्डोऽविचारितः ॥

" मनुष्यमारणे क्षिप्रं चोरवत् किल्बिषं भवेत् । प्राणभृत्सु महत्स्वर्धं गोगजोष्ट्रहयादिषु ॥

" क्षुद्रकाणां पशूनां तु हिंसायां द्विशतो दमः । पञ्चाशत्तु भवेद्दण्डः शुभेषु मृगपक्षिषु ॥

" गर्दभाजाविकानां तु दण्डः स्यात्पञ्चमाषकः । माषकस्तु भवेद्दण्डः श्वशूकरनिपातने ॥

" भार्या पुत्रश्च दासश्च प्रेष्यो भ्राता च सोदरः । प्राप्तापराधास्ताड्याः स्युः रज्ज्वा वेणुदलेन वा ॥

" पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कदाचन । अतोऽन्यथा तु प्रहरन् प्राप्तः स्याच्चौरकिल्बिषम् ॥ इति ॥

" प्राकारस्य च भेत्तारं परिखाणां च पूरकम् । द्वाराणां चैव भङ्क्तारं क्षिप्रमेव प्रवासयेत् ॥ "

इति च । ( **मनुः** अ. ९ । २८९ )

**विष्णुः**, " गजाश्वोष्ट्रगोघाती त्वेककरपादः कार्यो, विमांसविक्रयी ग्रामपशुघाती कार्षापणशतं दण्ड्यः पशुस्वामिने च तन्मूल्यं दद्यात्, आरण्यपशुघाती पञ्चाशतं कार्षापणान्, पक्षिघाती मत्स्यघाती च दशकार्षापणान्, कीटोपघाती कार्षापणमिति । "

विमांसं शृगालादिमांसम् ॥ २२९ ॥

इति दण्डपारुष्यप्रकरणम् ।

---

## अथ साहसप्रकरणम् ।

**आहेति** । मूलकृत् अर्द्धेनेति भावः ।

## याज्ञवल्कीये २३० श्लोकः ।

शब्दार्थमाह । **साधारणस्येति** । मौलं सामान्ये त्युपलक्षणं परकीयस्यापि । तत्र साधारणधर्मस्य हेतुत्वप्रदर्शनद्वाराऽनुगतम् अभिमतं लक्ष्यार्थं तस्य सूचयन्नाह । **यथेष्टेति** । यौगपद्यासम्भवादाह । **वेति** । यथा साधारणस्यानेकस्वत्वाक्रान्तस्य न यथेष्टविनियोगार्हत्वं तथा परद्रव्यस्यापीति तदपहरणमपि साहसं भवतीति भावः । **कुत इति** । योगो वा रूढिर्वा योगरूढिर्वेति प्रश्नाशयः । प्रसभं हरणादिति समासः । **तदाह** । **प्रसह्येति** तथा च यौगिकोऽयमिति भावः ।

नन्वेवं **मूलस्य** न्यूनता तथापि तदवस्थैव स्मृत्यन्तरविरोधोऽपीति चेन्न । हेतुनैवान्यसंग्रहस्यापि सूचनेन दोषलेशाभावात् । तदेतत् ध्वनयन् तत्फलितमेवाह । **एतादिति । राजेति** । राजदण्डभयं जनाक्षेपभयं चेत्यर्थः । **राजपुरुषेति** । राजपुरुषाश्चेतरजनाश्च तेषां समक्षमित्यर्थः । असमक्षं तु क्रियमाणस्य स्तेयत्वमेवेति भावः । यत्किंचिदर्थमेवाह । **मारणेति । साहसमिति** । सहसा क्रियमाणत्वात् । **साहसलक्षणमिति** । साहससामान्यलक्षणमित्यर्थः । अत एवाह । **अत इति** । उक्तहेतोरित्यर्थः । **अपिना** तत्समुच्चयः । तत्र **आदिना** एतस्यापि परिग्रहः । एवं च सर्वं मूलमुपलक्षणमिति स्वयमेव सूचितमिति न दोषः । अत एवाह । **नारदेनापीति** । **साहसस्य** तत्सामान्यस्य । बलस्य दर्पो गर्वः स सञ्जातो येषां तैः ।

ननु सहसा कृतं साहसमिति योगमात्रलब्धं तत्सामान्यलक्षणं चौर्यादिष्वविशिष्टमिति तेष्वेवान्तर्भावादस्य प्रकरणस्य पृथगुक्तिरयुक्तेत्यत आह । **तदिदमिति** । पूर्वोक्तं साहससामान्यलक्षणमित्यर्थः । **व्यासक्तमपि** सम्बद्धमपि । बलसम्बन्धिदर्पस्यावष्टम्भरूपोपाधितो भिद्यते इत्यर्थः ।

नन्वेवं किमित्येवं भेदाङ्गीकारः अत आह । **दण्डेति** । तद्भेदस्य शास्त्रकृद्भिः प्रतिपादनादित्यर्थः । यद्यपीदं प्रागुक्तसामान्यलक्षणं तत्र सर्वत्रानुस्यूतं तथापि तादृशावान्तरोपाधिभेदाद्भिन्नमिति तद्घटितविशेषलक्षणेन लक्षितमत्र साहसपदवाच्यमिति रूढमपि । तत्र तु शुद्धयौगिकमिति भावः ।

यदि तु तत्साधारणं लक्षणमपीष्टं तर्हि योगमात्रलब्धं तदप्यस्तु,प्रकरणभेदस्तूक्तनिमित्तकः, तदा चौर्यादिष्वपि विशेषलक्षणानि वक्ष्यमाणानि बोध्यानि । बलदर्पयोरवष्टम्भयोरुपाधित्वमिति व्याख्यानं तु बलावष्टम्भेनेतिव्याख्याविरोधात् सहो बलमिति **नारद**विरोधाच्चोपेक्ष्यम् ।

तदेतत् ध्वनयन्नेवाह । **तस्य चेति** । साहसविशेषस्येत्यर्थः । **प्रथमादीति** । प्रथमसाहसमध्यमसाहसोत्तमसाहसभेदेनेत्यर्थः । एतानि कर्मनामानि न तु दण्डस्येति बोध्यम् । **तल्लक्षणं** तेषां त्रयाणां लक्षणानि । जातावेकवचनम् । **तेनैव नारदेनैव । तत्पुनः** तत्तु । शास्त्रेष्वित्युत्तरान्वयि । **तस्य** त्रिविधस्य । **क्षेत्रोपकरणं** तत्सामग्री । एवमग्रेऽपि । **भङ्गो** भञ्जनम् । **आक्षेपो** दोषोत्पादः । **उपमर्दो** म्लानतापादनम् । आद्यशब्देन छेदनादिकम् । **वासो** वस्त्रम् । पूर्वनिपातप्रकरणस्यानित्यत्वान्न दोषः । **एतेनैवेति** । प्रागुक्तभङ्गादिनैवेत्यर्थः । **व्यापादो** मारणम् । **प्राणोपरोधीति** । तन्नाशकमित्यर्थः । **तस्य** त्रिविधस्य । **क्रिया** करणं कर्मेति यावत् । **तदपेक्षः** प्रथमसाहसादिरूपकर्मापेक्षः न तद्विरुद्धः । तद्वेव विविच्याह । **प्रथमस्येति** । 'पञ्चशतेति' बहुव्रीहिः । तृतीये अन्यदप्याह । **वध इति** । उत्तमसाहसे इति सप्तम्यन्तपाठः । कर्मनामेदम् । व्याख्यातमिदं प्राक् ।

सहस्रावरदण्डस्य नियतत्वेऽप्यग्रे कथमिति शङ्कानिरासायोक्तमेव ध्वनयन्व्यवस्थामाह । **वधावध इति । समस्ता** मिलिताः । **व्यस्ता** भिन्नाः ।

## ( उत्तरार्धः )

एवं स्मृत्यन्तरोक्तं विशेषमुक्त्वा तत्सङ्गत्या प्रकृतमवतारयति । **तत्रेति**। तेषां मध्ये इत्यर्थः । **आदिना** सामान्यद्रव्यपरिग्रहः । अत एव तच्छब्दस्य प्रकान्तपरामर्शित्वात्तस्येत्यस्योभयसंग्रहार्थमाह ।

**अपहृतद्रव्यस्येति** । अत्र साहसं कृत्वेत्यनेन सूचितं निह्नवानन्तरं साक्ष्यादिभिर्भावितोऽपि यदि पुनस्तथैव करोति स चतुर्गुणदण्डार्हो न निह्नवमात्रेणेति ।

ननु प्रथमसाहसादिषु **नारदेन** शतावरादयो दण्डा उक्ताः, **मूले** तु द्विगुणचतुर्गुणावुक्ताविति मिथो विरोधादप्रामाण्यम् । पाक्षिकं प्रामाण्यं तु विकल्पस्याष्टदोषदुष्टत्वादयुक्तम् । अत आह । **एतस्मादेवेति** । मूलोक्तादेवेत्यर्थः । **विधानं नारदीयम्** । **अपहारद्रव्येति** । अपह्रियमाणद्रव्येत्यर्थः । अपहारव्यतिरिक्तेति पाठस्तु सुगम एव । द्रव्यापहारव्यतिरिक्तेति पाठान्तरम् । अत्र विशेषसामान्यपदोल्लेखेन तक्रकौण्डिन्यन्यायविषयता सूचिता । तथा च नाप्रामाण्यं, नापि विकल्पः, किं तु विशेषस्य सामान्यापवादकत्वेनापहाररूपविषयविशेषे द्वैगुण्यादिविधायकेनानेन विशेषवाक्येन सामान्यतो विधायकं **नारदीयं** बाध्यते इति भावः ॥ २३० ॥

## याज्ञवल्कीये २३१ श्लोकः ।

साहसं विद्यते यस्य स साहसिकः । 'अत इनिठनौ' (व्या. सू. ५।२।११५) इति ठन् । **तस्य** । **प्रयोजयितारं**, द्विविधं प्रति । एवेनार्थदानव्यवच्छेदः । अत एवापौनरुक्त्यम् । साकाङ्क्षत्वात्प्रत्यासत्तेराह । **साहसिकेति** । पूर्वोक्तादित्यर्थः । दातेति तृजन्तस्य । भावित्वाद्भविष्यामीत्यध्याहारः । तत्फलितमाह । **दास्यमीति** । यद्वा भविष्यत्सामान्ये व्यत्ययेन लुट् । न्यूनतां निराचष्टे । **त्वमिति** । लिङ्गार्थोऽविवक्षित इत्याह । **कारयतीति** । एवमग्रे सर्वत्र बोध्यम् । तत्र हेतुमाह । **अनुबन्धेति** । दोषाधिक्यादित्यर्थः ॥ २३१ ॥

## याज्ञवल्कीये २३२।२३३ श्लोकौ ।

अर्घ्ये 'पादार्घाभ्यां चेति' (व्या. सू. ५।४।२५) यत् । अर्घ्यस्याक्रोशातिक्रमौ करोतीति समासः । तदाह । **अर्घ्यस्यार्घार्हस्येति** । तस्य सापेक्षत्वादन्यार्थे पूर्वेण सिद्धत्वाच्चाह । **आज्ञेति** । नात्र भेदो विदारणम् । समुद्रेत्यस्य वैयर्थ्यापत्तेः । तत्र दण्डान्तरविधानाच्च । अत आह । **उद्घाटयतीति** । सामन्तपदार्थमाह । **स्वगृहेति** । कुलिके अत इनीति ठन् । तत्फलितमाह । **स्वेति** । **ते सर्वे इति** । प्रत्येकमिति भावः ॥ २३२ ॥ २३३ ॥

## याज्ञवल्कीये २३४।२३५।२३६।२३७ ॥ श्लोकाः ।

**किं चेति** । साहसिकविशेषान्तरं प्रत्यन्यदप्याहेत्यर्थः । 'स्वच्छन्दमिति' क्रियाविशेषणम् । तदर्थमाह । **नियोगमिति** । 'ताच्छील्ये णिनि'स्तत्र । **विक्रुष्टे**, महता शब्देनाहते । **शक्तोपीडति** । तन्निवारणे इत्यादिः । एतेनाशक्तस्य दण्डाभावस्तथा अकुर्वतः सूचितः । **अपि**-विरोधेऽनौचित्ये वा, न तु समुच्चये । अकारणे इत्यस्यार्थो **वृथेति** । अत्र विक्रोशो निन्देत्याह । **आक्रोशमिति** । शूद्राः सन्तः प्रव्रजिताः । शूद्रप्रव्रजितानामित्येकम् । तदाह । **दिगम्बरादीनिति** । **तु पाठे,** पाठे तु । **फलेति** । तथा च प्रजननशक्तेर्नाशेन वन्ध्यता तेषां सम्पन्नेति भावः । एषां पित्रादीनां मध्येऽपतितम् अन्योन्यं मिथस्त्यजतीति शाब्दोऽर्थः । तत्फलितमाह । **पित्राद्य इति** ॥ २३४ ॥ २३५ ॥ २३६ ॥ २३७ ॥

इति साहसप्रकरणम् ।

## अथ प्रासङ्गिकप्रकरणम् ।

## याज्ञवल्कीये २३८ श्लोकः ।

एतदवान्तरप्रकरणसङ्गतिमाह । **साहसेति । तत्सदृशेति ।** यथा तेषां समक्षं तत् क्रियमाणं साहसं तथा वस्त्रधावकादिभिरपि सकलजनसमक्षं परवस्त्राच्छादनादि क्रियमाणमिति तस्य तत्सादृश्यात्तत्प्रसङ्गात्तदपराधकर्तॄणां तेषां दण्डमाहेत्यर्थः । **नेजको** वस्त्रधावकः । **आदिना** वक्ष्यमाणसर्वपरिग्रहः । अत एव 'दण्डमिति' जातावेकवचनम् । **निर्णेजनं** प्रक्षालनम् । **अवक्रयमिति ।** करोतीति शेषः । अवक्रयार्थमाह । **एतावदिति । ददातीत्यन्तेन । इत्येवमिति ।** सम्भाष्य । **शाटकं,** वस्त्रमित्यर्थः । भाटकमिति पाठे तत्त्वेनोपलक्षितं वस्त्रमित्यर्थः । तथा च तथा दानमवक्रय इति भावः । अत्र न धनग्रहणमित्याह । **स्वेति ।**

विशेषमाह । **तानि चेति ।** शाल्मलेर्विकाराद्वावण् ।

'पिच्छिला पूरणी मोचा स्थिरायुः शाल्मलिर्द्वयोः ।' **इत्यमरः** ( २ । ४ । ४६ )

**व्यत्यासो** विनिमयः । **स्वगृहे इति ।** चिरमिति भावः । एवमग्रेऽपि । **दण्ड्यः,** नेजकः । **फलके,** पाटीति प्रसिद्धे । **नेनिज्यात्,** प्रक्षालयेत् । **निर्हरेत्** विनिमयं प्रापयेत् । **प्रमादादिति ।** अप्रमादे तु अन्यथा द्रष्टव्यमिति भावः ।

**नारदीय**मादितो व्याचष्टे । **अष्टपणेति ।** बहुव्रीहिः । मूल्यमन्यपदार्थः । अवधिं विनाऽष्टमांशादितो न्यूनताया दुर्वचत्वाद्दिङ्मात्रप्रदर्शनायेदमुक्तमिति बोध्यम् । क्षये इति चरमे उक्तेराह । **नाशितस्येति । पणन्यूनं** सप्तपणात्मकम् । धौतस्येत्यादेरग्रेऽपि सम्बन्धादाह । **द्विर्धौतेति । पादोनं** चतुर्थांशन्यूनम् । तदाह । **पणेति ।** षट्पणात्मकमित्यर्थः । अर्धक्षयादिति व्याचष्टे । **ततः परमिति ।** इदं परत इत्यन्तस्य व्याख्यानम् । सार्वविभक्तिकः प्रथमान्तात्तसिः । प्रतिनिर्णेजनमिति वीप्सायामव्ययीभावः । **अवशिष्टम्,** अर्धम् । **अपचयेन,** तत्क्रमेण । क्वचित् तथैव पाठः । जीर्णमित्यन्तं पूर्वान्वयीत्याह । **यावज्जीर्णमिति ।** जीर्णता च दशासु क्षीणासु ज्ञेयेत्येतदर्थं मूले क्षीणदशमित्युक्तम् । अर्धक्षयोत्तरं पञ्चमप्रक्षालनादिषु अवशिष्टस्यार्धमूल्यस्य पादपादापचयक्रमेण मूल्यकल्पनेति पञ्चमप्रक्षालने पणचतुष्टयात्मकमूल्यादेकपणोनं पणत्रयात्मकं, षष्ठे तत्र पणत्रयात्तस्मात्पादोनं सपादपणद्वयात्मकं, सप्तमे तत्र सपादपणद्वयात्पादोनं किञ्चिदधिकसार्द्धपणात्मकमित्यादि बोध्यमिति भावः ।

जीर्णस्यानियम इति व्याचष्टे । **जीर्णस्येति । अनियम** इति । अस्य प्राक् वाचनिकनियमाभाव इत्यर्थः । तथा सति सर्वथा तदभावो नेति ध्वनयितुं नियमपदसूचितमाह । **इच्छात इति ।** परीक्षकाणामिच्छात इत्यर्थः । तथा च जीर्णनाशे परीक्षकाणामिच्छैव मूल्यदानकल्पनायां प्रमाणं न प्रागुक्तवचनप्रवृत्तिर्नापि स्वेच्छाप्रवृत्तिरिति भावः ॥ २३८ ॥

## याज्ञवल्कीये २३९ श्लोकः ।

अथ प्रागुक्तादिशब्दसंग्राह्याणां क्रमेण दण्डानाह । **पितेत्यादि ।** पण्यस्योपरीत्यन्तैः पञ्चदशभिः पद्यैः केवलं तत्साक्षिणो दण्डो नाभिमतः । तथा सति साक्षित्वोच्छेदापत्तेः । तदभावे

क्वचित् विवादपरिसमाप्त्यभावापत्तेश्च । किं तु यः कलहनिवारणसमर्थः सन्नपि तमनिवारयन् साक्ष्यमङ्गीकरोति तस्य दण्ड इत्याशयेन व्याचष्टे । **पितेति** । तथा च न तावन्मात्रं दण्डप्रयोजकं किं तु अन्यदपीत्याह । **न पुनः कलहमिति** । इदमग्रेऽप्युभयत्र ज्ञेयम् । त्रिपण इति बहुव्रीहिरित्याह । **पणत्रयमिति** । साकाङ्क्षत्वात्प्रत्यासत्तेराह । **त्रिपणादिति** । चतुर्विंशतिमिति व्यस्तः पाठः । तुल्यन्यायत्वादाह । **दम्पत्यादीति** । आदिना गुरुशिष्यादिपरिग्रहः ॥ २३९ ॥

## याज्ञवल्कीये २४० श्लोकः ।

**पूर्वोक्तं,** प्रथमाध्यायान्ते उक्तं राजपत्रम् । द्रम्मनिष्कादयो मूल्याध्यायविवृतौ प्रपञ्चिताः । **कूटं** कैतवम् । तत्स्वरूपं सर्वत्र क्रमेण प्रतिपादयन् कूटकृदिति व्याचष्टे । **देशेत्यादि** । स्थलत्रयेऽन्यथेत्यन्तं तत्स्वरूपं, तदपि द्वेधेत्याह । **न्यूनेति** । एवमग्रेऽपि द्वेधेत्याह । **द्रम्मादेरिति** ।

**उत्तरार्धं** व्याचष्टे । **यश्चैतैरिति** । **कूटैरिति** । अर्शआद्यच् । पूर्वोक्तैः कूटकृद्भिरित्यर्थः । जानन्नित्यनेनाज्ञानतो व्यवहारे दण्डाभावः सूचितः । व्यवहारमात्रं न तावद्दण्डप्रयोजकं, दोषस्य स्वल्पत्वादिति जानन्नित्युक्तमिति बोध्यम् ॥ २४० ॥

## याज्ञवल्कीये २४१ श्लोकः ।

**परीक्षिणं,** परीक्षकम् । दण्डमिति शेषः । **कुर्यादिति** । ब्रूयादित्यर्थः । क्वचित्तथैव पाठः । उभयत्र स्वार्थे कन् । सनाणकेत्यस्य सान्निध्यात् व्युत्क्रमेण व्याचष्टे । **ताम्रादीति** । इतीत्यस्य उभयत्र ब्रूयादिति शेषः ॥ २४१ ॥

## याज्ञवल्कीये २४२ श्लोकः ।

त्रितयं सहैव लाघवेन व्याचष्टे । **यः पुनरिति** । मिथ्याऽऽचरन्नित्याद्यर्थं सहेतुकमाह । **जीवनेति** । जीवनार्थमित्यस्य अग्रिमे चिकित्सामाचरतीत्यत्रान्वयः । **इतीत्यस्य** ब्रुवन् इति शेषः । **तिर्यञ्चः** पशुपक्ष्यादयः ।

विशेषमाह । **तत्रापीति** । उक्तदण्डेष्वपीत्यर्थः । त्रिषु यथाक्रमेणाह । **मूल्येत्यादि** । तिर्यक्षु मूल्यविशेषेण, मानुषेषु ब्राह्मणत्वादिवर्णविशेषेण, राजपुरुषेषु तत्प्रत्यासत्तिविशेषेण दण्डस्य लघुत्वं गुरुत्वं च कल्पनीयमित्यर्थः । विशेषशब्दा भेदपराः ॥ २४२ ॥

## याज्ञवल्कीये २४३ श्लोकः ।

अनर्हत्वे हेतुं सूचयन्नाह । **अनपराधिनमिति** । अत एवाह । **राजेति** । अस्यानुषङ्गेणाग्रे उभयत्र मुख्य उपयोग इति तत्त्वम् । 'प्रमुञ्चती'त्यस्य मध्यमणिन्यायेनोभयत्रान्वय इत्याह । **यश्च बद्धमिति** । अप्राप्तव्यवहारमित्यस्यार्थमाह । **अनिवृत्तेति** ॥ २४३ ॥

## याज्ञवल्कीये २४४ श्लोकः ।

**पण्यस्य,** विक्रेयस्य । योग्यतयाऽऽह । **कूटेति** । अपिसमुच्चेयमाह । **अन्यथा वेति** । मूले द्विशतमिति बहुव्रीहिः । दण्डः अन्यपदार्थः । तत्फलितमाह । **पणानां द्विशतमिति** । अत्रापि बहुव्रीहिरेव, समूहोऽन्यपदार्थ इति विशेषः ।

तुर्यपादं व्याचष्टे । **अपहृतस्येति** । कूटमानादिनाऽपहृतस्य अष्टमांशादप्याधिकत्वे न्यूनत्वे वा दण्डद्रव्यस्यापि द्विशताद्वृद्धिर्हानिश्च कल्प्येत्यर्थः ॥ २४४ ॥

## याज्ञवल्कीये २४५ श्लोकः ।

'भेषजति' द्वंद्वे गतिः प्राग्वत् । गन्धशब्दोऽत्र तादृशद्रव्यवाची न तु गुणमात्रवाची, 'वहति जलमियं पिनष्टि गन्धानि'त्यादिप्रयोगादित्याह । **गन्धद्रव्यमिति** । तद्विशिष्टं द्रव्यमित्यर्थः । हीनपदार्थमाह । **असारेति** ॥ २४५ ॥

## याज्ञवल्कीये २४६ श्लोकः ।

**किं चेति** । ईदृशो विषयोऽन्योऽप्युच्यते इत्यर्थः । मूले वाससीति सप्तम्यन्तं, समाहारद्वंद्व इत्याह । **न विद्यते इति** । जातिरुत्कर्ष इत्याह । **बह्विति** । **तस्मिन्निति** । जातिशून्यमृदादिके इत्यर्थः । तृतीयादिष्विति पुंवद्भावान्नुम्नेति भावः । जातिकरणे इत्यस्य मुख्यजातेस्तत्र ब्रह्मणाऽपि दुष्करत्वात् सहेतुक्रमर्थमाह । **विक्रयार्थमित्यादिना संपादने इत्यन्तेन** । 'गन्धेत्यादिः' द्वंद्वगर्भो मयूरव्यंसकादिः । जातीयस्य सादृश्येत्यर्थः । उक्तमेवोदाहरणतो विशदयति । **यथेत्यादि** । तदेकान्तत्वाभावात्सुगन्धेत्यत्र इत्वं न । आमलकं मृत्तिकाया एव बोध्यम् । गुणोत्कर्षेत्यर्थः । क्वचित्तथैव पाठः । एवमग्रेऽपि । **कार्ष्णायसे इति** । कृष्णायसो विकारादावित्यर्थः । पुनर्गन्धोदाहरणमाह । **बिल्वेति** । रसोदाहरणमाह । **कङ्कोले इति** । प्रसिद्धदेवकुसुमव्यावृत्तये आह । **त्वगिति** । तद्रसमध्ये तन्निक्षेपेण तद्रसाभिव्यक्तेरिति भावः । पुनर्वर्णस्योदाहरणमाह । **कार्पासिके इति** । तत्सूत्रनिर्मिते इत्यर्थः । विक्रेयेत्यस्य व्याख्या **पण्यस्येति** । तत्स्वरूपमाह । **आपादिते इति** । वर्णान्तराद्यापादनेनापादितपद्मरागाद्यात्मकस्य स्फटिकादेरित्यर्थः । यन्मूल्यं तस्मादिति शेषः ॥ २४६ ॥

## याज्ञवल्कीये २४७।२४८ श्लोकौ ।

**करण्डकमिति** । 'समुद्गकः संपुटक' इत्यमरः । ( २ । ६ । १३८ ) महाभाष्ये तु "नेतत् उब्जे रूपं किं तूपसर्गद्वयपूर्वकाद्गमेरन्येष्वपीति ड" इत्युक्तम् । परिवर्ते भावे क्त इत्याह । **परीति** । परिवर्तं चेत्यस्यापि नयति इत्यत्रान्वयः । अतस्तात्पर्यार्थमाह । **योऽन्यदेवेति** । अन्यदेवेत्यस्य व्याख्या । **मुक्तानां पूर्णमिति** । शेषे षष्ठी । एवमग्रेऽपि । सारभाण्डमित्यस्य सरभाख्यमृगपश्वण्डोद्भवमित्यर्थः । तदाह **कस्तूरीति** । अर्थाच्छेषमाह । **कृत्वेति** । **वक्ष्यमाणेति** । भिन्ने पणे त्वित्यनेनैवेति भावः ।

तामेव कथयन् तत्पद्यमुक्तरीत्योक्तव्युत्क्रमेण व्याचष्टे । **कृत्रिमेति** । आदिना तत्परिवर्तग्रहः । **मूल्येति** । वस्तुत इति भावः । **भिन्न**त्वमन्यत्वम् । तच्च द्वेधा । तत्र वृद्धेर्वक्ष्यमाणत्वादाह । **न्यूने इति** । तात्पर्यार्थमाह । **न्यूनेति** । बहुव्रीहिः । एवमग्रेऽपि । तदाह । **तस्मिन्निति** । तादृशे इत्यर्थः । पञ्चाशत्पणेति बहुव्रीहिः । वाच्यार्थस्योक्तत्वात्तात्पर्यार्थमाह । **पणेति** । एवमग्रेऽपि । द्विपणमूल्ये इति बहुव्रीहिगर्भो बहुव्रीहिः ।

अनेनैव वृद्धेरुक्तत्वात्तुर्यपादवैयर्थ्यं परिहरति । **इत्येवमिति** । अनेन प्रकारेणेत्यर्थः । तथा चाधिकसंग्रहार्थं तदिति भावः ॥ २४७ ॥ २४८ ॥

---

१ मुद्राराक्षसे प्रस्तावनायां.

## याज्ञवल्कीये २४९ श्लोकः।

**वणिज इति**।समुदितान्प्रतीत्यर्थः। दोषस्य समुदायनिष्ठत्वात्। पूर्वं तु प्रत्येकं प्रति तद्दोषेणोक्तमिति ततोऽस्य भेदः। वक्ष्यमाणोक्तेराह। **राजेति**। आबाधजनकत्वात्साबाधत्वमित्याह। **पीडेति**। उक्तहेतोरेवार्घमित्यस्यार्थमाह। **अर्घान्तरमिति**। तत्करणे बीजमाह। **लाभेति**। यद्यपि मूलमतेऽशीत्यधिकसहस्रपणात्मक उत्तमसाहसस्तथापि विहिते इति वक्ष्यमाणोक्तेः— (अ. ८। १३८)

"पणानां द्वे शते सार्धे प्रथमः साहसः स्मृतः। मध्यमः पञ्च विज्ञेयः सहस्रं त्वेव चोत्तमः॥"

इति **मन्वनु**रोधेन चाह। **पणेति**॥ २४९॥

## याज्ञवल्कीये २५० श्लोकः।

समुदितान्प्रत्येवान्यदप्युच्यत इत्याह। **किं चेति**। अर्थादाह। **देशान्तरादिति**। अनर्घेणेत्यत्र नञ् अल्पार्थे इत्याह। **हीनेति**। **प्रार्थयमानाः**, सन्तः। **उपरुन्धन्ति,** प्रतिबद्धविक्रयकं कुर्वन्ति। यथास्थितविक्रये दोषाभावादाह। **महेति**॥ **२५०**॥

## याज्ञवल्कीये २५१ श्लोकः।

**वर्तितव्यं,** व्यवहर्तव्यम्। राजनि इति वटे गाव इतिवत्सामीपिकमधिकरणमित्याह। **संनिहिते इति**। अर्थादाह। **यस्तेनेति**। राज्ञेत्यर्थः। प्रत्यहमिति शेषः। मूले तस्योभयान्वयित्वात्। स्वान्निवर्तते इति नार्थः, तस्मादित्यस्यानन्वयापत्तेः। अत आह। **निर्गत इति**। स्वपदार्थः **अवशेष इति**। अत एवाह। **तस्मादिति**। मौलस्यार्थो **राजेति**। तात्पर्यं सर्वमिति न्यायेनाह। **स एवेति**। एवव्यवच्छेद्यमाह। **न पुनरिति**। वणिगिच्छाकल्पितार्घादवशेष इत्यर्थः।

**मनुवि**रोधपरिहारं स्पष्टत्वात् हृद्येवानुसन्दधान आह। **मनुनेति**। चस्त्वर्थे। **पञ्चरात्रे इति**। तथेत्यनेन अग्रेऽप्युभयत्र वीप्सा सूचिता। तथा चास्थिरार्घाणां पञ्चसु दिनेषु गतेषु, किञ्चित्स्थिरार्घाणां पक्षे गते, स्थिरार्घाणां मासे गते सति राजा आप्तपुरुषैः एषामर्घविदां वणिजां प्रत्यक्षं स्वसमक्षमित्यादि तद्व्याख्यातारः।

एषां पूर्वोक्तानां सर्वपण्यानामर्घस्य व्यवस्थापनं प्रत्यक्षं स्वसमक्षं स कुर्यादित्यर्थ इत्यन्ये।

"तुलामानं प्रतीमानं सर्वं च स्यात्स्वलक्षितम्। षट्सु षट्सु च मासेषु पुनरेव परीक्षयेत्॥"

इत्यपि तेनोक्तम् (अ. ८। ४०३)। 'पक्षे पक्षेऽथ वा गते' इति पाठान्तरं व्याख्यातृदादिसम्मतम्। अत्र वीप्सया दशसु दिनेषु मासे वा गते इति नार्थः, किं तु पञ्चदिनानन्तरं पक्षान्तरमित्येवम्। वीप्सा तु अवश्यकर्तव्यतया यावज्जीवं कर्तव्यतया च नित्यतां बोधयति "वसन्ते ज्योतिषा" इतिवदिति भावः॥ २५१॥

## याज्ञवल्कीये २५२ श्लोकः।

पूर्वोत्तरयो राजधर्मत्वेन मध्यमस्य असम्बद्धत्वादप्रामाण्यनिरासायाह। **किं चेति**। अर्घकरणे विशेषान्तरमाहेत्यर्थः। स्वदेशेत्यत्र अर्शआद्यच्। तदाह। **स्वेति**। बहुव्रीहिर्वा। स्वदेश्योति पाठस्तु सुगमः। ततः 'तत्र भव' इत्यर्थे (व्या. सू. ४।३।५३) 'दिगादित्वा'द्यत् (व्या. सू. ४। ३।५४)

एवमग्रेऽपि । शतमित्यस्य प्रतीतिं शेषः । तत्फलितमाह । **पणशते इति** । परदेश्ये शाब्दोऽर्थ उक्तः । तत्फलितमाह । **प्राप्ते इति** । परदेशात्प्राप्ते पण्ये त्वित्यर्थः । शतेति त्रिपदो बहुव्रीहिः । तुर्यपादोक्तमुभयोः शेष इत्याह । **यस्येति** । वणिज इत्यर्थः । एतेन य इति व्याख्यातम् । क्रयेत्यत्र द्वन्द्वान्मत्वर्थे इनिरित्याह । **पणस्येति** । सद्यःपदार्थो **दिवसे इति** । एतत्फलितं वक्ष्यमाणरीत्याऽऽह । **यः पुनरिति** ।

नन्वत्र वणिग्धर्मस्योक्तत्वेन राजानं प्रत्यनुक्तत्वात्किंचेत्यसङ्गतिः, मध्येऽसम्बद्धत्वापत्तिश्च, अत आह । **एवं चेति** । उक्तार्थस्य शाब्दत्वे चेत्यर्थः । **यथा,** यादृशा । **स्थापनीय इति** । फलितमिति शेषः । अन्यथा परदेशविषये वक्ष्यमाणत्वेनात्रानुक्त्या न्यूनतेति भावः ॥ २५२ ॥

## याज्ञवल्कीये २५३ श्लोकः ।

तदेवाह । **परदेश्येति** । यद्यप्यत्र सामान्येनार्घनिरूपणप्रकारः प्रतीयते इतीदमवतरणमयुक्तं तथापि " व्ययं पण्यसमुद्भवम् " इत्युक्तेः परदेशादानीयमानद्रव्यस्यैव बहुव्ययसम्भवात्स्वल्पव्ययनाशे तथाक्षत्यभावात्तत्परत्वमेवास्येत्याह । **देशान्तरादित्यादिना** । **भाण्डेति** । तदुपयोगिपात्रादिग्रहणेत्यर्थः । **अर्थः,** द्रव्यव्ययः । द्रव्यं पणस्योपरीत्यस्यार्थमाह । **पण्यमूल्यनेति** । प्रागुक्तैकवाक्यतयाऽऽह । **यथेति** । अनुग्रहकृदित्यस्यार्थमाह । **अनुग्रहकार्यर्घ इति** । कार्य इत्यस्यार्थः । **स्थापनीय इति** । **मनुरपि**—( अ. ८ । श्लो. ४०१ )

"आगमं निर्गमं स्थानं तथा वृद्धिक्षयावुभौ। विचार्य सर्वपण्यानां कारयेत्क्रयविक्रयौ ॥"इति ॥२५३॥

इति प्रासंगिकप्रकरणम् ॥

---

## अथ विक्रीयासम्प्रदानप्रकरणम् २१ ।

सङ्गतिमाह । **प्रासङ्गिकमिति** । विक्रयप्रसङ्गादाह । **अधुनेति** । **मूल्येन,** तस्य ग्रहणेन । क्रेतुरिति सम्बन्धे षष्ठी । एवमग्रेऽपि । **तत्र** प्रारभ्यमाणे विवादपदे । घटकत्वं सप्तम्यर्थः । **चराचरेति** । जङ्गमस्थावरेत्यर्थः । **पुनरिति** । यथासम्बन्धे षष्ठी । द्विविधस्य तस्येत्यर्थः । **तेनैव, नारदेनैव** । **तस्य त्विति** । तस्य द्विविधस्य बुधैर्मन्वादिभिर्दानादानयोर्विधिक्रमो विधानक्रमः करणप्रकारो यथासम्भवं षड्विधः कथित इत्यर्थः । **कल्पतरौ** तु—

" लोकेऽस्मिन् द्विविधं पण्यं जङ्गमं स्थावरं तथा । क्रयविक्रयधर्मे तु सर्वं तत्पण्यमुच्यते ॥ "

" षड्विधस्तस्य तु बुधैर्दानादानविधिः स्मृतः "—इति पाठः । तदेवाह । **गणितमिति** । संज्ञाशब्दा एते । रूपत इति तृतीयान्तात्तसिः । **कर्पूरेति** । कुंकुमादीति पाठान्तरम् । अनन्वयनिरासायाह । **उपलक्षितमिति** । एवमग्रेऽपि उभयत्र । **पण्याङ्गना** वेश्या । **आदिना** वस्त्रादि ।

## याज्ञवल्कीये २५४ श्लोकः ।

उक्तसङ्गत्या मूलमवतारयति । **एतदिति** । तस्य तत्त्वेन विवक्षायां षष्ठी तत्रेत्याह । **क्रेत्रे इति** ।

तृतीयपादार्थमाह । **तच्चेति** । **अल्पेति** कर्मधारयः । **अर्घो** मूल्यम् । अर्थादाह । **पण्यमिति** । प्राग्वत् तस्येत्यस्यार्थमाह । **क्रेत्रे इति** ।

तस्यैवान्यथाऽर्थमाह । **यदेति** । यावदित्यस्य प्रतिपन्नमित्यत्रान्वयः । **यतः** यस्य । **प्रतिपन्नमिति** । निश्चितमित्यर्थः । **तावदेवेति** । अस्तीति शेषः । " किं तु " इत्यस्यात्रान्वयः । अत्रैव पक्षे उदयांशे पक्षान्तरमाह । **द्विकमिति** । अनयोर्व्यवस्थामाह । **क्रेतृवाञ्छेति** । **आवहेत्,** दद्यात् । अत्र अवहानिः उक्तस्याप्युपलक्षणम् । **स्थानिनां,** स्वदेशमात्रस्थितिकानां वणिजाम् । अत इनीति इनिः । ' स्थायिनामिति ' **कल्पतरौ** पाठः ।

विशेषमाह । **यदा त्विति** । उपभोगस्वरूपमाह । **तदाच्छादनेति** । **मूल्येन,** तद्ग्रहणेन । **स्थावरस्य,** ग्रामक्षेत्रादेः । **जङ्गमस्य,** गवादेः । **क्रियाफलं,** दोहादेः क्षीरादिकम् ।

यत्तु क्षयं सस्याद्युपघातजापक्षयामिति **कल्पतर्वादयः** तन्न पौनरुक्त्यापत्तेरित्याह । **विक्रेतुरिति** । ननु तस्य तत्त्वं विरुद्धम्, अत आह । **क्रेत्रिति** । तावत्पर्यन्तं तत्सम्बन्धस्य तत्र क्षीणत्वात्तद्वैशिष्ट्येन तस्यापि क्षीणत्वमिति भावः । ' क्षय ' इत्यत्र कर्मण्यच् । **नारदमाह** । **उपहन्येतेति** । **इत्यत्रेति** । इत्यनेनेति पाठान्तरम् ।

वस्तुतस्तु ' क्षि निवासगत्योः' इत्युक्तेः 'क्षयो निवासे' इत्युक्तेश्चायं निवासार्थक इति न कोऽपि क्लेश इति बोध्यम् ।

**मौलं** तुर्यपादं व्याचष्टे । **यदा त्विति** । तत्रोभयत्र सप्तमीपञ्चमीसमासावित्याह । **देशान्तरादिति** । **मूले** वाशब्दः चार्थे । तेन पण्यसमुच्चयः । तत्फलितमाह । **तेनेति** ।

वक्ष्यमाणैतदवान्तरप्रकरणसङ्गत्यर्थमाह । **अयं चेति** । क्रीतस्य पण्यस्य समर्पणेत्यर्थः । **मनूक्तमिति** । क्रयविक्रयानुशयाख्यविवादप्रकरणे इति भावः । एवं च **मनु**ना तेनैवास्य कथितप्रायत्वादिदं पृथङ्नोक्तमिति बोध्यम् ।

" यस्येहानुशयो भवेत् । सोऽन्तर्दशाहे तद्द्रव्यं दद्याच्चैवाददीत वा ॥ " ( अ. ८ ।२२२ )
इति तच्छेषः ॥ २५४ ॥

## याज्ञवल्कीये २५५ श्लोकः ।

अत एवानुशयेऽन्यदप्युच्यते इत्याह । **किं चेति** । तदेवाह । **जातेति** । पूर्वेत्युभयत्रान्वयि । तत्राद्ये धातोस्तादिच्छायां लक्षणेत्याह । **जिघृक्षतीति** । अजातानुशये आह । **यदा पुनरिति** । आलस्यादिरग्रहणे हेतुः । अत्र न लक्षणेति भावः ॥ २५५ ॥

## याज्ञवल्कीये २५६ श्लोकः ।

अपि चेति प्राग्वत् । एवमग्रेऽपि । **अपिना** जातानुशयसमुच्चयः । राजदैवे इदमर्थेऽण् इति फलितमाह । **राजेति** । तात्पर्यार्थमाह । **अत इति** । अस्माद्धेतोरित्यर्थः ॥ २५६ ॥

## याज्ञवल्कीये २५७ श्लोकः ।

**किञ्चेति** प्राग्वत् । जातानुशये **मनू**क्तत्वादाह । **विमैवेति** । **अन्यस्येति** । एकस्येति पाठान्तरम् । **पुनः,** पश्चात् । अर्थादाह । **अन्यस्येति** । अदुष्टवदिति वत्यन्तस्यार्थमाह ।

**प्रच्छादितेति** । **तदेति** । 'तत्रेति' शेषो **मौल** एव । 'विक्रेतरीति' तदर्थः । **अत्र,** उक्तविषये । **अपि**र्भिन्नक्रमः । विशेषोऽपीत्यर्थः । **अपि**नोक्तसमुच्चयः । मूले मूल्यांशे न्यूनाधिकभावानुक्तत्वेन समताप्राप्तौ तत्र द्वैगुण्यरूपो विशेषः, दण्डांशे द्वैगुण्यं तु तुल्यमेवेति भावः । यद्वा यथाश्रुत एवापिरन्यमुनिसमुच्चायकः । **विनयं,** दण्डम् । **तावत्,** अव्ययमिदम् । तावन्तमेव द्विगुणमेव ।

विशेषमाह । **सर्वत्रेति** । न त्वव्यवाहितोक्ते एवेति भावः । **अयं विधिः,** सकलदण्डविधिः । **अदत्ते,** पण्ये ॥ २५७ ॥

## याज्ञवल्कीये २५८ श्लोकः ।

अवान्तरप्रकरणसमाप्तिमाह । **इति विक्रयेति** । न्यूनतां पौनरुक्त्यं च परिहराति । **क्रीतेति** । क्रयेत्यर्थः । भावे क्तः । परिक्षाया अभावेऽनुशये दोषाभावादाह । **परीक्षितेति** । कर्मधारयौ । क्रीत्वेत्यस्यार्थः । **क्रयोत्तरेति** । परिमाणमर्घान्मूल्यस्य विशेषणेन व्यावर्त्यतया बोधितमर्थमाह । **वृद्धीति** । निषेधस्य शाब्दत्वेन तदसम्भवादाह । **व्यतिरेकादिति** । भेदादित्यर्थः । पूर्वमुक्तमपि पुनः अभिप्रायं वक्तुमाह । **अनुशयेति** । **च**स्त्वर्थे । **क्रीत्वेति** । व्याख्यातमिदं प्राक् । विरोधपरिहारमपि प्रागुक्तमेव तथा आह । **अपरीक्षितेति** । अपरीक्षितवस्तुक्रयेत्यर्थः । **दशैकेति** । **मानव**मिदम् । उक्तफलितार्थमुपसंहराति । **तदिति** । तस्मादित्यर्थः । **अनया,** क्षयं वृद्धिं चेति विशेषघटितयेत्यर्थः । अभिप्रायमेव प्रकाशयति । **यथेति** । **दोषाणामिति** । अनुशयकारणत्वमवगम्यते इत्यस्यानुषंगः ।

**तुर्यपादा**र्थमाह । **अत इति** । तेषां तस्य च तत्कारणत्वादित्यर्थः । **तत्** मूल्येत्यर्थः । **क्षयेति** । एतद्रूपकारणत्रितयेत्यर्थः । **अनुशयकालेति** । नारदोक्तानुशयकालादिमध्येऽपीत्यर्थः । पूर्वसाम्यप्रदर्शनसाफल्याय तुल्ययुक्त्याऽऽह । **अनुशयकारणेति** । एतत् प्रसंगेन विशेषमाह । **उपभोगेनेति** । अनेन पण्यदोषाभावः सूचितः । स्थिरेत्यनेन वृद्धिक्षयाभावः सूचितः । **परेणेति** । क्रीत्वा विक्रीयेति शेषः । **न दद्यात्,** न त्यजेत् । **दापयेत्,** विक्रेता बलेन न ग्राहयेत् । विक्रीतं बलेन गृह्णन् परित्यजंश्चेत्यर्थः । **षट् शतानि,** पणान् ॥ २५८ ॥

इति विक्रीयासम्प्रदानप्रकरणम् ।

---

## अथ सम्भूयसमुत्थान प्रकरणम् ॥ २२ ॥

समयप्रसंगादाह । **संभूयेति** ।

## याज्ञवल्कीये २५९ श्लोकः ।

**सम्प्रतिपत्तिरिति** । निश्चय इत्यर्थः । वणिजामित्युपलक्षणमित्याह । **वणिङ्नटेति** । **द्वितीयपादार्थ**माह । **लाभेति** । लभ्यत इति लाभस्तल्लाभेच्छयेत्यर्थः । लिप्सव इति पाठान्तरम् । तथा सत्त्वेऽपि तस्य प्रत्येकसाध्यत्वादाह । **प्रातिस्विकमिति** । यथाद्रव्यमिति योग्यतायामव्ययीभावः । तदाह । **येनेति** ।

**तुर्य**पादार्थमाह । **यद्वेति** । कृतावित्यस्यार्थः । **संप्रतिपन्नाविति** । अर्थादाह । **तथेति** । **एवं** प्रागपि ॥ २५९ ॥

## याज्ञवल्कीये २६० श्लोकः ।

अन्यदप्याह । **किं चेति** । **तथा**, यन्नाशितम् । प्रमादादित्यस्य व्याख्या **प्रज्ञेति** । चो वाऽर्थे इत्याह । **वेति** । तथा च नाशितमित्यस्य सर्वत्र सम्बन्ध इति भावः । **वणिग्भ्यः**, स्वसमवायिभ्यः । अत एव प्रातिस्विकमिति प्रागुक्तम् । विप्लवाच्चेत्याद्यर्थमाह । **य इति** । विप्लवार्थमाह । **व्यसनादिति** । नाशादित्यर्थः । स्वशक्त्येति भावः । इदमधिकम् । तस्य ततो लाभादि तु प्रागुक्तमेव । तथा **नारदो**ऽपि, ( अ. ३ । श्लो० ६ )

" दैवतस्कर राजाग्निव्यसने समुपस्थिते । यस्तत्स्वशक्त्या रक्षेत्तु तस्यांशो दशमः स्मृतः" ॥ इति ॥२६०॥

## याज्ञवल्कीये २६१ श्लोकः ।

एवं तेषामुक्त्वा राज्ञ आह । **अर्घेति** । **मनु**रपि, ( अ. ८ । श्लो. ३९८ । ३९९ )

" शुल्कस्थानेषु कुशलाः सर्वपण्यविचक्षणाः । कुर्युरर्घं यथापण्यं ततो विंशं नृपो हरेत् ॥

" राज्ञः प्रख्यातभाण्डानि प्रतिषिद्धानि यानि च । तानि निर्हरतो लोभात्सर्वहारं हरेन्नृपः ॥" इति ।

**अर्घस्येति** । तस्येति पाठान्तरम् । हेतौ पञ्चमीत्याह । **हेतोरिति** । **असौ**, नृपः । शुल्कमित्यस्यार्थः **शुल्कार्थमिति** । करार्थमित्यर्थः । पूर्वेणापौनरुक्त्यायाह । **प्रतिषिद्धमिति** । राजगामित्वे विक्रीतत्वं दोषो हेतुरित्याह । **लाभेति** । अन्यत्रेति शेषः । अत एव फलितमाह । **मूल्येति** । **सर्वं**, द्विविधम् ॥ २६१ ॥

## याज्ञवल्कीये २६२ श्लोकः ।

अथ दण्डमाह । **मिथ्येति** । राजदण्डे बीजमाह । **शुल्केति** । शुल्कपदं लाक्षणिकमित्याह । **शुल्कग्रहणेति** । क्रयश्च विक्रयश्च क्रयविक्रयौ, व्याजो विवादस्तत्सहितस्य पण्यस्य तौ, ततो मत्वर्थे इनिरित्याह । यश्चेति । **मनु**रपि, ( अ. ८ । ४०० )

" शुल्कस्थानं परिहरन्नकाले क्रयविक्रयी । मिथ्यावादी च संख्याने दाप्योऽष्टगुणमत्ययम् " ॥ इति ॥ २६२ ॥

## याज्ञवल्कीये २६३ श्लोकः ।

दण्डान्तरमाहेत्याह । **अपि चेति** । वचनं व्याख्यातुमुपोद्घातमाह । **शुल्कं हीति** । मूलमाह । **अर्घप्रक्षेपणादिति** । **पणमिति** । **तरे** नौकादौ । **यानं**, रिक्तशकटादिकं प्रतिपणं दाप्यः । **पौरुषे** पुरुषभारविषये तरेऽर्द्धपणं दाप्यः । **पशु**र्गवादिः, **योषित्** वक्ष्यमाणभिन्नस्त्रीमात्रं, **पादं** पणचतुर्थांशं दाप्यः । **रिक्तकः** भाररहितः, **पुमान्** मनुष्यः, **पादार्धं** पणाष्टमभागं दाप्यः । **भाण्डं** पण्यद्रव्यं तेन पूर्णानि यानानि शकटादीनि सारतः द्रव्यगतोत्कर्षापेक्षया **तार्यं** तरणमूल्यं दाप्यानि । रिक्तभाण्डानि पण्यद्रव्यरहितानि गोण्यादीनि अपरिच्छदा दरिद्राश्च उक्तपादार्धदानापेक्षया[1] यत् किंचित् दापनीया इत्यर्थः । किं च—

" दीर्घाध्वनि यथादेशं यथाकालं तरो भवेत् । नदीतीरेषु तद्विद्यात्समुद्रे नास्ति लक्षणम् " ॥ इति **मनुः** । ( अ. ८।४०६ )

---

१ क—पदार्थ. ख—पादार्थ ।

पूर्वं पारावारे तरणार्थमुक्तम् । इदानीं नदीमार्गेण दूराध्वनि गन्तव्ये प्रबलवेगस्थिरोदकनद्यादि-देशग्रीष्मवर्षादिकालापेक्षया तरमूल्यं कल्पनीयम् । एतच्च नदीतीरे बोध्यम् । समुद्रे तु वाताधीन-पोतगमनत्वात्स्वायत्तत्वाभावेन तरपणविशेषज्ञापकं नदीवद्योजनादिकं तत्र नास्ति, ततस्तत्रोचितमेव तरमूल्यं ग्राह्यमिति तद्व्याख्यातारः ।

**शुल्कद्वयेऽपि** स्थलजे जलजे च । **न भिन्नेति** । **मानवं वासिष्ठं** चेदम् । **भिन्नो** न्यूनः **कार्षापणो** मूल्यं यस्य वस्तुनस्तत्तथा तन्निमित्तः शुल्कोऽपि भिन्नकार्षापणः । तेन कार्षा-पणादर्वाग्यस्य मूल्यं तस्य शुल्को न ग्राह्य इत्यर्थः ।[1]शुल्कशब्दः अर्द्धर्चादिः । शिल्पं वृत्तिर्यस्य तत्र । भैक्षे वृत्तं वर्तनं जीवनं यस्य तत्र । भैक्षलब्धे इति पाठान्तरम् । हृतादवशेषो यस्य तत्र । यज्ञस्तदुपकरणं, दीक्षितो वा, तत्र गन्तुकामो जनसमूहो वा । **मनु**रपि—( अ. ८ । श्लो० ४०७ ) "गर्भिणी तु द्विमासादिस्तथा प्रव्रजितो मुनिः । ब्राह्मणा लिङ्गिनश्चैव न दाप्यास्तारिकं तरे ॥" इति ।

सञ्जातगर्भा स्त्री मासद्वयादूर्ध्वं, तथा प्रव्रजितो भिक्षुर्मुनिर्वानप्रस्थः ब्राह्मणाश्च लिङ्गिनो ब्रह्मचारिणश्च । एते मूल्यं तरे न दाप्या इत्यर्थः ।

अथ मूलार्थमाह । **तीर्यत इति** । स च शुल्के लाक्षणिकः । ततः अत इनीति ठन् । तत्फलितमाह । **तज्जन्येति** । **वेश्मेति** । तं प्रतीति सामीप्येऽव्ययीभावः । तदाह । **स्ववेश्मेति** । गृहमिति शेषः । **तत्रेति** । 'अव्ययीभावाच्चेति' ( व्या. सू. ४ । ३ । ५९ ) ञ्यप्रत्यय इति भावः । विशेषानाह । **श्रुतेत्यादि** ॥ २६३ ॥

## याज्ञवल्कीये २६४ श्लोकः ।

प्रेतपदार्थो **मृत इति** । द्रव्यपदं योग्यतया विशेषपरमित्याह । **तदीयमंशमिति** । तादित्यस्य तत्रान्वय इति भावः । यद्यपि दायादशब्दोऽन्यत्राप्यस्तीति प्रागुक्तं तथापि 'ब्राह्मण-वसिष्ठ'न्यायेनाह । **पुत्रेति** । मातृपक्षे भवाः । 'दिगादि'त्वाद्यत् । **सपिण्डेति** । सगोत्रसपिण्डे-त्यर्थः । **आदिना** सोदकादिः । तैरित्यनेन सर्वपरामर्श इत्याह । **दायादेति** । **च**स्त्वर्थे । एवमग्रेऽपि । **वैकल्पिकमिति** । न तु युगपदिति भावः ।

नन्वेवं क्रमे नियामकाभावेनैच्छिकविकल्पापत्तौ व्रीहियवादिवत् "पत्नी दुहितर" इति क्रमबोधकवचनविरोधापत्तिः, अत आह । **पौर्वापर्येति** । तथा च व्यवस्थितोऽयं विकल्पो नत्वैच्छिकः । व्यवस्था च पत्नी दुहितर इति बोधितपौर्वापर्याबाधेन ज्ञेयेति भावः ।

नन्वेवं सति फलाभावादेशान्तरेति नारभ्यम्, अत आह । **शिष्येति** । "गोत्रजा बन्धु-शिष्य" इत्यनेन "सर्वेषामप्यभावे तु" इत्यनेन च क्रमेण प्रतिपादिताधिकारित्वकशिष्यादि-निवृत्तिः, वणिजस्तत्रानुक्तत्वेन तत्प्राप्तिश्च एतद्वचनप्रयोजनमित्यर्थः । अतः पुत्रादिबन्धुपर्यन्ताना-मभावे संभूयकारिणो वणिजो गृह्णीयुरिति भावः ।

तत्र विशेषमाह । **वणिजामपीति** । पिण्डदातृत्वस्य तदव्याप्यत्वस्य प्रागुक्तत्वादाह । **ऋणेति** । ऋणं प्रतिकुर्युरित्यनेनेदमुक्तं प्राक् । आदिना दत्तऋणोद्धारपरिग्रहः ।

विशेषान्तरमाह । **सामर्थ्येति** । विभज्य ग्रहणे हेतुं सूचयन्नाह । **संसृष्टिन इति** । यद्यपि नात्र मुख्यं संसृष्टित्वं तथापि तेन न्यायेनात्रापि तथैवेति भावः ।

---

१ व्या. सू. ( ४ । ३ । ५४ )

विशेषान्तरमाह । **तेषामपीति** । दशवर्षमिति, बहुव्रीहिः । **तद्विदमिति** । दशवर्षपर्यन्तं स्थापनमित्यर्थः । **एकस्येति** । संभूय कर्म कुर्वतां वणिजां मध्ये यद्येकस्य मरणं भवेत् तदाऽस्य मृतस्य तद्वस्तु दायादः पुत्रादिः बन्ध्वन्तो जनः पूर्वपूर्वाभावे उत्तरोत्तर आप्नुयात् । दायादे उक्तरूपे असति अन्यो वणिग्वा शक्तश्चेत् ऋणदानादिसमर्थश्चेदाप्नुयात् । एकस्य तत्रासामर्थ्ये सर्वेषां च सामर्थ्ये तादृशाः ते वणिजः सर्वे एवाप्नुयुरित्यर्थः । **तदभावे** वणिजामभावे । **गुप्तं** रक्षितं, **तत्** तदीयधनं, **ततः** तावत्पर्यन्तस्थापनोत्तरमस्वामिकत्वादिविशिष्टम् । **तत्** धनं राजा स्वीयं कुर्यात्, एवं सति न धर्मस्य हानिरित्यर्थः ॥ २६४ ॥

## याज्ञवल्कीये २६५ श्लोकः ।

वणिजं प्रत्यन्यदप्युच्यते इत्याह । **किं चेति** । 'निर्गतलाभामिति' बहुव्रीहिः । तस्याप्यर्थमाह । **लाभमिति** । तमदत्त्वेत्यर्थः । सम्भूयकारिणि इति शेषः । अशक्त इत्यस्यार्थमाह । **संभूयेति । भाण्डेति** । भाण्डस्य भारः संरक्षणादिरूपः तस्य वहनमित्यर्थः । **तत्** भाण्डम् । **नारदो**ऽपि (अ. ३ । श्लो० ४)

"भाण्डपिण्डव्ययोद्धारभारसारान्ववेक्षणम् । कुर्युस्तेऽव्यभिचारेण समये स्वे व्यवस्थिताः ॥" इति ।

भाण्डं विक्रेयद्रव्यम् । पिण्डः पाथेयम् ।

### (उत्तरार्धः)

**प्रागिति** । प्रकरणारम्भे इत्यर्थः । आदिग्राह्यं वचने एव स्फुटम् । अनेनेत्यस्यैतत्प्रकरणादौ उक्तेनेत्यर्थः । अन्यथा असंभवात् । तदाह । **लाभेति** । श्रुतिक्रमेणाह । **होत्रेति** । कर्षकपदार्थमाह । **कृषीति** । कर्मिपदे अत इनीतीनिः । तदर्थमाह । **नटेति** । कर्मपदार्थमाह । **शिल्पेति** । **तत्र च** तेषां मध्ये च । श्रुतिविहितदक्षिणया विभागप्रकरणस्य **मनू**क्तत्वाद्दक्षिणाप्रापकं वचनमाह । **तं शतेन दीक्षयन्तीति** । पूर्वं गवां प्रस्तुतत्वात् शतेन गवां शतेन तं यजमानं अध्वर्य्वादयो दीक्षयन्तीत्यर्थः । यतो दक्षिणाग्रहणेन यजमानायत्ताः भवन्ति ।

ननु अतो दीक्षोद्देशेन गोशतग्रहणं प्रतीयते न दक्षिणाया विधिः, तत्कथं दक्षिणाप्रापकमिदम्, अत आह । **इति वचनेनेति** । अयं भावः । यथा भुजिक्रियासाध्ये तृप्त्यात्मके कार्ये पयसा तृप्तिं कुर्वीतेति पयोद्रव्ये विहिते तत्पयो भोजनसाधनस्यौदनस्य स्थाने निपतति तथाऽत्रापि दीक्षयन्तीति णिजर्थभूतं दीक्षाकरणम् ऋत्विजामानतिरूपं दक्षिणादानस्य कार्यं, तेषामानतिर्नम्रभावः स्वायत्ततेति यावत् । **भृतिं गृहीत्वा** भृत्या इव दक्षिणां गृहीत्वा **स्वायत्ता भवन्ति हि ऋत्विजः । तस्मिन्** तेषामानतिरूपे दक्षिणादानस्य **कार्ये** गोशतं **विधीयमानं** दक्षिणादानरूपव्यापारसाधनभूतदक्षिणायाः स्थाने निपततीत्यर्थाद्गोशतमेव दक्षिणा भवतीति दक्षिणाप्रापकमिदं वचनमिति गोशतं दक्षिणात्वेन विधीयत इति ।

अथ **मानवं** व्याख्यातुमवतारयति । **ऋत्विजश्चेति** । **तत्र** तेषां मध्ये गोशते वा । **इदं** मानवम् । अथ व्याचष्टे । **सर्वेषामिति** । उक्तरीत्यैवाह **होत्रेति** । ब्रह्मत्वस्योभयसाधारण्यादाह । **ब्रह्मेति** । शतार्धत्वस्य पञ्चाशति सत्त्वात्तत्रैव विभागप्राप्तौ आशयं प्रकाशयन् विशेषमाह । **सर्वेषां भागेति** । भागस्य विभागस्य यत्परिपूरणं तदर्थं योपपत्तिस्तस्या वशेन तदधीनतया तदनुरोधेनायातः प्राप्तश्चासावष्टचत्वारिंशद्रूपश्चासावर्धश्च तेन, धान्येन धनवानितिवत्तृतीया, सामान्यविशेषयोरभेदान्वयः ।

तद्रूपार्धभाज इत्यर्थः । एवमग्रेऽपि । मत्वर्थीय इनिः सर्वत्र । प्रकारान्तरेण दक्षिणाविभागस्य कर्तुमशक्यत्वादीषन्न्यूनत्वेऽपि सामीप्येन तद्ग्रहणमिति भावः । तच्छब्देन श्रुतानुमितयोरिति न्यायेन श्रुतपरामर्शस्यैवौचित्यादाह । **मुख्यांशस्येति** । अष्टाचत्वारिंशद्रूपस्येत्यर्थः । एतेनावशिष्टद्विपञ्चाशद्रूपस्यैव कुतो न परामर्श इत्यपास्तम् । उक्तरीत्या स्थलद्वये निर्वाहेऽप्यन्ते अनिर्वाहाच्च । 'तृतीयिनः पादिन' इति तयोः श्रौती संज्ञा । योगोऽपि उक्त एव । **मानवे** तृतीयांशा इति बहुव्रीहिः । एवमग्रेऽपि । तत्फलितमाह । **मुख्यांशेति** । प्रत्यासत्तेरिति भावः । एवमग्रेऽपि । षोडशगवरूपेति पाठः । गोरूपेत्यपपाठः । एवं द्वादशगवरूपेत्यत्रापि । अयं **मनूक्तः । बृहस्पति**रप्येवमेव ।

तत्र मूलोक्तप्रकारद्वयाविषयत्वमाह । **न तावदिति । नापीति च** । प्रधानस्याधिकांशोऽन्येषां न्यूनन्यूनतरन्यूनतमांशा इति न समयः कृतः । नाप्येकेन दशान्येनाष्टावन्येन षडित्यादिरूपेण वाणिज्ये इव द्रव्यसमवायः कृत इत्यर्थः । **नापि वचनं**, श्रौतम् । **यद्वशात्** यद्बलात् । **अतः**, परिशेषात् । युक्तमित्यत्रान्वयः ।

दशमतृतीयपादाधिकरणं "समं स्यादश्रुतत्वात्" इति । ज्योतिष्टोमे श्रूयते गावश्चाश्वाश्चाश्वतराश्च गर्दभाश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणेति पूर्वतराधिकरणे गवां द्वादशशतमितराण्यश्वादीनि च दक्षिणेति उपपादितम् । पूर्वाधिकरणे त्वियमेव दक्षिणा विभाज्येत्यप्युक्तम् ।

तत्र स्थिते विभागे चिन्ता, किं समो विभाग उत प्रयासानुरूप उतार्धिन इत्यादिसमाख्यानुरूप इति संशयः । तत्र विशेषाश्रवणात्समो विभागः सर्वेषामृत्विजां स्यादिति प्राप्ते सिद्धान्त्येकदेशी आह । **लोकवत्** । प्रयासानुरूपेण विभाग इति । तदभिप्रेत्योभयं शङ्कक आह । **सममिति** । विशेषाश्रवणात्सममित्यर्थः । **सर्वेषाम्**, ऋत्विजाम् । **कर्मेति** । ऋत्विजां स्वस्वकर्मणि वैषम्यात्कर्मानुरूपेणेत्यर्थः । अथैवं प्राप्ते तत्र सिद्धान्ती आह । द्वादशाहे दीक्षाक्रमवाक्ये अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति तत उद्गातारं ततो होतारं ततस्तं प्रतिप्रस्थाता दीक्षयित्वाऽर्धिनो दीक्षयति ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति ततस्तमुन्नेता दीक्षयित्वा पादिनो दीक्षयतीत्येवंविधा अर्ध्यादिसमाख्याः श्रूयन्ते । अतस्तद्वशात् ब्राह्मणाच्छंसिप्रभृतीनां तदनुरूपो विभागो द्वादशाहप्रकृतौ ज्योतिष्टोमेऽध्यवसीयते इति । तदिमं सिद्धान्तं अवलम्ब्याह । **ज्योतिष्टोमप्रकृतिके इति** । कदेत्याकांक्षायामाह । **यदीति । तत्**, द्वादशाहः ।

उपसंहरति । **अत इति** । श्रुत्यादीनि षट् प्रमाणानि शेषत्वबोधकानि । समाख्या नाम यौगिकसंज्ञा । ज्योतिष्टोमविकृतिभूते द्वादशाहेऽर्धिन इत्यादयः समाख्याः श्रूयन्ते । अतः समाख्यारूपप्रमाणबलात्तत्प्रकृतौ ज्योतिष्टोमे तथैव दक्षिणाविभागः कार्यः । अन्यथा विकृतौ द्वादशाहेऽर्धिन इत्यादिसिद्धानुवादो न स्यात् । तथा च विकृतिगतसामाख्यान्यथानुपपत्त्या प्रकृतौ प्रागुक्तदक्षिणाविभागावसाय इत्यर्थः । तदुक्तं "तथो वो विश्ववेदा विभजतु" इति । तां यजमानश्चतुर्धा कृष्णाजिनेन व्युह्यास्य चतुर्थमध्वर्युभ्यो विभजति, यावदध्वर्यवे ददाति तस्यार्धं प्रतिप्रस्थात्रे, तृतीयं नेष्ट्रे, चतुर्थमुन्नेत्रे, एतेनेतरेषां दानमुक्तमिति ॥ २६५ ॥

इति संभूयसमुत्थानं नाम प्रकरणम् ।

## अथ स्तेयप्रकरणम् ॥ २३ ॥

महाप्रकरणसंगत्याऽऽह । **इदानीमिति** । चस्त्वर्थे । **मानवं** व्याचष्टे । **अन्वयवदिति** । मतुबन्तमिदम् । अग्रे अन्वयः संबन्धः, स चक्षुरादेर्विवक्षित इत्याह । **द्रव्येति** । द्रव्यस्वामीत्यर्थः । कर्मपदार्थमाह । **परेति** । आदिना साधारणद्रव्यहरणम् । द्वंद्वोऽयम् । **कृतमिति** । भूतत्वमविवक्षितमित्याह । **क्रियते इति** । अतस्तत्र स्तेयदण्डो न कार्यः । एतदर्थमेव प्रकरणभेद इति भावः । तदाह । **स्तेयं त्विति** । **तत्,** साहसात् । आदिना राजाध्यक्षादि । बलावष्टम्भो नात्रेत्याह । **वञ्चयित्वेति** ।

कृत्वा यन्निहुते भयादिति तुर्यपादपाठं व्याचष्टे । **यच्चेति** । अपिना निरन्वयसमुच्चयः । परधनहरणादिकमिति शेषः । कृत्वा निह्नूयते च यादिति पाठान्तरम् । कृत्वाऽपव्ययते च यादिति तु प्रचुरः पाठः । तदाऽयं तात्पर्यार्थो बोध्यः । अपव्ययते संवृणोति आच्छादयतीति यावदिति तु शाब्दोऽर्थः व्येञ्संवरणे इत्युक्तेः । वञ्चयित्वेत्यस्य समूलत्वं ध्वनयन्स्तेयलक्षणांशे मानान्तरमप्याह । **नारदेनापीति** । एषां द्रव्यस्वामिनां सुप्तादीनाम् । कर्मणि शेषे षष्ठी । छलेऽन्वयः । द्रव्यस्येति शेषः । सुप्तादेरपकर्षणेऽन्वयः ।

मूलमवतारयति । **तत्रेति** । प्रारभ्यमाणे स्तेये इत्यर्थः । **ज्ञानेति** । तस्करत्वज्ञानेत्यर्थः ।

### याज्ञवल्कीये २६६ श्लोकः ।

यद्यपि योगिना ग्राहकग्राह्यत्वमेव तत्रोपाय उक्तस्तथापि तत्रापि निमित्तमाह । **य इति** । राजपुरुषाश्च स्थानपालाश्चेति द्वंद्वः । लोप्त्रपदार्थमाह । **अपहृतेति** । गृह्यते इति लेडित्याह । **ग्रहीतव्य इति** । अपहारतो नष्टं वस्त्रादिर्यस्य गृहे हस्ते वा दृश्यते तेन चिह्नेन स पुरुषो ग्राह्य इत्यर्थः । अथशब्दार्थमाह । **वेति** । पदेन वेति व्याचष्टे । **नाशेति** । पूर्वकर्म चौर्याख्यमेव । भूम्नि इनिरित्याह । **प्रागिति** । अत एव परिग्रहः । **वास इति** । उष्यतेऽस्मिन्निति वासो निवासः । पुंस्ययम् । तदाह । **स्थानमिति** । न तु वासस्थानमित्येकं पदमिति भावः । तथा चेति समुच्चये इत्याह । **सोऽपीति** ॥ २६६ ॥

### याज्ञवल्कीये २६७।२६८ श्लोकौ ।

तत्र उपायांतरमाहेत्याह । **किंचेति** । **केवल**मवधारणे शंकायाम् । जातिनिह्नवादे हेतुत्वमित्याह । **वक्ष्येति** । तान्येवाह । **जातीति** । निह्नवपदस्य प्रत्येकं संबंधः । डवित्थे इति यादृच्छिकी संज्ञा । **देशो** व्यापकः, **ग्रामो** व्याप्यः । उपलक्षणे इयं तृतीयेत्याह । **लक्षिता इति** । **द्यूतेति** । तत्र द्वंद्वोत्तरपदको द्वंद्वः । समभिहारात् स्त्रीविशेषरूपा न तु सामान्यभूतेत्याह । **द्यूतपण्यांगेति** । इदमुपलक्षणमित्याह । **आदीति** । अत्र कारणमुक्तं कुतस्त्योऽसीत्यादिना । ननु अत्र द्वयोरेवोक्तत्वाज्जात्या सर्वग्रहणे सिद्धे व्यक्त्याशयेन बहुत्वस्यानुपयोगाद्बहुवचनासंगतिश्च अत आह । **बह्विति** । तथा च प्रकृतिरन्येषामप्युपलक्षणम् । अर्धर्चा इतिवद्वेति । तद्विवक्षाया बहुवचनम् । अत एव प्रकृतिप्रत्ययविरोधाऽपि नेति भावः ।

---

१ लवित्थ इति, [illegible]त्थ इति च मिताक्षरापाठौ । २ तात्पर्यार्थमाहानीति ।

अनतिप्रसंगायाह । **निष्केति ।** गूढं यथा तथा चरंतीति शाब्दोऽर्थस्तत्फलितमाह । **वेषांतरेति । गूढेति ।** आच्छादयित्वेत्यर्थः । आवश्यकव्ययेऽदोषादाह । **बह्विति ।** भूम्नि तत्र मतुप् । विनष्टद्रव्याणि विक्रीणते इति पचाद्यच् । गंगाधरवत्तत्फलितमाह । **ये चेति ।** विक्रायकाः तत्कर्तारः ण्वुलन्तम् । शंकयेत्यस्यत्राप्यन्वय इत्याह । **चौर्यसमिति ।**

वक्ष्यमाणसंगतये तत्सूचितमेव विशेषमाह । **एवमिति । नानेति ।** बहुव्रीहिः । मात्रपदेन परीक्षाव्यवच्छेदः । **चौर्येति ।** चौर एवायमिति निश्चयमित्यर्थः ।

**अन्येति । कात्यायनो**ऽप्येवमेव । अन्यस्य चौरस्य हस्तात्परिभ्रष्टं च्युतं भुवि खन्यमानायामन्यार्थमत एवाकामादनिच्छयोत्थितं प्राप्तमन्यदीयं पूर्वं प्रतिक्षिप्तं त्यक्तं इत्यर्थः । तथा चेदमेवमुत्तानेनापहृतमिति परीक्षा कार्येति भावः । तदाह । **यत्नादिति । नारदांतरमाह । तथेति ।** यत इति शेषः । यतो द्विविधा भावाः पदार्थाः दृश्यंते तस्मादित्याद्यर्थः । द्वैविध्यमेवाह । **असत्याः सत्येति ।** अत एव विविधा इत्यपपाठः ॥ २६७।२६८ ॥

## याज्ञवल्कीये २६९ श्लोकः ।

अत एवाह । **एवमिति ।** उक्तप्रकारेणेत्यर्थः । **आत्मा** स्वस्वरूपम् । **चौर्ये इति** विषयसप्तमी । शंकायामन्वेति । तदाह । **यदि चौर्येति । तत्** ततः तच्छंकातः । लिङ्गर्थो न विवक्षित इत्याह । **यतीति ।** उत्तरार्धमग्रिमस्याविशेषस्य सामान्येनानुवादोऽन्यथा पौनरुक्त्यापत्तेरत आह । **वक्ष्येति ।** अनुपदमेवेति भावः । धनदानेति पाठः । यद्यपि दापनं वक्ष्यमाणं तथापि तस्य राजधर्मत्वेन चोरानिष्टत्वात्ततोऽर्थसिद्धस्य दानस्यात्र ग्रहणं अत एव दापनेत्यपपाठः । **आदिना** तदग्रिमपरिग्रहः । अनुवादत्वादेवाह । **दंडभाग्भवेदिति।** संभावने लिङ् अनुवादफलं प्रदर्शयन् वचनसार्थक्याय तात्पर्यार्थं प्रतिज्ञातमाह । **अत इति ।**

नन्वयमप्यस्य नार्थः प्रमाणस्य । भावगोचरत्वेन निःस्वरूपेऽभावात्मके तुच्छे मिथ्योत्तरे प्रमाणाप्रसक्तेरित्याशयेन शंकते । **नन्विति ।** उक्तत्वादाह । **दिव्येति ।** साक्षात्तद्विषयतया तथापीति मानुषं कारणं संसृष्टे मिथ्योत्तरे भावरूपमिथ्यात्वे यत्कारणं तस्य यत् साधनं तन्मुखेन तद्द्वारा अभावमपि गोचरयत्येवेत्यन्वयः । अत एव पूर्वपक्षे साक्षादित्युक्तम् । तथाच शुद्धमिथ्योत्तरे दिव्यमेव । संसृष्टे तु मानुषमप्यनया रीत्येति भावः ।

एतदेवोदाहरणेन विशदयति । **यथा नाशे**ति । द्रव्यनाशापहारयोः कालेऽहं देशांतरस्थित इति चौर्यशंकया गृहीतेनाभियुक्ते साक्ष्यादिभिर्भाविते साधित्वे चौर्याभावस्याप्यर्थात्सिद्धेस्तस्य शुद्धिरेवेत्यर्थः ॥ २६९ ॥

## याज्ञवल्कीये २७० श्लोकः ।

चोरपदं तथापरमित्याह । **यस्तु प्रागुक्तेति ।** दापने प्रकारद्वयमित्याह । **स्वरूपेणेति । स्मृत्यंतराविरोधायाह । एतच्चेतीति । द्रव्येति ।** द्रव्यापहारेत्यर्थः । अत्र मानमाह । **साहेति ।** साहसाख्येषु प्रागुक्तेषु त्रिषु कर्मसु उत्तममध्यमाधमरूपेषु यो दंड उक्तः उत्तममध्यमाधमसाहसरूपः स एव त्रिषु द्रव्येषु उत्तममध्यमाधमरूपेषु स्तेयेऽपि तद्विषयस्तेयाख्ये कर्मण्यपि अनुक्रमात्तेनैव क्रमेण दंडो भवतीत्यर्थः ।

तथा चोत्तमद्रव्यापहारे उत्तमसाहसदंडविधानाद्वधस्याप्युत्तमसाहसात्मकदंडत्वेनोत्तमद्रव्यापहारविषयत्वमेव युक्तमिति भावः । तदाह । **वधेति** । अन्यविरोधं परिहरति । **यत्पुनरिति** । **अन्येति** बहुव्रीहिः । **एषां** चोराणां । **वृद्धशातात**पोऽप्येवं । **अपेति** । बधस्येति भावः।

( उत्तरार्धः )

**महत्यपराधे** तत्रापि । तथा च **गौतमः** ( अ. १२ सू. ४३।४५ ) । " न शारीरो ब्राह्मणस्य दंडः । कर्मवियोगविख्यापनविवासनाङ्ककरणानि । अवृत्तौ प्रायश्चित्ती स " इति । शारीरस्ताडनांगच्छेदनरूपः, कस्तर्हि दंड इत्याह । **कर्मेत्यादि** । तेन सह सर्वक्रियानारंभः । **विख्यापनं** डिंडिमकेन परिभ्रामणं स्तेयलक्षणप्रकाशनार्थम् । **विवासनं** देशान्निष्काशनम् । **अङ्ककरणं** श्वपदेनांकनम् । **अवृत्तौ** अन्येन प्रकारेण जीवनासंभवेन यदि स्तेयं करोति तदा तस्य प्रायश्चित्तमात्रं न दंड इति तदर्थः ।

वक्ष्यमाण**मनो**राह । **ललाटे इति** । आकारशब्दः सदृशवाची । विशेषमाह । **एतच्चेति** । श्वपदाकारमङ्कनं चेत्यर्थः । अनेन दंडप्रायश्चित्तयोः क्रमः सूचितः । **सर्वे** ब्राह्मणक्षत्रियविशः **यथोदितं** यथाशास्त्रविहितं प्रायश्चित्तमित्यन्वयः ॥ २७० ॥

## याज्ञवल्कीये २७१ श्लोकः ।

ग्रामेत्युक्तेराह । **यदि ग्रामेति** । घातितापहृतयोर्भावयोर्विकल्प इत्याह । **मनुष्येति** । 'सर्वं वाक्यमिति' न्यायेनाह । **एवेति** । तत्प्रयुक्तदोष इत्यर्थः । प्रतिज्ञातं तात्पर्यार्थमाह । **तत्परीति** । अनिर्गते इति सति सप्तमी । तत्र प्रतियोगी लक्ष्योऽर्थ इत्याशयेन सत्तात्पर्यार्थं तद्व्याचष्टे । **तदुक्ताविति** । **तद्विषयेति** । तद्देशाधिपतिरित्यर्थः । एवेन ग्रामपतिनिरासः । **चौरं धनं वेति** । आदौ चौरमर्पयेत्तदशक्तौ धनमित्यर्थः । **गोचरे** विषये ग्रामादिरूपे **ग्राह्यः** ग्राहणीयः । अशेषमिति छेदः । अथवा अशेषं धनं दापनीयः । तच्छेषमाह । **यदीति** । अशेषपदेन दंडस्यापि ग्रहणम् । **पुन**स्त्वर्थे । यदि तत्पदमन्यत्र पातितं तदा यथासंभवं सामंतादीन् दापयेदित्यर्थः। अत एव चेदन्यत्रेति पाठांतरम् । **एवेन** तद्व्यावृत्तिः। उत्तरार्धार्थमाह । **विवीते त्वित्यादिना** । 'प्रचुरतृणकाष्ठो रक्ष्यमाणः परिगृहीतो भूप्रदेशो विवीत ' इति स्वामिपालप्रकरणे उक्त एव । प्राग्वत् विवीते इत्यर्थाल्लब्धं यथोत्तरान्वयि । मार्गविवीतकयोर्विकल्पोऽर्थात् । अत एव चौरोद्धर्तुरित्यस्यार्थद्वयमाह । **यद्वा त्विति**। अविवीतके इत्यस्यार्थो **विवीतादिति** । यथासंख्येनाह । **मार्गेति** ॥ २७१ ॥

## याज्ञवल्कीये २७२ श्लोकः ।

स्वसीम्नीत्यस्यार्थमाह । **सीमेति** । **ग्रामाद्बहिरित्य**नेन ग्रामपतिव्यवच्छेदः । एवमग्रेऽपि । आदिना वधः । ग्रामपदं जने लाक्षणिकमित्याह । **तद्ग्रामेति** । **पदं वेति** । व्यवस्थितविकल्प इत्याह । **यदीत्यादि** । **आदिना** विवीतादिपरिग्रहः । **आदिना** धनार्पणादि तत्तद्ग्रामादित्यादिः । घातिन इत्यादिप्रथमांतः पाठः । प्रागुक्ताविषयत्वायाह । **चौरेति** । आर्थिकविकल्पमाह । **वा वृध्याविति** । ग्रामसमूहसंख्याया अनियतत्वादिदमपि दिक्प्रदर्शनमत एव यथासंभवं व्यवस्थितविकल्पोऽयम् । नन्वेवं 'अथवा पुनरिति ' व्यर्थं उक्तरीत्या नियतपक्षद्वयस्यैवाभावेन तत्परतयाऽपि तस्यात्यंतमनुपयोगादित्यत आह । **विकल्पेति** । प्रत्यासत्तिमनतिक्रम्येत्यव्ययीभावः । **तत्प्रेति** पाठे तयोः प्रेत्याद्यर्थः ।

१ मि. पृ. १०९ पं. १७

अपहाराधारभूप्रदेशाद्ये ग्रामाः प्रत्यासन्नास्ते एव दद्युर्न तु पंचग्राम्येव दशग्राम्येवेत्येवं नियम इति । एवं नियमनिवृत्त्यर्थमथवेति विकल्पवचनमित्यर्थः ।

विशेषमाह । **यदा त्विति । अन्यतः** चोरग्रामाधिपादितः । दापनेऽन्वयः । **अवजित्य** ततः परावर्त्य परीक्षणोत्तरमपि दापनसमये कारणांतरवशात्संदेहे विशेषमुक्तरीत्यैवाह । **मुषितेति । यदीति । तस्मिन्** उक्तलिंगवशाच्छंकया ग्रहणोत्तरं परीक्षिते चौर इति निश्चित्य गृहीते पुरुषे धनं दाप्यमाने सति यदि **मोषे** चौर्ये संदेहो भवेत् कारणांतरतः, तदा बंधुभिर्धर्मबंधुभिः साक्षिभिः साधयेत् संदेहनिवृत्तिं कुर्यात्; अथवा शपथं दाप्यः, स इत्यर्थः ।

यद्यप्यत्रादौ दिव्यमुक्तं तथाप्यस्य क्रमाबोधकत्वात्तयोः क्रमस्य पूर्वं स्पष्ट मुक्तत्वात्तथैवेति भावः । अत एव प्रतिज्ञायां तथैवोक्तम् । शुद्धमिथ्योत्तरे तदसंभवात्तस्यैवावश्यकत्वमभिप्रेत्य **मुनिना** तथोक्तं एतदभिप्रायेणापि दिव्यस्येति प्रागुक्तम् । व्याख्यात्रेति बोध्यम् । तथा शब्दः किंचेत्यर्थे आदौ बोध्यः ॥ २७२ ॥

## याज्ञवल्कीये २७३ श्लोकः ।

बंदिग्राहादिकं चोरविशेषणमित्याह । **बंदीति । आदिना** वाजिकुंजरहारिग्रहणम् । तत्र चेन गोरथादिग्रहणम् । प्रसह्येत्याद्यर्थो बालघातिकान् तांश्च । क्वचित्तथैव पाठः । नरानित्यस्य व्याख्या चौरानितिवत् । बन्दिरोधस्थानं ग्राहयंति ते बन्दिग्राहाः ।

ननु शूलानारोपयेदित्यनेन तेषां तावन्मात्रं प्रतीयते, न वधः, तथा च श्रोत्रियायोपकल्पयेदित्यत्रेवात्रापि तावन्मात्रेणैव विधिसिद्धेस्तन्मात्रमेव कृत्वा पुनरुत्तारणं कार्यं न वध इत्यत आह । **अयं च वधेति** । अत्र मानमाह । **अभ्यगारेति** । हर्तॄंश्चेति पाठः । **अविचारयन्** अविलंबयन् । अनेन तेषामपि एकदेशानुमतिद्वारा वधे सिद्धे केन प्रकारेण स इति विशेषाकांक्षायां शूलारोपणरूपप्रकारविशेषो मूले उक्त इति भावः ॥ २७३ ॥

## याज्ञवल्कीये २७४ श्लोकः ।

**विस्रस्य** ग्रंथिं विमुच्य उत्कृत्य छित्वा ताविति । उत्क्षेपकः करहीनो ग्रंथिभेदस्तर्जन्यंगुष्ठेन हीन इति भावः । संदंशपदं गौणलाक्षणिकमित्याह । **सदृशेनेति । तर्जेति** मध्यमपदलोपी समासः । इदमर्थात्प्रथमापराधविषयं अत एवाह । **द्वितीयापराधे पुनरिति** । पादैकसंख्याऽस्य वक्ष्यमाणमन्वनुरोधेन निरासायाह । **उत्क्षेपकेति** ।

विशेषमाह । **एतदपीति** । अपिना पूर्वसमुच्चयः । **द्रव्येति** तदपहारेत्यर्थः । तत्र मानमाह । **तदंगेति** । न्यूनतां निराचष्टे । **तृतीयेति । अंगुली इति** द्विवचनं तद्द्वयं च तर्जन्यंगुष्ठात्मकमेव संभवेन पूर्वसंदंशपदे न तस्यैव ग्रहात् । **प्रथमे इति** । प्रथमे ग्रहणे इत्यर्थः । प्रथमचौर्य इति यावत् । **हस्तेति** । अत्रेतरेतरद्वंद्व आर्षः । **जातीति** जातिश्च द्रव्यं च परिमाणं चेति द्वंद्वः । ततो यन्मूल्यादि तदनुरोधेनेत्यर्थः । अनुक्तदंडस्थले इति भावः । **इतीति** । इत्यन्यत्रोक्तत्वादित्यर्थः ॥२७४॥

## याज्ञवल्कीये २७५ श्लोकः ।

इदमप्युपलक्षणमित्याह । **जातीति** । जातिश्च द्रव्यं च परिमाणं च परिग्रहश्च विनियोगश्च वयश्च शक्तिश्च गुणश्च देशश्च कालश्च तदादीनां स्मृत्यंतरोक्तानामित्यर्थः । तत्र ब्राह्मणपरिगृहीताया

गोर्हरणेऽधिको दंड इति ब्राह्मणपरिग्रहोऽधिकदंडकारणं, तथा यदि सैवाग्निहोमार्थं दोहाय विनियुक्ता तदा तस्या हरणे ततोऽप्यधिको दंड इति विनियोगोऽप्यधिकदंडकारणम् । एवंविधपरिग्रहविनियोगयोरभावे तावेव न्यूनदंडकारणे इति बोध्यम् । महदर्थः **उत्तमेति** । बहुवचनान्तानां द्वंद्व इति भावः ।

उत्तरार्धं व्याख्यातुमेतद्विषयं विवेचयितुं चोपयुक्तमाह । **क्षुद्रादीति । मृद्भांडेति ।** यथाऽत्र प्रयोगसिद्धिर्भवति तथा द्वंद्वः कार्यः । एवं हिरण्यरत्नेत्यत्रापि । **मृद्भांडं** मृन्मयं **शमीधान्यं** माषादिमाषादयः " शमीधान्ये शूकधान्ये यवादय " **इत्यमरः** ( २।९।२४ ) । **कृतान्नं** साधितान्नम् । ओदनादिवर्जमिति णमुल्, वर्जयित्वेत्यर्थः । लोहं च रजतादिकं मध्यमिति द्रव्यमुदाहृतमित्यस्यानुषंगः । अग्रे सर्वानुषंगो यथासंभवम् । **व्रीहीति** । बहुवचनांतयोर्विभाषा वृक्षेति । ( व्या. सू. २।४।१२ ) पाक्षिक इतरेतरद्वंद्वः । **गोगजेति** । एवं च गोवर्जमित्यत्र गोपदमनयोरप्युपलक्षणमिति भावः । **देवेति** । अभ्यर्हितत्वात्पूर्वनिपातः । **च द्रव्यं** द्रव्याणि च ।

एतत्प्रसंगाद्विरोधायाह । **त्रीति । औत्सर्गिकः** सामान्यविहितः । **तेनैव नारदेनैव** । तत्रानुपदमेव व्याख्यातम् । नन्वेवं मूलविरोधस्तस्येति मूलस्य का गतिरत आह । **मृन्मयेष्विति ।** मणिकादयस्तत्पात्रविशेषाः इदं क्षुद्रद्रव्यमात्रोपलक्षणम् । **गो वेति** । इदं मध्यमद्रव्यमात्रस्य अभ्यर्हितत्वान्महिषस्य पूर्वनिपातः । एवं कनकेत्यत्रापि । इदमप्युत्तमद्रव्यमात्रस्योपलक्षणम् । तरतमभावोऽस्तीति पाठः । तारतम्येति पाठे स्वार्थे ष्यञ् । यद्वा तारतम्यस्यावांतरवैलक्षण्यस्य भावः । स नास्तीत्यर्थः । प्रत्येकमिति शेषः । अत एव त्रिष्वपि मणिकादीत्यादिना प्रत्येकमुत्तमाधमयोर्ग्रहणं कृतम् । **उच्चावचेति** । यद्यप्ययं मयूरव्यंसकादिस्तत्र चोदक्चावाक्चोच्चावचमित्यभियुक्तैर्व्याख्यातं तथाप्युच्चनीचमित्यर्थे स इति मतेनेदं तत्र लक्षणा वेति भावः । तथा च **नारद**तो यथाक्रमं तेषु त्रिषु त्रिविधोक्तरूपदंडस्याविशेषेण प्राप्तौ अवांतरतारतम्येन तद्विशेषाकांक्षायां विशेषबोधकं मूलवचनपूर्वार्धमिति अयं तात्पर्यार्थ इति आशयः ।

' मूल्यादी'त्यादि शब्दं संग्राह्यप्रदर्शकमूलोत्तरार्धं व्याचष्टे । **तत्र चेति** । तस्यां पूर्वोक्तायामित्यर्थः । **दंडकर्मणीति । मौलस्य** व्याख्या दंडकल्पनायामिति । बीजमाह । **तद्धेत्विति । शक्तीति** । अनेन मूलेऽपि समाहारद्वंद्वः सूचितः । पूर्वनिपातः प्राग्वत् । समर्थमाह । **सम्यगिति** । नन्वत्रैते एव चत्वार उक्ताः अवतरणे त्वन्येऽप्युक्ता इति विरोधोऽत आह । **एतच्चेति । दीनां** तेषामपि । **आदिना** विनियोगादिपरिग्रहः । तथाचात्रोपात्ता एव दंडकल्पनामाह हेतव इति न किंतूपलक्षणतया स्मृत्यंतरोक्ता अन्येऽपि अत एव तद्विरोधोऽपि नेति भावः । तदेव स्मृत्यंतरजातमनुक्रमेण दर्शयति । **तथाहीत्यादिना** । तत्र तावद्वर्णरूपजात्यपेक्ष्या गुणापेक्षया च स्तेयविशेषेण दंडविशेषबोधकं **वासिष्ठ**माह । **अष्टापाद्यमिति** । अत्र दंडानुक्तेरसंबद्धत्वनिरासायाह । **अयमर्थ इति । लक्ष्यते इति** तस्य तत्कार्यत्वात् । विदुष इति उपात्तं शूद्रस्य, एवमेवाग्रेऽपि विशेषणापीत्याह । **विदुषामिति** विशेषणम् । अतिक्रमे इत्यस्य मध्यमणिन्यायेनोभयत्रान्वयस्तदाह । **स विद्वदिति** । अष्टन् शब्दोऽपि लाक्षणिक इत्याह । **अष्टगुण इति** । विदुष इति वचनविपरिणामेन बिडालादिस्तेये विषये प्रतिवर्णमिति शेषः । **द्विगुणोत्तरेति** । उत्तरमुत्तरं द्विगुणानीत्यर्थः । ' मयूरेति ' ( व्या. सू. २ । १ । ७२ ) समासः । तदर्थमाह । **षोडशेति** । उक्तहेतोरतिक्रमे इत्यादि हेतुपरमित्याह । **यस्मादिति** । अनेन यत इति शेषः सूचितः तत्र ।

**इति**रर्थसमाप्तौ । **अपि**ना येन दोषेण शूद्रस्य दंडो भवति धर्मतः तेन विट्क्षत्रविप्राणां द्विगुणो द्विगुणो भवेदिति । **कातीय**समुच्चयः । **अष्टेति** अर्थः प्राग्वत् । एवः पद्ये एव पूर्वोत्तरयोरपि संबध्यते । 'तद्दोषे'त्यस्य तु सर्वत्र पद्यद्वये संबंधः । तस्य वस्तुनो दोषगुणयोर्वेदने ज्ञाने सतीत्यर्थः । एवं **वासिष्ठे** विद्वत्ताऽप्येतद्विषयैव । एतदर्थमेव **मनू**क्तिः । **तद्दोषगुणविद्धि य इति** । तत्र पाठांतरं **कल्पतर्वा**दिसंमतम् । गुणविद्विष इति त्वपपाठः । अर्थासंगतेः ।

ब्राह्मणस्य तु तत्रापि गुणाद्यपेक्षया पक्षत्रयमाह । **ब्राह्मणस्येति** । अत एव पूर्वत्रैवकारः सफलः तथा चायं दंडः शूद्रत्वादिजात्यपेक्षो विद्वत्वरूपगुणापेक्षश्चेति तयोरत्र हेतुत्वमिति भावः । द्रव्यपरिमाणेति भिन्नमिति सूचयन् व्युत्क्रमेणाह । **तथा परीति । धान्यमिति** । दशसंख्येभ्यः कुंभेभ्योऽभ्यधिकं धान्यं हरतो वधः । 'शेषे त्विति' पाठः । शेषेऽपीति पाठेऽ**पि**स्त्वर्थे शेषेष्विति पाठांतरम् एकस्मादारभ्य दशकुंभपर्यंतहरणे अपहृतादेकादशगुणं दंडं दाप्यः । स्वामिनश्चापहृतं धनं दाप्य इत्यर्थः । कुंभोऽत्र न प्रसिद्धः, किंतु परिणामविशेष इत्याह । **विंशतीति** । द्विपलशतं द्रोणः ।

नन्वत्र वधदंड उक्तः । स च ताडनादिप्राणवियोजनांतव्यापाररूपस्तथा च सर्वत्र समुच्चयापत्तिरत आह । **हर्तुर्ह्रियेति** । हर्तुर्गुणापेक्षया ह्रियमाणस्य द्रव्यस्य गुणापेक्षया स्वामिनो गुणापेक्षया चेत्यर्थः। परिमाणशब्दः परिच्छेदकमात्रपर इत्याह । **तथा संख्येति** । तत्रादौ **नारदमाह। सुवर्णेति । सर्वेषां** साधारणानाम् । अभ्यधिकमिति पाठः । एवं प्रागपि । **मनु**माह । **यं चेति** । तथा धटितमेयानां शतादभ्यधिकं वधः सुवर्णरजतादीनामुत्तमानां च वाससामिति पूर्वमितः धटितमेयानां तुलापरिच्छेद्यानां पूर्वोक्तानामेव पंचाशतोऽभ्यधिके हस्तछेदः । अत्र शतादिपलसंबंधिबाध्यं शेषेषु एकपलादारभ्य पंचाशत्पर्यंतमपहारेऽपहृतद्रव्यमूल्यादेकादशगुणं दंडं दापयेदित्यर्थः । स्वामिने वस्तुदानं तु समानमेवेति भावः । द्रव्यविशेषादपि दंडगुरुत्वं दृश्यते इत्यस्यानुषंगः ।

**मनु**माह । **पुरुषाणामिति** । 'मुख्यानां चैव रत्नानामिति' सर्वसंमतस्तृतीयपादे पाठः । रत्नानां चैव सर्वेषामित्यपपाठः । अत एव प्रागुक्त**नारद**विरोधो न अत एव च महाकुलजातानां मनुष्याणां विशेषेण स्त्रीणां महाकुलप्रसूतानां श्रेष्ठानां च रत्नानां वज्रवैदूर्यादीनां अपहारे वधमर्हति इति तद्व्याख्यातारः । कुलीनानामित्युक्तेः फलमाह । **अकुलीति** । स्त्रीणां पुरुषाणां चेत्यर्थः । **नारद**माह । **पुरुषमिति** । स्त्र्यपराधे तदपहारे सर्वस्वं तदपहारो दंडः प्रोक्तः । स्त्र्यपहारे तु सर्वस्वमिति पाठान्तरम् । तत्रैव विशेषमाह । **कन्यामिति** । वधो दण्डः प्रोक्तः सर्वस्वहरतो नारीमिति **कल्पतरौ** तृतीयपादपाठः । **कात्यायनो**ऽपि ।

" सर्वस्वं हरतः स्त्रीं तु कन्यापहरणे वधः । वाजिवारणवालानां चाददीत बृहस्पतिः । " इति सर्वस्वमित्यस्यानुषङ्गः ।

एवं दंडपुरुषत्वमुक्त्वा क्षुद्रद्रव्यविषये एव संभवादल्पानुसारेण लघुदंडमाह । **क्षुद्रेति । माषेति** । माषतो न्यूनेत्यर्थः । क्वचित्तु तथैव पाठः । अत्र मानमाह । **काष्ठेति** । तस्य भांडेत्यर्थः । अभ्यर्हितत्वात्पूर्वनिपातः । एवं लवणेत्यत्रापि । वेणुश्च तद्विकारभांडानि मितजलाहरणपात्राणि । यच्चान्यत् पशुसंभवं मृगचर्मखड्गशृंगादि अन्येषामप्येवंविधानां असारप्रायाणां मनःशिलादीनां षट्कानामोदनभिन्नानामपूपादीनां अन्येषां प्रसिद्धानां चापहारे कृते मूल्याद्द्विगुणो दंड इति तद्व्याख्यातारः ।

अल्पमूल्ये उक्तत्वादाह। **अल्पप्रयोजनेति**। इदं च कालादीनामित्यादिसंग्राह्यम्। दंडाल्पत्वे अन्यदण्डगुरुत्वे तत्संग्राह्यमाह। **तथाऽपेति**। वक्तुं **मनु**मतेनेति शेषः। 'संधिमि'त्यादेः उक्तमुपसंहरति। **एवमिति**। उक्तप्रकारेणेत्यर्थः।

विशेषमाह। **यथेति**। कर्तरि षष्ठी। तादृशद्विजकर्तृकाल्पापहार इत्यर्थः। **अध्वगः** पथिकः। **क्षीणवृत्तिः** क्षीणपाथेयश्च। **द्विजो** द्विजातिरित्यर्थः। अन्यद्पि तदुक्तमेवाह। **तथेति**। व्रीह्यादिद्वंद्वोत्तरपदको द्वंद्वः। **अनिषिद्धैः** स्वाम्यादिकृतनिषेधरहितै**र्भक्तं** अन्नं **सप्तमे** भक्ते चतुर्थदिनस्थे तस्मिन् प्राप्ते सति। **अश्वस्तेति**। द्वितीयदिवसे यथा नोर्धराति (?) तेन प्रकारेणेत्यर्थः। **हीनेति** अल्पाचाराद्धर्तव्यां न तत्कृष्णान्नापि हीनजातेरित्यर्थः। किं च "वानस्पत्यं फलं मूलं दार्वग्न्यर्थं तथैव च। तृणां च गोभ्यो ग्रासार्थमस्तेयं मनुरब्रवीदिति" **मनुः** (अ. ८ श्लो. ३३९)। 'अनिरुद्धेति' प्रागुक्त**गौतमा**दपरिवृतवनस्पत्यादीनां वानस्पत्यं यत्र पुष्पादि मूलं फलं होमीयाग्न्यर्थं दारुणे ग्रासार्थं तृणं परकीयमस्तेयं मनुराह तस्मान्न दंड इत्यर्थः॥ २७५॥

## याज्ञवल्कीये २७६ श्लोकः।

**चौरोऽपेति**। तथा च अथ तदतिदेश उच्यते इति भावः। **भक्तेति**। द्वंद्वः प्राग्वत्। अज्ञाने 'दोषाभावाय जानत' इति पदार्थानाह। **भक्तमित्यादि**। **चौरस्य** तदादेः। एवमग्रेऽपि बोध्यम्। वाक्यार्थमाह। **एतानीति**। भक्तादिव्ययांतानि वस्तूनीत्यर्थः। एतानिति पाठस्तु सम्यगेव। उभयसंग्रहायाह। **दुष्टत्वमिति**। **मनु**रपि (अ. ९ श्लो. २७१—२७५)

ग्रामेष्वपि च ये केचिच्चौराणां भक्तदायकाः। भांडावकाशदाश्चैव सर्वांस्तानपि घातयेत्॥
"राष्ट्रेषु रक्षाधिकृतान् सामंतांश्चैव चोदितान्। अभ्याघातेषु मध्यस्थान् शिष्याच्चौरानिव द्रुतम्॥
"यश्चापि धर्मसमयात् प्रच्युतो धर्मजीवनः। दंडेनैव तमप्योषेत् स्वकाद्धर्माद्धि विच्युतम्॥
"ग्रामघाते हिताभङ्गे पथि मोषाभिदर्शने। शक्तितो नाभिधावन्तो निर्वास्याः सपरिच्छदाः॥
"राज्ञः कोशापहर्तॄंश्च प्रतिकूलेषु च स्थितान्। घातयेद्विविधैर्दंडैररीणां चोपजापकानिति॥"
"अग्निदान् भक्तदांश्चैव तथा शस्त्रावकाशदान्। सन्निधातॄंश्च मोषस्य हन्याच्चौरमिवेश्वरम्॥" इति।
"यो दत्तादायिनो हस्താल्लिप्सेत ब्राह्मणो धनम्। याजनाध्यपनेनापि यथा स्तेनस्तथैव सः॥"

(म. अ. ८।३४०) इति च। रक्षेति ग्रामनिवासिनः प्रजानाम्। चौरादिभिः उपघाते क्रियमाणे मध्यस्थानपेक्षकान् चौरवद्दंडयेत्। हिताभङ्गे परक्षेत्रोत्पन्नसस्यविनाशनं मोषाक्षिभिर्दर्शनेऽपहृतद्रव्यदर्शने मोषस्यापहृतद्रव्यस्य अदत्तादायिनश्चौरस्य हस्ताद्यो ब्राह्मणो याजनाध्यापनप्रातिग्रहैर्वाऽपि परकीयधनं ज्ञात्वा लब्धुमिच्छेत् स चौरतुल्यस्तद्दंड इत्यर्थः। विशेषमाह। **चौरोऽपेक्षीति** **कोषः**॥ २७६॥

## याज्ञवल्कीये २७७ श्लोकः।

**किंचेति**। अतिदेशप्रसंगादन्यस्यापि दंडमाहेत्यर्थः। एवमग्रेऽप्युभयत्र। **पुरुषस्त्रीति** आर्षम्। स्मृत्यंतराविरोधायाह। **दासीब्राह्मेति**। तदेवाह **दासीत्यादिना**। **अभीति**। साहसप्रकरणे इति भावः। विनाशे तु विनाशने तु। **वक्ष्यतीति**। प्रायश्चित्ताध्याये इति भावः। **प्रमापणे**, मारणे। नायमैच्छिकविकल्प इत्याह। **शीलेति**। शीलं स्वभावः वृत्तम्। **आदिना** धर्मः

तद्विशिष्टस्य पुरुषस्य तथा स्त्रियाश्च मारणे'उत्तमसाहस स तद्राहित्ये तु प्रथमसाहस इति विकल्पव्यवस्था । द्वितीयवाशब्देन यच्छीलादिवैशिष्ट्ये तथा सति पारिशेष्यान्मध्यमसाहसपरिग्रह इति बोध्यम् ॥ २७७ ॥

## याज्ञवल्कीये २७८ श्लोकः ।

विप्रेण दुष्टामित्यर्थनिरासायाह । **विशेषेणेति** । तस्यार्थद्वयमाह । **भ्रूणेति** । 'सेतुभेदकरी' 'त्यत्र टप्रत्ययस्तदाह । **सेतूनामिति** । अगर्भिणीमिति ' सर्वविशेषणम् । **स्त्रियमिति** सर्वविशेषमित्याह । **एता गर्भेति** । साकाङ्क्षत्वादाह । **गले इति** । तात्पर्यार्थमाह । **यथेति** । तथा च घाते तात्पर्यं तत्र न तात्पर्यमिति भावः ॥ २७८ ॥

## याज्ञवल्कीये २७९ श्लोकः ।

**विषेति** । आर्षं विकर्णेत्यत्राप्येवम् । युक्तिसाम्यादाह । **गर्भिणीमिति** । अन्यथा दाने दोषायाह । **परेति** । दाहार्थमिति च । अत्र क्रियानुषंगः । निजत्वं सर्वविशेषणमित्याह । **निजपतीति** । स्पष्टार्थमिदमिति बोध्यम् । तां सर्वाम् वीत्यस्यार्थः छिनोति । कर्णकरेति प्राग्वत् । अन्यथा तदसंभवादाह । **अदांतैरित्यादि** । **प्रवाह्य** वाहयित्वा । ननु शस्त्रावपात इत्यादेरत्रानुपयोगस्तस्य साहसत्वादत आह । **स्तेयेति** । तत्फलं तु विशेषलक्षणभेदेऽपि तत् सामान्यलक्षणस्यात्रापि सत्वमिति सूचनम् **साहसिकस्य** तदवच्छिन्नवस्तुनः । सामान्ये नपुंसकं दंडप्रदानं तदभिधानम् । क्वचित्तथैव पाठः ॥ २७९ ॥

## याज्ञवल्कीये २८० श्लोकः ।

एतत्प्रसंगादेवाग्रिममित्याह । **अवीति** । अविज्ञातेनाहतेन हत इति समास इत्याह । **अवीति** । तस्य कलहे च शाब्दोऽन्वय इत्याह । **संबंधीति** । बांधवपदार्थः प्रत्यासन्ना इति । अस्येत्यस्यार्थो **सुतेति** । चो व्युत्क्रमे इत्याह । **याश्चेति** । न वेश्या विवक्षिताः शब्दस्वारस्याभावादित्याह । **व्यभीति** । पृथगिति शेषः ॥ २८० ॥

## याज्ञवल्कीये २८१ श्लोकः ।

चरमे एवोक्तज्ञानाभावाद्विशेषशंकेत्याह । **कथमिति** । **इत्यत आहेति** पाठ इत्याशंकायामाहेत्यर्थः । वृत्तिर्नियतजीवनम् । द्वंद्वांते श्रूयमाणस्य कामस्य प्रत्येकं संबंधादाह । **किमयमिति** । एवं स्त्रीद्रव्येति सामान्येन व्याख्याय संभवात्तदेव विशिष्य व्याचष्टे । **तथेति** । तत्रापि प्रकारद्वयमाह । **कस्यामिति** । **कुतो** राजादितः ।

द्वितीयपादं व्याचष्टे । **केन वेति** । **तथेति** । तत्रापि इष्टासिद्धेराह । **विश्वास्येति** । अभयं दत्त्वेत्यर्थः ।

उत्तरार्द्धं व्याचष्टे । **तथेति** । गोपाश्च आटविकाश्च तदाद्या इत्यर्थः । मूले जातावेकवचनमिति भावः । शनैरित्यस्यार्थो **विश्वासेति** । तात्पर्यार्थमाह । **नानेति** । एवमित्यादिः क्वचिदस्य पाठ एव ॥ २८१ ॥

## याज्ञवल्कीये २८२ श्लोकः ।

पक्वानि फलानि येषां तादृशानि यानि सस्यानि तदुपेतं पक्वाभ्यां फलसस्याभ्यामुपेतं युक्तं वा । यद्यप्ययं द्वंद्वस्तथापि यौगपद्यासंभवादाह । **खलं वेति** । 'खलं खर्याण' इति प्रसिद्धम् । कटसंबंध्य-

ग्निनेत्यर्थः । इष्टासिद्धिराह । **कटैरिति ।** ततश्च तत्र मध्यमपदलोपिसमास इति भावः । यस्य तृणस्योशीरं मूलं स तृणविशेषो वीरणम् । 'स्याद्वीरणं वीरतरं मूलेऽस्योशीरमस्त्रियाम् ( **अमरः** २।४।१६४ ) ननु इदमपि नोपयुक्तमत्रेत्यत आह । **क्षेत्रादिति** ॥ २८२ ॥

॥ इति स्तेयप्रकरणम् ॥

## अथ स्त्रीसंग्रहणप्रकरणम् २४ ।

साहसप्रकरणादाह । **स्त्रीति ।** संभेद्य प्रथमादिभेदेन तत् स्त्रीसंग्रहणम् । **मध्येति** समाहारद्वंद्वः । तत्राद्यमाह । **अदेशेति । अदेशे** अकाले च **संभाषा** संभाषणमित्यर्थः । **निर्जने** च अरण्ये च । क्वचित्तथैव पाठः । संभाषणमिति शेषः । **कटाक्षे**त्यत्रार्श आद्यच् । सकटाक्षावेक्षणमित्यर्थः । 'परस्त्रिया' इति षष्ठ्यंतस्य सर्वत्रान्वयः । क्वचित्तृतीयांतपाठः ।

द्वितीयमाह । **प्रेषणमिति ।** सृष्टेति शुद्धेत्यर्थः । समीचीनेति पाठांतरम् । उभयविशेषणमिदम् ।

तृतीयमाह । **सहेति ।** शय्यासने इति पाठान्तरम् । **विविक्ते** एकांते । उभयान्वयीदम् । **परस्परमिति ।** आलिंगनहस्तावलंबादिभिरन्योन्यसंश्रय इत्यर्थः । **केशाकेशिग्रहः** क्रीडासंबंधिग्रहणम् । **सम्यक्** अर्थवत् संपूर्णम् । उत्तममिति यावत् । अत एव 'ज्ञेय उत्तमसंग्रह' इति पाठान्तरम् । विशेषे उक्तेऽपि सामान्यस्य केनाऽप्यनुक्तत्वात् स्वयं सामान्यलक्षणं तत् सूचितमेवाह । **स्त्रीति ।** एवं सलक्षणं त्रैविध्यमुक्त्वा मूलमवतारयति । **संग्रहेति ।**

## याज्ञवल्कीये २८३ श्लोकः ।

तत्कर्तुः संग्रहणकर्तुः तत् संग्रहणं सामान्येनार्थमाह । **संग्रहेति ।** सप्तम्युपपत्तये आह । **प्रवृत्त इति ।** तद्विषये प्रवृत्त इत्यर्थः । वक्ष्यमाणाशयेनाह । **आदिभिरिति ।** अर्थादाह । **लिङ्गैर्ज्ञात्वेति ।** ननु केशीति किमर्थकं कथं वा तृतीयांतमत आह । **परस्परेति ।** एतल्लाभार्थमाह । **तत्रेति ।** ( २ । २ । २७ ) सप्तम्यन्ते ग्रहणविषये सरूपे पदे तृतीयान्ते च प्रहरणविषये इदं युद्धं प्रवृत्तमित्यर्थे समस्येते । कर्मव्यतीहारे स बहुव्रीहिः संज्ञ इति तदर्थः । इति शब्दादयं विषयविशेषो लभ्यते 'इच कर्मेति' । ( व्या. सू. ५ । ४ । १२७ ) । कर्मव्यतीहारे यो बहुव्रीहिस्तस्मादिच् समासांत इति तदर्थः । क्रियाविनिमयः कर्मव्यतीहारः इति कर्मव्यतीहारबहुव्रीहौ पूर्वपदांतस्य दीर्घ इत्यर्थकेन 'अन्येषामपि दृश्यते' ( व्या. सू. ६ । ३। १३७ ) इत्यनेन पूर्वपदे दीर्घः । अन्ये 'तिष्ठद्गुप्रभृतिष्विति' । ( व्या.सू. २ । १ । १७ ) प्रत्ययपाठादव्ययीभावत्वेऽव्ययत्वे च तृतीयाया अनदंतत्वेन 'अव्ययादाविति' ( व्या. सू. २ । ४ । ८२ ) लुगिति भावः ।

विशिष्यार्थमाह । **तथा चेति ।** तस्य तथार्थकत्वे सतीत्यर्थः । **परस्त्रियेति ।** मूले सहयुक्त इति तृतीयांतमिति आह । **परेति ।** लिंगांतरमाह । **अभीति ।** सद्य इत्यस्यार्थोऽयं **करजेति ।** कररुहेति पाठान्तरम् । ननु नखादिकृतव्रणानां नैतल्लिंगत्वं क्रोधप्रमादादितोऽपि तत् संभवादत आह । **रागकृतैरिति ।** 'कामजैश्चिह्नै' रित्यस्यार्थोऽयम् ।

तुर्यपादार्थं तृतीयं तदाह । **द्वयोरिति ।** यत्ताविति सत्सप्तम्या फलितमाह । **संप्रतीति । द्वयोः** स्वैरिणीजारयोः । **संप्रतिपत्त्या** अङ्गीकारेणेत्यर्थः ।

---

१ ख–अकरणे । २ क–ख–फ–सप्तम्यंते क्रियाविषयं सरूपे पदे तृतीयांते च क्रियाविषये सरूपे पदे इदं क्रियारूपं वस्त्वित्यर्थे समस्येते ।

ननु परग्रहणं व्यर्थं स्वभार्यायां तथाकरणे दोषाभावात् वेश्यायां दोषस्य वक्ष्यमाणत्वादत आह। **परेति**। अत एव परभार्ययेत्येवं तद्व्याख्यातम्। वैधपाणिग्रहणे एवं भार्यात्वात् यद्यपि नियुक्तायां नखक्षतादिचिह्नाभावः घृताभ्यंगविधानेन मिथुनीभावविधानान्नखक्षतादिकरणस्यनिषिद्धत्वात् तथापि द्वयोः संप्रतिपत्तिरस्तीति बोध्यम्। अवरुद्धादिषु तत्पूर्वोक्तानि सर्वाणि साधारणानि लिंगानि संति तथा च तेर्ग्रहणे प्राप्ते परभार्येत्यनेन तद्व्युदासः आद्यायां नियोगत्वेन तदावश्यकत्वादन्यस्यामप्यवरुद्धत्वेनैव तत्वासंभवादिति भावः॥ २८३॥

## याज्ञवल्कीये २८४ श्लोकः।

उपायांतरमप्युच्यते इत्याह। **किंचेति**। 'नीवीकट्यंशुकग्रंथिरिति' कोशादाह। **परीति**। तद्रूपदेशेत्यर्थः। स्तनौ प्रत्येकमिति आह। **कुचप्रेति**। इदमप्युपलक्षणमित्याह। **आदीति**। अन्यथा दोषाभावायाह। **सार्भीति**। अस्यायोग्यत्वादाह। **इवेति**। अन्वयाय योग्यक्रियां पूरयति। **आचरेति**। एवमग्रेऽपि बोध्यम्।

अदेशेत्यनेन व्यासोक्तोभयं संगृह्णाति। **निर्जने जनताकीर्णेति**। तथा च तत्रादेशे इत्यनेन जनताकीर्णे इत्यस्यैव ग्रहः निर्जने इत्यस्य पृथगुपादानादिति बोध्यम्।

तथा च **मनुः**— (अ. ८ श्लो. ३५६)

"परस्त्रियं यो अभिवदेत्तीर्थेऽरण्ये वनेऽपि वा। नदीनां वाऽपि संभेदे स संग्रहणमाप्नुयात्"॥ इति।

'अकाले' इत्यस्यार्थं **अंधकाराकुले काले चेति**। अकाले इति छेदः। सहैकेत्यस्य तयां सहैकत्र स्थानं स्थितिं करोतीति शाब्दोऽर्थस्तत् फलितमाह। **परेति**। **तत्र एवो**ऽप्यर्थे तदाह। **सोऽपीति**।

विशेषमाह। **एतच्चेति**। संग्रहणप्रवृत्तग्रहणं चेत्यर्थः। 'आशंक्येति' बहुव्रीहिः। **यस्त्विति**। यः पूर्वमनाक्षारितः परस्त्रीप्रार्थनाभिशापरहितः। असौ विट् इति न निंदितः केनचित् कारणेन जनसमक्षमथाभिभाषणं कुर्यात् न स दंड्यत्वादिदोषं प्राप्नुयात् यस्मान्न कश्चित्तस्यापराधोऽस्तीत्यर्थः। एवं भिक्षुकादावपि न दोष इत्यपि **तेनै**वोक्तम्। **मनुः** (अ. ८ श्लो.३६०)

"भिक्षुका बन्दिनश्चैव दीक्षिताः कारवस्तथा। संभाषणं सह स्त्रीभिः कुर्युरप्रतिवारिताः"॥ इति।

भिक्षुकाः भिक्षाजीविनः यतयो वा। बंदिनः स्तुतिपाठकाः। दीक्षिता यज्ञार्थं कृतदीक्षकाः। कारवः सूपकारादयः। एते भिक्षादिकार्यार्थं गृहिस्त्रीभिः सह संभाषणमनिवारिताः कुर्युरेवं चैषां संभाषणं ता अपि कुर्युरित्यर्थः। निवारणे तु नैवमित्यप्रतीत्यनेन सूचितम्।

विशेषांतरमाह। **य इति**। **तेनैव मनु**नैव। एवमग्रेऽप्युभयत्र। **स्त्रियमिति** यस्मात् स्प्रष्टुमनुचिते स्तनजघनादिदेशे परस्त्रियं स्पृशेत्तया वा वृषणादिके देशे स्पृष्टः क्षमते तथाऽन्योन्यांगीकरणे सति यत् प्रवर्तमानसंग्रहणामिदं सर्वं संग्रहणं **मन्वा**दिभिः स्मृतमित्यर्थः। **असकृदिति**। 'भूतपूर्वे चरडिति' (व्या. सू. ५।३।५३) चरट्॥ २८४॥

**प्रतीति**। अनेन सह त्वया न संभाष्यमनया च सह त्वयेत्येवं पूर्वं प्रतिषिद्धयोः **स्वैरिणीजारयो**रित्यर्थः। **पुनः** पश्चात्।

## याज्ञवल्कीये २८५ श्लोकः ।

प्रत्यासत्त्या प्रतिषेधपदार्थमाह । **प्रतीति ।** कर्मणि घञ् । अनेन निषेध इत्यत्राप्येषमिति सूचितं वाक्यार्थमाह । **प्रतीति ।** शेषमाह । **प्रवर्तेति ।** द्वितीयपादार्थमाह । **पुरुष इति ।** उत्तरार्द्धमतिदेशविधिरित्याह । **द्वयोस्त्विति ।** अनुक्तत्वादाह । **वक्ष्यते इति ।** 'सर्वं वाप्य-मिति' न्यायेनाह । **स एवेति ।** विशेषमाह । **एतच्चेति ।** उक्तदण्डश्चेत्यर्थः । **चारणा** नटादयः आत्मनोपजीविनश्च तद्भिन्नाः वेशावृत्तिजीविनां दाराः । विधिनात्मोपेतिपाठान्तरम् । तथा चैषः परस्त्रियं नाभिवदेदित्यादि संभाषणादि निषेधविधिः नटगायनादिदारेषु नास्ति तथा 'भार्यापुत्रः स्वका' इत्युक्तत्वात् भार्येवात्मा तयोपजीवन्ति धनलाभाय तस्य लाभं क्षमंते ये तेषां नटादिभिन्नानां ये दारास्तेष्वपि निषेधविधिर्नास्ति हि यस्मात्ते चारणा आत्मोपजीविनश्च परपुरुषानानीय तैः स्वभार्या संश्लेषयंते स्वयमागतांश्च पुरुषान् प्रच्छन्ना भूत्वा स्वज्ञानं विभावयन्तो व्यवहारयन्तीत्यर्थः । तत्रापि विशेष**स्तेनैव** उक्तः ( अ. ८ श्लो. ३६३ )

"किंचिदेव तु दाप्यः स्यात् संभाषां ताभिराचरन् । प्रेष्यासु चैकभक्तासु रहःप्रव्रजितासु चेति ॥"

रहो निर्जने देशे चारणादिस्त्रीभिः संभाषणं कुर्वन् स्वल्पं दण्डलेशं राज्ञा दाप्यः तासामपि परकीय-त्वात् । तथा दासीभिरवरुद्धाभिः बौद्धाभिर्वृद्धचारिणीभिः संभाषां कुर्वन् किंचिद्दण्डमात्रं दाप्य इत्यर्थः । तमिति यस्यातिदेशः पूर्वं कृतस्तमित्यर्थः ॥ २८५ ॥

## याज्ञवल्कीये २८६ श्लोकः ।

स्वजातावित्युक्तिस्वारस्यादाह । **चतुर्णामिति ।** मूलानुरोधेनाह । **साशीति इति ।** द्विती-यपादार्थमाह । **यदा त्विति ।** आनुलोम्यादौ स्वार्थे ष्यञ् च । अभिगमने इति शेषः । सर्वत्र तत्फलित-माह । **आनुलोम्येनेति ।** उभयत्र दत्तयोर्गुप्तत्वागुप्तत्वयोर्मूलानुक्तयोर्विशेषणयोः फले आह । **यदा पुनरिति ।** तत्रादौ अगुप्ता सवर्णागमने दण्डमाह । **सहस्रमिति ।** अत्र पूर्वार्धे स्वजाता-विति मूलप्रथमपादोक्तसमानविषयं ब्राह्मणपदं विप्रपदं च क्षत्रियादेरप्युपलक्षणम् । तथा च क्षत्रि-यादीनामपि गुप्तसवर्णपरदारगमने एष एव विधिर्ज्ञेयः एतदुपयोगस्तु 'गुप्तां बलादिति' विषय-विशेषस्य तत्र लाभ एव । एवं च पूर्वप्रकरणसिद्धिरन्यसिद्धिरपीति । इदमपि व्याख्यात्रोक्तम् । प्रकृ-तोपयुक्तं तूत्तरार्धमेव । यथा च रक्षितां सवर्णां सवर्णो बलेनोपगच्छन् सहस्रं दंड्यः स्यात् । व्रजन्नि-त्यत्र व्रजेदिति पाठे वाक्यभेदो बोध्यः । उत्तरार्धे 'इच्छंत्येति' बलादित्यस्य विपरीतोक्त्या तस्योक्त-विपरीतार्थपरत्वावधारणेनागुप्तयेत्यर्थाल्लब्धम् ।

तथा चारक्षितया इच्छंत्या सवर्णया तु सहसंगतः सकृन्मैथुनः पंचशतानि दंड्यो भवेदित्यर्थः । आनुलोम्येन गुप्तागमने दण्डमाह । **सहस्रमिति ।** इदं च तत्र पूर्वतः पद्यचतुष्टयेन व्यवहितं तत्रेतोऽव्यवहिते ।

"वैश्यश्चेत्क्षत्रियां गुप्तां वैश्यां वा क्षत्रियो व्रजेत् । यो ब्राह्मण्यामगुप्तायां तावुभौ दंडमर्हतः"॥

( **मनु.** अ. ८ श्लो. ३८२ ) इत्यत्र क्षत्रियावैश्ययोः प्रकृतत्वात्ते क्षत्रियावैश्ये गुप्ते रक्षिते अनिच्छंत्यौ गच्छन् ब्राह्मणः सहस्रं दंडं दापनीयः । शूद्रायां रक्षितायां गमने क्षत्रियवैश्ययोरपि सहस्रमेव दंडो भवेदित्यर्थः ।

अगुप्तास्थले **तेनै**वैतदग्रे उक्तम् ( अ. ८ श्लो. ३८४।३८५ )

" क्षत्रियायामगुप्तायां वैश्ये पंचशतं दमः । मूत्रेण मौण्ड्यमिच्छेत्तु क्षत्रियो दण्डमेव वा ।
" अगुप्ते क्षत्रियावैश्ये शूद्रां वा ब्राह्मणो व्रजन् । शतानि पञ्च दण्ड्यः स्यात् सहस्रं त्वन्त्यजस्त्रियमिति " ॥

' मूत्रं गर्धभस्य मुण्डनस्य दण्डस्य च विकल्पः दण्डश्च पंचशतरूपः शूद्रामित्यत्रापि अगुप्तामिति बोध्यम् । अन्त्यजश्चांडालादिः ।

विशेषमाह । **एतच्चेति** । मूलाद्युक्तमुभयं चेत्यर्थः । **सखा** मित्रम् । आदिग्राह्यं वचने व्यक्तं **माता** सपत्नमाता **स्त्रीत्यस्य** त्रिषु संबंधः । अभ्यर्हितत्वात्तस्य पूर्वनिपातः । **आर्या** गुरुः **प्रव्रजिता** बौद्धभिक्षुकी **धात्री** उपमाता **साध्वी** पतिव्रता **वर्णोत्तमेति** पुरुषोत्तम इतिवत् समासः । बहुव्रीहिर्वा । अतिदेशमाह । **गुर्वीति** । अत एवाह । **शिश्नेति । उत्कर्तनात्** छेदनात् । अन्ययोगे पंचमी । **अन्यः** धनदण्डः ।

मूलद्वितीयार्धीयपादं व्याचष्टे । **प्रातीति** । इदं लाक्षणिकमित्याह । **उत्कृष्टेति** । ' पुंस ' इत्यस्यार्थः **क्षत्रीति** । विशेषमाह । **एतच्चेति** । वधरूपदंडनं चेत्यर्थः । **अन्यत्र तु** अगुप्तायां तु । यद्यपि **मानवे** वक्ष्यमाणवाक्ययोर्व्युत्क्रमेणाव्यवहितपाठः अत एव तावतावित्यनेन वैश्यक्षत्रियपरामर्शस्तथापि ' अत्रैतच्चेति ' मूलोक्ते अन्यत्र चोक्तक्रमेणैव मानाकांक्षेति । एतत् क्रमेण कथयन्नादावाद्ये मानमाह । **उभावपीति । हिर्निश्चये । तावेव** पूर्वोक्तावेव । तथा च क्षत्रियवैश्यावुभावपि रक्षितया ब्राह्मण्या सह **विप्लुतौ** संगतौ कृतमैथुनौ । **शूद्रवद्दण्ड्यौ** । ' गुप्ते सर्वेण हीयते ' इत्यत्रोक्तप्रकारेण सर्वेण शरीरेण धनेन च हीनौ कार्यौ । सर्वस्वं गृहीत्वा वध्यावित्यर्थः । पक्षांतरमाह । **कटेति** । अत्र सर्वस्वग्रहणं नास्ति । कटाग्नीति मारणप्रकारविशेषोपदेशः । स च स्तेयप्रकरणे उक्तः । **वसिष्ठेन** तत्र विशेष उक्तः । ( अ० ११सू० १–५ ) " शूद्रश्चेत् ब्राह्मणीमधिगच्छेद्वीरणैर्वेष्टयित्वा शूद्रमग्नौ प्रास्येत् ब्राह्मण्याः शिरसि वपनं कृत्वा सर्पिषाऽभ्यज्य नग्नां खरमारोप्य महापथमनुव्राजयेत् पूता भवतीति विज्ञायते । वैश्यश्चेत् ब्राह्मणीमधिगच्छेल्लोहितदर्भैर्वेष्टयित्वा वैश्यमग्नौ प्रास्येत् । अग्रे प्राग्वत् । राजन्यश्चेत् ब्राह्मणीमधिगच्छेत् शरपत्रैर्वेष्टयित्वा राजन्यमग्नौ प्रास्येत् । अग्रे प्राग्वत् । एवं वैश्यो राजन्याया मैथुनमाचरन् शूद्रश्च राजन्यावैश्ययोरिति । " इदं च प्राणांतिकं दण्डविधानं अत्यंतश्रोत्रियदारत्वादिगुणवत् ब्राह्मणीविषयंदण्डगुरुत्वात् ।

" वैश्यः सर्वस्वदण्डः स्यात् संवत्सरनिरोधतः । सहस्रं क्षत्रियो दंड्यो मौण्ड्यं मूत्रेण चार्हतीति " ॥ **मनुना** ( अ० ८ श्लो० ३७५ ) इतः पूर्वमन्यत्र दंडांतरविधानाच्च ।

एवमाद्यैः संमतिरुक्ता । द्वितीयतामाह । **ब्राह्मणीमिति** । सेवेतामितिपाठः । गच्छेतामिति **तदर्थः** । पंचशतमित्य बहुव्रीहेरर्श आद्यच् । अरक्षितां ब्राह्मणीं तु यदि वैश्यक्षत्रियौ गच्छेतत्तदा वैश्यं पंचशतं दण्डयुक्तं कुर्यात् क्षत्रियं तु सहस्रं दण्डोपेतं कुर्यात् इत्यर्थः । रक्षाद्यर्थमधिकृतत्वेन क्षत्रियस्य वैश्यापेक्षयाऽधिकदण्डविधिरिति भावः । वैश्ये चायं पंचशतदण्डः शूद्राभ्रमादिना निर्गुणजातिमात्रोपजीविब्राह्मणीगमनविषयः । तद्भिन्नब्राह्मणीगमने तु वैश्यस्यापि **सहस्रदण्ड** एवेति बोध्यम् ।

अथ शूद्रे आह । **शूद्रस्येति । गुप्तां तु** उत्कृष्टवर्णाम् । **तस्य** शूद्रस्य । **तेनैव मनुनैव** । **शूद्र इति** । अत्र सर्वत्र सामान्ये नपुंसकं द्वैजातमित्यत्र ' तस्येदम् ' ( व्या. सू. ४ । ३ । १२० )

इत्यण् । गच्छेदिति यदि तदेति च शेषः । "अगुप्तं अंगसर्वस्वैर्गुप्तं सर्वेण हीयते" इत्युत्तरार्धपाठः । तथा च भर्त्रादिभी रक्षितामरक्षितां वा द्विजातिस्त्रियं यदि शूद्रो गच्छेत्तदा तयोर्मध्ये अरक्षितां **आवसन्** गच्छन् । अंगं च सर्वस्वं च ते दंड्ये यस्य तादृशो भवति । अत्र विशेषाश्रवणेऽपि अंगं लिंगमेव । "आर्य्यस्त्र्यभिगमने लिंङ्गोद्धारः सर्वहरणं च गोप्ता चेद्वधोऽधिक" इति (अ. १२ सू. २।३ ) **गौतम**वचनात् । तथा च लिगच्छेदः सर्वस्वहरणं च **कार्यम्** । रक्षितां तु **गच्छन्** धनेन शरीरेण च हीनःकार्यः सर्वस्वं गृहीत्वा वध्य इत्यर्थः । अंगसर्वस्वैरिति पाठे व्यक्त्यभिप्रायबहुवचनम् । अत्र पाठान्तरम् धृत्वा प्राचां व्याख्यानम् असंबद्धम् स्पष्टमेवेत्युपेक्षितम् । अविशोदिति पाठान्तरम् । अभिगच्छेदिति तदर्थः । येनांगेनापराद्धं तेन हीन इति **कल्पतरूक्तम्** तन्न युक्तम् । उक्त**गौतम**विरोधात् ।

'नार्या' इति तुर्यपादं व्याचष्टे । **नार्याः पुनरिति** । निगमनस्य स्थलद्वये तदनूक्त्यान्यूनतापत्तिस्तां निराचष्टे । **आनुलोम्ये** गमने गुणवद्गुणवान् । **सवर्ण वेति** । प्रातिलोम्यस्थले । प्रोक्तदंडविधानात्तदन्यत्र गमनेऽल्पदोषत्वेनांगच्छेदाभावस्य युक्तिसिद्धत्वेनानुलोम्यगमने गुणवद्गुणवदाद्यपेक्षयोचितधनदंडः सवर्णागमने त्वधिकारादिदंड इति देशाद्यनुसारेण दण्डः कल्प्य इत्यर्थः । **मनु**ना तु ( अ. ८ श्लो . ३६१ ) "न संभाषां परस्त्रीभिः प्रतिषिद्धः समाचरेत् । निषिद्धो भाषमाणस्तु सुवर्णं दण्डमर्हतीति" सामान्येनोक्तम् षोडशमाषात्मकं सुवर्णम् ।

विशेषमाह । **अयं चेति** । राज्ञः अभिषेकादिगुणयुक्तस्य दुष्टशासनकर्तव्यतयेति भावः । **न द्विजातीति** । न वर्णत्रयस्येत्यर्थः । **मात्रं** कार्त्स्न्ये । **गौतम**माह । **ब्राह्मण इति** । तत्रापि विशेषमाह । **यदा त्विति । स्वयमेव** द्विजातिरेव । कार्यातिपातशंकया हेतुत्वस्योक्तत्वाद्धेत्वन्तरम् । **मानव**माह ( अ. ८ ) **शस्त्रमिति** । उपरुध्यते इत्यग्रे नेत्यतः पूर्वम् ।

" द्विजातीनां च वर्णानां विप्लवे कालकारिते ॥ " ( ३४८ )

" आत्मनश्च परित्राणे दक्षिणानां च संगरे । स्त्रीविप्राभ्युपपत्तौ च घ्नन् धर्मेण न दुष्यति ॥ (३४९)

" गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् । आततायिनमायांतं हन्यादेवाविचारयन्॥"(३५०)

इति पाठः । एतत् सूचनार्थमेव मध्ये तथेत्युक्तम् । ब्राह्मणादिभिः खड्गाद्यायुधं ग्राह्यं यत्र काले वर्णानामाश्रमाणां च साहंकारादिभिर्धर्मः कर्तुं न दीयते । तथा तेषामराजकेषु राष्ट्रेषु परचक्रादिना कालजनितसंगरादौ आत्मरक्षार्थं च दक्षिणानां गोधनाद्यपहारनिमित्ते, संग्रामे च स्त्रीब्राह्मणापत्तिनिवारणार्थं च धर्मयुद्धे नान्यगतिकतया परान् हिंसन् न दोषभाक् भवति । परमारणेऽप्यत्र साहसदंडो न कार्यः । गुरुबालवृद्धबहुश्रुतब्राह्मणानां अन्यतमसमं वधोद्यतमागच्छंतं विद्यावित्तादिभिरुत्कृष्टं पलायनादिभिरपि सनिस्तरणाशक्तो निर्विचारम्[1] हन्यात् । अत **एवोशनाः** " गृहीतशस्त्रमाततायिनं हत्वा न दोषः" । **कात्यायनो**ऽपि ।

"आततायिनि चोत्कृष्टे तपःस्वाध्यायजन्मभिः । वधस्तत्र तु नैव स्यात् पापे हीने वधो भवेदिति ॥"

**मेधातिथिगोविंद**राजौ तु स्त्रीविप्रेति पूर्वस्यायमनुवादः । गुर्वादीनपि हन्यात् किमुतान्यानिति व्याचक्षाते । **नातेति** । जनसमक्षे रहसि वा ॥ २८६॥

---

१ ख-ड-निर्विवाद ।

## याज्ञवल्कीये २८७ श्लोकः ।

**विवेति** । उत्तमं दंडं दद्यादित्यस्यार्थः **उत्तमेति** । अथेत्यस्यार्थः **तद्वनेति** । **विवा**-हानभिमुखीमित्यर्थः । ' सवर्णामि'त्यनेन सवर्णादिति पाठः सूचितः । सवर्णास्विति पाठे **भिन्नं वाक्यं** तद्विषये पूर्वोक्तं बोध्यमित्यर्थः । तुर्यपादार्थमाह । **उत्कृष्टेति** । ब्राह्मणस्य तदसंभवादाह । **क्षत्रीति** । ' प्रातीति ' तत्र तद्भर्तृपरमिति भावः । तात्पर्यार्थमाह । **दंडेति** । तस्य दुष्टत्वेनायोग्यत्वेना-नधिकारिणा कृतमकृतमेवेति न्यायेन तस्याः कन्यात्वाक्षत्या विवाहो भवत्येवेति भावः ॥ २८७॥

## याज्ञवल्कीये २८८ श्लोकः ।

**दंडमिति** । दंडाभावपूर्वकं दंडमित्यर्थः । तात्पर्यार्थमाह । **न दंड इति** । ' अन्यथा तु ' इत्यस्यैव व्याख्या **अनिच्छंतीमिति** । ' अधर्म ' इत्यस्यार्थः **प्रथमेति** ।

( उत्तरार्धः । )

**कन्येति** । एवमपहारदंडमुक्त्वेत्यादिः । अत्र सर्वत्र कन्यापदमविवाहितापरं लक्षणया प्रातिलोम्यादौ वक्ष्यमाणत्वादाह । **अनुलोमास्विति** । आद्यपादं व्याचष्टे । **यदीति** । सकामादौ विशेषाणां वक्ष्यमाणत्वादाह । **अकामामित्यादिना** । नखक्षतादिनेत्यस्य फलमाह । **यदा पुनरिति** । तामेवाह **कल्पतरुः** । **दर्पणेति** दर्पादिभिः । समानजातीयां कन्यां गमनवर्जमंगुलिप्रक्षेप्यमात्रेणैव **कुर्यात्** नाशयेत् । योनिं क्षतवतीं कुर्यादिति यावत् । तस्य शीघ्रमेवां-गुलिद्वयं छेत्तव्यम् । स षट्शतदंडं चार्हतीत्यर्थः । अकामामित्यस्य फलमाह । **यदा पुनरिति** । अत एव न बलात्कार इति भावः । **पूर्ववत्** अंगुलिप्रक्षेपादिमात्रेण योनिक्षतकरणेन । तेनैव **मनु**नैव । एवमग्रेऽपि । ' यस्तुल्यो नांगुलीति ' पाठः । **तुल्यः** समानजातिरिच्छंतीं कन्यामंगुलि-प्रक्षेपमात्रेण नाप्ययमंगुलिच्छेदं **नार्हति** न प्राप्नोति किंतु अतिप्रसक्तिनिवारणाय द्विशतं दंडं दाप्य इत्यर्थः । यत्कन्यां नांगुलीति पाठान्तरम् । दूषयानस्तु नांगुलीति च ।

विशेषांतरमाह । **यदा त्विति** । **एवेन** पुरुषव्यवच्छेदः । एवं **मानवे**ऽपि अत एवाह । **विदग्धा वेति** । **तत्रापि** उभयत्रापि । ' विशेष ' इत्यादि जातावेकवचनम् । **कन्यैवेति** । या कन्यैव परां कन्यां अंगुलिप्रक्षेपमात्रेण **कुर्यान्नाशयेत्** तस्या द्विशतो दंडः स्यादित्यर्थः । अस्योत्तरार्धं " शुल्कं च द्विगुणं दद्याच्छिफाश्चैवाप्नुयाद्दशेति " । सा तत्ककन्याशुल्कं यत्तु द्विगुणं तत् कन्यापित्रे दद्यात् । दशशिफा अत्र जटारज्ज्वादिप्रहारास्तांश्चाप्नुयादिति तदर्थः । एवमाद्यायामुक्त्वा द्वितीयायामव्यहितमाह । **या त्विति** । अत्र स्त्रीति सामान्यमप्यर्थाद्विदग्धापरम् । **या तु** विदग्धा **कन्यां प्रकुर्यात्** प्रगतं कुर्यान्नाशयेत् दूषयेत् अंगुलिप्रक्षेपमात्रेण सा **सद्यस्त**-त्क्षणमेव शिरोमुंडनं अर्हति । **तथेति** च समुच्चये । विदग्धत्वादेवांगुलिद्वयव्यापार इत्याह । **अंगु-ल्योरिति** । तर्जन्यंगुष्ठयोरित्यर्थः । तयोश्छेदनं चार्हति गर्दभेन राजमार्गे वहनं चार्हतीत्यर्थः । अपि वेति पाठे अपि वा चार्थे, एवेति एवे चेति पाठेऽप्येवम् । आद्ये मानवे कुर्यादित्यस्य विकुर्यात् दूषये-दित्यर्थः । तत्फलितमाह । **कन्यामिति** ।

---

१ ङ-विशेषेय ।

'उत्तमायामिति' द्वितीयपादं व्याचष्टे। **यदा पुनरिति**। अस्याभिगमनपरत्वे संमतिमाह। **उत्तमामिति**। हीनजातित उत्कृष्टामिच्छंतीं गच्छन् जात्यपेक्षयाऽङ्गच्छेदनमारणात्मकं वधमर्हतीत्यर्थः। अनुक्तविशेषानाह। **यदेत्यादिना**। **गोमिथुनं** तद्रूपं शुल्कं इति। **इच्छति** पिता। **तदेव** गोमिथुनमेव। सर्वत्र मानमाह। **यथाहेति**। **शुल्कमिति**। इदं तदुत्तरार्थम्। **समां** समानजातीयां तु इच्छंतीं गच्छन् यदि पिता इच्छेत् तदा पितुः शुल्कं दद्यादात्मरूपं तथा च न दंड्यः सा च कन्या तेनैवोढव्येत्यर्थः। तृतीये मानमाह। **योऽकामामिति**। तत् पूर्वं एकं यद्यव्यवहितः अयं श्लोकः यस्तुल्यजातिरनिच्छंतीं कन्यामभिगच्छति स तत्क्षणे एव विप्रेतरो लिंगच्छेदनादिकं वधमर्हति इत्यर्थः। इच्छेदिति सूचितम्। द्वितीये मानमाह। **सकामामिति**। इच्छंतीं तु गच्छन्न वधार्हो मनुष्यो भवति, किं तु तत्रोक्तरीतिरेवेत्यर्थः॥ २८८॥

## याज्ञवल्कीये २८९ श्लोकः।

**किंचेति**। कन्यास्थले प्रसंगादन्यदप्याहेत्यर्थः। पूर्वैकवाक्यत्वायाह। **स्त्रीति**। **अपस्मारेति**। गौमिर्गीति प्रसिद्धः। **राजयक्ष्मा** क्षयः। **आदिना** कुष्ठी इत्यादिरूपाः। **दीर्घाः** अचिकित्स्याः **कुत्सिता** रोगाः **संसृष्टं** प्राप्तं **मैथुनं** संभोगो यया तस्या भावस्तत्त्वं ते चैतदादयश्च, ते च ते दोषाश्च तानित्यर्थः। 'मिथ्ये'त्यस्यैव व्याख्यानं **विद्येति**। न च "अदुष्टांश्च त्यजन् दंड्यो दूषयंस्तु **मृषा** शतमिति" प्राक् स्वोक्तविरुद्धमिदम्। तत्र मिथ्याशंसने शतस्योक्तत्वादिति वाच्यम्। तस्य प्रकृतत्वाद्वरविषयत्वादेतस्य तदन्यवरविषयत्वादिति भावः। मम तु प्रतिभाति कन्यैव कन्यामिति **मनूक्त**विषयकमाद्यपादोक्तम्, मिथ्येत्यत्र भावप्रत्ययांतादर्श आद्यजंतादाप् स्त्रीविशेष्यभूता, तथा च तादृशस्त्रीविषयको द्वितीयपाद इति न विरोधशंकाऽपि। आद्ये **मूलोक्तमनू**क्तयोर्विकल्प इति। गोः पृथक् वक्ष्यमाणत्वादाह। **गोव्यतीति**। **गोतमो**ऽपि— 'पशून् शतं दाप्य' इत्यादि। **मात्स्ये**ऽपि—

"तिर्यग्योनौ तु गोवर्जं मैथुनं यो निषेवते। स शतं प्राप्नुयाद्दण्डं तस्याश्च यवसोदकमिति"॥

'हीनामि'त्यस्य व्याख्या **अन्त्येति**। अन्त्यगामिनीं न त्वन्त्यामित्यर्थः। तत्र विशेषस्य वक्ष्यमाणत्वात्। अत एव **नारदः**।

"पशुयोनावतिक्रामन्विनेयः सततं शतम्। मध्यमं साहसं गोषु भवेदन्त्यावसायिष्विति॥"

"अकन्येति तु यः कन्यां ब्रूयाद्दोषेण मानवः। सततं प्राप्नुयाद्दंडं तस्या दोषमदर्शयन्॥" इति।

(अ. ८ श्लो. २२५)

**मनुर**पि 'दूषयंस्तु मृषा शतमिति' **मूलो**क्तसमानविषयः। तत्र 'तस्या' इत्यादि हेतुगर्भविशेषणं यत् उक्तदोषं क्षतयोनित्वादिकमविभावयन्नतो युक्तोऽस्यायं पणशतात्मको दंड इत्यर्थः। "यस्तु दोषवतीं कन्यां अनाख्याय प्रयच्छति। तस्य कुर्यान्नृपो दंडं स्वयं षण्णवतिं पणानिति" (अ.८श्लो.२२४) अत्रैवानुशयप्रसंगे प्राग्वन्मनूक्तम्[2] तु 'अनाख्याय ददद्दोषं दंड उत्तमसाहसमिति' **मूलो**क्तविषये पक्षान्तरं बोध्यम्। नोन्मत्ताया इति सामान्येनोक्तत्वात्तत्र दंडविशेषोक्त्यर्थं तत्। अत एव दोष उन्मादादिः। स्वयमित्यादरार्थम्। यत्तु "पाणिग्रहणिका मंत्राः कन्यास्वेव प्रतिष्ठिताः। नाकन्यासु क्वचिन्नृणां लुप्तधर्मक्रिया हि ताः।" (अ. ८ श्लो. २२६) इति तत्रैव **मनु**स्तस्यायं भावः। अर्थ-

---

१ ड–आत्मानुरूपम्। २ आचारे श्लो. ६६

मणन्नु देवं कन्या अग्निमैरयते'त्यादयो वैदिका मनुष्याणां विवाहसंबंधिनो मंत्राः । कन्याशब्द-श्रवणात् कन्यास्वेव व्यवस्थिताः । अकन्याविषये क्वचिद्धर्मशास्त्रविवाहसिद्धये न व्यवस्थिताः असमवेतार्थतापत्तेः । अतस्तत्र हि यतः ताः क्षताः वैवाहिकमंत्रैः संस्क्रियमाणा अपि [1]गैतधर्मविवाहादि-शालिन्यौ भवंति, नासौ विवाहो धर्म इत्यर्थः । न तु क्षतयोनेर्विवाहादि मंत्रहोमादिनिषेधकमिदं या गर्भिणी संस्क्रियते ( **मनु.** अ. ९ श्लो. १७३ ) । तथा " वोढुः कन्यासमुद्भवमिति " क्षतयोनेरपि **मनु**नैव विवाहसंस्कारस्योक्तत्वात् । **देवलेन** तु—

" गांधर्वेषु विवाहेषु पुनर्वैवाहिको विधिः । कर्तव्यश्च त्रिभिर्वर्णैः समयेनाग्निसाक्षिकः " इति ।

गांधर्वेषु विवाहेषु होममंत्रादिविधिरुक्तः । गांधर्वश्चोपगमनपूर्वकोऽपि भवति तस्य क्षत्रिय-विषये सुधर्मत्वमपि **मनुनो**क्तम् । अतः सामान्यविशेषन्यायेनान्यविषयोऽयं क्षतयोनिविवाहस्याधर्मत्वोपदेश इति ॥ २८९ ॥

## याज्ञवल्कीये २९० श्लोकः ।

**साधेति** । तत्त्वं च सर्वपुरुषगामित्वम् । अन्वयायाह । **गच्छन्निति । उक्तेति ।** अभ्युपेत्य शुश्रूषाख्याप्रकरणे ' गृहजातस्तथा क्रीत ' इत्यादिना साम्यादुक्तप्रायलक्षणा इत्यर्थः । निमित्तांतरत्व-निरासायाह । **ता एवेति** । अत एव नारीष्विति **कल्पतर्वा**दिपाठे नैकवाक्यता । **पुरुषां-तेति** । स्वभोग्यत्वं तु नैवेति भावः । **पुरुषेति** । स्वामिभिन्नेत्यर्थः ।

एवं पदार्थानुक्त्वा वाक्यार्थमाह । **यदेति** । एवो दाप्य इत्यत्रान्वेतीत्याह । **तथा चेति** । समुच्चयार्थकात् समुदितादित्यर्थः । "स्वैरिणी या पतिं हित्वा सवर्णं कामतः श्रयेदि"त्युक्त-लक्षणा स्वैरिणी । आसां साधारणत्वं प्राग्वदेव सान्निध्यात् संभवाच्चाह । **भुजीति** । तदेवाह । **सर्वेति** । गम्यास्वपीत्यनेन सूचितमिदम् । अनुवृत्तिलब्धमाह । **गच्छन्निति** । **अपि**र्विरोधे ।

ननु साधारणत्वे कथं दंड अत आह । **परेति** । एतदर्थमेव विशेषणद्वयमिति भावः । **अब्राह्मणीति** स्वैरिण्या विशेषणम् । तादृशी सा च ब्राह्मणीत्युपलक्षणमतः क्षत्रियादिस्त्रियोऽपि स्वैरिण्यो गृह्यंते । दासीं चासौ निष्काशिनी चेति व्याख्यानमपास्तम् । **मूलाशुद्धेः कल्पतर्वाद्य-**संमतत्वात् पूर्वनिपाते वैपरीत्यापत्तेः पृथक्पदत्वस्य व्याख्यातृसंमततया स्पष्टत्वाच्चेति दिक् । दोषमुप-पादयति । **गम्यास्वपीति** । आस्वित्यर्थः । गम्या अपीति पाठान्तरम् । हिर्निश्चये । **यत्** यस्मात्**ताः** । **भुजिष्याः** स्वैरिण्यादयः । परेषां परिग्रहो यासामित्यर्थः । यास्ता इति पाठे हिर्हेतौ । ' निष्कोति ' पृथक्पदं दासीविशेषणमिति आह । **निष्केति** ।

तदर्थं कथयन्नाद्ये आह । **स्वैरिणीति** । द्वितीये आह । **वर्णानामिति** । अध्यायभेदेन भिन्नमिदम् । नन्वस्तु आसां वर्णस्त्रीत्वं तथापि सर्वपुरुषगामित्वेन साधारणत्वमित्यविरोधेन तत् कथं न युक्तमेवेति तदभावः कथमत आह । **न च वर्णस्त्रीणामिति** । पुरुषपरत्वविधानात् पुरुषांतरपरत्व-निषेधाच्चेति भावः । तत्राद्यं तु 'स्वदारनिरतः सदे'त्यग्रे स्फुटीभविष्यति । द्वितीयमाह । **दुःशील**

---

१ फ-ङ-अगतधर्मविवाहादि । २ मि. पृ. ११९ पं. ९ ।

**इति**। दुष्टस्वभावः। **कामेति**। यथेच्छाचारी । इदं जीवविषयम्। अथ **मृते** आह । **कामान्त्विति** **मानव**मिदं वचनद्वयम्।

**तथाविधेति** । रक्षिताया इत्यर्थः । अदृष्टाया इति यावत् । **न च दासीति** । दासीत्वादित्यर्थः । यथा सूतकादित्यर्थः । यथा सूतकादिवशात् स्वधर्मभूतसंध्याद्यधिकाराभावस्तथा दासीत्वात् स्वधर्मभूतस्वपुरुषपरत्वाद्यभावेन सर्वपुरुषगामित्वेन साधारणत्वमिति भावः । **हि** यतः । सूतकादौ वचनात्तदभावो न स्वरूपेण, अत्र तु न वचनं नापि स्वरूपतः । पत्यौ दास्यं पारतन्त्र्यमेव शिष्यस्त्वादिवदतो न स्वधर्मपरित्यागो येन साधारणं स्यादिति भावः।

ननु मा भूद्दासीस्वैरिण्योः साधारणत्वाभावाद्गम्यत्वं वेश्यायास्तु तत्वेन तत्वं भवत्वित्यत आह । **नापीति** । किमियं वेश्या वर्णानुलोमजभिन्नगम्यजात्यंतरांतःपातिनी उत्तमवर्णानुलोमजांतःपातिनी, उत प्रतिलोमजान्तःपातिनी, तत्राद्यं दूषयति । **वर्णानुलोमेति** । तादृशजात्यंतराभावादेव तदंतःपातित्वेन गम्यत्वाभाव इत्यर्थः । न द्वितीय इत्याह । **तदंतररिति** । तत्वे च सति स्वैरिण्यादिवदेव तासां पतिपरायणत्वविधानादगम्यत्वमित्यर्थः । नापि तृतीय इत्याह । **प्रतीति । नेतरामिति** । अतिशयितगम्यत्वाभाव इत्यर्थः । नितरामिति पाठेन तासामिति पाठः । प्रतिलोमजानां दुष्टत्वेन तद्गमनस्य निषिद्धत्वादित्यर्थः । गम्यात्वमिति पाठः । गम्यत्वमिति पाठे सामान्ये **नपुंसकम्** । एवमन्यत्रापि ।

स्वैरिण्यादयो न परपुरुषगम्या इत्याक्षेपमुपसंहराति । **अत इति** । उक्तहेतुजातादित्यर्थः । **तासां** वर्णानुलोमप्रतिलोमजानां सर्वासां स्वैरिण्यादीनां निंदिते परपुरुषोपभोगस्य निषिद्धत्वात् गमनस्य च । तस्यापि समाधत्ते । **सत्यमित्यादिना** । सत्यमित्यर्धांगीकारे तथापि योजयति । **किंत्विति । अत्र नारदी**यादौ पित्रादिति पित्रादिरक्षकश्च राजदंडश्च तयोर्भयादिरूपदृष्टदोषाभावाद्गम्यत्वरूपवाचो युक्तिर्वचनमात्रमित्यर्थः । अयं तासामेव दण्डोऽस्त्वत आह । **स्वैरिण्याद्यानामिति** । हेत्वंतरं **मानव**माह । **कन्यामिति** । संभोगार्थ**मुत्कृष्टं** उत्कृष्टजातिपुरुषं **भजंतीं** सेवमानां **कन्यां किंचिदपि** स्वल्पमपि दंडं न दापयेदित्यर्थः । अयं निषेधः कन्याया एव, न स्वैरिण्याद्याया अत आह । **लिंगेति** । लिंगदर्शनं निमित्तमात्रं नाव्यभिचारितो हेतुरतः कन्याऽपि **स्त्री स्वैरिण्यादयो**ऽपि स्त्रिय इत्युभयत्र स्त्रीत्वाविशेषात् कन्याया इव स्वैरिण्यादीनामपि दंडाभाव इति भावः।

ननु यदि दंडाद्यभावस्तर्हि प्रायश्चित्तमपि न स्यादत आह। **प्रायश्चित्तमिति । स्वधर्मेति।** बहुव्रीहिणा पूर्वविशेषणम् । **गम्यानां** स्त्रीणां उक्तानां **गंतॄणां** पुरुषाणां ।

वेश्यास्थले विशेषं प्रतिपादयितुं वेश्यावर्णाद्यंतःपातित्वं कश्चिदनुमानप्रमाणकमभिमतं तन्मतमाह । **यत्पुनरिति । वेश्येति** पक्षः **वर्णेति** साध्यम् । **आदिना** प्रातिलोम्यपरिग्रहः । मनुष्यत्वजात्येति हेतुः । यत्र यत्र तथा तत्र तत्र तत्त्वं । यथा ब्राह्मणादिषु इति दृष्टान्तः । आदिना मूर्धावसिक्तादिपरिग्रहः । हेतोर्व्यभिचरितत्वेन दूषयति । **तन्नेति । कुंडेति** । तैर्हेतोर्व्यभिचरितत्वादित्यर्थः । कुण्डादीनामाचाराध्याये वर्णाद्यन्तःपातित्वाभावस्योक्तत्वेन तत्र हेतुसत्त्वेऽपि साध्यस्याभावादिति भावः । स्वमतमाह । **अत इति** । उक्तहेतोरित्यर्थः । तामेव जातिमाह । **वेश्यायामिति** । अनिषिद्धपुरुषोत्पन्नत्वे सति तत्र पुरुषसंभोगवृत्तित्वं वेश्यात्वमित्यर्थः ।

एतत् घटकैर्वेश्याया अपीदमेव लक्षणमिति ध्वनयन् दृष्टांतमाह । **ब्राह्मेति** । अनादित्वाच्च संसारस्य न दोषः । एतत् सूचनार्थमेवानादिरित्युक्तम् । **हि** यतः । **पञ्चमीति** ब्राह्मणत्वादिचतुष्टयापेक्षया पञ्चमीत्यर्थः । प्रकृतं तमेव सविशेषमाह । **अत इति** । इदमनवरुद्धायाम् । तत्रापि विशेषमाह । **तास्त्रु चेति** । वेश्यास्वपीत्यर्थः । पशुवेश्येति पञ्चभिगमने वेश्याभिगमने चेत्यर्थः ॥ २९० ॥

उत्तरसंगत्यर्थं फलितमाह । **अवरुद्धास्विति** । विदधत इत्यस्यैव विशेषणं दंडविधानादिति पाठांन्तरम् । नास्वतंजीति पाठः । **तस्य** अभुजिष्यागमने दंडाभावस्य ।

## याज्ञवल्कीये २९१ श्लोकः ।

तत्र हेतुं सूचयन्नाह । **पुरुषेति** । दासीग्रहणमुपलक्षणमित्याह । **स्वैरीति** । प्रसह्येत्यस्य व्याख्या **बलादिति** । तस्यैव विवरणं **शुल्केति** । अत एवाभुजिष्यास्वपि अस्य दंडः । एतावतैवास्य वचनस्य सार्थकमन्यथाऽसंबद्धत्वं वैयर्थ्यं च स्पष्टमेव । उत्तरार्धतात्पर्यार्थमाह । **यदि बहव इति** । मूलेऽसौ दास्यादिरत एव व्याख्यानं सामान्येन । **परीति** तत्परिच्छिन्नम् । समुदितं वस्त्वित्यर्थः । विशेषमाह । **यदा पुनरिति** । **भाटिं** सर्वमूल्यम् । **तेषां** बहूनां शुल्कस्य दत्तत्वात् । तत्रापि विशेषमाह । **यदीति** । तथा च तत्र तथाकरणे पुनरपि तेषां दोष एवेति भावः । आदिसंग्राह्यं वचने एव व्यक्तम् । **वडवा** गृहदासी ॥ २९१ ॥

## याज्ञवल्कीये २९२ श्लोकः ।

ननु यदा पुनरित्यादिना तेषां दोष एवेति भावः आदिप्रतिपादनेन तस्या एव तत्र दोषलाभेन स वक्तव्योऽत आह । **गृहीतेति** । **मौल**मिदम् । किंचेत्यपपाठः । अत्रापि वेश्याग्रहणमुपलक्षणमत एव सामान्येन व्याचष्टे । **यदा त्विति** । **नारदो**क्तेरेवाह । ‘ स्वस्थाऽप्यर्थपतिमिति ’ तृतीयपदस्यायमर्थः । शुक्ले निश्चितेऽप्यगृहीते सति नेच्छंति सा समं यावन्निश्चितं तावदेव दाप्येति स्पष्टत्वाद्व्याख्यात्रा नोक्तम् । तुर्यपदार्थमाह । **तथेति** । **स्वयं** स्वयमेव । **शुल्केति** । यद्दत्तं तस्य हानिरेवेत्यर्थः । स्पष्टत्वाय **नारदी**यमाह । **शुल्कमिति** । **यत इत्यादि** । **तथा** तद्वत् । **तेनैव** **नारदेनैव** । **अप्रेति** । शुल्कमप्रयच्छन् । पुमान् तथा बलात्कारेण व्याध्याद्यभिभूतां स्त्रियं भुक्त्वा शुल्कमष्टगुणं यावन्निर्णीतं तदष्टगुणं दाप्यः । **घात**स्ताडनम् । पादेति पठांतरं । तथा च ताडनदंतक्षतनखक्षतादिभिः करणैर्य आक्रमो वशीकरणं तेन संगच्छंश्च । तथा **अयोनौ** योनिभिन्नेत्यर्थः । **मुखादौ** योऽभिगच्छेत् स च तथा शुल्कमदत्वा एकमेव वा शुल्कं दत्वा यो **बहुभिर्वासयेत्** संगमयति तां सोऽपि तथेत्यर्थः । **विनयं** दंडो । ननु कथं दोषनिर्णयस्तत्रात आह । **वेश्या इति** । **तत्र** तदीयगृहे । **याः** कामुक्यः साभिलाषास्तद्गृहवासिन्यः **प्रधानाः** वृद्धाः वेश्याः संति ताः मिथः समुत्पन्नविवादरूपकार्यविषयकसंशये सति तत्परिहाराय निर्णयं जानंतीत्यर्थः । वेश्याः प्रधाना ये तत्र कामुका इति पाठान्तरम् । तदा तत्र वैश्यैव प्रधानमुपजीव्यमेषामेतादृशास्तद्गृहनिवासिनो ये कामुका विटाः संतीत्याद्यर्थः ॥ २९२ ॥

## याज्ञवल्कीये २९३ श्लोकः ।

**किंचेति** । एतत् प्रसंगादन्यदप्युच्यत इत्यर्थः । एवमग्रेऽपि । अन्यत्र दंडाल्पत्वस्य गमनादौ सत्वादाह । **स्वेति** । अयोनावित्यस्यार्थो **मुखादाविति** । **आदिना** पायुपरिग्रहः । **पुरुषमेवेति**

तदभिमुखः **सन्मेहेति** मूत्रादिकं करोति सोऽपि । **वा** चार्थे । **प्रव्रजिता** प्रागुक्ता। नन्विदं 'राज्ञी प्रव्रजिता धात्रीति' प्रागुक्त**नारद**विरुद्धं अत्र हि पणानां चतुर्विंशतिर्दंड उक्तस्तत्र शिश्नस्योत्कर्तनं दंड उक्त इति चेन्न अत्यन्तगुणवत् प्रव्रजितागमनविषयकं तत्रैवाभ्यासविषयकं वा **नारदीय**मिदं तु तदन्यविषयकमिति भेदात् ॥ २९३ ॥

## याज्ञवल्कीये २९४ श्लोकः ।

त्वङ्क्त्वेति ल्यबंतः पाठः । त्वङ्क्त्वेति पाठे आर्षो ल्यब् व्याख्यानानुसारात् यदा त्वङ्क्य इति प्रथमांतपाठः तेनाङ्क्यः सन् प्रवासयेदित्यर्थः । तदा व्याख्यानफलितार्थकथनपरतया नेयं शूद्रस्याग्रे विशिष्योक्तेराह । **त्रैवर्णीति** । न्यूनं मध्ये समूलं पूरयति । **सहस्रमिति** । बध्यत इति बन्धः कुत्सितश्चासौ बन्धश्च कुबन्धस्तदर्थमाह । **भगेति** । प्रागुक्त**मनो**रिति भावः । तद्विशेषणफलमाह । **प्रायश्चित्तेति** । **दंडनमेवेति** । नांकनमित्यर्थः । तथेत्यस्यार्थः चाण्डाल्य**भीति** । सर्वसंग्रहायाह । **उत्कृष्टेति** ॥ २९४ ॥

॥ इति स्त्रीसंग्रहणप्रकरणम् ॥

---

## अथ स्त्रीपुंसयोगाख्यप्रकरणम् ।

**स्त्रीपुंसयोगाख्यम्** अपरमपीत्यर्थः । **विवाहादीति** । यत्र विवादपदे स्त्रीणां पुंसां च विवाहादिविधिः कीर्त्यते अनुमतितदभावाभ्यां प्रसिद्धो भवति तद्विवादपदं स्त्रीपुंसयोगसंज्ञमुच्यते इत्यर्थः- यत्र विवाहे स्त्रीपुंसयोर्व्यतिक्रमो भवति तद्यथा कन्यका यं वरमेकं क्वचित् वृणीते स व्रियमाणः पुमान् न तां दोषशंकादिना एवमेव पुरुषोऽपि यां काश्चित् कन्यकां परिणेतुमिच्छति कन्या तु न तं दोषशंकादिना । एवं च एतादृशस्थले तत्र व्यवहारप्रवृत्तिरेव **विवाहादीत्यादिना** । परपुरुषतः स्त्री रक्षणीया । सर्वात्मना स्त्रियाऽपि भर्तृपरया भाव्यमित्यादि नियमपरिग्रहः । एतत् सर्वं स्त्रीपुंसयोगाख्यं विवादपदमिति भावः । आदिग्राह्यमेवाह । **मनुरपीति** । अत एवादौ **नारद**मुक्त्वाऽग्रे **मनू**क्तीरिति बोध्यम्[1] । स्वैःस्वीयैर्भर्त्रादिभि[2]**र्दिवानिशं** सदा **विषयेष्व**निषिद्धेष्वपि रूपरसादिविषयेषु **सज्जंत्यश्च** प्रसक्ता अपि **आत्मनो नो वशे** आयत्ततायां **संस्थाप्याः** आत्मवशाः कार्या इत्यर्थः। "पुरुषस्य स्त्रियाश्चैव धर्म्ये वर्त्मनि तिष्ठतोः । संयोगे विप्रयोगे च धर्मान् वक्ष्यामि शाश्वतम्" इत्यस्यादिः ( **मनु**. अ. ९ श्लो. १ ) इत्यादीत्यादिना "पिता रक्षति कौमारे भर्ता रक्षति यौवने । रक्षन्ति स्थविरे पुत्रा न स्त्री स्वातंत्र्यमर्हति" इति ( **मनु**. अ. ९ श्लो. ३ ) इत्यादि परिग्रहः । इदं च यथासंभवं द्रष्टव्यम् । **निषिद्ध इति** पूर्वमिति भावः । **प्रत्यक्षेण** साक्षात् । **अभिचारे** व्यतिक्रमे **जातस्य** तत् समूहस्य । न्यूनतामत्र परिहरति । **एतच्चेति** । स्त्रीपुंसधर्मजातमित्यर्थः । **पुनः** पश्चात् ॥

इति स्त्रीपुंसयोगप्रकरणम् ॥

---

१ क-अत एव वाऽऽदौ । २ ख-भ्रात्रादिभिः ।

## अथ प्रकीर्णप्रकरणम् ॥ २५ ॥

**च**स्त्वर्थे । एवं पुनरपि यथेति पाठे । आदौ स योज्यः । तानेव दर्शयतीत्यर्थः । तथेति पाठे समुच्चयार्थः सः । **तत्कर्मेति** । राजकार्याज्ञा विषयकर्मेत्यर्थः । **पुनः प्रदानमिति** । कर्त्रा अकृतस्य कर्मणः प्रत्यर्पणम् । राज्ञे इत्यर्थः । पुरः प्रदानमिति पाठे दुर्गकुल्यास्थानादिरूपपुराणां पालनाय दानमित्यर्थः । पुत्रप्रधानसंभेद इति **कल्पतरु**पाठः । **प्रकृतीनां संभेदो** मेलनं अंतर्जातिः परस्परविरोधो वा **पाषंड्यादि**चतुर्णां लक्षणान्युक्तानि । तेषां धर्मव्यत्यया इत्यर्थः । **प्रतिग्रहस्य विलोपो** नाशः । यथा ब्राह्मणाय प्रतिग्रहयोग्याय पात्रभूतायादानं यद्वा प्रतिग्रहस्य शूद्रादौ प्रतिग्रहप्रवृत्तेर्विलोपः । सप्रतिग्रहविवादश्चेति पाठान्तरम् । **आश्रमिणां** ब्रह्मचार्यादीनां **कोप** उद्रेकः स्वधर्मभ्रंश[1] इति यावत् । मिथो विरोधो वा तेषां कोपः लोपश्चाश्रमिणामपीति **कल्पतरौ** पाठः । **वर्णसंकरयोर्दोषश्च** तेषां वर्णानां संकराणां च वृत्तेर्नियमः । व्यस्तपाठो न युक्तः । पूर्वोक्तेषु ऋणादानादिपदेषु यद्व्यवहारपदं न दृष्टं तच्च सर्वं प्रकीर्णके स्यादित्यर्थः ।

'प्रकीर्णकं पुनर्ज्ञेयो व्यवहारो नृपाश्रय' इति **कल्पतरूक्त**पाठभ्रमाय तावन्मात्रं प्रतिज्ञासिद्ध्यर्थं व्याचष्टे । **प्रकीर्णक इति** । तदाख्ये इत्यर्थः । नृपाश्रया इति व्याचष्टे । **नृपसमेति** । तात्पर्यार्थमाह । **नृप एवेति** । एवेन प्राड्विवाकादिव्यवच्छेदः । **तत्र** तद्विषयविवादेषु । **आस्थाय** निश्चित्य । नन्वेतावताऽपि तल्लक्षणं नोक्तमिति प्रतिज्ञाहानिरेवात आह । **एवं वदतेति** । इत्येवं परिगणितानां विवादानां निर्णयोऽत्र प्रकीर्णके इति वदता **नारदे**नेत्यर्थः । एवं च वदतेति पाठान्तरम् । **यो नृपेति** । केवलनृपाश्रयः तन्मात्रनिर्णेयो व्यवहारः स इत्यर्थः ।

### याज्ञवल्कीये २९५ श्लोकः ।

अथ मूलमवतारयति । **तत्रेति** । प्रकीर्णके इत्यर्थः । **पारेति** । समाहारद्वन्द्वः । समुद्राभ्रादितिवत् प्रयोगः । तदाह । **पारेति** ॥ २९५ ॥

### याज्ञवल्कीये २९६ श्लोकः ।

असंबद्धत्वादाह । **प्रसंगादिति** । **अपि**ना तस्यापि समुच्चयः । भक्ष्ये अर्हार्थे कृत्य इत्याह । **भक्ष्यानर्हेति** । क्षत्रियादेरग्रे उपादानाद्द्विजपदं ब्राह्मणपरमित्याह । **ब्राह्मणमिति** । तत्रापि संभवात् प्रकारद्वयमाह । **अन्नपानेति** । 'दूष्ये'त्यत्रार्षो ल्यबित्याह । **दूषयतीति** । तत्तात्पर्यार्थमाह । **खादेति** । **दंड्यः** । तथाकारकः । एवं उक्तप्रकारेण अस्याग्रेऽप्यनुषंगः । प्रत्यासत्तेराह । **प्रथमेति** । 'अर्द्धिकेन '. " अत इनीति " ( व्या. सू. ५।२।११५ ) ठन् । न्यूनतां निराचष्टे । **लशुनाद्येति** । भक्षार्हत्वेऽपि निषेधात्तत्वं **ऊहनीयमिति दोषतारतम्यं** च प्रायश्चित्तविधिपर्यालोचनया ब्राह्मणत्वादिवर्णसगुणनिर्गुणत्वादिपर्यालोचनया च ज्ञेयमिति भावः ॥ २९६ ॥

### याज्ञवल्कीये २९७ श्लोकः ।

**किंचेति** । प्रकृते अपराधविशेषेण दण्डविशेषांतरमाहेत्यर्थः । एवमग्रेऽपि । **कूटैरित्यस्य** व्याख्या **रसेत्यादिः** । **रसवेध** रसांतरप्रवेशः । आदिना तेन घर्षणं गिन्यर्थमाह । **शील इति** ।

---

[1] ख-स्वधर्मंश इति ।

एवमग्रेऽपि । **विर्विरोधे** इत्याह । **कुत्सितेति** । तत्स्वरूपमाह । **श्वादिसंबंधस्येति** । सौनिकः । सूना वधस्थानं तत्र भवः सौनिकः । आद्यचार्थमाह । **चशब्दादिति** । **अंगेति** । सामान्योक्तावपि स्मृत्यन्तरानुरोधेनाह । **करनासाकर्णकरैस्त्रिभिरिति** । नासाकर्णकरैस्त्रिभिरित्येव पाठः । दोषद्वयसत्वान्मूले यथाश्रुते दंडद्वयम् । दंडद्वयं चोक्तमिति यथासंख्यं प्रत्येकं दंड इति भ्रमनिरासाय द्वितीयचार्थमाह । **चशब्दादिति** । अंगच्छेदेन समुचितमिति पाठः । पूर्वचेन तृतीयस्य समुच्चयाद्दंडत्रयदंडद्वयमिति वैषम्याद्यथासंख्याप्रवृत्तेरिति भावः । **मनु**विरोधं परिहरति । **यत्पुनरिति** । **कण्डका** दुष्टास्तेषु **पापिष्ठं** लवशः अल्पशः ॥ २९७ ॥

## याज्ञवल्कीये २९८ श्लोकः ।

चतुष्पादेत्यत्र समासांतविधेरनित्यत्वाल्लोपो नेत्याह । **चतुष्पादैरिति** । किं सर्वस्य नेत्याह । **अपेति** । अपैहीत्यस्यायमर्थः । **प्रा**र्थमाह । **प्रकेति** । तस्याप्यर्थमाह । **उच्चैरिति** । काष्ठलोष्ठपत्रेषु पाषाणयोर्द्वन्द्वं कृत्वा काष्ठलोष्ठाभ्यां द्वंद्वे मत्वर्थीयश्च कृत्वा बाहुशब्देन कर्मधारयं कृत्वा युग्यशब्देन शाकपार्थिवादिद्वंद्वो वा । पूर्वनिपातप्रकरणमनित्यमिति बोध्यम् । तदाह । **तथेति** । काष्ठपदार्थो **लगुडेति** । लोष्ठं मृत्पिण्ड इत्यर्थः । **सायकेति** । पाषाणानामुत्क्षेपणं येनेति बहुव्रीहिणा बाहुविशेषणम् । पाषाणोत्क्षेपकेणापि पाठान्तरम् । एतेन बाहुना कृत्वा पाषाणोत्क्षेपणं तत्करणेन यो दोषः कृतः स इत्यर्थः इति व्याख्यानमपास्तम् । **पूर्वोक्तः** मनुष्यः प्राणादिरूपः । **प्रास्यतः** प्रक्षिपतः । अपैहीत्यादेर्मध्यमणिन्यायेनान्वय इत्याह । **अपेति** । बाहुः स्वतंत्रं निमित्तं व्याख्यात्रभिमतमित्यन्ये । दृष्टदोषाभावेऽप्यदृष्टदोषोऽस्त्येवेति । प्राग्वदाह । **काष्ठादीति** । अल्पत्वायाह । **अबुद्धीति** बहुव्रीहिः । न्यूनतां परिहरति । **काष्ठादीति** । **चो**ऽप्यर्थे व्युत्क्रमे च ॥ २९८ ॥

## याज्ञवल्कीये २९९ श्लोकः ।

तोमरादिकस्यापि अन्यत्रापि दोषाभावमाह । **किंचेति** । फलितार्थमाह । **नसीति** । निमित्तान्तरमाह । **पश्चात् पृष्ठत इति** । भूमिवैषम्यादिनेति भावः । यानेत्यस्यानुषंगः । अत एवाह । **चशब्दादीति** । **हिंसने** तत्रैव । **एव**स्यात्रान्वयात्तेनान्यत्र दोषसत्ता सूचिता । स्वामिग्रहणमुपलक्षणमिति आह । **प्रेति** । यन्तेत्यर्थः । नायं पर्युदासः किंतु प्रसज्यप्रतिषेध इत्याह । **दोषभागेनेति** । तत्रानुक्तं बीजमाह । **अतदिति** । तस्य तत्वाभावादित्यर्थः । वादिसंग्राह्यांशे मानं कथन्नाह । **तथा चेति** । "यानस्य चैव यातुश्च यानस्वामिन एव च । दशातिवर्तनान्याहुः शेषे दण्डो विधीयते "॥ ( **मनु**, अ. ८ श्लो. २९० ) इत्यस्यादिः । यानस्य रथादेर्यातुः सारथ्यादेर्यानस्वामिनश्च यस्य तद्यानं तेषां छिन्नमस्मादिति दशनिमित्तानि दंडमतिक्रम्य वर्तते । एषु निमित्तेषु सत्सु प्राणिमारणे द्रव्यनाशे च तेषां दण्डो न भवति इति मन्वादय आहुः । एतदन्यनिमित्ते तु दंडोऽनुष्ठीयत इति तदर्थः । **छिन्नेति** । इदं पूर्वार्द्धोक्तं सर्वं पूर्वोक्तरीत्या यानविशेषणम् । **नस्ये**त्यत्र 'शरीरावयवादिति' ( व्या. सू. ५।१।६ ) यत् सा च तादृशबलीवर्दादिसंबंधिनी न तु या काचिदिति । प्रागुक्तमेव यानं च यथासंभवं बलीवर्दादिवद्बोध्यम् । **युगं** काष्ठविशेषः । **तादृशे**

रथादौ **तिर्यक्** तिरश्चीनं **प्रतिमुखं** संमुखं वा गते रथादौ भूमिवैषम्यादिना यानस्य चक्रान्तःप्रविष्टाक्षाख्यकाष्ठभंगे तथैव **चक्रभंगे** च यंत्राणां चर्मबन्धनानां छेदने च तथैव योक्त्ररश्म्योच्छेदने च योक्त्रं युग्यबलीवर्दादिग्रीवासंबंधिरज्जुः काष्ठं वा रश्मिः सामान्यरज्जुः । प्रहरणं वा दशमं निमित्तमाह । **आक्रन्दे चापीति** । अपसरेत्युच्चैः शब्दे सारथ्यादिना कृते च यानेन प्राणिहिंसाद्रव्यनाशयोः कृतयोः सारथ्यादेर्दण्डो नास्तीति मनुराहेत्यर्थः । चैवेत्येव प्राग्वत् ॥ २९९ ॥

## याज्ञवल्कीये ३०० श्लोकः ।

"यत्रापवर्तते युग्यं वैगुण्यात्प्राजकस्य तु । तत्र स्वामी भवेद्दण्ड्यो हिंसायां द्विशतं दममिति" (अ. ८ श्लो. २९३) **मनो**र्यत्र सारथेरकौशल्याद्यानमन्यथा व्रजति तत्र हिंसायामशिक्षितसारथ्यनियोगस्वामी द्विशतं दाप्यः स्यादित्यर्थस्यानुरोधेनाह । **अप्रवीणेति** । तत्र शेषे षष्ठीत्याह । **गवादिभिरिति** । शेषमाह । **वध्येति** । तत्र तथा वार्थे ह्यर्थमाह । **यद्येति** । **नियोजनेति** बहुव्रीहिः । **विक्रुष्टेऽपि** आक्रोशनेऽपि ।

विशेषमाह । **यदा पुनरिति** । **तदेति** । अन्यथा भावे इति शेषः । **अभियुक्तः** कुशलः । यदि स तादृशस्तदा स एवोक्तं द्विशतं दंडं वक्ष्यमाणं च 'मनुष्यमारणे' इत्यादिना तं सर्वमर्हति न स्वामीत्यर्थः । किंच—

"युग्यस्थाः प्राजकेनाप्ते सर्वे दण्ड्याः शतं शतम् । स चेत्तु पथि संरुद्धः पशुभिर्वा रथेन वा ॥"
"प्रमापयेत् प्राणभृतस्तत्र दण्डोऽविचारितः" । इति **मनुः** । (अ. ८ श्लो. २९४।२९५)

अकुशले तस्मिन् स्वामिसारथिभिन्ना अन्येऽपि यानारूढा अकुशलसारथिकयानारोहणात् सर्वे प्रत्येकं शतं शतं दंड्याः । स चेत् **प्राजकः** प्रचुरगव्यादिभी रथांतरेण वा संरुद्धः स्वरथगमनानवधानात् प्रत्येकसमर्पणं क्षमः तुरगैः रथेन रथावयवैर्वा प्राणिनो व्यापादयति तत्राविचारिता दण्डः कार्य एवेत्यर्थः ।

विशेषांतरमाह । **प्राणीति** । तस्मादपीत्यर्थः । उक्तसर्वस्थले एवेति भावः । **मनुष्यमारणे** प्राजकस्यानवधानाद्यानेन कृते शीघ्रमेव तद्वत् **किल्विषी** दंडवान् भवेत् । किल्बिषमिति पाठान्तरम् । तत्र चौरदंड उत्तमसाहसरूपो भवेत् । न तु मारणरूपः, अग्रे 'अर्धमिति' श्रवणात् । गवादिषु महत्सु प्राणिषु हतेषु उत्तमसाहसस्यार्द्धपंचशतात्मको भवेत् । क्षुद्रकानां पशूनां अपचितपरिमाणकाः क्षुद्रकाः । तत्त्वं च वयसा जातिस्वभावतो वा । तत्राद्या वत्सकिशोरादयः, अन्त्या अजादयस्तत्रांत्येषु वक्ष्यमाणत्वादाद्यानामेवात्र ग्रहणम् । तथा च वत्सकिशोरादीनां मारणे द्विशतो दंडः स्यात् । **शुभेषु** आकारतो लक्षणतश्च **मृगेषु** रुरुपृषतादिषु **पक्षिषु** च शुकहंससारसादिषु हतेषु पंचाशद्दंडो भवेत् । स्वार्थे कः । द्वंद्वोत्तरपदको द्वंद्वः । गर्दभच्छागैडकादीनां तु मारणे रूप्यं पंचमाषपरिमितो दंडः स्यात् । सौवर्णमानग्रहणं तु तत्र उत्तरोत्तरं लघुदण्डोक्तेः । श्वसूकरनिपातने रोप्यमाषपरिमितो दंडः स्यादित्यर्थः । पंचमाषको माषक इति पाठः । परिमाणे कन् । पंचमासिकादि पाठे 'अत इति ठन्' (व्यां. सू. ५-२-११५) ॥ ३०० ॥

## याज्ञवल्कीये ३०१ श्लोकः।

अन्यदप्युच्यते इत्याह। **किंचेति**। एवमग्रेऽपि। जारस्यार्थः **पारेति**। साकाङ्क्षत्वादाह। **निरिति**। एकवचनोपपत्तये तद्युत्पत्तिमाह। **पणानामिति**। समाहारद्विगौ तु पंचशतीति स्यादिति भावः। उत्कोचः उपादानजकर ईंति प्रसिद्धः। तदेवेति व्याचष्टे। **यावदिति**। अनुषंगेणाह। **दंडमिति**॥ ३०१॥

## याज्ञवल्कीये ३०२ श्लोकः।

**अनिष्टप्रेति**। शेषषष्ठ्या समासः। **अमित्रेति** शत्रुस्तुत्यादेरित्यर्थः। सकृत्तथाकरणे दोषाभावाय। प्रार्थमाह। **प्रकर्षेति**। तस्याप्यर्थमाह। **भूय इति**। तस्यैवेत्यस्य व्याख्या **राज्ञ इति**। णिन्यर्थमाह। **शीलमिति**। तन्मंत्रेति व्याचष्टे। **तदीयेति**। राजकीयेत्यर्थः। स च द्विविध इत्याह। **स्वराष्ट्रेत्यादि**। परस्य राष्ट्रपक्षयोः क्षयकरणस्येत्यर्थः। कृञो हेत्विति टः (व्या. सू.३।२।२०) परराष्ट्रापक्षयकरेति पाठान्तरम्। तस्य भेदनासंभवादाह। **मित्रेति**। तस्य राज्ञः शत्रुकरणेष्वित्यर्थः। विशेषमाह। **कोशेति**। **राज्ञ इत्यादि**। **राज्ञ इति**। नित्यसाकांक्ष्यत्वादेकदेशान्वयः। **प्रतीति** धर्मपरं तस्य प्रतिकूल्यविषये इत्यर्थः। **उपजापकाः** प्रोत्साहकाः। 'घातयेदिति' स्वारस्यात् क्रमेणाह। **सर्वस्वेति**। तथा च घातो नाश इति बोध्यम्। तत्राद्ये विशेषमाह। **सर्वस्वेति**। तत्रापि विशेषमाह। **चौर्योपेति**। आयुधैः जीवंति ते तथा वाह्यैर्वहनीयैर्बलीवर्दादिभिर्ये जीवंति ते तथा तद्वित्तम्। अत्र वाह्यग्रहणमुपलक्षणमित्युक्तम्। **वाद्यादीनीति**। वेश्याद्युपस्त्रीणां तद्विदां तज्ज्ञानां, वाद्यश्चातोद्यश्च तदादि। यद्यपि 'चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकमिति' **अमरात्** (१।७।५) पर्यायता तथापि वीणादि सर्वत्वाद्यवांतरभेदाभिप्रायकं पृथगुपादानं आनंत्यात्। सामान्येनाह। **यच्चेति**। **कारुकाः** शिल्पिनः। **एतत्** प्रागुक्तमुपकारणत्वावच्छिन्नम्।

तृतीये विशेषमाह। **ब्राह्मेति**। **गौतमं** मानमाह। **शारीर इति**। आदिग्राह्यं वचने एव व्यक्तं, तच्च प्राग्व्याख्यातम्॥ ३०२॥

## याज्ञवल्कीये ३०३ श्लोकः।

**लग्नं विक्रतुरिति** शेषे षष्ठीसमासः। एवमग्रेऽपि। अंगं नैकदेश इत्याह। **शरीरेति**। गुरुपदमुपलक्षणमित्याह। **पित्रेति**। अनुमतौ दोषाभावायाह। **राजानुमतिमिति**। आरोहति तस्येति पाठाद्यारोहतश्चेति पाठान्तरम्॥ ३०३॥

## याज्ञवल्कीये ३०४ श्लोकः।

तथेति समुच्चये। भेदनेऽनुक्तं निमित्तमाह। **क्रोधेति**। आदिना लोभादिव्यवहारदशायामपीति भावः। **द्विनेत्रेति**। अत्र समाहारद्विगुः। पात्रादित्वं च तदाह। **नेत्रद्वयमिति**। तत्र योग्यत्वायाह। **ज्योतिरिति**। ननु तेनापि तथोक्तावनिष्ठापत्तिरत आह। **गुर्वादीति**। आदिना स्वस्यापि ग्रहणम्। **द्विष्टं** द्वेषविषयस्तदाह। **अनिष्टमिति**। तत्स्वरूपमाह। **संवत्सरेति**। दिष्टादेशेति कर्मधारय इत्याह। **रूपमादेशमिति**। अदिश्यमानं वचनं भाषते इत्यर्थः। जीवत इत्यस्यार्थमाह। **भोजेति**। विप्रत्वस्य वस्तुतस्तत्र बाधादाह। **यज्ञोपेति**। तेषां त्रयाणां प्रत्येकं तथोक्तिफलविशेषमाह। **श्राद्धेति**। **विप्रवेषेति**। यज्ञोपवीतादिलिंगेत्यर्थः। एवमग्रेऽपि। क्वचित्तथापाठ एव। विशेषान्तरमाह। **वृत्त्यर्थमिति**। यावदायुर्जीविकावृत्तिः **धारिणः** शूद्रस्य। व्यधिकरणबहुव्रीहेर्गमकसाध्यत्वादाह। **द्विजातिलिङ्गिन इति**॥ ३०४॥

## याज्ञवल्कीये ३०५ श्लोकः ।

**दर्शने** सभ्यादीनामिति शेषः । दुर्दृष्टानित्यत्र 'मतिबुद्धीति' (व्या. सू. ३।२।१८८) वर्तमाने क्त इत्याशयेन तदर्थमाह । **स्मृत्येत्याद्याशंक्यमानानित्यन्तेन** । रागेत्याद्युभयान्वयि । 'पुनर्दृष्टेति' व्याचष्टे । **पुनरिति ।** पश्चादित्यर्थः । स्वयं राजा विवादविषयभूततद्धनादिति नार्थः । प्रागुक्तयुक्तेरत आह । **विवादेति** । अस्य रागाल्लोभाद्भयाद्वाऽपीत्यनेन प्रागुक्तेन पौनरुक्त्यं परिहरति । **अप्राप्तजेतृदंडेति ।** पूर्वव्यवहारे जितस्तस्य सदोषत्वं यदि विचार्यमाणेऽस्ति तदा दुष्टत्वेन स जयी दण्ड्य इत्यनेन जेतृदंडो विधीयते । वचनांतरेणाप्राप्तत्वादितरांशे तु तेन प्राप्तत्वादनुवाद इति न पुनरुक्तिस्तत्र हि सभ्यमात्रग्रहणं न जयिनोऽपीति भावः ।

विशेषान्तरमाह । **यदा पुनरिति । दोषेण** दोषेणैव । विशेषान्तरमाह । **यदा त्विति ।** उक्तप्रतिज्ञायां मानमाह । **पादो गच्छतीति ।** कर्त्रादीनां सर्वेषामपि पापप्राप्तिप्रतिपादनेतद्वचनबलात् सर्वेऽपि दुष्टत्वेन दंड्या इत्यर्थः । नन्वेकस्यैव पापस्य कर्त्रादीनां पादरूपांशतः प्राप्तेरितिलाभेन दंडोऽप्येतेषामेक एव स्यान्न पृथक् पृथक् इत्यत आह । **एतच्चेति ।** उक्तवचनं चेत्यर्थः । अस्य वचनस्य दोषप्रतिपादने तात्पर्यं न त्वंशतो दोषप्रापणे इत्यर्थः । उक्तेऽर्थे न्यायस्य **जैमिनीय**मानत्वं सूचयन् हेतुमाह । **कर्तृसमेति ।** इतःप्राक् यथोक्तमित्यपपाठः । 'शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वादिति' **जैमिनीय**न्यायेन यः कर्ता तस्मिन्नेव फलं संमतमिति लभ्यते । तत्र फलं द्विविधं ऐहिकं पारलौकिकं च। तत्र प्रकृते ऐहिकं धर्मशास्त्रोक्तदंडादि पारलौकिकं नरकादि । एवं स्थिते "रागाल्लोभादि"त्युपक्रम्य "सभ्याः पृथक् पृथक् दंड्याः" इति प्रतिपुरुषमैहिकदंडरूपसंपूर्णफलसंबंधविधानादपूर्वस्य च यत्र कर्तरि स्वयमुत्पन्नं तत्रैव फलोत्पादकत्वस्वभावकत्वात् प्रत्येकं समग्रफलसंबंधविध्यनुपपत्त्या प्रत्येकं समग्रदुरितापूर्वसंबंध इति भावः ॥ ३०५॥

## याज्ञवल्कीये ३०६ श्लोकः ।

**वर्तयितुः ।** वादिप्रतिवाद्यन्यतरस्य उद्धृत्यादिना इति भावः । **अपिर्व्युत्क्रमे** इत्याह । **पराजितो ।** लिङर्थो विवक्षित इत्याह । **मन्यत इति ।** आयांतमित्यस्य व्याख्या **कूटेति । आदिना** तथासाक्ष्यादिपरिग्रहः । **पुनः** पश्चात् । एवमग्रेऽपि । **धर्मेति ।** तन्निर्णयस्थानमित्यर्थः । "अधिशीङिति" (व्या. सू. १।४।४६) कर्म । स्वं तेनाधर्मे कृतेऽपि स्वयंधर्मो न कार्यो दोषादित्याह । **धर्मेणेति** । विरोधं परिहर्तुं सविशेष**नारद**संमतिमाह । **नारदेति** । तीरितमित्यस्य व्याख्या **साक्षीति । आदिना** भुक्त्यादिपरिग्रहः । **अन्विति** अगृहीतदंडमित्यर्थः । अनुशिष्टमित्यस्य व्याख्या **उद्धृतेति** । गृहीतदंडमित्यर्थः । तथा निर्णयपूर्वकमिति भावः । तदाह। **दण्डेति ।** विधर्मत इत्यत्र तृतीयांतात्तसिः । अधर्महेतुकं मन्यते इत्यर्थः । तामिति शेषः। **आस्थाय** दापयित्वा । **पुनः** पश्चात् । **उद्धरेत्** निश्चिनुयात् ।

ननु **नारद**तो निर्णीतस्यापि व्यवहारस्य तथा सति दंडावष्टंभपुरःसरं पुनः करणं प्रतीयते, **मानवे** तु तद्वैपरीत्यमिति मिथो विरोध इत्याह । **यत् पुनरिति ।** यत्र क्वचन धर्माधिकरणे यद्व्यवहारपदं धर्मतस्तीरितं "पारतीरः कर्मसमाप्तौ" तथा निश्चितं असौ न पुनः प्रवर्तते इति । यच्च न

केवलं वा सत्यत्वेनोक्तं किन्त्वनुशब्दोत्तरं शिष्टं च स दंडं च कृतं तत् प्राज्ञो राजा कृतमेव विद्यान्न पुनर्निवर्तयेदित्यर्थः । परिहरति मानवमित्यर्थः । अग्रेऽस्यान्वयः ।

तत्रादौ **नारद**तात्पर्यमाह । **अर्थीति** । वर्तत्वं निष्पन्नत्वं अत एव तत्र विधर्मत इत्युक्तम् । **पुनः** पश्चात् । **मनु**तात्पर्यमाह । **न पुनरिति** । नास्तीत्यर्थः । अत एव तत्र धर्मत इत्युक्तम् । धर्मतो व्यवहारो निर्णीत इति निश्चयेन पुनस्तथेति **मनु**तात्पर्यम्, धर्मतो निर्णीतं न वेति संदेहे तु पुनस्तथेति **नारद**तात्पर्यं, तथा च **नारदीयं** संशयविषयं **मानवं** निश्चितविषयमिति भावः ।

विशेषमाह । **यत्पुनरिति** । **न्यायापेतं** तद्रहितम् । न्यायापेतत्वे हेतुरज्ञानकृतमिति पुनः करणे हेतुमाह । **अन्यायविहितमिति** । अन्यायविहिते तदपीत्यर्थः ॥ ३०६ ॥

## याज्ञवल्कीये ३०७ श्लोकः ।

**गृहीतेति** । अन्यायेन गृहीतस्य दंडरूपस्य धनस्येत्यर्थः । क्वचिद्दण्डस्येत्येव पाठः । अन्यायेनेति छेद इत्याह । **अन्यायेनेति** । तत्र निमित्तमाह । **लोभेति** । वरुणाय निवेद्येत्यस्यार्थमाह । **वरुणायेद-मिति** । न ममेति शेषः । **स्वयं** स्वयमेव । दोषख्यापनार्थमिदम् । न्यूनतां परिहरति । **यस्माच्चेति** । **चः** समुच्चये व्युत्क्रमे च । विपक्षे बाधकमाह । **इतरथेति** । तद्दाने इत्यर्थः । ननु दंडस्वामित्वं राज्ञ एवेति क्रमापहारदोषोऽत आह । **अन्यायेति** । सतिसप्तमी । एवं च परस्वग्रहणं तथेति बोध्यम् । यत्तु **मनु**नोक्तम् । ( अ. ९ श्लो. २४४।२४५ )

" अप्सु प्रवेश्य तं दंडं वरुणायोपपादयेत् । श्रुतवृत्तोपपन्ने वा ब्राह्मणे प्रतिपादयेत् ॥

" ईशो दंडस्य वरुणो राज्ञां दंडधरो हि सः । ईशः सर्वस्य जगतो ब्राह्मणो वेदपारगः ॥ " इति ।

तत् पातकविषयं न्यायगृहीतविषयं च । अत एव—( **मनु**. अ. ९ श्लो. २४३ )

" नाददीत नृपः साधुर्महापातकिनो धनम् । आददानस्तु तल्लोभात्तेन दोषेण लिप्यते ॥ " इति पूर्वमव्यवहितम् ॥

" यत्र वर्जयते राजा पापकृद्भ्यो धनागमम् । तत्र कालेन जायंते मानवा दीर्घजीविनः ॥

" निष्पद्यंते च सस्यानि यथोक्तानि विशां पृथक् । बालाश्च न प्रमीयंते विकृतं न च जायते ॥ "

( **मनुः** अ. ९ श्लो. २४६।२४७ ) ।

इत्यग्रे च तथोक्तम् । प्रवेश्य प्रक्षिप्य वरुणायेदमिति प्राग्वत् । ईश इति पूर्वस्य प्रतिपत्ति-विधेरर्थवादोऽयम् एवमग्रीयावपि । जायंते इति वर्तमानवचनमविवक्षितम् । विकृतं करणादि-हीनत्वमित्यर्थः । इति शिवं० ॥

इति श्रीमन्मिताक्षराव्याख्याने **महादेवभट्ट**त्मजोमाङ्ग**वैजनाथार्द्धा**ङ्ग-
भूतलालाकृष्णजननि **पायगुंडो**पाख्य **श्रीलक्ष्मीदेवी**-
विरचिते लक्ष्माभिधे व्यवहारप्रकरणं
समाप्तम् ।

---

॥ श्रीरस्तु ॥

# एतत्पुस्तकोद्धृतऋषिवचनानां सूची ।

८

## एतत्पुस्तकोद्धृतऋषिवचनानां सूची ।

## एतत्पुस्तकोद्धृतन्यायानां सूची । ( २ )

## व्याकरणसूत्राणां सूची । ( ४ )